बाध उच्यते—प्रतीतिविरुद्धत्वात्। अतः पूर्वप्रवृत्तैः श्रुत्यादिभिस्तस्मिन् काले अप्राप्तानां लिङ्गादिसिद्धानामवघातादीनामर्थानां बाधोऽप्राप्तबाधः। प्राप्तबाधस्तु दाशमः; 'प्रकृतिवद्विकृतिः कर्तव्या' इति चोदकप्राप्तानामवघातादीनामुपकाराभावेन कृष्णलादिषु बाधात्। तन्त्रेणेति—देशकालकर्त्रैक्यादिकेनैकेनानुष्ठानेनोभयसिद्धिः। एतत्तु लोके वेदे च प्रसिद्धमेव। प्रसङ्गस्येति—एकस्यावश्यकर्तव्यस्यानुष्ठानात् नान्तरीयकेतरसिद्धिः। यथा—आमिक्षायागप्रसङ्गात् वाजिनयागानुष्ठानम्। श्रूयते हि—'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' इति। अयमर्थः—आमिक्षार्थमेव दध्यानयनम्। न तु वाजिनार्थम्, तेन न वाजिनयागे दध्यानयनं क्रियत इति। एवं कर्मकाण्डद्वादशलक्षणीविभागो दर्शितः। समनन्तरं देवताकाण्डचतुर्लक्षणीविभाग उच्यते—तत उपरीति।

श्लो. स्वरूपमादौ तद्भेदस्तदुपासनपूर्वकम्। फलं च देवताकाण्डे देवतानां तु कथ्यते ॥ ५ ॥

---

वि. टी. ५. न्यायसमुदायो हि मीमांसेति। मीमांसाशब्दे स्वार्थे सन्। मननमेव तदर्थः। तच्च हेतुना स्थापनमिति तस्य पञ्चावयवाद्यपेक्षत्वात् तत्तदधिकरणन्यायसमुदाय एव मीमांसा। करणात्मनेति। अधीतेन वेदेन मीमांसया वेदार्थं निर्णयेदित्यत्र भावनायां निर्णयः फलम्, वेदः करणं मीमांसा इतिकर्तव्यतेति। वस्तुतो रागप्राप्तत्वात् विचारस्य नास्य वेदकरणत्वेतिकर्तव्यतात्वे इति ध्येयम्। धर्मधीरिति। मीमांसाशास्त्रे पूर्वषट्के मानादयः षट्, उत्तरषट्के अतिदेशतद्विशेषादयः षट् विचार्यन्ते। तथा चोत्तरषट्कार्थसहितेन पूर्वषट्कार्थेन धर्मज्ञानं मीमांसात इति। भेदलक्षणो भेदाध्याये। एकदेशिनः प्राभाकराः शब्दान्तरादिप्रमाणानां कर्मभेदकत्वमनुक्त्वा कर्मभेदपरशास्त्रस्यैव भेदकत्वमाहुरित्यर्थः। किमिदं कर्मेति प्रश्ने निर्णयः अङ्गानीति वाक्येन क्रियते। अधिकर्त्रेति। अस्याधिकार इति वा, अयमत्राधिकारीति वा निर्णयः षष्ठे क्रियताम्। उभयमेकमेव। विशेषो मीमांसामेयसंग्रहे। स पुनः विशेषातिदेशस्तु। अत्र वाचनिकातिदेशः नामातिदेशः आनुमानिकातिदेशः इति सामान्यतोऽतिदेशस्त्रेधा विभज्यते। अयमंशः सप्तम एव प्रदर्शितः। समानमितरच्छ्येनेनेत्यादिर्वाचनिकातिदेशः। अष्टमे विशेषविचारस्तु आनुमानिकातिदेशस्यैवेति ध्येयम्। विशेषाश्च प्रागेवोक्ताः। श्रुत्यादिभेदेनेति। आनुमानिकातिदेशो नाम द्रव्यदेवतादिसाजात्यातिशयदर्शनमूलं कल्पितोऽतिदेशः। तत्र कश्चित् अस्यैतत्प्रकृतिकत्वमित्यत्र गमकं लिङ्गदर्शनमपि स्यादित्याशयेन श्रुत्यादीन्युक्तम्। न तु तार्तीयश्रुत्यादिसर्वप्रमाणसमन्वयाभिप्रायेण। आदावेवाष्टमे, 'यस्य लिङ्गमर्थसंयोगात्', 'लिङ्गदर्शनाच्च' इत्यादिदर्शनाच्च। श्रुत्यादीत्यनेन शब्दगतमर्थगतं वा चिह्नमिति तयोरेव ग्राह्यम्। अप्राप्तानामवघातादीनामिति। अवघातादीनामित्येतदर्थवर्णनं चिन्त्यम्। ऐन्द्र्येति श्रुत्या आग्नेयमन्त्रादीनां बाधो गार्हपत्योपस्थानादौ वक्तव्यः। उपरितनवाक्ये अवघातादीनामित्युक्तं युक्तम्। स्वरूपमादाविति। चतुर्भिरध्यायैः क्रमेण देवतानां स्वरूपं तद्भेदः तदुपासनपद्धतिः तत्फलं च प्रतिपाद्यते। एवं सर्वा देवताः निरूप्य अन्ते विष्णुं प्रस्तुत्य, 'स विष्णुः तं ब्रह्मेत्याचक्षते' इति निगमितम्। तदेव ब्रह्म शारीरके उपक्रान्तमित्याशयः। श्लोकोऽयमेषामेव वा तत्त्वरत्नाकरादिग्रन्थान्तरस्थो वेति विमृश्यम्। आचार्यैस्तु एवं स्पष्टं नोच्यते। श्रीभाष्यकारैः कर्मशेषत्वमेवास्याः चतुर्लक्षण्याः वेदान्तदीपादावप्युक्तम् ॥ ५ ॥

ताम्' इत्याह, तस्यं परम्—आपातप्रतीतिमात्रेण ब्रह्मभागोऽपि न संचिन्तनीय इति। तत्प्रतिपाद्यार्थो न्यायनिरूपणमन्तरेण संशयविपर्ययौ नातिवर्तेत इति यदि वदसि, तर्हि संशयविपर्ययापनोदनार्थं कर्मभागोऽपि संचिन्त्यतामिति प्रतिबन्द्या परिहियत इति ॥

अतः—कर्मफलानामस्थिरत्वनिर्णयपूर्वकब्रह्मज्ञानानन्तस्थिरफलापातप्रतीतेः। तुल्योक्त्यबाधात्—तुल्यमित्युक्तेरबाधादित्यर्थः ॥ ६ ॥

प्रावण्यं प्राक् त्रिवर्गे सफलयतनतोपासनाङ्गत्वतोऽपि
व्याख्याव्याख्यारूपेऽत्र शास्त्रे क्रमनियतिरसौ स्याच्च मुख्यक्रमेण ।
मानत्वादिर्विचार्यः पुरत इह तथा वाक्यवेद्यात् पदार्थो
दृष्टान्तश्चोपमेयात्; यदि मधु मविधे यातु चाद्रिं किमर्थम् ॥ ७ ॥

एवं मीमांसाशास्त्रस्य पूर्वोत्तरभागयोः पौर्वापर्यमभिधाय तत्प्रतिपादकहेतून् पञ्चमाध्याय-प्रतिपादितान् अत्रापि नियामकत्वेन विशदं प्रकाशयति—प्रावण्यमिति । श्रुत्यर्थपाठकाण्डमुख्य-प्रवृत्तिक्रमैर्हि तान्त्रिकाः कर्मणामानुपूर्वीमभिदधुः। 'हृदयस्याग्रेऽवद्यत्यथ जिह्वायाः', 'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति' इत्यादिषु श्रुत्यैव क्रमो विधीयते। समानकर्तृकयोः पूर्वकाल एव हि क्त्वाप्रत्ययो विधीयते । अत्रापि, 'परीक्ष्य लोकान् कर्मचितान्' इति विषयवाक्ये श्रौतक्रमः स्पष्टः । त्रिवर्गे प्रथमप्रावण्यमित्यर्थक्रमः । अनादौ खलु संसारे त्रिवर्गप्रवणानामधिकारिणा-मेतस्मिन्नपि जन्मनि अनादिवासनावशादादितस्त्रिवर्गप्रावण्यमेव योयुज्यते । तत्र दोषान् दृष्ट्वा पुनरपवर्गप्रावण्यमित्यर्थक्रमः । यथा, 'अग्निहोत्रं जुहोति, यवागूं पचति' इत्यर्थौचित्यानुसारेण

श्रीभाष्यसूक्त्यर्थानुसन्धानमत्रोत्तरार्धे । तुल्योक्त्यबाधादिति क्वाचित्कपाठे, तुल्यमित्युक्त्या तदुक्तेरबाधनादित्यर्थः ।

चि. टि. ६. कश्चिदित्यस्य शङ्केत्यनेनान्वयः। पूर्वपक्षी कश्चित् शङ्कत इत्यर्थः। श्लोकस्थम् अत इति पदं व्याख्येयत्वेन गृहीत्वा प्रतीतेरित्यनेनान्वयं दर्शयति। तुल्येत्यादिश्लोकस्थपदस्यार्थमाह तुल्येति ॥६॥

सांगवेदाध्ययनजनितायामनन्तस्थिरफलकत्वविषयकापातप्रतीतौ कर्मणि ब्रह्मणि च स्थितायां कर्मविचारेण तत्रापातप्रतीतिनिवृत्तौ ब्रह्मविचारे प्रवृत्तिरित्युक्तम् । तेन कर्मापातप्रतीतेर्ब्रह्मविचारप्रति-बन्धकत्वमिष्टमिति व्यक्तम् । तत्र कश्चित् शङ्कते—'ब्रह्मविषयकापातप्रतीतिरेव कर्मविचारप्रतिबन्धिका स्यात् । अतो ब्रह्मविचार एव प्रथमं प्रवर्तताम्' इति । अत्र समाधिं मनसि निधाय कर्मविचारप्राथम्यं मीमांसकोक्तक्रमनियामकनिखिलप्रमाणदर्शनेन निरूपयति प्रावण्यमिति । एतदुक्तं भवति — सर्वाधिकृत-पुरुषप्रवृत्तिक्रमविमर्शे, विचारमार्गप्रवर्तकजैमिनिबादरायणादिपौर्वापर्यविमर्शे, लघुपक्षप्रहणलाभप्रयुक्त-प्रवृत्तिविमर्शे च कर्मविचारप्राथम्यमेव सिध्यतीति । तदयमर्थः—कर्मण्यनन्तस्थिरफलत्वापातप्रतीत्य-भावेऽपि कर्मफलानां क्षुद्रत्वेऽवगम्यमानेऽपि प्राक्=प्रथमतः प्रजानां त्रिवर्गे अपवर्गातिरिक्तफल एव प्रावण्यम् अत्यादरो भवति । प्रावण्यम् सफलयतनतेत्युभयत्र क्रियापदं कल्प्यं भवन्ती परः प्रथमपुरुषेऽप्रयुज्यमानोऽप्यस्ति । स्यादित्यस्यानुषंगो वा । अतो ब्रह्मज्ञानाधीनस्य फलस्य प्रकृष्टत्वेऽपि अनुभूतसजातीयेष्वेव प्राच्यो दुर्वासनाः पुंसः प्रवर्तयन्तीति कर्मविचारं प्रथमं न त्यजेदिति स्थिते,

वचागूरकस्यैव प्राथम्यं परिकल्प्यते। सफलेत्यादि-कर्मण मुपासनाङ्गत्वात् प्राचीन कर्मविचारकाणां सफलव्यापारत्वमस्ति। अयमर्थः—उपासनस्य हि कर्माणि सन्निपत्योपकारकत्वेन विधीयन्त इति वेदार्थनिरूपकाणां निर्णयः। 'कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते' इति परमर्षिणा साक्षादेव संनिपत्योपकारकत्ववर्णनात्। तथाचानुष्ठेययोः कर्मज्ञानयोः पौर्वापर्ये सिद्धे तदनुष्ठानोपयिक-ज्ञानद्वारेण तच्चिन्तयोरपि पौर्वापर्यं सिद्धमिति। अयमप्यर्थक्रमादौ यथायोगमन्तर्भवतीति।

व्याख्येयेति। व्याख्येयो वेदः। व्याख्यानं मीमांसा। तत्र 'इषेत्वा' इत्यारभ्य 'ब्रह्मणो महिमान माप्नोति' इति व्याख्येयपौर्वापर्यस्य अध्ययनादिनियमसिद्धत्वात् तच्छेषस्य व्याख्यानस्यापि [न?] क्रम इति मुख्यक्रमः। पाठक्रमोऽपि वक्तुं शक्यते—यथापाठमेव वेदं विचारयन्ति विचारका इति। दृश्यते हि, 'समिधो यजति' इत्यादौ पाठक्रमः। तत्र हि यथापाठमेव श्रुतार्थमनुतिष्ठन्त्यनुष्ठातारः। अत्र प्रवृत्तिक्रमोऽपि प्रदर्शयितुं शक्यते— वेदो हि धर्मप्रमितौ कारणम् (करणम्?)। तस्य चेतिकर्तव्यता गुरोरन्ते वेदाध्ययनम्, तत्फलमक्षरराशिग्रहणमर्थविचारश्चेति। तथाच यत्क्रमेणाध्ययनं तत्क्रमेण तत्फलमक्षरराशिग्रहणम्, यत्क्रमेणाक्षरराशिग्रहणं तत्क्रमेणार्थचिन्तनमिति। उपदिष्टं हि कर्मकाण्डे, उपाकरणनियोजनप्रोक्षणाभिघाराणां प्राप्तक्रमाणां 'सप्तदश प्राजापत्यान् पशूनालभे(भ)त' इत्यादौ प्रथमानुष्ठानक्रमानतिलङ्घनेनोत्तरानुष्ठानमिति। इदं किल मुख्यक्रमोदाहरणं कर्मकाण्डे 'सारस्वतौ होमौ भवतः' इति† युगपदुत्पन्नयोः सरस्वतीदेवताकसरस्वद्देवताकयोर्याज्यानु-वाक्यापाठक्रमेण क्रमे सिद्धे तदङ्गानामन्येषां पुनर्मुख्यक्रमादेव क्रम इति। मानत्वादिरित्यादि - मानमेदाङ्गादिपरिशोधनं पूर्वकाण्डे कृतं तदुत्तरकाण्डोपजीव्यम्। उपजीव्यस्य पूर्वभावित्वं

---

का कथा यदि कर्मणि अनन्तस्थिरफलापातप्रतीतिरपि स्यात्। ननु तादृशः कश्चित् तत्रैव प्रवर्तताम्। विरक्तः प्रथमं ब्रह्मविचारे प्रवर्तेतेति चेत् तत्राह सफलेति। कर्मणामुपासनाङ्गत्वादपि तद्विचारकस्य यत्नं सफलं भवतीति। प्रथमप्राप्तं कर्मविचारमौपनिषदफलानुपयोगित्वे हि त्यक्ष्यति। कर्मफलानां क्षुद्रत्वेऽपि मोक्षार्थोपासनाङ्गतया कर्मणामनुष्ठेयत्वात् अवश्यज्ञातव्यमर्थं किमित्युपेक्षेत। विचारस्य वैराग्यवर्धकत्वादपि प्रथममिह प्रवर्तेत। अत एव अङ्गत्वस्य पश्चाद्विचारेऽपि ज्ञातुं शक्यत्वात् कर्मविचार प्राथम्यं कथमिति न शंक्यम्; प्रथमजातां कर्मविचारप्रवृत्तिं विरक्तगतब्रह्मापातप्रतीतिर्न प्रतिबध्नीयात्। यदाकदाऽपि तद्विचारस्यावश्यकत्वे सिद्धे प्रथमप्रवृत्तिर्जाता तयाऽप्यनुमन्यत एवेत्याशयात्। अथ विचारात्मकयोः जैमिनिबादरायणग्रन्थयोः व्युत्क्रमेण पौर्वापर्यमेव किं न स्यादित्याशंकायां व्याख्येयेत्यादिना उपमेयादित्यन्तेन समाधिमाह। अत्र मीमांसाशास्त्रे वेदव्याख्यानरूपे असौ विवादविषय भूता क्रमनियतिः जैमिनीयैव पूर्वमीमांसा, अन्यैवोत्तरमीमांसेति व्यवस्था मुख्यक्रमेण व्याख्येय वेदभागक्रमानुसारेण स्यात्। स्वरससिद्धोऽयमेव क्रमः; नात्र बाधकं किमप्यस्तीति भावः। ननु बादरायणः प्राक् शारीरकं निर्माय जैमिनिं पश्चात् तत्र न्ययुंक्तेति किं न स्यादित्यत्र ग्रन्थान्तः प्रविश्य प्रमेयदर्शनेन प्रत्याह मानत्वेति। 'मानाधीना मेयसिद्धिः' इति सर्वसंमतम्। मानं किमिति निर्धार्यैव मेयविचारेऽवतरणीयम्। अत एव जैमिनिः प्रथमाध्याये प्रमाणानि निष्कृष्य कर्मभेदादिप्रमेयजातं पश्चात् व्यचीचरत्। तदेव मानं व्यासेनाप्याद्रियते। शारीरके वेदप्रामाण्यस्य प्रथममस्थापनात् जैमिनि प्रथमाध्यायोपजीवनमिह निश्चीयते। एवञ्च भेद-अङ्गत्वप्रयुक्त्याद्युत्तराध्यायप्रतिपादितार्थोपजीवनमपि

सर्वलोकसिद्धमेव । अयमप्यर्थक्रमः । वाक्येति । 'यज्ञेन' इत्यादिवाक्ये वेदनं वाक्यार्थत्वेन विधीयते, यज्ञादिकं पदार्थत्वेन । अत्रान्विताभिधानम् अभिहितान्वयो वा भवतु । उभयत्रापि वाक्यार्थप्रतीत्यपेक्षया पदार्थप्रतीतेः पूर्वभावित्वमुच्यते । 'पदैरभिहिताः' इत्यभिहितान्वयवादिनः । 'स्मारितानन्वितार्थकम्' इत्यन्विताभिधानवादिनः । तथाच वाक्यार्थरूपोपासनविचारात्पूर्वं कर्मविचारः कर्तव्य इति उक्तं भवति। अयमप्यर्थक्रमः; उपजीव्योपजीवकभावापरित्यागात्। दृष्टान्त इति— 'हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्तुत्युपगानवत् तदुक्तम्' इत्यादौ कर्मकाण्डोक्तार्थदृष्टान्तेन ज्ञानकाण्डोक्तार्थप्रसाधनात् दार्ष्टान्तिकप्रतीतेः पूर्वमेव दृष्टान्तप्रतीतेरवश्यंभावाच्चायमप्यर्थक्रमः । 'अर्के चेत् मधु विन्देत' इति न्यायेनार्थक्रमान्तरमाह—यदीति । पूर्वकाण्डे हि ब्रह्मज्ञानमन्तरेण केवलकर्मानुष्ठानेन परिमितफलप्राप्तिरुच्यते । उत्तरकाण्डे तु कर्मणापरिकर्मिताद् ज्ञानात् । 'हतं ज्ञानं क्रियाहीनं हता चाज्ञानिनां क्रिया । दावाग्निनान्धको दग्धः पश्यन्नपि च पङ्गुकः ॥' इति हि वदन्ति ।

तथाच लघूपायेन प्राप्ते फले गुरूपायस्य परित्याज्यत्वेन कर्मविचार एव प्रथमं क्रियते—तत्र दोषं दृष्ट्वा ब्रह्मविचार इति । अत्र स्थानक्रमोऽप्यनुसंधेयः । वेदाध्ययनानन्तरकालस्य कर्मविचार-

---

विधातदङ्गकर्मानुष्ठानार्थे बादरायणाहर्तमिति कदापि सर्वे विचार्यमिति मानेन सह तद्विचारोऽपि प्राथमिकत्वे नैवेष्यते । अतो मानत्वादिः पुरतो विचार्यः । तथा, 'तदुक्तम्', 'न चाधिकारिकमपि' इत्येवं पूर्वमीमांसाविषयप्रदर्शिनां शारीरकस्थानां पदानामर्थः तत्तत्सूत्ररूपवाक्यार्थात् पुरतो विचार्यः। एवं, 'विधिर्वा धारणवत्', 'कुशाच्छन्दस्तुत्युपगानवत्' इति प्रदर्शितश्च दृष्टान्तः दार्ष्टान्तिकात् पुरतो विचार्यः; अन्यथा वाक्यार्थानवगमात् । दार्ष्टान्तिकात् पूर्वं ज्ञातत्वे सत्येव दृष्टान्तता । अतः श्रोतुस्तज्ज्ञानमस्तीति सूत्रकृन्मन्यते । एवं पूर्णमीमांसाग्रन्थपरिस्थित्याऽपि कर्मविचारे पूर्वत्वं स्थापितम् । अथ अल्पास्थिर फल-विरक्तानामपि विहाय ब्रह्मविचारं कर्मण्येव विचार्यत्वबुद्धिरित्याह यदीत्यादिना । अपेक्षितं मधु अनायासेन लभ्यते चेत् , कः खल्वद्रिमारोहेत्। सर्वकर्माङ्गकदीर्घकालनिरन्तरकार्यब्रह्मोपासनं विना कतिपयकर्मत एवाक्षय्यमपेक्षितसुखं चेल्लभ्येत, किमुपनिषद्विचारेणेति कर्मजिज्ञासैव सर्वेषां प्रथमभाविनीति ।

एतच्छ्लोकार्थः मीमांसापञ्चमाध्यायोक्तसर्वक्रमप्रमाणविवेचनगर्भ इति **चिन्तामण्यनुसारेण परमार्थभूषणे** विशदमस्माभिर्व्याख्यातम् । सांप्रतं किञ्चिच्चिन्तामणिवितरणमात्रमिष्यते । श्रुत्यर्थपाठस्थानमुख्यप्रवृत्तिरूपषड्विधप्रमाणमध्ये अर्थक्रमोऽधिको दर्शितः । **विषयवाक्ये** प्रथमसूत्रसूच्यत्वाभिमते वाक्ये । द्वितीयपादे मुख्ययोः क्रममनुसृत्याङ्गयोः क्रमः । वेदो निर्णये करणम्, मीमांसा इतिकर्तव्यतेति अङ्गाङ्गिभावात् मुख्यक्रमरीतिरिह । एवं मुख्ये वेदे स्थितेन दर्शितेन क्रमेण, 'परीक्ष्य लोकान्' इत्युक्तेनात्र शास्त्रे क्रम इति द्वितीयपादव्याख्याने श्रौतक्रमोऽप्युक्तो भवति । एवं मुख्यस्य प्रथममनुष्ठेयस्याङ्गस्यानुष्ठानक्रमेण द्वितीयांगानुष्ठानमित्यर्थाश्रयणे चिन्तामण्युक्तः प्रवृत्तिक्रमः प्रतिपादितः स्यात् । **पाठक्रम** इत्यस्य वेदे कर्मब्रह्मकाण्डपाठक्रमानुसारी मीमांसापाठक्रम इतिवत् मीमांसाग्रन्थपाठक्रमानुसारिणी अस्माकं तदध्ययनादिरूपविचारसरणिरित्यर्थोऽपि युक्तः । तत्स्थापनं तृतीयपादेन । **यज्ञेनेत्यादीति** । वेदानुवचनयज्ञदानतपोविशिष्टवेदनकर्तव्यतारूपवाक्यार्थज्ञानं यज्ञरूपपदार्थज्ञानसापेक्षमित्यर्थः । अयमर्थः **श्रुतप्रकाशिकायामप्युक्तः** । तथा चोपनिषद्वाक्यार्थनिश्चयार्थं

कालत्वात् तेन स्वस्थानात् कर्मविचारं त्यक्त्वा ब्रह्मविचारः कथमिवानुष्ठेय इति । यथा साद्यस्के कर्मणि, 'सह पशूनालभेत' इत्यत्र बहूनां पशूनां सहालम्भने सवनीयस्य स्वस्थानत्यागात् पूर्वमनुष्ठानं प्रतिपेदिरे तान्त्रिकाः ॥ ७ ॥

व्याचख्युः केऽपि तापत्रयहतिमितरे साधनानां चतुष्कं
काण्डेऽस्मिन् पूर्ववृत्तं कथयति निगमः कर्मचिन्ताफलं तत् ।
शास्त्राधीतिर्हि वृत्ते विषयमवसरः काल तन्त्रान्तरादेः
औचित्यस्थापितोऽयं क्रम इह न पुनश्चोदनासंप्रयुक्तः ॥ ८ ॥

एवं कर्मब्रह्मविचारयोः पौर्वापर्यं कर्मकाण्डब्रह्मकाण्डाध्ययनप्रतिपादितश्रुत्यादिक्रमानुसारेणोक्त्वा, परपक्षवादिभिरुक्तं क्रमान्तरं प्रतिक्षिपति—व्याचख्युरिति। तत्र यादवप्रकाशीयाः खलु तापत्रयाभिहति-मेव अथशब्दात् पूर्ववृत्तत्वेनाचक्षते, यथाहुः सांख्याः—'दुःखत्रयाभिघाताज्जिज्ञासा' इति। शाङ्करी-यास्तु—'साधनचतुष्टयं पूर्ववृत्तमिति; तच्च नित्यानित्यवस्तुविवेकः शमदमादिसाधनसंपत् इहामुत्र च फलभोगविरागो मुमुक्षुत्वं च' इत्याचक्षते। तदिदमुभयमपि वार्तम्। तथाहि किं तापत्रयोपहितमात्रं तापत्रयाभिहतिः, किं वा स्वर्गादीनां नश्वरत्वादुपरि धर्मैः खर्वितत्वादनर्थशतगर्भितत्वाच्च परित्याज्यत्वनिर्णयः, पूर्वत्र पामरपरीक्षकाविशेषेण सर्वसाधारण्यात् वेदान्तशास्त्रपूर्व(प्र)वृत्तत्वा-नियमेन नियमेन तत्कथनं न संभवति । उत्तरत्र चोभयमीमांसाश्रवणसाध्यत्वात् परस्पराश्रयप्रसङ्गो दुर्वारः। सांख्यशास्त्रश्रवणात् तन्निर्णय इति च न घटते। वेदाध्ययनानन्तरं मीमांसाश्रवणस्य प्राप्तत्वात् सांख्यादीनामवकाश एव नास्ति। कुतस्तच्छ्रवणम्? कुतस्तरां तन्मूला स्वर्गादिषु वैराग्योत्पत्तिः?

---

पूर्वकाण्डवाक्यार्थनिश्चयोऽपेक्षित इति तस्य पूर्वत्वमिति । प्रागसाभिः सूत्रार्थज्ञानार्थं पदार्थज्ञानमित्युक्त-मप्यस्तु । अत्के इत्यस्य सविधे इत्यर्थः श्लोकेऽपि दर्शितः । अर्के इति केचित् पाठं कल्पयित्वा अर्कवृक्षके इत्यर्थमाहुः ॥ एवं श्रुत्यादिप्रमाणगम्योऽप्ययं क्रमो न पञ्चमाध्यायोक्त इव विधिविहितो भवति । 'औचित्यस्थापितोऽयं क्रम इह न पुनश्चोदनासंप्रयुक्तः' इति वक्ष्यमाणत्वात् ॥ ७ ॥

पूर्वमीमांसानैरपेक्ष्येण शास्त्रावतारं वदतां पक्षमनूद्य निरस्यति व्याचख्युरिति । आध्या-त्मिकाधिभौतिकाधिदैविकतापकृताभिघातानन्तरमिति अथशब्दार्थमाहु । केऽपि=कर्मब्रह्मणोः समसमु-च्चयवादिनः कर्मविचारानन्तर्यरूपार्थस्वीकारार्हा अपि । इमे च यादवप्रकाशीयाः । तथा श्रुत-प्रकाशिकोक्तत्वात् । तथा च अथशब्दार्थानन्तर्यप्रतियोगिपूर्ववृत्तं तापत्रयाभिहतत्वमेवेति । तत्र मूलं सांख्यकारिका । इतरे शांकरास्तु साधनचतुष्टय पूर्ववृत्तत्वेन व्याचख्युः । शांकरादर्वाचो मतस्य शांकरात् पूर्वं प्रदर्शनं शांकरपक्षे वक्तव्यांशाधिक्यात् । अस्य लघुत्वात् । काण्डेऽस्मिन् इत्यनेन, अस्य शारीरकस्य मीमांसाशास्त्रान्तिमकाण्डत्वात् अथशब्दस्य च ग्रन्थमध्यघटकस्य लोके पूर्ववाक्यप्रकरणादि प्रतिपाद्यार्थानन्तर्यपरतया निरूढत्वात् पूर्ववृत्तकर्मविचारानन्तर्यरूपार्थत्यागो न युक्तः सहसोपेक्षितुमिति सूचितम्। एवमर्थान्तरग्रहणे शास्त्रदर्शितार्थत्यागरूपदोषोऽपीत्याह कथयतीति। निगमः, 'परीक्ष्य लोकान् कर्मचितान्' इत्यादिवाक्यम् । कर्मचिन्ताफलं कर्मविचारजन्यं निर्णयं तत् पूर्ववृत्तत्वेन कथयति । मतद्वयोक्तार्थसंभवमप्याह शास्त्रेति। यदा पठनार्हो बटुः, तदैव तस्य, अष्टवर्षं ब्राह्मणमुपनयीतेत्यादिना सांग-

कुतस्तरां च तापत्रयाभिहतिपूर्वकं(क)शारीरकशास्त्रश्रवणम्? इति महदिदं सङ्कटमापद्यते। किंच सांख्यादिशास्त्रैः, 'प्रकृतिरेव सर्वकर्त्री, पुरुषश्च निर्लेपः, ईश्वरो नास्ति' इत्यादिविपरीतबोधनाद्यथायथमेव वैराग्यं जायत इति न सम्यग्वैराग्यसिद्धिः। इदं च परस्पराश्रयादि मृषावादिनामपि तुल्यमेव। नित्यानित्यवस्तुविवेकादीनां चतुर्णामपि शारीरकशास्त्रश्रवणमन्तरेणासिद्धिः, तत्सिद्धौ तच्छ्रवणमिति परस्पराश्रयावकाशात्। न्यायादिशास्त्रश्रवणजनितनित्यानित्यवस्तुविवेकस्तु पूर्ववदेव निरसनीयः। अत्र शास्त्रान्तराणामवकाशाभावात् विपरीतबोधजनकत्वाच्चेति। यस्तु कश्चित् पण्डितम्मन्यः प्राह—'नित्यमुपादेयमनित्यमनुपादेयमिति प्रतीतिमात्रमेव नित्यानित्यवस्तुविवेकः, इदं च वेदान्तशास्त्रश्रवणात् प्रागेव सिध्यतीति नान्योन्याश्रय' इति—सोऽपि प्राश्यजनविप्रलम्भकः। नित्यमुपादेयमनित्यमनुपादेयमिति साधारणप्रतीतेः सांख्यवैशेषिकादिसर्वशास्त्रसाधारण्येन वेदान्तशास्त्रनियतपूर्वभावित्वेनावक्तव्यत्वादिति। तदिदं सर्वमभिप्रेत्याह—कथयतीति। 'परीक्ष्य लोकान्' इत्यागमः तापत्रयाभिहतिं नित्यानित्यवस्तुविवेकादिकं चोभाभ्यामपि वादिभ्यामुक्तं कर्मविचारमन्तरेण न सेत्स्यतीति कथयति। अयमर्थः—किं वेदान्तवाक्यश्रवणमात्रोपायत्वेन स्वर्गादिविषयवैराग्यैकदेशो विवक्षितो भवता, अथवा, 'शान्तो दान्तः' इत्याद्युक्तपरमवैराग्यम्। पूर्वं तावत् कर्मविचार-

---

वेदाध्ययने नियोजितत्वात् अध्ययनात् प्राक् नित्यानित्यविवेकादि न लभ्यम्। अथ तु वेदाध्ययनाधीनार्थसंशयभागेवायम्। तन्निर्णयपरत्वाच्च तन्त्रान्तरपठनावसरालाभात् तदधीनान्यादृशनिर्णयभाक् न भवतीत्यर्थः। तापत्रयाभिहतोऽहमिति ज्ञानं हि संसारं दुःखमयं मन्यमानस्य तापत्रयादिविवेचकशास्त्रबलात् भवितुमर्हति। न च तादृशं शास्त्रमनेनाधीतमस्ति अवसरालाभात्। कर्मविषयकविशयस्तु सांगाध्ययनस्य निवृत्तत्वात् स्वयमेव जातोऽस्ति। कतिपयकर्मकरणात् तापत्रयाभिहतिरपि वार्येतेत्यपि मन्येत। अतः कर्मविचारेणैव तन्निवृत्तिर्निरूप्या। सांख्यशास्त्रात् तापत्रयाभिहितत्वज्ञानमित्यपि न युक्तम्। तापत्रयाभिहतिबलात् तन्निवर्तकजिज्ञासायामेव सांख्ये प्रवृत्तेस्तैरुक्तत्वात्। तथाविधतन्त्रान्तरात् निवार्य वेदान्तार्थजिज्ञासया प्रवृत्तिस्तु तादृशशास्त्राप्रामाण्यज्ञानाधीनं वक्तव्यम्। तथा ज्ञानञ्च मीमांसाप्रथमाध्यायतो वेदप्रामाण्यादिनिश्चयादेव भवितुमर्हति। अतः कर्मविचारानन्तर्यस्यैव अथशब्दार्थत्वं युक्तम्। एवं नित्यानित्यवस्तुविवेकादिसाधनचतुष्कमपि न तन्त्रान्तरात्, तद्ग्रहणावसराभावात्। स्वतः प्राप्तजिज्ञासाविषयकर्मविचारलभ्यस्यार्थस्य कर्मविचारं विहाय तन्त्रान्तरैः संपादने प्रवृत्त्ययोगाच्च। तन्त्रान्तरादेरिति आदिपदेन तन्त्रान्तरनिष्ठजनसंसर्गविशेषग्रहणम् स्वोत्प्रेक्ष्यस्य तर्कस्य च। ननु यद्यध्ययनवत् विचारस्यापि वैधत्वम्, तर्हि तत्रोत्तरस्य पूर्वानन्तर्यमपि स्वरसतो विध्यन्वितमेवेति किमत्र सूत्रेणेत्यत्राह औचित्येति। नास्मत्पक्षे विचारो वैधः, रागप्राप्तेरुपपादनात्। न च श्रुतेर्वैयर्थ्यम्—गुर्वभिगमनमात्रे विध्यन्वयात्। सूत्रकारोऽपि नानन्तर्यं शास्त्रबलमादाय विदधाति जिज्ञासेति प्रयोगात्। किंतु केषाञ्चित् अध्ययनक्रमानुसारिणो विचारक्रमस्य स्थितस्यासंभवशंकायां तत्प्रतिष्ठापनमेवात्र करोति। औचित्यमेव क्रमे नियामकम्; न तु विधिः। अतः कर्मविचारं विना ब्रह्मविचारे प्रवृत्तौ प्रत्यवायं न वयं ब्रूमः। किं तु ब्रह्मविचारप्रवृत्तिस्तम्भनमेव निवारयामः॥

चि. टी. ८. **यथाहुः सांख्या इति**। सांख्याः यदुक्तवन्तः, तदेव अथशब्दार्थत्वेन केचित्

मन्तरेण न सेत्स्यति। परं तु कर्मविचारपूर्वकब्रह्मविचारमन्तरेण न सेत्स्यति—इति शारीरकशास्त्रपूर्व-दूषकत्वेन वक्तुमेव न शक्यते। इदं च दूषणं मृषावादिनामपि तुल्यमेव। शारीरकशास्त्रश्रवणात्पूर्वं सम्यङ्नित्यानित्यवस्तुविवेकादीनामसिद्धेः, एकदेशेन नित्यानित्यवस्तुविवेकादीनां कर्मकाण्ड चिन्ताफलत्वाच्चेति। ननु साङ्गाध्ययनसामर्थ्यात्, पूर्वमेव प्रतीतमिति चेत्; तत्रोत्तरम्—साङ्गाधीतिरिति। अध्ययनमात्रादापातप्रतीतिमात्रं जायते न तु नित्यानित्यवस्तुविवेकादिनिश्चय इति। तर्हि सांख्यवैशेषिकादितन्त्रान्तराभ्यासात् निश्चयो जायत इति चेत्; तत्राप्युत्तरमाह—अवसर इति। अध्ययनानन्तरं न्यायप्राप्ते मीमांसाश्रवणे जाग्रति अप्राप्तानां न्यायादीनामवकाशो नास्तीत्यर्थः। एवं क्रमस्यावश्यकत्वेन क्रमेण कर्तव्यस्य मीमांसाश्रवणस्य विधिप्राप्तत्वं स्यादित्या-शङ्क्याह—औचित्येति। औचित्यात् योग्यतामात्रचिन्तनात् अयं क्रमः परिकल्प्यते। न पुनः श्रुत्या साक्षादेव विधीयते। कथं तर्हि, 'परीक्ष्य लोकान्' इत्यादिश्रुतिः कर्मब्रह्मविचारयोः पौर्वापर्यं विदधातीत्याशङ्क्याह—नपुनरिति। साऽपि(हि) श्रुतिर्न्यायप्राप्तमेव प्रतिपत्तॄणामनुग्रहाय विशदमेवा-नुवदति। 'गुरुमेवाभिगच्छेत्' इति तु विधिः, 'अभिजनविद्यासमुवेतं समाहितं संस्कर्तारमीप्सेत्' इतिवत् नियमविधिरिति न सङ्कटं किञ्चिदिति। 'स्वाध्यायोऽध्येतव्यः' इति विधिस्त्वक्षरराशि-ग्रहणे विश्राम्यति। रागप्राप्ते तु मीमांसाश्रवणे क्रमपरिक्लृप्तिरौचित्यादेव सिध्यतीति ॥ ८ ॥

नित्यप्राप्तस्य कण्ठस्थितकनकनयाङ्किर्विशेषस्य लब्धिः
मिथ्याभूतं निवर्त्यं श्रुतिबलकलषुव प्रेक्षणात्सिद्धिः ।

---

यादवप्रकाशीया आचक्षत इत्यर्थः। पापरेति। तापत्रयाभिहतिनिवृत्तिविषयैव स्वर्गादावपि प्रवृत्तिरिति भावः। कश्चित् पण्डितंमन्य इति। स्वभाष्यकाराशयमपास्य स्वयमाशय न्तरवर्णनं भामतीकारादेः मुखेन परैर्दूष्यत्वस्य स्वाचार्योल्लंघनस्य च द्वयोर्लाभायैवेति भावः। न सेत्स्यतीति कथयतीति। यद्यपि परीक्ष्येति वाक्ये वादिद्वयोक्तस्य कर्मविचारमन्तरेणासिद्धिर्न कण्ठोक्ता। अथाप्यर्थात् सिध्यतीति भावः। भवता=तापत्रयाभिहतिविशेषस्य पूर्ववृत्तत्ववादिना। यादवप्रकाशीयं मति पृथगुक्त्वाऽन्य त्राप्यतिदिशति इदञ्चेति। ननु परीक्ष्येति वाक्ये, नास्त्यकृतः कृतेनेति कर्मणैव मोक्षसिद्धिरित्यस्य निषेधात् सांख्यैश्च, 'दृष्टवदानुश्रविकः' इति कर्मणामपि पापहेतुतया मोक्षासाधकत्वोक्तेः तत्पक्षनिरसनं ततः स्यात्; न तु नित्यानित्यविवेकादिमृषावाद्युक्तनिरसनमिति शंकां परिहर्तुं पृथगुक्तम्, इदञ्च दूषणं मृषावादिनामपीति। तदुक्तं पूर्ववृत्तं द्विविधमपि किं सांगवेदाध्ययनात् किं वा तन्त्रान्तरादिति विकल्प्य दूषणपरत्वेन तृतीयपादं व्याख्याति ॥ ८ ॥

भाष्ये लघुपूर्वपक्षदर्शिता 'कर्मणोऽनपेक्षितत्वात् न कर्मविचारानन्तर्यं वक्तव्यम्, किंतु साधन-चतुष्कानन्तर्यमेव, अपेक्षितत्वात्' इत्याशंका लघुसिद्धान्तेन परिहृता। किं ब्रह्मज्ञानस्य मुक्त्युपायस्य कर्मापेक्षा नास्तीत्युच्यते, उत ब्रह्मविचारस्य बादरायणकृतस्य जैमिनीयकर्मविचारापेक्षा नास्तीति। नाद्यः; उपासनात्मकज्ञानस्यैव मोक्षोपायत्वात् तस्याहरहरनुष्ठानेनाभिवृद्धेः कर्मायत्तत्वात्। नान्त्यः; ब्रह्मसूत्राणां मानमेदाङ्गत्वादिसर्वाध्यायार्थसापेक्षत्वात्, जैमिनीयस्य बहुशोऽनुवादात्, दृष्टान्ततयाऽपि जैमिनीय प्रदर्शनात् प्रकृतविचारे तद्विचारसापेक्षत्वस्य सर्वथैवात्याज्यत्वादिति। इदं सर्वं प्राबल्यमिति (7) श्लोकेऽत्र

कर्मैवं कोपयुक्तं प्रतिभटमपि तद् वृत्तोक्तिर्मदुक्ते
प्राप्ताऽत्रेति प्रलापे प्रतिवचनगतिर्भाषिता विस्तरेण ॥ ९ ॥

नित्यानित्यवस्तुविवेकादिनिराकरणपूर्वकं कर्मविचारस्य पूर्ववृत्तत्वेऽभिहिते पूर्वपक्षवादिना तत्तत्प्रतिक्षेपप्रकारमनूद्य तस्यापि प्रतिक्षेपप्रकारो भाष्य एव विस्तरेणाभिहित इति भाष्यमेव तत्रोत्तरयति नित्येति। अयमभिप्रायः—वयं खलु शिष्याणां सुखप्रतिपत्त्यर्थं शारीरकशास्त्रशारीरसंग्रहे प्रवर्तामहे, न परपक्षप्रतिक्षेपे, विस्तररूपं प्रथमसूत्रभाष्यमेवान्तेवासिभिः पौनःपुन्येनानुसन्धेयमिति। शब्दार्थस्तु—नित्यप्राप्तस्य निर्विशेषस्य ब्रह्मणः कण्ठचामीकरन्यायेनोपदेशः क्रियते। 'शारीरकशास्त्रेण न संसारो व्यावर्त्यते। स च परमार्थः, निवर्तकश्च तस्य कर्मपरिकर्मित-[पर]ब्रह्मोपासनम्' इति परपक्षमाशङ्क्य स्वपक्षपरिकल्पितान् निवर्त्योपायोपेयान् विशदं प्रकाशयति—मिथ्येति। श्रुतिशकलभुवः कर्मनिरपेक्षात्, 'तत्त्वमसि' इत्यादिवाक्यजन्यात् प्रत्यक्षादेवाविद्या-

---

प्रत्यपादि। साधनचतुष्कं च कीदृशमिति विचार्य, कर्मविचारं ब्रह्मविचारञ्च विना तस्य यथायथमसंभवोऽपि भाष्ये, अत्र पूर्वश्लोके चोक्तः। अथ महापूर्वपक्षसिद्धान्तौ संगृह्णाति निरयेति। जगन्मिथ्यात्वस्य जीवब्रह्मैक्यस्य चैव शास्त्रार्थत्वात् सगुणोपासनापेक्षिणस्यापि कर्मणो न निर्गुणब्रह्मज्ञानरूपप्रधानार्थे उपयोग इति प्रधानापेक्षितमेव पूर्ववृत्तं वक्तव्यमित्याशंकायां मिथ्यात्वात्मैक्ययोर्निरसनं महासिद्धान्तेन कृतं विस्तरेणेति। नन्वेतत्पक्षे मोक्षप्राप्तिर्नाम का एकात्ममात्रसत्त्वैवेति चेत्—तादृशी प्राप्तिरस्त्येव सर्वदा, अन्यस्य मिथ्यात्वादिति चेत्—सत्तातिरिक्तप्राप्त्यभावात् नित्यप्राप्तस्य लम्भः=लाभः उच्यमाना कण्ठ-चामीकरन्यायेन भाव्या। कण्ठेन स्वधृतं स्वर्णभूषणमेवाधिकृत्य कश्चित् अनवधानात्, 'कुत्र निक्षिप्तम्, नास्ति हि कण्ठे' इति वदन् अन्येन प्रतिबोधितः स्वयं च स्पृष्ट्वा लब्धं भूषणमिति तृप्यति। तत्र लाभः कीदृशः? अलब्धत्वभ्रान्तिनिवृत्तिरेव। तद्वदत्रापि मिथ्याभूतो जीवब्रह्मभेदो निवर्त्यः। प्रपञ्चस्य सत्यत्वे जीवेश्वरगताल्पज्ञत्वसर्वज्ञत्वादिविरुद्धधर्माणामपि सत्यत्वात् भेदो न निवर्त्यः स्यादिति सर्वमिथ्यात्वस्वीकारः। इयञ्च भेदनिवृत्तिः, निवर्त्यस्य मिथ्यात्वात् तत्त्वज्ञानैकसाध्या। न हि रज्जुसर्पनिवृत्तिं प्रति, 'रज्जुरेव; न सर्पः' इति तत्त्वज्ञानस्येव दण्डघातादिकर्मणोऽप्यपेक्षाऽस्ति। जातेऽप्यैक्यज्ञाने भेदरूपः प्रपञ्चो न निवर्तेत इति चेन्न; प्रेक्षणरूपज्ञानादेव हि तन्निवृत्तिः, न तु परोक्षज्ञानात्। कथमिन्द्रियाणामेतदपरोक्षज्ञानजनकत्वमिति चेत्, नेन्द्रियतस्तत्, किंतु शब्दात्। तत्र पौरुषेयस्याविश्वसनीयत्वात् अपौरुषेयात्। अपौरुषेयश्च शब्दः श्रुतिरेव। यद्यपि स सर्वो भेदपरः, अथाप्यस्ति तत्र महावाक्यम्, 'तत्त्वमसि', 'अयमात्मा ब्रह्म' इत्यादि तत्र प्रमाणम्। वाक्यस्याप्यपरोक्षजनकत्वमिष्यते ब्रह्मणः स्वाभिन्नत्वात्। एवं—एवं सति कर्म पूर्वमीमांसाविचारितमत्र कोपयुक्तम्? न तावत् भेदनिवृत्तिरूपफले; तस्य ज्ञानमात्रकार्यत्वात्। नापि ज्ञानोत्पादने; शब्दस्योपदेशादेरेव तत्र हेतुत्वात्। नन्वदृष्टविधया कर्मणो ज्ञाने उपयोगोऽस्त्विति चेत् न; प्रतिभटमपि हि तत्। वर्णाश्रमादिभेदज्ञानमूलकस्य कर्मजातस्य भेदज्ञानवर्धकतया दृष्टविधया बाधकत्वे स्पष्टे कथमदृष्टविधयोपयोग उच्येत। तत्=तस्मात् मदुक्ते साधनचतुष्क एव वृत्ततायाः पूर्ववृत्तत्वस्योक्तिरत्र युक्तेति। एवं

निवृत्तिः ॥ न केवलं कर्मणामनपेक्षितत्वमेव, अपितु प्रतिभटत्वमपीति प्रदर्शयति—प्रतिभटमपीति । कर्मणां भेदात्मकत्वात्, ब्रह्मणो निर्विशेषत्वात् । तस्मात् पूर्ववृत्तत्वोक्तिर्मुक्ते नित्यानित्यवस्तुविवेकादौ प्राप्तेति प्रलापे प्रतिवचनगतिर्भाष्य एव विस्तरेण प्रतिपादितेति न वयं विस्तृणीमहे । अयमत्रोत्तरग्रन्थाशयः—उभयविभूतिविशिष्टं परं ब्रह्म प्राप्यम्, प्रापकं चोपासनम्, तच्चाभिसंहितफलकर्मानुष्ठानसाध्यम्, अनुष्ठानं च कर्मणां परिज्ञानादेव, तच्च परिज्ञानं कर्ममीमांसाश्रवणादेवेति कर्मविचारस्यैव पूर्ववृत्तत्वकथनं सम्यगेव, अपन्यायमूलं परेषां पूर्ववृत्तत्वपरिकल्पनं प्रतिक्षिपाम इति ॥ ९ ॥

मीमांसायाः कबन्धं कतिचन जगृहुर्राहुकल्पं शिरोऽन्ये
किं तैरन्तर्विरोधप्रमुषितमतिभिर्बाह्यकल्पैर्भ्रमद्भिः ।
स्वाध्यायाध्यायकात्स्न्र्ये, स्वविधिपरविधिप्रेरणा तावदास्तां,
कृत्स्नापातप्रतीतौ किमिति कृतधियः कृत्स्नचिन्तां न कुर्युः ॥ १० ॥

ननु मीमांसाशास्त्रस्य पूर्वोत्तरभागयोरैक्ये सत्येव पौर्वापर्यक्लृप्तिः समुचिता । तदेव न विद्यत इत्याशङ्क्य प्रतिक्षिपति—मीमांसाया इति । 'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः' इति, 'पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः' इति च कर्मब्रह्मविचारयोर्मीमांसेति साधारण्येनोपादानात् सिद्धमेव द्वयोरपि भागयोरैक्यम् । कथं तर्हि कर्ममीमांसा ब्रह्ममीमांसेति विभागनिर्देश इति चेन्न ; तस्यैवास्माकमनुकूलत्वात् । अत्र हि मीमांसेत्येकमेव शास्त्रम्, तत्र कर्मप्रधानो भागः कर्ममीमांसा, ब्रह्मप्रधानो भागो ब्रह्ममीमांसेति विभाग इति प्रतीयमानत्वात् । अन्यथा विद्यास्थानानां चतुर्दशत्वासंभवात् । तेन मीमांसाशास्त्रस्यैक्ये सत्यपि निरीश्वरमीमांसकास्तस्य शरीरमेव परिजगृहुः । अत एव तान् कबन्धमीमांसका इत्याचक्षते विचक्षणाः । अपरे तु राहुकल्पं

---

परपक्षमनूद्य इतीत्यादिना निरासोक्तिमाह । इति प्रलापे परकीये व्यर्थवचने प्रतिवचनप्रकारो विस्तरेण—महासिद्धान्तग्रन्थेन भाषित इति । निर्विशेषे मानस्य कस्याप्यभावात्, जगन्मिथ्यात्वस्य च दुर्वचत्वात्, शब्दात् प्रत्यक्षायोगात्, श्रुतिशकलस्य चेतरश्रुतिवृन्दसमानार्थकस्य स्वापेक्षितमहावाक्यत्वायोगात्, जीवब्रह्मभेदस्यैव प्रामाणिकत्वात्, अन्यादृशमोक्षसिद्धेरसंभवाच्चेति श्लोकार्थः ॥

अत्र षष्ठश्लोके लघुपूर्वपक्षात् पूर्वस्य भागस्यार्थः संगृहीतः, अथ श्लोकद्वयेन लघुपूर्वपक्षसिद्धान्तार्थकथनम् ; साधनचतुष्कस्यापि तत्र कथनात् । अनेन तु नवमेन महापूर्वपक्षसिद्धान्तसारांशः, विस्तरेणेति पदस्वारस्यात् । उपरि महापूर्वपक्षादिस्पर्शाभावाच्च । लघुगुरुभागयोर्विषयविवेकस्तु भाष्यार्थदर्पणेऽपि द्रष्टव्यः । एतत्पद्यचिन्तामणितोऽप्यस्य महापूर्वपक्षादिविषयत्वं व्यक्तम्, विस्तररूपं प्रथमसूत्रभाष्यमेवान्तेवासिभिः पौनःपुन्येनानुसंधेयम् इति प्रवर्तामहे—सारावलिं कुर्मः ॥ ९ ॥

एवं कर्मब्रह्मणोर्विरोधं परिहृत्य सापेक्षत्वं स्थापितम् । अथ तन्मुखेन ऐकशास्त्र्यं तत्रानुपपत्तिपरिहारविधाश्च षड्भिः पद्यैराह मीमांसाया इति । कर्ममीमांसारूपप्रथमभागब्रह्ममीमांसात्मकभागान्तरोभयावयवे एकस्मिन् मीमांसाशास्त्रे कतिचन निरीश्वरमीमांसकाः कबन्धं कर्ममीमांसामात्रमेव पूर्वमीमांसात्वेनागृह्णन् । अन्ये मृषावादिनः राहुतुल्यं शिरः उत्तरमीमांसामात्रं तथा जगृहुः ।

तच्छिर एव परिजगृहुः। तानपि राद्धमीमांसका इत्याचक्षते। तयोरितरेतरांशपरित्यागोऽन्तर्विरोधनिबन्धन इत्यधिक्षिपति—किं तैरित्यादिना। न केवलं पुराणादिप्रसिद्धिमात्रेण कर्मब्रह्मभागयोरैक्यम्, अपि तु न्यायानुसारेणापीत्याह—स्वाध्यायेति। अत्र स्वाध्यायशब्देन सशिरस्को वेद उच्यते। तेनाध्ययनं तावदुभयभागविषयमेव। तत्फलभूतमक्षरराशिग्रहणमपि तथैवोभयविषयम्। तदनन्तरं साङ्गाध्ययनादिजनितापातप्रतीतिरपि उभयविषयिणी। तथा तदन्तर्वर्तिवेदवाक्यार्थविचाररूपमीमांसा सार्वत्रिकी। तदिदमाह—कार्त्स्न्ये इति। ननु स्वविधिप्रयुक्तं स्वाध्यायाध्ययनमिति कौमारिलाः। तच्चार्थज्ञानपर्यन्तम्। तन्मध्यभाविविचारोऽपि अध्ययनविधिप्रयुक्त एव। तथा च कथमापातप्रतीत्या प्रयुक्तिरुच्यते विचारस्य। एवमध्यापनविधिप्रयुक्तमध्ययनम्। तत्र दृष्टफलत्वेन अर्थज्ञानमनुमन्यते नियोगेन। तदन्तर्वर्तिविचारोऽपि तदनुमत्यैव प्रवर्तते। किमापातप्रतीतिप्रेरणया मीमांसाशास्त्रस्येति। अत्रोत्तरमाह—स्वविधीति। स्वविधिप्रयुक्तत्वं परविधिप्रयुक्तत्वं वा भवतु नाम। उभयपक्षेऽपि कृत्स्नचिन्तनमपरित्याज्यमेव ; अन्यथा कृत्स्नाध्ययनस्यापि परित्याज्यत्व-

---

इदञ्च मिथो विरोधप्रसञ्जनायात्तमित्याह किं तैरिति। अन्तः मनसि स्थितेन विरोधेन=विरोधप्रसञ्जनेति यावत्, प्रमुषिता–नष्टा मतिः मननशक्तिः येषां तैः। बाह्यकल्पैरिति। बाह्याः कर्मब्रह्मोभयत्यागिनः; इमे एकैकत्यागात् तत्कल्पाः। ननु शिरस्त्वकबन्धत्वे एव कथं गृहीते ; द्वयोः पृथक्छास्त्रत्वे विरोधाभावादित्यत्र भट्टप्रभाकरोभयसंमतत्वविशेषेण ऐक्यनियामकमाह स्वाध्यायेति। चतुर्थपादोऽत्र हेतुप्रदर्शी। वेदस्तावत् कर्मब्रह्मोभयविषयकभागद्वयात्मक एकग्रन्थ इति निर्विवादम्। कृत्स्नविषयकाऽऽपातप्रतीतिस्ततो जाताऽस्ति। अतः प्रथमप्रवृत्तिः कृत्स्नविषयिण्येव। यदि अध्ययनं भागमात्रविषयकम्, तदा स्यान्नाम आपातप्रतीतेः कृत्स्नाविषयकत्वम्। तत्तु न भट्टस्य प्रभाकरस्य वा संमतम्। भाट्टैः, 'स्वाध्यायोऽध्येतव्य.' इति अध्ययनविधायकं वाक्यमिति स्वाध्यायोद्देशेनाध्ययनविधानात् स्वविधिप्रेरणाधीनमध्ययनम् शिरोभागविषयकमपि विहितमित्येवाऽऽस्थीयते। प्राभाकरैस्तु, 'उपनयीत, तमध्यापयेत्' इति आचार्यककामं प्रति अध्यापने विहिते, अध्ययनाभावे अध्यापकत्वानिष्पत्त्या उपनीते अध्येतृत्वसंपादनमित्युच्यते। तत्रापि कृत्स्नाध्ययनमेव। अतः स्वाध्यायस्य=तत्तत्पूर्वपुरुषकनप्राप्तस्य वेदस्य अध्याये—अध्ययने कार्त्स्न्यमुभयेष्टम्। 'व्यवहारे भट्टनयः' इति वदतामद्वैतिनामपि पूर्णाध्ययनमेवेष्टम्। अतः कृत्स्नचिन्तारूपस्य ग्रन्थस्य मीमांसारूपस्यैक्यमेवेति। अत्र अध्ययने स्वविध्यादिप्रयुक्तत्वोक्त्या विचारे वैधत्वं मीमांसकोक्तं नेष्यत इति सूचितम्। तावदिति प्राथम्ये, अवधौ वा। अध्ययनविधिनाऽर्थज्ञानोद्देशेनाध्ययनस्य विधाने तदितिकर्तव्यतात्वेन विचारस्यापि विधिरिति भाट्टपक्षे कृत्स्नविचारो वैधः स्यात्। अध्यापनविधिप्रयुक्तमध्ययनमिति पक्षेऽपि विचारो वैधः स्यात्। सिद्धान्ते तु स्वाध्यायाध्ययनकार्त्स्न्ये तावत्, तन्मात्र एव प्रेरणाविश्रमः ; अक्षरराशिग्रहणमात्रार्थत्वात्। अतः कृत्स्नचिन्ता कथम्। एवमद्वैतिनां भट्टमतानुयायित्वेऽपि, "अध्ययनमात्रवत." इति ब्रह्मसूत्राविरोधायार्थज्ञानार्थत्वस्यानिष्टत्वात् विचारो न वैधः, अध्ययनकार्त्स्न्ये एव विधिपर्यवसानमिति शंकामनुचिन्त्याह तावदास्तामिति। आस्तामियं प्रेरणा तावन्मात्रे। अथापि कृत्स्नविषयकापातप्रतीतौ वर्तमानायां कृत्स्नार्थचिन्तां कथं कृतधियः बुद्धिसामर्थ्यसंपन्नास्त्यजेयुः। एकदेशत एवापेक्षितसिद्ध्या तदन्य-

प्रसङ्गात् । अस्मत्पक्षे तु आपातप्रतीतेः कृत्स्नविषयत्वात् तत्प्रयुक्तं मीमांसाशास्त्रश्रवणमपि कृत्स्नविषयमेवेति पूर्वोत्तरभागयोः क्रमपरिकल्पनं युक्तमेव ।

[1]अत्रायं विभागः प्रभावद्गुरुकाणां प्रवादेषु—उपनयनमध्ययनाङ्गम्। तत्राध्ययनं 'स्वाध्यायोऽध्येतव्यः' इति स्वविधिप्रयुक्तम्; अध्ययनं च स्वाध्यायसंस्कारः। स च विधिर्नियमविधिरेव। अध्ययनगृहीतेनैव स्वाध्यायेन ज्ञानं संपादयेदिति कृत्स्नयुक्तिविशेषपरिज्ञानार्थं तन्मतपरिश्रमशालिभिः भवितव्यम्। अपरे पुनरित्थमाचक्षते–'उपनीय तु यः शिष्यं वेदमध्यापयेत्' इत्यध्यापनाङ्गमुपनयनम्, तत्राध्ययनं परविधिप्रयुक्तम्; साक्षात्तच्छेषत्वश्रवणात्। अध्ययनं च नियोगार्थत्वेन प्रधानकर्म। तद्विधिरप्यप्राप्तविधिः। अध्यापनं पुनराचार्यकनियोगार्थं वृत्त्यर्थध्यापनादन्यदेव विधीयते। नियोगानुमत्यैव मध्येऽधिकारसिद्ध्यर्थं विषयफलत्वेनार्थज्ञानमपि स्वीक्रियते, दृष्टफलस्यापरित्याज्यत्वात्। अत उभयोरपि पक्षयोरर्थज्ञानार्थं विचारो वैध एव। वेदान्तवादिनस्तु भट्टपरिकल्पितमनुमन्यन्ते। अयमत्र विशेषः–यदक्षरराशिग्रहणमात्रफलमेवाध्ययनमामनन्ति। अत्र न्यायानपि ब्रुवते। अक्षरराशिग्रहणस्याव्यवहितफलत्वात्, हुंफडादिष्वप्यनुगतत्वात्, अर्थज्ञानवादिभिरप्यपरित्याज्यत्वात्, अधीतवेदानामनधिगतवेदान्तशास्त्राणामर्थज्ञानाभावेनाश्रोत्रियत्वप्रसंङ्गात्, अक्षरराशिवदर्थज्ञानस्यापि पारम्पर्येण पुरुषार्थत्वादित्यादयोऽपि हेतवो दर्शयन्ते। यत्पुनरूचुः—'अधीत्य स्नायात्' इति स्नानविधिनैव रागप्राप्तमीमांसाश्रवणस्य बाधात् युष्मत्पक्षे श्रवणमेव न जाघटीतीति, तन्न—विधिनापि स्वापेक्षितबाधस्य वक्तुमशक्यत्वात्। यथा स्नानविधिर्गुरुदक्षिणाप्रदानार्थमर्थार्जनमनुमनुते, एवं स्नानोद्वाहाग्न्याधानयागदानहोमादिस्वविधीनां साद्गुण्येनानुष्ठानसिद्ध्यर्थं मध्ये मीमांसाश्रवणमनुमन्वीतेति न विरुणीमहे। विस्तरस्त्वस्माभिरारचितायां मीमांसापादुकाटीकायां द्रष्टव्यः। 'उपनयीत' इत्यात्मनेपदवादस्तु विस्तरभयादत्र न लिख्यते ॥१०॥

प्राधीतस्यैकरूपप्रयतननियतादेकरूपोपकाराद्
विद्यास्थानैक्यमिद्धौ(द्धेः) क्रमनियतियुताकाङ्क्षयैकप्रबन्धम् ।

त्याग इति चेत्— न ; सर्वापेक्षाया. प्रागेवोक्तत्वात् ॥

चि. टी. १०. ऐक्ये सत्येव—एकावयविनिविष्टत्वरूपसंसृष्टत्वे सत्येव । शाङ्कबन्धपदप्रयोगः पूर्वमेकत्वेन यथार्थमनुसंहितस्य पश्चात् भेदकल्पनमापतितमिति ज्ञापनाय ।

(1) अत्रायं विभागः इत्यादिग्रन्थ. सर्वत्र कोशेषु अनन्तर(11)श्लोकचिन्तामण्यन्त एव दृश्यते । अत्रैवोत्तरार्धविवरणरूप तया तदङ्गत्वमिति योजित इह । यथारुचि अनुसंधीयताम् ॥ १० ॥

नन्वङ्गानां सर्वेषामेकविद्यास्थानत्वं न कस्यापीष्टम् । कुत ? तत्तदङ्गाधीनविद्याया विभिन्नत्वात् । वर्णपदच्छन्दःपदार्थकालप्रयोगरूपविभिन्नार्थविषयकाणि हि षडङ्गानि । तथैवान्यान्यपि । अत्र कर्मविषयज्ञानरूपविद्यास्थानं जैमिनीयम्, ब्रह्मविद्यास्थानं शारीरकम् । एवं विद्यास्थानत्वमेव भिन्नं चेत्, प्रबन्धैक्यं कथं भविष्यति । न चैकविद्यास्थानत्वाक्रान्तानां पुराणानां सर्वेषामेकप्रबन्धत्वम् । एवं धर्मशास्त्राणि, तथा वृत्तिभाष्यवार्तिकादिग्रन्था एकविद्यास्थानत्वेऽपि विभिन्नप्रबन्धा एव । विशेषतश्च तन्त्रशारीरकयोः कर्तृभेदोऽपि प्रबन्धैक्यप्रतिषेधकः—इत्याशंकायामाह प्राधीतस्येति । प्राधीतस्य—प्रकर्षेण अङ्गैः सहाधीतस्य वेदस्य । अस्य उपकारादित्यत्रान्वयः । इतिकर्तव्यताभूतया मीमांसया

अध्यायादिप्रविभागवान्तरविषयफलाद्यन्यताऽन्नाप्यमेत्री
तत्तुल्यः कर्तृभेदः ; कलिबलकलुषैः कल्पितोऽर्थे विरोधः ॥ ११ ॥

(१) विषयैक्यात् (२) प्रयोजनैक्यात् (३) प्रवृत्तिप्रकारैक्याच्च शास्त्रैक्यमस्तु नाम। अथापि क्रमो न विलक्ष्यते। न हि सूत्रभाष्यवृत्तिवार्तिकटीकानिबन्धनप्रकरणादीनां कश्चित् क्रमः। तत् कथं कर्म-ब्रह्मभागयोः क्रमपरिक्लृप्तिं भवन्त आचक्षत इत्याशङ्क्याह—प्राधीतस्येति। एकरूपप्रयतननियतात् एकरूपोपकारात् विद्यास्थानैक्यसिद्धौ (द्धेः) क्रमविशेषयुक्ताकाङ्क्षावशादेव प्रबन्धैक्यमपि परिकल्प्यते। प्रबन्धैक्ये च क्रमपरिक्लृप्तिरुपपद्यते। अयमर्थः—एको वेदराशिः, आपादचूडं तद्व्याख्यानरूपं मीमांसाशास्त्रमप्येकमेव निबन्धनम्। तत्र पौर्वापर्यमन्तरेण निबन्धनैक्यस्य वक्तुमशक्यत्वात् तत्रोपयुज्यते क्रमक्लृप्तिः। सूत्रभाष्यवार्तिकटीकानामन्योन्यसाकाङ्क्षत्वरूपत्वेऽपि वाक्यैकवाक्यत्वेन तदर्थप्रतिपादनरूपत्वेऽपि परस्पराकाङ्क्षया भागविशेषार्थप्रतिपादकत्वाभावात् क्रमावश्यम्भावो न विलक्ष्यत इति युक्तमेवैतदिति। तत्र भेदकारणमाशङ्क्य परिहरति—अध्यायादिप्रविभागेति। योऽयं कर्मचिन्तनं ब्रह्मचिन्तनमित्यवान्तरार्थभेद उच्यते। स तु शास्त्रभेदक एव न भवति। साधारणार्थैक्ये सति अवान्तरार्थभेदानां सर्वत्र भेदकत्वात्। अन्यथा षट्कद्विकाध्यायपादपेटिकाधिकरणानामप्यर्थभेदभिन्नानां पृथक्शास्त्रत्वं प्रसज्येत। अत्र आदिशब्देन कारणभेदो विवक्ष्यते। 'अथातः शेषलक्षणम्' इत्यादावथातःशब्दार्थानां भिन्नत्वात्। यत्पुनरुच्यते—कर्मकाण्डे जैमिनिः कर्ता, देवताकाण्डे काशकृत्स्नः, शारीरके बादरायण इति कर्तृभेदात् शास्त्रभेदोऽस्तीति—तदप्यसारमित्याह—तत्तुल्य इति। न ह्येकस्य कार्यस्यैक एव कर्तेति नियमोऽस्ति; बहुकालसाध्यरथगोपुरादौ

---

वेदस्य क्रियमाण उपकारः संदिग्धार्थनिर्णायकतर्कसमर्पणरूपः एकरूपः तन्त्रे शारीरके चाविशिष्टः। शिक्षापुराणाद्यङ्गान्तरक्रियमाणोपकारापेक्षयाऽस्य भिन्नत्वात् न तत्तद्विद्यास्थानत्वमनयोः। एकरूपत्वाच्च न विभिन्नविद्यास्थानता। न चायमुपकार एकपुरुषापेक्षितो न भवतीति वाच्यम्; एकरूपप्रयतननियतत्वात्। वेदार्थं यथावत् निर्णेयमिति जिज्ञासाधीनं प्रयतनमुभयत्राप्येतुरविशिष्टम्। अत्र प्रयतने प्राधीतस्येति पदमन्वेतुमर्हति। प्राधीतपदं, 'प्राधीता इव पर्वताः' इति श्रीमति रामायणे किष्किन्धाकाण्डे वेदेषु येऽधीतिनः तद्विषये प्रयुक्तम्। तथाच अधीतसांगसशिरस्कवेदस्य पुंसो यत् प्रयतनम्, तन्नियतात् तदभ्यासात् एकरूपात् प्रमाणापेक्षिततत्तर्कसमर्पणरूपात्, पूर्वोत्तरमीमांसानुगतात् इतरविद्यास्थानव्यावृत्तात् उपकारात् द्वयोरपि एकविद्यास्थानत्वं सिद्धम्। अत एव, 'मीमांसा न्यायविस्तरः' इति वचने मीमांसेति द्वयोर्निर्देशः। तत्रैकवचनसामर्थ्यात् एकत्वमपि युक्तम्। बाधकविरहात्। अनुकूलसद्भावाच्च। न च पुराणेषु वा धर्मशास्त्रेषु वा क्रमनियतिः साकांक्षत्वं वाऽस्ति। सूत्रवृत्तिभाष्यवार्तिकादीनां व्याख्येयव्याख्यानभावतो भिन्नप्रबन्धत्वं स्पष्टम्। अत्र तु व्याख्येयस्य वेदस्येव मीमांसायामपि त्रिवर्गापवर्गविचाररूपायां क्रमनियमोऽस्ति। पूर्वमीमांसाकृतकर्मनिर्णयाकांक्षा च ब्रह्मविचारस्य। न च—व्याख्येयो वेदोऽपि विलक्षणशब्दराशित्वेन एक इत्युच्यमानोऽपि कर्मब्रह्मरूपार्थभेदात् भिन्न एव; अमुख्यः एकत्वव्यवहार इति वाच्यम्—आराधनभूतकर्मपरिकर्मितोपासनलभ्यब्रह्मरूपैकार्थप्रतिपादनपरत्वात् वेदस्य। 'सर्वे वेदा यत्पदमा-

पूर्वेण कृतनशेषे कर्त्रन्तरस्यापि दृष्टत्वात् । न च भिन्नानां कार्याणां भिन्ना एव कर्तारः इति निर्बन्धः ; एकेनैव कर्त्रा बहूनां कार्याणां कर्तुं शक्यत्वात् । तेन शास्त्रकर्तृभेदाभेदौ शास्त्रभेदाभेदप्रयोजकौ न भवतः । दृश्यते हि पूर्वोत्तरवृत्त्योरेकनिबन्धनत्वमापस्तम्बीयसूत्रव्याख्यानयोर्धूर्तस्वामिकपर्दिनिबन्धनयोरपि । एवं पूर्वोत्तरकाण्डयोर्द्विकमप्युदाहर्तव्यम् । नन्वन्यत् सर्वं भेदकारणमास्ताम् । महदिदं भेदकारणमस्ति, यत्पुनरर्थविरोधः—इत्याशङ्क्य तच्च प्रतिक्षिपति—कलिबलेति । शिष्याचार्यौ हि जैमिनिबादरायणौ । उभावपि सम्यङ्न्यायनिरूपणेन वेदार्थप्रकाशनप्रवृत्तौ । तयोः परस्परविरोधकथनं कथमिव संघटते । ततः कलिबलकलुषा महासाहसिकाः परस्परविरोधं च कथयन्तीति तानेवाधिक्षिपामः ॥ ११ ॥

तत्तद्वैशिष्ट्यभेदात् यदगणि भिदुरा देवता पूर्वभागे,
संज्ञावैरूप्यमात्रादपि, कथमियताऽप्रीतयष्टव्यभङ्गः ।

---

मनन्ति, इत्यादिश्रुतेः । यथा हि गीता मुमुक्षूपयुक्तार्थोपदेशप्रवृत्ता प्रसंगात् फलान्तराण्यपि प्रजास्वनुकम्पया प्रतिपादयति, तथा वेदोऽपि काम्यफलानीति वस्तुतः कृत्स्न एकार्थपर एव । तस्मात् "अर्थैकत्वादेकं वाक्यं साकांक्षं चेत् विभागे स्यात्" इति वाक्यैकवाक्यता वेदस्याक्षता, तथा पूर्वोत्तरमीमांसयोरप्येकप्रबन्धता । अवान्तरार्थभेदस्तु न तद्बाधकः । यथा प्रत्यध्यायं प्रतिषट्कं प्रतिकाण्डं प्रतिपादं प्रतिपेटिकं प्रत्यधिकरणं विषयभेदेऽपि पूर्वमीमांसाया एकत्वम्, उत्तरमीमांसायाश्च चतुर्लक्षण्या एकत्वम्, तद्वत् सर्वस्यापि । अतो विषयावान्तरार्थभेदः प्रबन्धभेदकरो न भवति । "फलजिज्ञास्यभेदाच्च" इति शांकरं मनसिकृत्य विषयफलेत्युक्तम् ।

ननु शारीरकं न तन्त्रेणैकीभूतम्, न तन्त्रेण सहैकावयविघटकम् भिन्नकर्तृकत्वात् भारतरामायणादिवत्यत्राह तत्तदिति । भागशोऽनेकपुरुषकर्तृकैकहारगोपुरादिभिरनैकान्त्यादसाधको हेतुरिति भावः । ननु तत्प्रतिपादितार्थविरुद्धार्थप्रतिपादकत्वादिति हेतुरस्त्वित्यत्राह कलीति । विरोधस्यैवाभावात् हेतुरसिद्ध इति भावः । विरोधोद्भावनपरिहारावुत्तरश्लोकेषु ॥

चि. टी. ११. शास्त्रैक्यम्=विद्यास्थानैक्यम् । निबन्धनं प्रकरणमिति च ग्रन्थविशेषनाम । आदिशब्देन—फलादीति आदिशब्देन ॥ ११ ॥

तत्र देवतास्वरूपविषये तन्त्रशारीरकयोर्विरोधमाशंक्य परिहरति तत्तदिति । 'महेन्द्राय, इन्द्राय राज्ञे, इन्द्रायाधिराजाय' इति महत्त्वराजत्वाधिराजत्वरूपविशेषणैस्तैर्विशिष्टत्वरूपं भेदमादाय इन्द्रापेक्षया महेन्द्रादीनां भिदुरता= भेदः पूर्वतन्त्रे उक्तः । एवमग्नेरपि शुचित्वपावकत्वक्षामवत्त्वादिवैशिष्ट्यात् । इन्द्रादिशब्दार्थभूतव्यक्तिविशेषस्य देवतात्वे कथं विशेषणभेदे देवताभेदः । न हि देवदत्तः सकेशत्वनिष्केशत्वरूपधर्मभेदात् भिन्नो भवति । एवं संज्ञावैरूप्यमात्रादपि । 'विधिशब्देन निगमेषु देवता कल्प्या' इति विधिवाक्यघटकदेवताशब्दानुपूर्व्यैव, 'अग्नय इदं न मम' इत्युद्देशत्यागादिकं क्रियते । अर्थस्य देवतात्वे कोशादिप्रसिद्धेषु नामसु यस्यकस्यापि प्रयोगेऽपि इतरव्यावृत्तिलाभे क्रियते तत्तच्छब्दनियमः कुतः । रामपर्यायेषु राघवदाशरथ्यादिशब्देषु यथेच्छं कस्यचित् प्रयोग एव हि

उद्देश्याकारभेदो ह्य(ऽस्त्य)यमिह हविषामुक्तिभिन्ने प्रयोगे
दौर्बल्यं त्वक्षवेद्यान्मितिचरमतया द्रव्यतो देवतायाः ॥ १२ ॥

अत्र शास्त्रैक्यप्रसिद्ध्यर्थं पूर्वोत्तरकाण्डयोः विरोधो नास्तीत्युक्तम्। अथ मन्दप्रतिबोधनार्थं विरोधाभासान् आशङ्क्य परिहरति—तत्तदिति। 'इन्द्राय वज्रिणे' इत्यादौ वज्रिन्याधिराजत्वादिविशेषणभेदात् देवताभेदमामनन्ति तान्त्रिकाः। न केवलं विशेषणभेदादेव, इन्द्रमहेन्द्रशब्दभेदादपि भेदमाचक्षते। अतो देवतात्वमिति किञ्चिन्नियतं पारमार्थिकं नास्तीति जैमिनेर्मतम्। बादरायणस्य पुनरास्तिकाग्रेसरत्वं सर्वसंमतम्। तत् कथमविरोध इति कश्चिन्मन्यते। तत्रोत्तरमाह—कथमिति। अयमर्थः—शयनासनभोजनादितत्तदवस्थाविशिष्ट एक एव राजा नियताधिकारिभिः सिष्यत्तत्तदधिकारानुरूपनियतव्यवहारभाक् भवति। नैतावता राजा भिद्यते—स्वरूपत एकस्यापि तत्तत्कालोचितविशेषणव्यवहाराभ्यां वैशिष्ट्यभेदस्यावर्जनीयत्वात्। एतदेव विशदं प्रकाशयति—उद्देश्येति। हविषां—प्रयोगे विशेषणनामधेयाभ्यां उक्तिभिन्ने सति—उद्देश्याकारभेद एवात्र प्रतिपाद्यते, न पुनः स्वरूपभेद इति। अनेन 'अग्निवैश्वानरादिशब्दमात्रमेव देवता, अथवा तत्तल्लौकिकाग्न्याद्यर्थविशिष्टः शब्द एव देवता; न पुनरग्न्यादि येन्द्रचन्द्राकारविशेषविशिष्टार्थविशेषो देवतात्वेन स्वीकर्तव्यः' इति वदन्तः प्रत्युक्ताः। स्यादेतत्—'द्रव्यदेवतासाम्ये द्रव्यं बलीयः' इति साक्षाज्जैमिनिनैव द्रव्यबलीयस्त्वाभिधानात् देवता न विद्यत इति। तदभावे ह्यनुष्ठानविरोधः स्यात्—इति। इत्थं वदन् स्वव्याघातमेव न जानाति। देवतास्वरूपाभावे कथं तस्याः दौर्बल्यमुच्यते? सति धर्मिणि धर्माश्चिन्त्यन्त इति न्यायवादिनः। तर्हि किमत्रोच्यते। इदमत्रोच्यते। सावधान एव शृणु। दर्शपूर्णमासौ इष्टीनां प्रकृतिरित्यादिवाक्यप्रसिद्धः प्रकृतिविकृतिभावस्तावत् सिद्धः। तत्र द्रव्यसाम्यात् देवतासाम्याच्च प्रकृतिविकृतिभावः परिकल्प्यते तान्त्रिकैः। इत्थं सति कस्य कर्मणः का

---

पद्यानुसारेण रामायणादौ। तस्मात् यष्टव्या देवता तत्तच्छब्दस्वरूपादन्या नेष्टा तत्रेति चेत् - यद्यपि विशेषणभेदात् संज्ञाभेदाच्च भेद इष्टः, तावता यष्टव्यार्थस्वरूपभंगो न भवति। एक एव पुरुषः पुत्रत्वपितृत्वशिष्यत्वगुरुत्वजामातृत्वपितृव्यत्वपितामहत्वादिविभिन्नधर्मपुरस्कारेण व्यवस्थयैव तत्तस्निरूपकै संबन्धिभिः सत्क्रियते। राम एव दशरथतनयत्वमैथिलीजानित्वराजाधिराजत्वादिधर्मभेदेन पुरस्कृत्य तत्तदाराध्यो भवति। यथा तत्र व्यक्त्यैक्येऽपि आकारभेदस्यापरित्यागेनैव पुरस्कार्यता, तथाऽत्रापि तत्तद्विशेषोपस्थापनेन प्रशंसन एव यथावसरं तत्तद्देवताप्रीतिरित्यस्य सुवचत्वात्। पर्यायशब्दप्रयोगे च व्यक्तिग्रहणभंगाभावेऽपि तत्तच्छब्दयोगार्थ-निरुक्तसिद्धार्थादिकमनिवेदितं भवति। तस्मात् तत्तद्विशेषणं वा संज्ञा वा नोपेक्ष्यते। तस्मात् वैशिष्ट्यभेदात् संज्ञाभेदाच्च देवता भिन्नत्वेनागणीति यत्, तावता न देवतास्वरूपत्याग इति। तदाह उद्देश्येति। हविषामित्यस्य उद्देश्येत्यनेनान्वयः। उक्तिभिन्ने महेन्द्राधिराजशुचिपावकादिशब्दभिन्ने प्रयोगे त्यागाद्यनुष्ठाने हविषामुद्देश्यभूताया देवताया आकारभेदो हि अयं तत्तद्विशेषणं संज्ञाविशेषश्च। विधेयभूतभेदशब्दप्राधान्येन अयमिति पुंलिङ्गनिर्देशः। एकविशिष्टात् अपरविशिष्टस्य भेदो नाम न व्यक्तिभेदः; किंतु एकविशिष्टाविषयकप्रतीतिविषयत्वरूपभेद एवेति। दौर्बल्यमिति। "विप्रतिपत्तौ हविषा नियम्येत कर्मणस्तदुपाख्यत्वात्' (८. १-३२-३४) इत्यत्र यत्र कस्यचित् विकृतिकर्मणो द्रव्यसादृश्यं केनचित् प्रकृतिकर्मणा, देवतासादृश्यमन्येन प्रकृतिकर्मणा, तत्र

प्रकृतिः का विकृतिरिति चिन्तायां क्वचिद् द्रव्यसाम्यं दृष्टम्, अन्यत्र देवतासाम्यम्, एवं च सति द्रव्यसाम्यात् देवतासाम्याद्वा प्रकृतिविकृतिभावेनानुष्ठानमिति विशये, देवताया उद्देश्यत्वेन प्राधान्यात् तत्साम्यादनुष्ठानमिति पूर्वपक्षः ; राद्धान्तस्तु द्रव्यस्य प्रत्यक्षत्वात् देवताया आगमैकसमधिगम्यत्वात् प्रथमप्रमाणप्रतिपन्नद्रव्यस्य प्रतीतिप्राबल्यात् तत्साम्येनैवानुष्ठानमिति। एवं स्वरूपं प्रत्यक्षम्, फलसाधनत्वमेवाप्रत्यक्षं द्रव्यस्य। देवतायाः पुनः स्वरूपं देवतात्वं चाप्रत्यक्षमिति प्रातीतिकमेवेदं दौर्बल्यं न स्वरूपाभावनिबन्धनमिति। तदिदमाह—दौर्बल्यमिति ॥ १२ ॥

जैमिन्युक्तं विरुद्धं यदिह बहुविधं दर्शितं सूत्रकारैः
तस्मादैकशास्त्र्यं हठकृतमिति नः ब्रह्मसंवाददार्ढ्यात् ।

---

द्रव्यस्य'दृश्ये बलीय इति प्रकृतिनिर्धारण कृतम् । तावता देवतापलापो न भवति । परोक्षत्वात् देवताया. द्रव्यस्य च प्रत्यक्षत्वात् प्रत्यक्षमूलस्य सादृश्यस्य च प्रथमप्र वृत्तत्वात् । तथा देवतोद्देश्यकद्रव्यत्यागरूपे यागे द्रव्यस्य साक्षादन्वयात् देवताया उद्देशद्वाराऽन्वयाच्च द्रव्यमुखेन प्रकृतिभावावधारणं विहाय पाश्चात्यदेवताग्रहणमूलनवधारणमयुक्तमित्येतावदेवोच्यते । आराध्यत्वाकारेण गौरवयितव्यत्वेऽपि यागे द्रव्यवत् अङ्गत्वात् अङ्गभूतयोर्द्वयोर्मध्ये अक्षवेद्यात् द्रव्यात् देवतायाः दौर्बल्यं मितिचरमतया । देवताविषयकमितेः परोक्षरूपतया प्रत्यक्षापेक्षया चरमत्वात् पश्चाद्भावित्वात् त्रिषु प्रमाणेषु प्रत्यक्ष प्रथमम् ; अनुमानं द्वितीयम्, उभयोपजीवी शब्दश्चरमं मानमिति । अतो न देवतापलापः ॥

चि. टी. १२. इन्द्रमहेन्द्रशब्देति। 'राज्ञे अधिराजाय' इत्यादिकं तु प्रथमपाद एव गृहीतम्। महत्त्वस्यापि तत्र प्राधान्ये तु पर्यायशब्दमात्रवत् स्थलमत्रोदाहर्तव्यम् । विष्णुपुरुषकेशवनारायणादिनिर्देशपूर्वकहोमवत् इन्द्रशब्दाघटिततत्पर्यायमात्रान्वयिक्रियासम्भवात्। हविषामित्यस्य उद्देश्येत्यत्रान्वयः। क्वचिदिति । 'ऐन्द्रमेकादशकपालं निर्वपेत्' इत्यत्र देवतासादृश्ये सान्नाय्ययागः प्रकृतिः स्यात् । औषधद्रव्यसादृश्ये तु आग्नेययागः प्रकृतिः । तदभावे—जैमिन्युक्तस्यास्वीकारे ॥ १२ ॥

ननु जैमिनिसूत्राणां प्राचीनपुरुषोक्तव्याख्याप्रकारप्रयासेन अर्थान्तरवर्णनेन जैमिनिबादरायणविरोधो न परिहर्तुं शक्यते । बादरायणेन स्पष्टमेव जैमिनेर्विरुद्धार्थवादित्वेनोद्घोषात् । ईश्वरस्य देवतानाञ्च फलप्रदत्वमुपेक्ष्य धर्मस्यैव फलहेतुत्वं तदिष्टमिति दर्शितम्, 'धर्मं जैमिनिरत एव' इति । 'ज्ञानात् पुरुषार्थः' इति स्वाभिमतविरुद्धतया कर्मतः पुरुषार्थो जैमिनीष्ट इत्यप्युक्तम्, 'शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः' इति सूत्रे । देवतानामनुष्ठानेऽधिकारं वदद्भिरपि मध्वादिषु स न सुवच इति जैमिनीष्टो देवतानामनधिकार एवेति चोक्तम्—तत्राह जैमिनीति। सूत्रकारैः बादरायणैरुक्तरीत्या यत्=यस्मात् विरुद्धं बहुविधं दर्शितम्, तस्मात् विरोधस्यापरिहार्यत्वात् न शास्त्रैक्यमितीदं शङ्कनं न भवति ; ब्रह्मसंवाददार्ढ्यात् । 'साक्षादप्यविरोधं जैमिनिः', 'परं जैमिनिर्मुख्यत्वात्', 'ब्राह्मेण जैमिनिरुपन्यासादिभ्यः', 'संपत्तेरिति जैमिनिस्तथा हि दर्शयति' इति शब्दार्थपौष्कल्यवदीश्वर–तद्रूप–तदुपासनादेः जैमिन्यादृतत्वस्य स्पष्टमेव कथनात् । 'धर्मं जैमिनिः' इति सूचित आशयस्तु देवतानां फलप्रदत्वस्वीकारे वैषम्यनैर्घृ-

तत्मन्ता(तत्तत्ता)त्पर्यभेदैर्विहतिपरिहृतिः काण्डवत् काण्डयोः स्यात्
बाह्याक्षेपार्थगूढाशयवचनमवद्भ्रान्तिशान्त्यादिसिद्धौ(द्धैः) ॥ १३ ॥

. एवं विरोधाभासं निराकृत्य स्फुटमपि कंश्चिद्विरोधान्तरमाशङ्क्य परिहरति-जैमिन्युक्तमिति। बादरिजैमिनिकाशकृत्स्नप्रभृतयो बहवो हि शिष्या बादरायणस्य। तत्रतत्र स्वाभिप्रायविरुद्धान् शिष्याभिप्रायान् प्रतिक्षिपन् जैमिनीयमपि पक्षं प्रतिक्षिपति भगवान् बादरायणः। [ननु?] कथं जैमिनिबादरायणयोरविरोधः? तस्मात् हठकृतमेवैकशास्त्र्यमिति। तत् प्रतिक्षिपति—नेति। तत्र हेतुमाह—ब्रह्मेति। 'परं जैमिनिर्मुख्यत्वात्' इत्यादौ हि जैमिनेः शारीरकशास्त्रप्रधानभूतब्रह्म-संवादं दृढमेव प्राचीकशत् आचार्यः। तस्मात् विरोधाभासप्रतिपत्त्या न शास्त्रभेदः शङ्कनीयः। का गतिस्तर्हि विरोधाभासप्रतिपत्तेरिति चेत्-तत्रोत्तरमाह—तदित्यादिना। तात्पर्ये हि शब्दः प्रमाणम्। तेन तत्रतत्र सूत्रेषु तात्पर्यविशेषेण तद्विरोधः परिहरणीयः। अत्र प्रतिबन्दी(न्दि)माह—काण्डवदिति। यथा—एकस्मिन् काण्डे षट्कयोरध्याययोः पादयोर्वा परस्परविरोधाभासप्रतिपत्तौ पण्डितास्तात्पर्य-भेदात् विरोधं परिहरन्ति, एवमत्रापीति। अस्तु तत्रापि विरोधपरिहारः, अथाप्यत्यन्तविरोधे (विरुद्धतया?) सिद्धे देवताधिकरणादौ कः परिहार इत्याशङ्क्योक्तमेव तात्पर्यविशेषं तत्रापि योजयति—बाह्येति। एवं किलाहुर्बाह्याः—"वाक्यत्वात् सकर्तृको वेदः, कर्तृणां च [महतामपि?] अपविप्रलम्भप्रमादाशक्त्यादिकं भवत्येव, तस्मात् वेदस्याप्रामाण्यम्। (?) न च देवता नास्तीति वक्तुं शक्यते, 'वायव्यं श्वेतमालभेत' इत्यादौ कर्माराध्याया देवताया एवातिथिवत् प्राधान्येन कथनात्" इति। तत्प्रतिक्षेपार्थं कर्मप्राधान्यमाह देवताधिकरणे; न पुनर्देवतास्वरूपं प्रतिसञ्चष्टे। इयं किल देवताधिकरणे पञ्चसूत्री—'देवता वा प्रयोजयेदतिथिवत्। भोजनस्य तदर्थत्वात्। अर्थपत्याच्च (आर्थपत्याच्च?) ततश्च तेन सम्बन्धः' इति पूर्वपक्षसूत्रत्रयम्। 'अपिवा शब्दपूर्व(क)त्वात् यज्ञकर्म प्रधानं स्यात्' 'गुणत्वे देवताश्रुतिः' इति सिद्धान्तसूत्रयुगलमपि। तत्रेदं तात्पर्यम्—आर्थप्राधान्यस्य

---

व्यावसरे फलहानिः स्यात्। देवतानां विलये च धर्मोऽनुष्ठितोऽपि निष्फलः स्यात्। देवतानुद्देश्यककाय-क्लेशादिधर्माणां फलं न स्यात्। अतोऽपूर्वादेव फलम्। देवताः सत्यश्चेत्, प्रीयन्ताम्; मा वेति। ईदृशं च वचनं गूढाशयं बाह्यानां बौद्धादीनां क्षेपार्थे देवताविग्रहान्वारोहेण प्रवृत्तम्। तच्छ्रुविणां केषाञ्चित् जैमिनि-गूढाशयानभिज्ञानां तन्मूल आक्षेपः स्वयमनूद्य निरस्यते सूत्रकारैः तद्भ्रान्तिशान्तये। एवं परोक्ताक्षेपपरि-हारायेव जैमिनिकृताहृदयाक्षेपपरिहारायापि सूत्राणि भवन्ति। सूत्रकारो हि स्वाभिमतं पक्षं न्याय-प्राबल्यनिरीक्षणेन स्थापयितुं, 'गुरुशिष्ययोर्वादः कथा' इति शास्त्रानुसारेण जैमिन्यादिकं शिष्यं प्रतिवादि-स्थाने स्थापयित्वा यथाशक्ति पर्यनुयोक्तुं नियुङ्क्ते। शिष्यश्चानभिमतमपि पक्षं बलाबलपरीक्षायै स्थापयितुं प्रयस्यति। तथा प्रवृत्तान् वादान् अधिकरणरूपेण जैमिन्यादिनामनिर्देशेन प्रदर्श्य परिहरति सूत्रकारः। अयं प्रकारः शान्त्यादीति आदिपदग्राह्यः। मध्वादिसूत्रे तु, न सर्वात्मना देवताधिकारनिरासः; किंतु स्वविषयकस्य स्वतः सफलार्थस्य चोपासनस्य स्वयं कर्तुमशक्यतया कतिपयोपासनानधिकारमात्रमुक्तम्। तदेव तु जैमिनेर्देवतानां सद्भावे प्रमाणं भवितुमर्हति। अनन्तरे च, 'ज्योतिषि भावाच्च' इति सूत्रे देवतानां ब्रह्मोपासने स्थितिं स एवाऽऽह। एवं तात्पर्यभेदैः संशयपरिहारो भाव्यः। काण्डवदिति। एकस्मिन्नेव काण्डे एककर्तृकेऽपि मिथो विरोधो दृश्यते. जैमिनिः ३-३-२४. 'संतर्दनं प्रकृतौ क्रयणवत्' इति सूत्रे सोम-

देवतायां विद्यमानत्वेऽपि शाब्दप्राधान्यं यज्ञकर्मण्येवेति श्रुतिमूला(लप)नुष्ठानं यज्ञकर्म प्राधान्येनैव कर्तव्यमिति। अत्र देवताप्रतिक्षेपमेव मन्दः कश्चिन्मनुते, तत्प्रतिक्षेपार्थं तत्रतत्र जैमिनिपक्षं प्रतिक्षिपति भगवान् बादरायणः। तदुक्तं वेदार्थसंग्रहे, 'अश्रुतवेदान्तानां कर्मण्यश्रद्धा मा भूदिति देवताधिकरणेऽतिवादाः कृताः' इति। अतिवादाः=अन्यपरोक्तयः। न जैमिनिर्देवतां निराचकार, नापि बादरायणस्तं प्रतिक्षिपतीति भावः ॥१३॥

आक्षिप्य स्थापनीयाः क्वचिदिह नयाः पूर्वकाण्डप्रणीताः
केचित् व्युत्पादनीयाः क्वचिदपवदनं ख्याप्यमौत्सर्गिकस्य।
इत्थं सर्वत्र चिन्ताक्रम इति समतां वीक्ष्य मध्यस्थदृष्ट्या
शास्त्रैक्ये पौनरुक्त्यप्रभृतिपरिहृतिः सावधानैर्विभाव्या ॥ १४ ॥

अत्रान्यः प्राह, 'जैमिनिबादरायणयोर्विरुद्धभाषणं मा भूत्–शिष्याचार्यभावात्; तथापि पौनरुक्त्यं दृश्यते। यथा पूर्वकाण्डे श्रुतिविरोधे स्मृतिरनपेक्षणीयेत्युच्यते, तथा ब्रह्मकाण्डेऽपि 'स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्न; अन्यस्मृत्यनवकाशदोषप्रसङ्गात्' इति। अपुनरुक्तमेव हि वाक्यजातं शास्त्रमित्युच्यते। तस्मात् कथमिव शास्त्रैक्यम्। एवं निबन्धनैक्यमपि निर्निबन्धनमेव, तदभावे कुतः क्रमः। कुतो वा कर्मविचारस्य पूर्ववृत्तत्वम्' इति। एतत् सर्वं परिहरति—आक्षिप्येति।

क्रयाणां विकल्पं निदर्शयति। 'दशभिः क्रीणाति' इति वाक्येन क्रयसमुच्चये एव स्वेष्टे तद्विरुद्धमिदं वचनम्। भक्षपेटिकायाम्, 'निवीतं मनुष्याणाम्' इत्यादौ च स्वाभिमतविरुद्धत्वात् विचारायोगमाशंक्य कृत्वाचिन्तया परिहारो व्याख्यातृभिरादृतः। तादृशी चिन्ता प्रकृते परं किं न भवेत्। कदाचित्, अनभिमतोऽर्थोऽपि न्यायदर्शनदर्शितस्याभ्युपगमसिद्धान्तस्य छाययोपपद्येत। सेश्वरमीमांसाप्रथमपादान्ते च विरुद्धवचनोद्घाटनं द्रष्टव्यम्। एवं काण्डवत् शारीरककाण्ड एवेत्यर्थान्तरमपि। जैमिनीयब्रह्मसंवादभागतद्विरुद्धभागयोरविरोधस्योपपादनतया तद्वदेव काण्डयोः जैमिनीयदेवताधिकरणादिना बादरायणोक्तिविरोधपरिहारोऽपीति।

**चि. टी. १३.** **आचार्यः** जैमिनेराचार्यो वेदाचार्यः सर्वाचार्यो व्यासः। **तात्पर्ये**–तात्पर्यार्थे। पूर्वं ब्रह्मसंवादस्थलमात्रमुक्तम्। अतश्चतुर्थपादः पादत्रयोक्तार्थभिन्नविषयक इत्याशय्यावतारयति **अस्त्विति**। **न च देवतेति**। इतःप्राक् कतिपयपदभ्रंशः स्यात्। "अग्ने ऋग्वेद इत्यादिना देवताकर्तृकत्वश्रवणाच्च" इत्यादि स्थितं स्यात्। **देवता** नास्तीत्यस्य न वेदे देवता कथिताऽस्तीत्यर्थो वा। **देवता वा प्रयोजयेदिति**। तत्त्वटीकायां अस्मदीयायामुपयुक्तमीमांसायाश्च विस्तरेणैतदर्थो द्रष्टव्यः। आकृत्यधिकरणादिकञ्च विचारयितव्यं सर्वं तत्र विचारितम् ॥ १३ ॥

नन्वेवं जैमिनिबादरायणयोराशयाविरोधस्थापनेऽपि ऐकप्रबन्ध्यस्वीकारे पौनरुक्त्यम् उक्तबाधश्चेति दोषप्रसंग इत्यत्राह **आक्षिप्येति**। पौनरुक्त्यस्य बहुधा परिहारः, अधिकाक्षेपसमाधानार्थं प्रवृत्तिरिति सति संभवे। अन्यदा तु उत्तरानुबन्धार्थम्, शिष्यबुद्धिवैशद्यार्थं वेति। उक्तबाधश्च न भवति उत्सर्गापवादनयेनाविरोधादिति। तथाहि—**पूर्वतन्त्रे** स्मृत्यधिकरणे श्रुतिविरोधे स्मृतेरप्रामाण्यं साधितम्। इहापि

कर्मकाण्डस्मृत्यधिकरणेन श्रुतिविरोधात् स्मृतिरनपेक्षणीयेति सिद्धेऽपि ब्रह्मकाण्डे पुनस्तदेव कुतश्चित्कारणविशेषादाक्षिप्य समाधीयत इति न पौनरुक्त्यम्। अस्त्वपौनरुक्त्यम्, तथाप्यपूर्वार्थत्वाभावादनपेक्षणीयत्वमुत्तरकाण्डस्येत्याशङ्क्याह—केचिदिति। 'यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति' इति तत्क्रतुन्यायो ह्यत्र व्युत्पाद्यते। एवमन्यदपि यथोचितं द्रष्टव्यम्। एवं तर्हि पूर्वकाण्डोक्तार्थस्य प्रधानभूतस्य प्रतिक्षेप एवोत्तरकाण्डे प्राधान्येन क्रियते। अर्थवादाधिकरणार्थ एव हि कर्ममीमांसासारार्थः। एवं समन्वयाधिकरणार्थ एव हि ब्रह्ममीमांसासारार्थः। तयोः परस्परविरोधे सति कथमिव युष्माभिर्विरोधो नास्तीति भण्यत इत्याशङ्क्याह—क्वचिदपवदनं ख्याप्यमौत्सर्गिकस्येति। उत्सर्गापवादन्यायेनापि शास्त्रे प्रायेण विरोधं परिहरन्ति

---

स्मृत्यनवकाशाधिकरणे वेदान्ताविरोधेन साङ्ख्यस्याप्रामाण्यमुच्यत इति। नात्र पौनरुक्त्यम्, आक्षेपाधिक्यात्। स्पष्टार्थकश्रुत्या स्मृतिबाध इष्यते। अस्मादृशदुर्निर्णयवेदान्तार्थनिर्णयस्य स्मृतीतिहासपुराणसाचिव्येनैव कार्यतया सांख्यस्मृतेस्तत्र सहायत्वस्वीकारात् सांख्यसमय एव वेदान्तसमय इति। समाधिस्तु तर्कपुरस्कारेण निर्णीयमानस्य वेदान्तार्थस्यानुकूलभूतासु स्मृतिष्वनेकासु जाग्रतीषु किं ताबद्विरुद्धस्मृतिगवेषणेनेत्येवम्। तथा पूर्वतन्त्रे अपशूद्राधिकरणे शूद्रानधिकारस्थापनेऽपि जानश्रुत्युपाख्यानादिवशात् वेदान्तविहिते ध्याने शूद्रोऽधिक्रियतामित्यधिक क्षेप. इह परिहृतः। एवं पूर्वतन्त्रे

युक्तम्। तथा सति, सविग्रहत्वे सर्वत्र संनिधानायोगात्, 'अनित्यदेवताप्रतिपादकतया वेदानित्यत्वापत्तेश्च' इत्याक्षेपे परिहार इह देवताधिकरणेन कृतः। एवं सर्ववेदान्तप्रत्ययमित्यत्र सर्वशाखाप्रत्ययमेकं कर्मेति पूर्वतन्त्रन्याय इह न भवति, "तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवत् यैस्तु चीर्णमिति अक्षरविद्यायामन्यानधिकारवचनात् मुण्डकाक्षरविद्याया इतराक्षरविद्यातो भेदप्रतीत्या अभ्यासप्रकरणान्ताभ्यां भेदस्यैव सर्वत्र स्वीकर्तुं युक्तत्वादित्यधिक आक्षेप· तत्र ब्रह्मविद्याशब्दो वेदपर इत्युक्त्वा परिह्रियते। एवमन्यदपि द्रष्टव्यम्। पूर्वतन्त्रे शब्दान्तरादिभिः कर्मभेद उक्त एव, "नानाशब्दादिभेदात्" इत्यत्र व्युत्पाद्यते, भक्तिरूपवेदने शब्दभेदाभावात् तद्भेदाभ्यासादीनामप्यभावः स्यादिति मन्दशिष्यबुद्धिवैशद्यार्थम्। आकृत्यधिकरणेन विशिष्टार्थे शक्तौ स्थापितायां सा शक्तिरपर्यवसानगत्या परमात्मपर्यन्तं प्रसरतीति काशकृत्स्नादिकथितव्युत्पादनमिह। शारीरके वर्णानित्यत्वेऽपि वेदनित्यत्वस्थापनेन पूर्वतन्त्र नित्यत्वस्थापने न वर्णविषयमिति व्युत्पाद्यते। मन्त्रार्थवादानां वाच्यार्थे तात्पर्यं नास्तीति आपाततो मालिन्यबुद्धिमपनीय, न स पाप लोके भृगाति' इति वर्तमानपदेशादिना कश्चिदस्वीकारेऽपि असति बाधे आम्नायार्थं सर्वो ग्राह्य इति देवताधिकरणे व्युत्पाद्यते। 'आम्नायस्य क्रियार्थत्वात्' इति सूत्रं विधिशेषार्थवादविषयम्। न तु स्वतन्त्रतया प्रयोजनपर्यवसानार्हो पनिषदादिविषयमपीति समन्वयाधिकरणे अपवादः क्रियते। अन्तो नोक्तभावः। सर्वत्रोपक्रमप्राबल्ये उपक्रमाधिकरणोक्तेऽपि उपक्रमोऽपि महावाक्यवैघट्यभमो भवतीति इन्द्रप्राणाधिकरणे उपक्रमापवादः क्रियते। एवं पौनरुक्त्यादिपरिहारप्रकारः पूर्वतन्त्रेऽपि बहुत्र स्वीकर्तव्यो भवति। बहून्यधिकरणानि शिष्यबुद्धिवैशद्यार्थं

तात्त्विकः । अथाप्यर्थवादसामान्यस्य विधिशेषतया पुरुषार्थपर्यवसायित्वमित्युत्सर्गः । निरतिशयानन्दरूपब्रह्मविषयार्थवादादीनां स्वतः पुरुषार्थरूपब्रह्मप्रतिपादकत्वात् विध्येकवाक्यत्वमन्तरेणापि पुरुषार्थपर्यवसायित्वमित्यपवादः । एवं सर्वत्रापि शास्त्रे पौनरुक्त्यादिदोषपरिहारश्चिन्तनीय इति । एककाण्डान्तर्गतेषु बहुष्वधिकरणेषु विरोधः परिह्रियत इति तद्भिन्नयोरपि काण्डयोः पौनरुक्त्यादिपरिहृतिस्तुल्यन्यायत्वानुसन्धानेन पक्षपातं विहाय मध्यस्थदृष्ट्या सावधानेन सञ्चिन्तनीयेति ॥१४॥

वृत्तिग्रन्थे हि (तु) जैमिन्युपरचिततया षोडशाध्याय्युपात्ता
सङ्कर्षः काशकृत्स्नप्रभव इति कथं तत्त्वरत्नाकरोक्तिः ।
अत्र ब्रूमः सदुक्तौ न वयमिह मुधा बाधितुं किञ्चिदर्हाः
निर्वाहस्तूपचारात् क्वचिदिति(ह) घटते ह्येकतात्पर्ययोगः(गात्) ॥ १५ ॥

---

प्रवृत्त्यैव नीतानि । अत एवोक्तं पादुकापरित्राणे, "जैमिनिर्हि मन्दामन्दसकलशिष्यजनसंवित्सौकर्यार्थं मन्दप्रयोजनान्यधिकरणानि पृथगनुकथयाञ्चकार । नारायणार्यास्तु प्रौढविद्वज्जनपरिग्रहाभिसंधिना प्रधानार्थप्रकाशनेन तुल्यन्यायतया सर्वमप्यर्थजातं परिमितेन ग्रन्थेन प्राचीकशन्" (11-श्लोके, इति । एवं शारीरकेऽपि द्रष्टव्यम् । अतः सर्वत्र ग्रन्थे चिन्तनक्रम एवमेव मन्दामन्दविविधाधिकारिव्युत्पादविषया भक्तीति समस्तं मध्यस्थवत् मत्वा वीक्षणीयम् । पौनरुक्त्यप्रभृतीति प्रभृतिपदं उक्तबाधरूपदोषग्राहकम् ॥ १.४ ॥

एवमैकप्रबन्ध्यं समर्थितम् । द्वादशलक्षणी, देवतार्था चतुर्लक्षणी च पूर्वकाण्ड इति वेदार्थे इति श्लोके आवेदितमेव । तथा विभज्य निर्देशश्च तत्त्वरत्नाकरग्रन्थं भट्टपराशरपादानुगृहीतं मनसिकृत्य तत्रानौचित्यं कश्चिच्छंकते वृत्तीति । हिशब्दघटित एव पाठ श्चन्तामण्याहृतः, प्रश्नप्रस्तावानुकूलश्च । बोधायनवृत्तौ भाष्येऽनूदितायां, 'जैमिनीयेन षोडशलक्षणेन' इति षोडशकस्य जैमिनिकृतत्वमावेदि । न हि जैमिनीयेन द्वादशलक्षणेन काशकृत्स्नीयेन च चतुर्लक्षणेनेति तत्र व्यभाजि । न च भाष्ये तस्यान्यथाव्याख्यानं कृतम् । तत्र षोडशाध्याय्यामन्तिमाध्यायचतुष्टयमेव संकर्षः । तस्यैवं जैमिनिकृतत्वे स्थिते-काशकृत्स्नः प्रभवः हेतुः अस्येति तत्कृतत्वेन तत्त्वरत्नाकरे भट्टपराशरोक्तिः कथं घटतामिति । परिहरति अत्र ब्रूम इति । अयमर्थः—न वयं संकर्षस्य साक्षात् द्रष्टारः । "मध्यः काण्डश्च लुप्तस्थितिः" इति मीमांसापादुकायामवोचाम । तत्त्वरत्नाकरोक्तिरपि सतां उक्तिरिति निर्विवादम् । तत्र तमोनिरूपणादिस्थले आशयः क इत्यस्माभिरपि विचारः क्रियते । अथापि इह प्रकृतविषये संकर्षस्यादृष्टतया मुधा नैरर्थक्यास्पदरीत्या किञ्चित् बाधितुं एकतरग्रहणेनान्यतरस्य सर्वथा बाधं कर्तुम्, एकस्य वचनस्याप्रमाणत्वं वक्तुमिति यावत् । न वयमर्हाः । ननु विरुद्धयोरन्यतरबाधोऽवश्यापतित इति शंकायां तथा बाधावश्यकता नास्तीत्याह निर्वाह इति । [इह वचनद्वयेऽपि] एकतात्पर्ययोगो घटते हि । तस्मात् बाधितुमर्हा इत्यन्वयः । नन्वर्थभेदे स्पष्टे कथमेकं तात्पर्यमित्यत्र निर्वाह इत्यादि यत्रकचित् औपचारिकार्थाश्रयणादुभयोर्निर्वाहः इति

एवं जैमिनिबादरायणवाक्ययोर्विरोधं परिहृत्य तत्प्रसङ्गात् व्याख्यातृवाक्ययोरपि प्रमाणभूतयोर्विरोधाभासमवश्यं समाधेयत्वात् समाधत्ते—वृत्तीति । शङ्कते कश्चिद्विरोधम् । वृत्तिग्रन्थे हि जैमिन्युपरचिततया षोडशाध्याय्युपात्ता । भट्टपराशरास्तु तत्त्वरत्नाकराख्ये शारीरकशास्त्रप्रकरणे सङ्कर्षः—सङ्कर्षकाण्डः, काशकृत्स्नप्रभव इत्युक्तवन्तः । तत्कथमिदं संघटेतेति । अत्रोत्तरमाह—अत्रेति । द्वयोरपि ग्रन्थकर्त्रोर्विश्वसनीयत्वात् एकस्यापि वाक्ये न वयमप्रामाण्यं ब्रूमः(ब्रूमहे), अपितु तात्पर्यभेदेनोभयत्रापि प्रामाण्यम् । तथा हि तत्त्वरत्नाकरवाक्यस्य मुख्यत्वेन सङ्कर्षकाण्डस्य काशकृत्स्नप्रभवत्वे सिद्धे वृत्तिकारवाक्यं जैमिनेर्द्वादशलक्षणीकर्तृत्वात् प्राचुर्यादौपचारिकम् । वृत्तिकारवाक्यानुसारेण जैमिनेः षोडशलक्षणीकर्तृत्वे प्रामाणिके तत्त्वरत्नाकरवाक्यं काशकृत्स्नस्य देवताकाण्डे विशेषेण प्रवर्तकत्वपरमिति सिद्धं एव समाधिरिति ॥ १५ ॥

सौत्री सङ्ख्या शुमाशीरघकृतिगणना चिन्मयी ब्रह्मकाण्डे
तादर्थ्येऽनन्तरत्वेऽप्यधिकरणभिदा नाल्पभावे प्रकल्प्या ।

---

तात्पर्यैक्यसंगतिरित्यर्थः । तत्त्वरत्नाकरस्य मुख्यार्थाश्रयणे वृत्तौ जामनीयपदं काशकृत्स्नोपलक्षकम् । जैमिनिकृतस्यैवाधिकत्वात् तत्सिद्धिपेटिकादर्शितभूमन्यायेन जैमिनीयेति प्रयोगः । वृत्तेर्मुख्यत्वादरणे तु तत्त्वरत्नाकरग्रन्थः जैमिनीयस्य काशकृत्स्नेन प्रवचनं कृतमिति तदीयत्वाभिप्रायः स्यात् । अयमर्थो न्यायपरिशुद्धावप्याचार्यैर्दर्शितः । जैमिनीयस्य काशकृत्स्नप्रवचनविषयत्वाभिधानात् तत्प्रवचनरीत्या जैमिनीयं देवताविचाररूपमेव स्यादिति ऊहमात्रम् साक्षात् ग्रन्थस्य तदानीमदृष्टत्वात् । संकर्षे, 'प्रदानवदेव' इति सूत्रोक्तरीत्या देवताविचारादिना देवताकाण्डत्वव्यवहाराच्च । साम्प्रतमसमग्रानुपूर्वीकतया दृश्यमानो जैमिनीयः संकर्षस्तु न देवताविचारः, किंतु कर्मणि परिशिष्टविचार एवेत्यादिकं परमार्थभूषणे यावदुपलम्भमुदितं द्रष्टव्यम् ॥

श्लोके प्रथमं अन्ते च हिशब्दः, तृतीयपादे इहशब्दः, चतुर्थे इतिशब्दः । अन्ते हिशब्दश्रवणादेव तात्पर्ययोगादिति पञ्चम्यन्तपाठान्तरमुपेक्ष्यते । अन्वयार्थस्तु प्रागुक्त एव । पदयोजनाग्रन्थे तु चतुर्थपादे प्रतीतमन्वयक्रममुपेक्ष्य, 'निर्वाहस्तु क्वचिदुपचारादेकतात्पर्ययोग इति घटते हि' इत्यन्वय आदृतः ।

**चि. टी. १५.** प्राचुर्यादिति। तत्सिद्धिपेटिकायां भूमेति सूत्रव्याख्याने सुष्टीकपदघातीत्यत्र सुष्टिपदं सुष्टिमन्त्रासुष्टिमन्त्रोभयोर्घेयेष्टकापरम् । सुष्टीत्युक्तिः तन्मन्त्राधिक्यादित्युक्तम् । तद्वत् जैमिनीयाध्यायानामाधिक्यात् जैमिनीयेत्युक्तम् अजैमिनीयोपलक्षकमिति भावः । अत्र चिन्तामणौ जैमिनिप्रवक्तृकत्वं काशकृत्स्नीयस्य नोक्तम् । अतो न तन्निबन्धन उपचार ॥ १५ ॥

एवं पूर्वकाण्डार्थसंग्रहेण तदेकप्रबन्ध्यात् तत्संगततया शास्त्रावतारार्थं तथावतरणमनिच्छतां मतमेनावता निरास । अथ शास्त्रेऽस्मिन् सूत्रसंख्याधिकरणसंख्याविषयेऽपि तेषामन्यथाग्रहणमसदनादृतमित्याह सौत्रीति । शुमाशीरिति चिन्मयीति कचटतपादिसंकेतेन निर्देशः । अर्थात् अर्थोचित्यमप्यालोच्य एवं शुशब्दप्रयोगः । अङ्कानां वामतो गतिः । अतः शकारः पञ्चगमकः, मकारश्चतुष्टयगमक

अक्षोर्म्याशाऽहिकाष्ठाद्विरदमुनिवसूर्म्यद्रितत्त्वातिशक्क-
र्यक्षैरक्षैः प्रयाजैरिह भवति रसैः पादनीतिप्रबन्धः ॥ १६ ॥

एवम्, 'अथातो ब्रह्मजिज्ञासा' इति सूत्रानुसारेण कर्मविचारानन्तरं ब्रह्मविचारस्य कर्तव्यत्वे परिपन्थितया प्रसक्तान् अर्थान् दिङ्मात्रेण प्रतिक्षिप्य क्रियमाणशास्त्रसूत्राधिकरणपादविभागेषु न्यूनाधिकभावं शिष्यानुग्रहार्थं प्रतिक्षिपति—सौत्रीति । शुभाशीः सूत्राणां कटपयादिक्रमात् संख्यापरिकल्पना । पञ्चचत्वारिंशदधिका पञ्चशतीति सूत्राणां संख्याप्रमाणम् । अधिकरणसंख्या तु चिन्मयी षट्पञ्चाशदधिकं शतमित्यर्थः । एतत्तु परपक्षवादिभिः परिकल्पितापन्यायमूलाधिक-सङ्ख्यानिराकरणार्थमुच्यते । तेषां परिकल्पनाया अपन्यायमूलत्वमेव प्रकाशयति—तादर्थ्ये इत्या-दिना । उत्तरसूत्रस्य पूर्वाधिकरणशेषत्वे समनन्तरभावित्वे, अप्यधिकरण[भे दः?]निमित्तप्रयोजनाद्यत्वे सति, अधिकरणभेदो न कल्पनीय इति तान्त्रिकाः प्राहुः । तेन गुहाधिकरणमित्यादिकं परवादि-परिकल्पितमपहसितं भवति । अथ संख्यातानामधिकरणानां प्रतिपादं विभागं दर्शयति—अक्षेत्यादिना । अत्र लोकप्रसिद्धानुक्रमात् संख्यानिर्देशः । अक्षाण्येकादश, ऊर्मयः षट्, आशा दश, अहयः पुनरष्टौ, काष्ठा दश, द्विरदाश्चाष्टौ, मुनयः सप्त, वसवोऽप्यष्टौ, षट् ऊर्मयः । अद्रयोऽष्टौ, तत्त्वानि षड्विंशतिसंख्याकानि, अतिशक्वरी पञ्चदश, अक्षाण्येकादश, पुनरप्य-क्षाण्येकादश, पञ्च प्रयाजाः, रसाः षट् इति सुप्रसिद्धमेतत् । अनया प्रक्रियया पादनीतिप्रबन्धः—पादानां नीतयः प्रतिपादमधिकरणानि निबध्यन्त इति ॥ १६ ॥

शास्त्रं त्वे(चै)तत् समन्वित्यविहतिकरणप्राप्तिचिन्ताप्रधानै-
रध्यायैः षोडशाङ्घ्रि द्विकयुगभिदुरं षट्कभेदादिनीत्या ।

---

इति शुभाशीः ५४५. । चकारः षड्गमक, मकारः पञ्चानाम्, यकार एकस्येति चिन्मयी १५६. । पूर्वा सूत्रसंख्या, उत्तरा चाधिकृतिगणना अधिकरणसंख्या । शांकराद्यननुसारेण क्वचिदनेकसूत्रैकी-करणम्, एकसूत्रानेकत्वकरणञ्चार्थौचित्यादिति स्पष्टम् । यथा, 'न च स्मार्तमतद्धर्माभिलापात् शारीरश्च', 'पृथिव्यधिकाररूपशब्दान्तरेभ्यः' इत्यादौ । अन्तोऽधिकरणविषये परमाह तादर्थ्ये इति । प्रधानविचारे कस्मिंश्चित् स्थिते तदर्थविचारपरतया हि गुणसूत्राणि भवन्ति । एवं प्रधानार्थतयैवोपयुक्तस्य सूत्रस्य तदानन्तर्ये सति तद्भिन्नाधिकरणत्वमयुक्तम्; यथा, 'गुहां प्रविष्टावात्मानौ' इत्यत्र । यत्र तदर्थत्वेऽपि तदानन्तर्यं नास्ति, आनन्तर्येऽपि वा तदर्थत्वं नास्ति, तत्राधिकरणभेद एव । न स्वरूपं युक्तिसारमादाय पार्थक्यकल्पनमिति भावः। एवञ्चास्मत्पक्षस्थितां षोडशानां पादानां क्रमेणाधिकरणसंख्यां निर्दिशति अक्षे-त्यादिना । अक्षादिप्रयाजान्तपददर्शिताभिः संख्याभिः पादगतानामधिकरणानां क्रमोऽवसेयः । तथा च—

शारीरकाधिकरणसंख्या पादक्रमादियम् । एकादश स्युराद्ये षट् दशाष्टौ च दशाष्ट च ॥
सप्ताष्टौ च षडष्टौ च षड्युक्ता विंशतिस्ततः । दश पञ्चयुजोथैकादश द्विरथ पञ्च षट् ॥

एवं पादनीतिप्रबन्धः प्रतिपादमधिकरणानां प्रबन्ध =निबन्धनम्, सन्ततिर्वा ॥ १६ ॥

शास्त्रस्य सूत्रसमुदायरूपत्वात्, तत्र परमताद्वैलक्षण्यस्य वक्तव्यताया प्रसक्तत्वाच्च, सूत्राण्युपादाय तद्घटिताधिकरणानि गणितानि । तत्रार्थात् पादानां षोडशत्वमपि सिद्धम् । अथ पादघटितमध्यायस्

तत्राद्यं वक्ति सिद्धं विषयमपि परं तत्प्रतिद्वन्द्वियुग्मं
स्वप्राप्तेः साधनं च स्वयमिति हि परं ब्रह्म तत्रापि चिन्त्यम् ॥ १७ ॥

एवं पादाधिकरणविभागमुक्त्वाऽध्यायानां द्विकयोरपि विभागमर्थविभागेन प्रदर्शयन् उत्तरस्यापि त्रिकस्य सिद्धोपायोपेयरूपब्रह्मप्रतिपादनपरत्वात् ब्रह्मजिज्ञासारूपत्वं सिद्धमित्याह— शास्त्रमिति । अनेन शारीरकशास्त्रेण समन्वयाविरोधसाधनफलरूपाश्चतुर्ष्वध्यायेषु चत्वारोऽर्थाः प्रधानतया प्रतिपाद्यन्ते, एकैकस्या(कैका)ध्यायस्य पादचतुष्टयात्मकत्वात् षोडशाङ्घ्रित्वसिद्धिः । न केवलमध्यायभेदात् पादभेदाच्च भेदः, द्विकभेदादपि भेदोऽस्तीत्याह–द्विकेति । तत्र दृष्टान्तमाह— षट्केति । कर्मकाण्डे पूर्वोत्तरषट्कभेदः सुप्रसिद्धः । आदिशब्देन प्रथमकाण्डत्रिपादीव्यूहन(?)पूर्वकाण्डप्रसिद्धभेदोऽप्युपादीयते । एवं मयैवापि शास्त्रे तत्तल्लोकविभागो दृष्टान्तीकरणीयः । अत्र द्विकभेदनिमित्तमर्थभेदमाह—तत्रेति । पूर्वद्विकं सिद्धविषयनिरूपणपरम्—ब्रह्मणः सिद्धत्वात्, उत्तरद्विकप्रतिपाद्योपासनप्राप्त्योर्विषयत्वाच्च ब्रह्मणः । उत्तरद्विकं साध्यविषयनिरूपणपरम्— उपासनप्राप्त्योः पुरुषसाध्यत्वात्, परब्रह्मविषयत्वेन विषयि(य)त्वाच्च । ननु कथमुपासनप्राप्तिप्रति-

---

अध्यायघटितं द्विकरूपमवान्तरभेदञ्च तन्नियामकार्थपुरस्सरं दर्शयति शास्त्र त्विति । शास्त्रमिदं पूर्णमीमांसापरत्वमत्र नेति शारीरकशास्त्रमात्रग्रहणाय एतत्तु इति तुशब्दः पूर्वकाण्ड इव अध्यायाधिकृत-कतिपयाध्यायगतपादाधिवृत्ताहित्यरूपवैलक्षण्यपरः । समन्वितिः सर्वेषां जगत्कारणवाक्यानां ब्रह्मणि समन्वयः। तस्य सर्वकारणवाक्यप्रतिपाद्यत्वम्। अविहतिः अविरोध. स्मृतिभिः युक्तिभिश्च तस्याबाध्यत्वम्। करणं तत्प्राप्तिसाधनम् । प्राप्तिः तदनुभवरूपं फलम् । आसां चिन्ता प्रधानं येष्वध्यायेषु तैः । उपलक्षितमित्यर्थसिद्धम् । षोडश अंघ्रयः पादाः यस्येति पूर्वश्लोकसिद्धानुवादः । यद्वा चतुर्भिरध्यायैः षोडशाङ्घ्रीत्युक्तौ समविभागात् प्रत्येकम् अंघ्रिचतुष्टयमिति लभ्येत । एवं पादचतुष्कवदध्यायचतुष्टयरूप भेद उक्तः। तद्घटितद्विकद्वयरूपभेदमाह द्विकेति। भिदुरम् भेदवत्। षट्केति पूर्वमीमांसायां षट्कद्वयवत् अत्र द्विकद्वयम् । तत्रातिदेशषट्के सप्तमाष्टमौ सामान्यविशेषातिदेशपरौ । नवमदशमौ अतिदिश्यमानार्थविषयोहबाधपरौ । एकादशद्वादशौ उपदेशातिदेशोभयसंबन्धि[तन्त्रप्रसङ्ग]सूत्रार्थपरौ इति द्विकत्रयमपि भवति । एवमादिकमादिपदग्राह्यम् । द्विकविभागनियामकमर्थं द्वेधा दर्शयति तत्रेति । आद्यं युग्मं सिद्धरूपं ब्रह्मैव कारणत्वेन अबाध्यत्वेन च वक्ति, तथा वक्ष्यमाणोपासनानुभवयोर्विषयमन्तरा दुर्निरूपत्वात् विषयभूतं ब्रह्माह । तथाच सिद्धपरत्वं विषयपरत्वञ्चाऽऽद्यस्य । अत एव परं द्वितीयं युग्मं तत्प्रतिद्वन्द्वियुग्मं सिद्धप्रत्यनीकं साध्यं, विषयप्रतियोगि च विषयि वक्ति उभयोः पुरुषसाध्यत्वात् ज्ञानरूपतया सविषयकत्वाच्च । नन्वेवं भक्तिमुक्त्योरेवोत्तरद्विकार्थत्वे ब्रह्मजिज्ञासेति प्रतिज्ञायाः कथं पूर्णशास्त्रार्थप्रतिज्ञात्वम् । न च ब्रह्मणो जिज्ञासेति संबन्धसामान्यविवक्षणात् अनुबन्धिविचारोऽपि प्रतिज्ञात इति वाच्यम्—कर्मणि षष्ठ्या एव भवदिष्टत्वात् । तत्राह स्वेति । आभिधानिकत्वाय कर्मणि षष्ठ्यादरणेऽपि राजपरिकरन्यायेन अनुबन्धिचिन्तनस्याप्यर्थसिद्धत्वात् वस्तुतो नानुपपत्तिः । किमेवं प्रयासेन । ब्रह्मैव सर्वत्र चिन्त्यते । ब्रह्मोपासनचिन्ता हि नाम उपास्यब्रह्मचिन्तैव । ब्रह्मानुभवचिन्ता चानु-

पादत्रयस्योत्तरद्विकस्य ब्रह्मजिज्ञासारूपत्वम्? कथं वा ब्रह्मजिज्ञासारूपशास्त्रे सङ्गतिरित्याशङ्क्याह-स्वप्राप्तेरिति। द्विविधं हि साधनं प्रधानाप्रधानभावेन, ब्रह्म तदुपासनं चेति। एवं साध्यमपि द्विविधं ब्रह्म तत्प्राप्तिश्चेति। तथाच ब्रह्मणः प्राधान्येन प्राप्यप्रापकभावात् तन्निरूपणरूपमुत्तरद्विकमपि तज्जिज्ञासायामेव प्राधान्येन निविशत इति न सङ्कटं किञ्चित्। उक्तं हि तान्त्रिकैरपि, 'स स्वेनैव फलप्रदः फलमपि स्वेनैव नारायणः' इति॥ १७॥

तत्राऽऽद्येऽत्यन्तगूढाविशदविशदसुस्पष्टजीवादिवाचः
पश्चात् स्मृत्यादिकैरक्षतिविरहितदृतिः कार्यताऽग्नेन्द्रियादेः।
दोषादोषौ तृतीये भवमृदितरयोर्भक्तिरङ्गानि चाथो-
पासारोहक्रमावोत्क्रमसरणिफलान्यन्तिमे चिन्तितानि १८॥

एवमध्यायद्विकयोरर्थविभागमुक्त्वा पादानामर्थमेदमाह—तत्रेति। शारीरकाद्यपादे तावत् अस्पष्टतरजीवादिलिङ्गक(का)वाचश्चिन्त्यन्ते। अस्पष्टजीवादिलिङ्गकवाचो द्वितीये। स्पष्टजीवादिलिङ्गकवाचस्तृतीये। स्पष्टतरजीवादिलिङ्गकवाचश्चतुर्थे। उक्तं च सेनेश्वराचार्यैः, 'अस्पष्टतरमस्पष्टं स्पष्टं छायानुसारि च' इति। तत्र जीवप्रधानप्रतिपादकवाक्ययोश्छायानुसारित्वं हि सिद्धान्तप्रति-

---

भूयमानत्वाच्चिन्त्यैवेति। स्वस्य साधनमिति। उपासनविषयत्वेन रूपेणेति भावः। तत्रापि परद्विकेऽपि। किञ्च शाब्दप्राधान्ये उपासनादौ प्रतीतेऽपि आर्थप्राधान्यं ब्रह्मण एव। प्रधानभूत एव सिद्धोपायः साध्योपायव्याजसापेक्ष इति तन्निरूपणम्। अनुभाव्यत्वाच्च तस्य फलत्वं स्पष्टम्। अतस्तत्त्वहितपुरुषार्थरूपं ब्रह्म॥

चि. टी. १७. प्रथमकाण्डेत्यत्र यदि प्रथमपादेति पाठः स्यात्, तर्हि शारीरक आद्येऽध्याये पादत्रिपादीविभागवत् पूर्वमीमांसायां प्रथमपादस्तर्कपादः शिष्टा त्रिपादी इति व्यूहनं विवक्षितं स्यात्। काण्डेति पाठे प्रथमकाण्डे तृतीयाध्यायत्रिपादीपर्यन्तं यद् व्यूहनम्, तावति श्रुतिलिङ्गाद्यङ्गताग्राहकप्रमाणोपन्यासस्य समाप्तत्वात्। तद् निर्णीतान्तमधीतमिति प्रसिद्ध्याऽभिमतं स्यात्। तत्र द्वादशलक्षण्या भागत्रयात्मना विभागात् त्रिपादीत्वम्, चतुर्थश्च पादः संकर्ष इति पूर्वकाण्डविभागो वेष्टः स्यात्। पाठो निरीक्ष्यः॥ १७॥

स्वप्राप्तेः साधनञ्च स्वयमित्यत एव तत्त्वहितपुरुषार्थरूपं ब्रह्म शारीरकशास्त्रार्थ इति शास्त्रसार उक्तः। अध्यायसाराश्च व्यक्तमुक्ताः। अथ पादसाराः प्रदर्श्यन्ते। ततः पुनरासमाप्ति अधिकरणसाराः क्रमेण वक्ष्यन्ते तत्तत्पादान्ते च। तत्रेति। तत्र तेष्वध्यायेषु समन्वियादिपरेषु आद्ये प्रथमाध्याये अत्यन्तगूढेति। जीवादीनां वाचः जीवादिवाचः। आदिना प्रधानाद्यचेतनग्रहणम्। अत्यन्तगूढा अविशदाः विशदाः सुस्पष्टाश्च जीवादिवाचः क्रमेण पादैश्चतुर्भिर्विचार्यन्ते। येषु वाक्येषु जीवादिप्रतिपादकत्वमस्पष्टं स्पष्टं स्पष्टतरञ्च तद्विचारो द्वितीयादिपादेष्विति भाष्य एवोपरि भाषणात् प्रथमपादविचारितेषु वाक्येषु जीवादिप्रतिपादकत्वमत्यन्तगूढमिति ज्ञायते। ब्रह्मरूपधर्म्यन्तरकल्पनगौरवमसहमानाः जीवाद्यप्रतिपादकत्वेन स्थितान्यपि वाक्यानि तत्प्रतिपादकत्वेन परिकल्प्य नेत्रेषु पांसून् विकिरन्ति निरीश्वरा इति भावः। स्पष्टब्रह्मलिङ्गकैर्वाक्यैः प्रथमपादे ब्रह्म समर्थ्य ततोऽस्पष्टेष्वपि तत्समर्थनमिति

पादार्थानुसारेण प्रतीयमानत्वम्। एवमविरोधाध्यायेऽपि क्रममाह पश्चात्स्मृत्यादिकैरिति। स्मृति-पुराणेतिहासादिभिरधिकबलैनाभिमन्यमानैः वेदान्तवाक्यानां बाधः(विरोधः) परिह्रियते। अक्षतिः — अबाध इत्यर्थः। तर्कपादे तु वेदान्ततुल्यत्वेनाभिमन्यमानानां तर्काणामेव बाध उच्यते। अहितानां परपक्षतर्काणां सत्तर्कानुग्रहशालिभिर्वेदान्तवाक्यैर्हननमित्यर्थः। तथाच न प्रतिरोधोऽपि, तुल्य-बलेनैव प्रतिरोधो न पुनर्दुर्बलेन। तेन प्रथमपादे वेदान्तानां बाधपरिहारः क्रियते। द्वितीयपादे प्रतिरोधपरिहार इति विभागः। तत्र द्वितीयाध्याये द्वाभ्यां पादाभ्यां कारणद्वारकबाह्यविरोधपरि-हारः कृतः। उत्तराभ्यां वियत्प्राणपादाभ्यां कार्यद्वारकान्तरविरोधपरिहारः क्रियते। तत्रापि वियत्पादे वियदादीनां कार्यत्वपरिशोधनम्, प्राणपादे तु जीवोपकरणभूतानां प्राणादीनामिति विभागः। तत्र विरोधस्याऽऽन्तरत्वं वेदवाक्यानामन्योन्यविरोधरूपत्वादिति भाव्यम्। तृतीयाध्यायं पादभेदेन विभजतेऽधिकाराधिकर्तव्यभेदेन च—दोषादोषाविति। तृतीये ऽधिकारसाङ्गोपाय-विभागः। तत्र द्वाभ्यां पादाभ्यां अधिकारः परिशोध्यते। अधिकारो हि सांसारिकसकलपुरुषार्थ-वैराग्यपूर्विका परब्रह्मप्रेप्सा। तत्र वैराग्यपादे वैराग्यं सिध्यति जाग्रदाद्यवस्थासु जीवानां सदोषत्व-कथनात्। परब्रह्मप्रेप्सा तु उभयलिङ्गपादश्रवणफलमेव। एवं द्वाभ्यां पादाभ्यां साङ्गोपासनमधि-कर्तव्यमुच्यते। तत्रापि तृतीयपादे प्रधानभूतोपासननिर्णयः। चतुर्थे पुनरितिकर्तव्यतानिर्णयः। इत्थंप्रतिपादितोपायफलचिन्तनं चतुर्थाध्याय इत्याह—अथेति। उपासारोहप्रभावो हि उत्तर-पूर्वाघयोरश्लेषविनाशौ। तदिदं प्रथमपादे। देहादुत्क्रमणं द्वितीये, अर्चिरादिमार्गेण गमनं तृतीये,

---

शाङ्करोक्तम्। अन्ततो न विशेषः। पश्चात् द्वितीये अध्याये स्मृत्यादिकैः कपिलस्मृत्या योगस्मृत्या जगद्विलक्षणत्वासहायत्वानवयवत्वाप्रयोजनादितर्कैश्च पूर्वाध्यायोक्तार्थस्य अक्षतिः अहन्यमानता। अहितहतिः। अहितानां—सांख्यादितन्त्राण्यादाय प्रतिस्पर्धिनां हतिः बाधो द्वितीयपादे। तृतीयपादे अभ्रस्य वियतः कार्यत्वाभावात् सर्वकारणत्वोक्तिविरोध इति शंकापरिहाराय कार्यता चिन्तिता, चतुर्थपादे इन्द्रियप्राणयोः कार्यत्वं तदर्थमेव चिन्तितम्। तृतीये त्वध्याये संसरतो जीवस्य दोषः प्रथमे, इतरस्य परमात्मनो दोषप्रत्यनीकत्वं द्वितीये। अथ प्राकृतविरक्तस्य परमात्मतृषितस्य साधनं भक्तिस्तृतीये पादे, तदङ्गानि कर्म, शमादि, बाल्यं पाण्डित्यं मौनमित्यादीनि चतुर्थे। अन्तिमे चतुर्थे त्वध्याये उपासायाः उपासनस्य रोहे तत्प्रभावः पूर्वोत्तरपुण्यापुण्यविनाशनविश्लेषणरूपः, ततः शरीरात् मुक्तस्य-मुत्क्रमः, ततः सरणिः अर्चिरादिमार्गः, चतुर्थचतुर्थे फलं परंज्योतिरुपसंपत्तिरिति। ननु अथोपासारोहेति किमिति क्लिष्टः प्रयोगः? अथो भक्त्यारोहेति वा अथ ध्यानारोहेत्यादिरीत्या वा प्रयोगसंभवादिति चेत्—भक्तिशब्दो नोपनिषत्सु श्रुतः। ध्यानशब्दस्तु उपासनापेक्षया निकृष्टपर्ववाची। दर्शनसमानाकारप्रीति-रूपापन्नोपासनरूपो विवक्षितार्थः श्रौतोपासनशब्देन वक्तुमुचितः। 'सेवा भक्तिरुपास्तिः' इति नैघण्टुकाः। किञ्चात्र आरोहेति पदविभागो न युक्तः। भक्त्यारोहो हि नाम भक्तेः पूर्णाभिवृद्धिः। तदधिगमाधिकरणे च दर्शनसमानाकारोपासनप्रथमव्यक्त्युद्भवावसरे अघाश्लेषविनाशाविष्टौ। अतः उपासायाः रोहः अङ्कुरः। तस्य प्रभाव इति वक्तव्यम्। अत एवं प्रयोग इति। न्यायपरिशुद्धावपीदृशाः श्लोकाः सन्ति। अत्र शुद्धः पाठः। चिन्तितानीति। पूर्णस्य श्लोकस्यैकवाक्यत्वसंभवे बाधः अक्षतिरित्यादिषु

'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति वैकुण्ठवासिनो वासुदेवस्यासङ्कुचितानुभवमनुतुर्थे इत्येषा फलाध्यायपरिपाटीति दिक् ॥ १८ ॥

स्रष्टा देही स्वनिष्ठो निरवधिमहिमाऽपास्तबाधः श्रिताप्तः
स्वात्मादेरिन्द्रियादेरुचितजननकृत् संसृतौ तन्त्रवाही ।
निर्दोषत्वादिरम्यो बहुभजनपदं स्वार्हकर्मप्रसाद्यः
पापच्छिद् ब्रह्मनाडीगतिकृदतिवहन् साम्यदश्चात्र वेद्यः ॥ १९ ॥

एवं पादभेदात् अर्थभेदकथने सर्वेषामपि पादानां ब्रह्मजिज्ञासारूपत्वं कथमित्याशङ्क्य परिहरति—स्रष्टेति । तत्तत्पादोक्तानामर्थविशेषाणामेकस्मिन्नेव ब्रह्मणि पर्यवसानादिति परिहारः । तत्र स्रष्टेत्यादिभिः षोडशभिः पदैस्तत्तत्पादप्रतिपाद्यषोडशविशेषविशिष्टो भगवानेवाभिधीयते ।

---

प्रथमान्तेष्वपि एतत्पदान्वयाय, चिन्तिताश्च चिन्तितानि च चिन्तितानीति नपुंसकैकशेषः । अन्यदा वाच इत्यादौ चिन्तितपदस्य यथायथं विपरिणामेन ग्रहणम् ।

चि. टी. १८. छायानुसारि परमतच्छायानुसारितया दृश्यमानवाक्यजातम् । सिद्धान्तप्रतिपाद्येति । सांख्यादिसिद्धान्तग्रन्थप्रतिपाद्येत्यर्थः । तर्कपादे द्वितीयद्वितीये । तर्कमूलकतन्त्रनिष्ठनिरसनार्थः पादः तर्कपादः । अतः पाञ्चरात्रवारणम् । अत्र श्रुतिवाक्यविचारो न भवति; प्रतितर्कमात्रम् ॥ १८ ॥

अध्यायभेदवत् पादभेदस्याप्यर्थभेदनिबन्धनत्वात् सोऽर्थभेद एवमदर्शि । अथ सर्वस्य ब्रह्मविचारत्वसंपत्तये तत्तत्पादप्रधानप्रतिपाद्यत्वाभिमतविशेषणविशिष्टतया ब्रह्म निर्दिशति स्रष्टेति । स्रष्टृत्व विशिष्टतया ब्रह्मप्रतिपादनं प्रथमपादे । उपादानकारणत्वाद्यौपयिकसर्वात्मत्वरूपेण तत्प्रतिपादनं द्वितीयपादे । स्वस्मिन् निष्ठा स्थितिर्यस्य स स्वनिष्ठः । स्वेतरावृत्तित्वरूपमनन्याधारत्वं भूमविद्यायामुक्तं तृतीयेऽनुसंधेयम्; तत्र तद्विचारात् । निरवधिमहिमा सांख्यादिमतच्छायानुसारिश्रुतिवाक्यप्रतिपाद्यत्वस्यापि चतुर्थपादे स्थापनात् सर्ववेदान्तवाक्यव्यापितया ब्रह्मणो निरवधिमहिमत्वम् । अपास्तबाध इति । बाधात्यन्तदूर इत्यर्थः । श्रिताप्तः इति । विविधजनमोहकसमयषट्कस्यापि सर्वस्रष्टा स एव कारणमिति तर्कपादेनेश्वरस्य दोष एव लभ्येत, न गुण इति न मन्तव्यम्; दैवसर्गानुकूलत्वायासुरव्यामोहनात् श्रितान् प्रति आप्तत्वं रक्षितुमेव विपरीतान् तत्तत्कर्मानुसारेण मतान्तरेषु प्रवेशयतीति तस्य वैषम्यादिदोषप्रसक्त्यभावात् । श्रितानामाप्त इति बुद्ध्वा यदन्येऽपि श्रयन्ते, श्रिताप्तत्वं सर्वं जीवं प्रति तस्य भविष्यत्येवेति गुण एवायम् । उचितेति । खम् आकाशः तदादिविषये स्वरूपविकारात्मकजननकृत् आत्मनि निर्विकारे स्वभावविकारात्मकजननकृत् । इन्द्रियादेरिति आदिना प्राणवत् व्यष्टिदेहादिग्रहणम् । तत्र यथायथमद्वारकं सद्वारकञ्च जननकृत् संसृताविति । लोकान्तरगतागतादिसर्वनिर्वाहकत्वं तृतीयाद्ये । निर्दोषत्वादीत्यादिना कल्याणगुणाकरत्वग्रहणम् । बहुभजनपदम् बहुविधभक्तिविद्यागोचरः । स्वार्हेति । तत्तद्वर्णाश्रमार्हेत्यर्थः । कर्मप्रसाद्यत्वम् भक्तिप्रतिबन्धकपापनिवर्तककर्मानुष्ठानजनितप्रसादभाक्त्वम् । पापच्छित् । पूर्वोत्तराघादिविनाशविश्लेषकृत् । उत्क्रमणस्य सर्वसाधारण्येन करणेऽपि सुषुम्नानाडी

प्रथमपादः स्रष्टृत्वप्रधानः। द्वितीयस्तु देहित्वप्रधान इत्यादि स्वयमेव भाव्यम्। स्वनिष्ठः—स भगवान् स्वस्मिन् प्रतिष्ठितः। स्वमहिम्नि (? "स भगवः कस्मिन् प्रतिष्ठित इति। स्वे महिम्नि") इत्यादिश्रुतिसिद्धमनन्याधारत्वमुच्यते। श्रितासः—तर्कपादे हि अनाश्रितानां दुस्तर्कवादिनामनाप्तः, आश्रितानां पुनः पञ्चरात्रतन्त्रनिष्णातानां पाञ्चकालिकवृत्तीनामाप्त इत्युच्यते (इति वक्ष्यते)। संसृतौ तन्त्रवाही—जाग्रत्स्वप्नसुषुप्तिमूर्च्छामरणेषु भगवानेव निर्वाहकत्वेनोच्यते। शेषं सुगमम्॥ १९॥

त्रिष्युक्त्याऽधीत्य वेदान् त्रिविधबलविरत्यावन्यजादेव रागात्
कृत्स्नं मीमांसमानाः क्रमत(श) इति परब्रह्मचिन्तां तरन्ति।
प्राप्ते तुर्ये युगेऽस्मिन् परिमितबलधीप्राण-तद्भिन्नदृष्ट्या
कालक्षेपाक्षमत्वात् कतिचन कृतिनः शीघ्रमन्ते रमन्ते॥ २०॥

---

प्रवेशनमसाधारणम्। तच्छेषतयैव तदितरोक्तिः। अभिवहन् स्वयमातिवाहिकैः सहार्चिरादिमार्गे नयन्। अत्र षोडशसु पादेषु वेद्यः स्रष्टृत्वादिसाम्यदत्वपर्यन्तविशेषविशिष्टतया ज्ञाप्यः॥

चि. टी. १९. भगवान् स्वस्मिन्नित्यादिस्तालपाठः; आन्ध्रलिपिमुद्रितपाठश्च। अन्यः 'तस्मिन्' इति मुद्रितपाठः। श्रुत्यानुरूपपाठस्तु कुण्डलितः; पदयोजनेष्टश्च। भगव इति नारदेन सनत्कुमारसंबोधनं भूमविद्यायाम्। श्रुतौ 'यद्वा न महिम्नि' इत्युत्तरवाक्ये भगवतः स्वविभूत्यधीनसत्ताकत्वाभावात् स्वमहिम्नीत्युक्तमपि प्रतिषिध्यते। तेनानन्याधीनसत्ताकत्वादिलाभः॥ १९॥

एवं पादपर्यन्तशारीरकावान्तरविभागतदर्थतल्लभ्यभगवद्गुणविशेषनिरूपणमकारि। अथाधिकरणसाराः प्रदर्शनीयाः। ततः प्राक् आद्यायाश्चतुस्सूत्र्याः शास्त्रारम्भस्थापनार्थतयोपोद्घाततां विवक्षन् तत्र प्रसक्तमाशङ्काद्वयं श्लोकद्वयेन परिहरति त्रिष्वीति। नन्वत्र ब्रह्मविचारस्य कर्मविचारानन्तरत्वमसदुच्यमानं प्रायिकासदनुष्ठानविरुद्धमित्याक्षेपः। एष तदानन्तर्यार्थिकत्वाक्षेपः प्रागेव, 'मीमांसायाः कबन्धम्' इति श्लोकानन्तरं प्रस्तावमर्हति। तत्र मध्येऽनवकाशे, "सौतीसांख्या" इति श्लोकात्प्रागेव; न त्विदानीमिति चेत्—उच्यते। यत्र व्याप्याक्षेपपरिहारौ निवेश्यौ, तत्र 'व्याचख्युः केऽपि' इति श्लोके, 'कथयति निगमः कर्मचिन्ताफलं तत्' इत्युक्तत्वात् तन्निगमार्थशोधनभूतं श्लोकद्वयमिदं तदनन्तरमपि भवितुमर्हति। तथाप्यद्वैतमतनिरासस्य प्रसक्तस्य विच्छेदेनैतत्प्रवेशायोगात् तत्रोपेक्षा कृता। तथाच, 'अत्र वा वक्तव्यं तत्र वेति न कश्चिद्विशेषः' इति न्यायभाष्योक्तन्यायेनान्तत इहैवावकाशः कल्पितः। न चात्रेदमनन्वितम्; शास्त्रारम्भार्थं चतुस्सूत्रीति प्रस्तोतुं प्रस्थितेन, 'परीक्ष्य लोकान्' इति मन्त्रौ कर्मविचारानन्तर्यरूपमथशब्दार्थं, अकृतरूपं प्रयोजनं, सत्यत्वाक्षरत्वादि ब्रह्मलक्षणं, अधीतवेदान्तं प्रति कथनात्, 'येन', 'तां ब्रह्मविद्याम्' इति ब्रह्मप्रतिपादकशास्त्रञ्च चतुस्सूत्रीज्ञेयानि ज्ञापयतः इति सूचयितुमेवात्र निबन्धनात्। अत एतद्वाक्यार्थः क इति चिन्ता। कर्मविचारानन्तर्यं ब्रह्मविचारस्यात्र विधातुमशक्यम्; विचारस्याविधेयत्वात; सिद्धान्तिभिः प्रायेण कर्मविचारं विनैवास्य क्रियमाणत्वाच्चेति शंकायामुच्यते—न वयमानन्तर्यं विधेयं ब्रूमः। अक्षरराशिग्रहणार्थाध्ययनमात्रे विधिपर्यवसानादिति। एवं त्रिष्वृक्त्या—

अत्र केचिच्चोदयन्ति, 'भवतामुपपादनमन्यत्, अनुष्ठानमन्यत्। कर्मविचारस्य पूर्ववृत्त(कर्मविचारस्य ब्रह्मविचारस्य च पूर्वोत्तर)त्वमुपपाद्यते। अनुतिष्ठन्ति च कर्मविचारमन्तरेणापि ब्रह्मविचारमाचार्याः। कथमेतत् सङ्गच्छते?' इति। अत्रोत्तरमालिख्यते—विघ्नुक्त्येति। अत्र विधिः कार्यमेकेषाम्। शब्दभावना पुनरन्येषाम्। इष्टसाधनत्वं मण्डनस्य। इष्टस्य कृत्यधीनत्वलक्षणमाचार्यैकदेशिनः (देशीयानाम्)। धात्वर्थभावनेति केचिदूचुः। आप्तस्य हितकामस्य नियोग इति न्यायवादिनः। तमेव पक्षमनुमन्यन्ते ब्रह्यन्तवादिनोऽपि। यथाहुः—

'आप्तस्य हितकामस्य नियोगं केचिदूचिरे। भाष्यकारोऽपि भगवानेनमेवान्वमन्यत॥' इति। यो वा को वा विधिर्भवतु। तस्य विघ्नेत्युक्तिः। अयमर्थः—कृतादिपुण्ययुगेषु अधिकारिणोऽपरिमितबलधीप्राणयोगात् वेदानधीत्याविघ्नेन फलवदापातप्रतीतिजनितां त्रिकाण्डीं मीमांसामनुक्रमेण विचारयन्ति। अयमेव न्यायमार्गः। अधुना पुनरन्तिमयुगे संप्रति बलधीप्राणानां परिमितत्वेन मध्ये विच्छेदसंभवात् ब्रह्मविचाररूपमुख्यार्थानुष्ठानानुग्रहाय कर्मविचारात्मकमङ्गविचारानुष्ठानं कंचित्कालं परित्यज्य शीघ्रमेव अन्ते = वेदान्तश्रवणे रमन्ते कतिचन कृतिनः = कृतकृत्याधिकारिणो भाग्यवन्त इत्यर्थः। आहुश्च, 'मुख्यामुख्यविरोधे मुख्यानुग्रहो न्याय्यः' इति। अयमर्थः 'गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः' (पू.मी.)इत्यत्रोच्यते। अयमत्र निर्णयः-अनुक्रमानुपपत्तिशङ्काभावे

---

स्वाध्यायविधिवाधवलात् वेदान् अधीत्य विधिबलस्य शब्दग्रहणमात्रे विरतत्वेपि अन्यज्ञात् साङ्गाध्ययनजन्यापातार्थग्रहणमूलसंशयजन्यात् निर्णये रागात् कृत्स्नं विचारयन्तः, इति-प्रागुक्तरीत्या क्रमतः वेदाध्ययनक्रमेण कर्मचिन्तानन्तरम्, यद्वा इति-सौत्री इत्यारभ्य पूर्वश्लोकपर्यन्तसूचितरीत्या ब्रह्मचिन्तां तरन्ति कुर्वन्ति पूरयन्ति च। एवं प्रायिकं न्यायप्राप्तमानन्तर्यं परीक्ष्येति पदेनोक्तम्। कर्मविचारानन्तर्ये इष्यमाणे ब्रह्मविचारानुत्थितिशंका च प्रथमाधिकरणे परिहृता। एवं विचारादेरवैधत्वादेव तुर्ये चतुर्थे कलौ युगेऽस्मिन् पूर्णविचारप्रायिकत्वस्थाने अपूर्णविचारप्रायिकत्वमेव पदं धत्ते। कुतः? बलधीप्राणैः परिमितैः—करणकलेवरयोर्बलस्य, ज्ञानस्याऽऽयुषश्च परिमित्या तद्विघ्नानां बलादिरिथतौ विघ्नानां इष्टया संभावनया, मुख्यलोपो मा भूदिति धिया बलधीप्राणाधिकरणस्य कालस्यामुख्यार्थे योजनेन क्षेपं यापनं न क्षमन्ते न सहन्ते। क्षमु सहने। तथाभूतत्वात् कृतिनः कृतिनः भाग्यवन्तः; भाग्यवशादिति यावत्; शीघ्रं कर्मविचारं विनैव अन्ते अन्तिमे ब्रह्मविचारे रमन्ते। अवैधविचारात् प्रत्यवायो नास्ति। पूर्णवेदाध्ययनं विनोपनिषन्मात्राध्ययनेन ब्रह्मविचारे यतमानानां विहिताध्ययनत्यागात् अस्त्येव प्रत्यवायः। कर्म अनपेक्षितमिति मत्वा तद्विचारं त्यजतामपि विपरीतग्रहणरूपो दोषः। मुख्यहानिभिया अमुख्यत्यागस्तु न दोषाय। न पुनरेतन्निकृष्टाधिकार्यनुगुणतया पूर्णाधिकारिविषयप्रवृत्तशास्त्रपरिपाटी परिवर्त्येत। तथा सति सांगप्रयोगविधिना तत्तदशक्तविचित्रपुरुषानुकूलत्वायाङ्गानामग्रहणापत्तेरिति। शेषं वक्ष्यते॥२०

चि. टी. २०. एकेषां प्राभाकराणाम्। अन्येषां भाट्टानुयायिनाम्। एकदेशिन इति। सिद्धान्ते धात्वर्थनिष्ठकृतिसाध्यत्वं भाष्यकृदिष्टमित्युच्यते; न तु इष्टनिष्ठं कृतिसाध्यत्वम्। धात्वर्थभावना धात्वर्थहेतुव्यापारसामान्यम्। न्यायवादिनः न्यायकुसुमाञ्जलिकाराः। पूर्वोक्तपक्षदूषणमपि तत्र।

मध्ये विच्छेदेति। अनेन तद्विघ्नेति बलादिपरिमितेरपि विघ्नेत्यर्थकमिति ज्ञापितम्। शंकाभावे

न्यायानुसारादनुक्रमेणैव श्रोतव्यम् । तच्छङ्कायां पुनः प्रधानविरोधपरिहाराय व्युत्क्रमेणापि श्रवणमस्त्येवेति न विरोधः । नन्वपरिज्ञातशाखान्तरादिभिः कथमिव शाण्डिल्यविद्यादीनां भेदाभेदचिन्ता, कथं चापरिज्ञातश्रुतलिङ्गादिभिश्च कर्मज्ञानयोरङ्गाङ्गिभावपरिकल्पनम्, कथं चापरिज्ञातश्रुत्यर्थपाठादिभिरचिरादिषु क्रमपरिकल्पनम्, एवमन्यत्रापि न्यायान्तरोपजीवनं कथमिव जाघटीतीति ॥ घटत एव । तत्त्वविद्भिरचितैः प्रकरणादिभिः कर्मकाण्डार्थं संक्षेपतः श्रुत्वा श्रूयतां शारीरकमिति । अथवा अप्रतिहतप्रतिभैरन्तेवासिभिराचार्यसकाशादेव कर्मकाण्डार्थं संक्षेपतः श्रुत्वा श्रूयतां(ते) शारीरकमिति [वा] अविरोधः । यद्वा शारीरकश्रवणवेलायामेवातिशयितप्रतिभावन्तः तत्तदपेक्षितमर्थजातं सहसैवावधारयन्तु नाम, तस्मादविरोध इति । क्रमत इति । अत्र हि द्वयी गतिः—केचिदक्षरराशिं गृहीत्वा स्नानात्प्रागेव त्रिकाण्डीमपि मीमांसां शृण्वन्तीत्येका प्रक्रिया । अपरा पुनरधीत्य स्नायादिति वाक्यानुसारेण सहसैव स्नात्वा पश्चात्, 'अनाश्रमी न तिष्ठेत्' इति ब्राह्मणानुसारेण प्रागेव परिणयनमपि कृत्वा कालेकाले मीमांसामपि शृण्वन्तीति । ननु कथं गृहस्थस्य यजनाद्यावश्यककर्मभिरुत्तरकालस्यावरुद्धत्वाज्ज्ञानार्जनावकाशः ? उच्यते । यथा श्रुत्यर्थानामुत्तरकर्मानुष्ठानौपयिकद्रव्यार्जनरूपाणां याजनाध्यापनप्रतिग्रहाणां यजनाध्ययनविधिभिरवकाशो दीयते, एवं यावज्जीवानुष्ठेयकृत्स्नकर्मानुष्ठानौपयिकज्ञानार्जनरूपस्य मीमांसाश्रवणस्याप्यवकाशो दीयतामिति महानयं घण्टापथः ॥ २० ॥

रागान्मीमांसते चेत् स्वयमिह यततां किं गुरुक्त्येति चेन्न
ब्रह्मज्ञानाप्तये गुर्वभिगमनविधेस्तेन तत्त्वोपदेशात् ।
सद्विद्याऽऽचार्यवत्त्वे प्रथयति च परब्रह्मवित्तिं तथाऽन्याऽ-
प्याचार्यादित्यधीते(तेः) नियमविधिरमौ निश्चितो नीतिविद्भिः ॥ २१ ॥

---

पूर्णपातार्थमपीति । यद्वा अनुक्रमप्रवृत्तिबाधिकायाः अनुपपत्तिशङ्कायाः बलाद्यनुवृत्त्ययोगशंकाया अभावे इत्यर्थः ।

तच्छङ्कायां-विघ्नशंकायाम् । अथ 'मानत्वादिर्विचार्यः' इत्यादिप्रागुक्तरीत्या अपेक्षायां तदुपेक्षणे शारीरकार्थोऽपि न ज्ञायेतेत्याक्षेपसमाधाने आह नन्वित्यादिना ॥ २० ॥

ननु यदि परीक्ष्येत्यानन्तर्यमविधेयम्, अभिगमनमपि न विधेयम् । अज्ञस्य ज्ञातारमनुसृत्य ज्ञानसंपादनस्याऽऽर्थिकत्वात्; तत एव तस्य गुरुत्वात् । विचारस्य रागप्राप्तत्वेन तदुपायानां परिचिन्तन-पुस्तकनिरीक्षण परोपसर्पणानामपि यथायथं प्राप्ततया विधेयत्वायोगाच्च । न च प्रोवाचेति गुरुकर्तृकोपदेशविधिः । तमध्यापयेदित्यत्राऽऽचार्यकादिकामनयाऽध्यापनस्यार्थिकत्वोक्तेस्तद्रीत्यैहाप्यर्थाविशिष्टत्वात् इति शंकते रागादिति । स्वयम् गुरूपसदनं विनैव । विचारस्य वैधत्वे तु अध्ययनविधौ मीमांसाया इतिकर्तव्यतात्वेनान्वयात् अङ्गिन इवाङ्गस्यापि गुर्वधीनत्वं सिध्येदित्यभिमानः । गुरुक्त्या गुरुकर्तृकोपदेशेन । परिहरति नेति । अभिगमनस्यैव विधेः । कथमिति चेत्—वक्ष्यति नियमविधिरसाविति । अभिगमनस्य पक्षप्राप्तस्यापि पक्षान्तरेऽप्राप्ततया, अध्ययनस्येव नियमविधिर्भवितुमर्हति । तत्रापि शास्त्रानुमतगुणविशिष्टगुर्वभिगमननियमात् अगुणगुरुव्यावृत्तिरपि पुस्तकवीक्षणादिव्यावृत्तिवत् । 'अनन्यप्रोक्ते गतिरत्र नास्ति' इति वचनात् असांप्रदायिकग्रहणस्य न तत्त्वविषयकत्वनियमः ।

अत्रान्यः कश्चिदचूचुदत्, 'रागप्राप्तं मीमांसाश्रवणमित्यक्षरराशिग्रहणमात्रफलकाध्ययनविधिवादिनो भवन्तः प्रतिपेदिरे। तर्हि आचार्यसकाशादेव श्रोतव्यमिति निर्बन्धो निर्निबन्धनः। स्वयमेव शारीरकशास्त्रपुस्तकावलोकनेन कर्मब्रह्ममीमांसापरिज्ञानमात्मनः करोतु प्राज्ञः। मुधैवाचार्यानुसरणप्रयासः' इति। तदिदमाह—रागादित्यादिना। तत् प्रतिक्षिपति—नेति। तत्र हेतुमाह—अथेति। 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्' इति ब्रह्मज्ञानार्थं गुर्वभिगमनविधेः। न केवलं विधि-

---

गुरुस्तु तादृशस्तत्त्वमेवोपदिशेत्। अतो हेतोरभिगमनविधिः। प्रोवाचेति वाक्यमपि उपदेशविधायकम्। तदुक्तं तत्त्वटीकायाम्—"यद्यपि लाभाद्यपेक्षया कस्यचित् रागतः प्रवृत्तिः, तथापि तन्निरपेक्षस्य गुरोः सच्छिष्यविषये धर्मार्थमिदं विधीयत इति न विरोधः" इति। अत्रोपदेशवाक्ये शिष्यगुणनियमस्याप्यन्वयात् अपात्रोपदेशव्यावृत्तिः। एवं विहितोपदेशजन्यज्ञानवदधिकारिलाभे तत एव चरितार्थाः भक्तिविद्यादिविषयः न मार्गान्तरसिद्धज्ञानान् पुंसोऽधिकारितया गृह्णन्ति।

अत्र श्रुत्यन्तरमपि प्रदर्शयति सद्विद्येति। सद्विद्या चेत्यन्वयः। 'आचार्यवान् पुरुषो वेद' इति तत्र वाक्यम्। ब्रह्मवेदने आचार्यवत्त्वं प्रयोजकम्। वेदनं श्रवणं भवत्यादि च। तथा एवम् अन्या सत्यकामविद्याऽपि आचार्याद्धिति वाचम् अधीते श्रावयति। अधीतेरित्यपि पाठः। तदा अन्याऽपि विद्या आचार्यवत्त्वे प्रथयति परब्रह्मवित्तिम्; आचार्याद्धिति वाक्यस्य तत्राधीयमानत्वादित्यर्थः। अत्राचार्यवत्त्वे विद्यासु ध्रुवं ख्यापितम्। तत्र साधिष्ठमिति पदं साधिष्ठपदात् भावे अणि निष्पन्नं साधिष्ठत्वार्थकम्। एवं गुरूपदेशं विना साधुविद्यालाभायोगस्य स्फुटत्वात् तल्लाभाय गुर्वभिगमनमेव कार्यमिति नियमविधिरसावित्यर्थः। नीतिविद्भिरित्यनेन अत्यन्ताप्राप्तस्थल इव पक्षप्राप्तस्थलेऽपि विधिरिष्टो मीमांसायामिति ज्ञापितम्। तत्र पूर्वोऽपूर्वविधिः द्वितीयो नियमविधिरिति न विध्यसंभवः। एवमुपदेशविधिरपि सत्पात्रविषये पक्षप्राप्तस्य नियमविधिः। सदसदुभयविषयपात्रोपदेशस्य युगपदपि प्राप्तिसंभवात् असत्परिसंख्या वा। गीतादौ पात्रोपदेशापात्रनिषेधोभयदर्शनात् परिसंख्याया वचनान्तरलभ्यत्वात् तत्त्वटीकोक्तरीत्या धर्मार्थविधिरेव वाऽस्तु। धर्मफलञ्चोक्तम्, "ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः" इत्येवम्। तस्मात् वाक्यमानन्तर्यांशे विध्यभावेऽपि न व्यर्थम्।

इदमत्र बोध्यम्—अधीतिनोऽर्थेषु संदिहानाः निर्णयाय गुरून् उपसद्य पृच्छेयुः। कस्यकस्य कुत्रकुत्र कस्कः संदेह इति न शक्यं गणयितुम्। एकैकसंदेहव्यक्त्यपगमनव्याप्रतौ च गुरूपरुद्देशपूर्तिर्झटिति, कदाऽपि वा न स्यात्। अतो बादरायणः आन्तं वेदान्तेषु समागतशिष्यगतसंदेहसंदोहजिज्ञासाव्याप्रतिं विहाय, येन मार्गेण तत्त्वहितपुरुषार्थविषये संभवत्संदेहापनोदने कृते शिष्यास्तं प्रकारं यथावत् श्रुत्वा स्वसंदेहान् सर्वान् तत एव, तत्तुल्यनयविचारकौशलेन च त्यजेयुः स मार्ग आदरणीय इति शारीरकं निबबन्ध। ईदृशनिबन्धश्रवणं गुरुमुखात् कार्यम्। कर्मविचारविषये एवं गुरूपसर्पणविध्यभावात् तन्नियमाभावेऽपि गुरुसापेक्षाः मा श्राम्यन्तु, निरपेक्षा अपि लघुमार्गेण गुरुशिक्षिताश्चेत् सुखेन संशयसागरं तरेयुरिति तत्र संप्लवमानान् सुप्लवरूपया मीमांसया पारं नेतुं प्रावर्तिष्ट कारुणिको

मात्रम्; उपदेशादर्शनमप्यस्तीति दर्शयति तेनेति। न पुनरिदं हेतुद्वयमेव॥ सद्विद्या पुनः, 'आचार्यवान् पुरुषो वेद' इत्याचार्योपदेशादेव सम्यग्ज्ञानमुपजायत इति विशदमेव प्रकाशयतीत्याह—सद्विद्येति। अत्र मतुपा सम्यगुपासनं विवक्ष्यते। न केवलं सद्विद्यैवामुमर्थमुपदर्शयति; विद्यान्तरमपि विद्यायास्साधुत्वमुपदेशादेव सिध्यतीति प्रकटयतीत्याचष्टे=तथेति। 'आचार्याद्ध्येव विदिता विद्या साधिष्ठं प्रापत्' इति हि श्रुतिः। साधिष्ठं=साधुतमत्वम्। प्रापत्—प्राप्नुयादित्यर्थः। 'छन्दसि लुङ्लङ्लिटः' इति व्यत्ययस्य सौत्रत्वात्। ननु रागप्राप्तं मीमांसाश्रवणमिति भवद्भिरङ्गीक्रियते, कथमधुना बहुश्रुत्युपपादनेन विधिप्राप्तत्वमुच्यते? तथा च ह्यन्यद् वाचि अन्यदिति वैयाकुलीमेवातनोति। नेत्याह—नियमविधिरिति। त्रिविधः खलु विधिः—अप्राप्तविधिः, नियमविधिः, परिसंख्याविधिश्चेति। अत्र मा भूदप्राप्तविधिः, मा च भूत् परिसंख्याविधिः, नियमविधिमेव परिगृह्णीमहि, 'अभिजनविद्यासमुदेतं समाहितं संस्कर्तारमीप्सेत्' इतिवत् श्रोत्रियं ब्रह्मनिष्ठमेव गुरुमभिगच्छेदिति। तेनायमर्थः—अत्र न श्रवणं विधीयते। नापि श्रवणार्थं गुर्वभिगमनम्। तस्यापि श्रवणार्थिभिः स्वयमेवाचरणात्। अपितु शिष्याचार्ययोर्गुणावेव विधीयेते। तेन विधिप्राप्तत्वरागप्राप्तत्वविरोधचोदनं मन्दमिति॥ २१॥

सिद्धे व्युत्पत्तिबाधा न भवति न च धीर्लक्षणाद् युज्यतेऽस्मिन्
किं शास्त्रेणान्यसिद्धे न च निशमयितुः सिद्धबोधे फलं स्यात्।
ब्रह्मण्येवं न मानान्युपनिषद इति स्तम्भिते तद्विचारे
शास्त्रारम्भं चतुस्सूत्र्यघटयदुचितैर्न्यायभेदैश्चतुर्भिः॥ २२॥

एवमध्ययनानन्तरम् 'अथातो धर्मजिज्ञासा' इत्यारभ्य, 'अनावृत्तिश्शब्दात् अनावृत्तिश्शब्दात्' इत्येवमन्तमनुक्रमेण कर्तव्यं मीमांसाशास्त्रशरीरमिति प्रमाणतर्काभ्यां प्रकटमेवोपपादितम्। अतः परं मीमांसाशास्त्रैकदेशभूतस्य शारीरकशास्त्रस्यानारम्भणीयत्वशङ्कां शारीरकाद्यभूतचतुरधिकरणी चतुर्भिर्न्यायविशेषैः प्रशमयतीति शास्त्रोपक्रमप्रतिपादनायोपक्रमते—सिद्ध इति। उक्तञ्च पूर्वाचार्यैः—

'व्युत्पत्त्यभावात् प्रतिपत्तिदौस्स्थ्यादन्येन सिद्धेरफलत्वतश्च।
अमात्वमाशङ्क्य निराचकार न्यायैश्चतुर्भिः प्रतिपाद्य तत्तत् (यते तत्)॥' इति।

उक्तमन्यैरपि शारीरकशास्त्रन्यायनिबन्धनग्रन्थकर्तृभिर्धन्यबुद्धिभिः—

---

जैमिनिकर्णधारः। अतो यथेच्छ-अव्यवस्थितगुरूपदेशरीतिमुपेक्ष्य निबन्धमुखेन ग्रहणं निपुणैः कर्तव्यमिति। अथावशिष्ट संशयनिवृत्तिः स्वतोपि परतोऽपीति॥

चि. टी. २१. न पुनरिति। नेत्यत्र तत्त्वोपदेशः अभिगमनविधिवत् अन्यहेतुतया नोच्यते इत्यर्थः॥

अथ प्रकृतमन्त्रादिगम्यगुरूपदेशरूपशास्त्रारम्भाकर्तव्यत्वशंकापरिहारपरां चतुस्सूत्रीमेकपेटिकात्वेन दर्शयति सिद्धे इति। अधिकरणचतुष्टयगतपूर्वपक्षचतुष्टयानुवादः क्रमेण पूर्वार्धेन। आद्यव्युत्पत्तिः सर्वत्र कार्यविषयिणी। अतो व्युत्पत्त्यगृहीतसिद्धमात्रविषयको बोधः कुत्रापि न भवति। अतो वेदान्तवाक्यं न ब्रह्मप्रतिपादकं सिद्धप्रतिपादकत्वाभावात्। लक्षणात् लक्षणावावशात् अस्मिन् ब्रह्मणि धीर्न भवति। प्रतिपाद्यमानो धर्मो न ब्रह्मलक्षणम्, विशेषणत्वोपलक्षणत्वाभावात्। अन्यसिद्धे प्रागेवानुमानतः सिद्धेऽस्मिन् शास्त्रकार्यं किम्। न चेति। श्रोतुः सिद्धविषयके बोधे शास्त्रात् जाते फलं न किञ्चित्। अतः

'व्युत्पत्त्यभावः प्रतिपत्तिदौस्स्थ्यमन्येन सिद्धत्वमथाफलत्वम् ।
एतानि वै सूत्रचतुष्टयेनानारम्भमूलानि निराकृतानि ॥' इति ।

इयं केवलचतुःसूत्री तावदेका पेटिका शास्त्रारम्भसमर्थनरूपार्थैक्यात्, तत्परिपन्थिपरोक्तन्याय-निराकरणरूपप्रयोजनैक्याच्च । तदवान्तरपेटिके द्वे द्वे सूत्रे । तत्र पूर्वसूत्रद्वितयं सिद्धप्रतिपादकस्य शब्दस्य व्युत्पत्तिसमर्थनेन वेदान्तवाक्यप्रामाण्यसमर्थनार्थम् । उत्तरं च तात्पर्यलिङ्गसमर्थनेन तदर्थमेवेति पेटिकाविभागः । तत्रापि पूर्वपेटिकायां सिद्धपरस्य शब्दसामान्यस्य व्युत्पत्तिः समर्थ्यते प्राथमिकेन सूत्रेण । द्वितीयेन तु सिद्धविशेषपरस्य ब्रह्मशब्दस्य व्युत्पत्तिसमर्थनमित्यवान्तरविभागः । उत्तरपेटिकायां तु तात्पर्यलिङ्गसमर्थनं ब्रह्मणि वेदान्तवाक्यानाम् । तात्पर्यलिङ्गानि च—

'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥'' इति षोढा विभज्यन्ते ।

तत्र मानान्तरागोचरतारूपमपूर्वत्वलक्षणं तात्पर्यलिङ्गं शास्त्रयोन्यधिकरणे सिध्यति । साफल्य-लक्षणं समन्वयाधिकरणे । तत्रापि शास्त्रसाफल्यं पूर्वत्र, तज्जन्यज्ञानसाफल्यमुत्तरत्रेति पेटिकाधि-करणविभागः प्रसिध्यति । एतत् सर्वमनुक्रमेण तावदुपपादयामः । आद्या व्युत्पत्तिः सिद्धेऽर्थे न सिध्यतीति प्रथमाधिकरणपूर्वपक्षः । द्वितीयाधिकरणे पूर्वपक्षं दर्शयति—नचेति । लक्षणतो हि विशेषव्युत्पत्तिः शब्दानां, गन्धवती पृथिवी, सास्नादिमान् गौरित्यादौ । आहुश्च, 'व्यावृत्तिर्व्यवहारो वा लक्षणस्यार्थः' इति । अस्मिंस्तु ब्रह्मणि जगत्कारणत्वलक्षणं न जाघटीति, तेन न योयुज्यते विवक्षितब्रह्मशब्दस्य व्युत्पत्तिरिति । तृतीयाधिकरणपूर्वपक्षमाह—किमिति । अनुमानसिद्धे किं शास्त्रेणेत्यर्थः । चतुर्थस्याधिकरणस्य पूर्वपक्षमाह—न चेति । निशमयितुः=श्रोतुरित्यर्थः । एवं ब्रह्मण्युपनिषदो न मानानीति ब्रह्मविचारे स्तम्भिते शारीरकशास्त्रारम्भं चतुस्सूत्री चतुर्भिर्न्यायवि-विशेषैः समजीघटत् । सिद्धे व्युत्पत्तिसद्भावात् ब्रह्मलक्षणताप्रतिपत्तिसौष्ठवात्, मानान्तरागम्यत्व-साधनात्, वेदान्तवाक्यजनितज्ञानानां तव गृहे निधिरस्तीत्यादिन्यायेन निरतिशयानन्दब्रह्मविषय-त्वेन स्वयमेव पुरुषार्थरूपत्वादिति चत्वारो न्यायाश्चतुरधिकरणीनिर्णयाः ॥ २२ ॥

सिद्धे व्युत्पत्त्यभावे(लाभे) स्वरिव फलतया, लक्ष्मभङ्गे च लक्ष्यं
ब्रह्मान्योक्त्याऽनुमानप्रमितमपि भवत्वंग्रतः शास्त्रवेद्यम् ।

---

त्वदिष्टब्रह्मबोधो न वेदान्तजन्यः फलविषयकत्वाभावादिति। एते चत्वारोऽपि पूर्वपक्षाः ब्रह्मविचारस्तम्भकाः। एवं विचारे स्तम्भिते विघटिते उचितैः तत्तत्पूर्वपक्षनिरसनार्हैः न्यायभेदैः—सिद्धेऽपि व्युत्पत्ति-रस्ति, लक्षणमिदं विशेषणत्वोपलक्षणत्वार्हम् । ईश्वरो नान्यसिद्धः, ब्रह्मविषयकबोधः सुतरां फलविषयकः ब्रह्मणः स्वत एव फलत्वादित्यर्थोपपादकैः अनुमानविशेषैः स्वाभिमतैः चतुस्सूत्री शास्त्रारम्भमघटयत् ॥

चि. टी. २२. एवमित्यादि । अनेन संगतिप्रतिपादकेन, एकविंशश्लोकपर्यन्तः पद्यसमूहः कर्म-विचारानन्तर्यस्थापक एवेति ज्ञायते । तदा श्लोकद्वयस्य पूर्वस्य सुघटनेऽपि सौत्री इत्यादीनां कथं कर्मविचारानन्तर्यार्थशेषतेति चेत्—कर्मनिरपेक्षनिर्गुणब्रह्मपरत्वाभावस्यैव सूत्राधिकरणपादाध्यायद्विक-पर्यन्तविभागपरिस्थितिप्रदर्शनेन ज्ञापनं कृतमिति ईदृशस्य शारीरकस्य कर्मविचारानन्तर्यं घटते इत्याशयो भावः ) प्रागसदुक्तः प्रकारस्त्वन्यः ॥ २२ ॥

**विध्यर्थत्वेऽप्यबाधात् परविषयवचः स्वार्थमानं भवेदि-**
**त्यन्वारुह्योक्तिरेषा न हि सहत ऋजुः सूत्रकृत् वावदूकः ॥ २३ ॥**

अत्र केचिद्वदन्ति–'चतुरधिकरणीपूर्वपक्षः खल्वन्वारुह्यवादेनापि परिहर्तुं शक्यते। तत् किमस्मिन् नाङ्गीक्रियते' इति। तत्परिहारमन्वारुह्योक्तिवादस्वरूपोपन्यासपूर्वकमाह—सिद्ध इति। इयं किल तस्य स्वरूपोपन्यासप्रक्रिया—माऽस्तु नाम आद्या व्युत्पत्तिः सिद्धे। तथापि यागादिफलभूतस्वर्गादिस्वरूपवत् 'ब्रह्मविदाप्नोति परम्' इति वाक्यविहितवेदनफलतया परं ब्रह्मापि सिध्यतु। लक्षणभङ्गेऽपि पुराणादिप्रसिद्धरावणयुधिष्ठिरसुयोधनादिवत् तत्तदौपनिषदसूक्तप्रसिद्ध्या ब्रह्मापि सिध्यतु। न हि काव्येतिहासपुराणादिषु सर्वत्रापि लक्षणं लक्ष्यते। न च तावता तत्तदर्थासिद्धिरनुवर्ण्यते। अस्त्वनुमानप्रसिद्धमपि ब्रह्म; तथापि निरतिशयानन्दरूपत्वाद्यनन्तगुणविशिष्टतया शास्त्रवेद्यमपि भवत्येव। विधिशेषत्वेऽपि वेदान्तवाक्यानामबाधितानां 'अग्निर्हिमस्य भेषजम्' इत्यादिवत् स्वार्थप्रामाण्ये को विरोध इत्यन्वारुह्यवादः। तथाच परमार्थदूषणे सति किमिति नाम हीनकल्प-

---

एवं चतुस्सूत्रीकार्ये प्रदर्श्य एषां तर्काणामनारम्भणीयत्वासाधकतायाः स्थितत्वात् कथं पूर्वपक्षनिरासाय तदप्रदर्शनं सूत्रकृतेति शंकायामाह सिद्धे इति। हेतुस्वरूपमंगीकृत्य तस्यासाधकत्वं कुतो न सूत्रकृदुक्तमिति वश्शंका। हेतुस्वरूपस्यैवाभावे सति कथमंगीकृत्य निरासो युज्यते। असदप्यन्वारुह्य—अभ्युपगम्य तदुच्यतामिति चेत्—तदिदमसमर्थकृत्यं न भगवान् बादरायणः आदर्तुमर्हति। अनभिमतस्याभ्युपगमपूर्वको हि वाद आर्जवभञ्जक इति। अभ्युपगम्याप्यनारम्भासाधकत्वप्रकाराः सुवचा एवेत्याह क्रमेण पादत्रयेण। पूर्वपक्ष्युक्तः सिद्धे शब्दानां व्युत्पत्त्यभावः काममस्तु। अथापि ब्रह्म प्रमेयम्; कर्मकाण्डे स्वर्गादिफलवत्। स्वर्गादि हि फलं न पुरुषव्यापाररूपम्। तस्य कथं बोधविषयता? स्वयं सिद्धत्वेऽपि साध्यपरविधिवाक्यान्वयादिति चेत्—अत्रापि परब्रह्मप्राप्तिकामः तत् विद्यादिति बोधे फलतया तदन्वयः। पूर्णब्रह्मानुभवरूपफलघटकतया गुणविग्रहविभूत्यादिसर्ववस्तुसिद्धिः। यदि विधेयोपासनविषयतया ब्रह्मसिद्धिरुच्यते, तदा त्वं शंकेथाः असतोऽप्युपासनविषयत्वान्न सत्यब्रह्मनिश्चय इति। फलतयाऽन्वयात्तु अबाध एव। एवञ्च, 'यन्न दुःखेन संभिन्नम्' इत्यादिवाक्यवत् उपनिषत् सर्वाऽपि प्रमाणम्। अतो ब्रह्मणः सिद्धत्वं सिद्धमात्रे व्युत्पत्त्यभावश्च न स्वदिष्टसिद्ध्ये। अथ द्वितीये उच्यते— लक्ष्मणः लक्षणस्य भंगेऽपि दुर्वचत्वेऽपि ब्रह्म लभ्यम् प्राह्यम्। कथम्? अन्योक्त्या लक्षणोक्तिव्यतिरिक्तयाऽप्युक्त्या। 'आसीत् दशरथः' इति वाक्यश्रवणे दशरथो ज्ञायते किल। न च तत्र लक्षणोक्तिः। इक्षुक्षीरगुडादिरसा उच्यन्ते। तथापि न लक्षणमुखेन तज्ज्ञापनम्। अथवा अन्यदित्युक्त्येति विग्रहः। लक्षणकथनं हि व्यावृत्ततद्ग्रहणाय। नेति नेतीति, अन्यदिदमिति तत्तदन्यत्वोक्त्या प्रसिद्धचिदचिद्विलक्षणत्वोक्त्या तत् ग्राह्यमेव। अत उक्तलक्षणाभावेऽपि नाग्रहणम्। एवमनुमानप्रमाणस्येश्वरविषये सत्त्वेऽपि प्रमाणसंप्लवस्वीकारात् पर्वतेऽनुमितेऽग्नौ आरण्यकमुखेन पश्चात्प्रत्यक्षेण चानुमानागृहीतानेकविशेषग्रहणवत् ब्रह्मणि शास्त्रज्ञाप्यविशेषज्ञापनाय शास्त्रप्रवृत्तिर्युक्तैव। विधीति। परविषयवचः परब्रह्मप्रतिपादकवेदान्तवाक्यजातं विध्यर्थत्वेऽपि विधिवाक्यशेषत्वेऽपि भवत्यादिव्यापारविधिनिरूपितशेषत्वाकान्तत्वेऽपि प्रवृत्ति-

मन्वाद्यनुवादमाचरामीति भगवान् बादरायणो नारायणपरं शास्त्रं साक्षाद्युक्तिभिरेवासाधय-
दिति। ऋजुः = आर्जवं मनोवाक्कायानामैकरूप्यम्। तथाच सूत्रकारः ह्यन्यद्वाच्यन्यदिति द्विरूपां
प्रक्रियां नानुसरतीत्यर्थः॥ २३॥

द्वाभ्यामादौ प्रतीतिप्रजननमुदितं सिद्धरूपे परस्मिन्
द्वाभ्यां वैफल्यशङ्का तदनु परिहृता शास्त्रतज्जन्यबुद्ध्योः।
औचित्यानेकभाष्यस्वरसगतिमती प्राक्तनी वर्तनीयं
शास्त्रारम्भार्थमेकं त्रितयमिह परं शास्त्रमित्याहुरेके॥ २४॥

अत्र चतुरधिकरण्यां पूर्वोत्तरपेटिकयोः प्रकारान्तरेणाप्यर्थविभागं दर्शयन् चतुर्णामधिकरणाना-
मुपोद्घातत्वं स्वपक्षेण प्रदर्श्य 'एकमेवाधिकरणमुपोद्घातः' इत्येकदेशिनां मतमपि प्रधानार्थविरो-
धाभावेन प्रौढिप्रकर्षादनुवदति—द्वाभ्यामिति। अयमर्थविभागः—द्वाभ्यामधिकरणाभ्यां सिद्धे
ब्रह्मणि प्रतीत्युत्पत्तिरुक्ता, तस्याः प्रतीतेः तत्कारणभूतस्य शास्त्रस्य च साफल्यं द्वाभ्यामधिकरणा-
भ्यामुच्यते। इत्थं चतुरधिकरणी शास्त्रोपोद्घातः। उपोद्घातलक्षणस्य प्रधानभूतसकलवेदान्त-
चिन्तार्थ(सिद्धार्थ)चिन्तान्तररूपेषु चतुर्ष्वधिकरणेषु साधारणत्वात्। इममेवार्थं सहेतुकमुपपाद-
यति—औचित्येति। औचित्यम्—अर्थौचित्यमुपोद्घातत्वोपपादकलक्षणतौल्यमित्यर्थः। अनेकेषु भाष्येषु

---

निवृत्त्यन्यतरपरवाक्यरूपविधिविशेषत्वेऽपि, सिद्धान्त्यभिमतस्वातन्त्र्याभावेऽपि मन्त्रार्थवादवदेव स्वार्थे ब्रह्मणि
प्रमाणमेव, अबाधादित्यर्थः। इति पूर्वपक्षचतुष्टयस्याप्यसाधकत्वमसंमतपक्षसंमत्यारोपेण सूत्रकारो वक्तुमर्हति।
तथा नाह। लक्षणत्वशास्त्रैकमेयत्वाविषयत्वादिकमेव मन्यते। तदुक्तांशस्वीकारेण तद्दूषणे कृतेऽपि
तदुक्तांशाप्रामाणिकत्वमप्याविष्करणीयम्। अन्यथा यथावदशिक्षणादनृजुः-अनाप्तः स्यात्। तदुक्तांशस्वी-
कारे तद्वदेवाज्ञत्वेन दीनः स्यात्। एवमाविष्करणस्यावश्यकत्वे तेनैव ऋजुमार्गेण तन्निरासे किमभ्युपगम्य
तद्दूषणेन। यदिपरम् असाधकं साधकत्वेन पूर्वपक्षी प्राहस्मेति तदसामर्थ्यमुद्भावितं स्यात्। तत्तु कथंचित्
जिगीषुवादिसविधे युक्तम्, न तत् तत्त्वबुभुत्सुपूर्वपक्षिविषये वावदूकः कुर्यात्। विरक्तः सूत्रकृत्
परासामर्थ्यवचनं प्रधानं न मन्यते। अत एव न्यायवार्तिककारो न्यायभाष्यकारोक्तमभ्युपगम-
सिद्धान्तप्रकारं नान्वमन्यतेति। अतः सिद्धेऽव्युत्पत्त्यभावादिकमेव निरासेति श्लोकोऽयं पूर्वश्लोकशेषः।

श्लोके व्युत्पत्त्यभावे इत्यस्य व्युत्पत्त्यभावेऽपीत्यर्थः। फलतयेत्येतदनन्तरम् ब्रह्म लभ्य-
मित्यपकर्षः। लक्ष्मभंगेऽपि च अन्योक्त्या ब्रह्म लभ्यमिति तस्योपर्यप्यन्वयः॥ २३॥

पूर्वपक्षचतुष्टयं प्रदर्श्य चतुस्सूत्री उपोद्घात इति दर्शितम्; तत्र चतुर्षु द्विकं द्विकमिति
पेटिकाभेदं प्रदर्श्यापि उपोद्घातत्वमुपपादयन् सर्वप्राचीनग्रन्थसंमतिश्च दर्शयन् पक्षान्तरमप्युपदर्शयति
द्वाभ्यामिति। सिद्धरूपे परस्मिन्निति। सिद्धत्वेऽपि प्रतीतिः प्रथमाधिकरणोक्ता। मानान्तरागम्यार्थ-
परत्वेऽपि प्रतीतिर्द्वितीयोक्ता। शास्त्रवैयर्थ्यशंकापरिहारस्तृतीये, तज्जन्यब्रह्मबुद्धेर्नैष्फल्यशंकापरिहारश्चतुर्थे।
प्रतीत्यसंभवः, प्रतीतेऽपि तात्पर्यायोगः इति शंकाद्वयं द्विकद्वये परिहृतम्। औचित्येति। विशिष्य
किञ्चिद्विषयवाक्यमेवाधिकृत्य विचार ईक्षत्यधिकरणादौ। ततः प्राक् तु वेदान्तवाक्यसामान्यमेव

**चतुस्सूत्री उपोद्घातत्वेन प्रतीयते। प्राक्तनी चेयं वर्तनी, श्रीमद्भाष्यकारशिष्यधुरन्धरैरात्रेयाचार्य-श्रीविष्णुचित्त-वरदाचार्य-वादिहंसनवाम्बुदप्रभृतिभिस्तत्तद्ग्रन्थेषूपपादनात्। मेघनादारिसूरिप्रभृत-**

---

गृहीत्वा लक्षणवचनम् अज्ञातज्ञापनम् प्रयोजनभूतार्थवचनञ्च न भवतीत्युच्यते। जन्माद्यधिकरणे तैत्तिरीयवाक्यस्य, समन्वयाधिकरणे, 'आनन्दो ब्रह्म' इत्यादेः कथनं न तावन्मात्रविषयत्वाभिप्रायेण। संभावितसर्वलक्षणासंभवादिशंकनस्यैव युक्तत्वात्।

ननु शास्त्रारम्भार्थत्वं यदि द्वितीयादेरप्यधिकरणस्य, पञ्चमादेरपि तत् भवितुमर्हति शास्त्रयोनित्व-प्रयोजनरूपत्वयोरानुमानिकप्रधानजीवयोरभावेन तदधिकरणद्वयाक्षेपेणैव पञ्चमादिप्रवृत्तेः। अतोऽनु चितमेतदिति चेन्न; औचित्यात्। यदि सिद्धस्य व्युत्पाद्यत्वेऽपि लक्षणीयत्व–मानान्तरावेद्यत्व–प्रयोजनरूपत्वानि न भवेयुः, तर्हि शास्त्रं नाऽऽरम्भणीयम्। तद्धर्मसंभव एवाऽऽपातप्रतीतिसत्त्वादारम्भणीय-मित्युक्तम्। तथा च यादृशापातप्रतीतेरारम्भोपयोगिता, तत्सद्भाव एतावता स्थापितः। अथेयमापात प्रतीतिर्यथार्था न भवति, सिद्धान्तीष्टब्रह्मव्यतिरिक्तपरतयैव निर्णीयमानत्वादिति सद्विद्यादिकमेकैकं गृहीत्वा तदर्थविचारः। स च शास्त्रविचार एव, नारम्भविचारः। औचित्यान्तरमपि। अनुबन्धिचतुष्टयं ग्रन्थारम्भहेतुर्हि प्रतिग्रन्थं निरूपणीयम्। विषयप्रयोजनसंबन्धाधिकारिणश्चत्वारस्ते। तत्र पौर्वापर्यं यथायथं भवति। तत्र कर्मफलविरक्तो मुमुक्षुरधिकारी प्रथमाधिकरणे सिद्धः। विषयो ब्रह्म लक्षितं द्वितीये। संबन्धश्च प्रतिपाद्यप्रतिपादकभावः स्थाप्यते तृतीये; शास्त्रप्रमाणकत्वोपपादनात्। प्रयोजनं चतुर्थ इति स्पष्टम्। एवं चतुर्भिरनुबन्धिचतुष्टयं प्रदर्श्य ततो ग्रन्थारम्भ इति। **एवमनेकभाष्य-स्वरसगतिश्च** चतुस्सूत्रीमुपोद्घातं दर्शयति—द्वितीयाधिकरणे, "किं तद् ब्रह्म यत् जिज्ञास्यमुच्यते" इत्यवतारणात् जिज्ञास्यवस्तुसमर्पणं द्वितीयकार्यमिति जिज्ञासास्थापनार्थत्वमस्यावगतम्। तृतीये च, 'वेदान्त-वेद्यमित्युक्तम्; तदयुक्तम्' इत्याशंक्य ज्ञातत्वादजिज्ञास्यमिति मतिव्युदासेन वेद्यत्व(वेदनार्हत्व)स्थापनात् जिज्ञास्यत्वरूपेण वस्तुसत्तोपपादनशेषत्वावगमात् जिज्ञासार्थता ज्ञापिता। चतुर्थे च, 'ब्रह्म न शास्त्रं प्रतिपाद-यतीत्याशंक्याह' इति ईक्षत्यधिकरणादिवैलक्षण्येन सामान्यतश्शास्त्रस्याप्रतिपादकत्वशंकनात् जिज्ञासोप-योग्यापातप्रतीत्यभाव एव दर्शितो भवति। ईक्षत्यधिकरणे च, "ब्रह्म जिज्ञास्यमित्युक्तम्" इत्यादिना 'चतुस्सूत्री जिज्ञास्यत्वस्थापिका; अथ तु जिज्ञासायाः सिद्धायाः शान्तये विचारप्रवृत्तिः' इति ज्ञापितमेव। श्लोके भाष्यपदं श्रीभाष्यान्तर्गतवाक्यपरमिति तेषामनेकत्वोपपत्तिः। एवमुपक्रमावगतार्थाविरोधेन द्वितीय-पादप्रारम्भभाष्ये, "शारीरकमीमांसाश्रवणमारमेतेत्युक्तं शास्त्रारम्भसिद्धये" इति प्रथमाधिकरणमात्रे शास्त्रारम्भकत्वभाषणं न द्वितीयादेरारम्भकत्वप्रतिषेधकमिति मन्तव्यम्। द्वितीयसूत्रे यच्छब्दः, तृतीये केवलपञ्चम्यन्तपदम्, चतुर्थे तत्तु इति पदञ्च चतुर्णां सूत्राणामेककार्यकारितां दर्शयन्ति। शेषं तत्रैव द्वितीयपादे **भाष्यार्थदर्पणे नयद्युमणिभूमिकायाञ्चा**स्मद्ग्रन्थयोर्द्रष्टव्यम्॥ **प्राक्तनी**ति। मेघनादारि-सूरितः प्राक्तनैरेवैवमुक्तत्वात् प्राचीनता। अथैकदेशिपक्षमाह **शास्त्रे**ति। **एकं** प्रथमाधिकरणम्। **परं**

यस्तु, "अथातो धर्मजिज्ञासा इति सूत्रवत् एकमेव वेदान्तसूत्रं शास्त्रोपोद्घातः" इति प्रतिपेदिरे ; तदपि वैभववादत्वादुपन्यस्याम इत्याह—शास्त्रेति ॥ २४ ॥

यत् तत् सेनेश्वरार्यैरगणि वकुलभृत्किङ्करैरङ्ग्यकारि
व्यासार्यैर्न्यासि च (तत्) द्विः श्रुतमिति विशदं विष्णुचित्तैर्विवव्रे ।
अश्रौषं शेषकल्पादहमपि यदिदं (विदुषो) वादिहंसाम्बुवाहात्,
अद्धा निर्धार्यतेऽत्रचतुरधिकरणी ब्रह्मचिन्तोपयुक्ता(प्रमार्था) ॥ २५ ॥

तस्य पक्षस्य वैभववादत्वमेव प्रदर्शयितुं सर्वलोकसंमतिपात्रबह्वाचार्यग्रन्थसंवादनात् चतुर्णाम् अधिकरणानामुपोद्घातत्वमेव प्रकटयति—यत्तदित्यादिना । सेनेश्वरार्याः = श्रीरङ्गराजान्तरङ्गारि-

---

तदुपरितनमधिकरणत्रितयम् ईक्षत्यधिकरणादिवत् शास्त्ररूपमेव इत्याहुः एके नयद्युमणिनयप्रकाशिकादिकाराः मेघनादारिसूरयः ॥

चि. टी. २४. प्रकारान्तरेणेति । पूर्वमधिकरणचतुष्टयानुरूपमर्थचतुष्टयमुपोद्घातत्वनियामकमुक्तम् । अत्र पैटिकाद्विकानुरूपमर्थद्विकमुच्यत इति तदन्यता । प्रौढिप्रकर्षात्=ग्रन्थकृतामभियुक्तत्वातिशयात् । आत्रेयाचार्याः यतीन्द्रमहानसिकाः श्रीप्रणतार्तिहराचार्याः । वादिहंसनवाम्बुदाः श्रीदेशिकचरणानामाचार्याः आत्रेयरामानुजाचार्याः । मेघनादसूरीति पदमशुद्धम् । मेघनादारिसूरीति शोध्यम् । मेघनादः इन्द्रजित् । तदरिः लक्ष्मणः । प्रसिद्धमिदं तद्ग्रन्थेषु । यथा नयप्रकाशिकायाम्, "यथाश्रुतं यथाशक्ति मेघनादारिणा मया" इति । मेघनादारिप्रभृतय इत्यनेन तदनन्तरैस्तथोक्तावपि तत्पूर्वपुरुषश्रीराममिश्रविरचिते विवरणग्रन्थे तदुदाहृते तदनुकूलं किमपि नास्तीति सूच्यते ॥ २४ ॥

सिद्धे व्युत्पत्तिरित्यारभ्य स्वोपपादिता औचित्यानेकभाष्यसरसगतिमत्त्वेन स्वोक्ता च या वर्तनी, तस्याः प्राक्तनीत्वम्, एके इति पदेन सूचितं पक्षान्तरग्राहिपुरुषापेक्षया स्वपक्षग्राहिणामनेकत्वञ्च विशदयति यत्तदिति । यत् यस्मात् कारणादिति पादत्रयक्रियास्वन्वयः ; उपरि यच्छब्दाभावे । तदित्यस्य चतुस्सङ्ख्या उपोद्घातत्वमित्यर्थः। अगणि अकथि सेनेश्वराचार्यैः शारीरकन्यायकलापसंग्रहाख्ये ग्रन्थे । 'व्युत्पत्त्यभावात्' इति पञ्चम्यन्तपदघटितश्लोक एषाम् । अत्र, 'अमात्वमाशङ्क्य निराचकार' इत्यनेन वेदान्तमादाय ब्रह्मविचारो हि वेदान्तस्य तत्र प्रामाण्यसंभवे सति स्यात्; तदेव नेति प्रामाण्यप्रतिक्षेपकयुक्तिचतुष्टयं शंकित्वा निराकृतमिति चतुर्णामेककार्यकरत्वं दर्शितम् । एवं प्रामाण्यसंभावनामात्रप्रदर्शनम् । अथ ईक्षत्यधिकरणमारभ्य ब्रह्मविषयकत्वसंभवसाधकयुक्तिनिरासिनां पूर्वपक्षाणां निरासेन ब्रह्मविषयकत्वस्थापनमिति । वकुलेति । यस्मात् तत् वकुलभूषणकिङ्करस्वरूपोपाधियुक्तैः वरदनारायणभट्टारकैः न्यायसुदर्शनाख्यग्रन्थे अङ्ग्यकारि । 'व्युत्पत्त्यभावः' इति प्रथमान्तपदघटितश्लोक एषाम् । यत् तत् व्यासार्यैः श्रीसुदर्शनसूरिभिः स्वाचार्यसकाशात् श्रुतमिति विशदं न्यासि द्विः-श्रुतप्रकाशिकायां श्रुतदीपिकायाञ्चोपन्यस्तम् । ग्रन्थनाम्नि श्रुतपदघटनात् साम्प्रदायिकत्वमर्थस्य स्पष्टम् । श्रावयितारः श्रीवात्स्य-

करतल्लजाः शारीरकाधिकरणार्थसंग्राहकपद्यनिर्मातारः। वकुलभृत्किंकराः = वरदनारायणभट्टारकाः न्यायसुदर्शनकर्तारः । व्यासार्याः = श्रुतप्रकाशिकाश्रुतदीपिकानिर्मातारो हारीतकुलाचार्याः इतिरिति द्वयोरपि ग्रन्थयोरुपात्तत्वमुच्यते । श्रीविष्णुचित्ताः = शठमर्षणगोत्रप्रभवाः प्रमेयसंग्रहादिग्रन्थकर्तारः। सकलाचार्यसंभाव्याः वादिहंसाम्बुवाहा आत्रेयवंशजाः न्यायकुलिशादिग्रन्थनिर्मातारः इत्थं कतिकति आत्रेयवरदाचार्यप्रभृतयो वेदान्तशास्त्रसंरक्षकग्रन्थान् व्यर(री)रचन्। तेन बह्वाचार्यग्रन्थसंवादात् वयमपि चतुरधिकरण्युपोद्घातत्वपक्षमेवावक्ष्मह इति निर्धार्य कथयति—अत्रेति॥२५।

व्युत्क्रम्यात्राऽऽद्यतुर्यावभिदधति नयौ केचिदप्राप्तमेतत्
बोधासिद्धौ कथं तत्फलमिह विमृशेत् सिद्धवत्कारमान्द्यात् ।
मध्यौ द्वौ रूपनामप्रजननविषयौ यत् विदुस्तच्च मन्दं
सत्युक्तेऽपेक्षितेऽर्थे विफलविभजनं नोचितं नीतिसूत्रे ॥ २६ ॥

॥ इति अधिकरणसारावळौ शास्त्रावतारः ॥

अत्र स्वपक्षेण चतुस्सूत्र्युपोद्घातत्वमुक्त्वा व्यत्ययेन चतुस्सूत्र्यां परवाद्युक्तां प्रक्रियामपन्याय-मूलतयाऽनुभाष्य प्रतिक्षिपति—व्युत्क्रम्येति । इत्थं किलाहुरन्ये, 'शारीरकाऽऽद्यसूत्रे प्रतीतिसाफल्य-कथनम्, प्रतीत्युत्पत्तिकथनं तु समन्वयसूत्रे' इति । एतत् अप्राप्तमेव । कथमप्राप्तत्वमित्याशङ्क्य तत्र

---

वरदगुरवः । विष्णुचित्तैर्यन् तत् विवव्रे इति । शठमर्षणेति विष्णुचित्तान्तरव्यावृत्तिः । प्रमेयसंग्रहादिरेषां ग्रन्थ उक्तः । समग्राहीत्यनुक्त्वा विवव्रे इत्युक्त्या विवरणाख्योऽदसीयो ग्रन्थ इति युक्तमिव । विशद-मिति पदमत्रान्वेति । तेन मेघनादारिकूटस्थैः श्रीराममिश्रैः कृतं विवरणं स्वपक्षसाक्षित्वेन तैः नयद्युमणौ यत् उपन्यस्तम्, तत्र प्रकृतप्रमेयस्य एकमात्रोपोद्घातत्वस्य भाष्यकारग्रन्थवत् स्फुटत्वं नास्ति ; अत्र तु विवरणे चतुर्णामुपोद्घातत्वं विशदमिति वैलक्षण्यमदर्शि । स्वाचार्यानप्यत्र प्रमाणयति अश्रौषमिति । तत्तद्ग्रन्थे तत्तदुक्तमद्राक्षम् । अस्मदाचार्यादश्रौषमपि ; अद्राक्षमपि । शेषकृपादिति विज्ञानवल्ले कथामानन्ताख्यादिशेषावतारभूतश्रीभाष्यकारामेरोक्तिः । अद्धा निश्चयेन । निष्कम्पमिति यावत् । अस्य प्रथमपादप्रभृति सर्वत्रान्वयोऽपि भवितुमर्हति । अन्तिमपादमात्रे वाऽस्तु । अत इति पदं यदित्यस्य प्रतिसंबन्धि । चतुरधिकरणी ब्रह्मचिन्तोपोद्घातत्वेन निर्धार्यत इति वाक्यार्थः ॥ २५ ॥

अथ चतुर्णामधिकरणानां प्रत्येकप्रमेयनिरूपणं कार्यम् । तत्र यादवप्रकाशैः प्रथमाधिकरणरचना अस्मदुक्तचतुर्थाधिकरणरचनाक्रमवती । चतुर्थी च प्रथमरचनाक्रमे । पूर्वार्धेन तन्निरासः व्युत्क्रम्येति । केचित् यादवप्रकाशीयाः आद्यतुर्यौ प्रथमाधिकरणार्थचतुर्थाधिकरणार्थभूतौ नयौ आरम्भणीयत्वस्थापक-युक्तिवर्गौ, व्युत्क्रम्य — प्रथमे वक्तव्यं चतुर्थे, चतुर्थे वक्तव्यञ्च प्रथमे अभिदधति=वदन्ति । शास्त्र-जन्यस्य सिद्धविषयकबोधस्य निष्फलत्वशंकायां सफलत्वसाधकहेतुवर्गं प्रथमे, सिद्धविषयबोधासंभव-शंकायां तदुत्पत्तिस्थापकहेतुवर्गं चतुर्थे च निवेशयन्ति । अप्राप्तमेतत् । शास्त्रजन्यबोधस्य साफल्य-चिन्तनं प्रथमस्थानं नार्हति ; कुत इति चेत्—बोधस्य सिद्धौ किल तस्य फलसद्भावाभावचिन्ता । बोधः

हेतुमाह—बोधासिद्धाविति। 'सति धर्मिणि धर्माश्चिन्त्यन्त' इति हि न्यायः। तेन सिद्धे बोधे साफल्यासाफल्यचिन्तनं न्याय्यम्। न पुनः प्रागेव साफल्यादिचिन्तनं क्रियते॥ अनागतावेक्षणन्यायेन सिद्धं कृत्वा चिन्त्यत इति चेत्—तदपि न, तस्य न्यायस्य मन्दगतित्वात्। तदिदमाह—सिद्धवत्कारमान्द्यादिति। परपरिकल्पितं प्रक्रियान्तरमपि प्रतिक्षिपति—मध्याविति। 'रूपप्रपञ्चनिर्माणकथनं जन्माद्यधिकरणे, नामप्रपञ्चनिर्माणकथनं शास्त्रयोन्यधिकरणे' इति तैरुच्यते। तद् वार्तम्, 'इमानि भूतानि' इति रूपनामप्रपञ्चयोर्जन्मनि साधारण्येन श्रुत्यैव साक्षादुक्ते, भवद्भिरपि तथैवोक्ते, तस्मिन्नपेक्षिते च सति विफलविभजनमनुचितमेवेति भावः॥ पुराणादिषु साधारण्येनैकवारमुच्यते, पुनर्विभज्याप्युच्यते; तद्वदस्मिन्निर्वाह इति चेत्, तत्राह—नीतिसूत्र इति। काव्यपुराणादिषु यथाकथंचित्कथनमस्तु। न्यायनिबन्धनात्मके शास्त्रे सफलमेव सकलं सर्वदा वक्तव्यमिति निर्णयः। निष्फलं च भवत्कथितं विभजनमित्याचक्ष्महे॥ २६॥

॥ इति श्रीदेशिकसूनुना श्रीवरदगुरुणा विरचिते अधिकरणचिन्तामणौ शास्त्रावतारः॥

---

सिद्ध इति तैर्न सुवचम्—चतुर्थ एव स्थापयिष्यमाणत्वात्। नन्वेकाधिकरणविचारावसरे अन्यान्यधिकरणानि स्थितवत् भाव्यन्ते। इदमेव एकोनसहस्राधिकरणन्यायत्वेनाहुः। अतः सिद्धवत्कृत्य विचारो न दोषायेति चेत्-तत्राह सिद्धवत्कारमान्द्यादिति। नानाशब्दादिभेदादित्यधिकरणे वक्ष्यमाणं भेदमुपजीव्य 'सर्ववेदान्तप्रत्ययम्' इति सूत्रे भेदाभेदचिन्ता क्रियते। तत्र सूत्रयोरन्यथाऽर्थवर्णनासंभवात्। अस्तु तत्र सिद्धवत्कार इष्टः। इह तु सूत्रयोः बोधोत्पत्तितदभावविचार एव पूर्वम्, साफल्यविचारः चतुर्थे इति ऋजुरीत्याश्रयणे सौत्रपदविरोधक्लेशस्याप्यभावात् न सा रीतिर्युक्तेति। अथ मध्यगताधिकरणद्वयविषये परोक्तमपि प्रसंगान्निरस्यति मध्याविति। यादवप्रकाशीयैः, 'सर्वशक्तिसंपन्नं सन्मात्रमेव ब्रह्म, न तु प्रधानादीति द्वितीयाधिकरणार्थः, अज्ञाततादृशसन्मात्रोद्देशेन ब्रह्मत्वविधानं कथमिति शंकायां तत्स्थापनं तृतीयाधिकरणे; शास्त्र एव वाक्येनैकेन ज्ञापितं सन्मात्रं वाक्यान्तरेणानूद्य ब्रह्मत्वविधानमिति व्याख्यातम्' इति श्रुतप्रकाशिकोक्तत्वात् अत्रानूदितोऽयं पक्षोऽन्यदीयो वा, तदीययोजनान्तरं वेति विमृश्यम्। रूपनामप्रजननविषयौ रूपप्रपञ्चकारणत्वं द्वितीयाधिकरणार्थः, शब्दप्रपञ्चकारणत्वं तृतीयाधिकरणार्थ इति यत् विदुः, तदपि मन्दम्। अपेक्षिते उभयविधं प्रति कारणत्वे, 'जन्माद्यस्य...' इति सूत्रे अस्येति सामान्यपदेनोक्ते सति, उभयविधवेदवाक्यक्रोडीकारे एकत्रैव शक्ये सति, निष्फलं विभजनमयुक्तम्। एकत्रोक्तस्य न्यायस्यान्यत्र स्वयमेवातिदेशनसंभवाच्चैवम्। नीतिसूत्रे युक्तिप्रतिपादकसूत्रे तुल्यार्थस्य पुनर्विभज्य कथनमनुचितम्। सफलविभजनेऽस्मदुक्ते श्रीभाष्यकारदर्शिताधिकरणद्वयार्थे वक्तव्ये सति विफलविभजनमयुक्तमित्यर्थः॥

चि. टी. २६ इमानीति। एवमेवंनामरूपवत्त्वेन प्रमाणसिद्धानीत्यर्थः इमानीति पदस्य सुवचः इति नाम्नामपि प्रकृतवाक्ये गृहीतत्वमित्याशयः सफलमेवेति। एकाधिकरणानुक्तम् एकाधिकरणन्यायत एवासिद्धञ्च यत् तदुक्तावेवाधिकरणसाफल्यमिति॥ २६॥

॥ इति सारार्थरत्नप्रभायां शास्त्रावतारः॥

प्रथमस्याध्यायस्य प्रथमः पादः ॥

## जिज्ञासाधिकरणम् ॥ १ ॥

अथातो ब्रह्मजिज्ञासा ॥ १-१-१ ॥ सूत्रम् ।

**कार्ये व्युत्पत्तिराद्या नियतमिति गिरस्तत्परा एव सर्वाः**
**नान्या वेदेऽपि नीतिस्तत उपनिषदामूषरप्रायतैव ।**
**नातस्तद्वेद्यमीमांसनमुचितमिति प्रत्यवस्थीयमाने**
**सिद्धे व्युत्पत्तिमाद्यां बहुमुखमवयन् ब्रह्म जिज्ञास्यमाह ॥ २७ ॥**

एवं कर्मविचारानन्तरमधिकर्तव्यस्य शारीरकशास्त्रस्याधिकारिविशेषप्रतिपत्त्यर्थं शास्त्रोपोद्घातरूपप्रथमाधिकरणपूर्वपक्षोपन्यासप्रकारानुसारेण राद्धान्तप्रक्रियावैविध्यमप्युपदर्शयन् सूत्रप्रधानभूतब्रह्मजिज्ञासां प्राधान्येन प्रदर्शयति सूत्रकार इति प्रकटयति—कार्ये इति ।

---

अथाधिकरणानां साराः क्रमेण निरूपणीयाः। तत्र पूर्वपक्षसिद्धान्तसंग्रहः सर्वत्र । विशेषस्तु यथासंभवम् ।

**चि. टी. २८.** तत्र **अधिकरण**शब्दार्थं बुबोधयिषुस्तदौपयिकीं संगतिं दर्शयति चिन्तामणौ **एवमिति।** **पूर्वपक्षोपन्यासप्रकारानुसारेणे**ति। कार्य एव व्युत्पत्तिः; अतः कार्यविषयक एव सर्वत्र बोध इति पूर्वपक्षरीतिमनुचिन्त्येत्यर्थः । **राद्धान्ते प्रक्रियावैविध्यम्**—सिद्धान्ते नानामुखं तन्निरासम् । आद्यव्युत्पत्तेः कार्य एव भावेऽपि पश्चात् सिद्धेऽप्यावापोद्वापाभ्यां बोधः सुसंपादः । तथा कार्य इव सिद्धेऽपि व्युत्पत्तिः प्रथमतो भवितुमर्हति । व्युत्पत्तिस्तु-प्रयोज्य-प्रयोजकवृद्धरूपपुरुषत्रयसमावेश इव क्वचित् पुरुषचतुष्टयसमावेशतोऽपि व्युत्पत्तिः। व्युत्पाद्यव्युत्पादकपुरुषद्वयमात्रसत्त्वेऽपि व्युत्पत्तिः सुकरा दृश्यते । अन्वितरूपवाक्यार्थे व्युत्पत्तिरिव पदार्थमात्रेऽपि प्रथमतो व्युत्पत्तिर्दृश्यते । सर्वलोकसंमतः सुप्रसिद्धः स्तनन्धयव्युत्पत्तिप्रकारस्तु कार्याननिवतसप्रतिसंबन्धिकमातापित्राद्यर्थ · अप्रतिसंबन्धिकशशिपशुप्रभृतिकार्थविषयक एवेति तद्वैविध्यम् । **विषय** इत्यादि । एवमेव **मीमांसापादुकायामाचार्यैः** पञ्चाङ्गत्वं तत्तदर्थविवरणपूर्वकं दर्शितम् । यथा—

"स्वेन ख्यातिं विवृण्वन् **विषय** इह मतिः **संशयो** निश्चयान्या
तेनाभ्यूहो **विचारः** प्रमितिरभिदुरा **निर्णय**स्तर्कमानैः ।
तत्साध्यं कर्तुरिष्टं **फलम**नितरजं तानि यत्राधिकुर्वन्
न्यायो बाधं विपक्षे प्रथयति विविधं त्वाङ्गदोषो न दृष्टे ॥" (१९) इति ।

**एवमधिकरणेनार्थे** सम्यग्दृष्टे सति अधिकरणाङ्गभूतसंशयरूपदोषस्य वा विपर्ययरूपपूर्वपक्षदोषस्य वा नाशकाद्यः; प्रयोजनरूपाङ्गे दोषः-वैकल्यञ्च नेति श्लोकान्तिमभागार्थः। अत्र **विचारपदं** पक्षप्रतिपक्षसाधकप्रमाणतर्कसमुदायपरम् । केचित्, "विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्" इति पूर्वार्धे पठन्ति ।

शारीरकशास्त्रोपोद्घातरूपमिदमधिकरणमित्युक्तम् । अधिकरणं च पञ्चाङ्गम् । यथाऽऽह—
'विषयः संशयश्चैव विचारो निर्णयस्तथा । प्रयोजनं च पञ्चाङ्गं प्राज्ञोऽधिकरणं विदुः ॥' इति ।
दशाङ्गमित्याहुराचार्याः—
'संगतिर्विषयश्चैव संशयोत्थानकारणम् । संशयस्य प्रकारश्च तदर्थां च विचारणा ॥
तस्यां फलफलित्वं च न्यायौ द्वौ पक्षयोर्द्वयोः । निर्णयस्तत्फलं चेति बोध्यान्यधिकृतौ दश ॥' इति ।

विषयोऽपि द्विविधः। अधिकरणप्रतिपाद्यार्थस्तावदेकः प्रधानः (नम्)। तत्प्रतिपादकश्रुतिः अवान्तरविषयः। तत्र प्रधानविषयमाद्यस्याधिकरणस्य दर्शयति—ब्रह्म जिज्ञास्यमिति ।

सर्वाधिकरणसुखग्रहणाय संगत्यादिकमप्येकत्र विव्रियते । (१) शास्त्रकाण्डद्विकाध्यायपादपेटिकाधिकरणसूत्रभेदादष्टविधा संगतिर्वक्तव्या । अस्याधिकरणस्य वेदवाक्यार्थविचारात्मकत्वात् शास्त्रसंगतिः; वेदान्तवाक्यार्थविचारात्मकत्वात् काण्डसंगतिः; सिद्धविषयनिरूपणपरत्वात् प्रथमद्विके। समन्वयप्रधानत्वात् प्रथमाध्याये । अयोगव्यवच्छेदप्रतिपादनरूपत्वात् प्रथमपादे । शास्त्रोपोद्घातरूपत्वात् प्रथमपेटिकायाम्। तत्रापि प्रतीतिजननार्थत्वात् पेटिकापूर्वभागे[1] । 'अन्ते हरौ तद्दर्शनात् स विष्णुराह हि तं ब्रह्मेत्याचक्षते तं ब्रह्मेत्याचक्षते' इति देवताकाण्डान्तिमाधिकरणप्रतिपन्नसर्वदेवतान्तर्यामिरूपविष्णुपरत्वात् पूर्वाधिकरणेन संगतिः। तत्रापि, 'तं ब्रह्मेत्याचक्षते तं ब्रह्मेत्याचक्षते' इति प्रधानतया द्विरुक्तब्रह्मशब्दस्य साक्षादुपादानात् सूत्रसंगतिरपीति । (२) विषयः प्रागेवोक्तः। (३) संशयोत्थानकारणं तु समानधर्मादिष्वेकमेव ग्राह्यम्। (४) ब्रह्मजिज्ञासापरं शास्त्रमारम्भणीयं न वेति संशयप्रकारः। (५) तदर्थविचारस्तु—वेदान्ताः ब्रह्मणि प्रमाणं न वेति। तदर्थमपि विचार्यते—सिद्धे व्युत्पत्तिरस्ति न वेति। तदर्थं विचार्यते कार्यपरवृद्धव्यवहारादन्यत्राऽऽद्यव्युत्पत्तिः संभवति, न वेति। तत्रापि किंचिद्विचार्यते—कार्य एव व्युत्पत्तिनियमेऽपि सिद्धे तात्पर्यं संभवति, न वेति । (६) फलफलिभावस्तु—प्रधानतयाऽभिमते परस्मिन् ब्रह्मणि व्युत्पत्त्यसंभवात् सत्यपि वा वृद्धव्यवहाराद्

---

तत्रापि युक्तिप्रदर्शनं विना पक्षद्वयोपन्यासस्याकार्यकरत्वात् पूर्वपक्षपदं प्रथमकोटिसाधकन्यायपरम्; उत्तरपदं च द्वितीयकोटिसाधकन्यायपरम् । दशाङ्गमिति । इदमपि विवृतं मीमांसापादुकायाम्—

"आहुश्चान्ये दशाङ्गान्यधिकरणगणे वेद्यमाद्यं तथाऽर्थे
संशीतिं तन्निदानं विविधमपि तथा संगतेश्च प्रकारम् ।
तादर्थ्यार्थे विचारं फलफलिभवनं पक्षयोर्न्याययुग्मं
निर्णीतिं तत्फलञ्चाप्ययमपि निपुणन्यायवित्संप्रदायः॥" (२०) इति ।

श्लोकार्थो व्याख्यानयोर्द्रष्टव्यः। न्याययुग्ममिति द्वे अङ्गे । एकाधिकरणमात्रेणापि ग्रन्थपूर्तिर्भवितुमर्हति । नानाधिकरणस्थल एव पूर्वोत्तराधिकरणसंगतिविचारो भवति । अतो गणशब्दः। अयोगव्यवच्छेदेति। इदमीक्षत्यधिकरणादौ वक्तव्यम् अत्र तु शास्त्रोपोद्घातरूपत्वाकार एव। अयोगनिश्चयव्यवच्छेदमात्रमस्ति ।
[1]पेटिकापूर्वभागे इत्येतदनन्तरं समन्वयप्रधाने इति पदं मुद्रितकोशे प्रक्षिप्तम्; तालकोशे नास्ति। अनन्वितञ्च । अन्ते हरौ इत्यादिना संकर्षकाण्डान्तिमाधिकरणसंगतिरुच्यते । इदञ्च काशकृत्स्नीयसंकर्षग्रहणेन । नेमानि जैमिनीयसूत्राणि । समानधर्मादिष्विति । समानधर्मः साधारणधर्मः। तज्ज्ञानाद्वा असाधारणधर्मज्ञानाद्वा विप्रतिपत्तिज्ञानाद्वा उपलब्ध्यव्यवस्थातो वा अनुपलब्ध्यव्यवस्थातो वा संशय इति

अन्यत्राऽऽद्यव्युत्पत्त्यभावाच्च सिद्धे ब्रह्मणि व्युत्पत्त्यभावेन वेदान्तानां ब्रह्मणि प्रामाण्यस्य शक्तिमप्यशक्यत्वादप्रमाणभूतवेदान्तवाक्यार्थविचाररूपब्रह्मविचारो न कर्तव्य इति पूर्वपक्षे। राद्धान्ते त्वेतद्विपर्ययेण फलफलिभावो वक्तव्यः। (७) अत्र पूर्वपक्षन्यायो व्युत्पत्त्यभावः। (८) राद्धान्तन्यायस्तु व्युत्पत्तिसद्भावः। (९) निर्णयस्त्वारम्भणीयत्वनिर्णयः। (१०) फलं शास्त्रारम्भः। एवमाद्याधिकरणप्रक्रिया।

---

**न्यायभाष्यम्**। अत्र पञ्चके आद्यत्रिकमेव वार्तिककारेणाऽऽदृतम्। सिद्धान्ते साधारणधर्मो वा विप्रतिपत्तिर्वेति द्विकमेव। **सत्यपि** वेति। ब्रह्मरूपवस्तुसत्त्वेऽपीत्यर्थः। वस्तुतस्तदेव नेति भावः।

अथ **कार्यं** इति श्लोकार्थ उच्यते—विचारो हि नाम कोटिद्वयसंभवे एकतरकोटिनिर्धारणार्थं न्यायनिरीक्षणम्। ब्रह्मणो वेदार्थत्वसंभवे सत्येव विशयस्यावसरः। तत्र ब्रह्मणः सिद्धपदार्थत्वात् शब्दार्थविचारस्यैवात्र कार्यतया सिद्धस्य च शब्दार्थत्वायोगात् कथं तद्विषयकापातप्रतीतिः। एवञ्च साङ्गवेदाध्ययनजनितकर्मब्रह्मविषयकापातप्रतीतिमान् पुरुषः प्रथमतः कर्मविचारे प्रवर्तते, न ब्रह्मविचारे इत्यत्र कारणं यत् त्रिवर्गप्रावण्यं, अर्के चेन्मधुविन्देतेति न्यायचिन्तनञ्चेत्युक्तम्; तत्र ब्रह्मविषयकापातप्रतीत्ययोगश्च कारणमित्यपि युक्तं घटयितुम्। पूर्वमीमांसापठनानन्तरमेव कार्यान्वितबोधकत्वधीः शब्दानामिति न नियमः। वेदानां बोधकत्वं निर्धार्यैव वेदार्थचिन्तायां प्रथमतोऽवतरणीयतया, व्युत्पत्तिं विना बोधकत्वानवधारणात् कथं व्युत्पत्तिरिति चिन्तायाम् आद्यव्युत्पत्तिः प्रयोज्यप्रयोजकवृद्धसमावेशस्थल एव व्युत्पित्सोर्भवतीति अन्वयव्यतिरेकवशात् सिद्धौ, कार्यरूपार्थ एव प्रथमतो व्युत्पत्तिरवधार्यते। अतः आद्यव्युत्पत्तेः कार्य एव नियतत्वात् **सर्वाः गिरः** वाक्यानि सर्वाणि कार्यरूपप्रधानार्थपराण्येव। ननु लोके व्युत्पत्तिर्लौकिकशब्दानामिति लौकिकानि वाक्यानि कार्यपराण्येव कामं भवन्तु। वैदिकानि तु वाक्यानि विलक्षणानि कथं तदेकपराणीत्यत्राह **नान्येति**। यदि वैदिकानां लौकिकविलक्षणत्वम्, तदा बोधकारणाभावादानर्थक्यमेव स्यात्। अत एव, 'य एव वैदिकास्त एव लौकिकाः' इति लोक वेदाधिकरणे उक्तम्। वेदार्थपरिज्ञानं लोके जनयितुं मार्गान्तराभावात् वैदिकान् शब्दानेव व्यवहाराय भाषाशब्दत्वेनाऽऽदृतवन्तः पारम्पर्येण। अतः शब्दैक्यात् लौकिकव्युत्पत्तिप्रणाड्यैव वेदार्थनिर्णयो पयोगिनीति लोक इव वेदेऽपि कार्यार्थतयैव व्युत्पत्तिः। एतावत्तु विमर्शकानां पूर्वमीमांसारम्भ एव निश्चितम्। उपष्टब्धञ्चेदं जैमिनिना, 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्'' इति कार्यार्थकत्वाभावादर्थवादानामप्रामाण्यमाशंक्य, 'विधिना त्वेकवाक्यत्वात्' इति कार्यार्थकवाक्यशेषतयैव प्रामाण्यम्, न स्वातन्त्र्येणेति निरूपयता। अतः शुद्धब्रह्मविषयकापातप्रतीतेः कार्यविषयकतया वेदानुत्पाद्यतया विचारहेत्वसंभवादपि कर्मविचार एव प्रथमं प्रवृत्तो वेदाध्यायी, कर्मनिर्णये जातेऽपि, न ब्रह्मविचारे प्रवर्तितुमर्हति। कर्मफलानन्तस्थिरत्वशंकारूपप्रतिबन्धकनिवृत्तावपि ब्रह्मापातप्रतीतेरेव यथावदभावात् कारणहीनत्वात्। तर्हि किमुपनिषदामप्रामाण्यमेवेति चेत्, या गतिरर्थवादानां, सैव भविष्यति। सा च कर्मविधिशेषत्वरूपा। कर्मानुष्ठायिनां पुरुषाणां पारलौकिकफलानुभवयोग्यदेहातिरिक्तकिञ्चिद्वस्तुसद्भावप्रतिपादनात्, 'ईदृशाश्च अगन्मसुवः सुवरगन्म' इति श्रद्धया कर्मसु प्रवर्तिष्यन्त इति उपनिषदां प्रवृत्तिः॥ नन्वभावेऽप्युप-

तत्र प्रथमाधिकरणे पूर्वपक्षसिद्धान्तौ आरचयति—कार्ये इति। आद्या व्युत्पत्तिः कार्ये एव नियता। अतः सर्वे शब्दाः कार्यपरा एव। अस्तु लोके तादृशी नीतिः, वेदे त्वन्यथेत्याशङ्क्य प्रतिक्षिपति—नान्येति। लोकवेदाधिकरणन्यायेन वेदे न न्यायान्तरं कल्पनीयमित्यर्थः। फलितमाह—नात इति। ऊषरकल्पस्य वेदान्तस्य चिरकालोपार्जनेऽपि नैष्फल्यमेवेति भावः। तेन वेदान्तवेद्यपरब्रह्मचिन्तनं न कार्यमिति प्रत्यवस्थीयमाने = प्रतिक्षिप्यमाणे शास्त्रारम्भे, सिद्धे व्युत्पत्तिमाद्यां बहुमुखमवयन् निश्चिन्वन् ब्रह्म जिज्ञास्यमाह सूत्रकारः। तदनुसारेण भाष्यकारोऽपीत्यर्थः॥२७

अङ्गुल्या निर्दिशन्तः किमपि किमपि तद्वाचकांशैः प्रयुक्तैः
बालान् व्युत्पादयन्ति क्रमभवमिलितज्ञापकत्वं विदन्तः।
सङ्घातास्ते पदानां विदधति च धियं क्वापि सिद्धे विशिष्टे
कर्तव्ये क्वापि चेति क्वचिदिह नियतिः शब्दशक्तेर्न कल्प्या ॥ २८ ॥

सिद्धव्युत्पत्तिप्रकाराणां बहुमुखत्वमुक्तम्। तेष्वाबालगोपालं प्रसिद्धं परवादिभिरलङ्घनीयं तावदेकं प्रकारमाह—अङ्गुल्येति। इत्थं किल बालान् व्युत्पादयन्ति लौकिकाः। मातापित्रादयो

---

निषदां विधिविरहादेवेदं निश्चेतुं शक्यमिति चेत्—अस्तु। अत एवोपनिषदां न विशिष्य विचार्यता। स्तुत्याक्तौ लक्षितार्थज्ञानत एव कार्यनिष्पत्तेः। ऊषरप्रायत्वं कर्मविध्यनन्वयेन किञ्चित्फलहेत्वर्थबोधकत्वाभावः। अतो न तद्वेद्यस्य=उपनिषद्वेद्यत्वाभिमतस्य ब्रह्मणो मीमांसनमुचितम् इति ब्रह्मजिज्ञास्यत्वे प्रत्यवस्थीयमाने प्रतिक्षिप्यमाणे सति, सूत्रकारः कार्य इव सिद्धेऽप्यर्थे व्युत्पत्तिं बहुप्रकारेण जायमानां विमृश्य अवयन् स्वयं निर्धारयन्—कण्ठतः पूर्वोत्तरपक्षहेतूपन्यासाकरणेऽपि मनसाकलयन्नेव अत इति पदेन स्वाभिमतहेतुसिद्धिं सूचयन् ब्रह्म वेदान्तवाक्यैर्जिज्ञास्यत्वेन साधयति। तदनुसारेण च भाष्यकारोऽपि, 'तत एव हेतोर्ब्रह्म ज्ञातव्यमित्युक्तं भवति' इति जिज्ञास्यत्वमाह। ब्रह्म कर्मविचारानन्तरविचारविषयत्वार्हं कर्मविशेष्यकाल्पास्थिरफलकत्वनिर्णयविशिष्ट-औपनिषदापातप्रतीतिविषयत्वादिति सूत्रार्थः॥ उपनिषदो न सिद्धार्थविषयकापातप्रतीतिहेतवः शब्दत्वात्, ब्रह्म नौपनिषदप्रतीतिविषयः सिद्धत्वात्। वेदान्तजन्यबोधो न ब्रह्मप्रधानकः शाब्दबोधत्वात्, कार्यार्थकत्वस्यावश्यम्भावादिति पूर्वपक्षिवादः सिद्धविषयकव्युत्पत्त्युपपादनेन व्याप्तिभंगेन निरसनीय इति॥ श्लोके नियता इत्यप्रयुज्य नियतमिति क्लीबनिर्देशः भवतीति क्रियापदध्रौव्यात् तत्क्रियाविशेषणत्वाभिप्रायेण। चिन्तामणौ नियतेत्येव प्रयुक्तम्। इति नियतमिति व्यत्यस्य आद्या व्युत्पत्तिः कार्ये इतीदं नियतम् इत्यर्थोक्तौ उपरि अत इत्यध्याहारः कल्प्यः स्यात्। अतो यथापाठम् इतिशब्दो हेतुपरः। प्रत्यवस्थीयमाने इत्यस्य प्रत्यवस्थाने इत्यर्थः स्यात्; भावेल्ट्पर्यायत्वात्॥ २७॥

अङ्गुल्येति। प्रथमस्य, 'किमपि' इत्यस्य सप्रतियोगिकं मातापित्रादिकमित्यर्थः। द्वितीयस्य तु अप्रतिसम्बन्धिकं शशिपशुप्रभृतिकमित्यर्थः। तद्वाचकांशैः। वाचकाः=अन्विताभिधानवादे पदसंघातः, तदंशैः पदैः। तत्तदर्थसंबन्धिभिः। पक्षान्तरे तद्वाचकानि पदानि तद्रूपैर्वाक्यांशैरित्यर्थः। एकैकस्य सिद्धबोधकत्वं भाष्यसम्मतम्, तत्कथमन्विताभिधानवादः? तत्राह—क्रमभवेति। अन्वितबोधकत्वं यत् क्रमभवं तद्धेतुभूतपदार्थरूपांशस्मरणोपयोगिपदतदर्थसाहचर्यसम्पादनरूपमिदं शिक्षणमिति भावः।

आ
ग्रस्थितं किमपि किमपि वस्तु अङ्गुल्या निर्दिशन्तः, अङ्गुलिनिर्देशेन सह प्रयुक्तैः, अयं तातः, इयं माता, मातुलोऽयमित्यादिभिर्वाक्यैर्बालान् व्युत्पादयन्ति । व्युत्पादकानामङ्गुलिनिर्देशस्तु बालानां तत्तदर्थाभिमुख्यार्थम् । ते बालाश्चानादिसंसारे संस्कारपाटवस्य बहुत्वात्, अङ्गुलिनिर्देशानां तत्तदर्थोपदेशाभिप्रायपूर्वकत्वं जानन्ति। एवं च सति सर्वेषां शब्दानामङ्गुलिनिर्देशमन्तरेणापि तत्तच्छब्दप्रयोगे, चिरकालोत्पन्नसहोपदेशजनितसंस्कारसामर्थ्यात् तत्तदर्थप्रतीतिर्जायते । तत्र बाला निश्चिन्वन्ति, 'एतच्छब्दप्रयोगे खल्वस्माकमेतदर्थप्रतिपत्तिः । सा च शब्दार्थयोः संबन्धनिबन्धना । संयोगादिसंबन्धान्तरं च न दृश्यते । संकेतपरिक्लृप्तौ सङ्केतहेतुभूतपुरुषादिकल्पनागौरवम् । तस्मात् बोध्यबोधकभावसंबन्ध एवात्र संबन्धः' इति । अस्त्वेकैकत्र तत्तच्छब्दप्रतिपत्तिः,

---

नन्वेवं प्रथमतः सिद्धे शक्त्यनवधारणात् भावि-कार्यरूपार्थान्वितशक्तिग्रहोपयोगितयैव शिक्षणसाफल्यात् कथं प्राभाकरखण्डनं भाष्यात् ? तत्राह संघाता इति । वाक्यार्थस्मरणे जाते कस्यचित् प्रथमतः सिद्धपरवाक्यादपि बोधोदयात् न कार्यैकान्त्यमिति । इमे शब्दाः क्रमेण बालानामन्वितार्थज्ञापका भविष्यन्तीति विदन्तः शिक्षकाः पदार्थान् प्रदर्श्य पदानि प्रयुज्य बालान् व्युत्पत्तिमतः कुर्वन्ति । ते शिक्षकप्रयुक्ताः पदानां संघाताः क्वापि, 'पुत्रस्ते जातः' इत्यादौ सिद्धरूपविशिष्टार्थप्रधानकबुद्धिं विदधति जनयन्ति । क्वापि, 'गाम् आनय' इत्यादौ कर्तव्ये कार्ये च विशिष्टे धियं विदधति । अतः शब्दशक्तेः क्वचित् कार्ये नियमो न कल्प्यः । सामान्यतः अन्विते शक्तिरित्येवावधारणीयम् । उभयविधव्यवहारतः उभयविषबोधदर्शनात् प्रथमं शिक्षणमुभयोपयोग्येवेति ।

नन्विदं बालशिक्षणभाषणं किमर्थम् । बालानां शिक्षणमिदं यदि पदानां तत्तदर्थबोधकत्वज्ञापनार्थम्, तर्हि अन्विताभिधायकत्वं न सिध्येत् । इष्टश्चान्विताभिधानवादः सिद्धान्ते । एकस्मात् पदात् बोधायोगश्च । यदि साहचर्यबलात् शब्दतोऽर्थस्मरणार्थं शिक्षणम्, तर्हि अस्य शिक्षणस्य शब्दार्थसंबन्धावधारणप्रकारत्वं भाषितं कथम् । गामानयेति व्यवहारात् कार्यरूपेऽन्वितेऽर्थ इव, सिद्धेऽप्यन्वितेऽर्थे धीर्भवतीति उपरि वक्ष्यमाणात् कस्मैचित्, पुत्रस्ते इति श्लोकद्वयादेव प्राभाकरनिरासः, न पुनरनेन शिक्षणप्रकारेणेति किमनेनेति चेत्—एवमाक्षेपपरिहारार्थमेव अङ्गुल्येति श्लोकारम्भः । अयं भावः—शब्दतोऽर्थबोधः प्रथमतः कार्यार्थकव्यवहारादेवेति प्राभाकरोक्तमयुक्तम् । प्रबुद्धदशायां हि तथा । ततः प्राक् बाल्य एव शब्दादर्थज्ञानं तु जायते सर्वेषाम् । तच्छिक्षणं किं अर्थस्मरणापादनार्थम् उत बोधकत्वज्ञापनार्थमिति विमर्शे, स्मरणस्य ततः संभवेऽपि न तदर्थं शिक्षणम् । तथासति यथेच्छं तेनतेन शिक्षकेण कस्यचिच्छब्दस्य स्वाभिमतेन केनचिदर्थेन साहचर्यकल्पनयाऽर्थान्तरस्मारणस्यापि संभवेन व्यवस्थानुपपत्तेः । अतः कुतः अम्बाशब्देनैव मातरं ज्ञापयन्ति, न तातशब्देन, तत्रापि साहचर्यसंपादनसंभवादिति विमृश्य अम्बाशब्दस्यैव मातृरूपार्थेन कश्चित् संबन्धोऽस्ति, न तातशब्दस्येति संबन्धावधारणात् तदर्थमेव शिक्षणम् । एवं सिद्धसंबन्धावधारणदर्शनात् कार्यसंबन्धावधारणमेव पूर्वमिति प्राभाकरोक्तं खण्डितं भवति । अथ तु प्राभाकरः पृच्छेत्—कोऽयं संबन्धः ? न तावत् संयोगः समवायस्तादात्म्यादिर्वा, अभावात् ; प्राचीनैर्निरस्तत्वाच्च । नापि संकेतः, अनादौ

तथापि वाक्यार्थरूपमिलितप्रमितिः कथमिति चेत्, तत्राह—क्रमभवेति। चिरकालानुभवात् तत्त-न्मिलितप्रयोगाच्च मिलितव्युत्पत्तिरपि बालानां भविष्यतीति व्युत्पादका जानन्त्येव। व्युत्पादनीयाश्च बालास्तथैव व्युत्पद्यन्ते। ननु कार्यव्युत्पत्तिं प्रतिक्षिपतस्तत्र प्रयोज्यप्रयोजकवृद्धव्यवहारविरोध इत्याशङ्क्याह—सङ्गता इति। न वयं कार्य एव व्युत्पत्तिः, सिद्ध एव व्युत्पत्तिरित्येकं पक्षं पक्षपातेनाऽऽचक्ष्महे। अपितूभयमपि पक्षं कक्षीकुर्महे। यदि सिद्धे व्युत्पत्तौ विशिष्टरूपवाक्यार्थ-प्रतिपत्तिर्न स्यात्, तर्हि कार्ये व्युत्पत्तावपि वाक्यार्थप्रतिपत्तिर्न स्यात्। यदि आवापोद्वापसहितसमभि-व्याहारसामर्थ्यात् वाक्यार्थप्रतिपत्ति(प्रतीति)मुपपादयसि कार्ये, सिद्धे वयमपि तथैवोपपादयाम इति समः समाधिः। यद्यभिहितान्वयो न्यायसिद्धः, तदा, 'पदैरभिहिताः' इत्युक्तप्रकारेण प्रतिपद-व्युत्पत्तिपूर्वकं वाक्यार्थप्रतिपत्तिः सुलभा। यदि चाऽन्विताभिधानम्, तदानीमपि संसृष्टरूप-

---

शब्दे संकेतयितुर्दुर्वचत्वात्। अतः परिशेषात् बोधकत्वमेव संबन्ध इति वक्तव्यम्। तथा निश्चयश्च शब्दे बोधकत्वस्य क्वचिद्दर्शनादेव कर्तव्यः। तद्दर्शनञ्च गामानयेति कार्यान्वितव्यवहारस्थले इति कार्यान्वितबोधकत्वमेव सिध्यतीति। तत्रेदं वक्तव्यम्—गामानयेत्यत्रेव पुत्रस्ते जातः, पिता ते सुखमास्ते इत्यादावपि बोधदर्शनात् सामान्यतः अन्वितबोधकत्वं संबन्ध इत्यवधारणसंभवे कार्यान्वित-बोधकत्वमेवेति नियमो दुर्वच इति। संबन्धविशेषपरिशीलनमिदं परीक्षककार्यशोधनावसर एवेति प्रथमतो बालस्य, अस्य शब्दस्यानेनार्थेनैव सह बोधोपयोगी सबन्धोऽस्ति, यत एवमेव शिक्षयन्तीति सामान्येनैव ज्ञानं जायते। तावदेव कार्यकरम्। तस्मात् कार्यान्वितविषयकत्वेनैव संबन्धावधारणमित्ययुक्तमिति।

इदमप्यत्र विवक्षितम्-अम्बादिशब्दश्रवणे अम्बादिरूपसिद्धार्थसंबन्धावधारणे जाते तस्य संबन्धस्य बोधकत्वरूपत्वे निश्चितेऽपि बोधस्यान्वयं विनाऽनुत्पत्त्याऽन्वितविषयकत्वनियमेऽपि गामानयेत्यन्वयबोधे प्राप्ताप्राप्तविवेकेन तत्तदर्थमात्रबोधकत्वं तस्यतस्य शब्दस्य, अन्वयबोधस्तु अर्थसामर्थ्याद्वा भाट्टोक्तात्, समभिव्याहारसामर्थ्याद्वा तार्किकोक्तादिति चिन्तया शब्दस्यार्थमात्रबोधकत्व एवोपक्षीणताग्रहणमित्यपि सुवचतया न प्राभाकरपक्षस्थितिनियम इति। एवं साधारणं शिक्षणं सर्वविदितं प्रदर्श्य प्राभाकरखण्डनम्। न्यायपरिशुद्धावन्विताभिधानवादे प्राचां नैर्भर्यं प्रदर्शयन्त एवाऽऽचार्याः, प्रथमतोऽर्थमात्रबोधः, पश्चादेवान्वयविमर्शेनान्वितबोधः इत्यभिहितान्वयपक्षानुगुणानि भाष्यश्रीसूक्तिशकलान्युदाहार्षुः। अत्रापि, "बालान् व्युत्पादयन्ति क्रमभवमिलितज्ञापकत्वं विदन्तः" इति मिलितज्ञापकत्वरूपान्विताभिधाय-कत्वातिरिक्तं तद्वेदनप्राग्भावि व्युत्पादनमुक्तम्। तच्च सामान्यतः शब्दस्यार्थसंबन्धज्ञापकत्वमेव। संबन्धोऽ-यमाधुनिकसंकेत एवेति अनादिसंसारास्वीकारिणो ब्रूयुः। तत्स्वीकारिणस्तार्किका अपि ईश्वरसंकेतः संबन्ध इत्याहुः। 'अस्मादयमर्थो बोद्धव्यः' इति बोधकत्वप्रकारकसंकेतविषयत्वरूपसंबन्धापेक्षया बोधकत्वं संबन्ध इत्यत्र लाघवमिति नित्यवेदनिष्णाताः। अतः सर्वसाधारण्याय संबन्धत्वेन शब्दार्थसंबन्धज्ञानमेव व्युत्पत्तिः। एवमन्वितबोधकत्वरूपविशेषेण ज्ञानस्यैव पूर्वमभावे कार्यान्वितबोधकत्वरूपाधिकविशेषज्ञानमेव व्युत्पत्तिरिति सुतरां दुर्वचम्। चिन्तामणौ, "इत्यादिभिर्वाक्यैर्बालान्" इति लेखनात् वेदार्थसंग्रहे तथा-सत्त्वाच्च बालशिक्षा यदि वाक्यरूपा, तदा सिद्धरूपार्थान्विताभिधानं सुतराम्। सर्वसंमतरीतिस्त्वेकैव।

वाक्यार्थद्योतकाभिनयेषु वाक्यार्थप्रतिपत्तिवत् पूर्वपूर्वानुभवजनितस्मरणसहकृतेन क्रमभवमिलित-ज्ञापकत्वानुसन्धानेन वाक्यार्थप्रतिपत्तिर्जायत इति साधारणोऽयं व्युत्पत्तिमार्गः । कार्यान्वितस्वार्थे व्युत्पत्तिरिति वदन्ति प्राभाकराः ; वयं पुनः क्रियाकारकपदयोरर्थानुवृत्त्यर्थं योग्येतरान्वितस्वार्थे पदानां व्युत्पत्तिरिति निश्चित्याऽऽचक्ष्महे इति भावः ॥ २८ ॥

संसारेऽनादिसिद्धे मुहुरनुभवतः सञ्चिताः संस्क्रियाः स्युः
संस्कारोद्बोधकाश्च क्वचिदुपनिपतन्त्यप्रकम्प्यात् प्रवाहात् ।
तत्तज्जातीयभेदग्रहणसमुचिता वृत्तयस्तद्विदानाः
तद्वत् स्याच्छिक्षकादिव्यवहृतिषु शिशोरैदमर्थ्यादिबोधः ॥ २९ ॥

नन्वस्तु पूर्वसंस्कारप्राचुर्यात् शब्दव्युत्पत्तिः, तथापि प्रलयादौ कृत्स्नसंस्कारविच्छेदात् आद्ये जन्मनि कथं व्युत्पत्तिः ? तत्रापि यदि व्युत्पत्तिर्न स्यात्, संस्कारेण [विना ?] कथं वा तदुत्तरस्मिन्नपि जन्मनि व्युत्पत्तिरिति, एवं जन्मनिजन्मनि कथं व्यवहारसिद्धिः इति बालकः कश्चिदाह । एवमादि शङ्कापरिहारार्थं पद्यान्तरमारभते—संसार इति । 'वीतरागजन्मादर्शनात्' इति सूत्रोक्तप्रक्रियया संसारस्यानादित्वात् नायं दोष इति दर्शयति—अनादिसिद्ध इति । कथं त्रिचतुरादिभिः संस्कारै-रेतादृशी महती व्युत्पत्तिरिति पुनरप्याशङ्क्याह—मुहुरिति । सहस्रमपि संस्कारा भवन्तु नाम ; कथं तदुद्बोधकाभावे कार्यसिद्धिरित्यत्रोत्तरमाचष्टे—संस्कारोद्बोधका इति । यथा संस्कारा बहवः कारणप्रवाहवैचित्र्यबाहुल्यात्, तथा तदुद्बोधकाश्च सहस्रशः संभवन्तीति भावः । अथाप्यनुमान-मन्तरेण शयनासनभोजनव्यवहारादयः सर्वेऽपि न संभवन्ति । अनुमानञ्च इष्टसाधनजातीयत्व-

---

तत्र यथायथं पश्चात् सिद्धान्वितबोधकत्वज्ञानमेव कार्यान्वितबोधकत्वज्ञानापेक्षयाऽपि प्राचीनमिति सुवचम्। प्रथमतः अम्बातातादिशब्दान् व्युत्पाद्य पश्चात् दूरस्थसमीपस्थरूपार्थग्रहणाय सः सा, अयम् इयमित्यादि-प्रयोगमपि कृत्वा अथ स तातः, इयमम्बा इत्यादिप्रयोगे कार्यातिरिक्तान्वयस्यैवानुभवात्। अत एव प्रथमं, '**क्वापि सिद्धे विशिष्टे**' इत्युक्तम् । यदा च शिशुं प्रति, 'उत्तिष्ठ उपविश, इदं गृहाण,' इत्यादिः साभिनया शिक्षा, तदा कार्यान्वितेऽपि । तदाह **कर्तव्ये क्वापि** चेति । एवं पिता ते सुखमास्ते, गामानयेत्यादि-कमपि ग्राह्यम् ॥ २८ ॥

ननु कथमेष ऐदमर्थ्यादिबोधः शिशोः ? अङ्गुलिनिर्देशार्थकत्वं तातशब्दस्य, अङ्गुलिनिर्देश-विषयत्वविशिष्टतातार्थकत्वं वा किं न बुध्येत । अयं शब्दः एतदर्थकः एतदर्थनिर्देशपूर्वकमाप्तैः प्रयुज्य-मानत्वात् इति ऐदमर्थ्यानुमानम्, अयं शब्द एतदर्थेन सह विलक्षणसंबन्धवान् उक्तहेतोरिति सामा-न्यतः संबन्धावधारणम्, अयमाधुनिकशब्दः एतदर्थे संकेतितः, एतदर्थे एवाऽऽप्तैः प्रयुज्यमानाधु-निकशब्दत्वात् इति चैत्रमैत्रादियदृच्छाशब्देषु पाणिन्यादिसंकेतितटिघुभादिरूपेषु च संकेतबोधश्च हि **ऐदमर्थ्यादिबोधः** । स कथम्; ईदृशसाध्यव्याप्तिग्रहणस्येतः पूर्वमभावादित्याशंक्य म्— सर्वसंमतप्राक्तनानुभवाधीनस्मृत्यन्तरवत् प्राक् व्याप्तिस्मृत्यादिसंभवान्न क्षतिरित्युपपादयति **संसार** इति । **अनादिसिद्ध** इत्युक्तिः महाप्रलये जातेऽपि पूर्वकल्पीयसंस्काराधीनं स्मरणं सुवचमित्याशयेन । अयमर्थः — लोके वस्तूनां पुनःपुनरनुभवे सति तस्मादनुभवात् संस्काराः संभृता भवन्ति । संस्कारसत्त्वेऽपि

ग्रहणमन्तरेण न सेत्स्यति। तस्मादस्य ग्रहणपाटवाभावात् कथं व्युत्पत्तिरिति, तत्रोत्तरमाह—वृत्तिरिति। वृत्तयः=बुद्धिवृत्तयः। साजात्यग्रहणसमुचिता बुद्धिवृत्तिः संस्कारपाटवात् सिध्यति, लोकव्यवहारस्य दृष्टत्वात्। तच्च संस्कारपाटवमनतिलङ्घनीयमेव। अन्यथा भाषाव्यवहारोऽप्युच्छिद्येत। तदुच्छेदे मूकतैव शरणं स्यात्। अस्तु संस्कारपाटवात् प्रबुद्धानामियं व्यवहारपरिज्ञानपरिपाटी; अप्रबुद्धानां बालकानां कथं व्युत्पत्तिरिति परिचोदनां परिहरति—तद्वदिति। सद्यस्संजातानामपि स्तन्याभिलाषादिदर्शनेन संस्कारपाटवादी कल्प्यते न्यायवादिभिः। किंपुनः पञ्चवर्षपरिमितानां बालकानाम्। तेषामपि भाषाव्युत्पत्तिर्मातापित्रादिव्यवहारबलात् प्रागेव सिद्धा; किमनेन संस्कृतव्युत्पत्तिविडम्बनेन। तथापि सिद्धव्युत्पत्तिविडम्बनवत् कार्यव्युत्पत्तिविडम्बनं स्वयमेव सिद्धमिति सिद्धं नः समीहितम्। तद्वदिति कृत्स्नस्यापि लोकव्यवहारपरिज्ञानस्य दृष्टान्ततयोपादानम्। दार्ष्टान्तिकं तावद् द्रष्टव्यमिति नेह प्रदर्श्यते ॥ २९ ॥

दक्षैराधोरणाद्यैरनुमितविविधस्वप्रयासोपयोगैः
शिक्षाभेदा विचित्रा गजविहगमुखान् ग्राहयद्भिः प्रयुक्ताः (युक्ताः)।
तस्मात् सार्थो मनुष्यप्रभृतिषु च तथाभूतशिक्षाविशेषः
कल्पो भाष्योदितोऽयं न यदि, कथमसौ कल्पनेऽन्योऽपि मार्गः ॥ ३० ॥

ननु कथमयं व्युत्पत्तिप्रकारो बालमूकादिबहुले जगति सार्थो भविष्यतीत्याशङ्कमानस्यात्यन्तमूढस्य प्रबोधनार्थं पुनरप्यत्यन्तप्रसिद्धदृष्टान्तोपादानेन प्रदर्शयितुमारभते—दक्षैरिति। प्रायेण सत्त्वप्रचुराः खलु मनुष्यप्रभृतयः, तमःप्रचुरा रजःप्रचुराश्च गजतुरगविहगादयः। तेषामाधोरणाद्याः=गजादिशिक्षकाः शिक्षां कुर्वन्ति। सा च शिक्षा सफलैव लोके दरीदृश्यते। शिक्षकाः शिक्षा-

उद्बोधकाभावे स्मृत्यसंभवादपेक्षिता उद्बोधकाश्च, 'सदृशादृष्टचिन्ताद्याः' इत्युक्ताः असत्प्रयत्नाभावेऽपि स्वयमेव भवन्ति। तत्र को हेतुरिति चेत्–पूर्वपूर्वकारणप्रवाह एवानुस्यूत। तन्निदानाः—उद्बुद्धसंस्कारकारणिकाश्च वृत्तयः स्मृतिरूपाः तत्तज्जातीयमेदग्रहणसमुचिताः पूर्वदृष्टवस्तुसजातीयेषु हानोपादानोपयोगिवैलक्षण्यग्रहणार्हा भवन्ति। क्षीरादिग्रहणे पूर्वानुभूतक्षीरादिसंस्कारोद्बोधात् तत्स्मरणे तद्गतेष्टसाधनत्वाद्याकारस्मरणे च सति, गृहीते क्षीरादौ प्राह्यत्वादिधर्मग्रहणं भवति। तत्र प्रकृतजन्मानुभवाधीनस्मृतित एव यत्र न निर्वाहः, तत्र पूर्वपूर्वजन्माधीनस्मरणमेव ग्राह्यम्। यथा शिशोः स्तनपानादिप्रथमप्रवृत्तौ। तद्वत् इहापि एतदर्थनिर्देशपूर्वकाप्रयुज्यमानत्वरूपहेतोः पूर्वजन्मसिद्धव्याप्तिस्मरणत एवानुमितिनिर्वाह इति ॥ किञ्च अंगुलिनिर्देशरूपशिक्षकचेष्टायाः वस्तुप्रदर्शनार्थत्वरूपैदमर्थ्यग्रहणमपि शिशोः प्राग्जन्मानुभूतस्मरणबलादेव वक्तव्यम् ॥ २९ ॥

धूमदर्शनेन प्रकृतजन्मानुभूताग्निव्याप्तिस्मरणवत् एतज्जननीयव्याप्तिस्मरणमेव वक्तव्यमिति मन्वानं प्रति तदसंभवस्थलभूतमृगपक्षिशिक्षणप्रदर्शनेन निरूपयति दक्षैरिति। आधोरणः गजपालः। आदिना शुकादिविहगपालादिग्रहणम्। दक्षैः शिक्षणसमर्थैः आधोरणाद्यैः स्वप्रयासस्य उपयोगं साफल्यं दृष्ट्वा एतद्गजशुकादिविषयेऽपि प्रयाससाफल्यं भवेदित्यनुमाय विचित्राः शयनोत्थानवस्तुग्रहणशब्दोच्चारणादिविषयाः शिक्षाविशेषाः प्रयुक्ताः=प्रयुज्यन्ते। किमर्थम्? गजविहगमुखान् ग्राहयद्भिः

साफल्यानुमित्यैव प्रवर्तन्ते। इत्थमत्यन्ताशक्यार्थसिद्धौ अत्यन्तसुग्रहमेव मनुष्यादिषु शिक्षासाफल्यमित्याह—तस्मादिति। एवं भाष्यकारविरचितसिद्धव्युत्पत्तिप्रकारानङ्गीकारे भवत्कल्पितकार्यव्युत्पत्तिप्रकारोऽपि न सिध्यतीति प्रतिबन्दीं दर्शयति—कल्प इति। तत्र परोक्तापूर्वखण्डनं श्रीमद्भाष्ये श्रीवत्साङ्कविरचितापूर्वभङ्गे च द्रष्टव्यम्॥ ३०॥

**कस्मैचित् सिद्धमर्थं कमपि कथयितुं चेष्टया चोद्यमानः**
**तस्मै तं वक्ति तद्धीसमविषयतया शिक्षते तद्वचोऽन्यः।**
**आदिष्टो बोधनार्थं यदिह वितनुते तत्तदर्थं हि युक्तं**
**तद्वाक्यात् सिद्धवेदी प्रयतत इति चेत् अस्त्वनादेशिकं तत्॥ ३१॥**

प्रकारान्तरेणापि सिद्धे व्युत्पत्तिः सुलभेति दर्शयति—कस्मैचिदिति। इत्थमिह प्रक्रिया—देशान्तरस्थितस्यान्यस्य पुत्रे संजाते तत्समीपस्थितो मौनी कश्चित्, 'पुत्रस्ते जातः' इति देवदत्ताय बोधयेति स्वोपान्तस्थितमन्तेवासिनं चेष्टयाऽऽदिशति। स चान्तेवासी सहसैव गत्वा देवदत्ताय

---

मृगपक्षिप्रभृतीन् ज्ञापयद्भिः। गजादयो गृह्णन्तु इत्याशयेनेति यावत्। तत्र एषां शिक्षणव्यापारस्य तेषां ग्रहणस्य च संबन्धः कदा गयजादिभिर्ज्ञातः। अस्य शिक्षणस्य अस्य कार्यस्य च संबन्धः, अस्माघोरणोक्तशब्दस्यास्यार्थस्य च संबन्ध इति कदा तैर्ज्ञातम्। ज्ञानाभावे च कथं यथाशिक्षकाभिप्रायं करणम्। तस्माज्जन्मान्तरवासनैव तत्र कार्यकरी किंपुनर्मनुष्यप्रभृतिषु। कल्प इति। भाष्योदितशिशुव्युत्पादनरीतेरुपपादनप्रकारोऽयम्। यद्ययं नेष्यते, असौ=भवदुक्तः अन्योऽपि=वृद्धव्यवहारात् व्युत्पत्तिरिति मार्गोऽपि कथं कल्पते। व्युत्पित्सुना प्रयोजकवृद्धप्रयुक्तशब्दात् प्रयोज्यवृद्धस्य ज्ञानवत्त्वं हि स्वपरिचितशब्दश्रवणजनितस्वसमवेतशाब्दबोधदृष्टान्तेनानुमातव्यम्। तत्र स्वस्य शाब्दबोध एव कथमिति प्रश्ने रीतिरियमेवानुसर्तव्येति। किञ्च यदि भाष्योदितोऽयं कल्पो नाद्रियते, तर्हि असौ व्यवहारात् शक्तिग्रहमार्गः, अन्योऽपि व्याकरणोपमानकोशाप्तवाक्य-वाक्यशेषात्मको विविधो मार्गश्च कथं कल्पते। शिशुशिक्षणप्रक्रियैव सर्वव्युत्पत्तिप्रथममूलमिति भावः॥

**चि. टि. ३०. परोक्तापूर्वेति।** वेदे लिङादेरपूर्वरूपकार्यमर्थ इति तदुक्तापूर्वेत्यर्थः॥ ३०॥

एवमन्विताभिधानाभिहितान्वयसाधारणीं प्राथमिकशिक्षां भाष्योक्तामुपपाद्य याहच्छिकव्युत्पत्तिमन्विताभिधानरूपां सिद्धविषये भाष्यदर्शितामाह कस्मैचिदिति। अत्र, 'पुत्रस्ते जातः' इत्युदाहृतं चिन्तामण्यादिषु। तत् तत्त्वमुक्ताकलापे, 'कश्चित् कस्यापि पुंसः सुतजनिम्' इत्यादिश्लोक इव तत्पूर्वश्लोकेऽपि भाट्टात्यागाय सर्वार्थसिद्धौ पुत्रजन्मोदाहरणस्यैव दत्तत्वात् तदनुसारेण तस्यापि संभवमभिप्रेत्य। भाष्यानुसारेणात्र ग्रन्थे, 'पिता ते सुखमास्ते' इत्युदाहरणमेव प्रदर्श्य व्याख्यायते—कश्चित् केनचित् नियन्त्रा चेष्टया=शब्दमप्रयुज्य चेष्टामात्रेण कमपि=पिता ते सुखमास्ते इत्यादिरूपमर्थं सिद्धरूपमेव कस्मैचित् पुरुषाय कथयितुं चोद्यमानः प्रेर्यमाणः प्रस्थितः तस्मै पुरुषाय तं सिद्धमर्थं वक्ति=शब्देन प्रतिपादयति। अन्यः व्युत्पित्सुः चेष्टां दर्शितां दृष्टवान् चेष्टासूचितमर्थञ्च विद्वान् चोदितपुरुषप्रयोक्ष्यमाणवाक्यश्रवणे शब्दव्युत्पत्तिः स्यादिति तत्संपिपादयिषया चोदितमनुसरन् तदुक्तिकाले तद्वचः तदर्थविषयं

तथैवाऽऽचष्टे। उभयत्र सद्भावस्थितो बालकः कश्चित् मूकवत् चेष्टाविशेषज्ञः, पुत्रजननबोधनाय यातीति जानाति। तथा च तेन वाक्ये प्रयुक्ते पुत्रजन्मबोधकमिदं वाक्यमिति प्रतिपद्यते। तद्धीसम-विषयतया=बोधकशिष्यधीसमविषयतया तद्वचः शिक्षते–तद्वाक्यं व्युत्पद्यत इत्यर्थः। अत्र प्रतिपद्-व्युत्पत्तिरप्यावापोद्वापाभ्यां सिध्यतीति सर्वेषामपि समानम्। न हि कार्ये व्युत्पत्तिरप्यावापोद्वाप-परित्यागेन सिध्यति॥ अथाप्ययमेवानेन वाक्येनान्तेवासिना प्रोक्त इति कथमिव निश्चिनुते बालकः? इत्थमेव निश्चिनुत इत्याह—आदिष्ट इति। 'यो यदर्थमादिष्टः स तत् कुरुते' इति लोक-सिद्धमेतत्। तेन योग्यतावशात् विशेषार्थसिद्धिरिति भावः। चोदयति—तद्वाक्यादिति। पुत्रजन्म-वाक्यश्रवणानन्तरं देवदत्तो जातकर्मादिषु प्रवर्तते; तदेव कार्यरूपं वाक्यार्थ इति अत्राप्यन्ततः कार्यव्युत्पत्तिरेव स्यादिति। अत्रोत्तरम्—अस्त्विति।"पुत्रजन्मनः प्राधान्यात्(च) शब्दानामावापोद्वा-पादिसहकारिसामर्थ्यात् बालस्यापि तत्तद्विशेषपरिज्ञानवैचक्षण्याच्च पुत्रजन्मैव तद्वाक्यार्थ इति निश्चयो जायते। उत्तरोत्तरकार्यकरणं तु श्रोतुः स्वबुद्ध्यैव जायते। गृहमलङ्कुरुते। बान्धवान् आकारयति। जातकर्मादिकं करोति। गां(गाश्च) ददाति। भेर्यादिकमुद्घाषयति। किमेतादृशं सकलमपि पुत्रजन्मवाक्यार्थ इति प्रतिपद्यते भवानपि? तस्मादनेनापि प्रकारेण सिद्धे व्युत्पत्तिरपि सिध्यति॥३१

पुत्रस्तेऽभूत्र सर्पोऽयमिति वचनतः प्रीत्यभीत्यादिलिङ्गैः
तद्योग्यार्थे प्रतीते (यार्थे तदृष्ट) विषयनियनिरापत्तिपूर्वैः क्वचित् स्यात्।

---

चोद्यमानपुरुषीयं वचः शृण्वन् तत् तद्धीसमविषयतया चोदकपुरुषगता चेष्टाप्रयोजकधीर्या, चेष्टाप्रयोज्या चोदितपुरुषनिष्ठा स्वनिष्ठा च या, तत्सर्वधीसमानविषयकत्वेन तत्सिद्धार्थबोधकत्वेन शिक्षते गृह्णाति। ननु तेन चोदितेनापि विषयान्तरमुक्तमिति किं न मन्येतेत्यत्राह आदिष्ट इति। यदर्थमादिष्टः तत्कार्यं विहाय कार्यान्तरं करोतीत्यस्याऽऽर्जवविरोधित्वात् बोधनार्थमादिष्टः पुरुषः तत्र गत्वा इह ज्ञाप्यपुरुष-संनिधौ यत् वितनुते=चेष्टामेव करोति, वाक्यं वा प्रयुङ्क्ते, तत् करणं तदर्थं तादृशसिद्धार्थबोधक-मित्येव युक्तम्। ननु पिता ते सुखमास्ते इति वाक्यश्रवणानन्तरं श्रोता फलादिकं प्रदाय प्रेषणादौ प्रयतत इति फलप्रदानादिकार्यमेव तदर्थः किं न स्यादित्यत्राह तदिति। अस्तु। कश्चित् नैव प्रयतते; अस्तु वा प्रयतत इति; तथापि तत् कार्यम् अनादेशिकम् आदिष्टपुरुषीयवाक्यप्रतिपाद्य न भवति चेष्टा-समानार्थकत्वाक्ष्यम्भावात्। एकाकारे वाक्ये बहुषु स्थलेषु प्रयुज्यमाने तत्रतत्र विभिन्नकार्यकरणदर्शनात् सिद्धरूपार्थस्यास्यैव सर्वत्रानुगतत्वादिति।

चि. टी. ३१. प्राधान्यादिति। गृहालंकरणबान्धवाह्वानादिकम् अप्रधानम्, पुत्र इत्यादि-शब्दावापोद्वापबलनिर्धारितप्रत्येकपदार्थसंबन्धितया तदर्थत्वानर्हश्चेति भावः॥ ३१॥

भाष्ये सौकर्यात् स्वयमेकमुदाहरणमेवं दत्तम्; पूर्वपक्षावसरे खण्डितं भाट्टोक्तपुत्रजन्मोदाहरणम् शांकरोक्तं सर्पाभावोदाहरणं च सिद्धान्तावसरे न स्पृष्टम्। एवं तदस्पर्शेऽपि तत्तदुदाहरणसंभव एव तुल्यन्यायात् भाष्येष्ट इति ज्ञापयितुं ते अप्युदाहरणे गृह्णन् आह पुत्र इति। पुत्रस्तेऽभूदिति भाट्टवचनम्। नायं सर्प इति शांकरवचनम्। प्रथमवचनश्रवणे प्रीतिं द्वितीयवचनश्रवणे भीतिनिवृत्तिं पलायननिवृत्त्यादिकञ्च दृष्ट्वा तैरेव लिङ्गैः हेतुभिः तद्वचनतः तादृशप्रीत्याभीत्यादियोग्येऽर्थे प्रतीते=

आवापोद्वापभेदात् प्रतिपदनियता शक्तिरप्यत्र सिध्येत्
भूयोदृष्ट्यादिसाहायकमिह वचसः कार्यपक्षाविशिष्टम् ॥ ३२ ॥

प्रकारान्तरेणापि लोकप्रसिद्धं परवादिकल्पनाप्रसिद्धं च सिद्धव्युत्पत्तिप्रकारमाचष्टे—पुत्र इति। लोके हि, पितुः समीपमागत्य, पुत्रस्ते जात इति कश्चित् वदति। तस्य च तेन मुखप्रसादो जायते। तद्वाक्यं व्युत्पित्सुरपरः शृणोति। स चानुमिनोति—एतद्वाक्यश्रवणसमनन्तरमेतस्य मुखविकासो जातः; अयं मुखविकासस्तावदनुकूलार्थप्रतिपत्तिमन्तरेण न संभवति; इयमनुकूलार्थप्रतिपत्तिः एतद्वाक्यश्रवणसमनन्तरभाविनी स्वस्याः(स्य) तदेव कारणीकरोति; अत एतद्वाक्यं पुत्रजन्मप्रत्यायकमिति। एवं निश्चिन्वानः, पुत्रस्ते जात इति वाक्यार्थं प्रतिपद्यते। एवं सर्पभयजनितपलायनस्य, नायं सर्प इति वाक्यश्रवणसमनन्तरं पलायननिवृत्तस्येदं वाक्यं सर्पाभावप्रतिपादकमिति निश्चिनोति बालकः। एवमन्यान्यप्येतादृशान्युदाहरणान्युदाहर्तव्यानीति॥ ननु तव गृहे निधिरस्ति, पिता ते सुखमास्ते इत्यादिभिरपि वाक्यैरनुकूलार्थप्रतिपादकैर्मुखविकासो जायते। तथा तव गृहे व्याघ्रो नास्तीत्यादिप्रतिकूलार्थनिवृत्तिप्रतिपादकैः पलायननिवृत्त्यादिकं जायते। कथं पुत्रस्ते जातः, न सर्पोऽयमिति वचनयोः अयमर्थ इति विषयनियमः स्यात्? स्यादेवेत्याह—विषयनियतिरिति। आसत्तिः=सन्निहितत्वम्। अत्र पूर्वशब्देन विषयान्तरानासत्तिर्गम्यते। अथवा पुत्रजन्मानुकूलजातकर्मादिप्रवृत्तिसंरम्भः। एवं नायं सर्प इत्यत्राप्यगास्त्यादिभिर्विषयनियमो वक्तव्यः। नन्वत्र सामान्यव्युत्पत्तिरेव स्यात्, न पुनः प्रतिपदव्युत्पत्तिः। कथमत्र बालको व्युत्पद्यते? तत्राह—आवापेति। अयमर्थः— पुत्रस्ते जात इत्युक्ते मुखविकासः, एवं मृत इत्युक्ते रोदनादिकं जायते, एवं शत्रुर्जातः, मृत इति चोक्ते रोदनमुखविकासौ स्तः। तस्मादावापोद्वापाभ्यामत्र प्रतिपदव्युत्पत्तौ तन्त्रमिति तन्त्रज्ञाः। तस्मात् पुत्रजातादिशब्दानामत्र यथादर्शनं व्युत्पत्तिरनुसर्तव्या विचक्षणैरिति। ननु कथं कतिपयव्यवहारदर्शिनो व्युत्पद्यन्ते बालका इत्याशंक्य, न तथा वयमाचक्ष्महे इत्याह—भूयोदृष्टीति। उक्तार्थस्थेम्ने प्रतिबन्दीमारचयति—

---

तद्योग्य एव कश्चिदर्थोऽस्य वाक्यस्येति प्रतीतौ जातायाम्, पुत्रजन्मादिवत् विवाहाद्यर्थान्तरपरत्वस्यापि शंक्यत्वेऽपि क्वचित् पुत्रजन्मादावेव **आसत्तिपूर्वैः** सन्निधानादिभिःस्थितैः **विषयनियतिः** पुत्रजन्माद्येवेति विषयव्यवस्था स्यात्। **पूर्व**शब्दः आदिपर्यायः प्राधान्यादिग्राहकः। सुखप्रसवसुलभप्रसवादीनामप्यासत्तावपि प्राधान्यं पुत्रजन्मन एवेति। तदुक्तं **तत्त्वमुक्ताकलापे**, "नियमनं संनिधानादियुक्तेः आसीदत्सुप्रसूत्याद्यनियति" इत्यादिना। पूर्वश्लोकोक्तोदाहरणे चेष्टारूपगमकाकारस्य स्थितत्वात् विषयानियतिपरिहारः स्यात्, न त्वत्रेति न युक्तम्; अत्रापि नियतिर्भवत्येवेति भावः। तत्राप्रधृष्यं गमकमाह **आवापे**ति। नानाविषयसंशये कस्यचित् प्रथमं सत्यपि पश्चादावापोद्वापवशात् पुत्रादिपदस्थाने दुहित्रादिपदप्रक्षेपादिवशात् प्रतिपदमर्थनियमे बुद्धे विषयान्तरपरत्वं हि वाक्यस्य सर्वथैव निरस्यत इति। नन्वत्र पदार्थनिर्णये भूयोदर्शनाद्यपेक्षाधिक्यात् कार्यपरवाक्यात् व्युत्पत्तिरेव स्वरसेत्यत्राह **भूय** इति। अत्रैव, 'पुत्रस्ते जातः तं पश्य' इति कार्यपरवाक्यप्रयोगे शब्दार्थनिर्णये वचः प्रतिभूयोदर्शनादीनां **साहायकस्य**=सहायभावस्य तुल्यत्वात्, गामानयेत्यादावपि गोबन्धन-क्षीरदोहनाद्यनेककार्यसमावेशात् अनियमस्य तुल्यत्वात् न किञ्चिद्वैलक्षण्यम्। अनुभवापलाप एवाधिक इति॥

कार्येति । कार्यवाक्यार्थवादिनोऽप्यावापोद्वापाभ्यामेव प्रतिपदव्युत्पत्तौ तन्त्रमिति ॥ ३२ ॥

कार्ये व्युत्पत्तिराद्या भवतु, तदपि किं शक्तितात्पर्यसिद्धेः
प्राग्व्युत्पत्तिः क्रियायां नृवचसि, निगमे त्वन्यथेत्यभ्युपैषि ।
स्थाप्याऽतोऽनन्यथासिद्धघनुगमनियतैः सत्प्रयोगैर्हि शक्तिः
कोऽसौ पाञ्चाल इत्याद्युचितविरतिकं सिद्धमात्रेऽपि वाक्यम् ॥ ३३ ॥

परोक्तां कार्यव्युत्पत्तिमाद्यामङ्गीकृत्यापि कार्य एव शब्दशक्तिरिति परोक्तां प्रक्रियां निवार्य सिद्धे व्युत्पत्तिप्रकारान्तरमप्युपदिशति—कार्य इति । आद्या व्युत्पत्तिः कार्य एवेति तु भवतु नाम । अथापि कार्य एव सर्वेषां शब्दानां शक्तिरिति नियन्तुं न शक्यते । उक्तार्थप्रतिपादनार्थं प्रतिबन्दीमाह–प्रागिति । प्राभाकराः किल प्रथम(मं) व्युत्पत्तिं क्रियायामेव प्रतिपेदिरे लिङादेः। पश्चात् पुनः कामिनियोज्यान्वयान्यथानुपपत्त्या क्रियातिरिक्ते कचिदपूर्वशब्दाभिधेये शब्दशक्तिं प्रचक्षते । तेनैवं

---

तद्योग्यार्थे प्रतीते इति पाठे वचनत इत्येतत् प्रतीते इत्यत्रान्वेति। प्रीत्यादेर्वचनजन्यत्वमर्थसिद्धम्। तद्योग्यार्थं तदूह्यम्' इति पाठे व्याख्यावहते वचनत इत्यस्य प्रीत्यादावन्वयः। विषयपदं पुत्रजन्मादिमात्रपरम् । क्वचिदिति पदं पुत्रजन्यसुप्रसवसुलभ्रसवाधनेकार्थप्राप्त्यपि । आसत्तीत्यत्र तदन्वयः ॥

चि. टी. पलायनाभिवृत्तस्येति पदस्य प्रतिपादकमित्यत्रान्वयः ॥ ३२ ॥

एवं तावत् आद्यव्युत्पत्ते कार्ये एव भावात् कार्ये एव शक्त्यवधारणात् सिद्धार्थप्रतीतेः शब्दादयोगात् न ब्रह्मविचार इति प्राभाकरोक्तम्, आद्यव्युत्पत्तेः सिद्धविषयकत्वस्यापि समर्थनेन निरस्तमिति अधिकरणार्थो निष्पन्नः । अथ तु भाष्यकारैः कार्यमात्रे आद्यव्युत्पत्तिमभ्युपगम्यापि पूर्वपक्षिनिरासेन ब्रह्मणोऽपि कार्यान्वितत्वस्य सूपपादत्वान्न दोष इत्येकः प्रकारः उक्तः । कार्ये आद्यव्युत्पत्तावपि व्युत्पत्तिसिद्धकार्ये एव शक्तिरित्यस्य त्वयैव त्यक्तत्वात् तन्न्यायेन सिद्धेऽपि शक्त्यवधारणं सुकरमित्यन्यः प्रकारश्च "गामानयेत्यादिष्वपि वाक्येषु" इति उत्तरभाष्येऽभिसंहितः । सिद्धे शक्तिग्रहस्य पूर्वोक्तस्यायमपि प्रकार उपपादक इति अन्तरंगत्वादिमं द्वितीयमभ्युपगम्यवादं पूर्वमेकेन श्लोकेन विस्तरेण दर्शयति कार्य इति । अनन्तरश्लोके च प्रथममपि प्रकारं संग्रहीष्यति । तत्र तन्मतप्रक्रियैषा— गामानयेत्यादौ आद्यव्युत्पत्तिः गवानयनादिरूपे कार्ये भवति । एतद्व्युत्पत्तिमूलकमेव वेदेऽप्यर्थवर्णनमिति, 'यजेत स्वर्गकामः' इत्यादावपि स्वर्गकामीयं यागादिरूपं कार्यमित्यर्थः प्रतीयते । सोऽर्थो बाधितः ; यागस्य कार्यत्वं हि कृत्युद्देश्यत्वरूपं न भवति । स्वयं फलत्वाभावात् । गवानयनादिवत् किञ्चित्फलसाधनतया कृत्युद्देश्यत्वमपि न भवति । क्षणविनाशिनो यागादेः कालान्तरभाविस्वर्गादिसाधनत्वायोगात् । अतोऽपूर्वाख्यं कार्यमेव वैदिकविधिषु स्वीकार्यम् । अथ किं प्रथमगृहीते क्रियारूपे कार्ये शक्तेः, अपूर्वे लक्षणेति स्वीक्रियते, उत क्रियाकार्य-अपूर्वकार्योभयसाधारणकार्यत्वरूपधर्मपुरस्कारेण कार्यसामान्ये शक्तिः, आहो अपूर्वे शक्तिः, क्रियाकार्ये लक्षणेति विमर्शे तृतीयपक्ष एव तैराहृतः । वेदार्थज्ञापनाय लोके वैदिकप्रयोगप्रतननात् वेदस्य प्राधान्यात् अपूर्वत्वेनापूर्वे शक्तिरिति । इदं ज्ञापयन् आह-प्र.कृ=प्रथमतः

यद्वतस्तत्र परगृहवह्निप्रक्षेपप्रवृत्त्या स्वगृहस्यापि दाहः स्यात्। तर्हि कथं शक्तिनियमः शब्दानामित्य-नुयुञ्जानस्य गलिताहङ्कारस्य शब्दशक्तिनियामकान् हेतून् अनुग्रहादुपदर्शयति-स्यादित्येति। अनन्यथा-सिद्धिः सुप्रसिद्धा। अनुगमोऽप्युक्तः। सत्प्रयोगोऽपि प्रसिद्धः। एतैस्त्रिभिरपि हेतुभिः सिद्धे वा कार्ये वा शब्दशक्तिरवगन्तव्येत्यर्थः। प्रकारान्तरेणापि सिद्धे व्युत्पत्तिमाह—कोऽसाविति। 'कोऽसौ' इत्युक्ते पाञ्चाल इति व्यपदिशन्ति। कः पाञ्चाल इत्युक्ते, अयमिति तु स्वरूपनिर्देशेनापि व्यप-दिशन्ति। तस्मात् कार्ये एव व्युत्पत्तिरिति निर्बन्धो निर्निबन्धनः॥ ३३॥

दुःखासक्तिमक्कादेशप्रभृति फलतया चोदनास्वेव सिद्धं
श्रौतत्वादार्थवादिक्यपि भवति फलं रात्रिसत्रे प्रतिष्ठा।
अङ्गीकुर्मो निषेधानुगुणमिति तथाऽनर्थकृत्त्वं निषेध्ये

---

क्रियारूपकार्ये व्युत्पत्तिः नृवचसि लौकिकवाक्ये। निगमे वेदे तु तदसंभवात् अन्यथा—तदन्यस्मिन् अपूर्वे शक्तिग्रहणम्। अतश्च क्रियाकार्ये लक्षणा इति त्वमभ्युपैषि। एवञ्च कार्ये एवाऽऽद्या व्युत्पत्तिर्भवतु, तदपि तथापि शक्तितात्पर्यसिद्धेः शक्तेः तात्पर्यस्य तदेकविषयकत्वस्य सिद्धेः कारणं किमुक्तं भवति? आद्यव्युत्पत्तिमतिक्रम्यान्यत्रैव शक्तिं त्वमभ्युपैषि हि। अतः शक्तिनियामकस्यान्यस्य वक्तव्यत्वादेवमस्तु। अनन्यथासिद्धिमान् सत्प्रयोगः शक्तिनियामकः। गङ्गाशब्दस्य तीरे प्रयोगोऽन्यथासिद्धः; लक्षणयाऽपि निर्वहतीति। अतो न तत्र शक्तिः। तथाऽनुगतार्थे एका शक्तिः; गोत्वेन सकलगोव्यक्त्यनुगमसंभवे व्यक्तिभेदेन शक्तिभेदायोगात्। अनुगमाभावे तु हर्यादिपद इव नाना शक्तिरेव। तदत्र पूर्वे शक्तिः, क्रियाकार्ये प्रयोगोऽन्यथासिद्ध इति त्वन्मतम्। तेनाऽऽद्यव्युत्पत्तिविषयस्य लक्ष्यत्वमेवाऽऽपतितम्। वयं तु लौकिकवैदिकसर्वक्रियानुगतकार्यत्वावच्छिन्ने शक्तिं ब्रूमः। न च यागे कार्यत्वाभावः, स्वर्गसाधन त्वस्य श्रुतत्वादुद्देश्यत्वात्। तदर्थमेव हि अपूर्वस्यापि कल्पना। वस्तुतोऽपूर्वस्याभावात् सर्वत्र क्रियैव कार्यम्। यथैवमनन्यथासिद्ध्या कार्ये शक्त्यवधारणम्, तथा सिद्धे सत्प्रयोगानन्यथासिद्ध्या सिद्धेऽपि पदानां शक्तिः। न चात्र नाना शक्तिः सिद्धरूपविशिष्टे, कार्यरूपविशिष्टे इति विशेषमुपेक्ष्य अन्विते शक्तिरित्यनुगतार्थवर्ण-नात्। ननु सिद्धपरवाक्येष्वपि किञ्चित्कार्ये पर्यवसानसंभवात् कार्यान्विते इत्युक्तिर्नायुक्तेति चेत्— अयुक्तैव। अनुगतलघ्वर्थशक्त्यैवोपपत्तौ गुरुभूतार्थस्वीकारेण तत्रतत्र कार्यान्वेषणप्रयासो व्ययुक्त एव। न च सर्वत्र कार्यविश्रान्तकल्पनमपि भवति, कोऽसौ इति पृष्टः पाञ्चाल इति उत्तरयितुश्च कार्योद्देशा-भावेऽपि प्रयोगदर्शनात्। ततस्तदादिकं वाक्यं सिद्धपुरुषमात्रे विरतम्। तावतैव जिज्ञासाशमनात्। किञ्च क्रियाकार्यापेक्षया वेदप्राधान्यात् वैदिककर्मवाक्यार्थापूर्वरूपकार्ये शक्तिरक्षणे वैदिककर्मणामपि ब्रह्माराधन-त्वात् ब्रह्मप्राधान्यात् प्रधानभूते सिद्ध एवान्ततः शक्तिकल्पना स्यादित्यलम्॥

चि. टी ३३. एतैस्त्रिभिरपि हेतुभिरिति। सत्प्रयोगः शक्तिग्राहकः; वैदिकप्रयोग एव सन्; गामानयेत्यादिप्रयोगस्तु न तथेति प्राभाकरोक्तम्। अनन्यथासिद्धिरनुगमश्च सर्वाभिमतौ। त्रयं मिलितं शक्तिग्राहकम्। अतः त्रिभिरित्युक्तम्॥ ३३॥

विध्यर्थैरप्यतः स्यादवितथविषया ब्रह्मधीरर्थवादैः ॥ ३४ ॥

इति जिज्ञासाधिकरणम् ॥ १ ॥

एवं परमार्थैरेव प्रकारभेदैः सिद्धे व्युत्पत्तिमुक्त्वा परवाद्यङ्गीकृतप्रकारभेदहृष्टान्तैरपि प्रधानार्थानुबन्धिन्यर्थेऽपि प्रतिपत्तिमुपपादयन्, 'ब्रह्मविदाप्नोति परम्' इति विध्यर्थैः, 'तदेषाऽभ्युक्ता' इत्युक्तमन्त्रार्थवादैर्ब्रह्मप्रतिपत्तिः स्यादित्यन्वारुह्यवादेनापि ब्रह्मज्ञानोत्पत्तिहेतुत्वमुपनिषदामुपपादयति—दुःखासम्भिन्नेति । अत्र दृष्टान्तत्रयमुपादीयते कार्यार्थवादिभिरपि, 'स्वर्गकामो यजेत' इति स्वर्गसाधनतया प्रतिपन्नकार्यान्वितसिद्धरूपस्वर्गप्रतिपत्तिः 'यन्न दुःखेन संभिन्नम्' इत्याद्यर्थवादवाक्यैर्विशेषतो ज्ञायत इत्यङ्गीक्रियत इति एको दृष्टान्तः। अपरस्तु विधिवाक्यप्रतिपन्नप्रतिष्ठादिफलमर्थवादवाक्यप्रतिपन्नमाकाङ्क्षावशात् रात्रिसत्रादौ स्वीक्रियत इति। तृतीयस्तु निषेधविध्यनुकूलं विपरीतफलमार्थवादिकं स्वीक्रियत इति। एवम्, 'परप्राप्तिकामो ब्रह्म विद्यात्' इति ब्रह्मवेदनफलतया विधिवाक्यश्रुतमेव परब्रह्म मन्त्रार्थवादयोर्विशेषतः प्रख्याप्यत इति को विरोध इति श्लोकार्थः ।

अयमत्राधिकरणार्थसंग्रहः—व्युत्पत्त्यायत्तं शब्दस्य प्रामाण्यम् । आद्या च व्युत्पत्तिः कार्य एव । सिद्धवस्तुप्रतिपादकानां तु वेदान्तवाक्यानां न स्वार्थपरत्वमिति तद्विचाररूपं शास्त्रमनारम्भणीयमिति पूर्वपक्षः । सिद्धान्तस्तु—व्युत्पत्त्यायत्तमेव शब्दस्य प्रामाण्यम् । तथापि आद्या व्युत्पत्तिः सिद्धेऽपि संभवत्येव । तथा हि—अम्बातातमातुलेत्यादिभाष्योक्तवदेकः प्रकारः । संसार इत्यादिर्द्वितीयस्तस्य चोपपादकः। दक्षैरित्यादिकमपि तदेवोपपादयति । परस्तु प्रकार उच्यते कस्मैचिदित्यादिना । पुत्रस्तेऽभूदित्यादिना विधिनिषेधाभ्यां प्रकारान्तरद्वयमपि दर्शितम् । कार्य इत्यादिना पराङ्गीकारप्रकारेण द्वितीयव्युत्पत्तिप्रकारमाह । कोऽसावित्यादिप्रकारान्तरमपि सुप्रसिद्धम् । दुःखासंभिन्नेत्यादिरन्वारुह्यवादो भाष्य एव सुव्यक्तमुक्तः । एवं भाष्योक्तैः प्रकारभेदैरनुक्तैरप्याभिप्रायिकैः सिद्धे व्युत्पत्तिः सिध्यति। 'प्रभिन्नकमलोदरे मधूनि मधुकरः पिबति' इत्यादौ

---

कार्य एवाऽऽद्या व्युत्पत्तिः, कार्यान्वित एव सर्वत्र वाक्यार्थः इत्यशङ्कद्वयमपि प्राभाकरोक्तमभ्युपगम्यापि ब्रह्मविचारारम्भं यथाभाष्यं समर्थयते दुःखेति । 'यजेत स्वर्गकामः' इत्यादिषु **चोदनास्वेव** विधिवाक्येष्वेव सिद्धमपि स्वर्गादिकं फलतया सिद्धम्। तच्च फलम्। 'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् अभिलाषोपनीतञ्च तत्सुखं स्वःपदास्पदम्' इति वाक्यशेषात् दुःखामिश्रसुखस्थानभूतदेशादिकमेव । तद्वत्, 'ब्रह्मविदाप्नोति परम्' इति विधिवाक्ये ब्रह्म परमुभयविशिष्टं परिपूर्णं फलत्वेन कार्यान्वितमिति कार्यान्वितद्विचारः स्वर्गादिस्वरूपविचारवत् युक्तः। तथा विश्वजिद्यागे स्वर्गकल्पनवत्, य एता रात्रीरुपयन्तीति विहिते रात्रिसत्रयागे स्वर्गकल्पनं न भवति । **आर्थवादिकमपि** स्वार्थतात्पर्यरहितत्वाभिमतार्थवादावगताऽपि **श्रौतत्वात्** श्रुतिवाक्यश्रुतत्वात् प्रतिष्ठैव फलं भवतीति चोदनायां फलवाचकपदाभावेऽपि शेषवाक्यस्थमपि कार्यान्वितं कृतम्। तथेह, 'स एनान् ब्रह्म गमयति' इति वाक्यश्रुतं ब्रह्म प्राप्यत्वेनोपासनकार्यान्वितं भवेत् । तथा, 'यो ब्राह्मणायापगुरेत तं शतेन यातयात्' इति वाक्ये ब्राह्मणहननसंकल्परूपे निषेध्ये शतसंवत्सरयमयातनानुभवकरत्वमर्थवादोपात्तमपि निषेधवाक्यनिर्वाहकमिति मीमांसाबलात् स्वीकृतम् । सिद्धस्यापि यमतल्लोकादेरनेन स्वीकारो दर्शितः। एवमिह, "क्षिपाम्यजस्रमशुभान् आसुरीष्वेव योनिषु" इत्युक्तासुरयोनिक्षेपकर्तृत्वादिरूपेण ब्रह्मस्वीकारोऽपि स्थाने । एवञ्च **विध्यर्थैः** विधिवाक्यशेषभूतार्थवादत्वस्य

समभिव्याहारात् मधुकरशब्दव्युत्पत्तिमामनन्ति हि न्यायवादिनः। 'स्वरव्ययम्' इत्यादावभिधानपाठात् सिद्धे व्युत्पत्तिः सुप्रसिद्धा। प्रसिद्धा च, 'प्रणाय्योऽसंमतौ' इत्यादिषु व्याकरणपरिचयात् सिद्धे व्युत्पत्तिः। काव्यपुराणादिश्रवणमपि सिद्धे कार्ये च द्वयोः पदानां साधारण्येन व्युत्पादकमेव। तेषु तेषु शास्त्रेषु साङ्केतिकी व्युत्पत्तिः सिद्धेऽपि सहस्रमुखी। तेन सिद्धेऽपि व्युत्पत्तिसंभवोपपादनात् सिद्धपरं शारीरकशास्त्रमारम्भणीयमिति। 'अथातः' इत्यस्मिन् सूत्रे (शास्त्रे) विशिष्टो हेतुरुच्यते। स च कर्मफलास्थिरत्वनिर्णयपूर्वकानन्तस्थिरफलब्रह्मापातप्रतीतिः। तत्र विशेष्यापातप्रतीतिः सिद्धे व्युत्पत्तिसाधनादेव सिध्यतीति सूत्रकारहृदयमेतत् ॥ ३४ ॥

## जन्माद्यधिकरणम् ॥ २ ॥

जन्माद्यस्य यतः ॥ १-१-२. सूत्रम् ॥

जन्माद्यैर्थैर्द्विशेष्यं भवति (विद्दति)बहुलताऽथोपलक्ष्यं ब्रवीषि
ज्ञाताज्ञातादिदोषःस्थ्यं व्यतिषजति न चालक्षिते स्यात् परीक्षा।
उद्दिष्टब्रह्मचिन्ता तत इह कथमित्यत्र हेतुत्वलक्ष्यः
पुंसूक्तादिप्रसिद्धो गुणनिधिरघजित् ब्रह्मशब्दार्थ उक्तः ॥ ३५ ॥

(१) प्रमाणपरीक्षा सिद्धा; ततः प्रमेयपरीक्षेति संगतिः। (२) पूर्वस्मिन्नधिकरणे हेयत्वेनोपादेयत्वेन चाधिगतकर्मणोऽधिकारिणः प्रागुक्तात् अतश्शब्दार्थात् ब्रह्मविचारस्य कर्तव्यत्वमुक्तम्, तत् किमिति

ब्रह्मरूपसिद्धपरवाक्येषु स्वीकारे ब्रह्म पर: अवधितार्थविषयकतया तत्स्वरूपादिविचारो युज्यते ॥ अथापि सूत्रकारः ब्रह्मण उपासनारूपकार्यशेषत्वं विना प्राधान्येन जिज्ञास्यत्वमेवाभिसंधाय ब्रह्मजिज्ञासेति सूत्रयामास। सिद्धोपायस्यैव प्राधान्यं तेन व्युत्पादयामासेति।

चि. टी. ३४. प्रणाय्योऽसंमतावितिः। असंमतौ=निष्कामपुरुषे प्राणाय्यशब्दो निपातितः। अनन्तराधिकरणोपोद्घातचिन्तामणावुक्तमपि द्रष्टव्यम्। तेनाभिनिवेशहीनः स्वमते आनेतुं शक्यः प्रणाय्यः ॥ ३४॥

### जन्माद्यधिकरणम्

पूर्वाधिकरणे सिद्धरूपार्थविषयकबुद्धेरपि शब्दजन्यत्वमुपपाद्य ब्रह्मरूपसिद्धविषयकप्रतीतिर्विचारहेतुरस्तीति विचारारम्भः स्थापितः। अथ शब्दस्य सिद्धवस्तुविषयकत्वेऽपि विचारोपयोगिब्रह्मप्रतीतिर्नास्तीति पुनः शङ्क्यते। विचारो हि उपनिषद्वाक्यानि गृहीत्वा किं सिद्धान्त्यभिमतब्रह्मपरमिदमिदं वाक्यम्, उतान्यपरमित्येवंरूपः। स च इतरव्यावृत्ततया बुद्धौ ब्रह्म गृहीत्वैव कर्तव्यः। तथा ग्रहणञ्चाप्रत्यक्षे ब्रह्मणि लक्षणवचनेनैव संपाद्यम्। लक्षणवाक्यत्वेनाभिमता श्रुतिश्च विशेषणत्वेनोपलक्षणत्वेन वा लक्षणसमर्पकं न भवति। अतो ब्रह्मणो विशेषतो ज्ञानाभावात् विचारोपयोगिप्रतीत्यभावादविचार्यतैवेत्याक्षेपः। संगतिरियं, "किं तद् ब्रह्म, यत् जिज्ञास्यमुच्यते" इति भाष्येण दर्श्यते। जिज्ञास्यत्वेन त्वयोच्यमानं ब्रह्म किंलक्षणकमित्युक्तौ, लक्षणस्य दुर्वचत्वादजिज्ञास्यत्वमित्युक्तं भवति। ननु त्वया ब्रह्म किमिति प्रश्नः किं ज्ञात्वा क्रियते, अज्ञात्वा वा। आद्ये, प्रश्नो व्यर्थः, अन्त्ये प्रश्नोऽशक्य इति चेत्—इदमप्यत्र भाष्ये परिहृतम्, प्रश्नः शक्यः; ब्रह्मणो मया ज्ञातत्वाभावेऽपि त्वदीयप्रकृतजिज्ञासाविषयत्वाभिमतं किंलक्षणकमिति अभिमतत्वाकारेणैव ब्रह्मकीर्तनादिति। संगतिविस्तरोऽद्भुतः

शिष्याकाङ्क्षायां जन्माद्यधिकरणमारभ्यत इति भाष्यकारैरेव संगतिरुक्ता। अत्रान्ये च संगति-विशेषा दर्श्यन्ते। (३) पूर्वं ब्रह्मेति स्वरूपनिर्देशादुद्देशः। अत्र जन्मादिकं लक्षणत्वेनोच्यते। उत्तराभ्यामपि सूत्राभ्यां परीक्ष्यत्वसिद्धिः। ततः परं परीक्षेति। (४) एवं वा-प्रथमसूत्रे सिद्धसामान्ये शब्दसामान्यव्युत्पत्तिसमर्थनम्; इह पुनः सिद्धविशेषे ब्रह्मणि शब्दविशेषस्य ब्रह्मशब्दस्येति। (५) इत्थं चाहुः-पूर्वाधिकरणविषयवाक्ये सामान्येन, 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्' इत्यादिना शिष्याचार्ययोः कृत्यविशेषविधानमुक्तम्। अत्र पुनः स्वरूपोदाहरणविशेषे तस्यैव श्रुतिसंवाद उच्यते। तत्र विहितमेवात्रानुष्ठेयत्वेन विशेष्यते। अयमत्र विशेषः-पूर्वं शिष्यसामान्यस्य गुरुणा उपदेशः प्रकाशितः। अत्र पुनः शिष्यविशेषस्य पुत्रस्य पित्रोपदेशः प्रकाश्यते। उभयं श्रुतिसिद्धम् 'ज्येष्ठाय .. ...प्रणाय्याय वाऽन्तेवासिने प्रब्रूयात्' (छा. ३.) इति। अत्रासंमतः प्रणाय्यः। 'प्रणाय्योऽसंमतौ' इति परमर्षिणा पाणिनिनैवोक्तत्वात्। अत्र शिष्यस्यासंमतत्वमाचार्योपदेशमात्रासन्तुष्टत्वम्। प्रबुद्धो हि शिष्य उपदिष्टेऽप्यर्थे युक्तिमप्यपेक्षते। अत्र ज्येष्ठपुत्रो पादानं प्राधान्यात्। 'यो ब्रह्माणम्', 'अथर्वाय' इति च श्रुतेः। (६) संगत्यन्तरमप्याहुः—पूर्वत्राप्रतिपत्तिः पूर्वपक्षहेतुः; उत्तरत्र विप्रतिपत्तिः। अत एवाहुः—'व्युत्पत्त्यभावात् प्रतिपत्तिदौःस्थ्यात्' इति। (७) किंच पूर्वाधिकरणे निरीश्वरवादिनिराकरणम्, उत्तरत्र निर्विशेषवादिनिराकरणम्। अत्रापि तत्त्वतो निरीश्वरवादिनिराकरणमेव। निर्विशेषस्यानीश्वरत्वात्। (८) प्रथमाध्यायप्रतिपाद्यशब्दार्थसंबन्धप्रतिपादनं प्रथमाधिकरणे; द्वितीया-

---

चिन्तामणौ। तत्र संग्रहेण पूर्वपक्षसिद्धान्तौ प्रथमश्लोकेन दर्शयति जन्मेति। अत्र भाष्यकारैः जन्मस्थितिलयानां विशेषणविधया लक्षणत्वे विशेषणबहुत्वात् विशेष्यस्य ब्रह्मणो बहुत्वं स्यात्, उपलक्षणतया लक्षणत्वे, उपलक्षणाकारः, उपलक्ष्याकारः पूर्वप्रतिपन्नाकार इति आकारत्रयं वक्तव्यम्; तदुपपादनं दुःस्थमिति भाषितत्वात् तावन्मात्रार्थकतयैव श्लोकोऽयं व्याख्यायते।

तदयमर्थः—ब्रह्म जन्मस्थितिलयैः विशेष्यं विशेषणीयं [ब्रवीषि] चेत्, विशेषणानां भेदकत्वात् विशेष्यस्य बहुत्वावश्यकतया ब्रह्मणो बहुलता बहुत्वं भवति आपतति। अथेति पक्षान्तरे। ब्रह्म जन्माद्यैरुपलक्ष्यत्वेन ब्रवीषि चेत्, एवं जन्मादीनामुपलक्षणत्वस्य स्वीकृतत्वे इति यावत्। ज्ञाताज्ञातादिदौःस्थ्यं व्यतिपजति। उपलक्षणभूताकारस्य, उपलक्ष्यभूतस्याज्ञाताकारस्य, अपेक्षितस्य आदिपदग्राह्यस्य पूर्वप्रतिपन्नाकारस्य च दौःस्थ्यं निरूपणाशक्यत्वमापतति। तर्हि लक्षणमनुक्त्वैव चिन्त्यतामित्यत्राऽऽह न चेति। अलक्षिते लक्षणेनानिरूपिते च इदमिति विशिष्य ज्ञानाभावात् परीक्षा न भवति। ननु उद्देशो लक्षणं परीक्षेति त्रेधा शास्त्रप्रवृत्तिरिति सत्यम्। अथापि किंचित् उद्देशमात्रेऽपि परीक्ष्यते लक्षणमनुक्त्वैवेति चेत् तत्राह उद्दिष्टेति। लोकप्रसिद्धाः पदार्थाः ये परीक्षार्थमुद्दिश्यन्ते, तेषां लक्षणानपेक्षाऽपि स्यात्; न तु उद्दिष्टस्य प्रकृतस्य ब्रह्मणः, अप्रसिद्धत्वात् लक्षणं विना व्यावृत्तग्रहणाभावादिति। इत्यत्र=एवं पूर्वपक्षे, सिद्धान्तपरेण सूत्रकारेण हेतुत्वलक्ष्यः....उक्तः। सिद्धान्तपरं वाक्यमिदं विशेषणोपलक्षणपक्षद्वयनिरासकं न भवतीति उपलक्षणपक्षनिरासकतयैव व्याख्यातम्। तदर्थं लक्ष्य इति पदस्य उपलक्ष्य इत्यर्थो वर्णितः। यादृशाकारवत्त्वेनोपलक्ष्यत्वं ब्रह्मणः, तादृशोपलक्ष्याकारसमर्पणं क्रियते पुंसूक्तेत्यादिना। गुणनिधिरवजिदिति ब्रह्मशब्दार्थतया भाष्यकृदुक्तधर्मोक्तिः॥

ध्यायोक्ताविरोधकथनं द्वितीय इति चाडुराचार्याः। एवमुत्तराधिकरणयोरध्यायद्वयसंग्रहरूपत्वं द्रष्टव्यम्। एवं संगत्यन्तराण्यप्या(न्या?)चार्याभिहितानि तत्रतत्र द्रष्टव्यानि। शास्त्रादिसंगतिषु षट्कं प्रागुक्तमत्राप्यविशिष्टमिति न लिख्यते। विषयोऽप्यविशिष्ट एव; शास्त्रारम्भस्यैव विषयत्वात्। तदर्थविचारस्तु—किं ब्रह्म लक्षणतः प्रतिपत्तुं शक्यते, न वेति। तदर्थमपि विचार्यते, 'यतो वा' इत्यादिवाक्यानि जन्मादीनि किं ब्रह्मलक्षणतया प्रतिपादयितुं शक्नुवन्ति, न वेति। तदर्थं विचार्यते जन्मादीन्युपलक्षणानि उत विशेषणानीति। उपलक्षणपक्षेऽपि ब्रह्मणि प्रतिपन्नाप्रतिपन्नोपलक्षकाऽऽकारत्रयविभागोऽस्ति न वेति। विशेषणपक्षेऽपि किं विशेषणानां विशेष्यभेदकत्वं स्वभावः, किं वा विरुद्धविशेषणानामिति चिन्ताक्रमः सन्तन्यते। फलफलिभावोऽपि—उपलक्षणत्वे तावत् आकारत्रयप्रतीत्यभावात्, विशेषणपक्षे तु विशेषणानां विशेष्यभेदापादनस्वाभाव्यात् जन्मादीनां ब्रह्मण्युभयथापि लक्षणत्वासंभवादलक्षिते ब्रह्मणि परीक्षारूपविचारो न कर्तव्य एवेति। उक्तार्थवैपरीत्येन सिद्धान्ते

---

अत्रेदं बोध्यम्—अत्र प्रथमपादे **भवति बहुलतेति** प्राक्तनमुद्रितपाठः। **चिन्तामणितालकोशे** सर्वत्र श्लोकस्यापि लेखनात् **भवति बहुलतेत्येव** पाठः। **प्रकाशिका**कारपाठोऽप्ययमेव। **विहृति-बहुलतेति** पाठः **पदयोजनाया**माहृतः। सोऽपि मूलतालकोशे उपलभ्यते। नन्वयं **विहृतीति** पाठो **गुरुकृपाग्रन्थे**ऽनादृत इति चेत्—उच्यते। न तत्र तथा तालपाठो नास्तीत्युक्तम्। किंतु **भवतीति** प्रसिद्धं पाठमुपेक्ष्य विहृतीति पाठमाद्रियमाणैः तदनुरूपार्थस्वारस्यं नादर्शि। चिन्तामण्यादृतस्यैव वाक्यार्थस्य तदुक्ततया तत्र **विहृतीति** पाठे स्वारस्यहानिरेव लक्ष्यते। तत् किमनेनाऽऽदृतव्याख्यानरीत्यननुकूलेन **विहृतीति** पाठेनेत्येवोक्तम्। यदि **विहृतीति** पाठ आद्रियते, तर्हि किञ्चित् श्लोकार्थविषये विमर्ष्टव्यम्। तदुच्यते। पूर्वार्धस्य भाष्यरीत्या पूर्वपक्षपरत्ववर्णनं सम्यगेव। उत्तरार्धस्योभयपक्षसमाधानसंग्रहरूपत्वे संभवति, किमिति उपलक्षणपक्षनिराकरणमात्रपरत्वं स्वीकर्तव्यम्। **भाष्यकारैः** सिद्धान्ते उपलक्षणपक्ष एव प्रथममादृत इति तद्रीत्येति चेत्—तर्हि, 'ज्ञातं चेन्नोपलक्ष्यम्' इति श्लोक एवानन्तरं पठनीयः। पश्चादेव तु, 'नाना चेल्लक्षणानि' इत्यादि। प्रथमप्रस्तुतं विशेषणपक्षं प्रथममप्रदूष्योपलक्षणदूषणं वक्तव्याल्पत्वादित्युक्तं **चिन्तामणौ**। न तद्वैषम्यमधिकं लक्ष्यते। **हेतुत्वलक्ष्य** इति पदे **लक्ष्य**पदस्य उपलक्ष्येत्यर्थवर्णनमपि क्लिष्टम्। पुंमुक्तादिप्रसिद्धो यो गुणनिधिरघजित् स ब्रह्मशब्दार्थः आद्यसूत्रे इष्टः, भाष्येऽप्यादौ, "ब्रह्मशब्देन च स्वभावतः" इति सूक्त्या दर्शितः हेतुत्वरूपलक्षणस्य लक्ष्यभूतो **बादरायणे**नोक्त इत्येव तदर्थात् हेतुत्वं लक्षणं लक्ष्यश्चेदृशव स्त्वित्युभयपक्षानुगुणं संग्रहेणोक्तम्। तत्र विशेषणत्वपक्षे बहुधर्मोक्तिः, यथा एषां धर्माणामविरुद्धानामैकत्र समावेशः, न तु विशेष्यभेदकत्वम्, तथा जन्मादीनामपि न भेदकत्वमिति ज्ञापनायापि स्यात्। उपलक्षणत्वपक्षे चोपलक्ष्याकारसमर्पणाय एवं बहुधर्मोक्तिः। अतः सर्वपूर्वपक्षनिराकरणसंग्रहोऽयमित्युचितम्। किञ्चोपलक्ष्यमात्रविषयत्वे हेतुत्वलक्ष्य इत्यत्र लक्ष्मोपलक्ष्य इति पठितं स्यात्। पूर्वपक्षे **जन्माद्यै**रित्युक्त्वा अत्र हेतुत्वेत्युक्तेः कश्चिदाशयोऽस्ति—-जन्मस्थितिलयानां प्रपञ्चनिष्ठानां शुद्धपरमात्मनिष्ठत्वाभावात् विशेषणत्वमयुक्तम्, उपलक्षणत्वं तु शाखायाश्चन्द्रं प्रतीव असंबन्धेऽपि स्यादिति विशेषणत्वपक्षदूषणं न कर्तव्यम्। अद्वैतिभिरसंबद्धस्योपलक्षण-

फलफलिभावो विभाव्यः। एतत् सर्वमभिप्रेत्याधिकरणपूर्वपक्षसिद्धान्तौ आरचयति—जन्माद्यैरिति। अत्र द्वौ पक्षौ संभावितौ, विशेषणत्वेनोपलक्षणत्वेन वा जगत्कारणत्वादिकं ब्रह्म व्यावर्तयतीति। उभयमपि न संभवति। 'खण्डो मुण्डः पूर्णशृङ्गो गौः' इत्यादिन्यायेन विशेषणानां विशेष्यभेदकत्व-स्वाभाव्यात् विशेष्यभेदात् ब्रह्मणि नानात्वप्रसङ्गेन विशेषणपक्षस्तावदत्यन्तविरुद्ध एव। उपलक्षण-पक्षोऽपि न घटते—निर्विशेषे परब्रह्मणि प्रतिपन्नाप्रतिपन्नोपलक्षका(लक्ष्या)कारूपविशेषाभावात्। लोके ह्याकारतयान्वयेन, 'यत्रायं सारसः स देवदत्तकेदारः' इत्यादावुपलक्षणपरिज्ञप्तिः। केदारत्वं प्रसिद्धम्। देवदत्तीयत्वमप्रसिद्धम्। सारससंबन्धोऽप्युपलक्षणत्वात् प्रसिद्ध एव। तेनोभयपक्षा-संभवेन लक्षणाभावात् अलक्षिते विचारस्यान्याय्यत्वाच्च ब्रह्मविचारो न संभवतीति पूर्वः पक्षः।

अत्र विशेषणपक्षे बहुवक्तव्यत्वात् सूचीकटाहन्यायेनानुक्रममुल्लङ्घ्याप्युपलक्षणपक्षानुपपत्तिप्रलापं तावत् प्रतिक्षिपति—पुंसूक्तेत्यादिना। अयमत्राभिप्रायः—ब्रह्म निर्गुणमिति निर्गुणानामेव प्रलापः। तेन जगत्कारणत्वादिर्ब्रह्मगुणः। स तूपलक्षणाकारतया सुप्रसिद्ध एव। उपलक्ष्योऽपि कश्चित्पुरुषविशेषः पुंसूक्तादिषु पुरुषः पुरुष इति सामान्यतः प्रसिद्ध एव। अप्रसिद्धं पुनरवशिष्यते। तच्च निरतिशय-

---

त्वोक्तावपि शाखाया अपि ऋजुदेशवर्तित्वरूपसंबन्धमुखेनैवोपलक्षणत्वम्, तथा जन्मादीनामपि स्वहेतुत्व-संबन्धेन ब्रह्मनिष्ठत्वाच्चासंबद्धतेति सूचनमेकम्, तथा जन्माद्यनेकग्रहणमुपेक्ष्य सामान्यत. जगद्धेतुत्वमित्ये-कस्यैव लक्षणस्य कथने हि न विशेषणभेदप्रयुक्तविशेष्यभेदप्रसक्तिरिति च। एवं विशेषणपक्षनिराकरणप्रकारो-ऽप्यत्र निवेशितो लक्ष्यते। किञ्च द्वितीयपादे ज्ञाताज्ञातादीति पदस्य उपलक्षणोपलक्ष्यपूर्वप्रतिपन्नाकारेत्यर्थः क्लिष्ट एव। पूर्वप्रतिपन्नाकारस्यापि ज्ञातपदेन ग्रहणमेव व्याख्यानेष्टमिति आदिपदवैयर्थ्यञ्च। तेषां धर्माणां स्थितानां दु स्थता च कथम्, दुःस्थत्वं दुर्निरूपत्वमिति चेत्, अर्थे क्लेश एव। भवतीति पाठे भवेदित्यर्थे क्लेशः।

तस्मात् विहृतीति पाठे स्वीकृते अनन्तरश्लोके अविहृतिव इत्यत्र एतद्विहृतिप्रत्यभिज्ञानात् सर्व-पूर्वोत्तरपक्षसंग्रहरूपः प्रथमश्लोकः। एतद्विवरणभूताः उपरितनश्लोकाः स्युः। तदत्र विहृतिबहुलतेत्यत्र अनन्तर-श्लोके सार्धपादत्रये या विहृतयो वर्णिताः ताः सर्वा अभिमता इति बहुलतासिद्धिः। प्रत्येकलक्षण-त्वासंभव-एकमात्रलक्षणत्वासंभव-समुदायलक्षणत्वासंभव-खण्डमुण्डवाक्यानुसारित्वरूपा हि विहृतयः तत्रोक्ताः। ज्ञाताज्ञातादिदौस्थ्यमित्येतच्च उपलक्षणपक्षे अष्टत्रिंशश्लोकचिन्तामण्युक्तरीत्यैव ब्रह्म सर्वथा ज्ञातं वा, अज्ञातं वा, ज्ञाताज्ञातांशवद्वेति विकल्पे एषां कल्पानां दौस्थ्यं लक्ष्यत इति तद्दूषण-परं भवितुमर्हति। एतावता भाष्यकृदुक्तरीतिस्त्यक्तेति न मन्तव्यम्। पक्षद्वये तदुक्तस्यार्थस्यात्र द्वये यथायथमन्तर्भावात्; ग्रन्थद्वयेऽपि सर्वस्य विवक्षितत्वाच्चेति। अथ पक्षद्वयदूषणं हेतुत्वलक्ष्य इत्यादिना। दूषणप्रकारोऽप्युपरि विविच्यते। पुंसूक्तादीत्यनेन 'पुरुषोत्तमोऽभिधीयते' इति भाष्यं स्मार्यते। 'वेदाहमेतं पुरुषं महान्तम्' इति पुरुषोत्तमकथनात्। आदिपदेनोत्तरनारायणवाक्यस्य, 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' इत्यस्य ज्ञापनात् श्रीमानित्यर्थोऽप्यत्रोक्तो भवति। एवम्, 'यतो वा इमानि' इत्य नुवादिवाक्येन पुरोवादभूतसर्वकारणवाक्योपस्थितौ तत्र सामान्यविशेषनयेन नारायणे पर्यवसानस्य स्थित-त्वात् जगत्कारणं ब्रह्मेत्यनेन नारायणो ब्रह्मेत्यपि ज्ञापितं भवति। भृगुवल्ल्यां वरुणोपदिष्टरीत्या

बृहत्त्वबृंहणत्वाभ्यां ब्रह्मशब्दवाच्यत्वम्। किं ब्रह्मेति ह्यनुयुज्यते शिष्येण। तदिदं सर्वमभिप्रेत्याहु-र्भाष्यकाराः 'उपलक्ष्यं ह्यनवधिकातिशयबृहद् बृंहणञ्च बृहतेर्धातोस्तदर्थत्वात्' इति। अनेनोभय-लिङ्गत्वमुच्यते। कल्याणगुणैकतानत्वं हि बृहत्त्वम्। अखिलहेयप्रत्यनीकत्वं पुनर्बृंहणत्वमिति। तदिदमुभयमप्याह—गुणनिधिरघजिदिति॥ ३५॥

नाना चेल्लक्षणानि स्वरसभिदुरता ब्रह्मणि स्यात् विशेष्ये
खण्डो मुण्डश्च गौरित्यभिलपनसमा धर्मिशब्दैकताऽत्र।
तेष्वेकं चेत् वृथाऽन्यत्; समुदितमफलं स्यात् व्यवच्छेद्यहानेः
खण्डत्वादिक्रमाच्चेत्यसत्, अविहतितः खण्डतादेर्विशेषात्॥ ३६॥

एवमुपलक्षणपक्षे पूर्वपक्षं निराकृत्य विशेषणपक्षेऽपि विशेषेण पूर्वपक्षमनूद्य निराकरोति—नाना चेदिति। उभयमिह लक्षणमिति वदन्ति वेदान्तवेदिनः। 'यतो वा इमानि' इत्यादिकमेकम्; 'सत्यं ज्ञानम्' इति शोधकवाक्यप्रतिपन्नमपरमिति। तत्र पूर्वं तटस्थलक्षणम्, उत्तरं स्वरूपलक्षण-मिति मृषावादिन उद्घोषयन्ति। उभयमपि सामानाधिकरण्यवैयधिकरण्याभ्यां ब्रह्मस्वरूपप्रति-पत्त्यर्थत्वात् प्रायेण स्वरूपलक्षणे पर्यवस्यतीति प्राञ्चः। तत्र पूर्वपक्षवादी न्यायसाम्यादुभयमपि विकल्प्य प्रतिक्षिपति—अत्र जगत्कारणत्वादिकं सत्यत्वादिकं वा किमेकैकश्येन सर्वं ब्रह्मलक्षणम्? यद्वा तेष्वेकम्, उत सर्वमपि समुदितं लक्षणमिति। नाद्यः—खण्डो मुण्डः पूर्णशृङ्गो गौरित्यादिवत् ब्रह्मनानात्वप्रसङ्गात्। नापरः—तस्मिन्नपि पक्षे किं नियतमेकम् उतान्यतमत्वेनानियतं वा?। पूर्वत्र दोषमाह—वृथेति। उत्तरत्रापि ब्रह्म नियतिः स्यादिति भावः। समुदितमपि पक्षं प्रतिक्षिपति—अफल-

चिन्तनप्रवणो भृगु. आनन्दो ब्रह्मेति व्यजानादिति आनन्दमयोऽपि प्राञ्चः। सर्वमिदं ब्रह्मशब्दार्थनिरतिशयो-त्कर्षविशेष एवेत्यलम्। तदत्र विशेषणपक्षे हेतुत्वाश्रयोद्देशेन ब्रह्मत्वब्रह्मशब्दार्थत्वविधानम्। उपलक्षणपक्षे उपलक्षितपुरुषश्रीमदाद्युद्देशेन तद्विधिः। अस्तु वा चिन्तामण्याद्याहृतरीतिरेव॥

अन्यदप्यत्रासद्गुरव.—'उद्दिष्टब्रह्मचिन्ता तत इह कथम्' इति वाक्यं किमर्थम्; तदभावेऽपि पूर्वपक्षपूर्तेः। न च कचिदुद्देशे कृते प्रसिद्धिबलाल्लक्षणं विनाऽपि परीक्षणात् तद्वैलक्षण्यज्ञापनार्थमिति वाच्यम्—'ब्रह्मचिन्ता तत इह कथम्' इत्यस्यैव पर्याप्तिः। अत उद्दिष्टपदं न ब्रह्मान्वयि; उद्देश-कथनावश्यकत्वाभावात्। किंतु चिन्तान्वयि। उद्दिष्टा=सिद्धे व्युत्पत्तिसमर्थनेन या कर्तव्यत्वेन-ध्यवसिता, सा चिन्तेत्यर्थः। एवञ्च तदधिकरणाक्षेपेणैतदधिकरणप्रवृत्तिरुक्ता भवतीत्यभिप्रयन्ति॥ ३५॥

अथ पूर्वपक्षोपन्यासक्रमेण समाधानं विस्तरेण वक्तुं विशेषणपक्षे विहृतीः पूर्वपक्षदर्शनीयाः प्रथममाह नानेति। जन्महेतुत्वस्थितिहेतुत्वादीनां विशेषणतया पृथक्पृथग्लक्षणत्वे विशेष्यस्य ब्रह्मणः स्वरसतः भिदुरता भेदः नानात्वमेव स्यात्। विशेषणानां भेदकतायाः स्वरससिद्धत्वात्। 'देवदत्तः श्यामो युवा लोहिताक्षः' इत्यत्र तु प्रत्यक्षाविरोधाय स्वरसप्रतीतभेदत्यागः। ननु, 'यतो वा' इति श्रुतौ तद्ब्रह्मेति एकवचननिर्देशात् तदविरोधाय नानालक्षणानामप्यभेदकत्वं स्यादित्यत्राह खण्ड इति। यथा, "खण्डो मुण्डः पूर्णशृंगो गौः" इत्यत्र एकवचनसत्त्वेऽपि गोभेद एव सिद्धान्तः, तथेति भावः। धर्मिशब्दैकतेति। धर्मिवाचकपदैकवचनमित्यर्थः। शब्दैक्येऽप्यर्थभेदोऽस्तीत्यपि गम्यते। ननु तर्हि

मिति। अफलत्वमेवोपपादयति—स्यादिति (व्यर्थेति?)। लक्षणेषु विशेषणानि व्यभिचारवारणायैव प्रयुज्यन्ते। व्यभिचारो ह्यलक्ष्यगामित्वम्। तेनोक्तस्य विशेषणस्यालक्ष्यगामित्वे विशेषणान्तरं प्रयोज्य-मिति न्यायविदां निर्णयः। अत्र जगत्कर्तृत्वादीनामब्रह्मगामित्वं नास्तीति विशेषणान्तरमनर्थकमेव। तस्मात् खण्डो मुण्डः पूर्णशृङ्गो गौरितिवदसंगतोऽयं लक्षणव्यवहार इति॥ एतत् प्रतिक्षिपति—असदिति। तत्र हेतुमाह—अविहतित इति। द्विधा खलु विशेषणानि प्रयुज्यन्ते—क्वचित् विरुद्धानि, क्वापि अविरुद्धानीति। 'नीलमुत्पलं देवदत्तोऽयं ब्राह्मणः' इत्यादौ अविरुद्धानि। 'खण्डो मुण्डः' इत्यादौ विरुद्धानीति। अत्र विशेषणानां विरोधाभावात् परतो भिद्यत इत्यनुपालम्भ एव। इयं किलात्र पूर्वपक्षसिद्धान्तवादिनोर्युक्तिपरिपाटी। 'सत्यं ज्ञानम्' इत्यादौ समानाधिकरणवाक्ये सत्यत्वादिविशेषणसंबन्धविवक्षायां भेदकं विशेषणं भेद्यं विशेष्यमिति न्यायेन खण्डो मुण्डः पूर्णशृङ्गो गौरितिवत् विशेष्यभेदः स्यादित्येकः प्राह। अपरस्तु धर्मिवाचिपदैक्यात् समानविभक्ति-निर्देशाच्च नीलमुत्पलमित्यादिवद्विशेष्याभेद इति समाधत्ते। तत्र पूर्वपक्षवादी पुनरन्यथासिद्धि-माह—नीलमुत्पलमित्यादौ धर्मिवाचिपदैक्यादिना न धर्म्यैक्यम्, अपितु प्रत्यक्षसिद्धत्वादिति। एवं तर्हि खण्डो मुण्ड इत्यादावपि प्रत्यक्षसिद्धत्वादेव भेदः, न पुनर्विशेषणभेदादिति परपक्षेऽपि विशेषणभेदस्याप्रयोजकत्वमाचष्टे सिद्धान्तवादी। परः पुनरप्रत्यक्षेऽपि खण्डो मुण्ड इत्यादौ भेद एव दृश्यत इति विशेषणभेदस्यैव विशेष्यभेदकत्वं साधयति। एवं तर्हि तेनैव न्यायेन नील-मुत्पलमित्यादावप्रत्यक्षेऽपि विशेष्याभेदः सिद्ध इति धर्मिवाचिपदैक्यादिरेव विशेष्याभेदनियामक इति वदति सिद्धान्तवादी। एवं तर्हि भेदाभेदोदाहरणद्वयसङ्करे किं नियामकमिति गलिताहङ्कारेण पृष्टे वर्णयन्ति निर्णेतारः—विरुद्धमेव विशेषणं विशेष्यभेदकम्, न पुनरविरुद्धं विशेषणम्; तथैव दृष्टत्वात्; इष्टत्वाच्च सर्वेषामपि विदुषामिति॥ ३६॥

---

एकमेव लक्षणमस्त्वित्यत्राह तेष्विति। जन्मादिष्वेकं यत् किञ्चिदेव लक्षणं चेत्, अन्यत् द्वयं वृथा। ननु जन्मस्थितिलयसमुदायो लक्षणम्। अत्रैव जन्मादीति सूत्रमपि स्वरसमिति चेत्—सर्वजगज्जन्म हेतुत्वस्यैकस्यापि विधिशिवादिव्यावृत्ततया, व्यवच्छेद्यस्य दलान्तरव्यावर्त्यस्य कस्यचिदभावात् जन्महेतु-त्वे सति स्थितिहेतुत्वे सति लयहेतुत्वमिति लक्षणकथनं निष्फलं स्यात्। किञ्च जन्मादिषु त्रिषु एकतम मेव लक्षणं चेत्, अन्यत् द्वयमन्यनिष्ठम् एतन्निष्ठं वा। अन्यनिष्ठस्य तस्यात्र कथनं व्यर्थम्। अस्य विशेषणत्वे एतन्निष्ठत्वं न संभवति। उपलक्षणत्वे लक्षणभूतैकधर्मेण ज्ञाते वस्तुनि उपलक्षणान्तरकथनं व्यर्थम्। अथ समुदितं मिलितं विशेषणतया लक्षणमिति चेत्—समुदितत्वमेव न भवति; विशेषणानां भेदकतया सामा-नाधिकरण्याभावात्। एकवस्तुनिष्ठतया समुदितत्वाभावेऽपि एकबुद्ध्यारूढतया जन्मस्थितिलयविषयक धीविषयत्वेन रूपेण विशेषणतया लक्षणत्वे धीविशेषणतया द्वयनिवेशनं धीघटनस्याफलम्। खण्डत्वेति। खण्डत्वादीनां यथा सामानाधिकरण्यं नास्ति, तथा जन्महेतुत्वादीनामपि न सामानाधिकरण्यमिति समुदितम् अफलं लक्षणकार्यकरं न भवतीत्यर्थः। इदं विशेषणत्वपक्षदूषणं दूषयति इत्यसदिति। अविहतितः जन्मादीनां मिथोविरोधाभावात् खण्डत्वादिधर्मापेक्षया विशेषात् वैलक्षण्यात्। विरुद्ध विशेषणानामेव भेदकत्वात् एषां भेदकत्वायोगात् नानालक्षणपक्षाश्रयणात् तृतीयपादोक्तदोषोऽपि नास्तीति॥ ३६॥

तत्तत्स्वप्रत्यनीकव्युदसननियतं भेदकं नान्यथाऽपि
व्याघातः कालभेदान्न भवति जननस्थापनध्वंसनानाम् ।
प्रत्येकं लक्षणत्वं सुवचमिह बहूदाहृतिर्धीमहिम्ने
सम्भूयाप्याहुरेके फलमपि च तदा ऽङ्गिनार्थव्युदासः ॥ ३७ ॥

तर्हि भेदकं विशेषणं, भेद्यं विशेष्यमिति विलक्षणप्रवादो व्यर्थः स्यादित्याशङ्क्याह—तत्तदिति। तत्र तत्तद्विशेषणप्रतिपन्नाकारविरुद्धाकारनिवर्तनं क्रियते ; न पुनरविरुद्धाकारनिवर्तनम् । यथा नीलमित्युक्ते सति अनीलाद्व्यावृत्तिः क्रियते; न पुनरविरुद्धस्योत्पलत्वस्य व्यावृत्तिः। एवमुत्पलमित्युक्तेऽप्यनुत्पलादेरेव व्यावृत्तिः ; न पुनरविरुद्धस्य नीलत्वस्य व्यावृत्तिः । नीलत्वोत्पलत्वयोः सामानाधिकरण्येनैव दृष्टत्वात् ; नीलोत्पलशब्दयोर्यथादर्शनं व्युत्पत्तेश्च । तेन भेदकत्वं च सिद्धम्, विशेषणानां विरोधे व्यावर्तकत्वात् । अविरोधे पुनरसिद्धमिति । तर्हि, 'यतो वा इमानि भूतानि' इत्यादिवाक्यं भवद्भिर्लक्षणत्वेन प्रधानतयोच्यते । तस्मिन् वाक्ये यत इत्यादिना वैयधिकरण्ये सत्यपि यत् कारणं यच्च स्थापकं यच्च पुनः संहारकं तद्ब्रह्मेत्युत्तरेण सामानाधिकरण्यमेव विवक्षितम् । तत्र हेतुत्वादीनां परस्परविरुद्धानां कथमिव लक्षणत्वम्? न हि जनक एव विनाशयति । अतो विरुद्धविशेषणत्वात् हेतुत्वादिकं न ब्रह्मलक्षणमिति । अत्रोत्तरमाह—व्याघात इति । एकस्यैव वस्तुनो विरुद्धेष्वपि कार्येषु कालभेदात् विरोधः प्रशाम्यतीति भावः। एवं देशभेदादपि वक्तव्यम्। एक एव राजा स्वदेशं परिपालयति, दहति च परदेशम्। अथ प्रत्येकसमुदायविकल्पचोद्यमिदं क्रमेण परिहरति—प्रत्येकमिति। अत्र ह्येकैकमेव लक्षणमुचितम्। यथा, 'चेष्टेन्द्रियार्थाश्रयः शरीरम्' इति, यथा वा, 'क्रियावत् गुणवत् समवायिकारणमिति द्रव्यलक्षणम्' इत्यादि। बहूदाहरणं किमर्थमिति चोद्ये शिष्यशिक्षार्थमित्युत्तरं [यथा तत्र?] तथेत्याह—धीमहिम्ने इति। सम्भूय लक्षणमित्येकदेशिनां पक्षमपि समादर्तुमुपक्रमते—सम्भूयेति । समाधानमेवाह—फलमिति। इत्थं किलाभिप्रायः—सृष्टिस्थितिसंहारकर्तारः परवादिकथितास्त्रयः सन्ति। सर्वेऽपीश्वरा ब्रह्मशब्दवाच्याश्चेति च अपरिचितवेदान्तैरनाकलितसम्यङ्न्यायकलापैरन्तेवासिभिरा-

---

ननु विरोधानवकाशात् एकत्र नानाविशेषणमेलनेष्टौ विशेषणत्वमेव हीयते, धर्मान्तरविशिष्टात् भेदकत्वं हि विशेषणत्वम् । विरोधानवकाश इत्यपि न ; जनकत्वनाशकत्वयोरेकनिष्ठत्वायोगात् ; तुल्यनयात् स्थापकत्वस्याप्यन्यनिष्ठत्वं युक्तम् । अविरोधसमर्थनेऽपि मिलितस्य लक्षणत्वमफलमित्यत्राऽऽह तदिति । तत्तत् **भेदकं** विशेषणं **स्वप्रत्यनीकव्युदसननियतं** स्वविरुद्धधर्मवद्धर्मिभेदनमात्रविश्रान्तम्, **अन्यथाऽपि** अविरुद्धधर्मनिवर्तकं न भवति । तत्तदिति समस्तं सत् प्रत्यनीकविशेषणं वा । तावदेव भेदकत्वम् । न चात्र विरोधः, जन्मस्थितिलयानां धर्माणां क्रमेणैकवस्तुनिष्ठत्ववत्, **जननस्य**—उत्पादकत्वस्य, स्थितिहेतुत्वनाशहेतुत्वयोश्च विभिन्नकालभावित्वात् एकत्र संभवात् । धर्मत्रयकथनं लक्षणत्रयाभिप्रायेणेत्येव सुवचम् । अतो न दलवैयर्थ्यशंका । बहूनां लक्षणानाम् उदाहृतिः कथनं किमर्थमिति चेत्—**धीमहिम्ने** एकैकस्यापीतरव्यावर्तकत्वमस्तीति ज्ञानसिद्धये । तेन यत्किञ्चिदेकश्रवणस्थलेषु व्यावृत्तवस्तुविज्ञानसिद्धिः । पक्षान्तरमाह **संभूयेति** । एके केचित् एकैकस्यापि पर्याप्तत्वमिच्छन्तोऽपि, संभूयापि त्रयं लक्षणं भवितुमर्हतीति वदन्ति । **संभूयेत्येतदनन्तरं** लक्षणीभावमित्यध्याहारः । तन्मेलन-

संभवति पुराणादिप्रसिद्धपुरुषस्तु ज्ञात एवेति चेत्; हन्त तर्हि तैरेव पुराणादिभिर्ब्रह्मत्वं ब्रह्मशब्द-वाच्यत्वं च ज्ञातमिति पुनरपि ज्ञातत्वादेव नोपलक्ष्यत्वम्। अज्ञातत्वं च भवता वक्तुं न शक्यते।

---

ज्ञानं न भवति। भवति चेत् विशेषरूपेण धर्मिणो ज्ञाततया विचारस्य सुकरतया, लक्षणाभावात् विचार इत्याक्षेपो न स्यात्। लक्षणैरेवेति पाठोऽप्यस्ति। प्रकृते लक्षणानां बहुत्वात् तदुपपत्तिः। परंतु वेद्यं प्रति एकस्यैव पर्याप्ततया नानेकनिर्देशस्येहाऽऽवश्यकता। ननु सामान्यरूपेण ज्ञातं लक्षणवत्तया ज्ञाप्यते, तेन किञ्चिदुपलक्ष्यते-इति चेत् तत्राऽऽह ब्रह्मत्वमिति। किं तेो लक्ष्यम्? ननु, 'उपलक्ष्यं ह्यनवधिकातिशयबृहत् बृंहणञ्च" इति भाष्ये उक्तम्। तच्च स्वरूपेण गुणैश्च बृहत्त्व-रूपं ब्रह्मत्वं ब्रह्मपदशक्यतावच्छेदकम्। तत् भवत्युपलक्ष्यम्, तुल्यन्यायात् ब्रह्मशब्दाभिधेयत्वं=ब्रह्मशब्द वाच्यत्वमपि तथेति चेत्—उपलक्ष्यत्वं हि ज्ञाप्यत्वम्। अत्र लक्ष्यमुभयत्र्युनि ते हि द्वे विदिते एव। अतः कथमुपलक्ष्यता। विदिते ह्यत्रेति पाठः। विदिते इति द्विवचनम्। अतः विदितेऽन्यत्रेति पाठो न युक्तः तथासंख्ययोगात्। "ईदूदे द्विवचनं प्रगृह्यम्"। चिन्तामणौ अन्यत्रेति पदं नास्ति। पुराणादीनि शब्दान्तरेण तत्पाठोहनं न शक्यम्, परं तु चिन्तामणितालकोशे, लक्ष्ययोगाप्रतीतेः', 'लक्षणेनैव' इति पाठवत् विदितेऽन्यत्रेति पाठस्यैव दर्शनात् प्रकाशिकायां तं पाठमादृत्य, अन्यत्र पुराणादिषु तस्मिन् विदिते सति ब्रह्मत्वं ब्रह्मशब्दाभिधेयत्वं च विदितमिति व्याख्यातम्। तदाऽध्याहार-गौरव सह्यम् 'विदिते ह्यत्र इति पाठे त्वत्र' इत्येतदं न्य इत्याभीदि युक्तमपि रुचिरम्। विदिते ह्यत्रेति पाठस्तूपलभ्यत इति विशेषः। अत्र श्रुतिप्रसिद्धिपुराणादिप्रसिद्धाविति विभागावसरोऽपि नास्ति। ब्रह्म वादिज्ञाततत्त्वोपपादनं तु तृतीयपाद एव स्पष्टमस्ति, नो चेन्न शंकेति। तदयमर्थः—किं ब्रह्म, किं ब्रह्मशब्दवाच्यम् इति जिज्ञासायामेव लक्षणकथनमारब्धम्। तयोर्ज्ञानाभावे तथा शंका प्रश्नः आक्षेपो वा न भवेत्। अतो द्वे अपि ते विदिते इति कथं तन्मुखेनोपलक्ष्यत्वमिति।

इमं पूर्वपक्षं प्रतिषेधति सैवमिति नानाविधेषु आगमेषु नकिरिन्द्र त्वदुत्तर इत्यादिषु इन्द्रादिष्वपि निरतिशयबृहत्त्वश्रुतेः ब्रह्मरुद्रयोः सुतरां तत्संभवात् किं निरतिशयबृहत्त्वरूप-ब्रह्मत्ववत् ब्रह्मशब्दमुख्यार्थः क इति जिज्ञासासंभवात् तद्व्युदासार्थं जगत्कारणत्वलक्षणकथनमुखेन तल्लक्षणवत्तया प्रसिद्धे महापुरुषे श्रीमति पुरुषसूक्तोत्तरनारायणादिषु कारणत्वेन विदिते ब्रह्मत्वब्रह्म शब्दमुख्यार्थत्वयो स्थापनमिति न दोष इति। अत्रेदं बोध्यम्—उपलक्षणस्थले उपलक्षणमुपलक्ष्यं पूर्वं प्रतिपन्नमित्याकारवत्तं वक्तव्यमिति भाष्यादिप्रसिद्धम्। तत्र कारणं भाष्यार्थदर्पणे दर्शितं स्मि.। भाष्ये, 'उपलक्ष्यं ह्यनवधिकातिशयबृहत् बृंहणञ्च' इत्युक्त्या तयोर्धर्मयोरुपलक्ष्यत्वं ज्ञायते। पूर्वप्रति-पन्नाकारश्च सर्वज्ञत्वादिर्भाषितः। अत्र सारावल्यां ब्रह्मत्वादेर्विदितत्वमुक्तम्। विदितत्व एव, निरति शयबृहद्वस्तु किमिति जिज्ञासायां तद्व्यक्तिप्रदर्शनाय लक्षणं कथ्यत इत्युक्तिः संगच्छते। विदितत्वेऽ-प्युपलक्ष्यत्वं वक्तव्यम्। चिन्तामणौ, बृहत्त्वादेरुपलक्ष्यत्वं प्रागुक्तम्, श्रीमत्त्वं पुनरत्र। 'अन्ये तु

सर्वथाऽप्यज्ञाते किं ब्रह्मेति विशेषशङ्काया अनवकाशात्। तदिदमाह—नोचेदिति । तदिदं प्रतिक्षिपति—मैवमिति। अत्र हेतुमाह—न नेति। यद्यपि निरतिशयबृहत्त्वबृंहणत्वविशिष्टं ब्रह्मेति 'ब्रह्म परिवृढं रूपैनः', 'बृहति बृंहयति तस्मादुच्यते परं ब्रह्म', 'बृहत्त्वात् बृंहणत्वाच्च तद्ब्रह्मेत्यभिधीयते' (त्याचक्षते) इति प्रमाणप्रसिद्धम्, तथापि तच्छ्रुतिपुराणोक्तं ब्रह्मविष्णुरुद्रादिषु तादृक् परं ब्रह्म किंरूपमिति व्यक्तिविशेषपरिज्ञानं नास्ति। ह्री[श्वर]लक्ष्मीश्वरत्वेन विशेषपरिज्ञानं जायते। तथा च श्रियःपतित्वमेव पूर्वमपरिज्ञातत्वात् परस्मिन् ब्रह्मण्युपलक्ष्याकारः। अन्यत् सर्वं परिज्ञातत्वात् प्रतिपन्नाकारः उपलक्षणाकारोऽपि वा भवति। पूर्वं निरतिशयबृहत्त्वबृंहणत्वाभ्यां ब्रह्मशब्दवाच्यत्वाकार-उपलक्ष्याकार इत्युक्तम्; इदानीं पुनः परस्मिन् ब्रह्मणि श्रियःपतित्वमुपलक्ष्याकार इति विभागः॥३८॥

---

प्रतिपन्नधर्माः' इत्युक्त्या अविदितं श्रीमत्त्वमुपलक्ष्यति प्रतीयते । अत्र किं ब्रह्मेति प्रश्नस्य हि श्रीमत् ब्रह्मेत्युत्तरम्। तत्र किमुद्दिश्य किं विधेयम्। को गवय इति प्रश्ने, गोसदृशो गवय इत्युत्तरे, तोऽरण्ये गोसादृश्यरूपोपलक्षणसामानाधिकरण्येन गवयत्वे दृष्टे गवयो गवयपदवाच्यः इति फलभूतं ज्ञानं जायते। तत्र किं विधेयम्। गवयपदवाच्यत्वमिति चेत्—तद्वदत्र ब्रह्मपदवाच्यत्वं वा निरतिशयबृहत्त्वं वा विधेयं यथाचिन्तामणि भविष्यति। तत्र श्रीपतित्वस्याविदितत्वे उद्देश्यतावच्छेदकत्वायोगात् विदितत्वेऽपि अविदितत्वाभावे श्रीमत्त्वमुपलक्ष्यमिति कथम्। ब्रह्मत्वमुपलक्ष्यमिति भाष्यं तु युज्यते, तस्य विधेयत्वात्। परंतु तस्य धर्मस्याप्यविदितत्वं कथम्। विदित्वैव प्रश्नात्। भाष्यरीत्या ब्रह्मत्वादेरिहोपलक्ष्याकारत्वे परिशेषात् श्रीमत्त्वं पूर्वप्रतिपन्नाकार इत्येव वक्तव्यम्। तस्य तथात्वं कथमिति चेत् जगत्कारणं ब्रह्मेति कारणत्वे उपलक्षणे कथिते तेन पुरुषसूक्तोत्तरनारायणादौ तन्नियताश्रयतयाऽवधृत व्यक्तिग्रहणे प्रतिपन्नं श्रीमत्त्वं पुरस्कृत्य ब्रह्मत्वविधानात्, विधानात्पूर्वं सर्वज्ञत्वादिवत् प्रतिपन्नत्वादेव पूर्वप्रतिपन्नत्वम् एतद्विस्तरो दर्पणे। एवम्भूतस्योपलक्ष्यत्वोक्तिश्चिन्तामणौ कथमिति विमृश्यम्। "पुरुषसूक्तादिप्रसिद्धं किमपि वस्तूद्दिश्य बृहत्त्वबृंहणत्वादिकं विदधाति" इति तृतीयाधिकरणारम्भे चिन्तामणिः। न ह्येवं श्रीमत्त्वं विधेयम्। अन्ततोऽवधेयं तावदेतावत्—न्यायकुसुमाञ्जलौ, 'गवयत्वं दर्शयितुमशक्नुवन् तदुपलक्षणं किञ्चित् (गोसादृश्यम्) आचष्टे' इति लेखनात् गवयत्वमुपलक्ष्यमिति ज्ञायते। ततः प्राक् तत् अविदितम्। गवयत्वं प्रतिपद्य पश्चात् गवयशब्दवाच्यत्वविधानात् तस्य पूर्वप्रतिपन्नाकारत्वमपि। गवयशब्दवाच्यत्वमिति कश्चित् धर्मोऽपि ब्रह्मत्वादिवत् पूर्वं ज्ञात एव। किं ब्रह्मेति प्रश्ने जिज्ञासितधर्मस्यैव ज्ञाप्यत्वोक्तेर्युक्तत्वात् श्रीमत्त्वं ज्ञाप्यत्वादुपलक्ष्यं भवतीत्यपि युज्यते। तथाच पक्षे साध्यानुमिति स्थल इव, श्रीमति ब्रह्मत्वं ज्ञाप्यं, ब्रह्मत्वे श्रीमन्निष्ठत्वं ज्ञाप्यम्, ब्रह्मणि श्रीमत्त्वं ज्ञाप्यमिति विशिष्टरूपेणैव व्यवहारात् विशकलितरूपेण सर्वं ज्ञातम्, विशिष्टरूपेण सर्वं ज्ञाप्यमिति यथारुचि तैस्तैः कस्यचिदुपलक्ष्यत्वोक्तावपि, जगत्कारणत्वेन श्रीमत्त्वमवधार्य तदाश्रये बृहत्त्वादि ज्ञातव्यमिति सर्वाभिमतप्रमेयमेकमेव। तस्मात् इदमुपलक्ष्यमिति वक्तव्यम्, न तु तदित्यादिः कलहस्त्याज्यः। जगत्कारणत्वेन निरतिशयबृहत्त्वमुपलक्ष्य तदाश्रये ब्रह्मशब्दवाच्यत्वविधानमपि भवति। न तत्र व्यक्तिनिष्कर्षः। अतः श्रीमति पुनस्तत् विधेयमिति॥३८॥

यावल्लक्ष्यावबोधं यदवगतिरतो लक्षणात् तद्विशेष्यं
यस्याबोधेऽपि पश्चात् यदवगतिरिदं स्यात्तु तेनोपलक्ष्यम्।
तस्मात् द्वेधाऽपि भाष्येऽनुमतिरनुचितेत्याशयाशस्य चोद्यम्
मोक्षार्थोपास्यभेदे ह्युभयमपि समन्वेति विद्याविकल्पात् ॥ ३९ ॥

अत्र भाष्योक्तमुपलक्षणविशेषणात्मकपक्षद्वयं परस्परविरुद्धमेव, लक्षणविरोधादित्याशङ्क्य विरोधाभावमाचष्टे यावदित्यादिना. । लोके हि यावल्लक्ष्यावबोधं यस्यावगतिः, तेन विशेषणेन तत् विशेष्यमित्युच्यते। प्रकृष्टप्रकाशत्वं चन्द्रेण सह नित्यमेव प्रतीयते। यस्याबोधेऽपि पश्चात् यदवगतिः, तत् तेनोपलक्ष्यम्। यथा शाखाग्रे चन्द्र इत्यत्र शाखाग्रप्रतीतिमन्तरेणापि चन्द्रस्तत्र प्रतीयत एव एवं च सति परस्परविरुद्धलक्षणोपेतत्वादुपलक्षणत्वेन विशेषणत्वेनोभयथापि भाष्यानुमतिर-

---

ननु पूर्वपक्षिणा विशेषणत्वमुपलक्षणत्वं वेति विकल्प्य दूषणेऽपि सिद्धान्तिना यदत्र वस्तुतोऽस्ति तत्पक्षमाहत्य समाधानं वक्तव्यम् । तद्विहायोभयपक्षसमर्थनं भाष्ये, तदनुसारेण भवन्तश्च युक्तम् पूर्वपक्षिणा उपलक्षणपक्षस्य पश्चादुक्तावपि भाष्ये उपलक्षणपक्षमेवाहत्य सिद्धान्तारम्भात् तदनुसारेण भवताऽपि हेतुत्वलक्ष्य पूर्वोक्तादिप्रसिद्धः इत्युपलक्षणपक्षेणोपक्रम इति तस्यैव वस्तुत्वं प्रतीमः। तत्र, 'यावल्लक्ष्यावबोधम्', 'विश्वहेतुत्वलक्ष्ये' इत्यत्रेव ब्रह्मशब्दार्थे हेतुत्वलक्ष्य.=हेतुत्वेन लक्षयितुं शक्य उक्त इत्यर्थान्तरवर्णनं तावदास्ताम् । सर्वथा, विशेषणत्वपक्षदूषणमनुक्तोपालम्भः' इत्येव वक्तव्ये, भाष्ये ' विशेषणतया लक्षणत्वेऽपि न कश्चित् दोषः" इत्यारम्भो न युज्यते ॥ तदुक्तानां दोषाणां परिहार्यत्वाय तदारम्भः, न तु विशेषणत्वपक्षस्येष्टत्वादिति चेन्न विशेषणत्वस्यास्वीकारादित्यलेखनात्। अत एव हि भवता विशेषणत्वपक्षं प्रथमं प्रतिष्ठाप्य उपलक्षणत्वपक्षस्य पश्चात् समर्थनम्। न च विशेषणत्वसमर्थनं सत्यत्वज्ञानत्वाद्यनेकलक्षणाभिप्रायेण, उपलक्षणत्वसमर्थनं जन्मादिविषये इति शक्यम्—'जननस्थापनध्वंसनानाम्' इति श्लोके, "अत्र तु कालभेदेन जन्मादीनां न विरोधः" इति भाष्ये च जन्मादिविषयेऽपि विशेषणत्वोक्तेः । तथा चैकस्योभयाकारायोगात् तथाऽनुमतिः कथम् । कथमयोग इति चेत्—तदुच्यते-यावल्लक्ष्यावबोधं यावन्तो लक्ष्यविषयकबोधाः तावत्सु, यदवगतिः यस्य धर्मस्य ग्रहणं भवति, तद्विशेष्यं तेन धर्मेण विशेषणीयं भवति लक्ष्यम् ; अतो लक्षणात् उक्तात् स्वविषयकतावच्छेदकतद्धर्मविषयकत्वाकारत्वरूपात् विशेष्यलक्षणात् । तथाच विशेषणत्वं लक्ष्यनिरूपितविशेष्यताव्यापकप्रकारिताकत्वम् । विशेष्यमित्यस्य केन विशेषणीयमिति तृतीयान्तसापेक्षत्वात् अतो लक्षणादित्यस्य पञ्चम्यन्ततया तथाऽन्वयायोगात् , यच्छब्दप्रतिसंबन्धित्वस्य तच्छब्दे स्वारस्याच्च तद्विशेष्यमित्येकं पदं कृत्वा तेन विशेष्यमिति विगृहीतम् । लक्ष्यमिति अर्थसिद्धम् । अतो लक्षणादित्यस्य तेन लक्षणेनेत्यर्थवर्णने तु तदिति पृथक्पदं लक्ष्यवाचि । अथोपलक्षणलक्षणमुच्यते-यस्य धर्मस्य अबोधेऽपि लक्ष्यग्रहणकाले अग्रहणेऽपि पश्चात् यस्य धर्मस्योपलक्षणस्य ज्ञानानन्तरं यस्यावगतिः यल्लक्ष्यज्ञानं भवति, तत् लक्ष्यं तेन धर्मेणोपलक्ष्यं भवति । अपिशब्देन कदाचित् ग्रहणमपि संभाव्यते । नियमाभावस्यैवोक्तेः । पश्चादिति पदेन उपलक्षणधर्मप्रकारकस्यविशेष्यक-

नुचितेति कश्चिद् इ। तद् भाष्यकाराभिप्रायापरिज्ञाननिबन्धनमित्याह—आशयेति। कोऽयमाशय इत्यत्र भाष्यकाराभिप्रायं विवृणोति—मोक्षार्थेति। अयमर्थः—'ब्रह्मविदाप्नोति परम्' इत्यादिना मोक्षार्थं ब्रह्मोपास्यमित्युच्यते। तत्र ब्रह्म किमिति विशेषजिज्ञासायां 'यतो वा इमानि भूतानि' इत्यादिवाक्ये कारणत्वादिकं यथायोगं विशेषणत्वेनोपलक्षणत्वेन वा ब्रह्मणो लक्षणमभिधीयते। ब्रह्मगुणाश्च नन्ताः। तत्र विद्याभेदनिबन्धनोपास्यभेदे सति यस्मिन् ब्रह्मोपासने ये गुणा नियमेनानुवर्तन्ते, तानि विशेषणानि। ये पुनर्ब्रह्मप्रतिपत्तिवेलायामेवान्विताः उपासनवेलायां तु नियतं नानुवर्तन्ते, तान्युप-

---

ज्ञानजन्यत्वं लक्ष्यविषयकज्ञाने उच्यते। अन्यथा घटावबोधेऽपि पटावगतिरस्तीति घटोपलक्ष्यत्वं पटस्य स्यात्। तथा च तदुपलक्ष्यत्वं नाम तज्ज्ञाप्यत्वे सति तदप्रकारकज्ञानविषयत्वम्, उपलक्षणत्वञ्च लक्ष्यज्ञापकत्वे सति लक्ष्यनिरूपितविशेष्यत्वाव्यापकत्वप्रकारिताकत्वम्। तत्र व्यापकत्वाव्यापकत्वरूपविरुद्धधर्मघटनात् विशेषणत्वोपलक्षणत्वयोरेकत्रायोगः। तस्मात् विरोधात् इहाऽपि विशेषणत्वोपलक्षणत्वोभयवत्तया लक्षणस्यानुमतिर्भाष्ये दृश्यमाना नोचितेति पूर्वपक्ष। निरस्यति इतीत्यादिना इत्येवं चोद्यं शंकितं आशयाज्ञस्य; भाष्यकाराशयानभिज्ञनिष्ठम्। तदज्ञानमूलकमिति यावत्। तादृशस्य विशेषणत्वनियमेऽपि एव विशेषणत्वनिर्वचनानभ्युपगमात्। अंगीकारेऽप्याह मोक्षेति। मोक्षार्थमुपास्यस्याऽऽकारस्य तत्र तत्र भिन्नत्वात् जगत्कारणत्वे हि विशेषणत्वमुपलक्षणत्वञ्च समन्वेति उपासनस्यैकत्वे वा, सर्वैः सर्वोप सनस्य कार्यत्वे वा इदं दुर्वचं स्यात्, तन्नेत्य इ विद्याविकल्पादिति। एकपुरुषानुष्ठेयोपासनमन्यपुरुषानुष्ठेयोपासनञ्च न समानविषयकम्, विद्यानां बह्वीनां विकल्पेनैव मोक्षहेतुत्वात्। 'कारणं तु ध्येयः' इति श्रुत्या कारणत्वेन ध्यानं नोच्यते; किंतु यत् सर्वजगत्कारणं तत् ध्येयमिति। तत्र ध्यानविधिमूलसु विद्यासु क्वचित् जगत्कारणत्वमप्युपास्याकारः, 'कर्तारमीशं पुरुषं ब्रह्मयोनिम्', 'तमेवं विद्वानमृत इह भवति' इति तद्धर्मोक्तेः। क्वचिदन्य एव गुणाः विषयः; तस्यापाठात्। उभयैरप्युपासकैः प्रथमतो जगत्कारणत्वलक्षणमुखेनैव ब्रह्म वेद्यते। अतो जन्मादिज्ञाप्यत्वं ब्रह्मणः सर्वाविशिष्टम्। अथ तदुपलक्षितधर्मान्तरविशिष्टब्रह्मोपासनस्यैव कैश्चित् करणात् तत्रोपासनायां कारणत्व न विषय इति तस्योपलक्षणता।

एवमपि उपलक्षणत्वे सति विशेषणत्वं कथमिति चेत्—श्रूयताम्—यावल्लक्ष्येत्यादे कोऽर्थः? तद्विषयकत्वव्यापकत्वविषयकत्वकत्वं विशेषणत्वमिति चेत्—इदं निर्वचनं सर्वथा न भवति; गौर्मृगः तिर्यक् द्रव्यं प्रमेयमिति विशेषसामान्यादिविषयकज्ञानेषु गोर्विषयतया तत्र कस्यापि सास्नादिमत्त्वादिधर्मस्य नियमेन विषयत्वाभावात्, तत्तत्पदजन्यज्ञानस्य च गोविषयकस्य विशेषणत्वाभिमतधर्मविषयकत्वनियमस्य दुर्वचत्वात्। न च तद्विषयकप्रत्यक्षत्वव्यापकत्वविषयकत्वकत्वं तत्; अप्रत्यक्षवस्तुविषये विशेषणधर्मवर्णनभंगात्। प्रत्यक्षस्थलेऽपि तन्न भवति; दर्शनस्पर्शनाभ्यामिन्द्रियाभ्यामेकार्थग्रहणात्, तत्र द्रव्यविषयकप्रत्यक्षत्वं यत्र त्वाचचाक्षुषद्विविधप्रत्यक्षे, तत्र रूपविषयकत्वस्य स्पर्शविषयकत्वस्य चाव्याप्तित्वात् रूपस्पर्शयोर्विशेषणत्वानापत्तेः। न च तद्विषयकप्रत्यक्षत्वव्याप्यकिञ्चिज्जातिमत्त्वव्यापकत्वविषयकत्वकत्वं तत्; चन्द्रादौ एकैकपार्श्वदर्शित्वात् प्रजानां भूम्युरुषदृश्यपार्श्वनियतस्य विशेषणस्य पुरुषपुरुषादृश्यतया चन्द्रस्य चोभयग्राह्यतया विशेषणभानस्य धर्मिज्ञाननैयत्याभावात्। तत्तत्पुरुषीय-

लक्षणानि। उपासनान्तरोपास्यानां स्वरूपैक्येऽपि गुणभेदेन भिन्नानां बहुत्वात् कचित् कस्यचित् उपलक्षणत्वं विशेषणत्वं वा भवति, अन्यत्रान्येषाम्। एतदुक्तं भवति-'कारणं तु ध्येयः' इति जगत्कारणत्वादिकं ध्येयमात्रानुवृत्तनयोच्यते। एवं 'आनन्दादयः प्रधानस्य' इति सत्यत्वज्ञानत्वानन्तत्वानन्दत्वामलत्वानि स्वरूपनिरूपकधर्मत्वात् सर्वास्वपि विद्यासु सर्वदाऽप्यनुवर्तन्ते। तेन तानि विशेषणानि। ये पुनर्धर्माः तत्रतत्र तदातदा प्रतीयन्ते, व्यावर्तकाश्च ब्रह्मणि भवन्ति, तान्युपलक्षणानि। चन्द्रशाखाग्रवत् ब्रह्मस्वरूपप्रतिपत्त्यनुवृत्त्यभावात्। श्रियःपतित्वमपि नित्यानुसंधेयमिति, उपलक्ष्याकारत्वात्, श्रीनिवासे ब्रह्मणि मम भक्तिर्भवत्विति भाष्यकारैरेव सर्वोपासनविषयत्वेनाभिधानाच्च ॥ ३९ ॥

चन्द्रे शाखेव शान्ते महसि तटगतं लक्षणं कारणत्वं
सत्यज्ञानादिवद्यैरपमृदितगुणं तद्विभागीति डिम्भाः।

---

प्रत्यक्षत्वव्यापकेति निवेशेऽपि काकवत् गृहमित्येतद्दलक्षणतया पीतस्तम्भवत् गृहं देवदत्तीयमित्यादौ पीतस्तम्भादेर्विशेषणत्वस्येष्टतया कदाचिद्वर्णान्तरलेपनस्यापि संभवेन धर्मिज्ञाने तद्भानैयत्याभावात्। पार्श्वान्तरेण गृहग्रहणकाले स्तम्भस्याप्यविषयतया विशेषणत्वानापत्तेश्च। तस्मात् या लक्ष्यबोधकावगत्यर्हत्वमेव विशेषणत्वम्। अर्हत्वञ्च तदपृथक्सिद्धत्वादि। सास्नादीनां पृथक्सिद्धत्वात् केदारगताऽऽयामविशेषादेश्च पृथक्सिद्धत्वान्न दोषः। जगत्कारणत्वञ्च पृथक्सिद्धमेव। ननु ब्रह्मणोऽप्रत्यक्षत्वात्, मुक्तिकालिकप्रत्यक्षविवक्षायां तु सर्वस्यापि सदैव प्रत्यक्षविषयत्वेन वैलक्षण्याभावात् प्रत्यक्षघटितप्रकृतनिर्वचनं न घटत इति चेत्— प्रत्यक्षसमानाकारोपासनात्मकज्ञानमादाय यत्पुरुषीयोपासने यस्य नियमेन भानम्, तं प्रति तस्य विशेषणत्वम्, अन्यमुपासकं प्रति तदीयजगत्कारणत्वज्ञानाधीनलक्ष्यविषयकज्ञाने तदाधीनोपासने च तत्सूचितसर्वज्ञत्वादिधर्मान्तरस्यैव भानात् जगत्कारणत्वस्याभानादुपलक्षणत्वमिति। सार्वकालिकधर्मो विशेषणम्, कादाचित्कमुपलक्षणमिति केचित्; तन्न-कादाचित्केऽपि विशेषणत्वव्यवहारस्य दर्शनात्। तदाऽपि जगत्सृष्टिस्थितिलयान्यतमहेतुत्वमित्येको धर्म इति वक्तव्यम्। सत्यत्वादिपद इति धर्मान्तरग्रहणेन तु विशेषणबहुत्वं न विशेषणभेदकमिति सिद्धान्ते उक्तमिति वक्तव्यम्। सृष्टिहेतुत्वैकमात्रग्रहणे चोपलक्षणलक्षणत्वम्। विशेषणोपलक्षणव्यवहारो लोके नैकरूपः, धर्मिव्यावर्तकत्वे सति धर्मिज्ञानप्रकारत्वं विशेषणत्वम्, तदप्रकारत्वमुपलक्षणत्वमित्येतावदेव त्वऽभिमतमस्तु।

चि. टी. ३९. ध्येयमात्रानुवृत्ततया-ध्यानात् पूर्वमवश्यज्ञेयतया। तानि सत्यत्वादीनि। ये पुनरित्यत्र कारणत्वस्यापि ग्रहणम्। उपलक्ष्याकारत्वादिति। जगत्कारणत्वञ्च ध्येयवस्तुविशेष्यकप्रमात्वविशिष्टविधेयकज्ञाने श्रियःपतित्वस्य गोसादृश्यो-लक्ष्यगवयत्ववत् उद्देश्यतावच्छेदकत्वादित्यर्थः ॥३९॥

अत्राधिकरणेऽपि भाष्यकारैरद्वैतिमतं खण्डितम्। तत्र स्वयमपि प्रकृतानुबन्धि किञ्चिदाह। अद्वैते तु ज्ञाप्यबहिर्भूतत्वमुपलक्षणत्वं सत्यस्य ज्ञाप्यासम्बन्धित्वे सति ज्ञापकत्वं तदित्यर्थः। अविद्याशबलितं ब्रह्म कारणम्। तत्राविद्यायां परिणामित्वरूपोपादानत्वम् संकल्पाश्रयत्वरूपनिमित्तत्वञ्चाहंमर्थस्याविद्यापरिणामस्य, अहं बहु स्यामित्यादिसंकल्पात्। तच्छबलिते ब्रह्मणि न तद्धर्मसंबन्धः। एवमसंबन्धि सत् ब्रह्मज्ञापकमिति उपलक्षणमेतत्; यथा शाखा चन्द्रस्य। न हि शाखासंबन्धश्चन्द्रेऽस्तीति।

एकत्रार्थे विशेष्ये प्रतिपदनियतावर्ज्यवृत्तिनिमित्त-
द्वारा वृत्तिं पदानामिह विदुररुणाद्युक्तिवन्न्यायवृद्धाः ॥ ४० ॥

इति जन्माद्यधिकरणम् । २ ।

अत्र परोक्तां प्रक्रियामत्यन्तन्यायविरुद्धत्वेऽपि बालानां प्रतिपत्तिर्विप्रतिपत्तिहेतुर्मा भूदित्यनुभाष्य पदवाक्यप्रमाणादिविरुद्धत्वात् प्रलाप एवायमिति प्रतिक्षिपति—चन्द्र इति। इयं किल परेषां प्रक्रिया—यथा चन्द्रे शाखा तथा जगत्कारणत्वादिकं ब्रह्मणि तटस्थमेव लक्षणं = द्वारस्थ(द्वार)मेव प्रतिबोधकमित्यर्थः। तेन विशेषणत्वपक्षः प्रतिक्षिप्यते। ननु चन्द्रस्य शाखाग्रेणोपलक्षितस्य स्वरूपगतं प्रकृष्टप्रकाशत्वादिकमनुवर्तते; तद्वत् ब्रह्मण्यपि कारणत्वाद्युपलक्षिते विशेषणभूतं सर्वज्ञत्वादिकमनुवर्ततामित्याशङ्क्य परिहरति—सत्येति। अत्र विषमो दृष्टान्तः। चन्द्रे प्रकृष्टप्रकाशत्वादिकं प्रमाणसिद्धत्वादबाधितत्वाच्च स्वीक्रियते। इह तु निर्विशेषे परस्मिन् ब्रह्मणि सर्वप्रमाणागोचरत्वात्, 'सत्यं ज्ञानम्' इत्यादिश्रुतेर्निर्विशेषप्रतिपादकत्वात्, अरुणाधिकरणन्यायविरुद्धत्वाच्च सर्वज्ञत्वादिकं न स्वीक्रियत इति। डिम्भाः = बालाः। प्रलपन्तीति शेषः। उक्तमर्थं प्रतिक्षिपति—एकत्रेति। द्विविधं हि वाक्यम्। तत्र 'यतो वा इमानि' इत्यादि व्यधिकरणवाक्यम्; सर्वैरपि वादिभिर्भेदपरत्वेन निर्णीतार्थत्वात्। तत् परित्यज्य तावत् समानाधिकरणवाक्यमेव परिशोधयामः। 'भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्' इति पदविदः। पाणिनीयस्य सर्वविद्यास्थानौपयिकत्वात् वेदान्तवादिभिरपि तदेवानुसर्तव्यम्। तच्च न्यायसिद्धम्। सदसद्व्यामाना धिकरणं विशेषणमिति न्यायवादिनः। न केवलं पदविदो न्यायविदश्च वयमनुसरामः, अपि तु वाक्यविदोऽपीत्याह—अरुणाद्युक्तिवदिति। अत्र न्यायवृद्धा इति तान्त्रिकाः परिगृह्यन्ते, अथवा पदवाक्यप्रमाणज्ञाः सर्वेऽपि। 'अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति' इत्येकहायनीपिङ्गाक्षीशब्दयोः सामानाधिकरण्येन गुणोऽभिधीयते। द्विविधं हि सामानाधिकरण्यम्—अर्थसामानाधि-

अत इह तटगतं तटस्थलक्षणमित्युच्यते। अश्वत्थवति तीर्थे स्नाहि इति बहुवचनघट्टेषु अश्वत्थो यत्र तटभागे, तत्समीपगते तीर्थे स्नानं विधीयते, न जलेऽश्वत्थसंबन्धः; किंतु तट एव। कारणत्वप्रयुक्तविकारित्वशंकापरिहारार्थात् शोधकवाक्यात् सत्यं ज्ञानमित्यादितोऽयं विवेको निष्पद्यते। तत्र हि तद् ब्रह्म अप्रमूदितगुणं निरस्तगुणमखण्डं भाति। न हि तस्य वाक्यस्य सत्यत्वज्ञानत्वादिमदित्यर्थः। पदानां धर्मविशिष्टधर्म्यर्थकत्वे एकार्थकत्वरूपसामानाधिकरण्यभङ्गापत्तेः। अतः शुद्धं ब्रह्म तदर्थः न चानेकपदवैयर्थ्यम्, तस्य ब्रह्मणो यथाहि अनृतजडपरिच्छिन्नव्यावृत्तिबोधनतात्पर्यकल्पनया सार्थक्यात्। न च अनृतव्यावृत्त्यादीनां ब्रह्मणि स्वीकारे सधर्मत्वापत्तिः। तासामभावरूपतयाऽधिकरणात्मकत्वेन धर्मत्वाभावात् तद्बोधने अखण्डबोधः कथमिति चेत्; न व्यावृत्तीनां शाब्दबोधे भानम्। शुद्धब्रह्मण एव भानम्। वैयर्थ्यपरिहाराय तात्पर्यवर्णनमिति तथेत्याहुः। इति डिम्भाः=इत्याहुर्बालाः अज्ञाः शब्दार्थज्ञानरहिताः। सिद्धान्तमाह एकत्रेति। न च ब्रह्मण सविकारत्वापत्तिः; प्रकृतिविशिष्टब्रह्मण उपादानत्वे परिणामित्वस्य साक्षात् प्रकृतावेव सत्त्वात्। संकल्परूपपरिणामस्य तदीयधर्मभूतज्ञाने सत्त्वात्। परम्परया तदाश्रयत्वमेव ब्रह्मणि। समानाधिकरणवाक्यस्याखण्डार्थत्वमित्येतच्च शाब्दिकतान्त्रिकनिष्कर्षविरुद्धम्। 'भिन्नप्रवृत्तिनिमित्तानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्' इति शाब्दिकाः। अतः प्रतिपदं नियतं=

शब्दसामानाधिकरण्यं

करण्यं चेति। अत्रार्थसामानाधिकरण्यं भिन्नानामर्थानामेकस्मिन्नर्थे वृत्तिः। यथा नीलत्वोत्पलत्वादीनाम्। शब्दसामानाधिकरण्यं तु भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन् विशेष्ये पर्यवसानम् अभिधानमित्यर्थः। अत्र भिन्नप्रवृत्तिनिमित्तानामिति लक्षणानुसारेण श्लोकस्थपदानामर्थो वर्णनीयः। अत्र न्यायवृद्धा इति सेश्वरमीमांसकानां स्वपक्षस्थानामेवोपादानात् निरीश्वरमीमांसकोक्तमारुण्यादिगुणानामर्थान्वयं प्रतिक्षिपति। तत्प्रतिक्षेपप्रकारश्च श्रीमति भाष्ये [आनन्दमयाधिकरणे] तद्व्याख्यानादिषु विस्तरेणोक्त इति नास्माभिरिह विव्रियते। वयमिहास्मिन् पद्ये तटस्थलक्षणवादिनं मृषावादिनमेव प्रतिक्षिपामः। तत्प्रतिक्षेपविस्तरोऽपि प्रथमसूत्रादिषु द्रष्टव्यः ॥ ४० ॥

## अथ शास्त्रयोनित्वाधिकरणम् ॥ ३ ॥

सूत्रम्—शास्त्रयोनित्वात् ॥ ३ ॥

वीतावीतप्रयोगक्रमनियतिमती कार्यता विश्वमेतत्
सर्वज्ञेन प्रक्लृप्तं गमयति विफलस्त्वत्र शास्त्रैर्विचारः।
इत्युक्तौ लघुत्वादनुमितिविशतः कर्मजैश्वर्ययुक्ते (क्ताः) (क्तो)
विश्वामित्रादिनीत्या स्फुरति(स्युरिति) विभुमिहाम्नायवच्छास्त्रवेद्यम् ॥ ४१ ॥

शास्त्रारम्भार्थोपोद्घातपेटिकायां प्रतीतिप्रजननार्था पूर्वपेटिका निर्वृत्ता। तात्पर्यलिङ्गसमर्थनार्थोत्तरपेटिकाऽऽरभ्यते। तत्राप्राप्तत्वलक्षणं तात्पर्यलिङ्गं तृतीयसूत्रे, सफलत्वलक्षणं चतुर्थ इति प्रागेवोक्तमस्माभिः। तत्र पूर्वपक्षवादी प्रत्यवतिष्ठते—अप्राप्तत्वमेव नास्ति, अनुमानसिद्धत्वादित्येका संगतिः। किं च, 'यतो वा इमानि भूतानि' इत्यादिवाक्यं पुरुषसूक्तादिप्रसिद्धं किमपि

---

व्यवस्थितं अवर्ज्यम्—अवश्यवक्तव्यम् यत् निमित्तं शक्यतावच्छेदकधर्मः, तत्तन्मुखेन पदानामर्थे एकस्मिन् वृत्तिः। तत्तद्धर्मविशिष्टैकविशेष्यरूपार्थबोधकत्वमिति यावत्। यद्यखण्डमेव समानाधिकरणवाक्यवेद्यम्, तर्हि अरुणाधिकरणे अरुणया एकहायन्या पिङ्गाक्ष्या गवेति अनेकपदसत्त्वेऽपि एकस्यैव विधेयत्वात् वाक्यभेदशंका, प्रकारान्तरेण तत्परिहारश्च कथं तान्त्रिकैः क्रियते। नानाधर्मविशिष्टैकधर्मिविशेष्यबोधजनकत्वं समानाधिकरणपदानां तत्र निर्णयमिति। तथैव इह सत्यं ज्ञानमित्यादावपि न्यायवृद्धाः यथावत् तन्मीमांसान्यायशिक्षकश्रीभाष्यकारादयः सिद्धान्तिनो विदुः। शाब्दिकतान्त्रिकोक्तिपरिशीलनविस्तरोऽन्यत्र द्रष्टव्यः ॥

**चि. टी. ४०** आरुण्यादिगुणेति। अरुणापदगोपदादेः धर्ममात्रमर्थः। तस्यैव क्रयभावनान्वयः। पार्ष्ठिकबोधे व्यक्त्यन्वयलाभ इति मीमांसकसरणिः ॥ ४० ॥

ननु ब्रह्मविषयकापातप्रतीतिः शास्त्रोत्पादिता न विचारप्रवृत्तिहेतुः शास्त्रतात्पर्याविषयविषयकत्वात्। ब्रह्मणः शास्त्रतात्पर्याविषयत्वञ्च, अनुमानसिद्धत्वात्। आपातप्रतीतिश्चानुमानजन्यनिश्चयेनैव निवर्त्यते इत्याक्षेपे अनुमानाविषयत्वस्थापनमुखेन तात्पर्यविषयत्वस्थापनार्थं सूत्रम्, **शास्त्रयोनित्वादिति।** तदधिकरणार्थं प्रथमश्लोकेन संगृह्णाति वीतेति। अन्वयिहेतोर्वीतहेतुरिति, व्यतिरेकिहेतोरवीतहेतुरिति च प्राच्यमन्येषु व्यवहारः। विशेषेण इतः=प्राप्तः दृष्टान्तेषु साध्यसंबद्धो हेतुर्वीतः। तद्भिन्नः दृष्टान्तेषु साध्यसामानाधिकरण्यहीनः, किंतु साध्याभावसामानाधिकरण्यनियमं स्वाभावे प्राप्तो हेतुः अवीतः। वीतावीत

वस्त्वनूद्य तस्य बृहत्त्वबृंहणत्वादिकं विदधातीति ब्रह्मोपादानवादिभिर्भवद्भिरुच्यते, तद् वार्तम्; अनुमानप्रसिद्धमेवोच्यताम्। तथाचागमस्याप्यनुमानमेव मूलमित्यपरा। एवं च सति अनुमानविरुद्धमुपादानत्वं यत इति शब्देन वक्तुं न शक्यत इति भावः। अत्रापि प्रागुक्तमेव विषयवाक्यम्। प्रधानोऽपि विषयः स एव।

तदर्थविचारस्तु—वेदान्तानां ब्रह्मणि प्रामाण्यमस्ति न वेति। तदर्थं विचार्यते—वेदान्तानां सिद्धे ब्रह्मणि तात्पर्यलिङ्गमस्ति न वेति। तदर्थं विचार्यते—ब्रह्मणि प्रमाणान्तरप्राप्तिरस्ति न वेति। तदर्थं विचार्यते—कार्यत्वादिकं लिङ्गमन्वयेन व्यतिरेकेण च ब्रह्म गमयितुं शक्नोति न वेति। पुनरपि विचार्यते—अन्यथासिद्धत्वादयो हेतुदोषाः जगत्कर्तृत्वसाधके कार्यत्वादिहेतौ संभवन्ति न वेति। फलफलिभावस्तु—कार्यत्वादिकं हेतुजातमीश्वरसाधने निर्दोषत्वात् साधयितुं शक्नोतीतीश्वरस्य प्रमाणान्तरप्राप्तत्वात् वेदान्तवाक्यानां ब्रह्मणि तात्पर्यलिङ्गाभावादप्रामाण्यमित्यनारम्भणीयमेव शास्त्रमेतदिति पूर्वपक्षे। राद्धान्तेऽपि वैपरीत्येन वर्णनीयः। शेषं सुगमम्।

अत्र पूर्वपक्षवादी प्राह—वीतेति। वीतः=अन्वयी, विशेषेणेतत्वात्। अवीतः व्यतिरेकी, अन्वयाभावात्। वीतावीतःपुनः अन्वयव्यतिरेकी—अन्वयित्वात् व्यतिरेकित्वाच्च। अत्र कार्यता उपलक्षणम्। कार्यायोजनधृत्यादीनां बहूनामपि हेतूनां न्यायशास्त्रविद्भिरुपात्तत्वात्। इयं किल न्यायप्रक्रिया—ईश्वरसाधने द्वयमनुमानं प्रधानतयोपादीयते। कार्यलिङ्गकानुमानमुपदेशलिङ्गकानुमानं चेति। कार्यलिङ्गकानुमानं च द्विविधम्—अन्वयव्यतिरेक्यनुमानमेकम्, विवादाध्यासितं सकर्तृकं कार्यत्वादिति। अपरं तु व्यतिरेक्यनुमानम्, सर्वं कार्यं सर्ववित्कर्तृपूर्वकं कादाचित्कत्वादिति।

---

इति अन्वयिव्यतिरेकिहेतुर्वक्तुं शक्यते। तत्र वीतस्य यः प्रयोगक्रमः क्षित्यादिकं सकर्तृकं कार्यत्वात् यत् कार्यं तत् सकर्तृकम्, यथा घटादि इति, अवीतस्य च यः प्रयोगक्रमः क्षित्यादिकं सकर्तृकं कार्यत्वात्, यत्र सकर्तृकम् न तत् कार्यम्, यथा गगनादीति, ताभ्यां सिद्धे **नियती** अन्वयव्यतिरेकव्याप्ती; तद्वती **कार्यता** कार्यत्वरूपहेतुः। **एतद्विश्वमिति** कर्म। सर्वज्ञकृतत्वेन गमयति। न च सकर्तृकत्वसाधने कथं सर्वज्ञकर्तृकत्वसिद्धिः। सर्वज्ञकर्तृकत्वं तु न शक्यं साधयितुम्; घटपटादौ अन्वयादर्शनादिति वाच्यम्-सकर्तृकत्वं हि ज्ञानचिकीर्षाप्रयत्नवज्जन्यत्वम्। एवं ज्ञानेच्छयोरपि साधनीयत्वात् तत्र विश्वं प्रति कारणतया तत्साधनात् विश्वज्ञ एव साधितो भवति। न च क्षित्यादिमात्रपक्षकानुमाने तदभिज्ञसाधनेऽपि घटपटादिदृष्टान्ताभिज्ञत्वस्यासाधनात् सर्वज्ञत्वासिद्धिरिति शक्यम्; **क्षित्यादिपदेन** घटपटाद्यदृष्टप्रेरणादावपि ईश्वराधीनत्वस्य विवक्षिततया सर्वाभिज्ञत्वसिद्धेः। दुर्ग्रहाद्भुतवस्तुदर्शिनः क्षुद्रवस्तुज्ञाने कः सन्देहः। विश्वमेव पक्षीकृत्य अवीतहेतुः कार्यत्वमिति उपरि वक्ष्यते। तत्र सर्वज्ञकर्तृकत्वमेवाऽऽहत्य साध्यमिति न कश्चित् क्लेशः। **तत्र** एवं सिद्धे **शास्त्रैः** औपनिषदवाक्यैः, तान्यादाय, विचारो विफलः। एकमपि वाक्यं न विचारणीयम्; किमुतैतावन्ति। यद्यपि अनुमानतो निमित्तकारणत्वेनैवेश्वरसिद्ध्या उपादानतया ब्रह्मप्रतीतिं जनयतां वाक्यानां कोऽर्थ इति एको विचारः कर्तव्यो भवेत्—अथापि शारीरकरीत्या सर्ववाक्यविचारो व्यर्थ एव। तदा च पूर्वप्रवृत्तानुमानाविरोधेनैव वेदवाक्यार्थस्य वक्तव्यतया तदुपादानत्वस्थापकान्यधिकरणानि बाधितार्थकानि॥ अत एव पूर्वाधिकरणे जन्मलयभूमितयोपादानत्वविवरणं कृतमप्याक्षेप्यमिति। **इत्युन्नीतौ**=एवं पूर्वपक्षिणा तार्किकेण शास्त्रावेद्यत्वस्येश्वरे उन्नयने सति,

एवमुपदेशलिङ्गकानुमानेऽपि भेदो द्रष्टव्यः। वेदवाक्यानि सकर्तृकाणि वाक्यत्वादित्यन्वयव्यतिरेकि। वेदाः सर्वज्ञप्रणीताः वेदत्वादिति केवलव्यतिरेकि। अत्र कार्यत्वस्योपलक्षणत्वात् सकर्तृकत्वप्रसाधकं महाविद्यारूपं प्रमेयत्वादिकमपि गृह्यते—विप्रतिपन्नं स्वस्वेतरवृत्तित्वानाक्रान्तसकर्तृकनिष्ठाधिकरणमिति महाविद्यावादिनः प्रसाधयन्ति। तेन सकर्तृकत्वानुमानेऽभिहिताः पक्षधर्मतावशादर्थतः सिध्यन्ति। सर्वज्ञकर्तृकत्वानुमाने व्यतिरेकेण शब्दत एव सिध्यन्ति। एवमनुमानादीश्वरसिद्धौ शास्त्रैस्तद्विचारो विफलः।

अत्रोत्तरमाह—इतीति। लघुत्वादिति—कार्यत्वादिना प्रसाध्यतां जगत्कर्ता यः कश्चिदपि; स तु जीवः स्यात्, तस्य दृष्टत्वात्। तेन जीवक्लृप्तौ लाघवम्, ईश्वरक्लृप्तौ गौरवमिति नेश्वरसिद्धिः।

---

सूत्रकृत् विभुं सर्वेश्वरं शास्त्रवेद्यत्वेन असूत्रयत्=सूत्रेण स्थापयामास। उन्नीतादित्यस्य असूत्रयदित्यत्रान्वयः। अनुमानस्येश्वरासाधकत्वे किल शास्त्रेण साधनम्। तदर्थं, जीवसाधनविश्रान्तत्वात् अनुमानस्येश्वरासाधकत्वमुपपादयितुं मध्ये लघुत्वादित्यादि। अत्र युक्तः स्फुरति इति एकः पाठः। युक्ते स्फुरतीति पाठान्तरम्। जीव इत्यर्थसिद्धम्। दृष्टानुरोधेनैवानुमानप्रवृत्त्या उपचितपुण्यविशेषरूपकर्माधीनमहाकार्यसृष्टिसामर्थ्यसंपन्नो जीव एव कर्तृत्वेन स्फुरेत्, लघुत्वात् ईश्वररूपधर्म्यन्तरनानामहिमरूपधर्मोभयकल्पनापेक्षया क्लृप्ते जीवे महिममात्रकल्पनात्। तस्य कर्माधीनत्वं च क्लृप्तम्। ईश्वरे तु तदभावात् कारणान्तरं कल्प्यम्, दृष्टविरोधेन निष्कारणत्वं वा कल्प्यमिति। जीवस्यैतावदर्थस्रष्टृत्वासंभवशंकां परिहरति विश्वामित्रेति। स हि, 'अन्यमिन्द्रं करिष्यामि लोको वा स्यादनिन्द्रकः' इति प्रतिष्ठमानो बहु ससर्ज। सर्वैरपि, "ब्रह्मा दक्षादयः" इति बहवो जीवाः स्रष्टार इष्टाः। स्फुरतीत्यस्य क्रियापदत्वे इत्यत इति पूरणीयम्, युक्ते स्फुरति सतीति पाठे तु नाध्याहारः। ननु कर्मजैश्वर्याणां पुंसां सर्वज्ञत्वं कथम्; न च विश्वामित्रादयः सर्वस्रष्टार इति चेत्—मा भूदेकः; कश्चित् किञ्चिदिति क्रमेण बहव एव यथायथं ज्ञातारः कर्तारश्च भवन्तु। न च सर्वज्ञकर्तृकत्वं साध्यते; किंतु उपादानाद्यभिज्ञकर्तृकत्वमेव। एकस्य कर्तृत्वे अर्थात् सर्वज्ञत्वसिद्धिः स्यात्। अनेकस्य तथात्वे परिमितज्ञा एव भवन्तु। दृष्टानुरोधादिदमेव युक्तम्। अतोऽनेकैरेव जीवैरन्यथासिद्ध्या नेश्वरसिद्धिः। इममर्थं भाष्योक्तमत्र श्लोके आनेतुकामाः विद्यमानपाठासौष्ठवञ्च पश्यन्तः सुप्रसिद्धश्रीकपिस्थलदेशिकाचार्याः, 'लघुत्वादनुमिति वशतः कर्मजैश्वर्ययुक्ताः विश्वामित्रादिनीत्या स्फुरिति विभुमिह' इति पाठमेवारोचयन्त॥ चिन्तामणौ, "तैरेव तत्तत्र विश्वसृष्टिः" इति बहुवचनं निरदेशि। तथाचानुमानस्यान्यथासिद्धिः अप्रयोजकत्वम् ईश्वरव्यक्तिनिरूपितव्याप्त्यसिद्धिरुक्ता भवति। सिद्धसाधनं वा॥

चि. टी. ४१. महाविद्यारूपमिति। उपरि वक्ष्यमाणानुमानस्य महाविद्येति नाम। सर्वत्रेदृशानुमानस्य सुवचत्वेन व्यापित्वात्। अत्र प्रमेयत्वस्य हेतुत्वात् केवलान्वय्यनुमानमेतत्। पूर्वं वीतावीतः अवीतश्चोक्तः। अयं केवलवीतः। शब्दानित्यत्वादिस्थापनस्थले ईदृशानुमानं पूर्वैर्दर्शितम्, तथा प्रकृतविषयेऽप्याह। महाविद्यानुमाने सर्वत्र विवक्षितसाध्यवद्वस्तु निर्दिश्य तन्निष्ठधर्मे स्वस्वेतरोभयावृत्तित्वरूपविशेषणं प्रवेश्य तद्वस्तुनिष्ठधर्माधिकरणमिति साधनरीतिः। स्वपदेन पक्षभूततत्तद्ग्रहणम्।

ननु जीवानामल्पज्ञत्वात् कथं महीमहीधराद्यतिशयितार्थकर्तृत्वमिति ; तत्राह—विश्वामित्रादि-नीत्येति। अस्त्वेकस्मिन्नण्डे विश्वामित्रः, अन्यत्र स नास्तीति चेन्न ; अन्यत्राप्यन्यस्य विद्यमानत्वात्। भवद्भिरप्यनन्ता एव योगिनः कल्प्यन्ते सर्वज्ञाः सर्वशक्तयश्चेति तैरेव तत्रतत्र विश्वसृष्टिः प्रवर्तताम् ; किमनेन नित्यज्ञानचिकीर्षाप्रयत्नवत्तया विजातीयतया परिकल्पितेन ? तथाच अन्यथा-सिद्धिदूषितानि कार्यताद्यनुमानानीश्वरमनुमातुं न प्रभवन्ति ॥ सर्वं कार्यमेककर्तृकं कार्यत्वादिति साधयाम इति चेत्—तर्हि अनेककर्तृकेषु घटपटादिषु व्यभिचारः ; अन्यथासिद्धिर्वा । न ह्येककर्तृ-कत्वाभावे कोऽपि विरोधः स्यात् । अनेककर्तृकं न भवति कार्यत्वादित्युक्तेऽप्ययमेव दोषः । तस्मादनुमानानामनेकदोषदुष्टत्वात् वेदान्तवाक्यानामप्राप्तत्वलक्षणं तात्पर्यलिङ्गमस्त्येव ।

महाविद्यानुमानाडम्बरस्तु विडम्बनेनैव विडम्ब्यत इति वयमत्र न विस्तृणीमहे ॥ ४१ ॥

**क्षित्याद्यं कार्यताद्यैः कटकमकुटवत् कर्तृपूर्वं स कर्ता**
**सिध्येद्राण्वदृष्टप्रभृतिजनकदृक् सर्वशक्तिश्च मैवम् ।**
**श्रोत्राद्यैः सौरभादिग्रहणरुचिरियं तादृशव्याप्त्यभावात्**
**सर्वं हेतुं न पश्येत् घटकृदिह(व) न चाकर्तृता तावताऽस्य ॥ ४२ ॥**

एवं कर्तुः सर्वज्ञत्वादिकं पक्षधर्मताबललभ्यमङ्गीकृत्य दूषणमुक्त्वा तदनङ्गीकारेणापि दूषणं वक्तुं तदेवानुमानं पुनरनुवदति—क्षित्याद्यमिति । अयमर्थः—क्षित्याद्यं कार्यत्वादिभिः सकर्तृकम्, स तु कर्ता, कर्तुरुपादानोपकरणसंप्रदानप्रयोजनाभिज्ञानापेक्षास्तीति क्षित्याद्युपादानरूपाण्वदृष्ट-प्रभृतिद्रष्टा भवति। तद्दर्शनं चास्मदादीनां न घटते। नदभिज्ञानशक्तिर्दूरत एव। तदिदमाह—

क्षितिग्रहणे क्षिति-अक्षित्युभयवर्ती धर्मः मेयत्वादिः । अतथाभूतो धर्मः क्षितित्वाक्षितित्वादिः । मेयत्वा-धिकरणे गगनादौ सकर्तृकघटादिनिष्ठक्षितीतरत्वरूपधर्मसत्त्वात् साध्यसत्ता । क्षितौ क्षितित्वमादायैव समन्वयः वक्तव्यः; तस्य सकर्तृकनिष्ठत्वोक्त्या सकर्तृकत्वमपि साधितं भवतीति ध्येयम्। **पक्षधर्मतावशात्** पक्षस्थित्यर्हं कीदृशमिति तद्योग्यताबलात्। **विडम्बनेनैवेति**। महाविद्यानुमानखण्डनार्थंप्रवृत्तेन **वादीन्द्रेण** कृतो **महाविद्याविडम्बनाख्यो** ग्रन्थः । तेनैव **विडम्ब्यते** खण्ड्यते परिह्रियते इति । वादीन्द्र-ग्रन्थमेयं तत्र कतिपयांशनिराकरणञ्च श्रीदेशिकचरणकृततत्त्वमुक्ताकलापसर्वार्थसिद्धौ बुद्धिसरे (47-50) द्रष्टव्यम् । तत्रासद्व्याख्यानमलभ्यलाभोऽपि द्रष्टव्यः। **न्यायपरिशुद्धा**वपि महा-विद्यानुमानविमर्शोऽस्ति । तदत्रेदृशानुमानमप्रयोजकमिति प्रागेवान्यथासिद्धिकथनेन व्यक्तम् । एषां कुमारवेदान्ताचार्यत्वादेतावद्दूरमत्र प्रस्तुतम् ॥ ४१ ॥

अन्वयव्यतिरेकिहेतौ सिद्धसाधनरूपदोषः प्रागुक्तः। तत्र बाधमपि वक्तुं प्रवृत्तः पूर्वं तत्र पक्षादिनिर्देशप्रकारस्यास्पष्टत्वात् तदप्यत्र विशदयति **क्षित्याद्यमिति** । अदृष्टादिसाक्षात्कारस्यापि साधनाज्जीवव्यावृत्तिरिति शङ्कामुद्भाव्य परिहरति च । अत्रानुमाने विश्वमेतदिति पक्ष इति न मन्तव्यम्। कार्यसामान्यस्य पक्षत्वे कटकादेर्दृष्टान्तत्वायोगात् । **कार्यत्वाद्यैः**=कार्यत्वात्, सावयवत्वात्, भोग्यत्वात् भोगसाधनत्वादित्यादिहेतुभिः। अल्पानल्पसर्वंवस्तुग्रहणाय **कटकमकुटे**ति दृष्टान्तद्वयोक्तिः। कर्तृपूर्वकत्वं साध्यम् । तच्च स्वोपादानोपकरणसंप्रदानप्रयोजनविषयकदर्शनादिपूर्वकत्वम् । **अणवः**

सर्वशक्तिरिति । प्रतिक्षिपति—मैवमिति । कुत इत्यत्रासाधकत्वे दृष्टान्तं तावदाह—श्रोत्राधैरिति । न ह्यन्येन्द्रियेणान्येन्द्रियविषयो गृह्यत इति । ननु तत्तदिन्द्रियाणां नियतविषयत्वादसामर्थ्यमस्तु ; अनुमानस्य पुनरनियतविषयत्वात् कथमिवासामर्थ्यमित्याशङ्क्याह—तादृशेति । अनुमानमपि नियतविषयमेव । येन यस्य प्रतिसम्बन्धः, तत् तस्यानुमापकमिति न्यायविदां सम्प्रदायः । अत्र पुनः प्रतिसम्बन्धो नास्ति । कथमित्यत्राह—रूपैमिति । अयमत्र विकल्पः—किं सर्वकारकद्रष्टा कर्ता? उत कतिपयकारकद्रष्टा ? पूर्वत्र कुलालस्यापि सर्वकारकद्रष्टृत्वं न विद्यते । न च तावता कर्तृत्वहानिः। उत्तरत्र क्षित्यादिकर्तुः कतिपयकारकद्रष्टृत्वं सिध्यतीति नेश्वरसिद्धिः ॥ ४२ ॥

**कार्यत्वात् स्यात् विवादास्पदमिदमखिलं सर्ववित्कर्तृपूर्वं**
**यन्नैवं तद्धि नैवं पुरुषवदिति नानन्यथासिद्धयभावात् ।**
**हेतावेतादृशात्मन्यविदुरभिदुरं व्याप्त्यसि(सि)द्ध्यादिदोषस्थ्यं**
**तद्भङ्गे लक्षणानामगणि गमनिका तत्त्वमुक्ताकलापे ॥ ४३ ॥**

एवमीश्वरानुमानेषु साधारणं दूषणमुपन्यस्य केवलव्यतिरेकिणोऽव्याप्तिकत्वात् साक्षादेव विवक्षितार्थप्रसाधकत्वेन परवादिभिः प्रबलतयाऽभिमतत्वाच्च शिष्यप्रतिबोधनार्थं विशेषतस्तत्स्वरूपमुपन्यस्य, तद्भङ्गे सर्वलक्षणविलोपप्रसङ्ग इति परोक्तं तर्काभासमपि निराकरोति-कार्यत्वादिति । इत्थं किलात्रानुमानप्रयोगः—सर्ववित्कर्तृकत्व-असर्ववित्कर्तृकत्वविवादास्पदमखिलमपि कार्यजातं सर्ववित्कर्तृकमेव कार्यत्वात्। यन्नैवं तन्नैवम् =यत् सर्ववित्कर्तृकं न भवति, तत् कार्यमपि न भवति ।

---

उपादानम् , अदृष्टमुपकरणम् । संप्रदानं भोक्ता, प्रयोजनं भोगः । अतस्तावत्साक्षात्कारतत्करणशक्त्युमयवान् अत्रानुमाने सिध्यति । न च जीवानामण्वदृष्टादिसाक्षात्कारप्रसक्तिरस्तीति जीवातिरिक्तसिद्धिरिति । निरस्यति मैवमिति । कतिपयविषयसाक्षात्कारस्य पर्याप्तत्वे स जीवानामेव सर्वत्र संभवतीति सिद्धसाधनमेव । दृष्टान्ते घटादौ कर्तुः अदृष्टादिविषयकसाक्षात्काराभावात् सर्वविषयकसाक्षात्कारवत्कर्तृकत्वरूपसाध्यवैकल्यम् । साध्यवैकल्ये च व्याप्त्यभावात् अनेनेश्वरसाधनरुचिः श्रोत्रेण गन्धग्रहणरुचितुल्या, तस्य तदयोग्यत्वात् । तादृशव्याप्त्यभावात् उपादानादिसर्वसाक्षात्कारिपूर्वकत्वरूपसाध्यनिरूपित-व्याप्त्यभावात् । इदमेव साध्यवैकल्यं हेतोस्तत्राप्रयोजकत्वञ्चाऽऽह सर्वमिति । यद्वा प्रथमपादे सकर्तृकं कार्यत्वादित्यनुमानमुक्तम् । द्वितीयपादेन सः तदुपादानादिविषयकसाक्षात्कारवान् तत्कर्तृत्वात् । यो यत्कर्ता स तदुपादानादिसाक्षात्कारवानिति पूर्वानुमानसाधितकर्तृपक्षकमनुमानान्तरमुक्तम् । तत्र व्याप्त्यभावव्यभिचारयोरुक्ति रुत्तरार्धेन । घटकृदिवेति पाठे पश्येदित्यस्य क्षित्यादिकर्ता कर्ता ॥४२॥

घटादौ दृष्टान्ते सर्वज्ञत्वघटितसाध्यायोगात् तदघटने च जीवैरन्यथासिद्ध्या सर्वज्ञासिद्धावपि अवीतहेतुना तत्साधनं शक्यमिति शंकमानं प्रत्याह कार्यत्वादिति । अत्र न क्षित्यादिकमेव पक्षः । किंतु घटादिक्रोडीकारेण विश्वमिति । नन्वीश्वरसाधनेऽपि तस्य सर्वकर्तृत्वासिद्धिः क्षित्यादावेव तत्साधनादिति शंका चानेनानुमानेन परिहृता । विवादास्पदमित्यनेन अणुगगनादिनित्यव्यावृत्तिः । घटादिक्रोडीकाराय अखिलपदम् । सर्वज्ञकर्तृकत्वं साध्यम् , यत् एवं=सर्वज्ञकर्तृकं न भवति, तत् अण्वादि एवं=कार्यमपि न भवति। हि इति व्यतिरेकप्रसिद्धिसूचनम्। पुरुषो जीवः। तस्याप्यकार्यत्वात् दृष्टान्तता ।

साध्याभावे हि साधनाभावकथनं व्यतिरेकव्याप्तिप्रदर्शनमिति न्यायविदः। पुरुषवदिति आत्मवत्। सौगतव्यतिरिक्तानां सर्वेषामपि वादिनामात्मा नित्यत्वेनैव निर्णीयत इति दृष्टान्तसिद्धिः। उक्तमर्थं प्रतिक्षिपति—नेति। तत्र हेतुमाह—अनन्यथेति। अनन्यथासिद्धिर्हि प्रमाणानां प्रामाण्यनियामिका। अनन्यथासिद्ध्यनङ्गीकारे हि सर्वेषामनुमानाभासादीनां कक्षीकारः प्रसज्येत। अन्यथासिद्धम-प्रयोजकं व्याप्यत्वासिद्धमनुकूलतर्करहितं प्रतिकूलतर्कपराहतं सोपाधिकं सन्दिग्धव्याप्तिकमित्येता-दृशान् शब्दान् प्रायेण पर्यायत्वेन प्रयुञ्जते प्रवावदूकाः। अत्र पुनरित्थमन्यथासिद्धिः—सर्ववित्कर्तृ-पूर्वत्वं मा भूत्, कार्यत्वमस्त्विति। अकर्तृकत्वे कार्यत्वं न स्यादिति हि तर्कः परिशुद्धः। त्वदुक्तः पुनः अपरिशुद्ध एव; व्यर्थविशेषणत्वात्, अन्ततः सोपाधिकत्वाच्च। अकर्तृकत्वमेवाकार्यत्वे प्रयोजकम्, न पुनः सर्वज्ञकर्तृकत्वाभाव इति ह्यस्माभिरुच्यते। ननु कश्चित् केवलव्यतिरेक्यनङ्गीकारे सर्वमपि केवलव्यतिरेक्यनुमानजातं लोलुप्येतेत्याशङ्क्य, 'लुप्यतामेव; दूषणतौल्यात्' इत्याह—हेताविति। विचक्षणा एतादृशात्मनि=व्यतिरेकिहेतौ सर्वत्रापि व्याप्त्यसिद्ध्यादिदौस्स्थ्यं प्रतिपद्यन्ते। ननु केवलव्यतिरेकिभङ्गे लक्षणानां व्यतिरेक्यनुमानरूपत्वात् तद्भङ्गे लक्षणस्यापि भङ्ग इति महानयं प्रहारो भावत्कानामित्याशङ्क्य व्यतिरेकिभङ्गेऽपि लक्षणं तत्प्रयोजनं च सिध्यतीति तत्त्वमुक्ताकलापे व्यक्तमुक्तमिति परिहरति—तद्भङ्ग इति। अयमर्थः-लक्षणं व्यतिरेकि मा भूत्। अन्वयव्यतिरेकित्वे पुनः सप्रयोजनमेव तत्। लोके ह्यम्बातातमातुलादिभिर्बहुशः शिक्षिता बाला गवादिशब्दांस्तेषु-

---

निरस्यति नेति। अनन्यथासिद्धिः व्याप्तिः तदभावात्। अन्यथासिद्धत्वादिति नार्थः, अप्रयोजकत्वादिति तदोक्तं भवेत्। अप्रयोजकत्वं हि क्वचित्साध्यहेतुसामानाधिकरण्यसत्त्वे वक्तव्यम्। साध्यस्यैवाप्रसिद्धौ सामानाधिकरण्यस्य का प्रसक्तिरिति। वस्तुतः केवलव्यतिरेक्यनुमानसामान्यं नेष्टमित्याह हेताविति। एतादृशात्मनि। आत्मा स्वरूपम्। व्यतिरेकव्याप्तिरूपस्वरूपविशिष्टत्वाभिमते हेतौ दौःस्थ्यं हेतुदौस्स्थ्यं व्याप्त्यसिद्ध्यादिरूपं अभिदुरम् अभेद्यम् अविदुः अजानन् भगवद्यामुनाचार्यादयः। व्यतिरेक-व्याप्तिर्हि साध्याभावनिष्ठा हेत्वभावनिरूपितव्याप्तिः। सा अपेक्षितहेतुनिष्ठसाध्यव्याप्तिरूपा कथं भवेत्। अन्वयव्याप्तिसिद्धिस्थलेऽपि व्यतिरेकव्याप्तिस्तर्हि न वक्तव्येति चेत्—एकेनैव कार्यसिद्धौ अन्यदन्यथासिद्धमेव। उपपादनं तु केवलं दाढर्याय। आदिपदेन साध्याप्रसिद्धिपरिग्रहः। साध्य-प्रसिद्धिस्थले व्यतिरेकव्याप्तिः स्यान्नाम, यदि न दोषान्तरम्। अन्यत्र तु नेति। व्याप्तिसिद्धीति पाठे व्याप्तिसिद्ध्यादिकस्य दुःस्थतामित्यर्थः। ननु केवलव्यतिरेक्यनंगीकारे सर्वत्र लक्षणोक्तिरेव भज्येत। लक्षणं हि इतरभेदानुमानार्थम्। तत्र केवलव्यतिरेकित्वमेव। तत्र चेतरभेदस्यान्यत्राप्रसिद्ध्याऽनुमानायोगः स्यादित्यत्राह तद्भिं। केवलव्यतिरेकिभंगेऽपि लक्षणं सुस्थम्। लक्षणानां गमनिका कार्यकरत्वं तत्त्वमुक्ता-कलापे (4-54) उक्ता। लक्षणमितरभेदानुमापकमिति नेष्यते। अस्मन्मते भावातिरिक्ताभावाभावात् भेदरूपलक्षणे सिद्धेऽनुमानाप्रसक्तेः। ननु, 'व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनम्' इति गोलक्षणादिना गोशब्दव्यवहार्यत्वं यदा साध्यते, तदा केवलव्यतिरेकि स्वीकार्यम्, गोसामान्यस्य पक्षतया, गोशब्द-व्यवहार्यत्वस्यान्यत्राभावेन चान्वयव्याप्त्ययोगादिति चेत्-बालशिक्षावसरे गोविशेषे गोशब्दव्यवहार्यत्वस्य पित्रादिदर्शिततया तद्भिन्नमात्रपक्षीकारेण तत्रान्वयव्याप्त्युपपादनसंभवात्। किञ्च सास्नादिमान्

तेष्वर्थेषु वाचकत्वेन प्रतिपद्यन्ते । तादृग्भूतानुमानादिषु व्याप्तिग्रहणतुल्यमेतत् । ततश्च कश्चिद्बालो दूरावस्थितां गोव्यक्तिं दृष्ट्वा सहसैव निर्धारयितुमशक्तः शङ्कते कोऽयमिति । तत्रान्वयव्यतिरेकि-रूपमनुमानं प्रवर्तते, अयं गौरिति व्यवहर्तव्यः सास्नादिमत्त्वात् मातापित्राद्यभिहितप्राचीन-गोपिण्डवदिति। सार्वलौकिकीयं मर्यादा न्यायविदामप्यनुसर्तव्येति सुष्ठूक्तम्॥ ४३ ॥

**यद्यप्यात्मान्तरादेरनुमितिरनघा लिङ्गभेदैस्तथाऽपि**
**प्रत्यक्षव्याप्तिशैली न खलु शिथिलिता कुत्रचित् पक्षभेदे ।**
**आम्नाये त्वदृष्टोक्तिर्न भवति वितथा तादृशाप्तोक्तिरीत्या(नीत्या)**
**बाधाभावादिसाम्याद् विहतिमति भवेल्लोकवद् गौणतादि ॥ ४४ ॥**

यदीश्वरानुमानं न स्यात्, विप्रतिपन्नं शरीरं सात्मकं प्राणादिमत्त्वादिति भवद्भिरभिधीयमानं परात्मानुमानमपि भज्येत । यदि परात्मानुमानमङ्गीकुरुषे, अङ्गीकुरुष्व त्वमीश्वरानुमानमपि; तस्यापि परात्मत्वादित्याशङ्क्य विषमोऽयं दृष्टान्त इत्याह—यद्यपीति । वैषम्यमेव दर्शयति—तथाऽपीति । लिङ्गभेदैरात्मान्तरानुमानसद्भावेऽपि तत्र प्रत्यक्षव्याप्तिमर्यादाभङ्गाभावादौचित्यमेवावतिष्ठते । ईश्वरानुमाने तु तद्भङ्गादनौचित्यमेव । न हि लोके कश्चित् कर्ता नित्यज्ञानचिकीर्षा-प्रयत्नवान् दृश्यते । न च निष्प्रयोजनः कर्ताऽस्ति । ईश्वरस्यापि सप्रयोजनत्वे जीवत्वप्रसङ्ग इत्यादि-बहुदोषदुष्टत्वात् न्यायवादिनामिष्टमिदमनुमानं कष्टमेव; असंभावितादृष्टार्थपरिकल्पनाबाहुल्यात् । तर्ह्यदृष्टार्थोपवर्णनं शास्त्रस्यापि न स्यादित्याशङ्क्याह—आम्नाये त्विति। तुशब्दो विशेषमाह। शास्त्रे ह्यपूर्वार्थकथनं भूषणमेव । 'शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानम्' इति तान्त्रिकैरुपवर्णनात् ।

---

गोशब्दवाच्यः इति लक्षणवाक्ये सास्नादिमत्त्वरूपलक्षणस्योद्देश्यतावच्छेदकतया उद्देश्यतावच्छेदक-व्यापकत्वस्य विधेये भानस्य व्युत्पत्तिसिद्धतया व्याप्तिरासवाक्येनैव बोधितेति सपक्षान्वेषणं विना वाक्योपदिष्टव्याप्तिज्ञानादेव व्यवहार्यत्वानुमानं संभवतीत्यपि ध्येयम्। एतेन ब्रह्मकालाद्येकव्यक्तिलक्षणस्थले पक्षसपक्षरूपव्यक्तिद्वयासंभवात् शब्दव्यवहार्यत्वानुमानं कथं व्यतिरेकव्याप्तिं विनेति शंकाया अपि नावकाशः, जगत्कारणं ब्रह्मशब्दार्थ इति वाक्यत एव तत्सिद्धेरनुमानानवकाशादित्यलम् ॥४३॥

ननु जीवविलक्षणपरमात्मानुमानं चेत् दुस्साधम्, परात्मसामान्यमेव तर्हि नानुमानतः सिध्येत, प्रबलदुर्बल-पण्डितपामर-धनिकदरिद्रादिरूपेषु एकजीवापेक्षया जीवान्तरस्यापि विलक्षणत्वादित्यत्राह यद्यपीति। "प्रवृत्तिनिवृत्ती च प्रत्यगात्मनि दृष्टे परत्र लिङ्गम्" (वै. द.) इति प्रवृत्तिनिवृत्तिरूपचेष्टाबलात् स्वात्मातिरिक्तानुमानं युक्तम् । एवं चेष्टया ज्ञानप्रयत्नाद्यनुमाय तैर्ज्ञानादिभिः परात्मानुमानमपि युक्तम् । तत्र कुत्रचित् पक्षभेदे=पण्डितादिप्रवृत्त्यादिरूपेषु पक्षेषु सर्वत्र हेतोः साध्यव्याप्तेः प्रत्यक्षायाः रीतिर्न भज्यते; कर्ममूलत्वदेहाधीनत्वादीनां सर्वपुरुषज्ञानप्रयत्नादिष्वविशिष्टत्वात्' नन्वनुमतित्यनघत्वं प्रति व्याप्तिशैथिल्याभावस्य हेतुतया तयोर्हेतुसाध्यभावे कथनीये यद्यपि तथापीति प्रयोगो व्यर्थोऽशक्यश्चेति चेन्न —"श्रौतीमेवाऽऽत्मसिद्धिं श्रोत्रियाः संगिरन्ते" इति आत्मसिद्धिग्रन्थे परमात्मन इव परात्मनामपि श्रौतत्वमेवेति पक्षस्योक्त्या तत्सद्भावसूचनार्थं यद्यपीति प्रयोगात्। तथापीत्यस्यान्वयस्तु परमात्मानुमितिः साधैवेत्यध्याहृतपदे भाव्यः। नन्वेवमुपजीवित्वात् प्रत्यक्षस्य, तदननुरूपमनुमातुं न शक्यते चेत्, तथैवोप-

लोकदृष्टक्रमाख्यामुमर्थमुपपादयति—तादृशेति । लोके हि देशान्तरादागतः कश्चिदत्यन्तादृष्टपूर्वमिष्टादिकमाचष्टे । स चाऽऽप्तत्वादप्रतिक्षेप्य एव । तथा वेदेऽपि कारणदोषादिरहिते प्रामाण्यस्यावर्जनीयत्वात् । ननु देशान्तरादागतपुरुषवाक्यं क्वचिदप्रमाणमपि स्यात् । ततस्तद्बाधकप्रमाणसद्भावेऽप्रमाणम्, तदभावे प्रमाणमिति स्वतः प्रामाण्यन्यायसिद्धं प्रामाण्यमवतिष्ठते ॥ एतदिहापि समानम् । तदिदमाह—बाधेति । तत्रापि 'आदित्यो यूपः', 'यजमानः प्रस्तरः' इत्यादीनां बाधो दृश्यत इत्याशङ्क्याह—विहतिमतीति । अयमाशयः—द्वयं खल्वर्थवादवाक्यमबाधितं बाधितं चेति । 'यन्न दुःखेन संभिन्नम्' इत्यादिकमबाधितम् । तच्च प्रतिपन्नार्थपरतया तथैवावतिष्ठते । 'आदित्यो यूपः', इत्यादिकं बाधितम् । तत् मुख्यार्थं परित्यज्यौपचारिकार्थे वर्तते । स चात्र प्राशस्त्यादिरेव । तस्मात् बाधितमबाधितं वा वेदवाक्यं सार्थकमेवेति सुशोभनमेतत् ॥ ४४ ॥

नन्वाम्नायप्रधानाः क्वचिदनुकथयन्त्यसदादेरशक्यैः
कार्यैः कर्ताऽनुमेयः पर इति तदभिप्रैतु(ति) जन्मादिवाक्यम् ।
तस्मादीशा(शेऽ)नुमानस्यजनमनुचितं वैदिकस्येति चेन्न
काप्यौचित्योपदेशात्, यत इति च सद्युक्तिसिद्धानुवादात् ॥ ४५ ॥

इति शास्त्रयोनित्वाधिकरणम् ॥ ३ ॥

अत्र पूर्वपक्षवादी पुनश्चोदयति—नन्विति । इत्थं किल तदभिप्रायः—लोके हि भवन्मतानुसारिणः सर्वेऽपि, ब्रह्मादिपिपीलिकान्तस्य विचित्ररचनस्य नारायणमन्तरेण सृष्टिर्न संभवतीति

---

जीविना शब्दप्रमाणेनापि न बोधयितुं शक्यमिति शास्त्रतोऽपि विलक्षणेश्वरासिद्धिरेवेत्यत्राह आम्नायेत्विति। अदृष्टुमस्य दृष्टविलक्षणस्योक्तिर्न वितथा—न बाध्यते ; लोके आप्तोक्तेः प्रत्यक्षाननुरूपार्थपरायाः प्रामाण्यदर्शनात् । यथा स श्यामो मित्रातनयत्वादिति मित्रातनयानामन्येषां श्यामत्वेन प्रत्यग्रजातस्यापि श्यामत्वे उन्नीयमाने साक्षात् द्रष्टा कश्चित् समागत्य ब्रवीति, शिशुः श्वेत इति । तदा सामान्यदृष्टयोन्नयनं परित्यज्य तदेव स्वीकुर्मः । तथा ईश्वरानुमाने सामान्यतो दृष्टबलात् जीववैलक्षण्यमसंभव्यपि आप्तशास्त्रबलात् स्वीकर्तुं साम्प्रतम् । बाधाभावादिसाम्यात् । आदिना दोषमूलकत्वाभावग्रहणम् । यत्तु प्रत्यक्षदृष्टवस्तुविषयकमेव शास्त्रं तस्य दृष्टविरुद्धाकारप्रतिपादकम्, 'आदित्यो यूपः' इत्यादि, तत्र तु विहतिमति बाधितवाच्यार्थकत्वात् गौणार्थान्तरकल्पना, लक्षणा वा; न त्वप्रामाण्यम्, आप्तवाक्यत्वात् । सिंहो माणवक इत्याप्तोक्तलौकिकवाक्यवत् । तत्र माणवके सिंहत्वस्यासंभवेऽपि क्रौर्यरूपगुणविवक्षया प्रामाण्यनिर्वाहः । ९दुक्तं तत्त्वद्विपेटिकायाम् ॥ ४४ ॥

अस्याधिकरणस्यैवं रचना न युक्तेति शंकते नन्विति । आम्नायः प्रधानं श्रेष्ठप्रमाणं येषां ते, प्रत्यक्षाविरुद्धं सर्वमाम्नायोक्तप्रकारेणैव निर्धार्यमिति तद्भावयार्थपरिशीलनैकतत्पराः महान्तः क्वचित्=स्वस्वग्रन्थे अनुकथयन्ति पुनःपुनराहुः । यद्वा तार्किकोक्तरीतिं स्वयं संमत्य अनुवदन्ति । किमिति । तदाह असदिति । घटपटादिशक्यक्रियकार्यविलक्षणैः क्षितिसमुद्रादिभिरस्मादृशाशक्यैः जीवसामान्यदुष्करैः परः जीवविलक्षणः कर्ता अनुमेयः अनुमानेनैव साधयितुं शक्य इत्यनुकथयन्ति । क्षित्यादिकं जीवविलक्षणकर्तृक जीवाशक्यकार्यत्वादिति वाऽनुमीयताम् । सामान्यतः सकर्तृकं कार्यत्वा

सर्वैथा(था) वदन्ति। तदेव केचित् प्रबन्धेषु प्रकरणरूपेषु युक्तिभिः प्रतिष्ठापयन्ति। तदेवानुमानम्। तच्चाभिप्रैति जन्मादिवाक्यम्। तस्मादनुमानमेव परस्मिन् ब्रह्मणि प्रमाणम्। तस्मादनुमानस्य जगत्कर्तृसाधने प्राबल्यमित्यनुमानसिद्धानुवादमात्रमेतत् जन्मादिवाक्यम्। अनुवादत्वं च, 'यतो वा इमानि' इति यच्छब्दयोगादवगम्यत इत्येतस्मादेव हेतोर्वैदिकस्य भवत ईश्वरानुमानत्यजनमनुचितमिति। तदिदं प्रतिक्षिपति—नेति। तत्र हेतुमाह—क्वापीति। औचित्यम्=योग्यतातिशयः। नारायणस्यैव कारणत्वे श्रुतिपुराणेतिहासलोकप्रसिद्ध्यादयो भूयांसः संवदन्त इत्यास्माकानां प्रवादः। न च तावताऽनुमानगम्यत्वमेवेति प्रतिष्ठाप्यते। केषांचिद्ग्रन्थनिदर्शनेऽपि, 'यस्तर्केणानु-

---

दित्यनुमानमेव जीवविलक्षण एव विश्राम्यतीति बोध्यतामिति। यद्वा कार्यैरित्यनेन, 'कार्यायोजनधृत्यादेः पदात् प्रत्ययतः श्रुतेः। वाक्यात् संख्याविशेषाच्च' इति उदयनकारिकोक्तानाम् आयोजनं धृतिः संहारः वृद्धव्यवहारः वेदसंप्रदायप्रामाण्यं वेदः वाक्यत्वं संख्याविशेष इत्यादीनां यथासंभवं ग्रहणम्। उदयनाचार्यैरपि, 'उपासनैव क्रियते श्रवणानन्तरागता' इति वेदार्थश्रवणानन्तरकार्यमननरूपं भगवदुपासनमेव स्वग्रन्थेन क्रियते इत्युक्त्वा तत्रतत्रानुमाने आगमसंवादस्यापि प्रदर्शिततया, आगमोऽपि मानम्, अनुमानमपीति प्रमाणसंप्लवस्य स्वीकृततया तथैवास्तु इति मन्येरन् आम्नायप्रधानाः। न्यायसिद्धाञ्जने, "न्यायतत्त्वे प्रमातृपादे चेतनस्यैव कर्तृत्वप्रतिपादनप्रकरणे, 'उच्यते। कर्तृकरणकर्माणीति त्रीणि कारणानि क्रियाविशिष्टानि। तेषामन्यतमाभावे क्रिया न युज्येत' इति। अत्रापीश्वरानुमानानुमतिर्दृष्टा" इति, "स्वपक्षे तु तेषां संभावनातर्कत्वमेव। तदनुगृहीतस्त्वागम एव प्रमाणम्। अत एव न्यायतत्त्ववचनमपि निर्व्यूढम्" इति चोक्त्या आम्नायप्रधानपदमस्मत्पूर्वाचार्यग्राह्यपि। ईश्वरसिद्धिग्रन्थो यथा तथा भवतु। इयमेव रीतिर्युक्तेति श्रुतितोऽपि ज्ञायते। जन्मादिवाक्यं जन्मस्थितिलयप्रतिपादकं यतो वा इमानीति वाक्यं हि यच्छब्दघटितत्वात् प्रमाणान्तरप्राप्तकारणत्वस्यानुवादेन ब्रह्मशब्दार्थत्वविधायकमिति स्पष्टम्। तच्च प्रमाणमनुमानमेवेति वेदेनाप्यनुमानमनुमतम्। अत ईश्वरानुमानदूषणं श्रुति-महदुक्ति-संप्रदायविरुद्धम्। त्यजनमनुचितम्—वेदेश्वरविदूषकत्वायत्तप्रत्यवायहेतुश्चेति पूर्वः पक्षः। निरस्यति नेति। क्वापि भवदभिमतग्रन्थेषु आम्नायप्रधानैः कथनमौचित्योपदेशमात्रम्। आम्नायैरर्थे निर्धारणीये अनुकूलतर्कस्यापि सहकारितया प्रतिकूलतर्कपराहत्यै औचित्यप्रदर्शनमात्रम्; "आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना। यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः" इति अङ्गतयाऽपेक्षितस्य तर्कस्य प्राधान्यायोगात्। तत्प्राधान्यस्वीकारे तु कर्तृसिद्धावपि तस्य लोकदृष्टन्यायेन कर्माधीनज्ञानशक्तिशरीराद्यावश्यकतया जीवादिवैलक्षण्यं न सिध्येत्। वेदविरोधेन तत्परिहारे च वेद एव प्रमाणमित्युक्तप्रायम्। एवं तर्हि, 'यतो वै' इति यच्छब्दनिर्देशस्य कथमुपपत्तिरिति चेत्-'सदेव सोम्य' इत्यादीनां बहूनां कारणवाक्यानां श्रुतिरूपाणां विद्यमानतया तदवगमितं कारणमनूद्य ब्रह्मत्वविधानमिति न दोषः। अन्यथा, 'यत् प्रयन्त्यभिसंविशन्ति' इति लयस्थानत्वेनेश्वरानुवादो न घटते। अनुमानेन निमित्तकारणत्वमात्रस्यैवोक्ततया तस्य लयस्थानत्वासंभवात्। न च, 'वकूलाणि ते त्वरमाणा विशन्ति

सन्धत्ते स धर्मं वेद नेतरः' इत्युक्तप्रक्रियया ऽऽगमानुकूलतर्कमात्रमनुमन्यते । न पुनः आगमविरुद्ध-निमित्तमात्रेश्वरानुमानं परवादिभिरुपकल्पितं प्रमाणतया प्रतिष्ठाप्यते । यत इत्यनुवादध्यास्य पूर्व-प्रसिद्धिमात्रमेवाऽऽक्षिपेत् । न पुनरनुमानेनैव प्रसिद्धिम् । अत्र तु प्रसिद्धिः पुरुषसूक्तादिवाक्यैरिति पूर्वमेवोक्तमस्माभिः । इह च सद्विद्योपादानं सर्ववाक्योपलक्षणम् ॥ ४५ ॥

अथ समन्वयाधिकरणम् ॥ ४ ॥

सूत्रम् । तत्तु समन्वयात् ॥ १-१-४ ॥

कर्तव्ये ह्यर्थ उक्ते निशमयितृफलं सिद्धरूपे तु न स्यात्
प्रीत्या साफल्यक्लृप्तौ(सिद्धौ) वितथमपि वचः किं न दृष्टं तदर्थम् ।
विद्यार्थत्वेऽन्यदृष्टेर्विषयवदनृतं तत् परीक्ष्यं न भावी-
त्याक्षेपेऽनन्यशेषे(षं) निरवधिकसुखे शास्त्रतात्पर्यमाह ॥ ४६ ॥

एवं सिद्धपराणां वेदान्तवाक्यानामप्राप्तत्वलक्षणं तात्पर्यलिङ्गं प्रसाध्य साफल्यलक्षणं तात्पर्यलिंगं समन्वयाधिकरणेन साध्यत इति संगतिः । अथवा शास्त्रयोन्यधिकरणे तार्किका निरस्ताः; अधुना तान्त्रिका निरस्यन्त इति । एवं वा पूर्वं निमित्तमात्रेश्वरवादिनो निरस्ताः; इदानीं निरीश्वरवादिन

---

दंष्ट्राकरालानि भयानकानि'' इत्युक्तरीत्या निर्वाह इति शंक्यम्; आनुमानिकेश्वरस्याशरीरत्वेन तस्याप्य-संभवात् । ननु यावान् अंशोऽनुमानेन सुसाधः, तावति सिद्धे तादृशं कर्तारमनूद्य उपादानत्वसर्वज्ञत्व-शाश्वतलोकाधिपतित्वादिकं शास्त्रेण ज्ञाप्यत इत्येवास्त्विति चेन्न; तदाऽनुमानस्यैव धर्मिग्राहकत्वात् धर्मिग्राहकमानविरोधादिशंकया वेदस्यापार्थवर्णनापत्तेः । विस्तरो न्यायसिद्धाञ्जने । उदयनाचार्यास्तु अनुमानस्य प्राधान्यमभिमत्य अनुमानसिद्धसंवादरूपेणैवाऽऽगमं दर्शयन्तीति तदन्यत् ॥ ४५ ॥

चि. टी. सद्विद्योपादानमिति । श्लोकस्थस्य सदाद्युक्तीति पदस्य सच्छब्दः आदिर्यस्यामुक्तौ सा सदाद्युक्तिरित्यर्थात् सद्विद्येत्यर्थः। इतरानुवृत्त्या तदुपलक्षणत्वमुक्तम्। आदिपदेन ब्रह्मात्मनारायणादि-ग्रहणेन सदादीनामुक्तयः इत्यर्थवर्णने तु सर्वकण्ठोक्तिरेव ।

समन्वयाधिकरणे भाष्ये पूर्वपक्षो विस्तृतः । तत्राऽऽक्षेपसंगतिं निष्कृष्टपूर्वपक्षसिद्धान्तौ चाऽऽह सारावलिः प्रथमश्लोकेन । भाष्योक्तरीतिस्तु—शब्दानां सिद्धरूपार्थप्रत्यायकत्वेऽपि शास्त्ररूपशब्दस्य प्रवृत्तिनिवृत्त्यन्यतरोपदेशकत्वाभावे प्रयोजनपर्यवसानायोगात् निष्प्रयोजनसिद्धभूतप्रधानार्थपरत्वे प्रामाण्यं नास्तीति किं तादृशशास्त्रविचारेणेति प्रधानपूर्वपक्षो मीमांसकस्य । तं प्रति विधिशेषत्वं स्वीकृत्य प्रयोजन वत्त्वोपपादनमद्वैतिभिरारब्धम् । तत्र प्रथमं निष्प्रपञ्चीकरणनियोगवादिना स्वाभिमतं विधिशेषत्वमा-वेदितम् । तत् खण्डितं मीमांसकेन । अथान्योऽद्वैती ध्याननियोगवादी प्रत्यवतस्थे । स विधिशेषत्वं विनैव निर्वहणपरं शांकरमतं, प्रसंगात् भास्करमतञ्च निरस्यन् स्वमतं प्रास्तौषीत् । तमपि निरस्य स्थिते मीमांसके सिद्धान्तिना स निरस्तः विधिशेषत्वं विनैव प्रामाण्यमुपपाद्य । विधिशेषत्वमन्वारुह्यापि मीमांस कोक्तं निरस्तम् । तत्र मुख्यपूर्वपक्षसिद्धान्तौ वर्ण्येते कर्तव्ये इति । निशमयितुः=श्रोतुः फलं शास्त्रेण कर्तव्येऽर्थे उक्त एव स्यात्; न तु सिद्धरूपेऽर्थे उक्ते । सन्ति लोकान्तरेऽपि प्राणिन इति कथा-

इति । विषयस्तु शास्त्रारम्भ एव प्रधानः । अवान्तरविषयः पुनः अशेषमपि वेदान्तवाक्यजातम् । संशयकारणं वैदिकानामवैदिकानां प्रामाण्याप्रमाण्यसाधारणम् । तदर्थविचारस्तु—वेदान्तशास्त्रमारम्भणीयमनारम्भणीयं वा [इति] । तदर्थं विचार्यते—सिद्धे ब्रह्मणि वेदान्तवाक्यानां स्वातन्त्र्येण विधिशेषत्वेनापि वा प्रामाण्यं संभवति न वेति । स्वातन्त्र्यपक्षे तात्पर्यलिङ्गमस्ति न वेति । तदर्थं विचार्यते—वेदान्तानां ब्रह्मप्रतिपादने सप्रयोजनत्वमस्ति न वेति । तत्र प्रयोजनवत्त्वं वाक्यानां स्वरूपप्रतिपत्त्या स्वादार्थत्वमात्रेण उत कार्यरूपप्रयोजनपरत्वेनेति । स्वादार्थत्वे पुनः अर्थमिथ्यात्वेऽपि प्रयोजनपरत्वमस्ति न वेति । फलफलिभावस्तु—स्वादार्थत्वेऽर्थमिथ्यात्वेऽपि प्रयोजनसिद्धेर्ब्रह्मयाथात्म्याभावात् प्रवृत्तिनिवृत्तिप्रयोजनपरत्वेऽपि वाक्यस्यान्यपरत्वेन परब्रह्मयाथात्म्याभावस्याविशिष्टत्वात् निष्प्रयोजनत्वेन तात्पर्यलिङ्गाभावादर्थसद्भावे स्वातन्त्र्येण पारतन्त्र्येण वा वाक्यप्रामाण्याभावात् वेदान्तशास्त्रमनारम्भणीयमिति पूर्वपक्षे । सिद्धान्ते वैपरीत्येन वर्णनीयः(यम्) । शेषं सुगमम् ।

अत्र पूर्वपक्षमाह—कर्तव्य इति । 'स्वर्गकामो यजेत' इत्यादौ कर्तव्यार्थे प्रतिपादिते श्रोतुः फलं स्यात् । न पुनरष्टौ काकदन्ता इत्यादौ सिद्धरूपप्रतिपादने । इयं हि लोकमर्यादा ।

---

श्रवणमात्रात् किं फलं भवति । अत्र प्रवृत्तिपरशास्त्रस्येव निवृत्तिपरशास्त्रस्यापि पूर्वपक्षिणा साफल्यस्योक्तत्वात् **कर्तव्ये** इति एकमात्रकथनं कथमिति चेत्—**कर्तव्ये** इत्यस्य कर्तुं शक्ये इत्यर्थः, कृतिसाध्ये सिद्धविलक्षणे कर्मणि **उक्ते**=यागादिवत् कार्यत्वेन वा सुरापानादिवत् अकार्यत्वेन वोक्ते सति क्रमेण प्रवृत्तिनिवृत्त्यन्यतरसिद्ध्या निशमयितुः फलमित्युक्तं भवति । ननु सिद्धपरवाक्यश्रवणेऽप्यर्थबोधे प्रीतिर्जायते, पुत्रस्ते जात इत्यादाविति चेत्—एवं प्रीतिमादाय साफल्यकल्पने, वचो वितथमपि स्यात् । न प्रामाण्यनियमः । तदुपपादनमुपरि । **वितथमपि वच** इति पदं पुनरावर्तते । बाधितार्थकमपि वाक्यं **तदर्थं** प्रीतिजनकं लोके किं न दृष्टमिति तत्र हेतुः । यद्वा **वितथ**मिति नानुषज्यते । वचः **तदर्थं** वितथार्थकं न दृष्टं किमित्यर्थः । वाक्यमेवमकृत्वा वितथमपीत्यादिकमेकवाक्यं कुर्वन्ति च । अजातेऽपि पुत्रे कश्चित् मिथ्या कथयति ; श्रोता च प्रीतो भवति । अतो ब्रह्मरूपवस्तुसत्यत्वेऽपि तत्संभवात्र तद्विषये वाक्यस्य प्रामाण्यम् । अत्र सिद्धान्तिना प्रथमाधिकरणप्रभृति सिद्धप्रधानकत्वस्यैव वेदान्ते स्वीकृतत्वात् कार्यार्थत्वान्वारोहे चाप्रवृत्तत्वात् विधिशेषत्वपक्षमुद्भाव्य तन्निरसनं पूर्वपक्षिणा न कर्तव्यम् । अथापि ध्यानविधिशेषत्वस्य श्रीभाष्ये प्रस्तुतत्वात् तस्य तेन पूर्वपक्षिणा खण्डितत्वात् स्वसामर्थ्यप्रकटनलोभेनास्मान् प्रत्यपि मीमांसकेन स पक्ष उद्भावितः । प्रीत्यर्थत्वे वैतथ्यस्योद्भावितत्वात् विध्यर्थत्वमन्तरा निर्वाहायोगात् तदेवाऽऽश्रयणीयमिति तत्र सिद्धान्तिनमवस्थाप्य निरस्यति **विध्यर्थे**ति । सिद्धान्तिना भवता विधिशेषत्वमिष्यते चेत्—तत् किं कर्मकाण्डोक्तकर्मशेषत्वम् , उतोपनिषदुक्तोपासनशेषत्वम् । नाद्यः ; अस्माभिः कर्मशेषभूतकर्तृस्तावकतयाऽर्थवादत्वस्यात एव पृथगविचार्यत्वस्य चोक्ततया शास्त्रमनारम्भणीयमेव स्यात् । उपासनशेषत्वे तु ध्येयमनृतमपि भवेत् । **अन्यदृष्टेर्विषयवत्** । 'गरुडमात्मानं जानीयात्', 'मनो ब्रह्मेत्युपासीत', 'आदित्यो ब्रह्मेत्यादेशः' इत्यादौ अन्यस्मिन् अन्यदृष्टिः क्रियते ।

इयमेव मर्यादा वेदेऽप्यङ्गीकार्या; य एव लौकिकास्त एव वैदिका इति न्यायात्। तेनोपनिषदामूषरप्रायत्वमेव। ननूपनिषदामूषरप्रायत्वं प्रथमाधिकरणेऽप्युच्यत इति पौनरुक्त्यम्; न पुनरुक्तिः–तत्र पदार्थप्रतिपत्तिर्न संभवतीति पूर्वपक्षः, अत्र पुनर्वाक्यार्थप्रतिपत्त्यनुपपत्तिकथनेनेति विभागः। विभागान्तरमपि—तत्र केवलं नियोगवाक्यार्थवादिनो निरस्ताः, अत्र पुनर्भावनावाक्यार्थवादिनश्चेति विशेषः। ननु सिद्धरूपत्वेऽपि, 'तव गृहे निधिरस्ति', 'पिता ते सुखमास्ते' इत्यादिवत् तादात्विकप्रीत्युत्पत्तिमात्रेण साफल्यं स्यात्॥ अर्थाभावेऽपि पिता ते सुखमास्त इत्यादि[कं] विप्रलम्भकवाक्यमपि प्रीतिमातनोति, तथाच वेदान्तवाक्यानाम्, 'आनन्दो ब्रह्म' इति वाक्यमनर्थकमेव प्रीतिमातनोतीति मिथ्याभूततदर्थविचारात्मकं शारीरकशास्त्रं कथमिवारभ्येत? तर्हि स्वातन्त्र्येण मा भूत् प्रामाण्यम्, 'परप्राप्तिकामो ब्रह्म विद्यात्' इति विद्याविधिशेषत्वेन स्वरूपप्रतिपत्तिहेतुभूतानां सत्यज्ञानादिवाक्यानां प्रामाण्यमस्तीति चेत्, तत्रोत्तरमाह—विधेति। अन्यदृष्टिः=गरुडमात्मानं जानीयादित्यादिदृष्टिः। तदर्थो मिथ्या। एवम्, 'ब्रह्म विद्यात्' इत्यत्रापि फलार्थं विद्याविधावेव तात्पर्यम्। न पुनः सिद्धे ब्रह्मणि। तथाच तात्पर्याविषयभूतवेद्यब्रह्मपरिशोधनात्मकं सत्यज्ञानादिवाक्यमप्रमाणमिति तदर्थविचारात्मकं शास्त्रमनारम्भणीयम्। एवं पूर्वपक्षमनूद्य सिद्धान्तमारभते—अनन्येति। अयमभिप्रायः—विधिशेषत्वपक्षस्तु भाष्याद्यावेवावादि। स्वातन्त्र्यपक्ष एव साक्षात्सिद्धान्तः। तस्यैव बहुन्यायसिद्धत्वादिति ॥ ४६ ॥

---

तत्र आत्मनो गरुडत्वं मनआदेर्ब्रह्मत्वञ्च मिथ्यैव। अत इह ब्रह्मणोऽनृतत्वसंभवान्न परीक्ष्यं भावि= भवति इत्याक्षेपे=एवं पूर्वोक्तारम्भणीयत्वाक्षेपपूर्वकपूर्वपक्षे सिद्धान्ती अनन्यशेषे प्रवृत्तिनिवृत्त्यन्यतरपरवाक्याशेषभूतेऽपि शास्त्रतात्पर्यमाह। कुतः? निरवधिकसुखत्वात्। अयं भावः—प्रवृत्त्यादिपरस्य वाक्यस्य कथं प्रयोजनपर्यवसानम्। प्रवृत्तिज्ञानस्य प्रवृत्तेर्वा सुखरूपत्वाभावात्—स्वर्गादिसुखोत्पादकतया परम्परयैव प्रयोजनवत्त्वम्। सुखसाधनपरवाक्यस्य प्रयोजनवत्त्वे साक्षात्सुखरूपब्रह्मबोधकस्य कथं न सप्रयोजनत्वम्। ननु सुखमस्ति, स्वर्गोऽस्ति, निधिरस्ति, राजा धनिक इत्यादिवाक्यश्रवणे वस्तुयाथात्म्येऽपि कस्य प्रीतिर्जायते। तद्वत् सुखरूपं ब्रह्मेति ज्ञानं कथं प्रीतये इति चेत्— उच्यते। सुखमित्यस्यानुकूलमित्यर्थः। न ब्रह्मणः तत् प्रति अनुकूलत्वमत्र विवक्ष्यते; किंतु अस्मदनुकूलत्वम् अस्मन्निरूपितसुखत्वम्। अस्मदत्यन्तानुकूलं ब्रह्मास्तीति वेदान्तश्रवणे कस्य वा प्रीतिर्न जायते। इदमेव विवृतं भाष्ये स्वानन्दतुल्यमानन्दं स्वकीयनित्यसूर्यविशेषं सर्वस्मै दातुं समयं प्रतीक्षमाणं ब्रह्मेति वेदान्ते बुध्यते। ततः, तव गृहे निधिरस्तीति वाक्यश्रवण इव तुष्यतीति। यत्तु वितथमपि वचो दृष्टमित्युक्तम्, तत्रेदं वक्तव्यम्—न हि वितथत्वनिर्धारणं तावता भवति। तन्निर्धारणं तु तन्नियामकोपलम्भे। तदभावेऽपि वितथत्वं कथमुच्येत। ननु धर्मिसत्तां विनापि प्रीतिसंपत्तौ धर्म्यसंगीकार एव लाघवमिति चेत्—वस्त्वभावे वस्तुनि स्वात्यन्तानुकूलत्वग्रहणे तस्यासम्यक्त्वावधारणात् कथं प्रीतिः। वक्ष्यत एवैतदुपरि। अत्र अनन्यशेषपदेन शास्त्रपदेन चेदं ज्ञाप्यते— प्रमाणवाक्यं हि शास्त्रमित्युच्यते। अस्माभिर्विध्यर्थत्वेन प्रामाण्याकथनात् तद्दूषणमनुक्तोपलम्भः। सिद्धपरवाक्यस्य प्रमाणत्वेनावधृतं चेत्, कथं वितथमपि तदिति वक्तुं शक्यत इति। अनन्यशेषमिति पाठः पदयोजनागृहीतः॥ ४६ ॥

तात्पर्यं ब्रह्मतत्त्वेऽप्यविहति(त) विधिनाऽप्येकवाक्यत्वपक्षे
भेदेऽपि स्वादसिद्धेर्न भवति बलिभुग्दन्तसंख्योक्तिसाम्यम् ।
स्वादार्थत्वं मृषात्व(र्थे)क्षममिति न ; मृषेत्यूहने प्रीत्ययोगात्
बालोपच्छन्दनादिष्वपि विषयतथाभावबुद्ध्यैव हर्षः ॥ ४७ ॥

एवं विवक्षितं विधिशेषत्वपक्षमनङ्गीकृत्य स्वातन्त्र्यपक्षेण समाधानमुक्तम्। इदानीं विधिशेषत्वपक्षेऽपि नास्माकं कश्चिद्दोष इत्युभयपक्षाङ्गीकारेण स्वाभीष्टमर्थं समर्थयते—तात्पर्यमिति । द्विविधं खल्वर्थवादप्रमितम्—विध्यपेक्षितमविहतमित्येकम् ; अनपेक्षितं विहतमित्यपरम्। तत्र पूर्वमङ्गीक्रियते तान्त्रिकैः । यथा दुःखासंभिन्नदेशविशेषादि । तद्वत् ब्रह्मणि विहत्यभावात् विधिशेषत्वेन प्रामाण्यमस्त्येव । विहतपक्षस्त्वत्रानङ्गीकारेणैव निरस्तः । अनपेक्षितत्वं पुनरत्र नास्तीत्याह—न भवतीति । तत्र हेतुः—स्वादसिद्धेरिति । नैरर्थक्याभावादित्यर्थः। उत्तरपक्षेऽप्युद्घाटितामनुपपत्तिं परिहरति—स्वादार्थत्वमित्यादिना । तत्र हेतुमाह—मृषेति । अयमर्थः—'तव गृहे निधिरस्ति, पिता ते सुख-

---

संग्रहेणोक्तं सिद्धान्तार्थं विशदयन्, विधिशेषत्वपक्षमसदनुक्तमुद्भाव्य स्वत्कृतं दूषणं त्वदसामर्थ्यप्रकाशकमेवेति दर्शयति तात्पर्यमिति । अविहतीति पाठः ऋजुः । अविहतविधिनेति पाठः प्रकाशिकाहतः । चिन्तामणिसंमतोऽयं पाठ इति तन्मनीषा स्यात् । चिन्तामणौ तात्पर्यार्थे विहतत्वाविहतत्वरूपविभागकथनात् तात्पर्यमविहतीत्यस्यैव अविहतमिति स्पष्टोक्तिः । विहतमनपेक्षितं ज्ञेयमर्थवादे, 'न स पापं श्लोकं शृणोति' इति पर्णताविधिशेषे । विधिनैकवाक्यत्वपक्षेऽपि ब्रह्मरूपे शास्त्रतात्पर्ये विहतिरहितम् अविहतम् । बाधाभावात् सिद्धमित्यर्थः । किं कर्मविध्येकवाक्यत्वम्, उतोपासनविध्येकवाक्यत्वम् ? आद्येऽपि अधिकोपदेशादिति वक्ष्यमाणरीत्या जीवातिरिक्तब्रह्मकथनात् आराध्यदेवतान्तराणामिव सर्वकर्मसमाराध्यस्यास्य न बाधः । उपासनविध्येकवाक्यत्वेऽपि, दृष्टिस्थले प्रमाणान्तरेण बाधात् अन्यत्रान्यदृष्टिरित्युक्तावपि, अत्र धर्मिणो धर्माणां वोपास्यानां बाधाभावात् तात्पर्यमक्षतम् । ननु वस्तुसत्यत्वेनापि, विधिशेषत्वं विना भेदे पृथग्वाक्यत्वे इष्यमाणे फलं नास्ति ; जीवाद्भिन्नस्य ब्रह्मणः कल्पनं काकदन्तकल्पनम्, तस्य जन्मस्थित्यादिकार्यभेदेन भेदो न वेति चिन्ता काकदन्तसंख्याचिन्तैवेति चेत्, न भवति तत्साम्यम् । वाक्यभेदपक्षेऽपि स्वादरूपफलसिद्धेः । उक्तं हि प्रियवस्तुज्ञानं प्रीतिकरमिति । ननु जीवब्रह्मैक्ये इष्यमाणे स्वस्यैव निरतिशयसुखरूपत्वाध्यवसायात् स्वादः स्यादपि । ततो भेदे तन्निरतिशयसुखत्वेनास्माकं किम्' इति चेत्, इयं शंकापि परिह्रियते भेदेऽपीति । अभेद इव जीवब्रह्मभेदेऽपि स्वादो भवति । तस्य स्वं प्रतीव अस्मान् प्रत्यपि मुक्तावनुकूलत्वात् स्वादे अनुकूलतयाऽनुभवे सति कथं नैष्फल्यम् । प्रत्युत जीवब्रह्मैक्यपक्ष एवाविश्वासो भवति, जीवानां सर्वज्ञब्रह्मैक्ये तत्सुखत्वस्यापि सदैव ज्ञेयतया कथं दुःखिताः ;- अतो ब्रह्म सुखरूपं न स्यादिति । अतो भेदाभेदविचारोऽप्यावश्यको भवति । अत्र चिन्तामणौ स्वादेत्यादिकं पृथग्वाक्यमिति प्रतीयते । तथा चेत्, भेदेऽपीति पूर्वान्वयि, एकवाक्यत्वपक्षेऽपि वाक्यभेदपक्षेऽपि ब्रह्मतत्त्वे तात्पर्यमविहतम् । अस्तु वस्तु, भेदपक्षे तच्छ्रवणस्य न

मास्ते' इत्यादिवाक्यं मृषार्थमिति यदि प्रतिपद्येत(द्यते), तदा कथमिव तस्य प्रीतिरुत्पद्येत(द्यते)? अतः सत्यत्वाध्यवसायादेव तत्रापि प्रीतिरुत्पद्यते। अस्मिन्नर्थे लोकदृष्टान्तमाह—बालेति। बालाः खलु, 'पिता ते सुखमास्ते' इत्यादिकं परमार्थप्रतिपादकमिति मत्वा सन्तुष्यन्ति। अन्यथा सन्तोषाभावात्। अत्र पुनर्विशेषणानां निरतिशयानन्दादीनां पारमार्थ्यं यदि प्रतिपद्यते श्रोता, तदानीमसन्दिग्ध एव। अथ न प्रतिपद्यते, तदा परमार्थप्रतिपत्त्यभावात् पुरुषार्थप्राप्तिर्न स्यादेव। तथाच स्वार्थार्थत्वं मृषात्वक्षममित्यसंगतमेव ॥ ४७ ॥

यत् प्रीत्यर्थं वचस्तन्निखिलमनृतमित्यर्भकप्रायवाक्यं
मृत्योक्त्याऽऽनन्ददृष्टेर्न च विहतिरिहाप्ययश्रुतः श्रावतो वा।
तेनानन्यार्थसिद्धोक्त्यनृतविषयताशङ्कनस्तम्भनेन
त्रय्यन्ताः सत्यनित्याद्भुतपरमसुखब्रह्मनिष्ठाः प्रमाणम् ॥ ४८ ॥

यत् प्रीत्यर्थं वाक्यं, तत् वितथमित्युक्तं पूर्वपक्षिणा, तद् विकल्प्य दूषयति—यदिति। किं प्रीत्यर्थं वाक्यं निखिलमपि वितथमित्युच्यते? किं वा यत्किंचित्? न तावदाद्यः; अवितथेनापि पिता ते सुखमास्त इत्यादिना प्रीतिदर्शनात्। अतो व्यभिचरितार्थं वाक्यं वदन् अर्भकप्राय एव

---

किञ्चित् फलमिति नेत्याह स्वादसिद्धेरिति। फलाभावशंकापरिहारकत्वमभिप्रेत्य चिन्तामणौ नैरर्थक्याभावादित्यर्थ उक्तः। बलिभुगित्यादिसाध्यान्वयौचित्यं तदेव। तद्दन्तचिन्तानिषेधो हि न स्वादाभावमात्रात्। किंतु सामान्यतो नैरर्थक्यात्। वितथमपि वच इत्युक्तं क्षिपति स्वादेति। वचोगतं स्वादहेतुत्वं वस्तुमृषात्वसहं मृषात्वसामानाधिकरण्यमपीति यत्, तन्न; मृषात्वसंभावनायां प्रीत्यसंभवात्। मृषार्थक्षममिति पाठोऽप्युपलभ्यते। चिन्तामणावपि अर्थे मृषात्वमुक्तम्। वचोगतं स्वादार्थत्वं मृषाभूतस्वार्थसहमिति समन्वितमेव। ब्रह्मणो जीवेष्वानन्दसाम्यपदत्वं मृषेति मतौ कथं प्रीतिः स्यात्। लोके बालस्योपच्छन्दनं बाधितस्वार्थस्य सत्यवत्कथनरूपं, 'क्षीरं पिब, शिखा ते वर्धिष्यते' इत्यादिकं यत्, तत्रापि यावत् बालस्यार्थे सत्यत्वधीः, तावदेव हर्षः, प्रवृत्तिश्च; मृषेति ज्ञाने तु न प्रीतिः। अतो न मृषेति मत्वैव श्रोता प्रीतिमान् भवति। एवञ्च शब्दजन्यज्ञानस्य स्वतः प्रामाण्यात् न मृषेति ज्ञानस्याप्यप्रामाण्ये कारणाभावात्, तत्त्वविषयकस्याप्युपासनस्य निष्प्रत्यूहत्वात्, तत्क्रतुन्यायेनोपासनस्य तत्प्राप्तिरूपफलहेतुतया तन्मृषात्वस्य सुतरामप्रसक्तेश्च न तदपलापसंभवः ॥

चि. टी. ४७. स्वतन्त्रस्यापि ब्रह्मणो विध्यन्वयस्यापि सिद्धान्ते इष्टत्वात् विवक्षितमित्युक्तम्॥४७॥

ननु बालानां मृषात्वबुद्धौ प्रीत्यनुदयात् तद्वदिहापि मृषात्वज्ञाने स्वादो न भवतीति भवदुक्तम्। वेदे लोके च बहुलमर्थवादान् प्रयुज्यैव प्रेरयन्ति। तत्रतत्र, न किरिन्द्रस्त्वदुरः, त्वमेव कुबेरः इत्यादौ कथ्यमानस्यार्थस्य मृषात्वे ज्ञातेऽपि प्रीता एव भवन्ति। अतस्तत्त्वबोधनोद्देशं विना प्रीत्यर्थं प्रयुज्यमानं यत् वचः तत् सर्वमनृतार्थकमेव। अत्रापि प्रीतेरेव फलत्वोक्त्या ब्रह्मासिद्धिरेवेति शंकां निरस्यति यदिति। अनृतोक्तावपि अनृतत्वज्ञानेऽसति वञ्चनार्थं ब्रवीतीत्यविमृश्य हितार्थं ब्रवीतीति यावदालोच्यते, तावत् प्रीत्यर्थत्वं भवेदेव। तावता प्रीत्यर्थवाक्यत्वव्यापकत्वमनृतत्वे न भवति। गुणासद्भाव-

भवान् बालप्राय इत्यर्थः। तत्र हेतुमाह—सत्येति। परमार्थीकृत्याऽऽनन्दहेतोरित्यर्थः। उत्तरस्मिन् पक्षे व्याहतं वितथमित्युच्यते, किमव्याहतमपि। तत्र व्याहतिरत्र नास्तीत्याह-नचेति। तत्रापि विकल्पोऽभिप्रेतः किं प्रत्यक्षेण व्याहतिः, उतागमत इति। अव्याहतिपक्षेऽपि लौकिकवैदिकसर्वव्यवहारोच्छेदप्रसङ्ग इति भावः। किं च केवलं व्याहतत्वस्यैव वैतथ्यहेतुत्वे संभवति प्रीत्यर्थत्वे सति व्याहतत्वादिति विशिष्टप्रयोगो विशेषणवैयर्थ्यादनुमानवातनिमिन्नतां दर्शयति। केवलं प्रीत्यर्थत्वादिति प्रयोगो व्यभिचारेण दुष्ट इतीदानीमेवोक्तम्। एवं परोक्तप्रक्रियां निराकृत्य स्वोक्तमर्थं निगमयति—तेनेति। पूर्वपक्षोक्तार्थाशङ्कनस्तम्भनेन वेदान्ताः परस्मिन् ब्रह्मणि प्रमाणमित्यर्थः ॥ ४८ ॥

**ब्रह्मैके निष्प्रपञ्चीकरणविधिपदं ध्यानविध्यर्थमन्ये**
**निर्धर्माद्वैतवाक्योच्चरितमपरे सिध्यतीति ब्रुवन्ति।**
**तेषामेषां स्वपक्षस्ववचनविहतिव्याकुलानेकजल्पः**
**कल्पोऽयं बाह्यकल्पः कृतमतिपरिषत्पीठमर्दैरमर्दि ॥ ४९ ॥**

अस्मिन्नधिकरणे मृषावादिनां पक्षत्रितयमुपन्यस्तम्, तत्राऽऽद्यौ पक्षौ जरन्मायावादिभिरभिधीयेते, एकस्त्वाधुनिकैः, तेन च तौ निरस्तौ, सोऽपि पक्षोऽस्मत्पूर्वपक्षवादिना निरस्तः। स च वादी सिद्धान्तवादिनेति पक्षपञ्चकमुपन्यस्यते। तत्र पक्षत्रितयं भाष्यकारैरेवोपन्यस्तम्। परास्तं तदनु-

स्थले गुणारोपेण प्रीत्युत्पादनेऽपि तत्सद्भावस्थले वास्तवतादृशार्थकथनेनैव प्रीत्युत्पादनदृष्टेः। अस्तु। अत्र सत्यत्वे किं गमकमिति चेत्—अबाध एवेत्याह **न चेति**। **अध्यक्षं** प्रत्यक्षम्। युक्त्या मिथ्यात्वस्य पूर्वपक्षिणोपन्यस्यमानतया अनुमानमत्र त्यक्तम्। **तेनेत्यस्य** श्लोकस्य विवरणं स्वयमेव **स्तम्भनेनेत्यन्तम्**। **अनन्यार्थाः** अन्यशेषत्वरहिताः याः सिद्धवस्तुविषयकोक्तयः तासामनृतविषयकत्वस्यैवं निराकरणात् लौकिकानन्यार्थवाक्यानामपि प्रामाण्योपपादनात् वेदान्ताः सुतरां प्रमाणम्। **परमसुखेति** पाठे, भूमा सुखम्, खं ब्रह्म कं ब्रह्म इत्यादिकं ग्राह्यम्। **सुखपरमेति** पाठे ब्रह्मशब्दार्थः बृहत्त्वविशेषः परमशब्दविवक्षितः। परा मा यस्य तत् परममित्यर्थो वा ॥ ४८ ॥

मुख्यौ पूर्वपक्षसिद्धान्तौ दर्शितौ। अत्र **भाष्यकारैः** परमुखेन खण्डितमद्वैतमर्थत्रयमपि संगृह्य तदेव खण्डितत्वमाह **ब्रह्मेति**। **चिन्तामणौ जरन्मायावादीति** शांकरस्यापि ग्रहणम्। **एक** इति भामत्यनुयायीष्टस्य ध्यानविधिवादस्य। श्लोके **एके** जरदद्वैतिनः, 'न दृष्टेर्द्रष्टारं पश्येः' इति वाक्यमुपादाय सप्रपञ्चं ब्रह्म निष्प्रपञ्चं कुर्यादिति निष्प्रपञ्चीकरणनियोगः क्रियत इति वदन्तः ब्रह्म एतद्विधिपदं=विधिविषयतया सिध्यति। अतो मीमांसकसंमतस्य विध्यन्वयस्यैव वर्तमानत्वान्न दोष इति ब्रुवन्ति। **अन्ये** नव्याद्वैतिनः 'ओमित्यात्मानं ध्यायीत' इत्यादिध्यानविध्यर्थतया सिध्यतीति ब्रुवन्ति। ब्रह्मशब्दस्य वाक्यत्रयेऽपि विशेष्यत्वात् स्वरसतः **सिध्यतीत्यत्रान्वयात्** प्रथमान्ततेति **विध्यर्थमित्यस्य** विधेरर्थमिति द्वितीयान्तता न घटते। अतो बहुव्रीहिः। विधिरर्थ उद्देश्यः यस्य तदिति। विधये इति चतुर्थ्यर्थे अव्ययं वा। ध्यानविधिशेषत्वे विधेः शेषित्वमेवोद्देश्यत्वम्। तथाच ध्यानविध्यर्थतया सिध्यतीत्याहुः। वाक्यादद्वैतज्ञानसिद्धौ ततो ध्यानम् ततो निर्मलेन मनसा ब्रह्मदर्शनोत्पादनम्, ततो मुक्तिः। एवञ्च मीमांसकेष्टं विधिविषयत्वमक्षतमित्याहुः।

आदिभिराचार्यैरपीति नास्माकमिह वक्तव्यं किंचिदवशिष्यत इत्यभिप्रायेणाह—ब्रह्मेति। तत्र निष्प्रपञ्चीकरणनियोगवाद एकः, 'न दृष्टेर्द्रष्टारं पश्येः' इत्यादिनोपपादितः। अपरस्तु ध्याननियोगवादः, 'ओमित्यात्मानं ध्यायीत' इत्यादिवाक्यसिद्धः। तृतीयोऽपि, 'तत्त्वमसि' इत्यादिवाक्यसिद्ध इति तेषां प्रक्रिया। तेषामेकदर्शनेन दूषणं सूचयति—तेषामिति। स्वपक्षविहतिः=अपसिद्धान्तः। स्ववचनविहतिः=प्रतिज्ञाविरोधः। अत्र व्याकुलशब्दः प्रकारान्तरेण वैयाकुलीमुपलक्षयति। अनेन

---

साक्षात् शांकरपक्षमाह **निर्धर्मेति**। निर्धर्मकं निर्विशेषं यत् अद्वैतं ब्रह्म तत्प्रतिपादकवाक्येन, 'तत्त्वमसि', 'अयमात्मा ब्रह्म', 'सत्यं ज्ञानम्' इत्यादिना विशेषणत्यागेन विशेष्यमात्रबोधिना **उपचरितं** लक्षणया बोधितं सत् सिध्यतीति ब्रुवन्ति। ननु तत्त्वमस्यादिवाक्यस्य लक्षणया निर्विशेषप्रतिपादकत्वं त्रयाणामपीष्टम्। तत् तृतीयपक्षमात्रे कथं तदुक्तिः, कथञ्चास्य पार्थक्यमिति चेत्—उच्यते। तत्रद्विविशेषत्वमन्यैरुक्तम्, एभिर्विध्यन्वयं विना सिद्धपरवाक्यत एव सिद्धिरुच्यत इत्येतदेव भेदकं मुख्यम्। निर्धर्मत्वोपचरितत्वादिकं तेषां वाक्यानां सविशेषपरत्वभ्रान्तिव्युदसनेन वैशद्यकरणायोक्तम्। 'नेह नानास्ति', 'यत्र हि द्वैतमिव' इत्यादिवाक्यानामद्वैतार्थकत्वेऽपि समानाधिकरणवाक्यानामेव धर्मत्यागेन मार्गलक्षणया अखण्डज्ञानहेतुत्वमिति तादृशवाक्यग्रहणमेवमुक्त्या ज्ञापितं भवति। **निर्धर्मेति** पृथक्कृत्य, 'धर्मादनिच् केवलात्' इति नकारान्तमिष्ट्वा वाक्यत्रयेऽपि ब्रह्मविशेषणं वा क्रियताम्। यद्वा **निर्धर्मत्यस्य** विधिविहितानुष्ठानजन्यधर्मरूपादृष्टनिरपेक्षेत्यर्थवर्णनेन तादृशाद्वैतवाक्यसिद्धमित्युच्यताम्। तेनोक्तपक्षद्वयवैलक्षण्यं स्पष्टोक्तं भवति। ननु विध्यन्वयाभावे प्रयोजनपर्यवसानं नास्तीति शंकापक्षद्वयेनेवानेन तृतीयेन कथं परिह्रियत इति चेत्—स्वात्मनो निर्दुष्टब्रह्मैक्यज्ञानं स्वयं प्रीतिजनकमित्याशयः। वाक्यस्यापरोक्षज्ञानजनकत्वस्यैवैतदिष्टत्वात् तस्य च मोक्षहेतुत्वात् वाक्यस्य फलपर्यवसानं पुष्कलमिति च। पक्षत्रयस्यापि जगन्मिथ्यात्वबुद्धिमूलत्वात् सर्ववैदिकनिरास्यत्वमिति भाष्यदर्शितमिति सूचयति **तेषामिति**। **तेषां** ब्रह्मसिद्धिप्रकारभेदवादिनाम् **एषाम्** अद्वैतिनाम् **अयं कल्पः** जगन्मिथ्यात्वपक्षः **बाह्यकल्पः** बौद्धमततुल्यः, अत एव **स्वपक्षे**त्यादिपदोक्तविशेषणविशिष्टः समन्वयाधिकरणेऽन्नामर्दि। एषां कल्पश्चानेकजल्पविशिष्टः एकजीवादः अनेकजीववादः, ब्रह्माज्ञानवादः जीवाज्ञानवादः मायाविद्यैक्यवादः, तद्भेदवादः, प्रतिबिम्बवादः, उपाध्यवच्छिन्नजीवत्ववादः, जीवन्मुक्तिविवादः, शाब्दापरोक्षविवादः इत्यादिदर्शनात्। सर्वे जल्पाः पूर्वमेवाऽऽकुलाः **स्वपक्षविहत्या स्ववचनविहत्या** व्याकुलाश्च विशेषेणाऽऽकुलाश्च। स्वमतविरुद्धस्यापसिद्धान्तस्योपन्यासोऽप्यस्ति, पूर्वोत्तरस्ववाक्यविरोधश्चेति। सप्रपञ्चं कुर्यादिति विधिवाक्यं न दृश्यते। न दृष्टेरिति वाक्यस्य तत्र पर्यवसाने गमकमपि न लक्ष्यते। अत्र ब्रह्मणो नियोगविषयत्वमपि न भवति, साध्यविलक्षणत्वात्। निष्प्रपञ्चत्वस्य विषयत्वे तस्यैव फलतया साध्यसाधनैक्यं स्यात्। नियोगान्मोक्ष इति वादश्च ज्ञानान्मोक्ष इति स्वसिद्धान्तविरुद्धः। जन्यतया मोक्षस्य स्यादनित्यत्वमपि। ध्यानविधिपक्षेऽपि ध्यानसाध्यं किम्। मोक्षश्चेत्, ध्यानसमानविषयकप्रथमज्ञानादेव कुतो न मोक्षः। भेदवासनासत्त्वादिति चेत्—कथं मिथ्याभूता सा वासना प्राङ् न निरस्येत। एवञ्च

सर्वैनिग्रहस्थानोपहतिरुच्यते। बाह्यकल्पः =साक्षात् बाह्य एवायं पक्षः, अथापि वाङ्मात्रेण तद्भक्तैर्वादिभिर्यत्किञ्चिद्वैषम्यमुच्यत इति भावः। कृतमतयः =शिक्षितमतयः, तेषां परिषदि पीठमर्दैः =एकासनाधिरूढैरतिशयिततत्त्वविद्भिरित्यर्थः ॥ ४९ ॥

**अन्यार्थो ह्यर्थवादः स्तुतिमुखमुखतः स्थापितः प्रागिदानीं**
**स्वातन्त्र्येण प्रमाणीक्रियत इति ततः काण्डयोः स्याद् विरोधः।**
**न स्यात् सामान्यतो हि प्रथममभिदधे मानशास्थापनार्थं**
**केषांचित् सार्थतोक्ता स्वत इह सुभगे बोधमात्रात् पुमर्थे ॥ ५० ॥**

एवं परस्परविरोधात् प्रस्फुटदोषत्वात् भाष्यकारैरेव सुव्यक्तमेव निरस्तत्वात् वक्तव्यशाभावेन परपक्षान् उपेक्ष्य भाष्योक्तपूर्वपक्षसिद्धान्तयोः परिक्लृप्तिप्रकारमाक्षिप्य समाधत्ते—अन्यार्थ इति। अयमर्थः—पूर्वस्मिन् काण्डेऽर्थवादानां विधिशेषतयैव प्रामाण्यमुक्तम्, अत्र पुनः स्वातन्त्र्येण, तेन पूर्वोत्तरविरोधात् पूर्वोत्तरकाण्डयोरैकशास्त्र्यवादिनां युष्माकमनुचितमेवेदं भाषणमित्याक्षेपः।

---

मनोनैर्मल्यं ध्यानायत्तमित्यपि न युक्तम्। कथञ्च कर्मानुष्ठाने भेदगर्भतया त्यजतां भेदगर्भध्यानविध्यर्थानुष्ठानम्, एवञ्च भेदवासनावर्धकत्वमेव ध्यानस्य। वाक्यजन्यसाक्षात्कारपक्षेऽपि तस्य साक्षात्कारतानियामकं किम्॥ स्वयंप्रकाशस्वात्मभूतब्रह्मविषयकत्वमिति चेत्-एतदर्थं श्रवणमनननिध्यानात्मकमहावधानं किमर्थम्; अनवधानेऽपि वाक्यजन्यतद्विषयकज्ञानस्य साक्षात्कारत्वसंभवात्। एवञ्च संन्यासिनामेव साक्षात्कारो मोक्षश्चेति कुतः। संन्यासादेरपि सहकारित्वे तत्सहकृतवाक्यजन्यबोधादेव साक्षात्कारस्य सुवचतया वाक्यस्यापरोक्षजनकत्वं न कल्प्यम्। एवं ज्ञानेन जगन्निवृत्तेः कदाऽप्यजाततयैव तदुक्तं सर्वमिदमेव मिथ्याभूतमित्यादिकं भाष्यम्। **कृतमतीति**। **कृतमतयः** सुशिक्षितमतयः मनननिष्पन्नयथावस्थितार्थज्ञानाः श्रीभाष्यकारादयः; तेषां परिषदः **पीठमर्दाः**। प्रधानपुरुषसहकारिणः पीठमर्दा उच्यन्ते। अत्र भाष्यकारकार्यस्य तत्तदद्वैतनिरसनस्यान्यैरेव कृततया ते पीठमर्दाः। मीमांसको हि निष्प्रपञ्चीकरणनियोगपक्षं निरास; ध्यानविधिपक्षञ्च। ध्यानविधिवादी शांकरं वाक्यजन्यप्रत्यक्षपक्षमिति ॥ ४९ ॥

एवं प्रवृत्तिनिवृत्त्यन्यतरानन्वयिन्यर्थे प्रामाण्यायोगात् विचारो नारम्भणीय इति शंकायाम् तदनन्वयेऽपि प्रयोजनपर्यवसानात् प्रामाण्यसंभव इति समन्वयाधिकरणार्थमुपवर्ण्य परोक्ताः प्रकाराः भाष्य एव खण्डिता इति नात्र सारमात्रपरे ग्रन्थे तद्विस्तर इति ज्ञापितम्। अथ, 'कचिदपवदनं स्थाप्यमौत्सर्गिकस्य' इति स्वग्रन्थे वक्तव्यतया प्रतिज्ञातमिह पूर्वोत्तरपक्षरूपेणाऽऽह **अन्यार्थ** इति। पूर्वकाण्डविरोध एवं सिद्धान्ते इति शंका। **प्राक्** पूर्वमीमांसायामर्थवादपादे, "विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः" इत्यनेन—**स्तुतिमुखं** स्तुत्यादि स्तुतिर्निन्दा च, तद्रूपेण **मुखेन** तदन्यतरबोधनद्वारा अर्थवादः **अन्यार्थः** विधिशेषभूतत्वेन स्थापितः। 'वायुर्वै क्षेपिष्ठा देवता' इत्यादेर्वायव्यादिकर्मविधायकवाक्यशेषता स्तुतिमुखेन, सोऽरोदीदित्यादेः 'तस्मात् बर्हिषि रजतं न देयम्' इति यागे रजतदाननिषेधवाक्यशेषता निन्दामुखेनेत्युक्तम्। **इदानीम्** अस्मिन् काण्डे **अर्थवादः** उपनिषद्रूपोऽयम्

समाधिस्तु—द्वौ खल्वर्थवादौ। एकस्तु विधिशेषतयैव निर्वाह्यः। अपरस्तु विधिशेषत्वमन्तरेणापि निर्वोढुं शक्यः। तेनोत्सर्गापवादन्यायेन पूर्वोत्तरकाण्डवाक्ययोर्विरोधोपशमनादैकशास्त्र्याक्षेपप्रसङ्गोऽपि न संघटते। एकत्र अर्थवादसामान्यविषयत्वात्, इतरत्र ब्रह्मपरार्थवादविशेषविषयत्वात्। अत्र हि ब्रह्मपरं विशेषवाक्यं स्वरूपपरतयाऽपि प्रमाणमित्युच्यते। इतरत्र शिष्टान्यर्थवादवाक्यानि सर्वाणि विधिशेषतया प्रमाणानीत्युच्यन्ते। ननु सर्वोऽप्यर्थवादो विधिशेष एव, 'परप्राप्तिकामो ब्रह्म विद्यात्' इति विधिशेषत्वात्, 'तदेवाऽभ्युक्ता' इत्यारभ्योक्तानां सर्वेषामपि वाक्यानाम्। तेन नरविषाणकल्पत्वात् स्वरूपपरार्थवादवाक्यस्य स्वरूपमेव नास्ति, कस्यात्र विरोधपरिहारः? ॥ उच्यते—'सहस्रशीर्षं देवम्' इत्यादिकं वाक्यं स्ववाक्ये विध्यदर्शनात् विधिशेषमेव न भवति, अपितु परतत्त्वैकप्रतिपादनपरमिति त्वदुक्तोऽयमनुपालम्भः। मृषावादिभिरप्ययमेवार्थोऽङ्गीकार्यः, 'तत्त्वमसि' इत्यादिवाक्ये विध्यदर्शनात् केवलं तत्त्वपरमेवेदं वाक्यमिति तेषामुद्घोषः। एवमन्यान्यपि विधिदर्शनमन्तरेण ब्रह्मप्रतिपादकानि श्रौतानि पौराणिकान्यैतिहासिकान्यपि वाक्यानि प्रतिपत्तव्यानि ॥ ५० ॥

त्रेधा सर्वत्र वेदे नियतविभजने चोदनाद्यंशभेदैः
चत्वारोऽप्यर्थवादा मुनिभिरभिहिता ब्राह्मणांशस्य शेषाः ।

---

स्वातन्त्र्येण विधिशेषत्वं विनैव प्रमाणीक्रियते। इति ततः=इत्येतस्मात् हेतोः पूर्वोत्तरकाण्डयोर्विरोधः स्यादिति। शंकां क्षिपति न स्यादिति। प्रथमं पूर्वकाण्डे हि सामान्यतः उपनिषद्रूपविशेषाग्रहणेन अर्थवादत्वेन रूपेण सामान्याकारेण प्रसक्तार्थवादमात्रस्य अन्यार्थतया सार्थता मानताख्यापनार्थं प्रामाण्यमन्यथा न भवेदिति विमृश्य अभिदधे स्थाप्यते स्म। इह काण्डे शारीरके केषांचित् उपनिषद्रूपभागानां सुभगे पुमर्थे श्रेष्ठपुरुषार्थे, "ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा" इति पराशरोक्तगुणवति भगवति बोधमात्रात् ज्ञातत्वमात्रेण, क्रियान्वयं विनैव पुमर्थे स्वतः विध्यन्वयं विनैव सार्थता प्रयोजनपर्यवसानम् उक्ता। अस्याधिकरणस्य ब्रह्मपरवाक्यरूपविशेषविषयकत्वात् पूर्वकाण्डाधिकरणं सामान्यतः प्रवृत्तमेतद्भिन्नविषयकमिति भावः। मानताख्यापनार्थमित्यनेनेदं सूच्यते—आनर्थक्यादप्रामाण्यं हि तत्रोपक्षिप्तम्। एषां स्वत एव बोधमात्रेण सार्थतायां कथमानर्थक्यशंका। अतः पूर्वपक्षिणो बुद्धिस्थाः कर्मकाण्डार्थवादा एवेति तदुचितं समाधानं कृतमेतदस्पर्शि। धर्मप्रक्रमात् ब्रह्मपरार्थवादस्याप्रसक्तेः। अत्र तु पूर्वपक्षी ब्रह्मणः पुमर्थतामजानन् तन्न्यायातिदेशेन शशंके। तत् एवं परिजह्रे इति ॥

चि. टी. ननु सर्वोऽपीत्यादि। उपनिषदां प्रधानतया ब्रह्मपरत्वे पुरुषार्थपर्यवसानाभावात् पूर्वकाण्डोक्तरीत्या विधिशेषत्वेनैव प्रामाण्यं वाच्यम्। विधिश्चोपासनविधिरेव। उपासनमसत्यस्यापि भवतीति तदा ब्रह्मरूपवस्तुन एव न सिद्धिरिति एतदधिकरणपूर्वपक्षी। विधिशेषत्वनपेक्षितम्, स्वतः प्रयोजनपर्यवसानादित्युत्तरयति सिद्धान्तीत्याशयप्रदर्शनमिह ॥ ५० ॥

ऐकशास्त्र्ये स्थिते पूर्वन्यायविरोधेनोत्तरत्र निर्णयः कथमिति शंका निरस्ता। अथ स्मृति-

**अत्रातच्छेषतोक्तौ स्मृतिहतिरिति चेत् विधि(द्धि) दत्तोत्तरं तत्**
**सामान्योक्तिर्हि सेयं तत उपरि यथा मन्त्रविध्यन्यतोक्तिः ॥ ५१ ॥**

एवं काण्डद्वयवाक्यविरोधमुत्सर्गापवादन्यायेन परिहृत्य पूर्वपक्षिणोत्थापितं कल्पसूत्रादिवाक्य-विरोधमपि तेनैव न्यायेन परिहरति–अत्रेति । इद(य)मत्र विरोधाभासोपपादनम्(ना) । 'कर्मचोदना ब्राह्मणानि' इत्युपक्रम्य, 'ब्राह्मणशेषोऽर्थवादः, निन्दा प्रशंसा परकृतिः पुराकल्पश्च' इति चतुर्णाम-

विरोधादयं न्यायाभासः स्यादिति शंकां परिहरति अत्रेति । यद्वा न्यायेन न्यायविरोधः परिहृतः; अथ प्रबलया स्मृत्या विरोधं परिहरति अत्रेति । **सर्वत्र** सर्वस्मिन् सोपनिषत्के, **चोदनाद्यंशभेदैः** विधिरर्थ-वादो मन्त्र इत्येवंरूपैरेकदेशैः **त्रेधा नियतविभजने** व्यवस्थितविभाजकधर्मत्रयवति वेदे अन्तर्गताः अर्थवादाः चत्वारोऽपि, निन्दा प्रशंसा परकृतिः पुराकल्प इत्येते सर्वे **ब्राह्मणांशस्य** मन्त्रब्राह्मणोभया-त्मकवेदांशभूतस्य ब्राह्मणस्य शेषत्वेन **मुनिभिः** आपस्तम्बप्रभृतिभिरभिहिताः । हिरण्यकेशिश्रौतसूत्रेऽप्ये-तदंशोऽस्ति । स **चिन्तामणौ एवमन्यदपी**ति दर्शितः । एवञ्चोपनिषदामप्यर्थवादत्वात् ब्राह्मणशेषत्वात् **अत्र** अस्मिन्नधिकरणे ब्राह्मणशेषत्वाभावोक्तौ स्मृतिविरोध इति । समाधत्ते **विद्धी**ति । **तत्** आशंकनं पूर्वश्लोकेनैव दत्तोत्तरं विद्धि । तदेव कण्ठरवेणाह **सामान्ये**ति । तत्र, हिरण्यकेशि श्रौतसूत्रोपक्रमे, 'कर्म-विधानं ब्राह्मणानि', 'तच्छेषोऽर्थवादः', 'अतोऽन्ये मन्त्राः' इत्यत्र च अर्थवादानां ब्राह्मणशेषत्व-कथनं सामान्यवचनम्; नावश्यमुपनिषद्रूपविशेषविषयकम्; विशेषरूपेणानिर्देशात् । मानान्तरेणोप-निषदां स्वतन्त्रत्वे सिद्धे तत् उत्सर्गत्वात् अपवादव्यतिरिक्तविषयकं भविष्यति । तत्रार्थवादपदस्य विशेषविषयकत्वव्यक्तये तद्वाक्यमेवान्यत् निदर्शयति **तत उपरी**ति । तदुपरि, "ततोऽन्ये मन्त्राः" इत्युक्तं हि तत्र । ततोऽन्यत्वं नाम कर्मचोदनाभूतविधायकवाक्यान्यत्वम्, इदं न सर्वमन्त्रसाधारणम्, 'कपिञ्जलानालभेत' इति मन्त्रे विधायकत्वस्यापि मीमांसकेष्टत्वात् । अतः प्रायिकमेव विध्यन्यत्वम् । तद्वदिह ब्राह्मणशेषत्वमप्यर्थवादे कर्मकाण्डान्तर्गतविधिवाक्यशेषभूततत्तद्वाक्यराश्यभिप्रायेणेति ॥

अत्रेदं बोध्यम्—वेदस्य विध्यर्थवादमन्त्ररूपेण त्रेधा विभागोऽपि मुनिसंमतः । जैमिनिनाऽपि विधीनामर्थवादानां मन्त्राणाञ्च क्रमेण विचारात् । 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' इति द्वेधैव च वेदो विभज्यते । तत्र ब्राह्मणस्य विधायकत्वमिति लक्षणांगीकारे अर्थवादानां विधायकत्वाभावात् ब्राह्मण-त्वासंभवे मन्त्रत्वस्याप्यभावात् कथं वेदत्वमिति शंकायां ब्राह्मणशेषोऽर्थवाद इत्युक्तम् । अयमाशयः— निषेधवाक्यसमीपस्थो निन्दार्थवादः निन्द्यत्वरूपं विशेषणं निषेध्ये समर्प्य सार्थम् । तस्मात् पदैकवाक्यतया निषेधेनैकवाक्यत्वात् तद्वाक्यान्तर्गतपदान्तरवत् इदमपि तद्वाक्यान्तर्गतमेव । एवं वायुर्वै इत्यादीनां विधिपरिसरपठितानां विधेये प्रशस्तत्वरूपविशेषणसमर्पकत्वात् तथैव पदैकवाक्यतया विधिवाक्यैक-वाक्यत्वात् ब्राह्मणत्वमेव । एवं परकृतिपुराकल्पयोरपि । **परकृति**र्नाम स्वदृश्यमानाचारविरुद्धशाखा-न्तरीयाद्याचारप्रदर्शनमिति **न्यायभाष्ये** । तदपि प्रकृताचारप्राशस्त्यायैव । **पुराकल्पो** नाम पूर्वकालि-कानुष्ठानप्रदर्शनम् । तदपि प्रकृतप्रशंसार्थे । अत एव प्रशंसाकोटिप्रवेशं दर्शयितुं निन्दां पूर्वं पठित्वा प्रशंस-

ऽर्थवादानां ब्राह्मणशेषत्वमाह भगवान्(?) आपस्तम्बः(हिरण्यकेशी?)। एवमन्यदपि द्रष्टव्यम्। तथा च कथमर्थवादानां विधिशेषत्वमन्तरेण ब्रह्मणि प्रामाण्यमुच्यते? अत्रोत्तरमाह-इत्तोत्तरमिति। अयमर्थः- अर्थवादानां विधिशेषत्ववचनं सामान्यम्। अत्र पुनर्ब्रह्मविषयार्थवादानां स्वातन्त्र्येण प्रामाण्यकथनं तस्यैवापवादः। अतस्तेनैवोत्सर्गापवादन्यायेन विरोधप्रशमनात् स्मृतिविरोधकथनमनुपालम्भ एव। तमेवोत्सर्गापवादन्यायमजानानस्य शिष्यस्य विशेषतः प्रकटयति—सामान्येति। इममेवार्थं तद्वाक्यस्थेनैव दृष्टान्तेनोपपादयति—तत इति। तस्मिन्नेव आपस्तम्ब(हिरण्यकेशि?)वाक्ये मन्त्रविध्योः

---

परकृतिरित्येवं सह पठन्ति। एवं विधायकवाक्यप्रवेशसंभवो येषां तेषामेव तत्रोक्तिः। उपनिषदस्तु विधिवाक्यविदूरस्थाः पदैकवाक्यतया न कर्मकाण्डविधान्वयमर्हन्ति। केन विधिनेत्यपि दुरवधरम्॥ कर्तृस्वरूपसमर्पकत्वात् सर्वविध्येकवाक्यत्वाय सर्वविध्यन्ते पाठ इति चेत्—कर्तृस्वरूपसमर्पकं वा कर्त्रतिरिक्तेश्वरबोधकं वेति शोधने द्वितीयपक्षस्यैव युक्तत्वे स निर्वाहो न भवति॥ तर्हि आराध्यस्वरूपसमर्पकत्वेनोपयोगः स्यादिति चेत्—उच्यते। कर्तुर्वाऽऽराध्यस्य वा बोधनेन तच्छेषत्ववचनं सर्वात्मना दुश्शकम्; तथा सति अपहतपाप्मत्वादिकर्तृस्वरूपाज्ञानेऽपि देहातिरिक्तात्मज्ञानमात्रादपि कर्मणः फलजनकत्वम्, आराध्येश्वराज्ञानेऽपि तथेति च मीमांसकमतभंगापत्तेः। 'वायुर्वै' इत्याद्यर्थवादाधीनज्ञानस्येवौपनिषदार्थज्ञानस्याप्यावश्यकत्वापातात्। अतस्तच्छेषत्वायोगादेव पृथक्पाठः। अपिच विधायकत्वं ब्राह्मणलक्षणमित्यप्ययुक्तम्। अविधायकोपनिषद्भागेष्वपि ब्राह्मणपदव्यवहारदर्शनात्। विधायकवाक्यान्यत्वमिति मन्त्रलक्षणं यथा विधिरूपे मन्त्रेऽव्याप्तमिति त्याज्यम्, तद्वदेवेदमपि। किं तर्हि तल्लक्षणमिति चेत्— मीमांसकैरेव, "तच्चोदकेषु मन्त्राख्या", "शेषे ब्राह्मणशब्दः" (2-1-32, 33.) इति दर्शितम्। तत्रापि तच्चोदकत्वं नाम तत्तदनुष्ठानोपधायकार्थस्मृतिहेतुत्वरूपं प्रयोगसमवेतार्थस्मारकत्वम्। इदमनुष्ठानश्चात्तनोच्चारणानामनुष्ठानासंबन्धिनाञ्च मन्त्राणां दुर्वचमिति, 'मन्त्रशब्देनाभियुक्तव्यवहार्यत्वं मन्त्रत्वम्' इत्येव तत्र निरूढम्। तद्भिन्नत्वं ब्राह्मणत्वम्। इदमुपनिषदामप्यक्षतम्। यदा तु तुल्यन्यायेन, 'ब्राह्मणशब्देनाभियुक्तव्यवहार्यत्वमेव ब्राह्मणत्वम्' इत्यास्थीयते, तदा सुतराम्। एवमर्थवादशब्दस्यापि ब्राह्मणशेषत्वं न लक्षणम्। अङ्गविधेः प्रधानविधिशेषत्वादर्थवादत्वापत्तेः। केवलं समन्वयाय किञ्चित्प्रदर्शनमात्रं तत्। अर्थवाद इत्यभियुक्तव्यवहारविषयत्वमेवार्थवादलक्षणम्। स चार्थस्त्रेधा दर्शितः, "विरोधे गुणवादः स्यात् अनुवादोऽवधारिते। भूतार्थवादस्तद्धानात् अर्थवादस्त्रिधा मतः" इति। यत्रार्थवादे मिथःपदार्थान्वयविरोधो, लक्ष्यते यथा आदित्यो यूप इति— तत्र गौणार्थग्रहणम्। यत्रार्थो ज्ञात एवोच्यते, यथा, 'अग्निर्हिमस्य भेषजम्' इति--सोऽनुवादः। स विधेयान्तरशेषभूतः। एवमनुवादस्यार्थवादान्तर्गतत्वादेव, यत् गौतमेन न्यायदर्शने, विध्यर्थवादानुवादभेदेन मन्त्रभिन्नभागस्य त्रेधा विभजनम्, तत् उपेक्ष्यम्। यस्तु अनुवादो विधायकवाक्यान्तर्गतः, तस्य विधित्वेनैव गणना। अथ भूतार्थवादः कश्चिदुक्तः। तस्याबाधिताप्राप्तार्थप्रतिपादकवाक्यमित्यर्थः। तेन पूर्वाभ्योक्तद्वयवैलक्षण्यम्। भूतशब्देन भव्यान्यत्वस्यापि ज्ञापनात् विधिव्यावृत्तिः। अतान्ऽभूता उपनिषदोऽपि भवन्तु अन्यविधिशेषार्थवादवत्। तावता विधिशेषत्वं न युक्तम्।

परस्परमन्यत्वं ह्युपरि कथ्यते, 'ततोऽन्ये मन्त्राः' इति। 'ततः = विध्यर्थवादाभ्याम् अन्ये मन्त्राः' इति। एतत्तु सामान्यमेव; मन्त्राणामपि विधायकत्वस्वीकारात्। 'मन्त्रो हि विधत्ते' इति ह्याहुस्तान्त्रिकाः। तेन मन्त्राणां विध्यन्यत्ववचनमुत्सर्गः, विधायकत्ववचनमपवाद इति भवद्भिः परिगृह्यते। तद्वदत्रापि ब्राह्मणशेषत्ववचनमुत्सर्गः, स्वातन्त्र्येण प्रतिपादकत्ववचनमपवाद इति परिगृह्य परितुष्यतु भवान्॥५१

आम्नातैरैहिकार्थैरविगुणसफलैः शाकुनज्योतिषाद्यैः

पारत्रिक्या प्रवृत्त्याऽप्यतिनिपुणधियामागमाश्वाससिद्धौ ।

शब्दे तस्माच्च बोधे सति परविषये दोषबाधव्यपेते

मानं तत्र स्वतोऽसौ न कथमितरथा नैगमाध्वापलापः ॥ ५२ ॥

बहुषु प्रामाण्यहेतुषु विद्यमानेषु दूषणमुपनिषद्वाक्यानामभिदधतां निरीश्वरमीमांसकानां साहसमेव तद्व्यवहारनिबन्धनमिति प्रतिपादयन् सर्वैनिगममार्गापलापप्रतिबन्दीमारचयति—आम्नातैरिति। वेदे, 'कारीर्या वृष्टिकामो यजेत' इति दृष्टफलवाक्यानुसारेण, 'स्वर्गकामो यजेत' इत्यदृष्टफलवाक्यानां प्रामाण्यं परिकल्प्यते। अविगुणसफलैरिति। कर्मकर्तृसाधनवैगुण्यादेव क्वचित् कारीर्यादिषु फलासिद्धिरित्यर्थः। शाकुनज्योतिषाद्यैरिति। यथा हि अविगुणसफलैर्वेदोक्तैः कारीर्यादिभिः फलसिद्धिः, तथैवाविगुणसफलैः शाकुनज्योतिषाद्यैर्वेदोक्तैरपि फलसिद्धिर्वेण्यंत

---

अथ पुनः उपनिषद्गतोपासनविधिशेषत्वमेवास्त्विति शंका स्यात्। तावता वेदान्तस्य पृथग्विचार्यत्वाभावो न सेत्स्यति। विचारे च कृते यथा वक्तव्यं भवति तथाऽस्तु; किमत्र तेनेति ॥

**चि. टी. वाङ्मात्रेणेति**। किमपि नास्तीति तदुक्तम्। निर्विशेषमेकमस्तीति एभिरुच्यते। तदिदं शशशृंगमस्तीत्येतत्तुल्यम्। अतो वाङ्मात्रे भेदः। तस्याप्रसिद्धेः। अहमिति स्वयंप्रकाशमिति चेत्, प्रत्यक्त्वेन प्रकाशात् न निर्विशेषता। निर्विकल्पं प्रमाणमिति चेत्, तत् किंप्रमाणकमिति ॥ ५१ ॥

उपनिषदां परविषये स्वातन्त्र्येण प्रामाण्यसंभवस्यैतदधिकरणस्यापि तत्र न न्यायान्तरविरोधः मानान्तरविरोधो वेत्युपपादितम्। अथ पूर्वं 'मृषेत्यूहने प्रीत्ययोगात्' इति अर्थतथात्वं यदुक्तम्, तत् स्वतोमानत्वादपीत्युच्यते। एवं शास्त्रस्य निष्प्रयोजनार्थबोधहेतुत्वायोगात् सिद्धार्थबोधे च प्रयोजनाभावान्न तत्र तात्पर्यमिति शंका च प्राक् प्रयोजनप्रदर्शनेन परिहृता। अथ प्रयोजनं ज्ञायतां मा वा; प्रतीतार्थे प्रामाण्यं कथं न स्यादिति विवक्षुः प्रामाण्यस्याप्रतिषेध्यत्वं तदिष्टरीत्यैवोपपादयति **आम्नातैरिति**। यथा हि प्रत्यक्षेणानुमानेन याहच्छिकपरोक्तशब्देन वा ज्ञाने जाते, इदं ज्ञानं न प्रमा असदनुपयोगित्वादिति अप्रामाण्यं न स्थाप्यते, तथा प्रकृतेऽपि भाव्यम्। तर्हि तत्र तस्य ज्ञानस्येवात्र वेदजन्यज्ञानस्योपेक्षणीयत्वादेव तदर्थयाथात्म्यविचारो नापेक्षित इति ब्रूम इति चेत्—न; सार्थपदकदम्बरूपस्यास्यापि भागस्यार्थेऽपि तात्पर्यस्य युक्ततया शब्दराश्यध्ययनविधिवशादेवार्थस्य प्रयोजनपर्यवसानस्य सामान्यत उन्नयनात् तावतैव विचारारम्भसंभवात्। विचार्यैवान्यतरस्य निर्धार्यत्वात्। तत् किं सिद्धार्थबोधादपि किं वा साध्यार्थबोधने सत्येवेत्येव साम्प्रतिकी चिन्ता। उभयथाऽपि प्रतीतार्थत्यागो न भवतीति तत्र तात्पर्याभावकथनमयुक्तमितीह श्लोके विवक्षितम्।

एव । तेन वेदे प्रामाण्यं दृष्टफलेषु क्वचित् प्रतीयते । तथा शिष्टानामदृष्टार्थप्रवृत्त्या अपि वेदप्रामाण्यं सर्वत्र निश्चीयत इत्याह—पारत्रिक्येति । अतिनिपुणेति । महानुभावानां परलोकहेतुभूतया प्रवृत्त्याऽपि वेदप्रामाण्यं निश्चीयत इत्यर्थः। अनेन महाजनपरिग्रहोऽभिधीयते । आगमाश्वाससिद्धौ = एवं बहुभिर्हेतुभिर्वेदप्रामाण्ये निश्चिते सति । अप्रामाण्यकारणाभावमाह—शब्द इति । शब्दे तस्माच्च बोधे सतीत्यनुत्पत्तिलक्षणाप्रामाण्यनिरासः । परविषये = ईश्वरविषये । दोषबाधव्यपेत इति कारणदोषबाधकप्रत्ययौ निरस्येते । अनादिनिधनाविच्छिन्नसंप्रदायत्वात् कारणदोषाभावाच्च प्रामाण्ये सति, असति चाप्रामाण्यकारणे पुनरसौ = वेदः परस्मिन् ब्रह्मणि मानमेव । एवंच कारणमन्तरेण वेदान्तवाक्यानामप्रामाण्यकथने तेनैव न्यायेन कर्मभागेऽप्यप्रामाण्यं कथनीयमिति वेदमार्गापलाप एव स्यादित्यर्थः ॥ ५२ ॥

---

तत्र सर्वं ज्ञानं स्वतः प्रमेति पक्षे बाह्यागमादिजन्यज्ञानमपि प्रमा स्यात् । तदर्थं गुणाधीनमेव ज्ञानप्रामाण्यमिति स्वीकृत्य बाह्यानामनाप्तत्वात् गुणाभावादप्रामाण्योक्तौ, प्रकृतेऽपि वेदस्यापौरुषेयतया कर्तुरेवाभावात् सुतरामाप्तोक्तत्वरूपगुणाभाव इति अप्रामाण्यमेव स्यादिति शंकायाम्, गुणस्य प्रामाण्यहेतुत्वं न स्वीक्रियते बाह्यागमादिषु शंकितमप्रामाण्यं विविधदोषदर्शनात् प्रतिष्ठाप्यते । दोषाभावोपपादनेन च इहाप्रामाण्यं परिह्रियते । दोषाभावसिद्धिश्च दोषानुपलम्भादपि स्यात्, दोषाभावव्याप्यस्य प्रवृत्तिसाफल्यादेः दर्शनादपि स्यादिति विभाव्य प्रवृत्तिसाफल्यं प्रदर्शयति पूर्वार्धे । **आम्नातैः** वेदविहितैः **अविगुणैः** कर्मकर्तृसाधनवैगुण्यरहितैः अत एव सफलैः । क्वचित् फलादर्शनं वैगुण्यात् । तावता चानाश्वासे लौकिककार्ये सर्वत्र, आयुर्वेदादौ च कार्यकारणभावो न सिध्येदिति भावः । **ऐहिकार्थैः** एतज्जन्मलभ्य वृष्ट्यादिरूपफलहेतुभिरुपायैः, **आगमाश्वाससिद्धौ** वेदे अप्रामाण्यशंकाकलङ्कापनयने सिद्धे । हेत्वन्त राण्यप्याह **शाकुने**ति । शकुनेः पक्षिणः संबन्धि गतिरुतादि । **शकुनी**त्युपलक्षणम्, तच्छास्त्रे मृगमनुष्याद्यानेकसंबन्धिगमनदर्शनादीनामपि फलसूचकत्वकथनात्। पूर्वं फलोत्पादकमुक्तम्। अत्र फलसूचकमुच्यते । एवं ज्योतिषमपि शास्त्रं सूर्यग्रहादिज्योतिर्गतिस्थित्यादितः फलानि दर्शयति । **आदिना** स्वप्नशरीरिवागादिग्रहणम् । **पारत्रिक्या** आमुष्मिकफलार्थया प्रवृत्त्या अनाद्यनुवृत्तविश्वमहाजनप्रवृत्त्या । अस्या अपि यथावत्फलानुमापकत्वं 'विफला विश्ववृत्तिर्नो न दुःखैकफलापि वा । दृष्टलाभफला नापि विप्रलम्भोऽपि नेदृशः'' इति **न्यायकुसुमाञ्जलौ** विशदं व्युदपादि । **अतिनिपुणधियाम्**—बाह्यागमादिवैषम्यविवेचनकुशलविलक्षणबुद्धियुक्तानाम् । अस्य **सिद्धा**वित्यत्रान्वयः । यद्वा **प्रवृत्त्ये**त्यत्रैवान्वयः । महाजनप्रवृत्त्येति वक्तव्यत्वात् । प्रकृते वक्तव्यमाह **शब्दे** इति । शब्दस्य सिद्धरूपपरविषयकत्वं स्थापितम् । बोधश्च परविषयकोऽनुभवसिद्धः । आगमजन्यत्वादेव दोषापेतः । बाधश्च न दृश्यते । दोषाभावात् प्रामाण्यं स्थितम् । दोषाभावबाधाभावज्ञानात् अप्रमाण्यशंकापरिहारः । अतः **असौ**=तृतीयपादोक्तः परविषयकः शब्दो बोधश्च **स्वतो मानं** स्वत एव प्रमाणभूतः— अप्रकम्प्यप्रामाण्य एव स्थितः । **इतरथा** एकभागे अनाश्वासे निर्हेतुकाप्रामाण्यशंकायां **नैगमस्य** पूर्वभागोक्तस्याध्वनः सर्वस्याप्यपलापः कथं न । तत्रापि यजेत स्वर्गकाम इत्यादौ यागस्वर्गाद्यविश्वासेन क्षुद्रार्थान्तरकल्पनसंभवात् ; सर्वथोपेक्षासंभवाच्च । मानं तत्र स्वतोऽसाविति वाक्यं समाप्य, इतरथेत्याद्येव वाक्यान्तरमित्यपि योजयन्ति ॥ ५२ ॥

शास्त्रारम्भोपपत्त्यै चतुरधिकरणी पेटिकेयं (कैयं) प्रवृत्ता
लक्ष्यस्योक्तं विशेषद्वयमिह घटते वक्ष्यमाणोपजीवि ।
सद्ब्रह्माद्युक्तिवेद्यः पर इति हि वदेत् कारणत्वाधिकारे
वक्ष्यत्यस्य द्विलिङ्गाद्यधिकृतिषु पुनस्तादृशानन्दताद्वि(तादीन्) ॥ ५३ ॥

इति अधिकरणसारावल्याम् आरम्भपेटिका ॥

एवं चतुर्णामधिकरणानामर्थान् विभागेनाभिधाय सामान्यार्थानुवादपूर्वकमनन्तरयोः जन्माद्यधिकरणसमन्वयाधिकरणयोः उत्तरत्र वक्ष्यमाणाभ्यां कारणत्वाधिकरणोभयलिङ्गाधिकरणाभ्यां पौनरुक्त्यमाशङ्क्य उत्तरत्र तत्तदधिकरणार्थप्रसाधनम्, अत्र पुनः वक्ष्यमाणार्थोपजीवनेन तत्तदर्थाभिधानमिति न पौनरुक्त्यमित्याह–शास्त्रेत्यादिना । विशेषद्वयमेवम्—ब्रह्मादिशब्दानां श्रीनिवासपर्यवसानं द्वितीयाधिकरणोक्तम्; वेदान्तवेद्यस्य ब्रह्मणो निरतिशयानन्दरूपत्वं चतुर्थाधिकरणोक्तम् । तत्र पूर्वं वक्ष्यमाणं कारणत्वाधिकरणमुपजीवति, उत्तरमुभयलिङ्गाधिकरणमिति सुशोभनमेतत् ॥ ५३ ॥

**इति अधिकरणचिन्तामणौ आरम्भपेटिका ॥**

---

नन्वत्र चतुस्सूत्रीरूपाधिकरणचतुष्टये प्रथमाधिकरणे सिद्धे व्युत्पत्तिसमर्थनं तृतीयाधिकरणे त्वाभिमताकारस्येश्वरस्य मानान्तरावेद्यत्वस्थापनञ्च निष्प्रकम्पम्, यत् पुनर्द्वितीयाधिकरणे लक्षणमुक्तं जगत्कारणत्वरूपम्, यच्चाऽऽनन्दरूपत्वादिना स्वतःपुरुषार्थत्वं तुरीयाधिकरणे उक्तम्, तदुभयं विचार्यम् । कारणत्वस्यान्यत्रापि संभवात् ब्रह्मणि निमित्तोपादनत्वप्रयुक्तकतिपयहेयसंभवाच्चेत्यत्राह शास्त्रेति । अधिकरणचतुष्टयरूपेयमुपोद्घातपेटिका शारीरकशास्त्रमारम्भणीयमिति आरम्भणार्हत्वस्थापनायैवं प्रवृत्ता । तत्र भवद्दर्शितविशेषद्वयमत्र न विचार्य स्थाप्यते । किंतु तयोः शास्त्रे वक्ष्यमाणत्वात् तदुपजीवनेन तत्तद्विशेषं सिद्धं कृत्वा तद्विषयापातप्रतीतिदाढर्यात् विचारार्हत्वं स्थापितम् । कुत्र वक्ष्यत इति चेत्—सद्ब्रह्म आत्मा असत् आकाशः प्राणः नारायण इत्याद्युक्तयः कारणवाक्यानि, तद्वेद्यः परः=चिदचिद्विलक्षण इति यथायथमधिकरणेषु वदेत्— वक्ष्यति हि । तेन धर्म्यभावशंका, लक्षणासंभवशंका, लक्षणातिव्याप्तिशंका च परिहृता भवति । प्रथमाध्यायो हि कारणवाक्यविचारात्मा । द्वितीयाध्याये च स्मृतियुक्त्यादिना कारणत्वस्य विचाल्यत्वं परिहृत्य स्थापनं भवति । तदेवं कारणत्वाधिकारे जगत्कारणत्वविचारात्मनि प्रथमद्विके जन्माद्यधिकरणप्रस्तुतलक्षणस्थापनम् । अस्य ब्रह्मणः आनन्दत्वहेयप्रत्यनीकत्वप्राप्यत्वादीन् गुणांश्च तृतीयाद्यध्यायगतासु द्विलिङ्गाद्यधिकृतिषु उभयलिङ्गाधिकरणादिषु वक्ष्यति । अतस्तदुपजीवनेन समन्वयाधिकरणे प्रयोजनरूपत्वं सिद्धं कृत्वा साफल्यं स्थापितमिति ।

**चि. टी. कारणत्वाधिकारे** इत्यस्य कारणत्वाधिकरणे इत्यर्थो व्याख्यासंमतः । कृत्स्नस्याध्यायस्य ग्रहणसंभवेऽपि एतन्मात्रोक्तिः अधिकृतिशब्दवत् अधिकारशब्दस्येहाधिकरणपरत्वौचित्यात् कारणत्वाधिकरणस्य प्राच्यसर्वाधिकरणाक्षेपरूपत्वादेतत्प्रतिपाद्यत्वोक्तौ पूर्णाध्यायप्रतिपाद्यत्वमुक्तं भवती, त्याशयेन । **श्रीनिवासे पर्यवसान**मिति । गतिसामान्यादित्यादिसूत्रसिद्धमत्र, "श्रीमति ब्रह्मतोक्तेः" इत्येतदनुरुध्योक्तम् ॥ ५३ ॥ **इति सारार्थरत्नप्रभायाम् आरम्भपेटिका ॥**

## ईक्षत्यधिकरणम् ॥ ५ ॥

सूत्रम् ॥ ईक्षतेर्नाशब्दम् । गौणश्चेन्नात्मशब्दात् । तन्निष्ठस्य मोक्षोपदेशात् । हेयत्वावचनाच्च । प्रतिज्ञाविरोधात् । स्वाप्ययात् । गतिसामान्यात् । श्रुतत्वाच्च ॥ १-१-५—१२. ॥

आत्मन्येवं परस्मिन्नकृत इति मिते(मते) विश्वहेतुत्वलक्ष्ये
शास्त्रैकस्थापनीये निरुपधिपरमप्रेमयोग्ये प्रसक्ते ।
ईदृक्त्वं स्यात् यथार्हं प्रकृतिपुरुषयोर्नानुमानाद्ययोग्यौ
दुःखास्पृष्टौ च ताविन्त्यथ परकथनं दोषवीति क्रमेण ॥ ५४ ॥

अत्र शारीरकशास्त्रारम्भहेतुभूतचतुस्सूत्र्यात्मकप्रथमपेटिकार्थं सामान्यतो विशेषतश्च दर्शयित्वा तद्(सम)नन्तरं शास्त्रारम्भरूपद्वितीयपेटिकार्थाभिधानेन तयोः संगतिमप्याह—आत्मन्येवमिति । अत्र खलु चतुरधिकरण्याम् आत्मा ज्ञातव्य इत्यर्थैक्यम्, 'अकृत इति मिते' इत्यादिकमर्थचतुष्टयमधिकरणार्थविभागः; ब्रह्मविशेष(विशेषण?)प्रतिपादकत्वात् सर्वेषामधिकरणानाम्। अथ द्वितीयपेटिका-पूर्वपक्षानुवादमुखेन संगतिमपि दर्शयन् पेटिकाप्रवृत्तिप्रकारमपि विशदं दर्शयति—ईदृक्त्वमिति । पूर्वपेटिकाप्रोक्तमर्थजातं यथार्हं प्रकृतिपुरुषयोरेव स्यादिति परकथनम्, न तावनुमानाद्ययोग्यौ

---

संपादिततात्पर्यकानन्तस्थिरफलभूतजगत्कारणवस्तुविषयकापातप्रतीतिस्थापनं 'विना शास्त्रारम्भणायोगात् तत्स्थापनं चतुरधिकरण्या कृतम् । अथ यथाक्रमं शास्त्रारम्भ इत्याह **आत्मनीति** । **क्रमेणे**ति पदं उपरितनविचाराणामुत्तरोत्तरस्वरूपं क्रममिव उपोद्घातानन्तरं शास्त्रारम्भ इति क्रममपि दर्शयति । अतोऽवसरसंगतिरुक्ता भवति । अधिकरणचतुष्कार्थं क्रमेणाऽऽह । **एवम्** उक्तप्रकारेण । अस्य **प्रसक्ते** इत्यत्रान्वयः। **अकृत इति मते** इति प्रथमाधिकरणार्थः। सिद्धे व्युत्पत्तिसमर्थनं हि तत्कार्यम् । अतः **एवं ब्रह्मण्यकार्यार्थकवचनमिते** इति यावदुक्तं भवति, तावदुक्तं भवति अनेनापीति मन्तव्यम् । **चिन्तामणौ** "अकृतत्वं प्रधानार्थः" इति वाक्ये **प्रधानार्थ**पदस्य प्रधानार्थघटकमित्यर्थः । सिद्धार्थबोधनक्षमत्वं शब्दस्य, सिद्धार्थस्यापि शब्दबोध्यत्वं वा प्रधानार्थ इत्येव विवक्षितम् । सिद्धत्वं हि प्रागेव विदितम्, न तु अधिकरणसाध्यम् । अकृत इत्यनेन मिते, 'नास्त्यकृतः कृतेन' इति वाक्येन मिते इति तदर्थ उक्तः । तद्धि वाक्यं विध्यघटितं कार्याननिवतसिद्धवस्तुविषयकम् । तस्य बोधकत्वं नास्तीति पूर्वपक्षी मन्यते । **मिते** इति प्राच्य पाठः । सिद्धे व्युत्पत्तिसमर्थनेन तद्वाक्यमितत्वं स्थापितमिह । बहुषु सिद्धब्रह्मपरेषु वाक्येषु सत्सु एतद्ग्रहणं कुत इति चेत् —एतद्घटितमन्त्रस्य प्रथमसूत्रार्थविषयकत्वात् । अकृतपदेन ब्रह्मबोधनाच्च । सिद्धत्वकीर्तनेन सिद्धमपि शब्दबोध्यमित्यपि श्रुतिरियं दर्शयतीति प्रदर्श्यते । किञ्चाकृतः कृतेन=कर्मणा नास्तीति श्रुतिवाक्यार्थः। अतश्च ब्रह्मणः कार्यार्थकवाक्यसंबन्धो नावश्यक इति ज्ञाप्यते । **अकृत** पदमपि न कृतः अकृत इति तत्पुरुषतः सिद्धरूपार्थमिव, न विद्यते कृतं=कर्म यस्मै इति बहुव्रीहितः यः कर्माप्राप्यः, यः कर्मविधायकवाक्यान्वयानुपजीवीत्यर्थबोधनात् अकार्यार्थकवाक्यमित इत्यर्थमपि गमयतीति अस्मिन् शब्दे आदरः । एवंमितत्वादिभिश्चतुर्भिराकारैः परस्मिन् आत्मनि चतुरधिकरण्या **प्रसक्ते**— विचारप्रयोजकयथावस्थितापातविषयत्वेन सिद्धे सति । उत्तरार्धस्य विचारमारभत इत्येवार्थः

दुःखास्पृष्टौ चेति उत्तराभ्यां द्वाभ्यामधिकरणाभ्यां क्रमेण दोषवीतीत्यर्थः। अथवा ईक्षत्वमित्यारभ्य इतिशब्दपर्यन्तं पूर्वपक्षवाक्यमेव। प्रकृतिपुरुषयोरेव जगत्कारणत्वादिकं प्रमाणसिद्धम्; तयोरनुमानाद्ययोग्यत्वं दुःखास्पृष्टत्वं च नास्तीति पूर्वाधिकरणाक्षेपे उत्तरं(र?)योग्याभिरुक्तिभिर्दोषवीतीति। अथ = समनन्तरपेटिकया पादशेषेण वा। पूर्वं हि शास्त्रयोन्यधिकरण-समन्वयाधिकरणाभ्यां वेदान्तवेद्यस्यार्थस्यानुमानाद्ययोग्यत्वं दुःखासंस्पृष्टत्वं चोक्तम्; उभयमपि प्रकृतिपुरुषयोरन्यतरस्य वेदान्तवेद्यत्वाङ्गीकारे न संभवतीति पूर्वोक्तावान्तरपेटिकासंगतिरप्यत्रोच्यते। अकृत इति। प्रथमाधिकरणे 'नास्त्यकृतः कृतेन' इति विषयवाक्योक्तमकृतत्वं प्रधानार्थं(र्थं?) इति दर्शयति। एवं द्वितीयाधिकरणादिष्वपि विश्वहेतुत्वादिकं प्रधानार्थं इति इत्यनुक्रमेण मन्तव्यम्। तत्र हि वेदान्तवाक्यानां ब्रह्मण्ययोगव्यवच्छेदपरे प्रथमपादे प्रकृत्याद्यन्ययोगव्यवच्छेदकथनमयोगव्यवच्छेदशेषत्वेन, न पुनः प्राधान्येनेति समाधानात् ईक्षत्यधिकरणादीनामसंगतिरनाशङ्कनीया।

अयं किल पेटिकाविभागः—प्रथमपादे शास्त्रारम्भार्था चतुरधिकरणी तावदेका। तत्र द्वयोरवान्तरपेटिकात्वम्। पुनरीक्षत्यधिकरणानन्दमयाधिकरणयोरेकपेटिकात्वमुच्यते। अतः परं पञ्चानामप्यधिकरणानां प्रकृतिपुरुषविशेषपरत्वात् एकपेटिकात्वं प्रतिप(पा?)द्यते। अथवा ईक्षत्यधिकरणादीनि त्रीण्येका पेटिका; सदात्मपुरुषरूपसामान्यशब्दात्मकश्रुत्या समुत्थितस्य पूर्वपक्षिणः ईक्षत्यादिविशेषलिङ्गेन प्रतिक्षेपस्य तुल्यत्वात्। श्रुतिलिङ्गयोर्हि सामान्यश्रुत्यपेक्षया विशेषलिङ्गं प्रबलमिति तान्त्रिकाः। ततः परम् आकाशप्राणज्योतिरादिविशेषश्रुत्या समुत्थितस्य पूर्वपक्षिणो

---

तस्य पूर्वपक्षतन्निरासोभयरूपत्वादुभयमुक्तम्। अत्र त्वदभिमतब्रह्मविषयकं किमपि वाक्यं नास्तीति न सामान्यरूपेणाक्षेपः; किंतु प्रत्येकं वेदान्तषट्कग्रहणेन बह्वधिकरणात्मना। तत्र भवदीयापातप्रतीतिः त्वदभिमतवस्तुनिर्णयेन न मानिता भवति, किंतु शोधने तद्भिन्नस्यैव जगत्कारणत्वावगमात् तन्निर्धारणेन बाध्यत एवेति पूर्वपक्षा भवन्ति। ईदृक्त्वं जगज्जन्मस्थितिलयहेतुत्वं यथार्हम् अचेतने चेतने वा यादृशं भवितुमर्हति, तादृशं स्यात् प्रकृतौ, पुरुषे जीवे वा। ईक्षत्यधिकरणे प्रकृतिः। अनन्तराधिकरणद्वये पुरुषसमष्टिः व्यष्टिश्च। तदनन्तरञ्च प्रकृतिकार्यम्, चेतनविशेषो वा। सर्वथा न तदुभयातिरिक्तमिति।

ननु शास्त्रैकवेद्यमनन्तफलभूतं किमप्यस्तीत्यापातप्रतीत्या जिज्ञासा। तत्र सिद्ध्यत् वस्तु यद्वा तद्वा भवतु। किं तत्रानिष्टमित्यत्राह नानुमानेति। प्रकृतिर्वा पुरुषो वेति पक्षे न भवदिष्टतादृशवस्तुसिद्धिः; तयोः शास्त्रयोनित्वाभावात्; अनुमानप्रत्यक्षविषयत्वात्। अनुमानसाध्यत्वं प्रकृतेः सांख्यप्रसिद्धम्। पुरुषस्य तत् सांख्यतार्किकसर्वतान्त्रिकप्रसिद्धम्। प्रकृतेः सूक्ष्मावस्थया परोक्षत्वेऽपि स्थूलावस्थया प्रत्यक्षत्वमपि; द्रव्यैक्यात्। पुरुषस्य प्रत्यात्मं प्रत्यक्षत्वमिष्टम्। किञ्च तौ न दुःखास्पृष्टौ। प्रकृतेः सुखदुःखमोहात्मकसत्त्वरजस्तमोविशिष्टत्वात्; जीवस्य च दुःखितायाः प्रसिद्धत्वात्। उभावपि हेयास्पदभूताविति यावत्। हेयप्रत्यनीकत्वदिष्टवस्तुसिद्धिस्ततो न भवतीति भावः। श्लोके ईदृक्त्वमित्यारभ्य इतीत्यन्तं परेषां पूर्वपक्षिणां कथनात्मकमिति चिन्तामणिद्वितीययोजनैव स्वरसा। अन्यथा प्रकृतिपुरुषयोरिति परकथनं न ताविति दोषवीतीत्यन्वये दूरान्वय-इतिशब्दावृत्त्यादिदोषात्। हेयास्पदत्वस्येव अनुमानादियोग्य

न्यायानुकूलयौगिकश्रुत्यर्थाङ्गीकारेणाऽऽकाशप्राणाधिकरणाभ्यां तावत् निराकरणं क्रियते। आकाशप्राणशब्दयोस्तु यौगिकार्थ एवाङ्गीक्रियेते। न तु रूढिर्योगमपहरति। क्लृप्तो योगः कल्प्यां रूढिं बाधत इति न्यायेन बाध्यते। तेनाकाशप्राणाधिकरणयोः सिद्धमवान्तरपेटिकात्वम्। ज्योतिरधिकरणेन्द्रप्राणाधिकरणयोस्तु रूढिभङ्गं विहाय तत्तद्रूढार्थविशिष्टपरमात्मपरत्वमुच्यत इति तयोरपि पेटिकान्तरत्वं सिद्धम्।

*अत्र चतुस्सूत्र्यां सम्यगर्थावबोधनाय प्रमेयसंग्रहपरिश्रमशालिभिर्भवितव्यम्। अवलोकनीया च नियतमाचार्यकृता शतदूषणी ॥ ५४ ॥

---

त्वस्य पुरुषार्थताबाधकत्वाभावाच्च। अतस्त्वदभिमतवस्तु नेदमिति ज्ञापनमात्राय पूर्वपक्षिवाक्यमेवेदम्। अथेत्यनेन शास्त्रेऽत्र यावत् ग्रहीतुं शक्यं तावत् ग्राह्यम्; न त्वधिकरणद्वयमात्रम्। अत्रोत्तरार्धारम्भे तादृशवस्तुस्थापनायेति शेषपूरणे कृतेऽर्थो विशदो भवेत्–तादृशे परमात्मनि प्रसक्ते–आपातप्रतीतिविषयतया सिद्धे तत्स्थापनाय अथ अन्यादृशं पूर्वपक्षिणां वादं परिहरतीति। अथेति संगतिसूचनमपि। पेटिकाविभागादिकं चिन्तामण्युपदिष्टं सर्वमवधेयम् ॥

*वाक्यमिदं वा पूर्वश्लोकव्याख्यान्ते, श्लोकोऽयं वोपोद्घातपेटिकान्ते स्यात् ॥

**चि. टी. पूर्वाधिकरणाक्षेपे** इति। परात्मनः श्रीमतः कारणत्वं जन्माद्यधिकरणेऽभिमतम्, तस्य शास्त्रैकवेद्यत्वं हेयप्रत्यनीकत्वादि चोपर्यधिकरणद्वयेन। प्रकृत्यादेः कारणत्वे तादृशसर्वविशेषणाक्षेप एवेति। अनेनास्याधिकरणस्याऽऽक्षेपसंगत्या प्रवृत्तिरिति मन्येरन्। तत्र किञ्चिद्वक्तव्यम्। 'लक्ष्यस्योक्तं विशेषद्वयमिह घटते वक्ष्यमाणोपजीवि' इति प्रागुक्तत्वात् न नारायणकारणत्व परमपुरुषार्थत्वादिकं पूर्वाधिकरणस्थाप्यम्। अतस्तदाक्षेपः पूर्वाधिकरणाक्षेपो न भवेत्। शास्त्रयोनित्वाधिकरणे च शास्त्रवेद्यसर्वाकारस्थापनं न कृतम्, अनुमानासाधकत्वमात्रमुक्त्वा शास्त्रयोनित्वसंभावना दर्शिता। न च संभावनाऽपि न भवतीतीहोच्यते। सर्वपूर्वाधिकरणप्रमेयं त्वनुगतम् आपातप्रतीतिसत्त्वात् शास्त्रमारम्भणीयमित्येतदेव। न चात्र तदंशाक्षेपः। तदाक्षेपस्याप्यभिमतत्वे शास्त्रमपि उपोद्घातपेटिकान्तर्गतमेव भवेत्। मीमांसकाभिमतासु आक्षेपदृष्टान्तावसरप्रसंगादिसंगतिषु आक्षेपसंगतिर्नाम पूर्वाधिकरणस्थापितार्थस्य पुनरनुपपन्नत्वशंकायामेव। अतस्तदयोगात् आक्षेप इति कथनेन, पूर्वपक्ष्यनुसारे सिद्धान्त्यभिमतापातप्रतीतिविषयार्थसिद्धिर्नास्तीति विवेचनमात्रम्। तेनास्य पादस्यायोगव्यवच्छेदार्थत्वं ज्ञापितं भवति। अतोऽवसरसंगतिरित्येव वक्तव्यम्। यद्वा, 'चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधाः' इति लक्षणात् साधके विचारिते साध्यमाहेति हेतुहेतुमद्भावप्रकारो वा भवत्वित्यलम्। उत्तरमिति पाठो न सम्यक्। न हि उत्तरं दोषवीति; किंतु परकथनम्। अत उत्तरयोग्याभिरिति समस्तं स्यात्। यद्वा आक्षेपे दोषवीतीत्युत्तरं भवति योग्याभिरुक्तिभिरित्यन्वयः। ननु वैदिकप्रयोगबाहुल्यात् आकाशादिशब्दस्य परमात्मन्यपि रूढिः स्यादित्यत्राह क्लृप्त इति। अत एव प्रोक्षण्यधिकरणे (मी. 1-4) प्रोक्षणीशब्दस्याप्सु रूढिर्नेष्टा; प्रकृष्टोक्षणसाधनरूपयोगार्थत एव निर्वाहात्। अत एव 'अनन्तेति पदस्य भगवति रूढिर्नापेक्षिता' इत्याहुः। सम्यगर्थावबोधनायेति। श्रीभाष्यमत्र विस्तृतम्। तदर्थानां सर्वेषां संग्रहेण बुभुत्सायां विष्णुचित्तविरचितप्रमेयसंग्रहादिकं पठनीयम्। विस्तरेण विवेचनेच्छायामाचार्यकृता शतदूषणी समादर्तव्येत्यर्थः॥५४

गौणेक्षासाहचर्यात् सति बहुभवनप्रेक्षणं नैव मुख्यं
दृष्टान्ताद्यैरिहाऽऽभात्यनुमितिरचितस्तादृशाज्जन्म युक्तम् ।
सच्छब्दस्तेन मूलप्रकृतिमविकृतिं व्याहरेदित्ययुक्तं
श्रुत्याऽन्येषां निरोधात् त्वदभिमततिरस्कारिलिङ्गादिभिश्च ॥ ५५ ॥

पूर्वं परमात्मनो वेदान्तवेद्यत्वमुक्तम् । इदानीं प्रकृत्यादीनां तदेव वेदान्तवेद्यत्वं न संभवतीत्युच्यते । तत्रापि सांख्यादिशास्त्रोक्तप्रकृतिपुरुषयोः प्रकृतेर्विश्वाकारेण परिणतायाः सर्वलोकप्रसिद्धत्वात् तदपेक्षया पुरुषस्य सूक्ष्मत्वात् सैव प्रथमं निराक्रियत इति संगतिः । अथवा–पूर्वाधिकरणे वेदान्तवेद्यस्य वस्तुनः पुरुषार्थरूपत्वमुक्तम् । तन्न घटते, अपुरुषार्थरूपायाः प्रकृतेरेव कारणत्वादिति । एवं वा—सर्वेषामपि वेदान्तवाक्यानां प्रकृतिपुरुषोत्तीर्णब्रह्मपरत्वमुक्तं पूर्वाधिकरणे । सर्ववेदान्तसारभूता सद्विद्या तावत् प्रकृतिमेवाऽऽचष्टे ; किमन्यैर्वाक्याभासैरिति । एवं संभावितं संगत्यन्तरमपि वाच्यम्। विषयस्तु–परमेव ब्रह्म; पूर्वं शास्त्रारम्भ इति ततो विभागः। संशयः पुनः— किं प्रकृतिविलक्षणं ब्रह्म सद्विद्यावेद्यम्, उत प्रकृतिरिति । संशयोत्थानकारणं तु—सदिति सामान्यश्रुतिः । सर्वभाववाचकस्य सच्छब्दस्य प्रकृतिपुरुषेश्वरसाधारणत्वात् । तदर्थविचारस्तु—सच्छब्दः किं परमात्मपरः, उत प्रकृतिपरः । प्रकृतिपरत्वे 'तदैक्षत' इत्युक्तमीक्षणं न घटते, उत घटत इति । तदर्थं पुनर्विचार्यते—इदमीक्षणं मुख्यम् उत गौणमिति । पुनश्च विचार्यते—अत्र गौणेक्षणसाहचर्यं नास्ति उतास्त्येवेति । तत्रापि विचार्यते— 'तत् तेज ऐक्षत' इत्यादिकं तेजःप्रभृतीक्षणं मुख्यम् उतामुख्यमिति । अतोऽपि विचार्यते—किं मुख्यत्वानुरूपा हेतवोऽनुरोद्धव्याः, उत अमुख्यत्वानुरूप-

---

ईक्षत्यधिकरणपूर्वपक्षसिद्धान्तौ संग्रहेणाऽऽह गौणेति । 'तदैक्षत बहु स्यां प्रजायेय' इति सन्निष्ठत्वेनोक्त ईक्षतिशब्दार्थो न मुख्यः=न ज्ञानरूपः ; पाठविरोधात् । 'तत् तेज ऐक्षत, ता आप ऐक्षन्त' इत्यत्रैक्षतिशब्दार्थो हि गौण एव, न मुख्यः ; तेजआदौ ज्ञानायोगात् । बहुभवनेति पदेनेदं सूच्यते—सिद्धान्तेऽपीक्षणं न मुख्यम् । चाक्षुषज्ञानं रूपसाक्षात्कारो वा मुख्यार्थः ; न तु भाव्यर्थोत्पत्तिविषयकसंकल्पः सिद्धान्तिसंमतो मुख्यः । अतोऽयमेव गौणार्थोऽस्त्विति । अतः सत् अचेतनं गौणेक्षणवत्त्वात् । दृष्टान्तेति । अनुमानप्रमाणमेव दृष्टान्तसापेक्षम् । अतः 'यथा सोम्यैकेन मृत्पिण्डेन' इत्येवं दृष्टान्तकथनात् कारणस्य, नानुमानागोचरः परमात्मा । आद्यपदेन सदेवेदमिति प्रपञ्चैक्यम्, येनाश्रुतं श्रुतं भवतीति एकविज्ञानविज्ञेयत्वञ्च गृह्यते । सदचेतनं प्रपञ्चैक्यात् ; प्रपञ्चज्ञाततासंपादकज्ञानविषयत्वाच्चेति । अचित इति पदस्य पूर्वत्रापि इवोपर्यप्यन्वयः । प्रपञ्चो ह्यचिदेव । तस्याचित्त्वेन सतु स्यात् कस्माच्चिदेव जन्म युज्यते । तथाच प्रपञ्चः अचित्त्वेन सरूपवस्तुकारणकः कार्यत्वादिति । तेन=उक्तसद्धेतुना सच्छब्दः सांख्योक्तां मूलप्रकृतिं वदेत् । ननु तेजसः कारणत्वेनोक्तत्वात् सच्छब्दो वायुपर एव स्यादित्यत्राह अविकृतिमिति । न विकृतिः—अविकृतिः ; ताम् । 'अग्र आसीदेकम्' इति प्रलयदशाया एव वचनात् विकृतिभूतस्य च वायोस्तदानीमयोगान्न तथा । न च प्रकृतेरपि किञ्चित् प्रति विकृतित्वमस्ति ॥ 'अव्यक्तमक्षरे लीयते' इति अव्यक्तस्यापि विकृतित्वं ज्ञायते इति

हेतवोऽपीत्यादि । फलफलिभावस्तु—अमुख्यत्वानुरूपाणां बहूनामपि युक्तीनामत्र विद्यमानत्वात् 'तत्तेज ऐक्षत' इत्यत्रेक्षणस्य गौणत्वात् गौणेक्षासाहचर्यस्य चात्र विद्यमानत्वेन सदीक्षणस्यापि गौणत्वात् अत्रोक्तमीक्षणं प्रकृतिपरत्वेऽपि संघटते इति सांख्याद्युक्तं प्रधानमेवात्र सच्छब्दः प्रतिपादयतीति पूर्वपक्षे। सिद्धान्ते फलफलिभावस्तु वैपरीत्येन। उक्तमर्थमनुक्रमेणाऽऽचष्टे—गौणेक्षासाहचर्यादिति । बहुभवनप्रेक्षणं नैव मुख्यमिति । इत्थं किल पूर्वपक्षी मन्यते—ईक्षणगुणयोगात् प्रकृतिकारणत्वं निराक्रियते ब्रह्मवादिभिः। तत्रेक्षणं गौणम्, 'कूलं पिपतिषति', 'वृष्टिप्रतीक्षाः शालयः' इत्यादिवत् चेतनधर्मस्याचेतनेऽपि योजयितुं शक्यत्वात्। अत्र गौणत्वे निदानम्, 'तत्तेज ऐक्षत' इत्यादिगौणेक्षणसाहचर्यमेव । किंच मृत्तत्कार्यदृष्टान्तादेः, "भेदानां परिणामात्" इत्यादिसांख्योक्तं प्रधानानुमानमेव प्रतिभातीत्याह-दृष्टान्तादेरिति। न च श्रुतिप्रतिभानमात्रमेव(वम्?); युक्तियुक्तमपीदमित्याह—तादृशादिति । अचेतनरूपकार्यस्याचेतनादेव जन्म युक्तम् । ननु सविकारे प्रधाने कथं सच्छब्दः स्यादित्याशङ्क्याह—सदिति । महदादीनां विकाराणां क्वाचित्कत्वेन (कादाचित्कत्वेन?) सच्छब्दवाच्यत्वं मा भूत्, अविकृतिरूपायाः प्रकृतेर्नित्यसिद्धत्वेन सच्छब्दवाच्यत्वं भवेत् । इति पूर्वपक्षे राद्धान्तमाह—अयुक्तमिति । श्रुत्या—चेतनासाधारणात्मशब्दादिश्रुत्या प्रकृत्यादीनां निरोधात् । न केवलं श्रुत्या, अपितु त्वदभिमतप्रकृतिकारणत्वतिरस्कारकेक्षणादिलिङ्गवाक्यप्रकरणैरप्ययमेवार्थ इति निश्चीयत इत्याह—त्वदभिमतेति ॥ ५५ ॥

---

चेत्—अत्र मूलप्रकृतिशब्देन तमस एव ग्रहणम् । अथवा सांख्यमते अक्षराद्यनंगीकारान्न दोषः । एवमविकृतिशब्देन सिद्धान्तिदूषणञ्च । संविदिति शुद्धपरमात्मग्रहणे प्रकृतेस्तत्कार्यत्वोक्तौ अविकृतित्वभंगः । प्रकृतिसहितग्रहणे एकमेवेति विरुध्यत इति । एवं पूर्वपक्षमनूद्य निरस्यति इत्ययुक्तमिति । श्रुत्येति । एतत्पादविवरणम्, आदेशात्मसच्छब्दैरिति श्लोके भविष्यति । अत्रैतावत् ग्राह्यम्—परमात्मविषये इह आदेशशब्दः आत्मशब्द इत्येवं श्रुतिरेव प्रमाणम् । प्रकृतिवाचकं पदं तु नास्ति । त्वदुक्तं साहचर्यं गौणेक्षणसन्निधिः स्थानप्रमाणं वा भवेत्, प्रकरणं वा । यत् दृष्टान्तादिकमुक्तम्, तत्र प्रतिज्ञादृष्टान्तोभयनिरीक्षणेनावयवसमुदायात्मकन्यायरूपत्वांगीकारे वाक्यप्रमाणात् हेतुः कल्पनीय इति वाक्यं प्रमाणं स्यात् । तादृशाज्जन्मयुक्तमिति प्रपञ्चस्य सरूपोन्नयनसामर्थ्योक्त्या लिंगमुक्तं स्यात् । इमानि लिंगवाक्यप्रकरणस्थानानि आत्मादिश्रुतितो दुर्बलानि । सर्वत्र श्रुतिप्रमाणेन अन्येषां लिंगादीनां निरोधात् । किञ्च त्वदभिमतं यत् तेजईक्षणादेर्गौणत्वं प्रपञ्चाभेदः प्रतिज्ञासंगमनमित्यादि, तत्तिरस्कारकहेतवः सन्ति । सर्वत्र मुख्येक्षणस्वीकारात्। प्रकृतौ चेतनाचेतनात्मकप्रपञ्चैक्यस्य चेतनप्रपञ्चस्यापि प्रकृतिज्ञानज्ञाततायाश्च दुर्वचत्वात् । अन्ये च हेतवो वक्ष्यमाणा आदिपदग्राह्याः । तैरपि त्वदुक्तमयुक्तमिति सिध्यतीति ॥

चि. टी. प्रकृत्यादीनामिति । अन्येषामित्यस्यायमर्थ इति भावः । आदिपदेन ईक्षणगौणत्व-प्रपञ्चैक्य-एकज्ञानज्ञेयत्वादिग्रहणम् ॥ तिरस्कारकेति । त्वदुक्तलिङ्गप्रकरणादिकं श्रुतिनिरोध्यम्; असद्विवक्षितं तु लिङ्गप्रकरणादिकं श्रुतिलम्भितबलमिति भावः ॥ ५५ ॥

**ज्ञाते ह्येकत्र सर्वं विदितमिति भवत्यैक्यसिद्ध्यै प्रतिज्ञा**
**मृत्तत्कार्यादयश्च त्रय इह कथितास्तस्य दृष्टान्तभेदाः ।**
**तेनाव्यक्तानुमानं कथितमिति वृथोत्कण्ठितं हेत्वनुक्तेः**
**सारूप्यादेश्च हेतोरुपरि परिहृतेरत्र संभावनोक्तेः ॥ ५६ ॥**

अत्र सांख्योक्तानुमानिकप्रक्रियाप्रत्यभिज्ञानमाशङ्क्य निराकरोति—ज्ञात इति । अत्रैवं किल पूर्वपक्षी मन्यते—एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा तावत् दृश्यते 'येनाश्रुतं श्रुतम्' इत्यादिना । न प्रतिज्ञामात्रम्, दृष्टान्तोऽप्यस्तीत्याह—मृत्तदिति । आदिशब्दात् श्रुत्युक्तो नखनिकृन्तनादिर्गृह्यते । एवमनुमानप्रधानभूतयोः प्रतिज्ञादृष्टान्तयोरुपपादनेनेदं वाक्यं सांख्योक्तानुमानानुवादकमेव स्यादि-

---

सूत्रे **अशब्दमिति** पदेन शब्दप्रमाणकभिन्नम् अनुमानप्रमाणकमित्युक्तम् । तेन सद्विद्यावाक्यं प्रतिज्ञादृष्टान्तरूपेण दृश्यमानं कारणस्यानुमानप्रमाणसिद्धिक्रममनुवदतीति आनुमानिकत्वं सूचयतीति स प्रधानपूर्वपक्षहेतुः । तं खण्डयति **ज्ञाते** इति । **एकस्मिन् ज्ञाते सर्वं विदितं भवतीति** मैत्रेयीब्राह्मणगतवाक्यतुल्यतया लेखनम्, येनाश्रुतमिति वाक्यस्य तदेककण्ठ्यायायमेवार्थो वक्तव्यः । अतः येन श्रुतेन मतेन विज्ञातेनेति पदाध्याहार एव कार्यः । न तु येन हेतुना कालादृष्टेश्वरादिनेति कोऽप्यर्थ उत्प्रेक्ष्यः ; मृत्पिण्डादिदृष्टान्तविरोधाच्चेति सूच्यते । जगत् किञ्चिज्ज्ञानाधीनज्ञाततार्कं मृत्पिण्डादिज्ञानाधीनज्ञातताकमृन्मयादिवदिति श्रुत्यभिमतवाक्यम् । किमर्थमिदं ज्ञानज्ञेयत्वकथनमित्यत्राह **ऐक्यसिद्ध्यै** इति । कार्यानेकत्वेऽपि कारणभूतं वस्त्वेकमेव । न तु परमाणुवत् अनेकम् । तथा सत्कार्यवादात् कार्यकारणैक्यमेव ; न तार्किकमत इव द्रव्यभेद इति । अत एव न तार्किकपरमाणुजातमानुमानिकं प्रकृतश्रुत्यर्थः । तत्रावादेस्तेजोमुखजन्यत्वस्याभावाच्च । अनेन प्रतिज्ञापदेन प्रतिज्ञादृष्टान्तवाक्यरीतिरपि ज्ञाप्यते । **तत्कार्येति कार्य**पदेन मृन्मयमिति मयडाद्यर्थ उक्तः । **त्रयः**=यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात्, एकेन लोहमणिना सर्वं लोहमयम्, एकेन नखनिकृन्तनेन सर्वं कार्ष्णायसमिति त्रयः । **लोहमणिः**—सुवर्णम् । **तेन**=अनुमानोपयुक्तप्रतिज्ञादृष्टान्तरूपवाक्यप्रदर्शनेन । अनुमाने हि आदौ पर्वतो वह्निमानित्येवं प्रतिज्ञा भवति । अथ दृष्टान्त इति । **उत्कण्ठितम्** सांख्यवाञ्छितम् । सांख्याशा वृथेत्यर्थः । **हेत्वनुक्तेरिति** । अनुमानमिति पदस्य हि हेतुर्मुख्यार्थः । हेतुरेव प्राणभूतः । तस्यानुक्तत्वात् नानुमानानुवादरूपमिदं श्रुतिवाक्यमिति । अनेकदृष्टान्तप्रदर्शनादेव, हेतोः सुग्रहत्वादेवानुक्तिरिति चेत्—कोऽसौ हेतुः, किं तत्साध्यम् ? जगत् एकज्ञानाधीनज्ञातताकं एकाभिन्नं एककार्यं वा सारूप्यादिति चेत्—कारणभूतवस्तुन एवानुमानात्प्राक् असिद्धौ तत्सारूप्यरूपहेतुः कथं प्रसिध्येत् । यत्र यत्सारूप्यं तत्र तज्ज्ञानाधीनाज्ञातताकत्वमित्यपि न व्याप्तिः ; पद्मादौ मुखसारूप्येऽपि व्यक्तिभेदात् मुखज्ञाने पद्मादेरविषयतया साध्याभावात् । कार्यत्वे साध्ये च कार्यत्वं हेतुर्न भवेत् । कथञ्चानेन सांख्यप्रकृतिसिद्धिः ॥ जडप्रपञ्चे भवदभिमतब्रह्मैक्यतज्ज्ञानज्ञातत्वयोरसंभवात् प्रकृतिरिति विज्ञास्यत इति चेत्—चेतनाचेतनोभयात्मकत्वात् प्रपञ्चस्य चेतनांशे तत्साध्योपपादना-

त्याह—तेनेति । निराकरोति—वृथेति । तत्र हेतुमाह—हेत्वनुक्तेरिति । अनुमानावयवेष्वत्यन्त-प्रधानभूतहेत्वनुक्तेः ॥ सन्ति सारूप्यादयो हेतवः सांख्यानामिति चेत्–तत्र ; तेषामुत्तरत्र सांख्याधिकरणे निराकरणादित्याह—सारूप्यादेरिति । ननु तत्र चात्र च निराकरणे पौनरुक्त्यमित्या-

---

संभवात् प्रकृतिर्न सिध्येत् । ब्रह्मणस्तु संभवः समये उपपादयिष्यते । जलपृथिव्यादेः तेजोजलाद्यैक्यं तज्ज्ञानज्ञेयत्वादिकञ्चानुभवानारूढमिति श्रुतिप्रमाणकत्वानादरणे तदुपपादनमशक्यम् । ननु ब्रह्मकारणकत्ववारणाय जगत् सरूपकारणकं कार्यद्रव्यत्वादित्यनुमानमिति चेत्, न तर्हि सारूप्यं हेतुः । अतोऽनुमानवेषप्रदर्शिनी न भवति श्रुतिरियम् । द्वितीयाध्याये सारूप्यादिहेतोः परिहरिष्यमाणत्वाच्च नैतत् । चकारस्य परिहृतेरित्यत्रान्वयः। प्रथमाध्याये ब्रह्मणि साधिते, प्रकृतौ च सांख्यादितः सिद्धायामुभयोर्मध्ये प्रकृतिकार्यत्वं युक्तं सारूप्यात् —सत्त्वरजस्तमोमयत्वात् जडत्वात्, अचेतनत्वादित्यनुमानप्रसक्तौ तत्परिहरणं द्वितीयप्रथमे क्रियते। इदमधिकरणं सांख्यसंमतप्रकारस्य सद्विद्यारूपश्रुतिवाक्यार्थत्वासंभवमात्रोपपादकम् ; तत् विलक्षणत्वाधिकरणञ्च ब्रह्मकारणकत्वप्रतिक्षेपकसांख्यहेतुनिरासपरम् ; द्वितीयद्वितीये च सांख्यमतासिद्धिनिरूपणमिति विवेकः । ननु सद्विद्यायां तेजसोऽपामुत्पत्तौ, अपामन्नहेतुत्वे चोपपत्त्युपन्यासो दृश्यते । सर्वत्रोपपत्तिप्रदर्शनञ्च सद्विद्यायां प्रतिखण्डं दृश्यते । तद्वदत्रापि हेतूत्प्रेक्षणं युक्तम्, अन्यथा दृष्टान्तोपन्यासो व्यर्थः स्यादित्यत्राह अत्र संभावनेति । अप्तेजोविषये उपपत्तिप्रदर्शनमापातोपन्यास इति भाष्यार्थदर्पणतो द्रष्टव्यम् । मृन्मयाद्युपन्यासस्तु, एकविज्ञानेन सर्वविज्ञानस्य सर्वथैवासंभवं मन्वानस्य, कथमिति च पृच्छतः श्वेतकेतोः तत्संभावितत्वोक्तिः । असंभावितत्वशंकापरिहाराय च दृष्टान्तोपन्यासो लोके प्रसिद्धः । अयं भाष्योक्तार्थं इह वर्णनसंभवादुक्तः ॥

चि. टी. **सांख्याधिकरणे**=विलक्षणत्वाधिकरणे रचनानुपपत्त्यधिकरणे च। **प्रधानकारणत्वानुमानसंभावनामात्रमिति** । सांख्योक्तहेतून् विशिष्याविचार्य, ते संभवेयुरिति कृत्वा तद्दिष्टानुमानवेषदर्शित्वमेव श्रुतेरिति तत्कृतशंकामात्रमत्र निरस्यत इत्यर्थः। **उक्तेरि**त्यस्य षष्ठ्यन्तत्वं **परिहृतेरि**त्यस्य तत्रानुषङ्गश्च नावश्यं कल्पनीयम्। अत्राधिकरणे यः कश्चित् हेतुर्भवेदिति संभावनामात्रेण श्रुतेरनुमानाकारत्वसंभवस्यात्र पूर्वपक्षयुक्तेरित्येतावदुक्तावप्यर्थतः सर्वसिद्धेः । अस्तु कथमपि । अस्यां चिन्तामणियोजनायां **उपरि, अत्र** इति प्रतिसंबन्धिपदद्वयबलात् एकविषयकत्वप्रतीतिकृतं स्वारस्यं रक्षितं भवति । पूर्वमस्मदुक्तयोजना तु, अर्थसिद्धविवरणापेक्षया उक्तातिरिक्तभाष्यारूढार्थवर्णनेऽर्थपुष्टिरिति । इदानीं पूर्णः श्लोकः एकविषयकः । 'अव्यक्तानुमानं कथितम्' इत्यस्य वृथोत्कण्ठारूपत्वमेव **अत्र**= अननुमानमूते श्रुतिवाक्ये दृष्टान्तभेदानां कथनेन एकविज्ञानेन सर्वविज्ञानस्य संभावनाया एवोक्तत्वादिति श्लोकान्तिमभागार्थः । "कार्यानुगुणेनैव कारणेन भवितव्यम्" इति **भाष्यार्थ**स्तु पूर्वश्लोक एवादर्शि, **अचितस्तादृशाजन्मयुक्त**मिति । किञ्च चिन्तामण्युक्तः **संभावनोक्ते**रित्यस्य प्रधानकारणत्वानुमानसंभावनामात्रोक्तिरूपार्थः 'तेनाव्यक्तानुमानं कथितमिति', इति पूर्वोक्तार्थ एव । एवञ्च तत् कथनं वृथोत्कण्ठितम्; तस्य कथनस्य परिहृतेरित्युक्तं भवेत्। तदपेक्षया तत् वृथा, हेत्वनुक्तेः, सारूप्यादेरुपरि परिहरिष्य-

शङ्कयाह—अत्रेति। उत्तरत्र प्रधानकारणत्वनिश्चायकहेतवो निश्शेषमुन्मूलयिष्यन्ते। अत्र प्रधान-कारणत्वानुमानसंभावनामात्रं निराक्रियत इति न पौनरुक्त्यावकाशः ॥ ५६ ॥

आदेशात्मस्वशब्दैरनितरशरणैस्त्वन्तदैक्योपदेशात्
जीवेन स्वेन साहङ्करणमनहमोऽचिद्गणस्य प्रवेशात् ।
एकज्ञानेन सर्वं विदितमिति गिरा सर्वतादात्म्यवाचा
शाखाविद्यान्तरादेरपि बहुमविता विश्ववित् विश्वमूर्तिः ॥ ५७ ॥

एवं प्रतिपक्षप्रक्रियां निरस्य स्वपक्षानुकूलान् विषयवाक्यार्थान् हेतून् संगृह्णाति—आदेशेति। 'उत तमादेशमप्राक्ष्यः' इत्युपक्रमे तावत् आदेशशब्देन सच्छब्दवाच्यं ब्रह्म निर्दिश्यते। आदेश-शब्दोऽप्यादेष्टारमेवाह। आदेष्टृत्वं पुनर्नियन्तृत्वमेव। न च तत् प्रधानपक्षे संभवति; तस्याचेतनत्वात्। आत्मशब्दोऽप्युत्तरत्र श्रूयते, 'स आत्मा' इति। स तु चेतनस्यैवासाधारणः। तत्र सुषुप्तिप्रसङ्गे 'स्वमपीतो भवति' इति सुषुप्तिस्थानं परमात्मा स्वशब्देन निर्दिश्यते। अन्तर्यामित्वात् परमात्मैव स्वशब्देन निर्देशार्हः; न पुनः प्रधानम्। तस्य सुषुप्तं प्रति अनन्तर्यामित्वात्। अनितरशरणैः = अनन्यथा-सिद्धैरित्यर्थः। एते हि शब्दाः परमात्मविषयत्वे मुख्याः; प्रधानविषयत्वे पुनः जघन्यवृत्तय इत्यर्थः। हेत्वन्तरमप्याह—त्वमिति। तच्छब्दवाच्येन सह त्वंशब्दवाच्यस्य जीवस्यैक्यमत्र व्यपदि-श्यते। यदि तच्छब्दः प्रधानपरः, तदानीमतत्त्वोपदेश एवायं स्यात्; चेतनाचेतनयोरैक्योपदेशस्य देहात्मोपदेशवत् भ्रान्तिहेतुत्वात्। अत्र साधकान्तरमाह—जीवेनेति। स्वेन = स्वात्मकेनेत्यर्थः। 'अनेन जीवेनाऽऽत्मनानुप्रविश्य नामरूपे व्याकरवाणि' इत्युत्तमपुरुषसिद्धाहङ्कारपूर्वकम् अहमर्थ-व्यतिरिक्ताचिद्गणस्य प्रवेशात्। अत्र जीवशरीरकः परमात्मा जीवद्वारा जीवव्यतिरिक्तमचेतनजातं

---

माणतया वक्तुमशक्यत्वाच्च, दृष्टान्तप्रदर्शनेन च संभवस्यैवोक्तेरिति सर्वमेकं वाक्यमिति। वस्तुतः शब्दार्थ-भेदेऽपि भाववर्णने सर्वैः सर्वं गृहीतमेव ; अत्र पूर्वपक्षिणा सिद्धान्तिना च तत्तत्संभावनोक्तेः ॥ ५६ ॥

आद्यन्तं सद्विद्यालोडनेन सूत्रोक्तानुक्तसर्वहेतुसंकलनेन तत्र प्रकृतिविलक्षणसाधकत्वमाह आदेशेति। अत्र, 'सेयं देवतैक्षत' इति देवताशब्दोऽपि ग्राह्यः। 'उत तमादेशमप्राक्ष्यः' इति प्रथमश्रुत आदेशशब्दः आदेष्टृवचनः, नोपदेश्यार्थक इति पराक्रान्तं सूरिभिः। अतः अनितरशरणः। शरणं गृहम्। अर्थः शब्दस्याधिकरणं रक्षकः सत्ताहेतुरिति वा। प्रधानरूपप्रतिपाद्यको न भवतीत्यर्थः। तथा, 'तत् सत्यं स आत्मा' इति आत्मशब्दो नियन्तृवचनः। स्वप्नान्तव्युत्पादनावसरे 'स्वमपीतो भवति' इति जीवस्य स्वस्मिन् लय उक्तः। 'सता सोम्य तदा संपन्नो भवति' इत्युक्त्या स्वसच्छब्दयोरेकार्थकत्वं वक्तव्यम्। न हि जीवप्रकृत्योरेकत्वं सांख्येष्टम्। अस्मन्मते जीवब्रह्मभेदेऽपि विशिष्टवेषेणैक्यस्यापि स्वीकृतत्वान्न सिद्धान्तविरोधः। इदञ्च तत्त्वमसीति वाक्यार्थशोधने सुज्ञानमित्येतदर्थं तदेवानन्तरमाह त्वंतदैक्यो-पदेशादिति। त्वंतत्पदे शब्दपरे। त्वंतदो. ऐक्योपदेशः—अर्थैक्यबोधकः प्रयोगः ; तस्मात्। न च जीवस्य प्रधानरूपसदैक्यम्। 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इति श्रुतिं गृह्णाति जीवेनेति। तत्र जीवेनात्मनेत्यस्य जीवशरीरकेण स्वेनेति भाष्यारूढोऽर्थः। वाक्यारम्भे, 'हन्ताहमिमा-

प्रविशतीत्यर्थः। तेन प्रवेष्टव्यस्याचिद्वस्तुनः साहङ्करणम् — अहङ्कारसहितं प्रवेष्टृत्वं न योयुज्यत इत्युक्तं भवति। किंच, 'येनाश्रुतं श्रुतं भवति' इत्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञा दृश्यते। सा पुनरीश्वर-कारणत्व एव घटते; न पुनः प्रधानकारणत्वे; प्रधानस्य चेतनं प्रति अकारणत्वादित्याह—एकेति। हेत्वन्तरमप्याह—सर्वेति। 'ऐतदात्म्यमिदं सर्वम्' इति हि श्रूयते, प्रधानस्य कारणत्वे कथं तत्तादात्म्यं सर्वशब्दान्तर्गतस्य जीवस्य वक्तुं शक्यत इत्यर्थः। न केवलं छान्दोग्यश्रुत्यैव ब्रह्मकारणत्वं प्रतीयते, अपितु श्रुत्यन्तरेणापि। छान्दोग्येऽपि न केवलं सद्विद्यावाक्येन, किंतु दहरविद्याभूम-विद्यादेरपि। अत्र आदिशब्देन उपबृंहणस्मृतिपुराणादिकं गृह्यते। अत्र विश्वविदिति निमित्तत्वोपयुक्तं सार्वज्ञ्यं गृह्यते, विश्वमूर्तिरित्युपादानत्वोपयुक्तं सर्वशरीरत्वं गृह्यत इति विभागः। अत्र पूर्वपक्ष-सिद्धान्तोपन्यासप्रक्रियाविभागः श्रीमति भाष्ये न्यायसुदर्शनादौ च द्रष्टव्यः। अत्र चोपक्रमोपसंहार-महावाक्योपपत्तिः श्रुत्यन्तरविद्यान्तरादिप्रकाशनपराणां सूत्राणामनुक्रमोऽपि तत्रैवानुसन्धेयः॥५७

## अथ आनन्दमयाधिकरणम् ॥ ६ ॥

सूत्रम्॥ आनन्दमयोऽभ्यासात्। विकारशब्दान्नेति चेन्न प्राचुर्यात्। तद्धेतुव्यपदेशाच्च। मान्त्रवर्णिकमेव च गीयते। नेतरोऽनुपपत्तेः। भेदव्यपदेशाच्च। कामाच्च नानुमानापेक्षा। अस्मिन्नस्य च तद्योगं शास्ति॥ १-१-१३—२०॥

**मुख्येक्षा यद्यभीष्टा, भवतु तदुचिते सा पुनर्जीवतत्त्वे**
**सद्विद्यायां हि शब्दैस्त्रिभिरुपरि सतस्तस्य जीवैक्यमुक्तम्।**

---

तिस्रो देवताः' इति अहंशब्दप्रयोगात् साहंकरणमित्युक्तम्। स्वकर्तृकरवधीपूर्वकमित्यर्थः। अचिद्गणश्च तिस्रो देवताः इत्युक्तानि भूतानि। अनहमा=अहमिति शब्दो वाचकतया यस्य न, तस्याचिद्गणस्य। कर्मत्वं षष्ठ्यर्थः। प्रधानस्यैव भूतरूपेण परिणामात् भूतेषु तत्प्रवेशः पृथङ् नास्ति। कथञ्चिदुपपादनेऽपि तस्याहंकृतिरूपाध्यवसायपूर्वकत्वं न भवति। तथा तत्राहंत्वं जीवत्वञ्च दुर्वचम्। तथाच सत्र प्रधानम् अचित्कर्मकप्रवेशविशेषकर्तृत्वात् जीवपदमुख्यार्थत्वात् अहंशब्दार्थत्वाच्चेति। प्रतिज्ञा स्वानुकूलेति पूर्वपक्षिभावं प्रतिज्ञाविरोधप्रदर्शनेन परास्यति। एकज्ञानाधीनसर्वज्ञाततापतिपादिकया येनाश्रुतमिति गिरा सत्र प्रधानं स्वज्ञानाधीनचिदचिदात्मकसर्वप्रपञ्चज्ञातताकत्वादिति बोध्यते। सर्वेति। ऐतदात्म्यमिदं सर्वमिति सर्वस्य सदन्तर्यामिकत्ववचनात्। त्वंतदैक्योपदेशादित्यनेन, 'तन्निष्ठस्य मोक्षोपदेशात्' इति सूत्रं गृहीतम्। फलानुरूपः किलोपदेश्य उपास्य आकारो भवति। शाखेति। शाखान्तरम्, कारणवाक्यानि आत्मादिशब्दघटितानि यत्र। विद्यान्तरं छान्दोग्यगतदहरविद्यादिकम्। क्रमेण, गतिसामान्यात् श्रुतत्वाच्चेति सूत्रार्थग्रहणम्। आदिना प्रथमसूत्रोक्तेक्षतिग्रहणम्। तेन मुख्यार्थो न बाध्य इत्युच्यते। ननु संकल्पार्थकत्वेऽपि न मुख्यत्वमिति चेन्न— अथापि ज्ञानत्वात् तस्य न पूर्वपक्ष इव गौणता। किञ्च परमात्मनः सर्वदा सर्वज्ञस्य संकल्पोऽपि दर्शनतुल्य एवेति। ईक्षणं प्रागेवोक्तं चेत्, त्रिवृत्करण-नामरूपव्याकरणकर्तृत्वमादिपदार्थः। स्मृतिपुराणादि च। बहुभविता। बहु स्यामित्युक्तप्रकारेण जायमानः न प्रकृतिपदार्थः; किंतु विश्ववित् सर्वज्ञः, विश्वमूर्तिः सर्वशरीरकः परमात्मैव॥ ५७॥

संगतिं दर्शयति मुख्येति। ईक्षणमुख्यत्वमेव यदि प्रधानहेतुत्वेनेष्यते, सा मुख्येक्षा तदुचिते

इत्यूहादुज्जिहानं प्रशमयितुमथ प्रस्तुतो विश्वकर्ता
जीवस्याप्यन्तरात्मा निरुप(निरव)धिकमहानन्दथुः स्थाप्यतेऽत्र ॥ ५८ ॥

पूर्वोत्तराधिकरणयोः संगतिद्वयोक्तिपूर्वकमुत्तराधिकरणार्थं संग्रहेणोपदर्शयति—मुख्येति। यदि सतो मुख्यमीक्षणमिष्टम्, तर्हि चेतनत्वात् मुख्येक्षणार्हो जीव एव जगत्कारणमस्त्विति पूर्वपक्षोत्थानादेका संगतिः। अन्या च सद्विद्यावाक्ये तत्त्वमसीति त्रिभिः पदैर्जीवब्रह्मणोरैक्यमेव नवकृत्वः प्रदर्शितम्; तथाच जीव एव जगत्कारणं ब्रह्मास्त्विति पूर्वपक्षोत्थानमिति। इत्यूहादुज्जिहानं पूर्वपक्षिणं निराकर्तुं पूर्वप्रस्तुतो विश्वकर्ता जीवस्याप्यन्तरात्मा निरुपाधिकमहानन्दवान् अत्राधिकरणे स्थाप्यते। तदर्थविचारस्तु–'ब्रह्मविदाप्नोति परम्' इत्यस्मिन् वाक्ये यः पुनः आनन्दमय उच्यते, स किं जीवः, उत परमात्मा। पुनर्विचार्यते—अत्र मयट् विकारार्थः प्राचुर्यार्थो वा। तदर्थं विचार्यते—उपक्रमगतान्नमयशब्दस्थमयटो विकारार्थत्वानुसारेण अत्रापि मयटो विकारार्थत्वमेव युक्तम्, उत प्राचुर्यार्थत्वम्। पुनश्च विचार्यते—उपक्रमावगतस्य मध्ये प्राणमयमनोमयादिभिर्विच्छेदो अस्ति न वेत्यादि। फलफलिभावस्तु तत्राविच्छेदादुपक्रमावगतविकारार्थत्वस्यैवात्रापि ग्रहीतुं

ईक्षणपरिणामार्हधर्मभूतज्ञानवति जीवतत्त्वे तु सा भवतु। ननु गतिसामान्यादिना जीववैलक्षण्यमपि दर्शितमित्यत्राह सदिति। सतो जीवैक्ये स्पष्टं स्ववाक्येन ज्ञाते सति तद्विरोधेन गतिसामान्यप्रदर्शन मयुक्तमिति भावः। नन्वेवमीक्षत्यधिकरण एव एवं शंकासंभवात् विद्यान्तरग्रहणेनाधिकरणान्तरं कुत इति चेत्–इत्थमत्रोत्थानम्–सद्विद्यायाः प्रधानपरत्वायोगेऽपि विलक्षणब्रह्मपरत्वं न सिध्यति। जगत्कारणस्य जीवत्वं हि आनन्दमयविद्यायां स्पष्टमवगम्यते। भृगुवल्ल्यानन्दवल्ल्योरेकार्थकत्वं तदध्यायिनां सुगमम्। तत्र भृगुणा लक्षणवाक्येन 'यतो वै' इत्यनेन विवक्षितं ब्रह्म आनन्दमयरूपानन्दपदार्थतयाऽवधारितमिति तदन्यस्य जगत्कारणत्वं नैव युज्यते। न चेक्षत्यधिकरणनिर्णयविरोधः। मुख्येक्षणं स्वीकर्तव्यमिति सिद्धान्तस्य प्रधानव्यतिरेकस्य चाऽऽदरणात्। जीवादपि भिन्न इति तु सद्विद्या न दर्शयेत्। प्रत्युत तत् त्वमसीत्यादितः तदैक्यस्योपष्टम्भिकैव स्यादिति प्रधानव्यतिरेकसत्त्वेऽपि न चिद्विलक्षणत्वमपीति। एवं सिद्धान्तिपक्षस्याऽऽक्षेपः।

**शब्दैस्त्रिभिः** तत् त्वमसीति पदत्रयेण। यद्वा, तत् त्वमसि, अनेन जीवेनाऽऽत्मना, स्वमपीतो भवतीति वाक्यत्रयेणेत्यर्थः। अत्र स्वशब्दस्य सदर्थकत्वात्। **इति ऊहात्** एवं प्रधानव्यतिरिक्तत्वादेर्जीवे कल्पनेन, **उज्जिहानम्** सिद्धान्तिसंमतब्रह्मनिषेधे प्रवर्तमानं **प्रशमयितुम्** आनन्दमयविद्यायाः जीवपरत्वा भावोपपादनेन उपवेशयितुम् **अत्र** आनन्दमयाधिकरणे विश्वकर्ता जीवान्तरात्मत्वजीवातिशयितानन्दवत्त्वरूपेण स्थाप्यते। **निरुपधिकमहानन्दथुः**। "स्यादानन्दथुरानन्दः" इति कोशः। स महानिति बद्धजीवातिशयित्वमुक्तम्। **निरुपधिके**त्यनेन मुक्तनित्यगतानन्दव्यावृत्तिः। तस्येश्वरेच्छोपधिकत्वात्। तथा च आनन्दमयशब्दार्थो न जीवः अभ्यासकाष्ठापन्नानुपधिकानन्दवत्त्वादित्युक्तं भवति। जीवातिरिक्तेश्वरानभ्युपगन्तृमते जीवानन्दस्यापि निरुपधिकत्वात् तावता जीवव्यावृत्तिर्न भवतीति जीवानन्दाधिकत्वोक्तिः। तदधिकत्वं श्रुत्याऽवसेयम्। निरुपधिकत्वं=परार्थतयाऽनवसितत्वम्। भगवदन्यगतानन्दस्य

योग्यत्वेनाऽऽनन्दमयशब्दस्थमयटो विकारार्थत्वात् आनन्दमयो जीव इति पूर्वपक्षे । व्यत्ययेन राद्धान्ते फलफलिभावः ॥ ५८ ॥

दृष्टः पूर्वं विकारे मयडिति चरमेऽप्येवमस्त्वित्ययुक्तं
मध्ये तद्भङ्गदृष्टेः, प्रचुरमिह वदेत् प्रत्ययोऽन्यस्य बाधात् ।
आनन्दप्राचुरी च प्रकृतपरसुखाल्पत्वलब्धावधित्वात्
दुःखाल्पत्वानपेक्षा परदुरितभिदः शासितुस्तद्विरोधात् ॥ ५९ ॥

अत्र कश्चिदाह, 'आत्मन आकाशः संभूतः' इत्यादिना सृष्टेरेवाभिधानात् पूर्वम्, 'स वा एष पुरुषोऽन्नरसमयः' इत्यत्र विकारे मयट् दृश्यत इति ; चरमेऽपि, 'अन्योऽन्तर आत्माऽऽनन्दमयः' इत्यत्रापि, एवमस्तु = मयटो विकारार्थत्वमेवास्तु पूर्वोक्तस्य मयटो विकारार्थत्वप्रत्यभिज्ञानादिति, तदिदमाह— दृष्ट इति । तन्निराकरोति—अयुक्तमिति । तत्र हेतुमाह—मध्य इति । प्राणमयादिषु विकारार्थत्वभङ्गदृष्टेरित्यर्थः । फलितमाह—प्रचुरमिति । विकारार्थत्वे को दोष इत्याशङ्क्याह— अन्यस्येति । आनन्दमयात् अतिरिक्तस्य वस्तुनो बाधेन विकारार्थत्वस्य बाधितत्वादित्यर्थः। नन्वत्राऽऽनन्दप्राचुर्यभि-

तदाश्रयनित्यादिभिर्भगवदर्थतयाऽवसितत्वान्न निरुपधिकत्वम् । पूर्वाधिकरणात् नाशब्दमित्यनुवर्तते । अत्र अशब्दम्—शब्देतरमानगम्यो जीवो न भवतीत्यर्थ. ॥ ५८ ॥

भाष्ये पूर्वपक्षमध्ये पुच्छब्रह्मवादखण्डनस्यापि कृतत्वात्, अद्वैतिमते व्यावहारिकेश्वरसत्त्वाच्च, पूर्वपक्षी क इति निष्कर्षे क्लेशो मा भूदिति अत्रैवं संग्रहः कृतः। तथाचैवमुक्तं भवति-तैत्तिरीये ब्रह्मविदिति प्रक्रम्य सत्यं ज्ञानमिति ब्रह्मलक्षणमुक्त्वा, तस्मादाकाशाद्युत्पत्तिमभिधाय पञ्च कोशान् प्रस्तुत्य तत्र पञ्चमस्याऽऽनन्दमयस्य प्रतिष्ठात्वेन ब्रह्म निर्दिश्य, असन्नेवेति ब्रह्मविषय एव श्लोकस्य पठनात् आनन्दमयातिरिक्तं पुच्छब्रह्मैव तैत्तिरीयप्रधानप्रतिपाद्यमित्ययं पुच्छब्रह्मवादो न युक्तः, पुच्छस्यावयवत्वेनान्तर्भावे हि आनन्दमयरूपजीवातिरिक्तब्रह्मोक्तं स्यात् । प्रक्रान्तमेव ब्रह्म, 'तस्माद्वा एतस्मादात्मनः आकाशः संभूतः' इति आत्मत्वेन निर्दिश्य, जगत्कारणत्वमस्मिन् उक्त्वा, तदेवाऽऽत्मत्वमुपपादयितुमन्नमयादि प्रस्तुत्य, 'अन्योऽन्तर आत्मा आनन्दमयः' इति आनन्दमये आत्मत्वसमापनाच्च ब्रह्मात्मानन्दमयशब्दा एकविषयकाः । अन्नमयादिषु अवयविविषये एव श्लोकदर्शनात् असन्नेवेति श्लोकः आनन्दमयरूपावयविविषयक एव ; न त्वेकदेशभूतपुच्छविषयकः । एवमानन्दमयस्य जगत्कारणत्वादेव, 'सोऽकामयत' इति, 'रसो वै सः' इति चोपरितनवाक्यं तदर्थप्रतिपादकं संगच्छते। आनन्दमयप्रतिष्ठात्वोक्त्या ब्रह्मणोऽन्यत्वभ्रमो मा भूदित्यैक्यज्ञापनार्थमेव श्लोके आनन्दमयपदमप्रयुज्य ब्रह्मपदघटनम् । श्लोके अधिकाक्षरतत्पदनिवेशक्लेशाच्च। अतोऽन्यप्रतिपादनाभावात् प्रतिपाद्यस्याऽऽनन्दमयस्य जीवत्वावधारणाच्च जीव एव ब्रह्म । मयट् च विकारार्थः। न च भाष्ये पूर्वपक्षोपसंहारे मयट् स्वार्थिक इत्युक्तत्वात् तद्विरोध इति शंक्यम्-तत्र पुच्छब्रह्मवादखण्डनावसाने तं प्रति तथोपदेशस्य कृतत्वात् । त्वया ब्रह्मणि विकारप्रचुररूपार्थघटनानुपपत्त्या सिद्धान्ते स्वार्थिकत्वमिष्यताम्, ब्रह्मानन्दमयभेदस्तु न मन्तव्य इत्युपदेशाय तदुक्तिरिति । पूर्वपक्षी तु सूत्रानुसारात् विकारार्थवादेव। विकारार्थकत्वं शारीरत्वञ्च पूर्वपक्ष्यभिमतहेतू। प्रश्नान्तरे आनन्दमये शोध्यत्वकथनमपि हेतुः।

धाने दुःखाल्पत्वमेव स्यात् यथा, 'ब्राह्मणप्रचुरो देशः' इत्युक्ते शूद्राल्पत्वं प्रतीयत इति। तत्प्रतिक्षिपति—आनन्देति। अत्राऽऽनन्दप्राचुरी मनुष्यानन्दमारभ्य चतुर्मुखानन्दपर्यन्ततया प्रकृतपरसुखाल्पत्वलब्धावधित्वात् आनन्दमयनिष्ठदुःखाल्पत्वं नापेक्षते, अपितु चतुर्मुखादिनिष्ठानन्दप्राचुर्यनिवृत्तिमेव। यथा, 'अन्नमयो यज्ञः' इत्यादि। नन्वानन्दप्राचुरी दुःखाल्पत्वेनापि निर्वक्तुं शक्यत इत्याशङ्क्य

---

नन्वयं जीवजगत्कारणत्ववादः किंपताश्रयणेनेति चेत्—किं तेन। जीवाज्ञानवाद्यद्वैतिमतेन वा, तत्रापि एक एव जीवः अन्ये स्वाप्नजीवा इव मिथ्येति पक्षेण वा, अनेकजीववादेन वा, दृष्टिसृष्टिपक्षेण वा, वास्तवसृष्टिपक्षेण वा, संनिधानमात्रेण जगद्धेतुत्वाभिमानिसांख्यमतेन वा, अदृष्टोत्पादककर्मानुष्ठानमुखेन सर्वकारणत्वं जीवेष्विति तार्किकादिमतेन वा, सर्वविलक्षणेन श्रुतिसारस्यावधृतेन केनचित् जीवकारणत्ववादेन वा भवतु पूर्वपक्ष इति। जीवातिरिक्तब्रह्मत्वसाधकहेतुभिश्च तन्निरास इति श्लोकाशयः।

श्लोकेनानेन—इतरपदार्थवाक्यार्थसमन्वयौचित्यं पश्चात् परिशीलयेम, **आनन्दमय**शब्द एव जीव एव स्वरस इति पूर्वपक्ष्याशयं प्रथममपनुदति। एवमाह पूर्वपक्षी—मयट्प्रत्ययः स्वार्थे विकाररूपार्थे प्रचुररूपार्थे च यथायथमनुशिष्टः। तत्र संभवत्यर्थान्तरे निरर्थकत्वप्रायं स्वार्थकत्वं न साम्प्रतम्। **प्राणमयमनोमयविज्ञानमय**पदेषु तदुक्तिरगत्या। अस्तु वा कथञ्चित् विकारार्थकत्वाविच्छेद एव। **पूर्वे**=प्रथमतस्तु **अन्नरसमय**शब्दः शरीरवाचीति विकाररूपेऽर्थे एव मयट् दृश्यते। शरीरे रसरूपत्वस्य तत्प्रचुरत्वस्य च विरहात्। एवञ्च **चरमे**—पञ्चमे आनन्दमयपर्यायेऽपि मयट् आनन्दमयपदघटकः **एवं** विकारार्थक एवास्तु। ततो जीव एवाऽऽनन्दमयः। स हि बन्धदशायामेकरूपानन्दो न लक्ष्यते, सुखवैचित्र्यस्यैव दर्शनात्। परमात्मनस्त्वेकरूपस्य नानन्दविकारत्वम्। ननु प्राणमयादौ तत्तद्वृत्तिप्राचुर्यमेवेति अत्रापि प्राचुर्यरूपमर्थं स्वीकुर्म इति चेत्-प्रचुररूपार्थग्रहणेऽपि आनन्दप्रचुरो जीव एव; न परः। केनचित् प्रचुरत्वं हि तत्समानाधिकरण-तद्विरोधि(तदन्य)गुणाल्पत्वापेक्षम्। अतः आनन्दविरोधिदुःखरूपगुणोऽल्पो यत्र, तत्रैवानन्दप्राचुर्यं वाच्यम्। दुःखवांश्च जीव एवेति। अत्र प्रत्याह—विकारे मयडित्ययुक्तम्; पूर्वे विकारार्थकत्वेऽपि प्राणमयादौ तस्य त्यक्ततया अग्रग्रप्रायन्यायायोगात्। अतोऽयं प्रत्यय इह प्रचुररूपमर्थं ब्रवीति। **अन्यथा** विकाररूपार्थस्य बाधाच्च। तदा हि आनन्दविकार इत्यर्थः स्यात्। जीवस्य विचित्रानन्दवत्त्वेऽपि न विकारत्वम्। यस्यायं विकार इष्यते, स कः? न हि कोऽपि तीर्थकरः आत्मनः स्वरूपतः सविकारत्वमिच्छति। अतो जीवेऽपि तद्बाधात् जडे चाऽऽनन्दाप्रसक्तेः प्रचुररूपार्थ एव स्वीकार्यः। यत्तु प्राचुर्यं जीव एवेति तन्न; एकगुणप्राचुर्यं स्वाश्रये स्वविरोधिगुणाल्पत्वं नियमेनापेक्षते इति न; प्रकाशप्रचुरः प्रभाकर इत्युक्तौ सूर्ये तमोल्पत्वस्य दुर्वचत्वात्। अत्र स्वाश्रये विजातीयगुणाल्पत्वापेक्षत्वमुपेक्ष्य स्वाश्रयभिन्ने स्वसजातीयगुणाल्पत्वापेक्षं प्राचुर्यमित्युच्यताम्। तथाच परमात्मनि आनन्दप्राचुर्यं भण्यमानं तदन्यस्मिन् आनन्दाल्पत्वं ज्ञापयेत्। ज्ञाप्यते चात्राऽऽनन्दमीमांसायामन्यमनुष्याद्यानन्दाल्पत्वमेतत्प्राचुर्यञ्चेति प्रकरणानुगुणमिदमेव। अतः परेषां जीवानां सुखाल्पत्वेन लब्धावधित्वात्

नेत्याह—परेति । परदुरितभित् संश्रितानां दुरितं भिनत्ति आनन्दमयः इति हि श्रूयते । 'अथ सोऽभयं गतो भवति', 'एतं ह वाव न तपति', 'न कर्मणा लिप्यते पापकेन' इत्यादिकं वाक्यजातं शतशो ह्यधीमहि । तस्मादत्र दुःखाल्पत्वशङ्का न संघटत इति । किंच, 'भीषास्माद्वातः पवते', 'तस्य ह्वा एतस्य प्रशासने गार्गि', 'प्रशासितारं सर्वेषाम्' इत्यादिभिः प्रशासितृत्वेन प्रतिपन्नस्याऽऽनन्दमयस्य पापाल्पत्वविरोध इत्याह—शासितुरिति ॥ ५९ ॥

आत्मा तस्यैव एवेत्युदितमनितरात्मत्वमस्यैव वक्तुं
शारीरोक्तिश्च तस्मिन् अखिलतनुतया स्यादसङ्कोचवृत्तिः ।
शोध्यत्वं तत्तदर्थानुगुणमिति विभोस्तत्प्रसाद्यत्वमात्रं
प्राप्येऽस्मिन् प्राप्तिरूपा परविद उपसंक्रान्तिरानन्दसिन्धौ ॥ ६० ॥

नन्वस्मत्पक्षे भवद्भिरानन्दमयत्वलक्षणं लिङ्गं विरुद्धमिति ह्युक्तम् । अस्माकमेक एवायं विरोधः । भवतां बहवो विरोधाः । आनन्दमयेऽपि, 'तस्यैष एव शारीर आत्मा यः पूर्वस्य' इत्यात्मान्तरकथनं विरुध्यते । शारीरत्वकथनमपि शरीरस्य कर्मफलत्वान्न युज्यते । न च घटते शोध्यत्ववादः परस्मिन् ब्रह्मण्यशुद्धिप्रसङ्गाभावात् । श्रूयते ह्यानन्दमयेऽपि, 'अन्नमयप्राणमयमनोमयविज्ञानमयाऽऽनन्दमया मे शुध्यन्ताम्' इति शोध्यत्ववादः । किंच तस्मिन्नेवाऽऽनन्दमये फलनिर्देशदशायामुप-

---

तदल्पत्वस्वरूपावधिलाभात् स्वसमानाधिकरणदुःखाल्पत्वं नापेक्षते । ननु, "व्यसनेषु मनुष्याणां भृशं भवति दुःखितः" इति परमात्मनि दुःखमपीष्टमिति चेत्—तत्राह परेति । परेषां दुरितस्य—पापस्य निवर्तके हेयप्रत्यनीके शासितरि अन्याशास्ये दुःखस्यायोगात् । स्वस्य चेत् ततो दुःखं स्यात्, परदुरितं दुःखोत्पादात्प्रागेव भिन्द्यात् । समर्थत्वात् । न तज्जनयेत् । दुःखहेतुसंकल्पाभावे च कथं दुःखम् । न च शासिताऽन्योऽस्ति, यः संकल्पयेत् । अत्र भोक्त्राधिकरणभाष्यादिकं द्रष्टव्यम् । आनन्दमय इत्यस्याऽऽनन्देन प्रचुर इति वाच्यार्थोक्तावपि प्रचुरानन्दवानित्येव विवक्षितार्थः ॥

चि. टी. आनन्दमयादतिरिक्तस्येति । आनन्दविकारो जीव इत्युक्तिः प्रकृतिभूतमानन्दं कञ्चिदभ्युपगम्यैव स्यात् । सोऽन्यो नास्ति ; त्वया जीवातिरिक्तचेतनास्वीकारात् ; जीवस्यानादितया आनन्दमयत्वस्याप्यनादितया विकारार्थकत्वं बाधितमित्यर्थः ॥ ५९ ॥

नन्वन्यनिष्ठात्मतानिरूपकत्वात्, शरीरप्रतिसंबन्धित्वात् शोध्यत्वात् उपसंक्रान्तिकर्मत्वाच्च नानन्दमयः परमात्मेति शंकाः परिहरति आत्मेति । पूर्वपर्यायेष्विवाऽऽनन्दमयपर्यायेऽपि तदवसाने, 'तस्यैष एव शारीर आत्मा यःपूर्वस्य' इति यत् उदितम्—उक्तम्, तत् पूर्वपर्यायोक्तस्य य आत्मा एष प्रकृतपर्यायोक्तस्याप्यात्मेत्यर्थकम् । एवञ्च विज्ञानमयस्य आनन्दमयस्य चान्य आत्माऽस्तीत्यर्थस्य स्पष्टत्वात् कथमानन्दमयः परमात्मेति शंका । तत्रोच्यते। "पतिं विश्वस्याऽऽत्मेश्वरम्" इति विश्वपतेः स्वेश्वरकत्वमुच्यमानमीश्वरान्तरनिषेधतात्पर्यकं हि प्रसिद्धम् । तथा सर्वात्मिन आनन्दमयस्य विज्ञानमयनिरूपितात्मत्वाश्रयकिञ्चिदात्मकत्वकथनं स्वात्मकत्वकथनमेवाऽऽत्मान्तरनिषेधार्थमिति भावम् । अन्यथा हि पूर्वपर्यायेष्विवात्रापि, 'तस्माद्वा एतस्मादानन्दमयादन्योऽन्तर आत्मा ब्रह्म' इत्येवं वाक्यं प्रयुक्तं स्यात्। शारीरेति ।

संक्रमितव्यत्वमुच्यते—तदपि विरुद्धम्। परमात्मनि नित्यमेव वर्तमानस्य जीवस्य कथमपूर्वमुपसंक्रमणमिति। एवं चतुरोऽपि विरोधाननूद्य चतुर्भिरपि पादैरनुक्रमेण समाधत्ते—आत्मेति। इयं किल समाधानप्रक्रिया–'तस्यैष…आत्मा' इत्युक्तिरानन्दमये, 'स्वयं दासास्तपस्विनः' इतिवत् आत्मान्तरनिवृत्त्यर्थेति को विरोधः? शारीरत्वकथनमपि भगवतः सर्वशरीर[क]त्वादानन्दमय एव विशेषेणोपपद्यते। शोध्यत्वमपि, 'विशुद्धमेव राजहृदयम्' इत्यादिवत् आनन्दमयस्य प्रसाद्यत्वमेव। न पुनः [illegible]

अनुगुणस्यैवार्थस्य तत्रतत्र स्वीकार्यत्वात्। आकाङ्क्षासंनिधानवत् योग्यत्वस्यापि वाक्यार्थनिर्णयाङ्गत्वात्। अत्रोपसंक्रमणमेव हि शिष्यते। तदपि संघटते; प्राप्तिरेव ह्युपसंक्रमणमुच्यते। प्राप्तिश्च पूर्वमननुभूतस्य ब्रह्मणः पश्चादनुभवसंभवः। एतदेवाभिधीयते, 'सोऽश्नुते सर्वान् कामान् सह' इति। अथवा देशविशेषप्राप्तिरेव ह्यस्माभिर्वक्तुं शक्यत इति। तदेव ह्युच्यते, 'वैकुण्ठे तु परे लोके' इति। अतोऽस्मत्पक्षे न विरोधावकाशः। अत्र पदार्थकथनं स्वयमेव भाव्यम् ॥ ६० ॥

निर्देहेऽस्मिन्निरंशे न हि भवति शिरःपक्षपुच्छादिक्लृप्तिः (किञ्चित्)
तस्मात् पुच्छं प्रतिष्ठेत्युदितमिह परब्रह्मभाती(वी)ति चेन्न।
[illegible]
[illegible] ॥ ६१ ॥

इत्यानन्दमयाधिकरणम् ॥ ६ ॥

अत्र पुच्छब्रह्मवादी प्रत्यवतिष्ठते—निर्देह इति। आनन्दमयस्यैव ब्रह्मत्वे तस्य निरंशत्वात् 'तस्य प्रियमेव शिरः' इत्यादिना शिरःपक्षादिभेदेन पञ्चप्रकारावयवक्लृप्तिर्न घटते। तस्मात्, 'पुच्छं

---

शरीरस्य पाञ्चभौतिकस्यात्मत्वं हि शारीरत्वम्; तत् कथं परमात्मत्वे इति न। शारीरपदप्रयोगः परमात्मन्येव मुख्यः। शरीरप्रतिसंबन्धी शारीरः। शरीरत्वञ्च न पाणिपादादिमत्त्वम्। प्रत्यक्षप्रमाणअन्तर्यामिब्राह्मणविरोधात्। किंतु नियताधेयत्वविधेयत्वशेषत्वरूपम्। एवञ्च जगत् सर्वं शरीरम्। तत्प्रतिसंबन्धित्वं तस्मिन्नेवाखिलतनुके। जीवग्रहणे तु पाञ्चभौतिककिञ्चिन्मात्रग्रहणे शरीरशब्दवृत्तिर- [illegible]

तत्रापि शारीर इति निर्देशात् सोऽपि परमात्मा न भवेत्। लोके घृतगुडस्थलपात्रदेहचित्तात्मादीनां शोधनं प्रसिद्धम्। न हि सर्वमेकरूपम्। इति=अतः विभोरपि तत् शोध्यत्वं किञ्चिद्रूपं घटते। तच्च प्रसाद्यत्वम्; निग्रहसंकल्पनिवर्तनात्। अतः शोध्यत्वं निवर्त्यपापत्वमेवेति न मन्तव्यम्। अन्नमयप्राणमयादिष्वपि तदभावात्। यत्तु **उपसंक्रान्तिः** अप्राप्तस्य प्राप्तिः—पूर्वमसंयुक्तस्य स्वक्रियासाध्यः संयोगः परिच्छिन्ने जीव एवेति; तन्न। जीवस्यापि स्वेन प्राप्यत्वं कथमिति प्रश्नसंभवात्। अतः प्राप्तिः=अनुभवः। **आनन्दसिन्धौ** आनन्दमये **प्राप्ये** ब्रह्मविदाप्नोति परमिति प्राप्यतया-अनुभाव्यतयोक्तेऽस्मिन् परमात्मनि। **परविदः** उपासकस्योपसंक्रान्तिर्नाम तदनुभवरूपप्राप्तिरेव 'एतमानन्दमयमात्मानमुपसंक्रामति' इत्यत्रोच्यत इति॥ ६०॥

[illegible]
[illegible]

प्रतिष्ठा' इत्युक्तं सर्वभूताधिष्ठानतया विश्वप्रतिष्ठारूपं पुच्छमेव परं ब्रह्म, आनन्दमयस्य ब्रह्मत्वे शिरःपक्षादिक्लृप्तीनामयोग्यत्वादिति । इमं पक्षं प्रतिबन्द्या दूषयितुमुपक्रमते—सोढेति । देशकालपरिच्छेदरहिततया भवद्भिरङ्गीकृतस्य सच्चिदानन्दरूपस्य ब्रह्मणः पुच्छत्वकथनं युज्यते । श्रुतिप्रामाण्यसिद्ध्यर्थमस्माभिः पुच्छत्वकल्पनं सोढव्यमिति चेत्–हन्त । तर्ह्यस्माभिरपि आनन्दमये निरंशे प्रियमोदादितत्तद्विभागविवक्षया शिरःपक्षादिकल्पनं सोढव्यमिति संतोष्टव्यमायुष्मतेत्याह—कथमिति । इतरत्=शिरःपक्षादिकमित्यर्थः । तर्ह्यत्यन्तविरुद्धमेतत्, यदानन्दमयस्य ब्रह्मण एव स्वप्रतिष्ठारूपत्वमिति । तच्च न विद्यते । स्वस्यैव स्वप्रतिष्ठानत्ववचनमनितराधारताख्यापनाय, 'स भगवः कस्मिन् प्रतिष्ठितः', 'स्वे महिम्नि' इति श्रुत्यन्तरप्रकारेण सर्वप्रतिष्ठारूपस्य ब्रह्मणः प्रतिष्ठान्तरनिवृत्तिरेव ह्यत्रोच्यत इति को विरोधः । अत्र पुच्छब्रह्मवादिनां बहून्यपि दूषणानि भाष्य एव व्यक्तमुक्तानीति श्लोकार्थमेव प्रदर्श्य विरमामः ॥ ६१ ॥

---

यदि आनन्दमयो ब्रह्म स्यात्, ब्रह्मणो निर्देहत्वात् निरवयवत्वाच्च देहमादाय स्वावयवमादाय वा शिरःपक्षपुच्छादिकल्पना न भवति । आनन्दमयस्य जीवत्वे तु तस्य शिरःप्रभृतिसंभवान्न किञ्चित् संकटम् । आनन्दमयस्य ब्रह्मणश्चात्र संबन्धः आधाराधेयभावेन ; 'ब्रह्म पुच्छं प्रतिष्ठा' इत्युक्तेः । न हि स्वस्यैव स्वयमाधारो भवतीति तदन्यदेव ब्रह्मेति । तदाह निर्देहे इति । एतन्निरस्यति इति चेन्नेति। ब्रह्मणः शिरःपक्षाद्यभावात् तत्क्लृप्तिर्यदि न भवति, तर्हि पुच्छमिति पुच्छत्वक्लृप्तिरपि न भवेत् । कल्पनामात्रमितीदं यदि त्वया सोढम्, कथं शिरःपक्षादिकं परं कल्प्यत्वेन न सह्येत ? ननु प्रतिष्ठाभूतं ब्रह्म पुच्छमिति हि तद्वाक्यार्थः। प्रतिष्ठात्वमाधारत्वम्। स्वात्मकमानन्दमयं प्रति तत् ब्रह्मणः कथं स्यादिति चेत्—'स भगवः कस्मिन् प्रतिष्ठितः । स्वे महिम्नि', 'आत्मेश्वरम्' इत्यादि कथम् ? स्वाधारकत्वं नाम स्वेतराधारकत्वाभाव एवेति चेत्–इहापि ब्रह्मणि स्वप्रतिष्ठात्वकथनमन्याधारकत्वाभावज्ञापनायैवेति । किञ्चान्नमयपर्याये, 'इदं पुच्छं प्रतिष्ठा' इति कस्य किं प्रति प्रतिष्ठात्वमुच्यते । न हि शरीरैकदेशस्य शरीररूपावयविनं प्रति प्रतिष्ठात्वम् ॥ शिरःपक्षादिरूपांशान्तरप्रतिष्ठात्वमेव तत्रेष्यते चेत्–इहापि प्रियमोदादिरूपेण गुणभूतानन्दभेदानां ग्रहणात् तदाधारत्वं ब्रह्मणि धर्म्यंशे भवत्येव । आनन्दमयशब्देन प्रकृतिप्रत्ययाभ्यां गुणगुण्युभयोक्त्या विशिष्टैकदेशतया गुणानां गुणिनश्च शिरआदिकल्पनौचित्यात् ॥ प्राणमयमारभ्य सर्वत्र, 'अन्वयं पुरुषविधः' इति शिरःपक्षादेः कल्पनैव क्रियते इति आनन्दमयेऽपि तत्कल्पनेति काऽत्र कथन्ता ? वक्ष्यति च सूत्रकारोऽपि प्रियशिरस्त्वाद्यप्राप्तिरिति ॥

अत्र श्लोके पुच्छादिक्लृप्तिः, भाति, पुच्छत्वक्लृप्तिः इति पाठा एव चिन्तामण्याहृताः । तत्रानुपपत्त्यभावेऽपि स्वदृष्टपाठान्तरमप्यस्तीति तन्न निर्वाहज्ञापनाय पदयोजनायां पाठान्तरादरणेन व्याख्यातम् । पूर्वदृष्टपाठत्यागे कारणाभावात् पाठान्तरत्वेनैवान्यत् तत्तदत्र प्रदर्श्यते । एवमेव बहुषु स्थलेष्विति भाव्यम् । किञ्चात्र सोढा इत्यस्य क्तप्रत्ययान्तत्वे भूतकालरूपार्थग्रहणात् स्वारस्यम् । अनद्यतनभविष्यदर्थकलिङर्थग्रहणे च न स्वारस्यम् । कर्त्रर्थककृदन्तत्वे क्लृप्तिमिति द्वितीयानिर्वाहाय, तृन्नयम् न तु तृजिति वक्तव्यम् । अतः पुच्छत्वक्लृप्तिं सोढ्वा ब्रह्मपदेन परब्रह्मग्राहिणा शिरःपक्षादिक्लृप्तिरपि सह्यताम्, गृह्यतामानन्दमयपदेनापि ब्रह्मेत्युच्यते ॥ ६१ ॥

ईक्षत्यधिकरणविषयवाक्ये, 'तस्य तावदेव चिरम्' इति शरीरपातपर्यन्तो दुःखसंबन्ध उच्यते तेन, 'तस्यैष एव शारीर आत्मा' इति शरीरसंबन्धी पुरुषो जीव एव स्यादित्याशङ्क्य परिहृतमानन्दमयाधिकरणे कर्माधीनकरणकलेबरपरिग्रहस्यैव संसारात्मकत्वम्, न पुनः स्वाभाविकस्यैव विश्वशरीरस्येति। अतः परमन्तरादित्याधिकरणं प्रवर्तते॥

## अन्तरधिकरणम् ॥ ७ ॥

सूत्रम्। अन्तस्तद्धर्मोपदेशात्॥ भेदव्यपदेशाच्चान्यः (1-1-21, 22.)

**भूयिष्ठानन्तपुण्योपचयबलसमुद्बुद्धपूर्वोक्तभूम्नां**
**शक्रादिन्यायतः स्यात् त्रिगुणतनुभृतामीश्वराणां प्रवाहः।**
**तन्नाकर्मोत्थदिव्याकृतिजनिमहिमा शासिता सर्वपुंसां**
**नित्यश्रीर्ब्रह्मबिम्बे श्रुत इति स य इत्युक्त एवैष एकः॥ ६२॥**

अस्मिन्नधिकरणे न केवलमन्तर्यामित्वावस्थानमात्रेण शरीरात्मभाव उच्यते, अपितु पाणिपादाक्षिकेशादिविभागवच्छरीरसंबन्धी पुरुषः। तादृशशरीरसंबन्धित्वं जीवस्यैव संभवतीति पूर्वपक्षोत्थानेन संगतिः। पूर्वं जीवसामान्यस्य निरासः, इदानीं जीवविशेषस्य निरास इति च संगतिमाहुः। तदिदमाह—भूयिष्ठेति। पूर्वोक्ताः खलु मनुष्यादीनारभ्य प्रजापतिपर्यन्ताः भूयि-

---

मयट्प्रत्ययः शारीरत्वञ्च न जीवत्वसाधके, आनन्दप्रचुरे जगच्छरीरके परमात्मन्येव संभवादिति आनन्दमयविद्यायाः जीवातिरिक्तविषयकत्वमुक्तम्। अथ जगत्कारणत्वं जीवविशेष एवान्तरादित्यविद्यायां स्वीकर्तव्यमिति तदनुरोधात् पूर्वोक्तस्थलेऽपि न ब्रह्मसिद्धिरित्याक्षेपः। यदि आधेयत्वादिविशेषरूपं शरीरत्वमुच्येत, तदाऽयं परमात्मेति स्यात्। अत्र तु श्मश्रुकेशनखपादाक्ष्यादिमद्भौतिकविशेषरूपदेहसंबन्ध उक्तः। स कर्माधीनः कथं जीवातिरिक्ते। अतो जीवत्वे स्थिते, सर्वत्र जीवे पूर्वोक्त-सृष्ट्यादिकर्तृत्वसत्यसंकल्पत्वानन्दयितृत्वादेरसंभवेऽपि कतिपयेषु तत् संभाव्यते। न च जीवस्येश्वरत्वे तत्कर्मपरिपाकवशादैश्वर्यस्यावसाने जगतो निरीश्वरत्वापत्तिः। तादृशानन्तव्यक्तिसंभवेन पूर्वावसाने तत्स्थाने पश्चादन्या व्यक्तिरिति विभिन्नेश्वरप्रवाहसंभवात्। तेषां तदैश्वर्यञ्च पुण्योपचयात्। तदाह **भूयिष्ठेति**। **भूयिष्ठानाम्** अतिशयिततमानाम् **अनन्तानाम्** असंख्येयानां पुण्यानामुपचयः वृद्धिः; तद्बलेन **समुद्बुद्धः** फलोपधायकतां प्राप्तः **पूर्वोक्तः** सृष्ट्यादिकर्तृत्वसत्यसंकल्पत्वानन्दयितृत्वादिसामर्थ्यरूपो **भूमा** महिमा येषामित्यर्थः। **पूर्वोक्ते**त्यनेन पूर्वाधिकरणद्वयविषयवाक्यावगतत्वं शास्त्रयोनित्वाधिकरणे आनुमानिकेश्वरनिरासाय जीवेष्वेव केषाञ्चित् विश्वामित्रादिनीत्या संभवप्रदर्शनात् तत्प्रोक्तत्वञ्चाभिमतम्। 'हिरण्यश्मश्रुर्हिरण्यकेशः' इत्याद्युक्त्या **त्रिगुणां** सत्त्वरजस्तमोमयीं तनुं दिव्यविग्रहं बिभ्रतामेवेश्वरत्वमस्तु। तेषामनन्तत्वाच्च कालभेदेनेश्वरभेदस्वीकारात् तेषां प्रवाहः सर्वदेति न कदापि निरीश्वरत्वप्रसक्तिः। प्रथमपादेन जीवे ईश्वरत्वसंभवो दर्शितः। **त्रिगुणे**त्यादिना अतिरिक्तपरमात्मग्रहणायोग उक्तः। या तनुः सा सर्वा त्रिगुणैवेति भावः। प्रवाहतोऽधिकारिणां स्थितौ उदाहरणं दर्शयति **शक्रे**ति। मन्वन्तरभेदेन हि

ष्टानन्तपुण्योपचयबलसमुद्बुद्धैश्वर्याः केचित् पुरुषाः, तेष्वेव कश्चिदीश्वरः प्रवाहरूपेण वर्तेत इति कल्प्यतामिति च पूर्वाधिकरणसंगत्यन्तरमुच्यते । अयमर्थः—पापोत्तराः पुण्यपापयोस्तुल्यवृत्तयश्च मा भूवन्, अपि तु पुण्योत्तराः केचिदीश्वरत्वेन प्रकल्प्येरन्निति । अत्रोत्तरम्—तत्रेति । तत्र हेतून् प्रमाणानुसारेण संगृह्णाति—अकर्मेति । अकर्माधीनदिव्यशरीरवान् । जनिः=जन्म । महिमा=माहात्म्यम् । सर्वेपुंसां स्वाभाविकनियन्ता । नित्यश्रीः=नित्यमेव लक्ष्मीसंबन्धवान् । एवंभूतः पुरुषः, ब्रध्नबिम्बे=सूर्यमण्डले, श्रुत इति, 'स य एषोऽन्तर्हृदय आकाशः' इत्यनुवाकश्रुतः [सय इत्युक्तः?] परमपुरुषः एक एव—'एषोऽन्तरादित्ये' इत्यन्तरादित्यविद्यायां श्रूयत इति न जीवविशेषशङ्कावकाशः। 'स एष सर्वेभ्यः पाप्मभ्य उदितः । उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद' इति अत्रैव हि श्रूयते । 'समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः' इत्यादिकमत्र भाव्यम् । 'न सा कर्मनिमित्तजा' इति हि तत्रोच्यते । ऐतिहासिकमपि, 'व्यक्तमेष महायोगी' इत्यादिकं सुप्रसिद्धमेव । अत्रोक्तं शासितृत्वं हि, 'अन्तःप्रविष्टः शास्ता जनानां सर्वात्मा', 'प्रशासितारं सर्वेषाम्' इत्यादिबहुप्रमाणसिद्धत्वात् सर्वविषयमेवानुसन्धातव्यम् । अयमत्र संग्रहः—सूर्यमण्डलान्तर्वर्तिनो भगवद्विग्रहस्याकर्माधीनत्वात् अप्राकृतत्वात् आश्रितानुग्रहार्थत्वाच्च विग्रहसंबन्धमात्रेण जीवविशेषत्वाशङ्कावचनं परमपुरुषविद्वेषिणां पापिष्ठानां प्रलापः ॥

अत्र तदर्थविचारोऽपि किंचिदालिख्यते । आदित्यमण्डलान्तर्वर्ती पुरुषः किं जीवविशेषः-(किं पुरुषविशेषः कश्चिज्जीवः) उत परमात्मेति । तदर्थं विचार्यते—किं पाणिपादादिविभागवच्छरीरादिसंबन्धो जीवत्वं प्रसाधयति न वेति । तदर्थं पुनर्विचार्यते—किमयं शरीरसम्बन्धः कर्माधीनः, उताकर्माधीन इति । पुनरपि विचार्यते—सर्वपाप्मोदितत्वादिवचनं किं कर्माधीनत्वं

---

इन्द्रादिभेदः श्रीविष्णुपुराणादौ दर्शितः । अस्यैव, **आनन्दमयविद्यायां**, 'स यश्चायं पुरुषे यश्चासावादित्ये स एकः' इति आनन्दमयैक्यकथनात् आनन्दमयस्यापि जीवत्वावधारणात् पूर्वाधिकरणनिर्णय उपेक्ष्य इत्यपि पूर्वपक्षः श्लोकान्त्यभागतो ज्ञायते । निरस्यति **तत्रेति** । अत्रायं पुरुषः **ब्रध्नबिम्बे** सूर्यमण्डले **अकर्मोत्थाः** पुण्यपापरूपकर्माजन्याः **दिव्याः** प्राकृतविलक्षणाः **आकृतिजनिमहिमानः**=संस्थानविशेषतादृशविग्रहयोगरूपजन्मसर्वपापनिवर्तकत्वादिरूपमाहात्म्यानि यस्य तथाविधः **श्रुतः**, 'हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुः....यथा कप्यासं पुण्डरीकमेवमक्षिणी,.... उदितिनाम....उदेति हि सर्वेभ्यः पाप्मभ्यः य एवं वेद' इत्यादितः । तथा **सर्वपुंसां शासिता** च । 'स एष ये चामुष्मात् पराञ्चो लोकाः, तेषाञ्चेष्टे देवकामानाञ्च' इति अधिदैवतं सर्वेशितृत्वस्य, अस्यैवाध्यात्ममक्षिणि तदेव रूपमुक्त्वा तत्र, 'स एष ये चैतस्मादर्वाञ्चो लोकाः तेषाञ्चेष्टे मनुष्यकामानाञ्च' इति ऐहिकसर्वशासितृत्वस्य चोक्तत्वात् । लोककामेशितृत्वकथनेऽपि तत्रत्यप्रजेशितृत्वमप्यर्थसिद्धम् । अत एव चायं **नित्यश्रीः** । 'य इमे वीणायां गायन्ति एतं ते गायन्ति तस्मात् ते धनसनयः' इति एतद्गायकानां धनभागित्वकथनाच्चायं नित्यलक्ष्मीविशिष्ट इति ज्ञायते । अस्य नीलतोयदनिभस्य हिरण्मयत्वकथनं नित्यानपायिलक्ष्मीविद्युद्विस्तारकृतमिति साम्प्रदायिकार्थसूचनाय च **नित्यश्रीरि**त्युक्तम् । सर्वमिदं जीवेष्वसंभावितम् । **बिम्बे** इत्यनेन अन्तरादित्ये इत्यत्र **आदित्य**पदम् आदित्यस्येदं मण्डलमादित्यमित्यर्थकमिति ज्ञापितम् । **श्रुत** इत्यनेन श्रुतौ दृश्यत इति पदस्य श्रुतिचक्षुषा दृश्यत इत्यर्थ उक्तः । **इति**—अतो हेतो **स य इत्युक्तः**, 'स यश्चायं पुरुषः' इति

निवारयति, उत नेति । तदर्थमपि पुनर्विचार्यते—तत्र पाप्मशब्दः किं पापमात्रपरः उत पुण्यपापात्मककर्ममात्रपर इति । फलफलिभावस्तु—पाप्मशब्दस्य पापमात्रपरत्वेन सर्वेपाप्मो(पापो)दितत्व वचनस्य कर्माधीनत्वनिवारकत्वाभावात् शरीरसंबन्धस्य कर्माधीनतया नियमेन जीवकर्माधीनत्वात् आदित्यमण्डलान्तर्वर्ती पुरुषो जीव इति। राद्धान्तेऽपि फलफलिभावोऽन्तेवासिभिः स्वयमेवोह्यः ॥

सर्वेभ्यः कल्मषेभ्यो ह्युदित इति वदत्यन्तरादित्यविद्या
तस्मात् शेषाभ्यनुज्ञानयत इह विभोः(भौ) पुण्ययोगोऽस्तु(ऽस्ति) मैवम् ।
आम्नातोऽनन्यशाख्यः स्ववशपरफलः साधुना नैप भूयात्
स्यात् पुण्ये लक्ष्मयोगात् अपि न सुकृतमित्यादिना पाप्मशब्दः ॥ ६३ ॥

---

आनन्दवल्लीवाक्योक्त एष एक एव=पूर्वपक्षयुक्तनानेश्वरविलक्षण एव । यद्वा ; इति हेतोरेष एकः नानेश्वरविलक्षणः पूर्वाधिकरणे जीवातिरिक्ततया, 'स यश्चायम्' इति वाक्योक्त एव=तत्र निर्धारितपरमात्मैव ; न तु जीव इति । स यश्चायमिति वाक्यस्य चायमर्थः--योऽयम् एतल्लोकस्थः पुरुषे शरीरे शारीर आनन्दमय इहोक्तः सः, यश्च असौ द्युस्थः आदित्यमण्डले स च एकः=अभिन्नः । ऐकाधिकरण्यमित्यादाविव एकपदं समानशब्दपर्यायं सत् अभिन्नार्थकम् । अत्र यश्चायमिति न जीवग्रहणम्, किंतु हार्दमूर्तेरिति ज्ञापनार्थं चिन्तामणौ, 'स य एषोऽन्तर्हृदय आकाशः....अमृतो हिरण्मयः' इति वाक्यमुपात्तम् । श्लोके तु आनन्दवल्लीवाक्यस्यैव ग्रहणम् । पूर्वपक्षे हि तद्वाक्योपादानमिष्टं श्रुतप्रकाशिकादौ ।

एतद्वाक्यग्रहणेनान्याऽप्याशंका निवर्त्यते । सा तावत्--कारणवाक्यविचारात्मकत्वात् पादस्य कथं कारणत्वाप्रतिपादकान्तरादित्यविद्याविचारः, कथंतरामेतद्विद्यायाः उपचितपुण्यपुरुषपरत्वे कारणवाक्यविदितपरमपुरुषापलाप इति। तन्निवर्तनमित्थम्-सयश्चायमिति वाक्येनाऽऽनन्दवल्ल्यर्थ-अन्तरादित्यविद्यार्थयोरेकत्वेऽवगते तस्य तत्र कारणतायाः 'आकाशः संभूतः', सोऽकामयत' इत्येवं स्पष्टमुक्ततया अस्यापि कारणत्वमुक्तमेवेति कारणवाक्यमेवेदमिति । किञ्च हिरण्मयपुरुषोऽयमादित्यमण्डलान्तर्वर्ती गायत्र्यर्थ इति निश्चप्रचम् । तत्र च सावित्र्यां भर्गशब्देन सर्वपाप्मदाहकत्वरूपः, "उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद" इत्युक्तो ज्ञाप्यत इति रूपमिदं तदर्थः । तस्य च सवितुरिति जगदुत्पादयितृरूपत्वोक्त्या जगत्कारणत्वमुदितमेवेति अतो विषयं कारणवाक्यत्वेनैव भाव्येति ।

'स य इत्युक्तः' इति श्रुतेः श्लोकान्ते उपादानम्, अत्र श्रुतौ आदित्यपदस्य मण्डलार्थकत्वमुपेक्ष्य सूर्यदेवतावाचित्वस्यापि संभवात्, स्वान्तर्यामिणः सूर्यान्तर्यामिणश्चैक्यानुसंधानपरत्वमपि स्यादिति कृत्वैव सूत्रकारेण, 'भेदव्यपदेशाच्चान्यः' इति सूत्रं प्रणीतम् । भाष्येऽप्यन्तर्यामिब्राह्मणमुपात्तम् । अन्यथा, 'भीषोदेति सूर्यः' इत्यस्यापि भाषणसंभवादिति सूचनाय । तेन द्वितीयसूत्रार्थोऽपि व्यञ्जितो भवति अत्र द्वादश आदित्यो विष्णुर्न मण्डलपुरुषः । तस्य सर्वदा तत्राभावात् ॥ ६२ ॥

ननु अकर्मोत्थदिव्याकृति इति भवदुक्तमयुक्तम् । अप्राकृतत्वरूपदिव्यत्वस्यासिद्धत्वात् । अन्यादृशदिव्यत्वाश्रयाणामाकृतीनां भौमाकृतिवदेव कर्मोत्थत्वं नियतम् । पुण्यपापात्मककर्माविनाभूत-

अत्र चोदकः प्राह—अन्तरादित्यविद्यायाम्, 'सर्वेभ्यः पाप्मभ्य उदितः' इति भगवतः सर्वपापरहितत्वमुच्यते। "विशेषनिषेधे शेषाभ्यनुज्ञानम्" इति तान्त्रिकाणां प्रक्रिया। तथा चाऽऽदित्यमण्डलान्तर्वर्तिनि पुरुषे पापनिषेधात् पुण्याभ्यनुज्ञानमस्ति इति। तदिदमाह—सर्वेभ्य इत्यादिना। तन्निराकरोति—मैवमिति। अत्र हेतूनाह—आम्नात इत्यादिना। 'न तस्येशे कश्चन' इत्यादिभिर्बहुभिः प्रमाणैर्भगवतोऽनन्यशास्यत्वं प्रतीयते, अन्यशास्यो हि राजकिंकरः शासनातिलङ्घनात्; प्रत्यवायमुपेयात्; तदनुपालनादनुकूलमपि फलम्। ईश्वरस्यानन्यशास्यत्वात् दुरितवत् परशासनानुवर्तनरूपं सुकृतमपि न संभवति इत्ययमेको हेतुः। हेत्वन्तरमाह—स्ववशेति। 'फलमत उपपत्तेः' इति न्यायेन परेषामिष्टमनिष्टं वा फलं भगवानेव ददातीत्युच्यते। तस्य कथं सुकृतसंबन्धः संभवतीति। किं च, 'स न साधुना कर्मणा भूयान्; नो एवासाधुना कनीयान्' इति श्रुत्यर्थात् सुकृतसंबन्धः प्रतिक्षिप्यते। तच्च विरुद्धं तव। तर्हि पाप्मशब्दः पुण्ये कथं प्रयुज्यते इत्यत्राह—स्यादिति। पुण्येऽपि पापलक्षणयोगादिह पाप्मशब्दः प्रयुज्यते। अस्ति हि पुण्येऽपि पापलक्षणयोगः; अनिष्टफलसंबन्धित्वात्।

---

त्वात् देहसामान्यस्य, कार्यसामान्यस्य च। न चात्र विद्यायामकर्मोत्थत्वमुक्तमस्ति। 'स एष सर्वेभ्यः पाप्मभ्य उदितः' इति वचनात् पापास्पृष्टत्वमेव बुध्यते, न तु पुण्यरूपकर्मराहित्यमपि। **तस्मात्**=पापमात्रनिषेधात् **शेषाभ्यनुज्ञानयतः** 'विशेषनिषेधे शेषाभ्यनुज्ञा' इति न्यायेन इह विद्यायां **विभोः** ईश्वरस्य पुण्यमभ्यनुज्ञातमेव भवतीति तदस्तु। अत्र **विभोः पुण्ययोगोऽस्तु** इति **चिन्तामणितालकोश**पाठः। एवं पुण्यायत्तस्य कथमकर्मोत्थता। अतो जीव एवायमिति। तदिदं निरस्यति **मैवमिति**। अनन्यशास्यत्वादिगुणविशिष्टतया श्रुत्यन्तरेषु प्रसिद्ध एवात्रान्तरादित्यविद्यायामाम्नात इति न तस्य शेषाभ्यनुज्ञा, पुण्ययोगो वा। तद् विवियते-'तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदितः। उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद' इति श्रूयते। **उदितत्वम्** ऊर्ध्वदेशस्थितत्वं वा ऊर्ध्वगतत्वं वा। पापस्पर्शगन्धराहित्यमिदं पुण्यस्याप्यभाव एव स्यात्। आत्रह्मस्तम्बं पुण्यपापे संनियोगशिष्टे। पापं विना पुण्यं न कुत्रापि प्रसिद्धम्। 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति' इति प्रतिशरीरं सुखदुःखरूपद्वन्द्वसमावेश एव श्रूयते। सुखहेतोः पुण्यस्य दुःखजनकत्वाभावेऽपि पुंसो दुःखहेतुपापश्लिष्टत्वमवर्जनीयम्। अतः पुण्यार्जनप्रवृत्तस्य फलकाले सर्वपापविनिर्मुक्तत्वं नोपपद्यते। विषद्वेषिणा तत्संपृक्तमधुत्यागवत् दुःखमिश्रसुखहेतु पुण्यस्यापि त्याग एव कार्यः। अत्र **सर्वेभ्य** इति पदेन चेषदपि पापं नास्तीति प्रतीयते। अतः पुण्येभ्य उदितत्वमप्युक्तप्रायम्। तत्र उदेति ह वै इति प्रसिद्धवन्निर्देशात् एतद्वेदनस्य सर्वपापोदितत्वरूपं फलं श्रुत्यन्तरसिद्धमनूद्यत इति पुरोवादभूतश्रुतिविमर्शे, 'तत् सुकृतदुष्कृते धूनुते', 'पुण्यपापे विधूय' इत्यादीनामपि ग्राह्यतया तत्तत्प्रकरणावगतानन्यशास्यत्वादिकमप्यस्यास्तीति ज्ञायते। पाप्मोदितत्वमात्रोक्तावपि, एतदर्थमुपास्यस्य, **प्रतर्दनविद्यायाम्**, 'यो मां विजानीयात्, नास्य केन च कर्मणा लोको मीयते, न मातृवधेन न पितृवधेन, न स्तेयेन....स न साधुना कर्मणा भूयान्, एष ह्येव साधु कर्म कारयति.... एष ह्येवासाधुकर्म कारयति....एष लोकपाल एष लोकेशः' इति सर्वमिदं श्रुतम्। एवमत्र सर्वपापविनिर्मोकहेतूपासनकर्मत्वेनोक्तस्य एवमुत्कृष्टफलप्रदत्वोक्त्या **परम्**=उत्कृष्टं फलं स्ववशमित्यवगमात् अन्यदपि फलमेत-

लोके हि कस्यचिदिष्टं फलमन्यस्यानिष्टं भवति। तथाच स्वर्गादिकमिष्टं फलमध्यात्मविदामनिष्टमित्यधिकारिविशेषापेक्षया पापमेव काम्यं कर्म। अत्र श्रौतप्रयोगरूपं प्रबलव्यवस्थापकमाह—न सुकृतमित्यादिनेति। अत्र हि सुकृतं दुष्कृतमुभयमपि निर्दिश्य द्वयोरपि पाप्मशब्देन निर्देशः स्पष्टमेव क्रियते। तस्मात् दुरितवत् सुकृतस्यापि पाप्मशब्दवाच्यत्वात् सर्वपाप्मोदितत्ववचनं सुकृतनिवृत्तिमप्याहेति सिद्धम्॥ ६३॥

प्रख्यातं शुद्धसत्त्वं किमपि तदनघं द्रव्यमव्यक्ततोऽन्यत्
तद्रूपं रूपमैशं दिवि कनति तथा शेषशेषाशनाद्यैः(द्यैः)।
नित्यं तत् सूरिसेव्यं परतरमजहत्स्वस्वभावः स देवः
पुंसां संसारशान्त्यै विपरिणमयति व्यूहपूर्वैर्विभागैः॥ ६४॥

अत्र पुनश्चोदयति—परस्य ब्रह्मणो विग्रहोऽस्तीति भवद्भिरुक्तम्। स विग्रहः किं प्राकृतः, उत अप्राकृतः; अप्राकृतत्वेऽपि किं भगवत्स्वरूपमेव, उत तत्त्वान्तरम्। पूर्वत्रासदुक्तं संसारित्वमेवाऽऽपद्यत इति घट्टकुटीन्यायः। द्वितीये पक्षे स्वरूपपरिणामप्रसङ्गः, तृतीयोऽपि(यश्चापि) पक्षो न घटते; प्रकृतिपुरुषेश्वरकालव्यतिरिक्ततत्त्वान्तराभावात्। अतः कथं तदिति। एतन्निराकरोति—प्रख्यातमिति। प्रख्यातम्, 'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि', 'वैकुण्ठे तु परे लोके', 'तमसः परमो धाता', 'स्वसत्ताभासकं सत्त्वम्' इत्यादिभिः। शुद्धसत्त्वम् = रजस्तमोरहितसत्त्वा-

---

द्रशमिति अर्थसिद्धम्। अत एव कैमुत्यात् परेषां फलं सर्वमप्येतद्वशमित्यपि स्ववशपरफलोऽयम्। अत्र ईष्टे इति तत्तदलोक्तश्च। अत एव स्वफलेऽन्यमुखनिरीक्षणाभावात् अनन्यशास्यत्वमवगम्यते। फलप्रदस्यान्यस्याभावे, कर्मणाश्चाचेतनानां दातारमनपेक्ष्य स्वयं फलप्रदत्वासंभवे च सति, 'स न साधुना कर्मणा भूयान्' इत्यप्यत्रैव सिध्यति। पूर्वोक्तरीत्या पुण्यराहित्यस्य सिद्धिवत् शब्दतोऽपि तदवगम्यत एव; पापलक्षणसत्त्वेन पुण्यस्यापि पापशब्दवाच्यत्वात्। वेदैकगम्यमनिष्टसाधनं यत्, तत् पापम्। मुमुक्षोः स्वर्गादिकमनिष्टमिति तत्साधनतया वेदोदितं तं प्रति पापमेव। न केवलमेवं लक्ष्मणः=लक्षणस्य योगात्, 'न सुकृतम्' इत्यादिवचनेनापि पुण्येऽपि पापशब्दः। न सुकृतं न दुष्कृतमित्युभयं निर्दिश्य, 'सर्वे पाप्मानोऽतो निवर्तन्ते' इत्युभयस्य पाप्मशब्देन क्रोडीकारात्। अतो नायम् उपचितपुण्यो जीवः; किन्तु पर एव॥ ६३॥

नन्वकर्मोत्थदिव्याकृतिरियमिति संमन्येमहि, यदि कर्मानधीनं तादृशं रूपमस्तीत्यत्र प्रमाणं भवेत्। तर्कस्तु तत्र न क्रमते। प्रत्युत स बाधक एव। कर्मोत्थभिन्नं तत् नित्यमनित्यं वा। आद्ये, दिव्यत्वायोगः। दिवि भवं हि दिव्यम्। तस्यानित्यसूर्यमण्डले स्थित्यसंभवश्च। अन्त्ये, देहसामान्यस्य कर्मोत्थत्वप्राकृतत्वनियमात् अकर्मोत्थत्वदिव्यत्वायोग एव। दिवोऽप्रसिद्धत्वादपि न दिव्यत्वम्। अत एव श्लोके तज्जनिरुक्ताऽपि न घटते। एवमेतद्रूपस्यैवासंभवे तत्र नित्यश्रीत्वं नतरामित्याक्षेपं क्षिपति प्रख्यातमिति। प्रथमपादेन दिवः, द्वितीयेन नित्यरूपस्य, शेषेणानित्याप्राकृतरूपाणाञ्च प्रामाणिकत्वोक्तिः। प्रख्यातमिति अप्रामाणिकत्वव्यवच्छेदः। प्रकर्षेण ख्यातम् श्रुतिस्मृतिपुराणादिप्रसिद्धम्। शुद्धसत्त्वं रजस्तमोभ्याममिश्रं सत्त्वं यस्य तत्; रजसः पराके, तमसः परस्तादित्युक्तेः। किमपि, 'स्वसत्ताभासकं सत्त्वम्', 'ज्ञानानन्दमया लोकाः'

श्रयभूतम्, दिव्यं (?) किमपि द्रव्यं तत्। अनघत्वं संसारप्रवर्तनोपकरणत्वाभावादुच्यते। तस्याव्यक्ततोऽन्यत्वम्, 'त्रिपादस्यामृतं दिवि' इति व्यक्तमेवाभिधीयते। अनेन भगवतो रूपं प्राकृतं स्वरूपं च न भवति, अपितु अप्राकृतं द्रव्यान्तरमित्याह—तद्रूपमिति। 'तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत्' इति भगवान् पराशरः प्राह। वैरूप्यं=विरूपमित्यर्थः। तेन विप्रतिपन्नं रूपं प्राकृतं रूपत्वात्, तत् अनित्यं सावयवत्वादित्यादयः परेषां हेतवो निरस्ताः। तादृग्विधरूपसिद्धौ धर्मिग्राहकप्रमाणविरोधः। अप्राकृतत्वनित्यत्वादिविशेषणयोगेनैव प्रमाणसिद्धत्वात्। असिद्धौ चाऽऽश्रयासिद्धेः इति स्वकीयां प्रक्रियां स्वयमेव स्मरतु हैतुकः। नन्वस्तु भगवतस्तादृशं रूपम्, अनन्तगरुडादीनां का गतिरिति चेत्—भगवानेव गतिः। 'तद्विष्णोः परमं पदम्', 'आस्ते विष्णुरचिन्त्यात्मा भक्तैर्भागवतैः सह' इत्यादिप्रमाणशतव्याहतत्वात् शङ्कापिशाचिकायाः। अस्तु वैकुण्ठवासिनः(नां) तादृशं रूपम्, अथापि तस्य नित्यत्वादौ निश्चायकं किमित्याशङ्क्य श्रुतिपुराणादीत्यभिप्रायेणाह—नित्यमिति। 'सदा

---

इत्युक्तवैलक्षण्यवत्। **तत्**=पूर्वं **दिव्य**पदेन प्रस्तुतम्। **अनघम्** संसरणोपकरणत्वरूपाघरहितम्। **द्रव्यम्** नानाविधावस्थार्हम् **अव्यक्ततोऽन्यत्** प्रकृतिद्रव्यभिन्नम्। अनेन परमपदं प्रकृत्येकदेश इति **यादवप्रकाश**पक्षव्युदासः। **प्रख्यात**मिति कृदन्तमत्र क्रियापदम्। **तद्रूपं** तादृशद्रव्यात्मकं **ऐशं रूपं** भगवद्वासुदेवविग्रहभूतं **रूपं दिवि**। तद्रूपायामिति शेषः। शुद्धसत्त्वद्रव्यरूपे वैकुण्ठलोके **कनति** नित्योज्ज्वलं वर्तते। **तथा**=तादृशनित्यश्रीसहितम्। **शेषशेषाशनाद्यैः**। **शेषः** दासभूतस्तन्नामा शय्यात्मा अनन्तः। **शेषाशनः**, भगवद्भुक्तोज्झितरूपशेषद्रव्यमात्रमशनं यस्य सः विष्वक्सेनः। **आदि**ना विहगेश्वरादिपरिग्रहः। तैः सह कनतीत्यन्वयः। **आदेः**रिति पाठे षष्ठ्यन्तम्; रूपमित्यनुषङ्गः; **तथे**ति च चकारार्थे। शेषादीनां रूपमपि दिवि कनतीत्यर्थः। एषां रूपाणां दिव्यत्वेऽपि न तद्द्रव्यजन्यत्वम्। तस्य द्रव्यस्यैतादृशाकारवत्तायाः प्रदेशभेदे अनादित्वादिति तद्रूपपदेन ज्ञाप्यते। अत्र प्रमाणवाक्यं स्मारयन् सूर्यमण्डले तत् कथमिति शंकां परिहरति **नित्य**मिति। "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः...तद्विप्रासो विपन्यवो जागृवांसः समिन्धते।', "यत्र पूर्वे साध्याः सन्ति देवाः" इति सदापश्यत्सूरिकत्ववचनात् ईश्वरश्रीनित्यसूरि सर्वरूपनित्यत्वसिद्धिः। **तत्** पूर्वोक्तं रूपम्। इदं विपरिणमयतेः कर्तृ। **परतरम्** परात् परम। परमात्मस्वरूपं परम्, सुसूक्ष्मत्वात्। तत् सर्वव्यापित्वात् प्रकृतावपि कैश्चित् ग्राह्यम्। परवासुदेवरूपं तु परमपदं गत्वैव दृश्यमिति **परतरम्**। **सूरिसेव्य**मिति विशेषणस्योक्तप्रायस्यानुवादेन सूरिरूपाणामपि विपरणमयितृत्वं विवक्ष्यते। तेषामपि यथासंभवं सहावतारात्। विपरिणत रूपेषु स्थित्यवसरेऽपि स्वभावहानिर्नेत्याह **अजह**दिति। अजहत् स्वभावः यं सः इति द्वितीयाबहुव्रीहिः। स्वपदं स्वात्मवाचि; स्वकीयरूपवाचि च। स्वयोः स्वभावः ज्ञानशक्त्यादिः अप्राकृतरसगन्धसौन्दर्यादिश्च। **देवः** लीलाविभूतिलोलः नित्यविभूतौ विहारपरश्च। **सः**=नित्यश्रीकः। **व्यूहपूर्वैः** व्यूहादिभिः व्यूहविभवार्चाहार्दरूपैः **विभागैः** परवासुदेवरूपसंबन्धिभिर्विलक्षणभागैः **विपरिणमयति** व्यूहादि परिणतानित्यरूपवान् भवति। तत्र स्वेच्छैव हेतुः; न कर्म। फलमपि न दुःखानुभवः किंतु पुंसां **संसारशान्तिः**। सृष्ट्यादिमुखेन साधुपरित्राणार्थत्वात् संसारे ईषत् शान्तिश्च। अतस्तेऽवतारारूपेषु

पश्यन्ति', 'नित्यं नित्याकृतिधरम्', 'नित्यसिद्धे तदाकारे तत्परत्वे च पौष्कर', 'श्रीवत्सवक्षा नित्यश्रीः' इत्यादिप्रमाणसहस्रमनुसन्धेयम्। अस्तु सर्वं गुणजातं वैकुण्ठवासिनो भगवतः; रामकृष्णादयस्तु प्राकृताः कर्मवशेन सुखदुःखादिभाजश्च। कथं तेषामाराधनेनास्माकमापवर्गिकी सिद्धिरित्याशङ्क्य पराशरपाराशर्यादिमतानुसारेण अप्राकृतत्वादिकं गुणजातमाह—अजहदित्यादिना ग्रन्थशेषेण। 'समस्तशक्ति' इत्यादिपराशरवचनम्। 'न भूतसङ्घसंस्थानो देहोऽस्य परमात्मनः' इति पाराशर्य-(यदि)वचनमप्यनुसन्धेयम्। 'व्यक्तमेष महायोगी परमात्मा सनातनः' इति वल्मीकसंभवोऽप्याह। तेनावतारेषु शोकमोहाद्यनुकरणं नटानां नाटकेष्विव परिहासरूपमेवेति मन्तव्यम्। परव्यूहादि-विभागः पञ्चरात्रादिषु राद्धकेषु स्पष्टमेवानुसन्धेयः ॥ ६४ ॥

**देहत्वात् सप्तधातु त्रिमलमघभवं दुःखकृन्नाशयुक्तं**
**सांशत्वादेश्च(देव) हेतोरिति यदि, तदसद् धर्मिमानेन बाधात् (मानोपरोधात्)।**
**बाधः शास्त्रैकवेद्ये क्वचिदपि न भवेत्; अन्यथाऽतिप्रसङ्गात्**
**यत्तु स्वेच्छावतारेष्वभिनयति तदप्यासुरोपप्लवार्थम् ॥ ६५ ॥**

इत्यन्तरधिकरणम् ॥ ७ ॥

---

एकमिदमादित्यमण्डले रूपमिति। **हिरण्यश्मश्रुरि**त्यादि प्रयुञ्जानया श्रुत्या रूपे हितरमणीयत्वबोधिकया **हिरण्मय** इति मयट्प्रयोगेण हिरण्यभूतपरवासुदेवरूपविकारत्वमिह ज्ञाप्यत इति सुवचम्। संप्रदाय-ग्रन्थेषु विकारवाचित्वनिषेधस्तु हिरण्याख्यलोहविकारत्वाभावज्ञापनाय पररूपानित्यत्ववारणाय च ॥

**चि. टी. घट्टकुटीन्यायः**। घट्टकुट्यां प्रभातमिति न्यायः। घट्टकुटी=शकटमार्गे शुल्क-ग्रहणार्थशाला। कश्चित् ग्रामान्तरं गतः प्राच्यमार्गेण गमने शुल्कं देयं स्यादिति तद्वञ्चनाय 'अपररात्र एवोत्थाय दूरभूतेन प्रतीच्यमार्गेण गत्वा शुल्कस्थानोपरितनः प्राच्यमार्गो लब्धव्यः' इति निश्चित्य तथैव गतः तस्य प्रतीच्यमार्गस्यापि घट्टकुटीस्पर्शित्वात् प्रभाते घट्टकुटीमेव प्राप्तः। वृथाश्रममात्रम् ॥ शुल्कं तु देयमेवासीदिति। **दिव्यं किमपी**ति। दिवो दिव्यत्वम् उत्कृष्टत्वम्; द्युसंबन्धित्वायोगात्। स्वरूपञ्च न भवतीति। परमात्मविग्रहस्य परमात्मस्वरूपैक्यं न भवतीत्यर्थः ॥ ६४ ॥

वैदिका अपि तर्कमोहिता ईश्वरं स्वीकृत्यापि मूर्तिविद्वेषिणो भवन्ति। तेषां तर्कं निराकुर्वन् वेदार्थग्रहणे अर्धजरतीयमयुक्तमित्याह **देहत्वादि**ति। विवादास्पदमीश्वररूपं **सप्तधातु** त्वक्चर्ममांसरक्त-मेदोस्थिमज्जारूपधातुसप्तकवत्, **त्रिमलं** गुदोपस्थतदतिरिक्तरूपत्रिविधभागमूलमलत्रयवत्, **अघवत्** कर्मा-धीनम्, **दुःखकृत्**-दुःखजनकम्, **नाशयुक्तम्** नाशप्रतियोगि, अस्मद्देहवदिति सप्तधातुत्वादिकं साध्यम्। हेत्वन्तरमप्याह **सांशत्वादेश्चे**ति। **हेतो**रिति पदं **देहत्वादि**त्यत्र अत्र चान्वेति। **सांशत्वं** सावयवत्वम्; **आदि**ना दृश्यत्व-मध्यमपरिमाणत्वादिपरिग्रहः। परवासुदेवरूपेऽपि वैदिकपुत्रादिदृष्टत्वात् दृश्यत्वम्। कार्यत्वरूपहेतुस्तत्र न भवति। देहत्वहेतुना नाशयुक्तत्वमपि सुसाधम्। सांशत्वादिना च अघभवत्व-दुःखहेतुत्व-नाशयुक्तत्वानि साधयितुं शक्यानि, सर्वेषामपि कर्माधीनत्वादिसत्त्वात्; त्रिमलत्वसप्तधातुत्वे परं नैतत्साध्ये, देहातिरिक्तेऽपि सांशत्वादिसत्त्वात्। इमं पूर्वपक्षमनूद्य निरस्यति **इति यदि, तदसदि**ति।

उक्तमेवार्थं पूर्वपक्षानुवादपूर्वकं प्रतिबन्द्या स्थिरीकुर्वन् दुःखित्वादिनटनफलमपि प्रदर्शयति देहत्वादिति । इहैवं प्रतिबन्दी—यदि शास्त्रैकवेद्यार्थे बाधः क्वचिदिष्यते, तर्हि अग्नीषोमीयहिंसादावपि बाधः स्यादिति । अत्र श्रुतिसिद्धत्वान्न बाध इति प्रतिबन्दीमोचने बन्दीमोचनमपि तथैव स्यादिति । भगवद्विग्रहादेरपि श्रुतिसिद्धत्वात् दुःखमिश्रत्वादिवचनमासुरोपप्लवार्थमित्युक्तम् । आसुराः=कंसादयः । कृष्णादीनां बाल्यादिनटनं परमार्थं एवेति मत्वा पुनःपुनः प्रातिकूल्ये प्रवर्तेरन् ; तत्प्रवृत्त्यैव विध्वंसेरन्निति 'विनाशाय च दुष्कृताम्' इत्युक्तदुष्कृद्विनाशफलं बाल्यादिनटनमित्यर्थः॥६५

---

देहत्वहेतुर्व्यभिचरितः, सप्तधातुत्वादिरहिते स्वेदजोद्भिज्जादावपि सत्त्वात् । किं नाम देहत्वमित्यपि विचार्यम् । चेष्टाश्रयत्वं देहत्वं चेत्—प्रयत्नवदात्मसंयोगाधीनक्रियाश्रयत्वं तदित्युक्तं भवति । तत्र व्यभिचरितत्वाविशेषे प्रयत्नेत्यादिकं व्यर्थम् । सिद्धान्तिसंमतदेहत्वं तु द्रव्यसामान्यनिष्ठं सुतराम नैकान्तिकम् । अस्तु तावदिदमित्युपेक्ष्य सर्वसाधारणं दोषमाह धर्मीति । **मानेन बाधादिति** तालपाठ । **उपरोधादिति** पाठेऽपि बाधादित्येवार्थो वक्तव्यः । **धर्मिमानं** धर्मिग्राहकप्रमाणम् । पक्षत्वेनाभिमतस्य भगवद्रूपस्यासिद्धौ आश्रयासिद्धमनुमानम् । सिद्धौ साधकप्रमाणं वाच्यम् । तत्र श्रुतिरेव मानम् । सा तस्य बोधनकाले सप्तधातुत्वादिप्रकृतसर्वसाध्यरहितत्वेनैव बोधितवत्यासीदिति तदनन्तरप्रवृत्तमिदमनुमानं साध्यबाधात् बाधितमिति । अत एव शब्दाश्रयतया आकाशानुमाने सर्वदेशसर्वकालशब्दोत्पत्त्यनुरोधेन प्रथममेव विभुत्वनित्यत्वविशिष्टतया तत्सिद्ध्या तत्र विशेषगुणाश्रयत्वादिना परिच्छिन्नत्वाद्यनुमानं दुष्करमिति तार्किकैरुच्यते । ननु शास्त्रोक्तमपि क्वचित् बाध्यते, यथा, 'आदित्यो यूपः' इत्यैक्यमिति चेत्—यूपादित्यादिकं प्रत्यक्षवस्तु । शास्त्रैकवेद्ये वस्तुनि किञ्चिदपूर्वमुच्यमानं न तर्केण बाधितुं शक्यम् । अत एवाग्नीषोमीयहिंसायाः विधिमात्रावसेयायाः अनिष्टासाधनत्वेनैवावगतत्वात् न हिंसात्वेनानिष्टसाधनत्वानुमानम् । यागादिकं नादृष्टजनकं क्रियात्वात् भोजनादिवदित्याद्यनुमानमप्यत एव न घटते ।

नन्वेवंसति क्वचिदशक्तिदुःखित्वादिकमपि शास्त्रबलादीश्वरे स्वीकर्तव्यमित्यत्राह यत्त्विति । 'भृशं भवति दुःखितः', 'राज्यात् भ्रंशो वने वास.' इति परदुःखदुःखित्वं स्वनो दुःखित्वं च यत् प्रमाणतो ज्ञाप्यते, तद् अवतारेष्वेव । अवतारश्च यदि कर्माधीनस्स्यात् , दुःखहेतुः स्यात् । स्वेच्छया ह्यवतारः । न च स्वदुःखहेतुभूतं जन्म स्वयमिच्छेत् । अतस्तत् अभिनयमात्रमिति सिद्धम् । तस्य किं फलमिति चेत्-**आसुरोपप्लवः** । असुरा हि दुःखाशक्त्यादिकं दृष्ट्वा निकृष्ट एवायमिति निश्चित्य विशेषतो द्रुह्यन्ति । तमप्राप्यैव ततो यान्त्यधमां गतिम् । यद्यपि भक्ता अपि अपरिमितनवनीतादिभक्षणमवेक्ष्य, अहो कथमियदस्यार्भकस्य जीर्णं भवेदिति मुह्यन्ति । दुःखाभिनयश्रममवेक्ष्य अभिनयोऽयमित्यज्ञात्वा बन्धवो दुःख्यन्ति च । अयं मोहोऽतिस्नेहकृतस्तेषां रक्षायै स्यात् । द्वेषकृतस्तु मोह उपप्लवाय । **आसुरशब्दो** राक्षसस्याप्युपलक्षकः । तथा च, 'तस्य धीराः परिजानन्ति योनिम्' 'संभवाम्यात्ममायया', 'न तस्य प्राकृता मूर्तिर्मांस मेदोस्थिसंभवा', 'न भूतसंघसंस्थानो देहोऽस्य परमात्मनः', 'ईशन्नपि महायोगी सर्वस्य जगतः प्रभुः । कर्माण्यारभते कर्तुं कीनाश इव दुर्बलः । तेन वञ्चयते लोकान् मायायोगेन केशवः' इत्यादिवचनार्थ-

## आकाशाधिकरणम् ॥ ८ ॥

इत्थं विद्यात्रयेण स्थिरचरचिदचिद्देहिनः सर्वहेतोः
अव्यक्ताज्जीववर्गादपि समधिकता यद्यपि स्यात्, तथापि ।
उत्थानद्वारभेदात् क्रमत इह मृदूपक्रम(मान्)क्रूरनिष्ठान्
अध्यायेऽस्मिन्निरुन्धन् अधिकरणगणैस्तद्गुणान् उद्गृणाति ॥ ६६ ॥

अत्रोक्तानामधिकरणानामर्थैक्यादेकपेटिकात्वम् [प्रदर्श्य?] अध्यायपरिसमाप्तिपर्यन्तमागामिनामधिकरणानामर्थविशेषाभावान्नैरर्थक्यमाशङ्कमानस्य पूर्वपक्षवादिनः प्रकारभेदेन प्रयोजनवत्त्वमुपपादयन् सर्वाधिकरणसाधारणं भगवद्गुणविशेषानुसन्धानरूपं प्रधानं प्रयोजनं प्रकटमेवाऽऽचष्टे—इत्थमिति । विद्यात्रयेण सद्विद्याद्यधिकरणत्रयोक्तेन, स्थावरजङ्गमात्मकचेतनाचेतनात्मकस्य सर्वकारणस्य भगवतः प्रधानाज्जीववर्गाच्चाऽऽदित्यादेरप्याधिक्यं यद्यपि स्यात्—तथापि, 'अस्पष्टतरमस्पष्टं स्पष्टं छायानुसारि च' इत्युक्तक्रमेणोत्थानद्वारभेदात् क्रमेणोत्थितान् मृदूपक्रम(क्रमान्) क्रूरनिष्ठान् प्रतिवादिनोऽस्मिन्नध्याये निरुन्धन् सन् शिष्टैरधिकरणैर्भगवद्गुणानपि विशेषतः

---

विमर्शे जन्मदेहादिसद्भावस्य प्राकृतशरीरमांसरुधिरक्लेशदौर्बल्याद्यभावस्य चावगमात् कतिपयांशमात्रबाधः स्वीकार्यः ; न मूर्त्यादेरपीति । अतो हेयप्रत्यनीकविग्रहोऽयम् ॥ ६५ ॥

ननूपोद्घातभागेन वेदान्तानां ब्रह्मणि तात्पर्यसंभावना स्थापिता । तदुत्तरेणाधिकरणत्रयेण च अचेतने वा चेतनसामान्ये वा विशिष्टजीवे वा तात्पर्यादर्शनेन ब्रह्म निराकर्तुं न शक्यमिति स्थापितम्। ततश्च ब्रह्मायोगव्यवच्छेदः सिद्धः। न च तथापि तत् ब्रह्म को देवताविशेष इति निर्धारणं न संपन्नमिति वाच्यम्-तस्योपरितनैरधिकरणैरप्यप्राप्यमाणत्वात्। प्राप्यते चेत्, पूर्वमपि। वस्तुतोऽन्तरादित्यविद्यायाम्, 'तस्य यथा कप्यासं पुण्डरीकम् एवमक्षिणी' इति पुण्डरीकाक्षत्वप्रतिपादनात् देवताविशेषनिर्णयोऽपि जातः। अत एव नित्यश्रीरिति विशेषणमपि प्राक् उक्तम् । स्पष्टश्च श्रीविष्णुपुराणादौ विष्णोरादित्यमण्डले अवस्थानादि । अतः प्रथमाध्याये शेषांशो व्यर्थ इत्याशंकां परिहरति इत्थमिति । विद्यात्रयेण सद्विद्या-आनन्दमयविद्या-अन्तरादित्यविद्यारूपौपनिषदभागत्रयेण ब्रह्मणः समधिकता अतिरिक्तता स्यात्= सिद्ध्येत्। कथं कस्मादित्यत्राह स्थिरेति । स्थावरैः जंगमैश्च भूतैः, 'यतो वा इमानि भूतानि' इत्युक्तैः ईक्षत्यधिकरणोक्तेनाचिता, अनन्तराधिकरणद्वयोक्तेन सामान्यविशेषरूपेण चिता च देहिनः, सर्वप्रपञ्चजन्मस्थितिलयहेतोः अस्य तत्तदन्तरात्मतया सर्वकारणत्वस्योक्ततयेति यावत्। अव्यक्तात् प्रधानात् जीववर्गात् सामान्यतः सर्वजीवात् विशिष्टपुण्यादित्यहिरण्यगर्भाद्यनेकजीववर्गाच्चाधिकता सिद्धेति ज्ञाप्यते । यद्यपीति तदंगीकृत्य प्रत्याह तथापि तद्गुणान् उद्गृणातीति। अत्राध्याये उपरि वक्ष्यमाणोपासनावर्गोपयुक्तानेकविद्याभागार्थविचारव्याजेनानन्तगुणाकरत्वं स्थाप्यत इति। वस्तुतः सिद्धमपि समधिकत्वं मुखान्तरैः प्रचाल्य स्थाप्यत इति प्रयोजनवत्त्वमाह उत्थानेति। इह उक्तब्रह्मविषय एव उत्थानद्वारभेदात् तत्तत्प्रघट्टावगत पूर्वपक्षहेतुभूतश्रुतिलिंगादिभेदं पुरस्कृत्य क्रमतः पूर्वपूर्वाधिकरणार्थाक्षेपादिक्रमेण मृदूपक्रमक्रूरनिष्ठान् मृदुभूतेषु अस्पष्टचिदचिल्लिंगकवाक्येषूपक्रम्य ब्रह्मेतरविस्पष्टप्रतिपादकभागेषु क्रूरेषु सिद्धान्तिबाधकेषु

प्रकाशयतीति शब्दार्थः । अयमत्र भावः—यथा युद्धेषु पदात्यश्वगजरथानां पूर्वपूर्वदुर्बलानां दुर्बलभङ्गे प्रबलयोधनम्, एवमस्पष्टतरजीवादिलिङ्गा[दी]नां पूर्वपूर्वभङ्गे पुनरुत्तरोत्तरपरिग्रहेण पूर्वपक्षः प्रवर्तते । तत्प्रवृत्तिकुण्ठनमन्तरेण जातमपि तत्त्वज्ञानं न प्रतितिष्ठतीति । तेनाध्यायशेषोऽप्यारम्भणीय एव । किंच सर्वेष्वप्यधिकरणेषु तत्तदधिकरणप्रतिनियता भगवद्गुणा विशेषतः प्रकाश्यन्ते । तेषां गुणानां कार्त्स्न्येनानुसन्धानमध्यायशेषप्रयोजनमित्यास्माको मार्गः । निर्विशेषवादिनां तु एकेनैवाधिकरणेन निर्विशेषं प्रतिपन्नमिति प्रतिपाद्यगुणविशेषाभावादुत्तरेषामधिकरणानां नैष्फल्यमेवेति हृदयम् ॥ ६६ ॥

शब्दैः सद्ब्रह्ममुख्यैः श्रुतिशिरसि मितं कारणं किञ्चिदेकं
सङ्कल्पारम्यास(नन्द)रूपैरतदननुगुणैश्चिन्तितश्चि(स्त)द्विशेषः ।
भूताकाशादिशङ्काजननसमुचितैर्नामभिः कारणस्थैः
क्षिप्त्वा तत् पादशेषे श्रुतिसमुदयनासम्भवोक्त्या भुनक्ति ॥ ६७ ॥

---

निष्ठां लभमानान् । मृदुरुपक्रमो येषां ते, क्रूरा निष्ठा पर्यवसानं येषां ते इति समानाधिकरणबहुव्रीहिणा मृदूपक्रमाश्च क्रूरनिष्ठाश्च ते इत्युक्तावपि तात्पर्यार्थः स एव । पूर्वपक्षिणः अस्मिन् अध्याये **अधिकरणगणैः** पादभेदप्रयोजकार्थभेदानुसारिभिश्चतुर्भिरधिकरणगणैः **निरुन्धन्** वारयन् उद्गृणातीति । एवं निरोधाकरणे स्थापितोऽप्यर्थः न स्थिरीभवेदिति भावः । मृदूपक्रमक्रूरनिष्ठत्वं प्रकारान्तरेणापि ; एकैकस्मिन्नप्यधिकरणे तत्तद्विद्यामात्रस्य ब्रह्मपरत्वनिषेधोक्तिवदुपक्रम्य, तत्सामान्यादितरविद्यास्वपि ब्रह्मपरत्वविश्वासभञ्जने पूर्वपक्षिप्रवृत्तिदर्शनात्। अनेन पूर्वाधिकरणत्रयमेका पेटिका । अध्यायशेषः पेटिकान्तरमिति दर्शितम् । तत्र प्रथमपादे अर्थान्तररूढशब्दग्रहणेन पूर्वपक्ष इति विभागमनन्तरश्लोके वक्ष्यति ॥

**चि. टी.** मृदूपक्रमक्रूरनिष्ठानित्यत्रानुरूपतमं दृष्टान्तमाह, 'यथा युद्धेषु पदात्यश्वगजरथानां पूर्वदुर्बलानां दुर्बलभंगे प्रबलयोधनम्' इति । **पूर्वपूर्वदुर्बलानामि**त्यत्र बहुव्रीहिः । पूर्वपदविशेषणम् ॥ एवं तृतीयतृतीयवक्ष्यमाणोपासनोपयोगिगुणगणसमर्पणैदम्पर्येण निर्गुणवादः सर्वथा निरस्तो भवति ॥ ६६॥

पादशेषस्य कारणवाक्यघटकतद्बोधकनामविशेषार्थचिन्तनपरतया एकपेटिकात्वमुपपादयति **शब्दै**रिति । जन्माद्यधिकरणे, 'यतो वा इमानि' इति वाक्यमुपात्तम् । तत्र यच्छब्दनिर्देशात् पुरोवादवाक्यानि उपस्थापितानि । तत्र **भृगुणा** तपस्तप्त्वा अन्नमयादिव्यावर्तनेनाऽऽनन्दमयनिर्धारणात् , 'एको ह वै नारायण आसीत्' इति वाक्यस्य प्रथमं गृहीतत्वे तावच्चिन्तनस्यैवानवकाशात् सामान्यशब्दघटितकारणवाक्यानि परं गृहीत्वा विचार इति ज्ञायते । अथवा नामविशेषघटितवाक्यग्रहणे, 'एको ह वै नारायणः, शिव एव केवलः, हिरण्यगर्भः समवर्तताग्रे, सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते, प्राणमेवाभिसंविशन्ति', इत्येवं नानानामश्रवणात् नामविशेषघटितवाक्यानि पश्चात् विचार्यतया परिचिन्त्य सामान्यवाक्यानि परं जग्राह । हवैशब्दादिघटितया तादृशवाक्यानां पुरोवादिवाक्यत्वं नास्तीति च मेने । तथाच, 'सदेव सोम्येदम्, ब्रह्म वा इदम्, असद्वा इदमित्यादिवाक्यघटकैः सद्ब्रह्ममुख्यैः शब्दैः श्रुतिशिरसि

एवं पूर्वपेटिकया सह अध्यायशेषस्य संगतिमुक्त्वा पादशेषस्य संगतिं वक्तुं पूर्वोत्तरपेटिकयोः स्वरूपमपि विशेषतः प्रकाशयति—शब्दैरिति। 'अथातो ब्रह्मजिज्ञासा' इति शारीरकशास्त्राऽऽद्यपेटिकायां ब्रह्म जिज्ञास्यमित्युक्तम्। 'तत् ब्रह्मसदात्मपुरुषरूपसाधारणशब्दप्रतिपन्नं ब्रह्म किं प्रकृतिः, किं वा जीवः, अथवा उपचितपुण्यविशेषः कश्चिज्जीवविशेषः? परमशब्दस्य साधारणत्वेन पुण्यापुण्यरूपपाप्मोदितत्वेऽपि किं पुण्डरीकाक्षः, अन्यो वा कश्चिच्चतुर्मुख-विरूपाक्षादिः' इत्याशङ्क्य पुण्डरीकाक्ष एवेति निर्धारितं पूर्वपेटिकायाम्। तदेतरव्यावर्तकलिङ्गान्याह—संकल्पेति। संकल्पात् प्रधानव्यावृत्तिः। आनन्दाभ्यासात् जीवसामान्यं व्यावर्त्यते। अप्राकृतरूपविशेषात् उपचितपुण्यविशेषो जीवोऽपि। तत्रापि पुण्डरीकाक्षत्वश्रवणात् चतुर्मुखादिरपीति हार्दो भावः। अतदनुगुणैः = अनन्यथासिद्धैरित्यर्थः। अत्र पूर्वपक्षी प्रत्यवतिष्ठते—पूर्वाधिकरणत्रये लिङ्गैरेव सामान्यश्रुतिबाधेन प्रधानादिव्यावृत्तिर्भवद्भिरभिहिता। लिङ्गात् विशेषश्रुतिर्बलीयसी। सा हि [बाधितुमशक्या] रूढिशक्त्या वर्तते। तेनाऽऽकाशप्राणज्योतिरिन्द्रादिविशेषश्रुत्या लिङ्गानि बाधित्वा प्रसिद्धाऽऽकाशादिकमेव जिज्ञास्यब्रह्मत्वेन स्वीकार्यमिति। तेन पादशेषात्मकपेटिकासांगत्यमुक्तं भवति। तदेतदाह—भूतेति। आकाशो द्विविधः—'यदेष आकाश आनन्दो न स्यात्' इत्यध्यात्मवित्सम्मतः एकः; पामरपरीक्षकाविशेषेण सर्वलोकप्रसिद्धो भूताकाशोऽपरः। तेन प्रसिद्ध्यतिशयानुसारेण भूताकाश एवात्र ग्राह्यः। एवं प्राणादावपि द्रष्टव्यम्। एवमाकाशादीनां विशेषश्रुत्या पूर्वाधिकरणत्रयोक्तं लिङ्गं बाधित्वा-पूर्वपक्षमभिप्रायेण निरस्य सिद्धान्ती पुनः आकाशादिविशेषश्रुतिसमुदायासंभवप्रतिपादनेन तदेव ब्रह्मप्रतिपादकं लिङ्गं प्रधानादिव्यावर्तकं भुनक्ति = रक्षतीत्यर्थः। 'भुजोऽनवने' इति रक्षणव्यतिरिक्तार्थविवक्षायामात्मनेपदविधानात्। अयमाशयः—रूढिर्योगमपहरतीति सिद्धमेव; अथापि प्रमाणपरिक्लृप्तो योगो रूढिमेव बाधत इति न्यायविदां निर्णयः। अत्र च

---

उपनिषदि सामान्यतो जगत्कारणं किञ्चिदस्तीति विदितम्। इदमुपोद्घातपेटिकायामुपक्षिप्तम्। अथ किं तदिति विचारे प्रवृत्य संप्रति अधिकरणत्रयेण सूत्रषटक—ईक्षत्यभ्यासतद्धर्मशब्दविवक्षितैः संकल्पानन्दाभ्यासशुद्धसत्त्वमयरूपात्मकैस्त्रिभिः **चिद्विशेषः** आदित्यादिपुण्यातिशयसंपन्नजीवेभ्योऽपि विलक्षणः **अतदनुगुणैः**। **अतदित्यत्र तच्छब्दः** चिद्विशेष इति प्रयोक्ष्यमाणपदार्थं बुद्धिस्थतया वक्ति। कारणं किञ्चिदेकमित्यत्र विशेषानिर्धारणस्य **किञ्चित्पदेन** ज्ञापनात् तद्ग्रहणं न भवति। तादृशशुद्धसत्त्वदिव्यविग्रहपुण्डरीकाक्षेतरेषाम् अचितां चिताश्चासंभावितैरित्यर्थः। यद्वा तत् **मितत्वं** यथार्थनिश्चयः तदननुगुणभिन्नैः। अथवा अजगत्कारणस्याननुरूपैः। **चिन्तितः** निश्चितः। अथ पादशेषे **तत्** चिद्विशेषचिन्तनं कृतं **कारणस्थैः** कारणप्रतिपादकैः महाभूतरूपाकाशप्राणज्योतिरिन्द्ररूपार्थविशेषेषु कश्चिदस्त्विति शंकामुत्पादयद्भिः **नामभिः** रूढैः शब्दैः **क्षिप्त्वा** निरस्य - 'तत्र विद्यात्रये विशेषनामधेयाभावात् तथानिर्णयेऽपि वक्ष्यमाणविद्यासु नामधेयरूपश्रुतिसत्त्वात् श्रुतिविरोधे लिंगैरर्थान्तरनिर्णयो न शक्यः' इति पूर्वपक्षिमुखेनाऽऽक्षिप्य सूत्रकारः **श्रुतिसमुदयनासंभवोक्त्या** श्रुतीनां रूढशब्दानां रूढ्यर्थबोधनार्थोद्यमासंभवप्रतिपादनेन तत् प्राच्यमेव चिन्तनं चतुर्भिरधिकरणैः **भुनक्ति** परिपालयति।

**चि. टी.** अत्र **समुदायेति** शब्दः **समुदयनेत्यस्य** स्थाने लक्ष्यते। तस्यापि समूह इति नार्थः; किंतु **पदयोजनानुसारी** पूर्वोक्तार्थ एव। भावे घञ्। शास्त्रेषु रूढिशक्तेः समुदायशक्तिरिति

'सर्वाणि ह वा इमानि' इति प्रसिद्धवन्निर्देशो दृश्यते । हवा इति प्रसिद्धिप्रतिपादकाव्ययदर्शनात् । प्रसिद्धिश्च कारणवाक्येषु । तेषु च छागपशुन्यायादिना नारायणपरत्वं सिद्धमेव । अतो नारायण-प्रत्यभिज्ञापकप्रसिद्धवन्निर्देशयुक्तानन्यथासिद्धवाक्यस्थसर्वकारणत्वलिङ्गपरिक्लृप्तो योगः आकाश-शब्दस्य रूढिं बाधत इति युक्तमेव । शेषं भाष्ये ॥ ६७ ॥

**आकाशप्राणशब्दावनितरगतिकौ रूढिभङ्गेन नेयौ**
**ज्योतिश्शब्दस्तु(श्च) रूढ्या प्रथयति पुरुषं दिव्यतेजोविशिष्टम् ।**
**प्रख्यातेन्द्रादिशब्दस्तदनु नियमितस्तद्विशिष्टप्रवृत्त्ये-**
**त्येवं स्यात् पेटिकैषा द्विकयुगलवती शब्दवृत्तिक्रमेण ॥ ६८ ॥**

अतःपरमुत्तरेषां चतुर्णामधिकरणानां युगद्वयेन भेदमन्योन्यसंगतिमप्याह—आकाशेति । आकाशप्राणशब्दौ अनितरगतिकौ = प्रसिद्धाकाशप्राणप्रतिपादनानर्हौ रूढिं हित्वा परस्मिन् ब्रह्मणि योगशक्त्यैव प्रतिपादनीयौ । तेन द्वयोरधिकरणयोरेकपेटिकात्वसिद्धिः। तथोत्तराधिकरणयोः रूढि-भङ्गमन्तरेण रूढार्थविशिष्टब्रह्मपरत्वादेकपेटिकात्वं सिद्धम् । तत्र ज्योतिश्शब्दस्य तावत् रूढार्थ-विशिष्टपरत्वं दर्शयति–ज्योतिरिति। 'न तत्र सूर्यो भाति', 'न चोदेति नास्तमेति', 'यदादित्यगतं तेजः' इत्यादिकं हि प्रमाणजातमुपलभ्यते । एवमिन्द्रादिशब्दोऽपि इन्द्रादिविशिष्टपरमात्मपरतया रूढ्य-

---

व्यवहारस्य दृश्यमानत्वात् श्रुतीनां या समुदायशक्तिः तदसंभवोपपादनेनेति वाऽर्थोऽस्तु ॥ अत्राभ्यास-पदस्थाने **आनन्देति** पाठोऽस्ति । पूर्वपाठे सौत्रपदग्रहणम् ; अत्रार्थग्रहणम् । संकल्पानन्दविग्रहाणां विशेष एवात्र वक्तव्यः । सः **अतदनुगुणैरिति** पदलभ्यः । विशेषरूढकारणवाचिपदयथाश्रुतार्थ ग्रहणासंभवप्रतिपादनं पादशेषकृत्यम् ॥ ६७ ॥

अर्थान्तरप्रसिद्धनामघटितकारणवाक्यविचारत्वेन चतुर्णामधिकरणानामेकपेटिकात्वमुक्तम् । तत्र द्वयोर्द्वयोरवान्तरपेटिकात्वप्रयोजकमाह **आकाशेति** । आकाशशब्दार्थस्य भूताकाशस्य प्राणशब्दार्थस्य प्राणवायोश्च कारणकोटिप्रवेशासंभवात् रूढिभङ्गेतरगत्यभावात् रूढिभंगेन तौ शब्दौ **नेयौ** अर्थान्तरपरत्वेन वक्तव्यावभूताम् । **नीतौ** इत्यनुक्त्वा **नेयावित्युक्तिः** रूढिभंगविषये सूत्रकारकण्ठोक्त्यभावात् । ननु अपर्यवसानवृत्त्या भूतादिविशिष्टपरमात्मपरत्वमेवास्तु इति शंकायां, तथा चेत् सूत्रकृन्मन्येत, 'शास्त्रदृष्ट्या तु' इति अत्रैव सूत्रयेत् । आकाशप्राणरूपविशेषणयोः कारणतावच्छेदकत्वाभावेन कारणत्वान्वयस्थले परमात्मविशेषणत्वं न स्वरसमिति अत्र तेन तन्नेष्टम् । अत एव **नेयाविति** ज्ञापनार्थं **नेयावित्युक्तम्** । अन्त्याधिकरणद्वये रूढ्यर्थविशिष्टपरमात्मार्थकत्वरूपैकार्थेष्ट्या एकपेटिकात्वम् । तत्र पूर्वपक्षिविवक्षित वाच्यार्थास्वीकारेण भगवद्विग्रहरूपवाच्यार्थान्तरस्वीकारेण विशिष्टार्थवर्णनं प्रथमे, पूर्वपक्षीष्टरूढ्यर्थविशिष्ट वर्णनमेव द्वितीये इति विवेकः । **दिव्यतेजः** भगवद्दिव्यमंगलविग्रहः। **प्रख्यातेन्द्रादिशब्दः** इन्द्रादेश्शब्दः **इन्द्रादिशब्दः** । न तु इन्द्र इत्याकारकशब्दः । **प्रतर्दनविद्यायामिन्द्रशब्दस्येन्द्रविशिष्टार्थकत्वाभावात्** **मामिति** इन्द्रवाचकास्मच्छब्दस्यैव तथात्वात् । 'इन्द्रस्य प्रियं धाम' इत्यत्र न विशिष्टपरत्वम् । तथासति धामेति वैकुण्ठग्रहणापत्ते । तत्र युद्ध-प्रतर्दनगमनाद्यप्रसक्तेः । इन्द्रस्योपदेष्टृत्वभंगापत्तेश्च । त्वाष्ट्रहननाद्य-

भङ्गेन विशेषणमात्रापर्यवसानमाश्रित्य नेतव्यः। तथाचार्थभेदात् पेटिकाद्वयसिद्धिरिति निगमयति—इत्येवमिति। एकत्र यौगिकशक्तिः, अन्यत्र विशेषणमात्रापर्यवसिता रूढिशक्तिरिति शब्दप्रवृत्तिक्रमः॥

अत्राकाशस्त्वशेषप्रम(स)वविलयभूः साम्नि दृष्टः स्वनाम्ना
निर्दिष्टस्तैत्तिरीयेऽप्यनितरजनितः स्वात्मनः संभवोक्त्या।
मैवं, सिद्धानुवादो ह्ययम्, अथ च परप्राप्यतादिर्न तस्मिन्
तत्कर्ताऽऽत्मा विपश्चित् श्रुत इति (इह) विहता स्वात्मनस्तत्प्रसूतिः॥ ६९॥

इत्याकाशाधिकरणम्॥ ८॥

पूर्वम्, 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषः' इति आदित्यान्तर्वर्तिनः कस्यचित् पुरुषस्य विशेषलिङ्गात् वेदान्तवेद्यत्वमुक्तम्। इदानीं तदभावादाकाशस्य विशेषश्रुत्या वेदान्तवेद्यत्वमाशङ्क्य परिह्रियत इति संगतिः। प्रसिद्धाऽऽकाशब्रह्मणोराकाशशब्दयोगसाधारण्यं संशयबीजमित्यादि स्वयमेव भाव्यम्। तदर्थविचारस्तु–'सर्वाणि ह वा इमानि भूतानि' इत्यादिच्छान्दोग्यवाक्यस्थाकाशशब्दः किं प्रसिद्धाकाशपरः, उत परमात्मपर इति। तदर्थं विचार्यते—किमयमाकाशशब्दो रूढिशक्त्या वर्तते, उत नेति। तदर्थमपि विचार्यते–किं रूढिर्योगमपहरतीति न्यायापवादकं न्यायान्तरं न विद्यते, उत विद्यत इति। पुनश्च विचार्यते–प्रसिद्धवन्निर्देशयुक्तम् अनन्यकारणत्वादिकं चेतनमात्रविषयम्, उत चेतनाचेतनविषयमित्यादि। फलफलिभावस्तु—'इमानि भूतानि' इति प्रसिद्धार्थविषयकारणत्वानुवादस्याचेतनमात्रविषयत्वेन योगशक्तिकल्पकन्यायान्तराभावात् आकाशशब्दो रूढ्यैव वर्तत इति अयं शब्दः प्रसिद्धाकाशपरः। सिद्धान्तेऽपि स्वयमेव [फलफलिभावः] वाच्यः। अत्र पूर्वपक्षवादी मन्यते–छान्दोग्ये ह्याकाशशब्दः सर्वोत्पत्तिविलयकारणवाचकतया दृश्यते। स चाकाशस्तैत्तिरीयेऽ-

---

नन्वयापत्तेश्च। आदिना प्राणपरिग्रहः। इन्द्रादेः शब्द इति विग्रहे सत्येव तद्विशिष्टेत्यत्र तच्छब्देन इन्द्रप्राणग्रहणसंभवः। तद्विशिष्टप्रवृत्त्या तद्विशिष्टवाचितया। ननु, 'साक्षादप्यविरोधं जैमिनिः' इति रीत्या रूढ्यर्थत्याग एव कुतो नेत्यत्रोत्तरं नियमित इति पदेन सूचितम्। रूढ्यर्थत्यागे त्वाष्ट्रवधादिरूपविशेषणान्वयो न स्यादिति भावः। शब्दवृत्तिक्रमेण=पूर्वत्र योगशक्तिरूपवृत्तिः उत्तरत्रापर्यवसानवृत्तिरूपरूढिशक्तिरिति॥ ६८॥

ईक्षणादिधर्मान्वययोग्यतारूपलिंगाद्यपेक्षया श्रुतेर्बलीयस्त्वात् नामभूतश्रुत्यर्थस्यैव कारणत्वं युक्तमिति पूर्वाधिकरणाक्षेपप्रवृत्तस्याकाशाधिकरणस्य पूर्वपक्षसिद्धान्तावाह अत्रेति। अत्र=पूर्वाधिकरणप्रसक्तछान्दोग्यप्रथमप्रपाठक एव, साम्नि सामप्रस्तावे साम्नो गतिपरम्पराविचारस्थले परमगतितया निर्दिष्टः आकाशः अशेषस्य भूतजातस्य प्रसवविलयभूः उत्पत्तिप्रलयस्थानत्वेन, "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते, आकाशं प्रत्यस्तं यन्ति" इति वाक्ये स्वनाम्ना रूढ्या दृष्टः स्पष्टमुक्तः। अतो भूताकाश एव कारणम्। ननु कार्यभूतस्य तस्य कथं सर्वकारणत्वमिति चेत्—कार्यत्वमेव न; कारणत्वेनैवानन्तत्वेन चोक्तत्वात्। ननु, 'आत्मन आकाशः संभूतः' इति कार्यत्वं श्रूयते; तत्राह निर्दिष्ट इति। आकाशसंभवप्रतिपादके तैत्तिरीयवाक्येऽपि आत्मपदेन स्वमेव गृहीत्वा स्वस्मादेवाऽऽकाशोत्पत्तिकथनात्, स्वस्य स्वोत्पादकत्वे आत्माश्रयात् स्वेतरानुत्पाद्यत्वमेव विवक्षितमिति अनितर-

नन्योत्पाद्यतया कथ्यते, 'आत्मन आकाशः संभूतः' इति। तस्मानन्योत्पाद्यत्वं सर्वकारणत्वेन नित्यत्वादेव युज्यते इति। तदिदमाह—अन्नेत्यादिना। तन्निराकरोति—मैवमिति। तत्र हेतुमाह—सिद्धेति। 'हवै' इति प्रसिद्धवन्निर्देशयुक्तस्यास्य वाक्यस्य सिद्धानुवादविषय(रूप?)त्वात् पूर्वप्रसिद्धिरवश्यापेक्षणीया। प्रसिद्धिश्च कारणवाक्येषु। तानि च नारायणविषयाणीति प्रागेवोक्तम्। तस्मादाकाशशब्दो न प्रसिद्धाकाशपर इत्यर्थः। किं च, 'आकाशः परायणम्' इति आकाशस्य परमप्राप्यत्वमत्रैव श्रूयते। न ह्यचेतनं किंचित् परमप्राप्यमित्यात्मविदो वदन्ति। तदिदमाह—अथेति। तस्मिन् आकाशे परमप्राप्यत्वं न संभवतीत्यर्थः। दूषणान्तरमाह—तदिति। 'तदैक्षत, तत्तेज ऐक्षत, ता आप ऐक्षन्त' इत्यादिषु तत्तत्कर्ता विपश्चित्त्वेनैव हि श्रुतः। तथाचाऽऽकाशस्य विविधदर्शनं न संभवति। अथवा तत्कर्तेति आकाशकर्तेति। ब्रह्मवल्ल्यां विपश्चिता ब्रह्मणेति जगत्कारणं वस्तु विपश्चित्त्वेनैव हि श्रूयते। विविधं पश्यच्चित्त्वं हि विपश्चित्त्वमिति व्याचख्युः (भाष्ये)। तेनाऽऽत्मशब्दः परमात्मवाचकः। यत्तूक्तम्, 'आत्मन आकाशः' इति स्वात्मन आकाशोत्पत्तिरभिधीयत इति—तत्र मुख्यार्थस्वीकारे

---

जनितत्वेनोक्त एवायम्। ननु भाष्ये सूक्ष्माकाशात् स्वस्मात् स्थूलाकाश उत्पन्न इत्यर्थस्योक्तत्वात् एवमर्थोक्तौ तद्विरोध इति चेत्-अस्तु तथैव। वाय्वादेराकाशादिगतकारणत्वोक्तिवत् आकाशस्य वस्त्वन्तरं कारणत्वेनानिर्दिश्य सूक्ष्मावस्थात् स्वात्मनः स्वसंभवस्यैवोक्त्या वस्त्वन्तरं न कारणमिति कथितप्रायमिति श्लोकार्थ इति। पूर्वपक्षं निरस्यति मैवमिति। सिद्धेति। यदीदं वाक्यं विधायकं स्यात्, तदा यथाश्रुति प्रतिपत्तव्यं भवेत्। प्रमाणान्तरसिद्धस्यानुवादोऽयमिति हवै इति शब्दात् ज्ञायते। प्रमाणान्तरञ्च न लौकिकम्। शास्त्रे च कारणवाक्यैः पूर्वं निर्णीतस्यैव सिद्ध्या तदनुवादरूपेऽत्राकाशपदस्य स एवार्थो वक्तव्य इति तत्राऽऽकाशपदप्रसिद्ध्यभावात् रूढ्यतिरिक्तवृत्तिकल्पनेति। पदान्तरार्थानामन्वयायोगादपि भूताकाशस्त्याज्य इत्याह अथचेति। अथ-अनन्तरोक्तम् 'आकाशो ह्येभ्यो ज्यायान्, आकाशः परायणम्' इति परमप्राप्यत्वसर्वज्यायस्त्वादिकं कथ्यमानं न भूताकाशे। अन्तिमभाष्यफक्किकार्थमाह तत्कर्तेति। एवं वाऽवतरणम् – ननु न प्राप्यान्तरं श्रूयते॥ न; 'ब्रह्मविदाप्नोति परम्', 'ब्रह्मणा सहाश्नुते' इति प्राप्यान्तरस्य निर्दिष्टत्वात् इति चेत्-ननु तत् स्वात्मैव=आकाशस्वरूपमेवेति, 'तस्माद्वा एतस्मादात्मनः' इत्यतो ज्ञायत इति चेत्, तत् दूषयति तत्कर्तेति। आत्मशब्दस्य नियन्तेत्यर्थं विहाय स्वस्मादित्यर्थग्रहणायोगात्; उपरि वाय्वग्न्यादिसंभवोक्तिरीत्या आकाशत्वानापन्नवस्तुन एवाऽऽकाशकारणतया कथनीयत्वाच्च। किञ्च आत्मन इति पञ्चम्या उपादानत्वेन श्रुतः आत्मा, 'ब्रह्मणा विपश्चिता' इति विपश्चित्त्वविशेषणात् आकाशकर्तृत्वेन श्रुतः। विविधसंकल्पकर्तृत्वमेव हि विपश्चित्त्वम्। इति उक्तहेतोः। इहेति पाठे श्रुत इत्यत्रान्वयः। आत्माश्रयदोषात् स्वस्मादिति न युक्तम्। सूक्ष्मावस्थान्तरग्रहणे च तस्य नाकाशपदबोध्यत्वम्। तस्य विपश्चिद्ब्रह्माभेदः सत्यज्ञानादिता च न भवति। अत्र प्रकरणे सान्तस्य साम्यगतित्वं मा भूदिति अनन्ते आकाशे गतित्वविश्रान्तिरित्युक्तम्। अनन्तत्वञ्च, 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्युक्तस्य ब्रह्मण एव। द्रव्यैक्यमात्रेण स्वस्मादित्युक्तौ सत्कार्यवादे तत् वाय्वादावपि तुल्यम्। तस्मादविशेषात् स्वात्मन इत्यर्थो न युक्त इति॥ रूढ्यर्थत्यागे कोऽर्थो वक्तव्य इति चेत्— अत्राऽऽ-

बाधः ; अमुख्यार्थस्वीकारे स एव दोषः । तस्मादात्मनः = परमात्मनः आकाशः संभूत इत्ययमेवार्थ इत्यभिप्रायेणाह— विहतेति ॥ ६९ ॥

**अथ प्राणाधिकरणम् ॥ ९ ॥**

सूत्रम्-अत एव प्राणः ॥ १-१-२४.

**प्राणायत्तं हि देहादिकमिह विदितं तेन तत्कारणत्वं**
**श्रुत्युक्तं रूढिशक्त्या सुदृढमिति न तद् व्योमवत् बाधनीयम् ।**
**तन्न ; प्राणस्य काष्ठादिषु महिमहतेः पूर्ववच्चानुवादात्**
**आकाशोक्तेरिवोक्तेः(क्ते) भगवति निखिलप्राणनस्यापि दृष्टेः ॥ ७० ॥**

**इति प्राणाधिकरणम् ॥ ९ ॥**

अत्रैवं पूर्वपक्षवादी मन्यते—प्रसिद्धाकाशे(शात्?) जगदुत्पत्तेरप्रत्यक्षत्वात् आकाशशब्दे रूढिभङ्गो न्याय्यः ; इह तु प्राणे सर्वेषामपि पुरुषाणां प्राणायत्तप्रवृत्तिकत्वस्योपलम्भादस्माकमनुकूललिङ्गं यत् तदेव युष्माकं प्रतिकूललिङ्गम्, तेनानुकूललिङ्गसध्रीची प्राणरूढिशक्तिरभञ्जनीयेति । तदिदमाह— प्राणायत्तमिति । तन्निराकरोति—तन्नेति । तत्र हेतुमाह—प्राणस्येति । 'सर्वाणि ह वै' इति चेतनाचेतनविभागाभावेन कृत्स्नस्यापि प्रपञ्चस्य प्राणायत्तप्रवृत्तिकत्वमुच्यते । अचेतनेष्वेव केषुचिच्छिलाकाष्ठादिषु प्राणायत्तप्रवृत्तिकत्वं न दृश्यते । तेन सर्वसाधारणप्रवर्तकत्वगुणाभावात् प्राणस्यापि प्रवर्तकः परमात्मैव प्राणयतीति व्युत्पत्तिमाश्रित्य प्राणशब्दवाच्यतया स्वीकार्य इत्यर्थः । पूर्वाधि-

---

काशकारणत्वस्योक्त्या आकाशकारणमित्येव लक्षणयाऽर्थोऽस्तु । आकाशयति, आकाशत इत्यवयवार्थो वा । प्रकाशपदस्येवाऽऽकाशपदस्यापि योगार्थे प्रयोगसंभवात् । तथाच पुरोवादविरोधादनुवादवाक्यस्थश्रुतिरसाधिकेति अयमाकाशो भूताकाशादन्य एव ॥ ६९ ॥

**अत एव प्राण** इत्यतिदेशसूत्रम् । पूर्वाधिकरणन्यायेन सिद्धौ पुनः पृथगतिदेशप्रयत्नोऽयमधिकाशंकां सूचयति । तत्प्रदर्शनपूर्वकमधिकरणार्थमाह **प्राणेति** । 'सदेवेदम्' इत्यादिश्रुत्या प्रधानस्योक्तं कारणत्वं न दृढम् ; सत्पदस्य प्रधाने रूढ्यभावात् । आकाशस्य कारणत्वं तु दृढम् ; रूढिसत्त्वात् । तथापि तत् प्राक् बाधितम् । प्राणमेवाभिसंविशन्तीति श्रुत्या रूढिशक्त्या उक्तं प्राणस्य सर्वभूतकारणत्वं तु सुदृढम् । कस्मादिति चेत्—**भूत**शब्दस्य देहार्थकत्वात् देहानां प्राणायत्तत्वस्य लोकविदितत्वात् । न ह्याकाशायत्तत्वं देहादेस्तथाऽनुभूयते । अन्वयवत् प्राणाभावे देहसंघातहानिरिति व्यतिरेकात् तदायत्तत्वमत्र प्रसिद्धम् । **तेन**-तस्मात् **तत्** कारणत्वं व्योम्न इव न बाधनीयम् ; अतो न पूर्वाधिकरणन्यायप्रवृत्तिरिति । किञ्चाऽऽकाशपदस्यावयवार्थः सुवच आसीत्, न **प्राण**पदस्य । 'अन प्राणने' इति धातोः प्राणव्यापारार्थकत्वात् तत्कर्तृत्वस्य परमात्मन्यसंभवात् । मुख्यप्राणद्वारा कर्तृत्वोपपादने तु स एव गृह्यताम् ; किमन्येन परमात्मना । निरस्यति **तन्नेति** । सर्वभूतान्तर्गतेषु काष्ठलोष्टादिषु **महिमहतेः** प्राणसामर्थ्यस्य भग्नत्वात् सर्वभूतहेतुत्वायोगात् । ननु **प्राण**शब्दरूढ्यनुसारेण यावत् संभाव्यते तावद्भूतहेतुत्वमस्त्विति चेन्न; **ह वै** इति प्रसिद्ध्यनुवादात् कारणवाक्यानां पूर्वप्रवृत्तौ तदविरोधाय **प्राण**पदस्यैवान्यथा नेयत्वात् । यत्तु **आकाश**पदस्यान्यत्र सुयोजत्वम्, न तु **प्राण**पदस्येति, तन्न ;

करणोक्तं हेतुमत्रापि योजयति—पूर्ववदिति। उभयत्रापि हवा इति शब्दस्य विद्यमानत्वादित्यर्थः। अत्र भगवति प्राणशब्दस्य श्रौतं प्रयोगं सदृष्टान्तमाह—आकाशेति। यथा परमात्मविषयस्याऽऽकाशशब्दस्य श्रुतौ तत्रतत्रोपलभ्यमानत्वादाकाशशब्दः परमात्मविषयः, एवं निखिलप्राणिप्राणनोक्तेर्दृष्टत्वात् प्राणशब्दोऽपि परमात्मविषय इत्युक्तं भवति। तदर्थविचारफलफलिभावौ पूर्वाधिकरणवत् स्वयमेव कल्पनीयौ। संगतिः पुनरातिदेशिकी॥ ७०॥

## अथ ज्योतिरधिकरणम्॥ १०॥

सूत्रम्। ज्योतिश्चरणाभिधानात्॥ छन्दोभिधानान्नेति चेन्न, तथाचेतोर्पणनिगमात् तथा हि दर्शनम्॥ भूतादिपादव्यपदेशोपपत्तेश्चैवम्॥ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् १-१ २६-२९

**नोक्तिं व्याहन्ति लिङ्गं किमपि भवति तु ख्याततत्त्वानुकूलं**
**शब्दश्चानन्यनिष्ठः श्रुत इति न परो ज्योतिराद्युक्तिवेद्यः।**

---

**आकाशोक्तेः**, 'यदेष आकाश आनन्दः' इति **आकाश**पदप्रयोगस्येव **उक्ते प्राण**पदप्रयोगस्यापि, 'प्रज्ञामात्राः प्राणेऽर्पिताः' इत्यादौ परमात्मनि दृष्टेः। योगव्युत्पत्त्यसंभव इत्यपि न; **आकाशपदे** योगव्युत्पत्तिर्न श्रुत्या दर्शिता। **प्राणपदे** प्राणनरूपार्थस्तु दृश्यते, 'प्राणस्य प्राणम्', 'यः प्राणेन प्राणिति' इत्यादौ। योगार्थमन्तरा षष्ठ्याद्यन्वयासंभवात्। तत् प्राणनं शब्दमुख्यार्थो वा भवतु, सत्तानुकूलव्यापाररूपलक्ष्यार्थो वा। एवमर्थग्रहणं कार्यमिति श्रुत्यैव दर्शितम्। अतः उक्तेरर्थस्य च दृष्टेराकाशन्यायप्रवृत्तिर्निर्बाधेति। **उक्तेरित्यत्र उक्ते इति** प्रकाशिकासंमतः पाठः। तदा भगवद्विशेषणम्। तत् व्यर्थम्। **प्राणनस्ये**त्यस्य **उक्तेरि**त्यत्रान्वयेन प्राणनोक्तेर्दर्शनादिति **चिन्तामण्य**भिमतोऽर्थः। निखिलप्राणनस्य परमात्मनि प्रत्यक्षेण दर्शनाभावात् शब्दतो दर्शनमिति ज्ञापनाय सोऽन्वय उचित एव। **उक्तेरि**त्यस्य प्राणपदोक्तेरित्यर्थवर्णने क्लेशश्च। अथापि आकाशोक्तेरिवेति दर्शितसाम्यस्य धर्म्युक्तावेव स्वरसभावित्वात्, शब्ददर्शनयोगार्थदर्शनयोः कण्ठोक्त्यौचित्याच्च **पदयोजनानुसारेणैवं** व्याख्यातम्। **चिन्तामण्यादरणे** तु **अपिशब्देन प्राणशब्दप्रयोगसमुच्चयः**। तदुदाहरणं तु प्राणस्य प्राणमित्येतदपेक्षया, 'प्राणेऽर्पिताः' इति पूर्वोक्तं युक्तम्। **उक्तिशब्दः** श्रुतिपरतया, 'नोक्तिं व्याहन्ति' इति श्लोके प्रयुज्यते। अत्र तु पदमात्रविवक्षा, न तु मुख्यार्थकत्वस्यापि। तत्रैवोपरि तथा प्रयोगात्। चिन्तामणौ **युष्माकं प्रतिकूले**ति। धर्मिकल्पनाया अनावश्यकत्वादिति भावः॥ ७०॥

पूर्वपेटिकासिद्धान्तोपरि आक्षेपेणोत्तरपेटिकारम्भं प्रदर्शयन् तदाक्षेपपरिहारयुक्तिश्चानुगतां काश्चिदाह **नेति**। पूर्वपेटिकायां सर्वभूतोत्पत्तिप्रलयहेतुत्वरूपं लिंगम् आकाशप्राणश्रुतिव्याघातकमासीत्। तदर्थान्वयायोग्यत्वात्। तद्वदत्र **ज्योतिरादि**शब्दरूक्ष्यर्थाग्न्यादिव्याघातकं लिंगं नास्ति। दीप्त्युपासनकर्मत्वरूपलिङ्गयोस्तत्रान्वयसंभवात्। एवं प्रतिकूलाभावमुक्त्वा अनुकूलमप्यस्तीत्याह **भवति त्विति**। **ख्यातं** प्रसिद्धं यत् **तत्त्वम्** अग्निः प्राणः इन्द्रश्चेति, तदनुकूलं तदेकान्वयि लिङ्गमपि भवति, ज्योतिषि कौक्षेयज्योतिरैक्यम्, प्राणे जीवसहवसति–सर्वेन्द्रियनिर्वाहकत्वादि, इन्द्रे त्वाष्ट्रवधादि च। **ज्योतिरा**दिशब्दानां परमात्मनि मुख्यत्वं न भवतीतीदमपि साधकमित्याह **शब्दश्चेति**। **अन्यः**

**विश्वोत्पत्त्युक्त्यभावेऽप्यवगतमिह तल्लिङ्गमित्याक्षिपन्तं**
**रुन्धेऽथाधिक्रियाभ्यां तदुचितचिदचिद्वर्गवैशिष्ट्ययुक्त्या ॥ ७१ ॥**

पूर्वोक्ताधिकरणद्वयसाध्यप्रसाधकयुक्तीनामुत्तराधिकरणद्वयविषयवाक्ययोरभावेनोज्जिहानस्य पूर्वपक्षिणो निराकरणं प्रकारान्तरेणात्र क्रियत इति पूर्वोत्तरपेटिकावैषम्यं प्रकाशयति शिष्यानुग्रहेण नोक्तिमिति। यत् सिद्धान्तानुकूलं लिङ्गं तत् पूर्वपक्षविरुद्धं यत् पुनः पूर्वपक्षानुकूललिङ्गं तदेव सिद्धान्तविरुद्ध(न्ताविरुद्ध)मिति विरोधाविरोधप्रक्रिया[निवृत्त्या] अत्राकाशादिविशेषशब्देन पूर्वयोरधिकरणयोः [पूर्वपक्षे], 'स्वसाध्योपस्थापकसिद्धान्तानुरूप[पूर्वपक्ष]युक्तिदार्ढ्यात् सिद्धान्तनिर्णयः

---

परमात्मा तद्वाचको न भवति। **ज्योतिः**पदं हि भास्वररूपवद्वस्तुवाचि। नैतन्नीरूपे। **प्राण**शब्दो वायुविशेष एव रूढ इति प्रागेवोक्तम्। **इन्द्रप्रयुक्तो मामिति** शब्दश्च नेन्द्रादन्यं वदेत्। **इति** हेतोः **परः** परमात्मा **ज्योतिः**पद**प्राण**पदास्मत्पदविशेषवेद्यो न भवति। नन्वनयोर्विषयवाक्ययोः कारणत्वस्यानुक्तत्वात् एनयोरन्यपरत्वं कारणवाक्यस्थापितब्रह्मव्यवच्छेदकं कथं स्यादिति पूर्वपक्षिणं प्रति प्रश्ने, स प्रत्याह **विश्वे**ति। यद्यपि जगदुत्पत्तेरुक्तिरत्र नास्ति, अथापि **तल्लिङ्गं** विश्वोत्पादकत्वव्याप्यं किञ्चित् **इह** एकैकविषयवाक्येऽप्यवगतमस्तीति सिद्धान्तिनोऽपीष्टम्। प्रथमवाक्ये निरतिशयदीप्तिः, द्वितीयवाक्ये हिततमोपासनकर्मत्वम्। व्याप्यसत्त्वे व्यापकध्रौव्यात् कारणत्वमर्थसिद्धम्। व्याप्ययोश्चाग्नीन्द्रनिष्ठत्वकण्ठोक्त्या कारणत्वमपि तत्रैव सिध्यतीति भवति परमात्मव्यवच्छेदः। **इत्याक्षिपन्तम्**—एवमाक्षेपेण प्रवृत्तं तं पूर्वपक्षिणम् **अथ** अधिकरणाभ्यामन्त्यपेटिकागताभ्यां **रुन्धे** वारयति। कथम्? अग्नीन्द्रवारकप्रकृतविषयवाक्यदर्शितधर्मान्वयरूपयुक्त्या। तदाह **तदि**ति। **तस्य**=पूर्वार्धे **पर**शब्दोक्तस्यैवोचितं यत् चिदचिद्वर्गवैशिष्ट्यं विषयवाक्यस्फुटावगतम्, तद्रूपहेतुनेत्यर्थः। सिद्धान्ते **ज्योतिः**पदस्य दिव्यमङ्गलविग्रहविशिष्ट इत्यर्थः, **प्राणादि**पदस्य च तत्तद्विशिष्ट इत्यर्थः। इदं वैशिष्ट्यं प्रदर्श्य पूर्वपक्षी न वार्यते। तत्तन्नामप्रख्यातार्थग्रहणेनैवोपपत्तौ ब्रह्मरूपधर्मिकल्पनमयुक्तमिति वादिनां **तत्**तच्छब्दस्य ब्रह्मणि समन्वयप्रयासमात्रेण वारणासंभवात्। किन्तु युक्त्यन्तरेण पूर्वपक्षिणि वार्यमाणे धर्म्यन्तरसिद्धौ तर्हि तत्तत्पदनिर्वाहः कथमिति तेन पृष्टे **आकाशादि**शब्दे योगार्थप्रदर्शनवत् अत्रोचितमर्थं प्रदर्श्य निर्वाहः क्रियते। अतः **चिदचिद्वैशिष्ट्ययुक्त्ये**ति पदस्य पूर्वपक्षवारकहेतुप्रतिपादकस्यैतदर्थकत्वं न स्वरसम्। एवं परमात्मनि कौक्षेयज्योतिरैक्यं कथमिति पूर्वपक्षपरिहाराय कौक्षेयानलविशिष्टेत्यर्थवर्णनेन निर्वाह एव क्रियत इति नेयमपि पूर्वपक्षबाधकयुक्तिरिति ध्येयम्। तर्हि किं तत् वैशिष्ट्यमिति चेत्, 'ज्योतिश्चरणाभिधानात्' इत्यादिसूत्रोक्तं, 'पादोऽस्य सर्वा भूतानि त्रिपादस्य' इति चिदचिद्वैशिष्ट्यं प्रथमे। 'अध्यात्मसंबन्धभूमा ह्यस्मिन्' इत्युक्तं चिदचिद्वैशिष्ट्यमुत्तरत्र॥

अत्र **तदुचितचिदचिद्वर्गवैशिष्ट्ययुक्त्ये**त्यस्य व्याख्यानात्मकं **चिन्तामणि**वाक्यं विशदयन्तीव स्थिता **पदयोजना** एवमर्थमाह, "तच्छब्देन पूर्वार्धोक्तः **ज्योतिराद्युक्तिवेद्यो** गृह्यते। ज्योतिश्शब्दप्रकृतिभूतद्युतधात्वर्थस्य दीप्तिरूपस्य **इन्द्र**पदप्रकृतिभूत-इदिधात्वर्थस्य परमैश्वर्यस्य च **उचितः** अनुगुणः। अर्थानुगुण्येनाचिच्चिद्वर्ग इति योज्यम्। यः अचित् वह्निरूपः, यश्चित् इन्द्ररूपश्च तयोर्वर्गः

[कृतः]। (? विरोधाविरोधप्रक्रियानिवृत्त्याऽत्र आकाशादिविशेषशब्देन पूर्वयोरधिकरणयोः पूर्वपक्षे, स्वसाध्योपस्थापक-सिद्धान्तानुरूपयुक्तिदार्ढ्यात् सिद्धान्तनिर्णयः कृतः।) अत्र तावत् पूर्वपक्षवादी (पूर्वपक्षी) [मन्यते] यथा पूर्वयोरधिकरणयोः सर्वकारणत्वादिकं लिङ्गं विशेषोक्तिं न व्याहन्ति। अपितु पूर्वपक्षोक्तप्रसिद्धज्योतिरिन्द्रयोरनुकूलं कौक्षेयज्योतिरैक्यादिकं लिङ्गमप्यस्तीति दर्शयति। [भवतीति।] तदेव सिद्धान्तभूतपरब्रह्मत्वप्रतिकूलम्। न केवलं लिङ्गेनैव वदामः, किंतु प्रधानभूतया

समूहः। ज्योतिषां स्तो बहुत्वेन, कल्पभेदसिद्धेन्द्रव्यक्तिबहुत्वेन च वर्गसिद्धिः। तस्य वैशिष्ट्यं शरीरशरीरिभावेन तदाश्रितत्वम्; तस्य युक्त्या। युक्तिः योगः संगतिः, तया=तत्प्रदर्शनेन रुन्धे निरुणद्धीत्यर्थः" इति। अत्रेदं विचार्यम्—इदं वह्निवैशिष्ट्यमिन्द्रवैशिष्ट्यञ्च कस्य पदस्यार्थः। ज्योतिर्दीप्यत इति प्रयुक्तज्योतिःपदस्य इन्द्रपदस्य चेति चेत्—तत्र वह्नौ इन्द्रे च द्युतिधात्विदिधात्वर्थोपपादनं किमर्थम्। पूर्वपक्षिणा रूढ्यैव वह्नीन्द्रपरत्वमाश्रित्य स्वपक्षे उपक्षिप्यमाणे योगार्थविचारस्य सिद्धान्त्युपपाद्यस्य किं फलम्। न हि रूढिभंगः इह सिद्धान्तीष्टः। न हि साक्षात् परमात्मनि धात्वर्थोपपादनमत्र, 'स एषोऽग्निर्वैश्वानरः', 'इन्द्रो मायाभिः पुरुरूप ईयते' इत्यादाविव क्रियते। किञ्च ज्योतिःपदस्य, 'ज्योतिश्शब्दश्च रूढ्या प्रथयति पुरुषं दिव्यतेजोतिशिष्टम्' इति दिव्यमङ्गलविग्रहविशिष्टरूपेऽर्थे कथ्यमाने वह्निवैशिष्ट्यवर्णनं कथम्। न च, 'यदिदमन्त पुरुषे ज्योतिः' इत्यत्र ज्योतिःपदस्य कौक्षेयज्योतिर्वैशिष्ट्यं वक्तव्यमत्र कथ्यत इति वाच्यम्; पूर्वाधिप्रसक्तप्रथमज्योतिःपदनिर्वाहानन्तरमेव तत्र तस्य वक्तव्यत्वात्। वस्तुत ईदृशार्थः न पूर्वपक्षनिरासकयुक्तिः, स्वपक्षप्राप्तदोषपरिहारमात्रमिति प्रागेवोपपादितम्। तथा इन्द्रशब्दः कुत्र वर्तते, यस्य इदिधात्वर्थप्रदर्शनपूर्वकमिन्द्रवैशिष्ट्यरूपार्थवर्णनं क्रियते, न तावत्, 'इन्द्रस्य प्रियं धामोपजगाम' इत्यत्र, तत्रत्येन्द्रपदस्य शचीपतिमात्रपरत्वात्। उपपादितमिदमपि प्रागेव। उपरि विद्योपदेशघट्टे तु प्राणः प्रज्ञात्मा माम्, इत्येवं पदान्येव सन्ति; न तु इन्द्रपदम्। चिन्तामण्यर्थश्च समन्तरमेव विचार्यते।

**चि. टी.** अस्मिन् श्लोके **चिन्तामणौ** पाठभेदा अनेके। सर्वत्र स्वरसतोऽर्थग्रहणासंभवश्च। संग्रहेणात्रेदमुच्यते—**सिद्धान्ताविरुद्धम्, सिद्धान्तविरुद्धमि**ति पाठभेदः। उपरि **विरोधाविरोधप्रक्रियेति** कश्चित् पाठः। **विरोधाविरोधप्रक्रियानिवृत्त्येति** पाठान्तरम्। **अविरुद्धमिति** पाठे विरोधाविरोधोभयोपपादनम्। **विरुद्धमिति** विरोधमात्रमुपपाद्य ततः कर्तव्यमविरोधमप्युपक्षिपतीति वक्तव्यम्। **निवृत्त्येति** तालकोशदृष्टपदस्वीकारेणोत्तरवाक्येनैकवाक्यतयार्थवर्णनं युक्तमिति भाति। अर्थस्त्वेवम्-ईक्षत्यधिकरणादिषु पूर्वपक्षिणा सिद्धान्तिना च स्वस्वसाध्यस्थापकं लिङ्गमुपन्यस्य पक्षान्तरविरोध उद्भावितः। तत्राविरोधविचारश्च यथायथमासीत्। तादृशविरोधाविरोधप्रक्रियायाः आकाशाधिकरणादौ निवृत्तिः; पूर्वपक्ष्युपक्षेपणीयस्य तदिष्टसाध्यसाधकस्य लिङ्गस्य श्रुतावभावात्। अतस्तन्निवृत्त्या प्रबल-आकाशादिविशेषशब्दमुखेन पूर्वपक्ष. प्रवृत्तः। अथ **पदयोजनाग्रन्थे** मुद्रिते अधस्तात् दर्शितः **पूर्वपक्षे, स्वसाध्योपस्थापकसिद्धान्तानुरूपयुक्तिदार्ढ्यात्** इति पाठभेदो ग्राह्य। एवं विशेषशब्दमादायाधि

श्रुत्यापीति [च] दर्शयति—शब्द इति। अनन्यनिष्ठः=विशेषशब्द इत्यर्थः। [1]एवं चतुर्भिर्हेतुभिः परमात्मा न ज्योतिराद्युक्तिवेद्य इति पूर्वपक्षिणो विशेषाभिप्रायसंग्रहः। एवं तर्हि ज्योतिरादिषु साक्षात्कारणत्वकथनाभावे कथं ज्योतिरादिकारणत्वशङ्कावकाश इत्याशङ्क्य साक्षात्कारणत्वकथनाभावेऽपि कारणत्वाऽऽक्षेपकयत्किञ्चिदाभासनिरतिशयदीप्त्यादिलिङ्गेन ज्योतिरादिकारणत्वं शङ्कितुमपि कथंचिच्छक्यमित्याह–विश्वेति। एवमाक्षिपन्तमनन्तराधिकरणाभ्यां निराकरोति—रुन्ध इति। तदुचितेति। भगवत इदिद्युत्यनुरूप(ईक्षत्यनुरूपेण भगवतः)चेतनाचेतनवैशिष्ट्यप्रदर्शनेन निरुन्ध इति शब्दार्थः॥ ७१॥

कौक्षेयज्योतिषैक्यं कथितमिह परज्योतिषस्तस्य विश्वो-
पादानत्वं च विद्यान्तरविदितमतः कारणं वह्निरस्तु।
मैवं पुंसूक्तवाक्योदितपरपुरुषप्रत्यभिज्ञप्त्यवाधात्
गायत्र्युक्तिस्तु साम्यात्; अपि च निगदितास्तस्य भूतादिपादाः॥ ७२॥

---

करणद्वये पूर्वपक्षे सति, सिद्धान्तनिर्णयः कृत इति। तदपेक्षया वैषम्यं ज्योतिराद्यधिकरणयोरिति अत्र तावदित्यादिनोच्यते—श्रुतस्य लिङ्गस्य प्रसिद्धरूढ्यर्थविरोधित्वमपि नास्ति, स्वपक्षानुकूलं लिंगमपि ईक्षत्यधिकरणादाविवास्तीति च पूर्वपक्षी मन्यत इति। अथ एवं चतुर्भिर्हेतुभिरिति पाठ एव सर्वत्र; न तु त्रिभिरिति। हेतुत्रयमेवोपन्यस्तं पूर्वार्धे। यदि विश्वेतीति उत्तरार्धप्रतीकधारणानन्तरमिदम्, एवं चतुर्भिरिति वाक्यं स्यात्, तदा तृतीयपादोक्तं चतुर्थहेतुत्वेनाभिमतमित्युच्येत। इदिद्युत्यनुरूप चेतनाचेतनवैशिष्ट्यप्रदर्शनेनेति क्वचित् पाठः। तदुचितत्वमीक्षत्यनुरूपेण भगवतश्चेतनाचेतन वैशिष्ट्यप्रदर्शनेनेति तालपाठः। तालपाठे तदुचितत्वमिति पदं नान्वेति। अनुरूपेणेति तृतीयान्तप्रयोगात् श्लोके उचितेति पदं न वर्गान्वयि, किन्तु वैशिष्ट्ये युक्त्यां वेति ज्ञायते। चेतनाचेतनयोरिदिद्युत्यनुरूपत्ववर्णनमस्थाने इति प्रागेवोक्तमिति ईक्षत्यनुरूपेणेति पाठ एव स्यात्। तेन ईक्षत्यधिकरणादौ यत् बहुभवनसंकल्परूपमीक्षणमुक्तम्, तस्य चिदचिद्वर्गवैशिष्ट्याभावे वक्तुमशक्यतया तदुपपादकं भवति 'भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः' इति, सर्वा भूतानीति चोक्तं सर्वचिदचिद्वैशिष्ट्यमित्युक्तं भवति। अयमप्याशयः स्यात्—ज्योतिःपदस्य दिव्यमङ्गलविग्रहवैशिष्ट्यरूपार्थवत्, 'मम तेजोंऽशसंभवम्' (गीता 10, 41.) इत्यत्र भाष्योक्तरीत्या ज्योतिः दीप्तिः तेजः नियमनशक्तिरिति एतदधिकरणे ज्योतिःपदम् उत्तराधिकरणे प्रज्ञात्मपदञ्च बहुभवनसंकल्पात्मकज्ञानरूपज्योतिःपरं सत् तद्विशिष्टपरमात्मपरं भवत्विति। वस्तुतः, 'दिवि दीप्यते ज्योतिः' इत्युक्त्या दिव्यमङ्गलविग्रहग्रहणमेव युक्तम्। शुद्धपाठचिन्तामणिकोशदर्शनेनैव तदभिमतार्थनिष्कर्षः कार्यः। ७४श्लोकचिन्तामणौ च इदि परमैश्वर्य इत्यर्थो वर्णितोऽस्ति। तत्स्वीकारे इन्द्र इहोपेन्द्रः स्यात्। तदा त्वाष्ट्रवधाद्यनन्वय इत्यलम्॥ ७१॥

एवं पूर्वोत्तरपेटिकयोः प्रवृत्तिवैलक्षण्यं प्रदर्श्य ज्योतिरधिकरणार्थं सगृह्णाति कौक्षेयेति। ज्योतिश्शब्दस्य रूढ्यर्थग्रहणमेव युक्तमिति उक्तम्। तत् ज्योतिः किमिति चेत्—अग्निः। परज्योतिषः=

---

1 एवं चतुर्भिरिति वाक्यं विश्वेतीति प्रतीकधारणानन्तरं स्यात्। तदा चतुष्ट्वं स्यात्।

अत्राऽऽकाशादिषु त्रिष्वधिकरणेषु, 'आकाशाद्वायुः' इत्यादिश्रुत्युक्तक्रमेण पूर्वपक्षोत्थानं समाधानं चेति संगतिः। प्रसिद्धज्योतिःपरमात्मनोस्तत्रतत्र ज्योतिश्शब्दप्रयोगसाधारण्यं संशयकारणम्। तदर्थविचारस्तु—'अथ यदतः परो दिवः' इत्यादिवाक्ये ज्योतिश्शब्दः प्रसिद्धज्योतिर्वाचकः, उत परमात्मवाचकः। तदर्थं विचार्यते—स्ववाक्ये परमात्मासाधारणलिङ्गाभावेऽप्युपक्रमस्थं परमात्मासाधारणं लिङ्गं ज्योतिश्शब्दस्य परमात्मवाचकत्वं न प्रतिपादयति, उत प्रतिपादयतीति। तदर्थमपि विचार्यते—उपक्रमेऽपि परमात्मासाधारणं लिङ्गं नास्ति, उत अस्तीति। ततश्च विचार्यते—'गायत्री वा इदं सर्वम्' इत्युपक्रमस्थगायत्रीशब्दः परमात्मपरत्वं बाधते न वेति। पुनश्च विचार्यते—एतद्वाक्यस्थो भूतादिपादव्यपदेशो गायत्रीमात्रपरत्वं न व्यावर्तयति, उत व्यावर्तयतीति। फलफलिभावः स्वयमेवोन्नेयः। अत्र पूर्वपक्षी मन्यते—आकाशप्राणाधिकरणयोरिव ज्योतिरधिकरणविषयवाक्ये ज्योतिश्शब्दस्य परमपुरुषवाचकत्वस्थापकं सर्वकारणत्वादिकं प्रसिद्धज्योतिर्विरुद्धलिङ्गं नोपलभ्यते। उपलभ्यते चानुकूललिङ्गं कौक्षेयज्योतिषैक्यम्। तदिदमाह—कौक्षेयेति। तथा च तदेव जगत्कारणम्। न केवलमनया विद्यया प्रतीयते, अपितु वैश्वानरविद्यायामपि तदेव जगत्कारणत्वेन प्रतीतमित्याह—तस्येति। फलितमाह—अत इति। निराकरोति—मैवमिति। हेतुमाह—पुंसूक्तेति। उपक्रमे हि, 'पादोऽस्य सर्वा भूतानि' इति वाक्येन पुरुषसूक्तस्थम्, 'पादोऽस्य विश्वा भूतानि' इत्यादिवाक्यं प्रत्यभिज्ञाप्यते। पुरुषसूक्ते हि नारायणपरत्वं सुप्रसिद्धमेव। तच्च कारणत्वं नारायणे; 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति लक्ष्मीपतित्वलिङ्गसामर्थ्यात्, 'भगवानिति शब्दः' इति

---

'यदतः परो दिवो ज्योतिर्दीप्यते' इति द्युपरत्वेन निर्दिष्टस्य ज्योतिश्शब्दार्थस्य, 'इदं वाव तत् यदिदमन्तःपुरुषे ज्योतिः' इति वाक्येन शरीरान्तः कुक्षौ वर्तमानेन ज्योतिषा वैश्वानराख्येन सह ऐक्यमिह षष्ठे कथितम्। तस्याग्नेः विश्वोपादानत्वञ्च **विद्यान्तरविदितम्—प्रश्नोपनिषदि** सर्वप्रजाहेतुत्वेन रयिप्राणौ प्रस्तुत्य प्राणादित्ययोरभेदमुक्त्वा तस्योपादानस्य, "स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते" इति वैश्वानराग्नित्वमवगमितम्। अतोऽग्निरेव ज्योतिः कारणम्। अथवा **कारणं** निरतिशयदीप्त्याक्षिप्तकारणत्वाश्रयः अग्निरेव भवतु; न ब्रह्मेति किञ्चिदन्यदिति पूर्वपक्षः। निरस्यति **मैवमिति**। ज्योतिः अग्नितोऽन्यदेव; **चरणाभिधानात्** 'पादोऽस्य सर्वा भूतानि' इति सर्वभूताख्यपादवत्त्व-चतुष्पात्त्वकथनात् तस्याश्च ऋचः **पुरुषसूक्त**गतत्वात् पुंसूक्तवाक्योदितः परः पुरुषः स इति तत्र प्रत्यभिज्ञायते। तस्यैव, 'यदतः परो ज्योतिः' इति **यच्छब्देनानुवादात्, दिवि, दिवः** इति द्युसंबन्धाच्चात्र परमपुरुषोऽयमिति प्रत्यभिज्ञानम्। तस्याः प्रत्यभिज्ञायाः बाधकं न किमपि। एवञ्च **ज्योतिःपदं** तत्परमेव वक्तव्यमिति। उपक्रमानुरोधेन कौक्षेयैक्यमन्यथा नेयम्। ननूपक्रमोपक्रमे, 'गायत्री वा इदं सर्वम्' इति गायत्रीं प्रस्तुत्य, 'सैषा चतुष्पदा षड्विधा गायत्री' इत्युपसंहृत्य तत्साक्षितया तदृगुदाहरणात्, उपक्रमाविरोधाय ऋचोऽपि गायत्रीपरत्वमेव युक्तम्। अतस्तदेकवाक्यत्वमस्य नास्तीत्यत्राह **गायत्रीति**। उपक्रमे **गायत्री**पदमपि परमात्मपरमेव; न तु गायत्रीपरम्। कथमिति चेत्—गायत्री परमात्मा च चतुष्पात्त्वेन समानौ इति गायत्रीसम इत्यर्थे **गायत्री**शब्दप्रयोगः। गायत्र्याश्चतुष्पात्त्वं तु षडक्षरात्मकपादचतुष्टयस्य कासुचित् गायत्रीषु सत्त्वात्। एवं साम्याविवक्षायां **पुरुषसूक्त**मन्त्रोदाहरणायोगात्। गायत्रीवाक्य एव च गमकमस्तीत्याह **अपिचेति**। भूतपृथिवीशरीरहृदयानि चत्वारि गायत्र्याः पादत्वेन

पराशरवाक्याच्च ॥ तर्हि वाक्यशेषस्थकौक्षेयज्योतिरैक्यस्य का गतिरिति चेत्, तस्य न्यायविरोधेन बाध एव गतिः। उपक्रमोपसंहारयोरुपक्रमो बलीयानिति हि न्यायविदः। अत्राश्वप्रतिग्रहेष्टिन्याय एवोदाहरणम्। ननु सर्वोपक्रमे, 'गायत्री वा इदं सर्वम्' इति गायत्रीपरत्वदर्शनादुपक्रमवाक्यं गायत्रीमेव प्रतिपादयति; न पुनः परमपुरुषमित्याशङ्क्य तस्याप्यन्यथासिद्धिमाह—गायत्रीति। गायत्र्युक्तिश्चतुष्पात्त्वसाम्यादेव, न पुनर्गायत्रीस्वरूपत्वात्। इत्थमवगमे को हेतुरित्याशङ्क्य नियामकं हेतुमाह—अपि चेति। अस्मिन् खलु वाक्ये गायत्रीशब्दवाच्यस्य परस्य ब्रह्मणः सादृश्येन भूत-पृथिवीशरीरहृदयानि निर्दिश्यन्ते। गायत्रीशब्दस्य परमात्मपरत्वे नियामकं परमात्मनो विश्वात्मकत्वं केवलमक्षरसंघातरूपायां न गायत्र्याम्। अत उपक्रमवाक्यानुसारेणैवोपसंहारस्य वर्णयितुं शक्यत्वात् ज्योतिश्शब्दवाच्यं परमेव ब्रह्मेति निर्णयः। प्रयुज्यते च, 'तं देवा ज्योतिषां ज्योतिः' इत्यादिषु परस्मिन्नेव ब्रह्मणि ज्योतिश्शब्दः स्थलान्तरेष्वपि ॥ ७२ ॥

उत्थानं ज्योतिरादावधिकरणयुगे कारणव्याप्तलिङ्गा(धर्मा)
दित्याभाष्यान्यलिङ्गं स्ववचसि विहितं (विहतं) नेति भाष्यं कथं स्यात्।

---

कीर्त्यन्ते उपक्रमे। एषाञ्च परमात्मपादत्वमेव युक्तम्; न गायत्रीपादत्वम्। इदमुपपादयितुमेव, 'पादोऽस्य सर्वा भूतानि' इति मन्त्रोक्तिरिति। ननु गायज्जनत्राणकर्तृत्वरूपयोगार्थस्य गायत्रीच्छन्दोन्तर्यामित्वरूपापर्यवसानवृत्तिसिद्धार्थस्य च त्यागेन किमिति गौणी स्वीकार्येति चेन्न; तथासति चतुष्पदा षड्विधेत्युपपादनस्यानुपयोगात्। अस्तु; कौक्षेयज्योतिरैक्यं कथमिति चेत्—तत् ७६श्लोके वक्ष्यते; उत्तराधिकरणरीत्या तस्योपपाद्यत्वात् ॥

**चि. टी. प्रत्यभिज्ञाप्यत** इति। इदमुपलक्षणं प्रकृतज्योतिर्वाक्ये यच्छब्दद्युशब्दाभ्यां तद्युक्तार्थपुरुषप्रत्यभिज्ञानस्य। तथाच श्लोके **पुंसूक्ते**त्यादेः, प्रकृतविद्योपास्यपुंसूक्तवाक्येनो**दितस्य**=उक्तस्य परपुरुषस्य ज्योतिर्वाक्ये प्रत्यभिज्ञप्तेरबाधादिति भाष्यानुसारेणार्थः। **चिन्तामण्य**नुसारिप्रथमप्रत्यभिज्ञाग्रहणे पुंसूक्तवाक्ये **उदितायाः** उत्पन्नायाः प्रत्यभिज्ञाया अबाधादिति **पद्योजनो**क्तोऽर्थो ग्राह्यः। **अश्वप्रतिग्रहेष्टी**ति। इदमेवोपक्रमाधिकरणोक्तम्। तत्र 'प्रजापतिर्वरुणायाश्वमनयत्, स स्वां देवतामार्च्छत्' इति दातुर्वरुणसंबन्धरूपमहोदररोगप्रतिपादनमुपक्रम्य तत्परिहाराय वारुणचतुष्कपालेष्टिविधायकवाक्ये, 'यावतोऽश्वान् प्रतिगृह्णीयात्' इत्यत्र उपक्रमाविरोधाय प्रतिगृह्णीयादित्यस्य दद्यादित्यर्थः सिद्धान्तितः ॥

अत्र गायत्र्याः षाड्विध्यम्, एकैकपादेऽपि अक्षरषट्कत्वेन; चतुष्पात्त्वञ्च तावदक्षरपादचतुष्ट्वेन। परमात्मनः चतुष्पात्त्वं भूतपृथिवीशरीरहृदयरूपांशचतुष्टयवत्त्वेनालोक्तेन। षाड्विध्यञ्च भूतरूपपादे वाक्कर्तृकगानकर्मत्व-त्राणकर्मत्वे, पृथिवीरूपपादे भूतप्रतिष्ठात्वतदनतिवर्त्यत्वे, शरीरहृदयरूपपादद्वये प्राणप्रतिष्ठात्वतदनतिवर्त्यत्वे इत्येवमिति **उपनिषद्भाष्यादौ** विशदम् ॥ ७२ ॥

अवतरणभाष्य-पूर्वपक्षभाष्ययोर्मिथो व्याहतिमाशंक्य परिहरति **उत्थान**मिति श्लोकेन। अर्थात् पूर्वपक्ष्याशयोऽपि विशदं दर्शितो भवति। पूर्वेष्वधिकरणेषु कारणत्वकण्ठोक्तिमद्वाक्यमादाय विचारः प्रवर्तितः। अन्तिमाधिकरणद्वये **ज्योतिरादौ**=ज्योतिश्शब्दः आदिः यत्र तस्मिन् ज्योतिरादौ

**इत्थं ; विश्वादिलिङ्गं सदिह न तु पराभीष्टलिङ्गं समस्ती-**
**त्युत्पश्यन् पूर्वपक्षी व्यवहरति तथा ; व्याहतिस्तत्र शङ्क्या ॥ ७३ ॥**

**इति ज्योतिरधिकरणम् ॥ १० ॥**

श्रीमद्भाष्यग्रन्थे मन्दप्रतिबोधनार्थं पूर्वोत्तरवाक्ययोः परस्परं व्याहतिमाशङ्क्य परिहरति—उत्थानमित्यादिना इत्थमित्यन्तेन। एतदधिकरणारम्भे ज्योतिरादावधिकरणयुगे कारणव्याप्तलिङ्गादुत्थानमिति भाष्यकारैरेवाऽऽभाष्य पुनरपि पूर्वपक्षोपन्याससमये, "प्रसिद्धवन्निर्देशोऽप्याकाशप्राणादिवत् स्ववाक्योपात्तपरमात्मव्याप्तलिङ्गविशेषादर्शनात्" इत्युक्तम् ; अतः कथमविरोध इति।

---

सूत्रसमुदाये कारणत्वोक्त्यभावेऽपि कारणत्वव्याप्यं लिङ्गं वाक्ये उक्तमस्तीति तदादाय पूर्वपक्षोत्थानमिति अवतरणग्रन्थे **आभाष्य**=स्पष्टमुक्त्वा, पूर्वपक्षोपन्यासावसरे **अन्यलिङ्गं** प्रसिद्धज्योतिरादिभिन्नपरमात्मसाधकलिङ्गं स्ववचनेऽत्र षष्टे विहितं नास्तीति उत्तरभाष्यं पूर्वभाष्यविरुद्धं कथमुपपद्यते। **विहितमित्यत्र विहतमिति** कतिपयतालकोशपाठः। तदा कारणव्याप्तधर्मादुत्थानमिति अन्यलिंगं (परमात्मलिङ्गं) आभाष्याथ नेति भाष्यं **स्ववचसि विहतं** स्ववाग्विरोधयुक्तं कथं **स्यात्**=युज्येतेत्यर्थः। संग्रहेण परिहरति **इत्थमिति**। **इत्थ**मिति वाक्यसमासः। तद्विवरणं **विश्वे**त्यादिना। द्वितीयपादे **कथित**मित्यप्रयुज्य **विहित**मिति प्रयुञ्जानस्याऽऽशय एव विव्रियते **विश्वे**ति। कारणत्वव्याप्तलिंगसद्भावात् तत्साध्यस्य तद्व्यापकस्य कारणत्वस्य परमात्मनि सिद्धिरिति सिद्धान्त्यभिमतम्। अत्र 'यदतः परः' इति वचसि यच्छब्दघटिते न किञ्चिद्विधीयते, किंतु ज्ञातमनूद्यते। यदि विधिः स्यात्, अपूर्वस्यैव विधेयत्वात् परमात्मलिंगमिदं भवतीत्युच्येत। अनुवादस्तु ज्ञातस्यैवोचितः। प्रसिद्धा च ज्योतिर्दीप्तिरग्न्यादेरेव। अथापि कारणत्वव्याप्यं लिंगमस्तीति सिद्धान्तिवाक्यं स्वीक्रियते। दीप्तिरियं कारणत्वसाधिकेनोच्यते। **विश्वादिलिंग**मिति। **आदिः** आरम्भः विश्वारम्भः विश्वोत्पत्तिः विश्वोत्पादकत्वसाधकं लिंगमिह **सत्**=वर्तते। तत्र **विश्व**पदघटितेन विश्वतः पृष्ठेष्वित्यादिना गम्यमानत्वात् निरतिशयरूपमपि भवति। एवमपि **पराभीष्टलिंगं परस्य**=सिद्धान्तिनोऽभीष्टं **परस्मिन्** प्रसिद्धज्योतिर्भिन्नेऽभीष्टं यादृशं कारणत्वं तत्साधकं लिंगं सर्वचेतनाचेतननिरूपितसर्वविधकारणत्वसाधकं न समस्ति। **समस्तीत्यस्य** संभवतीत्यर्थेऽपि प्रयोगोऽस्ति। तदा च तृतीयपाद एकमेव वाक्यम्—**इह** विश्वादिलिंगं **सत्** वर्तमानं न पराभीष्टलिंगं भवितुमर्हतीति। प्रसिद्धज्योतिष्येव दीप्तेः कथनात् तया यावद्रूपं कारणत्वं साधयितुं शक्यम्, तावदतिरिक्तकारणत्वे मानाभावात् सर्वकारणवाक्यमेतावद्विषयकमेव। इदश्चाभिगतम्। कथमिति चेत्—उच्यते। विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्विति ग्रहतारकादिसर्वज्योतिर्भ्योऽपि **दिवः** द्युसंबन्धि परं ज्योतिरिदमग्निरेव। सूर्यादेर्ज्योतिषः तत्रतत्र परं स्थितिः। अग्निस्तु तेषु सर्वेषु ज्योतिष्षु अनुयायी। तस्मात् तस्य परत्वं निरतिशयत्वम्, सर्वोपकारकत्वात् कारणत्वञ्च। एवमितरज्योतिर्व्यावर्तनेनाग्नित्वं प्रसिद्धं प्रदर्श्य तत्र कौक्षेयज्योतिरैक्यं विधीयते। तथाच **भाष्ये** पूर्वपक्षिवाक्ये **परमात्मव्याप्तलिंगविशेषे**त्यस्य प्रसिद्धज्योतिर्व्यावृत्तस्य परमात्मत्वस्य साक्षाद्वा कारणत्वविशेषमुखेन वा साधकं नास्ति, अग्नित्वतद्गतकारणत्वसाधकदीप्तिविशेषरूपलिंगमेवा-

अत्र निराकरणहेतुमाह—विश्वेति । अयं किल भाष्यकाराभिप्रायः—एवं किल मन्यते पूर्वपक्षी, "विश्वतःपृष्ठेषु सर्वतःपृष्ठेष्वनुत्तमेषूत्तमेषु' इत्यादिकं कारणत्वाऽऽक्षेपकमवभासात्मकं लिङ्गमस्ति। अथाप्युभयलिङ्गत्वादिविशिष्टपरमपुरुषप्रतिष्ठापकं जगत्कारणत्वादिकं स्ववाक्ये लिङ्गं नास्तीति। अतो न विरोध इत्याह—व्याहृतिरिति। अयमर्थः—सिद्धान्तोपन्यासभाष्ये, "यद्यपि अथ यद्तः परो दिवो ज्योतिः इत्येतस्मिन् वाक्ये परमपुरुषासाधारणं लिङ्गं नोपलभ्यते" इत्यङ्गीकारद्योतकयद्यपिशब्दप्रयोगात् स्ववाक्येऽपि परमपुरुषासाधारणं लिङ्गमस्तीति भाष्यकारहृदयम्। अनुत्तमेषूत्तमेषु लोकेषु द्योतत इति विशेषणद्वयोपादानमप्राकृतदिव्यलोकवासिनो ज्योतिष एव संघटते ; न पुनरण्डान्तर्वर्तिनो बहिर्वर्तिनो वा ज्योतिर्मात्रस्येति भावः ॥ ७३ ॥

इति ज्योतिरधिकरणम् ॥ १० ॥

## अथ इन्द्रप्राणाधिकरणम् ॥ ११ ॥

सूत्रम्। प्राणस्तथानुगमात् ॥ न वक्तुरात्मोपदेशादिति चेत्; अध्यात्मसंबन्धभूमा ह्यस्मिन् ॥ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ जीवमुख्यप्राणलिङ्गान्नेति चेन्न, उपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ १-१-२९—३२॥

**विद्या प्रातर्दनी सा वदति हिततमोपास्तिकर्मेन्द्रमेव**
**स्यात्प्राणेन्द्रचिह्नान्वितमपि तदसौ विश्वकर्तेति चेन्न ।**

---

स्तीत्यर्थः । तावतैव कारणत्वव्याप्तधर्मप्रतिपादकत्वमित्याशयः । इत्थमुत्पश्यन् पूर्वपक्षी सिद्धान्त्यभिमतलिङ्गाभावमाहेति न विरोधः । सिद्धान्त्याशयस्तु—'यदतः परो दिव्यो ज्योतिः' इति वाक्यमनुवाद एव । परंतु, 'त्रिपादस्यामृतं दिवि' इति द्युसंबन्धितया प्रागुक्तमनूद्यते । तत्र विवक्षिता दीप्तिश्च, 'चक्षोः सूर्यो अजायत ; मुखादिन्द्रश्चाग्निश्च' इति पुरुषसूक्तदर्शिताग्न्यादिहेतुभूता, 'न तत्र सूर्यो भाति.... कुतोऽयमग्निः....तस्य भासा सर्वमिदं विभाति' इति प्रसिद्धा । अस्या एव कारणत्वव्याप्यत्वम्, न तु अतिशयितदीप्तिमात्रस्य । असंख्यातसूर्याधिकतेजोविशिष्टत्वेऽपि न वैकुण्ठाख्यं तेजो जगद्धेतुः ; किमुत सूर्यादितेजः । तादृशदीप्तिराहित्येऽपि प्रकृतिपरमाण्वादिकं तैस्तैः कारणत्वेनेष्टमिति न दीप्तेः कारणत्वव्याप्तिः । पूर्वोक्तसूर्यादिहेतुभूतनिरतिशयदीप्तेः जगदेककारणत्वस्य च परमात्मैकनिष्ठत्वात् सिद्धान्ते दीप्तेर्व्याप्यत्वम् । ईदृशदीप्तिविशेषं प्रदर्श्य तस्य कौक्षेयज्योतिरैक्यकथनात् तन्निर्वाहकत्वमेव गम्यते । साक्षादैक्यं बाधितम् । कौक्षेये परज्योतिर्दृष्टिविधिर्न भवति ; यच्छब्दोक्तस्य तस्योद्देश्यत्वात् ; प्राथम्याच्च तत् उद्देश्यमेव । तत्र कौक्षेयदृष्टिविधिस्तु न शक्यः ; उत्कृष्टे निकृष्टदृष्टेरयोगात् । अतः निर्वाहकत्वलाभाय कौक्षेयान्तरात्मेत्यर्थो भाष्यकारादृतः ; न तु कथमपि दृष्टिविधिरिति । तदर्थमेव, 'अहं वैश्वानरो भूत्वा' इति गीतोपादानम् । तत्र हि, 'यदादित्यगतं तेजः' इत्यारभ्य सर्वनिर्वाहकं भगवत्तेजः प्रख्याप्यते, वैश्वानरतेजसस्तत्तेजोधीनत्वञ्च । इदं सर्वमभिप्रेत्य सिद्धान्ती, 'कारणत्वव्याप्तेनोत्कृष्टेन गुणेन जुष्टम्' इत्याह स्म । हिततमोपासनकर्मत्ववत् ईदृशदीप्तियोगः परमात्मैकासाधारणः । अन्यादृशदीप्तियोगस्तु परमात्मत्वतत्कारणत्वयोरसाधकत्वादाभास इति तत्त्वम् । अत एव चिन्तामणौ ७१ श्लोके यत्किञ्चिदाभासनिरतिशयदीप्तीत्युक्तम् ॥ ७३ ॥

अन्तरधिकरण एव, 'हिरण्यश्मश्रुः...सर्व एव सुवर्णः' इति दिव्यरूपस्योक्तत्वात्, 'ज्योतिःपदं

ब्रह्म त्रेधा ह्युपास्यं बहुविधचिदचित्कञ्चुकं स्वात्मना च
प्राणेन्द्रप्रक्रमोऽपि प्रबलतरमहावाक्यबाधयवश्यः ॥ ७४ ॥

अत्र संगतिर्भाष्यकारैरेवोक्ता 'निरतिशय' इत्यादिना। आदित्यादिपरज्योतिश्शब्दे निरस्ते परज्योतिषामधिपतित्वेन परिकल्पितः इन्द्रोऽपि जगत्कारणत्वेनाऽऽशङ्क्य निरस्यत इति। अथवा उपक्रमप्राबल्यादुपसंहारोक्तार्थनिरासः पूर्वाधिकरण उक्तः। तर्हि तेनैव न्यायेन प्रतर्दनविद्यायामपि उपक्रमप्राबल्यादुपसंहारवाक्यप्रतिपन्नपरमपुरुषपरिकल्पनं बाध्यतामिति पूर्वपक्षोत्थानेन संगतिः।

तदर्थविचारस्तु प्रतर्दनविद्यायां किं प्रसिद्ध एवेन्द्रः प्रतिपाद्यते, उत इन्द्रशरीरकः परमात्मा। एवं प्राणेऽपि वाच्यम्। तदर्थं विचार्यते—पूर्वाधिकरणोक्तोपक्रमाधिकरणन्यायेनात्राप्यर्थोपवर्णनं न्याय्यम्, अथवा नेति। उपक्रमाधिकरणन्यायबाधकम्, 'उपक्रममहावाक्यविरोधे महावाक्यमेवानुसरणीयम्' इति न्यायान्तरं न विद्यते, अथवा विद्यत इति। पुनर्विचार्यते—अस्मिन् वाक्ये सर्वत्र परब्रह्मत्वनिश्चायकं हेतुजातं नानुगम्यते, उत अनुगम्यत इति। अत्र पूर्वपक्षी मन्यते—पूर्वमुपक्रमानुसारेणैवोपसंहारवर्णनं न्याय्यमिति भवद्भिरुक्तम्। प्रतर्दनविद्यायामुपक्रमे पूर्वमिन्द्रशब्दः प्रयुज्यते। स तु विशेषश्रुतिः। तेनोपक्रमस्थश्रुत्यानुगुण्यमस्त्येव। किंच, 'त्वमेव मे वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे' इति हिततमोपास्तिकर्मत्वं तथै(त्रै?)वोच्यते। तच्च परब्रह्मत्वलिङ्गम्। तेनोपक्रमस्थश्रुतिलिङ्गाभ्यामिन्द्र एव परमपुरुषः। किंच त्वदभिमतनारायणविरुद्धं प्रसिद्धेन्द्रासाधारणं त्वाष्ट्रवधादिकं चोपलभ्यते; तच्च परमपुरुषविरुद्धमेव। फलितमाह—तदिति। तस्मात् असौ—

ताहशदिव्यविग्रहपरमपि भवितुमर्हतीति पूर्वपक्षिणा सुग्रहम्। पाणिपादादिसंघातरूपदेहवाचिपदस्य देहिपर्यन्ते प्रयोगोऽपि लोकदृष्टः। तथापि कौक्षेयैक्यवचनादि तु पुरस्कृत्य पूर्वपक्षी प्रवृत्तः। **प्रतर्दनविद्यायां** तु अशक्यनिर्वाहं पदमेवेन्द्रवाचकं लक्ष्यते। त्वाष्ट्रवधकर्तृत्वादिकञ्च परमात्मानन्वयि। अतो यन्मां विजानीयादिति हिततमोपास्तिकर्मत्वमपि तत्रैवेति एतद्विद्याग्रहणेनोत्थितिः। **विद्येति**। सा=युद्धेन च पौरुषेण च हेतुना इन्द्रप्रियधामभूतस्वर्गगतप्रतर्दनवृत्तरूपोपाख्यानोपक्रमा **प्रातर्दनी** प्रतर्दनायोपदिष्टा विद्या उपासनप्रतिपादकवाक्यावलिः **इन्द्रं** शचीपतिमेव हिततमोपास्तिकर्मत्वेन वदति। मोक्षरूपपरमपुरुषार्थहेतुरुपासनमेव हिततमम्। अन्येषां हितत्वं हिततरत्वं वा। 'कारणं तु ध्येयः' इति कारणस्यैव हिततमोपासनकर्मत्वं श्रुतम्। अत इन्द्रस्योपासनकर्मत्वादेव कारणत्वमपि सिध्यति। ननु उपासनकर्मवाचकपदस्य प्राणादिपदस्य परमात्मपरतया वर्णनं किं न स्यात्। प्रागेव हि **प्राणशब्दः** परमात्मपरः साधित इत्यत्राह **ख्याते**ति। ख्याता तयोः प्राणेन्द्रयोर्यत् यत् चिह्नम्=असाधारणधर्मः तद्विशिष्टत्वेनापि इन्द्रं वदति। अलोक्तं प्राणचिह्नम् आयुः, सर्वेन्द्रियनिर्वाहकत्वमित्यादि। इन्द्रचिह्नं त्वाष्ट्रवधादि। इन्द्रस्य प्राणचिह्नान्वितत्वं प्राणद्वारा। यद्वा प्राणश्चेन्द्रचिह्नश्चेति विग्रहः। ख्याताभ्यां ताभ्यामन्वितम्। प्राणस्वचिह्नेत्येव सुवचम्; अथापि स्पष्टत्वायेन्द्रेत्युक्तिः। तत् प्राणेन्द्रौ शब्दार्थत्वेनावश्यस्वीकार्यौ। न चाप्राणस्य परमात्मनः प्राणविशिष्टत्वप्रसक्तिः। तत्र, 'प्राणोऽस्मि' इति स्वस्यैव प्राणत्वकथनात्, 'प्राणो ह पिता प्राणो ह माता' इति जीवेषु **प्राणशब्द**प्रयोगाच्च प्राणविशिष्टतया तस्य **प्राणशब्द**वाच्यतेति इन्द्रो जीव एव प्रधानप्रतिपाद्यः। स एवेदृशोपासनकर्मत्वाक्षिप्तजगत्कारणत्वशाली चेति नान्यत् **ब्रह्मे**ति पूर्वपक्षः। एतन्निषेधे हेतुमाह **ब्रह्मे**ति। पूर्वाधिकरणेषु

शक्रादिपदवाच्य इन्द्र एव जगत्कर्ता। परिहरति—नेति। अयमाशयः—उपक्रमस्थहिततमोपास्ति-कर्मत्वं प्रसिद्धे(द्धस्ये)न्द्रस्य न घटते, एवं (न घटत एव।?) हिततमोपास्तिः=अपवर्गार्थोपासनम्। प्रसिद्धेन्द्रस्तु देवगणान्तर्गतः स्वर्गादिपरिमितदेशवासी कश्चित् कीटकल्पः। स कथं हिततमोपास्ति-कर्म भवेत्। तेनार्थविरोधात् शब्दार्थसंकोचसिद्ध्यर्थं चेन्द्रशब्देन परमपुरुष एवाभिधीयते। 'इदि परमैश्वर्ये' इति हि व्युत्पादयन्ति। निपुणनिरूपणे पितामहोऽप्युदुम्बरकीटः; किमुत मेघनादादिजितः प्रसिद्धेन्द्र इति त्वमेव भावय। नहि मामुपास्स्वेति स्वोपासनं विदधातीन्द्रः; त्वाष्ट्रवधादिकं चास्मिन्नेव प्रकरणे प्रख्याप्यते परमपुरुषविरुद्धं प्रसिद्धेन्द्रानुकूलं लिङ्गम्; तत् कथमिति चेत्—अत्र समाधिमाह—ब्रह्मेत्यादिना स्वात्मना चेत्यन्तेन। अयमभिप्रायः—त्रेधा ह्युपास्यं ब्रह्म, अचिद्विशिष्टोपासनं चिद्विशिष्टो-पासनं केवलं परमात्मोपासनमिति। तेन प्रसिद्धेन्द्रादिकमपि ब्रह्मविशेषणत्वेनोपास्यतयाऽभिधीयते। तेन विशेषणभूतप्रसिद्धेन्द्रादिप्रतिपत्त्यर्थं त्वाष्ट्रवधादिकमपि लिङ्गं सार्थकमेव; न पुनर्विरुद्धम्। अयमत्र निर्णयः—हिततमोपास्तिकर्मत्वादिभिः परमपुरुषस्यैव प्रतर्दनविद्यायामिन्द्रशब्दप्रधान वाच्यत्वं सिद्धमेव। त्वाष्ट्रवधादिना लिङ्गेन तद्विशेषणत्वेन प्रसिद्धेन्द्रोऽपि परिगृह्यते। एवं प्राकरणिकेन लिङ्गविशेषेण प्रसिद्धप्राणोऽपि स्वीक्रियताम्; न तु स्वरूपेण। स्वरूपेण परमात्मोपासनं सुप्रसिद्धमेव। तेनोपासात्रैविध्यसिद्ध्यर्थं प्रसिद्धेन्द्राद्यसाधारणलिङ्गं प्रतर्दनविद्यायामुक्तमिति न विरोधः। अत इन्द्रादिविशिष्टः परमात्मैव प्रतर्दनविद्यायामुपास्य इतीन्द्रादिरूढिशक्त्या विशेषणापरित्यागेन

---

प्रसिद्धाऽऽकाशप्राणज्योतिषां त्यागेन तत्तत्पदस्यार्थान्तरवर्णनवत् इह इन्द्रस्य प्राणस्य च त्यागेन परमात्म-मात्रग्रहणेन वाक्यार्थवर्णनासंभवात् अस्ति महद्वैलक्षण्यमिति सत्यम्। अथापि इन्द्रातिरिक्तपरमात्मा-पलापो न शक्यः। कथमुभयान्वय एकत्रेति चेत्—न तत्र दोषः। ब्रह्म हि उपास्यमानं न केवलं स्वरूपेणैवोपास्यते, किंतु यथायथं तत्तत्प्रकरणगृहीतचेतनविशिष्टत्वेनाचेतनविशिष्टत्वेन च। यथा हि इन्द्रोपासनोक्तावपि प्राणवायुप्रस्तावात् तद्विशिष्ट एवेन्द्र उपास्यः पूर्वपक्षे, तथा प्राणेन्द्रोभयविशिष्टं ब्रह्मो-पास्यं भविष्यति। **चिदचित्कञ्चुकम्**—चेतनाचेतनरूपविशेषणविशिष्टं तत्तदान्तरम्; तत्तदन्तर्यामीति यावत्। **स्वात्मना** च=स्वस्वरूपेण च-आयुरिन्द्रियनिर्वाहकत्वविशिष्टप्राणवाय्वन्तर्यामित्वेन त्वाष्ट्रवधादि-कर्त्रिन्द्रान्तर्यामित्वेन च श्रीविशिष्टाप्राकृतमङ्गलविग्रहविशिष्टसत्यज्ञानानन्तामलाऽऽनन्दस्वात्मस्वरूपेण च। **त्रेधा ब्रह्म** बहुषु स्थलेषूपास्यते, तथेहाप्युपास्यम्। अतः प्राणेन्द्रयोरपि प्रस्तावः। ननु पूर्वाधिकरणे गायत्रीवाक्यं परमात्मपरतया प्रदर्श्य पुरुषसूक्तमन्त्रोपादानमपि निर्दिश्य उपक्रमोपक्रमस्य उपक्रमस्य चानुरोधेन परमात्मतात्पर्यकत्वं यथा निर्णीतम्, तथाऽत्रापि उपाख्यानरूपोपक्रमोपक्रमस्य, 'मामायुरमृत-मित्युपास्स्व' इत्युपक्रमस्य चानुरोधेन इन्द्रैकतात्पर्यं कथं न निर्णीयत इत्यत्राह **प्राणेन्द्रेति**। उपक्रमाधि-करणन्यायस्याप्यपवादभूतन्यायप्रदर्शनमत्र। महावाक्यानुरोधेनोपक्रमोऽप्यन्यथयितव्यः। महावाक्यं नाम एककण्ठानि बहूनि वाक्यानि अत्र **अध्यात्मसंबन्धभूमा ह्यस्मिन्** इति सूत्राभिमतानि। इन्द्रमात्र-ग्रहणे **तद्वैघट्यं**=तेषामघटमानता, अनन्वयः स्यात्। अतः प्रक्रमे प्राणेन्द्रमात्रप्रतीतावपि तदनुरोधाय प्राणविशिष्टेति इन्द्रविशिष्टेति चार्थग्रहणम्। किञ्चात्रेन्द्रः प्राणजीवयोः सहवसतिं सहनिष्क्रमणं प्राण क्रियोप कारेण इन्द्रियाणां कार्यकरत्वं च प्रदर्श्य, सर्वलोकसंहारिणो मे न किञ्चित् पापमित्यनुक्त्वा त्वष्ट्रवधादि-

विशेष्यपर्यन्ताभिधानमिति सिद्धम्। कथं तर्हि उपक्रमविरोधे वाक्यार्थनिर्णय इत्याशङ्क्याह—प्राणेन्द्रेति। उभयमिह प्रकाश्यते–उपक्रमोपसंहारयोरुपक्रमो बलीयान्, उपक्रममहावाक्ययोर्विरोधे महावाक्यमेव बलीय इति। इदं पुनर्विरोधे सत्येव। अत्र पुनर्विरोध एव नास्तीति भाष्यकारहृदयम्। महावाक्यान्तर्गतोपक्रमस्यापीन्द्रविशिष्टपरमात्मविषयत्वेनाध्यात्मविद्भिरनुसन्धानादिति ॥ ७४ ॥

**यल्लिङ्गं कारणैकस्थितमिति कथितं ज्योतिषीन्द्रे च तत्तु**
**प्रख्यातान्यैकनिष्ठं प्रथममितमतस्तन्मुखोत्थित्ययोगः ।**
**अप्राप्ते तद्विमर्शे प्रकृतशिथिलता नेति चेत्, सत्यमेतत्**
**विष्णूत्पत्त्युक्ति(त्त्यादि)रीति(नीति)भ्रंमत (क्रमत) इह पुरोवादमुत्प्रेक्ष्य शङ्का ॥ ७५**

अत्राधिकरणारम्भानुपपत्तिमाशङ्क्य समाधत्ते—यदिति। अयमर्थः—ज्योतिषीन्द्रे च यल्लिङ्गं कारणैकस्थितमिति कथितं भवता–ज्योतिषि तावत्, 'अथ यदतः' इत्याद्युक्तमुत्तमेषु लोकेषु निरतिशयदीप्तियुक्तत्वम्, यच्चेन्द्रे त्वमित्याद्यभिप्रेतम्, 'मामुपास्स्व' इति साक्षान्मुक्त्यर्थं मुमुक्षूपास्यत्वम्, तदुभयमपि प्रख्यातान्यैकनिष्ठं कारणत्वेन प्रख्यातनारायणैकनिष्ठं प्रथममितम्–आकाशाधिकरण एव प्रमितम्। नन्वाकाशाधिकरणे सर्वकारणत्वमेव परमपुरुषविषयतया प्रमितम्, न पुनरिदं

---

कतिपयहिंसनमात्रं प्रदर्श्य स्वस्य पापाश्लेषकथनात् जीवस्य सृष्टिसंहाराद्यसमर्थस्य स्वस्योपासनप्रावश्य प्रयुक्तोऽयमुत्तराघाश्लेष इत्येव महिमावधारणात्, अहमेव साधुकर्म कारयामीत्यादिरूपेणाप्रयुज्य, 'एष एव साधुकर्म कारयति' इत्यादिपरोक्षनिर्देशादिना, 'स मे आत्मेति विद्यात्' इति वैयधिकरण्येन निगमनेन च स्वस्य जगत्कारणत्वाभावः प्रतर्दनतुल्यस्तत्र प्रस्पष्टमवगमयतीति महावाक्यपरिशीलिनामिन्द्रे ब्रह्मत्वबुद्धिर्नैव भवितुमर्हति। वस्तुतः उपक्रमगतप्रातिपदिकार्थात्यागेन तद्विशिष्टपरत्वस्यैव कथनान्न विरोधलेशोऽपीति ॥ अस्मिन्नेकस्मिन्नेव श्लोके सर्वसूत्रार्थोऽप्यन्तर्गतः।

**चि. टी. अर्थविरोधादिति।** इन्द्रो मायाभिरित्यादौ अर्थविरोधात् योगस्वीकारेण परमात्मा उच्यते। अतः प्रसिद्धेन्द्रे परमैश्वर्याभावादिदं हिततमोपास्तिकर्मत्वं न तस्येति भावः। अत्र प्रकरणे **इन्द्रशब्दस्य** न योगार्थः। **उपक्रमस्यापीन्द्रेति।** मामुपास्स्वेत्यत्रेति भावः ॥ ७४ ॥

सिद्धान्त्यभिमतब्रह्मनिषेधपूर्वकमधिकरणोत्थानमत्राधिकरणद्वयेऽपि न संभवतीत्याशंक्य परिहरति **यदिति।** तत्तदधिकरणोक्तं लिङ्गं प्रकृतज्योतिरिन्द्रभिन्ने पूर्वमेव प्रतिपन्नं न वा। प्रमितं चेत्, तद्बाधायोगात् पूर्वपक्षानुत्थितिः। अप्रमितं चेत्—तत्रतत्र लिंगे कारणत्वव्याप्तेरग्रहणात् पूर्वाधिकरणसिद्धकारणभूतब्रह्मान्यवच्छेदासंभवात् अधिकरणानुत्थितिरिति शंकार्थः। श्लोकार्थस्तु—**कारणैकस्थितमिति**=कारणमात्रवृत्तीति। कारणत्वव्याप्तत्वेनेति यावत्। यत् निरतिशयदीप्तिरूपं हिततमोपासनकर्मत्वरूपञ्च लिंगं क्रमेण ज्योतिषि इन्द्रे च कथितम्, तत् प्रख्यातज्योतिरिन्द्रभिन्नकिञ्चिन्निष्ठतया पूर्वमेव प्रमितम्। अन्यथा कारणत्वव्याप्ततायास्तत्र कथमुक्तिः। यदि ज्योतिष्येव निरतिशयदीप्तिः कारणत्वेन सहान्यत्र प्रतीता, तर्हि तदेव वाक्यमादाय साक्षाज्ज्योतिषः कारणत्वात् ब्रह्म न कारणमिति शंक्यताम्; किं लिंगमात्रबोधिप्रकृतवाक्यग्रहणेन। एवमिन्द्र एव कारणत्वेन सह हिततमोपासनकर्मत्वं वाक्यान्तरविदितं

सर्वैकारणत्वव्याप्तं लिङ्गद्वयम्; तत् कथमुच्यते [प्रमितमिति? । उच्यते ?-] यथा सर्वजगत्कारणत्वं परमपुरुषविषयतया प्रथमप्रमितम्, तद्वत् तेन समव्याप्तं लिङ्गद्वयमपि तथैव प्रमितमेवेत्यर्थः। फलितमाह—अत इति । निरतिशयदीप्तियुक्तत्वलिङ्गस्य मुमुक्षूपास्यत्वस्य च परमपुरुषनिष्ठतया पूर्वमेव प्रमितत्वात् कारणत्वव्याप्तलिङ्गेन पूर्वपक्षोत्थानमिति न घटते । इत्थं लिङ्गद्वयस्य परमपुरुषस्थितत्वपरामर्शे दूषणमुक्तम्; तदभावेऽपि दूषणमाह—अप्राप्त इति । लिङ्गद्वयस्य सर्वैकारणस्थितत्वपरामर्शाभावे लिङ्गद्वयान्वितं यत्किंचित् ज्योतिरस्तु; यःकश्चित् इन्द्रोऽस्तु; न चैतावता पूर्वोक्तमेकनिष्ठं कारणत्वं = परमकारणत्वं भ्रश्यति; किमर्थमधिकरणारम्भः इत्याशङ्क्यार्धाङ्गीकारेण परिहरति— सत्यमिति । यद्यपि अधिकरणप्रयोजनं (अधिकप्रयोजनं ?) नास्ति, अथापि किंचित्प्रयोजनमस्ति ।

---

चेत्, तदेवाऽऽदाय पूर्वपक्षो युक्तः; न त्वेतदादाय । अतो व्याप्त्यवधारणाय कारणत्वस्य लिङ्गस्य च साहचर्यं वाक्यान्तरे ज्योतिरिन्द्रभिन्ने वस्तुनि गृहीतमित्येव वक्तव्यम् एवञ्च तन्मुखोत्थितिः तथाव्याप्तिग्रहमूलकं ज्योतिरादिविषये पूर्वपक्षोत्थानं न युज्यते । पूर्वगृहीताविरोधेनार्थान्तरस्यैवात्र वर्णनीयत्वात् । ननु कारणत्वस्य लिंगस्य च व्याप्यव्यापकभावविमर्शः प्राङ् नासीदिति चेत्, तर्हि तद्विमर्शे प्राक् अप्राप्ते अजाते सति, दीप्तिरुपासनकर्मत्वस्य चेह ज्योतिषि इन्द्रे च प्रतीतत्वेऽपि पूर्वप्रकृतस्य जगत्कारणब्रह्मरूपविलक्षणवस्तुसद्भावस्य शिथिलता भंगोल्लेखावसरो नास्त्येव । अत उभयतस्पाशा रज्जुरिति शंकामनूद्य प्रत्याह इति चेत् सत्यमेतदिति । सत्यमित्यर्धांगीकारे । दीप्तिरुपासनकर्मत्वञ्चेदं कारणत्वव्याप्तमिति भाष्यकारैरुक्तत्वात् पूर्वं प्रमितमेव तयोः कारणैकस्थितत्वम् । कारणत्वमात्रबोधके आकाशादिवाक्ये कथं लिंगप्रमितिरित्याशंक्य विषमव्याप्तत्वे अप्रमितता स्यात् । समव्याप्तत्वात्तु भवतीति चिन्तामणावुक्तम् । एवमपि विष्णूत्पत्तिनीतिभ्रम इह पूर्वपक्षिणः । लिङ्गयोः कारणत्वस्य च सामानाधिकरण्यग्राहकवाक्यं पुरोवादः; तद्विशेषपरकारणवाक्यञ्च । तत्र गृहीतस्य लिङ्गस्यात्र वाक्ये दर्शनेन कारणत्वाक्षेपः क्रियते । परंतु पुरोवादे कारणत्वाधिकरणतया प्रतीतं वस्तु विष्णुतुल्यम् । नारायणावतारभूतविष्णूत्पत्तिबोधकवाक्येषु अवतीर्णमूर्तौ यथा उत्पत्तिसंहारादिसर्वकार्यकारणत्वं वर्ण्यते; परमात्मना ऐक्यात् । अत एव ह्यन्तरधिकरणे सूर्यस्थे सर्वपरमात्मधर्मोक्तिः— एवमेव एतज्ज्योतिःपरिणामविशेषरूपे वस्तुनि तदुभयसाहित्योक्तिस्तत्रतत्र पुरोवादे। भूतचैतन्यवादे देहाकारपरिणतौ चैतन्यादिकमिव, "नास्ति वचनस्यातिभारः" इति न्यायेन ज्योतिषः परिणामविशेषा एव कारणवाक्यश्रुतप्राणाकाशविष्णुब्रह्मरुद्रादय इति संभाव्यते सर्वं वैलक्षण्यम् । मिथःकलहनिवृत्तिश्च । एवमिन्द्रस्यावतारभूत एव वस्तुनि तत्रतत्र पुरोवादवाक्ये साहित्योक्तिः। एवञ्च तस्यास्य चैकधर्मिविषयकत्वात् अग्न्यादिज्योतिरेव सर्वत्रोक्तम्, प्रधानभूत इन्द्र एव सर्वत्र विषय इति विष्णूत्पत्त्युक्तिरीतिमत्राधिकरणयोः यो भ्राम्यति; उपनिषदि विलक्षणब्रह्मायोगमपि मन्यते —स एवं शंकते; ततः परिहार इति । एवञ्चायोगव्यवच्छेदपादेऽत्राधिकरणद्वयस्य ब्रह्मनिषेधमुखेन पूर्वपक्षप्रवृत्तिमत्त्वं सिद्धम् । चिन्तामणिरीतौ तु वाक्यान्तरप्रमितपरवस्त्ववतारत्वं ज्योतिषीन्द्रे च मत्वा पूर्वपक्षः, तयोस्तदवतारत्वासंभवः सिद्धान्ते कथनीय इति भाति। तदा परमात्मनिषेधो न सिध्येत् । किंतु

यद्यपि लिङ्गद्वयं परमपुरुषैकनिष्ठम्, अथापि न एव परमपुरुषः इन्द्र(उपेन्द्र)त्व(उपेन्द्रत्वमिवेन्द्रत्व ?)मास्थाय वर्तते, अतः सोऽप्युपास्य एव। तस्य श्रुतिपुराणादिषूपपत्तिरुक्ता उपेन्द्रोपपत्ति-वादवदिति कश्चित् (तस्य श्रुतिः, पुराणादिरियोपेन्द्रोपपत्तिम्, ... काश्चन ) बालबुद्धि-र्मन्यते, तच्छङ्कानिराकरणार्थमधिकरणारम्भ इत्यर्थः। उपेन्द्रस्य परमपुरुषत्वं श्रुतिस्मृतीतिहास-पुराणेषु प्रसिद्धम्; तेष्वेवेन्द्रस्य पुरुषोत्तमकिङ्करत्वमपि तत्रैव प्रसिद्धमिति भावः ॥ ७५ ॥

ज्योतिःप्राणेन्द्रशब्दाः परतरविषयाः कारणत्वात्मधर्मात्
इत्येतत् साध्वमीषां बहुविधविमती रूपमात्रे तु वृत्तिः।
तत् कौक्षेयानलात्मा कथित इह तथाध्यानतस्तत्फलाप्त्यै
मुख्यप्राणादिलिङ्गं तदुपहितपरोपासनान्मोक्षणाय ॥ ७६ ॥

एवमुक्तयोरधिकरणयोर्विरोधाभासं शमयित्वा पूर्वपक्षिणा परिगृहीतेऽर्थे संमतासंमत-विभागं दर्शयन् विरोधिलिङ्गत्वेन कथितस्य कौक्षेयज्योतिरैक्यस्य मुख्यप्राणादिलिङ्गस्य चोपासनार्थ-त्वेन प्रयोजनमपि दर्शयति—ज्योतिरिति। ज्योतिरादिशब्दानां विशेषणविशिष्टपरमवस्तुवाचित्वं

---

ज्योतिरिन्द्रयोस्तद्वत्तारत्वनिषेध एव। पदयोजनायां तु वाक्यान्तरेण कारणवस्तु किञ्चित् दीप्त्यादि-लिङ्गवत्त्वेन प्रमितमेव। परंतु प्रकृताधिकरणद्वयविषयवाक्ययोर्मध्ये प्रथमवाक्ये पुरोवादभूमेकं भागमुपेन्द्र रूपज्योतिरवतारपरतया पूर्वपक्षी मन्यते, द्वितीयवाक्ये च पुरोवादमुपाख्यानभागं प्रतर्दनशब्दयोगार्थस्य परमात्मनः अवतारभूतोपेन्द्रपरतया मन्यत इत्युक्त्वा तत्तन्मतमनुसृत्य तत्तद्वाक्यार्थवर्णनमपि विस्तरेण कृतम्। तत्र अग्न्यादिज्योतिःपरत्वेन्द्रपरत्ववादस्य पूर्वपक्षिक्रियमाणस्य, तस्य वर्णनस्य च कीदृशः संबन्धः, तेन पूर्वाधिकृतस्य पूर्वपक्षस्य कीदृशः परिहारोऽभिमत इति विचार्यम्। चिन्तामणौ उपेन्द्रत्वमिति पाठं दृष्ट्वा तत्समर्थनं तथा क्रियते। इन्द्रपदमेवोपेन्द्रपदस्थाने बहुचिन्तामणिताले प्रकाशिकानुदितरीत्या लक्ष्यते। पाठद्वयमपि उपरि दर्शितमित्यलम्। प्रकाशिका तु चिन्तामण्यनुवादमात्ररूपा। यदि श्लोकचतुर्थं पादमर्थान्तरपरतया केचिद्विभावयेयुः, यदि वा तत्तदुक्तमेव समर्थयेरन्, तदा तदपि ग्राह्यम् ॥ ७५ ॥

यदि ज्योतिर्वाक्यस्य प्रतर्दनविद्यायाश्च परमात्मपरत्वमेव, तर्हि तस्य सर्वान्तर्यामित्वे स्थिते विशिष्य कौक्षेयाग्न्यैक्योक्तिः विशिष्येन्द्रप्राणप्रस्तावश्च कुत इत्यत्र तत्तत्फलार्थोपासनार्थमिति प्रत्याह— ज्योतिरिति। ज्योतिःप्राणेन्द्राणां वाचकाः शब्दाः ज्योतिश्शब्द-प्राणशब्द सच्छब्द-तच्छब्देदंशब्दादयः कारणैकान्तदीप्तिमत्त्वोपास्यत्वविशेषयोः कथनात् परमात्मविषयका एवेति पक्षद्वयेऽपि तुल्यम्। अतस्तदंशः पूर्वपक्ष्युक्तः साधु। अमीषां शब्दानां प्रसिद्धप्राणादिमात्रे वृत्तिस्तु तदुक्ता बहुविधविरोधवती। तत् तस्मात् प्रथमाधिकरणवाक्ये ज्योतिश्शब्दार्थः परमात्मैव कौक्षेयाग्नेरन्तर्यामित्वेन कथितः—इह=स्वशरीरकौक्षेया-नलविषये तथा श्रुतत्वदृष्टत्वध्यानेन फलाप्तये। वस्तुतः अनलात्मा=कौक्षेयानलस्वरूपं दृष्टत्वादिरूपेण ध्यानात् फलाप्त्यै कथित इत्यर्थः। अतश्च परमात्मेति नाध्याहारः। उक्तं हि तत्र परज्योतिश्शरीर-भूतमिदं कौक्षेयज्योतिरसाभिर्दृष्टं भवति; तदुष्णिम्नः शरीरव्यापिनः स्पर्शनेन विज्ञानात्। श्रुतञ्च भवति; कर्णौ पिधायावधाने कृते जाठराग्निकृतपचनशब्दस्य श्रोत्रेण श्रवणात्। तदेतत् दृष्टञ्च श्रुतञ्चेत्युपासीत।

संमतम् । विशेषणमात्रवाचित्वमसंमतम् । कौक्षेयज्योतिषैक्यमुपासनार्थम् । तथा मुख्यप्राण-लिङ्गमप्युपास्यविशेषणप्रकाशनार्थमिति श्लोकार्थसंक्षेपः । स्पष्टमेवावशिष्टम् ॥ ७६ ॥

कार्यं यत् कर्मवश्यं यदपि दृढमितं तं निरूढैस्तु शब्दैः
निर्दिष्टे ब्रह्मणि स्यात् क्वचिदगतिहता रूढिरैन्द्रीनयेन ।
तल्लिङ्गानन्यथासिद्ध्यधिगमनबलात् तद्विशिष्टे विवक्षा
स्यादीशे ज्योतिरिन्द्राद्यभिलपनपरेऽ(देऽ)हन्त्वमादीरिते च ॥ ७७ ॥

इति इन्द्रप्राणाधिकरणम् ॥ ११ ॥

अथ शिष्यानुग्रहार्थं आकाशज्योतिराद्यधिकरणोक्तार्थवैशद्यायेतरवाचिशब्दानां ब्रह्मणि प्रयोगे विषयभेदेन नियमं दर्शयति—कार्यमिति । यत् कार्यमिति दृढमितम्-अधिगतमाकाशादिकम्, यदपि

---

चक्षुष्यः श्रुतो भवति=दर्शनीयः कीर्तिमांश्च भवति इति । अन्तिमाधिकरणे मुख्यस्य मुखे भवतः श्रेष्ठस्य वा प्राणस्येन्द्रस्य च कीर्तनं तत्तद्विशिष्टपरमात्मोपासनात् मुक्तिरूपफलप्रासङ्गे । नन्वग्निशरीरक परमात्मोपासनमिष्टश्चेत्, ज्योतिरधिकरण एव, 'शास्त्रदृष्ट्या तूपदेशः' इति सूत्रं कुतो न प्रणीतमिति चेत्—शरीरात्मभावरूपप्रमेयसत्त्वेऽपि उपासनकाले परमात्मशरीरभूतोऽस्मि; इष्टः श्रुतश्चेत्येवोपासनात् विशिष्टपरमात्मोपासनाभावादित्यादि द्रष्टव्यम् ॥ ७६ ॥

आकाशाधिकरणे भाष्ये आकाशपदस्य योगव्युत्पत्तिर्दर्शिता । एवं प्राणाधिकरणे प्राण-पदेऽपि । पाञ्चरात्राधिकरणे आकाशप्राणशब्दयोरप्यपर्यवसानवृत्तिरुक्ता । इन्द्रप्राणाधिकरणे चान्ते एतदुक्तंभवतीत्यादिना विशिष्टपरत्वं स्थापितम् । सर्वमिदं मनसिकृत्य कुत्र कीदृशोऽर्थो ग्राह्य इति विमर्शे वक्तव्यमाह कार्यमिति । कार्यमिति आकाशादिकं बुद्धौ कृत्वा; कर्मवश्यमिति इन्द्रादिकम् । कार्यत्वं=चेतनाचेतनसाधारणम्; कर्मवश्यत्वं चेतनमात्रे । कार्यपदेनैव चेतनस्यापि ग्रहणसंभवे कर्मवश्यपदं कुत इति चेत्—सूक्ष्मावस्थचितामपि ग्रहणाय । कार्यपदं वा स्वरूपविकार-वत्परम् । तथाचाचेतनमात्रग्रहणम् । मूलप्रकृत्यादिपरस्य पदस्यापि परमात्मपरत्वम्, 'असदेवेदम्, अव्याकृतमासीत्' इत्यादाविष्टम्—अत्र तदप्युपलक्ष्यम् । स्वरूपविकारार्हत्वं कार्यत्वमिति विवक्षया वा तस्यापि संग्रहः । 'सोऽक्षरः परमः स्वरट्' इत्यत्राकर्मवश्यस्यापि ब्रह्मात्मकत्वं वक्तव्यम् । अतः कर्मवश्य-मिति प्रकृतानुसारेणोक्तावपि त्रिविधचेतनग्रहणमिष्टमेव । तथाच सूक्ष्मस्थूलादिदशाभेदभिन्नं सर्वं चेतनम-चेतनं च यत्, तन्निरूढैः शब्दैरित्येवाऽऽचार्यविवक्षा । कार्यत्वकर्मवश्यत्वयोः दृढमितत्वात् तेषु जगत्कारणत्व-संभावना सुतरां नास्तीति ज्ञापनायैवमुक्तिः । तथाच तन्निरूढैः चेतनाचेतनविषये रूढिमद्भिः पदैः ब्रह्मणि निर्दिष्टे सति परमात्मलिङ्गादिश्रवणानुरोधेन परमात्मरूपार्थे स्वीकृते सति तथाब्रह्मप्रतिपत्त्यर्थं क्वचित् रूढिस्त्यक्ता, क्वचित् रूढ्यर्थविशिष्टब्रह्मपर्यन्तार्थविवक्षा कृतेति भावनीयमिति श्लोकार्थः। रूढित्यागे न्यायसंमतिमाह क्वचिदित्यादिना । क्वचित् पूर्वोक्ताऽऽकाशादिशब्दे अगत्या रूढिर्हता भवति । ऐन्द्रीनयेन । ऐन्द्र्याः ऋचो गार्हपत्योपस्थानांगतया विनियोगे श्रुतिकृते तस्य 'कदाचनस्तरीरसि नेन्द्र'

कर्मवश्यमिति दृढमितं प्राजापत्यादिकम्, तयोर्निरूढैः-प्रसिद्धैः शब्दैः ब्रह्मणि निर्दिष्टे सति क्वचित्-आत्मावस्थितेष्वाकाशादिशब्देषु गत्यन्तराभावात् रूढिर्बाध्या। अगतिहता। रूढित्वेन निर्वाहासंभवस्त्विह अगतिः। तया निवार्यते रूढिः। तेन योग एवाऽऽश्रीयत इत्यर्थः। क्वचित् अन्यत्र प्रकारान्तरेण निर्वाहमाह—तदिति। ज्योतिषि लिङ्गं कौक्षेयज्योतिषैक्यम्, इन्द्रे त्वाष्ट्रवधादिकम्। तदुभयमनन्यथासिद्धम्। व्याप्तमित्यर्थः। तत्तल्लिङ्गानन्यथासिद्धेर्ज्ञानबलात् तद्विशेषणविशिष्टविषयत्वं स्यात्। अत्रोदाहरणचतुष्टयमाह—ज्योतिरिति। ज्योतिर्विशिष्टे ब्रह्मणि ज्योतिश्शब्दः। इन्द्रविशिष्टे पुनरिन्द्र-

---

इति मन्त्रस्येन्द्रप्रकाशकस्यापि गार्हपत्यरूपार्थप्रकाशकत्वार्थमिन्द्रपदे रूढिं परित्याज्याग्निरूपोऽर्थः स्वीकृतः किल। सोऽर्थः कया वृत्त्येति चेत्-गौण्या वा भवतु, अवयवशक्त्या वा यथायथमिति न तत्र नैर्भर्यमिति। तथेहापि ननु तत्रेन्द्ररूपरूढ्यर्थस्य गार्हपत्याग्नेश्च समुचितसंबन्धाभावात् लक्षणाऽपि न भवतीति वृत्त्यन्तराऽऽश्रयणम्। इह तु रूढ्यर्थमाकाशादिमत्यक्त्वा तदन्तर्यामीत्यर्थस्यैव शक्त्या सुवचत्वात् कुतो रूढित्याग इति चेत्-तदपि **अगति**पदेन समाहितम्: सर्वजगत्कारणत्वबोधकवाक्ये **आकाश**पदस्याऽऽकाशविशिष्टेत्यर्थवर्णने तद्वैशिष्ट्यं वायूत्पत्तिमात्रे उपपादकं स्यात्; न तु महदहंकारादिसमष्ट्युत्पत्तौ, पश्चात्तनविविधव्यष्टिसृष्टौ च। इतरापेक्षया आकाशे विशेषाभावाच्च। आकाशवत् सूक्ष्मस्वच्छस्वभाव इति गौण्याश्रयणे, आ समन्तात् काशत इति योगाश्रयणे च विशेष उक्तो भवति। अतो विशेषनिर्देशावैयर्थ्याय अगत्या रूढित्यागः। **क्वचि**दित्यनेन यत्र योगस्य गौण्याश्चायोगः, तत्र रूढिरेवानुमन्यते, यथा 'मत्तः सर्वमहं सर्वं मयि सर्वः सनातने' इति **प्रह्लाद**वाक्ये। तत्राहमर्थस्योपलक्षणतया भानम्। तदुक्तितात्पर्यं तु बहुविधमुत्प्रेक्षणीयम्। एवञ्चानन्यथासिद्धलिंगाभावेऽपि विशिष्टवृत्तिरस्तीत्युक्तं भवति। इदमपि **अहंत्वमादी रिते चे**ति श्लोकान्तिमभागतोऽपि ज्ञाप्यम्। तथा, 'स ब्रह्मा स शिवः सेन्द्रः' इत्यादौ चतुर्मुखाद्यन्वयिधर्मानुक्तावपि विशिष्टपरत्वमेव; अन्यथा तात्पर्यभंगात्। यत्र विशिष्टवाचित्वमवर्जनीयम्, तत् स्थलमाह **त**दिति। **तस्य** कार्यादेः **लिंगम्** द्युपरत्वनिरतिशयदीप्ति-त्वाष्ट्रवधादिरूपम्; तस्या**नन्यथासिद्धिः** ज्योतिराद्यन्वयं विना बोध्यत्वासंभवः। तस्या **अधिगमनं** निश्चयः। तस्य **बलम्** अविचार्यत्वम्। तस्मात् कार्यादिरूपज्योतिरिन्द्रादिविशिष्टे ईशे विवक्षा। **कार्ये**त्युपलक्षणमिति प्रागेवोक्तत्वात् **ज्योतिः**-पदस्य दिवि दीप्यमाननित्यवासुदेवदिव्यमंगलविग्रहपरत्वेऽपि न दोष। नित्यविग्रहग्रहणे दिवः परत्वं लिंगम्। विशिष्टविवक्षा यत्र यत्र शब्दे तमाह **ज्योति**रिति। उत्तरार्धं पूर्णमेकं वाक्यम्। आदिपदेन विद्यान्तरोक्तचेतनाचेतनयोश्च ग्रहणम्। ज्योतिरादीना**मभिलपनं** वाचकं यत् पदं तस्य **परे**—अर्थभूते। **पदे** इति पाठे तदभिलपनं **पदं** प्रतिपादकं यस्य तस्मिन् इत्यर्थः। मामुपास्स्वेत्यादिरिन्द्रवाचकशब्द इह ग्राह्यः। दिवो ज्योतिरित्यत्र **ज्योतिः**पदस्य विशिष्टपरत्वे गमकं न कौक्षेयज्योतिरैक्यम्। तस्यैवयस्य विशेष्यान्वयित्वात्। त्वाष्ट्रवधकर्तृत्वादिवत् विशेषणान्वयिधर्मस्यैव लिंगत्वात्। अतो निरतिशयदीप्तियोगो दिवःपरत्वञ्च लिंगम्। तदन्वयाय **ज्योतिः**पदे दिव्यविग्रहरूपविशेषणविवक्षा। न तु ऐन्द्रीन्यायेन स्वप्रकाशत्व-स्वप्रकाशज्ञानाश्रयत्वरूपगौणार्थविवक्षा। विशेष्य इव विशेषणे विग्रहेऽपि साम्यरूपैक्य

शब्दः । एवम्, 'अहं ब्रह्मास्मि' इत्यत्राहंशब्दः स्वात्मविशिष्टं परमात्मानमाह । 'तत्त्वमसि' इत्यत्र त्वंशब्दः पुनः अभिमुखचेतनविशिष्टं परमात्मानमेवाऽऽचष्टे । अत्र ऐन्द्रीनयेनेत्येतदवशिष्यते । तद्व्याचक्ष्महे–'ऐन्द्र्या गार्हपत्यम्' इत्यत्रेन्द्रशब्दस्य गार्हपत्ये रूढिशक्त्यभावात् गौणी वृत्तिर्व्युत्पत्तिर्वा समाश्रयणीया । उभयमप्याहुः, 'इन्द्रत्वमग्नौ गौणं स्यात् यज्ञसम्बन्धकारितम् ।
इन्दत्यर्थानुसाराद्वा स्वकार्ये सोऽपि हीश्वरः ॥" इति ।

तेनाऽऽकाशप्राणशब्दयोरस्माभिः परस्मिन् ब्रह्मणि व्युत्पत्तिरेवाऽऽश्रीयत इति सुसंगतमेतत् ।
अयमर्थः— व्युत्पत्त्या परमात्मानं तत्तदुक्तिः प्रकाशयेत् ।
तल्लिङ्गानन्यथासिद्धौ तद्विशिष्टावलम्बिनी ॥ इति ॥ ७७ ॥
इति इन्द्रप्राणाधिकरणम् ॥ ११ ॥

**स्वेच्छातः सर्वहेतुः शुभगुणविभवानन्तनिस्सीमहर्षः**
**शुद्धाकर्मोत्थदिव्या(नित्या)कृतिरनुपधिकाकाशनादिस्वभावः ।**

---

तात्पर्ये सति तु कौक्षेयज्योतिरिवेयमपि लिंगं स्यात्; 'अहंमनुरभवं सूर्यश्च' इत्यत्रेव । परमात्मपरत्वे तु तदपि लिंगं स्यात् । न तु उक्तविशिष्टपरत्वे । 'इदं वाव तत् यदिदमन्तःपुरुषे ज्योतिः' इत्यत्रानलरूपविशेषण विवक्षायाः लिंगम् पुरुषान्तस्स्थितत्व- उष्णिम-पचनशब्दहेतुत्वादि। ज्योतिरादिपदानां विशिष्टपरत्वगमकतया पदान्तरोपात्तमनन्यथासिद्धं लिंगं वक्तव्यमासीत् । अहंत्वमादिषु तु जीववाचकपदेषु तदपेक्षा नास्ति, अहमादिपदानां तच्छब्दप्रयोक्तृत्व-संबोध्यत्व-बुद्धिविशेषविषयत्वादिरूपधर्मोपलक्षितार्थे शक्तिस्वीकारात् तेन धर्मेणैव जीववाचित्वावश्यकत्वसिद्धेः । अचेतनेषु अहंत्वाद्यारोपेऽपि तथैव । इमं विशेषं बोधयितुम् अहंत्वमादीरिते चेति पृथगुक्तम् । देवर्षितर्पणादौ देवादिपदानां विशिष्टपरत्वे प्रत्ययेनोक्तं बहुत्वादिकमनन्यथासिद्धं लिंगम् । 'अग्निर्वैश्वानरः' इत्यादौ पदद्वयस्यापि रूढ्यर्थान्तर्यामिपरत्वे पौनरुक्त्यदोषात् तल्लिंगानन्यथासिद्धावपि एकस्य पदस्य योगादिवृत्तिरवर्जनीया । तल्लिंगानन्यथासिद्धिस्तत्रैव भवति, यत्रोपात्तानां लिंगानां परमात्मवाचित्वेनाभिमते पदेऽन्वयं विनाऽन्यत्रान्वयेनाप्यनिर्वाहः; लिङ्गवाचिपदस्यार्थान्तरासंभवश्च । अन्यथा निर्वाहे तु विशेषणतया चेतनाचेतनविवक्षाया नावश्यकता । परमात्मपरत्वे गमकं तु परमात्मवाचिपदसामानाधिकरण्यं परमात्मधर्मान्वयो वेति भाव्यम् । **चिन्तामणौ** व्युत्पत्त्या परमात्मानमिति यत् पूर्वार्धं दृश्यते, तत्र **न्यायसिद्धाञ्जनो**क्तं पूर्वार्धं तु, 'परविद्यासु जीवोक्तिर्निरुक्त्यादेः पराश्रया' इति ॥७७

अत्र शास्त्रावतरणे प्रागेव प्रतिपादमभिमताः भगवद्गुणाः परिगणिताः। प्रत्यधिकरणविवक्षिता गुणा वक्तव्याः । तदत्रैतत्पादगताधिकरणगुणाः सप्त कथ्यन्ते—ईक्षत्यधिकरणप्रभृत्येव हि शास्त्रम्; तदत्र सप्तैवाधिकरणानीति । तत्तद्विषयवाक्यप्रतिपाद्यगुणानन्त्येऽपि प्रधानसूत्रदर्शितं गुणं प्रधानीकृत्य गणनेयम् । **स्वेच्छात** इति । स्वसंकल्पमात्रेणेत्यर्थः । अयमीक्षत्यर्थः । शुभाः गुणाश्च विभवाश्च यस्य । अत एवानन्तः अविनाशी संततः **निस्सीमः** निरवधिकः **हर्षः** आनन्दो यस्य सः । **आनन्दमीमांसायां युवास्यादि**ति गुणविभवमुखेनैवाऽऽनन्दनिरूपणात् तेषामपि शतगुणनपरम्परासिद्ध्या शुभगुणविभवत्वम् । विषयाणामप्यानन्दशब्दवाच्यतया हर्षत्वस्वीकारे विभवरूपहर्षेति ग्राह्यम् । हर्षो गुण

सप्राणाप्राणभेदव्यतिभिदुरजगत्प्राणनो दिव्यदीप्तिः
प्राणेन्द्राद्यन्तरात्मा प्रभुरधिकरणैः सप्तभिः प्रत्यपादि ॥ ७८ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां
प्रथमस्याध्यायस्य प्रथमः पादः ॥

पूर्वं तद्गुणानुद्गृणातीत्यागामिनामधिकरणानां प्रत्येकमेकैकभगवद्गुणप्रकाशने तात्पर्यमिति प्रतिपादितम्। अधुना पुनः अतीतानां सप्तानामधिकरणानां सप्तसु भगवद्गुणेषु तात्पर्यमनुक्रमादाचष्टे—स्वेच्छात इत्यादिना। शुभेति। शुभगुणविभवरूपानन्तनिस्सीमहर्षं इत्यर्थः। अनुपधिकेति—देशकालवस्तुपरिच्छेदराहित्येनेत्यर्थः। सप्राणेति। सप्राणानामप्राणानां प्राणनहेतुरित्यर्थः। तत्र प्रभुरिति कथनं सर्वाधिकरणोक्तवैभवप्रकाशनार्थम्॥ ७८ ॥

इति निखिलतार्किकचूडामणिना सर्वतन्त्रस्वतन्त्रेण
कुमारवेदान्ताचार्यपरनाम्ना श्रीमद्वेदस्वामित्रवरदगुरुणा
विरचिते शारीरकाधिकरणचिन्तामणौ
प्रथमस्याध्यायस्य प्रथमः पादः ॥

---

श्चेत्—पूर्वोक्तो विग्रहः। शुद्धा रजस्तमोरहितसत्त्वमयी, कर्मजन्यभिन्ना दिव्या अद्भुता आकृतिर्यस्य सः। 'हिरण्यश्मश्रुः....यथा कप्यासं पुण्डरीकमेवमक्षिणी' इति हि श्रुतम्। आकाशशब्दस्य समन्तात् प्रकाशः, सम्यक् प्रकाशकत्वम्, आकाशवत् सूक्ष्मत्वं स्वच्छता चेति नैकार्थबोधकत्वादाहानुपधिकेति। देशकालपरिच्छेदराहित्यात् अनन्याधीनत्वाच्चानुपधिकत्वम्। सप्राणाः व्यष्टयः, अप्राणाः समष्टयः, तद्भेदेन व्यतिभिदुरं मिथोभिन्नं जगत्; तस्य प्राणनः सत्ताहेतुः। दिव्यदीप्तिरिति ज्योतिश्शब्दार्थः। न चान्तरधिकरणगुणपौनरुक्त्यम्; अत एव दिव्याकृतिरित्युक्त्वा दीप्तिपदप्रयोगात्। अत्रैव हि, 'दिवो दीप्यते' इति श्रुतम्। 'प्राणोऽस्मि। तं मामायुरमृतमित्युपास्स्व' इति वाक्ये प्राणभूतेन्द्रान्तर्यामित्व–आयुरन्तर्यामित्वादि। 'वामदेववत्' इति सूत्रखण्डेन मन्वाद्यन्तर्यामित्वोपासकान्तर्यामित्वयोरपि कथनात् आदिपदम्। तुल्यन्यायेन विद्यान्तरसिद्धहिरण्यगर्भाद्यन्तर्यामित्वमपि वा ग्राह्यम्। प्रभुरिति विशेष्यम्। जगत्कारणमित्यर्थः; प्रथमपादस्य कारणत्वपरवाक्यविषयकत्वात्॥ ७८ ॥

इति वात्स्यसच्चक्रवर्तिवीरराघवाचार्यकृतिषु
अधिकरणसारावलिव्याख्यायां सारार्थरत्नप्रभायां
प्रथमस्याध्यायस्य प्रथमः पादः ॥

—०—०—

## अथ अधिकरणसारावल्यां प्रथमस्याध्यायस्य द्वितीयः पादः ॥

### अथ सर्वत्रप्रसिद्ध्यधिकरणम् ॥ १-२-१ ॥

सूत्रम् ॥ सर्वत्र प्रसिद्धोपदेशात् ॥ विवक्षितगुणोपपत्तेश्च ॥ अनुपपत्तेस्तु न शारीरः ॥ कर्मकर्तृव्यपदेशाच्च ॥ शब्दविशेषात् ॥ स्मृतेश्च ॥ अर्भकौकस्त्वात् तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ संभोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ १—८ ॥

(७९) अत्रायोगान्ययोगव्यपनयननयैर्ब्रह्म पादत्रिपादी-
-व्यूढा(भागा)रूढैर्मृदूपक्रमकठिनपरैः प्राय आद्ये प्रसाध्यम् ।
कृत्स्नाक्षेपोपशान्त्यै प्रथम इह ततः पाद उक्तस्त्रिपादी
काचित्काक्षेपपूर्वाखिलकलहसमुन्मूलनाय प्रणीता ॥ १ ॥

इह खलु भगवता भाष्यकारेण, 'अथातो ब्रह्मजिज्ञासा' इत्यारभ्य पूर्वोक्तानामेकादशानामधिकरणानां परस्परमर्थविभागः संगतिविशेषोऽपि व्यक्तमभ्यधायि । 'तत्रास्याद्य' इत्याद्युपक्रमेण चतुर्णामपि पादानां संगतिरपि प्रत्यपादि । तत् भाष्य एव विस्तरेण द्रष्टव्यम्। इदानीं भाष्यकाराभिप्रायस्थं संगतिद्वयमप्याचष्टे । द्वौ खल्वत्र प्रथमाध्याये विवक्षितौ—परमपुरुषायोगव्यवच्छेदः प्रथमपादे, तदन्ययोगव्यवच्छेदस्त्रिपाद्यामिति । अत्रायोगव्यवच्छेदप्रधानः प्रथमपादः, अन्ययोगव्यवच्छेदप्रधाना त्रिपादीति विभागविशेषः। तेनोभयत्राप्युभयमस्तीति न सङ्करदोषशङ्कावकाशः। तदिदमाह—अत्रायोगेति । अयमर्थः—अयोगान्ययोगव्यपनयननयैः = व्यपनयनप्रधानैः प्रथमपादत्रिपादीविभागारूढैरधिकरणैर्मृदूपक्रमकठिनपरैराद्येऽध्याये ब्रह्म प्रतिपाद्यम्। अत्र प्राय इति वचनं भूयस्त्वप्रकाशनेन सङ्करदोषनिराकरणार्थम्—ब्रह्मायोगव्यवच्छेदभूयस्त्वं प्रथमपादे, तदन्ययोगव्यवच्छेदभूयस्त्वं त्रिपाद्यामिति । तथाऽयमपि विभागः पर इत्याह—कृत्स्नेति । कृत्स्नवेदान्ताक्षेपपरिहारः प्रथमपादे ।#—

---

श्रीः

॥ प्रथमस्याध्यायस्य द्वितीयः पादः ॥

१. द्वितीयपादे अधिकरणसारदर्शनात् प्राक् पादत्रिपादीरूपपेटिकाविभागनियामकं त्रिपादीगतविभागनियामकं च चतुर्भिः पद्यैराह । अत्रेति । **नयाः** अधिकरणानि । ते **अयोगान्ययोगव्यपनयनाः** ब्रह्मायोगव्यच्छेदकाः ब्रह्मान्ययोगव्यवच्छेदकाश्च । आद्याः प्रथमपादे, अन्त्यास्त्रिपाद्याम्। **मृदूपक्रमकठिनपरैः।** पूर्वमपि **मृदूपक्रमक्रूरनिष्ठान्** इत्युक्तम् । मृदुरुपक्रमो येषां ते । कठिनः **परः** उपक्रमातिरिक्तांशः उत्तरांशः येषु ते **कठिनपराः** । तादृशैर्नयैः । आरम्भे उपात्तविषयवाक्यार्थवर्णनमात्रपरत्वात् पूर्वपक्षिणः सिद्धान्तिनश्चोपक्रमो मृदुः । उत्तरोत्तराधिकरणस्य पूर्वपूर्वाधिकरणोपमर्देन प्रवृत्ततया तथाप्रवर्तकस्य पूर्वपक्षिणोऽधिकःप्रयासः, तथैव सिद्धान्तिनोऽपि । एवञ्चोत्तरोत्तराधिकरणापेक्षया पूर्वपूर्वाधिकरणस्यापि मृदूपक्रमत्वम् । ईदृशैर्नयैर्ब्रह्म आद्ये प्रथमाध्याये प्रकर्षेण साध्यम्। **प्राय** इत्यनेन त्रिपाद्यामयोगव्यवच्छेदकाधिकरणमप्यस्तीति ज्ञापयति । इदमेव मुखान्तरेणैवमपि वक्तुं शक्यमित्याह **कृत्स्नेति** । **ततः** अयोगव्यवच्छेदपरत्वात् **इह** आद्याध्याये प्रथमःपादः **कृत्स्नस्य** सर्वस्यापि वेदान्तवाक्यस्य य **आक्षेपः** विलक्षणपरमात्मपरत्वं नास्त्येवेति पूर्वपक्षः तच्छान्त्यै उक्तः। त्रिपादी तु **ततः** अन्ययोगव्यवच्छेदकत्वात् काचित्को य आक्षेपः—वाक्यान्तरैः प्रथमपाददर्शितैरन्यैश्च ब्रह्मसिद्धावपि अत्र न तत्परतेत्येवंरूपः पूर्वपक्षः तत्पूर्वः तत्प्रभृतिः अखिलः कलहः

*→अस्पष्टतरजीवादिलिङ्गवाक्यविषयत्वं भाष्याभिप्रायश्चैर्व्याख्यातृभिरुक्तमित्याह—अत्यन्तेति। ननु वाक्यानां वैषम्यं भवद्भिरुच्यते; तच्च न वाक्यस्वरूपस्थम्; अदर्शनात्। नापि वाच्यस्थम्; तत एव, इत्याशङ्क्य तत्प्रतिपादनप्रकारस्थमित्याह—तत्रेति। श्रुतिलिङ्गादिभिः षड्भिः प्रमाणैः संभावितमेव हि वाक्यमस्पष्टत्वादिकं प्रकाशयति। तेषां च श्रुतिलिङ्गादीनां तारतम्यं पूर्वकाण्ड एव + # उपक्रमदशायामेकदेशवाक्याक्षेपपूर्वककृत्स्नवेदान्ताक्षेपकलहसमुन्मूलनाय प्रवृत्ता त्रिपादीति। अयमर्थः—वेदान्ताः परं ब्रह्म प्रतिपादयन्तु नाम, इदं तु वाक्यमन्यदेव किञ्चित् प्रतिपादयतीति कलहपूर्वकं क्रमेण, 'कृत्स्नमपि वाक्यं न प्रतिपादयति' इति वदन्तं प्रतिक्षिपतीति पादत्रिपादी विभागः। अत्र शब्दार्थः सुव्यक्तः॥ ७९॥

(८०) अस्पष्टस्पष्टरूपस्फुटतरचिदचिल्लिङ्गवद्वाक्यचिन्ता
भाष्ये दीपावतारेऽप्यगणि नयगणैः संप्रवृत्ता त्रिपाद्याम्।
अत्यन्तास्पष्टलिङ्गान्वितविषयमुशन्त्याद्यपादं तु केचित्
तत्रेदं तारतम्यं नियतनिजबलैः प्राच्य(कर्म)तार्तीयमानैः॥ २॥

एवं संगतिमुक्त्वा भाष्यतद्व्याख्यानोक्तामपि संगतिं विशदं प्रकाशयन् अस्पष्टस्पष्टस्फुटतरत्वादिकल्पने निदानं कर्मकाण्डतृतीयाध्यायोक्तश्रुत्यादितारतम्यमित्याह—अस्पष्टस्पष्टेति। आद्यपादस्य * + परिकल्पितम्। असूत्रयच्च भगवान् जैमिनिः, 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये

---

जीवसृष्टिपरं जीवविशेषपरं प्रकृतिपरम् आकाशपरं मुक्तपरं सांख्यप्रक्रियापरमित्येवं विविधः कलहः तस्य समुन्मूलनाय मूलसमुच्छेदाय प्रणीता। पूर्वेति प्रभृतिपर्यायेण कारणत्वाधिकरणकृतः कृत्स्नाक्षेपो दर्श्यते। यद्वा काचित्काक्षेपकरणेऽपि कृत्स्नवेदान्ताक्षेप एव त्रिपाद्यामप्यभिमत इत्यर्थः। इदानीम् अखिलकलहेत्यस्य अखिलस्य कलहः सर्ववेदान्तविषयक आक्षेप इत्यर्थः॥ ७९॥

२. त्रिपादीविभागनियामकं भाष्योक्तं तद्रीत्या प्रथमपादविषयं च वक्तव्यं विभजति अस्पष्टेति। चितः अचितो वा साधकं लिङ्गं तत्तदसाधारणधर्मादिरूपं विषयवाक्ये यत्रास्पष्टं तच्चिन्ता—तेन चिदचित्साधनपूर्वपक्षः सिद्धान्तश्च द्वितीयपादे। यत्र तल्लिंगं स्पष्टरूपं स्पष्टभूतं तद्वाक्यचिन्ता तृतीयपादे। यत्र तल्लिंगं स्फुटतरं सांख्यादिमतप्रक्रियाच्छायायास्थितवाक्यविचारत्वात्, तत्रचिदचित्साधनशंका चतुर्थपादे। नयगणैः तत्तत्पादस्थैरधिकरणगणैः सम्यक् प्रवृत्ततया भाष्ये दीपावतारेऽपि भाष्यकारैरेव स्ववेदान्तदीपग्रन्थोपोद्घाते च अगणि विभज्य दर्शिता। नन्वेवमीदृशविभागत्रयानन्तर्भूतं किं वाक्यं भविष्यति? अत आद्यपादस्य त्रिपाद्यन्तर्गतकिञ्चित्पादवैलक्षण्यं दुर्वचम्; सर्वं मिश्रं प्रथमे इति वा वक्तव्यं स्यादित्यत्राह अत्यन्तास्पष्टेति।....लिङ्गान्वितविषयं तादृशजीवादिलिंगबोधिविषयवाक्यविशिष्टम्। शांकरभाष्ये तु अत्यन्तस्पष्टब्रह्मलिंगकवाक्यमाद्यपादविषय इत्युक्तम्। तात्पर्यमेकमेव। स्पष्टत्वास्पष्टत्वाद्यवधारणं कथं भवतीत्यत्राह तत्रेति कर्मतार्तीयमानैः कर्मकाण्डतृतीयाध्यायोक्तश्रुतिलिङ्गादिप्रमाणैरिति। भास्करभाष्येऽप्युक्तम्—"श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्यानामन्योन्यबलाबलावधारसंदिह्यमानवचनव्यक्तिषु वाक्येषु निर्णयार्थं द्वितीयतृतीयपादादि" इति। कर्मतार्तीयेति प्राच्यतार्तीयेति च पाठद्वयम्। केवलं तार्तीयेत्युक्तौ शारीरकतृतीयसंबन्धीत्यर्थो गृह्येतेति तद्विशेषणम्। अत्र तृतीयाध्याये अङ्गत्वमानानुक्तावपि

परदौर्बल्य(पारदौर्बल्य)मर्थविप्रकर्षात्' इति । तेन झटिति प्रत्यायकानि वाक्यानि स्पष्टतराणि, ततोऽन्यानि स्पष्टानि, ततोऽन्यान्यस्पष्टानि, ततोऽन्यान्यस्पष्टतराणि इति वाक्येषु विभागः । एवमर्थेऽपि विभागो द्रष्टव्यः ॥ ८० ॥

(८१) पूर्वत्रासिद्धरूपैः स्वमतिविरचितोन्नीतिभिः पूर्वपक्षः
सिद्धैः साधारणैरप्युपधिनियमितैः प्रत्यवस्था द्वितीये ।
स्पष्टासाधारणत्वैरुपरि परमतानूक्तिकल्पैरथेति
न्यायैकत्रिंशदत्र प्रतिचरणविभक्त्यन्विताऽन्वेषणीया ॥ ३ ॥

अत्र शिष्याणां विशेषेण स्पष्टतरत्वादिप्रतिपत्त्यर्थं प्रकारभेदेनापि पूर्वपक्षहेतूनां विभागमाह—पूर्वत्रेति । असिद्धरूपैः=स्वरूपेणासिद्धैः, केवलं वादिपरिकल्पितैर्हेतुभिः पूर्वपक्षोत्थानम् । द्वितीयपादे प्रत्यवस्थानप्रकारमाह—सिद्धैरिति । स्वरूपतस्सिद्धैर्व्यभिचारिभिः कयाऽपि तु कुसृत्या विशेषणेन नियमितैर्हेतुभिः पूर्वपक्षोत्थानम् । तृतीये तु स्पष्टासाधारणत्वैः स्वपक्षस्यैव प्रसाधकैः उत्थानमित्याह—स्पष्टेति । चतुर्थे पुनः परसिद्धान्तानुवादप्रायैरुत्थानमित्याह—परमतेति । अत्राधिकरणानामन्योन्यसङ्करव्यावृत्त्यर्थं मतान्तरव्यावृत्त्यर्थं चाधिकरणसंख्यामाह—इतीति । प्रतिपाद-

---

तृतीयतृतीये शब्दान्तराभ्यासादिकर्मभेदकप्रमाणादिप्रस्तावात् तद्ग्रहणाय विशेषणमिति वक्तव्यम् ; तदा कर्मेति विशेषणेऽपि एषां मानानां कर्मसंबन्धित्वात् स एव दोष इति चेत्— कर्मसंबन्धी यस्तार्तीयोऽध्यायः तत्रोक्तैर्मानैरित्यर्थ इति न दोषः । प्राच्यैरिति पाठेऽपि प्राच्यो यस्तृतीयाध्यायस्तदुक्तमानैरित्युक्त्यैव संशयो निवर्तनीयः ॥ ८० ॥

३. पूर्वश्लोके अत्यन्तास्पष्टत्वास्पष्टत्वादिकं यत् उक्तम्, तत् पूर्वपक्ष्यभिमतवाक्यार्थस्य विषयवाक्येषु प्रतीतौ अधिकक्लेशतन्न्यूनत्वतारतम्यमुखेनोपपादनीयम् ; मुखान्तरेण तदुपपादनाय स्वयमन्यदप्याह पूर्वत्रेति । पूर्वत्र प्रथमे पादे पूर्वपक्षिभिरुक्ता हेतवः वस्तुतोऽसिद्धाः स्वमतिकुकल्पिता एव । ईक्षत्यधिकरणे सांख्याभिमतानुमानाकारानुवादरूपा श्रुतिः ; गौणेक्षणमेव श्रुत्यर्थ इत्यादि ; आनन्दमय इत्यत्र मयट् विकारार्थे, जीवः शुद्धावस्थ एव ब्रह्म इत्यादि ; अन्तरधिकरणे शरीरं प्राकृतमेव, अत्र च तत् पुण्यहेतुकमित्यादि ; उपरि सर्वभूतोत्पत्तिप्रलयहेतुत्वमाकाशादेरपि भवति, 'आत्मन आकाशः' इत्यत्र स्वेतरानुत्पाद्यत्वमर्थ इत्यादि; निरतिशयदीप्ति-हिततमोपासनकर्मत्व-तदाक्षिप्तकारणत्वानि तत्रतत्रेति च । सर्वमसिद्धमेव । द्वितीये तु पादे हेतवः सिद्धाः, परं तु साधारणाः केनचिदुपधिनाऽन्यमात्रस्थितत्वेन प्रदर्श्यन्ते । मनोमयत्वप्राणशरीरत्वादिकं हि साधारणमपि उपकरणोपकरणिभावविवक्षया जीवे विश्रान्तं क्रियते । एवमोदनादनादिकमपि भाव्यम् । उपरि=तृतीये पादे नाडीसंबन्ध-बहुधाजायमानत्वादिकं जीवासाधारणत्वेनैव प्रथमं प्रतीयेत । आकाशाधारभूतमक्षरमित्युक्तौ, स्वर्गलोकोपरितनलोक इत्युक्तौ च प्रकृति-चतुर्मुखलोकग्रहणमेव स्वरसमिति पूर्वापेक्षया बलमत्र । अथ=चतुर्थे तु पादे विषयवाक्यानि सांख्यमतनिरूपणच्छाययैव भासमानानीति पूर्वपक्ष्युत्थानं स्थाने । तथाच अत्र प्रथमाध्याये न्यायैकत्रिंशत् उपोद्घातत्यागेन एकत्रिंशदधिकरणानि इति उक्तप्रकारेण प्रतिचरणं प्रतिपादं विभक्तिः असिद्धहेत्वादिरूपार्थविभागः, प्रतिनियत. पादविभाजकधर्म

मधिकरणसंख्याविभागं पूर्वमेवोक्तं स्मारयति—प्रतिचरणेति ॥ ८१ ॥

(८२) विश्वं पादे द्वितीये वपुरिति कथयन् चिन्त्यते वाक्यवर्गो
विश्वाधारः स आत्मेत्यभिलपनपरस्तर्कणीयस्तृतीये ।
तुर्ये सांख्यादिपक्षोदितपरिपठनभ्रान्तिरुन्मूलनीये-
त्येवं केचित् त्रिपादीं जगदुरयमपि श्रोतृबुद्धेः समाधिः ॥ ४ ॥

प्रकारान्तरेणाप्याचार्यैः[रन्यैः?]रुक्तां त्रिपादीसंगतिमनुवदति-विश्वमित्यादिना । द्वितीयपादे विश्वं भगवतः शरीरमिति प्रतिपाद्यते । तृतीयपादे विश्वशरीरत्वोपपादकं विश्वाधारत्वमुच्यते । चतुर्थे पुनः उक्तार्थपरिपन्थिरूपसांख्यादिसिद्धान्तप्रक्रिया समुन्मूल्यत इति विभागः । तमेतं विभागं श्रोतृबुद्धिसमाधानार्थत्वादाद्रियामह इत्याह—अयमिति ॥ ८२ ॥

---

इति वा । तदन्वितत्वेन **अन्वेषणीयः**=विमर्शनीयः । एकैकाधिकरणेऽपि तत्तत्पादविभाजकधर्मः शीलनीय इति यावत् । अन्त्यान्तिमपादस्य पृथग्वाक्यत्वं परिकल्प्य **विभक्तिः** अधिकरणविभाग इत्यर्थमुपवर्ण्य अधिकरणसंख्याविधानार्थप्रवृत्तत्ववर्णनं पुनरुक्तिदुष्टम्; अनपेक्षितश्चाधिकरणविभागवचनम् । अतः **इति**शब्दानुसारात् पूर्वत्रैवोपक्रान्तविषयस्य **अन्वेषणीये**त्यन्तेनैव पूर्तिरित्येकवाक्यतैव दर्शिता ॥८१

४. पादचतुष्टयविभागमन्यविधं कैश्चिदाचार्यैर्वर्णितमप्यादरं प्रदर्शयन् अनुवदति **विश्वमिति** । **श्रुतप्रकाशिकायां** प्रथमाध्यायसमाप्तौ इदं विशदं दर्शितमस्ति, '**केचिदाचार्याः**— प्रथमे पादे परमकारणभूतचिदचिद्विलक्षणपुरुषविशेषनिर्णयः, द्वितीये जगच्छरीरकत्वम्, तृतीये सर्वात्मकत्वप्रकारः, चतुर्थे तु अतत्कार्यतच्छरीरातदात्मकवस्त्वसंभवः प्रतिपाद्यते' इति, 'आत्मत्वप्रकारस्तृतीयपादार्थः । शरीरगतदोषास्पृष्टतया स्वासाधारणरूपान्यथाभावाभावेन च स्थितस्य सर्वावस्थासु शरीरधारकस्य ह्यात्मत्वम्', 'अयञ्च विभागः सम्प्रदायसिद्धत्वादुपपन्नश्चानुसंधेयः' इति । तदेककण्ठ्यमस्य पद्यस्य भाव्यम् । विश्वस्य परमात्मशरीरत्वं द्वितीयपादे । **सर्वत्रे**ति सौत्रपदं सप्तम्यन्तमेव, भगवतः सर्ववस्तुप्रतियोगिकभेदे सत्येव सर्वं खल्विदं ब्रह्मेति सामानाधिकरण्यमिति दर्शयत् शरीरवाचिशब्दस्य शरीरिणि प्रयोग इति सूचयति । अर्भकौकस्त्वादिति चोपरि । उपरि च, 'गुहां प्रविष्टौ, स्थानादिव्यपदेशाच्च, अन्तर्यामी, रूपोपन्यासाच्च, स्मर्यमाणमनुमानं स्यादिति' इति प्रत्यधिकरणं शरीरत्वप्रदर्शनमनुसंधेयम् । **विश्वाधार** इति । धारकस्य ह्यात्मत्वमिति टीकानुसंधानमत्र । **आत्मे**त्यनेन आत्मत्वं तृतीयपादार्थ इति टीकोक्तानुसंधानम् । आत्मत्वप्रकारश्च तदाधारत्वेऽपि तद्दोषासंस्पृष्टस्वस्वरूपान्यथाभावाभावः । '**यस्मिन् द्यौश्च पृथिवी च—अमृतस्यैष सेतुः**' इति विश्वाधारत्वादिकथनादनन्याधारत्वमपि सिद्धम् । '**स्वे** महिम्नि अथवा न महिम्नि' इति च युक्तम् । चतुर्थपादे सांख्याद्युक्तसर्वचेतनाचेतनेष्वपि ब्रह्मात्मकत्वोपपादनादब्रह्मात्मकवस्तुनिषेधे तस्य तात्पर्यम् । तेन महिमातिशयः सर्वोपनिषद्वेद्यता च सिध्यति । तथाच सांख्यादिपक्षे उदितस्यैव उपनिषदि परिपठनमिति स्वतन्त्रवस्त्वन्तरस्वीकारभ्रान्तिरुन्मूल्यते । इमामाचार्यान्तरोक्तां प्रणालीमाद्रियते **अयमपी**ति । **समाधिः** पादविभाजकाऽऽकारनिर्णयव्यासक्तस्य व्याकुलस्य मनसः शान्तिः । एतदादरणेनैव प्राक्, 'स्रष्टा देही स्वनिष्ठो निरवधिमहिमा' इति समग्राहि ॥ ८२ ॥

(८३) यस्य प्राणः शरीरं स खलु हिततमोपास्तिकर्म प्रसक्तः
तस्मिन् जीवत्वशङ्कां जगदुपजनके सौति शाण्डिल्यविद्या ।
पूर्वन्यायाच्च युक्तं दमनमिह महावाक्यतः प्रक्रमस्ये-
त्युत्थाने प्रक्रमोक्तानुगुणमिति महावाक्यमेकीकरोति ॥ ५ ॥

पादादिसंगतीनां स्पष्टमेवोक्तत्वात् अधिकरणसंगतिरवशिष्यते। तामप्याह—यस्येति। अत्र द्वयी संगतिः-अर्थैक्यादेका; प्रतिपादकन्यायानुसारादपरा। तथा हि इन्द्रप्राणाधिकरणे, 'प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्व' इति स एव हिततमोपास्तिकर्मतया प्रख्याप्यते ; अस्यां च शाण्डिल्यविद्यायाम्, 'मनोमयः प्राणशरीरो भारूपः' इति तदेव प्रतिसंधीयते। प्राणशरीरस्तु जीव एवेति पूर्वन्यायाक्षेपेण संगतिः । संगत्यन्तरमप्याह—पूर्वेति । पूर्वं हि परमात्मप्रतिपादनानुकूलमहावाक्यात् जीवप्रतिपादनानुकूलमुपक्रमवाक्यं निराचष्ट ; तर्हि तेनैव न्यायेन जीवप्रतिपादनानुकूलमहावाक्यात् परमात्मप्रतिपादनानुकूलमुपक्रमवाक्यं निराक्रियतामिति प्रतिबन्दीप्रयोगः। एवं पूर्वपक्षिते सति वैषम्यं दर्शयति-प्रक्रमेति। तत्रोपक्रममहावाक्ययोर्विरोधात् युक्तो महावाक्येनोपक्रमोपरोधः । इह पुनः प्रक्रमोक्तमर्थमुपबृंहयति महावाक्यम् । तेन कस्य विरोधः केन वा निरास इति निरूपयतु भवान्। अयमर्थः-शाण्डिल्यविद्या खलु उपक्रममारभ्योपसंहारपर्यन्तं ब्रह्मकारणत्वानुकूला। तेन तया विद्यया परमपुरुष एव जगत्कारणमिति निश्चीयत इति ।

अत्रेयमपि काचित् संगतिः स्फुरति-पूर्वाधिकरणे हिततमोपास्तिकर्मत्वेन हेतुना परमपुरुष एवेन्द्रशब्दवाच्य इति निर्धारितम् । तदेतत् हिततमोपास्तिकर्मत्वमस्मिन्नधिकरणे, 'यथाक्रतुरस्मिन् लोके पुरुषो भवति' इत्युक्तन्यायेन विव्रियत इति। अयमेव हि तत्क्रतुन्यायः—यद्गुणविशिष्टं परमात्मानमुपास्ते तद्गुणविशिष्टमेव परमात्मानं स्वयमपि तद्भोगसाम्येन भुङ्क्त इति । तथाचेदृग्विधोपभोगसाधनात् परमपुरुषोपासनादन्यः को वा हिततम इति भावः ।

---

५. एवं पादविभाजकाऽऽकारशोधनात् प्रथमाधिकरणस्य शास्त्रकाण्डद्विकाध्यायसंगतिवत् पादसंगतिरपि सुज्ञाना। वेदार्थविषयकत्वात् वेदान्तार्थविषयकत्वात् सिद्धब्रह्मविषयकत्वात् ब्रह्मणि समन्वयनीयवाक्यविषयकत्वाच्च क्रमेण तत्तत्संगतिवत् अस्पष्टजीवलिंगकवाक्यविषयकत्वात् पादसंगतेरपि सिद्धेः । विषयवाक्ये जीवपदाभावात्, 'ब्रह्म तज्जलान्' इत्युपक्रमाच्च जीवलिंगस्यास्पष्टता । अतोऽनन्तरसंगत्यपरपर्यायामधिकरणसंगतिमाह यस्येति । भिन्नपादत्वात् पूर्वपादान्तिमाधिकरणेन संगतिर्न वक्तव्येति अद्वैतकल्पतरुः । विषयभेदाच्च । संभवे तदुपेक्षणायोगात् इहोच्यते । इन्द्रप्राणाधिकरणे हिततमोपासनकर्मतयोक्तः प्राणः प्राणशरीरकपरमात्मेति सिद्धान्तितम् । अस्यां शाण्डिल्यविद्यायां इदं ब्रह्मेति प्रत्यक्षदृष्टं जीवं ब्रह्मशब्देन निर्दिश्य, तज्जलानिति तच्छब्देन जीवस्य जगदुपजनकत्वमप्युक्त्वा, 'मनोमयःप्राणशरीरः' इति प्राणशरीरकत्वमपि कथ्यते । अतो जीवे प्राणशरीरकत्वशंकां सौति उत्पादयति विद्येयम् । तथाच तत्र प्रतीतजगत्कारणत्वप्राणशरीरत्वयोरत्र वाक्ये श्रवणात् एतद्वाक्योपस्थित्या एतदर्थविचारः क्रियत इति भावः । ननु किमत्र विवक्षितम् ? यदि जीव एव तद्धर्मविगमात् प्रतर्दनविद्यायामपि जीव इन्द्र एवोक्तो भवत्विति तदाक्षेपः, तर्हि ब्रह्मनिराकरणादयोगव्यवच्छेदपादे

इत्थमपि संगतिर्वक्तुं शक्यते-पूर्वं ह्यधिकरणप्रयोजनकथनावस्थायाम्, 'केचिद् व्युत्पादनीयाः' इति पूर्वकाण्डानुक्ताः शारीरके व्युत्पादनीया इत्युक्तम्। अत्र पूर्वाधिकरणे विशेषणवाचिशब्दस्य विशेष्यपर्यन्ताभिधानोपपादनार्थम् उपासात्रैविध्यादिति अपूर्वन्यायविशेषः प्रतिपादितः। इह पुनरत्यन्तापूर्वस्तत्क्रतुन्यायो व्युत्पाद्यत इति वेदान्तोपयुक्तापूर्वन्यायविनियोगस्तत्र चात्र च व्युत्पाद्यत इति।

अत्र पूर्वोत्तरपेटिकयोः संगतिर्वक्तव्या। सा चात्रैवं भविष्यति। उपासकशरीरबहिर्भूतज्योतिरिन्द्रप्राणवैशिष्ट्येनोपासनचिन्ता पूर्वत्र; इह पुनरेकपेटिकात्वेन कल्पितेषु त्रिष्वधिकरणेष्वल्पस्वरूपतयावस्थितोपासकशरीरान्तर्गतहृदय-गुहाक्षिवासी परमात्मा चिन्त्यत इति।

तदर्थविचारस्तु—'सर्वं खल्विदं ब्रह्म' इति शाण्डिल्यविद्यायामुपदिष्टं ब्रह्म किं जीवः, उत वेदान्तप्रसिद्धः परमपुरुष इति। तदर्थं चिन्त्यते—महावाक्यानुसारेणोपक्रमो नेतव्य इति पूर्वाधिकरणोक्तन्यायविशेषोऽत्र जीवपरत्वकल्पनायामुपयुज्यते नेति। पुनश्चिन्त्यते—अत्र महावाक्यस्य जीवपरत्वमस्ति नेति। ततोऽपि विचार्यते—एतस्मिन् महावाक्ये जीवपरत्वानुरूपहेतवो विद्यन्ते नेति। पुनश्चिन्त्यते—तद्बाधकाः परमपुरुषत्वसाधनसमर्था हेतवो न सन्ति, यदि वा सन्तीत्यादि ॥ ८३ ॥

(८४) अन्वारुह्यात्र मेदं प्रथममधिकृतिर्भाषिता किंनिमित्तं
विद्यैकत्वेऽनुवादः पर इह गुणविध्यर्थमे(र्थ ए)वेति युक्तम्।
सत्यं ब्रह्मानुमत्य क्वचिदुपनिषदि क्वापि कल्प्ये विवादे
चिन्तैवोदाहृतिः स्यात् परमतरचितेत्यर्थसिद्धिस्तु बोध्या ॥ ६ ॥

---

एतत्प्रवेशः स्यादिति चेत्—भवतु अयोगशंकैव। अथापि अस्पष्टजीवलिंगत्वरूपवैषम्यादेतत्पादे प्रवेश इति। अथवा स्थापितब्रह्मनिषेधे तात्पर्यं मा भूत्। तत्तद्धर्माणामन्ययोगोऽप्यस्तीत्येतावदेव विवक्षितम्। एवमुपस्थितिमात्रं पूर्वाधिकरणविषयवाक्यमूलकमेतद्विषयवाक्यविषयकमुक्तम्। समुचितां संगतिमप्याह पूर्वेति। पूर्वाधिकरणन्यायमुपजीव्य तथाविधे स्थलान्तरे, पूर्वपक्षे दृष्टान्तनाम्नी संगतिर्मीमांसकेष्टा। सेह भवति—यथा पूर्वाधिकरणे उत्तरमहावाक्यानुरोधेन इन्द्रोपक्रमस्य दमनं कृतम्; तत्र उपक्रमेऽपि ब्रह्मपरत्वमेवेष्टम्—तथाऽत्र शाण्डिल्यविद्यायामपि जीवस्वरस-सद्गुणगणप्रतिपादकमहावाक्यानुसारात् ब्रह्मपदोपक्रमस्यापि दमनमस्तु इति हि पूर्वपक्ष्याशय इति। एवं दृष्टान्तसंगत्यादिना उत्थाने=शंकायाम्, महावाक्यस्यापि प्रक्रान्तब्रह्मान्वयस्य स्पष्टं भावात् न जीवपरतेति प्रक्रममहावाक्ययोरैककण्ठ्यं दर्शयतीति। चिन्तामणौ संगत्यन्तरमप्यनेकम् ॥ चि. टी. परमपुरुष एव जगत्कारणमितीति। ब्रह्मतज्जलानित्यादिकं परमपुरुषजगत्कारणत्वपरमेवेत्यर्थः। पूर्वोत्तरपेटिकयोरिति। पूर्वपादे अन्तिमाधिकरणद्वयमेका पेटिका, अत्र पादे हृदयगुहास्थानरूपाल्पस्थानवर्तित्वाकारकथनादधिकरणत्रयमेका पेटिका ॥ ८३ ॥

६. अत्राधिकरणे शाण्डिल्यविद्यामेव गृहीत्वा योजनाद्वयं भाष्ये दर्शितम्। आगमप्रामाण्ये श्रीभगवद्यामुनमुनिभिः पाञ्चरात्राधिकरणगतस्य सूत्रस्यानेकार्थवर्णनेऽपि भाष्ये एकैव योजना दर्शिता। एवं विस्तरत्यागिभिः किमर्थमत्र योजनाद्वयं क्रियते। न च तुल्यबलत्वम्, द्वितीययोजनाया एव प्राचीनाचार्यसंमततायाः स्वयमेव प्रदर्शनात्। प्रथमयोजनायाश्च शांकरगतत्वात्। तत्रतत्र शांकरोक्त

इह खलु भाष्ये वाक्यभेदमङ्गीकृत्य शाण्डिल्यविद्यायां योजना पूर्वमभिहिता। तस्यां योजनायां पूर्वस्मिन् खण्डे पूर्वपक्षिणाऽपि ब्रह्मसद्भावोऽङ्गीकृतः ; उत्तरस्मिन् खण्डे ब्रह्मासद्भावाभिधानेनोत्थितस्य पूर्वपक्षिणस्तत्रापि ब्रह्मसद्भावः प्रसाध्यत इत्यधिकरणक्लृप्तिः। योजनान्तरमप्यभिहितम्—'सर्वं खल्विदं ब्रह्म' इत्यारभ्य तस्यामेव शाण्डिल्यविद्यायां समाप्तिपर्यन्तं सर्वत्रापि ब्रह्म न विद्यत इति पूर्वपक्षः। सर्वत्रास्तीति सिद्धान्तः। पूर्वत्र वाक्यभेदमङ्गीकृत्याधिकरणनिर्वाहः। स पुनरपन्यायमूलः, 'संभवत्येकवाक्यत्वे वाक्यभेदस्तु नेष्यते' इति न्यायविरोधात्। अपि च, 'स क्रतुं कुर्वीत' इत्युपासनविधिर्मनोमयत्वादिगुणविधिः; न पुनः स्वरूपविधिरिति संभाव्यते; विहितस्य विधानायोगात्, 'शान्त उपासीत' इति महावाक्य एवोपासनस्य विहितत्वाच्च, 'स क्रतुं कुर्वीत' इति

---

स्योपेक्षणे क्रियमाणे अत्र परं तदुक्तेः कारणाभावादित्याशंक्य परिहरति अन्वारुह्येति। अत्र शाण्डिल्यविद्यायाम्, 'शान्त उपासीत, स क्रतुं कुर्वीत' इति उपासनपरं वाक्यद्वयमस्ति। तत्रोपासनं विभिन्नं विधीयते इति भेदमारोप्येति न श्लोकार्थः ; तथा शांकरेऽसद्भाष्ये चानुक्तेः॥ वाक्यभेदमन्वारुह्येत्यर्थ इति चेत्, वाक्यं तु सर्वथा भिन्नमेव॥ पूर्वोत्तरवाक्ययोर्विधैकवाक्यत्वाभावमन्वारुह्येत्यपि न ; क्रतुं कुर्वीतेति विहितोपासनापेक्षितशमगुणविधानस्य पूर्ववाक्ये स्वीकृततया अङ्गाङ्गिवाक्ययोरेकवाक्यत्वस्यैवेष्टत्वात्। अतः ब्रह्मशब्दस्य मनोमयादिशब्दस्य च ब्रह्मजीवरूपार्थभेदमन्वारुह्येत्यर्थः। द्वितीययोजनायां हि ब्रह्मपदमपि जीवपरं पूर्वपक्षे ; **मनोमया**दिपदमपि ब्रह्मपरं सिद्धान्ते इत्यैवयम्। **किंनिमित्तमिति**। केन निमित्तेनेत्यर्थः। एकपदत्वे बहुव्रीहिवृत्तं सत् भाषणक्रियाविशेषणम्।

ब्रह्मशब्दस्य मनोमयादिशब्दस्य च विभिन्नव्यक्तिपरत्वमभिदधतां किं प्रथमवाक्येन ब्रह्मोपासनम् द्वितीयेन च जीवोपासनं विधीयत इति उपासनभेदो विवक्षितः ; किं वा जीवोपासनमेव विधेयम्, तत्रोपासने अपेक्षितशमरूपाङ्गविधानार्थं शमगुणोत्पादकं सर्वस्य ब्रह्मात्मकत्वज्ञानम्, 'सर्वं खल्विदं ब्रह्म' इत्युपदेशकार्यमित्याशयः। नाद्यः, विद्याभेदस्य शांकरेऽसद्भाष्ये चानुक्तेः। **श्रुतप्रकाशिकायां**, 'शान्तिकाम उपासीत' इत्युपासनविधानवचनं न परमतवर्णनम्, किंतु संभावितविकल्पमात्रम्। ब्रह्मोपासनस्य पृथगनुक्ततया, ब्रह्मेति पदस्योपक्रमोपसंहारयोः श्रवणाच्च शाण्डिल्यविद्येत्येकनामबलाच्च विद्यैकत्वस्यैव युक्तत्वात्। तथाच द्वितीयः पक्षः। तत्र **शांकरे भामत्यां च**—'शान्त उपासीत' इति वाक्ये शममात्रविधानम् ; उपासनं तु, 'स क्रतुं कुर्वीतेत्यत्रैव विधीयते। अस्यैवोपासनस्य पूर्वमनुवादः। पूर्वस्यापि वाक्यस्य पश्चात्प्रयुक्तत्वभावना कार्या [शान्तः स्यादित्यत्रैव तात्पर्यम्] इत्युक्तम्। विद्यैकत्वपक्षे तदपेक्षया शान्त उपासीतेत्यत्रोपासनविधिरित्येव युक्तम्॥ रूपवति वाक्य एवोपासनविधानं युक्तमिति चेत्—प्रथमवाक्ये ब्रह्मणो रूपत्वेनोपासनेऽन्वयोऽस्तु। तथाच **परः**=क्रतुं कुर्वीतेति भागः मनोमयत्वादिगुणविधानार्थमुपासनानुवाद एवेति युक्तम्। अत्र **एव**कारेण-उत्तरवाक्ये उपासनस्याविधाने प्राप्तब्रह्मानुवादेनानेकगुण विधाने वाक्यभेदः स्यादिति शंका परिह्रियते। तत्प्रकारः **उपनिषद्भाष्यादौ** द्रष्टव्यः। तथाच भाष्योक्तद्वितीयपक्ष एव स्वीकार्यो भवति। तत्र पूर्वपक्षे ब्रह्मपदस्यापि जीव एवार्थः ; सिद्धान्ते **मनोमया**दिपदस्यापि ब्रह्मैवार्थ इति भेदः। तत् कुत. पूर्वयोजनाभाषणमिति चेत्—

गुणविध्यर्थमनुवादतयोपपत्तेः। अत्राधर्ङ्गीकारेणाह सत्यमिति। इयं चिन्ता तस्या मर्यादाया उदा-हृतिः = दृष्टान्त इत्यर्थः। अत्रायं विशेषः प्रतिभाव्यः-एकस्यामुपनिषदि ब्रह्माङ्गीकृत्योपनिषदन्तरे ब्रह्म नास्तीति विवादः प्रायशः प्रवर्तते। अत्र पुनरेकस्मिन्नेवोपनिषद्वाक्ये पूर्वखण्डे ब्रह्मास्ति, उत्तरखण्डे ब्रह्म नास्तीति विवादः। अथापि जघन्योऽयं पक्षः किमर्थं परिगृह्यत इत्यत्राह—परेति। परवादि-परिकल्पितत्वादस्माभिरप्यनूद्यते ; न पुनः सिद्धान्ततया स्वीक्रियत इति। अयमर्थः सूक्ष्मत्वात् सावधानैरेव शिष्यैरवबोध्य इत्याह—बोध्येति ॥ ८४ ॥

(८५) सर्वत्वं कर्मभिः स्वैर्जनिमति घटते ब्रह्मशब्दोऽपरे चे(पि चैवे)(त्र चैवे)-
त्यल्पस्थानोऽल्पमानः सुखतदितरभुग् जीव एवेति चेन्न ।
तज्जत्वादेरनूक्तेर्विविधगुणभिदादर्शनात्, सर्वतादेः
स्वारस्यादप्यणुत्वं ह्यधिकृतमिहोपास्तये ज्यायसि स्यात् ॥ ७३॥

इति सर्वत्रप्रसिद्ध्यधिकरणम् ॥ १२ ॥

अस्मिन्नधिकरणे पूर्वपक्षसिद्धान्तयुक्तिद्वयं पूर्वोत्तरार्धाभ्यां सङ्गृह्य दर्शयति—सर्वत्वमिति।

---

तत्राह सत्यमिति। प्रकृतविषयवाक्ये प्रथमयोजनाप्रदर्शनमिदं स्थलान्तरे एवं शंकायामेवं परिहार इति शिक्षणायेत्याह ब्रह्मेति। एषा उपात्तविषयवाक्ये एकभागे ब्रह्मपरत्वमनुमत्य परमतरचिता शांकरमते कृता। परमता च सा अस्माभिश्च रचितेति वा। चिन्ता विचारप्रक्रिया उपनिषदि यत्र क्वचित् घट्टे ब्रह्मेति तत्त्वं पूर्वभागे अनुमत्य स्वीकृत्य उत्तरभागे क्वापि=तदन्यतत्त्वविषयकतया विवादे पूर्वपक्षिणा कल्प्ये सति, उदाहृतिः स्यात्=अतिदेष्टव्या भवेत्। इत्यर्थसिद्धिस्तु बोध्या—एवमेतद्वचनाप्रयो-जनं द्रष्टव्यम्। ब्रह्मानुमत्येत्यनेनेदं सूच्यते—अन्ययोगव्यवच्छेदपादारम्भे सूत्रे सर्वत्रप्रसिद्धेत्यनेन अनेकश्रुतिसिद्धत्वकथनात् अयोगव्यवच्छेदरूपं कार्यं पूर्वपाद एव समाप्तमिति ज्ञाप्यते। तदुपष्टम्भक-तया पूर्वपक्ष्येव स्वयं पूर्वपक्षावसरे किञ्चिदंशे ब्रह्म प्रतिपाद्यतया स्वीकृत्य विवादमंशान्तरमात्रे संको-चयति चेत्, अन्ययोगव्यवच्छेदः परिस्फुटः स्यादिति तदर्थं ब्रह्मांगीकारपूर्वकयोजना अत्रापि विषयवाक्ये शांकरोक्ता समादृता, नोदाहरणमादर्तव्यमिति न्यायेनान्योदाहरणे भविष्यतीति। मुण्डकोपनिषदि पूर्वभागस्य ब्रह्मपरत्वमदृश्यत्वाधिकरणे उक्त्वा भागान्तरेऽपि तत् साध्यते तृतीयपादारम्भे द्युभ्वाद्या-यतनमित्यत्र। अत्राप्यनन्तरे अत्त्रधिकरणे, 'प्रकरणाच्च' इति सूत्रेण सूच्यते, तत्र पूर्वभागस्य ब्रह्मपरत्वं पूर्वपक्षिणोऽपीष्टमिति। एवमुपर्यपि। तथाऽत्राप्यधिकरणे एकस्मिन्नुपनिषद्घट्टेऽपि पूर्वापरभेदाभेदचिन्ता क्वचिद् भवितुमर्हति। अयोगव्यवच्छेदो नात्र पादे इत्यस्य व्यक्तये तादृशोदाहरणमपि भाव्यमिति तत्सूचनाय भेदमन्वारुह्य कृत्वाचिन्तेति भावः। यद्वा शाण्डिल्यविद्या जीवपरेति वदन् अयोगत्याग्स्य अन्ययोगशंकायाश्च स्पष्टत्वाय प्रथमतो ब्रह्मपदं ब्रह्मपरमेव स्वीकृत्य स्थलान्तरोपयुक्तां योजनामारभमाणः पूर्वपक्षी वस्तुतः उपक्रममपि जीवपरमेव कलयन् स्वपक्षं निगमयत्विति कृत्स्नभाष्याशयः। पूर्वमीमांसायां हि संगत्यर्थमुत्तराधिकरणे बलवत्कोट्युपक्रमोऽपि दृश्यते ॥ ८४ ॥

७. अथाधिकरणशरीरं दर्शयति। तत्र न केवलं मनोमयत्वादिविशेषणबलात् जीवत्वम्, किन्तु

अयमर्थः–'सर्वं खल्विदं ब्रह्म' इति सर्वसामानाधिकरण्यं जीवे न घटत इति भवन्तो वदन्ति। तत्तु घटत एव; देवतिर्यङ्मनुष्यस्थावररूपेण जननवति जीवे तत्तच्छरीरसामानाधिकरण्येन निर्देशस्याविरोधात्। तथा हृदयान्तरवस्थितत्वेनाल्पस्थान इति, अल्पमानः–अणीयानिति चात्र प्रतिपाद्यार्थः श्रूयते, तच्च जीवत्वमेव प्रसाधयति। किं च सुखदुःखभागी देहे जीवो वर्तते। अतो जीवादन्यः परमपुरुषोऽत्र नास्तीति। परिहरति–नेति। हेतुमाह–तज्जत्वादेरिति। 'सर्वं खल्विदं ब्रह्म' इत्यनन्तरमेव तज्जत्वात् तल्लत्वात् तदन्त्वादिति हेतुत्रयमनूद्यते। स तु परमपुरुषधर्म एव। 'यतो वा इमानि भूतानि' इत्यादिवाक्ये तस्यैव प्रसिद्धत्वात्। विविधगुणभिदादर्शनात्='मनोमयः प्राणशरीरो भारूपः सत्यकामः सत्यसंकल्पः' इत्यादिना ब्रह्मासाधारणगुणविशेषदर्शनात्। सर्वतादेः स्वारस्यादपि–'सर्वं खल्विदं ब्रह्म' इति चेतनाचेतनविभागाभावेनाविशेषेण सर्वेषामपि ब्रह्मतादात्म्यमुच्यते। तत्तु जीवे न संभवति; एकस्य चेतनस्य चेतनान्तरं प्रति शरीरत्वाभावात्। परमात्मनि तत् संभवत्येव; 'यस्याऽऽत्मा शरीरम्', 'यस्य पृथिवी शरीरम्' इति सर्वशरीरत्वश्रवणात्। तर्हि, 'अणीयान्' इत्यणुत्वकथनं कथमिवोच्यत इत्यत्राह–अणुत्वमिति। उपधिकृतम्=अवच्छेदकस्थानकृतमित्यर्थः। न केवलमल्पत्वकथनम्। 'ज्यायानेष पृथिव्याः' इत्यादिना ज्यायस्त्वमप्युच्यते। तेन ज्यायसि ब्रह्मण्युपाधिकृतमल्पत्वमुपासनार्थमेव। तदिदमाह सूत्रकारः–'निचाय्यत्वात्' इति। ध्येयत्वादित्यर्थः॥ ८५॥

इति सर्वत्रप्रसिद्ध्यधिकरणम्॥ १२॥

---

तत्पूर्वोत्तरवाक्यावगतधर्मबलाच्चेति पूर्वपक्षहेतून् उपन्यस्य निषेधति सर्वत्वमिति। कर्मभिः स्वैरित्यनेन जीवस्य तज्जेत्युक्तजन्महेतुत्वं कथमिति शंका निरस्ता। तत्कर्मजत्वमेव तज्जत्वम्। एकैकजडेऽपि एकैकजीवसत्त्वात् सर्वशब्देन सर्वजीवग्रहणात् जीवे सर्वत्वम्। जनिमति=उत्पत्तिमति जीवे। अत्र घटत इत्यनेन जीवलिंगस्यास्पष्टता द्योत्यते। जीव एव घटते, न ब्रह्मणीति वा। अपरे च। पर इवापरे निकृष्टेऽपि। अल्पस्थानः। आत्मा हृदि इत्यल्पस्थानकः। अणीयान् व्रीहेर्वेति अल्पपरिमाणः। सर्वरसः सर्वमिदमभ्यात्तः इति सुगन्धदुर्गन्धादिसर्वानुभवकथनात् सुखदुःखभुक्त्वम्; उत्तरार्धोक्तं जीवत्वसाधकम्। पूर्वार्धेन बाधकपरिहारः क्रियते। तथाच अल्पस्थानः अल्पमानः सुखदुःखभुक् च भवन्नयं सर्वत्वतज्जत्वब्रह्मत्वानां घटमानत्वेन बाधकरहितत्वात् जीव एवेति शंका। तज्जत्वतल्लत्वतदनत्वानाम् इतिशब्देन हेतुतयोपादानात् पूर्वं ज्ञातत्वाभावे हेतुत्वायोगात् कुत्र ज्ञातमिति विमर्शे प्रसिद्धसर्वकारणवाक्यज्ञातत्वमेव ग्राह्यमिति स्थिते तत्र ब्रह्मजत्वादेरेवोक्तेः जीवजत्वाद्यनुक्तेः तच्छब्दो मुख्यब्रह्मपर इति ब्रह्मशब्दोऽपि तत्पर एव स्वीकर्तव्यः। मनोमयत्वप्राणशरीरत्वादिगुणाः जीवे वर्ण्यमानरीतिभिन्नरीत्योपपादने ब्रह्मण्येव भवन्ति। तत्र हि ताः गुणभिदाः गुणविशेषाः दृश्यन्ते। उपाद्ये शुद्धे जीवे मनोमयत्वादेरयोगात् मनोग्राह्यत्वाद्यर्थ एव वाच्य इति ब्रह्मण्येव तत्स्वारस्यम्। सर्वत्वमपि तत्रैव स्वरसम्। सर्वशब्देन सर्वजीवग्रहणे ब्रह्मशब्देन च जीवोक्तौ एकैकजीवेऽपि स्वात्मकैकजीवैक्यमेव स्यात्; न तु स्वेतरसर्वजीवैक्यम्, तच्छरीरकत्वं वा। परब्रह्मणि तु सर्वजीवशरीरकत्वादैक्यं स्वरसम्। तथा मे आत्मा, एतमभिसंभवितास्मीति भेदोक्तिस्वारस्यमपि। अयम् आदिपदार्थः। तस्मादपि हेतोर्नेति पूर्वेणान्वयः। अल्पमानत्वादि निर्वहति अणुत्वमिति। उपधिः विशेषणं परिच्छेदकं हृदयम्। स्वाभाविकमेव किं न स्यात्; अतो जीव एवेत्यत्रोक्तं ज्यायसीति। ज्यायान् पृथिव्याः....ज्यायानेभ्यो

॥ अथ अत्त्रधिकरणम् ॥ १-२-२.

सूत्रम्—अत्ता चराचरग्रहणात् ॥ प्रकरणाच्च ॥ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ विशेषणाच्च ॥ ९—१२.

(८६) अत्ता खल्वोदनादेर्भवभृदि(भुगि)ति कठश्रुत्यधीतोऽप्यसौ स्यात्
न स्यान्मृत्यूपसिक्तस्थिरचरनिखिलग्रासतस्त(ग्रासतत्त)ल्लयोक्तेः ।
जीवव्यावर्तनं च प्रकरणविदितं भोक्तृतोक्तिर्द्वयोस्तु
प्रेर्यत्वप्रेरकत्वप्रतिनियतरसाच्छत्रिनीत्याऽथवा स्यात् ॥ ८ ॥

अत्राधिकरणसंगतिर्भाष्य एव सुव्यक्तमुच्यते—'संभोगप्राप्तिरिति चेन्न वैशेष्यात्' इत्यत्र भगवतः सर्वान्तर्यामित्वेनावस्थितस्यापि भोक्तृत्वं नास्तीत्युक्तम्। तर्हि 'यस्य ब्रह्म च क्षत्रं च' इत्यत्र भोक्तृत्वेन प्रतिपन्नः परमपुरुषो न स्यादिति पूर्वपक्षोत्थानेन संगतिः [रिति?]। अपि च पूर्वाधिकरणे हृदयरूपाल्पस्थानवर्तित्वेन परमपुरुषश्चिन्त्य उक्तः; अत्र, 'गुहां प्रविष्टौ' इति हृदयगुहान्तर्वर्ती परमपुरुष एव चिन्त्यतयोच्यत इति भावः। कठवल्ल्यां भोक्तृत्वेनोपदिष्टः किं जीवः, उत परमात्मा तदर्थं विचार्यते—अत्रौदनोपसेचनसूचितमत्तृत्वं किं कर्माधीनभक्षणम्, उत सर्वसंहर्तृत्वमात्रेण।

लोकेभ्य इति ज्यायस्त्वं जीवासंभावितमत्र स्वाभाविकत्वेनोच्यते। अतो विरोधादणीयस्त्वमौपाधिकम् ॥ अल्पमानत्वाणीयस्त्वयोः सिद्धान्ते कथं भेद इति चेत्—हृदयपरिच्छिन्नत्वादल्पस्थानकत्वम्, अणुजीवान्तर्यामितयाऽणीयस्त्वमिति ॥ ८५ ॥

८. संगतिमपि सूचयन् पूर्वपक्षं प्रथमेन पादेनाऽऽह अत्तेति। 'यस्य ब्रह्म च क्षत्रञ्चोभे भवत ओदनः मृत्युर्यस्योपसेचनम्' इति वाक्ये, यस्यौदनः इति षष्ठ्याः अदनकर्तृकर्मभावरूपसंबन्धपरत्वमेव स्वरसम्। उपसेचनापेक्षाप्रदर्शनाच्चैवम्। पूर्वाधिकरणे संभोगप्राप्तिरिति सूत्रे भोक्तृत्वं जीवासाधारणमिति सिद्धान्तिनैव स्वीकृतम्। ओदनादेरत्ता खलु सुतरां भवभृत् जीव एव भवितुमर्हति। अतः कठश्रुत्यधीत ओदनोपसेचनयोरत्ता असौ भवभृदेव स्यादिति चेत्—न स्यात्। न ह्यत्ता प्रतीयमानः वस्तुतो भोक्ता भवति। ब्रह्मक्षत्रयोर्हि ओदनत्वमारोपितम्; मृत्यौ चोपसेचनत्वमारोपितम्। तद्वत् अत्तृत्वमप्यारोपितं मृत्युमूलकब्रह्मक्षत्रकर्मकक्रियाकर्तरीति ज्ञायते। सा च क्रिया संहरणरूपैवेति संहर्तरि अत्तृत्वारोपः। मृत्योरेवोपसेचनत्वकथनात् यावत् मृत्युद्वारा संहार्यम्, तावदत्र ब्रह्मादिशब्दोपलक्षितमिति मृत्युना वध्यादिरूपेणोपसिक्तं=अदनार्हत्वमापादितं यत् स्थिरं चरञ्चेति निखिलम्, समृत्युतद्ग्रसनात् गम्यमानात् तल्लयस्यैवात्रोक्तत्वात्। ननु ओदनादौ भोज्यत्वरूपसंबन्धस्यान्तरङ्गस्य त्यागेन संहार्यत्वरूपबहिरङ्गार्थग्रहणमयुक्तमिति चेन्न—अन्तरङ्गार्थत्यागाभावात्। संहारे तदारोपात्। इदं ग्रासपदेन ज्ञापयति। सूत्रकारेण च संहर्तेत्यनुक्त्वा अत्तेत्येव प्रयुक्तम्, एवमत्तृत्वेन रूपितः कः इति चिन्तायां संहर्तेति लभ्यत इति। अतः संहर्तुरेवैषा वर्णनवैखरी, बृहदारण्यकोपक्रम इव। सूत्रादौ अचेतनत्यागेन चेतनमात्रग्रहणं कुतः; सर्वस्यापि संहार्यत्वादिति चेत्—चेतनसंहार एव मृत्योरुपयोगात् तावदुक्तिः। चराचरेत्यत्र विशेषणतया चाचेतनं प्रविष्टमेव। समष्टिघटितसर्वप्रलयात्मकमहाप्रलयाविवक्षया तथोक्तिरपि युज्यते। अनेन

तदर्थमपि विचार्यते—किमस्मिन् प्रकरणे विश्वजगत्संहर्तृत्वरूपपरमपुरुषत्वनियामकानि श्रुतिलिङ्गादीनि न विद्यन्ते, उत विद्यन्ते इति(त्यादि)। अत्रायं पूर्वपक्षी मन्यते—लोके खलु ओदनादेरत्ता भवभृत् जीव एवेति, कठश्रुतौ, 'यस्य ब्रह्म च क्षत्रं च' इत्युक्तोऽत्ता स एव स्यादिति। तत् प्रतिक्षिपति— न स्यादिति। हेतुमाह—मृत्यूपसिक्तेति। अत्र हि साक्षादत्ता नोच्यते; अपितु मृत्यूपसिक्तजङ्गमाजङ्गमसंहारक एव। तेन परमात्मैवात्ता। किंचैतस्मिन् प्रकरणे जीवव्यावर्तनं सुस्पष्टं विदितम्। ननु यदि परमात्मनो भोक्तृत्वं नास्ति, कथम्, 'ऋतं पिबन्तौ' इति जीवपरमात्मनोर्द्वयोरपि भोक्तृत्वमुच्यत इत्याशङ्क्य परिहरति—प्रेर्यत्वेति। प्रेर्यत्वप्रेरकत्वप्रतिनियतरसा[त्] (परिहरति प्रेर्यत्वप्रेरकत्वप्रतिनियतरसादिति।)—जीवो हि परमात्मप्रेर्यः कर्मफलं भुङ्क्ते। तेन जीवो रसिकः, परमात्मा तु जीवस्य प्रेरकत्वेन(?)...व्यपदिश्यत इत्यर्थः॥ ८६॥

---

चेतनानां सर्वेषां समृत्युकानां गृहीतत्वात् नात्र जीवोऽत्ता भवितुमर्हतीति सूचनमपि जीवनिर्देशेन। दुर्लभश्च समृत्युसर्वब्रह्मक्षत्रभोक्ता कश्चिज्जीवः। तत्रात्तृत्वमौपचारिकम्, बाधकत्वमात्रेणेति चेत्—वरमप्रसिद्धतदपेक्षया संहर्तृत्वरूपार्थग्रहणमिति। प्रकरणाच्चेति सूत्रार्थमाह जीवेति। "महान्तं विभुमात्मानं मत्वा धीरो न शोचति", "नायमात्मा"-इति परमात्मन एवेदं प्रकरणम्। तदनुगुणतयाऽत्रापि चतुर्थपादे, 'क इत्था वेद यत्र सः' इति यादृशवैभवे सोऽस्ति, तथारूपं तं को वेदेति स एव प्रशस्यते इति स एवात्ता। ननु पूर्वं तत्प्रकरणसत्त्वेऽपि अनन्तरम्, 'ऋतं पिबन्तौ सुकृतस्य लोके' इति सम्यक् कृतस्य कर्मणः अवश्यम्भाविफलभोक्तृत्वं द्वयोरुच्यते; कथमभोक्तुरत्र ग्रहणमित्यत्र तृतीयसूत्रार्थमाह भोक्तृतेति। द्वयोः जीवपरयोर्मध्ये एकस्य पाने प्रेर्यत्वात् अपरस्य च प्रेरकत्वात् लोके भोजनादौ प्रेर्यस्य यादृशरसानुभवः, यश्च प्रेरकस्य रसोऽनुभूयमानः, प्रेर्यत्वप्रेरकत्वाभ्यां सह प्रत्येकं व्यवस्थितौ तौ रसौ अनया भोक्तृतोक्त्या प्रकाश्येते। जीवस्य कर्मफलानुभवरसः; भगवतश्च लीलारसः। "पिबन्त्येनां....कुमारकाः। एकस्तु पिबते तेषां स्वच्छन्दोऽत्र वशानुगाम्" इति मन्त्रिकोपनिषदि ब्रह्मणोऽपि रसलाभोक्तेः। प्रतिनियतरसेत्यत्र सप्तमीबहुव्रीहिः। रसाच्छत्रीति संधौ रसादिति पञ्चम्यन्ततयाऽपि पदविभागः स्यात्। तदा प्रतिनियतात् रसादिति तत्पुरुषः। रसादिति इत्येव चिन्तामणितालकोशे प्रतीकधारणम्। रसश्च तत्तत्र भिन्न एव। एवं पानं प्रति साक्षात्कर्तृत्वं तत्प्रयोजककर्तृत्वञ्च विवक्षितमित्युक्तम्। एकमात्रे कर्तृत्वं स्वीकृत्याप्याह छत्रीति। यथा छत्रि-अच्छत्रिरूपद्विविधपुरुषाः, 'छत्रिणो यान्ति' इत्यत्र गृह्यन्ते; छत्रिघटितसमुदायाघटकाः इत्यर्थविवक्षया च बहुवचनम्—तथा पिबदपिबदुभयघटितसमुदायघटकौ पिबत्पदार्थौ; तत्र द्वित्वान्वयः इति। पातृतोक्तिरित्यप्रयुज्य भोक्तृतोक्तिरिति प्रयोगः 'ऋतपानं हि कर्मफलभोग एव' इति भाष्यानुसारात्। ऋतस्य द्रवद्रव्यत्वनियमाभावात्। चिन्तामणौ अन्तिमवाक्ये किञ्चिदंशभ्रंशस्तर्क्यते; पूर्णविवरणाभावात् श्लोके रसशब्दः सारार्थपरश्चेत्, द्वयोर्द्विविधं कर्तृत्वम्। पिबन्तौ रसानुभाविनावित्युक्तौ एकरूपं कर्तृत्वम्। छत्रिन्याय पूर्वपक्षेऽपि॥ ८६॥

९. ननु ऋतं पिबन्तौ न जीवपरौ; पैङ्गिश्रुतिविरोधात् प्रक्रमविरोधाच्च। प्रक्रमे हि नचिकेताः 'येयंप्रेते' इति मरणानन्तरजीवसदसद्भावसंशयमेवाऽऽविश्चकार। अतो जीवप्रधानोऽयं संदर्भः। परस्य घटने तु तत्प्राधान्यमापतेदिति उपक्रमविरोधः स्यात्। पैङ्गिश्रुतौ च, 'द्वा सुपर्णा' इति मन्त्रोक्तौ द्वौ सत्त्व-

(८७) सत्त्वं स्वाद्वत्त्यनश्नन् ज्ञ इति विभजनात् पैङ्ग्यधीतं तु सत्त्वं
बुद्धिः प्राणोऽथवेति त्वृतमिह पिबतोर्जीव(तो जीव) एकस्तयोश्चेत्(श्च) ।
मैवं जन्तौ तु (च) सत्त्वश्रुतिरियमुचिता, कर्मभुङ् नाप्यनश्नन्,
तत्प्रश्नप्रक्रमोऽन्याशय इदमपिचाभाषि पूर्वापरार्थैः ॥ ९ ॥

इति अन्त्र्यधिकरणम् ॥ १३ ॥

ननु, 'द्वा सुपर्णा' इत्यस्य वाक्यस्य व्याख्यानरूपायां पैङ्गिश्रुतौ, 'तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वम्' इति पूर्वांशस्यान्तःकरणपरत्वम्, 'अनश्नन्नन्योऽभिचाकशीतीति ज्ञः' इत्युत्तरांशस्य जीवपरत्वं चोक्तम्। तावेतौ सत्त्वक्षेत्रज्ञाविति तत्रैव निर्णीतम्। तत् कथं द्वासुपर्णा इति वाक्ये जीवपरमात्मपरत्वमुच्यत इत्याशङ्कते—सत्त्वमिति । निराकरोति—मैवमिति । विवृणोति—जन्ताविति। सत्त्वशब्दसामर्थ्यात् खलु भवताऽन्तःकरणपरत्वमुच्यते। स तु सत्त्वशब्दो जीवेऽपि प्रयुज्यते, 'सत्त्वमस्त्री तु जन्तुषु' इति। अतोऽयं सत्त्वशब्दो जीवपर इत्यर्थः। 'अनश्नन्नन्यो अभिचाकशीति' इति जीव एवोच्यत इति च भवतोक्तम्; तदपि [च] न घटते; कर्मभुक्=जीवो ह्यनश्नन्निति नैव वक्तुं शक्यते इत्याह—कर्मभुगिति। अथापि प्रश्नोपक्रमे किञ्चिदानुकूल्यमस्तीत्याशङ्क्याह तदिति। महावाक्यस्यायमर्थ इति निर्णये सति उपक्रमे तद्विपरीतं यदि किंचित् प्रतिपन्नम्, तत्

क्षेत्रज्ञाविति विवृतम्। तन्नन्तुरयार्थत्वमेवास्यापि युक्तम्। तच्छ्रुतिवाक्यं तावत्, "तयोरन्यः पिप्पलं स्वाद्वत्ति इति सत्त्वम्। अनश्नन्नन्योऽभिचाकशीति इति ज्ञः। तावेतौ सत्त्वक्षेत्रज्ञौ" इति। इमां शंकां श्रुत्यर्थविवरणेन पूर्वार्धेन दर्शयति सत्त्वमिति। स्वाद्वत्ति सत्त्वम्, अनश्नन् ज्ञः इति श्रौतपदप्रदर्शनम्। अनेन विभजनेन जीवपरौ न ग्राह्याविति कथं ज्ञायते; सत्त्वशब्दस्य जन्तुपरतया ज्ञशब्दस्य सर्वज्ञपरतया च अविरोधादित्याशंकायां तथा श्रुत्यर्थायोगं दर्शयति पैङ्गीति। तत्र सत्त्वक्षेत्रज्ञाविति निगमनात् ज्ञशब्दार्थो जीव इति सिद्ध्या सत्त्वपदार्थस्तु पैङ्गिश्रुतः अध्यवसायात्मकबुद्धिर्वा प्राणवायुर्वा स्यात्। 'द्रव्यासुव्यवसायेषु सत्त्वम् अस्त्री तु जन्तुषु' इति कोशात् असुव्यवसायान्यतरग्रहणसंभवात्। निगमयति इति त्वित्यादिना। पिबतोर्जीव एकस्तयोश्चेदिति पाठे इति=उक्तहेतोः तयोः=पैङ्गिश्रुतयोः परमात्मभिन्नयोर्द्वयोः सत्त्वज्ञयोः। तदभिन्नयोरिति यावत्। पिबतोरिति विशेष्यम्। इमौ पिबन्ताविति विशिष्य ग्रहणं न कार्यम्। तदभिन्नयोः इह कठोक्तयोः ऋतंपिबतोर्मध्ये जीवः एकः=प्रधानभूत इति चेदित्यर्थः। अन्यो न परमात्मेत्यर्थसिद्धम्। इह यौ ऋतं पिबन्तौ तदभिन्नयोः तयोः पैङ्गिश्रुतयोः सत्त्वज्ञयोर्मध्ये एकः जीवः; न तु सर्वज्ञः। जीवस्य मन्त्रद्वयेऽप्यवश्यवक्तव्यत्वादिति वाऽर्थः। चेदित्यत्र चेति पाठे पिबतोरिति सप्तम्यर्थो घटकत्वम्। तयोरित्यस्य एक इत्यत्रान्वयः। असुव्यवसाययोरेक इत्यर्थः। जीवः तयोरेकश्च पिबद्घटकावित्युक्तं भवति। पिबतो जीव इति आन्ध्रलिपिमुद्रणम्। पश्चात् पिबतोर्जीव इति शोधितम्। स्थितमेव सम्यक्; जीवः तयोः बुद्धिप्राणयोरेकश्च ऋतं पिबत इत्यर्थवर्णनसौकर्यादित्याशेरते। चिन्तामणितालकोशे तु पिबतो जीव एकस्तयोश्चेत् इति तिङन्त पाठ इत्यलम्। इदं निरस्यति मैवमिति। अनश्नन् ज्ञ इत्युक्तत्वात् पिबतोऽश्नतश्च जीवस्यानश्नत्त्वायोगात् परमात्मन

अभिप्रायविशेषेण महावाक्यानुकूलतया समाधेयमित्यर्थः। तर्हि सर्वमिदं भवदीयभाष्यकारैः किमर्थं नोक्तमित्याशङ्क्याह—इदमपि चेति। प्रधानवाक्यार्थकथने पूर्वापरवाक्यादिभिरवधेयमर्थजातं स्वयमेव कथितं भवतीत्यर्थः। अयमाशयः—'द्वा सुपर्णा' इत्यत्र वाक्ये, 'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः। जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः॥' इत्यनेन, 'द्वा सुपर्णा' इति मन्त्रस्य जीवपरमात्मानावेव विषय इति निर्णीयते। तेन निर्णीतस्यार्थस्य सन्दिग्धपैङ्गिश्रुत्यपेक्षैव नास्ति। अपेक्षायामपि जीवपरमात्मपरत्वेन तद्वाक्यमपि आत्म(जीवात्म)-परतया वर्णितमेव। तस्मात्, 'द्वा सुपर्णा' इति जीवपरमात्मानावेवोच्येते इति सिद्धम्। विस्तरस्तु आचार्यव्याख्याने द्रष्टव्यः। क्षेत्रज्ञशब्दस्य 'क्षेत्रज्ञं चापि मां विद्धि' इति भगवतैव परमात्मपरत्वं स्फुटतममेवोक्तमिति तत्रापि समाधेयं न किञ्चिदवशिष्यते। भगवतः सर्वक्षेत्रज्ञान्तर्यामित्वात्; विश्वशरीरत्वेन परमक्षेत्रज्ञत्वाच्च ॥ ८७ ॥

---

एव ज्ञशब्दार्थत्वे उपसंहारगतं क्षेत्रज्ञपदं परमात्मपरमेव भवितुमर्हति। क्षेत्रज्ञपदं परमात्मपरतया बहुशः प्रयुक्तमिति साधारणश्च। सत्त्वपदमेव प्रयुक्तं श्रुतौ; न तु तदर्थ उक्तः। जन्तुपरत्वस्यापि कोशावगतत्वात् जीव एव सत्त्वम्। अतो न श्रुतिविरोधः। प्रक्रमविरोधं परिहरति तत्प्रश्नेति। प्रक्रमे नचिकेतःप्रश्नो न केवलमृतजीवविषयः; नचिकेतसो मृत्युलोके मृतजीवप्राप्तेर्दृश्यमानत्वेन नास्तित्वसंदेहायोगात्। किंतु संसारात्परं जीवस्वरूपशोधनविषयः। अतो मोक्षतत्त्वप्रश्नोऽयम्। तस्य तदाशयत्वं पूर्वापराभ्यां। पूर्वं वरद्वयप्रश्नम् अपरं तंदुर्दर्शमित्यादिकम्, आद्यपदेन प्रेते इति पदवास्तवार्थशीलनमुच्यते इति तच्च पुरस्कृत्य विस्तृतमेवेत्यर्थः। इदमपि—अन्याशयत्वमपि। अपिशब्देन गुहांप्रविष्टावित्यादि-सूत्रद्वयार्थोऽपि पूर्वापराभ्यामभाषीत्युच्यते। सूत्रकृतोऽप्येतदाक्षेपखण्डनमभिमतमिति भावः। अयमाशयः-परमात्मनो गुहाप्रवेशः पूर्वत्र, 'गुहाहितं गह्वरेष्ठम्' इति श्रुतः। जीवस्य चापरत्र, 'या प्राणेन....गुहां प्रविश्य तिष्ठन्ती' इति। मध्ये चात्र मन्त्रे गुहांप्रविष्टाविति द्वित्वेन निर्देशः। अत आत्मानावेव ऋतं पिबन्तौ। चकारेण, विशेषणाच्चेति सूत्रेण जीवपरयोरेवोपास्यत्वोपासकत्व-प्राप्यत्वप्राप्तृत्वादिरूपेणाऽऽमूलाग्रमत्र प्रस्तावात् तयोर्द्वयोरेव मुख्ययोर्द्वित्वेन ग्रहणसंभवे उपकरणादिना सद्वितीयत्वमुपेक्ष्यमित्युक्तं गृहीतं भवति। बुद्धिप्राणान्यतरग्रहणशंकापरिहारार्थमेव सूत्रकारेणैवमुक्तत्वात् पैङ्गिश्रुत्यैकरस्यकामनया स्वश्रुतिविरोधं को नु अनुमन्येतेति ज्ञाप्यते। यदा तु पूर्वापरानुगुण्येनात्र निर्णीतमात्मपरमात्मविषयकत्वमेव तत्रापि भविष्यति, तदाऽनुत्थानहत एव प्रश्नः। वक्ष्यति च, "स्थित्यदनाभ्यां च" (1-3. 6.) इति सूत्रे द्वासुपर्णा इति मन्त्रस्यापि जीवपरविषयकत्वम्। तेन पैङ्गिश्रुतिं तदविरोधेन संपन्नार्थामाशेते इति॥

चि. टी. अन्तःकरणपरत्वमिति। अन्तःकरणं बुद्धिः। उपलक्षणमिदं प्राणस्यापि। प्रश्नोपक्रमे किञ्चिदानुकूल्यमिति। येयंप्रेतेविचिकित्सेति जीवप्राधान्येन प्रश्नात् प्रकरणं जीवपर-मित्याशयः। समाधेयमिति। प्रतिवचनानुसारेण प्रश्नार्थो निर्धारणीयः। अन्यथा हि आम्रान् पृष्टः कोविदारान् आचष्टे इति स्यात्। महावाक्यपदेन पूर्वाविरोधेनापि प्रश्नार्थो वक्तव्य इति गमयति। जीवात्मपरतयेत्यत्र आत्मपरतयेति तालपाठः शुद्धः। प्राणादिपरत्वं विहाय आत्म[द्वय]मात्रपर-तयेत्यर्थः। आचार्यव्याख्याने इति अधिकरणदर्पणग्रन्थोऽभिप्रेतः स्यात्॥ ८७ ॥

१४ ॥ अथ अन्तराधिकरणम् १-२-३. ॥

सूत्रम् ॥ अन्तर उपपत्तेः ॥ स्थानादिव्यपदेशाच्च ॥ सुखविशिष्टाभिधानादेव च ॥ अत एव च स ब्रह्म ॥ श्रुतोपनिषत्कगत्यभिधानाच्च ॥ अनवस्थितेरसम्भवाच्च नेतरः ॥ १३-१८ ॥

(८८) यद्वृत्तादेः 'य एषोऽक्षिणि पुरुष' इति श्रूयमाणोऽस्तु(णस्तु) जीवो
यद्वाऽक्ष्णो दे(दै)वताऽर्कः प्रतिकृतिरथवा तत्र दृश्येति चेन्न ।
एतद्ब्रह्मैतदेवामृतमभयमिदं कंखमित्याद्यधीतेः
संयद्वामत्वमुख्यैः स्थितिनियतिबलादर्चिराद्युक्तितश्च ॥ १० ॥

पूर्वाधिकरणेऽप्युपासकस्य हृदयगुहान्तर्वर्ती परमात्मा निरूपितः, इदानीमुपासकस्य चक्षुर्वर्ती परमपुरुषो निरूप्यत इति संगतिः। तदर्थविचारस्तु—किमक्ष्यन्तर्वर्तितया निर्दिश्यमानः प्रतिबिम्ब-चक्षुरधिष्ठातृ-जीवानामन्यतमः, उत परमात्मेति। किममृतत्वादयो यथाकथञ्चिन्नेयाः, उत मुख्यतया नेया इति। किम्, 'कं ब्रह्म खं ब्रह्म' इति प्रकृतस्य सुखविशिष्टस्य ब्रह्मण उपासनस्थान-विधानार्थं संयद्वामत्वादिगुणविधानार्थञ्च अन्तरक्षिणीति निर्देशः, उत नेति। किं मध्यस्थाग्निविद्यया ब्रह्मप्रकरणविच्छेदोऽस्ति, नेति। किमग्निविद्या ब्रह्मविद्याङ्गं, नेति। किमग्निविद्याफलं ब्रह्मविद्याङ्गत्वा-नुगुणं, नेति। अत्रायं पूर्वः पक्षः—'य एषोऽक्षिणि पुरुषो दृश्यते' इति प्रसिद्धवन्निर्देशरूप-यच्छब्दादेः प्रतीयमानः पुरुषो जीवोऽस्तु, यद्वा चक्षुर्देवतात्वेन श्रूयमाणः सूर्यः, अथवा चक्षुषि दृश्यमाना प्रतिकृतिरेवास्त्विति। निराकरोति—नेति। कुत इत्यत्र श्रूयमाणपरमपुरुषासाधारण-गुणानुपपत्तिं हेतुमाह—एतदिति। एतद्ब्रह्मेति ब्रह्मत्वम्। एतदमृतमिति अमृतत्वम्। इदमभयमिति अभयत्वम्। खमिति आकाशवद्विपुलत्वम्। कमिति सुखरूपत्वम्। संयदिति अनुकूलत्वम्। (रूपत्वम्–अनुकूलत्वम्। संयदिति।?) अन्यैश्च तादृशैः परमपुरुषलिङ्गैः—स्थितिनियतिबलात् 'दृश्यते'

---

१०. अतुर्ब्रह्मत्वं ब्रह्मप्रकरणाविच्छेदादित्युक्तम्; अक्षिपुरुषस्थलेऽप्यविच्छेदः प्रदर्श्यते। अग्निविद्योपदेशपूर्वकनाचिकेतब्रह्मविद्योपदेशो विचारितः। अथाग्निविद्यागर्भब्रह्मविद्योपदेशो विचार्यते। ओदनवाक्यस्य जीवपरत्वायोगेऽपि इदं वाक्यं जीवपरं स्यादिति शंकयोत्थानमिति ज्ञापनार्थं जीवकोटिं प्रथममुल्लिखन् पूर्वपक्षं पूर्वार्धेनाऽऽह यदिति। उपकोसलविद्यायाम्, 'य एषोक्षिणि पुरुषो दृश्यते, एष आत्मेति होवाच' इति वाक्ये यद्वृत्त-दृश्यतेपद-आत्मपदस्वारस्यात् जीवात्मपरत्वं युक्तम्। यद्वृत्तेत्यस्य यत्पदेत्यर्थः। प्रसिद्धं हि यत्पदेनानूद्यते; न त्वप्रसिद्धः परमात्मा। चक्षुरुन्मीलनादित इव मुखव्यादा-नादितोऽपि जीवगतिनिश्चयात् विशिष्याक्षिनिर्देशः अक्षिमात्रसंबन्धिवस्तुग्राहक इति आदित्यदेवतापर-त्वमाह यद्वेति। पुरुषपद-दृश्यतेपदयोः स्वारस्यातिशयात् प्रतिबिम्बपक्षमाह प्रतिकृतिरिति। भाष्ये संशयोल्लेखे पूर्वपक्षोपन्यासे चैकक्रमाभावात् एषामेवान्यतम इति सर्वग्रहणेनोपसंहाराच्च स्वोक्तक्रमविशेषे नैर्भर्यं नेति ज्ञायते। अतोऽत्र प्रथमं प्रमाणेषु त्रिषु दुर्बलतमानुमानगम्यं जीवम्, ततः प्रबलागमगम्यमनन्तरम्, प्रबलतमप्रत्यक्षगम्यञ्च पश्चात् निरदिक्षत्। शेषं भाष्यार्थदर्पणे। अमृताभय-शब्दापेक्षया ब्रह्मशब्दस्यैव जीवपक्षनिरसनसामर्थ्यात् प्रथमम् एतद् ब्रह्मेत्युक्तम्। हेयप्रत्यनीकत्वादिवत् आनन्दरूपत्वस्यापि स्वरूपनिरूपकधर्मानुप्रवेशात् कंखंब्रह्मेति उपक्रमवाक्यमथोपात्तम्। अथ निरूपित-

इति वर्तमाननिर्देशेन चक्षुष्यवस्थाननियतत्वम्—[तस्मात् ?], ब्रह्मनिष्ठानामेवासाधारण्येन प्रतिपाद्यमानार्चिरादिमार्गगमनस्यात्रोपदेशाच्च परमपुरुष एवायमक्ष्यन्तरः पुरुष इति निर्णीयते ॥ ८८ ॥

(८९) स्वातन्त्र्योत्तंसितासु श्रुतिषु न फलदस्यैव वेद्यत्ववादः
कल्याणालोकनादेरिव विधिबलतो वेदनस्यार्थवत्त्वात् ।
तस्मादक्ष्यन्तरस्थः प्रतिकृतिपुरुषो युज्यते पूर्वपक्षे
सेयं पूर्वापरास्वप्यधिकृतिषु यथासंभवं नीतिरूह्या ॥ ११ ॥

अत्र कश्चिच्चोदयति—इह खलु मोक्षार्थमुपास्य एव चक्षुषि प्रतिपाद्यते। चक्षुषि दृश्यमानः प्रतिकृतिपुरुषः स्वयं फलप्रदो न भवति। अफलप्रदस्य कथमुपास्यत्वमिति। अस्योत्तरमाह–स्वातन्त्र्येति। अयमत्राशयः–श्रुत्युक्तार्थे यथाश्रुति विश्वास एव करणीयः। दर्पणदर्शनात् मङ्गलम्, पाषण्डिदर्शनात् अमङ्गलमिति श्रुत्योच्यते। तत्र किं नियामकम्? श्रुतिस्वातन्त्र्यमेव। तथा ज्योतिष्टोमादिकं धर्मः, ब्रह्महत्यादिकमधर्म इति चोच्यते। [एवं] सर्वत्र धर्माधर्मेषु श्रुतिस्वातन्त्र्यमेव पुरस्कुर्महे; न पुनः कामपि युक्तिम्। एवमत्रापि मिथ्याभूत[:?]प्रतिबिम्बोऽस्तु; तद्दर्शनमेव फलं यच्छति। यथा मिथ्यात्वेऽपि दर्पणस्थस्वात्मप्रतिबिम्बदर्शनात् मङ्गलावाप्तिः [इति], एवमक्षिपुरुषस्यैवोपास्यत्वे तदुपासनात् मङ्गलावाप्तिरिति सुसंगतमेतत् [इति]। अयमर्थः—स्वातन्त्र्यमेव श्रुतेः स्वाभाव्यम्। स्वातन्त्र्यारूढासु श्रुतिषु, 'फलदस्यैव वेद्यत्वम्' इति व्यवहारनियमो नास्ति। अफलदस्यापि वेद्यत्वमस्तीति। अत्र

---

स्वरूपविशेषणभूतान् गुणान् आह संयदिति। संयन्तः संमिलन्तः वामाः कल्याणगुणा अत्रेति संयद्वामत्वम्। आदिना वामनीत्व-भामनित्वादिग्रहः। एवम्भूतस्य यत्र देशे उपासनं तत्र स्थितिनैयत्यं दर्शयति स्थितीति। फलनिर्देशविशेषतोऽपि ब्रह्मपरत्वमाह अर्चिरिति। प्रायः सूत्राणामर्थ उक्त एव। शिष्टमेकान्तरिते श्लोके वक्ष्यति ॥ ८८ ॥

११. दुर्बलस्य प्रतिकृतिपक्षस्यान्ते निवेशः पक्षान्तरापेक्षयाऽत्र दौर्बल्यमतिव्यवच्छेदायैवेत्याशयेनाह स्वातन्त्र्येति। ननु प्रतिबिम्बस्यावस्तुनः फलप्रदत्वरहितस्यैतद्विद्यावेद्यत्वोक्तिर्न युज्यते। एवंस्थिते तस्यान्ते परिशेषणं सर्वथा न साम्प्रतमित्यत्र पूर्वपक्ष्याशयं विवृणोति स्वातन्त्र्येति। स्वातन्त्र्यं तावत् श्रुतीः स्वशिरोभूषणतया स्वीकरोति। अतस्तेनोत्तंसिताः तदारूढाः श्रुतयः। स्वातन्त्र्येण संजातोत्तंसानामिति वाऽर्थः। इतच्। तासां नियोगपर्यनुयोगानर्हाणां शासनं यथाप्रतीतमनुवर्तनीयम्। अयं धर्मः अयमधर्मः, इदमेतस्मै फलायेति सर्वाऽपि व्यवस्था यथाश्रुति स्वीकर्तव्या। भवता च प्रतिबिम्बपक्षनिषेधः किं तस्य फलप्रदत्वाभावादुच्यते, अवस्तुत्वाद्वा। नाद्यः; फलप्रदमेव वेद्यमिति नियमस्य श्रुतावदर्शनात्। प्राणोद्गीथाद्यचेतनोपासनान्यपि विधीयन्ते। स्वात्मोपासनमपि फलार्थं विहितम्। उपासनातिरिक्तमपि वेदनं वस्तुतत्त्वविषयकं प्रकृत्यात्मविवेकादिरूपं निःश्रेयसहेतुपर्वणि निक्षिप्यते। तत्र सर्वत्र फलप्रदः शासिता परमात्मा भवतु। अफलप्रदमपि वेद्यमिति। नान्त्यः; प्रतिबिम्बस्य चाक्षुषरश्मिप्रतिहतिकृत बिम्बग्रहणानुविधायिनो वस्तुतो दर्पणाद्याभावस्यैव मीमांसकाद्युक्ततया वस्तुत्वाभावेऽपि प्रकृतविधिबलात् फलोपपत्तेः। अवस्तुनः कथं हेतुत्वमिति चेत्—न हि तस्य हेतुत्वम्; किंतु तद्वेदनस्य। तत्तु वस्त्वेव।

दृष्टान्तमाह—कल्याणेति । कल्याणवस्त्ववलोकनादेरिव शास्त्रबलतस्तत्तद्वस्त्ववलोकनस्यैव फलदत्वात् । न पुनर्वेद्यस्य । न ह्याज्यपण्यस्त्रीकपिलादिकम्, अवलोकयितुः फलं ददाति; अपितु तत्तदवलोकनमेव । एतदाह तस्मादिति—एवं युक्तियुक्तत्वात् । अक्ष्यन्तरस्थः प्रतिकृतिपुरुषो ध्येयतया पूर्वपक्षिणा कल्पयितुं युज्यत इति । एवं समाधानपरिपाटी, न केवलमस्मिन्नेवाधिकरणे सर्वेष्वधिकरणेष्वयोग्यार्थपरिकल्पनायां यथासंभवं परिहारत्वेन कल्पनीयेत्याह—सेयमिति ॥ ८९ ॥

(९०) पूर्वन्यायेऽग्निविद्या पुरत उपनता मध्यतस्त्वत्र तस्मात्
तद्वन्न ब्रह्मविद्यानुगतिरिति भवेदक्षिविद्या ततोऽन्या ।
मैवं, विच्छित्तिरङ्गैर्नहि भवति, मिता चाङ्गताऽनेकधाऽस्याः,
प्रोक्तं च ब्रह्मविद्यानुगुणमिह फलं, प्राक् च [तु] न ब्रह्मदृष्टिः ॥ १२ ॥

इत्यन्तराधिकरणम् ॥ १४ ॥

---

अर्थप्रदत्वस्यान्यनिष्ठत्वेऽपि यागादेरिवार्थवत्त्वं वेदनस्याक्षतम् । कल्याणस्य मङ्गलभूतस्य सुवर्णचन्दनदर्पणादेर्वस्तुतः सत्यत्वेऽपि दर्शनद्वारैवार्थवत्त्वम् । तदत्राप्यक्षतम् । अक्षिपुरुषो जीव इति पक्षेऽपि फलप्रदत्वाभावात् कथमुपास्यत्वमिति चोद्यं तदवस्थम् । आदित्यदेवतापक्षेऽपि तद्देवताया अशक्तौ विलये वा फलप्रदः पर एव वक्तव्यः । मोक्षरूपफलं चेत्, सर्वथा सा तत्र न कदापि प्रभवति । नन्ववस्तुज्ञानमतत्त्वज्ञानम्; ततः कथं मोक्ष इति चेत्—अवस्तुनो वस्तुत्वेन ग्रहणे किलातत्त्वज्ञानता । शशशृंगादिवैलक्षण्येन प्रतिकृतिशब्दार्थः कश्चिद्वक्तव्य इति न तज्ज्ञानमतत्त्वज्ञानम् । तस्याक्ष्यन्तस्थत्वञ्च अक्ष्णि दृश्यमानत्वमेव । दृश्यते इत्येव श्रुतौ प्रयोगात्; वर्तते इत्यनुक्तेः । ननु 'नान्यः पन्थाः' इति निषेधात् तत्क्रतुनयाच्च फलदस्य मोक्षार्थोपासनेषु वेद्यत्वमावश्यकमिति चेत्—अस्तु निष्कृष्टसिद्धान्ते तत् । पूर्वपक्षे तु जीवादितुल्यं प्रतिबिम्बग्रहणं भवत्येव । अफलप्रदविषयकवेदनेऽपि फलं भवतीति कृत्वैव पूर्वपक्षी मत्यधिकरणं परमात्मभिन्नस्य विषयवाक्यार्थतां पूर्वापराधिकरणेष्वाहेति सर्वत्रासदुक्त एव परिहारमार्ग इति यथाविषयं विवेक्तव्यम् ॥ ८९ ॥

१२. पूर्वश्लोकानुक्तकतिपयसूत्रार्थवैशद्याय पूर्वाधिकरणसंगत्यन्तरप्रदर्शनपूर्वकमाक्षेपसमाधाने श्लोकान्तरेणाऽऽह पूर्वेति । अयमाक्षेपः—कंखंब्रह्मेत्यधीत एवाक्षिपुरुष इति प्रथमश्लोकोक्तमयुक्तम्; तस्याग्निभिरुपदिष्टविद्याविषयत्वात् । अक्षिपुरुषस्य चाऽऽचार्योपदिष्टविद्याविषयत्वात् । न चोभयोरैक्यम्; अग्न्युपदिष्टाग्निविषयकविद्याया इवात्रापि भेदात् । न च अग्निविद्याप्रस्तावेऽपि कठश्रुतौ यथा महान्तं विभुमात्मानमिति वाक्ये ओदनवाक्ये चैकविद्यानुवृत्तिः, तथाऽत्राप्येकानुवृत्तिरस्तु इति शक्यम्; तत्र मृत्युना नचिकेतसे द्वितीयवरप्रदाने अग्निविद्योपदिष्टा, तृतीये तु पूर्णब्रह्मविद्येति, न तत्राग्निविद्या पूर्वोक्तवाक्यमध्ये विहिताऽस्ति; अत्र तु मध्यत एवाग्निविद्येति वैलक्षण्यात् । अतः पूर्वन्याये—पूर्वाधिकरणे विषयवाक्ये अग्निविद्या ब्रह्मविद्यातः प्रागेव स्थिता, अत्र तु मध्ये । अतः तद्वत्=कठोपनिषदि पूर्वोत्तरवाक्ययोरिवात्रैकब्रह्मविद्यानुवृत्तिर्न भवति । इति अतोऽक्षिविद्या ततः कखब्रह्मविद्यातोऽन्या । न चाग्नि-

पूर्वाधिकरणवैषम्येण पूर्वपक्षोत्थानोक्तिपूर्वकं पूर्वपक्षसिद्धान्तावारचयति—पूर्वेति। पूर्वाधिकरणविषयभूतायां कठवल्ल्यामग्निविद्याया ब्रह्मविद्यामपेक्ष्य पूर्वमेवोक्तत्वादग्निविद्यया ब्रह्मविद्याविच्छेदशङ्कावकाशो माऽस्तु; अत्र तु ब्रह्मविद्यामध्यपातित्वादग्निविद्याया विच्छेदकत्वमस्तु। तेन पूर्वं ब्रह्मविद्या, मध्येऽग्निविद्या, अन्ततो जीवप्रकृत्यादिविद्येति विद्याभेदोऽस्ति। अतः, 'य एषोऽक्षिणि' इति प्रतिपाद्यमानः पूर्वप्रतिपन्नब्रह्मणोऽन्य इति पूर्वः पक्षः। राद्धान्तमाह-मैवमिति। 'न हि स्वाङ्गं स्वव्यवधायकम्' इति न्यायानुसारेण पूर्वपक्षोक्तमर्थमन्यथयति-विच्छित्तिरिति। अग्निविद्याया ब्रह्मविद्याङ्गत्वादित्यर्थः। कथमङ्गत्वमित्यत्राह-मितेति। यद्यपि फलवत्सन्निधावफलं तदङ्गमिति न्यायो विद्यते, अथाप्यङ्गानामस्ति फलम्, तेषां प्रधानफलेनैव फलवत्त्वस्य तान्त्रिकैरेवोक्तत्वात्॥ अ(त)थापि फलान्तरं नास्तीति चेत्, तदप्यस्ति; अवान्तरापूर्वादेरङ्गफलत्वात्। न ह्यवान्तरापूर्वादिनाङ्ग(?)फलत्वम्। [तथा?] दृष्टफलस्यापरित्याज्यत्वात् वैतुष्यादेरवघातफलत्वेन तान्त्रिकैरेवाभिधानात्। ननु अवान्तरापूर्वरूपत्वेनाव्यवहितं फलमिति चेत्, एवं तर्हि अत्रापि तादृग्विधं फलमस्त्येव (तादृग्विधमेव फलमस्ति?)। तत् किमिति चेत्—यत् अग्निविद्यायां श्रूयमाणं ब्रह्मविद्यानुकूलं फलं सर्वायुःप्राप्त्यादिकम्। तदङ्गस्याफलत्वं किमुच्यते? यदङ्गिप्रतिकूलं यच्च तदनपेक्षितं तदुभयमङ्गफलं न स्यादित्यर्थः। अत्र

---

विद्याया अपि एतद्ब्रह्मविद्यात्वमस्त्विति शंक्यम्—तस्याः ज्योग्जीवनादिक्षुद्रफलार्थत्वस्य स्पष्टतया, विषयभेदाच्चैक्यायोगादिति पूर्वः पक्षः। अत्र कठोपनिषदीव अग्निविद्याप्रस्तावात् तदुभयवैलक्षण्यदर्शनेन तदनन्तरमेतदधिकरणप्रवृत्तिरिति संगत्यन्तरमपि ज्ञापितं भवति। अग्निविद्येति नामैक्येऽपि न वस्त्वैक्यम्। कठश्रुतौ अग्निशब्देन वैदिकाग्न्याधारभूतश्चयनसंस्कृतः स्थण्डिलविशेष उच्यते। ब्रह्मजज्ञात्मभूततद्विषयविद्या तत्र। इयं तु अग्निभिरुपदिश्यमाना गार्हपत्याद्यग्निविषयिणी उपासना। परिहरति मैवमिति। अग्निविद्याया अंगत्वात्, 'स्वाङ्गं न स्वव्यवधायकम्' इति न्यायेन पूर्वविद्यानुवृत्तिराचार्योपदेशे युज्यते। ननु "फलवत्संनिधावफलं तदङ्गम्" इति किल नीतिविदः। अग्निविद्यायाश्च पृथक् फलं श्रूयते। अतो न तदङ्गत्वमित्यत्राह **मिता चाङ्गताऽनेकधाऽस्या** इति। अग्निभिः, 'एषा सोम्य तेऽग्निविद्या चाऽऽत्मविद्या च' इति समुच्चय उपदिष्टः। पृथक्फलञ्च श्रूयमाणं यदि ब्रह्मविद्याविरोधि, तर्हि समुच्चयो न युज्यते। क्षुद्रफलविरक्तत्वेन च निश्चितः उपकोसलः कथं तदर्थविद्यां गृह्णीयात्। साक्षान्मोक्षरूपं फलं तु तत्र नोक्तम्। मोक्षार्थविद्याद्वयसमुच्चयश्च, "विकल्पोऽविशिष्टफलत्वात्" इति सूत्रनिरस्तः। अतः अतस्य फलस्य पर्णमयीन्यायेनोपेक्षा वा आयुराशास्ते इत्यादाविव स्वीकारो वेति विचारे अविरुद्धं फलं सर्वत्र ग्राह्यमित्यस्सिद्धान्तात् गृह्यत एव फलम्। परं तत् सर्वं ब्रह्मविद्यानिष्पत्त्युपयोगित्वादनुकूलतमम्। तन्मुखेन तस्या अङ्गत्वावधारणात् न व्यवधायकता। किञ्च आचार्यस्तु ते गतिं वक्तेति अग्निवाक्यात् आचार्योपदिष्टविद्यायाः स्वोपदिष्टविद्यायाश्चैकत्वावगमात् एकविद्यामध्यनिविष्टस्य फलान्तरनिरपेक्षत्वादपि तदङ्गत्वम्। पूर्वोत्तरभागयोरिवास्यापि प्रधानोपासनकोटिनिवेशो मा भूदित्येव, 'असद्विद्या चाऽऽत्मविद्या च' इति भेदप्रदर्शनम्, अवान्तरफलप्रदर्शनञ्चेति। मोक्षश्च सर्वं फलं ब्रह्मविद्यासाधकम्। ननु अग्न्युपदिष्टकब्रह्मविद्या दृष्टिविधिरूपा, आचार्योपदिष्टा तु मुख्यब्रह्मविद्येति भेद एवेत्यत्राऽऽह **प्राक् च न ब्रह्मदृष्टिरिति**।

ब्रह्मविद्यानुकूलफलस्याग्निविद्यायां श्रूयमाणत्वात् ब्रह्मविद्याप्रकरणपठितत्वाच्च सिद्धमग्निविद्याया ब्रह्मविद्याङ्गत्वम्। ननु ब्रह्मविद्यायां सत्यामेवाग्निविद्यया ब्रह्मविद्याविच्छेदो नास्तीति वक्तुं शक्यते। पूर्वं तु दृष्टि[विधि]मात्रमेव, कथं विद्यानुवृत्तिरत्रोच्यत इत्यत्राह—प्रागिति। पूर्वत्रापि ब्रह्मविद्यैव; न पुनः दृष्टिविधिरित्यर्थः। अत्रातीतेषु त्रिष्वधिकरणेषु अर्थभेदात् वाक्यभेदमाशङ्क्य अर्थैक्यादेक-वाक्यत्वं समर्थितम्। तथाच त्रयाणामेकवाक्यत्वादेकपेटिकात्वं भवति ॥ ९० ॥

## १५ ॥ अथ अन्तर्याम्यधिकरणम् ॥ १ २·४ ॥

सूत्रम् ॥ अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात् ॥ न च स्मार्तमतद्धर्माभिलापा-च्छारीरश्च ॥ उभयेऽपि हि भेदेनैनमधीयते ॥ १९–२१ ॥

(९१) अन्तर्यामी स जीवो बहुविधकरणायत्तधीवृत्त्यनूक्तेः
नान्यो द्रष्टेति चोक्तेरिति यदि, न, नियन्त्रन्तरस्य व्युदासात्।

---

लोकप्रसिद्धप्राण-सुखाकाशेषु ब्रह्मत्वोक्त्या, विजानाम्यहं प्राणो ब्रह्मेति प्रसिद्धप्राणे ब्रह्मत्वारोपस्य उपकोसलोक्तत्वप्रतीतेश्च दृष्टिविधिः स इति न युक्तम्। प्रसिद्धप्राणे ब्रह्मत्वारोप इत्युपकोसलावगत मित्यत्र मानाभावात्। प्राणशब्दस्य योगव्युत्पत्तिसंभवात् तस्य ब्रह्मत्वं सुगृहीतम्। कादिशब्दे व्युत्पत्त्यग्रहात् विवक्षितार्थसंदेहाद् प्रश्नः। दृष्टिविधिश्चेत्, फलं कीर्त्येत। क्षुद्रफलञ्च तदनिष्टम्। अत उपक्रान्तविद्याशेषपूरणमेवाऽऽचार्यैकृतम्। तत्रापि कंब्रह्म खंब्रह्मेति पृथगुक्तस्याग्निभिरेव खंकंब्रह्मेति विशेष्यविशेषणभावं प्रदर्श्य अपरिच्छिन्नसुखरूपत्वावगमनात् तस्यान्यत्राभावात् क्व ब्रह्मदृष्टिः स्यात्। यदि कंखमित्यस्य सुखरूपं यत् अपरिच्छिन्नम् अनन्तम् तद् ब्रह्मेत्यर्थं इष्यते, तदापि न तत् ब्रह्मातिरिक्तमिति नैव ब्रह्मदृष्टिरिति। सर्वमिदम्, "अत एव च स ब्रह्म" इति सूत्राभिप्रेतम्। अतः "'एष आत्मेति होवाच' इति अक्षिपुरुष एवाऽऽत्मत्वोपदेशात् कखप्राणानामनात्मत्वमाचार्येष्टमिति दृष्टिविधित्वमूह्यते" इत्यपि न युक्तमिति ॥

**चि. टी. नाङ्गफलत्वमिति** तालपाठः। **अपूर्वादेरङ्गफलत्वमि**त्यशुद्धम्। अन्यदा तु **अपूर्वा-देरफलत्वमि**ति पाठः स्यात्। **अफलत्वम्**--फलत्वाभावः। अपूर्वस्य सिद्धान्तेऽनंगीकारेऽपि प्रतिवादिनः सुग्रहत्वाय तथोक्तिः। **त्रिष्वधिकरणेष्विति**। प्रथमाधिकरणे द्वितीययोजनायां वाक्यभेदो नास्ति। प्रथमयोजनायां शमार्थोपासनविधानं पूर्वम्, मोक्षार्थोपासनविधानं पश्चादित्युक्तौ वाक्यभेदोऽस्ति। एवं सर्वब्रह्मोपासनांगतया शमविधानम्, उत्तरत्र शाण्डिल्यविद्यामात्रविधानमित्युक्तावपि। जीवपरत्वे वा ब्रह्मपरत्वे वा वाक्यद्वयेऽप्येकोपासनविवक्षायां तु न तथाविधो वाक्यभेदः। तथापि वाक्यभेदप्रसक्तिमद्वाक्य-चिन्तेत्येवमेकपेटिकात्वम् ॥ ९० ॥

१३. ननु अक्षिपुरुषस्य परमात्मत्वस्थापनाय, 'यश्चक्षुषि तिष्ठन्' इति अन्तर्यामिब्राह्मणोदाहरणमयुक्तम्। तस्य ब्राह्मणस्य जीवपरत्वादित्याक्षेपे तद्वाक्यविचार आरभ्यते। तत्र पूर्वपक्षमाह **अन्तर्यामीति**। **सः**= "स्थानादिव्यपदेशाच्च' इति पूर्वसूत्रे अक्षिस्थिततया प्रस्तुतः **अन्तर्यामी**=प्रतिपर्याय**मन्तर्यामि**शब्दोक्तः जीव एवेत्यर्थः। **स** इत्यनेन पूर्वाधिकरणसंगतिसूचनम्। यःपृथिव्यामित्येवं प्रतिपर्यायं **य इत्यारम्भात्**

द्रष्टृत्वाद्यं च (तु) तत्तद्विषयघटितधीरूपमीशे ऽह मुख्यं
तद्धर्माः काण्वमाध्यन्दिनपठितिगतास्तस्य चाऽऽत्मा शरीरम् ॥ २३ ॥

अत्र पेटिकासंगतिस्तावदुच्यते-पूर्वमुपासकशरीरस्थहृदयादिपरिमितदेशावच्छिन्नः परमपुरुषः उपास्यतया प्रतिपन्न इति त्रयाणामधिकरणानां संबन्ध उक्तः ; उत्तरत्र त्रिष्वधिकरणेषु विपुलदेशावस्थितः परमात्मोपास्यतया प्रतीयत इति विभागः। अक्ष्यधिकरणान्तर्याम्यधिकरणयोस्तु संगतिः भाष्यकारैरेवोक्ता, "यश्चक्षुषि तिष्ठन्नित्यन्तर्याम्यधिकरणे सूचितं परमपुरुषस्य चक्षुष्यवस्थानम्, 'य एषोऽक्षिणि पुरुषो दृश्यते' इत्यक्ष्यधिकरणे सूचितमिति अधुना चक्षुष्यवस्थानं परमात्मनो जीवस्य वेति चिन्त्यते" इति। आचार्यास्तु प्रकारान्तरेणापि संगतिमालपन्तः पूर्वपक्षसिद्धान्तौ संग्रहेण प्रकटयन्ति—अन्तर्यामीति। तदर्थविचारस्तु—किम् अन्तर्यामी प्रत्यगात्मा, उत परमात्मेति। किम्, 'अदृष्टो द्रष्टा अश्रुतः श्रोता' इत्यादिद्रष्टृत्वादिश्रवणमन्तर्यामिणि जीवभावमवगमयति—नेति। किं द्रष्टृत्वं जीवस्यैव, उत परमात्मनोऽपि संभवति। किं द्रष्टृत्वादिकं चक्षुरादिजन्यज्ञानकर्तृत्वम्, उत रूपाद्यपरोक्षज्ञानाश्रयत्वमिति। 'अदृष्टो द्रष्टा' इत्यादिना पुरुषस्य शरीरकरणायत्तधीवृत्तिद्रष्टृत्वादिकमुच्यते। तेन पूर्वेषु विद्याविशेषेष्वस्तु परमात्मा प्रतिपाद्यः। अन्तर्यामिब्राह्मणे पुनर्न परमपुरुषः

---

यच्छब्दार्थेऽपि भेदो ज्ञायते। अतोऽनेके जीवा अलोच्यन्ते इति अन्तर्यामिवाक्य एव युक्तिदर्शनेऽपि तस्य यच्छब्दभेदस्य, 'यःपृथिव्यां तिष्ठन् पृथिव्या अन्तरः' इति यच्छब्दभेदवत् असाधकत्वं स्यादिति तं विहाय उत्तरवाक्यगतं दुष्परिहरं हेतुमाह बहुविधेति। इह द्रष्टा श्रोता मन्ता इत्यादिकथितं द्रष्टृत्वादिकं किं नाम। चक्षुर्जन्यज्ञानं दर्शनम्, श्रोत्रजन्यज्ञानं श्रवणम्, मनोजन्यज्ञानं मननमित्येवम्। परमात्मनस्तु नित्यज्ञानवतो नेन्द्रियजन्यज्ञानप्रसक्तिरस्ति। ज्ञानस्य नित्यत्वादेव तृजर्थः कर्तृत्वमपि नास्ति। अतः बहुविधकरणजन्यधीरूप-वृत्तिशब्दवाच्यज्ञानविशेषवत्त्वेन अनूक्तेः—अनुवादात् जीव एव। हेत्वन्तरमाह नान्य इति। 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिवाक्यश्रवणादित्यर्थः। द्रष्टृपदस्येन्द्रियजन्यज्ञानवानित्येवार्थ इति अनेन वाक्येनापि ज्ञाप्यते। एवं हि सति अतः उक्तजीवापेक्षयाऽन्यः द्रष्टा चक्षुर्जन्यज्ञानवान् नास्तीति वाक्यार्थः समञ्जसः। यदि इन्द्रियघटनमन्तरा विषयविशेषघटनेन रूपसाक्षात्कारो दर्शनम्, शब्दसाक्षात्कारः श्रवणमित्येवमर्थ उच्येत, तदा प्रकृतवाक्यार्थो दुर्वचः। तदा अत इति परमात्मग्रहणे तदन्यः द्रष्टा जीवोऽस्त्येवेति कथं निषेधः। एवं नान्योऽतोऽस्ति श्रोतेत्यादिरपि निषेधोऽशक्यः स्यात्।

इमं पूर्वपक्षं परिहरति इति यदि, नेति। इति चेन्नेत्यर्थः। नियन्त्रिति। द्वितीयवाक्यस्यैव प्रथमवाक्ये अपि दर्शनादिशब्दार्थनिर्णायकत्वेन तदुक्तत्वात् प्रथमं द्वितीयवाक्यार्थमेव दर्शयति। अयं भाव—'अदृष्टो द्रष्टा' इति वाक्ये अदृष्ट इति विशेषणं दृष्टद्रष्टृव्यावृत्त्यर्थम्— दृष्टस्सन् द्रष्टा भवति जीवः, परस्तु तद्विलक्षण इति। एवञ्च, 'नान्योऽतोऽस्ति द्रष्टा' इत्यत्र अत इति पदेन द्रष्टृमात्रग्रहणे द्रष्ट्रपेक्षयाऽन्यो द्रष्टा नास्तीति व्यर्थोक्तिः स्यात्। अदृष्टत्वविशिष्टद्रष्टृतावत्पुरुषभिन्नो द्रष्टा नास्तीति च बाधितम्; जीवसत्त्वात्। अतः अन्य पदस्य सदृशभूतान्यपरत्वस्यैव शाब्दिकमीमांसकादिसंमततया यथाऽयमदृष्टस्सन् द्रष्टा, तद्वत् अदृष्टद्रष्टाऽन्यो नास्तीत्यर्थो वक्तव्यः। इदमपि अदृष्टो द्रष्टेति वाक्ये अदृष्टपदेन जीवव्यावर्तनादेव सिद्धमिति न पृथक्

प्रतिपाद्यः । तद्विरुद्धकरणायत्तधीवृत्त्यनूक्तेर्दर्शनादिति पूर्वाधिकरणोक्ताक्षेपेण संगतिः । किञ्च 'नान्योऽतोऽस्ति द्रष्टा' इति साक्षादेव तस्माज्जीवादतिरिक्तस्य परमपुरुषस्य निषेधो दृश्यते । स च पूर्वाधिकरणोक्ताक्षेपः, अनेनैव पूर्वपक्षोपन्यासश्च संक्षेपतः कृतः। पूर्वपक्षं प्रतिक्षिपति—नेति। तत्र हेतुमाह—नियन्त्विति । लोके हि कञ्चिदर्थमुक्त्वाऽन्यप्रयोगे तत्सदृशस्य वा सजातीय-संनिकृष्टयोरन्यतरस्य वा तेन प्रतिपादनं प्राप्तमिति वदन्ति प्राज्ञाः। उदाहरन्ति च, 'एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः' इत्युक्त्वा पुनरपि 'तेनानिष्ट्वा नान्येन यजेत' इति च तत्सदृश-वस्त्वन्तरयजनविषय एव योग्यत्वादुच्यते; न पुनर्यज्ञान्तरमात्रम् । न ह्यत्र यज्ञशब्दवाच्यत्वमात्रेण ब्रह्मयज्ञादिकमपि व्यावर्त्यते । एवम्, इष्टौ 'समानमितरत् श्येनेन' इत्यादौ इष्टिवैशेषिकधर्माणामेव पूर्वप्रकृतत्वात् इतरशब्देन श्येनवैशेषिकधर्म एवोच्यते, न पुनः, 'प्रकृतिवद्विकृतिः कर्तव्या' इति चोदकप्राप्ताः सामान्यधर्माः। एवम्, अग्रजः समागतः, नान्य इत्युक्ते तत्संनिकृष्टः स्वानुज एव प्रतीयते। इत्थं अद्वितीयादिशब्देष्वपि भाव्यम् । एवम्, 'नान्योऽतोऽस्ति द्रष्टा' इत्यत्रापि 'अदृष्टो द्रष्टा' इत्यादि-प्रतिपन्नपुरुषसदृशनियन्त्रन्तरमेव निषिध्यते ; न पुनः पुरुषमात्रम् । न हीश्वरस्येश्वरान्तरमस्ति। यत् द्रष्टृत्वाद्यं करणायत्तज्ञानवत्त्वस्वरूपत्वादीश्वरे न संभवतीत्युक्तम्, तत् समाधत्ते—द्रष्टृत्वाद्यमिति। न ह्यत्र द्रष्टृत्वं चक्षुर्जन्यज्ञानवत्त्वम्, अपितु रूपविषयज्ञानवत्त्वमिति विषयतो निरूप्यते; न पुनः करणतः। एवं श्रोतृत्वमिति शब्दविषयज्ञानवत्त्वमेव कथ्यते ; न पुनः श्रोत्ररूपकरणसापेक्षत्वम् (वत्त्वम्)। तेनेश्वरस्य तत्तत्करणसापेक्षत्वाभावेऽपि स्वाभाविकतत्तद्विषयसाक्षात्करणादिव्यवहारो युज्यते। किञ्चेश्वरत्वनियामका धर्मा विश्वनियमनादयः काण्वपाठे माध्यन्दिनपाठे च परिपठिताः सर्वे-द्रष्टुरीश्वरत्वे नियामकानि लिङ्गानीत्याह—तद्धर्मा इति । तस्य चाऽऽत्मा शरीरमिति । उक्तमन्यत्

वक्तव्यम् । अन्तर्यामिब्राह्मणान्तिमवाक्यत्वाच्चात्रान्तर्यामिणमादाय निगमनं साधीयः। अतः अत इत्यस्य प्रकृतोऽन्तर्यामिभूतो नियन्ताऽर्थः। अस्मान्नियन्तुरन्यः नियन्तृत्वेन सदृशो द्रष्टा नास्तीत्युक्तौ पूर्ववाक्येना-दृष्टपुरुषान्तराभावः एतद्वाक्येन नियन्तृपुरुषान्तराभावश्च सिध्यतः । एवमर्थकत्वाच्चेदं वाक्यं नेन्द्रियजन्य ज्ञानवन्निषेधपरम् । सर्वस्यापीन्द्रियजन्यज्ञानवतः अदृष्टो द्रष्टेत्यत्र ग्रहणे कृते तद्भिन्नतादृशद्रष्ट्रभावस्य सिद्धत्वात् तदर्थे वाक्यस्य व्यर्थमिति ।

अस्तु तावदिदम् ; परमात्मन इन्द्रियजन्यज्ञानाश्रयत्वरूपद्रष्टृत्वादिकं कथमिति चेत्, तत्राह द्रष्टृत्वेति। दर्शनादिपदस्य करणघटनमन्तरा विषयघटनेन रूपविषयकसाक्षात्कारो दर्शनमिति रीत्यैवार्थो वर्णनीयः। प्रत्ययस्य चाऽऽश्रय एवार्थः, न तु कर्ता। अन्यथा पश्यत्यचक्षुरिति वाक्यस्यार्थवर्णनायोगात्। तस्मान्मुख्यार्थोऽयमीश्वरे सुस्थः। करणजन्यत्वघटने मुक्तकर्तृकदर्शनादावपि समन्वयो न स्यादिति। न च स्मार्तमतद्धर्मेति द्वितीयसूत्रार्थमाह तद्धर्मा इति। काण्वपाठापेक्षया माध्यन्दिनपाठे पर्यायाधिक्यम्। सर्वपर्यायोक्ताः व्यापित्वशरीरित्वादयः सर्वे तस्यैकस्यैव धर्माः । उपक्रमे उद्दालकेन, 'य इमञ्च लोकम्' इत्यारभ्य सर्वयमयितुरेकस्यैव पृष्टत्वात् । अतो न जीवधर्माः। सौत्रालोक्तमहदव्यक्ताक्षरादिनियन्ता कश्चिज्जीवो दुर्वचश्च । तथा समष्टिमहाभूतादिनियन्ता च। व्यष्टावेव हि जीवस्य नियमनयोग्यता। उभ-येऽपीति सूत्रार्थमाह तस्यचेति। आत्मपर्याये नियन्ता परमात्मैव वक्तव्यः। अनन्यात्मक इत्यत्र तात्पर्ये पर्यायार्थैकरूप्यभंगात् । एकश्चान्तर्यामी प्रकृत इति चोक्तम्। अतो जीवस्य नान्तर्यामित्वप्रसक्तिरिति ॥

सर्वमस्तु; इदमेव समाधानमीश्वरत्वनियामकं यत् पृथिव्यादिरिव, 'यस्याऽऽत्मा शरीरम्' इति जीवोऽपीश्वरस्य शरीरतया निर्दिश्यत इति। अतो जीवादन्य एवान्तर्यामीति सिद्धम्॥ ९१॥

(९२) स्थानैक्यादत्र शाखाद्वयपरिपठितावात्मविज्ञानशब्दौ
एकार्थावित्यकम्प्यं तदपि कथयतो बुद्धिमेवेत्यपार्थम्।
लोकाम्नायप्रसिद्ध्योरनुगमत इमौ चेतने ह्येकतानौ
बाधः केनापि नास्मिन्, भवति च स त इत्यादिभिः सामरस्यम्॥ १४॥

इत्यन्तर्याम्यधिकरणम्॥ १५॥

कश्चिदाह—यद्यप्यात्म-विज्ञानशब्दयोरन्योन्यस्थानयोरन्योन्यपाठादेकार्थत्वमस्ति, तथापि जीवपरत्वं नास्ति; उभाभ्यामपि शब्दाभ्यामन्तःकरणस्यैवाभिधानात्। तेन कथमत्र जीवपरमात्मनोः शरीरात्मभावेन भेदः प्रतीयत इति। तदिदमुच्यते—स्थानेति। प्रतिक्षिपति—अपार्थमिति। हेतुमाह—लोकेति। शब्दार्थनिर्णये लोकवेदप्रसिद्धिरेव नियामिका। आत्मविज्ञानशब्दौ लोकवेदयोश्चेतनासाधारणतया निर्णीतौ। अतो नान्तःकरणपराविस्यर्थः। तयोर्गौणी वृत्तिरस्त्विति चेत्; नेत्याह—बाध इति। बाधे सत्येव ह्यौपचारिकी वृत्तिराश्रयणीया; अत्र त्वात्मविज्ञानशब्दयोर्जीवपरत्वे बाधो

---

चि. टी. प्रकारान्तरेणेति। जीवव्यावर्तकविशेषणसत्त्वात् पूर्वाधिकरणे परमात्मग्रहणेऽपि अक्षिस्थितेरुभयसाधारण्यात् परमात्मव्यावर्तकद्रष्टृत्वादिसत्त्वाच्च जीवग्रहणमिति संगतिरिति भावः। परमपुरुषस्य निषेधो दृश्यत इति। ननु परमपुरुषमभ्युपगम्य प्रकृतश्रुतेः परमात्मपरत्वं नेत्येवात्र पादे शंका; न तु पूर्वपाद इव तद्द्वयवच्छेदः। श्लोकस्य च, 'नान्यो द्रष्टा' इति वाक्यश्रवणाच्चेत्यर्थः। न तु परमात्मा नेत्युक्तेरिति। तदाशयश्च श्रीभाष्यानुसारेणाधस्तादुक्त इति चेत्—सत्यम्—अस्यापि वाक्यस्य तदनुगुण एवार्थो वक्तव्यः नान्योऽतोऽस्तीति वाक्ये परमपुरुषस्य द्रष्टृत्वनिषेधो दृश्यत इति। द्रष्टृशब्दस्य करणायत्तज्ञानवदर्थकत्वाभावेऽनन्वयरूपप्रागुक्तसरणिरेवात्रापि विवक्षितेति॥ ९१॥

१४. ननु, मा भूदनन्यात्मकत्वमर्थः। 'य आत्मनि तिष्ठन्' इति माध्यन्दिनपर्यायस्थाने काण्वपाठे, 'यो विज्ञाने तिष्ठन्' इति श्रवणात् विज्ञानशब्दस्य बुद्धिपरत्वात् आत्मशब्दोऽपि तदेकार्थ इति बुद्ध्यन्तर्यामित्वमेव तेनोक्तं स्यात्। अतो न जीवाद्भेद इत्याह स्थानेति। आत्मशब्दो विज्ञानशब्दश्च समानार्थाविति सत्यम्; तदपि तथापि तौ शब्दौ बुद्धिमेव वदतः इति यत्—तत् अपार्थम्—अपगतार्थम्=त्यक्तप्रसिद्धार्थं भवति। कथयत इति द्विवचनम्; शब्दाविति द्विवचनान्तानुषङ्गः। पद योजनायां तु तदपीत्यत्र अंगीकृत्येत्यध्याहृत्य कथयत इति षष्ठ्यन्तं कृत्वा इति कथयत इत्यन्वयं कृत्वा वचनमिति पदमप्यध्याहृत्य, तत्=एकार्थत्वमङ्गीकृत्यापि बुद्धिमेव इति=शब्दद्वयार्थत्वेन कथयतः पुंसो वचनम् अपार्थमिति व्याख्यातम्।

निरासहेतुमाह लोकेति। आत्मशब्दः शरीरिण्येव मुख्यः; न बुद्धौ आत्मशब्दप्रसिद्धिः। विज्ञानशब्दस्य तु बुद्धाविवाऽऽत्मन्यपि प्रसिद्धिरस्ति। 'सत्यं ज्ञानम्', 'विज्ञानं यज्ञं तनुते', 'ज्ञानं विशुद्धम्' इत्येवम्। लोकप्रसिद्धेर्वेदप्रसिद्धेश्चानुवृत्त्या इमौ शब्दौ चेतन एव मुख्यौ। कथमात्मन आत्मनिष्ठत्वमिति चेत्—कथं न? बाधस्यादर्शनात् श्रुत्युक्तस्य स्वीकारात्। किञ्च प्रतिपर्यायम्, 'स ते

नास्तीत्यर्थः। न केवलं बाधाभाव एव; अपितु प्रतिपर्यायमनुग्राहकमेव निगमनवाक्यमित्याह— भवतीति। त इति [सं]बोध्यशरीरभूतजीवनिर्देशः। 'अन्तर्याम्यमृतः' इति शरीरगतदोषासंस्पृष्टोऽन्तर्यामी प्रतीयत इति व्यक्तमेव भेदः प्रतीयते जीवपरमात्मनोः॥ ९२॥

१६ ॥ अथ अदृश्यत्वादिगुणकाधिकरणम् ॥ १-२-५ ॥

सूत्रम्। अदृश्यत्वादिगुणको धर्मोक्तेः॥ विशेषणभेदव्यपदेशाभ्यां च नेतरौ। रूपोपन्यासाच्च॥२२-२४॥

(९३) दृश्यत्वादेर्निषेधो विकृतिमति भवत्यक्षरे सन्निकर्षात्
पञ्चम्युक्ताक्षरं तत् तदवधिकपरः पञ्चविंशोऽस्तु; मा भूत्।
सर्वज्ञत्वादिदृष्टेः प्रथमसमुदितं त्वक्षरं ब्रह्म शुद्धं
पश्चादुक्तं तु जीवादिकमवधितया भेदतस्तत्परोक्तेः॥ १५॥

अत्र भाष्ये संगतेः स्फुटत्वादधिकरणमेवाऽऽरचयति—दृश्यत्वादेरिति। इयं किलात्र संगतिः— पूर्वाधिकरणे परमपुरुषस्य जीवस्यापि नियन्तृत्वेन, 'अदृष्टो द्रष्टा' इति द्रष्टृत्वेनाभिधानात् जीवो नान्तर्यामीत्युक्तम्। इह तु न तादृशं द्रष्टृत्वादिकमुच्यते। अतः प्रकृतिर्जीवो वा अदृश्यत्वादिगुणकमक्षरमिति। तदर्थविचारस्तु—'अथ परा यया तदक्षरम्' इत्यादिवाक्ये अदृश्यत्वादिगुणकमक्षरा-

---

आत्मा,' 'एष त आत्मा' इति ते इति षष्ठ्यन्तेनोद्दालकं जीवमुक्त्वा तं प्रति अन्तर्यामिण आत्मत्वमुच्यते। अतः प्रतिपर्यायमपि जीवपरभेदः स्पष्टः। उद्दालकान्तर्यामित्वस्य प्रतिपर्यायं कथनादपि एकोऽन्तर्यामीति ज्ञायते। न च, 'स ते आत्मा' इत्यत्र ते इत्यस्य स्वःपृष्ट इत्यर्थः; आत्मशब्दवैयर्थ्यात्, त आत्मेत्युभयवैयर्थ्याच्च। तथा आदिशब्ददर्शिते तैत्तिरीये, "तदनुप्रविश्य सच्च त्यच्चाभवत्....विज्ञानं चाविज्ञानञ्च" इति जीवात्मान्तर्यामित्वम्, जीवस्य विज्ञानशब्दवाच्यत्वञ्चोक्तमिति सर्वसामरस्यम्॥९२॥

१५. अग्न्यादिशब्दानां सदृशभूतभिन्नार्थकत्वं स्वरसमिति, 'नान्योऽतोऽस्ति द्रष्टा' इत्यत्रोक्तम्। एवञ्च, 'यत्तदद्रेश्यम्' इत्यादावपि तथेति तद्दृष्टान्तेन पूर्वपक्षः। 'यया तदक्षरमधिगम्यते यत्तत् अद्रेश्यमग्राह्यम्' इत्यत्र अद्रेश्यपदं दृश्यभिन्नार्थकम्। अग्राह्यपदं ग्राह्यभिन्नार्थकम्। अतश्च दृश्यादिभेदः दृश्यत्वाद्यभावापरपर्यायः। तदाश्रयतयोपस्थितञ्च मूलप्रकृत्याख्यमक्षरमेव। विकृतिः विकारः स्थूलावस्था। दृश्यस्थूलावस्था यत्र संनिकृष्टा—यद्द्रव्यं तदवस्थावत्त्वेन गृहीतम्, तस्यैव सूक्ष्मावस्थामादाय दृश्यत्वाभावः शीघ्रगृहीतो भवतीति, तदक्षरं विहाय, अन्यस्यासंनिकृष्टस्य जीवस्य परमात्मनो वा ग्रहणं न युक्तम्। एवञ्च, 'अक्षरात् परः' इत्यत्र पञ्चम्यन्तेनोक्तमक्षरमपि तत् विकृतिमदक्षरं प्रधानमेवेति लाघवम्। सिद्धान्ते प्रथमं परमात्मग्रहणम्, पश्चादक्षरपदेनान्यस्य ग्रहणमिति वैरूप्यमित्यर्थः। अथापि तत्र परतःपर इति परमात्मग्रहणात् प्रकरणं परमात्मपरमेवेत्यत्राह तदवधिकेति। प्रकृतिरूपाक्षरावधिकः पर इति प्रथमान्तशब्दवाच्यः पञ्चविंशः जीव एव। 'अक्षरात् परतः परः' इत्यस्य अक्षरावधिकपरत्वाश्रय वस्त्वन्तरावधिकपरत्वाश्रय इत्यर्थश्चेत्, प्रकृतेः परो जीवः ततः परः परमात्मेत्यर्थः स्यात्। तथा नार्थः। पञ्चम्यन्तयोः सामानाधिकरण्ये संभवति वैयधिकरण्यायोगात्। वैयधिकरण्ये परत इत्यस्य विशेष्यसाकांक्षतया तत्कल्पनागौरवाच्च। अतः स्थूलप्रपञ्चात् दृश्यग्राह्यादिरूपात् परभूतादक्षरात्=

त्परतः परश्च किं प्रधानपुरुषौ, उत परमात्मेति । पृथिव्यादिसंबन्धितया दृष्टं स्थूलत्वादिकं निषिध्यमानं पृथिव्यादिसजातीयमचेतनमाश्रयमुपस्थापयति, उत नेति । किं 'यथोर्णनाभिः सृजते गृह्णते च' इत्यादिदृष्टान्तोपादानमचेतनाश्रयोपस्थापकं नेति । किं 'अक्षरात् संभवतीह विश्वम्' इत्यत्र विश्वशब्दः चेतनाचेतनप्रपञ्चमुपस्थापयति, उत अचेतनमात्रमिति । अत्रायं पूर्वः पक्षः—पूर्वं विश्वनियन्तृत्वेनान्तर्यामी परम आत्माऽस्तु ; इह पुनः परापरविद्याप्रसङ्गे 'यत्तदद्रेश्यम्' इत्यादिना मूलप्रकृतिर्जीवो वाऽभिधीयते । 'अद्रेश्यम्' इति ह्यत्र श्रूयते । अद्रेश्यत्वमदृश्यत्वम् । तेन प्रकृतिकार्यपृथिव्यादिषु दृष्टदृश्यत्वनिषेधः सन्निकर्षात् प्रकृतिमेवोपस्थापयति ; न पुनरसंनिकृष्टं परमात्मानम् । यथा हि अब्राह्मण इति संनिकृष्टं क्षत्रियमेव कथयति ; न पुनरसंनिकृष्टान् अश्वादीन् । अथवा अक्षरशब्दोऽर्थसामर्थ्यात् जीवं कथयतु ; तस्यापि प्रकृत्यधिष्ठातुः प्रकृतिद्वारा दृश्यपृथिव्यादिकार्यधीनिर्णेतव्यत्वात्, उत्तरत्र, 'अक्षरात्परतः परः' इति पञ्चम्युक्ताक्षरशब्दः परतोऽक्षरादिति सामानाधिकरण्येन तदेवाक्षरमाह । तस्मात् पर इति तु जीवस्य पराभिधीयते । नेतरात्र प्रकृतिपुरुषातिरिक्तः परमपुरुषो नास्तीति । राद्धान्तमारभते—मा भूदिति । हेतुमाह—सर्वज्ञत्वादेरिति । 'यः सर्वज्ञः सर्ववित्' इति सर्वज्ञत्वादेः परमात्मासाधारणगुणस्यात्र दृष्टेः प्रथमनिर्दिष्टं तदक्षरं परमपुरुष एव । तर्हि 'अक्षरात् परतः परः' इति द्वितीयाक्षरशब्दस्य कोऽर्थः? प्रकृतिरेव । 'अक्षरात्' प्रकृतेः 'परतः'

---

अव्यक्तात् परः पञ्चविंश इत्येव तदर्थ इति नेयं विद्या ब्रह्मविषयिणीति । पूर्वपक्ष निषेधति **माभूदिति**।

हेतुमाह **सर्वज्ञत्वादी**ति, 'यः सर्वज्ञः सर्ववित्' इति भूतयोनेः सर्वज्ञत्वश्रवणात्, उपक्रमे, 'स ब्रह्मविद्यां सर्वविद्या प्रतिष्ठाम्' इति सर्वज्ञानात्मकैकविज्ञानविषयब्रह्मोपदेशावगमात् परोक्षापरोक्षरूपद्विविधज्ञानविषयत्व**विष्णुपुराणो**पबृंहितरीत्या परमात्मन्येव संभवात्, 'यथोर्णनाभिः सृजते' इत्यभिन्ननिमित्तोपादानरूपत्वावगमात्, 'तदेतत् सत्यम्', 'येनाक्षरं पुरुषं वेद सत्यम्' इति अक्षरे सत्यपुरुषपदप्रसिद्धब्रह्मैक्यदर्शनात् मुक्तानां स्वपरमसाम्यापादकोपासनविषयत्वदर्शनात्, "अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ" इति रूपोपन्यासाच्च । 'यया तदक्षरमधिगम्यते' इति स्वरूपस्वभावीयोभयविधविकारराहित्यरूपशुद्धत्वाश्रयतया **अक्षरशब्द**मुख्यार्थत्वाच्च । **पश्चात्**, "अक्षरात् परतः परः" इत्यत्रोक्तमक्षरं तु **तत्परोक्तेः** तस्मात् परस्योच्यमानत्वात् **पर**शब्दार्थपरत्वावधितया भेदात् न ब्रह्मैव; किंतु जीव प्रकृतिर्वा । यदि परमूतादक्षरात् पर इति पूर्वपक्षयुक्तरीत्या तदर्थः, तदा प्रधानात्परस्य जीवस्या**क्षर**पदेन ग्रहणम् । यदा तु **पर**शब्दद्वयप्रतिपाद्यपरत्वद्वयस्यापि **अवधि**सापेक्षत्वात् अपेक्षितबोधकत्वस्यैव युक्तत्वात् सामानाधिकरण्यं व्यर्थमुपेक्ष्य अक्षरात् परो जीवः तस्मात् परः अप्राणोऽमना अमूर्तो दिव्यः पुरुष इत्युच्यते, तदा अक्षरपदमव्यक्तार्थकम् । तस्य सविकारतया क्षरणवत्त्वेऽपि द्रव्यनित्यत्वप्रयुक्ताविनाशित्वसत्त्वाद्वा अश्नुते=व्याप्नोति सर्वं स्वकार्यमिति वा अक्षरत्वोपपत्तिः । "अक्षरं नक्षरं विद्यात् अश्नोतेर्वा सरोऽक्षरम्" इति वर्णविषये **महाभाष्यम्** ।

**चि. टी. अथवा अक्षरशब्द** इति । **शांकरभाष्ये** अक्षरं प्रधानं वा जीवो वा परमात्मा वेति कोटित्रयोल्लेखः ; नासद्भाष्ये । उत्तरमूले **नेतरौ** इति उभयोक्तिस्तु, 'यया तदक्षरम्', "परतः परः" इति **अक्षरशब्दपर**शब्दोभयाभिप्रायेणेति तत्त्वस्थितिः । एवमपि शांकर इव प्रथम**माक्षर**पदस्य, 'क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते' इति **गीतानु**सारात् क्षरो बद्धजीवो विशिष्टवेषेण दृश्यः ग्राह्यश्च, शुद्धं तु, 'अद्रेश्यमग्राह्यमक्षरम्' इति क्षरग्रहणपूर्वकमुक्तेः शुद्धजीवग्रहणेऽपि, 'अक्षरात् परतः परः इत्यत्र ततः परः

जीवात् परः परमपुरुष इति वाक्ययोजना। अत्र(अथ?)जीवोऽप्यक्षरशब्दवाच्यः, तदा समानाधिकरणे पञ्चम्यौ, प्रकृतेः परतोऽक्षराज्जीवात्पर इति। तेन प्रकृतिपुरुषाभ्यां परः परमपुरुष एवात्रोच्यते॥९३

१७॥ अथ वैश्वानराधिकरणम्॥ १-२-६॥

सूत्रम्—वैश्वानरः साधारणशब्दविशेषात्॥ स्मर्यमाणमनुमानं स्यादिति॥ शब्दादिभ्योऽन्तः प्रतिष्ठानाच्च नेति चेन्न तथादृष्ट्युपदेशादसम्भवात् पुरुषमपि चैनमधीयते॥ अत एव न देवता भूतञ्च॥ साक्षादप्यविरोधं जैमिनिः॥ अभिव्यक्तेरित्याश्मरथ्यः॥ अनुस्मृतेर्बादरिः॥ सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति॥ आमनन्ति चैनमस्मिन्॥ २५-३३॥

(९४) स्वर्लोकादित्यवाताम्बरसलिलमहीरूपमूर्धादिक्लृप्त्या
ध्येयो वैश्वानरात्मा स्थिरबहुविशयः(विषयः) शब्दलिङ्गादिसाम्यात्।
मैवं ब्रह्मेत्यधीतेर्भुवनतनुतया योगतस्त्वग्निशब्दो
वैशिष्ट्याद्वा क्रियाङ्गं स्ववपुषि परधीर्गार्हपत्यादिधीश्च॥ १६॥

पूर्वम् 'रूपोपन्यासाच्च' इत्यत्र भगवतो विश्वरूपोपन्यासेन द्युमूर्धत्वादिना भगवतः परमपुरुषत्वं प्रसाधितम्; इदानीं तत्प्रसङ्गात् वैश्वानरविद्या चिन्त्यते। अत्रापि द्युमूर्धत्वादिपरिक्लृप्त्या वैश्वानर-

---

परमात्मा वक्तव्य इति प्रकरणं परमात्मपरं भवति' इति न मन्तव्यम्। तत्राक्षरपदेन प्रधानस्यैव ग्रहणेन परतोऽक्षरात् पर इति प्रथमान्तपरशब्देन शुद्धजीवस्य प्रक्रान्तस्यैव ग्रहणात्। अद्रेश्यत्वाद्यन्वयाद्दोप क्रमोक्तमुरूशाक्षरपरत्वेनैव आन्तमुपनिषदर्थस्य वर्ण्यत्वादिति जीवपरत्वपक्षेऽपि स्थित्वोक्तमिदम्। श्लोक प्रथमपादोऽपि कथञ्चित् जीवे नीयतामित्याशय इव। तदेव=प्रधानमेव॥ ९३॥

१६. पूर्वाधिकरणे विश्वरूपकण्ठोक्तिमती उपनिषत् विषयः, अत्र विश्वरूपपर्यवसायि वाक्यजातं विषयः इति संगतिं प्रथमपादेन सूचयन् कल्पनारूपत्वात् साधारण्यमिति पूर्वपक्षमाह स्वरिति। स्वर्लोकादयः षट् षड्भिर्महर्षिभिः पृथक् वैश्वानरात्मत्वेन गृहीताः। तेषां क्रमेण मूर्ध-चक्षुः-प्राण-मध्यकाय-वस्ति-पादत्वभावनया स्वर्लोकादिरूपमूर्धादिमत्त्वकल्पनया ध्येयो यः वैश्वानरात्मशब्दार्थः, सः स्थिरबहुविशयः। पद-योजनापाठोऽत्र अस्थिरबहुविषय इति। अथ एवं स्यात्–अस्थिरत्वं=सर्वथा स्वीकारप्रतिषेधानर्हत्वम्। विषयशब्दोऽर्थपरः। जाठराग्निभूततृतीय-देवताविशेष-परमात्मरूपास्थिरबह्वर्थभूतः। विषयशब्दस्य स्वरूपात्मकप्रकारपरत्वे तु अस्थिरजाठराग्नित्वादिबहुप्रकारक इति बहुव्रीहिः। एतत्पाठेऽप्येवमर्थवर्णनं संभवात् नाध्याहारादिकम्। चिन्तामणौ अस्थिरबहुविषयशब्दप्रयोगेऽपि वैश्वानरशब्दस्तु इति शब्दपदप्रयोगात् तत् शब्दसाम्यपदार्थविवरणमेव। वस्तुतः स्थिरबहुविशय इत्येव चिन्तामणिवाक्येऽपि ताळादौ पाठो दृश्यते; तथाच स्थिरबहुविशयः स्थिरबहुविधसंशय[विषय] इत्यर्थः। विषय इति पाठेऽपि बहवः विषयाः कोटयो यत्र स बहुविषयः=संशयः; स्थिरः तादृशसंशयो यत्रेति पुनर्बहुव्रीहिरिति वा। सर्वथा अनेन एकतमकोटिनिश्चयाभावात् दुर्निर्णयत्वतदभावकोटिकविचार इत्युक्तं भवति। हेतुमाह शब्देति। शब्दसाम्यं भाष्ये वैश्वानरशब्दस्यार्थचतुष्टयप्रदर्शनात्। लिंगसाम्यम्—जाठराग्नेः प्राणाहुत्याधारत्वम्, महाभूतस्य देवतायाश्चापरिच्छिन्नत्वम्, परमात्मनः पापप्रदाहकत्वमिति तत्रतत्रोचितलिंगसद्भावः।

परमपुरुषश्चिन्त्यत इति। तेनात्र त्रिष्वधिकरणेषु कासुचिदुपनिषत्सु परमात्मानमङ्गीकृत्य कस्यांचिदुपनिषदि परमात्मानङ्गीकारेण पूर्वपक्षोत्थानमिति पेटिकाविभागः। पूर्वत्रैकस्मिन्नेव प्रकरणे परमात्मानङ्गीकारपरिक्लृप्त्योरुत्थानमिति। किमयं वैश्वानर आत्मा परमात्मेति शक्यनिर्णयः, उताशक्यनिर्णय इति संशयपुरस्कारेण पूर्वपक्षः। तदर्थविचारस्तु—किमात्मब्रह्मोपक्रमो वैश्वानरशब्दार्थस्य ब्रह्मभावमवगमयति—नेति। किम्, 'एषोऽग्निर्वैश्वानरः' इत्यग्निसामानाधिकरण्यात् अग्नित्रयकल्पनात् प्राणाहुत्याधारत्वात् अग्निः वैश्वानरशब्दार्थस्य ब्रह्मभावविरोधी नेति। किम्,' 'एषोऽग्निर्वैश्वानरः' इत्यग्निशब्दोऽग्निमात्रपरः, उताग्न्यवस्थितपरमात्मपर इति। किमनेन वाक्येनाग्निमात्रोपासनं ज्ञाप्यते, उत परमात्मोपासनमिति। अत्र पूर्वपक्षसिद्धान्तयोः फलफलिभावः स्वयमेवोन्नेयः। अत्र पूर्वपक्षसिद्धान्तौ संगृह्य दर्शयति—स्वर्लोकेति। स्वर्लोकादित्यादिमूर्धादिपरिक्लृप्त्या वैश्वानरात्मा ध्येयतया अभिधीयते। वैश्वानरशब्दस्तु स्थिरबहुविषयः; अग्निर्वा देवता वेत्यादिरूपेणानेकेष्वर्थेषु लिङ्गादीनां तुल्यत्वादिति। तत्रोदाहरणानि भाष्य एव द्रष्टव्यानि। उक्तमर्थं प्रतिक्षिपति—मैवमिति। तत्र हेतुमाह—ब्रह्मेत्यधीतेरिति। उपक्रमे, 'को न आत्मा किं ब्रह्म' इति ब्रह्मशब्दप्रयोगात्। भुवनान्तर्यामिणो विश्वस्यापि प्रपञ्चस्य भगवद्विग्रहत्वेन वैश्वानरविद्यायामुपवर्णनात्। कथं तर्हि, 'स एषोऽग्निर्वैश्वानरः' इत्यग्निशब्दः परमात्मनि प्रयुज्यते? तत्राह—योगत इति। पक्षान्तरमप्याह—वैशिष्ट्याद्वेति। द्वयी हि गतिरत्र प्रयुज्यमानस्याग्निशब्दस्य। अग्रनयनादिना योगेनेत्येका। सर्वेषामग्रनयनं भगवानेव हि

---

आदिना द्युमूर्धादिकल्पनायाः सर्वात्मप्राप्तिहेतूपासनकर्मत्वस्य च सर्वत्र संभावितत्वज्ञापनम्।

परिहरति मैवमिति। ब्रह्मेत्यधीतेः। 'को न आत्मा किं ब्रह्म' इति उपक्रमे आत्मशब्दः ब्रह्मशब्दश्च। उपरि सर्वत्र आत्मपदं तथैव प्रयुज्य ब्रह्मपदस्थाने वैश्वानरपदप्रयोगात् वैश्वानरस्य ब्रह्मत्वं निश्चीयते। एवं साधारणस्यापि शब्दस्य ब्रह्मशब्दस्थानापत्त्या विशेषकत्वमुक्तम्। ब्रह्मण एव द्युमूर्धत्वमाञ्जस्येनेति हेत्वन्तरमाह भुवनतनुतयेति। मूर्धादीनां शरीरैकदेशत्वात् यस्य भुवनं शरीरम्, तं प्रति द्युलोकादेर्मूर्धाद्यवयवस्वभावत्वं स्वरसम्; अग्न्यादिविषये तु न तथौचित्यमिति भावः। इदं स्मर्यमाणमनुमानं स्यादिति इति सूत्रोक्तम्। ननु अग्निशब्दः प्राणाहुत्याधारत्वादि च न घटत इत्यत्राह योगत इति। वैश्वानरशब्दः चतुर्षु प्रयोगात् विश्वशब्दनरशब्दघटिततया योगपरिस्फूर्तेश्च यौगिक इति स्थितम्। अग्निशब्दोऽपि अग्रं नयतीति योगेन परमात्मनि पुष्कलप्रवृत्तिरिति जैमिनिः। यद्वा प्राणाहुत्याधारत्वशरीरान्तःप्रतिष्ठितत्वरूपमनन्यथासिद्धं लिंगमिह लक्ष्यते। तथा हृदयं गार्हपत्यमित्यादिकारिता गार्हपत्याद्यग्निभावना केवलहृदयाद्यपेक्षया हृदयादिप्रदेशावच्छिन्नजाठराग्नौ युक्ता अग्नित्वसाम्यादिति मन्यते चेत्—तदप्यनन्यथासिद्धं लिंगमिति प्रतर्दनविद्यान्यायेन विशिष्टपरत्वमस्तु। अतो योगात् वैशिष्ट्याद्वा अग्निशब्दो घटते। शब्दादिभ्य इति सूत्रे अग्निविशिष्टपरमात्मपरत्वमभिमतम्, अनन्तरसूत्रे साक्षादपीत्यत्र पक्षान्तरम्। एवमप्यत्र व्युत्क्रमेण निर्देशः वैशिष्ट्यपक्षः प्रकृते आदरणीयः, साक्षादिति पक्षस्तु स्थलान्तरेषूपयुक्ततयेह प्रदर्शित इति ज्ञापनाय। एवं परमात्मैवात्र वैश्वानरश्चेत्, उपासकशरीरे मूर्धादौ द्युलोकादितन्मूर्धादिभावना किमर्थेति चेत्—सा तदाराधनत्वसंपत्तये तस्यात्र संनिहितत्वबुद्ध्यै प्राणाहुतिरूपक्रियां प्रति अङ्गतया विहिता भवतु। तथा स्ववपुषि हृदयादौ गार्हपत्यादिधीरपि आहुतिक्रियाङ्गम्। तथाच

करोति । अपरा त्वग्निवैशिष्ट्येनेति । सर्वविशिष्टस्यैव भगवतः सर्वसामानाधिकरण्यं युक्तमिति वेदान्तसिद्धान्तः। तर्हि किमर्थमत्र स्वशरीरे परमात्मधीः, गार्हपत्यादिपरिकल्पनं च तत्राह—क्रियेति। प्राणाहुत्यादिक्रियाङ्गमित्यर्थः । सा च क्रिया ब्रह्मविद्याङ्गत्वेन परविद्याफलायैव भवतीति भावः ॥९४॥

**(९५) अन्यस्मिन्नन्यदृष्ट्या न भवति विदुषां क्वापि निःश्रेयसाप्तिः**
**तस्मात् वैश्वानरोऽसौ न पर इह (इति) फलं चात्र त्वसिद्ध्यादि; मैवम् ।**
**ब्रह्मैव ह्यन्यदृष्ट्यन्वितघटितमिह ब्रह्मशब्दाद्यबाधात्**
**सर्वाघध्वंस उक्तः फलमपि, परमं ब्रह्म च व्याप्तमन्नम् ॥ १७ ॥**

अत्र कश्चिच्चोदयति-परब्रह्मोपासनादेव मोक्षप्राप्तिः; न पुनः, गरुडमात्मानं विजानीयादितिवत् अन्यदृष्टिमात्रेण । कथमत्र नामब्रह्मेत्यादिवत् ब्रह्मदृष्ट्यन्वितेनाऽऽत्मान्तरध्यानेनापवर्गप्राप्तिरिति । तदिदमाह—अन्यस्मिन्निति। अन्यस्मिन् अन्यदृष्ट्या विदुषां क्वापि निःश्रेयसाप्तिर्न भवति। तस्मात् = अपवर्गावाप्तिहेतुत्वाभावात् असौ वैश्वानरात्मा परमपुरुषो न भवति। किंचात्र कथ्यमानमपि फलमत्रसिद्ध्यादि अपवर्गविरुद्धमेव । अतोऽपि न परः । उक्तमर्थं प्रतिक्षिपति—मैवमिति । अयमर्थः—अस्मिन् प्रकरणे ब्रह्मदृष्टिघटितमन्यत् प्राधान्येन ध्येयतया नोच्यते । अपितु द्युमूर्धादिदृष्ट्यन्वितस्वरूपघटितं ब्रह्मैव ध्येयत्वेनोच्यते । अतो ब्रह्मण एव प्राधान्यमित्यर्थः । तत्र हेतुमाह—ब्रह्मेति । उपक्रमस्थब्रह्मात्मशब्दयोरबाधादित्यर्थः । किंचास्मिन् प्रकरणे सर्वपापविमोक्षः फलतया निर्दिश्यते । स च ब्रह्मविद्यायामेव युज्यते। कथं तर्हि सर्वत्रावस्थितान्नप्राप्तिः फलतयोपदिश्यत

---

स्ववपुषि परसंनिधानं विभाव्य तदुद्देशेन गार्हपत्यादिभावनाविषयजाठराग्न्याधारकप्राणाहुतिर्विधीयते । एवंक्रियमाणप्राणाहुतिकैः पुरुषैः कार्यस्य द्युलोकादिशिरस्कवैश्वानरात्मोपासनस्य सर्वात्मान्तर्वर्तिषड्गुणाश्रभूतब्रह्मप्राप्तये विहितस्य विषयो ब्रह्मैवेति ॥ ९४ ॥

१७. ननु अभिव्यक्तिसूत्रे उपासितुः परमात्मस्वरूपाभिव्यक्तिरपरिच्छिन्ने दुर्लभेति अभिव्यक्त्यर्थं द्युलोकादिप्रदेशपरिच्छिन्नत्वमुच्यते । तेषां प्रदेशानां मूर्धत्वकल्पना किमर्थेत्यत्र अनुस्मृतिसूत्रेणोक्तम्, पुरुषविधत्वेनोपासनमिह प्रधानम् । संपत्तिसूत्रे तदवयवावच्छिन्ने शारीराग्नौ गार्हपत्यादित्वारोपः अन्नप्रक्षेपस्याऽऽहुतित्वसंपत्तये इत्युक्तम् । तदत्र प्रायशो दृष्टिविधिरेव लक्ष्यते। दृष्टेश्च तत्त्वज्ञानत्वाभावात् मोक्षसाधनत्वं नेष्टम् । अत एव नामादिब्रह्मदृष्ट्युपदिष्टार्थं नारदेनोपर्युपरि प्रश्नः कृतः । दृष्टिरूपोपासनापराणामयथावस्थितार्थज्ञानवत्त्वाच्च अतिवादित्वं नेष्टम् । 'सत्येनातिवदति' इति सत्यशब्दस्य ब्रह्मपरत्वेऽपि सत्यपदस्यैव विशिष्याऽऽदरणम् । ब्रह्मणो दृष्टिविषयत्वं विना स्वरूपेणोपासन एवोत्कृष्टतत्त्वविषयकज्ञानत्वं भवतीति ज्ञायते । अत्रादौ जगत्कारणत्वाद्यभिसंधिमुपेक्ष्य जगत्कारणत्ववास्तवाश्रयोपासनमेव कार्यमिति ज्ञप्तय एव भृगुणा अन्नाद्युपेक्ष्य आनन्दो ब्रह्मेति निर्धारणोद्यमः । एवं स्थिते, अन्यस्मिन् तद्भिन्नकिञ्चिद्वस्तुदृष्ट्या क्रियमाणया निःश्रेयसस्य मोक्षस्य तत्त्वज्ञानसाध्यस्याऽऽप्तिः विदुषां क्वचिदपि शास्त्रे नेष्टेति अत्र दृष्टेरेव भूम्ना दर्शनात् वैश्वानरस्य, "पुरुषं पुरुषेऽन्तःप्रतिष्ठितं वेद" इति विषयस्य ब्रह्मदृष्टिविषयतया ब्रह्मान्यत्वस्यावश्यकत्वात् वैश्वानरो न परो भवितुमर्हति । तर्हि कथं मुक्तिरूपफलोक्ति

इत्यत्राह—ब्रह्म चेति । अद्यत इत्यन्नमिति व्युत्पत्त्या, 'अहमन्नमहमन्नादः' इति श्रुत्या च परमेव ब्रह्म अन्नशब्देनाभिधीयते । तथाच ब्रह्मविद्यया ब्रह्मप्राप्तिरिति को विरोधः ॥ ९५ ॥

इति वैश्वानराधिकरणम् ॥ १७ ॥

(९६) त्रिष्वत्रोपासितॄणां मितहृदयगुहाक्ष्यन्तरश्चिन्त्य उक्तो
विश्वान्तर्यामितादेर्विपुलपरिमितिश्चिन्तनीयस्त्रयेऽथ ।
षट्सु ब्रह्मात्मशब्दौ पुरुषपदमपि क्षेत्रतज्ज्ञप्रपञ्च-
व्यावृत्ते विश्वहेतौ प्रकरणनियमाम्नामवृत्त्या नमन्ति ॥ १८ ॥

अत्रोक्तमधिकरणषट्कम् । अत्र(तत्र)पूर्वत्रिकमुपासितॄणामल्पीभूतहृदय-गुहा-अक्ष्यन्तरस्थपरमपुरुषोपासनं प्रतिपादयति । उत्तरत्रिकं तु विश्वान्तर्यामित्वादिना विपुलपरिमितेर्भगवतश्चिन्तनीयत्वमुपपादयति । अतस्त्रिकद्वयविभागो द्रष्टव्य इत्याह—त्रिष्विति । अथ षट्स्वधिकरणेषु साधारणार्थमाह-षट्स्विति । ब्रह्मशब्द आत्मशब्दः पुरुषशब्दश्च त्रयोऽपि भगवत्साधारण्येन सुप्रसिद्धा लोके वेदे

---

रिति चेत्—इह विद्यायां श्रुतं फलब्रह्मप्राप्तिरेव । आदिपदेन अग्निरहस्ये वैश्वानरविद्यायाम्, 'अप पुनर्मृत्युं जयति; सर्वमायुरेति' इति पूर्णायुःप्राप्तेरेव फलत्वकथनात् तत्संग्रहः । इहेत्यत्र इतिशब्दपाठे फलब्रह्मसिद्ध्यादि इत्यस्य द्वितीयपादोपक्रमे योजनां कृत्वा इतीति पूर्वपक्षसमाप्तिरिति वक्तव्यम् । अयमभिप्रायः अतोऽपि न परः इति चिन्तामणितो लभ्येत । अयं पूर्वपक्ष्याशयः-दृष्टिर्हि किं ब्रह्मणि अन्यस्य, अन्यत्र वा ब्रह्मणः । नाद्यः ; तस्य निकृष्टदृष्टिरूपत्वात् अर्थकरत्वासंभवेन शास्त्रविधेयत्वासंभवात् । न द्वितीयः ; तत्रान्यस्यैव प्राधान्येन विषयतया ब्रह्मोपासनत्वायोगात् निःश्रेयससाधकत्वस्यैव युक्तत्वादिति । परिहरति नैवमिति । अत्र न तादृशी दृष्टिः । किंतु ब्रह्मैव विशेष्यम् । अतो ब्रह्मोपासनमेवेदम् । परंतु अन्यदृष्ट्यन्वितघटितम्—स्वमूर्धत्वादिदृष्टिविषयद्युलोकाद्यवयवसमुदायपरिच्छिन्नम्, गार्हपत्यादिदृष्टिविशिष्टजाठराग्निशरीरकम्, वेद्यादिदृष्टिविषयहृदयाद्यवयवयुक्तोपासकपुरुषात्मभूतं विश्वनरनेतृत्वादिविशिष्टब्रह्मोक्तम् । ब्रह्मशब्दयथाश्रुतार्थस्योपास्यत्वे संभवति तद्बाधो न युक्तः । अतो दृष्टिरूपविशेषणसत्त्वेऽपि ब्रह्मोपासनत्वानपायान्न निःश्रेयसासंभवः । न च फलमन्यदत्रोच्यते । 'यथेषीकातूलमग्नौ प्रोतं प्रदूयेत, एवं हास्य सर्वे पाप्मानः प्रदूयन्ते' इति सर्वाघध्वंसपूर्वकसर्वात्मगताज्ञानुभवस्य तदनुरूपापुनरावृत्तिरूपस्याऽऽयुषश्चैवात्र कथनात् । ननु अन्नाधीनं जीवनं संसारमण्डल एव ॥ नैवम् । सर्वव्यासमन्नं हि अहमन्नमहमन्नमित्याद्यनेकश्रुतिप्रसिद्धं परमं ब्रह्मैवेति ॥९५॥ इति वैश्वानराधिकरणम् ॥

१८. अत्राधिकरणषट्के त्रिकद्वयरूपपेटिकाद्विकरूपत्वं परमात्मरूढबहुशब्दश्रवणात् जीवलिंगास्पष्टताश्चाह त्रिष्विति । अत्र प्रथमद्वितीयपादे त्रिषु पूर्वाधिकरणेषु परमात्मा मितानाम् अल्पपरिमाणानां हृदयं गुहा अक्षि इत्येषामन्तरः अन्तर्वर्तितया चिन्तनीयत्वेनोक्तः । 'एष मे आत्माऽन्तर्हृदये', 'गुहाहितम्', 'अन्तरक्षिणि पुरुषो दृश्यते' इति क्रमेण वाक्यानि । अथ उत्तरत्र त्रये अधिकरणत्रिके क्रमेण पृथिव्यादि-आत्मान्तविश्वान्तर्यामितया, 'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ' इति

च। ब्रह्मशब्दस्तावत्, 'ब्रह्म परिवृढं सर्वतः' इति; आत्मशब्दोऽपि, 'आत्मन आकाशः संभूतः' इति; पुरुषशब्दस्तु, 'पुरुष एवेदं सर्वम्' इति। एवं त्रयोऽपि शब्दा योगतो लोकवेदप्रसिद्धरूढिविशेषाच्च परमपुरुष एव श्रीनिवासे विशेषवृत्त्या वर्तन्ते। तेन षट्स्वधिकरणेषु ब्रह्मात्मपुरुषशब्दाः प्राचुर्येण नामवृत्त्या रूढ्यैव प्रकरणप्रमाणानुसाराच्च नमन्ति = वर्तन्त इत्यर्थः। क्षेत्रेत्यादि। चेतनाचेतनव्यावृत्ते जगत्कारण इत्यर्थः ॥ ९६ ॥

(९७) तज्जत्वादेर्हि सर्वं जगदभिगदितं ब्रह्मभावेन पूर्वं
सर्वान्तर्यामिता च प्रभवितुरुदिता सर्वतद्देहता च।
तस्मात् विश्वैक्य-बाधप्रभृतिबहुविधापार्थवम्भ्रम्यमाण-
क्षुद्रक्षीबोक्तिजालं निखिलमिह नयैः सूत्रकारो निरास ॥ १९ ॥

अस्मिन् पादे परपक्षप्रतिक्षेपः सूत्रकारेणैव साक्षात् कृत इत्याह-तज्जत्वादेरिति। 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इति पादारम्भे, 'तज्जत्वात् तल्लत्वात् तदन्त्वाच्च (तदनत्वाच्च) सर्वं

---

रूपोपन्यासेन, द्युप्रभृतिप्रदेशपरिच्छिन्नतया च विपुलपरिमितिः अल्पपरिमाणत्वविरोधिस्थूलमान-परिच्छिन्नतया चिन्तनीय उक्तः। परिच्छिन्नत्वेनोपासनकथनं पादानुगतमित्यप्यर्थसिद्धम्। अथ परमात्म-रूढपदत्रयवत्त्वमपि षण्णामनुगतमिति दर्शयन् एकेनैव रूढ्यर्थस्य लब्धत्वात् पदद्वयं व्यर्थमित्याशंकायाम्, 'ब्रह्मान्यपरत्वे पदत्रयमप्यन्यथा नेयम्, ब्रह्मपरत्वे तु एकं रूढम्, अन्यदेव वृत्त्यन्तरेण तत्परम्। अर्थान्तरस्वीकारेऽपि नामानुरूपपुष्कलयोगार्थस्वीकारात् पूर्वपक्षिविवक्षितापेक्षया स्वरसत्वमेव। अतस्ते शब्दाः षट्सु अधिकरणेषु वर्तमानाः, प्रकृत्यादिक्षेत्र-जीवरूपतज्ज्ञार्थद्वयात्मकप्रपञ्चविलक्षणे सर्वकारणे प्रकरणेन नियमिताः सन्तः रूढिमात्रग्रहणे वैयर्थ्यात्, **नामवृत्त्या** तन्मात्रप्रतिपादकवृत्त्या रूढ्या तत्तन्नाम-व्युत्पत्तिलभ्यया तदर्थमात्रविश्रान्तया पुष्कलयोगवृत्त्या वा **नमन्ति** परमात्मशेषा भवन्ति। क्षेत्ररूपकिञ्चिद्-चेतन-तज्ज्ञरूपजीवविषयकत्वे तु शब्दा इमे स्वरसतो न प्रवर्तन्ते; क्लिष्टमेव नीयेरन्निति भावः। स्वरूपेण गुणैश्च बृहत्त्वं ब्रह्मशब्दस्यार्थः; व्याप्य-नियन्तृत्वमात्मशब्दस्य, पुरिशयत्व-पुरुदायित्वादिकं पुरुषशब्दस्य। **नमन्तीत्यत्र मनन्तीति** व्यत्यस्य लेखनमूलसमापतितपाठान्तरमपीष्ट्वा **शब्दौ पद**मिति द्वयमपि द्विती-यान्तं कृत्वा प्राञ्चः आमनन्तीत्यर्थमप्याहुः। **चिन्तामण्यभिमते** प्रथमपक्षे **शब्दौ पद**मिति त्रयाणां कर्तृत्वात् **नमन्तीति** बहुवचनम् ॥ ९६ ॥

१९. जगत्कारणत्वेन लक्षितं परीक्षितञ्च ब्रह्म प्रथमे पादे। तदन्तिमाधिकरणे शास्त्रदृष्ट्येति शरीरात्म-भावनिबन्धनमैक्यमुक्तम्। तस्य प्रपञ्चनमनन्तरेऽस्मिन् पादे तत्रोक्तं कार्यकारणभावमूलमैक्यं पुरस्कृत्य। तथाच शारीरकशास्त्रार्थमेतं प्रतितन्त्रभूतं यो विपश्चित्तमो विद्यात्, तत्रैकत्र झटित्युपैति विलयं तत्तन्मत-स्थापनाहेवाकप्रथमानहैतुककथाकल्लोलकोलाहलः इति सूत्रकारहृदयं दर्शयति **तज्जेति। तज्जलानिति** तज्जत्वतल्लत्वतदनत्वैः सर्वं जगत् **ब्रह्मभावेन** तदभिन्नत्वेन **पूर्वं** प्रथमपाद इव द्वितीयप्रथमेऽपि कथितम्। तत्र **तदनत्वं** तदधीनजीवनत्वं तदधीनस्थितिकत्वमात्रं भवति अचेतनेषु; प्राणिषु तु

खल्विदं ब्रह्म' इति तज्जत्वादिकमेव सामानाधिकरण्यहेतुः, न पुनः स्तुति-दृष्टिविधि-बाधादिकमित्युक्तम्। अतस्तत्रैव शरीरात्मभावसिद्धिः। मध्ये पुनरन्तर्यामिब्राह्मणे, 'यस्यात्मा शरीरम्, यस्य पृथिवी शरीरम्, स त आत्माऽन्तर्याम्यमृतः' इति शरीरशरीरिभावकथनपूर्वकं तदुपपादकान्तर्यामित्वं प्रतिष्ठापितम्। तदिदमाह—सर्वान्तर्यामितेति। सर्वान्तर्यामिता प्रभवितुः=भगवतः उदिता, सर्वैतद्देहता च उदितेत्यर्थः। एवं सूत्रकारवचनस्य प्रयोजनमाह—तस्मादिति। [तस्मात्=] एवं वचनात्। विश्वैक्यं भास्करादीनाम्। बाधस्तु मृषावादिनाम्। राजा राष्ट्रमित्यादिवत् स्तुत्यर्थं-सामानाधिकरण्यं भाक्तमिति केषांचित्। जन्मायावादिनां दृष्टिविधिर्लोके दृष्टिविधिदर्शनादिति। इत्थं बहुविधापार्थरूप-सामानाधिकरण्यकारणकथनबम्भ्रम्यमाणक्षुद्रहृदयमत्तप्रलापजालं निखिलमेव इह=पादे षड्भिर्नयैः=अधिकरणैः सूत्रकारो निरास॥ ९७॥

(९८) स्वाधीनाशेषसत्तास्थितियतनतया सर्वभावेन तिष्ठन्
ग्रस्ताशेषोऽक्षिनित्यस्थितिरखिलतनुः कल्पिताग्न्यादिगात्रः।
स्वर्लोकाद्यङ्गवैश्वानरमतिविषयो लक्षणस्थाऽऽदिमस्य
प्रोक्तः पादे द्वितीये श्रुतिनिकरशिरश्शेखरः श्रीनिवासः॥ २०॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां
प्रथमस्याध्यायस्य द्वितीयः पादः॥

षण्णामधिकरणानां विशेषतो भगवद्गुणविशेषप्रख्यापकत्वमाह—स्वाधीनेति। अत्र शाण्डिल्यविद्याविषये प्रथमाधिकरणे भगवतः स्वाधीनाशेषसत्तास्थितियतनतया सर्वात्मभावेनाव-

---

जीवनं यथावत्। तस्य भेदसाधकस्य ब्रह्मैक्यसाधकत्वं कथमिति शंकायामथ सर्वान्तर्यामिता प्रभवितुः जगत्कारणस्योक्ता। सर्वस्यापि मूर्धमध्यकायाद्यविशेषं शरीरत्वमिति चान्तिमाधिकरणे दर्शितम्। तदेवं शरीरवाचिनां विशिष्टवाचित्वमस्तीति इन्द्रप्राणाधिकरणोक्तोपपादनेन कृतेन परेषामैक्यादिपक्षाः निरस्ता भवन्ति। तत्र विश्वस्य सन्मात्रकार्यतया मिथ ऐक्यमस्ति, एकद्रव्यत्वात्। अतो जगत् ब्रह्म चैकमिति ब्रह्मशब्देन सर्वज्ञसत्यसंकल्पग्रहणेनोच्यते। तदयुक्तम्-सदेकदेशस्य ब्रह्मण ईश्वरांशस्य एकदेशान्तरस्य च जगत ऐक्यायोगात्। मृत्कार्यत्वाविशेषेऽपि घटशरावयोरैक्याभावात्। केचित्, 'चोरः स्थाणुः' इतिवत्, 'ब्रह्मैवास्ति; सर्वं नास्ति' इति बाधार्थसामानाधिकरण्यमाहुः। तत् कार्यसत्यत्वशरीरत्वाद्युक्तिविरुद्धम्। अन्ये, 'राजा राष्ट्रम्' इतिवत् उपचारादित्याहुः। देहात्मभावे दृढमिते मुख्यार्थत्यागाभावे तदयोगात्। एवं विश्वस्य सर्वस्योपलभ्यमानस्य शरीरभूतस्य ब्रह्मणैक्यम्, अद्वितीयब्रह्मज्ञानात् बाधः बाधार्थसामानाधिकरण्यात् इति विश्वैक्य-बाधौ प्रभृती आदिभूतौ येषां तेषु बहुविधेषु अपार्थेषु आभासार्थेषु बम्भ्रम्यमाणानां तद्विषयकभ्रान्त्यतिशयवतां क्षुद्राणाम् अल्पहृदयानां क्षीबाणां मत्तानाम् उक्तिजालं वाक्यराशिं सूत्रकारोऽर्थात् निरास निराचकार। असु-क्षेपे ; लिट्॥ ९७॥

२०. अधिकरणषट्काभिमतान् षड् गुणान् गणयति स्वेति। अशेषाणां वस्तूनां सत्तास्थितियतनानि—स्वरूप(प्रथमक्षणसंबन्ध)--कालान्तरानुवृत्ति-प्रवृत्तयः यस्य स्वाधीनानि, तथात्वात् स्वस्य,

स्थानमुच्यते । अथ द्वितीयाधिकरणे पुनः कठवल्लीप्रतिपाद्यस्य तस्यैव परत्वमुच्यते । तदप्याह— ग्रस्ताशेष इति । समनन्तराधिकरणार्थमाह—अक्षिनित्यस्थितिरिति । अथान्तर्याम्यधिकरणार्थमाह— अखिलतनुरिति । सर्वशरीरत्वमेव हि तत्र विशेषतः प्रकाश्यते । अदृश्यत्वाद्यधिकरणार्थमाह— कल्पितेति । मूर्धादित्वेन परिकल्पितेत्यर्थः । स्वर्लोकेत्यादिना वैश्वानराधिकरणार्थः प्रकाश्यते । अस्य=आदिमस्य लक्षणस्य=अध्यायस्य द्वितीये पादे एवंभूतगुणविशिष्टः श्रुतिनिकरशिरश्शेखरः श्रीनिवासः प्रतिपाद्यत इत्यर्थः ॥ ९८ ॥

इति निखिलतार्किकचूडामणिना सर्वतन्त्रस्वतन्त्रेण
कुमारवेदान्ताचार्यापरनाम्ना श्रीमद्वैश्वामित्रवरदगुरुणा
विरचिते शारीरकाधिकरणचिन्तामणौ
प्रथमस्याध्यायस्य द्वितीयः पादः ॥

—o—o—

॥ अथ अधिकरणसारावल्यां प्रथमस्याध्यायस्य तृतीयः पादः ॥

१८. ॥ द्युभ्वाद्यधिकरणम् ॥ १-३-१ ॥

सूत्रम्—द्युभ्वाद्यायतनं स्वशब्दात् ॥ मुक्तोपसृप्यव्यपदेशाच्च ॥ नानुमानमतच्छब्दात् प्राणभृच्च ॥ भेदव्यपदेशात् ॥ प्रकरणात् ॥ स्थित्यदनाभ्याञ्च ॥ १-६ ॥

---

**सर्वभावेन** सर्ववस्त्वन्तर्यामितया तिष्ठन् इति **सर्वत्रप्रसिद्धयधिकरणोक्त**गुणः । **ग्रस्ताशेषः** संहृत-चराचरादिसर्वकार्य इत्यत्त्रधिकरणगुणः। अक्षिण देहिनां नित्या स्थितिर्यस्य सः इति अन्तराधिकरणगुणः । सर्वत्रापि नित्यस्थितत्वेऽपि अत्र तदुपासनं शास्त्रेष्टम्। अखिल(लं) तनुः शरीरमस्येत्यन्तर्याम्यधिकरणगुणः। **अग्न्यादि** । अग्निरिह द्युलोकः। अग्निर्मूर्धेति वचन इव प्रयोगः । द्युलोकादिभूतं यत् **गात्रं** मूर्धाद्यवयवः तत् कल्पितमुपासकैः; मूर्धादित्वेनोपास्यमानद्युलोकादिक इति अदृश्यत्वादिगुणकाधिकरणगुणः; **रूपो-पन्यासाच्चेति** सूत्रात् । तत्रैव तदुक्तौ वैश्वानराधिकरणे को गुण इत्यत्राह **स्वरिति** । वैश्वानरमतिर्विशेषः । रूपोपन्यासमूलविषयवाक्याभिमतकल्पनायाः अत्रत्यायाश्च वैषम्यमप्यस्ति। एवम्भूतद्युलोकादिरूपमूर्धादिमतो वैश्वानरशब्दार्थभूतस्य परमात्मनो या **मतिः** वैश्वानरविद्या, तद्विषय इति । एवं प्रथमाध्यायद्वितीयपादे अत्यन्तभूषणभूतः श्रीनिवासः प्रोक्त इति ॥ ९८ ॥

इति वात्स्यचक्रवर्तिवीरराघवाचार्यकृतिषु
अधिकरणसारावलिव्याख्यायां सारार्थरत्नप्रभायां
प्रथमस्याध्यायस्य द्वितीयः पादः ॥

—o—o—

॥ अथ प्रथमस्याध्यायस्य तृतीयः पादः ॥

१. आदौ शास्त्रावतारे द्वितीयपादारम्भे च तृतीयपादप्रतिपाद्यांशः स्पष्टमुदितः । तस्मिन् संप्रत्युप-स्थिते देवताधिकरणमध्वधिकरणापशूद्राधिकरणेषु त्रिषु तदभावम् असंगतार्थान्तरोक्तिञ्च विमृश्य शंकिते प्रत्याह **स्पष्टैरिति** । आदिना अचेतनग्रहणम् । चिदचिदन्वयिधर्मप्रतिपादकवाक्यराशिघटितस्योप

(९९) स्पष्टैर्जीवादिलिङ्गैर्युतमिह हि वचः साध्यते ब्रह्मनिष्ठं
मध्येऽत्राधिक्रियोक्तिस्त्रिषु किमिति न तत्, तत्प्रसङ्गात् तदुक्तेः।
किञ्चास्यामर्धलोकायतिकनिरसनं प्रस्तुतार्थोपयुक्तं,
ब्रह्मोत्कर्षश्च सिध्येत्, गलति दिविषदां कारणैक्यभ्रमश्च ॥ १ ॥

अतीताभ्यां पादाभ्यामस्पष्टतरास्पष्टजीवादिलिङ्गकानि वाक्यानि निरूपितानि; उत्तराभ्यां पुनः पादाभ्यां स्पष्टस्पष्टतरजीवादिलिङ्गकानि वाक्यानि क्रमेण निरूप्यन्ते। अत एव द्वितीयतृतीयपादयोः परस्परसंगतिरपि सिद्धा। अधिकरणसंगतिस्तु पूर्वपादान्ते द्युपृथिव्यादिसंबन्धिनः परमात्मत्वमुक्तम्, तदेवाक्षिप्य समाधीयते। किंचादृश्यत्वाद्यधिकरण एव त्रैलोक्यशरीरत्वेन परमात्मत्वं प्रसाधितम्, तत्प्रसङ्गात् वैश्वानराधिकरणेऽपि जीवत्वमाशङ्क्य निराकृतम्। अत्र पुनः प्रासङ्गिकपरिसमाप्तौ पूर्वाधिकरणोक्तार्थशेषाभिधानेन पुनर्द्युभ्वादिवाक्यमेव समाधीयते। इह तृतीयपादे निवेशस्तु निरसनीयजीवादिलिङ्गानां स्पष्टत्वात्। अस्मिन् खलु पादे सप्तैवाधिकरणानि साक्षात् संगतानि। मध्ये देवताधिकरणादीनि त्रीण्यर्थान्तरत्वात् न संगतानीत्याशङ्क्य परिहरति—स्पष्टैरिति। स्पष्टैर्जीवादिलिङ्गैर्युतमस्मिन् तृतीये पादे ब्रह्मनिष्ठं [वचः] प्रसाध्यते; मध्ये त्रिष्वधिकरणेषु विद्याद्यधिकरणो(कारो?)क्तिः किमर्था? तत्र; प्रसङ्गात्तदुक्तेः 'हृद्यपेक्षया तु मनुष्याधिकारत्वात्' इत्यधि-

निषत्संदर्भस्यापि ब्रह्मपरत्वस्थापनं हि इह तृतीयपादे। अत्र मध्ये तत्स्थापनमध्ये **अधिक्रियोक्तिः** अधिकारविषयविचारः त्रिषु अधिकरणेषु देवतानां विद्याधिकारोऽस्ति न वा, मधुविद्यादिषु विशेषेषु अस्ति न वा, शूद्राणां वेदान्तोदितासु विद्यास्वधिकारोऽस्ति न वेत्येवंरूपः **किमिति**—कथं घटते? प्रतिवदन् आह **न तदिति**। नैतत्। **तत्प्रसंगात्** मुख्यप्रतिपाद्यार्थेन सह प्रसंगसंगत्या **तदुक्तेः** अधिकारविचारात्। न च प्रसक्तत्वेऽपि तृतीयाध्याये यतिगृहस्थाद्यधिकारविचारात् तत्रैव वक्ष्यत इति कृत्वाऽत्र तदुपेक्षणमेव युक्तमिति वाच्यम्-तत्राप्यधिकारविचाराभावात्। **गुणोपसंहारपादे** विद्याभेदाभेदचिन्ता। **अङ्गपादे** च विद्यांगभूतं किंकिमिति विचारः, न त्वधिकारस्य। अत इहैवोपस्थितमुपेक्षानर्हमिति मत्वा निरूप्यते। इदमेव मनसिकृत्य पूर्वं, 'न्यायैकत्रिंशदत्र प्रतिचरणविभक्त्यन्विताऽन्वेषणीया' इति **अन्वेषणीय**पदं प्रयुक्तम्। एतदर्थमेव तदधिकरणत्रयस्य प्रधानार्थप्रतिपादकैकाधिकरणगर्भे निवेशोऽपि कृतः। ननु हृद्यपेक्षया तु इत्येतावदलम्, उपास्यत्वाय परमात्मनो हृदि वर्तमानत्वात् उपासकहृदयस्याङ्गुष्ठपरिमाणत्वमपेक्ष्य अङ्गुष्ठमात्रत्वोक्तिरित्यर्थसंभवात्। तथा **अपेक्षया**=कदा मामुपासीतेति फलार्थिकर्तृकोपासनापेक्षातिशयेन परमात्मनो हृदि वर्तमानत्वादिति। अतः मनुष्याधिकारत्वादिकं प्रयुज्य आशंकानामुत्थापनं तदर्थाधिकरणरचनं च कुत इत्यत्राह **किञ्चेति**। मीमांसाया एकशास्त्रत्वात् पूर्वभागे केषाञ्चिदन्यथाप्रतिपत्त्यादिकं संभाव्य तन्निरसनं कार्यमित्याशयेनैव एतावदादृतम्। तत्फलञ्च बहिति भावः। तदुच्यते—**अस्यां** मीमांसायां शारीरकमीमांसायां वेत्यर्थः। यद्वा अस्यां देवताधिक्रियोक्तौ सत्यामित्यर्थः। अर्धलोकायतिकानां आराधनं कर्म स्वीकृत्य आराधकमुपेक्षमाणानां पूर्वमीमांसाव्याख्यातॄणां देवताविग्रहादिपक्षकस्वीकारेण निरसनं **प्रस्तुतस्य** सर्वजगत्कारणत्वरूपार्थस्योपयुक्तम्। प्रथमपादे **प्रतर्दनविद्यायामिन्द्रकर्तृकोपासनोक्तिः** कथम्, मनुष्याधिकारित्वोक्तेः। नचिकेतसे

कारप्रसङ्गात् तदुक्तेः समुचितत्वात्। किंच देवताधिकरणाद्युक्तौ अर्धलोकायतिकानां निरीश्वर-मीमांसकानां निरसनं परमपुरुषस्य चतुर्मुखादिपिपीलिकान्तसकलजगत्कारणत्वरूपप्रस्तुतार्थ-प्रसाधनोपयुक्तमेव; देवतानामभावे तदपेक्षया कारणत्वापादनायोगात्। तदपेक्षयापि भगवत आराध्यत्वेन ब्रह्मोत्कर्षश्च सिध्येत्। तासां देवतानां कारणैक्यभ्रमोऽपि गलत्येव ॥ ९९ ॥

(१००) न्यायाः सप्तैव साक्षात् परविषयतया सङ्घटन्तेऽत्र पादे
सर्वाधारः स आत्मा स्वमहिमनिलयस्तत्र तात्पर्यभूमिः।
तत्सिद्ध्यै शासनाद्यं कथितमिह मिथस्स्यूतमालोचनीयं,
सर्वेशत्वं च षष्ठप्रमितनयमितं पश्चिमन्यायरक्ष्यम् ॥ २ ॥

अतः सप्तानामधिकरणानां साक्षात् संगतिः। प्रसङ्गादन्येषाम्। तदिदमनूद्य साक्षात्संगतेषु सप्तसु षष्ठदशम(सप्तम)योः परस्परसंगतिं चाह—न्याया इति। सप्तैव न्यायाः साक्षात्परविषयतया संघटन्तेऽत्र पादे। किंचास्मिन् पादे सर्वाधारः स एवात्मा [स्वमहिमनिलयस्तात्पर्यभूमिः।?] 'कस्मिन् प्रतिष्ठितः स्वे महिम्नि' इत्युक्तप्रकारेण भगवतः स्वमहिमनिलयत्वोपपादनम(नाद्?)नन्याधारत्वं च

---

मृत्युना विद्योपदेशश्च कथम्, मृत्योरप्रसक्तेरित्यादिशंकापरिहाराच्च प्रस्तुतार्थोपयुक्तता। किञ्च देवतानामुत्पत्तिस्थित्यादिप्रतिपादकभागानां यथाश्रुतार्थत्यागे देवतिर्यगादिचतुर्विधप्राणिजात-तत्तल्लोकादि-स्रष्टृत्वाद्यसिद्ध्या जगत्कारणत्वमेव यथावदगृहीतं स्यात्। ब्रह्मरुद्रेन्द्राद्यंगीकारे सत्येव परब्रह्मणोऽधिकोत्कर्षसिद्धिः। देवतानामिष्टावपि सर्वदेवतैवयोक्तौ देवतान्तरेष्वपि कारणत्वभ्रमः स्यात्। तद्वारणमपि प्रयोजनम्। तेन तासां मोक्षादिप्रदत्वायोगसिद्धिश्च ॥

**चि. टी.** अत्र प्रथमश्लोके चिन्तामणौ, **'अधिकरणसंगतिस्तु'** इत्यारभ्य, **'स्पष्टत्वात्'** इत्यन्तं तृतीयश्लोके निवेश्यमत्र प्रासंगिकम् ॥ ९९ ॥

२. एतत्पादगतानां मुख्याधिकरणानां येऽर्थाः, तेषां पादप्रतिपाद्यगुणविशेषोपयोगमाह **न्याया** इति। **न्यायाः** अधिकरणानि। **साक्षादिति**। स्पष्टजीवादिलिंगकवाक्येष्वपि ब्रह्मपरत्वस्थापनरूपकार्य-मुखेनेत्यर्थः। देवताधिकरणे समाननामरूपत्वाच्चेत्येवं देवतास्रष्टृत्वेन, मध्वधिकरणे वस्वाद्यन्तर्यामितयो-पास्यत्वेन, अपशूद्राधिकरणे च संवर्गविद्याविषयत्वेन परस्य ग्रहणेऽपि इतराधिकरणतुल्यरीतिर्नेति भावः। **सर्वाधार** इत्यादि। आत्मत्वप्रकारशोधनमेतत्पादकृत्यमिति प्रागुक्तमनुसंधेयम्। द्वितीयपादे अन्तर्यामिब्राह्मणमुखेन अन्तःप्रविश्य नियन्तृत्वरूपमात्मत्वं ज्ञातम्। नियताधारत्वरूपमात्मत्वमत्र प्रथमाधि-करणे उच्यते। सर्वाधारत्वस्थापनाय भूमाधिकरणे—**स्वमहिमनिलयत्वं** 'स्वेमहिम्नि प्रतिष्ठितः' इति अनन्याधारत्वपर्यवसितमुक्तम्। ईक्षतिकर्माधिकरणविषयवाक्यदृष्टौ तु स्वमहिमभूतवैकुण्ठनिलयत्वमप्य-वगम्यते इत्यन्यदेतत्। आधारत्वञ्च, 'प्रशासनात्' इति संकल्पकृतत्वेन ज्ञाप्यते **अक्षराधिकरणे**। नियताधारत्वरूपात्मत्वप्रकार इव नियतशेषित्वरूपात्मत्वप्रकारः ईक्षतिकर्माधिकरणे शेषिशेषभावप्रतिपादक-त्रिमात्रप्रणवप्रस्तावेन प्रतिपादितः। अत्र, **'सर्वाधारस्स आत्मा'** इत्यनेन, **'तमेवैकं जानथात्मानम्'** इति द्युपृथिव्याद्याधारताप्रयुक्ताद्वितीयात्मत्वं ज्ञाप्यते। **स** इति, 'ईक्षतिकर्मव्यपदेशात् सः' इत्यस्य प्रत्यभि-

पादस्य तात्पर्यविषयः । उक्तं हि पूर्वमेव, 'स्रष्टा देही स्वनिष्ठः' इति; 'स्वयंदासास्तपस्विनः' इतिवत् । एतस्य तात्पर्यस्य प्रसिद्ध्यर्थं भगवतः सर्वप्रशासितृत्वादिकं तत्तदधिकरणार्थजातं कथितं मिथस्स्यूतं परस्परसंश्लिष्टमालोचनीयम् । तर्हि त्रिभिरधिकरणैः षष्ठदशमयोर्व्यवधाने कथं सम्बन्ध इत्याशङ्क्य षष्ठाधिकरणप्रमितं भगवतः सर्वेशत्वं दशमाधिकरणेन तस्यैव मोक्षप्रदत्वप्रतिष्ठापनेन संरक्षणीयमिति परस्परसंबन्धः सिध्यत्येव ॥ १०० ॥

(१०१) सिद्धं प्रागेव मुण्डोपनिषदि परमं ब्रह्म तद्धर्मभेदैः
भेदोक्तेश्चेत्यकाण्डे किमिति पुनरिमां पिष्टपेषं पिनष्टि ।
सत्यं क्षेत्रज्ञधर्मैः पटुभिरुपनता प्रक्रियाभेदशङ्का
प्रक्षाल्य प्रत्यभिज्ञामपुनरुदयमुन्मूल्यते शब्दपूर्वैः ॥ २ ॥

सूत्रे(अत्र) द्युभ्वादीति पदद्वयोपादानमूर्ध्वाधोलोकोपलक्षणार्थमिति मन्तव्यम् । अत्राधिकरणारम्भमाक्षिप्य समाधत्ते—सिद्धमित्यादिना । प्रागेव = अदृश्यत्वाद्यधिकरण एव । मुण्डोपनिषदि परं ब्रह्म स्वव्यवस्थापकैस्तत्तद्धर्मभेदैः सिद्धमेवमेव । भेदोक्तेश्च—साक्षाज्जीवपरयोर्भेदकथनाच्च । तथा च सति किमर्थमिमामुपनिषदं पिष्टपेषं पिनष्टि । विशिष्य पुनःपुनः पिनष्टीत्यर्थः । अर्धाङ्गीकारेण समाधत्ते—सत्यमित्यादिना । अस्तु पूर्वमेव विचारितं मुण्डोपनिषद्वाक्यम्, अथापि विचार्यते । तत् किमर्थमित्यत्राह—क्षेत्रज्ञेति । नाड्याधारत्वादिभिरसाधारणैर्जीवधर्मैरुपनता मुण्डोपनिषदि जीव-

ज्ञानात् शेषित्वप्रयुक्तमात्मत्वमपि सूचितम् । अथ एवमात्मत्वाहं कल्याणगुणाकरत्वमीशनशक्तिमत्त्वञ्चोक्तमिति विवेचितम् । तत्सिद्ध्यै धारकत्वसिद्ध्यै शासनाद्यम् अक्षराधिकरणे शासनम् । ईक्षतिकर्माधिकरणे चतुर्मुखाधिकत्वविभूत्यन्तराधिपत्वादि । तदुपरि अपहतपाप्मत्वादि च । इह पादे कथितं मिथस्स्यूतम् संश्लिष्टमुपपादकत्वेन विमर्शनीयम् । षष्ठे प्रमितनये प्रमिताधिकरणे मितं ज्ञातं, 'ईशानो भूतभव्यस्य' इत्युक्तं सर्वेशत्वञ्च । पश्चिमेन अन्तिमेन, 'आकाशोऽर्थान्तरत्वादिव्यपदेशात्' इत्यधिकरणेन मुक्ताधिकत्वविशिष्टसर्वलोकाधिपतित्वस्थापनेन रक्ष्यम् । तेन मुक्तनिरूपितात्मत्वाभावे नियताधारत्वशेषित्वाभावेनात्मत्वमेव न सिध्येदिति शंकाया शमनाच्च उपक्रान्तात्मत्वस्थापनानुस्यूतिः आन्तं लक्ष्यत इति ॥ १०० ॥

२. अथ प्रथमाधिकरणसारं वक्ष्यन् पूर्वपाद एव मुण्डकोपनिषदो विचारितत्वात् तस्याश्चैक-अक्षरविद्यामात्रपरत्वात् किमत्र चर्वितचर्वणेनेति शंकां तत्परिहारञ्च भाष्याभिमतौ संगृह्णाति सिद्धमिति । प्रागेव=पूर्वपादे अदृश्यत्वादिगुणकाधिकरण एव परमं ब्रह्म तद्धर्मभेदैः—तदसाधारणधर्मविशेषैः सर्वज्ञत्वप्रकृत्युत्पादकत्वादिभिः, भेदोक्तेश्च अक्षरावधिकपरत्वाश्रयजीवावधिकपरत्ववक्त्ववचनाच्च मुण्डकोपनिषत्प्रतिपाद्यत्वेन सिद्धं हि । अत्र परममित्यनेन, 'स यो ह वै तत्परमं ब्रह्म वेद, ब्रह्मैव भवति" इति मुण्डकान्तस्थितवाक्यग्रहणात् आन्तं ब्रह्मपरत्वेन निश्चितेयमुपनिषदिति सूच्यते । इतीति । इति= उक्तहेतोः अकाण्डे अनवसरे इमामेवोपनिषदं किमिति कुतः । पिष्टपेषं पिनष्टीति । पिष्टस्य पुनः प्रेषणवत् वृथा भूतं विचारितस्यैव विचारं करोतीत्यर्थः। विचारितत्वमंगीकरोति सत्यमिति । प्राप्ताशंकापरिहारकत्वान्नात्र पौनरुक्त्यमित्याह क्षेत्रज्ञेति । क्षेत्रज्ञधर्माः नाडीसंबन्ध-बहुधाजायमानत्व-मनःप्राणोपश्लिष्ट-

परमात्मनोः प्रकरणभेदशङ्का परस्परं प्रत्यभिज्ञां प्रख्याप्यापुनरुदयं शङ्कायाः पुनरुदयाभावेनोन्मूल्यते शब्दपूर्वैः=श्रुत्यादिभिः प्रमाणैः । अयमर्थः—मुण्डोपनिषद्वाक्ययोरुभयत्रापि परमपुरुषगुणप्रत्यभिज्ञानात् प्रकरणभेदशङ्कैव नास्ति। नाडीसम्बन्धादयश्चाऽऽभासहेतवः। तत उचितैः समाधानहेतुभिर्भाष्यकाराभिप्रेतैरेव समाधेया इति । तदर्थविचारस्तु—किं द्युपृथिव्याद्यायतनं जीवः, उत परमात्मेति । तदर्थं पुनर्विचार्यते—'यस्मिन् द्यौः' इत्यादिवाक्यजातं किमदृश्यत्वादिगुणप्रकरणात् भिन्नम्, उत अभिन्नमिति । तदर्थं पुनः प्राणादिसम्बन्धः किमुपकार्योपकारकत्व(किमुपकरणोपकरणित्व)निबन्धनः, उत आधाराधेयभावलक्षणः । तदर्थं द्युपृथिव्याद्यायतनत्वामृतसेतुत्वादिधर्माः किं कर्मफलानुभवितुर्जीवस्य संभवन्ति, उत नेति ॥ १० ॥

(१०२) यस्मिन्नोतं मनोऽन्यैस्सह करणगणैर्जायते यश्च नाना
नाड्याधारश्च योऽन्तश्चरति स करणी कर्मभोक्तेति चेन्न ।
विश्वाधारात्मभावादमृतवितरणान्मुक्तसृप्यत्ववादात्
प्रागुक्तप्रक्रियैक्यादनशनसहितात् काशनाच्चान्यसिद्धेः ॥ ४ ॥

अत्र पूर्वपक्षसिद्धान्तौ संगृह्णाति—यस्मिन्नोतमित्यादिना । 'यस्मिन् द्यौः पृथिवी च' इत्यादि-

त्वादयः। पटुभिरित्यनेन, 'यद्यस्पष्टानि जीवलिङ्गानि स्युः, तर्हि शंका नोत्तिष्ठेत् स्पष्टत्वात्तु भवति' इति ज्ञाप्यते। अतः दहरविद्यासंनिहितप्रजापतिवाक्यस्य दहराकाशब्रह्मातिरिक्तजीवात्मप्रतिपादकत्ववत् मुण्डकोपनिषदुत्तरभागस्य पूर्वभागप्रतिपाद्यब्रह्मातिरिक्तजीवपरत्वं शंक्यते । तत्र प्रजापतिवाक्ये, 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति अङ्गिफलनिर्देशवत् इहापि, ब्रह्मैव भवति, परमं साम्यमुपैतीत्यादेर्निर्वाहोऽस्तु। अस्तु वा दहरविद्यायाः, 'आकाशो वै नाम नामरूपयोर्निर्वहिता' इति परमात्मभागद्वयमध्ये प्रजापतिवाक्यस्येवात्रापि मध्यभागस्य कियतोऽपि जीवपरत्वमिति च। एवं प्राप्ता प्रक्रियाभेदशंका=प्रकरणभेद इत्याक्षेपः प्रत्यभिज्ञां प्रख्याप्य अत्रैव प्रकरणे द्युपृथिव्याद्याधारत्वामृतसेतुत्वादिपरमात्मासाधारणधर्मप्रदर्शनेन नाडीसंबन्धादीनां परमात्मन्यपि संभवादन्यथासिद्धत्वोक्त्या पटुत्वनिषेधेन च उन्मूल्यते उच्छिन्नमूला क्रियते । अपुनरुदयम्-यथा पुनरप्याशंकाया उदयो न स्यात् तथेति । शब्दपूर्वैरित्यनेन, स्वशब्दात् इत्यारभ्य स्थित्यदनाभ्यांचेत्यन्तोक्तहेतुग्रहणम् । चिन्तामणौ श्रुत्यादिभिः प्रमाणैरित्यस्यापि स्वशब्दादिभिर्हेतुभिरित्येवार्थः ॥ १०१ ॥

४. पूर्वपक्ष्यभिमतान् पटून् क्षेत्रज्ञधर्मान् प्रदर्श्य परमात्मप्रत्यभिज्ञाप्रकारमाह यस्मिन् इति । श्रुतिवाक्ये यस्मिन्नित्यस्य 'ओतं मनः सह प्राणैश्च सर्वैः' इत्यत्रान्वयात् सर्वैरिति पदेन मुख्यामुख्यसर्वप्राणग्रहणप्रतीत्या करणगणैः प्राणापानादिगण-ज्ञानेन्द्रियगण-कर्मेन्द्रियगणैस्सह मनसो निरन्तरसंबन्धो यत्र तस्य ग्रहणं सिद्धम् । करणपदेन उपकरणोपकरणिभावरूपसंबन्धद्योतनम् । जायते यश्च नाना=यो बहुधा जायमानश्च । यः नाड्याधारश्च, 'अरा इव रथनाभौ संहता यत्र नाड्य' इत्युक्तरीत्या आधारभूतश्च । अन्तश्चरति च; 'स एषोऽन्तश्चरते' इत्युक्तत्वात् । परमात्मनो विभुत्वात् न चरणप्रसक्तिरिति जीव एवाणौ तदपि । एवं करणित्व-स्वकर्मफलरूपजायमानत्व-देहसंबन्धाद्युक्त्या च स जीवः । अमृतस्यैष

वाक्येषु, 'अन्यकरणैस्सह मनो यस्मिन् ओतम्=यस्मिन् नैरन्तर्येण संबद्धम्, यश्च नाना जायते, नाड्याधारश्च, यश्च देहेऽन्तश्चरति' इति कथ्यते—स चक्षुरादिना करणी=करणवान् कर्मभोक्तैवेति चेत्। [इत्यर्थः। ?]

उक्तमर्थं प्रतिक्षिपति—नेति। तत्र हेतूनाह—विश्वेति। विश्वाधारात्मभावेनास्मिन् प्रकरणे परमपुरुषस्य कथनात्, 'अमृतस्यैष सेतुः' इति मोक्षप्रदत्वप्रतिपादनात्, मुक्तप्राप्यत्वप्रतिपादनात्, पूर्वोक्तब्रह्मप्रकरणविच्छेदाभावात्, 'अनश्नन् अन्यो अभिचाकशीति' इति कर्मफलभोक्तृत्वाभावेन निरतिशयदीप्तियोगात्, चकारादन्यस्मादपि ब्रह्मासाधारणगुणयोगात् त्वदुक्तं न घटत इत्यन्वयः॥१०२

(१०३) व्याप्तेऽस्मिन्(तत्रा)श्चमोतं यदि, किमिह ततो, जन्म चास्येच्छयोक्तं
नाडीचक्रस्य नाभिर्भवति च स परो हार्दरूपेण तिष्ठन्।

---

सेतुरिति सेतुत्वव्यपदेशात् सेतोश्च स्वभिन्नपारप्रापकत्वात् अमृतरूपपरमात्मातिरिक्तस्य तत्प्राप्त्यर्थयोगाङ्गभूतज्ञानयोगविषयस्य जीवस्य ग्रहणमेव युक्तम् इति चेन्न; 'तमेवैकं जानथाऽऽत्मानम्' इति तच्छब्देन, 'यस्मिन् द्यौश्च पृथिवी चान्तरिक्षम्' इति विश्वाधारत्वस्य, एकमिति जीवव्यावर्तकस्याद्वितीयत्वस्य चात्मविशेषणत्वकथनात् आत्मशब्दस्य साधारण्यस्वीकारेऽप्यत्र स्वशब्दत्वं सिध्यति। 'अमृतस्यैष सेतु' इति मोक्षप्रदातृत्वमुच्यते। "पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" इति परसाम्यापत्तये पुण्यपापविमुक्तसेव्यत्वमुच्यते, यत् 'मुक्तोपसृप्यव्यपदेशाच्च' इति सूत्रदर्शितम्। द्युपृथिव्याधारत्वेनोपक्रमादेव मुण्डकोपनिषत्पूर्वभागोक्ताक्षरपुरुषप्रकरणाविच्छेदोऽपि ज्ञायते। प्रक्रिया=प्रकरणम्। नन्वेवं ( ) एव प्रधानत्वे, 'द्वा सुपर्णा' इति मन्त्रे जीवमात्रप्रस्तावः कुतः ? न च द्वा इति परमात्माऽप्युभ... शंवयम्, तस्य मन्त्रस्य पैंगिरहस्यव्याख्याततया जीवतदुपकरणोभयपरतया परमात्मनिर्देशाभावादित्यत्र अनशनसहितात् काशनादिति। पैंगिरहस्येऽपि, 'अनश्नन् ज्ञः' इति अनशनं ज्ञे उक्तम्। न च जीवः कर्मभोक्ता अनश्नन् भवेत्। अभिचाकशीतीति अतिशयेन काशनमनश्नत एव सत उक्तम्। जीवश्च एकवेलाशनहानावप्यतिग्लानो भवति। अशनकर्तृत्वमन्यस्यैवोभयत्रोक्तम्। न च तत् उपकरणे संभवति। तथाच स्थित्यदनाभ्यामित्युक्तरीत्या अशनसहितकाशनरूपस्थितेः परमात्मनिष्ठत्वात् अतीत्यदनकर्तृत्वस्य च जीवनिष्ठत्वात् ताभ्याम्, 'परजीवौ द्वासुपर्णेति मन्त्रप्रतिपाद्यौ' इत्यवगमात् नास्य जीवप्रधानता; परस्मिन् तद्वैलक्षण्यप्रदर्शनायैव जीवप्रस्ताव इत्यवगम्यत इति एभ्यो हेतुभ्यः अन्यसिद्धे=अन्यस्य—परमात्मन एवैतद्भागप्रतिपाद्यत्वसिद्धेरिति ॥ १०२ ॥

५. तर्हि परमात्मधर्माणामिवानन्यथासिद्धजीवलिंगानामपि श्रवणात् आत्मशब्दः किं प्रातर्दनन्यायेन जीवविशिष्टपर इत्याशंकायाम्, जीवलिंगानि न सन्ति, वाक्यस्य परमात्मधर्मपरत्वस्यैव संभवादित्याह व्याप्ते इति। प्राणसहितमनोरूपस्याक्षस्य अस्मिन् परमात्मनि ओतत्वं सुस्थम्; तस्य सर्वत्राधारतया व्याप्तत्वात्। अतः ओतत्वे किम्। प्रत्युत एकस्मिन्नेव तत्र सर्वजीवप्राणमनस्संबन्धकथनात् जीवव्यावृत्तिरेव। बहुधेति पदस्य, 'अजायमानो बहुधा विजायते' इति श्रुतिं प्रत्यभिज्ञाप्य, तत्र, 'तस्य धीराः परिजानन्ति योनिम्'

निष्कम्पव्यापिनोऽन्तश्चरणमपि शुभैर्विग्रहैरस्ति लोके
सौबालाम्नातवद्वा चरणमिदमपि स्यादधिष्ठानमात्रम् ॥ ५ ॥
इति द्युभ्वाद्यधिकरणम् ॥ १८ ॥

अथ पूर्वपक्षयुक्तीनामन्यथासिद्धिं वक्तुमारभते-व्याप्त इति। सर्वव्याप्ते भगवति इन्द्रियादिकमोतं चेत्, किमिह ततः? किं नोपपद्यत इत्यर्थः। [अथ?] भगवतो जन्म नोपपद्यत इति चेत्, तन्नोपपद्यते ऐच्छत्वाज्जन्मन इत्याह—जन्मेति। 'अजायमानो बहुधा विजायते' इति हि श्रूयते। नाडीचक्रस्येति। 'अरा इव रथनाभौ संहता यत्र नाड्यः' इति नाडीचक्रस्य नाभिर्भवति च भगवान् हार्दरूपेण तिष्ठन्=हृदयान्तर्वर्तित्वेन वर्तमानः। सर्वासामपि नाडीनां हृदयान्तर्वर्तिपरमपुरुषसम्बन्धित्वात्। श्रूयते हि, 'शतं चैका च हृदयस्य नाड्यः' इति। तर्हि सर्वव्यापिनः कथमन्तश्चरणमिति चेत्, तदप्यनूद्य समाधत्ते-निष्कम्पेति। द्विरूपं खल्वन्तर्यामित्वं भगवतः—विग्रहपरिग्रहेणैकम्, सर्वव्याप्तेन स्वरूपेणापरम्। विग्रहेण देहान्तश्चरणं तावत् मुख्यत एव; स्वरूपेणान्तश्चरणं तु, 'यः पृथिवीमन्तरे सञ्चरन्' इत्यादिना सुबालोपनिषदाम्नातसर्वान्तर्यामित्वरूपचरणवत् अत्रापि संघटत एव। अन्तर्यामित्वेनाधिष्ठानमात्रस्यैव चरणशब्दवाच्यत्वादित्यर्थः ॥ १०३ ॥

---

इत्युक्तं स्वेच्छाधीनं कर्मानधीनं जन्म विवक्षणीयमिति दर्शयति। 'अरा इव रथनाभौ' इति दृष्टान्तेन अरसमुदायस्य रथनाभिरिव, अयं नाडीसमुदायस्य नाभिर्भवतीति आधारत्वस्य विवक्षिततया हार्दस्य हृदयावच्छिन्नस्यैव तद् घटते, न जीवस्य; तस्य इमा नाड्यो मया धार्या इति ज्ञानाभावात्। ननु तिष्ठन् परमात्मा कथमत्र ग्राह्यः, संचरत इति संचारोक्तेरिति चेत्, अस्य निष्कम्पव्यापित्वेऽपि— यथैषत् चलनमपि न भवेत्, तथा सर्वव्यापित्वेऽपि, दिव्यमंगलविग्रहविशिष्टरूपेण चलनमपि भवति। तथाच अन्तश्चरते इत्यस्य प्रकृतिमण्डलान्तः विभवरूपैर्लोके चरतीति वाऽर्थं इष्यताम्, लोकेऽत्र सर्वजीवान्तः देहेषु हार्दविग्रहैश्चरतीति वेष्यताम्। यथोक्तं बृहदारण्यके (6-2), "इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन् पुरुषः.........अथैतत् वामेऽक्षिणि.........एषाऽस्य पत्नी विराट्। तयोरेष संस्तावः य एषोऽन्तर्हृदय आकाशः.........अथैनयोरेषा सृतिः सञ्चरणी यैष हृदयादूर्ध्वा नाड्युच्चरति" इति। अथ चरते इत्यस्य स्थितिमात्रेऽपि प्रयोगोऽस्तीत्याह सौबालेति। सुबालोपनिषदि आम्नातं चरणं हि स्थितिमात्रम्। 'यः पृथिवीमन्तरे संचरन्, योऽप्सु संचरन्' इति सर्वव्यापिनोऽन्तर्यामिब्राह्मणे तदुक्तेः। हार्दस्य परमात्मनो दिव्यविग्रहस्तु जीवदेह एव संभावितः, न पृथिव्यादौ सर्वत्र वस्तुनि। अतस्तदात्मस्वरूपगतं चरणमधिष्ठानमात्रम्। अधिष्ठानं स्थितिर्वा संकल्पो वा। 'यः पृथिव्यां तिष्ठन्' इति बृहदारण्यकानुसारे स्थितिरेव। तथा च जीवलिङ्गभागानां परमात्मधर्मप्रतिपादकतया जीवविवक्षाया अनावश्यकतया शुद्धः परमात्मैवाऽऽत्मशब्दार्थ इति ॥

चि. टी. वर्तित्वेनेति। वर्तिविग्रहेणेत्यकथनात् हार्दशब्देन नावतारविवक्षा; किन्तु परिच्छिन्नात्मस्वरूपस्येति ज्ञायते। विग्रहस्तु विग्रहैरिति वक्ष्यते ॥१०३॥ इति द्युभ्वाद्यधिकरणम्॥

१९ ॥ अथ भूमाधिकरणम् ॥ १-३-२ ॥

सूत्रम्—भूमा सम्प्रसादादध्युपदेशात् ॥ धर्मोपपत्तेश्च ॥ ७, ८ ॥

(१०४) आत्मज्ञानाभिलाषादनुपरतशुचे नारदाय प्रयुक्तं
प्राणे सानत्कुमारं विरमति वचनं, हिंसनार्हः स जीवः ।
अल्पप्रत्यर्थिभूमा निरवधिकसुखोऽस्वेव एवेति चेन्न ;
प्राणाख्यात् सत्यशब्दोदितमधिकतयोपास्यमत्र ह्युपात्तम् ॥ ६ ॥

परमात्मप्रकरणाविच्छेदात् मुण्डोपनिषदि आपादचूडं परमात्मपरत्वमेव प्रसाधितम् । तर्हि छान्दोग्ये भूमविद्यायां जीवप्रकरणाविच्छेदात् जीव एव प्रतिपाद्यत इति पूर्वपक्षोत्थानेन प्रमाणद्वारा संगतिः । अर्थद्वारापि संगतिरभिधीयते—पूर्वत्र, 'ओतं मनः सह प्राणैः' इति प्राणसम्बन्धी पुरुष उक्तः, अत्रापि प्राणसम्बन्धित्वेन प्राणशब्दवाच्यो जीव एवोच्यत इति । तदर्थविचारस्तु—किं भूमशब्दनिर्दिष्टः प्रत्यगात्मा, उत परमात्मेति। किं भूमशब्द(?)निमित्तवैपुल्येन प्रत्यगात्मा निर्दिश्यते उत परमात्मेति । किं प्राणशब्दनिर्दिष्टप्रत्यगात्मनि प्रश्नप्रतिवचनाभ्यां भूमापि समाप्तः, नेति । किंच,

---

६. पूर्वाधिकरण इव जीवलिंगस्यान्यथयितुमशक्यत्वात् जीवप्रकरणाविच्छेदात् भूमा जीव एवेत्युत्थितिः । पूर्वोत्तरपक्षौ इतिवृत्तेन सह संगृह्णाति आत्मेति । "सोऽहं भगवो मन्त्रविदेवास्मि, नात्मवित् । श्रुतं हि मे भगवद्दृशेभ्यः, 'तरति शोकमात्मवित्' इति । तन्मा भगवान् शोकस्य पारं तारयतु" इति प्रार्थितवते नारदाय, 'यो नाम ब्रह्मेत्युपास्ते' इत्येवं फलान्तरार्थदृष्टिविधिभिः प्रलोभने कृतेऽपि, 'अस्ति भगवो भूयः' इति उपर्युपरि प्रश्नमनुवर्तितवते, आत्मज्ञानाभिलाषानुवृत्त्या तदलाभप्रयुक्तशोकोपरतिरहिताय आशापर्यन्तोपदेशानन्तरं प्राणमुपदिदेश सनत्कुमारः । एतदुपरितनश्च सानत्कुमारं वचनं प्राणे विश्रान्तम् , उत प्राणादप्यधिककिञ्चिदुपदेशपरमिति विमर्शे–तदुपरि सत्य-सुख-भूमाद्यनेकोपदेशोऽपि सर्वस्य प्राणोपासनानुबन्धित्वमेवेति प्राण एव तदुपदेशो विरमति । कुत इति चेत्—प्राणोपदेशानन्तरं भूयःप्रश्नाकरणात् आत्मज्ञानाभिलाषनिवृत्त्यवगमात् तदलाभप्रयुक्तशोकाभावस्याप्यूहनात् । प्राणोपासनविधायिना गुरुणा प्राणे दृष्टिविध्यकरणात् , 'स वा एष एवंपश्यन् एवंमन्वान एवंविजानन्नतिवादी भवति' इति उत्कृष्टस्योपास्यवस्तुवादितयोपासकस्य श्लाघनात् , परैः प्रश्ने अतिवाद्यहमस्मीति अनपह्नवेन तत् स्वीकार्यमिति अतिवादविषयस्य वास्तवताया दृढीकरणात् प्राणे गुरूपदेशविश्रान्तिं स निश्चिकाय । अत एव प्राणोऽयमात्मा, आत्मज्ञानाभिलाषिणं प्रत्युपदिष्टत्वादिति चावधारयामास । अतो मुख्यप्राणमात्रे विश्रान्तिर्नारदमतेति न वक्तुं शक्यम् । 'प्राणो ह पिता प्राणो माता' इति पित्रादितया व्यपदिष्टत्वाच्च नायं वायुः । न च पञ्चवृत्तिप्राणातिरिक्तजीवे मानाभावात् पित्रादिशब्दस्यापि स एव विषयः किं न स्यादिति शंक्यम्—पञ्चवृत्तिप्राणसद्भावकाले उपक्रोशे कृते पितृहा, मातृहेति हिंसकत्वव्यपदेशो दृश्यते, न तु विगतप्राणे इति यथा, तथा अपञ्चवृत्तिप्राणकेषु स्थावरेष्वपि उपमर्दवशात् हिंसकत्वव्यपदेशो दृश्यते । तत्र स्थावरेषु पञ्चवृत्तिकत्वाभावेऽपि प्राणसद्भावे किं मानम् ? हिंसादिबोधकशास्त्रमेवेति चेत्—हिंसाशब्दस्य वेदनाजनकव्यापारार्थकत्वात् वेदनायाश्चाचेतननिष्ठत्वायोगात् प्राणजीव-

'स वा एष एवंपश्यन्नेवंमन्वान एवंविजानन्नतिवादी भवति' इत्यतिवादित्वं प्राणातिवादिन उक्त्वा 'एष तु वा अतिवदति यः सत्येनातिवदति' इति प्राणातिवादिनः सत्यवदनमङ्गतया विदधाति, उत न्यशब्देन परमात्मानं निर्दिश्य तदतिवादिनः प्राणातिवादिनोऽप्यति[शयित?]वादित्वं वदतीति । किमस्मिन् वाक्ये, 'एष तु वा अतिवदति' इत्यत्र प्राणातिवादिनः प्रत्यभिज्ञाऽस्ति, नेति । किं तुशब्दः प्रत्यभिज्ञाविरोधी, नेति। अत्र पूर्वपक्षसिद्धान्तौ संगृह्णाति-आत्मेति। इह खलु भूमविद्यायां सनत्कुमारो गुरुः, नारदः शिष्यः। स (तत्र) च सर्वमपि विद्यास्थानं परिज्ञातवान्। तथापि च भगवज्ज्ञानशून्योऽहमिति, 'सोऽहं भगवो मन्त्रविदेवास्मि नाऽऽत्मवित्' इति आत्मज्ञानाभिलाषादनुपरतशोको नारदः । अस्मै नारदाय प्रवृत्तं सनत्कुमारवचनं प्राणे पर्यवस्यति। तदेव प्रतिपादयति-प्राण इति। स च प्राणाख्यो

---

मेदपरशास्त्राच्च प्राणवत् आत्माऽपि स्वीकर्तव्य एव । तर्हि तस्य प्राणशब्दव्यपदेशः कुत इति चेत्-अप्राणे उपक्रोशाभावस्य सप्राण एवोपक्रोशस्य च दर्शनेन प्राणाधीनप्रवृत्तिनिवृत्तिरूपचेष्टादर्शनेन च प्राणसहचरिततयैव जीवसत्त्वावधारणात् । किञ्च परश्शतप्रमाणैः प्राणातिरिक्त आत्मेति निर्धारिते सति तदविरोधेनैवात्रार्थस्य वक्तव्यतया प्राणातिरिक्ततयाऽवसेयमात्मानमेव प्राणशब्दव्यपदेश्यं नारदोऽमंस्त ; पूर्वनिर्दिष्टान्नजलतेजआकाशतुल्यवायुविकारभूतं तु प्राणं भूतान्तरवत् अनात्मानमेवाग्रहीदिति मन्तव्यम् । अतो हिंसनार्हो जीव एव प्राणः, न वायुः । ननु वस्तुतः परमात्मज्ञानस्य संसारशोकनिवर्तकत्वात् प्राणशब्दस्य च तत्रतत्र परमात्मनि प्रयोगस्य स्थितत्वात् अत्रैव, 'यथा वा अरा नाभौ समर्पिताः एवमस्मिन् प्राणे समर्पितम्' इति अरनाभिदृष्टान्तप्रदर्शनाच्च आत्माभिलाषिणे नारदायोक्तः प्राणोऽयं परमात्मेत्येव बुद्धिः प्रथममासीदिति किं न स्यादिति चेत्-एवं स मत्वा प्रश्नमकुर्वन् मा भूदित्येतदर्थमेव हिंसार्हपित्रादिरूपेण प्राणवर्णनम् । न हि परमात्मा दु स्दूरो हिंसार्हो भवति । इदमप्युक्तमत्र, हिंसनार्हः स जीव इति । भाष्येऽपि, एवं न भ्रमितव्यमित्युक्तम् । ननु प्राणोपरि वस्त्वन्तरे वर्ण्यमाने कथं प्राणे विश्रान्तिनिर्णय इति चेत्-तत्राऽऽह अस्पेति । अयं भावः —उपरि, 'सत्येनातिवदति, सुखं त्वेव विजिज्ञासितव्यम्, भूमा त्वेव विजिज्ञासितव्यः' इति त्रयमुच्यते । अन्यत्तु निष्ठाश्रद्धादिकं न पृथक्तत्त्वम् । तत्र सत्यं तावत् न प्राणातिरिक्तपरमात्मतत्त्वम् । सत्यवचन एव तस्य प्रसिद्धेः । अतिवदतीति वदधातुप्रयोगाच्च सत्यं सत्यवचनमिति ज्ञायते । यत्तु सुखं, तत् प्राणरूपजीवात्मैव भवितुमर्हतीति न पृथक् स्यात् यस्तु भूमा, सोऽपि जीव एव । ननु भूमा हि बहुत्वम् । तच्च संख्याविशेषो वा वैपुल्यं वा धर्मविशेषः, कथं पृथक् तत्त्वमिति चेत्-अत्र, 'यत्रान्यच्छृणोति...तदल्पम्' इति अल्पं निर्दिश्य तत्प्रतिपक्षतया भूमेति निर्देशात् तस्य संख्यारूपत्वं वा वैपुल्यरूपधर्मत्वं वा न संभवतीति भूमशब्द इह विपुल इत्यर्थकः । अतः अल्पप्रत्यर्थिभूतविपुलरूपो भूमशब्दार्थः एष जीव एव । कथमणोर्विपुलत्वमिति चेत्-अत्र प्रकरणे सुखं भूमानञ्च पृथक् पृथक् संकीर्त्य, 'यो वै भूमा तत् सुखम्' इति विशेष्यविशेषणभाववचनात् विपुलसुखमित्येवार्थ. । भवति च निरवधिकसुखत्वं जीवस्यापि । भूमलक्षणं हि, 'यत्र नान्यत् पश्यति नान्यच्छृणोति' इति वर्णितम् । जीवसुखञ्च, 'यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः' इति प्रशस्यते—अधिकसुखत्वबुद्धिरत्रैव भवति योगिन इत्युच्यते—इति पूर्वपक्षी ।

जीव एव; तस्मिन्नेव प्रकरणे तस्य हिंसनार्हत्वेन कथनात्। किंच अत्राल्पप्रत्यर्थित्वेनाभिधीयमानो भूमशब्दवाच्योऽर्थो निरवधिकसुखाश्रयो जीव एव स्यात्॥ इत्याशङ्क्य प्रतिक्षिपति—नेति। तदेव विवृणोति—प्राणाख्यादिति। तत्र हि प्राणशब्देन जीवमुक्त्वा प्राणवेदिनश्चेतरसुखातिशयितसुखरूपजीववेदिनोऽतिवादित्वमुक्त्वा तस्यापि जीवस्याल्पत्वेन परमात्मसुखवेदिन एवान्ततोऽतिवादित्वं प्रतिष्ठाप्यते। तेन प्राणाख्यादधिकं सत्यशब्दवाच्यं परं ब्रह्मैवास्मिन् प्रकरणे प्रधानप्रतिपाद्यमुच्यते [भूमादिपदेन?] इति॥ १०४॥

(१०५) नामाद्याशान्तवेद्ये प्रतिवचनवशात् प्रश्नतश्चाधिकोक्तेः
प्राणे विश्रान्तिदृष्ट्या भवतु तदवधिः प्रस्तुतात्मोपदेशः।
मैवं; जातो हि नामादिवदिह परमादात्मनः(तः) प्राण उक्तः;
स्वस्मादित्यत्र तत् स्यादिति न, विघटनात् स्वारसिक्या विभक्तेः॥ ७॥

पूर्वपक्षाभिप्रायं विस्तरेणोक्त्वा स्वाभिप्रायमपि तथैव कथयति—नामेति। नामोपक्रम्य आशान्ते विक्पर्यन्ते(?) वेद्ये प्रश्नप्रतिवचनयोरनुवृत्तत्वात्, उत्तरोत्तरमतिशयितफलवत्त्वेनाधिकोक्तेश्च(?) दृष्टत्वात् प्राणे तादृगभिधानस्य विश्रान्तिदर्शनाच्च प्रस्तुतात्मोपदेशः प्राणावधिः स्यात्। ततः प्राणस्योपरि सत्यशब्दवाच्यतया आत्मोपदेशो नास्ति। उक्तमर्थं प्रतिक्षिपति—मैवमिति। इह = अस्मिन् प्रकरणे।

---

इदं निरस्यति नेति। किं सुख-भूमशब्दार्थविमर्शेन। अत्र हि भूम्नः प्रागेव, 'सत्यं ज्ञानम्' इत्यादौ सत्यशब्दोदितं प्रसिद्धं प्राणाख्यात् जीवादधिकतयोपास्यत्वेनोपात्तमस्ति। एकान्तरितश्लोके चेदं विशदयिष्यते। एवञ्च भूमसुखयोस्तदनन्तरोक्तयोरपि तुल्यानन्यत्वं सिद्धम्। जीवपरत्वे हि भूमसुखं विपुलसुखमित्यस्य, 'अपरिच्छिन्नं यत् सुखभूतमात्मस्वरूपम्' इत्यर्थो न भवति; जीवात्मस्वरूपस्य परिच्छिन्नत्वात्। अपरिच्छिन्नं यत् सुखत्वम्=आनुकूल्यं तदाश्रय इत्यपि न; परमात्मगतानुकूल्यापेक्षया जीवात्मगतानुकूल्यस्य निकृष्टत्वात्। अतः सुखमित्यस्य सुखविशिष्ट इत्यर्थमिष्ट्वा सुखे निरवधिकत्वान्वयेन निरवधिकसुख इत्यर्थः उक्तो वक्तव्यः। भवति च परमसाम्यापन्नजीवगतानन्दस्य परमात्माधीनत्वेऽपि निरवधिकत्वम्। सिद्धान्ते तु परमात्मनि सर्वप्रकारं वैपुल्यमस्तीति विशेषः॥ १०४॥

७. प्राणपर्यन्ते विरमतीति पूर्वपक्षयुक्तं विशदीकृत्य तत्र प्रधानं बाधकमाह नामेति। नामप्रभृतौ आशापर्यन्ते वेद्ये नामवाङ्मनःसंकल्पचित्तध्यानविज्ञानबलान्नजलतेजआकाशस्मरणाशारूपे चतुर्दशके एव नामत उपरि क्रमेण, 'अस्ति भगवो नाम्नो भूयः', 'अस्ति भगव आशाया भूयः' इत्येवं नारदप्रश्नोऽनुवर्तते। 'नाम्नो वाव भूयोऽस्ति', 'आशाया वाव भूयोऽस्ति' इति सनत्कुमारप्रतिवचनञ्च। एवं प्रश्नप्रतिवचनोभयसिद्धा या अधिकोक्तिः अतिशयितान्यान्यवस्तुकथनम्, तस्याः प्राणे विश्रान्तिर्दृश्यते, प्राणोपरि तादृशः प्रश्नः प्रतिवचनञ्च नेति यावत्। अत उपक्रान्त आत्मोपदेशः तदवधिः प्राणपर्यन्तो भवतु। प्राण एवाऽऽत्मत्वेनावधार्यो भवतीति प्रश्नः। निषेधति मैवमिति। भूमविद्यान्ते पूर्वोक्तान् नामाद्याशान्तान् व्युत्क्रमेण निर्दिश्य, अनुक्तमपि घटयित्वा, "आत्मतः प्राणः, आत्मत आशा........आत्मतो नाम....आत्मत एवेदं सर्वम्" इति नामादितुल्यतया आत्मतो जातत्वेन प्राणोऽप्युक्तः। स चाऽऽत्मा

नामादिवत् प्राणोऽपि परस्मादात्मनो जात उक्तः। जातस्य तस्य कथं परमात्मत्वम्। नन्वत्रात्मशब्दः स्वात्मपरः, तेन स्वस्माज्जात इति प्रकरणाविरोधः स्यादित्याशङ्क्य प्रतिक्षिपति—नेति। तत्र हेतुमाह विघटनादिति। कार्यकारणभावप्रतिपादिकायाः स्वात्सिकया विभक्तेर्विघटनात्। कार्यकारणभावोऽपि (भावो हि?) भेदगर्भ एव। स्वात्मन उत्पत्तिकथनं क्लिष्टमेवेति भावः॥ १०५॥

(१०६) प्राणद्रष्टाऽतिवादी तदनुवदनतश्चोदितः सत्यवादः
तस्मात् सर्वाहमर्थः सकलजनयिता प्राण एवेति चेन्न।
एष त्वित्यन्यतोक्तेरतिवदनकृतः प्राक्तनादस्य तद्वत्
न त्वन्योऽस्त्यग्निहोत्री; स्वमहिमनिलये ह्यत्र धर्मोपपत्तिः॥ ८॥

शिष्यप्रतिबोधनार्थं पूर्वपक्षाभिप्रायं विविच्य, तदुचितमुत्तरमप्याह—प्राणद्रष्टेति। अत्र [हि] प्राणद्रष्टा अतिवादित्वेनोक्तः। तदनूद्य सत्यवादोऽङ्गत्वेन विधीयते। तस्मात् सर्वाहमर्थो जीवः

---

परम एव भवितुमर्हति; 'एवं मन्वानस्य जीवस्यात्मतः' इति जीवनिरूपितात्मत्वस्योक्तत्वात्। एवं जन्यस्य कथं जीवत्वम्॥ **आत्मत** इति पदं स्वस्मादित्यर्थे स्यादिति तु न; जन्यस्वरूपार्थे स्वस्मायाः पञ्चमीविभक्तेः **विघटनात्**=यथावदर्थासंभवात्। तदा हि **विजानतः**=उपासकस्य **आत्मतः**=स्वरूपादित्यर्थं उक्तो भवति। न हि नामादिकं सर्वं जीवात्मनो जायते; न च जीवात्मा प्राणः स्वस्मात् स्वयं जायते, स्वस्य स्वहेतुत्वे आत्माश्रयात्। जीवातिरिक्तस्य जगत्कारणस्य प्रागेव सिद्धत्वाच्च। एवं विद्यान्ते जीवनिरूपितात्मत्वाश्रयस्य **आत्म**पदेन ग्रहणात् उपक्रमे **आत्म**पदमेतत्परमिति तन्निरूपकस्यास्य घट्टस्य प्राणे विरतिर्न सुवचा। प्रश्नप्रतिवचनाभावस्य कारणं त्वन्यदेव गवेषणीयमिति भावः॥

**चिन्तामणौ, आशान्ते दिक्पर्यन्ते** इति पाठस्य स्थिरत्वे तत् दिक्प्रदर्शनमात्रम्। आशा ह्यत्र तृष्णा। न तु **दिगि**ति उपनिषद्येव व्यक्तम्॥ १०५॥

८. प्राणातिवादितोऽन्यः सत्यातिवादी, 'एष तु वै' इति वाक्यात् प्रतीयते इत्यनुपपन्नम्; तस्य वाक्यस्य अग्निहोत्रिप्रसंगे श्रुतेन, 'एष तु वा अग्निहोत्री यः सत्यं वदति' इति वाक्येन तुल्यत्वात्। न हि तत्र **तु**शब्दबलात् अन्योऽग्निहोत्री गृह्यते। किं तु पूर्वस्यैवाग्निहोत्रिणः सत्यवदनरूपांगविधानमिष्यते। तद्वदिहापि प्राणातिवादिनः **तदनुवदनतः** प्राणातिवदनानुवादेन सत्यवदनरूपांगविधानमात्रमिति। **तस्मात्** अतिरिक्तप्रस्तावाभावात्। **सर्वाहमर्थ** इति हेतुगर्भविशेषणम्। प्राणस्यैव सर्वाहमर्थत्वाच्चेत्यर्थः। भूमप्रस्तावानन्तरम्, 'अथातोऽहङ्कारादेशः' इत्यारभ्य, 'अहमेवाधस्तात् अहमुपरिष्टात्.... अहमेवेदं सर्वम्' इत्यनुसंधानं विधीयते। अहमर्थश्च जीव एव। न चैकैकस्यापि जीवस्य सर्वत्र स्थित्यभावात् कथमिदं घटत इति शंक्यम्—**अहंशब्देन** सामान्यतः सर्वाहमर्थग्रहणात् तत्रतत्र कस्यचित्कस्यचिदहमर्थस्य सद्भावेनान्वयोपपत्तेः। एवञ्च तदनन्तरे, 'अथात आत्मादेशः' इत्यत्रापि जीवस्यैवात्मत्वाकारेणानुसंधानकरणात् 'आत्मतः प्राणः' इत्यत्रापि तस्यैव ग्राह्यतया स्वस्मादित्यर्थकमेव तदिति अतोक्तं सकलजनयितृत्वं प्राण एव नेयमिति चेदित्यर्थः। निरस्यति **नेति**। 'एष तु' इति तुशब्देन अस्यातिवदनकृतः

खल्वदृष्टद्वारा सकलतत्त्वोत्पादकः प्राण एवेति चेत्। तदेतत् प्रतिक्षिपति—नेति। प्रतिक्षेपहेतुं विवृणोति—एष इति। 'एष तु वा अतिवदति' इति तुशब्दशिरस्केनैतच्छब्देन प्राणातिवादिनः प्राक्तनात् अस्य=सत्यातिवादिनोऽन्यत्वप्रतिपादनात्। ननु, 'एष तु वा अग्निहोत्री यः सत्यं वदति' इत्यत्रापि तुशब्दशिरस्क एषशब्दो दृश्यते; अथापि तत्राधिकार्यन्तरं न कल्प्यते; तद्वदत्रापि स्यादित्याशङ्क्याह—तद्वदिति। तत्र ह्यग्निहोत्रित्वं न प्रमितम्, इह तु प्रमितमेव। पूर्वं प्राणातिवादिनमुक्त्वा पुनश्च, 'एष तु वा अतिवदति यः सत्येनातिवदति' इति द्विवारमतिवादित्वमुच्यते। नैवमग्निहोत्रि(त्र)वाक्ये द्विवारमग्निहोत्रित्वमुच्यते। तेन पूर्वाग्निहोत्रिणमुद्दिश्य सत्यवदनमङ्गतया विधीयत इति युक्तम्। अत्र पुनः तुशब्दसहितैतच्छब्देनातिवाद्यन्तरं प्रतीयत इति विशेषः। अन्यथा पुनः अत्रापि, 'एष तु वा अतिवदति यः सत्येनातिवदति' इत्यधिकार्यन्तरं न श्रूयेत। किं च यदि जीवे विश्रान्तिः

---

प्राक्तनातिवाद्यन्यत्वस्योक्तेरिति तत्र हेतुः। अयं भावः—वाक्यमिदं प्राणातिवाद्यनुवादेन सत्यवदनरूपांगविधायकं चेत्, एष इत्यस्य प्राणातिवादीत्यर्थः स्यात्। तदा च,' एष एवातिवदति, यतः सत्यं वदति' इति वाक्यं स्यात्। तुशब्दप्रयोगात्तु उक्तादन्य इति प्रतीत्या एष इति वक्ष्यमाणार्थकमिति ज्ञायते। तस्य यच्छब्दप्रतिसंबन्धित्वात् यच्छब्दघटितवाक्ये दृष्टे, तत्र सत्यं वदतीत्यप्रयोगात् सत्यसाध्यातिवदनकारीत्यर्थस्यैव प्रतिपन्नत्वात् प्राणसाध्यातिवदनकर्तृभिन्न इति स्पष्टमवगम्यते। तेन सत्य=मिदमतिशयितपुरुषार्थभूतोपास्यवस्त्विति सिद्धम्।

ननु सूत्रे, 'सत्यं संप्रसादादध्युपदेशात्' इत्यप्रयोगात् प्रथमश्रुतः सत्यशब्दार्थो न ब्रह्म; किंतु सत्यं सत्यवदनमेव। सत्येनातिवदतीत्यस्य सत्यरूपमतिवदनमित्यर्थः। सामान्यविशेषस्थले विशेषणे तृतीया स्वरसा। अनेन प्राणातिवदनमसत्यमित्यवगमात् अर्थात् प्राणातिरिक्तवस्तुविषयकत्वसिद्धिरित्युच्यतामिति चेन्न—सत्यशब्दस्य परमात्मार्थकत्वाभावे हि तथा वक्तव्यम्। किं तत् सत्यरूपमतिवदनमिति प्रश्ने ब्रह्मविषयकमतिवदनमित्येव हि प्रतिवक्तव्यम्। तदेव शिरोवेष्टनं विना साक्षादुक्तमस्तु। विशेषणतृतीयापेक्षया च कारके तृतीया ज्यायसी। न च सूत्रविरोधः। सुखस्याप्युल्लंघनेन भूमनिर्देशोऽपि यथा सुखमत्र ब्रह्मेष्टम्, तथा सत्यमपीष्यताम्। सत्यपदसुखपदयोर्विद्यान्तरेष्वपि सत्त्वात् असाधारणभूमपदेन भूमविद्येति व्यवहारात् सूत्रेऽपि तत्प्रयोगः। 'संप्रसादवि सत्यपदसुखपदाभ्यां ब्रह्मण उपदेशात्' इति सूत्रार्थवर्णनाच्च सूत्रानारूढत्वशंकाव्युदासः। शेषमसारपरिष्कारे। तद्वदिति देहलीदीपन्यायेन पूर्ववाक्ये उत्तरत्र चान्वेति। पूर्वत्र तद्वत्=अस्ति भूय इति नामाद्युपासकेभ्य इवेत्यर्थः। उत्तरत्र तद्वत् उक्तातिवाद्यतिरिक्तादिवादिवदिति। प्रस्तुताग्निहोत्रिभिन्नाग्निहोत्रिसद्भावे अग्निहोत्रिवाक्येऽपि तुशब्दोऽन्यार्थकः स्यात्; न तथा। सत्यं वदतीति सत्यवदनरूपांगविधानञ्च तत्र स्पष्टम्। अत्र त्वतिवदनमेवोक्तम्, न सत्यवदनम्।

अथ धर्मोपपत्तेश्चेति सूत्रार्थप्रदर्शनेन शंकां परिहरति स्वेति। 'स्वे महिम्नि प्रतिष्ठितः' इति स्वमहिमस्थितत्वमुक्तमात्मनः। तत् परमात्मन एव घटते। न च जीवात्मन एव घटते, स्वमहिम्नेति परमात्मग्रहणसंभवादिति शंक्यम्; गो-अश्वमित्यादिना उपरि विभूतेरेव महिमपदेन ग्रहणेन, 'यद्वा न महिम्नि' इति अनन्याधारत्वस्यैव कथ्यमानत्वात्। उपरि अहंकारादेशश्च तदैव सूपपन्नः। एको जीवः

स्यात् वाक्यस्य, तदानीमेतत्प्रकरणोक्तानां परमात्मासाधारणधर्माणामनुपपत्तिः स्यात् । तेन स्वमहिमनिलये परमात्मन्येव सर्वधर्मोपपत्तिः स्यादित्ययमपि हेतुः परमात्मसाधने भवति ॥ १०६ ॥

(१०७)(?) नामाऽऽदौ वाक् च तस्योपरि तदनु मनश्चाथ सङ्कल्पनामा
चित्तं ध्यानश्च तस्मात् पर(बल)मपि च बलं (ततः) स्याच्च विज्ञानपूर्वम् (भवेत् ज्ञानमेवं बलश्च?)।
अन्नं तोयश्च तेजो गगनमपि ततो मन्मथः (ततः स्यात् स्मरः ?) स्यात् तथाऽऽशा
प्राणः सत्यः परात्मा (प्राणोऽथो सत्य आत्मा?) सकलनियमिता(यमयिता?)गम्यते भूमवाक्ये॥

अत्र भूमविद्यायां नामाद्याशापर्यन्तवस्तूनां स्वरूपप्रतिपत्त्यर्थं तत्संग्रहश्लोकमाह—नामेति । आदौ नाम, तस्योपरि वाक् तदनु मनः, अथ संकल्पनामा, ततश्चित्तं ततोऽप्यनन्तरं ध्यानं ततो विज्ञानं ततोऽपि बलं तस्मादन्नं तस्मात् तोयं तस्मादपि तेजः ततः पुनराकाशस्ततो मन्मथः (स्वाकाशो मन्मथश्च) तत आशा, ततः प्राणशब्दवाच्यो जीवः। सर्वेषामुपरि सत्यशब्दवाच्यः परमात्मा सर्वनियन्ताऽयमेवेति गम्यत इति ॥१०७॥ इति भूमाधिकरणम् ॥ १९ ॥

२० ॥ अथ अक्षराधिकरणम् ॥ १-३-३ ॥

सूत्रम्—अक्षरमम्बरान्तधृतेः ॥ सा च प्रशासनात् ॥ अन्यभावव्यावृत्तेश्च ॥ ९-११ ॥

(१०८) प्रख्याताकाशपूर्वस्वविकृतिवहनादक्षराख्यं प्रधानं
तस्याप्याकाशतोक्तौ धृतनिखिलजगत् क्षेत्रितत्त्वं तु तत् स्यात् ।

---

अहमिति स्वान्तर्यामिणं परमात्मानं गृह्णन् सर्वदेशवर्तिसर्वाभिन्नत्वं तत्रानुसंधातुं क्षमते । अहमित्यस्य तत्तदहमर्थ इत्यर्थस्तु क्लिष्टः। 'यत्र नान्यच्छृणोति नान्यद्विजानाति' इति एकानुभवे सर्वानुभवान्तर्भाववचनञ्च सर्वान्तरात्मपरमात्मानुभवपक्ष एव घटते ; न त्वेकजीवानुभवग्रहणे । उपरि मृत्युदर्शनाभावः, कुत्रापि प्रातिकूल्यदर्शनाभावः, सर्वदर्शनम्, एकधाभावादियथेच्छानन्ताप्राकृतशरीरग्रहणम्, विप्रमोक्षशब्दवाच्यपरिपूर्णमोक्षहेतुस्मृतिसंतानविषयत्वमितीमे धर्माः न प्राणमात्रविश्रान्तावुपपद्येरन्निति ॥ १०६ ॥

भूमविद्यायामुपास्यतयोपदिष्टानि अन्ते हेयान्यपि नामादीनि गणयितुं प्रवृत्तोऽनन्तरश्लोकः । स यद्यपि चिन्तामणावपि व्याख्यातः—अथापि सारावलिमूलकोशेष्वनेकत्र न गण्यते । श्लोकरचनारीतिश्चाऽऽचार्यसूक्तित्वाभावमेव गमयति । श्लोके यथाक्रमघटनायानावश्यकानेकपदप्रयोगः, एवमपि विज्ञानं पूर्वं निर्दिश्य बले पश्चाद्वक्तव्ये तद्वचनाशक्त्याऽन्यथावचनम्, स्मर इत्यस्य स्मरणमित्यार्थे वक्तव्ये मन्मथ इति प्रयोगः, यमयितेति वक्तव्ये नियमितेत्यसाधुशब्दः, गम्यत इत्यस्यैव पर्याप्तत्वेऽनेकं स्यात्पदमित्यादिदर्शने नेयमाचार्यश्रीसूक्तिरिति सुगमम्। एकत्र कोशे नियमितेत्यत्र जनयितेत्यस्ति।

नाम ब्रह्मेत्यथो वाङ् मन उपरि च संकल्प उक्तोऽथ चित्तं
ध्यानं विज्ञानमेवं बलमुदितमथान्नं तथाऽऽपश्च तेजः ।
आकाशश्च स्मराऽऽशे अतिवदनपदं प्राण उक्तोऽथ शब्दैः
सत्यं भूमा सुखञ्चेत्यकथि स परमो भूमविद्या यदर्था ॥

इत्येवंरीत्याऽपि संग्रहो भवितुमर्हति ॥ १०७ ॥ इति भूमाधिकरणम् ॥ १९ ॥

मैवं द्रष्टृत्वपूर्वैरनितरनियतैः शासनायत्तधृत्या
किञ्च द्रष्ट्रन्तरस्य व्युदसनमिह तत्तुल्यतद्दृष्ट्योहः ॥ १० ॥
इत्यक्षराधिकरणम् ॥ २० ॥

पूर्वाधिकरणे स्वमहिमप्रतिष्ठितत्वमुक्तम्। तत्तु परमपुरुषव्यतिरिक्तेऽपि श्रूयत इति पूर्वपक्षोत्थानेन संगतिः। अथवा, 'येनाक्षरं पुरुषं वेद सत्यम्' इति सत्याक्षरशब्दाभ्यां निर्दिष्टस्य परस्य ब्रह्मणः सत्यशब्दवाच्यत्वं पूर्वेत्र प्रतिष्ठापितम्; अत्राक्षरशब्दवाच्यत्वं प्रतिष्ठाप्यत इति वा संगतिः। एवं वा—पूर्वं जीवनिरासः, इह तु जीवप्रधानयोर्द्वयोरपि निरास इति। तदर्थविचारस्तु, 'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति' इति वाक्ये पुनः अक्षरशब्दनिर्दिष्टं प्रधानं [वा] जीवो वा परमपुरुषो वेति। तदर्थं चिन्त्यते—'कस्मिन् नु खल्वाकाश ओतश्च प्रोतश्च' इत्यत्र प्रतीयमानमाकाशाधारत्वं किं प्रधानस्य, किं वा जीवस्य, उत परमात्मन एवेति। किमत्राकाशशब्दनिर्दिष्टो भूताकाशः, उत अव्या-

१०. प्राणातिरिक्तस्यैव भूमत्वमित्यत्रेव प्रधानजीवान्यतरभिन्नस्यैवाक्षरत्वमित्यत्र गमकादर्शनात् तदन्यतरदेवाक्षरमिति शंकयाऽधिकरणारम्भः। गार्गी याज्ञवल्क्यं तत्तल्लोकोपरितनलोकं पृष्टवती, ब्रह्म-(चतुर्मुख)लोके तदध स्थितो लोकः सर्वे ओतश्च प्रोतश्चेति याज्ञवल्क्यवचनं श्रुत्वा स ब्रह्मलोकः कस्मिन् ओतः प्रोतश्चेति पप्रच्छ। तत्र ब्रह्माण्डे ब्रह्मलोकाख्यसत्यलोकोपरितनलोकाभावात् प्रश्नानुपपत्त्या तां स भर्त्सयामास। तदा जोषम्भूताऽपि सा अथोद्दालककृतप्रश्नोत्तरावसाने प्रकारान्तरेण पुनः प्रष्टुमारभ्य, यदूर्ध्वम् यदधः यदन्तरा यद्भूतञ्च भवच्च भविष्यच्च कस्मिंस्तदोतञ्च प्रोतञ्चेति प्रथमं प्रश्नमुपचिक्षेप। आकाश एव तदोतञ्च प्रोतञ्चेति याज्ञवल्क्यः समादधौ। अथ स आकाशः कस्मिन्नोतश्च प्रोतश्चेति प्रश्नो द्वितीयः। तत्र, 'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलमनणु' इत्यादिकमुत्तरम्। इदमक्षरं किमिति विचारः। अदृश्यत्वादिगुणकाधिकरणे मुण्डकोपनिषदुक्तमक्षरं विचारितम्। तत्र परमात्मग्रहणेऽपि अत्र प्रथमप्रतीतार्थत्यागे मानाभावात् अन्यदेव ग्राह्यमिति शंका। अक्षरशब्दस्य प्रधान-जीव-परमात्मरूपार्थत्रयमपि भवितुमर्हतीति तत्रैवाधिकरणे निर्णीतं हि। अत्राऽऽकाशशब्दो रूढ्या भूताकाशमेव वदतीति तत्कार्यं सर्वं तत्र ओतप्रोतमुच्यताम्। स आकाशो यत्र ओतः प्रोतः स च प्रधानमेव भवितुमर्हति। यद्यपि महदहंकारानन्तरत्वादाकाशस्य तत्कारणमहंकारोऽपि ग्राह्यः—अथापि तस्याक्षरशब्दवाच्यत्वाभावात् त्यागः। अक्षरत्वं क्षरणरहितत्वम्। क्षरणवच्च कार्यजातम्। तद्रहितमिति तत्पूर्वावस्थं तद्वदचेतनं प्रधानमेव ग्राह्यम्; न स्वसंनिकृष्टं ब्रह्म। तदाह प्रख्यातेति। आकाशशब्दस्य भूताकाशे प्रख्यातेः तद्ग्रहणे तत्पूर्विकाणां सर्वदेशसर्वकालस्थितकार्यवर्गभूतानां स्वविकृतीनां वहनात् प्रधानमेवाक्षरशब्दवाच्यमिति। वहनादित्यन्तम् उक्तौ इत्यत्राप्यन्वेति। यत् भूतञ्च भवच्च भविष्यच्चेति सर्वकार्यजातग्रहणस्यैव युक्तत्वात् भूताकाशपूर्वकाणां भौतिकान्तानां तथा महदहंकारतन्मात्ररूपाणां तदाकाशपूर्वभूतानाञ्च सर्वासां विकृतीनां वहनात् प्रधानस्यैवाऽऽकाशपदवाच्यतेति चेत्-तस्याप्याकाशत्वप्रसिद्धौ तत् अक्षरं श्रुतं क्षेत्रितत्त्वं बद्धजीवसमष्टिः स्यादित्यर्थः। तत्र प्रकृतेरोतप्रोतत्वं कथमिति चेत्-तस्य

कृताकाश इति। अत्र पूर्वपक्षसिद्धान्तावनुक्रमेणाऽऽचष्टे—प्रख्यातेति। 'कस्मिन् नु खल्वाकाश ओतश्च प्रोतश्च' इत्यादौ प्रसिद्धाकाशपूर्वस्वकार्यवहनात् अक्षरशब्दवाच्यं प्रधानमेवेत्येकः पक्षः। तस्यापि प्रधानस्य कारणाकाशत्वेन आ काशत इति व्युत्पत्त्या अवधारितस्याप्याधारत्वेनाभिधीयमानमक्षरं धृतनिखिलजगत् समष्टिजीवतत्त्वमेव स्यात्; प्रकृतेर्जीवाधिष्ठानत्वात्। पक्षद्वयमपि व्युदस्यति—मैवमिति। तत्र हेतुमाह—द्रष्टृत्वेति। चेतनाचेतनयोरसंभावितैः सर्वद्रष्टृत्वादिभिर्धर्मैः भगवद्-साधारणैः, 'सा च प्रशासनात्' इत्युक्तप्रकारेण स्वशासनायत्तधारणाच्च। किंच अस्मिन् प्रकरणे द्रष्ट्रन्तरस्य व्युदसनं दृश्यते। तच्च परमात्मपक्ष एव संभवति, न पुनर्जीवपक्षे; द्रष्टुर्जीवादन्यस्य जीवान्तरस्य, सर्वद्रष्टुः परमात्मनो[ऽपि?] विद्यमानत्वात्। तेन द्रष्ट्रन्तरनिराकरणमीश्वरान्तरनिराकरणमेव। तदिदमाह- द्रष्ट्रन्तरस्येति। विश्वाधारतया नियन्तृत्वेन विश्वद्रष्टुः परमपुरुषादन्यस्य द्रष्टुर्व्युदसनं परमपुरुषाधिकतया परमपुरुषनियन्तृत्वेनावस्थित-तत्सदृशेश्वरान्तरनिरास इत्यर्थः॥ १०८॥

इत्यक्षराधिकरणम् ॥ २० ॥

---

धृतनिखिलजगत्कत्वात्। कारणावस्थप्रकृतिधारणस्य तदशक्यत्वेऽपि जगद्रूपेण परिणत्यनन्तरं नानादेहात्मकतद्धारणस्य जीवकार्यत्वमस्त्येव। अत एव गीयते, 'जीवभूतां महाबाहो ययेदं धार्यते जगत्' इति। अक्षरशब्दश्च स्वरूपविकाररहित्यात् जीवपरः। क्षरवद्भिन्नोभयात्मके जगति क्षरभूतप्रधानसंनिकृष्टं जीवतत्त्वं क्षरान्यरूपार्थपराक्षरपदादुपस्थितश्च भवति। एवं पूर्वपक्षमुक्त्वा प्रतिषेधति मैवमिति। अत्रान्ते, 'तद्वा एतदक्षरं गार्गि अदृष्टं द्रष्टृ अश्रुतं श्रोतृ' इति द्रष्टृत्वादिकमक्षरे श्रूयते न हि प्रधाने द्रष्टृत्वसंभवः। पूर्वपक्षी तु सांख्यवासनया अन्तःकरणस्य विषयसंबन्धरूपः परिणाम एव दर्शनादिरिति कृत्वा तादृशप्रकृतावेव द्रष्टृत्वादिकमपीति अभिमन्यते। तदयुक्तम्, दर्शनादीनां वेदान्ते आत्मधर्मभूतज्ञानपरिणामत्वोक्तेः। तैः द्रष्टृत्वपूर्वैः=द्रष्टृत्वादिभिः द्रष्टृत्वश्रोतृत्वमन्तृत्वादिभिः अनितरनियतैः अदृष्टत्वाश्रुतत्वादिविशेषण वैशिष्ट्यात् जीवेऽप्यसंभावितैर्धर्मैरक्षरं परमात्मैव। किञ्च, 'एतस्य वा अक्षरस्य प्रशासने' इत्यारभ्य तदीयाप्रतिहतसंकल्पधार्यत्वं सूर्यचन्द्रद्यावापृथिव्यादीनां सर्वेषां तत्संकल्पायत्तप्रवृत्तिकत्वञ्चोक्तम्। इदं प्रकृष्टं शासनं जीवेऽप्यसंभवि। जीवे सर्वथाऽन्वयानर्हमप्याह किञ्चेति। 'अन्यभावव्यावृत्तेश्च' इति सूत्रार्थोऽयम्। तत्र योजनाद्वयं भाष्ये। 'नान्यदतोऽस्ति द्रष्टृ' इत्यादिना अन्तर्याम्यधिकरणोक्तरीत्या प्रशासितेतदक्षरतुल्यमन्यत् प्रशासितृभूतं द्रष्टृ नास्तीत्युच्यते। अयं तत्तुल्यद्रष्ट्रपोहः। यदि तस्यैव वाक्यस्य, यथेदमक्षरं सर्वप्रशासितृ द्रष्टृ, तथा अतोऽधिकं अस्यापि प्रशासितृ अन्यन्नास्ति; उपर्युपरि ओतप्रोतत्वोचितस्थानप्रस्तावात् इदमक्षरमपि क्वचिदोतप्रोतमिति न मन्तव्यमित्यर्थ उच्यते—तदा तद्द्रष्टुः=तदपि प्रति प्रशासितृभूतस्य कस्यचित् द्रष्टुः अपोहः प्रकृतवाक्यार्थः। एवं समाधिकोभयनिषेधः। श्लोके अन्तिमपदस्यैतदर्थद्वयपरत्वाभावे मध्यघटकं तत्पदं व्यर्थम्। प्रथमतत्पदस्य पृथक्करणमपि न स्वरसम्। चिन्तामणौ तत्सदृशेश्वरान्तरनिरास इत्यनेन च पृथक्कारो नेति ज्ञायते। तत्तुल्यपदार्थः तत्सदृशेति, तद्द्रष्टृपदार्थः ईश्वरान्तरेति; तदीश्वरेत्यर्थः। एवंभूतापोहमूलं द्रष्ट्रन्तरवस्तुव्युदसनमिहोच्यते। अक्षरपदस्य जीवपरत्वे एतदन्वयो न घटत इति ॥ १०८ ॥ इति अक्षराधिकरणम् ॥

## २१ ॥ अथ ईक्षतिकर्माधिकरणम् ॥ १-३-४ ॥

सूत्रम्—ईक्षतिकर्मव्यपदेशात् सः ॥ १२ ॥

(१०९) लक्ष्मीभूतोऽयमेकः खलु पुरुष इह ध्यायतेरीक्षतेश्च
क्षेत्रज्ञः सोऽयमण्डाधिप इतरपरात् स्वान्यजीवात् परोऽसौ ।
नो चेत्, भौमादिभोगप्रकरणविहतिर्बोभवीतीत्ययुक्तं
तस्मिन् शान्तामृतत्वप्रभृतिपरगुणस्यात्यनूक्त्योरयोगात् ॥ ११ ॥

सूत्रे (अत्र) 'सः' इति पुलिङ्गनिर्देशः परमपुरुषविवक्षया । पूर्वत्र खलु, 'अदृष्टो द्रष्टा' इति परमात्मनोऽन्यैरदृष्टत्वमुक्तम्, तर्हि ईक्षतिकर्मत्वेनाभिधीयमानः परमपुरुषो न स्यादेवेति पूर्वपक्षोत्थानेन संगतिः। अथवा पूर्वत्राकाशशब्दस्यार्थविरोधात् अर्थान्तरपरत्वं प्रत्यपादि ; तद्वदेवान्तरिक्षशब्दस्यापि मुखान्तरेण निर्वाहः संभवेदिति शङ्कया संगतिरिति चाऽऽहुः। यद्वा आकाशशब्दस्याम्बरान्तपरत्ववत् ब्रह्मलोकशब्दस्याप्यन्यथानिर्वाहोऽस्तीति [सङ्गतिः] । तदर्थविचारस्तु–'यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परमपुरुषमभिध्यायीत' इति निर्दिष्टः चतुर्मुखः, उत परमात्मेति । किं 'पुरुषमीक्षते' इत्यत्रेक्षतिकर्मत्वं चतुर्मुखस्य, उत परमात्मन इति । किं जीवघनशब्देन चतुर्मुखस्यापि ग्रहणमस्ति, नेति। किमत्र ब्रह्मलोकशब्दश्चतुर्मुखस्थानवचनः, उत परमव्योमवचन इति। ईक्षतिकर्मविषयतयोदाहृते

---

११. आकाशशब्दस्येव सत्यकामप्रश्नस्थान्तरिक्षशब्दस्यापि अर्थान्तरपरत्वं वक्तव्यमिति ज्ञाप्यते। सूत्रे ईक्षतिकर्मेति निर्देशात् ध्यायतिकर्मत्वं तस्य सिद्धान्ते नास्तीति वा, ध्यायतीक्षतिकर्मणोः भेदेन पूर्वपक्षे अभेदः स्थाप्यते इति वा न मन्तव्यमिति ज्ञापनाय ध्येयेक्ष्यपुरुषैक्यं यथाभाष्यं प्रथमपादेन दर्शयति लक्ष्मीति । ध्यैधातोः ईक्षधातोश्च लक्ष्मीभूतः कर्मकारकभूतोऽयं पुरुषः एकः खलु । खल्वित्यनेन तत्क्रतुनयसिद्धमिदं नोपपादनसापेक्षमिति ज्ञाप्यते । तर्हि सूत्रे विशिष्य ईक्षतिपदं कुत इति चेत्–'यः पुनरेतं त्रिमात्रेण ओमित्यनेनैवाक्षरेण' इति त्रिमात्रप्रणवकरणकत्वविधानात् परमपुरुषस्यैव ध्येयत्वं साम्प्रतम् ; एवञ्चेक्षतिकर्मत्वमपि तस्येति सिद्धमेवेति कथमत्र विवादावकाश इति जिज्ञासायाम्—ईक्षतिघटितवाक्ये पूर्वपक्षहेतुरस्तीति ज्ञापनाय । ब्रह्मलोकं गतेनेक्ष्यत्ववचनात् ; ब्रह्मलोकशब्दस्यान्तरिक्षादिलोकवत् तत्प्रत्यासन्नभोगलोकपरत्वं विहाय मोक्षलोकपरत्वायोगादित्युक्तं भवति । तर्हि परमपुरुषध्यानोपक्रमविरोध इति 'चेत्–'चतुर्विधा भजन्ते माम्' इति न्यायेन परमात्मभजनस्यैव चतुर्मुखलोकप्राप्तिरिह फलमित्युच्यताम् । त्रिमात्रप्रणवोपास्यत्वं चतुर्मुखस्याप्यत्रेष्टमिति वा मन्यताम् । तथाच सः ध्यायतिकर्म अयम् ईक्षतिकर्म पुरुषः अण्डाधिपभूतक्षेत्रज्ञ एव । परात्परत्वं तस्योपपादयति इतरेति । इतरस्मात् अचेतनवर्गात परो जीववर्गः, तस्मात् असौ चतुर्मुखः परः । स्वस्मात् स्वस्य परत्वायोगात् परादिति स्वान्यजीवमात्रविवक्षा । ब्रह्मलोकमित्यस्य चतुर्मुखलोकमित्यर्थः कुतः, नित्यविभूतिः परब्रह्मणो लोक एव किं न गृह्यत इत्यत्राह नोचेदिति । भौमभोगः एकमात्रप्रणवार्थोपासकस्य, आदिना अन्तरिक्षभोगः द्विमात्रप्रणवार्थतयोपासकस्य । भौमसंनिकृष्टान्तरिक्षग्रहणवत् अन्तरिक्षसंनिकृष्टलोकग्रहणमेव युक्तम् । तदुभयवत् भोगलोको यः स एव ग्राह्य इति च । बोभवीतीति विरोधभवनेऽतिशयकथनात् मनुस्मृतिसाहाय्यमपि पूर्वपक्षी मन्यते । वेदत्रयमत्र प्रस्तुतम् । तत्सारत्वं व्याहृतित्रयस्य । मनूक्तम्

श्लोके, 'यत्तत् कवयो वेदयन्ते' इति वैष्णवं पदं प्रत्यभिज्ञाप्यते, नेति । अत्र पूर्वपक्षमुक्त्वा क्रमेण प्रत्याचष्टे—लक्ष्मीभूत इति । अस्मिन् प्रकरणे यथोपासनं फलमिति न्यायेन य एव ध्यानविषयः, स एव प्राप्य इति द्वयोरपि वादिनोः सम्मतो ध्यायतेरीक्षतेश्च विषयभूतः पुरुषः । स तु मुख्यो जीव एक एव क्षेत्रज्ञः (एकः क्षेत्रज्ञ एव?) । स एवाण्डाधिपतिः। 'परात्परं पुरिशयं पुरुषमीक्षते' इति तस्यैव ईक्षतिकर्मत्वेन व्यपदेशः । अस्य परात्परत्वं प्रकृत्यादिभ्यः परस्माज्जीवात्परत्वेन । इत्थमनङ्गीकारे दोषमाह—नो चेदिति। परिहरति—अयुक्तमिति। प्रणवोपास्ये तस्मिन्= परस्मिन् वस्तुनि शान्ता-मृतत्वादिपरमात्मगुणोपवर्णनस्य तदनुवादस्य चायोगात् । तेन परमात्मासाधारणगुणान्वयात् एतत्प्रकरणप्रतिपाद्यः परमपुरुष एवेत्यर्थः ॥ १०९ ॥

(११०) नन्वत्रोङ्कारमात्रात्रयफलगणनारूढभूम्यन्तरिक्ष-
प्रख्यासंख्या निवासः सरसिजवसतेर्ब्रह्मलोकोऽस्तु ; मैवम् ।
पापोन्मुक्तेन लभ्यो ह्ययमिति(मिह) कथितः सूर्यसम्पत्तिपूर्वं
सोढव्यो मर्त्यलोकैर्व्यवधिरिति समस्तत्समाधानमार्गः ॥ १२ ॥

इति ईक्षतिकर्माधिकरणम् ॥ २१ ॥

अत्र चोदयति—नन्विति। पूर्वमेक[द्वि]मात्रप्रणवोपासनफलतया निर्दिष्टवशात् भूम्यन्तरिक्षगणना-

---

भूः भुवः सुवरिति तत्त्रयस्य पृथिव्यन्तरिक्षं द्यौश्चार्थ इति प्रसिद्धमिति । निरस्यति इत्ययुक्तमिति। तस्मिन् ईक्षतिकर्मणि यत्तच्छान्तमजरममृतमभयं परञ्चेति शान्तत्वामृतत्वादीनां ख्यातिः प्रसिद्धि, अनूक्तिः अनुवादश्च स्तः। तयोरयोग. स्यात्। यच्छब्देन शान्तत्वादिकमनूद्यते । तच्छब्देनान्यत्र प्रसिद्धिर्दर्श्यते । प्रसिद्धिश्च परमपुरुष एव शान्तत्वादेः । चतुर्मुखे तदभावस्यैव प्रसिद्धिः । अतः परात्परं पुरिशयमिति परवासुदेव एवोच्यते । तस्य परात् चतुर्मुखात् परत्वं वा संकर्षणादिपरवस्तुतोऽपि परत्वं वा भवतु । पुरिशयः=हृ दः । तदभेदस्तस्य । अर्थान्तरं वा वक्ष्यमाणम् । परञ्चापरञ्च ब्रह्मेति उपक्रमे क्लीबपद निर्दिष्टब्रह्मण एव ब्रह्मलोकमित्यत्रापि बुद्धौ विपरिवर्तमानतया तदन्यस्यानुपस्थितस्य ग्रहणं न युक्तमिति ॥

चि. टी. अम्बरान्तपरत्ववत्—अम्बरं प्रसिद्धाकाशः । तस्याप्यन्त.=अवधिः—कारणं प्रधानमम्बरान्तः । तत्परत्ववत् । द्वयोरपि वादिनोः=पूर्वपक्षिसिद्धान्तिनोः ॥ १०९ ॥

१२. पौनरुक्त्यपरिहाराय, पूर्वश्लोके शान्तत्वादेः अत्र पापविमोकादेर्विभज्य कथनात् तदनुरूप तात्पर्यचिन्तया च एवं व्याख्यायते—ननु यत्तच्छान्तमजरममृतमभयं परञ्चेति परमात्मस्वरूपनिर्देशात् तस्य प्राप्यत्वमिष्यते । अथापि ब्रह्मलोकमिति चतुर्मुखलोकग्रहणे काऽनुपपत्ति ? तल्लोकमुन्नीतेन परः पुरुषः कथमीक्ष्यत इति चेत्—परात्परं पुरिशयं पुरुषमीक्षते इत्यस्य चतुर्मुखलोके चतुर्मुखात्परं परमात्मानं दर्शनसमानाकारध्यानविषयीकरोतीत्यर्थोऽस्तु । तथाच त्रिमात्रप्रणवेन परमपुरुषमुपास्य चतुर्मुखलोकं गच्छति । तत्र मोक्षोपायानुष्ठानमेव, 'पुरुषमीक्षते' इत्युक्तम् । तत्फलञ्च शान्ताजरामृतपदप्राप्ति । एकमात्राफलमात्राद्वयफलसजातीयस्यैव मात्रात्रयफलत्वे औचित्यात्, भूम्यन्तरिक्षवत् ब्रह्माण्डान्तर्गत-संनिकृष्टलोकग्रहणस्यैव स्वरसत्वाच्चेति शंकते नन्विति । ओंकारमात्रात्रयस्य, एकमात्रा मात्राद्वयं मात्रा-

निर्दिष्टो ब्रह्मलोकः त्रिमात्रप्रणवोपासनफलतया निर्दिश्यमानः पूर्वोक्तप्रत्यासत्त्या चतुर्मुखलोक एव स्यात्। न स्यादित्याह—मैवमिति। तत्र हेतुमाह—पापोन्मुक्तेनेति। अस्मिन् प्रकरणे सर्वपापविनिर्मुक्तस्य प्राप्यतया श्रूयमाणो ब्रह्मलोको न क्षयिष्णुचतुर्मुखस्थानं भवितुमर्हति। किं च, 'स तेजसि सूर्ये सम्पन्नः' इति सूर्यसम्पत्तिपूर्वकं प्राप्यतया श्रूयमाणो ब्रह्मलोकः 'संवत्सरादादित्यम्' इत्यर्चिरादिमार्गप्रत्यभिज्ञानान्मुक्तप्राप्यो वैकुण्ठ एव स्यादिति। अस्मिन्नपि प्रकरणे, 'यत्तत् कवयो वेदयन्ते' इति सूरिदृश्यत्वमुच्यते। तदिदमाह—सूर्यसम्पत्तिपूर्वमिति। नन्वन्तरिक्षलोकप्रत्यासत्त्या चतुर्मुखलोक एव स्यादिति चेन्न; मध्ये स्वर्गादीनां बहूनां लोकानां व्यवधानेन(धायकत्वेन?) प्रत्यासत्तेरभावात्। तावद्व्यवधानं सोढव्यमिति चेत्—समः समाधिः—अत्र चतुर्मुखलोकव्यवधानमपि सोढव्यमिति।

---

त्रयमिति मात्राविभागत्रयस्य यानि फलानि तेषां गणनायामाद्यद्वयफलत्वेनाऽऽरूढे ये भूम्यन्तरिक्षे तयोः **प्रत्यासत्त्या** समीपस्थतया **ब्रह्मलोकशब्दार्थः सरसिजवसतेः** कमलासनस्य विधेर्निवासभूतः सत्यलोकोऽस्त्विति। मोक्षस्थानस्य विवक्षितत्वे चतुर्थी अर्धमात्राऽप्युक्ता स्यात्। तदनुक्त्या एकमात्रप्रणवार्थपृथिवीरूपब्रह्म द्विमात्रप्रणवार्थान्तरिक्षरूपब्रह्मध्यानतुल्यमेव त्रिमात्रप्रणवार्थकार्यब्रह्मध्यानमपीति भावः। परिहरति **मैवमिति**। अत्र हि श्रुत्यानुपूर्वी—"त्रिमात्रेणोंकारेण परं पुरुषमाभिध्यायीत, स तेजसि सूर्ये संपन्नः यथा पादोदरस्त्वचा विनिर्मुच्यते, एवं ह पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकम्। स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते" इत्येवम्। अत्र प्रणवध्यानात् सर्वपापविमुक्तत्वसूर्यमण्डलगन्तृत्वोत्तरत्वेनोच्यते ब्रह्मलोकगमनम्। सर्वपापविमोकोऽर्चिरादिगतिश्च परविद्याफलम्। ततस्तदनन्तरमिदं ब्रह्मलोकगमनं परमपदप्राप्तिरित्येव युक्तम्। अतः पुरुषमीक्षत इत्यपि फलभूतं दर्शनमेव, न तूपायभूतम्। अत्रोक्तलोकप्राप्तिभगवद्दर्शने एव संग्रहेण श्लोकेन प्रदर्श्येते, 'ससामभिर्यत् तत् कवयो वेदयन्ते। तमोंकारेणाऽऽयतनेनान्वेति विद्वान् यत् तच्छान्तमजरममृतमभयं परञ्च' इति। तत्र तमिति पुल्लिंगनिर्देशः एतद्ब्रह्मलोकपदपरामर्शादिति स्पष्टम्। पूर्वार्धेन सूरिवेद्यं पदम् उत्तरार्धेन चकारेण परमात्मप्राप्तिश्चोच्यते। मात्रात्रयेणापि अर्धमात्रासाहित्याभावेऽपि तत्फलमिति वेष्यताम्, अर्धमात्राऽपि वोपलक्ष्यताम्। ब्रह्मलोक इह परं पदमेव। यत्तु अन्तरिक्षप्रत्यासत्तिर्नास्तीति, तत्राह **सोढव्य** इति। प्रत्यासत्तिप्रत्याशायां चतुर्मुखलोकोऽपि न ग्राह्यः, महः जनः तप इति लोकव्यवधानात्॥ अथ महरादिग्रहणे **ब्रह्मलोकमिति** ब्रह्मशब्दान्वयो न घटते इति तद्व्यवधानं सोढव्यमिति चेत्—तदधिकव्यवधानमपि तथैव सोढव्यम्। अन्यथा पापविमोकार्चिरादिगति-सूरिवेद्यपदत्वाद्यन्वयभंगादिति समाधानरीतिस्तुल्या॥ **अत्रान्तरिक्ष** पदार्थश्च सोमलोकगर्भः, 'सोऽन्तरिक्षमुन्नीयते ब्रह्मलोकम्। स सोमलोके विभूतिमनुभूय पुनरावर्तते' इति श्रवणात्। **सोमलोक**शब्दश्च, 'सोमो राजा भवति' इति श्रुत्यनुसारात् भोग्यदेहमूलकभोगस्थानभूतोपरितनलोकसामान्यपरः। अतः 'ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति' इति गीतासमानार्थकत्वात् आमुष्मिकं सर्वमन्तरिक्षपदग्राह्यम्। अत एव **भाष्यम्**, "आमुष्मिकमन्तरिक्षशब्दोपलक्षितं फलञ्चाभिधाय" इति। एवञ्च, 'परञ्चापरञ्च ब्रह्म' इत्यत्रापरस्यैवमुक्तत्वात् शिष्टं परमेवाकार्यभूतं त्रिमात्रलभ्यमिति न चतुर्मुखलोकग्रहणप्रसक्तिः॥ एवं त्रेधा विभागोऽपि शास्त्रानुमतः।

तदाह—सोढव्य इत्यादिना। किंचोपक्रमे, 'परमपुरुषमभिध्यायीत' इति ध्यानविषयस्यैवेक्षतिकर्मत्वं वाच्यम्। अन्यथा तत्क्रतुन्यायविरोधः स्यादित्यादिदूषणमूह्यम्। तस्मादीक्षतिकर्मत्वेन व्यपदिश्यमानः परमात्मैवेति सिद्धम्॥ ११०॥ इतीक्षतिकर्माधिकरणम्॥

२२॥ अथ दहराधिकरणम्॥ १ ३.५॥

सूत्रम्—दहर उत्तरेभ्यः॥ गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च॥ धृतेश्च महिम्नोऽस्यास्मिन् उपलब्धेः॥ प्रसिद्धेश्च॥ इतरपरामर्शात् स इति चेन्नासम्भवात्॥ उत्तराच्चेदाविर्भूतस्वरूपस्तु॥ अन्यार्थश्च परामर्शः॥ अल्पश्रुतेरिति चेत् तदुक्तम्॥ अनुकृतेस्तस्य च॥ अपि स्मर्यते॥ १३-२२॥

(१११) दह्रं हृत्पुण्डरीके गगनमभिहितं तैत्तिरीयश्रुतौ यत्
छन्दोगैस्तत्र गीतं यदपि च दहराकाश इत्येतदेकम्।
भूतार्थं तत्प्रसिद्धेर्महिमत इति न; प्रत्यनीकैरनेकैः;
श्रौती च स्यात् प्रसिद्धिर्भगवति बलिनी लिङ्गवर्गैस्सनाथा॥ १३॥

पूर्वाधिकरणे, 'परात्परं पुरिशयं पुरुषम्' इत्युक्तस्य पुरिशयपुरुषस्य परमात्मत्वं साधितम्, अत्र पुनः पुरिशयस्याऽऽकाशशब्दवाच्यस्य परमात्मत्वं (पूर्वपक्षे?) निरस्यत इति संगतिः। पूर्वं ब्रह्मलोकशब्दस्य परमात्मस्थानपरत्वमुक्तम्; तद्वदिहापि ब्रह्मलोकशब्दब्रह्मपुरशब्दयोः स्थानपरत्वं स्यादिति शङ्कया संगतिः। (यद्वा पूर्वत्रान्तरिक्षशब्दस्य प्रसिद्धान्तरिक्षपरत्वं व्यावर्तितम्, तद्वत् दहराकाशस्य प्रसिद्धाकाशधर्मिपरत्वं प्रतिपाद्यते(पूर्वपक्षे?) इति संगतिः।) परस्मिन्नन्वेष्टव्यान्तरप्रतीत्यनुपपत्तेः पक्षद्वयेऽप्युपमानोपमेयभावानुपपत्तेश्च संशयः। तदर्थविचारस्तु-किं दहराकाशो भूताकाशः, उत जीवः, अथ परमात्मेति। तदर्थमन्वेष्टव्यान्तरनिर्देशः किं दहराकाशस्य परमात्मत्वविरोधी, उत नेति। 'तस्मिन्

'तृतीयस्यामितो दिवि' इति परमपदस्य तृतीयत्वकथनात्। गीतायाम् (१०-१२), 'पुरुषं शाश्वतं दिव्यम्' इत्यत्र तात्पर्यचन्द्रिकायां दिव्यं परमव्योमनिलयमिति व्याख्याय, 'परात् परं पुरिशयं पुरुषमीक्षते' इति श्रुत्युपादानात् पुरिशयपदं वैकुण्ठनगरस्थितमित्यर्थकमभिमतं स्यात्। ब्रह्मलोकपदेन लोक उक्तः, तदन्तर्गता अपराजिता पूरुच्यत इति भेदः। इहेति बहुकोशस्थपाठश्चिन्तामणिसंमतः स्यात्; अस्मिन् प्रकरणे इत्युक्तत्वात्॥ ११०॥ इतीक्षतिकर्माधिकरणम्॥

१३. पूर्वाधिकरणे सूर्यद्वारकब्रह्मलोकप्राप्तिपूर्वकामृताभयपरब्रह्म नुभवप्रतिपादकसत्यकामप्रश्नविचारः कृतः। अथ तथैवाऽऽदित्य-ब्रह्मलोकामृताभयप्राप्तिपरा सत्य-कामसंबन्धिनी दहरविद्या विचार्यते। तत्र संग्रहेण पूर्वोत्तरपक्षौ दर्शयति। अत्र आकाशः भूताकाशो वा प्रत्यगात्मा वा परमात्मा वेति त्रिकोटिक एव संशयः; सूत्रे जीवपक्षस्याप्युपरि निरासात्। तथैवात्रापि विवदिषुः आकाशपक्षमात्रमत्राऽऽह। दह्रम् दभ्रम् अल्पम्। दह्रपदं तैत्तिरीये; दहरपदं छान्दोग्ये। पुण्डरीकस्याऽऽकाशस्य च दहरत्वमुक्तम्। गगनपदेनाकाशनिर्देशस्तैत्तिरीये। "दह्रं विपाप्मं परवेश्मभूतं यत् पुण्डरीकं पुरमध्यसंस्थम्। तत्रापि दह्रं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम्' इति। बृहदारण्यके दहरविद्यायामाकाशपदमेव। "स वा एष महान् अज आत्मा योऽयं विज्ञानमयः य एषोऽन्तर्हृदय आकाशः तस्मिन् शेते सर्वस्य वशी सर्वस्येशान." इति। तत्राकाशशब्दः भूताकाशपर इति निर्विवादम्। कथमत्र विज्ञानमयशब्दवाच्यस्य

यदन्तः' इति निर्देशः किं गुणजातविषयः, उत अर्थान्तरपरः। 'एष आत्मा' इति वाक्योक्तमपहतपाप्मत्वादिकं किं प्रजापतिवाक्योक्तजीवधर्मः, उत न। जीवधर्मत्वेऽपहतपाप्मत्वादिश्रुतिस्वारस्यमस्ति, उत नेति। फलफलिभावस्तु-यदा, 'तस्मिन् यदन्तः' इति निर्देशोऽर्थान्तरपरः, तदा अन्वेष्टव्यशब्दस्य गुणविषयत्वाभावेन दहराकाशस्य भूताकाशत्वं स्यात्। यदा, 'एष आत्मा' इति वाक्योक्तगुणाष्टकस्य प्रजापतिवाक्योक्तजीवधर्म[विषय]त्वे स्वारस्यमस्ति, तदानीं 'एष आत्मा' इति वाक्यस्य जीवविषयतया दहराकाशो जीवः स्यादिति पूर्वपक्षे फलफलिभावः। यदा, 'तस्मिन् यदन्तः' इति गुणजातविषयोक्तिः, तदाऽन्वेष्टव्यशब्दस्य गुणजातविषयत्वात् दहराकाशो भूताकाशादतिरिक्तः स्यात्, यदा, 'एष आत्मा' इति वाक्यस्य प्रजापतिवाक्योक्तधर्मविषयत्वे स्वारस्यं नास्ति, तदा स्वरसतो गुणाष्टकविशिष्टपरमात्मप्रतिपादकतया स दहराकाशः परमात्मा स्यादिति राद्धान्ते फलफलिभावः। विषयवाक्यशोधनपूर्वकं पूर्वपक्षसिद्धान्तौ संगृह्णाति-दहं हृत्पुण्डरीक इति। अयमर्थः—'दहरोऽस्मिन्नन्तराऽऽकाशः' इति छान्दोग्ये; 'तत्रापि दहं गगनं विशोकः' इति तैत्तिरीये च गगनाकाशशब्दयोः पर्यायत्वेन आकाश एवोक्तः। स चाकाशो भूताकाश एव स्यात्; आकाशशब्दस्य भूताकाशे ब्रह्मणि च प्रसिद्धत्वेऽपि भूताकाशे प्रसिद्धिप्रकर्षादिति। तदाह—प्रसिद्धेर्महिमत इति। तदेतत् प्रतिक्षिपति—नेति। तत्र हेतुमाह—प्रत्यनीकैरनेकैरिति। 'एष आत्माऽपहतपाप्मा' इत्यादिवाक्यगतैः निरुपाधिकात्मत्वापहतपाप्मत्वसत्यसंकल्पत्वादिभिः परमात्मासाधारणैर्धर्मैरत्राकाशशब्दनिर्दिष्टस्य विशेष्यमाणत्वात्; किंच द्वि[वि]धा हि प्रसिद्धिर्वैदिकी लौकिकी चेति। तत्र वैदिकी प्रसिद्धिः, वेदविदां व्यवहारेषु बलवती। तेनात्राकाशशब्दनिर्दिष्टः परमात्मैव। किंच निरुपाधिकापहतपाप्मत्वादिलिङ्गसनाथायाः, 'यदेष आकाश आनन्दो न स्यात्' इत्यादिश्रुत्यन्तरसिद्धाया आकाशशब्द-

---

जीवस्य परमात्मनश्चैवमुच्यत इति चेत् —अत्र बहु विमृशन्ति। अस्तु तावदेवम्—योऽयं विज्ञानमयः, यश्चाऽऽकाशः इत्युभयस्य प्रत्येकं तस्मिन् शेते इत्यत्रान्वयः। हृदयाकाशे इव जीवात्मन्यपि, 'य आत्मनि तिष्ठन्' इति स्थितिप्रसिद्धेः। तस्मिन्निति उभयग्रहणेऽपि तदन्वेष्टव्यमित्यत्रैव समाहारैकवद्भावो वा। यथा **बृहदारण्यके** तथा सर्वत्र भूताकाश एवार्थो भवत्विति पूर्वपक्षः। सिद्धान्ते च **गगनदहराकाश**पदयोरेकार्थत्वमिष्टम्। न च **गगन**पदं ब्रह्मणि कुत्रापि प्रसिद्धम्। ततस्तैत्तिरीये उक्तं गगनं **छान्दोग्ये** सामोपनिषदि **दहराकाश** इति पदेन गीतञ्चैकमिति संप्रतिपन्नम्। अतस्तत् **भूताद्यं**=भूतेष्वाद्यं वियदेवास्तु। श्रुतिद्वयैकरस्यात् **गगन**पदघटनात् **आकाशशब्दस्य प्रसिद्धेर्महिमत** =प्रसिद्ध्यतिशयाच्च। **प्रसिद्धेरि**ति षष्ठी। लोके वेदे चेति **आकाशशब्दो** महाभूतेऽतीव प्रसिद्धः। पक्षमिमं निरस्यति **इति नेति**। **तत्प्रत्यनीकैः** भूताकाशब धकैः **अनेकैः=उत्तरेभ्यः गतिशब्दाभ्यां धृतेश्चे**ति सूत्राभिमतैः अनन्तरश्लोके वक्ष्यमाणैर्हेतुभिः नेत्यन्वयः। प्रसिद्धेश्चेति सूत्रार्थमाह **श्रौती**ति। यद्यपि भगवति **आकाश**पदप्रसिद्धिः, 'यदेष आकाश आनन्दो न स्यात्, आकाशाद्ध्येव, आकाशो ह वै प्राणश्चास्मै तदाकाशश्च' इत्येवं वेदमात्रे, न लोके, भूत क शे उभयी-अथापि पूर्वोक्तलिंगवर्गसाहित्येन तस्याः बलवत्त्वम्। "अत्यन्तबलवन्तोऽपि पौरजानपदाः जनाः। दुर्बलैरपि बाध्यन्ते प्रबलै पार्थिवाश्रितैः" इति न्यायात्। एवं दुर्बलस्य प्रबलसाहित्येन बलवत्त्वमेव **भाष्योक्तम्**; भूताकाशप्रसिद्धेः श्रुतिलोकोभयसंबन्धित्वात्। **चिन्तामणौ** तु श्रौतीत्वात् बलवतीति पृथक्कृत्य, लिङ्गवर्गैस्सनाथत्वमपि विशेष इत्युक्तम्। ननु **उत्तरेभ्य** इत्यनेन

प्रसिद्धेर्भगवति बलीयस्त्वाच्च। तदिदमाह—श्रौती चेति। न केवलं श्रौतप्रसिद्धिः, लिङ्गान्यपि विद्यन्त इत्याह—लिङ्गवर्गैरिति ॥ १११ ॥

(११२) बाह्याकाशश्च यावान् अयमपि हि तथेत्येतदक्लिष्टमीशे
सत्यात्मब्रह्मशब्दा नभसि न कथमप्यन्वयं प्राप्नुवन्ति।
कामाधारश्च योऽसौ समगणि दहराकाशवाचाऽत्र नित्यः
तस्यैव ह्येष आत्मेत्यनुवदनम्; अतस्तद्गुणाश्चिन्त्यकामाः ॥ १४ ॥

पुनरपि भूताकाशत्वनिरासकान् विषयवाक्यस्थान् हेतून् संगृह्णाति—बाह्याकाश इत्यादिपूर्वार्धेन। तस्यायमर्थः-'यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' इत्युपमानोपमेयभावस्तु दहराकाशस्य भूताकाशत्वे नोपपद्यते; उपमानोपमेयभावस्य भेदगर्भत्वात्। हृदयावच्छेदनिबन्धनः उपमानोपमेयभाव इति चेत्-तथा सति हृदयावच्छिन्नस्य, 'उभे अस्मिन् द्यावापृथिवी' इत्यादिप्रतिपादितसर्वाश्रयत्वानुपपत्तिः। किंच, 'एतत् सत्यं ब्रह्मपुरमेष आत्मा' इत्यादिनिर्दिष्टसत्यात्मब्रह्मशब्दवाच्यत्वं भूताकाशे न संभवतीति। तदिदमाह—सत्येति। ननु, 'तस्मिन् यदन्तस्तदन्वेष्टव्यम्' इति आकाशान्तर्वर्त्यन्वेष्टव्यान्तरनिर्देशात् दहराकाशो न परमात्मेति चेत्-तत्राह—कामाधारश्चेति। अत्र यः कामाधारः समगणि=गणितः उक्तः, नित्यः स एव दहराकाशवाचाऽप्युक्तः। अतस्तस्यैव, एष

---

गतिधृत्यादेरपि सुग्रहत्वात् अत्रापि प्रत्यनीकैरनेकैरिति सर्वकोडीकारात् तद्विषये पृथक्सूत्रप्रणयनं कुत इति चेत्-श्रुत्यन्तरसंवादलब्धमतिशयं दर्शयितुं गत्यादेः पृथक् सूत्रणमिति सूत्रशैल्यैव व्यक्तम् ॥

चि. टी. निरस्यत इत्यत्र प्रतिपाद्यत इति, प्रतिपाद्यत इत्यत्र च निरस्यत इति पदपरिवर्तनं चिन्तामणौ युक्तम्। पक्षद्वयेऽपीति। आकाशो भूताकाशः प्रत्यगात्मा वेति पूर्वपक्षिसंमतपक्षद्वयेऽपीत्यर्थः ॥ १११॥

१४. तत्प्रत्यनीकैरनेकैरित्युक्तं विवृणोति बाह्येति। 'यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' इति भूताकाशौपम्यमस्मिन् आकाशे उक्तम्। यदि अयमपि भूताकाशः, तदा, तथा तावानित्यौपम्यं न घटते। उपमानोपमेययोरिह भेदाभावात्। न चान्तर्हृदयत्वविशिष्टाकाशस्योपमेयत्वात् बाह्यत्वविशिष्टाकाशस्योपमानत्वात् उपमानतावच्छेदकोपमेयतावच्छेदकभेदादुपपत्तिरिति शंक्यम्। तादृशविशिष्टे तावानित्युक्तवैपुल्यानन्वयात्। अत एव जीवग्रहणेऽपीदं न घटते-अणौ वैपुल्यायोगात्। धर्मभूतज्ञानविकासमादाय तद्वर्णनस्य क्लिष्टत्वात्। ईशे तु सर्वथैवाक्लिष्टम्। तथाऽऽकाशे जीवे वा, 'उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते' इत्याद्युक्तविश्वाधारत्वानन्वयश्च। कालेश्वरयोरिव व्यापिन्यपि भूताकाशादौ आधारत्वस्य लोकवेदसिद्धत्वाभावात्। किञ्च अस्मिन् इति इममाकाशं परामृश्य, 'सर्वं तदस्मिन् समाहितम्' इत्युक्त्वा तदुपरि, अस्मिंश्चेत् ब्रह्मपुरे सर्वं समाहितमित्युक्त्वा सर्वाणि च भूतानि सर्वे च कामा इति तद् विवृत्य एतज्जराध्वंसयोः सर्वनाशः स्यादिति प्रश्नमुत्थाप्य, एतत् सत्यं ब्रह्म पुरमस्मिन् कामाः समाहिताः नास्य जराप्रध्वंसौ' इत्युक्तम्। तदिदं ब्रह्मपुरं न शरीरम्, तस्य जराध्वंसोभयवत्त्वात्। नापि यदन्तस्तदन्वेष्टव्यमित्युक्तं तत्; सर्वाधारत्वकामाधारत्वरूपेणोक्ताकाशस्यैव, 'अस्मिन्', 'एतत्' इति परामर्शात्। अथ च अस्मिन् कामाः समाहिता इत्युक्त एव एष आत्मेति एत-

आत्मेत्यनुवदनम्; तद्गुणाश्च चिन्त्यकामा इति योजना। अयं भावः–'किं तदत्र विद्यते यदन्वेष्टव्यम्' इति प्रश्नपूर्वकम्, 'तस्मिन् कामाः समाहिताः' इति दहराकाशशब्दनिर्दिष्टस्य परमात्मनः तदन्तर्वर्तिनो गुणाष्टकस्य च प्रथममुपासनं विधीयते। अत एव फलवाक्ये, 'अथ य इहाऽऽत्मानमनुविद्य व्रजन्ति एतांश्च सत्यान् कामान्' इत्युभयोरप्युपास्यत्वं निर्दिश्यत इति दहराकाशः परमात्मा, तदन्तर्वर्ति अन्वेष्टव्यं चापहतपाप्मत्वादिगुणजातं कामशब्देनोच्यत इति। काम्यन्त इति कामाः = कल्याणगुणाः॥११२

**(११३) सर्वेशाधारतोक्त्या भवतु च हृदयव्योम तत् वाज्यधीतं**
**छान्दोग्यस्थो निषादस्थपतिनयपदं ब्रह्मलोकादिशब्दः ।**

-च्छब्देन गृह्यते। तत्रास्य भूताकाशत्वे सत्यशब्दाऽऽत्मशब्दब्रह्मशब्दाः नानुयन्ति कथमपि। जीवपक्षेऽपि कथमपि; न मुख्यतया। अत्रैव सत् ति यमिति सत्यमिति चेतनाचेतननियन्तृत्वरूपार्थवर्णनं न जीवविषयेऽपि भवेत्। ननु एष आत्मेत्यत्र एतच्छब्दः, तदन्वेष्टव्यमित्याकाशान्तर्वर्तितयोक्तविषयकोऽस्त्वित्यत्राह कामेति। दहराकाशशब्देनात्र षष्ठे कामाधारत्वेन नित्यत्वेन च गणितस्यैव हि एष इत्यनुवादः। एवं तर्हि अन्वेष्टव्यं किम्? तत्राह तद्गुणा इति। अयं भावः—वैपुल्यव्यक्त्यर्थं द्यावापृथिव्यादिसर्ववर्णनेऽपि न तस्य चिन्त्यत्वम्। तदतिरिक्ततया, 'तस्मिन् कामाः समाहिताः' इति पूर्वं निर्दिष्टस्य पुनः, 'तस्मिन् कामाः समाहिताः' इत्यनुवादपूर्वकम्, 'एष आत्माऽपहतपाप्मा' इत्युपक्रमात् कामशब्दविवरणं तदिति ज्ञायते। उपरि च, 'आत्मानमनुविद्य व्रजन्ति एतांश्च सत्यान् कामान्' इति कामपदोक्तापहतपाप्मत्वादेरेव चिन्तनीयतया ग्रहणप्रतीतेः, तेषां कल्याणगुणत्वेन चिन्तनार्हत्वस्यापि संभवेन इम एव गुणाश्चिन्त्या. कामा इति ज्ञायते। 'किं तदत्र विद्यते यदन्वेष्टव्यम्' इति प्रश्नं समाहितवतोऽयमाशयः—यदि अल्पपरिमाणे तत्र किं स्थास्यतीति प्रश्न, तर्हि द्यावापृथिव्यादिसर्वाधारत्वमस्तीति समाधानम्। अथ तत्र सन्तु नाम धर्माः आकाशत्वद्रव्यत्वपदार्थत्वादयः; सन्तु च द्यावापृथिव्यादीनि द्रव्याणि; न तानि अन्वेष्टव्यानि; तस्य सर्वस्य हेयत्वात् अनित्यत्वाच्च। अतः अन्वेष्टव्यं चिन्त्यं किमिति प्रश्नः—तर्हि तस्मिन् कामा इति पृथङ् निर्दिष्टं तदस्तु। भगवद्गुणातिरिक्ता मोक्षे भोग्याः कामा आविर्भविष्यन्ति; तेऽपि न चिन्त्यकामाः इति। अतः कामेषु चिन्त्यकामाः नित्ये तस्मिन् नित्यतया स्थिताः. सत्याः अपहतपाप्मत्वादयः तद्गुणा एवेति। अत्र तृतीयपादे यच्छब्दस्य तस्येति प्रतिसंबन्धि। योऽसाविति पदद्वयं मिलितं पूर्ववाक्यस्थमेव। व्याख्यातारस्तु यः कामाधारः, असौ दहराकाशवाचा नित्यस्समगणि इत्यन्वयं कृत्वा चतुर्थपादं पृथग्वाक्यं कुर्वन्ति। योऽसौ दहराकाशवाचकेन अस्मिन्निति पदेन कामाधारतया गणितो नित्यः, तस्यैव एष इत्यनुवाद इति तस्यैव दहराकाशस्य गुणा भवन्ति इमे कामाः अन्वेषणार्हाः तदन्वेष्टव्यमित्यत्र विवक्षिताः। अत. अपहतपाप्मत्वाद्याधारत्वाच्च दहराकाशो न भूताकाशादिरिति व.क्यार्थः॥ ११२॥

१५. पूर्वपक्षी बृहदारण्यकगताकाशशब्दसमानार्थकत्वमत्राऽऽकाशशब्दस्य मन्यते। 'तद्यथा हिरण्यनिधिम्' इति वाक्ये, 'एतं ब्रह्मलोकं न विन्दन्ति' इति लोकपदश्रवणात् ब्रह्माधार आकाश एव लोक इति च। 'एतत् सत्यं ब्रह्मपुरम्' इत्युक्तिश्च देहादिवत् आकाशादिवत् जरावधादिकृतशीर्णनाशाभावादित्यभिप्रैति। तत् सर्वं स्वपक्षे औचित्यप्रदर्शनेन निरस्यति सर्वेति। अत्र श्लोके गतिसूत्र श्रुति-



2099

आपस्तम्बश्च वैभाजनपुरमवदत् ब्रह्म सर्वात्मभूतं
पूस्तस्य प्राणिनः स्युः तदपि तदपि हि स्यात् पुरं सर्ववासात् ॥ १५ ॥

छान्दोग्ये दहराकाशः परमात्मे(परंब्रह्मे)त्यभिधीयते, वाजसनेयिनां तु शाखायाम्, 'य एषोऽन्तर्हृदय आकाशः तस्मिन् शेते सर्वस्य वशी सर्वस्येशानः' इत्याकाशे शयान एव परमात्मत्वेनाभिधीयते ; प्रसिद्धाकाश एव तद्वाचकेन शब्देनोच्यते। तत् कथमुभयोरन्वयः। अत्र समाधिमाह—सर्वेशेति। वाजिनां तु शाखायां सर्वेश्वरस्याधारतया हृदयव्योमाभिधीयते ; तेन तत्र व्योमशब्दाभिधेयं लिङ्ग-विशेषात् प्रसिद्धाकाश एवेत्यङ्गीकुर्महे। छान्दोग्यस्थ आकाशशब्दः सर्वकामाधारत्वकथनालिङ्गात् परमपुरुषपर एव। ननु छान्दोग्ये ब्रह्मलोकशब्दः प्रयुज्यते, न तु (नात्र?) ब्रह्मैव लोको ब्रह्मलोक इति समासः; ब्रह्मणो लोको ब्रह्मलोक इति षष्ठीतत्पुरुषसमासाश्रयणस्य न्याय्यत्वादिति चेन्न—'एतया निषादस्थपतिं याजयेत्' इत्यत्र कर्मधारयसमासस्यैवाऽऽश्रयणात् तेन न्यायानुसारेण ब्रह्मैव लोको ब्रह्मलोक इत्यस्याभिव्याख्यातमिति न कश्चिद्दोषः। तदिदमाह—छान्दोग्येति। निर्णायकन्यायाभावे ह्यर्थान्तरमाशङ्क्यते। अस्य [च] ब्रह्मणः सर्वाधारत्वेन लोकशब्दवाच्यत्वं च युज्यते। इममेवार्थ-मापस्तम्बोऽपि वदतीति दर्शयति—आपस्तम्ब इति। 'स वै वैभाजनं पुरं स च भूतं स भव्यम्' इति सर्वात्मभूतं ब्रह्मैव सर्वेषां पुरत्वेन प्रतिपादयति। स वैभाजनम्—सर्वेषां पदार्थानां प्रत्येक-विभजनेन स्थातुं योग्यं स्थानम्। 'पूः प्राणिनः सर्वे एव गुहाशयस्य' इत्यप्याह। सर्वे प्राणिनो

सूत्रार्थोऽपि क्रोडीक्रियते। वाजिभिः वाजसनेयिभिः शुक्लयजुर्वेदिभिः अधीतं तत्, 'य एषोऽन्तर्हृदय आकाशः' इति आकाशपदवाच्यं हृदयव्योमैव भवतु, 'तस्मिन् शेते सर्वस्य वशी सर्वस्येशानः' इति तस्य सर्वेशाधारत्वेनोक्तत्वात्। पूर्वाधिकरणे प्रश्नोपनिषद्गतब्रह्मलोकशब्दश्च तन्निष्ठस्य परमपुरुषस्य पृथक्कथनात् लोकपर एव षष्ठीतत्पुरुषात्। अथापि छान्दोग्ये अत्र ब्रह्मैव लोक इति कर्मधारयविवक्षयेति निषादस्थपत्यधि-करणन्यायविषयः सः। तत्र निषादानां स्थपतिरिति तत्पुरुषं तिरस्कृत्य लाघवात् कर्मधारयोक्तेः। तदेव हि हिरण्यनिधिवत् भोग्यत्वं लोकपदेन ब्रह्मण उक्तं भवति। कथं च निधिसाम्यं गगनस्य। अत एव, 'अहर-हर्गच्छन्त्यः इति प्रजागमनमप्युपपन्नम्। सुषुप्तौ विश्रमार्थं प्राज्ञं प्रति हि गमनम्, नाकाशं प्रति। लोकशब्दः सर्वद्रष्टारं प्राज्ञमपि ब्रूयात्। एवं ब्रह्मपुरमित्यत्रापि आदिपदगृहीते षष्ठीतत्पुरुषे गौरवम्। आकाशस्याऽऽ-धारत्वमपि न स्वरसम्। कुत एव, 'एष सेतुर्विधरण एषां लोकानामसंभेदाय' इत्युक्ता सर्वलोकधृतिः। ननु पुरिशयत्वमेव भगवतः प्रसिद्धम्, न पुरत्वमित्यत्र तदपि प्रसिद्धमित्याह आपस्तम्बश्चेति। वैभाजनम् पुरम्। सर्वेषां परधर्मासंकरेण स्वस्वधर्मेण विभज्य स्थितिकरं पुरम्। इदम्, 'एषां लोकानाम् असंभेदाय' इति प्रकृतश्रुत्यर्थप्रदर्शकम्। तद्व्याख्यायामुज्ज्वलायाम्-'विविधैर्भागैर्भजनीयं वैभाजनम्' इत्युक्तम्। तदपि प्रकृतश्रुत्यर्थोपबृंहणत्वायात्र वर्णितार्थपरमेव स्यादपि। विभाज इति पदान्तरं तत्प्रयुक्तमन्यत्र। तदर्थश्च (२-२-१) भाष्यार्थदर्पणे द्रष्टव्यः। सर्वात्मभूतमित्यनेन, 'स च भूतं स भव्यम्' इति वाक्यार्थकथनम्। 'यदिदमस्मिन् ब्रह्मपुरे' इत्युपक्रमोक्तरीत्या प्राणिनां पुरत्वमपि तदुक्तं प्रदर्श्य, तत्र ब्रह्मणः पुरत्वमेव मुख्यमित्याह पूरिति। 'पूः प्राणिनः सर्व एव गुहाशयस्याहन्यमानस्य विकल्मषस्य' इति आपस्तम्बवचनात् सर्वे तस्य पुरभूताः। अहन्यमानस्येति पदम् देहजराप्रध्वंसा

गुहाशयस्य परमात्मनः पुरमित्यर्थः। तेन प्राणिनः [तस्य] परमात्मनः [पूः] पुरम्=आवासस्थानम्। तदपि=तथापि तदपि=ब्रह्मापि तेषां पुरम् ; सर्वाधारत्वेन सर्वेषामस्मिन् वासात्। तेन, 'सर्वे-वासौ समस्तं च वसत्यत्रेति वै यतः' इति वासुदेवशब्दार्थोऽनुस्मृतो भवति ॥ ११३ ॥

(११४) जीवस्तर्ह्येष आत्मा गुणगणघटनात् तत्परामर्शदृष्टेः
अल्पत्वाद्युक्तितश्चेत्यसत् ; अनुपधिकात् सत्यसंकल्पतादेः ।
विश्वैकाधारतादेरपि स खलु परो(रे) दह्रतौपाधिकी स्यात्
प्राजापत्ये तु वाक्ये परसमदशया तद्गुणोक्तिर्विमुक्ते ॥ १६ ॥

इत्थं दहराकाशस्य प्रसिद्धाकाशत्वमाशङ्क्य निराकृतम्। इदानीं जीवत्वमाशङ्क्य निराक्रियते— जीव इति। तर्हि=गुणाधारत्वानुपपत्त्या प्रसिद्धाकाशत्वे निवृत्तेऽपि अपहतपाप्मत्वादिगुणोपपत्तेः, 'एष आत्मा' इति जीवस्यैव परामर्शनात्, 'तत्रापि दह्रं गगनं विशोकः' इति अल्पप्रमाणत्व-कथनाच्च जीव एव दहराकाशः स्यादित्याशङ्क्य(ङ्का।?) प्रतिक्षिपति—असदिति। अत्र हेतुमाह— अनुपधिकादिति। स्वाभाविकादित्यर्थः। परमात्मनो हि स्वाभाविकं सत्यसंकल्पत्वादिकम्। जीवस्य तु तत्प्रसादलभ्यम्। 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति वचनात्। किंच प्रपञ्चा-धारत्वं परमपुरुषस्यात्र कथ्यते। तेनापि पर एव प्रतिपाद्यः। ननु दहरत्वमुक्तम्; तस्य तत् कथमित्या-शङ्क्य परिहरति-औपाधिकीति। नात्र परमात्मनः स्वाभाविकं दहरत्वमुच्यते ; अपितु हृदयावच्छेद-

---

दावपि न तस्य हानिरिति पूर्वोक्तप्रकृतश्रुत्यर्थसारकम्। तदपि=तथापि तदपि ब्रह्मापि पुरं स्यात् ; सर्वं प्रति वासस्थानत्वात्। प्राणिनां ब्रह्म प्रति पुरत्वं तु न मुख्यमिति भावः। सर्ववासादित्युभयत्र प्रमाण-वचनम्। "सर्वत्रासौ समस्तश्च वसत्यत्रेति वै यतः। ततः स वासुदेवेति विद्वद्भिः परिपठ्यते" इति ॥ ११३

१६. अथ दहराकाशः प्रत्यगात्मेति कोटिनिरसनार्थानि इतरपरामर्शादित्यादीनि सूत्राणि व्याख्यातुमारभते जीव इति। तर्हि=भूताकाशपक्षस्यासंभवे सति, 'एष आत्मा अपहतपाप्मा' इत्या युक्तो दहराकाशः जीवः स्यात् ; गुणगणघटनात्— अपहतपाप्मत्वसत्यसंकल्पत्वादिगुणानां तत्र यथा-वदन्वयात्। तत्परामर्शदृष्टेः=जीवस्यैव संप्रसादस्य, 'एष आत्मेति होवाचैतदमृतमभयमेतत् ब्रह्म' इति उक्तसर्वाकारवत्तया परामर्शदर्शनात्। अल्पत्वाद्युक्तितश्च=दहरः इति अल्पपरिमाणत्ववचनाच्च। आदिना दहरपुण्डरीकवेश्मवर्तित्वग्रहणम्। अणोर्हि शरीरहृदयादिकमायतनं भवितुमर्हतीति। इदं निरस्यति इत्यसदिति। गुणगण उक्तो न जैव इत्याह अनुपधिकादिति। शरीरान्तर्वर्तित्वावस्थाया-मेवापहतपाप्मत्व-सत्यसंकल्पत्वादिकं नित्याविर्भूतमत्र स्वरसप्रतीतम्। जीवस्य तु 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति निरुपाधिकगुणगणपरज्योतिःप्राप्त्यनन्तरं स्वरूपाविर्भाव उक्तः। पश्चादाविर्भवत् स्वरूपं किमित्येतत् उत्तरात् प्रजापतिवाक्याद्वगम्यते। किञ्च सः दहराकाशः परः ; विश्वैकाधारता-देरपि='उभे अस्मिन् द्यावापृथिवी' इति सर्वाधारत्वात् उक्तात्, भूताकाशान्यूनपरिमाणवत्त्वात्, 'यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितम्' इति सर्वातिशयितभोग्यतया उक्तेः, चेतनाचेतन-नियन्तृत्वरूपसत्यत्वब्रह्मत्वादितश्च। तर्हि, 'एष आत्मा एतदमृतम्' इति, 'अथ य एष संप्रसादः' इत्युक्त-संप्रसादैक्यकथनं कथम्। संप्रसादो हि जीवः। 'परंज्योतिरुपसंपद्य' इति उपसंपत्तव्यस्यान्यस्योक्त्याऽ-

निबन्धनं तदुच्यत इत्यर्थः । ननु प्रजापतिवाक्ये जीवस्याप्यपहतपाप्मत्वादिगुणाष्टकमभिधीयते, तेनापहतपाप्मत्वादीनां भगवदसाधारण्यं कथं सिध्यतीत्याशङ्क्याह—प्राजापत्य इति । अयमर्थः— दहरवाक्यप्रकरणसमाम्नातं प्रजापतिवाक्यं दहरवाक्यशेषमेव, तत्र प्रतिपाद्योऽपि जीवः परमपुरुष-प्रसादलभ्य-तत्साम्यदशयाऽपहतपाप्मत्वादिगुणौघपरिकर्मितः स्यात् । तथा च न कश्चिद्दोषः ॥११४॥

(११५) दहाकाशोऽपवर्गप्रद इति गदितुं सम्प्रसादोक्तिरत्र
प्राजापत्ये तु वाक्ये परपरिपठनं प्राप्यनिष्कर्षणार्थम् ।
आकाङ्क्षाद्यैस्तदेवं परतदितरयोरन्विते वाक्ययुग्मे(वर्गे)
युक्तं नान्योन्यबाधप्रभृतिकमिह(ति) (प्रभृति किमपि) तत्सामरस्यं हि सौत्रम् ॥

इति दहराधिकरणम् ॥ २२ ॥

तर्हि प्रजापतिवाक्यं दहरवाक्यात् भिन्नमेव स्यात्, तत्प्रतिपाद्योऽपि (हि) जीवः स्वतन्त्र एव स्यात्, किमर्थं निराकाङ्क्षयोर्द्वयोरपि [वाक्ययोः] परस्परसंबन्धो भवद्भिरुपपाद्यत इत्याशङ्क्य परिहरति— दहाकाश इति । नास्माभिरत्राऽऽकाङ्क्षा परिकल्प्यते; अपितु वाक्यस्वाभाव्यादेव । (स्वाभाव्यसिद्धे-

प्ययं जीवः । संप्रसादशब्दः सुषुप्त्यवस्थायां जीवे प्रयुक्तः, रागद्वेषादिकालुष्याभावात् । परमात्म-विषयकदर्शनसमानाकारज्ञानलाभसंप्रीते तदधीनहृदयग्रन्थिसर्वसंशयसर्वविधकर्मच्छेदे परमपदप्रस्थिते तु स शब्दः चिन्तामण्युक्तरीत्या सुतरां संगच्छते । तदैक्यं दहरस्य कथमिति चेत्—सत्यम् । अत्र एष आत्मेत्यत्र एष इत्येतत् यच्छब्दप्रतिसंबन्धि । अतः ऐक्यं प्रतीयते । अथापि एष इत्यस्य बुद्धिस्थवाचिनः प्रकृतसंप्रसादान्तर्यामीत्यर्थकत्वात् न दोषः । यद्वा एष आत्मेत्यत्रात्मा जीव एव । 'य एष संप्रसादः' इति यच्छब्दस्य, 'अभिनिष्पद्यते' इत्यत्रान्वयो न युक्तः, तदर्थस्याज्ञातत्वेन यच्छब्दघटितवाक्येनानुवादासंभवात् । अतः, निष्पद्यत इत्यत्र न वाक्यसमाप्तिः, किंतु आत्मेत्यत्र । 'य एष संप्रसादोऽस्ति, एष आत्माऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इत्यन्वयः । 'एतदमृतमभयम्' इति परज्योतिषि अमृतत्वादि कथ्यते । पुंनपुंसकलिंगकपदस्थित्यनुगुणश्चायमर्थः । या तु अल्पपरिमाणतोक्ता, सा औपाधिकीति प्रागेवोक्तमस्ति । परः इति परे इति च पाठद्वये प्रथमान्तपाठः साधीयान् । अनुपधिकादित्यारभ्य पर इत्यन्तं असदित्यत्र हेतुसमर्पकम् । स्वशिवति प्रसिद्धिमुखेन हेतुत्वदर्शि । विधेयवाचकपदाभावे स इत्येतन्नान्वेति । दहरतायां परनिष्ठत्वं स्वर्थसिद्धमिति । एवं तर्हि प्रजापति वाक्ये कथं जीवगुणगणोक्तिरिति चेत्—आह प्राजापत्ये इति । तत्र विमुक्ते मुक्तिं प्राप्ते जीवे परेणाऽऽत्मना समदशया साम्यापत्त्याऽऽविर्भवदपहतपाप्मत्वादिगुणोक्तिः । न पुनरनाद्याविर्भूतत्वं तत्रेष्टम् ,नापि तद्गुणव्यतिरिक्तानां विश्वधारत्व-विधरणत्व-चिदचिन्नियन्तृत्वरूपसत्यत्वादीनां तत्रोक्तिरस्ति । अतो दहर एवम्भूतो न प्रत्यगात्मेति ॥ ११४ ॥

१७. अन्यार्थश्च परामर्श इत्यादिसूत्रार्थमाह दहेति । दहरविद्यायाः जीवविषयकत्वाभावे, तत्र 'य एष संप्रसादः' इति जीवप्रस्तावः, प्रजापतिवाक्यस्य जीवविषयकत्वे तत्र, 'परं ज्योतिरुपसंपद्य', 'स उत्तमः पुरुषः' इति परप्रस्तावश्च कुत इति चेत्-अत्र दहरविद्यायां संप्रसादस्य निर्देशः, दहराकाशरूपं

वेत्यर्थः)। अत्र हि पूर्वस्मिन् वाक्ये प्रतिपन्नस्य भगवतो मोक्षप्रदत्वं प्रतिपादयितुं जीवकथनम्। संप्रसादो जीवः; भगवत्संबन्धज्ञानरसिकत्वेन प्रसन्नस्वभावत्वात्। उत्तरत्र प्रजापतिवाक्येऽपि प्रतिपाद्यस्य जीवस्य प्राप्यविशेषनिर्धारणार्थं तस्मिन् वाक्ये परमात्मपरिपठनम्। तदेवमाकाङ्क्षाऽऽसत्तियोग्यत्वैरुभयोरपि वाक्ययोरन्वितत्वे सति न वाक्यभेदः परिकल्प्यः। तथा च न पूर्वोत्तरवाक्ययोरन्योन्यबाधः (रन्योन्यान्वयाभावः) शङ्क्यः। न च नैरपेक्ष्यं परिकल्प्यम्; 'संभवत्येकवाक्यत्वे वाक्यभेदस्तु नेष्यते' इति न्यायेनैकवाक्यत्वे संभवति वाक्यभेदाङ्गीकारस्यान्याय्यत्वात्। अतो द्वयोरपि वाक्ययोः सामरस्यमेव सूत्रकारः प्राहेति दर्शयति–तदिति ॥११५॥ इति दहराधिकरणम् ॥२२

---

ब्रह्म जीवस्य स्वोपसंपत्तिपूर्वकस्वरूपाविर्भावरूपमोक्षप्रदमिति परमात्मगुणकथनार्थम्। प्रजापतिवाक्ये परमात्मवचनञ्च, 'जागरस्वप्नादिसर्वावस्थानुवर्ति-नानाविधहेयवत्त्वस्य जीवे तल्लोक्तत्वात् जीवोपासनरूपप्रजापतिविद्याया दहरविद्यादिरूपपरविद्यांगत्वात् न पृथक् फलम्। जाग्रदादिदशासु, 'नाहमत्र भोग्यं पश्यामि' इत्युक्तं हि। तत् कैवल्यदशायामपि मन्तव्यम्; स्वरूपाविर्भावविरहात् सर्वबन्धविनिर्मोकविरहात्। नापि साक्षादेव मोक्षः फलम्; किंतु अङ्गस्याङ्गिफल एव विश्रान्तिः' इति प्राप्यस्य फलस्य निर्धारणार्थम्। यावत् परमात्मानमासाद्याऽऽविर्भूतस्वरूपो न भवति, तावत् हेय एव भवेदिति च वक्तुम्। अङ्गे अङ्गिफलनिर्देशः फलान्तरार्थत्वाभावज्ञापनाय बहुलं कर्मकाण्डेऽपि, 'औदुम्बरो यूपो भवति, ऊर्जं पशूनाप्नोति'' इत्येवम्। कश्चित् कथयति—'दहरविद्यायां प्रजापतिवाक्ये च पृथक्पृथक् फलनिर्देशात् मिथस्सापेक्षत्वाभावात् सद्विद्यादिवत् विद्याद्वयं भिन्नं स्वतन्त्रम्' इति। अन्यो मन्यते—'अपहतपाप्मत्वादिगुणगणैक्यादेकप्रकरणादेकैव विद्या कृत्स्ना; केवलमाख्यायिकाप्रदर्शनाय प्रजापतिवाक्यारम्भः' इति। अपरो भणति—'तद्य इहात्मानमनुविद्य व्रजन्ति एतांश्च सत्यान् कामान्' इति गुणप्राधान्यप्रतीत्या दहरविद्या सगुणविद्या। स्वरूपमात्राविर्भावहेतुर्निर्गुणविद्या प्रजापतिवाक्ये। 'सत्यकामः सत्यसंकल्पः' इत्यस्य स्वरूपातिरिक्तकामसंकल्पादिरहित इत्येवार्थः' इति। सर्वमिदं क्षिपति आकांक्षेत्यादिना। जीवपरयोर्भेदस्यात्र प्रकरणान्तरे च स्पष्टत्वात् आकांक्षाऽऽसत्तियोग्यताबलात् दहरवाक्ये प्रजापतिवाक्ये च परमात्म–तदितरजीवात्मविषयकतयाऽपि मिथोऽन्विते सति; तुल्यविद्यात्वभ्रमेण एकविद्यया अन्यविद्याबाधो वा, उभयोरैक्यमिति एकलोपाख्यानतया विद्याविध्यभावो वा, प्रजापतिवाक्ये सत्यसंकल्पत्वलक्षणक्रीडनरमणादिसर्वबाधेन शुद्धस्वरूपमात्रपरत्वं वा एवमन्यद्वा न युज्यते वक्तुम्। जीवपरयोर्भेदेन वाक्यद्वयसामरस्यम्, जीवपरयोः सायुज्यरूपं, "सामरस्यं हि सायुज्यं वदन्ति ब्रह्मवादिनः'' इत्युक्तं भोगसाम्यञ्च, 'इतरपरामर्शात्, अन्यार्थश्च परामर्शः, अनुकृतेस्तस्य च, अपि स्मर्यते' इति सूत्रसिद्धम्; न त्वैक्यमात्मनो; न च वाक्ययोः स्वातन्त्र्यमिति॥ **अन्योन्यबाधप्रभृति किमपीति** पाठमादृत्य मिथस्सामानाधिकरण्यं विहाय **किमपीत्यस्य** पृथगर्थो दर्शितः **पदयोजनायाम्**। तथा **किमपीति** पाठेनार्थस्य वर्णनीयत्वे, **किमपि=अनुकृतेरित्यादिसूत्रद्वयस्य** भिन्नाधिकरणत्वकल्पनमपि न युक्तम्। सूत्रद्वयेऽपि साध्यान्तरानिर्देशात् चकारबलाच्च पूर्वाधिकरणसामरस्यस्यात्र सूत्रद्वये स्पष्टत्वात्' इत्यर्थोऽपि स्यात्। शांकरे हि, "तमेव भान्तमनुभाति सर्वम्' इति

## २३ ॥ अथ प्रमिताधिकरणम् ॥ १-३-६ ॥

सूत्रम्—शब्दादेव प्रमितः ॥ २३ ॥ हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २४ ॥
......कम्पनात् ॥ ४० ॥ ज्योतिर्दर्शनात् ॥ ४१ ॥

(११६) प्राणेशोऽङ्गुष्ठमात्रः क्वचिदनुकथितः सञ्चरन् कर्मभिः स्वैः
अन्यत्राङ्गुष्ठमात्रं पुरुषमपि यमो निश्चकर्षेति दृष्टम् ।
तस्मादेतत्प्रमाणप्रमितमुपनिषज्जीवमाहेत्ययुक्तं
वाक्यस्येशानतादेः; नन्हृदयपरिच्छित्तितस्तद्धि मानम् ॥ १८ ॥

पूर्वं दहरविद्यायामल्पत्वेन श्रुतः परमपुरुष इति, 'अल्पश्रुतेरिति चेत्, तदुक्तम्' इति सूत्रे प्रत्यपादि; तदल्पपरिमाणयुक्तत्वं जीवस्यैवान्यत्र श्रूयत इति पूर्वपक्षोत्थानेन संगतिरिति भाष्य एवोक्तम् । तदर्थविचारस्तु, 'अङ्गुष्ठमात्रः पुरुषः' इत्यंगुष्ठप्रमितः प्रत्यगात्मा, उत परमात्मेति । तदर्थविचारस्तु किमीशानत्वं देहेन्द्रियाद्यपेक्षम्, उत सर्वापेक्षमिति । तदर्थविचारस्तु—किमुपक्रमगतप्रमितत्वमीशानत्वलिङ्गस्वारस्यविरोधि, न वेति । तदर्थं विचार्यते—किं तत्प्रमितत्वं जीवे समञ्जसम्, उत उभयत्रासमञ्जसमिति । अत्र विषयवाक्यानि भाष्यदीपयोर्न्यक्तं द्रष्टव्यानि । तत्र पूर्वपक्षमुक्त्वा प्रतिक्षिपति—प्राणेश इति । 'प्राणाधिपः सञ्चरति स्वकर्मभिः । अङ्गुष्ठमात्रो

---

वाक्यविषयकमन्यदधिकरणमिदं कृतम् । तन्निरासभाष्यानुवादः स्यादेवमिति ॥ प्रजापतिवाक्यप्रतिपाद्या जीवात्मविद्या न दहरविद्यामात्राङ्गम्; किंतु अर्थस्वभावात् सर्वपरविद्याङ्गमेव । अपहतपाप्मत्वाद्यतिरिक्त-गुणविशिष्टेषु परविद्यान्तरेष्वपि जीवस्य तदीयापहतपाप्मत्वाद्याकारेणोपासनमेवाङ्गं भवतीति ॥ ११५ ॥

१८. हृदयपरिच्छिन्नत्वरूपदहरत्वस्य परमात्मनि सिद्धावपि अंगुष्ठपरिच्छिन्नतया प्रसिद्धस्तु जीव एवेति शंकयाऽऽरम्भः । नात्र केवलप्रसंगसंगतिः । कठोपनिषदि स्वलवये, 'अंगुष्ठमात्रः' इत्युक्तः क इति विशये, क्वचित्=श्वेताश्वतरोपनिषदि, "गुणान्वयो यः फलकर्मकर्ता........प्राणाधिपः संचरति स्वकर्मभिः । अंगुष्ठमात्रो रवितुल्यरूपः संकल्पाहंकारसमन्वितो यः" इति प्राणाधिपत्व-स्वकीयकर्माधीन संचारवत्त्वादिविशिष्ट एव अंगुष्ठमात्रतया अनुकथितः=यच्छब्दघटितवाक्येन प्रसिद्धवदनूदितः। तेन जीवे प्रसिद्धिर्ज्ञायते । कथमणोर्जीवस्यांगुष्ठमात्रत्वमिति शंका भवेत् । तत्र बुद्धेर्गुणेनेति उत्तरार्धे प्रयोगात् बुद्धिसंबन्धादिनेत्यूहनीयम् । द्वितीयपादे, अन्यत्रापि, 'अंगुष्ठमात्रं पुरुषं यमो निश्चकर्ष' इति दृष्टमित्यन्वयः । भारते, "अथ सत्यवतः कायात् पाशबन्धवशं गतम् । अंगुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्" इति वाक्येन सावित्रीपतेः सत्यवतो यमेनाऽऽकृष्यमाणतादशायामङ्गुष्ठमात्रत्वकथनात् भूतसूक्ष्मपरिष्वंगकाले अंगुष्ठमात्रत्वमुन्नीयत इत्यर्थः। तस्मात्=श्रुतिस्मृतिप्रामाण्यात् उपनिषत् कठोपनिषत् एतत्प्रमाणप्रमितं प्रकृतांगुष्ठमात्रवत्त्वेन जीवमेवाऽऽहेति ज्ञायते । परमात्मनोऽल्पपरिमाणपरिच्छेद-संभवेऽपि अंगुष्ठप्रमितत्वप्रसिद्धिर्नास्तीति । निरस्यति इत्ययुक्तमिति । वाक्येति । अयं भावः-अंगुष्ठ-मात्रो जीव इति न रूढिर्भवितुमर्हति, कोशाद्यभावात् । योगव्युत्पत्तिश्च साधारणी । अतो जीव इति निष्कर्षः प्रसिद्धपदान्तरसमभिव्याहाररूपशब्दात् । स शब्दोऽत्र, 'ईशानो भूतभव्यस्य' इति वाक्यरूपः

रवितुल्यरूपः' इति श्रुतिरत्राभिसन्धीयते। कर्मभिः स्वैः सञ्चरन् प्राणेशः एव कश्चित् श्रुतौ अङ्गुष्ठमात्रः कथितः। अन्यत्र वाक्ये पुनः, 'अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्' इति दृष्टम्। तस्मादेतत्प्रमाणं प्रमितमङ्गुष्ठमात्रं जीवमुपनिषदाहेति पूर्वपक्षपरिकल्पनम्। तदयुक्तम्; स्ववाक्यस्थितेन, 'ईशानो भूतभव्यस्य' इत्युक्तेनेशानत्वादिना लिङ्गेन निरस्तत्वात्। कथं तर्हि ईशानस्याङ्गुष्ठप्रमितत्वमित्याशङ्क्याह–नरेति। उपासकहृदयपरिच्छेदापेक्षया तत् अङ्गुष्ठप्रमितत्वमुच्यते, न पुनः स्वाभाविकम्॥११६

## अथ गर्भगताधिकरणानि

(११७) न ह्यङ्गुष्ठप्रमाणं हृदयमखिलजन्त्वाश्रयं तत् परस्मिन्
व्याप्ते तन्मान(त्र)तोक्तिः क्वचिदिति मनुजाधिक्रियोक्तिप्रसक्तेः ।

---

ईश्वरसाधको लक्ष्यते । प्रसिद्धपदसमभिव्याहारो हि स्वार्थान्वययोग्यतामुखेन कञ्चिदर्थं स्थापयति । अत्र भूतभव्येशानत्वं शब्दगम्यं जीवेऽनन्वितम् । ईशानत्ववत्, 'न ततो विजुगुप्सते', 'तिष्ठति' इति जुगुप्सां विना स्थितत्वमुच्यते । तच्चेशनार्थमिति ज्ञायते । इदं वात्सल्यातिशयात् स्वस्य हेयसंबन्धप्रसक्त्यभावाच्च भवेत् । जीवस्तु कर्मफलभुक् विवेकी देहनिन्दापर एव प्रायेण स्यात् । वाक्यान्तरे च, 'अन्तरात्मा सदा जनानां हृदये संनिविष्टः' इति सर्वजनसंनिविष्टत्वेनैकस्य कथनादपि जीवपरत्वमयुक्तम् । यदि तु यौगिकस्य पदस्य, सरसान्वयार्हपदकदम्बस्य च श्रुतित्वमेवेति मन्यते, तदा, 'ईशानो भूतभव्यस्य' इति श्रुतिरेव; ईश्वरासाधारणत्वात् । नाङ्गुष्ठमात्रपदं तथा ; जीवपरोभयसाधारण्यस्य वक्ष्यमाणत्वादिति ॥ कथं परमात्मनि अवयवर्थान्वय इति चेत्—तत् अंगुष्ठपरिच्छेदरूपं मानं हि नरहृदयपरिच्छिन्नत्वात् परमात्मनो भवितुमर्हति । अंगुष्ठस्य मात्रेव मात्रा यस्य हृदयपरिच्छिन्नस्य, सोऽङ्गुष्ठमात्रः । अंगुष्ठस्येव मात्रा यस्य तत् हृदयमङ्गुष्ठमात्रम्, तद्वान् अंगुष्ठमात्र इति वा । हृदयस्याङ्गुष्ठतुल्यं परिमाणमिति नियमः कथमिति चेत्–तिर्यगादिषु यथातथा भवतु । नरस्य=मनुष्यस्य हृदयं तादृशमेव। नर एव तु उपदेश्यत्वात् उपासकत्वाच्च प्रकृत इति तं प्रति तथोक्तिरिति द्वितीयसूत्रोक्तम्। जीवे तु तन्न नियतम् ; अणोस्तस्य हृदयपरिच्छिन्नत्वाभावात्। बुद्धेः परिमाणमङ्गुष्ठतुल्यमित्यत्र च मानाभावात् । सर्वभूतसूक्ष्माख्यं शरीरमङ्गुष्ठमितमित्यस्याप्यूहमात्रत्वात् । तन्मात्रत्वस्य स्थूलशरीरेऽवस्थितिदशायामभावाच्च । श्वेताश्वतरप्रयोगस्तु अंगुष्ठमात्रपदेन हृदयं गृहीत्वा, तत्र स्थितः, आधारतया तद्वान् इत्यर्थविवक्षयैव निर्वाह्यः । परमात्मविषयेऽप्येवं श्रीभाष्यम्, "परमात्मन उपासनार्थमुपासकहृदये वर्तमानत्वात्" इति ॥ ११६ ॥

१९. द्वितीयसूत्रार्थोऽप्युक्तः । तन्मूलप्रसंगसंगत्या पादसंगतिरहितेऽपि अधिकरणत्रयं प्रवृत्तमित्याह नेति । हृदि परमात्मनो वर्तमानत्वात् तदपेक्षया तदुपजीवनेन तदभिप्रायेणांगुष्ठमात्रत्वोक्तिरित्युक्तौ तदुपरि, 'कथं हृदयं सर्वमङ्गुष्ठमात्रम्, खरतुरगादिषु तथात्वाभावात्' इति शंकायाम्, न अखिलजन्तुगतं हृदयमङ्गुष्ठमात्रमिष्टम् । तत् तस्मात् सर्वव्याप्ते परमात्मनि अङ्गुष्ठमात्रत्वोक्तिः क्वचित् मनुष्यविषये ; तस्यैवोपासनेऽधिकारादिति मनुष्याधिकारे कथिते, मनुष्येति विशेषनिर्देशात् तदतिरिक्तानां

सूत्रद्वन्द्वद्वयान्तस्त्रिभिरधिकरणैश्चिन्त्यते तद्विशेषः
तार्तीयै।(ये) स्थापनीया त्ववगि(धि)जिगमिषिता नेतिकर्तव्यताऽत्र ॥ १९ ॥

अत्राधिकरणमध्ये मनुष्याधिकारत्वप्रसङ्गात् अधिकरणत्रयकथनम्, तेनात्र तृतीयाध्यायप्रसाध्याधिकारचिन्तनात् अध्यायसङ्करप्रसङ्ग इत्यत्राह–नहीत्यादिना। इत्थं किल कश्चित् मन्यते–पूर्वत्राङ्गुष्ठप्रमितत्वं परमपुरुषस्योक्तं तच्च हृदयापेक्षयेत्युक्तम्, न हि सर्वेषां जन्तूनां हृदयमङ्गुष्ठप्रमितम्; अङ्गुष्ठाभावात्। तेनाखिलजन्त्वाश्रयं(य)हृदयमङ्गुष्ठप्रमितमिति वक्तुं न शक्यत इति॥ सत्यमेतत्। सर्वाश्रयं हृदयमङ्गुष्ठप्रमितमिति नोच्यते, अपितूपासकहृदयम्। तेन सर्वेशाते परस्मिन् ब्रह्मणि अंगुष्ठप्रमितत्वकथनं क्वचिन्मनुष्याधिकारापेक्षयेति मन्तव्यम्। तेनाधिकारप्रसङ्गेनास्मिन् अधिकरणे सूत्रचतुष्टयात्मके द्वयोर्द्वयोः सूत्रयोर्मध्ये त्रिभिरधिकरणैरधिकारविशेषश्चिन्त्यते। न पुनरत्र तृतीयाध्यायस्थैरधिकरणैः स्थापनीयाऽधिक्रिया (?) अवगन्तुमिष्टा; तेन नाध्यायसङ्करप्रसङ्गः। तदिदमाह–तार्तीयैरिति। इतिकर्तव्यता नाम अङ्गकलापः॥ ११७॥

२४ ॥ अथ एतद्गर्भे देवताधिकरणम् ॥ १-३-७ ॥

सूत्रम्—तदुपर्यपि बादरायणः संभवात्॥ विरोधः कर्मणीति चेन्न; अनेकप्रतिपत्तेर्दर्शनात्॥ शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम्॥ अत एव च नित्यत्वम्॥ समाननामरूपत्वाच्चाऽऽवृत्तावप्यविरोधो दर्शनात् स्मृतेश्च॥ २५-२९॥

(११८) शब्दात्मा लौकिकार्थाकृतिरियमथवा देवताऽतो न तस्याः
ब्रह्मोपास्त्यनार्षं श्रुतपरिहरणं कल्पनं चाश्रुतस्य।

---

देवानामुपासनेऽधिकारो नेष्टः; मनुष्येति सामान्यप्रयोगात् शूद्रस्याप्यधिकार इष्ट इति केचिदमंसत। तद्बुद्धिनिरासायैतदधिकरणमध्य एवाधिकरणान्तराणामारम्भः। द्वितीयसूत्रमूलप्रसक्तविचारावसाने च प्रमिताधिकरणशेषोक्तिर्भविष्यति। तथाच प्रमिताधिकरणघटकसूत्रचतुष्टयमध्ये—गतसूत्रद्वन्द्वस्य भविष्यत्सूत्रद्वयस्य च मध्ये त्रीण्यधिकरणानि। तैः तद्विशेषः अमनुष्याणां सामान्यतोऽधिकारः, स्थलविशेषेऽप्यधिकारश्च, मनुष्यान्तर्गतानामपि केषाञ्चिदनधिकारान्मनुष्यविशेषेष्वेवाधिकारश्च विचार्य स्थाप्यते। ननु प्रसक्तेऽपि तद्विचारे, अत्रैव तृतीयाध्याये तुरीयपादे करिष्यते इति कस्मान्नोक्तमिति शंकां परिहरति तार्तीयैरिति। तृतीयाध्यायगतैरधिकरणैः। तत्र हि नाधिकारविचारः; किंतु भक्तिरूपयोगांगविचारः; तत्तद्वर्णाश्रमाद्यधिकारिकाणां विहितानामङ्गत्वमस्ति, न वेति विचारः; न तु कर्मादावधिकारोऽस्ति, न वेति। अतः तत्र स्थापनीया इतिकर्तव्यता=अङ्गजातं नात्र अवजिगमिषिता। मनुष्यशब्दश्रवणमूलकप्रश्नप्रवृत्तस्यावगन्तुमिष्टा न; तथा चेत्–पश्चात् स्थापयिष्यामीति तूष्णीकः स्यात्। अधिकारः किल तस्यावजिगमिषितः। अतोऽन्यत्रानवकाशादत्रैवाऽऽहेति। चिन्तामणौ स्थापनीयाऽधिक्रियेत्यत्र स्थापनीया इतिकर्तव्या इति पाठः स्यात्। अन्यथा तु, अत्रावगन्तुमिष्टाऽधिक्रिया न तृतीयाध्यायस्थैरधिकरणैः स्थापनीयेत्यन्वयः कार्यः। अवतरणे अधिकारपदं पूर्वपक्ष्यभिप्रायेण॥ ११७

विश्वस्रष्टा च मा भूदनुमितिविषयस्तत्परैस्त्वेष शास्त्रैः
निर्बाधैः स्थापितः प्राक् स्वयमपि विभुना नैव शक्यापलापः ॥ २० ॥

पूर्वस्मिन्नधिकरणे, 'हृद्यपेक्षया तु मनुष्याधिकारत्वात्' इति ब्रह्मोपासनस्य मनुष्याधिकारत्वमुक्तम्। तर्हि देवादीनां ब्रह्मविद्यायामधिकारो न स्यादित्याशङ्कया संगतिः। तदर्थं विचारस्तु किं ब्रह्मविद्यायां देवादीनामधिकारोऽस्ति, नेति। किं तेषां साङ्गविद्योपसंहारसामर्थ्यं संभवति, नेति। किं तेषां विग्रहवत्त्वं संभवति, नेति। किं तद्विग्रहप्रतिपादकानां मन्त्रार्थवादानां तत्परत्वं संभवति, नेति। किं मन्त्रार्थवादानामनुष्ठेयार्थप्रकाशन-स्तुतिपरत्वाभ्यां प्रतीयमानविग्रहपरत्वाविवक्षा शक्याभिधाना, नेति। किं विग्रहवत्त्वमनुष्ठेयार्थप्रकाशन-स्तुत्युपयोगि, नेति। अत्र देवताधिकरणपूर्वपक्षमुक्त्वा प्रतिक्षिपति—शब्दात्मेति। चतुर्थ्यन्तः शब्द एव देवता; अथवा लौकिकाग्न्यादिरर्थ एव; यद्वा अर्थोपश्लिष्टशब्दो देवता। अतस्तस्या ब्रह्मोपासनं न संभवतीति। अनार्षम्=अवैदिकमित्यर्थः। देवताया अभावे सति देवतायाः फलप्रदत्वमेव न स्यात्। तथाच, 'स एनं प्रीतः प्रीणाति' इति श्रुतायाः देवतायाः प्रीतेः परिहरणं=परित्यागः स्यात्। अश्रुतस्य अपूर्वस्य कल्प्यस्य वाच्यस्य वा मतभेदेन परिकल्पनं भवेत्। तच्चायुक्तमेव; श्रुतहानाश्रुतकल्पनयोरत्यन्तजघन्यत्वात्। नन्वेवं सति

२०. ब्रह्मोपासनं देवताधिकारिकं न भवतीति शंका किं तादृशदेवतास्वेव मानाभावात्, उत स्थितानामप्यधिकाराभावात्। आद्येऽपि किं वेदतस्तासां स्वरसप्रतीत्यभावात्, प्रतीतावपि युक्त्या वेदस्याऽन्यपर्यस्थापनादिति विकल्पमभिप्रेत्य, स्वरसप्रतीतिर्नास्तीति पक्षं निषेधति शब्देति। सर्वथा देवतानंगीकारे देवतोद्देश्यकद्रव्यत्यागरूपयागादिदेव न संपद्येतेति शंकायां किञ्चिद्रूपेण तत्तत्रा मीमांसकेष्टेत्याह। तत्र श्रूयमाणोऽग्न्यादिशब्द एव देवता अर्थादर्शनादिति पक्षेण शब्दात्मेत्युक्तम्। अत एव विधिवाक्यश्रुतस्यैव शब्दस्यानुष्ठानकाले उपयोग इष्यते, अग्नये इदं न मम, अग्नये स्वाहा इत्येवम्। न तु पर्यायपावकादिपदप्रयोगः। ननु अग्निना दहति पचतीत्यादिदर्शनात् शब्दान्यस्य उष्णस्पर्शवद्द्रव्यस्यार्थस्य प्रतीयमानतया अर्थाभावो दुर्वच इत्यत्राह लौकिकार्थाकृतिरिति। लोकदृष्टो योऽर्थसंनिवेशः, तद्वती। न तु तदन्य-करचरणाद्याकृतिमती। तदन्तः कश्चिच्चेतनोऽस्ति न वेति चेत्-करचरणादौ सति तस्याऽऽवश्यकता। न चेत्, किं तेन। अस्तु वा कश्चित्; अथापि किम्। अनुष्ठानकाले पर्यायशब्दाप्रयोगस्तु, विशेषविधिबलात् भवतु। यद्वा वाच्यार्थसत्त्वे लौकिकार्थविशिष्टतच्छब्दात्मा भवतु देवता। यत्रैवमर्थप्रसिद्धिर्लौकिकी नास्ति, तत्र केवलशब्दात्मा भवतु। लौकिकार्थात्मैव वेति तदाशयः। सर्वथा तस्याः देवतायाः न ब्रह्मोपास्ता। ब्रह्मोपासनं तत्कर्तृकं न भवति अचेतनत्वादिति। इदं निरस्यति इत्यनार्षमिति। ऋषिः=वेदः। अनार्षं=वेदविरुद्धम्। 'वायुर्वै क्षेपिष्ठा देवता इत्यादिना क्षेपिष्ठत्वाद्यवगमेन शब्दत्वायोगात्। 'प्रीतः प्रीणाति' इत्यादितश्चेतनत्वावगमेन लौकिकार्थमात्रत्वायोगाच्च। न चानेकशक्तिकल्पनागौरवम्, लौकिकार्थमुखेनैव तद्देवतोक्तिसंभवात्। लोके लौकिकमात्रे प्रयोगस्तु विशेष्यादर्शनात् लोककार्ये तदनुपयोगाच्च। एवं वदता त्वया वेदप्रामाण्यस्वीकारात् वेदोपेक्षणायोगात् वेदस्य कश्चिदर्थो वक्तव्यः। तदा च क्षेपिष्ठा, प्रीत इत्यादीनां श्रुतपरिहरणम् अश्रुतकल्पनमिति दोषौ च भवतः। अथवा

शास्त्रयोन्यधिकरणे निरस्तमीश्वरानुमानम्; तत् कथमत्र देवता(ईश्वरा ?)ङ्गीकारः; ईश्वरस्यापि देवतान्तर्भावादित्याशङ्क्य परिहरति—विश्वस्रष्टेति। तत्रेश्वरस्यानुमानिकत्वं निरस्यतेऽस्माभिः; न पुनरागमिकत्वम्, तेन प्राक् शास्त्रयोन्यधिकरणे निर्बाधैस्तात्पर्यशालिभिः शास्त्रैः स्थापितः परमपुरुषः तेनापि सर्वशक्तिनाऽपलपितुमशक्यः। तेनाऽऽगमिकेश्वरवादिनामस्माकं न कोऽपि दोष इति ॥११८॥

**(११९) सामर्थ्यं देवतानामुचितमनुमतामर्थिता तापभाजां**
**सम्पद्येतेति तासामपि भवति परोवास्तिवर्गाधिकारः।**
**ख्यातं मन्त्रार्थवादस्मृतिषु निखिलं बाधदोषाद्यभावे**
**मिथ्येत्युद्घोषयन्तः स्वत इह कथितां मानतां प्र(वि)सरन्ति ॥ २१ ॥**

देवतानामस्वीकारे कर्मणां फलजननायापूर्वद्वारकत्वमुच्यते, तत्र गुरुमतेन लिङ्वाच्यतया अपूर्वकल्पने, भाट्टमतेन तत्कल्पनमात्रे च श्रुत–देवताप्रीत्याद्यर्थपरिहारः, अश्रुतापूर्वकल्पना चेति दोषौ चेति। यद्वा **अनार्ष**मित्यस्य ऋष्यसंमतम्, **जैमिनेः** सूत्रकृतोऽनिष्टमित्यर्थः। अत्र पक्षे **नब्रह्मोपास्त्येतत्**, **श्रुतपरिहरणम्**, **अश्रुतकल्पनश्चेति** त्रयमप्यनार्षं जैमिन्यसंमतमित्यर्थः। अत एवोत्तराधिकरणपूर्वपक्षे जैमिनिनिर्देशः, न त्वत्र।

देवता इवेश्वरमपि स्थापयति **विश्वेति**। नन्वस्योत्तरार्धस्य कथमुत्थितिः, ईश्वरमंगीकृत्य तदुपासनस्यैव विचार्यमाणत्वात् अत्र तस्यास्थापनीयत्वात्। **चिन्तामण्यादिदृष्टावतरणाशयोऽपि चिन्तनीयः।** अश्रुतकल्पननिषेध एव ह्यत्र क्रियते। अनुमाननिरासवत् शास्त्रतः स्थापनमपि हि शास्त्रयोन्यधिकरणे कृतम्। "विश्वसृष्टिं देवतामनुमिनुमः" इति मीमांसकोऽपि नाऽऽह, तेनापीश्वरानुमानदूषणादिति चेत्–उच्यते। मीमांसकैर्देवानामीश्वरस्य च निरासः कृतः। तत्र देवतानिरासं न्यषेधीत्। ईश्वरनिरासोऽपि अनुमान निरासेन, वेदस्याऽऽन्यपर्यकल्पनया च द्वेधा तैः क्रियते। तत्र प्रथमरीतिरिष्टा; न तु द्वितीयेत्याहेत्य वतारणीयम्। अथवा ननु. 'ब्रह्मोपासनं न देवताकर्तृकम्' इति मीमांसको न शंकितुमर्हति। तेन ब्रह्मण एवास्वीकारात् आश्रयासिद्धेः। शास्त्रबलात् स्वीकारे च देवताऽपि स्वीकृतेति पूर्वपक्षीष्टसाध्यबाधः इति शंकायामधिकरणप्रवृत्तिं निर्वहति **विश्वेति**। कर्ममीमांसाकृतं देवतानिषेधं, संप्रति शारीरके शास्त्रयोनित्वाधिकरणे अयोगव्यवच्छेदपादे च कृतं शास्त्रतो ब्रह्मस्थापनश्चोभयं स्वीकृतवान् यः, सोऽत्र पूर्वपक्षी। मीमांसकैः सर्वनिषेधेऽपि अनुमानस्येश्वरासाधकत्वं तदुक्तं स्वीकृत्य शास्त्रेण तं स्थापितवन्तः स्मः। पुनस्तद् भावशंका तद्विभुतुल्यशक्तिनाऽपि न कर्तुं शक्यते इति ब्रह्मोपासनं सिद्धम्। देवतानिषेधस्तु एतावता न दूषितः। ततस्तावन्मात्रमिष्ट्वा देवाधिकाराभावमाशंकतेऽत्र। तत ईश्वरवत् देवतानामपि श्रुतिबलात् स्थापनमिह क्रियते—मा भूदनुमितिविषयः; तावता नाश्रयासिद्धिः; स्थापितो हि **प्राक्** शास्त्रयो नित्वाधिकरणादिभिर्बहुभिरधिकरणैरिति। **निर्बाधैरिति**। नेश्वरस्य बाधः प्रत्यक्षरूपः, योग्यानुपलब्ध्य-भावात्। अनुमानादिनाऽपि न बाधः—प्रतियोग्यप्रसिद्धेः। साधनमिव बाधनमपि युक्त्या न शक्यं तद्विषये। प्रतीतार्थस्य बाधाभावे स्वतस्तत्सिद्धिरिति। चिन्तामणितात्पर्यमप्यत्राऽऽनेयम् ॥ ११८ ॥

२१. अथ देवताविग्रहादेः स्वरसप्रतीतत्वेऽपि तासां ब्रह्मविद्यायामधिकारो नास्तीति वा

अर्थित्वसामर्थ्ययोः सद्भावात् देवतानामुक्तमेदाधिकारं विशेषेण स्थापयति—सामर्थ्यमिति। अर्थी, समर्थः, विद्वान्, शास्त्रेणापर्युदस्तः इति चतुर्विधेनाधिकार उच्यते। अथवाऽर्थित्वं सामर्थ्यं चेति द्विधैवाधिकारः। सामर्थ्यं पुनस्त्रिधा, जन्मसामर्थ्यं कर्मसामर्थ्यं बुद्धिसामर्थ्यं चेति। तदेतत् सर्वमपि देवतानामस्तीत्युच्यते—उचिततनुभृतामिति। शरीरसंबन्धस्य प्रमाणप्रतिपन्नत्वात् बुद्धिसामर्थ्यं कर्मसामर्थ्यं चास्त्येव। दृश्यते हि क्वचिज्जन्मान्तरानुस्मरणात् बुद्धिसामर्थ्यम्, क्वचिदुपदेशाच्च। श्रूयते हि इन्द्रादीनां ब्रह्मविद्योपदेशः। जन्मसामर्थ्यं सत्त्वोत्पत्तिशरीरपरिग्रहादेव। अर्थित्वं तु तापत्रयाभिहतत्वादेव सम्पद्यते। इति तासामपि देवतानां भगवदुपासनवर्गाधिकारो भवत्येव। अत्र निरीश्वरमीमांसकाः प्रत्यवतिष्ठन्ते—देहादीनामनुपलम्भात् देवादीनां ब्रह्मविद्यायामधिकारो नास्तीति। तत् प्रतिक्षिपति—ख्यातमिति। यत् प्रमाणान्तरेणानुपलब्धम्, तदेव हि प्रख्याप्यते वेदेनेति तान्त्रिकमर्यादा। तथाच प्रमाणान्तराप्रतिपन्नार्थप्रत्यायकमन्त्रार्थवादप्रमितं सकलमपि देवताविग्रहादिकं कारणदोष-बाधकप्रत्ययाभावे सति तथ्यमित्यङ्गीकरणीयम्। ये पुनस्तन्मिथ्येत्युद्घोषयन्ति निरीश्वरमीमांसकाः, ते तु स्वोक्तमेव वेदस्य स्वतःप्रामाण्यं विस्मरन्ति। स्वत एव प्रामाण्यम्, परतः पुनरप्रामाण्यम् इति हि मीमांसकानां मर्यादा। परं पुनः कारणदोषादिकं तत्र नास्तीत्यर्थः ॥ ११९ ॥

---

प्रतीतार्थस्याप्यान्यपर्यात् परित्याग इति वा वक्तुं न शक्यत इत्याह **सामर्थ्यमिति**। **अधिकारो** हि अर्थित्वं सामर्थ्यञ्च। **अर्थित्वं** फलापेक्षा। **सामर्थ्यञ्च** उपायविषयकज्ञानमनुष्ठानशक्तिः शास्त्रानुमतत्वञ्चेति त्रिविधम्। "अर्थित्वेन समर्थता त्रिकतनुः संपिण्डिताऽधिक्रिया" इति हि **रहस्यत्रयसारे**। तत्र सामर्थ्यं संभवेत देवतानाम्; नरेभ्योऽप्यतिशयितपविज्ञानानुष्ठानक्षमदेहभृत्त्वात्। अर्थित्वमपि तथा; आध्यात्मिकाधिदैविकाधिभौतिकतापत्रयाभिहतत्वेन संसाररूपानिष्टनिवृत्तेः निरतिशयानन्दरूपब्रह्मप्राप्तेश्च नरवदपेक्षितत्वात्। **इति**=अतः परमात्मविषयकोपासनाप्रकारसमुदायान्तर्गते तत्रतत्र **तासां** देवतानामधिकारोऽस्त्येव। यत्तु आन्यपर्यात् विग्रहादिबाध इति, तत्र; 'वज्रहस्तः पुरन्दरः, तेनेन्द्रो वज्रमुदयच्छत्' इत्यादिषु कर्मविधायकवाक्यान्वितेषु मन्त्रार्थवादेषु, 'इन्द्रो ह वै देवानामभिप्रवव्राज' इत्यादिष्वौपनिषदाख्यानेषु तथा इतिहासपुराणेषु **ख्यातं** स्पष्टोक्तं तत्तद्देवताविग्रहायुधभूषणविभवादिकं निखिलं मिथ्या; तेषां कर्मानुष्ठानप्रोत्साहनार्थप्रशंसामात्रतया तत्र तात्पर्यस्यानावश्यकत्वात् इत्युद्घोषयन्तः मीमांसकाः यदि तेषामंशानां बाधितत्वं वा तत्प्रतिपादकवाक्यानां दोषमूलकत्वं वा भ्रान्तपुरुषोक्त्यनुवादरूपत्वं वा स्थापयन्तस्तथा ब्रूयु, काममिष्येत। बाधादिरूपदोषस्यान्यस्य चाभावेऽप्युद्घोषयन्तस्तु **इह** वेदे तज्जन्यज्ञाने वा स्वकथितां **स्वतोमानतां** स्वतःप्रामाण्यं **प्रस्मरन्ति** विस्मरन्ति। अतस्ते उपेक्ष्याः। कथितं हि तैः, "तस्मात् बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता। अर्थान्यथात्व-हेतूत्थ-दोषज्ञानादपोद्यते" इति, "यस्मात् स्वतःप्रमाणत्वं सर्वत्रौत्सर्गिकं स्थितम्। बाध-कारणदुष्टत्वबोधाभ्यां तदपोद्यते" इति च। उपलम्भायोग्येन्द्रतद्गुणविग्रहादिविषये बाधस्य दुर्वचत्वात्, वेदस्य च सर्वस्य निर्दुष्टत्वात् तन्मूलज्ञानहेतौ च सामग्र्यां दोषप्रवेशाभावात् तत्तदंशेऽपि प्रामाण्यं स्थितमेव। न च तत्र तात्पर्याभावः; तत्रैव मानाभावात्। अविद्यमानकथनेनापि प्ररोचना जायते इति चेत्-विद्यमानकथनेन

(१२०) द्वेधा वृत्तिः स्तुतौ स्यात् स्वपरगुणमुखी ; प्राक्तनी तावदर्थ्या ;
निर्धार्यः पश्चिमायामपि निपुणधिया मुख्यधर्मैकदेशः ।
रुच्यर्थायां च तस्यामनृतकथनतो रोचना न ह्यमुग्धे
भूतार्थे का स्तुतिः स्यादिति मुनिगदितं गौणतादेर्निवृत्त्यै ॥ २२ ॥

अत्र कश्चिदाह—अर्थवादादेः स्तुतिपरत्वमुच्यते तान्त्रिकैः, अर्थपारमार्थ्ये स्तुतित्वं बाध्यत इति। इमामाशङ्कां परिहरति–द्वेधा वृत्तिरिति। गुणेन गुणिनः सम्बन्धाभिधानं हि स्तोत्रम्। तत् द्विविधं मुख्यमौपचारिकं चेति। मुख्यं तावत् यथार्थम्—'अपहतपाप्मा विजरः' इत्यादिकम्। औपचारिकं तु राजादिविषयम्, 'त्वमिन्द्रश्चन्द्रः' इत्यादिकम्। तत्रापि तत्तदिन्द्रचन्द्रादिगुणसम्बन्धकथनं परमार्थविषयमेव, तदेतत् सर्वमत्र पूर्वार्धेनोक्तम्। तथाहि–स्तुतौ द्वैधा वृत्तिः ; स्वगुणमुखी काचित् परगुणमुखी चान्या। तत्र प्राक्तनी तावत् अर्थ्या–अर्थादनपेता। पश्चिमायामपि स्तुतौ मुख्यधर्मैकदेशो निपुणधीभिरनुमन्तव्यः॥ ननु बालोपच्छन्दनार्थमनृतमपि कथ्यते; तच्चौषधादिस्तुतिरूपम्। तन्मिथ्यैव। अतः स्तुतिमिथ्यात्वं दृष्टमेवेत्याशङ्क्याह—रुच्यर्थायामिति। अयमर्थः—यत्र रुच्यर्थमप्यनृतमुच्यते, तत्रापि श्रोता न मुग्धश्चेत्, अनृतकथनतः प्ररोचना नैव सिध्यति। मुग्धश्चेत्, परमार्थविषयत्वप्रतिपत्त्यैव तद्वाक्यं तस्मै रोचते। अतोऽर्थपारमार्थ्यं स्तुत्युपयुक्तमेव। ननु, 'भूतार्थे का स्तुतिः

---

प्ररोचना न जायते इत्यस्याभावेन स्वतःप्रामाण्यत्यागायोगात्। अविद्यमानत्वेन ज्ञाने प्ररोचनाभंगाच्च। विधिबलादेव प्रवर्तेत इति चेत्—अर्थवाद एव तर्हि व्यर्थः स्यात् ॥ ११९ ॥

२२. ननु वाच्यार्थं विसृज्य प्रशस्तमिदमिति सामान्येन लक्ष्यार्थं परिकल्प्य तन्मुखेन प्ररोचना क्रियत इति चेत्—तथालक्षणानियामको हि शक्यार्थ एव। तद्विसृष्टौ च न किञ्चित् कारणम्। वाच्यार्थज्ञानादेव प्ररोचनोपपत्तौ प्रशंसारूपार्थान्तरलक्षणायां प्रमाणञ्च नास्ति। परंत्वत्र किञ्चिद्वक्तव्यमस्तीत्याह **द्वेधेति**। अर्थवादादिरूपाणां वाक्यानां **स्तुतौ वृत्तिः**=स्तुतिबोधकत्वं द्वेधा भवति। एका **स्वस्य** स्तोतव्यस्य यो वास्तवो गुणादिः **तन्मुखी** तद्बोधनद्वारिकैव। अन्या परगुणमुखी, स्वापेक्षयोत्कृष्टवस्तुगतगुणाद्यारोपमुखी च। तत्र प्रथमा वृत्तिः **अर्थ्या** अर्थादनपेता, यथावस्थितवाच्यार्थवती ; प्रथमतया सर्वैरपेक्षणीया च। **पश्चिमायां** द्वितीयायां वृत्तावपि न सर्वथैवासंबद्धकथनम् ; किंतु **निपुणधिया मुख्यधर्मस्य** वाच्यार्थगुणादेः **एकदेशः** अंशमात्रं वा स्वस्मिन् स्तोतव्ये वस्तुनि पराभिमतो निर्धार्यः। अल्पं स्थितं बहूक्रियते। तत्र वाच्यार्थान्वयबाधात् लक्षणा कार्या। तदुक्तं **भाष्ये**, 'विरुद्धत्वे तु तद्वाचिभिः शब्दैरविरुद्धान् गुणान् लक्षयित्वा (प्ररोचनं वस्तुप्रकाशनञ्च) कुर्वन्ति'' इति। तस्य लक्ष्यार्थस्य वस्तुतस्तद्गुणत्वादेव तज्ज्ञानात् विवेकिनः प्रवृत्तिर्जायते। अन्यथा **तस्यां** स्तुतिप्रवृत्तौ **रुच्यर्थायां** पुरुषप्रवृत्त्युपयोगीच्छोत्पादनार्थायाम्=रुच्यर्थत्वात् **अनृतकथनतः** बाधितार्थविषयकत्वे सति **प्ररोचना** रुच्युत्पादनं न भवति हि॥ भवति बालोपच्छन्दने इति चेत्–अमुग्धे न भवति। मुग्धे बालतुल्ये तु स्यात्। सोऽपि बालोऽनृतं वदतीति जानाति चेत्—न रोचयते। त्वया च मीमांसकेन सर्वमनृतमित्यावेदितमिति कथं प्रबुद्धः कर्मविचारको रोचयेत्। अतो गुणः कियानप्यस्तीति उक्तं सत्यं बुद्धवत

स्यात्' इति मुनिभिरुक्तम्; कविभिरपि, "भूतार्थव्याहृतिः सा हि न स्तुतिः परमेष्ठिनः" इति। ततः स्तुतेः पारमार्थ्यं नास्तीत्युच्यते॥ तन्न; औपचारिकनिवृत्त्यर्थत्वात् तद्वाक्यस्य। न पुनः सर्वथा पारमार्थ्यं निषिध्यते स्तुतीनाम्। परमेष्ठिनः स्तुतिस्त्वौपचारिकस्तुतिर्न भवति, अपि तु तात्त्विकीत्यर्थः॥१२०॥

(१२१) नानादेहाप्तिशक्ताः कथमिव(ह) युगपत्कर्मसंनिध्यनर्हाः
तत्तद्वृत्तान्तसत्त्वे श्रुतिषु भवति नानित्ययोगः, प्रवाहात्।
काण्डादौ कर्तृवादः प्रवचननियतो वेदनित्यत्वसिद्धेः
ईशः प्राचीनकल्पक्रमत उपदिशेत् वर्णसर्गेऽपि वेदान्॥ २३॥

अत्र, 'विग्रहो हविरादानम्' इत्यादिना विग्रहादिपञ्चकनिरासेन देवतानामधिकारो ब्रह्मविद्यायां नास्तीति प्रलापं प्रत्याचष्टे—नानेति। नानादेहपरिग्रहसमर्था देवादय इति श्रुतिपुराणादिषु प्रसिद्धमेव। तेन तादृशशक्तियुक्तानां देवतानां युगपत्कर्मसन्निधिः कथमिव न संयोयुज्यते। ननु सविग्रहाणां देवतानां तद्व्यापाराणां च प्रतिपादने तासामनित्यत्वात् श्रुतीनां नित्यत्वात् नित्यानित्यसंयोगदोषः प्रसज्येतेत्याशङ्क्य परिहरति–तत्तदिति। तत्र हेतुमाह—प्रवाहादिति। अनित्येष्वपि देवताविग्रहेषु, तत्तद्वृत्तान्तेषु तादृग्विधेषु, अनित्यसंयोगदोषो नास्ति श्रुतीनाम्; इन्द्रादिप्रवाहस्य

एव प्रवृत्तिरिति। ननु असद्गुणकथनमेव स्तुतिः। अत एव ईश्वरवर्णनस्यास्तुतित्वम्, 'भूतार्थे कतमा स्तुतिः', "भूतार्थव्याहृतिः सा हि न स्तुतिः परमेष्ठिनः" इति चोच्यते। तत्राऽऽह भूतेति। भूतार्थः यथाभूतोऽर्थः; वास्तवोऽर्थः। मुनिभाषितं तु,वास्तवार्थव्याहृतिरूपस्तुतिरेव भवति भगवति वर्ण्यमाने; न स्तुतिः-गुणारोप इत्यर्थकम्; यथा प्राकृतेषु जनेषु गुणशून्येषु स्तूयमानेषु वस्तुसद्गुणाभावात् गौणार्थकल्पना, अविद्यमानारोपो वा–न तथा परमात्मनि; किंतु स्थितस्यैवोक्तिरित्याशयेन प्रवृत्तम्। विद्यमानगुणकथनं स्तुतिर्न भवतीत्यर्थे तस्य न तात्पर्यं भवति। मीमांसका अपि गुणिनिष्ठगुणाभिधानं स्तोत्रमित्येव लक्षयन्ति; न तु अगुणे गुणारोपः स्तुतिरिति। वास्तवगुणकथनस्थलेऽपि स्तुतित्वसमन्वयस्येष्टत्वात्। लौकिकार्थरूपाग्नेर्दाहशक्तिमादाय केनचित् स्तुतौ कृतायाम्, नेयं स्तुतिः; सेचनगुणस्य जलगतस्यात्राऽऽरोप एव स्तुतिरिति को नु ब्रूयात्॥१२०

२३. एवं संभवादिति सौत्रांशो विवृतः। अथ विरोध इत्यादिसूत्रचतुष्टयार्थं संगृह्णाति नानेति श्लोकेन। एकैकशंकापरिहार एकैकपादेन। देवानां विग्रहस्वीकारे हविरादानं, युगपत् कर्मसंनिधिः, भोजनात् प्रीतिः, फलप्रदानमितीदमपि स्वीकार्यम्। हविरादानं हि कर्मानुष्ठानस्थले संनिधानात्। अत एव, 'इन्द्रमावह', 'इन्द्र आगच्छ' इत्यादिश्रवणमुपपन्नमिति वक्तव्यम्। कथं नु विशाले भारते युगपत् बहुषु स्थलेषु एकस्मिन् विहितकाले यजमानेषु ऐन्द्रयागानुष्ठायिषु सत्सु आहूतस्येन्द्रस्य युगपत्संनिधिः संभवति। तदभावे तु किं तेन विग्रहेण। अतः, 'इन्द्र आगच्छ' इत्यादेः इन्द्रादिशब्दसांनिध्यपरत्वमेव वाच्यम्। अत एव शब्द एव देवतेति ब्रूमः इति चेत्––तन्न––सौभर्यादिमहर्षिभ्योऽप्यतिशयितशक्तयः इन्द्रादयो देवाः अनेकदेहपरिग्रहसामर्थ्ये सति कथं युगपदेव सर्वकर्मस्थलसंनिधानाशक्ता भवेयुः। अतो नानुष्ठानविरोधः। नन्वनुष्ठानविरोधो मा भूत्; इन्द्रादेः सदेहत्वे वैदिकशब्दविरोधः स्यात्, "ब्रह्मविष्णुरुद्रेन्द्राः संप्रसूयन्ते" इत्यादिना इन्द्रादीनामुत्पत्तेः स्वीकार्यतया नित्ये वेदे स्थिताः इन्द्रादिशब्दाः तेषामुत्पत्तेः

नित्यत्वात् ॥ नहि श्रुतीनां नित्यत्वमुच्यते भवद्भिः, तन्नोपपद्यते। काठकं विश्वामित्रस्य सूक्तमित्यादिषु सकर्तृकत्वं प्रतीयते ॥ नेत्याह—काण्डादाविति। श्रुतिषु केषांचित् कर्तृत्ववादः प्रवचनादेव । न पुनः साक्षात् कर्तृत्वेन। तत् कथमिति चेत्, तत्र हेतुमाह–वेदेति। वेदनित्यत्वस्य प्रमाणप्रतिपन्नत्वादित्यर्थः। अस्तु मध्ये जातानां वेदप्रवर्तकानां प्रवर्तकत्वमेव व्यासविश्वामित्रादीनाम् । आदिकल्पे भगवानेव वेदं विविधं करोतीति. 'तस्य ह वा एतस्य महतो भूतस्य निश्वसितमेतत्' इत्यादिभिः श्रुतिभिः प्रतिपन्नमित्याशङ्क्य परिहरति—ईश इति । 'धाता यथापूर्वमकल्पयत्' इति भगवतोऽपि पूर्वकल्पक्रमेण प्रवर्तकत्वमभिधीयते। यद्यपि वेदो भगवच्छासनम्, तथापि भगवतो नित्यमेकरूपेण वाक्येन प्रशासितृत्वान्नित्यत्वं नापभ्रंशयतीति भगवच्छासनत्ववादः । अत्र वर्णसर्गेऽपीति वर्णानित्यत्वमङ्गीक्रियते तेन वर्णनित्यत्ववादिभ्यो निरीश्वरमीमांसकेभ्यो भेदः सिध्यति ॥ १२१ ॥

---

प्राक् अर्थशून्याः स्युः । तेषां नाशादूर्ध्वमप्येवम् । एवञ्चेन्द्रोत्पत्तेः प्राक्, 'इन्द्रो वज्रमुदयच्छत्' इत्यस्यार्थो बाधितः स्यात्। तस्य वेदभागस्येन्द्रोत्पत्त्यनन्तरकालिकत्वे वेदस्यानादित्वनिर्दोषत्वे भज्येयाताम्। कालत्रयवर्तिना वेदेन इन्द्रादेर्भूततया वा भवत्तया वा भविष्यत्तया वा निर्देशोऽशक्य एव । अतः तत्तद्वृत्तान्तस्य सत्त्वे=अबाधितत्वे, वास्तवत्वे श्रुतिषु अनित्यार्थयोगरूप एष दोषो भवतीति चेन्न— प्रवाहात् । इन्द्रादीनामेकैकव्यक्तित्वाभावात्; प्रवाहतः पारम्पर्येण स्थितत्वात्। यथा हि व्रीहियवाद्यनन्ता नित्यार्थबोधकत्वेऽपि न वेदस्यानित्यसंयोगः, तेषां प्रवाहनित्यत्वात्, तथेन्द्रादीनामपि प्रवाहनित्यत्वम् । तत्तत्स्थाने तत्तदपगमे तन्नामानोऽन्ये समायान्तीति । एकेन्द्रनाशे च ब्रह्मा स्वाराज्यनिर्वाहाय वेदगत मिन्द्रप्रतिपादकघट्टमनुसंधाय तथाभावयोग्यं जीवं कर्मिणमन्विष्य तथारूपमवसरे सृजति, स्थापयति चेति। तदुक्तम् अतः प्रभवादिति। अथ सन्तु देवाः प्रवाहनित्याः; एवमपि वेदार्थस्य यथावत्स्वीकारे, वेदानित्यत्वमेव स्यात् । यद्यपि वसिष्ठविश्वामित्रादीनामृषीणां कथनमपीन्द्रादिवत् तेषामपि प्रवाहनित्यत्वेनोपपन्नम्, तथापि तेषां वेदभागरूपकाण्ड-सूक्त-मन्त्रादिकर्तृत्वेन तत्रतत्र निर्देशात् तद्याथार्थ्यात् वेदानित्यत्वमापतेदिति चेत्-अत एव च नित्यत्वम्। ऋषीणां प्रवाहनित्यत्वात् सर्वेषां विश्वामित्राणामेकस्मिन् काण्डादौ कर्तृवादः कर्तृत्वेन कथनम् मुख्यार्थत्यागेन प्रवचननियतः प्रवचनकर्तृत्वनिबन्धनः, न तु तत्कर्तृत्वनिबन्धनः; अनेकेषां भिन्नकालिकानामेकविषये कर्तृत्वायोगात् । काण्डानां भिन्नत्वं तु न। कुत इति चेत्—वेदनित्यत्वसिद्धेः वेदानां नित्यत्वस्य प्रमाणसिद्धत्वात्। तेषामृषीणामाविर्भावात् प्रागपि वेदानां कृत्स्नानां, 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इति भगवता सर्गादौ ब्रह्मणे प्रेषितत्वावगमात् । एवं स्वरूपवाक्यगौणार्थकत्वेऽपि देवादिप्रतिपादकसर्वभागबाधायोगात् सर्वसिद्धिः । अत एव, 'वेदस्य वाच्यार्थहीनतया पुराणादिकमापातवेदार्थमूलत्वादप्रमाणम्' इत्यपि प्रत्युक्तम्। वाच्यार्थहीनतायाः निराकृतत्वात् । नन्वेवमुक्तावपि वेदनित्यत्वं न सेत्स्यति; वेदान्तिभिर्महाप्रलयस्य स्वीकारात् प्रलयकाले च वर्णानां नाशध्रौव्यादिति चेत्—तथापि नित्यत्वमेवेत्याह ईश इति । महाप्रलयानन्तरे कल्पे, महाप्रलयो यस्य कल्पस्य, तस्मिन् प्राचीने कल्पे स्थितानेव वेदान् पुनस्तेनैव क्रमेण=आनुपूर्व्या उपदिशेदीशः; प्रहिणोतीत्युक्तेः। एवञ्च वर्णानां सृज्यत्वेऽपि वेदानुपूर्व्या एकरूपत्वमात्रेण नित्यत्वोक्ति

(१२२) वेदानामीशबुद्धया क्रमनियमहतिः कल्पभेदे यदीष्टा,
मन्त्रांशानां तथा स्यात्; न खलु तदुचितं व्रीहिसोमादिसाम्यात् ।
इत्थं विध्यर्थवादक्रम इति नियते(मे) पाक्षिके वा तथात्वे
पक्षोऽसावाक्षपादः परमतपरिषत्कोटिपाटीकृतां नः ॥ २४ ॥

अत्र न्यायवादिनां पक्षमनूद्य निराकरोति—वेदानामिति । 'प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते' इत्युक्तत्वात् वेदानामीश्वरबुद्धया क्रमनियमहतिः, तेषु कल्पेष्वन्यथा भवतीति, यदीष्टा—यज्ञादिषु प्रयुज्यमानानां मन्त्राणामपि तथैवान्यथाकरणं स्यात् । अस्त्वन्यथाकरणमित्याशङ्क्य प्रतिक्षिपति—नेति । तत्र हेतुमाह—व्रीहीति । अयमर्थः—लोके कार्यकारणभावो नियत एव दृश्यते—यथा कपालेन घटः, तन्तुना पट इति । न हि कल्पभेदेन, तन्तुभ्यो घटो जायते पटो वा कपालेभ्य इति परिकल्प्यते न्यायवादिभिः। एवं वैदिकेऽप्युदाहरणे, 'व्रीहिभिर्यजेत, सोमेन यजेत' इत्यादौ(दिषु) सर्वेष्वपि कल्पेषु व्रीहिसोमयोरेव तत्रतत्र कारणत्वेनोपादानमुच्यते, न पुनरन्ययोः कोद्रवदुरालभयोः। एवं सर्वेष्वपि कल्पेषु तत्तत्कार्यहेतुभूतानां मन्त्राणामन्यथाकरणं न संघटत एव। तथा च वेदनित्यत्वसिद्धिः [इति?] ॥ तर्ह्यस्तु मन्त्राणां क्रमनियमः आवश्यकत्वात्, माऽस्तु विध्यर्थ-

रिति न दोषः । कल्पानामेकरूपत्वञ्च श्रुतिसिद्धम् ॥ १२१ ॥

२४. तार्किकास्तु-वेदानां सृष्ट्यादौ ईश्वरप्रणीततया आप्तप्रामाण्यात् प्रामाण्यम् । महर्ष्यादि-जीवकर्तृकत्वं त्वयुक्तम्; "तदन्यस्मिन् अनाश्वासात्" इति पौरुषेयत्वमिच्छन्ति । तैरपि, इन्द्रो वज्रमुद्-यच्छदित्यादीनां कथं सृष्ट्यारम्भे वेदे स्थितिरित्याशंकायाम् इन्द्रादीनामाकृतिनित्यत्वेन प्रवाहनित्यतयैव परिहारः कार्यः। अत ईश्वरकर्तृकत्वकल्पनं व्यर्थम् । न चाऽऽप्तगुणाभावे कथं प्रामाण्यमिति शंक्यम्; स्वतः प्रामाण्यात् । आप्तगुणस्य तत्र प्रामाण्यं प्रति अनपेक्षायाः अन्यत्र प्रपञ्चितत्वात् । न च, "प्रतिमन्वन्तरञ्चैषा श्रुतिरन्या विधीयते" इति मन्वन्तरभेदेन श्रुतिभेदस्योक्ततया कल्पभेदेन श्रुतिर्विभिन्ना क्रियत इत्येव प्रामाणिकमिति शंक्यम्—सत्तर्कानुकूलतया तस्य वाक्यस्यार्थान्तरपरत्वादिति तर्कमेव प्रदर्श्य तार्किक-पक्षं क्षिपति **वेदानामिति**। "बुद्धिपूर्वा वाक्यकृतिर्वेदे" (वै. द.) इति ईश्वरबुद्धिकृतो वेदः प्रतिकल्पम्। तत्र वाक्यानुपूर्व्यां क्रमनियमः एकरीतिकत्वं न भवति । अन्यान्यानुपूर्वीकवाक्यतोऽप्येकरूपार्थस्य तदातनबुद्ध्यनुरोधेन प्रदर्शनसंभवात् । अत एव हि, 'अन्या विधीयते' इति अन्यस्य निर्मीयमाण-त्वोक्तिर्घटते इति यदीष्टम्— तर्हि वेदानां मन्त्रब्राह्मणोभयात्मकत्वात् तद्घटकानां मन्त्राणामानु पूर्वीषु भेदापत्तिः । एवञ्च क्रमनियमहतिस्तेषां **तथा**=इष्टा स्यादिति । ननिष्टापत्तिरेवेति चेत्—तत्राह न **खल्विति** । **व्रीहीति** । व्रीहिभिर्यजेत, सोमेन यजेत, ऐन्द्रं पयः, दध्ना जुहोति इत्येवं स्वर्गादिकं प्रति यागादेरिव यागादिकं प्रति व्रीह्यादेः कारणत्वं कथितम् । कारणे कार्यव्या-पकताया आवश्यकत्वात् तत्तद्यागजातीयं सर्वं व्रीह्यादितुल्यैकसाध्यमिति स्वीकार्यम् । तद्वदेव यागाद्यंगतया विहितानां याज्यामन्त्रादीनामपि तत्तज्जातीयसर्वकर्मकारणत्वात् तत्र एककल्पीयमन्त्रा-नुपूर्व्यपेक्ष्या कल्पान्तरीयतद्यागमन्त्रे अनुपूर्वीभेदे मन्त्रस्य व्यापकत्वभंगात् कारणाभावात् यागानिष्पत्तिः

वादयोरिति चेत्, तत्रोत्तरमाह—इत्थमिति । अयमर्थः—मन्त्राणामिव विध्यर्थवादयोरपि तेषुतेषु ज्ञानेषु कारणत्वमस्त्येव । तत्र यथा स्वं(स्वरूप?) नियममन्तरेण न कारणत्वम्, एवं क्रमनियममन्तरेण न कारणत्वमिति भवतैव विचार्य सन्तोष्टव्यम् । तथाच कार्यकारणयोरन्यथाकरणशङ्काया नावकाशः [इति।?] अत्र यथेश्वरदीक्षित(वीक्षित)क्रम इति प्रागल्भ्यात् यदि वदसि, अथापि क्रमनियमः कदाचित् भवताऽङ्गीकृत एव । तथाच नित्यमेवायमङ्गीकार्यः क्रमनियम इति श्रेयानेवायं पक्ष इत्यभिप्रायेणाह—पाक्षिक इति । तर्हि न्यायमार्गः किं भेदवादिना भवता परित्यज्यते इत्याशंक्य, परित्यज्यत एवेत्याह–पक्ष इति। अयमाक्षपादः पक्षोऽस्माकं वेदान्तिनां बाह्यसिद्धान्तकोटिं प्राप्नोतु; का नो हानिरित्यर्थः ॥ १२२ ॥

---

स्यादिति मन्त्राणां सर्वेष्वपि कल्पेषु एकानुपूर्वीकत्वमेव वक्तव्यमित्यर्थः । इत्थमिति । एवञ्च मन्त्राणामिव विधिवाक्यानामर्थवादानाञ्च विषयेऽप्येकैवाऽनुपूर्वी लाघवादस्तु इत्याक्षेपे सर्वत्रानुपूर्वीनियम एवाऽऽयाति । विधिवाक्यादीनां यागादि प्रति कारणत्वाभावेऽपि यागविशेषादिज्ञानं प्रति कारणतया तत्तैकरूपज्ञानं प्रति नानानुपूर्वीकवाक्यानामनुगतकार्यकारणभावस्य दुर्वचतया आनुपूर्वीभेदेनानेककार्यकारणभावकल्पने गौरवात् तत्परिहारायैकविधानुपूर्वीकत्वस्वीकरणमेव समुचितमिति तत्राप्युपपत्तिरस्तीत्यपि इत्थम्पदविवक्षितम्। एवं सर्वत्रानुपूर्वीनियमसिद्धौ तथात्वे नियते आक्षपादपक्षः, कल्पभेदेन भिन्नानुपूर्वीको वेद इत्याकारकः प्रतिक्षेप्य एव । पाक्षिके वेति । अयमर्थः—शब्दानुपूर्वीभेदो द्विविधः । 'यदाग्नेयोऽष्टाकपालः पौर्णमास्यां भवति' इत्यत्र पौर्णमास्यामष्टाकपाल आग्नेयः इति तेषामेव शब्दानां भिन्नक्रमेण पाठे एकः । अग्निदेवताकः अष्टसु कपालेषु संस्कृतः पुरोडाशः यागद्रव्यमिति रीत्यन्तरेण शब्दान्तरप्रयोगेऽन्यः । तत्र द्वितीयस्थले शब्दबोधस्य प्रकारविशेष्यवैचित्र्यादवर्जनीयो भेद इति बोधकारणस्थले न सर्वत्रानुगतकार्यकारणभावसंभव इति विध्यर्थवादस्थले भेदो न प्रतिषेद्धुं शक्यत इति शंका स्यात्—अथापि मा भूत् तत्रैकानुपूर्वीकत्वम् । मन्त्रविषये तदिष्टया पाक्षिकं तथात्वम् एकानुपूर्वीकत्वं सिद्धम् । एवं पाक्षिकेऽपि, आक्षपादपक्षः मन्त्रविषये क्षत एव । यद्वा आनुपूर्व्यैक्ये लाघवात् विध्यर्थवादविषयेऽपि तथैवास्त्विति शंकायाम्, सर्वशक्तेरीश्वरस्य कुत्र वा पक्षे गौरवं लाघवं वेति प्रतिवादेऽपि, कतिपयेषु कल्पेषु पूर्वसरूपाऽप्यानुपूर्वी स्यादेवेति विध्यर्थवादानुपूर्व्यैक्यं पाक्षिकं न प्रतिषेध्यम् । अतः, "प्रतिमन्वन्तरञ्चैषा श्रुतिरन्या विधीयते" इति नियमभंग इति तत् नापूर्ववेदोत्पत्तिपरम्, अपितु नित्येष्वेव वेदभागेषु तत्तन्मन्वन्तरसंबन्धिसत्त्वादिगुणवैषम्यानुरूपाधिकारशालिपुरुषयोग्यनित्यवेदभागनूतनप्रवचनाभिप्रायम् । अतः, 'कल्पभेदेन वेदानुपूर्वीभेदो नियतः' इति गौतमीयपक्षः नः वेदान्तिनां तद्बाह्यत्वकोटेस्तदिष्टत्वे परमतपरिषत्कोटिम् असदभिमता परमतप्रवर्तकपरिषदि या कोटिः बाध्यत्वरूपा, तामेव आटीकतां भजतु । अत्रैवं 'पाक्षिके वा तथात्वे' इत्यस्यार्थद्वयमुक्तम्; पदयोजनायां त्वेवं व्याख्यातम्—नियमे=सर्वस्मिन्नपि कल्पे वेदः सर्व एकरूप एवेति नियमे । पाक्षिके वा तथात्वे—तत्तत्कल्पमात्रे तत्तदानुपूर्वीति नियमे गौतमसंमते वा । विचार्यं ग्राह्य सतीति शेषः । असौ आक्षपादपक्षः बाह्यसिद्धान्तगोष्ठीनिविष्टो भवत्विति । परमतेत्यादेरयं वाऽर्थः—गौतमीयन्यायदर्शने तार्किकाभिमतानामनेकेषामर्था

(१२३) सौक्ष्म्यात् तुल्याभिघारात् सहकृदपगमात् छादकादान्यपर्यात्
अत्यासत्त्याऽतिदूरात् बलवदभिभवानुद्भवाक्षोपघातैः ।
नेक्ष्यन्ते वर्तमानान्यपि हि सुरगण[ा]स्तद्वदन्तर्विशक्तेः ;
प्रख्याताः सिद्धिभेदा अपि जननतपोयोगमन्त्रौषधिभ्यः ॥ २५ ॥

इति देवताधिकरणम् ॥ २४ ॥

यदि देवतानां विग्रहादिकमस्ति, तर्हि किमर्थमस्माभिर्नोपलभ्यन्त इत्याशङ्क्यानुपलब्धिकारणानां बहुत्वमाचष्टे—सौक्ष्म्यादिति। 'अतिदूरात् सामीप्यात्' इति साङ्ख्यग्रन्थे हि विद्यमानानामप्यनुपलब्धिकारणानि परिपठितानि । सौक्ष्म्यात् परमाण्वादीनामनुपलब्धिः । तुल्याभिघारात् तैलसिक्तस्य तैलबिन्दोः । सहकृदपगमात् = सहकार्यभावात् अन्धकारवर्तिनो घटादेः । छादकात् पटावारितानां पदार्थानाम् । आन्यपर्यात् व्यासक्तहृदयस्याग्रतः स्थितानां पदार्थानाम् । अत्यासत्त्या स्वनयनगतस्य । अतिदूरात् देशान्तरगतस्य । बलवदभिभवात् मध्यन्दिनोल्काप्रकाशस्य । अनुद्भवात् चाक्षुषकिरणसंघातरूपादेः । अक्षोपघातात् रुग्णनयनस्य पुरोऽवस्थितस्य वस्तुनः । अनुपलब्धिरिति सर्वत्रान्वयः ।

नाम् अणूपादनकत्व-अतिरिक्तावयविसत्त्व-एकभूतमात्रोपादानकत्व-इन्द्रियभौतिकत्व-मनोऽनादित्व-आत्मविभुत्व-दुःखादिगुणध्वंसमात्ररूपमोक्षादिरूपाणां स्थापिकायाः परिषदः या कोटिः, तत्रायमक्षपादपक्षः ईश्वरकर्तृकत्व-पतिकल्पभेदरूपवेदधर्मविषयकोऽपि अन्तर्भवतु-नः असद्बुद्ध्या । अणूपादानत्वादिकं न गौतमहृद्गतम् ; स्वदर्शनस्य न्यायविषयकत्वात् परस्य वैशेषिकस्य तर्कप्रमाणाऽऽदरवतो मते स्थितत्वोपपादनमात्रमिति गौतमदर्शनाबहिष्कारपक्षपरासद्बुद्ध्या प्रकृतविषयेऽप्यक्षपादोक्तिनिर्वाहो भवत् । वैशेषिक एव, 'बुद्धिपूर्वा वाक्यकृतिर्वेदे' इत्युक्तम्। परशब्देन व्याख्यातृजनग्रहणं वा । व्याख्यातॄणामाशयः सः, न तु गौतमपक्ष इत्यपि हि वक्तुं शक्यम् । आप्तप्रामाण्यादित्येतावत एव सूत्रे उक्तेः ईश्वरकर्तृकत्वाभावेऽपि सृष्ट्यारम्भे प्रवचनात् महाजनानां प्रेरणात् आप्तपरिग्रहतो वेदः प्रमाणमित्येतावत एव तत्र विवक्षासंभवात् । एतावदर्थज्ञापनार्थमेव, पक्षोऽसावाक्षपादः क्षेप्य इत्येवमनुक्त्वा, 'परमतपरिषत्कोटिमाटीकताम्' इति भंगीग्रहणम् । अतथात्वे इति विभज्य क्रमानियमे नियते वा पाक्षिके वा गौतमेष्टे स परपक्ष एवेति चार्थान्तरम् ॥ १२२ ॥

२५. एवं देवतानां साकृतीनां सद्भावः मनुष्यानुग्राहकत्वं स्वयं मुक्त्यर्थोपायानुष्ठानापेक्षिताधिकारसंपन्नत्वञ्चोपपादितम् । एवं स्थितानामप्यदर्शनं कुत इत्यत्र सामान्यतः सांख्योक्तानि कारणानि घटयन् अन्यान्यप्याह सौक्ष्म्यादिति । सांख्यकारिका हि (7), "अतिदूरात् सामीप्यात् इन्द्रियघातान्मनोऽनवस्थानात् । सौक्ष्म्यात् व्यवधानादभि-भवात् समानाभिघाराच्च" इति । अनुपलब्धिरिति उत्तरवाक्यादपकर्षः । तद्व्याख्याने अनुद्भवोऽपि कारणमुपलक्षितः । अत्रान्यदपि । अयं भावः—किमदर्शनात् देवता न सन्तीत्युच्यते, किं वा स्थितिमभ्युपगम्य अदर्शनकारणं किमिति जिज्ञास्यते । नाद्यः ; ब्रह्मण इव स्थितावप्यदर्शनसंभवात् । किञ्च किं वक्तृदृष्टत्वाभावमात्रेण वस्त्वभावः, उत वक्तृश्रोत्रन्यतरादृष्टत्वेन, किं वा सर्वैरदृष्टत्वेन ; नाऽऽद्यद्वितीयौ ; अनैकान्त्यात् । न तृतीयः ; असिद्धेः ।

एतेभ्यः सर्वेभ्यो हेतुभ्यः पुरतो वर्तमानान्यपि नोपलभ्यन्ते । तद्वत् अग्नीन्द्रादिदेवतागणोऽप्यन्तर्धानशक्त्या नोपलभ्यते । किंच शास्त्रेषु जन्मना तपसा योगेन मन्त्रौषधादिभिश्च माहात्म्याद् सिद्धिविशेषाः प्रख्याताः। जन्मतः पिशाचादीनाम्, तपसो(सा) महर्षीणाम्। योगतो योगिनामन्तर्धिशक्तिरस्त्येव। मन्त्रौषधिभ्यस्तच्च प्रसिद्धमेव। तेन देवादीनामन्तर्धिशक्तेरनुपलम्भ इति सुष्ठूक्तम् ॥

२५ ॥ अथ (प्रमिताधिकरणगर्भे—) मध्वधिकरणम् ॥ १-३-८ ॥ [३०-३२]

सूत्रम्–मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॥ ज्योतिषि भावाच्च ॥ भावं तु बादरायणोऽस्ति हि ॥

(१२४) स्यादेवं देवमात्रे मनुज इव परोपास्तिमात्रं तथापि
स्वस्यैवाऽऽराध्यभावः स्वपदमपि फलं यत्र नात्राधिकारः ।
मैवं ; सर्वान्तरात्मा स्वतनुभृदिति चोपासते मुक्तिकामाः
कामादावर्तते तु स्वपदमपि फलं कल्पमन्वन्तरादौ ॥ २६ ॥

इति मध्वधिकरणम् ॥ २५ ॥

पूर्वस्मिन्नधिकरणे देवतासामान्यस्य भगवदुपासनाधिकारश्चिन्तितः ; इदानीं पुनर्देवताविशेष-

---

रामकृष्णभीष्मार्जुनादिभिः, प्रायो महर्षिभिश्च बहुलं तासामुपलब्धत्वात् । अतोऽस्माभिः कुतो न दृश्यन्त इत्येव जिज्ञास्यम् । अन्ये बहवः पदार्थाः सन्ति अदृष्टाः ; तत्र कारणमन्विष्यताम् ; तथैवात्रापि भविष्यति । तावत्कारणस्वीकारे च कारणान्तरमपि तुल्यनयात् स्वीकर्तुं युक्तमिति । **अन्तर्धिशक्तेरिति ।** अत्र किं प्रमाणमिति चेत्–उपलभ्यमाना एव देवताः क्षणेनानुपलभ्या भवन्ति। एवं भूत्वा वाक्यालं स्वयमुक्तं श्रावयन्ति । अतस्तदावश्यकता । एवमन्तर्धानस्यान्यस्य चानेकस्य कार्यस्य सिद्धौ कारणानि बहुविधानि कार्यबलात् अन्वयव्यतिरेकाभ्यामवधार्यन्ते । अन्यथा तत्तत्सिद्ध्यसंभवादित्याह **प्रख्याता** इति ।

**चि. टी. व्यासक्तहृदयस्येति** न्यायभाष्यस्थं पदम् । **अन्यत्रमना** इति चोपनिषत् । अन्यत्रसक्तमनस्कस्येत्यर्थः । **मध्यन्दिनेति** । अभिभवः सूर्यप्रकाशेन प्रबलेन । अन्यग्रहणकारितमग्रहणमभिभवः। **अनुद्भवादिति** । उद्भूतरूपं हि प्रत्यक्षकारणम्, नानुद्भूतम् । **अक्षोपघातः** नेत्ररोगः ॥ १२३ ॥

२६. पूर्वाधिकरणे जैमिन्यभिप्रायमन्यथा गृहीत्वा व्याख्यातवतामर्धनास्तिकानामर्वाचां मतं क्षिप्तम् । अथ साक्षाज्जैमिन्याशयः क्षिप्यते। अत एवात्रैवाधिकरणे जैमिनेर्नाम्ना निर्देशः। "न देवता देवतान्तराभावात्" इति जैमिनिवाक्यमनुभाषमाणा व्याख्यातार एव जैमिनेर्देवताविशेषसंमतिमर्थात् दर्शयन्ति । न हि सः, 'न सन्ति देवताः' इत्याह, किं तु स्थितानां देवतानां स्ववाचकपदवाच्यदेवतासंबन्धिनि कार्येऽनधिकारमाह। तस्य तस्य वाचकस्य स्वभिन्नदेवतावाचकत्वाभावात् । अत्र मधुविद्याऽपि भवत्युदाहरणमिति सः। अग्न्याद्युद्देश्यकयागादिकर्मणि अग्न्यादेरनधिकारः कामं भवतु, तथा तन्मात्रोपासने च । मधुविद्यायां तु नैवमिति **बादरायणाशयः** । तत्र पूर्वपक्षमाह **स्यादिति** । **देवमात्र** इत्यत्र **मात्र**पदं कात्स्न्र्ये । मनुजानामिव सर्वेषां देवानामपि परमात्मोपासनेऽधिकारसंभवः पूर्वाधिकरणोक्त इष्यते । स नूनं परोपासनमात्रे, न तु मधुविद्यायाम्, तस्या अन्यादृशत्वात् । तदेव विशदयति **स्वस्येति** । मधुविद्या नाम ऋग्वेद–यजुर्वेद–सामवेद–अथर्ववेद–इतिहासपुराण–गुह्यादेशरूपपञ्चविधप्रमाणमूलककर्मानुष्ठानसाध्ययशस्तेजःप्रभृतिफलात्म-

स्योपासनाविशेषाधिकारो निरूप्यत इति संगतिः। यद्वा पूर्वत्रा[धिकरणेऽ]धिकारसंभव उक्तः; अधुना मध्वादिविद्यायामेतदसंभवेन पूर्वपक्षोत्थानमिति संगतिः। तदर्थविचारस्तु—मध्वादि विद्यासु य देवतोपास्या, तस्याः किं तासु अधिकारोऽस्ति, उत नेति। किं तस्याः तद्विद्योपसंहारसामर्थ्यमस्ति, उत नेति। किं मधुविद्यायां वस्वादिदेवतामात्रमुपास्यम्, उत तदवस्थं ब्रह्मेति। किं वसुत्वमात्रं [मधु]विद्याफलम्, उत ब्रह्मप्राप्तिपर्यन्तं वसुत्वमिति। अत्र संगत्यभिधानगर्भं पूर्वपक्षप्रकारमनूद्य तत्र पूर्वपक्षेण विरोधद्वयमाशङ्क्य परिहरति—स्यादेवमिति। मनुष्येष्विव देवतासामान्ये परमपुरुषोपासनसामान्यमेवं भवत्येव। तथापि मध्वादिषु केषुचिदुपासनेषु यासां देवतानामुपास्यत्वं तासामेवोपासकत्वं न स्यात्। तथा च यासां देवतानां प्राप्यतादि(प्राप्यतया?)निवेशः, तासामेव देवतानां प्राप्तृ(पक)-त्वं विरुद्धमेव। तथाचोपास्योपासकयोः कर्मकर्तृविरोधेन मध्वादिषु वस्वादीनामधिकारो न स्यात्। शब्दार्थस्तु-वस्वादिभुज्यमानस्यादित्यस्याऽऽराध्यभावात् विशेषणतया निविष्टस्य वस्वादेराराधकभावो विरुद्ध एव। तथाच वसुप्राप्तिपूर्वकपरमात्मप्राप्तेः फलत्वात् स्यादेव पूर्वमेव विद्यमानवस्वादीनां वसुपदस्याप्राप्यत्वात् तत्रापि विरोध एव(एवम्?)। तेन तत्राधिकार एव न स्यादिति। उक्तमिमं पूर्वपक्षं

कस्यामृतस्य चतसृषु दिक्षु ऊर्ध्वञ्च पञ्चसु आदित्यमण्डलप्रदेशेषु स्थितस्य क्रमेण वसुरुद्रादित्यमरुत्साध्यरूपैः देवगणैर्भुज्यमानस्याऽऽधारतया आदित्यस्योपासनम्। तत्फलञ्चोपासकानामपि वस्वादिभावेन तदमृतानुभवलाभः ' अत्रोपासने वस्वादीनामधिकारो न वेति विचारः। नेत्याह **जैमिनिः**। स्वस्य स्वेनानुपास्यत्वात्। न चाऽऽदित्यस्यैवोपास्यतया वस्वादीनामुपासकत्वे को दोष इति शंक्यम्—विद्या स्वरूपविवेचने तत्सिद्धेः। तथा हि—नात्राऽऽदित्यस्यैवोपास्यत्वम्। आदित्यमण्डलस्यैव मध्वरूपस्यात्र निर्दिष्टत्वात्। किञ्च वस्वादिभावो मध्वनुभवश्चात्र फलम्। आदित्योपासने तस्य वस्वादिभावदातृत्वं कथम्, मण्डलमेव चात्रोपास्यं प्रतीयते, न तदन्तर्वर्ती चेतनः। ननु वस्वादेरपि वस्वादिभावप्रदत्वं न घटते; स्वकाले स्वफलदानायोगात्। पश्चाच्च स्वस्यैवाभावात्। बहुषु वस्वादित्यविषयकविद्याफलायोपासीनेषु एकस्मा एवान्ते वसुना स्वपदं दीयेतेति अन्येषां वन्ध्यक्रियता च स्यादिति चेन्न—वस्वादिपदप्राप्तिर्नाम वस्वादिसायुज्यप्राप्तिः। सा तु बहूनां स्वकाल एव वस्वादिभिः संकरयितुं शक्यत इत्यदोषात्। विशेषविस्तरोऽस्यास्मदीये **परिष्कारे**। तत्र पूर्वाधिकरणे देवताप्रीतिद्वारैव फलस्य वर्णितत्वात् अत्रैतदुपासनेन वस्वादिमाराध्य मानवाः फलं प्राप्नुवन्तीति सिद्धं वस्वादेराराध्यत्वम्। एतेन, 'स्वेन स्वस्योपासनं कुतो न शक्यम्, जीवात्मना स्वमात्मोपासनात्; इन्द्ररुद्रादिभिः सर्वैरपि भक्तियोगनिष्ठैः स्वविशिष्टपरमात्मोपासने स्वस्यापि विषयीकरणाच्च' इति शंका निरस्ता। तत्र सर्वत्र स्वस्याऽऽराध्यत्वाभावात्। अशुद्धेनेन्द्रादिना शुद्धात्मस्वात्मानुसंधानात् उत्कृष्टोपासनस्योपपन्नत्वाच्च। अत्र तु मनुजैर्वस्वाद्युपासने क्रियमाणे वस्वादावाराध्यत्वबुद्धिसद्भावात, तस्यैवोपासनस्य वस्वादिभिः करणे तद्बुद्धित्यागेऽनुष्ठानवैरूप्यप्रसंगात् आराधनाधिकारिण एव कर्तृत्वेन मधुविद्या स्वीकरोति। वसुशरीरयुक्तजीवोपासनञ्च मनुजवत् वसु. कर्तुं नार्हति। तस्य शरीरस्य शुद्धात्मस्वरूपवत् उत्कृष्टत्वाभावात्। एवं वसुपदप्राप्तिपूर्वकमध्वनुभवरूपफलस्य स्वयं प्राप्तत्वात् तदर्थिताऽपि न भवति। अतोऽर्थित्वसामर्थ्याभावात् न वस्वादयोऽत्राधिकारिणः भोज्यादित्यापेक्षया भोक्तॄणां प्राधान्यात् तेषामेव फलप्रदत्वाच्च वस्वादीनामुपास्यत्वमावश्यकमिति चोक्तमेव। मुक्त्यर्थब्रह्मोपासनत्वेऽपि

निराकरोति-मैवमिति। तत्रोपासनविरोधं तावत् परिहरति-सर्वान्तरात्मेति। न केवलं स्वात्मा उपास्यः, अपि तु स्वविशिष्टः परमात्मा। तेन परमात्मप्रधानस्याऽऽत्मनो नोपासनानधिकारः। न च फलप्राप्तावपि विरोध इत्याह-कामादिति। वसुत्वेन वर्तमानस्य वर्तमानमेव वसुपदं फलञ्चेत्, तदा हि विरोधः स्यात्॥ अत्र हि कल्पान्तरे मन्वन्तरेऽपि वसुपदप्राप्तिः फलत्वेन प्राप्यते। तथा च को विरोध इति॥१२४

इति मध्वधिकरणम्॥ २५॥

२६॥ अथ (प्रमिताधिकरणगर्भे—) अपशूद्राधिकरणम्॥ १-३-९॥

सूत्रम्—शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि॥ क्षत्रियत्वगतेश्च॥ उत्तरत्र चैत्ररथेन लिङ्गात्॥ संस्कारपरामर्शात् तदभावाभिलापाच्च॥ तदभावनिर्धारणे च प्रवृत्तेः॥ श्रवणाध्ययनार्थप्रतिषेधात्॥ स्मृतेश्च॥ ३३-३९॥

(१२५) जैमिन्युक्तापशूद्राधिकरणसरणेनास्ति विद्याभिलब्धिः
शूद्रादीनां तथापि स्मृतपरभजनाधिक्रिया जाघटीति।
श्रोतृत्वाद्धारतादेः स्वजनिसमुचितैः कर्मभिश्चेत्ययुक्तं
प्राप्ते ब्रह्मोपदेशे ह्युपनयनपरामर्शनादि प्रसिद्धम्॥ २७॥

---

वस्वादीनामनधिकार एव। तेषां सहभाविवस्वादिप्राप्तिनैरपेक्ष्यात्। संवलितं ह्यधिकारापादकम्। न चेयं मुक्त्यर्थविद्या; गमकादर्शनात्। अन्ते, 'ब्रह्मोपनिषदं वेद' इत्यत्र ब्रह्मपदं तु वेदार्थकमुपदेष्टृचतुर्मुखार्थकं वा स्यात्। तदिदमाह द्वितीयेन पादेन। पूर्वपक्षं परिहरति मैवमिति। अयं भावः—उत्तरत्र, 'अथ तत ऊर्ध्व उदेत्य नैवोदेता नास्तमेता' इति आदित्यस्याऽऽदित्यत्वावस्थां विहायोर्ध्वं गतस्योदयास्तमयराहित्यमुक्त्वा, 'तेनाहं सत्येन मा विराधिषि ब्रह्मणा' इति निर्विकारब्रह्मरूपादित्येन सह विरोधाभावोक्त्या आदित्यशुद्धस्वरूपावस्थितब्रह्मोपासनं प्रतीयते। अत्रत्यस्य सत्यपदस्य सत्यवचनार्थकत्ववत् निर्विकारार्थकत्वमपि उपनिषद्भाष्ये पाठान्तरतः प्रतीयते। तत्फलञ्चोपासकस्य सूर्योदयास्तमयानुभवरूपजन्माभाव उपर्युच्यते। एवञ्च तुल्यनयात् एतदेवममृतं वेदेत्य्दौ आदित्यावस्थब्रह्मोपासनत्वं युक्तम्। तद्विशेषणतया भोक्तृवस्वाद्युपासनेऽपि तदन्तर्यामिपरमात्मविषयकत्वमपि संभवात् नोपेक्ष्यम्। एवञ्च मुक्त्यर्थं स्वस्वेतरानेकदेवतान्तर्यामितया ब्रह्मोपासनरूपत्वादत्र वस्वादेरप्यधिकारो भवत्येव। न च प्रागेवावान्तरफलभूतवस्वादिपदप्राप्तेः सिद्धत्वात् तद्विशिष्टमुक्तिरूपसंपूर्णफलार्थित्वाभावात् नाधिकार इति वाच्यम्; साम्प्रतं वस्वादिभूतानामपि पुनर्वस्वादिभावप्राप्तीच्छासंभवात् अधिकारस्य निर्बाधत्वात्। तथा च कामात् कामनावशात् वस्वादेरपि कल्पान्तरे मन्वन्तरे वा कालान्तरे वा स्वपदात्मकं फलमपि आवर्तते पुनर्भवतीति तदवाप्त्यपेक्षया वस्वादयोऽपि मुक्तिकामाः, 'सर्वान्तरात्मा स्वात्मकतनुं बिभर्ति=स्वान्तर्यामी भवति' इति तमुपासत एवेति। यत्तु स्वस्य कथं स्वाराध्यत्वमिति। तत्रोच्यते। स्वस्योपास्यत्वं विहितं तु संभवत्येव। आराध्यत्वं तु न वाचिकम्; किंतु मनुजविषये औचित्यसिद्धम्। वस्वादिविषये अन्तर्यामिमात्रे विश्राम्यति। एवञ्च, 'न देवता देवतान्तराभावात्' इति जैमिनिवाक्यं न मधुविद्यास्पर्शीति सिद्धम्॥ १२४॥ इति मध्वधिकरणम्॥ २५॥

मनुष्यव्यतिरिक्तानां देवतानां वस्वादिदेवताविशेषाणां च अर्थित्वसामर्थ्ययोस्संभवादधिकारोऽस्तीत्युक्तम्; तर्ह्यर्थित्वसामर्थ्ययोः प्रयोजकत्वे मनुष्यविशेषाणां शूद्रादीनामप्यधिकारः स्यादित्याशङ्कया संगतिः। तदर्थविचारस्तु—किं ब्रह्मविद्यायां शूद्रस्याधिकारोऽस्ति, नेति। किं तस्य तदुपसंहारसामर्थ्यमस्ति, नेति। किं ब्रह्मविषयमनोवृत्तिरूपा ब्रह्मविद्या अनधीतवेदस्यापि संभवति, नेति। किं वेदादेव ब्रह्मावगतिः, उत इतिहासपुराणादिनापि संभवतीति। किमितिहासपुराणयोर्वेदोपबृंहणं कुर्वतोरेव ब्रह्मावगतिहेतुत्वम्, उत स्वातन्त्र्येणेति। किं जानश्रुतेः पौत्रायणस्य शूद्रेत्यामन्त्र्य विद्योपदेशः इतिहासपुराणयोर्निरपेक्षब्रह्मावबोधकत्वमुपोद्बलयति, नेति। किमत्र शूद्रशब्दो वृषलजातिपरः, उत शुगस्येति विगृह्य, 'शुचेर्दश्च' इति रक्प्रत्यययोगवृत्त्या शोकवत्परः। यद्यपि पूर्वकाण्डे भगवता जैमिनिना शूद्राणामग्निविद्ययोरभावात् कर्माधिकारो नास्तीत्युक्तम्, अथापि, "मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः। स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्॥" इति भगवद्वचनादधिकाराशङ्कया पूर्वपक्षमाह—जैमिन्युक्तेति। 'मां हि' इति शूद्राणामधिकारित्वं भगवतैव स्मर्यते; तस्मादधिकारोऽस्ति इति। अथापि ज्ञानाभावे कथमुपासनं संयोयुज्यत इत्या-

---

२७. पूर्वं **मनुष्याधिकारत्वादि**ति सामान्येन भवद्वचनं साधु; शूद्राणामप्यधिकारप्रतीतेः। अत्रोऽत्रापि जैमिन्याशयनिरसनं भवतां सेत्स्यतीति केनापि श्लाघायां क्रियमाणायाम्, नात्र जैमिनिविरोध इष्टः, तिर्यगादिव्यावृत्तहृदयपरिमाणज्ञप्तये एवास्माभिर्मनुष्यपदप्रयोगात् सर्वमनुष्यग्रहणाभिप्रायकत्वाभावादित्याशयेन प्रत्युक्तं **सूत्रकृता**। तदेतदाह **जैमिनी**ति। तत्र जैमिनिना तावदेवमुक्तम्—न शूद्रस्य वैदिकविधिष्वधिकारः। अग्निसाध्ये यागादौ कर्मणि अग्नेर्विद्याया उभयोरभावान्नाधिकारः। तद्भिन्ने तु विद्याविरहादेव नाधिकारः। कथमग्न्यभाव इति चेत्—अग्निर्हि आधानसिद्धाहवनीयादिरूपः; आधानञ्च त्रैवर्णिकमात्रमधिकृत्य विहितम्, एवं विद्याऽपि वेदार्थज्ञानम्। तदर्थमध्ययनमपि त्रैवर्णिकं प्रत्येव विहितमिति। न च यागादिकर्मविधिषु येषु विशिष्य वर्णनिर्देशाभावः, तैरेव विधिभिः सामान्येन कर्तुरग्निविद्याक्षेपसंभवात् न शूद्रस्य तदभाव इति शंक्यम्—विहिताधानाध्ययनसंपादिताग्निविद्याशालिपुरुषलाभेनैव विधीनां निराकांक्षत्वात्, अन्यत्र तत्कल्पनापर्यन्ते विधीनामव्याप्रियमाणत्वात्। इदमेव **सरणेरि**ति पदेन दर्शितम्। न च वेदान्तिमते अध्ययनविधेरर्थज्ञानार्थत्वाभावात् अक्षरराशिग्रहणमात्रार्थत्वात् तदभावे प्रत्यवायभिया त्रैवर्णिकैरध्ययने क्रियमाणेऽपि विद्यामर्थज्ञानरूपां विधयः सर्वत्र कल्पयेयुरिति वाच्यम्—अक्षरराशिग्रहणार्थकृताध्ययनाधीनार्थजिज्ञासामूलार्थनिश्चयरूपविद्याश्रयपुरुषलाभेनैव चरितार्थानां विधीनामन्यत्र विद्याकल्पकत्वकल्पनायोगात्। एवं सति ज्ञानाभावेऽपि त्रैवर्णिकैः कतिपयनित्यकर्मानुष्ठानं वचनबलादिति भाव्यम्। एवं सिद्ध एव तत्र शूद्रस्यानधिकारः। तर्हि कथं पुनरारम्भ इति चेत्—अधिकाशंकया। तामाह शूद्रेति। **स्मृतपरभजनाधिक्रियेत्यत्र स्मृतेत्यस्य भजनेऽन्वये,** वेदश्रुते भजनेऽनधिकारेऽपि स्मृतिप्रोक्ते भजनेऽधिकारः स्यादित्यर्थः। तावता संवर्गविद्यादौ श्रौतेऽधिकारः शंकितो न भवेत्। अतः **स्मृतः** स्मृतिज्ञापितो यः परः तद्भजनेत्यर्थः। तथाच परस्य स्मृतिमूलं ज्ञातत्वात् भजनेऽधिकार इत्यर्थः। "द्वे विद्ये वेदितव्ये वै" इतिवत् कतिपयस्मृतिषु श्रौतविद्या-

शङ्क्याह—श्रोतृत्वादिति । अयमर्थः—वेदाध्ययनपूर्वकं भगवज्ज्ञानं मा भूत् शूद्रादेः । अथापि भारतादिश्रवणपूर्वकमस्त्येव ; भारतादेः श्रोतृत्वात्=श्रोतुं योग्यत्वादित्यर्थः । अस्तु ज्ञानं भारतादिश्रवणात् ; तथापि कर्मभिरपक्वकषायस्य कथं सत्यवचनादुपासनं भगवतो जायत इति पुनरप्याशङ्क्य निराकरोति—स्वजनीति । यथा ब्राह्मणादयः स्वाधिकारानुरूपैर्यज्ञादिभिः कर्मभिर्विद्याविरोधिपापनिवर्हणं कुर्वते, एवं शूद्रोऽपि स्वाधिकारानुरूपैः शुश्रूषादिभिर्ब्रह्मोपासनविरोधिपापनिबर्हणं कुर्यादित्यर्थः । इत्थं पूर्वपक्षमनूद्य निराकरोति—अयुक्तमिति । तत्र हेतुं दर्शयति—प्राप्त इति । ब्रह्मोपदेशे प्राप्ते सति, 'संस्कारपरामर्शात् तदभावाभिलापाच्च' इत्यादिभिः सूत्रैरुपनयनसद्भावावश्यम्भावः सूत्रकारैरेव प्रदर्शितः। अतस्त्रैवर्णिकानामेव ब्रह्मविद्यायामधिकारो न शूद्रादीनामित्यर्थः॥१२५

(१२६) शूद्राणां भारतादेश्श्रवणमनुमतं पापशान्त्यादिसिद्ध्यै
वेदार्थापातबुद्धिर्यदनधिकरणा नोपबृंह्येत तैः सः ।

विवरणमपि भवितुमर्हति । तदा भजनेऽन्वयेऽपि न दोषः । परंतु स्मृतपदं वैदिकभजनव्यवच्छेदायेति न ग्राह्यम् । ज्ञानोपायभूतशब्दराशिप्रदर्शनार्थमेव तदिति । यद्वा स्मृतं गीतायामुक्तं धर्मव्याधादिविषये स्मृत्युक्तञ्चेत्यर्थः । एवं स्मृता भजनाधिक्रियेत्यर्थे, 'मां हि पार्थ व्यपाश्रित्य....स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्' इति सर्वेषां व्यपाश्रयाधिकारस्योक्तत्वात् वैदिकभजनेऽप्यधिकारः सिध्येत् । किं पुनः संवर्गविद्यादिगमकान्तरसत्त्वे इत्याशयः । एवमर्थवर्णने सत्येव श्लोके पूर्वपक्षे संवर्गविद्याकोडीकारः स्यात् । प्राप्ते ब्रह्मोपदेशे इति समाधानस्य श्रौतविषयकत्वौचित्यात् । जाघटीति अतिशयेन घटते ; विशिष्य वचनसत्त्वादिति भावः । ज्ञानमपि स्मार्तं वेदजन्यापेक्षया विशदमेव स्यात् । उपबृंहणीयापेक्षया उपबृंहणस्य विशदबोधकत्वादिति । ननु वेदेऽनधिकारे तद्व्याख्याने स्मृतावधिकारः कथं कल्प्यत इत्यत्राह श्रोतृत्वादिति । जैमिनिसरणिविरोधात् न वेदादर्थज्ञानकल्पना । "श्रावयेत् चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः" इति भारतादिश्रवणाभ्यनुज्ञानात् स्मृतावधिकारात् ज्ञानं संपन्नम् । तज्ज्ञानमादाय भजने प्रवृत्तिरस्तु । अथापि अग्निसाध्यकर्मस्वनधिकारात्, "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन" इति अग्निसाध्ययज्ञनिष्पाद्यत्वात् भजनस्य, अङ्गेष्वनधिकारात् अङ्गिन्यप्यनधिकार एवेत्यत्राऽऽह स्वजनीति । स्वजात्युचितकर्ममात्रेण भजननिष्पादनं संभवतीति अङ्गपादे उक्तेः, "स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः' इत्यनेन ज्ञातत्वाच्च यज्ञानधिकार्याश्रमस्थविधुरादीनामिव शूद्रेषु तदुत्पत्तिसंभव इति भावः । अत्र संवर्गविद्यानुदाहरणेऽपि तदपि द्रढ्तमेव । एवं विदुरधर्मव्याधादित्रैवर्णिकभक्तसद्भावोऽपि गमकः । विशिष्योपन्यस्य निरसनञ्चोपरि भविष्यति । पूर्वपक्षं खण्डयति इत्युक्तमिति । ब्रह्मोपदेशे कर्तव्ये प्राप्ते आचार्यः, "समिधं सोम्याऽऽहर । उप त्वानेष्ये" इति उपनयनसंस्कारं परामृशति । तेनानुपनीतं प्रति ब्रह्मोपदेशो न कार्य इति ज्ञायते । शूद्रे च, "न चास्योपदिशेत् धर्मं न चास्य व्रतमादिशेत्", "न शूद्रे पातकं किञ्चित् न च संस्कारमर्हति,' इति उपनयनाद्यभावोऽवगम्यते । परामर्शनादीति आदिपदेन धर्मव्रतोपदेशादिनिषेधप्रदर्शिसूत्रार्थज्ञापनम् ॥ १२५ ॥

विद्यास्थानानि शूद्रैर्मुरभिदकथयत् पाण्डवाय द्विसप्ता-
स्यस्प्रष्टव्यानि तस्मान्न हि विकलधियां स्याद्दुपास्त्यधिकारः ॥ २८ ॥

शूद्रादीनां भारतादिश्रवणं किमर्थमनुमतमित्याशङ्क्याह–शूद्राणामित्यादिना। पापशान्त्यर्थम्; न पुनः श्रौतज्ञानार्थम्=शास्त्रात् प्रतिपन्नार्थविशदीकरणार्थमित्यर्थः। तदेव विवृणोति—वेदार्थेति। वेदार्थापातबुद्धिः शूद्रस्य यदि स्यात्, तदानीं शूद्र इतिहासपुराणैरुपबृंहेत; विशदज्ञानवान् परिकल्प्येतेत्यर्थः। न च शूद्रस्याऽऽपातबुद्धिरेवास्ति। तस्य ब्राह्मण्याभावादुपनयनाभावः, तदभावात् वेदाध्ययनाभावः। तस्मादापातप्रतीतिरेव नास्ति। सा पुनरापातप्रतीतिर्यदनधिकरणा यच्छूद्रानाधारा, स शूद्रः इतिहासपुराणैर्नोपबृंहेत तत्त्वज्ञानवत्तया नोपबृंहेतेत्यर्थः। तस्मादितिहासपुराणश्रवणं शूद्रस्य पापक्षयार्थमेव। न पुनः तत्त्वज्ञानाभिवृद्ध्यर्थमिति। यद्वा वेदार्थापातबुद्धिरित्यादेरयमर्थः—वेदो हि द्विविधः–अधीतः, अनधीतश्चेति। अधीतो ब्राह्मणादेः। अनधीतस्तु शूद्रस्य। अधीतो वेदः आपातप्रतीतिं जनयति; अनधीतस्तु न जनयति। तथाच वेदार्थापातबुद्धिर्यदनधिकरणा=यस्मादनधीताद्वेदात् जायते। सोऽनधीतो वेदस्तैरितिहासपुराणाद्यैर्नोपबृंहेत। आपातप्रतिपन्नार्थविशदीकरणं ह्युपबृंहणम्। शूद्रविषये त्वापातप्रतीतिजनकत्वाभावात् वेदस्योपबृंहणीयत्वं न युज्यत इति। किंच भगवानेव साक्षात् द्विसप्त=चतुर्दश विद्यास्थानानि मया मनीषिणां पावनत्वेनोपदिष्टानि शूद्रस्य न

---

२८. नन्वेवं शूद्राणां परमपुरुषार्थसाधकोपायानुष्ठानानुपयोगे भारतादिश्रवणाभ्यनुज्ञानं व्यर्थमित्यत्राह शूद्राणामिति। भारतादिश्रवणं श्रोत्रेण शब्दराशिग्रहणरूपं मनसा तदर्थग्रहणरूपञ्च शूद्रविषयेऽनुमतमेव। तत्फलञ्च–पापक्षयः यथोचित–तत्त्वज्ञानं धर्माधर्मविवेकः वैराग्यं भगवति भागवतेषु च भक्तिरित्यादि। न तु वैदिकधर्मभूतभक्तियोगानुष्ठानमपि; तस्याध्ययनसिद्धवेदजन्यार्थनिश्चयैकसाध्यत्वात्। अध्ययनजनिताऽऽपातबुद्धिनिवर्तनेन निश्चयोपादानार्थमेवोपबृंहणास्य प्रवृत्तिः। 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इति वचनात्। इतिहासादिमुखेनोपबृंहणं विहितं केन कार्यम्। कैर्वेद इतिहासादिमुखेनोपबृंहणीयः। नूनं वेदार्थापातबुद्धिर्यत्पुरुषाधिकरणिका, तैस्त्रिभिर्वर्णैः। सा बुद्धिः शूद्राद्यनधिकरणिका; तैरध्ययनाकरणात्। एवञ्च सा यदनधिकरणा, तैः शूद्रैः सः वेदः नोपबृंहेत। भारतादिनेति शेषः। पूर्वपादे तत्पदसत्त्वात्। उपबृंहणञ्चोपबृंहणमुखेनाङ्गिनमुपकृत्यैव कार्यकरम्; न स्वतन्त्रतया। अत एव शूद्राणामितिहासादिपठनं नाभ्यनुज्ञायते। प्रत्युत निषेध एव दृश्यते इत्याह विद्येति। यदाह मुरभित्=भगवान् पाण्डवं प्रति, "तस्मान्नैतानि शूद्राद्यैः स्प्रष्टव्यानि युधिष्ठिर" इति। द्विसप्त=चतुर्दश। अपिशब्देन, न वेदचतुष्टयमात्रमस्प्रष्टव्यमित्युच्यते। एवञ्च योगशास्त्रेऽनधिकारात् योगमार्गोऽपि नास्य। एवं निषेधन् कृष्णः कथम्, 'तेऽपि यान्ति परां गतिम्' इति भजनाधिकारमभिप्रेयात्। अतः पठनाभावात् वेदाध्ययनाभावात् पूर्णज्ञानाभावाच्च न विद्यायामधिकारः ॥

**चि.टी.** द्वितीयपादेन यच्छब्देन शूद्रग्रहणम्। तत्प्रतिसंबन्धी तच्छब्दः, तैः सः इत्यत्र तृतीयान्तः प्रथमान्तो वेति विचार्यम्। तत्र प्रथमान्त इति चिन्तामणिगतिः। एवञ्च सः शूद्रो नोपबृंहेत इति प्रथमव्याख्या। प्रमाणवाक्ये, वेदं समुपबृंहयेत् इति वेदस्यैवोपबृंहणकर्मत्वावगमात् पुरुषस्य कर्मत्वमयुक्तमिति विचार्य द्वितीयव्याख्या। तदा स इत्यस्य वेद इत्यर्थः। तर्हि यच्छब्देन

स्प्रष्टव्यानीति महाभारते पाण्डवायोपादिशत्, 'आदावेव मयोक्तानि पावनानि मनीषिणाम्। तस्मान्नैतानि शूद्राद्यैः स्प्रष्टव्यानि युधिष्ठिर ॥" इति। कथं तर्हि ऐतिहासिकानि पौराणिकानि च भगवत्स्तोत्राणि शूद्रैः पठ्यन्ते? इत्थम्। केवलसंकीर्तनत्वेन तेषां पाठः, न पुनर्वेदोपबृंहणत्वेनेति विभागः। तस्मादित्यादि। एवं वेदार्थज्ञानोपायाभावात् विकलधियाम् = अल्पज्ञानानां शूद्राणामुपासाधिकारो न हि भवेदित्यर्थः ॥ १२६ ॥

(१२७) गीतं शूद्रादिकानामपि परभजनं केवलं स्वार्हधर्मैः

धर्मव्याधस्तुलाधृक्(त्)विदुर इति च ते(तु?) प्राग्भवाभ्याससिद्धाः ।

वक्ता शूद्रेति जानश्रुतिमभिमुखयन् शोकमस्य व्यनक्ति

क्षत्तृप्रैषादिलिङ्गैः स्फुटतरविदितं क्षत्रियत्वं हि तस्य ।। २९ ॥

इत्यपशूद्राधिकरणम् ॥ २६ ॥

ननु शूद्रादीनामपि परभजाम्, "ब्राह्मणैः क्षत्रियैर्वैश्यैः' इत्यादिना, 'मां हि पार्थ व्यपाश्रित्य' इत्यादिना चोक्तम्। तत् कथमुपपद्यत इत्याशङ्क्याह-गीतमिति। तदनुष्ठानं स्वजात्यनुरूपधर्मानुष्ठानेन मालाकरण-दीपारोपण-प्रदक्षिण-नमस्कारोपलेपनादिमात्रेणेति न विरोधः। ननु तर्हि शूद्राणामुपासनाधिकारो नास्तीति भवद्भिरुच्यते। तथा च सति धर्मव्याधादीनां ब्रह्मविद्यानुष्ठानश्रवणं न योयुज्यत

---

वेदग्रहणे तदधिकरणकत्वस्याऽऽपातप्रतीतावपसक्त्या कथं **यदनधिकरणो**त्युक्तिरिति विमृश्य, **अधिकरण**-पदं नाऽऽश्रयपरम्, किंतु करणकारकपर्यवसितमित्याशयेन, 'यस्माद्वेदान्न जायते' इति विवृतम्। उभयमिदं संभवदर्थान्तरोपलक्षकमित्याशयेनास्माभिर्यथगुरूपदेशमन्यथा व्याख्यातम्। **अधिकरणशब्द** स्वरसार्थाविरोधाय **यच्छब्दः** शूद्रपर एव। तत्प्रतिसंबन्धी **तच्छब्दस्तु न स** इत्ययम्। **शूद्राणामिति** बहुवचनोपक्रमात् एकवचनानौचित्यात्। अत एव **तैरिति** बहुवचनान्त एव प्रतिसंबन्धी। **तैरिति** इतिहासादिग्रहणे करणे तृतीया, पुरुषग्रहणे तु कर्तरि। **समुपबृंहयेदिति** प्रमाणवाक्ये पुरुषस्यैव कर्तृत्वात्। इतिहासपुराणाभ्यामिति तत्र द्विवचनश्रवणात् तत्परामर्शित्वे बहुवचनस्वारस्याभावात्। श्लोकस्थस्य **भारतादेरित्यस्य** परामर्शे चैकवचनस्यैव युक्तत्वमिति। **स** इति च वेदग्रहणम्। **वेदार्थेति** पदे प्राक् तदुक्तेः; वेदमिति प्रमाणवचने एकवचनश्रवणाच्च। तथा च शूद्रैर्वेदो नोपबृंह्येतेत्यर्थ ॥१२६

२९. एवं शूद्राणां भजनाधिकारानंगीकारे गीताविरोधः, भारतादिविरोधः, श्रुतिविरोधश्चेति शंकायां विरोधत्रयमपि परिहरति **गीतमिति** श्लोकेन। 'स्त्रियो वैश्यास्तथा शूद्राः" इति **गीतायां** स्त्रीशूद्राणां यत् परभजनमुक्तम्, तत् **केवलं स्वार्हधर्मैः**। नन्विदमेव पूर्वपक्षिणाऽप्युक्तम्, "स्मृत-परभजनाधिक्रिया जाघटीति स्वजनिसमुचितैः कर्मभिः" इति इति चेन्न; अस्य तदर्थकत्वाभावात्। स्वार्हाः स्वाधिकारिकाः ये धर्माः मालाकरणदीपारोपणादयः कायिकादिव्यापाराः तद्रूपं भजनमित्यर्थः। न तु तत्साध्यो भक्तियोग इति। **केवलं** निष्कामम्—स्वयम्प्रयोजनम्। यद्वा **केवलं भजनम्** मानसध्यानविलक्षणं सामान्यरूपं सेवात्मकं भजनमित्यर्थः। तद्विवरणं **स्वार्हधर्मैरिति**। तावन्मात्रात् कथं मोक्षसिद्धिरिति चेत्-क्रमेणैव। अधस्तात् योगभ्रष्टादीनामपि क्रमेणैव मुक्त्युक्तेः। यदि तदनुष्ठेयेषु

इत्याशङ्क्याह—धर्मेति। धर्मव्याधस्तुलाधारो विदुर इत्येवमादयस्तु महानुभावाः पूर्वजन्माभ्याससंसिद्धाः, न पुनरेतस्मिन्नेव जन्मनि वेदाभ्यासादिजनितज्ञानवन्त इति तत्रापि न विरोधः। अस्त्वेनत् समाधानम्। असमाधेयमेतत् दृश्यते, यत् जानश्रुतेर्ब्रह्मविद्योपदेशार्थं शूद्रेत्यामन्त्रणमित्याशङ्क्य तदप्यन्यथासिद्धमित्याह—वक्तेति। जानश्रुतिमभिमुखयन् आचार्यो रैक्वः शूद्रेति वक्ता जानश्रुतेः शोकमेव व्यनक्ति ; न पुनः शूद्रजातित्वम्॥ शूद्रशब्दे रूढिं परित्यज्य योगः किमर्थमङ्गीक्रियते? तथाच रथकारन्यायविरोधः ; रूढिपरित्यागोऽन्याय्य इति रथकारन्याय इत्याशङ्क्याह—

---

धर्मेषु कश्चित् साक्षादुपायत्वेन शास्त्रचोदितोऽपि (प्रपत्तिरपि) अन्तर्भवेत्, तदा न कापि हानिः। ननु मानसाभ्यासवन्त एव विदुरधर्मव्याधादयः स्मर्यन्ते इति द्वितीयविरोधशंकां परिहरति धर्मेति। ते=प्रसिद्धाः। अत्र तु इत्यपि पाठः। इतिशब्दः प्रकारवचनः। एतदादय इत्यर्थः। **भारते वनपर्वणि** (अ. 210), "कौशिको नाम तपस्वी स्वशिरसि उच्छिष्टं विसृष्टवतीं बलाकां तपोबलेन चक्षुषा दग्ध्वा भिक्षार्थं गृहं किञ्चित् प्रविष्टः, तत्र पतिशुश्रूषापरायां सत्यां विलम्बेनाऽऽगतायां कौशिकमुखं कोपज्वलितमालोक्य, नाहं बलाकेत्युक्तवत्याम्, कथमियमिदमजानात् इति विस्मितस्तां धर्मप्रभावं पृष्टवान् तया धर्मव्याधं गत्वा पृच्छेति प्रेरितः तत्सविधमेत्य मातापित्रादिरूपस्वदैवतपरिचरणमेव बलमिति प्रबुबुधे इत्युक्तम्। **शान्तिपर्वणि** (267), "कुलिंगपक्षिनीडीकृतस्वमस्तक. मनोजवेन सर्वलोकसंचारसामर्थ्ये स्वस्य ततस्संपन्ने साहंकारः, धर्मं प्राप्तो मयेत्यास्फोटितवान् तदहंकारशमनप्रवृत्तैः पिशाचैः, "तुलाधारो वणिग्धर्मा वाराणस्यां महायशाः। सोऽप्येवं नार्हते वक्तु यथा त्वं द्विजसत्तम" इति निकृष्टीकृतः वाराणसीं गतः एतद्गमनकाल एव स्वदिव्यचक्षुषा सर्वं ज्ञातवता तुलाधारेण स्ववृत्तं ज्ञापयता, 'समोऽहं सर्वभूतेषु' इत्येवमादिसूक्ष्मार्थं कुलिङ्गादिपक्षिमात्रपक्षी प्रतिबोधित आसीत्। विदुरस्तु व्यासपुत्रो विशिष्टज्ञानसंपन्नो भारते सर्वत्र प्रसिद्धः। एषां सर्वेषां वर्णावरत्वेऽपि भक्तिनिष्ठाः इति प्रसिद्धिरिति सत्यम्। परंतु, "धर्मव्याधादयोऽप्यन्ये पूर्वाभ्यासाज्जुगुप्सिते। वर्णावरत्वे संप्राप्ताः संसिद्धिं श्रमणी यथा" इति वचनात् **श्रीमद्रामायण**प्रसिद्धशबरीतुल्ये मोक्षसंप्राप्तिवचने **पूर्वाभ्यासा**दिति प्रयोगात् त्रैवर्णिकजातौ पूर्वं संपादितस्य भक्तियोगस्य संस्कारवशादस्मिन् जन्मनि गजेन्द्रस्येवानुवृत्तिरेषामित्यवगम्यते। अत्र वर्णावरत्व एव मोक्षलाभः इत्येतदंशमात्रे श्रमणी दृष्टान्तः। तत् सिद्धं नैते एतज्जन्मनि तदुपदेशग्रहणानुष्ठानप्रवृत्ता इति।

तृतीयं विरोधं परिहरति वक्तेति। हंससंभाषणरूपस्वानादरवाक्य रैक्वप्रशंसावाक्यश्रवणात् रैक्वतो विद्याग्रहणाय क्षत्तृद्वारा तमन्विष्योपसद्य अश्वतरीरथाद्युपहारसमर्पणपूर्वकम्, "शाधि मां यां देवतामुपास्से" इत्यभ्यर्थितो रैक्व प्रथमं प्रत्याख्यानकाले, 'अह हारेत्वा शूद्र तवैव सह गोभिरस्तु' इति शूद्रेति तं संबोधयति। श्रुतौ अस्तु इत्यस्य इत्वेति कर्ता। इत्वा=रथः। हारसहित इत्वा हारेत्वा। पुनरधिकं द्रव्यम् आत्मनः कन्याञ्चाऽऽनीय तस्मिन् समर्पितवति संतुष्योपदेष्टुमारभमाणोऽपि शूद्रेत्यभिमुखयति, "आजहारेमाः शूद्रानेनैव मुखेनाऽऽलापयिष्यथाः" इति। अत्र शूद्रपदं न निन्दया प्रयुक्तम्, धार्मिकवरस्य निन्दनायोगात्। उत्तरवाक्ये प्रशंसनीयतादशायां निन्दनायोगाच्च। जातिपरत्वे तु वस्तुस्थितिकथनमिति युक्तम्। अतो जानश्रुतिः शूद्र एव। तस्मै संवर्गविद्यारूपपरविद्योपदेशात् शूद्राधि-

क्षत्तृप्रैषादीति। क्षत्ता राजाज्ञाकर्ता तस्य प्रैषः प्रेषणम्। अयमर्थः—रैक्वपरिज्ञानार्थं क्षत्तृप्रेषणेन अन्यैरपि, 'उत्तरत्र चैत्ररथेन लिङ्गात्' इत्यादिभिः सूत्रस्थैर्लिङ्गैर्जानश्रुतेः क्षत्रियत्वं स्फुटतरविदितमेव। ततश्च, 'शुचेर्दश्च' इति व्युत्पत्त्या, 'शोचनाच्छूद्रः' इति निरुक्तेन च शूद्रशब्दो जानश्रुतौ प्रयुज्यते: न पुनः शूद्रजातित्वेनेति निर्णय इति ॥ १२७ ॥ इत्यपशूद्राधिकरणम् ॥ २६ ॥

२७ ॥ अथ अर्थान्तरत्वादिव्यपदेशाधिकरणम् ॥ १-३-१० ॥

सूत्रम्—आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ पत्यादिशब्देभ्यः ॥ ४०-४२ ॥

(१२८) धृत्वेति प्राच्यवाक्यप्रकृत इह भवेन्मुक्त आकाशनामा
बन्धे(द्धो)ऽसौ नामरूपे वहति तदनु च ब्रह्मभावे जहाति।
इत्यन्याय्यं पुरोक्तः पुनरयमभिसंभाव्य एव ह्युपाचो
ब्रह्मत्वं न ह्यवस्था श्रुतिषु च युगपत् ज्ञाज्ञतादिर्विभक्ता ॥ ३० ॥

इति अर्थान्तरत्वादिव्यपदेशाधिकरणम् ॥ २७ ॥

पूर्वं दहराधिकरणे दहराकाशस्य हृदयपरिमितत्वेनाल्पत्वमुक्तम्। तत्प्रसङ्गेनानन्तराधिकरणे

---

कारः श्रुतिसंमत इति चेत्–तत्र ; वक्ता—विद्योपदेष्टा रैक्वः जानश्रुतिं शूद्रेति अभिमुखयन् रूढ्यर्थासंभवात् योगार्थं विवक्षति। 'शुचेर्दश्च' इति औणादिकसूत्रेण शुचेर्धातोः रक्प्रत्ययो दकारश्च विहितः। ततः शोकवानिति तदर्थः। विद्याया अभावाच्छोकः। शूद्रत्वजातिवचनं तु निष्प्रयोजनम्। योगार्थवचनं तु उपदेशार्हत्वस्य स्वगृहीतस्याऽऽविष्करणात् प्ररोचनातिशयात् सार्थम्। 'तत् किं शूद्रजातेरनुपदेश्यत्व नियमानुसारेण कल्प्यते रूढिभंगः' इत्यत्र, क्षत्रियत्वस्य स्फुटमवगमात् रूढ्यर्थबाधादेवमित्याह क्षत्त्रिति। क्षत्तुरत्र रैक्वान्वेषणाय प्रेषणं कृतमस्ति। राजान्तःपुररक्षणस्यैव क्षत्तृरूपसंकरजातिकार्यत्वात् क्षत्तृसेव्यकस्य क्षत्रियत्वं सिद्धम्। आदिना बहुदायी बहुपाकी इति पक्वान्नदायित्वादिकं गृह्यते। तत् शूद्रस्य न भवति। संवर्गविद्याशेषभूते उपरितने उपाख्याने च कापेयः शौनको ब्राह्मणः, अभिप्रतारी काक्षसेनिः क्षत्रियश्च प्रस्तुतौ। अभिप्रतारिणः कापेययाज्यत्वात् कापेयस्य च चित्ररथरूपक्षत्रियवंशयाजकत्वात् अभिप्रतारी चैत्ररथक्षत्रिय इत्यवगम्यते। तयोरिवानयोरपि विप्रक्षत्रियभावो युक्तो ग्रहीतुम् ; जानश्रुतिः क्षत्रियः विद्यान्यत्वे सति संवर्गविद्योपाख्यानसंबन्धित्वात् अभिप्रतारिवदिति।

चि. टी. इत्यादिभिः सूत्रस्थैरिति। इतिशब्दः तत्सूत्रोक्तार्थपरः। आदिपदेन क्षत्रियत्वगतेश्चेति पूर्वसूत्रोक्तग्रहणम्। उत्तरत्रेत्यन्तसूत्राभिमतैरित्युक्तं भवति। तानि च क्षत्तृप्रेषणादीनि ॥ १२७

३०. एतदधिकरणानन्तरं पूर्वप्रकृतप्रमिताधिकरणगुणसूत्रद्वयमस्ति। इदं प्रागेव सूत्रद्वन्द्वद्वयान्तरिति परामृष्टम्। तदस्य पृथग्व्याख्यानमनपेक्षितमिति एतद्विहाय उपरितनाधिकरणार्थमाह। तत्र परमतनिरसनरूपो विशेषः भाष्ये भाष्यार्थदर्पणे च द्रष्टव्यः। अस्यापशूद्राधिकरणेन सह संगतेर्न प्रसक्तिः। तस्य प्रासंगिकत्वात्। प्रमिताधिकरणगर्भ एव तन्निवेशात्। प्रमिताधिकरणसूत्रयोः तदुपरि वर्तमानतया प्रमिताधिकरणेन सहैव संगतेरौचित्याच्च। यदि तु प्रमिताधिकरणमपि प्रासंगिकं स्यात् ,

परमात्मन एवाङ्गुष्ठप्रमितत्वमुक्तम् । तत्रैव च मनुष्याधिकारत्वप्रसङ्गात् अधिकरणत्रयं मध्ये निवेशितम् । तदनन्तरं पूर्वाधिकरणशेषोऽपि समापितः। अधुना पूर्वश्रुतदहरविद्यायां वेदनस्थानत्वेन(?) तदनन्तराधीतस्य, 'आकाशो ह वै नाम' इत्यादिप्रकरणस्य जीवपरत्वमाशङ्क्य निराक्रियत इति संगतिः । तदर्थविचारस्तु—छान्दोग्ये, 'आकाशो ह वै नामरूपयोर्निर्वहिता' इत्यत्राकाशशब्दनिर्दिष्टः किं मुक्तात्मा, उत परमात्मेति । किं, 'धूत्वा शरीरमकृतं कृतात्मा' इति मुक्तस्यानन्तरप्रकृतत्वमाकाशशब्दस्य मुक्तपरतामवगमयति, नेति । किं मुक्तस्यापि नामरूपनिर्वोढृत्वं संभवति, नेति । किमत्र नामरूपनिर्वोढृत्वं नामरूपभजनेन, उत नामरूपकर्तृतयेति । किं, 'ते यदन्तरा' इति निर्देशः कर्तृतया निर्वोढृत्वमुपपादयति, नेति । 'आकाशो ह वै नामरूपयोर्निर्वहिता' इत्यत्र श्रूयमाण आकाशः, 'धूत्वा शरीरमकृतं कृतात्मा' इति पूर्वत्र प्रतिपन्नजीव एव; सर्वत्रापि प्रकृतग्रहणस्य न्याय्यत्वात् । असौ जीवो बन्धकाले नामरूपे गृह्णाति । तदनु च ब्रह्मभावे नामरूपे विजहाति । अतः पूर्ववाक्योक्तो जीव

---

तदा, "यत्प्रसंगेन यदागतम्, तत्समाप्तौ तद् बुद्धिस्थं जायते" इति न्यायेन दहराधिकरणेन संगतिर्वक्तव्या स्यात् । भाष्ये, "दहराकाशः प्राप्यतयेहोपसंह्रियते" इति भाषितत्वात् दहरविद्याविषयत्वप्रतीत्या प्रमिताधिकरणं प्रासंगिकमित्याकलय्य तथैव संगतिमाहुः । मध्यगताधिकरणस्य प्रासंगिकत्वाभावेऽपि अदृश्यत्वाधिकरण-द्युभ्वाद्यधिकरणयोरिवैकविद्याविषयकत्वसंभवात् प्रमिताधिकरणं न प्रासंगिकम् ; प्रमिताधिकरणभाष्यारम्भे च न प्रसंगसंगतिरुक्तेति तेन सह संगतिवर्णनं युक्तम् । पूर्वं, 'ज्योतिर्दर्शनात्' इत्यत्र ज्योतिःपदेन परमात्मदिव्यमंगलविग्रहस्य प्रसिद्धिबलात् ग्रहणेऽपि आकाशपदस्य तथा विग्रहे प्रसिद्ध्यभावात्, पूर्वं प्रजापतिवाक्ये जीवस्यैव प्राधान्येन निरूपितत्वात्, 'श्यामाच्छबलं प्रपद्ये........ब्रह्मलोकमभिसंभवानि' इति जीवस्यैव तदनन्तरमपि प्राधान्येन निर्देशात्, उपसंहारेऽपि, 'लिन्दुमाभिगाम्' इति तस्यैव प्राधान्यदर्शनात्, आकाशशब्दावयवार्थस्य च जीवेऽपि संभवात् समन्तात् प्रकाशनार्हो जीव इति वा समन्तात् प्रकाशमानो मुक्तजीव इत्येव वा जीवग्रहणमेव युक्तमित्युत्थितेः संगतिः । संगतिमिमां संगृह्णन् उपरितनवाक्यस्यापि तदनुकूलत्वमाह पूर्वपक्षी । "धूत्वा शरीरम्........ अभिसंभवानि" इति पूर्ववाक्ये मुक्तस्योक्तत्वात् तस्य धर्मभूतज्ञानद्वारा समन्तात् प्रकाशमानत्वमस्तीति स एवेह प्रकृतवाक्ये श्रुत आकाशो भवेत् ; न तु प्रजापतिवाक्येनापि व्यवहितो दहराकाशः । तर्हि नामरूपनिर्वोढृत्वम्, 'ते यदन्तरा तद् ब्रह्म' इति ब्रह्मपदादि च न घटत इति चेत्—तत्राह बन्ध इति । चिन्तामणौ बन्धकाले इति व्याख्यानादयमेव पाठः । बद्ध इति च पाठान्तरम् । निर्वहितेत्यस्य निश्शेषवोढेत्यर्थात् जीव एव नामरूपवोढृत्वसत्त्वात् तदुपपत्तिः । न च निरुपसर्गबलात् निष्पादकत्वरूपे अथवा परिपालकत्वरूपेऽर्थ एव स्वारस्यमिति शंक्यम्-कल्पितस्य नाम्नः वाच्यार्थवत्त्वे जीवस्य स्वस्मिन् तदर्थसमन्वयानुगुणप्रवृत्त्या, लब्धस्वरूपसंपोषणव्यग्रताधिक्याच्च तादृशनिर्वाहकत्वस्यापि जीवे संभवात् । ब्रह्मशब्दोऽपि घटते, 'ते यदन्तरा तद् ब्रह्म' इत्यस्य, यत्=यस्मात् ते नामरूपे अन्तरा=विहाय वर्तेते, तत्=तस्मात् ब्रह्मेत्यर्थात् नामरूपराहित्यावस्थायां ब्रह्मत्वमित्यर्थात् । न च ब्रह्मत्वं देवदत्तत्वादिवत् सहजम्, न त्वागन्तुकमिति वाच्यम् ; यस्मात् तस्मात् इति प्रयोगवशादेवाऽऽ

एवोत्तरवाक्यस्थो भेदेन(वाक्यतोऽस्याभेदेन ?) प्रतिपाद्यते। स एवमुक्त एवाऽऽकाश इति पूर्वपक्षमनूद्य निराकरोति—धूत्वेत्यादिना अन्याय्यमित्यन्तेन। तदेव विवृणोति—पुरोक्त इति। अयमर्थः—द्वौ खलु, 'धूत्वा शरीरम्' इत्यत्र पुरोक्तौ। अभिसंभविता कश्चिदेको जीवः, अभिसंभाव्यस्तु परमपुरुष एव। 'ब्रह्मलोकमभिसंभवानि' इति ब्रह्मलोकशब्देन तस्यैवोपादानात्। ब्रह्मलोकशब्दस्य निषादस्थपतिन्यायेन सामानाधिकरण्येन परमपुरुषनिष्ठत्वात् स एवाभिसंभाव्यतया पूर्वोक्तः परमपुरुष एवायमुत्तरवाक्ये पुनराकाशशब्देनोच्यते। तेनाकाशशब्दस्य प्रकृतपरामर्शित्वं सुस्थमेव। प्रधानतया प्रकृतस्य परमपुरुषस्योपादानात्। ननु, 'ब्रह्मलोकमभिसंभवानि' इत्यत्र जीव एव मुक्तावस्थो ब्रह्मलोकशब्देनोच्यत इति किमर्थं न कल्प्यत इत्याशङ्क्याह—ब्रह्मत्वमिति। अत्र हि ब्रह्मत्वं नित्यसिद्धं स्वाभाविकमेवोच्यते; न पुनः कादाचित्कं क्रियाविशेषसाध्यं मुक्तरूपम्। तेन

---

गन्तुकत्वावधारणात्। अत एव, 'ब्रह्म वेद ब्रह्मैव भवति' इति ब्रह्मत्वस्य प्रागस्थितस्य प्राप्तिरप्युच्यते। परमात्मनि तद् ब्रह्मत्वं कामं सार्वदिकं स्यात्, अथाप्युभयसाधारणमेव ब्रह्मत्वमिह कादाचित्कत्वात् अवस्थारूपम्। एवमेवामृतत्वाभयत्वादिसाहचर्यमप्युपपन्नम्। एवञ्च ब्रह्मभावे=ब्रह्मत्वावस्थायां प्रसक्तायाम् अयं ते जहाति। तदनु इत्यनेन निर्वहितेति तृचः कालविशेषवाचित्वाभावात् वर्तमानार्थकत्वप्रसक्तिर्नास्तीति यथायथं भूतकालिकनिर्वहणमादायोपपत्तिरिति सूचितम्। एवं मुक्तपरमात्मनोर्भेदस्वीकारेण पूर्वपक्षः। पूर्वपक्षी एतावत्यनुपरम्य स्वाभिमतब्रह्मत्वरक्षणाय तयोरेकद्रव्यत्वमपि सुवचमित्यपि मन्यते। तदाशंकापरिहारश्च गुणसूत्रद्वयेन कृत इह श्लोके अन्ते ज्ञापयिष्यते। अथ सिद्धान्तमारभते इत्यन्याय्यमिति। पूर्ववाक्ये, 'अकृतं कृतात्मा ब्रह्मलोकमभिसंभवानि' इति अभिसंभविता=प्राप्ता जीवः, अभिसंभाव्यः=प्राप्यः परश्च निर्दिष्टौ। तत्र वाक्ये प्रथमान्तपरामृष्टस्य प्राधान्यम्, न तु कारकान्तरस्येत्याशयेन हि जीवग्रहणमिह मन्यते। तदयुक्तम्; न ह्यत्र स इति तच्छब्दः पूर्वपरामर्शी लक्ष्यते, येन उपक्रमाधिकरणे, "स स्वां देवतामाच्छैत्" इत्यत्रेव कर्तुरेव परामर्श इति स्यात्। अतः शाब्दप्राधान्यस्यानुपयोगात् आर्थप्राधान्यशालिनोऽभिसंभाव्यस्य ग्रहणमेवोपपन्नम्। वस्तुतः तद्विचारो व्यर्थः; उपात्तस्याऽऽकाशशब्दस्य योऽर्थः प्रसिद्धः, स एव हि ग्रहीतव्यः। उक्तञ्च प्रागेव 'प्रसिद्धेश्च' इति श्रौतप्रसिद्धिराकाशशब्दस्य परमात्मनीति। निर्वहितेति पदप्रसिद्धिरपि तत्रैव। यत्तु ते यदन्तरेति वाक्येन यस्मात् ते विना, तस्माद् ब्रह्मेत्युक्तमिति, तदपि न। यस्मादित्यर्थस्वीकारेऽपि, यस्मात् ते अन्तरा, तस्मात्=नामरूपवश्यत्वप्रसक्त्यभावात् तयोर्निर्वोढेति पूर्वत्रान्वयसंभवात्। तद् ब्रह्मेति तु आकाशस्य मुख्यब्रह्मत्वोक्तिरेव। उत्तरत्रान्वयासंभवादप्येवम्। न हि ब्रह्मत्वमवस्था। तस्मादिति तदधीनत्वं तत्र कथम्। जगत्कारणत्वं हि ब्रह्मलक्षणं श्रौतम्। अकारणे कथं ब्रह्मत्वोद्भवः। न चास्य कारणब्रह्मणा मुक्तावेकीभावः; अनादेर्भेदस्य नाशायोगात्। "मिथ्यैतदन्यत् द्रव्यं हि नैति तद्द्रव्यताम्' इति पराशरपरमर्षिपरास्तं हि तत्। पश्चादपि पृथगेव चेत्, तत् तर्ह्यजगत्कारणमब्रह्मैव। ब्रह्मैव भवतीति तु, विष्णुरेव भूत्वेतिवदुपपन्नम्। वस्तुतो यदिति प्रथमान्तम् यत् सर्वदा नामरूपरहितम्, तद् ब्रह्मेत्येवार्थः संभवति। स्वकर्माधीननामरूपरहितं हि तत्। तस्मादन्याय्यमेव त्वदुक्तं सर्वम्। ननु

पूर्वावस्थाग्रहणेनोत्तरावस्थाग्रहणमेव जीवस्य ब्रह्मत्वमुचितमित्यसंगतमेतत्। किंच भवता जीवस्य पूर्वमुक्तत्वम्, अनीशत्वमब्रह्मत्वम्, मुक्तावस्थायां तस्यैव सर्वज्ञत्वमीशत्वं ब्रह्मत्वमित्युच्यते। तत् श्रुतिविरुद्धमेव। श्रुतिषु युगपदेव, 'ज्ञाज्ञौ द्वावजावीशनीशौ' इति जीवब्रह्मणोर्विभक्तत्वेनाभिधानात्। अतो नित्यसिद्धबृहत्त्वबृंहणत्वगुणयोगी परमपुरुष एवाऽऽकाशशब्देनोच्यत इति सिद्धम्॥ १२८॥

इति अर्थान्तरत्वादिव्यपदेशाधिकरणम्॥ २७॥

(१२९) विश्वात्माऽनन्तभूमा नियमनधृतिकृन्मुक्तभोग्यस्वभावो
दह्रस्वाधारसर्वो हृदयपरिमितावस्थया सर्वयन्ता।
देवादीनामुपास्यो वसुमुखविबुधैः स्वात्मभावेन सेव्यः
शूद्राद्योपास्त्यनर्हः प्रभुरिह बुबुधे नामरूपैककर्ता॥ ३१॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां
प्रथमस्याध्यायस्य तृतीयः पादः॥

उक्तानां दशानामधिकरणानां प्रधानार्थभूतान् भगवद्गुणान् परिसञ्चष्टे—विश्वात्मेति।

---

बृहदारण्यके याज्ञवल्क्योपदेशरूपायां दहरविद्यायाम्, "स वा एष महान् अज आत्मा योऽयं विज्ञानमयः य एषोऽन्तर्हृदय आकाशः तस्मिन् शेते सर्वस्य वशी" इति महत आत्मनः परस्य विज्ञानमयजीवैक्यमदर्शि। एवं श्रुतिप्रतिपन्नस्यैक्यस्य न्यायेन कथं बाध इत्याशंकायां गुणसूत्रयोरर्थं संगृह्य समाधत्ते **श्रुतिष्विति**। **युगपत्** एकस्मिन्नेव काले ज्ञत्वाज्ञत्वेशत्वानीशत्वादिकं विभिन्नव्यक्तिनिष्ठतया श्रुतिषु दर्शितमित्यर्थः। अयं भावः— याज्ञवल्क्योपदेशे श्रुतं परजीवैक्यं कदेति विमर्शनीयम्। न तावत् मनोवाक्कायव्यापार-दशारूपजागरादौ, तदा, 'आत्मनि तिष्ठन्....आत्मानमन्तरो यमयति' इति तन्नियन्तृतया तदुक्तेः। एवं, 'द्वा सुपर्णा' इत्यादि भाव्यम्। तत्रैवोपदेशे सुषुप्तौ, "प्राज्ञेनाऽऽत्मना संपरिष्वक्तः" इति, उत्क्रान्तौ, "प्राज्ञेनाऽऽत्मनान्वारूढः" इति च भेदेनोभयोर्निर्देशो दृश्यते। मुक्तौ भेदेन निर्देशश्च, मुक्तोपसृप्यसूत्रेण, 'पुरुषमीक्षते' इत्यादिना च प्राक् दर्शितः। अतः सार्वदिकभेदविषये श्रुतयः सन्ति। "ज्ञाज्ञौ द्वावजावीशनीशौ" इत्यादिकमपि भाव्यम्। अतः पूर्वम्, 'य एष संप्रसादोऽस्माच्छरीरात् समुत्थाय.... एष आत्मेति होवाच' इति दहरविद्यावाक्यमादायैक्यप्रश्ने यत् समाधानमुक्तम्, "इतरपरामर्शात् स इति चेन्नासंभवात्" इति सूत्रे, तदेव एतदैक्योपदेशेऽपि भाव्यम्। वस्तुतः, 'योऽयं विज्ञानमयः' इत्यस्य आत्मेत्यनेन नाभेदेनान्वयः; किंतु योऽयं विज्ञानमयस्तस्मिन् महानज आत्मा शेते इत्यन्वय इति प्रागेवोक्तम्। अतः सर्वस्य वशी सर्वस्येशानः इत्येवं सत्तर्कानुगृहीतानेकभेदश्रुत्यनुसारेणाबाधेनाद्वैतश्रुति-निर्वाहः कार्य इति सिद्धमेवेति॥ १२८॥ **इति अर्थान्तरत्वादिव्यपदेशाधिकरणम्॥**

३१. अस्मिन् पादे मुख्यप्रासंगिकसर्वाधिकरणसिद्धान् दश कल्याणगुणान् गणयति **विश्वेति**। **अनन्तभूमेति**। ननु **भूम**शब्दो भूमविद्यायां विपुलवाची। अतोऽपरिच्छिन्नत्व तत एव ज्ञातमिति **अनन्त**पदं किमर्थमिति चेत्—तत्र भूमसुखं विपुलसुखमित्युक्तम्। सुखञ्चाऽऽनन्दमीमांसोक्तरीत्या

सर्वान्तर्यामी, अनन्तैश्वर्यविशिष्टः, नियमनेन सर्वकार्याधारः, मुक्तैरुपभोग्यस्वभावः, परिमितपरिमाणरूपदहरस्वाधारसर्वलोकः, हृदयपरिमितावस्थया सर्वनियन्ता, देवादीनामुपास्यः, वसुमुखैर्देवैः स्वान्तर्यामित्वेन सेव्यः, शूद्रादीनामुपासनानर्हः, नामरूपैककर्ता प्रभुर्नारायण इह तृतीये पादे बुबुधे = बोधित इत्यर्थः ॥ १२९ ॥

इति निखिलतार्किकचूडामणिना सर्वतन्त्रस्वतन्त्रेण
कुमारवेदान्ताचार्यपरनाम्ना श्रीमद्वेङ्कटनाथवरदगुरुणा
विरचिते शारीरकाधिकरणचिन्तामणौ
प्रथमस्याध्यायस्य तृतीयः पादः ॥

—०—०—

## अथ अधिकरणसारावल्यां प्रथमस्याध्यायस्य चतुर्थः पादः ॥

एवं त्रिभिः पादैरस्पष्टतरास्पष्टस्पष्टरूपजीवादिलिङ्गकानि वाक्यानि जीवपरत्वेनाशङ्क्य परमात्मपरतया निर्णीतानि ; अथ स्पष्टतरजीवादिलिङ्गकानि वाक्यानि चतुर्थपादे परमात्मपरतया निर्णीयन्त इति पादसंगतिः । तान्येव तत्तच्छायानुसारीणीत्यभिधीयन्ते । पूर्वत्राकाशशब्दस्य तत्पूर्ववाक्योक्तजीवपरत्वमाशङ्क्य तद्वाक्यप्रतिपन्नब्रह्मलोकपरत्वं सूचितम् । तद्वदिहाप्यव्यक्तशब्दस्य सांख्योक्तप्रधानपरत्वमाशङ्क्य रूपकविन्यासप्रतिपादकवाक्यान्तरोक्तशरीरपरत्वं सिद्धान्तिना स्थाप्यत इत्यधिकरणसंगतिः । यद्वा पूर्वस्मिन्नधिकरणे जीवस्य प्रतिपाद्यत्वं निराकृत्य परमात्मनः

ऐश्वर्यमुखेनोत्पाद्यम् । तदैश्वर्यगतमपरिच्छिन्नत्वमर्थसिद्धमासीत् । भूमेत्यस्य महिमेत्यर्थश्च स्पष्टः । महिमा च न लोके वैपुल्यमात्रम् ; किंतु गोहिरण्यादिकमेव । किञ्चाऽऽनन्दमीमांसायां विभवभूतेषु विषयेष्वेवाऽऽनन्दशब्दप्रयोगात् सर्वस्याप्यनुकूलतया सुखत्वमानन्दत्वमस्तीति विपुलसुखमित्यस्यापि विपुलैश्वर्यमित्यर्थ एव भवति । अत एव भाष्ये, 'यत्र नान्यत् पश्यति' इति वाक्ये यत्रेत्यनेनोभयविभूतिविशिष्टतया ब्रह्मग्रहणमेव विपुलसुखग्रहणमित्याहृत्य सर्वस्य यत्रेत्येतदर्थे विशिष्टेऽन्तर्भावात् अन्यस्यादर्शनादिकम् अन्यस्याभावादेवेत्युक्तम् । अतः सर्वचिदचिद्विशिष्टं ब्रह्मैव विपुलसुखमित्यवदातम् । दहरस्वाधारसर्वः ; दहरस्य स्वस्य सर्वाधारत्वात् । एवं अंगुष्ठप्रमितत्वविशिष्टो भूतभव्येशः । सेव्यः आराध्यः । शूद्रेति । शूद्राद्याः अत्रैवर्णिकाः, तत्कर्तृकोपासनविषयत्वानर्हाः । उपास्तिपदं धातुवाचकं लक्षणयोपासनपरम् । अयं नवमगुणः । नामरूपप्रधानकर्तेति दशमः । प्रभुरस्मिन् तृतीये पादे विश्वात्मत्वादि-नामरूपैककर्तृत्वान्तगुणविशिष्टतया बुबुधे ज्ञात इति ॥ १२९

इति वात्स्यचक्रवर्तिवीरराघवाचार्यकृतिषु
अधिकरणसारावलिव्याख्यायां सारार्थरत्नप्रभायां
प्रथमस्याध्यायस्य तृतीयः पादः ॥

—०—०—

श्रीः

## अथ प्रथमस्याध्यायस्य चतुर्थः पादः ॥

चि. टी. अथादीति तृतीयश्लोक एव प्रथमाधिकरणविषयारम्भात् अधिकरणसंगतिस्तत्रैव वक्तुमुचिता— अथापि संगतित्वाविशेषादत्रैव लाघवादुपन्यस्यते पूर्वमाकाशेत्यादिना । पूर्वाधिकरणान्ते

प्रतिपाद्यत्वमुक्तम्, इह पुनः प्रधानस्य प्रतिपाद्यत्वं निराकृत्य परमात्मनः प्रतिपाद्यत्वमुच्यत इति संगतिः। तदर्थविचारस्तु–कठवल्लीषु, 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यत्राव्यक्तशब्देनाब्रह्मात्मकं प्रधानमभिधीयते, नेति। किमस्मिन् मन्त्रे तन्त्रसिद्धप्रक्रियाप्रत्यभिज्ञानमस्ति, नेति। किमत्र परत्वं वशीकार्यतया, उत तान्त्रिककारणभेदेनेति। अत्र तृतीयचतुर्थपादयोः संगतिकथनपूर्वकं चतुर्थपादस्था(स्थिता)नामष्टानामधिकरणानां पेटिकाद्वयरूपत्वमप्याह—

(१३०) निर्णीतं वाक्यजातं परविषयतया स्पष्टजीवादिलिङ्गं
तत्तच्छायानुसारि प्रथयति तु वचस्तत्परं तुर्यपादे।
षड्भिर्द्वाभ्यां च तत्र प्रशमयति नयैः सांख्ययोगोक्त(त्थ)शङ्कां
घट्टौ(ट्टो) जाघट्ट इत्थं कथितनिगमनं त्वष्टमं केचिदूचु(दाहुः) ॥ १ ॥

---

मुक्तादप्यन्यत् ब्रह्मेत्युक्तम्। तत्र युक्तम्, "पुरुषान्न परं किञ्चित्" इति अधिकस्य निषेधादित्याक्षेपोऽपि विवक्षितः। अत एवायं पादः अयोगव्यवच्छेदार्थोऽपि। अत्राऽऽनुमानिकमपीति अपिशब्दनिर्देशात् ब्रह्मापीष्यत इति अन्ययोगशंकापरत्वोक्तावपि कारणत्वाधिकरणे अयोगशंका स्पष्टा। अपिशब्दः कतिपयोपनिषदां ब्रह्मपरत्ववत् अन्यासां तन्निषेधेन सांख्यमात्रपरत्वमपीति तात्पर्यको वा, विरोधार्थविवक्षया प्रधानस्यानुमानसिद्धत्वेऽपि विशेषांशकथनाय श्रुतौ तदुक्तिरित्यभिप्रायको वा भवतु। अतो यथायथमयोगोऽन्ययोगश्च निरस्तः। अत्र ह्यध्याये पूर्वपूर्वपादापेक्षया उत्तरोत्तरपादे पूर्वपक्ष्यनुकूलतराणि वाक्यानि विचार्यन्त इति प्रागेवोक्तम्। तदनुगुणां पादयोः संगतिं प्रदर्शयन् तुर्यपादे पेटिकाद्विकरूपेण विभागमप्याह निर्णीतमिति। यत्र वाक्यजातरूपे उपनिषद्विद्यासंदर्भे जीवस्याचेतनप्रधानादेर्वा लिंगं स्पष्टम्, न तु तत्पूर्वपाद इवास्पष्टम्, तत् वाक्यजातं वाक्यसमूहः एकैकोऽपि परमात्मविषयकतया निरधारि तृतीये पादे। तुर्ये=चतुर्थे तु पादे तत्तच्छायानुसारि-जीवाजीवप्रतिपादकवाक्यजातरूपसांख्यादिशास्त्रवचनच्छायां भजत् तद्वदेव प्रतीयमानं वचः औपनिषदसंदर्भमपि तत्परं परमात्मतदनुबन्ध्यर्थप्रतिपादकत्वेनैव प्रथयति=प्रकटयति। मा भूत् स्पष्टजीवादिलिंगानामन्येषां सांख्यादिपरत्वम्; छायानुसारिवाक्यजातं तु सांख्यादिपरमेवेत्याक्षेपं प्रतिक्षिपतीति यावत्। तत्र मतान्तरप्रतिक्षेपे षड्भिः नयैः अधिकरणैः सांख्यैरुक्तां शंकां शमयति। अथ द्वाभ्यां नयाभ्यां योगैः योगशास्त्रनिष्ठैरुक्तां शंकां शमयति। योगशब्दस्य योगशास्त्र इव तच्छब्दविवक्षितशास्त्रनिष्ठेष्वपि प्रयोगः प्राचां प्रसिद्धः। अत एव न्यायभाष्ये, "अथ योगानाम्" इति प्रयोगः। परं तत्र योगपदं युक्तिप्रधानकतर्कशास्त्रनिष्ठपुरुषपरम्। यद्वा सांख्यशास्त्रे योगशास्त्रे चोक्ताः येऽर्थाः तद्विषयकशंकां–तत्प्रतिपादकमित्याक्षेपमित्यर्थः। चिन्तामणौ उक्तेति पदस्यैव सत्त्वादेवम्। उत्थेति पाठे तु तत्तच्छास्त्रात् उत्थितां शंकामित्यर्थः। इत्थं शंकाशमकत्वेन घट्टौ पेटिके जाघट्टः सम्यक् संगच्छेते। पदयोजना तु घट्टो जाघट्टः इति पाठान्तरमुपलभ्य व्याख्याति। अपूर्वपाठस्योपलब्धस्य व्याख्याने तस्यास्तत्परत्वात्। इदानीं घट्टशब्दः एकवचनान्तत्वात् पेटिकाद्वयविभागपरः। जाघट्टपदं घट्टधातुनिष्पन्नं सुबन्तम् अकारान्तं तद्विशेषणमित्युक्तम्। भवतीति क्रियापद-

निर्णीतमिति। तृतीयपादे परविषयतया स्पष्टजीवादिलिङ्गं वाक्यजातं निर्णीतम्। चतुर्थपादे तु तत्तत्साङ्ख्योक्तच्छायानुसारिवाक्यजातं परमेव पुरुषं प्रतिपादयतीति पादयोः संगतिः। तत्रावान्तरपेटिकाविभाग(भेद)माह—षड्भिरित्यादिना। षड्भिरधिकरणैः सांख्योक्तार्थशङ्कां प्रतिक्षिपति द्वाभ्यामधिकरणाभ्यां योगसिद्धान्तोक्तमर्थं प्रतिक्षिपतीति विभागः। तथा च घट्टौ= पेटिके। जाघट्टः=परस्परं संघटेते इत्यर्थः। केचित्पुनराचार्या अष्टमं पुनरधिकरणमुक्तार्थनिगमन-मित्याहुः: अध्यायपरिसमाप्तिरूपत्वादस्याधिकरणस्येति ॥ १३० ॥

(१३१) द्वाभ्यां क्षेप्यं प्रधानं कपिलमतमथ त्वेकतोऽन्योक्तसंख्या
तुर्येणाव्याकृतोक्तेरपि विभुरवधिः स्थाप्यते द्वारवृत्त्या।
शुद्धाशुद्धौ च जीवावधिकरणयुगेऽनन्तरं वारणीयौ
शेषं तन्त्रान्तरोक्तेश्वरनिरसनकृत् तुर्यपादाष्टकेऽस्मिन् ॥ २ ॥

---

मर्थसिद्धम्। पूर्वं जाघट्ट इति तु यथाप्रसिद्धि यथाचिन्तामणि च घटधातोः तिङन्तं यङ्लुगन्तलङन्त-प्रथमपुरुषद्विवचनम्। एकः पक्ष उक्तः। षट्कस्य पेटिकात्वेऽप्युत्तरनयद्वयस्यैकपेटिकात्वमनंगीकुर्वतां पक्षमाह कथितेति। उपान्त्ये नये योगोक्तशंकापरिहारः। अन्तिमस्तु नयः पादचतुष्टयात्मकसमन्वयाध्याय-निगमनरूपः; एतेनेत्यनेन पादचतुष्टयार्थं प्रत्यभिज्ञाप्य विचारितेतरेषामपि वाक्यानां प्रकृतनिर्णीतार्थे उपसंहारकथनादिति। कथमन्तिमस्य तर्हि योगोक्तशंकापरिहारकत्वमुक्तम्, ईश्वरे निमित्तकारणमात्रत्वांशो योगेष्टः उपान्त्येनैव हि क्षिप्त इति चेत्—योगशास्त्रे, "ईश्वरप्रणिधानाद्वा; क्लेशकर्मविपाकाशयैः अपरामृष्टः पुरुषविशेष ईश्वरः" इति सामान्यरूपेणोक्तिः। न तु नारायणब्रह्मरुद्रादिविशेषस्तदिष्टः। तार्किकवत् तेषामपि कथञ्चित् निर्दोषत्वमीश्वरत्वञ्चैवाभिमतम्। तावन्मात्रज्ञानेन तत्प्रणिधानेन चित्तसमाधानं सुकरमिति नारायणत्वादिरूपविशेषानादरः। अन्तिमे चाधिकरणे पूर्वपक्षे हिरण्यगर्भ रुद्रादिशब्दानामपि कारणवाक्येषु दर्शनात् पुण्डरीकाक्षत्वादिविशिष्ट एव परमात्मेति निर्धारणमशक्य मिति सामान्याकारस्वीकारपरयोगानुयाय्याक्षेपघटनमपि भवतीति। एवं मूर्तीः स्वीकृत्य मूर्त्यन्तरे ईश्वरत्वपक्षः, तथा त्रिमूर्त्युत्तीर्णे परमत्वपक्षश्च तत्र निरस्येते इत्यन्यदेतत्। योगपक्षनिरासस्यापि तत्र सिद्धत्वात् तावता द्विकस्यैकपेटिकात्वमपीति प्रथमपक्षे आशयः। सांख्यनिरासः प्रथमपेटिकायाम्, तदितरसर्वसेश्वरनिरासो द्वितीयस्यामिति वा पेटिकाद्वयं भवतु। एवञ्चोपान्त्ये तार्किकस्यापि प्रवेशो भवति। उत्तरश्लोके तन्त्रान्तरोक्तेश्वरेति पदं तार्किकादितन्त्रग्राहकमपि हि स्यादित्यलम् ॥ १३० ॥

२. अधिकरणषट्कं सांख्यनिषेधकमित्युक्तम्। तत्र चतुष्कं प्रधानाद्यचेतनविषयम्, द्विकमात्मविषयकमित्यवान्तरपेटिके दर्शयन् प्रतिपाद्यमपि पृथक् पृथक् विशदयति द्वाभ्यामिति। अस्मिन्—पूर्वोक्ते तुर्यपादसंबन्धिनि अधिकरणाष्टके आद्याभ्यामानुमानिकाधिकरणचमसाधिकरणाभ्यां सांख्यमतं प्रधानत्वं क्षेप्यं भवति। न प्रधानतत्त्वापलापः; किंतु अव्यक्तशब्द इह प्रकरणे न प्रधान-प्रतिपादकः इति आद्ये उच्यते; अजाशब्दः नाब्रह्मात्मकप्रकृतिपर इति च द्वितीये। अथ अनन्तरम्

तत्र चतुर्थपादस्थानामष्टानामधिकरणानामवान्तरार्थभेदेनापि भेदमाह—द्वाभ्यामिति । द्वाभ्यामधिकरणाभ्यां कपिलाभिमतं प्रधानं प्रतिक्षेप्यम् । अनन्तरमेकेनाधिकरणेन कपिलाभिमततत्त्वसंख्या प्रतिक्षिप्यते । तुर्येण = चतुर्थेनाधिकरणेन अव्याकृतशब्दस्यापि प्रकृतिद्वारवृत्त्या विभुः = परमपुरुष एव अवधिरिति स्थाप्यते । तथा स प्रतिपाद्यत इत्यर्थः। अनन्तरमधिकरणयुगे शुद्धाशुद्धौ बद्धमुक्तौ जीवौ वारणीयौ । परतत्त्वं न भवत इति प्रतिपादनीयावित्यर्थः । अवशिष्टमधिकरणद्वयं योगतन्त्रोक्तनिमित्तमात्रेश्वरनिरसनकृदिति चतुर्थपादाधिकरणार्थविभागः ॥ १३१ ॥

२८ ॥ अथ आनुमानिकाधिकरणम् ॥ १-४-१ ॥

सूत्रम्—आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ सूक्ष्मं तु तदर्हत्वात् ॥ तदधीनत्वादर्थवत् ॥ ज्ञेयत्वावचनाच्च ॥ वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ महद्वच्च ॥ १—७ ॥

---

**एकतः** संख्योपसंग्रहाधिकरणेन **अन्येन**—सांख्येन, 'पञ्च पञ्चजनाः' इत्येतत्प्रतिपाद्यतयाऽभिमता पञ्चविंशतित्वसंख्या तन्मतचेतनाचेतनवर्गनिष्ठा क्षेप्या भवति । **तुर्येण** चतुर्थेन कारणत्वाधिकरणेन, 'तद्धेदं तर्हि अव्याकृतमासीत्' इत्यत्र **अव्याकृत**मिति शब्दस्य **द्वारवृत्त्या** प्रकृतिरूपविशेषणप्रतिपादनमुखेन **विभुः** सर्वव्यापित्वेन तत्रोक्तः परः **अवधिः** पर्यवसितार्थतया स्थाप्यते। **अव्याकृत**पदं प्रधानवाचकमपि, 'स एष इह प्रविष्टः आनखाग्रेभ्यः' इति प्रविष्टपरमात्मपर्यन्तवाचीति तत्रोच्यते । ननु चमसाधिकरणेऽप्यजा ब्रह्मात्मिकेत्युच्यत इत्युभयमप्यधिकरणमविशिष्टम्। उच्यते। तत्र, 'अणोरणीयान्...सप्त प्राणाः प्रभवन्ति' इत्युपक्रमतः परमात्माधीनैवाजेति ज्ञायत इत्युक्तम् । न तु अजाशब्दस्य विशिष्टपरमात्मपरत्वम् । 'जुषमाणोऽनुशेते' इत्यादौ कर्मकारकतया प्रधानमात्रस्यान्वयात् तदयोगात् । इह तु प्रलये विशिष्टस्यैव स्थित्यान्वयसंभवात् अव्याकृतपदं विशिष्टपरमेव । इदमसदादिपदस्याप्युपलक्षणम्। न च योगव्युत्पत्तेः शुद्धपरमात्मन्येव संभवात् द्वारता किमर्थमिति शंक्यम्; सूक्ष्मचिदचिद्विशिष्टरूपेणैव कारणतया तदन्वयाय संभवति विशिष्टवाचकत्वे प्रधानस्य तत्त्यागायोगात् । 'आत्मा वा इदम्' इत्यादौ स्वगत्या तत्सिद्धिरार्थिकीति मन्यते । एवमचेतनपरमधिकरणचतुष्कं विवृतम् । अथ द्विकं जीवपरं विभजति । अनन्तरम् **अधिकरणयुगे** जगद्वाचित्वाधिकरणे वाक्यान्वयाधिकरणे च **शुद्धाशुद्धौ**—उपास्याकारविशिष्टः आत्मा, कर्मवश्य आत्मा च **वारणीयौ,** 'यस्य वा एतत् कर्म', 'आत्मा वा अरे द्रष्टव्यः' इति वाक्यप्रतिपाद्यौ न भवत इति बोधनीयौ । अत्र अशुद्धः शुद्धश्च **शुद्धाशुद्धा**विति विग्रहः । अल्पाच्कत्वात् पूर्वं शुद्धपदनिपातः । अशुद्धः प्रथमाधिकरणे प्रतिपाद्यत्वेन शंकितः । एवं सांख्यविषयकं निवृत्तम् । **शेषं** प्रकृत्यधिकरणं सर्वव्याख्यानाधिकरणञ्च **तन्त्रान्तरे** योगशास्त्रे सेश्वरसांख्यरूपे तर्क-शैवादिरूपे च उक्तस्य निमित्तकारणमात्ररूपस्य नारायणत्वादिविशेषानाक्रान्तस्य, त्रिमूर्त्युत्तीर्णस्य, रुद्रत्व-ब्रह्मत्वाद्यन्यतमविशिष्टस्य वा तत्तत्कल्पितस्य सर्वस्य **निरसनकृत्** सत् निमित्तोपादानभूत-पुरुषसूक्तादिप्रतिपाद्यपुण्डरीकाक्ष श्रीमन्नारायणैकब्रह्मत्वस्थापकमिति॥

**चि. टी. परतत्त्वं न भवत इति प्रतिपादनीयौ** इति । परतत्त्वप्रतिपादकवाक्यमयत्वात् न शुद्धाशुद्धौ प्रतिपाद्यौ इत्यर्थः । इदमयोगव्यवच्छेदे अन्ययोगव्यवच्छेदे च घटते ॥ १३१ ॥

(१३२) अक्षाद्यव्यक्तनिष्ठं जडमथ पुरुषं तत्त्वकाष्ठां विविच्य
ब्रूते वल्ली कठानां परमतपठितां प्रक्रियामित्ययुक्तम् ।
तत्रत्या(स्था)नेकवाक्योदितविविधवशीकार्यमुख्यक्रमोक्तेः
शान्तात्मा विष्णुरुक्तः पुरुष इह परः प्रत्यभिज्ञाप्यते च ॥ ३ ॥

अत्र कठवल्ल्याम्, 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यादिवाक्यमिन्द्रियोपक्रममव्यक्तपर्यन्तं जडपदार्थं अथ=अनन्तरं पुरुषं तत्त्वकाष्ठारूपं विभज्य, परमतकथितां प्रक्रियामेव ब्रूत इति पूर्वपक्षमनूद्य प्रतिक्षिपति पूर्वार्धेन—अक्षादीति । अयुक्तत्वमेव विवृणोति—तत्रेति । अयमर्थः—अत्र खलु उत्तरोत्तरं कारणपरम्परा नोच्यते; अपितु वशीकार्यपरम्परामुक्त्वा पूर्वस्माद्वशीकार्यात् उत्तरस्य वशीकार्यत्वे परत्वं मुख्यत्वमुच्यत इति । अयमत्र पदान्वयः—तत्प्रकरणस्थानेकवाक्यप्रतिपादितवशीकार्य-

---

३. प्रथमाधिकरणार्थमाह **अक्षेति** । प्रागेव **अत्त्रधिकरणे प्रमिताधिकरणे** च **कठवल्ली** विचारिता । तत्र भागान्तरे विचार इह । तत्र जीवातिरिक्तविष्णुरूपेश्वरे साधिते कथमत्रायोगव्यवच्छेद इति चेत्—'पुरुषान्न परं किञ्चित्' इति कण्ठोक्त्येति भाष्यम् । यदि तु, 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इति उपायान्तरप्राप्यं विष्णुपदमुक्तम् । अत्र भागान्तरे अन्यविधोपाय परमप्राप्यं जीवात्मतत्त्वमेव, न त्वन्यदिति विष्णौ प्रकृतोपायप्राप्यत्वाभावमात्रमुच्यते, न सर्वथा विष्णुनिषेध इति कृत्वा प्रकृतवाक्यस्य जीवपरत्वे **अव्यक्त**पदस्य प्रधानपरत्वे च नैर्भर्यमिष्यते, तर्हि स्यादत्रान्ययोगव्यवच्छेदमात्रम् । अयमत्र पूर्वपक्षः—कठशाखाध्यायिनां वल्ली, "इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥ महतः परमव्यक्तमव्यक्तात् पुरुषः परः । पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः" इति वाक्येन सांख्यमतपठितां प्रक्रियामाह । कथमिति चेत्—**अक्षादि**=इन्द्रियेभ्य इति इन्द्रियाण्यारभ्य **अव्यक्तनिष्ठम्** अव्यक्ते निष्ठा=समाप्तिर्यस्य तत् प्रधानतत्त्वपर्यन्तं क्रमेण अक्ष-तद्गोचरार्थ-मनो-बुद्धि-महत्-अव्यक्तरूपं सांख्याभिमतं जडद्रव्यम्; **अथ** तदुपरि, 'अव्यक्तात् पुरुषः परः सा काष्ठा' इति पुरुषापरपर्यायजीवरूपमन्तिमतत्त्वञ्च विविच्य मिथोविलक्षणतया ज्ञापयित्वा । व्यक्ताव्यक्तज्ञविज्ञानान्मोक्षस्तैरुच्यते । अत्र तन्मतपारिभाषिकाणां मनोबुद्धिमहदव्यक्तपुरुषशब्दानां प्रयोगात् महदन्तेन व्यक्तोपन्यासः, ततोऽव्यक्तस्य, ततश्च पुरुषस्येति स एव विवेकोऽत्र विवक्षित इति ज्ञायते । नन्वेकापेक्षयाऽन्यस्य परत्वमत्र क्रमेणोच्यते । कीदृशमिदं तदिष्टं परत्वमिति चेत्—अत्र कारणत्वात्परत्वं दुर्वचम् इन्द्रियादीनि प्रति अर्थादीनां कारणत्वाभावात् । **परः** पश्चात्तना इत्यपि न भवति, मनआदीनां तन्मते अर्थाद्यपेक्षया पश्चात्तनत्वाभावात् । अतो भेदप्रदर्शनमेव चिकीर्षितम् । विवेकार्थमेव तत्त्वसंख्यानात् । तदिदं **विविच्येति** पदेन सूचितम् । यद्यपि तन्मते बुद्धिरेव महत्तत्त्वमिति तत्र ततः परत्वं नास्ति—तथापि उत्पत्तिदशायां महदिति व्यवहृतं जीवस्य देहित्वावस्थायामेवाध्यवसायोत्पादकं भवत् पश्चादेव बुद्धिशब्देन व्यपदिश्यत इति अध्यवसायोत्पादकत्वतदभावरूपदशाभेदविवेचने तात्पर्येण तथोक्तिरिति भाष्यम् । एवं संपन्नविवेकानां जीवतत्त्वरूपपुरुषस्य

प्रधानक्रमाभिधानादिति । किंचास्मिन् प्रकरणे, 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इति मुक्तप्राप्यस्थानाधिपतिर्विष्णुरेव 'पुरुषान्न परं किंचित् सा काष्ठा सा परा गतिः' इति प्रत्यभिज्ञाप्यते। स तु न जीवः। तेनेदं प्रकरणं सर्वमपि परमपुरुषपरमेवेत्याह—शान्तात्मेति ॥ १३२ ॥

---

कैवल्ये विश्रान्तिः सांख्येष्टाऽस्तोच्यत इति । पूर्वपक्षं निरस्यति इत्ययुक्तमिति । हेतुमाह तत्रत्येति । मध्यगतस्यास्य वाक्यस्य पूर्वोत्तरवाक्यकलापेन सहैकवाक्यत्वे संभवति वाक्यभेदस्यान्याय्यत्वात् तदनुरूपार्थपरिशीलनमेव युक्तम् । तदानीमेव परत्वमप्यत्रोच्यमानं यथावद् घटते । तथाहि—पूर्वम्, "आत्मानं रथिनं विद्धि शरीरं रथमेव च। बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च । इन्द्रियाणि हयान् आहुर्विषयांस्तेषु गोचरान्" इति भक्तियोगानुष्ठानोपयोगीनि आत्मशरीरादीनि रथादित्वेन रूपयित्वा हयरूपाणामिन्द्रियाणां वश्यत्वाभावे यथावत् पथि गमनाभावात् वैष्णवपदाप्राप्तिः, वश्यत्वे तत्प्राप्तिश्चाभिहिता । पश्चाच्च, 'यच्छेत् वाङ्मनसी प्राज्ञः' इत्यादिना एकैकस्यान्यान्यस्मिन् नियमनमुपदिष्टम् । एवं तत्रत्यानेकवाक्योदितानि वशीकार्याणि यानि तेषु मुख्यानां क्रमेण=उत्तरोत्तरतयोक्तिरिह मध्यवाक्ये भवति । इन्द्रियाणां वश्यत्वमावश्यकमिति किलोक्तम् । तावता तद्वश्यत्वमात्रेण कार्यसिद्धिरिति न मन्तव्यम् । तदपेक्षया अर्थाः शब्दादिविषयाः वशीकार्यत्वे पराः। तद्वशीकरणं दुष्करतरमिति यावत्। ततोऽपि दुष्करत्वं मनस इत्येवं दौष्कर्यातिशयक्रमः तत्रोक्तेषु सर्वेषु पदार्थेषु ज्ञाप्यते । एवञ्चैकमहावाक्यता। परत्वस्यैकरूपता च। श्लोके अनेकवाक्येत्यनेन आत्मानमिति, यच्छेदिति च पूर्वोत्तरसर्ववाक्यग्रहणम् । एवञ्च, 'बुद्धेरात्मा महान् परः' इति न महत्तत्त्वविषयकम्; किंतु पूर्वप्रस्तुतजीवात्मविषयकम्। तत्रानुक्तमत्राऽव्यक्तं किञ्चिदुक्तमस्ति; तत्रोक्तं शरीरञ्चानुक्तमस्ति। अतोऽव्यक्तपदं तत्स्थाने इति शरीरग्राहकं परिशेषात्। इदमेव सूत्रितम्-'शरीररूपकविन्यस्तगृहीतेः' इति। रूपकात्मना विन्यस्तानां मध्ये—निर्दिष्टानां मध्ये यत् शरीराख्यं रूपकविन्यस्तं शिष्टमस्ति, तस्याव्यक्तपदेन ग्रहणादिति तदर्थः। ननु पुरुषशब्देन जीवात्मा ग्राह्यः । न च परमात्मा तदर्थः; तस्य तद्घटकत्वाभावात् । न हि तत्र तस्य रूपकविन्यस्तता। तथाच कथमात्मशब्देनापि जीवग्रहणमिति चेत्—न; रूपकविन्यस्तेषु उत्तरोत्तरस्मिन् दुष्करत्वातिशयं प्रदर्श्य, अथारूपकविन्यस्तपरमात्मवशीकरणे अत्यन्तदौष्कर्यं प्रतिपाद्यते । एतद्वशीकरणे प्रथमं कृते पश्चादेवान्येषां वशीकरणमिति यावत । तदेव गीतम्, 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इति । न चायमप्रसक्तः; पूर्ववाक्ये, 'सोऽध्वनः पारमाप्नोति तद् विष्णोः' इति विष्णुशब्देन निर्देशात् । उत्तरवाक्ये च, 'तद्यच्छेच्छान्त आत्मनि' इति तन्निर्देशात् । अशान्तो ह्ययमात्मा शान्तिलिप्सया शान्तं परमात्मानमाश्रयति । अशनायाद्यूर्मिषट्करहित्यरूपशान्तिसमृद्धः प्रसन्नोऽवस्थितो भवति परमात्मा प्रपन्नविषये । तथाच पूर्ववाक्ये विष्णुरिति, उत्तरवाक्ये शान्तात्मेति चोक्तः परमात्मैव इह—मध्यवाक्ये पुरुषशब्देन प्रत्यभिज्ञाप्यते । अन्येषामुपायत्वमात्रम्; अस्योपायत्वमुपेयत्वञ्चेति चोच्यते परा गतिरिति, पर इहेति च। शान्तात्मा विष्णुरित्यस्य पदयोजनाकृतं व्याख्यानं न प्रकरणस्पर्शि। 'तदधीनत्वादर्थवत्' इति सूत्रस्य वेदान्तदीपदर्शितमवतरणमत्रान्तिमपादेऽभिमतम् ॥ १३२ ॥

(१३३) न ह्यर्था इन्द्रियाणां प्रकृतिरथ मनो हेतुरेषां न चेष्टम्
बुद्धिश्चैतन्न सूते ; न च महति महान् जायते बुद्धिसंज्ञा ।
भोक्तुर्युक्तं महत्त्वम् ; महति च(हि) न भवेदात्मता ; पारिशेष्यात्
अव्यक्तोक्तिः शरीरे ; तदिह न कपिलप्रक्रियाप्रत्यभिज्ञा ॥ ४ ॥

इत्यानुमानिकाधिकरणम् ॥ २८ ॥

अत्र साङ्ख्योक्तप्रक्रियाप्रत्यभिज्ञाऽभावं बह्वर्थविरोधप्रतिपादनेन कथयित्वा वाक्यस्य परमपुरुषप [र]मेव निगमयति—न ह्यर्था इति । अत्र, 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्युक्तम् । न खलु साङ्ख्यसिद्धान्तप्रक्रियायामिन्द्रियाणामर्थाः प्रकृतिरिति कथ्यन्ते । अथ मनो हेतुरेषां न चेष्टम्—अथैषाम्= अर्थानामिन्द्रियाणां मनो हेतुरिति साङ्ख्यानां न चेष्टम् ; सर्वेषामपीन्द्रियाणामाहङ्कारिकत्वात् । तत्र, 'मनसस्तु परा बुद्धिः' इत्युच्यते । सा बुद्धिरेतत्–मनो न सूते । अतस्तत्र विरुद्धम् । अयं च कश्चिद्विरोधः, 'बुद्धेरात्मा महान् परः' इत्युच्यते । साङ्ख्यसिद्धान्ते बुद्धिरेव महान् । तेन महत एव महान् जायत इत्युक्तं भवति । तदपि न घटते ॥ तर्हीत्र महान् पर इति न घटते ॥ उच्यते । जीव एव भोक्ता तस्य च महानिति विशेषणं युज्यत इत्याह—भोक्तुरिति । अत्र हेतुमाह–महतीति । ननु, 'महतः परमव्यक्तम्' इति महतः कारणत्वेनाव्यक्ताभिधानम्, 'अव्यक्तात् पुरुषः परः' इति साङ्ख्योक्तपुरुषाभिधानात्

---

४. यत्तु परशब्देन परस्परविवेक एव विवक्षित इति—तन्न ; तथासति व्युत्क्रमेणापि अव्यक्तात्परं महत्, महतो मनः, मनसोऽर्थः, अर्थादिन्द्रियमित्यपि वक्तुं शक्यतया श्रुत्यादृतक्रमस्य व्यर्थत्वात् । सांख्यसंमतं परत्वं तु कारणत्वप्रयुक्तं तद्ग्रन्थदृष्टम्, तदत्रासंभवीत्याह नहीति । 'बुद्धेरात्मा महान् परः' इति सर्वथाऽनुपपन्नम् ; स्वस्य स्वहेतुत्वाभावात् । तदिदं सर्वानुपपत्तिनिदर्शनतया महद्वेति विशिष्य सूचितमपि । ननु सिद्धान्तेऽपि विरोध एव जीवात्मनोऽणोर्महत्त्वाभावादित्यत्राह भोक्तुरिति । कार्यकरणदशायां स्वातन्त्र्यात् कारकान्तरतो महत्त्वं कर्तरि ; फलानुभवदशायाञ्च, 'फलञ्च पुरुषार्थत्वात्' इति भोक्तुः प्राधान्यात् महत्त्वम् ; न तु परिमाणरूपम् । तथाच फलान्तरभोगविवशे आत्मनि बुद्ध्यादिवशीकरणं दुष्करमित्युच्यते । एतच्चात्मनि महत्त्वे तु घटते । त्वन्मते तु महत्तत्त्वे आत्मत्वं नैव घटते, अचेतनत्वात् । अस्त्विदं सर्वम् ; अव्यक्तं हि पूर्वपक्षे प्रधानतया प्रकृतम् ; तस्य कथं निर्वाह इत्यत्राह पारिशेष्यादिति । रूपकविन्यस्तेषु शरीरमत्र न निर्दिष्टम् । तत्रानुक्तमव्यक्तमत्र निर्दिष्टम् । अतः शरीरपदस्थानेऽयमव्यक्तशब्दप्रयोग इति । कया वृत्त्या तत्परत्वम् ? यदि लक्षणया, तर्हि अव्यक्तपदं मुख्यार्थपरमेव स्वीकृत्य शरीरपदमेव प्रधाने लाक्षणिकमिष्यतामिति चेन्न—शरीरस्य तदर्हत्वात् रथिरथादिवाक्योक्तपुरुषार्थसाधनसमर्थत्वात् । शरीररूपार्थे अव्यक्तपदस्य नावश्यं लक्षणैव ; सूक्ष्ममित्यर्थे तदुक्तेः । आत्मगतरागद्वेषादेरपि शरीरगतसत्त्वरजस्तमोरूपसूक्ष्मगुणमूलकत्वात् । आहारशुद्ध्यादिना तन्निष्पत्तेः प्रामाणिकृया अपि दुर्ग्रहत्वाच्च । अनेनाऽऽत्मापेक्षया क्लेशेन वशीकार्यतां व्यक्तुं शरीरेऽव्यक्तपदप्रयोग इति । तथाच अर्थानामनन्वये शब्दानां सांख्यप्रसिद्धानां सद्भावमात्रेण न तन्मतप्रत्यभिज्ञेति । अतो बाधकसद्भावादप्रस्तुतप्रशंसयाऽपि तदर्थस्फोरणमिह न भवति । यत्तु मोक्षार्थसाध-

साङ्ख्योक्तमेव प्रत्यभिज्ञाप्यत इत्यत्राह—पारिशेष्यादिति । अयमर्थः—पूर्वत्र, 'आत्मानं रथिनं विद्धि शरीरं रथमेव च' इत्यादिना मन्त्रेणात्मशरीरादीनां रथिरथत्वादिरूपणं कृतम् । तेषु रूपितेष्वर्थेषु कस्मात् कस्य वशीकार्यत्वातिशय इति शङ्कायाम्, 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यादिना कस्माच्चित् कस्यचित् वशीकार्यत्वातिशय उच्यते । अत्र पूर्वमन्त्रोक्तार्थाः सर्वेऽप्युत्तरमन्त्रे स्वस्वशब्देन निर्दिष्टाः । शरीरमेकमेव न निर्दिष्टम् । पारिशेष्यात् तदेव शरीरमनेनाव्यक्तशब्देनोच्यत इति । अतोऽत्र कपिल-प्रक्रियाप्रत्यभिज्ञा नास्तीत्याह—तदिति ॥ १३३ ॥ इत्यानुमानिकाधिकरणम् ॥ २८ ॥

## २९ ॥ अथ चमसाधिकरणम् ॥ १-४-२ ॥

सूत्रम्—चमसवदविशेषात् ॥ ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥ कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ ८-१० ॥

(१३४) स्वातन्त्र्येण ह्यजाया निखिलजनकता सूच्यते क्वापि वाक्ये
बद्धोऽजस्तत्र शेते त्यजति पुनरिमां मुक्तभोगामजोऽन्यः ।
इत्युक्तेस्तान्त्रिकी सा त्वियमिति यदि, नाजात्वमात्राभिधानात् ;
अस्वातन्त्र्यप्रसिद्धेः सृजतिरपि परप्रेर्यतां नोपरुन्ध्यात् ॥ ५ ॥

ननु पारिशेष्य-स्थानप्रमाणाभ्यामव्यक्तकार्यभूतशरीरमात्रवाचकोऽव्यक्तशब्द इति पूर्वाधि-

---

नोपदेशिपूर्ववाक्यैकवाक्यत्वं विना फलान्तरार्थज्ञानविशेषपरमिदं वाक्यमस्त्विति—तदेवं निरस्तमेव । तथा ज्ञेयत्ववचनाच्च न प्रधानादिपरता । 'अशब्दमस्पर्शम्' इति वाक्यं तु प्राज्ञपरम् । महाप्रकरणमिदं मोक्षानु-बन्ध्युपायोपेयोपेतृरूपार्थत्रयपरमेव लक्ष्यते । अतो न प्रधानतत्त्वप्रसक्तिः । सर्वमिदमन्तिमसूत्र-त्रयोक्तमत्र इहशब्देन सूचयन् उपसंहरति तदिहेति । कपिलप्रक्रियेति । पदार्थप्रत्यभिज्ञा स्यात् । किं ततः । प्रक्रियाप्रत्यभिज्ञा तु नेत्यर्थः ॥ १३३ ॥ **इत्यानुमानिकाधिकरणम् ॥**

५. ननु **आकाशप्राणा**दिशब्दानामिवा**व्यक्त**शब्दस्यार्थान्तरपरत्ववर्णनात् पूर्ववाक्ये पुरुषपदेन परमात्मग्रहणेऽपि प्रकृतेः ब्रह्मात्मकत्वं न प्रतीयते । दुर्वचञ्च तस्यास्तदात्मकत्वम्, अकार्यत्वात् । तच्चाजाशब्देन स्पष्टमुक्तमिति श्रुत्यन्तरे तान्त्रिकप्रधानपरत्वं शंकतेऽनन्तराधिकरणे । तृतीयपादे, **'इत्युक्ते-स्तान्त्रिकी सा त्वियम्'** इत्येव सर्वत्र पाठः । अतो हेतुवाचकातश्शब्दाद्यभावात् इयं तान्त्रिकी सा तु इति प्रतिज्ञा । **इयम्** अजा सांख्यतन्त्रोक्ता **सा** प्रकृतिरेवेत्यर्थः । तत्र हेतुः **हि**शब्दघटितप्रथमवाक्येनो-च्यते । **अजामेका**मिति वाक्ये **प्रजा** इति चेतनाचेतनोभयग्रहणेन निखिलजनकता अजायाः **स्वातन्त्र्येण**—अन्यानधीनतारूपेण सूच्यते । अयं भावः—'स्वतन्त्रः कर्ता' इत्यनुशासनात् स्वातन्त्र्यं यद्यपि वाच्यम्—तथापि तत् यदि ज्ञानचिकीर्षाप्रयत्नाश्रयत्वम्, तदापि प्रकृतेर्न तद्भावः ; सांख्यैः अन्तः-करणे विषयसंबन्धरूपज्ञानस्य, 'प्रकृतिः कर्त्री', 'प्रकृतेः क्रियमाणानि गुणैः' इत्येवं बुद्धौ कर्तृत्वस्य चेष्टत्वात् । तस्य चानन्याधीनत्वं तदनुवत्त्यैव सिद्धम् । उपध्यनुक्तौ अनुपधिकत्वस्य तत्रतत्र लाभवत् । वस्तुतो लोके चेतनाचेतनसर्वसाधारण्येन कर्तरि लकारप्रयोगात्, 'विवक्षातः कारकाणि भवन्ति' इति

करणे समर्थितम्; तेन तद्वदेव, 'अजामेकाम्' इत्यादिवाक्यमुभयाभ्युपगताव्यक्तस्यैव वाचकं स्यादित्युत्थानेन संगतिः। तदर्थविचारस्तु–श्वेताश्वतरीयाजामेकामिति मन्त्रेणाब्रह्मात्मकप्रकृतिरभिधीयते, नेति। किं मन्त्रे यौगिकोऽजाशब्दोऽब्रह्मात्मकप्रकृतिपरः, उत ब्रह्मात्मकप्रकृतिपर इति। किं, 'बह्वीः प्रजाः सृजमानाम्' इति वाक्यावयवत्वमजाशब्दस्य स्वातन्त्र्येण सृष्टिपरतामवगमयति, नेति। किं तैत्तिरीयाजामेकामित्यजाशब्दस्य ज्योतिरुपक्रमवाक्यावयवत्वं स्वातन्त्र्येण सृष्टिपरत्वावगमकत्वविरोधि, नेति। किंच अजात्वं ज्योतिरुपक्रमात्वं च विरुध्येते, नेति। अत्र पूर्वपक्षाभिप्रायमाह—स्वातन्त्र्येणेति। 'अजामेकाम्' इत्यत्र 'जनयन्तीम्' इति बहुप्रजाजनने स्वातन्त्र्येण कर्तृत्वमुच्यते प्रधानस्य। 'सृजमानाम्' इति तु श्वेताश्वतरवाक्येऽपि। तत्र कर्तृत्वमेव। 'अजो ह्येको जुषमाणोऽनुशेते' इति बद्धस्य जुषमाणस्य प्रीतियुक्तस्य तस्यामेवाजायामनुशयनमुच्यते। 'जहात्येनाम्' इत्यादिना मुक्तस्य तत्परित्यागोऽप्युच्यते। श्रुतावपि पुनरुक्तेः [1](श्रुतापि पुनरियमुक्तिः) तान्त्रिकी कपिलतन्त्रसिद्धेत्याशङ्क्य प्रतिक्षिपति—नेति। तत्र हेतुमाह–अजात्वमात्राभिधानादिति। अयमर्थः–अत्र हि अजेत्यजात्वमात्रमभिहितम्; न पुनरब्रह्मात्मिकाऽजेत्युक्तम्। तेन साङ्ख्योक्ताया अब्रह्मात्मिकाया अजाया अभिधानासिद्धिरित्यर्थः। हेत्वन्तरमाह–अस्वातन्त्र्यप्रसिद्धेरिति। प्रसिद्धं खल्वचेतनाया मूलप्रकृतेरस्वातन्त्र्यं सर्वलोकेषु। तर्हि, 'जनयन्तीम्', 'सृजमानाम्' इति सृष्टिकर्तृत्वकथनं कथमित्याशाब्दिकोक्त्या च कारकान्तराप्रयोज्यव्यापाराश्रयत्वमेव स्वतन्त्रकर्तृत्वम्। कारकसामान्यस्य स्वव्यापारं प्रति कर्तृत्वेऽपि कारकव्यापारान्तराप्रयोज्यत्वमपि यत्र वस्तुतोऽस्ति, कथञ्चिद्विवक्षितं वा, तस्य यथावत् कर्तृत्वम्। अजायाश्च व्यापारोऽन्याधीनतया न गम्यत इत्यनन्याधीनत्वसिद्धिः। ननु अजाशब्दस्य शरीरवाचिनां शरीरिपर्यन्तत्वमिति नयेन प्रकृतिविशिष्टब्रह्मपरत्वस्य वेदान्ततोऽवगमे ब्रह्मण्येव, 'सृजमानाम्', 'जनयन्तीम्' इत्युक्तकर्तृत्वान्वयात् प्रकृतेः स्वातन्त्र्यं नावगम्यते। वस्तुतः, 'अजोऽपि सन् अव्ययात्मा' इति गीतारीत्या अजाशब्दः साक्षात् परदेवतापर एवास्तु; सेयं देवतेतिवत् स्त्रीत्वोपपत्तेः इत्याशंकायां तत्परिहारकं हेतुमाह बद्ध इत्यादिना इत्युक्तेरित्यन्तेन। यदि अजाशब्दो विशिष्टब्रह्मपरः, तत्र, 'अजोऽनुशेते' इति अनुशयानाजप्रीतिविषयत्वम्, 'जहात्येनाम्' इति मुक्तभोगाजकर्तृकहानकर्मत्वञ्च नान्वियात्। अतः अजाशब्दः प्रकृतिमात्रपरः इति। पूर्वपक्षं निरस्यति नेति। अजात्वमात्रेति। प्रकृतेः परमात्मात्मकत्वस्वीकारे तदधीनत्वापत्त्या कथमजात्वमिति पूर्वपक्षी मन्यते। तदयुक्तम्, जीवानामनाद्यन्तत्वेऽपि जननमरणपारम्पर्यस्वीकारात्। 'न जायते म्रियते वा विपश्चित्' इति जीवद्रव्यस्थैर्यमात्रेणाजत्वादिवत् प्रकृतेः स्वरूपानादितया अजात्वसत्त्वेऽपि परिणामपरम्परेष्टया परमात्माधीनत्वस्याक्षतत्वात्। अतः सृष्ट्युपदेशात् अजात्वसृज्यत्वब्रह्मात्मकत्वानामविरोधः। अत्र अन्यानधीनत्वस्यानुवृत्त्या प्रकरणवशाच्च प्राप्तम्, (तै.) 'अणोरणीयान्', (श्वे) 'देवात्मशक्तिम्' इति अन्याधीनत्वं न बाध्यमिति मात्रेत्यनेन ज्ञाप्यते। बहुश्रुतिप्रसिद्धं ब्रह्मात्मकत्वमित्याह अस्वातन्त्र्येति। एवमजाशब्दः सृजमानामिति कर्तृप्रत्ययश्च न बाधकावित्युक्तम्। सृजधातुरपि अनन्याधीनोत्पादनव्यापार एव स्वरस इतीदं क्षिपति सृजतिरिति। लोके जनयतीति पदं चेतनाचेतनोभयसाधारणं प्रयुक्तम्। सृजतीति

1 अयं तालकोशपाठः। कुण्डलितस्तु मुद्रितः।

शङ्कयाह—सृजतिरिति। लोके हि स्रष्टृत्वं द्विप्रकारम्—प्रयोजककर्तृत्वं प्रयोज्यकर्तृत्वं चेति। तेन मूलप्रकृतेः श्रूयमाणं प्रयोज्यकर्तृत्वं प्रमाणसिद्धं परमात्मप्रेर्यतां नोपरुन्ध्यादित्यर्थः॥ १३४॥

इति चमसाधिकरणम्॥ २९॥

## ३०॥ अथ संख्योपसंग्रहाधिकरणम्॥ १-४-३॥

सूत्रम्—न संख्योपसंग्रहादपि नानाभावात् अतिरेकाच्च॥ प्राणादयो वाक्यशेषात्॥ ज्योतिषैकेषामसत्यन्ने॥ ११-१३॥

(१३५) यस्मिन् पञ्चेति मन्त्रे(वाक्ये) परपरिगणिता विंशतिः पञ्चयुक्ता
प्रोक्ता ; सप्तम्यधीतस्त्विह पुरुषगणोऽनन्यनिष्ठोऽस्तु ; मैवम्।
आकाशस्य स्वनाम्ना पृथगनुकथनात् सप्तविंशत्य(मीशत्व)भावात्
षड्विंशो ह्यत्र सर्वाश्रय इति विदितोऽनूद्यते ब्रह्मताद्यैः॥ ६॥

पूर्वाधिकरणे साङ्ख्योक्ताब्रह्मात्मकाव्यक्तप्रतिपादकाजामेकामित्यादिश्रुत्या समुत्थितस्य पूर्वपक्षिणः प्रतिक्षेपः कृतः। अधुना साङ्ख्योक्ततत्त्वसङ्ख्याप्रतिपादकश्रुतिमवलम्ब्य समुत्थितस्यापि तस्य प्रतिक्षेपः क्रियत इति संगतिः। तदर्थविचारस्तु—'यस्मिन् पञ्च पञ्चजनाः' इति मन्त्रः किं कापिलतन्त्रसिद्धतत्त्वप्रतिपादनपरः, नेति। किं पञ्चपञ्चजनशब्देन पञ्चविंशतितत्त्वप्रतीतिरस्ति,

---

तु चेतनव्यापारंमात्रे इति यदि, तदा प्रकृतेरचेतनत्वात् सृजतिरनन्वितः स्यात्। अतो धातुस्ते लाक्षणिको भवेत्। यदि सृजतिजनयत्योरविशेषः, तदा सुतराम्। यथा विधिशिवादीनामस्माकञ्चानेकसृष्टिकरत्वे परमात्माधीनत्वं न बाधकम्, तथा प्रकृतेरपीति॥ १३४॥ इति चमसाधिकरणम्॥

६. पञ्चविंशतिसंख्याश्रवणात् पञ्चविंशतित्वेन तत्त्वसंख्यानपरं सांख्यमेवोक्तमिति वाक्यविशेषमादाय प्रवृत्तं तृतीयमधिकरणम्। तद्विषयवाक्ये, 'यस्मिन् पञ्च पञ्चजनाः' इति मन्त्रे उत्तरार्धे, 'तमेवमन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम्' इति तच्छब्देनामृतत्वप्राप्त्युपायात्मग्रहणात्, पूर्वार्धे यस्मिन् इति स आत्मैवोच्यते। सांख्याश्च पञ्चविंशतिस्तत्त्वानीति संख्याय ज्ञानान्मोक्षमाहुः। सा संख्येह दर्शिता पञ्च पञ्चजना इति। पञ्चजनाः=पञ्च पदार्थाः। पञ्चके पञ्चत्वविधाने पञ्चविंशतिरुक्ता भवति। 'अष्टौ प्रकृतयः, षोडश विकाराः' इति अचेतनानि चतुर्विंशतिः, जीवश्च पञ्चविंशः। तदेवं विंशतिः पञ्चयुक्ता=पञ्चविंशतिः कथिता भवति। ननु यस्मिन्नित्यपि आत्मन एव निर्देशे तत्र चतुर्विंशतेः प्रतिष्ठितत्वेऽपि पञ्चविंशस्याऽऽत्मन एवाऽऽत्मनि प्रतिष्ठा कथमिति चेत्—स्वस्य स्वप्रतिष्ठितत्वकथनादनन्याधारत्वाविष्करणसंभवात्। तदाह सप्तमीति। सप्तम्यन्तपदेन पञ्चविंश पुरुषगणः अनन्यनिष्ठत्वेनाधीतो भवत्वित्यर्थः। तर्हि आकाशश्चेति किमुच्यते इति चेत्—तस्याऽऽत्मवर्गस्य आकाशः=स्वयंप्रकाशता प्रतिष्ठितेत्युच्यते। तेनाऽऽत्मातिरिक्तज्ञानव्युदास इति। निरस्यति मैवमिति। आकाशस्य द्रव्यस्य स्वनाम्ना पृथगुक्तत्वात् 'पञ्च पञ्चजनाः' इत्यत्र तदनन्तर्भावो ज्ञायते। स्वयम्प्रकाशत्वमाकाशशब्दार्थ इति पक्षं निरसितुं स्वनाम्नेत्युक्तम्। सोऽर्थोऽप्रसिद्धः। द्रव्यगणनप्रकरणे च धर्मस्य तत्तौल्येन निर्देशो न घटते। प्रत्युत सांख्यमतनिरसनमेवात्र स्वरसमित्याह सप्तमीति। "जीवस्य" यच्छब्देन ग्रहणे पञ्चविंशस्यात्मवर्गस्य

नेति। किं पञ्चपञ्चजनशब्देन पञ्च पञ्चकान्युच्यन्ते, उत पञ्च पदार्था इति। किं पञ्चजना इति समासः समाहारविषयः, उत 'दिक्संख्ये संज्ञायाम्' इति संज्ञाविषय इति। किं समाहारसमासपक्षे अवान्तरसङ्ख्यान्वयनिमित्तमस्ति, न वेति। किमाकाशस्य पृथङ्निर्देशः अवान्तरसंख्यान्वयविरोधी, नेति। अत्र पूर्वपक्षी मन्यते-'यस्मिन् पञ्च पञ्चजनाः' इति वाक्ये यस्मिन्निति सप्तम्या निर्दिष्टः साङ्ख्योक्तप्रकृतेः परः पुरुषगणः। 'पञ्च पञ्चजनाः' इत्युक्तानि तु पञ्चविंशतितत्त्वान्येव। तथा च पञ्चसङ्ख्यया गणिताः(गुणिताः?) पञ्च पदार्थाः पञ्चविंशतिसङ्ख्याका इति सुप्रसिद्धमेतत्। तमिमं पूर्वपक्षमनुवदति—यस्मिन्नित्यादिना अस्त्वित्यन्तेन। अनन्यनिष्ठः=परमात्मनिष्ठत्वरहित इत्यर्थः। उक्तं पूर्वपक्षं प्रतिक्षिपति-मैवमिति। तत्र हेतुद्वयमाह-आकाशस्येति। साङ्ख्यपक्षे हि पञ्चविंशतिसङ्ख्याकान्येव तत्त्वानि विद्यन्ते; न पुनः सप्तविंशति सङ्ख्याकानि। अत्र पुनः आकाशस्य पृथगभिधानं विद्यते इत्यर्थः। तर्हि भवत्पक्षे यस्मिन्निति क उच्यत इत्याशङ्क्याह—षड्विंश इति। षड्विंशः= परमपुरुषः। 'तं षड्विंशकमित्याहुः' इति श्रुतिप्रसिद्धेः। स तु सर्वाधारत्वात् यस्मिन्निति धारकत्वेनानूद्यते। तत्र हेतुमाह—ब्रह्मताद्यैरिति। प्रकरणप्रतिपन्नैर्ब्रह्मत्वामृतत्वाद्यैर्लिङ्गैः परमात्मेति निश्चीयत इत्यर्थः॥ १३५॥

(१३६) संज्ञोपाधिः समासो ह्ययमिह निगमे सप्तसप्तर्षिनीत्या
प्राणाद्यं तन्मनोन्तं प्रकरणनियतं पञ्चकं धीन्द्रियाख्यम्।
ज्योतिश्शब्देन शाखान्तरविदितमिदं न्यूनवादस्तु पूर्वो
घ्राणं चक्ष्यमशब्दो रसनमपि सह प्राणशब्दस्त्वगर्थः॥ ७॥

---

तन्निष्ठत्वाभावात् सप्तम्यर्थबाधः स्यात्। एवं दोषद्वयान्मैवमिति। वेदान्तिभिरपि पञ्चविंशतिस्तत्त्वानि इष्टान्येव; षड्विंशत्वेन परमात्मनः, 'तं षड्विंशमित्याहुः' इति मन्त्रिकोपनिषदि गणनात्। तथाच सप्तमीशबल्यबाधेन सांख्योक्तानि पञ्चविंशतिस्तत्त्वानि षड्विंशाश्रितानि कथ्यन्त इति सांख्यनिरास एव! सप्तविंशत्यबाधादिति पाठे आकाशस्य पञ्चविंशत्यतिरिक्ततया कथनात् तद्वदेव यच्छब्दार्थस्यापि भेदात् सप्तविंशतेः प्रतिपन्नाया बाधायोगादित्यर्थः। उक्तञ्च सूत्रे नानाभावादतिरेकाच्चेति। नानाभावः=सांख्योक्ततः पृथग्भूतता। सप्तम्यवगतात् ब्रह्मात्मकत्वादित्यर्थः। यच्छब्दरूपप्रकृतेः आकाशशब्दस्य चार्थमादाय संख्याधिक्यम् अतिरेकादित्यत्राभिमतम्। ननु पञ्चविंशतिश्चेत् पञ्चपञ्चजनशब्दार्थः, सिद्धान्तेऽपि आकाशस्य स्वनाम्ना पृथगनुकथनं न घटते तस्य पञ्चविंशत्यन्तर्गतत्वात्॥ उच्यते। मन्त्रिकोपनिषदि, 'सप्तविंशमथापरे' इति ब्रह्मणः सप्तविंशत्वमुक्तम्। तदत्र ज्ञाप्यते। कथम्? इत्थम्— आकाशशब्दः भूताकाशे, तत्पारभूते गार्गि ब्राह्मणोक्ते प्रकृतिरूपाकाशे, परमात्मनि च यथा, तथा, 'परमे व्योमन्' इति नित्यविभूतिरूपशुद्धद्रव्येऽपि प्रसिद्ध्यति। तस्य परमात्मनि प्रतिष्ठितत्वमत्र वर्ण्यते। अर्चिरादिना तद्देशप्राप्तावेवामृतत्वप्राप्तिरुत्तरार्धोक्ता सिध्यतीति तद्घटनं सूत्रोपपन्नम्। यस्मिन्निति जीवग्रहणासंभव उक्तः; परमात्मग्रहणे नियामकानि सन्तीत्याह षडिति। ब्रह्मताद्यैरिति। ब्रह्मत्वम्, एवमन्य इति अन्यत्वप्रतियोगित्वम्, अमृतममृत इति अमृतातिरिक्तामृतत्वञ्च परमात्मन्येव। न जीवे प्रथमान्तामृतपदोक्ते इति भावः॥ १३५॥

अत्र पूर्वपक्षवादी मन्यते—अयं खलु समाहारसमासः । तथाच पञ्चपूल्यादिवत् पञ्चजना इति । छान्दसप्रक्रियया पुंलिङ्गनिर्देशेन समाहारेऽभिहिते, समाहाराणां पञ्चसंख्यया विशेषणे पञ्चविंशतितत्त्वसिद्धिरिति । तमिमं पक्षं प्रतिक्षिपन्, 'दिक्संख्ये संज्ञायाम्' इति सूत्रोक्तप्रक्रियया सप्त सप्तर्षय इतिवत् पञ्च पञ्चजना इति संज्ञोपाधिरित्याह—संज्ञोपाधिरिति । तर्हि संज्ञोपाधिकतया प्रतिपाद्यं पञ्चकं किमित्याशङ्क्याह—प्राणाद्यमिति । 'प्राणस्य प्राणम्' इत्यादिवाक्योक्तं मनःपर्यन्तं पञ्चकं श्रुतावेव स्पष्टमुक्तं ज्ञानेन्द्रियात्मकम् । ननु क्वचिदन्नस्यान्नमिति काण्वपाठे न दृश्यते । तत् कथं पञ्चकत्वसिद्धिरित्याशङ्क्याह—ज्योतिरिति । 'ज्योतिषैकेषामसत्यन्ने' इति सूत्रकारेणैव पञ्चकत्वमुपपादितमित्यर्थः । तत्र कथं न्यूनवाद इत्यत्राह—न्यूनवाद इति । एकत्र न्यूनवादोऽप्यन्यत्र दृष्टेनाधि-

---

७. 'न संख्योपसंग्रहादपि' इति सांख्योक्तपञ्चविंशतिसंख्याग्रहणेऽपि नेदं सांख्यप्रक्रियापरमित्युक्तम् । अपिना सौत्रेण पञ्चविंशतिसंख्याग्रहणं वस्तुतो नास्तीति ज्ञाप्यते । कुतो न ग्रहणम्; तर्हि किमत्रेष्टमर्थान्तरमित्यत्रोत्तरमाह संज्ञेति । सांख्योक्तार्थे **पञ्चजना** इति शब्दस्य पञ्चानां जनानां=वस्तूनां समूहाः इत्यर्थः । **पञ्चजन्य** इति स्त्रीत्वाभावः पुरुषव्यत्ययश्छान्दसः । न चासमास एवेति शक्यम्; "पञ्चानां त्वा पञ्चजनानाम्" इत्यादिश्रौतप्रयोगतः समासप्रतीतेः । यदि तु—पञ्च जनाः यस्मिन् समुदाये स इति बहुव्रीहौ **पञ्चजन** इति पदेन जनपञ्चकरूपसमुदाये वाच्ये तत्र बहुत्वविवक्षया पञ्चजना इत्यस्तु; अतो नच्छान्दसत्वमित्युच्यते—अस्तु कामम् । तथापि पञ्चकपञ्चकरूपार्थे पञ्चविंशतेः पञ्चधा विभागनियामकानुगतधर्मानुपलम्भात् स विभागो न हृद्यः । अथ पञ्च तन्मात्राणि, पञ्च भूतानि, पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि इति पञ्चकचतुष्कस्य विभागनियामकस्योपलब्धत्वात् अवशिष्टानि पञ्चेति अवशिष्टत्वेन रूपेण प्रकृतिमहदहंकारमनःपुरुषाणामनुगतीकरणान्न दोष इति चेत्—सिद्धान्ते एवमुक्तिसंभवेऽपि सांख्यैरेवं न सुवचम्, **यस्मिन्निति** आत्मनः, आकाशस्य च पृथग्गणनात् तयोः पञ्चपञ्चजनान्तर्भावायोगात् । समुदायार्थके बहुव्रीहौ गौरवात् । पुंलिंगनियमे कारणाभावाच्च । एवं **जनशब्दस्वारस्यमाहत्य**, देवाः पितरो गन्धर्वाः दैत्या दानवाः राक्षसाः भूताः प्रेताः पिशाचाः, चत्वारो वर्णाः, षडनुलोमाः, षट् प्रतिलोमा इति पञ्चविंशतिग्रहणमपि न शंकास्पदम् । पञ्चकगाञ्चविध्यनियामकादर्शनात् । लाघवात्तु **निगमे** वेदे तत्रतत्र दर्शनात्, **निगमे** अन्ततो निष्कर्षे, 'दिक्संख्ये संज्ञायाम्' इति संज्ञासमासोऽयम् । **निगमे** इति शब्दस्य निष्प्रयोजनत्वात् **नियमे** इति वा पाठः । **संज्ञायामेवेति** नियमस्थितावित्यर्थः । **संज्ञोपाधिः** प्रकृतसंज्ञाविशेषप्रवृत्तिनिमित्तकः । तथा च पञ्चैव वस्तुविशेषाः **पञ्चजनशब्दार्थाः** । तत्र त्रिचतुरमात्रग्रहणव्यावृत्तये **पञ्चेति** पुनर्विशेषणम्; यथा सप्त सप्तर्षय इति । त्रिचतुरमात्रग्रहणस्थलेऽपि **सप्तर्षिपदप्रयोगे** प्राप्ते सर्वग्रहणाय हि सप्त सप्तर्षय इत्युक्तिः । एवं **सप्तजनशब्दोऽपि** दृश्यते, यथा **श्रीमति रामायणे,** (कि. १३-१८) "तत्र सप्तजना नाम मुनयः संशितव्रताः" इति । के ते पञ्चजना इति चेत्—देवाः पितरो गन्धर्वा असुराः रक्षांसि चेति केचित् । वर्णाश्चत्वारो निषादपञ्चमा इत्यन्ये । तत्र; विनिगमकाभावात् । यद्यपि ब्रह्मगिरि

क्येन (अधिकेन?) पूरणीय इत्यर्थः। ज्ञानेन्द्रियाणि षट्संख्याकानि ; कथमिह पञ्चत्वसिद्धिरित्याशङ्क्याह—घ्राणमिति। तत्रान्नशब्दो घ्राणं रसनं चोभयमपि सहैवाह। तेन पञ्चकत्वसिद्धिः। तर्हि त्वगिन्द्रियस्य कुत्र कथनमित्याशङ्क्य परिहरति—प्राणेति। अत्र हि प्राणशब्दस्त्वगिन्द्रियस्य प्राणेनाऽऽप्यायितत्वात् लक्षणया त्वगिन्द्रियमेवाचष्ट इति सर्वा(वैम?)नुमतमेवेति। तदिदं भाष्य एव सुव्यक्तम् ॥ १३६ ॥ इति संख्योपसंग्रहाधिकरणम् ॥ ३० ॥

## ३१ ॥ अथ कारणत्वाधिकरणम् ॥ १-४-४ ॥

सूत्रम्—कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ समाकर्षात् ॥ १४, १५ ॥

(१३७) विश्वोपादानवक्त्री श्रुतिषु सदसदव्याकृतोक्तिः परोक्ते
ह्यव्यक्तेऽन्वेति ; तस्मात् तदितरदखिलं नेयमत्रेति चेन्न ।

---

शब्दवाच्याः ब्रह्मसाक्षात्कारोपकरणतया बहुश्रुतिप्रसिद्धाः वाक्चक्षुश्श्रोत्रमनःप्राणाः पञ्चास्माभिः परिष्कारादौ तत्रतत्र प्रदर्शिताः सुग्रहाः, अथापि तेऽपि नात्र गृह्यन्ते पूर्वोत्तरमन्त्रपरिशीलने केषाञ्चित् पञ्चानां ग्रहणे प्रतीयमाने प्रकरणनियततदर्थत्यागेनान्योल्लेखायोगात्। तदभिप्रायेण पञ्चकं विलक्षणं सूत्रदर्शितमाह प्राणेति। प्राणचक्षुश्श्रोत्रान्नमनांसि पञ्च समनन्तरमन्त्रे माध्यन्दिनशाखायां निर्दिष्टानि। इदञ्च धीन्द्रियाख्यम्=पञ्च ज्ञानेन्द्रियाण्येव। ननु काण्वशाखायाम्, 'अन्नस्यान्नम्' इत्यंशाभावात् पञ्चकं न लभ्यत इत्यत्राह ज्योतिरिति। शाखान्तरे ज्योतिश्शब्देन विदितमिदम्। तत्र पूर्वमन्त्रे, 'तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्' इति श्रूयते। तत्र प्रथमान्तं परमात्मपरम्। ज्योतिषामिति षष्ठ्यन्तपदेन निर्दिष्टानि तावत् सूर्यादिज्योतींषि ज्योतिष्ट्वेनैकीकृत्य तदेकं प्राणादिचतुष्कसहितं पञ्चजनशब्दवाच्यं ग्राह्यं काण्वपाठे इति कल्पतरुः। न तथा ; 'आयुर्होपासते' इति प्राणवायुसहपाठात् तद्वत् उपकरणभूतज्योतिर्ग्रहणस्यैव युक्तत्वात्—तत्र ज्ञानेन्द्रियाणि शब्दस्वारस्यात् ज्योतींषि। एवं पूर्वमन्त्रत एव ज्ञानेन्द्रियोपस्थितौ, पञ्च पञ्चजना इत्यत्र तद्ग्रहणेऽवधृते, तत्र बाह्यज्ञानेन्द्रियपञ्चकग्रहणप्रसक्तौ अत्र ग्राह्यमन्यादृशं पञ्चकमुत्तरमन्त्रेण विशदमुक्तम्। तत्र काण्वे यो न्यूनवादः, स माध्यन्दिनानुसारेणान्नग्रहणेन पूर्यताम्। ननु ज्ञानेन्द्रियेषु षट्सु कस्य पञ्चकस्य ग्रहणम्, न च बाह्यपञ्चकस्य; मनस इति पाठदर्शनादिति चेत्-षण्णामपि ग्रहणं पञ्चत्वेन। अन्नशब्दो हि घ्राणेन्द्रियं रसनेन्द्रियञ्च मिलितं बोधयति। उभयोरनुगतमन्नत्वञ्च अन्नग्राहित्वमेव। आघ्राणस्यापि अन्नभोजनतुल्यत्वात्। अतः घ्राणस्य पृथिवीभूतान्नाप्यायितत्वेऽपि रसनेन्द्रियस्येवान्नभोजनसाधनत्वाभावेऽपि आघ्राणतोऽन्नग्राहित्वसत्त्वादुभयानुगतधर्मः स एव। तदाह सहेति पदेन। एकधर्ममुखेनेत्यर्थः। अथापि प्राणशब्दस्य वायुविशेषपरत्वात् कथं धीन्द्रियपरत्वमित्यत्राह प्राणशब्दस्त्वगर्थं इति। त्वगिन्द्रियस्य प्राणवायुव्याप्तसर्वशरीरव्यापित्वात् प्राणशब्देनोपचारः। एवमर्थवर्णने क्लेशे सत्यपि शाखाद्वय-मन्त्रत्रयैककण्ठ्यलाभात् अन्यथा तत्तदुक्तेः प्रयोजनाभावादर्थान्तराण्युपेक्ष्य सूत्रकार एवं निश्चकर्ष, "प्राणादयो वाक्यशेषात्" इति ॥ १३६ ॥ इति संख्योपसंग्रहाधिकरणम् ॥ ३० ॥

यत्रासत्त्वादि दृष्टं प्रकरणविदितं तत्र सर्वज्ञताद्यं
लिङ्गं स्यामि(दि)त्यधीतं स्थिरमपि तदिहाबाध्य आत्मादिशब्दः ॥ ८ ॥

एवं त्रिभिरधिकरणैः साङ्ख्योक्तच्छायानुसारिवाक्यानां परमात्मपरत्वमेव प्रसाध्य तैरेव सांख्यैरब्रह्मात्मकप्रधानपरतया परिगृहीतमव्याकृतादिशब्दसामर्थ्यमपि परमपुरुषपरत्वेनैव सुसंगतमित्याचक्षाणः ईक्षत्याद्यधिकरणोक्तमर्थतत्त्वं सिंहावलोकनन्यायेन परामृशन् सम्यङ्न्यायकलापोक्तं स्थापयतीति संगतिः । तदर्थविचारस्तु—किं जगत्कारणवादिवेदान्तप्रतिपाद्यमव्यक्तं सांख्योक्तप्रधानम्, उत ब्रह्मेति ॥ किम्, 'असद्वा इदमग्र आसीत्' इत्यसच्छब्दः अव्याकृतनामरूपावस्थब्रह्मपरः, उताव्याकृतपरः इति । किं, 'तदप्येष श्लोको भवति' इति साक्षित्वेन निर्देशः 'असद्वा इदमग्र आसीत्' इत्यत्रासच्छब्दस्य प्रकृतब्रह्मपरतामवगमयति, नेति । किं, 'तद्धेदं तर्ह्यव्याकृतमासीत्' इत्यत्राव्याकृतशब्देनाव्याकृतशरीरं ब्रह्माभिधीयते, उत अव्यक्तमिति । किं, 'स एष इह प्रविष्ट आनखाग्रेभ्यः पश्यन् चक्षुः' इति प्रशासितुर्विदुषोऽव्याकृतशरीरब्रह्मतामवगमयति, नेति ।

---

८. अथ सार्धपादत्रयस्थापितं सर्वज्ञब्रह्माख्यं जगत्कारणमाक्षिपन् प्रधानकारणवादी सांख्यः प्रत्यवतिष्ठतेऽनन्तराधिकरणे । सामान्यशब्दानामात्मनारायणादिशब्दोपात्तविशेषे पर्यवसानं विहाय अव्याकृतशब्दोक्तविशेषे प्रधाने पर्यवसानं शंक्यते । तदाह विश्वेति । कारणवाक्यानि यदि निमित्तकारणप्रतिपादकानि स्युः, काममात्मब्रह्मनारायणादिशब्दा अनुस्रियेरन् । सर्वत्र कारणवाक्ये कारणे कार्याभेदस्य स्पष्टमुक्त्या एकविज्ञानेन सर्वविज्ञाने नैर्भर्यस्य स्थिततया विश्वोपादानवक्तृत्वमावश्यकम् । तत्र, 'सदेवेदमग्र आसीत्', 'असद्वा इदमग्र आसीत्', 'तद्धेदं तर्ह्यव्याकृतमासीत्' इति उपादानतया सदसदव्याकृतवचनं सांख्योक्ते अव्यक्ताख्ये तत्त्व एवान्वेति । तथा हि सच्छब्दस्य, वर्तमानं प्रामाणिकमित्याद्यर्थस्वीकारे असच्छब्देन अप्रामाणिकमवर्तमानमित्याद्यर्थस्यैव ग्राह्यतया मिथो व्याघातः । अतस्तदर्थनिर्णयायाव्याकृतपदार्थः पूर्वं शोधनीयः । व्याकृतं=नामरूपव्याकरणविषयः अचेतनमेव । तद्विषयतानापन्नं कारणावस्थं तदेवाचेतनमव्याकृतम् । एवञ्चासत्पदमपि अवर्तमानं कारणावस्थमाह । सत्पदस्य वर्तमानकार्यावस्थार्थकत्वे अग्रे आसीदिति यद्यपि न घटते, अथापि सत्पदेन, 'असद्वा इदमग्र आसीत्, ततो वै सदजायत' इत्युक्ता असदुत्तरावस्था, 'तत्तेज ऐक्षत', 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्युक्ततेजआकाशपूर्वभाव्यवस्था महदादिरूपा गृह्यत इति सर्वमचेतनपरमेव । चेतनरूपब्रह्म तु नाव्याकृतपदग्राह्यम् । तस्य व्याकृतत्वप्रसक्त्यभावात् । तर्हि आत्मादिपदनिर्वाहः कः । उच्यते । 'आत्मा वा इदम्' इत्यत्र आत्मपदं आप्लृ व्याप्ताविति व्यापिवस्त्वर्थकम् । 'ब्रह्म वा इदम्' इत्यत्र ब्रह्मपदं बृहदित्यर्थकम् । 'एको ह वै नारायण आसीत्' इति तु इदमित्यादिपदाभावात् कार्याभेदस्य तत्राकथनात् निमित्तकारणपरमिति न वाक्यान्तरैककण्ठ्यं तस्य कार्यम् । एवञ्च, 'तदात्मानं स्वयमकुरुत तन्नामरूपाभ्यां व्याक्रियत' इत्यादिवाक्यमपि नामरूपव्याकरणकर्मत्वस्य कारणे दर्शकमुपपन्नम् । परमात्मनि तदयोगादिति । इमं पूर्वपक्षं निरस्यति नेति । यत्र वाक्ये यद्वा यस्मिन् धर्मिणि कारणे असत्त्वं सत्त्वम् अव्याकृतत्वञ्च श्रुतम्, तत्र वाक्ये तस्मिन्नेव धर्मिणि सर्वज्ञत्वादिकं प्रकरणविदितं

अत्र पूर्वपक्षयुक्तिमनुवदति—विश्वेति । श्रुतिषु सदसदव्याकृतोक्तिर्विश्वोपादानं वक्तीति परोक्ता-व्याकृत एवान्वेति। तर्हि आत्मादिशब्दा अपि कारणवाचिनो विद्यन्ते ; तेषां कथं निर्वाह इत्याशङ्क्याह तस्मादिति । अव्याकृतादिशब्दानां लोकवेदप्रसिद्ध्या प्रकृतिवाचित्वस्य दृढप्रमितत्वादन्ये पुनः आत्मादिशब्दास्तदानुगुण्येनैव कथंचिन्नेतव्या इत्यर्थः । इमामाशङ्कां प्रतिक्षिपति—नेति । तमेव प्रतिक्षेपं विवृणोति-यत्रेति । यस्मिन् वाक्ये असदव्याकृतादि दृष्टं, तत्र = तस्मिन्नेव वाक्ये बहु स्यामिति प्रकरणसमुदितं सर्वज्ञताद्यं परमपुरुषलिङ्गम् । तच्च केवलं नाऽऽपातप्रतिपन्नम् ; अपितु उपक्रमोप-संहारादिषड्विधतात्पर्यलिङ्गोपेतत्वात् सुस्थिरमेव प्रतिपन्नम् । तस्मात्, 'आत्मा वा इदमेक एवाग्र आसीत्', 'एको ह वै नारायण आसीत्' इत्यादिवाक्यस्थात्मनारायणादिशब्दाः कारणवाक्यस्थाः प्रकृतेः कारणत्वमाश्रित्य अबाध्या इत्यर्थः ॥ १३७ ॥

(१३८) आसीदग्रे त्वसद्वा इदमिति विलयावस्थतामात्रमुक्तम्
नैवासीत् किञ्चने(श्चिदि)त्याद्यपि विलयपरं, शून्यतादेर्निषेधात् ।
सर्वस्याव्याकृतत्वं विभजनविरहात् तादृशावस्थतद्वद्-
द्रव्यस्तोमान्तरात्मा तदिह सदसदव्याकृताद्युक्तिवाच्यः ॥ ९ ॥
इति कारणत्वाधिकरणम् ॥ ३१ ॥

---

स्यामित्यधीतञ्च कारणस्य सर्वेश्वरत्वे लिङ्गभूतं ; स्थिरमपि अन्यथाकर्तुमशक्यञ्च । असद्वा इदमित्यत्र, 'सोऽकामयत बहु स्यां प्रजायेय'इति असति स्यामिति बहुभवनसंकल्पाश्रयत्वमधीतमस्ति । इदं प्रकरण-विदितञ्च । 'ब्रह्मविदाप्नोति परम्' इति उपास्यत्वप्राप्यत्वोपेतं ब्रह्म, 'ब्रह्मणा विपश्चिता' इति सर्वज्ञत्वेन निर्दिश्य, 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इति आकाशादिकारणत्वेन हि कण्ठोक्तम्। सदेवेदमि-त्यत्रापि, 'तदैक्षत बहु स्यां प्रजायेय' इति स्यामिति संकल्पाश्रयत्वेन सर्वज्ञत्वमधीतं परमात्मलिंगम्। अव्या-कृतमासीदित्यत्रापि, 'स एष इह प्रविष्ट आनखाग्रेभ्यः' पश्यंश्चक्षुः' इति प्रकरणविदितं सर्वज्ञत्वादिकम् । **स्थिरमपि** अविचाल्यमपि । अन्यथानेतव्यतायां नियामकं न किमपीति भावः । **तत्** तस्मात् **इह** कारणप्रकरणेषु श्रुतः आत्मा ब्रह्म नारायण इत्यादिः पुरुषधौरेयवाची शब्दः **अबाध्यः** सत्त्वासत्त्वा-व्याकृतत्वानां नारायण एव समन्वयात् । एकविज्ञानेन सर्वविज्ञानादिना उपादानत्वेनावधृते सति असति अव्याकृते च सर्वज्ञत्वसंकल्पाश्रयत्वादेरपि श्रुतत्वात् चेतनोपादानकत्वमेव सर्ववाक्यप्रतिपन्न मिति यावत् । अत्र **स्यामित्यधीतमिति चिन्तामणि**पाठः । **स्यादित्यधीतमिति पदयोजना**पाठः । **लिंगं** परमपुरुषसाधकं स्यात् इति व्याख्याय, **इत्यधीतं स्थिरमित्यस्य स्थिरमित्यधीतमिति** योजना कृता । न केवलं योजनाक्लेशः । स्थिरत्वेनाधीतत्वञ्च कुत्रेति न दर्शितम् ॥ १३७ ॥

९. यदुक्तमव्याकृतादिशब्दानां परमात्मनि समन्वयो दुर्घट इति, तत्राह **आसीदिति** । **असदिति** पदस्य सत्त्वाभाववत् इत्यर्थः । सत्त्वं कार्यावस्था ; भोगादिरूपार्थक्रियाकारित्व-प्रत्यक्षादि-प्रमाणोपलभ्यत्वादेः कार्ये सत्त्वात् । तदभावः प्रलयरूपावस्था । सांख्येनापि सत्कार्यवादिना **शून्यतादेः**=शून्यवादस्य बौद्धकृतस्य, कार्यद्रव्यसामान्याभावरूपस्य तार्किकोक्तारम्भवादस्य च निषेधात् ।

नन्वव्याकृतादिशब्दस्य प्रकृतिवाचकत्वाभावे कथमिव परमात्मवाचकत्वमित्याशङ्क्य तद्वाचकत्वप्रकारमाह विस्तरेण—आसीदिति। अत्र खलु; 'असद्वा इदमग्र आसीत्' इत्यादिना वाक्येन परिदृश्यमानस्य प्रपञ्चस्य लयावस्थतामात्रमुक्तम्; न पुनश्चिन्मात्ररूपत्व(?)[मसद्रूपत्व]मत्यन्ताभावरूपत्वमत्यन्तासद्रूपत्वं वा। तर्हि, 'नैवेह किंचनाग्र आसीत्' इति वाक्यं कथमुपपद्यत इत्याशङ्क्याह—नैवेति। विलयो हि नाम वेदान्तसिद्धान्ते अवस्थान्तरप्राप्तिरेव; नपुनर्द्रव्यस्वरूपनाशः। तत् कथमित्यत्राह—शून्यतादेर्निषेधादिति। द्रव्यस्वरूपविनाशो विलय इति हि वैशेषिकादीनां प्रलापः। स तु प्रत्यक्षादिप्रमाणविरोधात् प्रामाणिकैर्निषिद्ध एव। तर्हि कथमव्याकृतत्वमित्यत्राह—सर्वस्येति। सर्वस्याप्यर्थस्य कारणावस्थायामव्याकृतत्वं नामरूपविभागाभावादेवोच्यते। इत्थं सामान्यतश्चिन्तितमव्याकृतशब्दार्थं ब्रह्मण्यपि योजयति—तादृशेति। तत्=तस्मात् कारणात्। अव्याकृतत्वाद्यवस्थाविशिष्ट-तत्तद्द्रव्यसमूहान्तरात्मा परमपुरुष एव सदसदव्याकृतशब्दवाच्य इति वेदान्तनिष्णातैः निर्णीयते। अतोऽव्याकृतशब्दस्य भगवत्परत्वेऽर्थो नास्तीति न भ्रमितव्यमिति ॥ १३८ ॥

इति कारणत्वाधिकरणम् ॥ ३१ ॥

---

एवं, 'नैवेह किञ्चनाग्र आसीत्' इति वाक्येऽपि न बौद्धतार्किकमतोक्तिः। किंतु कार्यावस्थाविरहमात्रमुच्यते। इहकिञ्चन=सृष्टिकालिकं किमपि तदा नासीदिति। यत्तु श्रुत्यन्तरम्, 'केचिदाहुः असदेवेदमग्र आसीदिति। कथमसतः सज्जायेत' इति— तत्—श्रुतिसामान्यप्रामाण्यस्य प्रागेव स्थापिततया, बाधितार्थकत्वस्य वा संशयात्मकज्ञानजनकत्वरूपस्य वा अप्रामाण्यस्य दुर्वचतया कारणद्रव्यं कार्यद्रव्यं च किमपि प्राङ् नासीदिति माध्यमिकमतस्य, कारणद्रव्यमेवासीत्, कार्यद्रव्यं सर्वं पश्चादुत्पन्नं प्राङ् नासीदिति वैशेषिकमतस्य वा निवारकं सत् कार्यं सर्वं कारणात्मना सूक्ष्मरूपेण प्राक् सदेव स्वरूपेणासदेव पश्चात् कार्यावस्थां प्रतिपद्यत इति स्वाभिमतासत्कार्यवादविवरणमेव। एवञ्च सदेवेत्यत्र सत्पदेन आकाशादिप्रागभावविमहदाद्यवस्था वा गृह्यताम्, असद्वा इत्यत्रासत्पदेन चाव्यक्तावस्था। यद्वा सूक्ष्मचेतनाचेतनविशिष्टब्रह्मणः कारणतया सच्छब्दस्य चेतने असच्छब्दस्य चाचेतने प्रयोगस्य तत्रतत्र दृष्टतया सच्छब्देन सूक्ष्मचेतनशरीरकब्रह्म असच्छब्देनाचेतनशरीरकब्रह्म चोच्यत इति वेष्यताम्। अथवा विशेषाभावात् सत्पदं सूक्ष्मावस्थाविशिष्टपरम्, असत्पदं स्थूलावस्थाविरहरूपविशिष्टपरमित्येवावधार्यतामिति। यदुक्तम्, अव्याकृतत्वं ब्रह्मणि कथम्, व्याकृतत्वप्रसक्त्यभावात् निर्विकारत्वादिति—तत्रोच्यते सर्वस्येति। बहु स्यामिति संकल्पवशात् ब्रह्मण्येव बहुत्वस्य नामरूपभाक्त्वरूपव्यक्तत्वस्य सृष्टिदशायां स्वीकार्यतया सर्वस्य मूलप्रकृतेरिव ब्रह्मणोऽपि प्रलये विभजनविरहात्=नामरूपविभागाभावादव्याकृतत्वं भवत्येव। यद्यपि रूपं संस्थानं संनिवेशविशेषः जडद्रव्यस्यैव भवति, अथापि स्थूलावस्थमहदहंकारभूतादितत्तद्द्रव्यान्तरात्मत्वमेव व्याकृतत्वम्। सूक्ष्मावस्थतत्तद्द्रव्यान्तरात्मत्वमेव चाव्याकृतत्वमिति आत्मब्रह्मादिकारणवाक्यैकरस्यमेव। यथा हि, 'तत् तेज ऐक्षत', 'ता आप ऐक्षन्त' इत्यादौ ईक्षणान्वयाय तेजआदिशब्दस्य विशिष्टपरमात्मपरता, तथा सत्पदेऽपि सूक्ष्मप्रकृतिशिष्टपरमात्मपरतेति सर्वसामञ्जस्यमिति ॥ १३८.

३२ ॥ अथ जगद्वाचित्वाधिकरणम् ॥ १-४-५ ॥

सूत्रम्—जगद्वाचित्वात् ॥ जीवमुख्यप्राणलिङ्गान्नेति चेन्न तद्व्याख्यातम् ॥ अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १६-१८ ॥

(१३९) यस्यैतत् कर्म वेद्यः स इति वचनतः कर्मवश्यप्रतीतेः
कर्ता पुंसां स एव स्वकृतपरिणतेरित्युपक्रान्तिभग्नम् ।
बालाक्यज्ञाततत्त्वान्तरमुपदिशतः स्वादिहाजातशत्रोः
तज्ज्ञातोक्तिर्निरर्था जगति कृततया कर्मशब्दोऽत्र मुख्यः ॥ १० ॥

पूर्वस्मिन्नधिकरणे खलु अनैकान्तिकात् अव्याकृतादिसमाख्यामात्रात् प्रकृतिपरत्वमाशङ्क्य अनन्यथासिद्धप्रकरणादिप्राबल्येन परमपुरुषपरत्वमुक्तमव्याकृतादिशब्दस्य, तर्हि कर्मत्वाद्यनन्यथासिद्धलिङ्गबलात् समाकृष्यमाणः पञ्चविंशकः पुरुष एव परतत्त्वमस्त्विति शङ्कया संगतिः । संगत्यन्तरमपि राद्धान्तेनोच्यते—पूर्वमव्याकृतशब्दस्य प्रकृतिपरत्वं निरस्य परमात्मपरत्वं निर्णीतम्; अधुना पुनः कर्मशब्दस्य पुण्यपापरूपकर्मपरत्वं निरस्य कार्यरूपजगद्वाचित्वमुच्यत इति । तदर्थविचारस्तु—किं जगत्कारणवादिवेदान्तप्रतिपाद्यः प्रकृत्यधिष्ठाता पुरुषः, उत परमात्मेति । किं बालाक्यजातशत्रुसंवादे, 'ब्रह्म ते ब्रवाणि' इत्युपक्रम्य वेदितव्यतयोपदिष्टं ब्रह्म पुरुषः, उत परमात्मेति । किं, 'एतेषां पुरुषाणां कर्ता' इति कर्तृतया निर्दिश्यमानः पुरुषो जीवः, उत परमात्मेति । किं, 'यस्य वैतत्कर्म' इति

१०. अधिकरणचतुष्टयं सांख्याचेतनविषयकं वृत्तम् । अथ तदभिमतचेतनविषयकद्वितीयपेटिका । बालाक्यजातशत्रुसंवादे बालाकिमब्रह्मवादिनं प्रतिबोधयता अजातशत्रुणोपक्षिप्तः कर्ता किं जीवः; उत परमात्मेति विचारः । 'आदित्ये पुरुषो ब्रह्म', 'चन्द्रमसि पुरुषो ब्रह्म' इत्येवं बहवः पुरुषाः बालाकिना पूर्वपूर्वस्य ब्रह्मत्वानंगीकार्यजातशत्रुसंमतिलिप्सया ब्रह्मत्वेन निर्दिष्टाः । अजातशत्रुस्तु सर्वमनंगीकृत्य स्वयमाह स्म, 'य एतेषां पुरुषाणां कर्ता यस्य वैतत् कर्म स वै वेदितव्यः' इति । अत्र कर्तेति निर्दिष्टः जीवात्मैव । तत्संबन्धितया कर्तृत्वोपयोगितया च कर्मनिर्देशात् । कर्मशब्दस्य पुण्यपापरूपकर्मणि निरूढत्वात् । न च कर्मशब्दः क्रियमाणपदार्थवाचीति युक्तम्; एतेषां कर्तेत्यनेन, एतेषां क्रियमाणत्वस्योक्ततया तस्यैव पुनरुक्त्ययोगात् । पुण्यपरत्वे तु तत्र कारणनिर्देशादपौनरुक्त्यम् । कर्मसंबन्धित्वेन प्रसिद्धः कर्ता जीव एव । कथमस्याऽऽदित्यचन्द्रमःप्रभृतिसर्वपुरुषकर्तृत्वमिति चेत्—तदपि 'यस्य वैतत् कर्म' इत्यनेनैव समाहितम् । तत्तत्पुरुषोत्पादनार्थसंकल्पविशेषादेरसिन्नभावेऽपि सर्वस्य पुरुषस्यैतत्कर्मायत्तत्वसत्त्वात् । ते सर्वेऽपि पुरुषाः जीवान् भोजयितुं प्रवृत्ताः एतदपेक्षितकार्यकारिणः भृत्यतुल्यत्वात् पुरुषा इत्युच्यन्त इत्यपि युक्तम् । उपरि चाजातशत्रुरिमं कर्तारं प्रतिबोधयितुं प्रवृत्तः सुषुप्तं पुरुषमुत्थापयिष्यति, सुषुप्त्याधारत्वमस्य वक्ष्यति, स्वैर्भुङ्क्ते इति भोक्तृत्वमप्यस्योपन्यसिष्यति । एतदुपकरणतया, 'बृहन् पाण्डरवासाः' इति प्राणवायुमपि निर्देक्ष्यति । अतो जीव एवायमिति । इदमाह पूर्वार्धेन यस्येति । यस्य कर्मेति कर्तृतया पुण्यादिरूपकर्मवश्यत्वप्रतीत्या, "पुरुषाणां कर्ता" इत्युक्तः स एव=कर्मवश्य एव । कर्तृत्वञ्च एतत्कृतकर्मपरिणामरूपत्वात् तेषामौपचारिकम् । न तु साक्षात् स्रष्टृत्व-

कर्मशब्दः पुण्यापुण्यकर्मवाची, उत जगद्वाचीति । किं प्रकरणाद्यसंकुचितवृत्तिप्रत्यक्षप्रमितजगत्परै-तच्छब्दसामानाधिकरण्येन कर्मशब्दस्य जगद्वाचित्वं युक्तम्, उत 'एतेषां कर्ता यस्य वैतत् कर्म' इति पृथङ्निर्देशावैयर्थ्याय पुण्यापुण्यवाचित्वं युक्तमिति । किं, 'तौ ह सुप्तं पुरुषमाजग्मतुः' इत्यादि-जीवमुख्यप्राणलिङ्गे पुण्यापुण्यवाचितामुपोद्बलयतः, नेति । किमेतल्लिङ्गे जीवपरे, उत परमात्मपरे । किं 'क्वैष एतद्बालाके पुरुषोऽशयिष्ट...अथास्मिन् प्राण एवैकधा भवति' इति प्रश्नप्रतिवचनाभ्यां जीवातिरिक्तब्रह्मप्रतिपादनपरे, उत नेति । अस्मिन्नधिकरणे पूर्वपक्षमारचयति—यस्येति । यो वै बालाके परिदृश्यमानानामेतेषां पुरुषाणां कर्ता, यस्य परिदृश्यमानस्वपुत्रादिसकलपुरुषकारणपुण्य-पापात्मकं कर्म, स वै वेदितव्यः स जिज्ञासितव्य इत्युक्तेः तत्फलभूतकर्मकर्ता जीव एव वेदितव्यः, न परमपुरुष इत्युक्तं भवतीति पूर्वपक्षः । शब्दार्थस्तु—स्वकर्मपरिणतेः पुत्रादीनां पुरुषाणां कर्ता स एव=पितृत्वेनावस्थितः पुरुष एव वेद्य इति । तदेतन्निराकरोति—उपक्रान्तीति । उपपादयति—बालाकीति । अत्र खलु बालाकेरज्ञातमेव तत्त्वमुपदिशत्यजातशत्रुः। न पुनः ज्ञातम्; ज्ञातस्य ज्ञापने नैरर्थक्यात् । तदिदमाह—तज्ज्ञातोक्तिर्निरर्थेति । एतदुक्तं भवति—"यो वै बालाक एतेषां पुरुषाणां कर्ता' इत्येतच्छब्दनिर्दिष्टाः सर्वपुरुषा बालाकिपरिज्ञाता एव । अतस्तेषां ज्ञापने प्रयोजनं नास्ति । अतो जीवातिरिक्तः परमपुरुष एव स्वसृष्टिकर्मभूतविश्वजगत्कर्ता, 'स वै वेदितव्यः' इत्युच्यते तदिदमाह—जगतीति । क्रियत इति कर्मेति व्युत्पत्त्या जगत ईश्वरापेक्षया कर्मत्ववचनं मुख्यमेवेति ॥

(१४०) एवं जीवातिरिक्ते प्रकरणनियते तत्र यज्जीव-मुख्य-
प्राणाख्यानं न तेन क्षतिरिह च(न) तथा तद्विशिष्टे ह्यु(ऽप्यु)पास्त्या ।
प्राणस्य प्राणभाजोऽप्यधिकरणतया वाजिवाक्योक्तनी(री)त्या
ब्रह्मज्ञप्त्यै तदन्यप्रकथनमिति हि स्थापना सार्वभौमी ॥ ११ ॥
इति जगद्वाचित्वाधिकरणम् ॥ ३२ ॥

---

पर्यिकपयत्नाश्रयत्वरूपम् । निरस्यति इतीति । इतीदं शंकनम् उपक्रमेण भग्नम् । "ब्रह्म ते ब्रवाणि" इति ब्रह्मवचनं प्रतिज्ञातम् । तदुक्तानामब्रह्मत्वं प्रतिबोध्य वास्तवं ब्रह्म बोधयितुं प्रवृत्तेनाजातशत्रुणापि अब्रह्मैव बोध्यते चेत्—बालाक्यज्ञाततत्त्वान्तरोपदेशोऽयं कथं स्यात् । जीवानां ब्रह्मत्वेन कीर्तनं तत्कृतमित्याशयेनैव स प्रतिषिद्धः । अत उपक्रमविरोधात् अतिरिक्तं ब्रह्मैवोपदेश्यम् । न च कर्मशब्द-रूढिभंगरूपो दोषः । कर्मशब्दस्य वैदिक-लौकिक-विहित-निषिद्ध-अविहिताप्रतिषिद्धसर्वक्रियासाधार-ण्येन, द्रव्यगुणकर्मेति तार्किकादिप्रसिद्ध्या च स्थितां रूढिमुपेक्ष्य पुण्यापुण्यमात्रे रूढेरप्रामाणिकत्वात् । वैदिकैर्बहुलं तत्र कर्मपदप्रयोगमात्रेण रूढिकल्पनायोगात् । 'तद्यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितः' इति श्रुतावपि लौकिककर्मसाधारण्येनैव प्रयोगदर्शनात् । अत्र तु क्रियत इति कर्मेति कर्मकारकवाचि । क्रियमाणमित्यर्थकम् । अतो मुख्यत्वमेव । न च पौनरुक्त्यम्; यस्य वैतत्कर्मेत्यत्र एत-दिति पदस्य दृश्यमानसर्वजगद्वाचित्वात्, य एतेषां त्वदुक्तानां पुरुषाणां कर्ता, किं विशिष्यैता-वन्मात्रोक्त्येति वाकारेण तन्मात्रास्थां प्रदर्शयन्, न तावन्मात्रस्य, किं तु [सर्वं जगत् यस्य कर्म] सर्वस्य यः कर्ता, स परमपुरुषो वेदितव्य इत्युक्तौ पौनरुक्त्याभावात् । शेषमनन्तरश्लोके ॥ १३९ ॥

अस्मिन् प्रकरणे किमर्थं जीवाख्यानं प्राणाख्यानं चेत्याशङ्क्य जीवप्राणयोः परमात्मशरीरत्वेन तद्विशिष्टतया भगवत उपासनार्थमित्याह—एवमित्यादिना उपासेत्यन्तेन। एवं जीवातिरिक्ते परमात्मनि प्रकरणप्रतिपन्ने सति अस्मिन् प्रकरणे यत् जीवमुख्यप्राणकथनम्, तेनेह क्षतिः =विरोधो न भवति। कुत इत्यत्राह—तथेति। तथा सति =तद्विशिष्टत्वेन कथने सति, तद्विशिष्टस्याप्युपासा

११. **एवमिति**। यद्येवं जीवातिरिक्तः परमात्मा प्रकरणे नियमेन प्रतिपादितः स्यात्, **तत्र** प्रकरणे जीवस्य मुख्यप्राणस्य चाऽऽख्यानं किमर्थम्। अत्र प्रतिबोधनीयमिति शिष्यभावं प्राप्ताय बालाकये सुप्तपुरुषसमीपं नीताय अजातशत्रुणा, बृहन् पाण्डरवास इति मुख्यप्राणस्य संबोधनरूपं कीर्तनम्। यष्ट्याघातेन जीवोत्थापनम्, क एषोऽशयिष्टेति जीवस्वप्नस्थानप्रश्नः, क वा एतदभूत् इति सुषुप्तिस्थानप्रश्नः, कुत एतदागादिति प्रबुद्धस्याऽऽगमनापादानप्रश्न इत्येवं जीवाख्यानञ्च किमर्थम्। अतो जीवपरत्वमेव प्रकरणस्येति चेत्—उच्यते, जीवातिरक्त एव प्रकरणनियते सत्यपि, जीवाख्याने मुख्यप्राणाख्याने च **न क्षतिः**; न कश्चित् विरोधः। **तदुक्त्याख्यातम्**। **इह** च=अस्मिन् प्रकरणे च **तथा** प्रतर्दनविद्यायामिव **तद्विशिष्टे** जीवमुख्यप्राणविशिष्टे परमात्मनि ह्युपासा भवति। **प्रतर्दनविद्योक्तरीतिरेव** अत्रापि भवतीति। इदमेव विशिष्टोपासनमुत्तरार्धेन विव्रियते—**वाजिवाक्ये**—अन्तर्यामिब्राह्मणे उक्तरीत्या मुख्यप्राणस्य, **प्राणभाजः**=जीवस्य चान्तर्यामितया ब्रह्मोपासनार्थं तयोः कथनमिति स्थापना हि **सार्वभौमी** प्रतर्दनविद्याबालाकिविद्यारूपसर्वभूमिसंबन्धिनी भवतीति। एवं **चिन्तामणियोजना**।

अत्र पक्षे उत्तरार्धस्य नातीव प्रयोजनम्; अन्यार्थं त्विति तृतीयसूत्रार्थाकथनात् न्यूनता चेति विचिन्त्य **उपनिषद्भाष्यकारदर्शितां** सरणिमादृत्य **पदयोजनायामुत्तरार्धं** तृतीयसूत्रार्थपरतया व्याख्यातम्। तदाऽयमर्थः—**वाजिवाक्य**पदेन, 'अपि चैवमेके' इति सूत्रखण्डाभिमतविषयवाक्यग्रहणम्। तच्च, "य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते" इति **बृहदारण्यक**बालाक्यजातशत्रुसंवादगतं वाक्यम्। तथाच प्राणजीवयोरत्र कीर्तनं वाजिवाक्ये, **'आकाशे शेते'** इत्यस्य परमात्मनि **शेते** इत्यर्थवर्णनात् तद्वदेव **अस्मिन्** प्राणे जीवः **शेते** इति प्राणजीवोभयातिरिक्ततया परमात्मप्रतिबोधनार्थमेव। यथा मुख्यप्राणप्रतिबोधनं तद्विलक्षणतया जीवज्ञापनार्थम्, तथा जीवप्रतिबोधनमपि जीवविलक्षणतया परमात्मप्रतिबोधनार्थमेव। परमात्मनो वैलक्षण्यज्ञापनं हि जीवमुपन्यस्यैव वक्तव्यमिति तथाऽर्थः **इति स्थापना** एवं तात्पर्यवर्णना **सार्वभौमी** पूर्वापेक्षयोत्कृष्टेति ॥

अत्रेदं बोध्यम्—**प्रतर्दनविद्याविषये** प्रागुक्तस्यार्थस्य पुनःकथनपरं द्वितीयसूत्रं व्यर्थमित्याशंक्य **श्रुतप्रकाशिकायाम**धिकाशंकापरिहारार्थं सूत्रमित्युक्तम्। प्रतर्दनविद्यायामुपक्रममात्रे जीवलिंगम्; अत्र पुनः आदिमध्यावसानेषु जीवलिंगानि। किञ्च तत्र जीवपरमात्मनोः सामानाधिकरण्येन निर्देशः, 'प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतम्' इति। तथा समानाधिकरणनिर्देशो हि विशिष्टपरत्वं विना न निर्वहति। अपि च **उपास्स्वेति** हिततमोपासनकर्मत्वं मामिति इन्द्रस्योक्तम्। तच्चेन्द्रशरीरकपरमात्मरूपार्थास्वीकारे न घटते। अतो विशिष्टोपासनं तत्रेति युक्तम्। अत्र तु न जीवपरयोः सामानाधि-

संभवेदिति शब्दार्थः। अयं सार्वत्रिक इत्याह—प्राणस्येति । वाजसनेयके हि अन्तर्यामिब्राह्मणे प्राणस्य, प्राणभाजः = जीवस्यापि अधिकरणतया = तच्छरीरित्वेनोच्यते परमपुरुषः। तथा च सति तेनैव न्यायेन ब्रह्मज्ञप्त्यै तदन्यप्रकथनमिति तद्विशेषणविशिष्टपरमात्मोपासनार्थं तत्रतत्र विशेषण-रूपद्रव्यकथनमिति अस्माकं स्थापना सर्वभूमौ वर्तत इत्यर्थः॥१४०॥ इति जगद्वाचित्वाधिकरणम्॥३२

करण्यं लक्ष्यते। कैष एतदिति व्यधिकरणनिर्देश एव। उपासनञ्च न श्रुतम्। अतस्तन्न्यायासंभवशंकायाम् तदतिदेशपरं द्वितीयसूत्रम्। शंकापरिहारश्च तद्व्याख्यातमिति दर्शितः। स किंरूप इति चेत्—प्रातर्दनसूत्रे हि, "उपासात्रैविध्यादाश्रितत्वादिह तद्योगात्" इति विस्तरेणोक्तम्; न त्रैविध्यमात्रम्। तावता च—उपासात्रैविध्यस्य वस्तुतः सत्त्वात् न जीवाद्याख्यानासंगतिः; तच्च तद्योगात्—तत्संभवा-दुक्तम्। न त्ववश्यमेवोपासनं स्वीकार्यम् इत्येतावदर्थस्य कथनात् तत्सूत्राशयमालोच्य परमात्मप्रकरणे जीवादिकथनं तदविरोधेन उपासनार्थतया वाऽन्यथा वा यथायथं येनकेनापि प्रकारेण निर्वाह्यमित्येव तत्सूत्रार्थ इति अत्र द्वितीयसूत्रेण दर्शितं भवति। अत एव द्वितीयसूत्रार्थोपसंहारभाष्यम्, "तत्परतया वर्णनीयानीति" इति। अत्र भाष्यफक्किकाविभागविमर्शः परिष्कारे दर्पणे च द्रष्टव्यः। अत्र तत्परतया वर्णनप्रकारः कः, यत उपासनार्थत्वे गमकं नास्तीति जिज्ञासायां तृतीयसूत्रेण जैमिन्या-शयाविष्कारः। एवञ्च विशिष्टोपासनमत्र षष्ठे श्रुतप्रकाशिकायामेव न स्वीकृतम्। आह हि स्पष्टम्, "न तूपासनार्थत्वमप्यतिदेष्टव्यमिति भावः" इति। तथाच जीवातिरिक्तत्वप्रतिबोधनार्थं जीवनिर्देश इत्येतावत एव विवक्षा। संभवात्तु कचित् विशिष्टब्रह्मोपासनपर्यन्तत्वस्यापि स्वीकार इति। अयमर्थश्चेत् अधिकरणसारावलावपि स्यात्, श्रुतप्रकाशिकैककण्ठ्यम्। एवञ्च सारावलिमूलतालकोशेषु बहुषूप-लभ्यमानस्य पाठस्याऽऽदरणे तत्सिद्धिः। स च पाठः, द्वितीयपादे, "प्राणाख्यानं न तेन क्षतिरिह न तथा तद्विशिष्टेऽप्युपासा" इति द्वितीयनञ्घटितः। जीवाद्याख्यानेऽपि न क्षतिः। तावता विशिष्टोपासनमिहोच्यत इति न। न हि प्रातर्दनसूत्रस्य विशिष्टोपासनविधाने नैर्भर्यम्। वाजिवाक्योक्त-नीत्या, 'जीवाद्यतिरिक्त एवायम्, तदधिकरणत्वात् तदन्तर्यामित्वात्' इत्येवं भेदबोधनस्यैव सर्वभूम्यपेक्षि-तस्य तत्सूत्रकारितत्वादिति। ननु अत्रापि, 'अस्मिन् प्राणे' इति सामानाधिकरण्यस्वीकारे औचित्यात् मुख्यप्राणविषये विशिष्टपरमात्मार्थकत्वमस्त्विति चेत्-बृहदारण्यके, "आकाशस्तस्मिन् शेते" इत्यत्र-त्याऽऽकाशशब्दवत् पुष्कलावयवार्थस्य प्रकृतोपयुक्तस्य ग्रहणसंभवे अपर्यवसानवृत्तिरनपेक्षिता। वाजि-वाक्येत्यनेनान्तर्यामिब्राह्मणवत् प्रकृतबृहदारण्यकाकाशवाक्यस्यापि ग्रहणादेतदर्थोऽपि सूचितः। शेषं भाष्यार्थदर्पणे। विस्तरोऽस्मदीये कौषीतकिपरिष्कारे द्रष्टव्य इत्यलम्। अत्र इह हि तथा तद्विशिष्टे ह्युपासा इति प्रकाशिकायां पाठः। 'इह च; तथा तद्विशिष्टेऽप्युपासा' इति चिन्ता-मणिसंमतः पाठः। इह च तथा तद्विशिष्टे ह्युपासा इति पदयोजनापाठः। अस्मद्दर्शितस्तालमूल पाठस्तु—इह न तथा तद्विशिष्टेऽप्युपासा इति। श्रीपद्मपुरीप्राच्यग्रन्थकोशालये, 804, 3301, 3303, 1612, संख्यातेषु कोशेषु पाठोऽयम्॥ १४०॥ इति जगद्वाचित्वाधिकरणम्॥३२॥

३३ ॥ अथ वाक्यान्वयाधिकरणम् ॥ १-४-६ ॥

सूत्रम्—वाक्यान्वयात् ॥ प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः ॥ अवस्थितेरिति काशकृत्स्नः ॥ १९-२२ ॥

(१४१) पत्यादीनां प्रियत्वं श्रुतिरनुवदति ह्यात्मनः कामसिद्ध्यै
तेनासौ पुण्यपापोदितफलभुगिति प्रक्रमादिप्रतीपम् ।
तत्तद्भोगप्रदातुः प्रथयति हि विभोः कामतस्तत्प्रियत्वं
द्रष्टव्यश्चैष मुक्त्यै श्रुतिनिकरमितः प्रत्यभिज्ञाप्यतेऽत्र ॥ १२ ॥

"पूर्वस्मिन्नधिकरणे लिङ्गत्वेनाभिमतस्य कर्मशब्दवाच्यत्वस्यानैकान्तिकत्वेनालिङ्गत्वमुक्तम् । अत्र पूर्वपक्षी पुरुषनिर्णयेऽसाधारणतयाऽभिमतं लिङ्गमाह । कथम्? 'आत्मा वा अरे द्रष्टव्यः' इत्यारभ्य, 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति' इति, 'सर्वं

---

१२. कर्मशब्दशक्तिबलात् अशुद्धजीवपरत्वमेव प्रकरणस्येति पूर्वपक्षे कर्मशब्दार्थान्यथाकरणेन, इन्द्ररूपजीवकर्तृकस्वाराज्यार्थोपासनकर्मत्व-पाप्मापहतिपूर्वकमोक्षार्थोपासनकर्मत्व-सुषुप्तिकालिकजीवायास परिहारकरत्वादिधर्मप्रदर्शनेन च जीवातिरिक्तपरत्वं स्थापितम् । पुनः मैत्रेयीब्राह्मणमादाय भोग्य-वस्तुप्रियत्वापादककामप्रतिसंबन्धित्व-जीवैक्य-जीवातिरिक्तनिषेधानां दर्शनात् शुद्धजीवातिरिक्तब्रह्म-व्यवच्छेदशंका । तत्र पूर्वपक्षमाह पत्यीति । 'आत्मा वा अरे द्रष्टव्यः' इति वाक्यप्रतिपाद्य आत्मा जीवः; पूर्ववाक्ये, 'आत्मनस्तु कामाय' इत्येतत्प्रतिपाद्यात्मशब्दार्थैक्यस्यैव युक्तत्वात् । तत्र तु, 'न वा अरे पत्युः कामाय पतिः प्रियो भवति, आत्मनस्तु कामाय पतिः प्रियो भवति' इत्येवमादिषु वाक्येषु, लोके जायादीनां पत्यादिः प्रियो भवतीत्येतत् न पत्यादिगतेष्टसिद्ध्यै, किं तर्हि स्वात्मेष्टसिद्ध्यै इति लोक-सिद्धार्थानुवादस्य श्रुत्या करणात् आत्मन इति आत्मपदं जीवस्वात्मपरम् । तेन तदैकार्थ्यात् असौ 'आत्मा वा अरे' इत्युक्तोऽपि पुण्यपापफलभोक्ता जीव एवेति पूर्वपक्षः । इदमुपलक्षणं युक्त्यन्तरस्यापि । आदौ कामप्रतिसंबन्धित्वरूपैतदर्थ इव, मध्ये 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु-विनश्यति' इति देहेन सहाऽऽविर्भूय तिरोधानभाजा विज्ञानात्मनैक्यमवगमितम् । अथ च, 'ब्रह्म तं परादात् योऽन्यत्राऽऽत्मनो ब्रह्म वेद' इत्यादिना ब्राह्मणक्षत्रियादिषु, 'आत्मा वा अरे द्रष्टव्यः' इत्युक्तात्मैक्यं वर्णितम् । अन्ते च, 'विज्ञातारमरे केन विजानीयात्' इति अचेतनातिरिक्तस्य विज्ञातुरेव ज्ञेयत्वमुक्तम् । यदि जीवातिरिक्तं ब्रह्म वेदयितुमिष्टं स्यात्, तदा अचेतनवैलक्षण्यमात्रपरं विज्ञातृपदं विहाय विज्ञातृजीववैलक्षण्यव्युत्पादकमीश्वरादिपदं प्रयुक्तं स्यात् । अतो जीवातिरिक्तनिषेधकसांख्यमतोपन्यास एवात्रेति सिद्धः सर्वत्र जीवातिरिक्तब्रह्माभाव इति ।

निरस्यति इति प्रक्रमादिप्रतीपमिति । प्रक्रमः=उपक्रमः । आदिना मध्यवाक्यादिग्रहणम् । अमृतत्वाशयाऽऽत्मोपदेशमपेक्षमाणायै मैत्रेय्यै क्रियमाण आत्मोपदेशः परमात्मविषयक एव । तस्यैव हिततमोपासनकर्मत्वात् । 'आत्मनि खल्वरे दृष्टे श्रुते सर्वं विदितम्' इति आत्मविज्ञानेन सर्वविज्ञानमुक्तम् ।

तं परादात् योऽन्यत्रात्मनः सर्वं वेद', 'यत्र हि द्वैतमिव भवति', 'विज्ञातारमरे केन विजानीयात्' इति पञ्चविंशाज्जीवादधिकं निषिध्यते ; न च लिङ्गमात्रव्यपदेशादिति। तत्राह-'वाक्यान्वयात्' इति" इति श्रीविष्णुचित्तार्यैः संगतिमालायां व्यक्तमुपापादि संगतिः। तेनात्र पूर्वं सांख्योक्तप्रक्रियाशङ्कामुखेन त्रिभिरधिकरणैरेका पेटिका प्रवृत्ता ; अधुना पुनः कारणत्वादिभिस्त्रिभिः अव्याकृतादि-कर्मत्वादि-लिङ्गाभ्यां सह जीवब्रह्मणोरैक्योपदेशादत्यन्ताभेदात् प्रकृत्यधिष्ठातुर्जीवत्वमाशङ्क्य निराक्रियत इति पेटिकान्तरमित्यप्याहुराचार्याः । तदर्थविचारस्तु—जगत्कारणवादिवेदान्तप्रतिपाद्यं पुरुषाधिष्ठितं प्रधानम्, उत परमात्मेति। बृहदारण्यके मैत्रेयीब्राह्मणे, 'न वा अरे पत्युः कामाय पतिः प्रियो भवति' इत्युपक्रम्य, 'आत्मा वा अरे द्रष्टव्यः' इत्यात्मा (त्युक्त आत्मा?) किं पञ्चविंशः पुरुषः, उत परमात्मेति। किमुपक्रमे पतिजायापुत्रादिप्रियसंबन्धः आत्मशब्दस्य पुरुषपरतामवगमयति, नेति। किं वाक्यावयवानां सर्वेषां परमात्मन्येवान्वयसामर्थ्यम्, उत पुरुष इति। अत्र पूर्वपक्षमुपन्यस्यति—पत्यादीनामिति। 'न वा अरे पत्युः कामाय पतिः प्रियो भवति' इत्यादिनोपक्रमे पत्यादीनां प्रियत्वं श्रुतिरनुवदति ह्यात्मनः कामसिद्ध्यै। स्वाभीष्टसिद्धय इत्यर्थः। तेन स्वाभीष्टसिद्ध्यर्थं पुत्रादीनां प्रियत्वोपपादनेन असावात्मा पुण्यपापोत्पन्नफलभुक् = जीव एवेति पूर्वः पक्षः। तं निराकरोति—प्रक्रमादीति। इदमुपक्रमाविरुद्ध-मिति। तर्ह्यस्मिन् वाक्ये मदुक्तं न भवति चेत्, किं पुनरुच्यत इत्याशङ्क्याह—तत्तदिति। तत्तत्पुत्रादि-निमित्तभोगप्रदातुः परमपुरुषस्यैव संकल्पात् तेषां पुत्रादीनां पित्रादीन् प्रति प्रियत्वं भगवत्संकल्पा-यत्तमित्यर्थः। अस्य पितुरयं पुत्रः प्रियो भवत्विति भगवता संकल्पिते सति तथैव तत्प्रियत्वं

---

'तस्यैतस्य महतो भूतस्य निश्वसितमेतत्' इति सर्वशब्द-अर्थप्रपञ्चकारणत्वमप्युक्तम्। सर्वमिदं परमात्मन एव श्रुत्यन्तरप्रसिद्धम्। एवञ्च विज्ञातारमिति विज्ञातृपदमपि कथमपि सर्वेश्वरपरमेव ग्राह्यम्। यत्तु, 'आत्मा वा अरे द्रष्टव्यः' इत्यत्र आत्मपदं स्वात्मपरमेवेति-तन्न; तथासति वाक्यानन्वयात्। परमात्मपरत्व एव वाक्यान्वयात्। तथाहि—आत्मनः कामाय स्वात्मेष्टसिद्धये पत्यादिः प्रियो भवति यतः, अतः स्वात्मा उपास्य इत्युक्तौ कः संबन्धः। पत्यादीनां स्वात्मेष्टत्वात् पत्यादिर्न परित्याज्य इत्येव प्रतीयेत; न तु पत्यादि त्यक्त्वा स्वात्मा ग्राह्य इति। परमात्मन आत्मशब्दग्रहणे तु पत्यादीनां प्रियत्वं हि परमात्म-संकल्पायत्तम्। यदा परमात्मा नेच्छति, तदा पत्यादिर्न प्रिय इत्यवगमात् प्रियवस्तुप्रतिलम्भकः परमात्मैवोपास्यः, स एव समुचिते वस्तुनि प्रियत्वं शाश्वतमापादयेदित्यर्थस्य सुवचत्वात्। तथा औपाधिकप्रियत्वाश्रयत्वात् सर्वमुपेक्ष्य निरुपाधिकप्रियत्वाश्रयः स एवोपास्य इति च। तदाह तत्तदिति। पतिजायादिभोगप्रदातृपरमात्मसंकल्पादेव पत्यादेः प्रियत्वं भवति । अतस्तत्संकल्पो जीवविषये कीदृशः श्रेष्ठ इति विचार्य एष परमात्मैव मुक्त्यै द्रष्टव्यः श्रोतव्यः। तदुपासनस्यैव मोक्षसाधनतया तेनैव श्रुतिनिकरे विहितत्वात्, तस्य परमात्मन एव, 'आत्मा वा अरे' इत्यत्र झटिति प्रत्यभिज्ञानादिति। अत्र द्रष्टव्यश्चेत्यादिना, 'आत्मनस्तु कामाय' इत्यत्र आत्मशब्दस्य स्वात्मपरत्वेऽपि, 'आत्मा वा' इत्यत्र परमात्मैव ग्राह्यः ; कारणं तु ध्येय इत्युक्तजगत्कारणत्वादिप्रत्यभिज्ञानादिति भाष्यार्थोऽप्युक्तः। तथाच पत्यादिषु प्रीतिनिधानं हि न पत्यादयः अनुकूलं भजन्त्वित्याशयेन, किंतु स्वस्य यद्यदनुकूलं तल्लब्धव्य-मित्याशयेन। अतोऽनुकूलतमान्वेषिणा परमात्मा वा अरे द्रष्टव्यः श्रोतव्य इत्युक्तं भवति ॥

भवतीत्यर्थः। अत्राऽऽत्मशब्देन भगवानेवोच्यते ; न पुनः पित्रादिरूपो जीवः। किं च सर्वेष्वपि वेदान्तेषु भगवान् पुरुषोत्तम एव मोक्षार्थं द्रष्टव्यतया श्रूयते। तेन स एवाऽऽत्मा, 'आत्मा वा अरे द्रष्टव्यः' इत्यत्राऽऽत्मशब्देन प्रत्यभिज्ञाप्यते। गतिसामान्यस्य पूर्वमेवोक्तत्वादिति ॥ १४१ ॥

(१४२) व्युत्पत्त्या ह्यात्मशब्दः प्रथयति परमं ब्रह्म यद्वा समानात्(सात्)(ऽत्र रूढ्या)
स्वा(सा)र्थोऽयं जीवशब्दो वदति च परमं द्वारवृत्त्येति पक्षाः(पक्षः)।
व्यक्त्यैक्याद्ाश्मरथ्यो निरुपधिकदशाद्वैतवत्त्वौ(स्त्वौ)डुलोमिः
तत्स्थत्वात् काशकृत्स्नः परविषयतया जीवशब्दं जगाद ॥ १३ ॥
(तत्स्थत्वात् काशकृत्स्नो निरवहदिह साक्षात्मशब्दं परस्मिन् ॥ १३ ॥)

अत्र प्रयुज्यमानानामात्मशब्दानां परमात्मपरत्वं व्युत्पत्त्येत्येकः पक्षः। अथवा तत्समान प्रकरणानुगुण्येन स्वा(सा)र्थकोऽपि भवतीत्यपरः। तृतीयस्तु जीववाचकात्मशब्दो जीवद्वारा

---

चि. टी. पूर्वस्मिन्नधिकरण इत्यारभ्य श्रीविष्णुचित्तीयसंगतिमालाग्रन्थानुवादः। तत्र पूर्वपक्षी प्रकृताधिकरणे लिंगमाह=स्वसाधकमाहेत्युक्त्वा, कथमिति प्रश्नपूर्वकं तद्विवरणम्। एवं लिंगमाहेत्ये-तदुपपाद्य अथ सिद्धान्त उच्यते, तत्राह वाक्यान्वयादिति। अधुना पुनरिति। कारणत्वाधिकरण-मारभ्याधिकरणत्रयमेका पेटिका। पूर्वमधिकरणचतुष्कं द्विकमिति पेटिकाविभागः कृतः ; अत्र त्रिकं त्रिकमिति विधान्तरमिति भेदः। कारणत्वादिभिरिति। अधिकरणैरिति विशेष्याध्याहारः। तत्र कारण-त्वमव्याकृतस्यैव ; न तु ब्रह्मणः, निर्विकारत्वादिति प्रथमाधिकरणे, कर्मसंबन्धी कर्ता जीव एव, नेश्वर इति द्वितीयाधिकरणे, जीवैक्यकथनात् न जीवातिरिक्त इति च प्रकृताधिकरणे शंका। जीवैक्यकथनञ्च, 'आत्मनस्तु कामाय', 'आत्मा वा अरे' इत्युभयोरैक्यावगमात्, विज्ञानघन एव, विज्ञातारम् इत्याद्युक्तेश्च। अनुवदतीति। वैशब्दोपबन्धात् लोकसिद्धानुवाद इति ज्ञायते। परमात्मकामवशात् पत्यादिप्रियत्व-मित्युक्तौ तस्य शास्त्रैकगम्यत्वात् वै इति लोकसिद्धानुवादो न घटेतेति पूर्वपक्ष्याशयः। सिद्धान्ती तु नवा इति निषेधांशे लोकसिद्धानुवादः। आत्मनस्त्विति तुशब्दादपूर्वार्थविधानमित्यभिसंधत्ते ॥ १४१

१३. 'आत्मा वा अरे द्रष्टव्यः' इत्यत्र आत्मशब्दः परमात्मपर इत्युक्तम्। तत्परत्वं त्रेधा भवितुमर्हतीति पूर्वार्धेन दर्शयति। प्रथमपादे समानात्, समासादिति पाठद्वयम्। द्वितीय-पादे स्वार्थः सार्थं इति पाठद्वयम्। पक्षाः इति बहुवचनपाठः प्रसिद्धः। पक्ष इत्येकवचनपाठं रोचयते पद्योजना। एवं चतुर्थपादे, 'परविषयतया जीवशब्दं जगाद' इति प्रसिद्धं पाठं विहाय, निरवहदिह साक्षात्मशब्दं परस्मिन् इति पाठमाद्रियते। 'निरवहदिह च स्वात्मशब्दं परस्मिन्' इति क्वचित् पाठः साधुशब्दरहितः। पूर्वार्धे क्वचित् कोशे, "व्युत्पत्त्याऽऽत्मादिशब्दैरिह पर उदितो मातु भिन्नार्थता वा शब्दानां जीवशब्दाः परमभिदधति द्वारवृत्त्येति पक्षाः' इति पाठः कृतोऽस्ति। तथा समानात्, स्वार्थः इति पाठौ पद्योजनेष्टौ। चिन्तामणावपि समानादिति पाठ एव दृश्यते। स्वार्थः सार्थं इत्यत्र तु अव्यवस्था। अस्मदिष्टस्तु श्लोकार्थ एवम्—समासादिति स्वार्थः इति च पाठः।

परमात्मानमेव वदतीति । तमिमं पक्षत्रयविभागमाह—व्युत्पत्त्येत्यादिना पूर्वार्धेन । अत्र जीववाचकानां परमात्मपरत्वे ऋषित्रयाभिमतपक्षान् पूर्वोक्तानानुक्रमेण शिष्यानुग्रहार्थं विशदयत्युत्तरार्धेन व्यक्त्यैक्यादित्यादिना । जीवब्रह्मणोः स्वरूपैक्यात् जीवशब्देन परमात्माभिधानमित्याश्मरथ्यः । औडुलोमिस्तु निरुपधिकदशाद्वैततः=मुक्तदशायां जीवब्रह्मणोरद्वैतत्वात् जीवशब्देन परमात्माभिधा-

---

समासो नाम समुदायः ; समुदायशक्तिः ; रूढिरिति यावत् । रूढेः समुदायप्रसिद्धिपदेन व्यवहारो भामत्यामपि (1.4.9 सूत्रे) "अजाशब्दस्य च समुदायप्रसिद्धिपरित्यागेन, न जायत इत्यवयवप्रसिद्ध्याश्रयणे दोषप्रसंगात्" इति । आन्ध्रलिप्यां नकारसकारयोराकृतावनतिभेदात् समासादिति पदं समानादिति पश्चात् पठितमासीत् । समासादिति मूलतालकोशचतुष्टये पाठः । कोशद्वये, 'यद्वाऽत्र रूढ्या' इत्यपि पाठो दृश्यते । तदयमर्थः—आत्मशब्दः व्युत्पत्त्या=आप्नोतीति योगेन निरुपाधिकसर्वव्याप्तिं पुरस्कृत्य परमं ब्रह्मैव साक्षात् प्रथयति बोधयति । पक्षान्तरमाह यद्वेति । अथवा समासात् समुदायात् रूढिशक्तिवशात् शरीरप्रतिसंबन्धिनि आत्मशब्दरूढिसत्त्वात् सर्वशरीरकं परमं ब्रह्मैव साक्षात् प्रथयति । एवञ्च प्रकृते, 'आत्मनस्तु कामाय', 'आत्मा वा अरे द्रष्टव्यः' इत्युभयत्र आत्मपदं योगात् रूढेर्वा परमात्मपरमिति। तृतीयं पक्षमाह स्वार्थ इति। तत्रतत्र, 'तमेवैकं जानथाऽऽत्मानम्', 'आत्मानमेव लोकमुपासीत', 'आत्मा वा इदमग्र आसीत्' इत्यादौ पूर्वोक्तयोग-रूढ्यन्यतरसद्भावेऽपि अयं=मैत्रेयी ब्राह्मणस्थः आत्मशब्दः स्वार्थः स्वेत्यर्थकस्सन् जीवशब्दः जीववाची भवन् द्वारवृत्त्या तन्मुखेन परमं ब्रह्म च वदतीति । अयं भावः—"आत्मनस्तु कामाय' इत्यत्र स्वात्मन इष्टसंपत्तये इत्यर्थः स्वरस इति पूर्वपक्षिणोक्तम् । श्रीभाष्ये तमर्थं निरस्य परमात्मपरत्वमुपवर्ण्य, पश्चात्, तत्रात्मशब्दस्य जीवस्वात्मपरत्वेऽपि द्रष्टव्य इत्यत्राऽऽत्मशब्दः परमात्मविषयक एवेति भाषित्वा, 'अस्मिन् प्रकरणे जीववाचिशब्देनापि परमात्मन एवाभिधानात् परमात्मपरत्वं युज्यते' इति तत् स्थापितम् । अथ कथं जीववाचिन एव परमात्मपरत्वमिति प्रश्ने काशकृत्स्नीयपक्षस्याऽऽदरणीयता पश्चाददर्शि। एवञ्च आत्मशब्दस्य स्वपर्यायत्वेऽपि स्वान्तर्यामी द्रष्टव्य इति काशकृत्स्नानुरोधी, 'आत्मनस्तु कामाय' इति पूर्ववाक्यगृहीतार्थाविरोधी च निर्वाहोऽपि भाष्यकृद्दिष्टः । एवमेव विज्ञानघनः, विज्ञातारम् इति पदयोरपि जीवविशिष्टवाचिता वक्ष्यत इति एकरीतिः सर्वत्रेति । पक्षा इति पाठ एव पक्षत्रयमित्युक्तं भवति । पक्ष इति पाठे प्रत्येकमन्वयः कार्यः । समानात् =समानप्रकरणात् स्वार्थः, समानात् =समानार्थकपूर्ववाक्यानुसारात् स्वार्थ इत्यर्थं वर्णयन्ति ।

अत्र जीवोक्तिमुखेन परमात्मपरत्वपक्षे द्वारवृत्त्येति स्वादृतं पक्षं सूत्रकारानुमतं दर्शयितुं तत्र त्रैविध्यमृषित्रयेष्टमुत्तरार्धेनाऽऽह व्यक्तीति । उत्तरार्धेन पूर्वार्धविवरणमिति चिन्तामणिगतिरिव । अस्यार्थत्रयस्य, उत्तरार्धोक्तस्य ऋषिमतत्रयस्य चैवयाभावान्न तत् एतद्विवरणमिति अन्यव्याख्यातृगतिः । वस्तुत इह चिन्तामणौ पूर्वोक्तानानुक्रमेण इत्यस्य पूर्वोक्तान् अनुक्रमेणेति पदविभागे पूर्वार्धोक्तार्थत्रयमुत्तरार्धे ऋषिपक्षतयोच्यत इत्यर्थो ज्ञायेत । तथा तत्त्वाभावात् अविभागेन अननुक्रमेण=पूर्वोक्तसंबन्धं

नमित्याह। काशकृत्स्नः पुनः तत्स्थत्वात्=जीवस्य परमात्मशरीरत्वेन परमात्मनस्तन्निष्ठत्वादित्याह। अत्र काशकृत्स्नीयमेव राद्धान्तत्वेनोच्यत इति ॥ १४२ ॥

(१४३) भेदोपाधिव्यपाये भवभृदयमियात् ब्रह्मतामित्ययुक्तं
नित्यं तद्भेददृष्टेरतिपतितभवे साम्यसाधर्म्यशब्दात् ।
मृत्तत्कार्यक्रमथ श्रुतिशतविहतस्तेन जीवोक्तिमीशे
तत्स्थत्वात् काशकृत्स्नो यदिह निरवहद् व्याससिद्धान्त एषः ॥ १४ ॥

इति वाक्यान्वयाधिकरणम् ॥ ३३ ॥

औडुलोमीयं पक्षं निराकृत्य काशकृत्स्नीयमेव पक्षं स्वपक्षयति—भेदेति। भेदकाविद्योपाधिव्यपाये सति जीवोऽयं ब्रह्मतां प्राप्नुयादिति औडुलोमिमतमयुक्तम्। कुतः? तत्राह—नित्यं तद्भेददृष्टेरिति। 'नित्यो नित्यानाम्' इत्यादिश्रुत्या जीवपरयोर्भेदस्य नित्यत्वेन साक्षादेव दर्शनात्। अत्र हेत्वन्तरमप्याह—अतिपतितेति। अतीतसर्वबन्धे जीवे, 'निरञ्जनः परमं साम्यमुपैति', 'मम साधर्म्यमागताः' इति साम्यसाधर्म्ययोः श्रुतत्वात् तयोश्च भेदगर्भत्वादित्यर्थः।...तर्हि मृत्तत्कार्यदृष्टान्तः श्रुतावुच्यते; स कथं जीवपरयोरत्यन्तभेदे भवद्भिरभिधीयमाने घटत इत्याशङ्क्याह-मृत्तदिति। न

विनेत्यर्थो ग्राह्यः। अत्र परविषयतया जीवशब्दं जगादेति चिन्तामणिग्रन्थदृष्टपाठे अस्योत्तरार्धस्योत्तरश्लोकशेषतया वाक्यैकवाक्यता स्वरसा। पद्योजनापाठे तु एतच्छ्लोकद्वितीयपादोक्तद्वारवृत्तिपक्षस्थापकतयोत्तरार्धान्वयः स्पष्टः। "प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः" इति जीवब्रह्मणोः कार्यकारणभावसत्त्वात् अन्यथा एकविज्ञानेन सर्वविज्ञानायोगात् द्रव्यैक्यात् विज्ञानघनादिशब्देन जीववाचिना परमात्मवचनं जगाद निरवहत् आश्मरथ्यः। जीवशब्दमिति आत्मशब्दमिति पाठद्वयेऽपि जीववाचिनं शब्दमित्येवार्थः। स च आत्म-विज्ञानघन-प्रज्ञानघन-विज्ञातृशब्दरूपः। औडुलोमिस्तु निरुपधिक दशायाम्=भेदप्रयोजककर्माविद्यादिव्याजनिर्मुक्तदशायां मुक्तौ भविष्यतः अद्वैततः=अभेदमादाय परविषयतया जगाद निरवहत्। काशकृत्स्नस्तु सर्वदा जीवेशभेदवादी तत्तद्रीत्ययोगात् तत्स्थत्वात् जीवे परमस्यान्तर्यामितयाऽवस्थितेः जीववाचिशब्दं परमात्मपर्यन्तपरं जगाद—साधु निरवहत्। साधुशब्दपाठे तस्य तृतीयपक्षमात्रेऽन्वयः, न पूर्वेणेति श्लोकादलाभेऽपि तत् योग्यताविमर्शेन निश्चेयम् ॥१४२

१४. पूर्वश्लोकोक्तं योगेन रूढ्या वा साक्षात्परमात्मवाचित्वं जीवद्वारा परमात्मवाचित्वञ्चेति पक्षत्रयं यथायथमात्मशब्दादौ स्वीक्रियते; औडुलोम्याश्मरथ्यपक्षौ तु नेष्येते इत्याह भेदेति। उपपादनांशाधिक्यन्यूनत्वविमर्शेन सूत्रक्रममुल्लंघ्य व्युत्क्रमेण औडुलोम्याश्मरथ्यपक्षौ परास्यति। भवभृत् संसारी जीवः इदानीं भिन्नतया दृश्यमानः, भेदस्य उपाधेः=प्रयोजकस्याविद्यादेः व्यपाये निश्शेषनिवृत्तौ मुक्तौ ब्रह्मतामियात्=ब्रह्मैव भवेत्। अतो भविष्यन्तमभेदमाकलय्यैवं व्यपदेश इति औडुलोमिमतम्। तदयुक्तम्—तद्भेदस्य=तयोर्मिथो भेदस्य नित्यं सार्वकालिकतयैव दृष्टेः दर्शनात्। अनादिभेदशालिनां भेदानाशस्यैव लोके दर्शनात्, तथैव व्याप्तेः। अन्यद्द्रव्यं हि नैति तद्द्रव्यताम्। अनादेर्भेदस्य नाशायोगात् भेदो नित्य इति न केवलं युक्तिमात्रम्, दर्शकं शास्त्रमपि। अतिपतितो भवः संसारो येन

हि दृष्टान्तदार्ष्टान्तिकयोः सर्वथा साम्यं वाच्यम्। अपि तु प्रमाणानुगुणमेव। अन्यथा श्रुतिशतविरोधः स्यादित्याह– श्रुतिशतविहत इति। 'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः' इति श्रुत्यैव साक्षाच्चिदचिदीश्वराणां स्वरूपं विभज्य निर्णीयत इत्यर्थः। उक्तमर्थं काशकृत्स्नीयमतेन निगमयति—तेनेति। जीवशब्दमीश्वरे, अपृथक्सिद्धविशेषणवाचिनां शब्दानां विशेष्याभिधानसामर्थ्यादिति काशकृत्स्नो निरवहदिति यत्, एष एव श्रीवेदव्याससिद्धान्त इति। इतरत् द्वितयं निरसनीयमेवेति ॥ १४३ ॥ इति वाक्यान्वयाधिकरणम् ॥ ३३ ॥

## ३४ ॥ अथ प्रकृत्यधिकरणम् ॥ १-४-७ ॥

सूत्रम्—प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ अभिध्योपदेशाच्च ॥ साक्षाच्चोभयाम्नानात् ॥ आत्मकृतेः ॥ परिणामात् ॥ योनिश्च हि गीयते ॥ २३—२८ ॥

(१४४) मृत्पिण्डादेः कुलालप्रभृतिरिह पृथक्; तद्वदेवाऽऽदिकर्ता
नोपादानं विकारैर्विरहित इति न द्वारमात्रे विकारात्।
मृद्दृष्टान्तादिमात्रात् न च विकृतिरसौ स्यात् परस्य स्वरूपे
देहद्वारोर्णनाभिप्रभृतिविकृतिवद् व्यापृतेर्दर्शितत्वात् ॥ १५ ॥

तस्मिन् मुक्ते, 'परमं साम्यमुपैति', 'मम साधर्म्यमागताः' इति साम्यशब्दसाधर्म्यशब्दसत्त्वात्। शब्दादित्यस्य शब्दनात्—वचनादित्यर्थो वा। आश्मरथ्यपक्षं निरस्यति मृत्तदिति। मृदः मृत्पिण्डस्य तत्कार्यस्य घटादेश्च यः क्रमः पौर्वापर्यम्, तत्तुल्यं पौर्वापर्यं ब्रह्मजीवयोः श्रुतिशतविहतम्। 'न जायते म्रियते', 'नित्यो नित्यानाम्', 'प्रकृतिं पुरुषञ्च विद्ध्यनादी', 'न कर्माविभागादिति चेन्नानादित्वात्' इत्यादिविरुद्धम्। तेन जीवब्रह्मणोः कथमप्यैक्यायोगात् जीवोक्तिमीशे=परमात्मनि जीववाचिशब्दप्रयोगम्, "तत्स्थत्वादनुपश्यन्ति ह्येक एवेति साधवः" इत्युपासकानुभूयमानं तत्स्थत्वमादाय काशकृत्स्नो यत् निरवहत्—यदिति निर्वाहक्रियाविशेषणम्, काशकृत्स्ननिर्वहणं यदिति यावत्—स एषः व्याससिद्धान्तः। तदुपरि पक्षान्तरानुपन्यासात्। अंशाधिकरणे शास्त्रदृष्ट्या स्ववाक्येनैव तत्समर्थनात्। विलक्षणत्वाधिकरणे, 'न तु दृष्टान्तभावात्' इत्यनुवादाच्च। सूत्रे काशकृत्स्नपदप्रयोगस्तत्र गौरवमाविष्कर्तुम् ॥ तत् सिद्धम्, 'आत्मा वा अरे द्रष्टव्यः' इति मैत्रेयीब्राह्मणवाक्यं साक्षाद्वा जीवद्वारा वा परमात्मपरमेवेति न सांख्यपुरुषस्य वेदान्तमुख्यार्थत्वमिति ॥ चिन्तामणौ तर्हिमृत्तत्कार्येत्यत. पूर्वं, नाप्याश्मरथ्यपक्षः इति पूरणीयम्। अतस्तत्रापि तत्पक्षनिरासंसिद्धिः ॥ १४३ ॥ इति वाक्यान्वयाधिकरणम् ॥ ३३ ॥

१५. निरीश्वरसांख्ये निरस्ते सेश्वरसांख्यो योगसिद्धान्तप्रवर्तकः शंकते मृदिति। श्रुतीनामीश्वरकारणत्वप्रतिपादिकानां तस्य जगन्निमित्तकारणत्वप्रतिपादन एव नैर्भर्यम्, नोपादानत्वेऽपि; विरुद्धधर्मसमावेशायोगात्। विरोधश्च व्याप्तिसिद्धः; प्रतियोग्यभावरूपत्वाच्च। तदुच्यते। इह लोके घटादिकार्ये कुलालप्रभृतिः कर्ता मृत्पिण्डादिरूपोपादानापेक्षया पृथक् भिन्न एव। तद्वत् तादृशव्याप्तिबलादेव आदिकर्ता जगन्निमित्तकारणभूत ईश्वरः नोपादानम्। ईश्वरो नोपादानं निमित्तत्वात् कुलालवदित्यनुमानम्। कर्तेति हेतुगर्भविशेषणम्। हेत्वन्तरमप्याह विकारैर्विरहित इति। निर्विकारत्वादित्यर्थः।

पूर्वत्र, 'अवस्थितेरिति काशकृत्स्नः' इति भगवतो नियामकत्वेनावस्थानात् जीवसामानाधिकरण्यमित्युक्ते कश्चिदाह-यथा राजा राष्ट्रमित्यत्र राष्ट्रनियामकत्वेन राजाऽवतिष्ठते; सामानाधिकरण्यमिहौपचारिकमस्ति; अथापि नोपादानत्वम्, तद्वदत्रापि निमित्तमेव स्यात्; नोपादानमित्याशङ्कयोत्थानात् संगतिः। तदर्थविचारस्तु—किं ब्रह्म जगतो निमित्तकारणम्, उतोपादानकारणमपीति। किं जगत्कारणवादिवेदान्तवाक्यं ब्रह्मण उपादानकारणत्वमपि प्रतिपादयति, उत निमित्तकारणत्वमात्रमिति। किमन्यत्र निमित्तोपादानयोर्भेदनियमो निमित्तमात्रत्वं ब्रह्मणो व्यवस्थापयति, नेति। किं निमित्तकारणत्वमात्रप्रतिपादकत्वे सति एकविज्ञानेन सर्वविज्ञानप्रतिज्ञादृष्टान्तयोरुपरोधोऽस्ति, नेति। अत्र पूर्वपक्षोक्तप्रकारमनूद्य दूषयितुमुपक्रमते—मृत्पिण्डादेरिति। लोके ह्युपादानात् मृत्पिण्डादेर्निमित्तभूतः कुलालादिः पृथगेवोपलभ्यते। तद्वदेव जगतामादिकर्ता नोपादानम्। कुतः; [न हि दृष्टान्तमात्रेण वस्तुसिद्धिः?] इत्याशङ्क्य हेतुमाह—विकारैर्विरहत इति। विकाररहितत्वादित्यर्थः। उक्तमर्थं प्रतिषेधति—नेति। तदेव विवृणोति—द्वारेति। यथा बालो युवा जात इत्यत्र द्वारभूतदेहे विकारात् नाऽऽत्मनि जीवे विकारः, एवमत्रापि जगदुपादानभूतभगवद्विशेषणे विकाराद् भगवति न विकार इत्यर्थः। ननु मृत्तत्कार्यदृष्टान्तो दृश्यते; दृष्टान्तभूते मृदादौ तु स्वरूप एव विकारः; तद्वदत्रापि स्वरूप एव विकारः स्यादित्याशङ्क्य नेत्याह—मृदिति। नात्र दृष्टान्तदार्ष्टान्तिकयोः सर्वथासाधर्म्यमपेक्षितम्, अपितु यथायोग्यमेव साधर्म्यं स्वीक्रियते। अत्र तु भगवति स्वरूप-

---

कुलालादिरेव दृष्टान्तः। मृत्तुल्यविकाररहितः उपादानत्वञ्च विकारवत्त्वम्, विकारवत्त्वतदभावयोर्मिथो भावाभावरूपतया विरोधः सिद्धः। तर्हि हेतुसाध्ययोरैक्यं स्यादिति चेत्—न; उपादानशब्दवाच्यत्वाभावस्य साध्यतया दोषपरिहारात्। निमित्तत्वादिति हेतौ तु यत्र यत्र निमित्तत्वम्, तत्रतत्र नोपादानत्वमिति लोकसिद्धैव व्याप्तिः। न चोपादानाभावे जगद्रूपकार्यमेव न स्यादिति शंक्यम्; प्रकृतिरूपोपादानस्य स्थितेः। ईश्वरमुपादानं वदताऽपि हि प्रकृतिं विना तन्नेष्यते। तेन क्लृप्तेनैव कार्यसिद्धौ व्यर्थमस्याप्युपादानत्वकल्पनमिति। इमं पूर्वपक्षं निरस्यति इति नेति। हेतुमाह द्वारमात्रे विकारादिति। द्वारतयाऽवश्य स्वीकर्तव्ये प्रधान एव विकारस्वीकारादित्यर्थः। नन्विदं पूर्वपक्षस्यैव साधकम्। मात्रपदेन हि ईश्वरे विकाराभाव एवोक्तः। स एव च हेतुः पूर्वपक्षिणोपन्यस्त इति चेत्—तन्न; प्रतिज्ञादृष्टान्तानुपरोधादिति सौत्रहेतोः स्पष्टत्वादनुक्तेः। तथाच ईश्वरो यदि नोपादानम्, प्रतिज्ञोपरोधः स्यात्, दृष्टान्तोपरोधश्च स्यादिति तर्कमुखेनोपादानत्वस्थापनम्। अनुमानविवक्षायां तु ईश्वरः सर्वोपादानम् सर्वज्ञाततानप्रयोजकज्ञानविषयत्वात्; सर्वकार्यज्ञानरूपज्ञानविषयत्वादिति वा। एवं मृत्पिण्डादिरूपोपादानतुल्यतया श्रुतिदर्शितत्वादिति च हेतुः। इदं सर्वं सूत्रार्थसंग्रहश्लोके दर्शयिष्यति। अतस्तत्सिद्धवत्कारेण तदुपरि वक्तव्योक्तिरिह। तथाच नेत्यस्य विकारविरहो नेत्यर्थः। निर्विकारे कथं विकारविरहनिषेध इत्यत्राह द्वारेति। तस्मिन् साक्षात् विकाराभावेऽपि द्वारेऽस्तीति भावः। नात्र मात्रपदार्थे वाक्यतात्पर्यम्। द्वारे विकारसद्भावादित्येवार्थः। मात्रपदेन न निर्विकारश्रुतिविरोध इत्यपि सूचितम्। अस्तु वा मात्रपदं कृत्स्नार्थकम्। यत्रयत्र ब्रह्मण उपादानत्ववर्णनम्, तत्र सर्वत्र द्वारभूते विकारस्वीकारात् उपादानत्वोपपादनसंभवादित्यर्थः। अयं भावः—किं विकारस्य साक्षादसंबन्धित्वं विकार-

विकारस्यासंभवात् अचेतनवैशिष्ट्येनैवावस्थान्तरप्राप्तिरुपलभ्यते। तदिदमाह—देहेति। प्रभृतिपदेन, 'यथा सतः पुरुषात् केशलोमानि' इत्यादिनिदर्शनग्रहणम्। व्यापृतेर्दर्शितत्वात्=भगवद्व्यापारस्य दर्शितत्वात्। न ह्यूर्णनाभेर्देह एवावस्थाप्राप्तिः; नापि केवलात्मनि; अपितु देहविशिष्टात्मनीति लोकोपलम्भः। एवं प्रकृतिविशिष्टपरमात्मन्येवावस्थान्तरप्राप्तिरिति समञ्जसमेतत्॥ १४४॥

(१४५) स्वज्ञानाद्यं स्वजन्यं भवति; सृजति च स्वान्यसंयोगमीशः;
संयोगे मूर्तनिष्ठे प्रकृतिरपि हि तत् स्वान्निमित्तं क्रियातः।
एकस्माऽऽदौ बहु स्यामिति बहुभवनं सौभरिन्यायसिद्धम्;
भेदाभेदश्रुतीनामविहतिरिह च स्याद् विशिष्टैक्ययोगात्॥ १६॥

एकस्यैव पदार्थस्य निमित्तत्वमुपादानत्वं च परस्परविरुद्धमिति परे प्रलपन्ति। तैरुक्तमर्थं तदङ्गीकृतप्रक्रियादृष्टान्तैनोपपादयितुमुपक्रमते—स्वज्ञानाद्यमिति। न्यायवादिनो भगवदुपादानत्वप्रतिक्षेपकाः स्वप्रक्रियाविरोधादेव भ्रश्यन्ति। ते खलु समवायिकारणम् असमवायिकारणं निमित्त-

विरहः, उत सर्वथैव तदभावः। नाऽऽद्यः; परम्परया विकारवत्यपि उपादानत्वस्येष्टतया साक्षाद्विरहस्याप्रयोजकत्वात्। नान्त्यः; असिद्धेरिति। अत्र कश्चिदाह, 'साक्षात् विकारवत्त्व एव मृत्पिण्डादिदृष्टान्तप्रदर्शनसामञ्जस्यम्' इति। इमं भास्करपक्षं क्षिपति मृदिति। निर्विकारत्वश्रुतिविरोधेन दृष्टान्तानुसारिकल्पना वार्यत इति भावः। दृष्टान्तान्तरेण परम्परया विकारवत्त्वमपि श्रुत्यैव दर्शितमित्याह देहेति। 'यथोर्णनाभिः सृजते गृह्णते च' इति चेतनदृष्टान्तः साक्षाद्विकाराभावस्य, देहद्वारा विकारवत्त्वस्य च प्रदर्शनार्थ इति भावः। प्रभृतिशब्देन, 'यथा सतः पुरुषात् केशलोमानि' इत्युक्तं ग्राह्यम्। व्यापारस्तु यथायथं भाव्यः; न तु क्रियारूप एव। शरीरनियन्तृपुरुषाभावे च न केशाद्युत्पत्तिरित्यलम्॥ १४४॥

१६. श्रुतिप्रामाण्येन निमित्तत्वोपादानत्वे एकत्रोपपादयिष्यन् प्रथमतः पूर्वोक्तानुमानस्यान्यथापि दुष्टत्वं दर्शयति स्वेति। ननु सेश्वरसांख्येन पूर्वपक्षे क्रियमाणे तार्किकमते निमित्तोपादानैक्योपपादनं कथं युज्यते इति चेत्—तर्कमुखेन प्रष्टारं सांख्यं प्रति तार्किकवादपुरस्कारेण प्रत्युक्तिर्युक्तैव। किञ्च सेश्वर इह पूर्वपक्षी सांख्योऽपि तार्किकोऽपीति सर्वग्रहणेऽपि न दोषः। उत्तरार्धप्रभृति श्रुत्यर्थोपपादनम्। यद्वा तार्किकादिशंकापरिहारार्थमेवोत्तरार्धमपि। अनन्तरश्लोके श्रुत्यर्थकथनं साक्षादित्यस्तु। अयं श्लोकार्थः—ईश्वरो नोपादानं निमित्तत्वादित्यनुमानमनैकान्तिकम्; उभयसमावेशदर्शनात्। नोपादानमिति श्लोके चेदं विशदयिष्यते। समावेश एवोपपाद्यतेऽत्र। द्रव्यस्यापूर्वस्य सिद्धान्तेऽनुत्पत्त्या द्रव्यमुपेक्ष्य गुणे स प्रदर्श्यते। एकैकोऽप्यात्मा यदा स्वयमेव प्रयत्य ज्ञानं सुखं दुःखं बुभुक्षारूपक्षुधं देहविशेषसंयोगरूपजन्मादिकञ्चार्जयति, तदा तस्य ज्ञानादिविषये कर्तृत्वसत्त्वात् निमित्तत्वं यथाऽस्ति, तथा तस्य ज्ञानादेः तस्मिन्नेवाऽऽत्मनि समवायेन जायमानतया समवायिकारणत्वरूपोपादानत्वमपि। अतो हेतुमति साध्याभावात् व्यभिचारः। एवमीश्वरमादायापि। ईशः स्वसंकल्पवशेन बाह्यवस्तुषु क्रियामुत्पाद्य स्वस्वरूपे एकस्मात् प्रदेशात् प्रदेशान्तरं तानि प्रापयति। तत्र प्रदेशान्तरावच्छेदेन परमात्मनि जायमानं तत्तद्वस्तुसंयोगं प्रति स निमित्तकारणम्; आधारत्वादुपादानञ्च। तथाच स्वस्यान्येन संयोगं

कारणमिति द्विधा(त्रिविधं) कारणं कल्पयन्ति। अथापि यदेव निमित्तकारणम्, तदेव समवायिकारणमिति ब्रुवते। तद्यथा। स्वज्ञानादि स्वजन्यमेव। स्वकीयं हि ज्ञानचिकीर्षाप्रयत्नादिकं शास्त्राभ्यासादिभिः स्वयमेव करोति जीवः। तेन तत्र कर्तृत्वान्निमित्तकारणं भवति। तथापि च स्वयमेव समवायिकारणं भवति स्वज्ञानादेः। कार्यं यत्र समवैति, तत् समवायिकारणमिति समवायिकारणलक्षणस्य स्फुटमुपलम्भात्। किंच ईश्वरोऽपि सर्वव्यापत्स्य स्वस्य सर्वैरपि परमाण्वादिभिः संयोगं स्वयमेव सृजति; सर्वकार्यहेतुत्वात्। तथाच तत्र कर्तृत्वेन निमित्तकारणं भवति। समवायिकारणत्वमपि तं प्रति तस्य दृश्यते; परमाण्वादिसंयोगस्येश्वरनिष्ठत्वात्। तेन यथा कर्तृत्वं समवायिकारणत्वं च युष्मत्सिद्धान्ते भवतीश्वरनिष्ठमेव, तथाऽस्मत्सिद्धान्ते निमित्तत्वमुपादानत्वं चैकवस्तुनिष्ठमिति को विरोधः। अत्रायं विशेषः–समवायस्याप्रामाणिकत्वात् प्रत्ययो(ग्रो?) (अवयव्यु?)त्पत्तिवादस्यास्यन्तजघन्यत्वाच्च केवलमवस्थान्तरापत्तिमात्रमेव वयं स्वीकुर्मह इति। सृजतीत्यादि। स्वस्यान्यसंयोगमीश्वरः सृजतीति शब्दान्वयः। तत्रेश्वरस्योपादानत्वं विवृणोति–संयोग इति। तत्=तस्मात् कारणात्। ईश्वरो मूर्तैः सह स्वस्य

---

सृजन् ईशः तत्रोभयविधकारणम्। एतद्विवरणं द्वितीयपादः। तत्=तस्मात् ईश्वरः प्रकृतिरपि=उपादानमपि; **क्रियातः**-संकल्पात् निमित्तमपीति। अर्थान्तरं वा—यत्र बाह्यद्रव्ये क्रिया; ततः संयोगः ईश्वरेणान्येन वा, तत् द्रव्यं संयोगं क्रियां च प्रति उपादानम्, तदेव द्रव्यं मूर्तं स्वनिष्ठे संयोगे स्वयं यथा **प्रकृतिः** उपादानम्, तथा निमित्तकारणत्वेनापीष्यते क्रियाद्वारा संयोगहेतुरिति। अतोऽनैकान्त्यमिति।

ननु ब्रह्मैकमेव प्रकृतिजीवादिरूपेण जायत इति भेदाभेदवादिपक्षस्तावन्नेष्यते। प्रकृतिपुरुषानादित्वश्रुतिवशात् तत्त्वत्रयमिष्टम्। अचेतनस्यैव बहुभवनं दृष्टमिति, बहु स्यामिति संकल्पस्यापि बहूत्पादकः स्याम्, बहु उत्पादयेयमित्येवार्थो वर्णनीयः। तथाच कार्यापेक्षया ब्रह्मणो भिन्नत्वात् निमित्तत्वमात्रमिष्यते। अतो विकाररहितत्वादिति पूर्वोक्तहेतुबलात् उपादानत्वाभावसाधनमित्यत्राह **एकस्येति**। एक एव योगी सौभरिः पञ्चाशतं कन्याः परिणेष्यन्, 'अहं बहुः स्याम्' इति संकल्प्य पञ्चाशद्रूपो जातः। तत्र संकल्पाश्रयत्वादिना निमित्तत्वं निर्विवादम्। तत्र, बहुः स्यामिति बहुत्वञ्च न देहमात्रनिष्ठम्, अहमर्थात्मनिष्ठतया प्रतीतत्वात्। बहुत्वं हि अपेक्षाबुद्धिविशेषविषयत्वम्। तत् अयमेकः अयमेक इति देहमात्रग्रहणे देहनिष्ठं भवति। तत्तद्देहविशिष्टस्य अयमिति ग्रहणे तु विशिष्टेष्वेव बहुत्वगुण इति आत्मनि विशिष्टवेषेण बहुत्वमक्षतम्। सत्कार्यवादस्यैव स्वीकारात् द्रव्योत्पत्तेरनंगीकारात् अनेकेभ्यः अवयवेभ्यः एकमवयविद्रव्यं भवतीति बहुभ्य एव द्वाभ्यामपि वैकमिति तार्किकपक्षस्य दूष्यत्वात् अवस्थाविशिष्टत्वमेव कार्यत्वमिष्टमिति सौभरौ तद्देहविशिष्टत्वैतद्देहविशिष्टत्वादिरूपानेकावस्थाश्रयत्वसत्त्वात् एकप्रथमदेहविशिष्टत्वरूपावस्थामादायोपादानत्वम्, नानादेहविशिष्टत्वरूपावस्थामादायोपादेयत्वञ्चेति जीवे विकारवत्त्वोपपादनवत् ईश्वरेऽपि तच्छरीरभूतप्राकृतानेकवस्तुवैशिष्ट्यमादायावस्थाद्वयोपपादनसंभवात् उपादानत्वमक्षतम्। तत्र सौभरौ विकारवत्त्वोपपादनं द्वेधा। तत्तद्देहविशिष्टत्वमेव विकार इत्युक्तौ साक्षात् तदाश्रयत्वमेव। जीवो बालो युवा जात इत्यादौ बालत्वयुवत्वादिकं देहनिष्ठं परम्परया स्वाश्रयाश्रयत्वसंबन्धेनाऽऽत्मनि प्रतीयत इत्यनुभवानुसारात् परम्परयाऽवस्थावत्त्वमपि

संयोगे प्रकृतिरपि–उपादानमपि, क्रियातो निमित्तं–स्वव्यापारान्निमित्तं स्यादित्यर्थः। तदपि मूर्तमीश्वर-संयोगे समवायिकारणं भवति। स्वनिष्ठकर्मद्वारा स्वयं निमित्तकारणं भवतीत्यर्थः। अत्र चोदयति—एकस्येश्वरस्य कथं बहु स्यामिति बहुभवनं स्यादिति। तच्चोदनां परिहरति—एकस्येति। यथा सौभरिरेक एव पञ्चाशच्छरीरपरिग्रहं सङ्कल्प्य तेन रूपेण जात इति प्रमाणसिद्धम्, तथा भगवानपि नानाविशेषणविशिष्टवेषेण स्वसंकल्पादेव जायत इति को विरोधः। काचिद्भेदश्रुतिः; अपरा च भेदश्रुतिः; भेदाभेदौ परस्परविरुद्धावेवेत्याशङ्कायामस्मत्सिद्धान्ते विरोधगन्धोऽपि नास्तीत्याह—भेदाभेदेति। स्वरूपभेदात् भेदश्रुतिरुपपद्यते, विशिष्टैक्यादभेदश्रुतिरिति सर्वश्रुतिनिर्वाहे वयमेव विजयामह इति ॥ १४५ ॥

(१४६) कार्यैक्ये हि प्रतिज्ञा तदनुगुण उदाहारि दृष्टान्तवर्गः
स्रष्टुः स्यामित्यभिख्यां श्रुतिरिह वनतां वृक्षतादिश्च वक्ति।
आत्मानञ्चैष एव स्वयमकुरुत तद्भूतयोनित्वमुक्तम्;
तस्मात् कर्ताऽपि देवः प्रकृतिरपि भवेत् सर्वतत्त्वान्तरात्मा ॥ १७ ॥

उक्तनिमित्तत्वाविरुद्धोपादानत्वोपपादकयुक्तिजातं संग्रहेण प्रदर्शयति—कार्यैक्य इति। तत्र तावत् प्रतिज्ञावाक्यमेकविज्ञानेन सर्वविज्ञानप्रतिपादकं भगवत उपादानत्वमन्तरेण न संघटते।

---

कार्यत्वं कारणत्वञ्च भवति। लोकव्यवहारस्यैव सर्वत्र शरणत्वात्। एवम्भूतपूर्वावस्थाश्रयत्वमुत्तरावस्था-श्रयत्वञ्चोपादानत्वमुपादेयत्वञ्चेष्टमिति स्थिते, साक्षात् विकाररहित्यमात्रेणानुपादानत्वस्थापनं सौमर्यादौ व्यभिचरितमिति साक्षात्परम्परासाधारणसंबन्धेन विकाररहित्यमेव हेतूकर्तव्यम्। तच्च ब्रह्मण्यसिद्धमिति नोपादानव्यवहारनिषेधसंभव इति।

ननु कार्यैकारणैक्यनिर्वाहस्तावदास्ताम्। प्रकृतिपुरुषयोः परमात्मना सहाभेदरूपैकद्रव्यत्वा-स्वीकारे तयोः परमात्मनस्त्वैक्यश्रवणस्य कथमुपपत्तिरिति भास्करादिशंकां परिहरति भेदेति। अन्तर्यामि-ब्राह्मणे अव्यक्ताक्षरतमआत्मादीनामपि परमात्मशरीरत्वस्य श्रुतत्वात् शरीरवाचिनां शब्दानामात्म-पर्यन्तत्वस्य स्थितत्वाच्च, 'तदनुप्रविश्य सच्च त्यच्चाभवत्' इति श्रुत्याऽपि तस्य दर्शितत्वाच्च अव्यक्तात्मादि-शब्दानां विशिष्टपरमात्मपरत्वेनाभेदनिर्वाहात् द्रव्यैक्यस्यानपेक्षितत्वात्। एवञ्च, 'अव्याकृतमासीत्' इत्यादौ अव्याकृतादिपदं परमात्मपदासमानाधिकरणमपि विशिष्टपरमेवेति सर्वत्र ब्रह्मोपादानकत्वमेव शास्त्रार्थः। तत् सिद्धं पूर्वोक्तानुमानाभ्यां न प्रकृतित्वभंग इति ॥ १४५ ॥

१७. ब्रह्मण उपादानत्वे युक्तिविरोधशंका परिहृता। उपादानत्वस्थापकयुक्तिवर्गप्रदर्शिसर्व-सूत्रार्थसंग्रहरूपं श्लोकमाह कार्येति। अनेन—'ऊर्णनाभिरूपश्रौतदृष्टान्तमुखेनोपादानत्वस्थापनमयुक्तम्। ऊर्णनाभेरुपादानत्वे मानाभावात्। ऊर्णनाभिर्हि वक्त्रतः ऊर्णां तन्तुरूपां संतनोति, समये ग्रसते चेति ऊर्णनाभिर्निमित्तमात्रम्। ऊर्णैवोपादानम्। ऊर्णाशब्देन तन्तुशब्देन चोर्णनाभेरनुच्यमानत्वात् विशि-ष्टोर्णनाभौ कार्यत्वकारणत्वयोर्नैव प्रसक्तिः। ऊर्णनाभिः स्वशरीरैकदेशात् कार्यं सृजतीत्येतावद्दर्शनात् ईश्वरोऽपि प्रकृतितो जगत् सृजतीत्येतावत् सिध्येत्। तावता कुलालान्मृद इवेश्वरात् प्रकृतेः पृथक्सिद्धता

कारणस्य कार्येण सहैक्ये प्रतिज्ञा घटत इत्यर्थः। तदनुगुण इति। कार्यकारणयोरैक्यप्रतिज्ञानुगुण एव मृत्तत्कार्यादिदृष्टान्तवर्ग उदाहारि। इत्थमुपादानत्वमुक्तम्; निमित्तत्वमप्याह—स्रष्टुरिति। स्रष्टुरीश्वरस्य स्यामिति श्रुतिरभिध्यानं वक्ति=निमित्तत्वं वक्तीत्यर्थः। अन्या तु श्रुतिर्निमित्तत्वं सिद्धं कृत्वा उपादानत्वं सहकारित्वं च साक्षात् स्वयमेवाह, 'किं स्विद्वनम्' इत्यादिना। वनतां वृक्षतादिं च वक्तीति। वक्तीत्यस्यावृत्त्या(?)ऽन्वयः। 'किं स्विद्वनम्' इत्युपादानप्रश्नः। 'क उ स वृक्ष आसीत्' इत्युपकरणप्रश्नः। 'यतः' उपादानात् द्यावापृथिवी भगवान्निष्टतक्षुः=ससर्जेति। वचनव्यत्ययश्छान्दसः। अथवा-मनीषिणो वनं मनसा=बुद्ध्या निष्टतक्षुः=निश्चितवन्त इत्यर्थः। उपादानभूतात् भगवत एव सर्वोत्पत्तिरिति मनसा निरणैषुरित्यर्थः। अथवा मनीषिण इत्यस्योत्तरत्राप्यन्वये संबोधनान्तत्वमिति। 'यदध्यतिष्ठत्' इत्यादि। भुवनान्यन्तर्यामित्वेन धारयन्नीश्वरो यत्=उपकरणमध्यतिष्ठदिति श्रुत्यन्वयः। 'ब्रह्म वनम्' इत्यादि। ब्रह्म वनम्=उपादानम्। 'ब्रह्म स वृक्षः' इति। ब्रह्मैवोपकरणमित्यर्थः। एतदुक्तं भवति-सूक्ष्मचिदचिद्विशिष्टमुपादानम्; विश्वस्योपकरणभूतकालादिविशिष्टः स एवोपकरणमिति। 'मनीषिणो मनसा पृच्छतेदु तत्'। हे मनीषिणः मनसा-अवधानेन सहैतच्छृणुतेत्यर्थः। 'मनीषिणो मनसा विब्रवीमि वः' इति। अत्र वः=[एवं]शृण्वतां

---

नेति तु स्यात्; न तु ब्रह्मण उपादानत्वमपि। प्रत्युतानुपादानत्वमेवोर्णनाभेरिव' इति शंकाऽपि शमिता भवति। शरीरात्कार्यसृष्टिमात्रे ऊर्णनाभिर्दृष्टान्तः। तस्योपादानत्वाभावस्तु ऊर्णाशब्देन तन्तुशब्देन च तस्य ग्रहणाभावात्। इह तु सौभरिन्यायात् कार्यकारणशब्दवाच्यत्वस्य ब्रह्मणि वर्तमानत्वं विशेषः। अहं तन्तुर्भविष्यामीति च नोर्णनाभिः संकल्पयति; ब्रह्म तु तथेत्यादि भाव्यम्।

**चि. टी-आवृत्त्याऽन्वय** इति। वक्तीत्यस्येत्युपलक्षणम्। श्रुतिरित्यस्येव वक्तीत्यस्यापि पूर्वमप्यन्वयः। **स्याम**िति श्रुतिः स्रष्टुरभिध्यां वक्तीत्येकोऽन्वयः। श्रुतिः [अन्या] इह स्रष्टुर्वनतां वृक्षतादिञ्च वक्तीत्यपरोऽन्वयः। अत्र स्रष्टुरित्यस्याप्यावृत्तिः। **अथवे**ति। अत्र पक्षे, यतो द्यावापृथिवी, किंस्वित् तत् वनं क उ स वृक्ष आसीदित्येकं वाक्यम्। निष्टतक्षुर्मनीषिणो मनसेति वाक्यान्तरम्। **वनमुपादान**मिति। भाष्ये उपादानमुपकरणञ्चेति क्रमदर्शनात् वनमुपादानम्, वृक्ष उपकरणमित्यस्तु। वनं हि वृक्षसमुदाय एव। अनेकवृक्षसाध्यत्वात् स्थूलकार्यस्य वनमुपादानम्। तक्षणादिकाले च तक्ष्यमाणस्य दारुणोऽधस्तादुपकारकतया निक्षिप्तो वृक्षश्चोपकरणं भवतीत्याशयः। **शृणुतेत्यर्थ** इति। **पृच्छते**त्यस्य शृणुतेत्यर्थसंभवेऽपि प्रश्नस्य श्रवणार्थत्वादेवमुक्तिः। मन्त्रे पृच्छत इत् उ तदिति पदच्छेदः। **इत्** उ इत्युभयमवधारणे। पृच्छतैवेत्यर्थः। प्रश्नमन्तरा स्वयं दुर्ग्रहमिति भावः। भुवनानि धारयन् यदध्यतिष्ठदेव, वनवृक्षाभाव इवाधिष्ठेयाभावेऽपि कार्यं न भवतीति निश्चित्य तत् पृच्छतेति ॥

श्लोकार्थस्तु—"प्रतिज्ञादृष्टान्तानुपरोधात्" इत्युक्तरीत्या एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा हि कार्येण कारणस्यैक्यं दर्शयति। तेन ब्रह्मणो जगदैक्यं सिद्धम्। कार्यकारणैक्यञ्चोपादानोपादेयभावस्थल एव। अतो ब्रह्मण उपादानत्वं ज्ञायते। ननु भवन्मते ब्रह्मणः सर्वशब्दवाच्यत्वात्, सहकारिकारणानामपि ब्रह्मानुप्रवेशमन्तरा कार्यकरत्वाभावेन तत्रापि ब्रह्मप्रवेशसद्भावात् कार्यवाचिशब्देन ब्रह्मण उक्तिमात्रेणापि,

भवतामनुग्रहपूर्विका(कम?)वधानविशेषेण ब्रवीमीति। 'यदध्यतिष्ठत्' इति। यदुपकरणं भगवानध्यतिष्ठदिति पूर्वमेवोक्तम्। तेन सर्वाधिष्ठातृत्वात् भगवतो निमित्तत्वसिद्धिः। किंच, 'तदात्मानं स्वयमकुरुत' इति तस्यैव भगवतः स्वयमेव स्वात्मनोऽवस्थान्तरकरणात् उपादानत्वं निमित्तत्वं च

---

उपादानत्वाभावेऽपि सर्वकारणवाचिपदवाच्यब्रह्मैक्यसंभवात् ऐक्योक्तिमात्रेणोपादानत्वसिद्धिः कथमित्यत्र दृष्टान्तानुपरोधादिति सूत्रभागं विवृणोति तदनुगुण इति। मृत्पिण्डलोहमणिकाष्र्णायसदृष्टान्तान् प्रदर्श्य तेषां स्वकार्यैक्यवत् ब्रह्मजगदैक्यमित्युक्तत्वात् तत्रोपादानोपादेयभावस्यैव स्थित्या अत्रापि तस्य सिद्धिः। लोके उपादानोपादेयस्थल एवैक्यं दृष्टमिति। अभिध्योपदेशाच्चेति सूत्रार्थमाह स्रष्टुरिति। अहं बहु स्याम्, प्रजायेयेति हि अभिध्या=संकल्पः। अभिशब्देन स्वस्यापि कार्यवर्गे प्रवेशो दर्श्यते। न हि कुलालादिः, 'अहं घटः स्याम्' इति ध्यायति। तेन कार्यत्वं स्वस्मिन्नप्येष्टव्यम्। चिन्तामणौ निमित्तत्वमप्याहेत्यस्य पूर्वमुपादानत्वमात्रमुक्तम्, अत्र निमित्तविशिष्टमुपादानत्वमुच्यत इत्यर्थः। उपादानत्वांश एव निर्भरः।

साक्षाच्चोभयाम्नानादिति सूत्रार्थमाह श्रुतिरिति। "ब्रह्म वनं ब्रह्म स वृक्ष आसीत्.... ब्रह्माध्यतिष्ठत भुवनानि धारयन्" इति श्रुतिः इह द्यावापृथिव्यादिलोकात्मके दारुमयरथादित्वेन रूपयितुमिष्टे कार्ये यत् वनं वृक्षः कर्त्रधिष्ठेयमुपकरणञ्चापेक्षितं तद्रूपतां स्रष्टुर्वक्ति। अत्र भाष्ये "निमित्तत्वमुपादानत्वञ्च साक्षादाम्नायते" इति, "ब्रह्मैवोपादानमुपकरणानि चेति अत्रोक्तम्" इति चोक्तम्। प्रकृतिश्चेति सूत्रे चकारसहिते प्रकृतित्वरूपोपादानत्वं तदन्यकारणत्वञ्चेत्युभयस्य प्रसक्तत्वात् उभयेत्युक्तिः। उपादानत्वं मुख्यम्। तद्भिन्नमिति कर्तृत्वमात्रं वा गृह्यताम्; कर्तृवदुपकरणसर्वविधनिमित्तकारणत्वमपि तद्भिन्नत्वेन क्रोडीक्रियतां वा। अत्र वनवृक्षादिपदेषु कुत्रोपादानविवक्षेति चेत्—लोके दारुकार्यरथगृहादौ वृक्षाणामुपादानतयोपयोगः; वनञ्च तेषां वृक्षाणामुत्पत्तिस्थानम्; रथकारादिभिरधिष्ठेयञ्च वासीपरश्वधादि। तत्तुल्यमत्र ग्राह्यम्। तत्तत् किमिति प्रश्ने द्यावापृथिव्यादिरूपव्यष्टिं प्रति कारणभूतानि समष्टिद्रव्याणि वृक्षतुल्यानि। तेषामुत्पत्तिस्थानं प्रकृतिर्वनम्। सर्वव्यापि परब्रह्मैव वा वनम्। अधिष्ठेयञ्च कालादृष्टादीति वक्तव्यम्। तत् विहाय सर्वं ब्रह्मैवेत्युक्तम्। तेनोपादानत्वादिकं नाचेतनमात्रे किंतु ब्रह्मणीति भावो ज्ञायते। वृक्षतादिमिति आदिशब्देन वनशब्दविवक्षितकारणविशेष-वृक्षशब्दविवक्षितसमष्टिरूपोपादानोभयव्यतिरिक्तं कारणं सर्वं कर्त्रधिष्ठेयं, 'यदध्यतिष्ठत् भुवनानि धारयन्' इत्युत्तरार्धविवक्षितं ग्राह्यमिति, वासीपरश्वधाद्युपकरणतामित्यर्थो भाव्यः। अयं भावः—भुवनधारकपुरुषधौरेयाधिष्ठेयत्वं सर्वेषामिति तस्य निमित्तकारणत्वं प्रागेव सिद्धम्। लोके उपादानत्वोपकरणत्वे कर्तृभिन्नगते एव लक्ष्येते। तद्वदत्रापि प्रकृतिर्महदादिसमष्टिः कालादृष्टादिश्च कारणानि नैव न सन्ति। एवञ्च तेषु उपादानत्वे कर्तृभिन्ननिमित्तत्वरूपोपकरणत्वे च प्रत्युत्तरश्रुत्या वक्तव्ये तद्विहाय ब्रह्म ब्रह्मेति ब्रह्मशब्दमेव प्रयुज्य साक्षात् तत्रैवोभयाम्नानात् उपादानत्वादिकमपि निमित्तत्वमिव ब्रह्मणि मुख्यमित्येव श्रुतितात्पर्यमवसीयते इति। एवं सौत्रसाक्षात्पदस्वारस्यं द्रष्टव्यम्। एतेन श्रुतावत्रोपादानशब्दाभावात् कथं साक्षादित्युक्तिरिति निरस्तम्।

दृश्यते। तद्भूतयोनित्वमुक्तमिति। 'यद्भूतयोनिं परिपश्यन्ति धीराः' इति तस्यैव भूतयोनित्वं साक्षादेवोच्यते। अतः कर्तृत्वं प्रकृतित्वं चोभयमपि प्रमाणसिद्धं भवतीति। निगमयति—तस्मादिति। सर्वतत्त्वान्तरात्मेति हेतुगर्भविशेषणम्। सर्वान्तर्यामित्वात् सर्वं संघटत इत्यर्थः॥ १४६॥

(१४७) नोपादानं निमित्तं किमपि; तदितरत् कारणं तद्धि विद्मः
यद्वा सिद्धं निमित्तं न भजति तदुपादानतामित्ययुक्तम्।
दृष्टादाकारभेदादुभयघटनतो लोकवेदानुरोधे
सिद्धे स्वच्छन्दलक्ष्मप्रणयनकुसृतिः पाकचिन्ताविपाकः॥ १८॥

अत्र कश्चिदाह—यत् समवायिकारणं यच्चासमवायिकारणं तदुभयव्यतिरिक्तकारणं निमित्तकारणमिति हि न्यायवादिभिर्लक्षणमभाणि। तेन यत् उपादानं तन्निमित्तं न भवति; यच्च निमित्तं तत्

---

'आत्मकृतेः', 'परिणामात्' इति सूत्रद्वयार्थमाह आत्मानश्चेति। अयमर्थः—एवमुपादानत्वाद्युपपादने क्रियमाणेऽपि यदि ऊर्णनाभिक्रियमाणतन्तुगतकार्यावस्थाया ऊर्णनाभौ अभावात् कार्यकारणैक्यविरहवत् इहापि जगद्रूपकार्यगतावस्थाया ब्रह्मनिष्ठत्वाभावे उपादानोपादेयभावे विमतिः स्यात्। न चैवम्; 'आत्मानं स्वयमकुरुत' इति ब्रह्मण एव क्रियमाणत्वस्य=कार्यावस्थाभाक्त्वस्य स्पष्टोक्तेः। तेन च कारणावस्था कार्यावस्था च द्वारनिष्ठाऽपि ब्रह्मण्यपि परम्परया बाल्युवजीवन्यायेन स्वीकार्या, आत्मनां धर्मभूतज्ञानमादाय स्वभावविकारोपपादनवत् ब्रह्मधर्मभूतज्ञानगतनियन्तृत्वादिस्वभावविकारमादाय वा कार्यावस्थारूपपरिणामो ब्रह्मणि वक्तव्य इति सुस्थमुपादानत्वमिति। आत्मानश्चेति चकारः पूर्वोक्तयुक्तिसमुच्चये। शरीरभूतद्रव्यमिव स्वमपीत्यर्थको वा। योनिश्च हि गीयते इति सूत्रार्थमाह तदिति। तस्य ब्रह्मणः भूतयोनित्वम्, 'कर्तारमीशं पुरुषं ब्रह्म योनिम्', 'यत् भूतयोनिं परिपश्यन्ति धीराः' इति योनिशब्दवाच्यकारणत्वं कर्तृत्वातिरिक्तमुक्तम्। 'यो योनिं योनिमधितिष्ठत्येकः' इति योन्यधिष्ठातृत्वस्यैव योनित्वस्याप्युक्ततया साक्षादुपादानत्वम् अन्तर्यामितयास्थितिनिबन्धनमेष्टव्यमिति ज्ञाप्यत इति। तदाह सर्वान्तरात्मतया प्रकृतिः उपादानमपि भवेदिति॥ १४६॥

१८. स्वज्ञानाद्यं स्वजन्यमिति श्लोकेन लोके निमित्तत्वोपादानत्वसमावेशो दर्शितः। ततः कार्यैक्ये इति श्लोकेन वेदे तदुभयसमावेशोऽदर्शि। एवं लोकवेदानुरोधे कार्ये, तदनुगुणलक्षणपरिष्करणं परित्यज्य तार्किकैरन्यथा कथनमस्पञ्जकृत्यमित्याह नेति। उपादानभूतं किमपि निमित्तं न भवति, हि यतः तत् निमित्तं तदितरत् कारणं उपादानकारणभिन्नकारणत्वलक्षणलक्षितं विद्मः। समवाय्यसमवायिकारणभिन्नकारणत्वं निमित्तमिति निमित्तत्वलक्षणमिति भावः। मुखान्तरेणापि तदाह यद्वेति। यद्वेति नैकं पदम्। वा अथवा यत् निमित्तं सिद्धम्—निमित्तत्वेनावधृतं भवति, तत् उपादानतां न भजति। पूर्वोक्तलक्षणबलादेव, इदं नोपादानं निमित्तत्वात्, इदं न निमित्तमुपादानत्वादित्युभयथा वक्तुं शक्यत इत्युक्तं भवति। निरस्यति इत्ययुक्तमिति। उपादानत्ववत् मृदि दण्डचक्रादौ च निमित्तत्वस्यापि तत्तत्स्वेष्टात् व्यापारभेदात् यथा तत्स्वीकारः, तथा द्विविधाकारस्याप्येकत्र

उपादानं न भवतीति नियमस्य सिद्धत्वात् निमित्तोपादानैक्यवादो न संघटत इति लक्षणविरोधमाशङ्क्य परिहरति—नोपादानमिति। किमप्युपादानं निमित्तं न भवति। उपादानव्यतिरिक्तं कारणं निमित्तमिति हि निमित्तकारणविदः। एवं यत् निमित्तत्वेन सिद्धं तत् उपादानतां न भजतीति शब्दान्वयः। उक्तमर्थं प्रतिक्षिपति—अयुक्तमिति। अयुक्तत्वमेव लोकवेदप्रसिद्ध्योपपादयति—दृष्टादित्यादिना। लोके हि तुलायां[1] प्रमाणप्रमेयव्यवहारन्यायेनैकस्यैव पदार्थस्य सर्वलक्षणयोगे सति

दर्शने उभयस्यापि कारणत्वस्य घटनमिष्टमिति, किमिति तद्भिन्नत्वघटितलक्षणकरणम्। उपधेयसंकरेऽप्युपाधेरसंकर इति भवद्भिरेवैकत्र नानाहेत्वाभासत्वस्वीकारात्। श्लोके पाठः अर्भकः॥

उपादानमित्यस्य तार्किकरीत्याऽर्थस्तावत्—उपादीयते=स्वनिष्ठतया स्वीक्रियते कार्यं येन द्रव्येण तदिति। अवयवद्रव्येषु अवयविद्रव्यं जायते; द्रव्ये गुणः क्रिया च। तेषां स्वगतद्रव्यगुणकर्मणां स्वयं द्रव्यमुपादानं भवति। घटे पाकात् रूपान्तरोत्पत्तौ पूर्वरूपध्वंसो जायते; तत्र रूपध्वंसं प्रति घटो नोपादानम्, ध्वंसस्याभावत्वात्। तदर्थे जायमानं प्रति यत् समवायसंबन्धेनाऽऽधारभूतं तत् उपादानमित्युच्यते। अत एव समवायिकारणमिति तस्य पर्यायः। असमवायिकारणमपि तार्किकैरिष्टम्। अवयवद्वयसंयोगं विना अवयविद्रव्यानुत्पत्त्या स संयोगः कारणत्वेन स्वीकृतोऽसमवायिकारणमित्यादि भाव्यम्। एतदुभयभिन्नं कारणं सर्वं निमित्तकारणमित्युच्यते। तत्र घटनिमित्तकारणेषु दण्डचक्रकुलालादृष्टादिष्वनेकेषु कर्ताऽप्यन्तर्भूतः। वेदान्तिभिः प्रायः कर्तरि निमित्तत्वेन व्यवहारस्य क्रियमाणत्वेऽपि सर्वेषां निमित्तत्वमिष्टमेव। अत्रेदं वक्तव्यम्—दण्डादीनां स्वगतगुणक्रियादिनिरूपितसमवायिकारणत्वे सत्येव घटादिकं प्रति निमित्तकारणताया अपीष्टत्वात् समवाय्यसमवायिभिन्नकारणत्वं निमित्तत्वमिति लक्षणं न समन्वितं भवेदिति। अथ तत्तत्कार्यं प्रति यत् समवायि असमवायि च कारणम्, तद्भिन्नत्वं तत्र निमित्तत्वम्, दण्डादेः घटादिकं प्रति निमित्तत्वमेव; स्वगुणादिकं प्रत्येव तु समवायिकारणत्वमिति चेत्— तदपि न; एकस्यैव तन्तोः पटं प्रति निमित्तत्वोपादानत्वयोस्तार्किकेष्टत्वात्। पटं प्रति तन्तुद्वयसंयोगः तुरीतन्तुसंयोगश्च कारणम्। तत्र तन्तौ पटस्य जायमानतयोपादानत्ववत् निमित्तकारणभूतस्य तुरीतन्तुसंयोगस्य हेतुतया पटं प्रति निमित्तत्वाकारोऽपीति। अतः, सामान्यलक्षणे तत्तत्कार्यघटनानुपपत्तेश्च तदुभयभिन्नं कारणमिति लक्षणं परित्यज्य समवायिकारणत्वासमवायिकारणत्वरूपद्विविधकारणत्वभिन्नं कारणत्वं निमित्तकारणत्वमित्येव नवीनतार्किकनिष्कर्षोऽपि। एवञ्चैकस्यैवानेकविधकारणत्वसमावेशोऽपि न दोष इति स्थितिः। वस्तुतः असमवायिकारणतारूपविभागस्यास्मदनिष्टत्वात् उपादानताभिन्नकारणत्वमेव निमित्तत्वम्। तत्र संकल्पाद्याश्रयत्वरूपं निमित्तत्वं कर्तरि, कालादौ चान्यादृशमिति तत् विविधम्। उपादानत्वं नाम तादात्म्यसंबन्धावच्छिन्नकार्यतानिरूपितं कारणत्वम्। घटमृत्पिण्डयोरेकद्रव्यत्वात् घटत्वरूपावस्थावच्छिन्नकार्यतानिरूपितपिण्डत्वावच्छिन्नकारणता तादृशीति समन्वयः। ननु घटादौ पाकात् रूपाद्युत्पत्तौ संयोगादिगुणोत्पत्तौ च रूपसंयोगादिनिरूपितं कारणत्वं घटे उपादानत्वरूपमिष्टम्, स्वज्ञानाद्यं

1 तुलायामिति। तुलायामेकत्र घटे स्थितेन पलादिना वस्तु प्रमीयते। तत् प्रमेयभूतं वस्तु पलादिस्थाने निक्षिप्य वस्त्वन्तरं मीयते चेत्, तदा प्रमेयस्यैव प्रमाणताऽपीत्युभयसमावेश इत्यर्थः।

आकारभेदाभ्नानाव्यवहारयोगित्वं सिध्यतीति नियमे सिद्धे सति, स्वकपोलकल्पितन्यायेन उपादान-व्यतिरिक्तं निमित्तम्, निमित्तव्यतिरिक्तमुपादानमिति परस्परविरोधप्रणयनकुसृतिः [कु]युक्तिः बालचिन्ताविपाक इत्यर्थः। किंच युष्मत्संकेतसिद्धनिमित्तशब्दवाच्यत्वाभावेऽप्युपादानकारणस्यैव कर्तृत्वं सुप्रसिद्धमेव। तदेवमीश्वरस्योपादानत्वं कर्तृत्वं चाविरुद्धमिति न संकटं किञ्चित्॥ १४७॥

(१४८) उक्त्वा तत्त्वान्तगणां विलयमथ तमस्येकतामात्रमुक्तम्;
प्रोक्तश्चानादितादि प्रकृतिपुरुषयोर्वेदतद्वेदिवाक्यैः।
लीयेते तौ परस्मिन्निति तु लयवचः स्यादयस्तोयनीत्या
तेनासौ भोक्तृभोग्यप्रभृतिकवचितात् विश्वसृष्टिः समीची॥ १९॥

ननु स्वकारणे कार्यस्य, 'पृथिव्यप्सु प्रलीयते' इत्यादिना लयः विनाश उक्तः, 'पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि' इति प्रकृतिपुरुषयोरपि लयो भगवता पराशरेण प्रतिपादितः। तेन तयोः प्रलयकाले विनष्टत्वात् कथं सूक्ष्मचिदचिद्विशिष्टपुरुषात् विश्वसृष्टिर्भवद्भिरभिधीयत इत्याशङ्क्य कार्यभूतपृथिव्यादिलयात् कारणभूतप्रकृतिपुरुषलये श्रुतिसिद्धं वैषम्यं दर्शयति—उक्त्वेत्यादिना। अयमर्थः—अत्र द्विविधो हि लयो विवक्षितः। एकस्तावत् स्वावस्थाप्रहाणेन पूर्वावस्थाप्राप्तिरूपः। यथा पृथिवीत्वावस्थाप्रहाणेनाप्त्वावस्थाप्राप्तिः। इतरस्तु स्वावस्थाप्रहाणमन्तरेण वस्त्वन्तरविभागानर्हसंसर्गविशेषप्राप्तिः। यथा प्रकृतिपुरुषयोः पुरुषरूपं प्रकृतिरूपं च नित्यसिद्धम् अबाधितत्वात्

स्वजन्यमिति पूर्वश्लोकेऽपि एतदुक्तम्। तत्र रूपघटयोर्भेदात् कथं तादात्म्यघटितं कारणत्वमिति चेत्—तत्रापि घटो रूपवान् जायते, संयुक्तो जायत इति व्यवहारात् रूपसंयोगादिविशिष्टं प्रति तत्प्रागभावविशिष्टघटस्यैवोपादानत्वमिति लक्षणं सुस्थम्; कार्यत्वं हि विशिष्टद्रव्य इति। तत्र नामरूपभेदोऽस्ति न वेत्यन्यदेतत्। अस्तु वा तादात्म्यापृथक्सिद्ध्यन्यतरसंबन्धावच्छिन्नं कार्यं प्रति तादात्म्येन द्रव्यं कारणमिति उपादानलक्षणम्। तर्हि घटत्वावस्थां प्रति पिण्ड उपादानं स्यात्; मनुष्यादिदेहं प्रति जीव उपादानं स्यात्; जीवश्च तादृशं प्रति ईश्वर उपादानं स्यादिति चेत्—इष्टापत्तिः। एवञ्च, 'एतस्माज्जायते प्राणः', 'आत्मन आकाशः संभूतः' इत्यादौ कार्यवाचिशब्दस्य विशिष्टपरत्वाभावेऽपि कार्यकारणभावः स्यादिति चेत्—अस्तु। अत एव, 'सन्मूलाः सोम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' इत्यादौ प्रजाशब्दस्य जीवमात्रपरत्वेन सदुपादानकत्वसन्नियाम्यत्वसल्लीनत्वानामक्लेशेनान्वय इत्यलम्॥ १४७॥

१९. अत्र कश्चिदाह-प्रधानस्योपादानत्वम् ईश्वरस्य निमित्तत्वमिति पूर्वपक्षिकृतो विभागोऽनुपपन्नः। प्रधानस्य प्रलये ब्रह्मणि लयात्। तन्मात्रस्थित्या सृष्ट्यारम्भे प्रधानं प्रति ब्रह्मण उपादानत्वस्य संमन्तव्यत्वात्। जीवानामपि लय एष्टव्यः। तथाच स्मृतिः, "प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी। पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि" इति। तत्राह उक्त्वेति। बहुश्रुतिस्मृतिविरोधात् तत्स्मृतिवचनमन्यार्थकमिति भावः। विरोधमेव दर्शयति। सुबालोपनिषदि-'पृथिव्यप्सु प्रलीयते' इत्यारभ्य पूर्वपूर्वभूतादेरुत्तरोत्तरस्मिन् लयं तत्तदवस्थाप्रहाणरूपमुक्त्वा अन्ते, 'अक्षरं तमसि लीयते' इति अक्षरावस्थाप्रहाणेन तमोवस्थां प्रतिपाद्य तदुपरि, 'तमः परे देवे लीयते' इति वक्तव्ये तथाऽनुक्त्वा, 'तमः परे

अपरित्यज्य विशेष्यभूतेन भगवता विभागानर्हसंसर्गविशेषप्राप्तिः। तदेवम्, 'तमः परे देवे एकीभवति' इति विशिष्टैक्यरूपतयाऽभिधीयते। पूर्वं तु, 'पृथिव्यप्सु प्रलीयते' इत्यादिना साक्षात् लयशब्द एव प्रयुज्यते। अतः, 'उभावेतौ लीयेते' इति पुराणस्थलयशब्दः एकीभावमात्रमेव कथयतीति विभागः। संसर्गविशेषेऽपि लयशब्दः प्रयुज्यते—यथा वृक्षेषु पक्षिणो लीयन्त इति साक्षाल्लयशब्द एव प्रयुज्यते। तदिदं सर्वमस्मिन् पद्ये [1]यथापाठमनुसंधेयम्। अन्वयस्तु, 'पृथिव्यप्सु प्रलीयते' इत्यादौ तत्त्वान्तराणां विलयमुक्त्वा तमसः पुनः भगवत्येकतामात्रमेवोक्तम्, तम एकीभवतीति। तेन तयोः प्रकृतिपुरुषयोर्न विनाशः। किं च, "प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि", "अचेतना परार्था च नित्या सततविक्रिया॥" इत्यादिषु वेदपारवेदिनां पराशरादीनां वाक्येषु च प्रकृतिपुरुषयोरनादित्वं प्रोक्तम्। तस्मादपि तयोर्न साक्षाद्विलयः। पुराणोक्तं लयवचनं सदृष्टान्तमन्ययति—स्यादिति। अयस्तोयनीत्येति। आयुधरूपेण परिणतेऽयसि परिगृहीतं तोयं तोयरूपेणैवावतिष्ठते। अन्यथा स्नेहानुवृत्त्याद्ययोगात्। तद्वत् प्रकृतिपुरुषावपि भगवदविभागार्हसंसर्गविशेषमात्रेणैकीभावव्यवहारविषयभूतौ विशेषेण जगत्सृष्ट्यादावुपकुरुतः। उक्तमर्थं सहेतुकं निगमयति—तेनेति। सोपबृंहणनिपुणनिरूपितश्रुतिसिद्धत्वेन भोक्तृभोग्यप्रभृतिसहिताद् भगवतो विश्वसृष्टिः समीचीना। अत्र प्रभृतिशब्देन कालसंबन्धो विवक्षितः। तेन सूक्ष्मचिदचिद्विशिष्टस्योपादानत्वसिद्धिः, कालवैशिष्ट्येनोपकरणत्वसिद्धिरित्यर्थः॥ १४८॥

इति प्रकृत्यधिकरणम्॥ ३४॥

1. पठनेनैव ज्ञायत इत्यर्थः।

---

देव एकीभवति' इति लयविलक्षण एकीभावः श्रुतः। लीयत इत्यप्रयोगात् तमस्त्वावस्थाप्रहाणं नेति ज्ञायते। एकीभावश्च नाभेदः; च्विप्रत्ययेन पूर्वं भेदस्थितेर्दर्शिततया अनादेर्भेदस्य नाशायोगेन तदभेदासंभवात्। विभागानर्हसंसर्गमात्रे ऐक्यशब्दप्रयोगश्च प्रसिद्धः, नद्यः समुद्रे एकीभवन्तीति। यथा च आयुधादिरूपमयो जले क्षिप्तं गृहीतं दूरात् सजलं न दृश्यते, एकीभावात्। तप्तं तु सुतराम्। तद्वदत्र तम इति वक्तव्यम्। एवञ्च लयो नाभिमत इति सिद्धम्। एवं सृष्ट्यादौ तमो नोत्पन्नम्, किं त्वनाद्यनन्तमित्यत्र वेदवाक्यानि वेदविदां स्मृतिवाक्यानि च सन्ति। 'भोक्ता भोग्यं प्रेरितारञ्च मत्वा', 'अजामेकाम्', 'ज्ञाज्ञौ द्वावजौ', 'गौरनाद्यन्तवती', 'प्रकृतिं पुरुषञ्चैव विद्ध्यनादी उभावपि', 'अचेतना परार्था च नित्या', 'नित्यो नित्यानाम्', इत्येवम्। 'तौ प्रकृतिपुरुषौ परस्मिन् लीयेते' इति प्रागुक्तस्मृतिवचनं तु सूक्ष्मं विभागानर्हं संसर्गं विवक्षति अयसि तोयस्येव। अतः सूक्ष्मचेतनाचेतनविशिष्ट ब्रह्मण एव कारणत्वात् विश्वस्यापि स्थूलचेतनाचेतनविशिष्टब्रह्मरूपत्वात् अवस्थाविशिष्टस्वरूपोपादानत्वं ब्रह्मण्यक्षतमिति न भास्करादिपक्षस्याप्यवकाशः। अयस्तोयनीत्येत्यस्य, अयसि तोयं झटिति न दृश्यत इत्यर्थस्तावदस्तु। तथापि तस्यापि स्पर्शनवेद्यत्वात् विशिष्य चिन्तामणौ लिखितमेवात्र द्रष्टव्यम्। पदयोजनायाश्च विवृतम्, "न हि तोयस्य स्वावस्थाप्रहाणेनायस्ताप्राप्तिः। सलिलनिर्गममूलिकादिक्षोदलेपने पुनस्तावतः सलिलस्य बहिर्निस्सरणदर्शनात्। अतः पृथक्प्रतिपत्त्यनर्हसंसर्गविशेषरूप एव तोयस्यायसि लयः" इति। यादवाभ्युदये (7-14), "प्रदीपितान् कोपहुताशमूर्ध्ना पीतोदधीन् वारिधरायुधौघान्। मरुद्भुजेन त्वरितं मरुत्वान् प्रायुंक्त घोषाभिमुखं सघोषान्" इति श्लोके

३५ ॥ अथ सर्वव्याख्यानाधिकरणम् ॥ १-४-८ ॥

सूत्रम्—एतेन सर्वे व्याख्याता व्याख्याताः ॥ २९ ॥

(१४९) अग्रे संवर्तनं भात्यवितथवचसि क्वापि हैरण्यगर्भे
ग्रस्ताशेषस्वकार्ये तमसि च शिव एवेति केचित् पठन्ति ।
एतादृग्वाक्यवर्गस्फुटभवदधिकाशङ्कनस्तम्भनार्थं
प्रागुक्तान् नीतिभेदान् अतिदिशति परं शिष्यशिक्षैकचित्तः ॥ ३० ॥

शास्त्रारम्भे जन्मादिसूत्रोक्तं भगवतो जगन्निमित्तोपादानत्वं प्रकृत्यधिकरणे निगमितम्; अतः परमुक्तावशिष्टानां श्रुतिवाक्यानामानन्त्यात् अशेषेण वक्तुमशक्यत्वेन तेनैव प्रकारेण निर्वाहः स्वयमेवोहनीय इति (उच्यते इति?) संगतिः। अत्र चतुर्णां पादानां प्रथमाध्यायोक्तानामर्थविभागेन संगतिमाहुर्विष्णुचित्तार्याः, "इत्थं प्रथमाध्यायप्रथमपादेन प्रमाणलक्षणाभ्यां परमकारणतया सर्ववेदान्ताभिहितपरमपुरुषस्थापनम्; द्वितीयतृतीयाभ्यां विभूतेस्तस्य च संबन्धप्रकारौ; चतुर्थपादेन प्रतिपक्षनिरास इति। इत्थं सर्वश्रुतिनिर्वाह उक्त इत्याह—एतेनेति" इति। तदर्थविचारस्तु—अनुदाहृताः कारणवादिवाक्यविशेषाः किमुक्तलक्षणचिदचिद्विलक्षणब्रह्मपराः, उत नेति। तदर्थं ते किमुक्तन्यायानाम् अविषयाः, उत विषयाः। तदर्थं विषयत्वं संभवति, न वेति। अस्मिन्नतिदेशाधिकरणे

आयुधानां तापः जलसेकश्चोक्तः। तत्र दीक्षितव्याख्या, "यथा वीरः सम्यगग्नौ निष्टप्तान् तदनु निपीतजलान् कम्पेन सघोषान् आयुधौघान् भुजेन शत्रुमुद्दिश्य प्रेरयति" इति। श्रीपराङ्कुश-परकालदिव्यसूरिगाथासु, 'इरुम्बुण्डनीर्' इत्यत्र एतद्विवक्षा विमृश्या ॥ १४८ ॥ ॥ ३४ ॥

३०. प्रथमाध्यायान्तिमाधिकरणे एतेनेत्यारम्भतः अतिदेशसूत्रत्वावगमात् उक्तन्यायातिदेशस्य स्वयमेवाधीतपूर्वाधिकरणैः सुकरतया एतत्सूत्रस्यानावश्यकतायां प्राप्तायाम्, 'अत एव प्राणः' इत्यादिवत् अधिकाशंकायां जातायामुक्तन्यायातिदेशत एव सुपरिहरत्वं सूत्रकृत् शिक्षयतीति वक्तव्यम्। नात्राधिकाशंकायाः प्रसक्तिरस्ति। यत्किञ्चिद्वस्तुविशेषस्य जगत्कारणत्वप्रतिपादकं विषयवाक्यमादायैव हि सा वक्तव्या। तत्र इन्द्रादिचेतनविशेष-आकाशाद्यचेतनविशेषविषयवाक्यानां निर्वाहस्य कृतचरतया पुनराशंकाया न प्रसक्तिरिति शंकायां तत्संभवमाह अग्रे इति। अवितथवचसि=स्वरूपतोऽर्थतश्चाबाधित वाक्यरूपे वेदे क्वापि=ऋचि यजुषि च, "हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्" इत्यत्र अग्रे प्रलयकाले हैरण्यगर्भे हिरण्यगर्भस्य=चतुर्मुखस्य संबन्धि संवर्तनं सर्वेतरवस्तुप्रलयात् स्वस्मिन् तदेकीकारेण वर्तनं स्वमात्रस्थितिरूपं भाति प्रकाशितमस्ति। केचित्=श्वेताश्वतरीयाः, "यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासत् शिव एव केवलः" इति वाक्यम् अहोरात्रादिकाल विभागरूपकार्य-चेतनात्मकसद्रूपकार्य-अचेतनात्मकासद्रूपकार्याणामशेषाणां ग्रासेन तमोनामकमूल प्रकृतिमात्रे सति, केवलः शिव एवासीदित्यर्थकमधीयते। प्रथमवाक्ये चतुर्मुखमात्रसत्ता प्रतीयते; उत्तरत्र शिवमात्रसत्ता। प्रथमाध्याये एतावत्पर्यन्तनिरूपणेन अचेतनजीववर्गविलक्षणं ब्रह्मेति निर्धारितत्वेऽपि मूर्तिनिष्कर्षो नावगम्यते। यद्यपि गतिसामान्यात् इति सूत्रे कारणवाक्यानां सामान्यविशेषन्यायेन

पूर्वनिश्चितकारणवाक्यप्रक्रियया अनिश्चितानामपि कारणवाक्यानां निर्वाह इत्युक्तम् । तानि कानि वाक्यानीत्याशङ्कायां कानिचिद्वाक्यान्युदाहृत्य तच्छायया सर्वाण्यपि वाक्यानि निर्वहणीयानीति वक्तुं प्रारभते—अग्र इति । 'हिरण्यगर्भस्समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्' इति हिरण्यगर्भपारम्यप्रतिपादकरूपमेकं वाक्यं तावद्भाति । तथा, 'न सन्न चासत् शिव एव केवलः' इत्यपरमपि वाक्यं रुद्रपारम्यप्रतिपादकमिव दृश्यते । तत्र हि, 'यदा तमस्तन्न दिवा न रात्रिः' इति प्रलयकाले

---

एकत्र पर्यवसानमदर्शि । स विशेष एव दुर्ज्ञानः ॥ "एको ह वै नारायण आसीन्न ब्रह्मा नेशानः' इति महोपनिषदि नारायणरूपविशेषस्य कीर्तनात् तत्र पर्यवसानमिति चेत्—इह प्रदर्शितवाक्यानुसारेण हिरण्यगर्भे शिवे च पर्यवसानं कस्मान्न स्यात् ? । नारायणवाक्ये ब्रह्मेशाननिषेधादिति चेत्—अत्र वाक्ये समवर्ततेति समुपसर्गेण नारायणस्यापि चतुर्मुखेनैकीकारः, 'शिव एव केवलः' इत्यवधारणात् शिवे नारायणचतुर्मुखयोरेकीकारश्च ज्ञायत इति किं न स्यात् । तर्हि मिथो विरोध इति चेत्—प्रलयभेदेन मूर्तिभेदस्थित्या निर्वाहो भवतु । तत्र परमात्मन एकस्य मूर्तित्रयं समभित्यायातीति मूर्तिमात्रभेदो वा परमात्मत्रयं वेति विमर्शे आत्मभेदे मानाभावात् एकस्यैव मूर्तिभेदमात्रमिति युक्तम् । तर्हि तुल्यनयात्, 'नकिरिन्द्र त्वदुत्तरः' इत्याद्युक्तेन्द्रादिमूर्तिरपि कदाचित् सर्वोत्तरा स्यादित्यापतेदिति चेत्—एतादृग्वाक्यं सर्वमप्येकपरमात्मविषयतयैव नीयताम् ; का हानिः । एवं तर्हि कीदृशमूर्त्यधिष्ठितस्य लोकस्य मोक्षस्थानत्वम्, सर्वस्य परमात्मीयत्वाविशेषादिति चेत्—यस्य लोकस्य नित्यत्वादिकं प्रमाणसिद्धम्, तस्य तद् भविष्यति । भवतु वा सर्वमपि मोक्षादर्वाचीनफलसंबन्धि । मोक्षस्तु विग्रहादिरहितशुद्धपरमात्मध्यानलभ्यतदनुभवरूपो वा तदनुग्रहलब्धशुद्धिस्वात्मानुभवरूपो वा यो वा को वा भविष्यति । किमिदानीं तच्चिन्तया इत्येवं स्फुटं भवत् यत् आशंकनम्, तस्स्तम्भनार्थं तन्निरोधार्थं भगवान् बादरायणः शिष्यशिक्षणमुख्यप्रवृत्तमनाः प्रागुक्तान्—एतावत् प्रथमाध्यायोक्तान् तत्तदधिकरणसंबन्धिनस्तर्कभेदान् परमतिदिशति । तदतिदेशेनैव सर्वं सुपरिहरमिति मन्यते ।

अयं भावः— ईक्षत्यधिकरणे गतिसामान्यसूत्रेणैव बहुव्यक्तिनिरसनं सिद्धम् । आनन्दमयाधिकरणे, 'ते ये शतं प्रजापतेरानन्दाः, स एको ब्रह्मण आनन्दः' इति चतुर्मुखस्य परब्रह्मतो निहीनत्वस्य कीर्तनात् चतुर्मुखोऽपि व्यावर्तितः । तत एव तत्पुत्ररुद्रव्यावृत्तिरपि सिद्ध्येत् । अन्तराधिकरणे, 'कप्यासं पुण्डरीकमेवमक्षिणी' इति पुण्डरीकाक्षत्वस्य स्पष्टोक्त्या विरूपाक्षोऽपि व्यावर्तित एव । ज्योतिरधिकरणे-पुरुषसूक्तप्रतिपादितायां दिवि यत् ज्योतिरित्युक्त्या, पुरुषसूक्तस्य च, 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति श्रीपतिपरतया तथा बहुप्रमाणघोषणाच्च वासुदेवाख्यं परं ज्योतिरेव, 'अहं वैश्वानरो भूत्वा' इत्युक्तं तदिति विदितम् । इन्द्रप्राणाधिकरणेनेन्द्रोऽपि वारितः । एवं नारायणमूर्तिनिष्कर्षे सति तदनिश्चय इति कथम् । अथ च अत्त्रधिकरणे विष्णुरुक्तः । अन्तर्याम्यधिकरणे च सुबालश्रुत्यैककण्ठ्यात्, 'अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः' इति सर्वविद्यावेद्यतया नारायणप्रतिपादकतैत्तिरीयोक्तस्य नारायणस्य सिद्धिः । रूपोपन्यासात् मुण्डके वैश्वानराधिकरणञ्च, 'भूः पादौ' इति प्रसिद्धविष्णुविषयकम् ।

रुद्रस्यैवावस्थानं कथ्यत इत्यापाततः प्रतीयते । तदिदमाह—प्रस्तेति । एतद्वाक्यत्रितयमुपात्तम् । एतादृशानि वाक्यानि बहूनि विद्यन्ते । तद्वाक्यप्रभवम्, नारायणादधिकं तत्त्वमस्तीति शङ्काविशेषं स्तम्भयितुं प्रागुक्तानेव न्यायविशेषान् अत्रातिदिशति सूत्रकारः । तत् किमर्थम्? शिष्यशिक्षार्थ-(शिक्षानुग्रहार्थ)मिति चाह—एतादृगिति । अयमर्थः—एकत्र शिक्षितस्य न्यायस्यैतरत्रापि योज्यत्वादयमर्थः स्वयमेव सिध्यति; तथापि शिष्यानुग्रहेण भगवान् सूत्रकारो वाचाऽव्याचष्ट इति ॥१४९॥

(१५०) विश्वेशः श्रीपतिश्चेत्, भवतु कथमसौ त्राणमात्राधिकारी
दूरं गत्वाऽपि दुःस्थद्विधिशिवतुलया षड्गुण्यां प्रमातम् ।
मैवं मत्स्यादिभावेष्विव निजविभवानुक्रियानाट्यमेतत्
ब्रह्मेशस्रष्टरि स्वामिनवधिकबृहत्पौरुषे पूरुषे नः ॥ २१ ॥
इति सर्वव्याख्यानाधिकरणम् ॥ ३५ ॥

---

ईक्षतिकर्माधिकरणे च चतुर्मुखनिकर्षो व्यक्तः । एवं प्रत्यधिकरणं विवेचने विधीयमाने नारायणपारम्यं निर्विचिकित्सं सिद्धमेव। अत एव, "तत्त्वं जिज्ञासमानानां हेतुभिः सर्वतोमुखैः । तत्त्वमेको महायोगी हरिर्नारायणः परः" इति ब्रह्मजिज्ञासया प्रवृत्तब्रह्मसूत्रार्थो नारायण एव परं ब्रह्मेति प्रसाध्यते । अत एवायम्, ' आलोड्य सर्वशास्त्राणि विचार्य च पुनःपुनः। इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा" इति स्वनिष्कर्षम दर्शयत् । विशिष्य च महोपनिषदि नारायणात् चतुर्मुखस्य त्र्यक्षस्य चोत्पत्तिः कीर्तिता । न त्वेवं कचिदपि नारायणस्य श्रीमद्रहस्यत्रयसारपरदेवतापारमार्थ्याधिकारोक्तरीत्या ब्रह्मरुद्रयोस्तज्जन्यत्वं तदन्तरात्मकत्वं ततो कर्मवश्यत्वं तत्प्रसादलब्धैश्वर्यकत्वं तदाराधकत्वं तद्विषयकोपदेशपरत्वं मोक्षार्थतदुपासकत्वमित्यादि श्रीमद्रामायणमहाभारत-श्रीभागवतादिसर्वसमाप्तप्रमाणमुखतः प्रसिद्धम् । अवतारेषु विष्णुरभिनयति पारवश्यत्वादिकं परम एव सन्निति च पुराणेषु समस्ति। नैवं ब्रह्मरुद्रादिविषये उक्तिः। तस्मात् मूर्तिसाम्यं सर्वमूर्त्यधिष्ठात्रात्मैवयक्षासंभवि । परभक्त्यधीनार्चिरादिगतिलभ्याप्राकृतस्थानविशेषप्राप्तिरूपस्य मोक्षस्यैव तृतीयचतुर्थाध्याययोः व्यवस्थापयिष्यमाणतया तदतिरिक्ते मोक्षे मानाभावात्, 'आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन', 'मम साधर्म्यमागताः। सर्गेऽपि नोपजायन्ते' इत्यादिगीतादिविरोधाच्च सर्वमाशंकनं गगननर्तनप्रायम् । यत्तु, 'हिरण्यगर्भस्समवर्तत' इति वचनम्, तत् उपनिषदेव, "अद्भ्यस्संभूतो हिरण्यगर्भ इत्यष्टौ" इति उत्तरनारायणानुवाकप्रतिपाद्यलक्ष्मीपतिविषयकतयोपदिष्टमिति न चतुर्मुखग्रहणप्रसक्तिः । हिरण्मयब्रह्माण्डोत्पादकत्वाच्च नारायण एव हिरण्यगर्भः । शिवशब्दश्च मंगलार्थकः, 'शाश्वतं शिवमच्युतम्' इत्युक्तशाश्वतशिवभूताच्युतपर एव । सर्वमिदमाकाशादिनयातिदेशसिद्धमित्यलम् ॥ १४९ ॥

२१. भगवतो ब्रह्मशिवसाम्य-पारतन्त्र्य-दुःखानुभवादिकं स्वेच्छाकृतमभिनयरूपमिति प्रमाणसिद्धमिति निकर्षपरवचसां निर्वाहात् न साम्यशंकेति वक्तुं प्रश्नोत्तरविशेषौ वर्तयति विश्वेति । त्राणमात्राधिकारीति । "ब्रह्मा दक्षादयः कालः", "विष्णुर्मन्वादयः कालः", "रुद्रः कालान्तकाद्याश्च" इत्यादितो व्यवस्थावगमादिति भावः । दुःस्थद्विधिशिवेत्यनेन ब्रह्मरुद्रयोर्जीवत्वं स्वीकृत्य विष्णोरपि

अत्र शास्त्रे श्रीपतिरेव सर्वेश्वर इति भवद्भिरभिधीयते। न च श्रीपतिरेव ब्रह्म। "ब्रह्मविष्णुरुद्रेन्द्राः" इति त्रिमूर्त्यन्यतमत्वेन स श्रुत्यैवाभिधीयते। लोकेऽपि त्रिमूर्तिव्यवहारः सुप्रसिद्ध एव। तत्र ब्रह्मरुद्रौ च कर्मवश्याविति तत्सहपठितो विष्णुरपि कर्मवश्य एव। तथाच घट्टकुट्यां प्रभातम्= भगवतो नारायणस्येतरवैलक्षण्यं प्रतिपादयितुं प्रवृत्तस्यैव भवतः पुनरपि तत्सालक्षण्यमेवापन्नमिति इमामाशङ्कां पूर्वार्धेनाऽऽशङ्कते—विश्वेश इति। दुःस्थविधिशिवतुलया=कर्मवश्यतया दुःस्थब्रह्मरुद्रसाधर्म्यात्। उक्तमर्थं प्रतिक्षिपति—मैवमिति। तदेव विवृणोति—मत्स्यादीति। मत्स्यादिभावेषु च भगवतो निजविभूतिभूतानां मत्स्यादीनां सजातीयत्वेनानुकरणनाट्यमेव दृश्यते। एवं निजविभूतिभूतयोर्ब्रह्मरुद्रयोः साधर्म्येणानुकरणं नाट्यमात्रमेतत्। कुत इत्यत्राह—ब्रह्मेशस्रष्टरीति। 'एको ह वै नारायण आसीत्' इत्युपक्रम्य, 'तत्र ब्रह्मा चतुर्मुखोऽजायत ततस्तस्य ध्यानान्तस्थस्य ललाटात् स्वेदोऽपतत् स्वेदात् बुद्बुदमभवत् बुद्बुदात् त्र्यक्षश्शूलपाणिः पुरुषोऽजायत' इति ब्रह्मरुद्रयोः स्रष्टृत्वेन सम्प्रतिपन्ने निरवधिकबृहत्त्वलक्षणपौरुषे पुरुषसूक्तप्रतिपाद्ये परस्मिन् ब्रह्मणि विभूत्यनुकारनाट्यमेतदित्यर्थः॥ १५० ॥ इति सर्वेव्याख्यानाधिकरणम्॥ ३५॥

(१५१) सांख्योक्तप्रक्रियोक्तेः तदभिमतसृजेः तत्प्रसंख्यानक्लृप्तेः
तत्प्रोक्ताख्याकृतैक्यात् स्ववृजिनवचनात् तत्फलावद्ययोगात्।

---

जीवत्वमेव, 'राज्यात् भ्रंशो वने वासः' इत्येवं विविधदुःखदर्शनात् विष्णुत्वेऽपि शिरश्छेदश्रवणाच्च। अत उत्तीर्णमेव तु परतत्त्वमिति पूर्वपक्षः प्रदर्श्यते। प्रभातमित्यत्र प्राप्यत इति पदमध्याहर्तव्यम्। गत्वेति क्त्वाप्रत्ययस्य तदैवान्वयः। घट्टकुटी शुल्कग्रहणस्थानम्। कश्चित् घट्टकुटीमार्गेण गमने शुल्कं देयं स्यादिति तत्परिजिहीर्षया संनिकृष्टमार्गमुपेक्ष्य दूरभूतेन मार्गान्तरेण शकटनयने घट्टकुटी न संनिधास्यतीति अर्धरात्र एव दूरमार्गेण प्रस्थितः, तस्यापि मार्गस्य तद्घट्टकुटीस्थानपथेनैव स्वोद्दिष्टग्रामप्रापकत्वात् तदेव स्थानं सूर्योदयकाले नीतः तत्र प्रभातं प्राप्य प्रयासमात्रफलकं कर्मेति यथा विषीदेत्, तथैव भवान् इन्द्रचन्द्रादिव्यावृत्ततया जगत्कारणस्थापनं कृत्वापि नारायणपरनानावाक्यान्युदाहृत्यापि श्रीपतेरितरसाम्यरूपघट्टकुटीमेव प्राप्तो भवति, विधिशिवतौल्यस्यैव तत्र भावादिति पूर्वपक्षार्थः। निरस्यति मैवमिति। 'मध्ये विरिञ्चिशिवयोर्विहितावतारः ख्यातोऽसि तत्समतया तदिदं न चित्रम्। मायावशेन मकरादिशरीरिणं त्वां तानेव पश्यति करीश यदेष लोकः" इतीदमत्रानुसंधेयम्। सर्वलोकाधिपतिरेव कदाचित् दशरथपुत्रस्सन् अयोध्याधिपतिः प्रतीतः, न तावता तस्येतराधिपत्यविरहः। तद्वत् सृष्ट्यादिकार्याधिकारं स्थितमेव निगूहयतीति भावः। न हि मत्स्यकूर्माद्यवतारेषु आधिपत्यगोपनात् आधिपत्यस्यैवाभावः। अतस्तेषु भावेष्विव विष्णुत्वेऽपि निजो यो विभवः विभूतिभूत· ब्रह्मरुद्रमत्स्यान्तरादिः, तदनुक्रिया तत्साम्यम्, तस्याः नाट्यम् अभिनयमात्रमेतत्। कुत इति चेत्-तत्र ब्रह्मरुद्रविषयेऽपि स्रष्टृत्वात् "वेदाहमेतं पुरुषं महान्तम्", "उत्तमः पुरुषः" इत्याद्युक्तं निरवधिकबृहत् पौरुषम् शासितृत्वादि यस्य तस्मिन्। महान्तं पुरुषमित्यत्र महाकारुणिक इत्यादाविव पुरुषस्वरूपधर्मे महत्त्वान्वय इति भावः। पुरुषे=पुरुषसूक्तप्रतिपाद्ये। तथोक्तम्, "तेन वञ्चयते लोकान् मायायोगेन केशवः। ये तमेव प्रपद्यन्ते न ते मुह्यन्ति मानवाः" इति॥ चि. टी. आशंकामाशंकत इति पाकं पचतीतिवत्॥१५०॥

भेदात् कर्तृप्रकृत्योर्द्रुहिणशिवमुखानेकहेतुश्रुतेश्च
क्षिप्तं पादत्रयोक्तं श्रुतिहृदयसमुद्घाटनादन्वरक्षत् ॥ २२ ॥

अत्र चतुर्थपादस्थानामष्टानामधिकरणानां पूर्वपक्षोत्थानप्रक्रियां तत्प्रतिक्षेपं च शिष्याणां सुखग्रहणार्थं संगृह्णाति—सांख्योक्तेति। आनुमानिकाधिकरणे सांख्योक्तप्रक्रियाम्, चमसाधिकरणे तदुक्ताब्रह्मात्मकप्रधानसृष्टिप्रक्रियाम्, संख्योपसंग्रहाधिकरणे तदुक्तां तत्त्वसंख्यापरिक्लृप्तिम्, कारणत्वाधिकरणे सांख्योक्ताव्याकृतैक्यं कारणस्य, जगद्वाचित्वाधिकरणे कर्मशब्दस्य पुण्यपापरूपस्वकर्मवाचित्वम्, वाक्यान्वयाधिकरणे पतिपुत्रादिरूपकर्मफलाश्रययोगित्वम्, प्रकृत्यधिकरणे निमित्तोपादानयोर्भेदम्, सर्वव्याख्यानाधिकरणे ब्रह्मरुद्रादीनां कारणत्वञ्च पूर्वपक्षीकृत्य तन्निराकरणं सूत्रकारश्चकार। अत्र ग्रन्थे पञ्चम्या उपादानं पूर्वपक्षोत्थानहेतुविशेषाणां विभज्य प्रदर्शनार्थम्। क्षिप्तमित्यादि। एतेभ्यो हेतुभ्यः पूर्वपक्षिकल्पितेभ्यः प्रतिक्षिप्तं पूर्वपादत्रयोक्तमर्थं चतुर्थपादे श्रुतिहृदयसमुद्घाटनात् श्रुत्यर्थानां विशदप्रकाशनात् सूत्रकारो रक्षितवान् ॥ १५१ ॥

(१५२) जिज्ञास्यत्वेन सिद्धे स्थिरचरचिदचिद्देहिनि ब्रह्मतत्त्वे
प्रत्याद्यैरेव सूक्ता स्वरसगतिरियं कारणाम्नायवाचाम् ।
बाधं रोधश्च वाचान्तरमिह बहुधा वर्णयन्तो मुसरयाः
निष्कास्येरन् परस्तान्निगदुपनिषदां निश्चलत्वप्रसिद्ध्यै ॥ २३ ॥

---

२२. अस्मिन् तुरीये पादे अष्टभिरधिकरणैः प्रदर्शितान् अयोगान्ययोगव्यवच्छेदाभ्यां पादत्रयस्थापितं जगतो ब्रह्मैककारणत्वं पुनः क्षिपतो हेतून् संकलयन् श्रुतिवाक्यतात्पर्योद्घाटनेन तान् हेतून् निरस्य यथोक्तस्थापनमेव पुनरकरोदित्याह सांख्येति । यथाक्रममधिकरणाष्टकलक्ष्याः अष्टौ हेतवः । क्षिप्तमित्यत्रान्वयेऽपि तृतीयान्तत्वाभावः हेतुत्वविवक्षया । ल्यब्लोपे वा पञ्चमी 'महतः परमव्यक्तमव्यक्तात् पुरुषः परः । पुरुषान्न परं किञ्चित्' इति सांख्यप्रक्रियायाः उक्तेरिति प्रथमाधिकरणपूर्वपक्षः । एवमुपरि । तदभिमतसृजेः 'बह्वीः प्रजाः सृजमानाम्' इति सांख्याभिमताव्) अब्रह्मात्मकप्रधानकर्तृकात् सर्जनात् । तत्प्रसंख्यानकॢप्तेः सांख्याभिमतस्य पञ्चविंशतिस्तत्त्वानीति गणनस्य, 'पञ्च पञ्चजनाः' इत्यत्र स्पष्टत्वात् । तेन सांख्येन प्रोक्तात् कारणस्याव्याकृतेन प्रधानेनैक्यात्, 'तद्धेदं तर्ह्यव्याकृतमासीत्' इत्युक्तात्, 'यस्य वैतत्कर्म' इति कर्तुः यत् वृजिनं पापं तस्य कर्मपदेनोक्तत्वात्, 'आत्मनस्तु कामाय पतिः प्रियो भवति' इति कर्मफलस्य औपाधिकप्रियत्वस्याश्रयरूपस्य कथ्यमानस्याऽऽत्मनः संबन्धित्वात्, कर्तृप्रकृत्योः निमित्तोपादानयोर्मिथो भेदात् प्रमाणसिद्धात्, विष्णुव्यतिरिक्तानामपि प्रलयकाले स्थित्युक्त्या कारणत्वकथनाच्च सांख्यादिमतस्थायिभिः क्षिप्तं यत् पूर्वपादत्रयस्थापितं ब्रह्मैककारणकत्वम्, तत् तत्तद्वाक्यस्य तत्तदुक्तार्थायोगस्य स्वाभिमतार्थयोगस्य च प्रकटनेन अन्वरक्षत्=पुनः स्थापयामास। एवं तत्तत्पूर्वपक्षक्षेपेण ब्रह्मण इहाधिकरणेषु अष्टौ गुणा आविष्कृता भवन्ति। त एवं संग्राह्याः :—अक्षाद्यव्यक्तनिष्ठाखिलवशनवशीकार्यकाष्ठा त्वजेशो
ज्योतिर्ज्योतिस्तथाऽव्याकृतवपुरपिचाशेषलोकस्वकर्मा ।
भार्यापत्यादिकामप्रदपरमसुखात्माऽप्युपादानभूतो
ब्रह्मेशानादिसृष्टिप्रभृतिविभवभाक् आश्चतुर्थेऽभ्यधायि ॥ इति ॥ १५१ ॥

एवं प्रथमाध्यायार्थे निश्चलतया निरूपिते सति द्वितीयाध्यायमारिप्सुः पूर्वोत्तराध्याययोः संगतिमनुवदति-जिज्ञास्यत्वेनेति। सिद्ध इति शास्त्रोपोद्घातचतुस्सूत्र्यर्थः प्रथमपादार्थश्च तन्त्रेणैवोपादीयते। स्थिरचरचिदचिद्देहिनीति द्वितीयपादार्थः। ब्रह्मतत्त्व इति तृतीयपादार्थः। ब्रह्मशब्देन भगवतः सर्वाधारत्वप्रकाशनात्। श्रुत्याद्यैरित्यादिना चतुर्थपादार्थोऽपि तैस्सह संगृहीतः। श्रुतिलिङ्गवाक्यादिभिः प्रमाणैः कारणाम्नायवाचां कारणत्वप्रतिपादकाम्नायवाचां स्वारसिकी वृत्तिरियं सूक्तेत्यन्वयः। अथ वक्ष्यमाणं द्वितीयाध्यायार्थमाह-बाधमिति। तत्र हि कारणद्वारकबाह्यविरोधपरिहारपरं पूर्वं पादद्वयम्। तत्राप्येकं बाधपरिहारपरम्, अन्यत् प्रतिरोधपरिहारपरमिति विभागः। उत्तरं पादद्वयं कार्यद्वारकान्तरविरोधपरिहारपरम्। आन्तरविरोधस्तु श्रुतिवाक्यानामन्योन्यविरोधः। अत्र च कार्यावलम्बिविरोध एव परिह्रियत इति कारणावलम्बिविरोधपरिहारपरत्वेन पूर्वपादद्विकात् विभागोऽपि सिध्यतीत्युक्तं भवति। शब्दार्थस्तु-बाधं प्रतिरोधं च बाह्यमूलमान्तरमूलं च बहुधा वर्णयन्तो मुसल्याः मुसलप्रहर्तारः, अथवा मुसलेन वध्यत्वात् मुसल्याः निष्कास्येरन् = निरस्येरन् इत्यर्थः। तत्किमर्थमित्याशङ्क्याह-निषदुपनिषदामिति। निश्चलत्वप्रसिद्ध्यर्थम्। निषण्णाः पाश्च-

---

२३. ननु ब्रह्मरूपतत्त्वप्रतिपादकं प्रथमद्विकम्; उपायफलात्मकतद्विषयकज्ञानरूपसाध्यप्रतिपादकमुत्तरद्विकम्। तत्र चतुर्भिरिव पादैरेतैः, द्वितीयाध्यायेनापि तत्त्वे प्रतिपाद्ये अध्यायभेदकल्पनं कुतः। पूर्वमीमांसायां तृतीयाद्यध्यायवत् अष्टपादाध्यायस्यापि संभवात्। व्यर्थश्च चर्वितचर्वणमित्याशंकायाम्— अध्यायद्वयभेदकाकारं पूर्वोक्तं स्मारयन् द्वयोः क्रममुपपादयति **जिज्ञास्यत्वेनेति**। कारणवाक्यानां **समन्वयः** प्रथमाध्यायकार्यः। स्मृतितर्कश्रुतिमूलकविरोधपरिहारो द्वितीयाध्यायकार्यः। अत एव **अविरोधाध्याय** इत्युच्यत इति भावः। तत्र जिज्ञास्यत्वेन चतुस्सूत्र्या सिद्धं ब्रह्म परतत्त्वरूपेण निरूप्यतेऽध्यायद्वये। अनुभवविषयत्वेन निरूप्यते उत्तराध्यायद्वये। तच्च तत्त्वं न निर्गुणात्मकम्, किंतु स्थिरचरचिदचिद्देहात्मकमिति च इयता सिद्धम्। **स्थिरेति**। व्यष्टौ स्थिरचरजीवदेहित्वेन कार्यता। समष्टौ अचिद्देहित्वेन कार्यता। तदनुगुणतया चेतनाचेतनदेहित्वेन कारणता। इयमेव कारणता ब्रह्मनिष्ठत्वेन अत्राध्याये प्रतिपादिताऽस्ति। एवं **कारणाम्नायवाचां**=कारणप्रतिपादकवेदवाक्यानामीदृशब्रह्मतत्त्वे स्वरसगतिर्दर्शिता **श्रुत्याद्यैः**=ईक्षतेः, शब्दात्, तल्लिंगात्, तथाऽनुगमात्, वाक्यान्वयात्, प्रकरणादित्येवम्, 'को न आत्मा किं ब्रह्म' इति प्रयुज्य, ब्रह्मपदस्थाने **वैश्वानर**पदप्रयोगरूपस्थानेन च। एवं श्रुतिलिंगवाक्यप्रकरणादितः वाक्यानां स्वरसगतिर्दर्शिता। **परस्तात्** द्वितीयेऽप्यध्याये **मुसल्याः** मुसलयोधिनः स्वगृहीत स्मृतितर्कयोः प्राबल्यमाकलय्य तत उक्तार्थबाधमाशंकमानाः। वस्तुतो मुसलवध्या इत्यर्थ एव प्रसिद्धः। ते मुसलरूपैस्तर्कैः प्रथमपादे निष्कालयिष्यन्ते। अथ स्वशास्त्राणां श्रुतिसमबलत्वं मन्वानास्ततो रोधं वर्णयन्तो निरोध्या भवन्ति द्वितीयपादे तेषां दौर्बल्यप्रदर्शनेन। **रोधः** प्रतिरोधः सत्प्रतिपक्षता समबलता वेदान्तार्थनिश्चयविघटनमात्रम्। अयमन्यतन्त्रमूलकत्वात् बाह्यो रोधो भवति। एतावत्पर्यन्तं कारणत्वविरोधपरिहारः। अथोत्तरेण पादद्वयेनाऽऽन्तरो रोधः=कतिपयानां कार्यत्वविरोधः श्रुतिवाक्यमेव पुरस्कृत्य शंक्यते, परिह्रियते च। तेन सर्वनिरूपितकारणत्वं स्थापितं भवति। अयं रोधः श्रुतिमूलकशंका-

रात्रोक्तार्थप्रकाशिका 'मूलश्रुतिः' इति विख्यातसमाख्या भागवतैरभिधीयमाना काचित्। उपनिषत् पुनः सर्वेष्वपि वेदेषु सारतयाऽस्माभिरभिधीयमाना सुप्रसिद्धेति न वक्तव्यमत्र किञ्चित् ॥ १५२ ॥

निर्विशेषब्रह्मवादिनां प्रथमाध्यायार्थजातस्य दुर्घटत्वनिरूपणम् ॥

(१५३) आदौ जिज्ञास्यताऽऽस्तां बहुविहतिहता सह्यतां लक्षणोक्तिः
मृष्यामः शास्त्रयोनिप्रलपितमपि(मिह) वः (च) स्तात्(स्यात्)समन्वित्यपोक्तिः।
सूत्रैरेतैः स्फुटार्थैः सविषयवचनैर्निर्विशेषैक्यपक्षे
मुरूयेक्षाद्यैः स्वधर्मैः प्रकृतिपुरुषतो भेदवादः कथं स्यात् ॥ २४ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां
प्रथमस्याध्यायस्य चतुर्थः पादः ॥

॥ प्रथमाध्यायश्च समाप्तः ॥

अत्रोपोद्घातमारभ्य प्रथमाध्यायप्रतिपाद्यं सकलमर्थजातं निर्विशेषब्रह्मवादिनां न घटत इत्यध्यायान्ते परपक्षप्रतिक्षेपमारचयति—आदाविति श्लोकेन। आदौ बहुविहतिहता जिज्ञास्यताऽऽस्तामित्यर्थः। अत्रापि(अथापि) 'अथातो ब्रह्मजिज्ञासा' इत्याद्यं सूत्रं प्रावर्तिष्ट। अस्मिन् सूत्रे ब्रह्मणो जिज्ञास्यत्वमुच्यते। तच्च जिज्ञास्यत्वमद्वैतवादिभिरप्युपक्षिप्यते। यदि जिज्ञास्यं ब्रह्म, तदा दृश्यत्वात्

रूपत्वात् आन्तरः। अनेन स्थूणानिखननन्यायेन पूर्वाध्यायोक्तार्थः निश्चलीकृतो भवतीति। **निषदुपनिषदां** वेदपूर्वोत्तरभागानाम्; यद्वा पाञ्चरात्रमूलभूतैकायनशाखायाः वेदान्तानाञ्चेत्यर्थः। तर्कपादे परमतनिरसनवत् पाञ्चरात्रप्रामाण्यस्थापनस्यापि क्रियमाणतया निषदर्थस्य निश्चलत्वं सिध्यतीत्याशयेनापि निषद्ग्रहणम्। "ये वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च' इति **भारते**। **वाकः** मन्त्रः, **अनुवाकः** ब्राह्मणम्, **निषत्** देवताप्रतिपादकः सद्वारकब्रह्मबोधकभागः, **उपनिषत्** साक्षाद्ब्रह्मभागः इत्यप्याहुः। निश्चलत्वस्य **प्रसिद्ध्यै** प्रकर्षेण सिद्धये। **निष्काश्येरन्** पलायनकर्मीक्रियेरन् ॥ १५२ ॥

२४. प्रथमाध्यायप्रतिपाद्यसर्वार्थविरोधः **शाङ्करे** मते इत्याह **आदाविति**। उपोद्घातरूपायाः चतुस्सूत्र्यास्तदुक्तार्थासामञ्जस्यं तावदास्ताम्। तदुपरि शास्त्रे प्रत्यधिकरणप्रतिपाद्यार्थविरोधस्तन्मते दुष्परिहर इति भावः। चतुस्सूत्रीप्रतिपाद्योऽर्थोऽपि तेषां विरुद्ध एव। परंतु तस्यान्यथा तात्पर्यं वर्ण्यते। तत् कथमपि सह्यं स्यात्, यदि उपरि शास्त्रे तदभिमतस्याद्वैतस्यैव प्रतिपादनं स्यात्। तदा महावाक्यानुरोधेनोपक्रमभूतस्यापि सूत्रचतुष्टयस्यान्यथातात्पर्यकल्पनमित्युक्तेरवकाशात्। प्रत्युत महावाक्यभूतं शास्त्रमपि प्रत्यधिकरणं प्रकृतिं पुरुषं ब्रह्म च मिथो भिन्नमेव प्रतिपादयति। तथा प्रकृतिपुरुषवैलक्षण्यस्थापकान् विविधान् धर्मान् ब्रह्मणि स्थापयति। एष द्वैतवादः कथमद्वैते उपपद्यते। तथा च, 'तदनुसारेणोपक्रमस्यान्यथाकरणम्' इत्यस्य दुर्वचतया चतुस्सूत्रीतात्पर्यस्यान्यादृशस्य कल्पनमप्यपास्तमित्युक्तं भवति। श्लोकार्थस्तु—

**आदौ** शास्त्रारम्भे उक्ता या जिज्ञास्यता सा **बहुविहतिहता** बहुविधविरोधनिरस्तैव। तादृश्यपि सा आस्ताम्। मा भूत् तद्विचारः इति यावत्। अद्वैतब्रह्मरूपतत्त्वज्ञानात् मिथ्याभूतस्य जगतो निवृत्ति-

मिथ्यात्वमिति प्रक्रियया मिथ्यात्वप्रसङ्गात्। यदि न जिज्ञास्यं ब्रह्म, तदा पुनः, 'अथातो ब्रह्मजिज्ञासा' इति सूत्रमेव त्यक्तं स्यात्। यदि सूत्रं परित्यज्यते, तदा सकलमपि शास्त्रं परित्यक्तं स्यादित्यकामेनापि स्वीकर्तव्यम्। तत उभयतस्स्पाशा रज्जुरित्यद्वैतवादिनामपहास्यतैवावशिष्यते। तदिदमाह—बहुविहतिहतेति। [इदं?] काकाक्षिन्यायेन अत्रा(उत्तरत्रा?)प्यनुषज्यते।

'जन्माद्यस्य यतः' इति लक्षणवाक्यमद्वैतवादिनामपि संमतम्। लक्षणं नाम असाधारणो धर्मः। निर्ध(सध)र्मकब्रह्मणि लक्षणकथनमद्वैतवादिनां न जाघटीति। ननु लक्षणं द्विप्रकारं तटस्थलक्षणं स्वरूपलक्षणं चेति। स्वरूपलक्षणम्, 'सत्यं ज्ञानम्' इत्यादिवाक्यप्रतिपाद्यं सत्यत्वज्ञानत्वानन्तत्वादि। तत् पुनः सामानाधिकरण्येन प्रतिपाद्यते। तटस्थलक्षणं च जगत्कारणत्वादि। तत् पुनः वैयधिकरण्येन उच्यते; 'यतो वा इमानि' इत्यादिवाक्येन प्रतिपादनात्। तथाच ब्रह्मणः स्वरूपलक्षणं मा भूत्; तटस्थलक्षणमस्तु; स्वरूपसंबन्धाभावात्, यथा, 'शाखाग्रे चन्द्रः' इत्युक्ते शाखाग्रं चन्द्रेण न संबध्यते, तेन जगत्कारणत्वादिकं ब्रह्मलक्षणं सत्यब्रह्मणा न संसृज्यते। अतः निर्विशेषमेव ब्रह्मावतिष्ठत इति न कश्चिदस्माकं दोष इति॥ अत्रोत्तरम्—यदि स्वरूपलक्षणं ब्रह्मणि न स्यात्, तर्हि सत्यज्ञानादिवाक्यं ब्रह्म[णि]प्रतिपादकमेव न भवतीति महान् प्रहारः॥ व्यावृत्तिमुखेन प्रतिपादकमिति चेत्, व्यावृत्तेरवाच्यत्वात् लक्षणैव दोषः॥ वाक्यतात्पर्यानुरोधेन लक्षणाऽपि स्वीकार्यैति चेत्, अस्तु; लक्षणीयं किमिति स्वयमेव विशेषतो दर्शय। व्यावृत्तिरिति यदि वदसि, तर्हि विकल्पयामः—व्यावृत्तिः स्वरूपं तदधिकं वा किंचित्[इति?]। स्वरूपं चेत्, एकेनैव पदेन स्वरूपं लक्षितमिति पदान्तरनैरर्थक्यप्रसङ्गः।

---

मुक्तिरिति तदर्थतत्त्वज्ञानोत्पादनाय वेदान्तारम्भ इति दुर्वचम्; निर्विशेषस्वप्रकाशब्रह्मरूपप्रचण्डातपे अज्ञानान्धकारसंनिधानायोगेन जगत्कल्पनाया एवासंभवात् जगतो मिथ्यात्वायोगेन सत्यत्वात् सत्यस्य च ज्ञानानिवर्त्यत्वात् ब्रह्मज्ञानस्यानुपायत्वादित्याशंकायाम्, "जगन्मिथ्यात्वं सुस्पष्टं नापलपनीयम्। कल्पनामूलश्च व्यवहारो दृश्यमानो नापलप्यः। अनुपपन्नतैकवेषस्याज्ञानस्य निर्विशेषब्रह्माच्छादकत्वमपि गत्यभावादेष्टव्यम्। अतस्तत्त्वज्ञानं जगन्निवर्तकं भवेदेव" इति समाधानं तावत् अद्वैतिकृतं सर्वथैवायुक्तम्। सर्वात्मनाऽनुपपन्नोऽपि सिद्धान्तः श्रद्धया स्वीक्रियते इत्येव तदुक्तितात्पर्यात् तत्र सर्वस्याविश्वासात्। कथं च जिज्ञास्यता। सामान्यरूपेण विदिते विशेषरूपेणाविदिते, संशयस्य विपरीतज्ञानस्य वा विषये वास्तवविशेषनिश्चयार्थेच्छा हि जिज्ञासा। निर्विशेषस्वप्रकाशे किमप्रकाशितमस्ति। सामान्यधर्मवत्त्वं विशेषधर्मवत्त्वं तत्तद्धर्मवत्तया ज्ञेयत्वं संशयविषयत्वं विपरीतज्ञानविषयत्वं जगदाकारभ्रमविषयत्वं मोक्षार्थजिज्ञासाविषयत्वं तन्निवर्तकवाक्यतर्कज्ञाप्यत्वञ्च कथं निर्विशेषे।

अथ द्वितीयाधिकरणे लक्षणोक्तिरपि बहुविहतिहता; तथापि सह्यताम्। तथाहि—स्वप्रकाशस्य वस्तुनः स्पष्टमेव ज्ञाततया लक्षणवाक्येन किं ज्ञातव्यमस्ति। 'अध्यारोपापवादमात्ररूपं शास्त्रम्, न तु ब्रह्मप्रतिपादकम्, प्रागेव प्रसिद्धत्वात्' इति वदतां वः का लक्षणापेक्षा। लक्षणञ्चोच्यमानं ब्रह्मासाधारणधर्म एवेति कथं तत् निर्विशेषे। एवं स्थिते जगज्जन्मस्थितिलयहेतुत्वरूपधर्मत्रयं वर्ण्यमानं कथं घटते॥ नेदं विशेषणतया लक्षणम्, किंतूपलक्षणतयैवेति चेत्, उपलक्ष्याकाररूपविशेषणमादायैव लक्षणे वक्तव्ये किमित्युपलक्षणकक्ष्योक्तिः। तदप्युपलक्ष्यं किम्; सत्यं ज्ञानमनन्तमित्युक्तमिति चेत्—तर्हि

अतिरिक्तं चेत्, भेदवादप्रसङ्गः। नानालक्षणाभिधानञ्च निरर्थकम्; तत्तल्लक्षणैरपि लक्ष्य(रुपलक्ष्य?)-विशेषाकाराभावात्। भावे वा भेदप्रसङ्गादित्येषा दिक्।

तृतीयेऽपि सूत्रे शास्त्रयोनित्वकथनमपि विमृशामः—मृष्याम इति शब्देनामर्षणीयत्वमेव द्योत्यते; तेनापि (प्रलपितमित्येतेनापि?)। बहुविहतिहतमिति अत्राप्यनुषज्यते। 'तत्तु समन्वयात्' इति समन्वयव्यवहारोऽप्यपष्ठुरेव स्यात्। समन्वयो नाम सर्वेषां कारणवाक्यानां ब्रह्मणि तात्पर्येण समन्वयः। स च ब्रह्मणि भवद्भिरभिधातुं न शक्यते। वाच्यवाचकभावादिखण्डनस्य, स्वपक्षस्थापना-दौर्बल्येन खण्डनमाश्रयद्भिर्भवद्भिरेवाभिधानात्॥ अस्तु मुख्यवृत्तिखण्डनम्; औपचारिकीं वृत्तिं ब्रह्मण्याश्रयाम इति चेत्—तदपि हास्यमेव। मुख्याभावे कथमौपचारिकी वृत्तिरुच्यते; मुख्यार्थसंबन्धिन्यर्थान्तरे वृत्तिर्लक्षणा, मुख्यार्थगुणयोगिन्यर्थान्तरे वृत्तिर्गौणीति सर्वलोकलक्षण-प्रणयनविरोधात्। किंच गौणी वृत्तिरपि वृत्तिरेव। वृत्तिर्नाम शब्दस्यार्थबोधनम्। तथाच गौण्याऽपि वृत्त्या ब्रह्मणो बोध्यत्वमस्त्येव। तथाच बोध्यत्वान्मिथ्यात्वमिति स्ववचनं परिपालयतु भवान्॥ तर्हि तात्पर्यवृत्तिरस्त्विति चेत्—सापि हि वृत्तिरेव। तथाच सर्पो वा वृश्चिको वा भवतु; बाधकत्वं द्वयोरपि साधारणमित्यलमत्र विस्तरेण।

सर्वमप्यद्वैतवादिभिरुक्तमपार्थं सोढासः(?) इदमेकं न सोढासः(?)। 'ईक्षतेर्नाशब्दम्' इत्यारभ्य, 'एतेन सर्वे व्याख्याता व्याख्याताः' इत्यन्तै(त्युक्तै)स्सूत्रैरेकस्य सूत्रस्यैकोऽर्थो भेदेन (प्रतिसूत्रमर्थ-भेदः) प्रतिपाद्योऽस्ति वा न वा। यद्यस्ति, तदा भेदवादप्रसङ्गः। यदि नास्ति, तदा नैरर्थक्यमेव सूत्रा-

---

तानेव धर्मान् आदाय सविशेषत्वापादना। तेऽपि न भावरूपाः; किंतु व्यावृत्तिरूपा इति चेत्-तदापि धर्मत्वमेव। व्यावृत्तीनां स्वरूपाभेदे स्वरूपस्य ज्ञातत्वादेव संदेहाद्यनुदयप्रसंगात्। धर्मं विनैवोपलक्षणत्वम्, यथा शाखाग्रे चन्द्र इत्यत्रेति चेन्न—तत्राप्यार्जवरूपशाखाग्रसंबन्धस्य प्रकृष्टप्रकाशत्वरूपविशेषणस्य च चन्द्रे सत्त्वात्। निर्विशेषे, उपलक्षणलक्षणस्यापि दुर्वचत्वात्। सह्यतां तावदियमुक्तिरपि।

एवं तृतीयाधिकरणे **शास्त्रयोनित्वप्रलपितं** शास्त्रयोनित्वविषयकमनर्थकं वो वचोऽपि **बहु विहतिहतं** सहामहे। **शास्त्रस्य**=वेदस्य योनिः कारणं ब्रह्मेति तत्पुरुषं कृत्वा प्रथमं व्याख्यानम्। अपौरुषेयत्वाभिमते वेदे ब्रह्मणः कारणत्वोक्तिरिह कथम्। आस्तामेतत्। निर्विशेषब्रह्मलक्षणं किल प्राक् विवक्षितम्; तस्य सर्वज्ञत्वं वेदकर्तृत्वञ्च कथम्। अत एव अथ बहुव्रीह्यादरेणास्मदविशेषं यत् शास्त्रप्रमाणकत्वमुक्तम्, तदपि न; स्वप्रकाशे शास्त्रवेद्याकाराभावाच्च। यतो वाचो निवर्तन्ते, तत् कथं शास्त्रवेद्यम्। वेद्यत्वे च मिथ्यात्वं भवदिष्टमत्रापि स्यात्।

एवं तुर्याधिकरणे **समन्वित्यपोक्तिः**=अपवादरूपा समन्वयोक्तिः=कर्मकाण्डगतार्थवादान्तराणां तत्तद्विधिशेषत्वेऽपि औपनिषदवादानां तथाविधिशेषत्वं विनैव प्रामाण्यमिति पूर्वमीमांसोक्तविधिशेषत्वा-पवादोऽत्र क्रियत इति येयमुक्तिः, सा स्यात्। अस्माभिरप्यपवादत्वमिष्टमेव हि। परन्तु ब्रह्म ध्या-नादिविध्यविषयः, वाक्यजन्यज्ञानादेव मुक्तिरिति भवद्वादो नेष्यते। यतः सा **बहुविहतिहता**। वाक्य-जन्यज्ञानादेव मोक्षे ध्यानादिविधिवैयर्थ्यम्। नात्र विधिः, ऐकात्म्यमात्रस्य विवक्षितत्वादित्ययुक्तम्। अष्टाङ्गयोगविधानाद्यनेकवचनविरोधात्। ध्यानमूरीकृत्य तज्जन्यसाक्षात्कारो मुक्तिहेतुरिति पक्षे

णामिति ॥ सन्त्यर्थाः, ते तु व्यावहारिका इति चेत्, यदि वेदान्तसूत्रार्थाः व्यावहारिकाः, तर्हि पारमार्थिकं किमिति वद ॥ न किंचिदिति चेत्, किमर्थं शारीरकशास्त्रमारभ्यते । शारीरकशास्त्रस्य अपारमार्थिकविषयत्वे च परोक्तानामर्थानामपार(मेव पार?)मार्थिकत्वात् पुनरपि शास्त्रारम्भनैरर्थ-क्यम् अति(र्थक्यमिति?)सुष्ठूक्तं भवता । अयमिह शब्दान्वयः—स्फुटार्थैः सविषयवचनैरेतैः सूत्रैः, निर्विशेषैक्यपक्षे सूत्रार्थतया प्रधानप्रतिपाद्यैरीक्षणादिगुणैर्ब्रह्मधर्मभूतैः प्रकृतिपुरुषतो ब्रह्मणो भेद-वादः कथं भवतां स्यात् । प्रकृत्यधिकरण(प्रत्यधिकरण?)प्रतिपाद्यब्रह्मणः प्रकृतिपुरुषाभ्यां भेदो मिथ्या चेत्, अधिकरणनैरर्थक्यम् । तत्त्वश्चेत्, भेदवादप्रसङ्गः । व्यावहारिकत्वकुसृतिः पूर्वमेव निरस्तेति न तत्र प्रयतामह इति ॥ १५३ ॥

---

समन्वयाधिकरणस्य कथमपवादरूपता । तथा ध्यानजन्यस्य वाक्यजन्यस्य चाविशेषे पूर्वज्ञानस्य कथं द्वैत-निवर्तकत्वाभावः । परोक्षादपि मिथ्यानिवृत्तिदर्शनात् । निवृत्तीष्टौ च कथं बाधितानुवृत्तिः; दोषस्यापि मिथ्यात्वेन निवृत्तेरित्यादि भाव्यम् । तदपि भवद्भिर्दुर्वचम् । अशब्दगोचरे ब्रह्मणि कस्य वा वाक्यस्य समन्वयः सुकरः । **समन्वितत्वयोक्तिः**रित्यस्य समन्वयाधिकरणगतापार्थोक्तिरिति वाऽर्थः ।

एवमसंगतार्थवर्णनं सर्वमपि सहेमहि, यदि सूत्रैरुपरि निर्विशेषमेव प्रतिपादितं स्यात्। प्रत्युत भेदवाद एव तत्र कृतः । 'ईक्षतेर्नाशब्दम् इत्यादिभिः' सूत्रैः प्रकृत्यादिभेदरूपसाध्य-ईक्षणादिधर्मरूपहेतुप्रभृति-धर्मोक्तिमुखेन भेदः किल सूत्रैरुदितः । न चायं क्लिष्टार्थः, स्फुटत्वात् । तेषु सूत्रेषु विवक्षितानि यानि **विषयवचनानि** विषयवाक्यानि औपनिषदानि तदैक्षत इत्यादीनि, तान्यपि स्फुटार्थानि ब्रह्मणि धर्मानेव वदन्ति । एवं विषयवाक्यसहितसूत्रप्रतिपादितो नानाधर्ममूलो भेदवादः निर्विशेषमेकमेव तत्त्वमिति पक्षे कथं स्यात् । एकस्यापि धर्मस्याभावादेकमपि सूत्रं न प्रवर्तितुमर्हम् । सूत्राणामपौनरुक्त्यम्, अधिकरणानां प्रत्येकं ब्रह्मगतविभिन्नविशेषप्रतिपादकत्वञ्च यावन्नेष्यते, तावन्नेयं ब्रह्ममीमांसा स्यात् । उपरितनाध्याये परमतनिराकरणभागमात्रं कथञ्चिदद्वैतमते समन्वितार्थकं भवेत् । अन्यत् सर्वमनुपपन्नमेव । एवं महावाक्यविरोधात् उपोद्घातसूत्रार्थान्यथाकरणमपि कुसृतिरेवेत्यलं प्रासंगिकेन बहुनेति भावः ॥

**चि. टी. खण्डनमिति।** खण्डनग्रन्थोक्तरीत्या सर्वखण्डनमित्यर्थः। सहतेः परस्मैपदप्रयोगोऽप्यनु-मन्यत इत्यस्तु कामम् । अनद्यतनभविष्यदर्थकलुट्प्रयोगे प्रयोजनाभावादेवं पाठो न स्यात्। **सोढार** इति पाठश्चेत्, द्वितीयान्तपदसत्त्वात् तृन्नन्तत्वमेष्टव्यम् । **परोक्तानामिति** । **परशब्द** इहाद्वैतिपरश्चेत्, स्थितमुपपन्नम् । **वैखरी**=परिपाटी । **मौखरी**=मुखरपुरुषसंबन्धिनी । **मौखरीवैखरी**ति पाठः स्यात् । मुखरसंबन्धिनी वैखरीतिवत् मुखरत्वस्य वैखरीति समुचितार्थसंभवात् ॥ १५३ ॥

**इति वात्स्यसच्चक्रवर्तिवीरराघवाचार्यकृतिषु**
**अधिकरणसारावलिव्याख्यायां सारार्थरत्नप्रभायां**
**प्रथमस्याध्यायस्य चतुर्थः पादः ॥ प्रथमाध्यायश्च समाप्तः ॥**

सुखेन विजयामहे सदसि लक्ष्मणार्योक्तिभिर्द्दंथाननमुखोद्गतैर्हलहलोर्मिकोलाहलैः ।
सुदर्शनमहाग्निना सपदि सर्वदुर्वादिनां चटचटदिति स्फुटत्वहह वैखरी मौखरी(मौखरीवैखरी?)॥

इति निखिलतार्किकचूडामणिना सर्वतन्त्रस्वतन्त्रेण
कुमारवेदान्ताचार्यपरनाम्ना श्रीमद्वैश्वामित्रवरदगुरुणा विरचिते
शारीरकाधिकरणचिन्तामणौ प्रथमस्याध्यायस्य चतुर्थः पादः ॥

॥ प्रथमाध्यायश्च समाप्तः ॥

अथ द्वितीयाध्यायस्य प्रथमः पादः

३६ ॥ स्मृत्यधिकरणम् ॥ २-१-१ ॥

सू-स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ इतरेषाञ्चानुपलब्धेः ॥१,२॥

(१५४) तत्तादृक्तर्कतन्त्रक्रमनिपुणमहाबुद्धिसन्तोषसिद्धिः
यद्यप्युक्तेन लभ्या तदपि मृदुधियां हेतुकास्कन्दशङ्की ।
स्थूणाखातक्रमेण स्थिरयति कथितं ब्रह्मणः कारणत्वं
कार्यत्वं यस्य यादृक् श्रुतिभिरवगतं तस्य तत् तादृशं च ॥ १ ॥

प्रथमाध्याये चतुर्षु पादेषु अस्पष्टतरजीवादिलिङ्गकानि वाक्यानि पूर्वपक्षिणा चतुर्धा पुरस्कृतानि । तत्प्रतिपक्षवाक्यानि सिद्धान्तिना । तत्र पूर्वपक्षयुक्तीनां पौलस्त्यपरिकरन्यायेन प्रतिपादं क्षयः। प्रक्षीणानां[ां]श्चापुनरुदयात् उत्तरोत्तरपादोपात्तानामुपपत्तीनां वाक्यानां च निस्सहायत्वेन दौर्बल्यात् क्रमेण संक्षयो जातः । सिद्धान्तयुक्तीनां पुनः सुग्रीवसैनिकवत् प्रतिपादं प्रतिहतप्रतिपक्षाणामक्षततत्त्वेनैवावस्थानात् उत्तरोत्तर(रं)प्रतिपाद्यानां श्रुतिस्मृतियुक्त्यादीनां ससहायत्वेनोत्तरोत्तरं प्राबल्यात् सिद्धान्तप्रक्रिया निष्कण्टकमेवाभिवर्तत इति सर्वतोमुखी विजयसिद्धिरिति पूर्वाध्यायेन सांख्यादिपक्षे निरस्ते पुनः प्रतिवादिनः, 'नष्टे द्यूते वस्त्रजं कुर्यात्' इति न्यायेन प्रकोपमात्रपरतन्त्राः युक्तिभिः(युक्तीनां)विरोधं वक्तुमारभन्त इति द्वितीयाध्यायसङ्गतिः। प्रथमाध्यायपरिसमाप्तौ सांख्ययोगपक्षयोरनुक्रमेण निरस्तत्वात् सांख्यवादी तावत् वेदान्तविरोधमाचष्टे ; ततः पुनर्योग-

१. अध्यायार्थाः पादार्थाश्च प्रागेव प्रदर्शिताः । अथात्र प्रथमाध्यायप्रतिपादितब्रह्मकारणत्वविरोधशंकापरिहारार्थं द्वितीयाध्यायो नापेक्षितः ; एतावदुक्तरीतिवेदिनां तथा शंकाया एवासंभवादिति शंकामुद्भाव्य परिहरति तदिति प्रथमश्लोकेन । यद्यपि उक्तेन प्रथमाध्यायप्रतिपादितार्थजातेन यथावद्विदितेनैव तस्मिन् वेदशास्त्राविरोधिनि तादृशि जैमिनिबादरायणप्रतिपादितप्रकारे तर्कतन्त्रक्रमे न्यायप्रयोगरीतौ । तर्कशास्त्रमीमांसाशास्त्रसरणाविति वा । निपुणाः ये महाबुद्धयः सर्वविषयविचारक्षमसूक्ष्मधियः तेषां संतोषसिद्धिः तृप्तिसंपत्तिः परापादनाधीनशंकानवसरात् स्वयं शंकाशमनसामर्थ्यशालितया प्रथमाध्यायमात्रे अलम्बुद्धिः लभ्या लभ्येत । तत्तादृगित्यस्य तत्तत्सदृशेति वार्थः । क्रमविशेषणत्ववत् महाबुद्धिविशेषणत्वं वा । तदा जैमिनिबोधायनादितुल्येत्यर्थः । तदपि=तथापि मृदुधियां स्वयं न्यायातिदेशनाक्षमबुद्धीनामास्तिकानां हेतुकैः युक्तिप्रधानैः परैः आस्कन्दम्=आक्रमणं शंकमानो भगवान् बादरायणः स्वकथितमेव ब्रह्मणो द्विविधमपि कारणत्वं पुनः स्थूणाखातक्रमेण स्थूणानिखननन्यायेन, यथा स्थापयितुमिष्टायाः स्थूणाया अवटे निक्षिप्य परितो मृत्पाषाणपूरणे कृतेऽपि तत्र शैथिल्यनाशौ स्थूणा

वादी इत्यधिकरणसंगतिः, एकपेटिकात्वञ्च। अत्र पूर्वोत्तराध्यायसंगतिं सदृष्टान्तमाह–तत्तादृगिति। स च तादृक् च तत्तादृक्। तत्तादृग्विधतर्कतन्त्रक्रमे निपुणानां महाबुद्धीनां सन्तोषसिद्धिः प्रथमाध्यायोक्तेन प्रकारेण यद्यपि लभ्या, तथापि मृदुधियां बालबुद्धीनां हैतुकैः=हेतुवादिभिः आस्कन्दम्=आक्रमणमाशङ्कमानः कथितमेव ब्रह्मणः कारणत्वं स्थूणानिखननन्यायेन स्थिरयति सूत्रकारः; कार्यत्वञ्च यस्याऽऽकाशादेर्यादृक्, तच्च तादृशमेव। स्थिरयतीति पुनरन्वयः। अयमर्थः—ब्रह्मणः कारणत्वमाकाशादेः कार्यत्वञ्च सप्रकारं बालिशबुद्धीनां प्रतिभटवादिभिरनाक्रमणाय स्थूणानिखननन्यायेन सूत्रकारः स्थिरयतीति। प्रथमाध्यायोक्तार्थस्थापनमेव द्वितीयाध्यायकृत्यमित्युक्तं भवति। तथाच न पौनरुक्त्यशङ्कावकाश इति ॥ १५४ ॥

(१५५) पादद्वन्द्वं द्वितीये परिहरति परे कारणे बाह्यपीडां
कार्यद्वारेण पादान्तरयुगमुदय(युगलमुदे?)त्यान्तरक्षोभशान्त्यै।
हेतुत्वायोगभङ्गः प्रथममिह विभोस्तस्य सार्वत्रिकत्वा-
योगक्षेपः परस्तात् फलति; स च भवेच्छ्रौतनित्यं विहाय ॥ २ ॥

पूर्वं प्रथमद्वितीययोरध्याययोः संगतिरुक्ता; अधुना पुनर्द्वितीयाध्याये पूर्वपादद्वन्द्वस्योत्तरपादद्वन्द्वस्य च परस्परसङ्गतिरभिधीयते। तच्छेषभूतश्चार्थतत्त्वमन्यदपि तत्रैव प्रकाश्यते–पादद्वन्द्वमित्या-

---

न स्थास्यतीति विमृश्य परेण चालने कृते वा स्वयमेव चालनं विधाय वा पूर्वकृतमृदादौ अधोगमिते पुनः पूरणेन दार्ढ्यसंपादनेन स्थूणा निश्चला क्रियते, तथा परकृतशंकानुवादेन वा स्वयमेव शंकापुरस्करणेन वा प्रोक्तमर्थं विचार्य सत्तर्कैः पूरणेन स्थिरयति। तत्रैकविज्ञानेन सर्वविज्ञानमिति कार्यतया गृहीतं यत् सर्वम्, तत् कतिपयत्यागेन, उतात्यागेन; त्यागेऽपि, किं बाह्योक्तरीत्या बहुत्यागेन किञ्चिन्मात्रत्यागेन वेति विमृशन् कार्यत्वप्रकारमपि शोधयन् प्रपञ्चे यस्य जडस्य चेतनस्य च यादृशं स्वरूपविकारात्मकं स्वभावविकारात्मकं वा कार्यत्वं श्रुतिमूलं ज्ञातम्, तस्य द्रव्यस्य तत् कार्यत्वं च तादृशं द्विप्रकारं स्थिरयति। तेन सर्वकारणत्वं स्थापयतीति ॥ १५४ ॥

२. एवं द्वितीयाध्यायावश्यकत्वमुपपाद्य तत्र पादद्विकद्वयस्य पेटिकाद्वयरूपत्वं द्वेधा दर्शयति पादेति। कारणे–निमित्तोपादानभूते परे ब्रह्मणि बाह्यैः क्रियमाणां स्मृत्या युक्त्या चासंभवशंकां प्रथमे पादद्विके परिहरति। शिष्टं पादयुगम् आन्तरैरास्तिकैः श्रुत्यर्थपरिशीलकैः श्रुतिविरोधप्रदर्शिभिः कृतस्य कार्यद्वारेण क्षोभस्य कार्यतार्हस्यापि कार्यत्वासंभवरूपाक्षेपस्य शमनार्थम्। वियत् कार्यमेव न भवति। तेजआदीनां कार्यत्वेऽपि साक्षात् ब्रह्मकार्यत्वं न भवति। चतुर्मुखमुखेन सृज्यमानायां व्यष्टौ नतरां स्वयं शयानेन ब्रह्मणा कार्यत्वम्–इत्याक्षेपस्य क्षेपार्थमिति यावत्। शब्दतः फलतो वा सर्वं कारणत्वविषयकमेवेति प्रकारान्तरमाह हेतुत्वेति। परमतस्यैव युक्तत्वात् विभुः ब्रह्मरूपो हेतुरेव न भवतीति शंकाभंगः प्रथमपादद्वये; तस्य हेतुत्वस्य न सर्वनिरूपितत्वम्, किंतु वियदादिव्यतिरिक्तनिरूपितत्वमित्याक्षेपभंगः उत्तरपादद्वये। कार्यत्वाभावकण्ठोक्तावपि भगवतः सर्वकारणत्वाभाव एव फलतः शंकितो भवति। कार्यपरम्परायां प्रथमकार्यं प्रति भगवतः कारणत्वेऽप्युत्तरोत्तरकार्ये साक्षात्कारणत्वं नास्तीत्येतदपि निरस्यते

दिता। शब्दार्थस्तु—द्वितीयाध्याये प्रथमपादद्वन्द्वं परस्मिन् कारणभूते ब्रह्मणि वेदबाह्योक्तां बाधप्रतिरोधात्मिकां पीडां क्रमेण परिहरति। पादान्तरयुगं पुनः-वियत्पादः प्राणपादश्च कार्यद्वारेण समुत्थितं (समर्थितं) विरोधमान्तरप्रक्षोभशान्त्यै परिहरति। तेन बाधप्रतिरोधाभ्यां सह परमात्मविज्ञानस्यानुत्पत्तिलक्षणमप्रामाण्यमपि परिहृतं भवति। आन्तरक्षोभो नाम वेदान्तवाक्यानामन्योन्यविरोधः (प्रक्षोभः)। इत्थं पादद्वयस्य पूर्वस्योत्तरेण पादद्वयेन सङ्गतिरुक्ता। प्रकारान्तरेणाप्यर्थभेदं सङ्गतिश्चाऽऽह-हेतुत्वेति। पूर्वेण पादद्वन्द्वेनेश्वरस्य कारणत्वायोगभङ्गः कृतः। द्वितीयेन तु पादद्वन्द्वेन तस्यैव हेतुत्वस्य सार्वत्रिकत्वायोगभङ्गः क्रियत इति। अयमर्थः—न्यायवादिन एवं मन्यन्ते—ईश्वरस्य हेतुत्वमस्तु नाम, अथाप्याकाशादेर्नित्यत्वात् तं प्रति तस्य हेतुत्वं नास्ति। अत ईश्वरस्य हेतुत्वं न सार्वत्रिकमिति। तदपि विधूयते वियदादिपादेनेति(त्यर्थः)। फलतीति। साक्षादर्थोऽयं न भवति; फलितार्थ इत्यर्थः। आकाशादेः कार्यत्वोपपादने सति ईश्वरापेक्षया तस्य कार्यत्वं (इव तस्य सर्वकारणत्वमपि?) स्वयमेव फलितं भवतीति। ननु प्रकृतिपुरुषयोर्नित्यत्वं श्रूयते; कथमीश्वरहेतुत्वस्य सार्वत्रिकत्वायोगक्षेप इत्याशङ्क्याह-स चेति। यः सार्वत्रिकत्वायोगक्षेपः? स तु श्रुतिसिद्धनित्यं विहाय भवेत्। यत्र नित्यत्वश्रुतिः, तद्व्यतिरेकेणान्यत्र सर्वत्रेश्वरस्य कारणत्वमित्यर्थः। ईश्वरस्वातन्त्र्यं नित्यानित्यसाधारणम्; नियतपूर्वभावित्वलक्षणं कारणत्वमनित्यमात्रे व्यवतिष्ठत इति भावः॥१५५॥

(१५६) तन्त्रच्छायानिदाने स्वयमुपनिषदामान्यपर्ये निषिद्धे(निरुद्धे)
तन्त्रेभ्यो दुर्बलत्वात् तदनुसरणमित्युज्जिहीते परोऽत्र(त्र)।

तेजोधिकरणे। वस्तुतः आकाशस्य महदादिकार्यव्यवधानेन पश्चाद्भावित्वे सत्यपि, "आत्मन आकाशः संभूतः" इति साक्षादात्मजन्यत्वस्यैवोक्ततया पूर्वपूर्वकारणस्य परमात्मात्मकतयैव कारणत्वं सिध्यत्येव। इदमेव सर्वकार्यविषयककारणत्वमभिप्रेत्य चिन्तामणौ, "आकाशादेः कार्यत्वोपपादने सति ईश्वरापेक्षया तस्य कार्यत्वं....स्वयमेव फलितं भवति" इति लिखितमिति चिन्त्यते। 'आत्मन आकाशः संभूतः' इति आकाशे कार्यत्वकण्ठोक्त्या तस्य फलितत्वकथनायोगात्। तस्येत्यादेरुपरि किञ्चित् पदं स्थितं स्यात्; मूले सार्वत्रिकेति पदसत्त्वात्। श्लोके उदयतीति प्रयोगविषये पदयोजना, "उदयति उत्पद्यते। यद्वा उदयशब्दः सूर्योदयपरः। तद्वदाचरतीति उदयति। यथा सूर्योदयः समस्ततमःक्षोभनिवृत्त्यै कल्पते, तद्वदिदं पादद्वयमप्यान्तरक्षोभात्मकतमोनिवृत्त्यै कल्पते इति। अतः अयतेरात्मनेपदित्वेन परस्मैपदित्वायोग इति न चिन्तनीयम्" इति। "प्राणः प्रजानामुदयत्येष सूर्यः" इतिवत् बहुप्रयोगदर्शनात् परस्मैपदित्वमप्येष्टव्यमित्याशयः। अन्यथा, पादान्तरयुगलमुदेत्यान्तर इति पाठः स्यादपि। असंभवस्तु सतोऽनुपपत्तेः इति सूत्रं मनसिकृत्याऽऽह स चेत्यादि। सः हेतुत्वायोगक्षेपः श्रुत्या नित्यत्वेनोक्तं प्रकृत्यादिद्रव्यं विहाय भवेत्। तन्निरूपितहेतुत्वायोग एव ब्रह्मणः; तस्याकार्यत्वात्। सूत्रे सत इति पदम्, 'सदेव सोम्येदम्' इति श्रुतिवाक्ये सत्पदोक्तं सूक्ष्मचेतनाचेतनविशिष्टं ब्रह्म वदति। तेन ब्रह्मण इव प्रकृत्यादेरप्यकार्यत्वसिद्धिः। एवं कालनित्यविभूत्योरपि सद्विशेषणत्वम्। नित्यसूरीणामप्यभिमानिनां कारणत्वात्। तावता न प्रतिज्ञाविरोधः, प्रकृतप्राकृतकार्यस्य सर्वस्य विज्ञाततायाः एव एकविज्ञानत उक्तत्वात्। सत्पदोक्तातिरिक्तमेव सर्वं कार्यम्॥ १५५॥

इत्थं सत्यत्र तत्तत्स्मृतिनयपृतना(कलिता)तिक्रमं तत्तदर्हैः
प्रत्यस्त्रैर्वारयित्वा द्रढयति चलितं पादतः प्राच्यमर्थम् ॥ ३ ॥

पूर्वमध्यायसङ्गतिरुक्ता ; अधुना पुनः प्रथमलक्षणचतुर्थपादेन द्वितीयलक्षणप्रथमपादस्य सङ्गतिरभिधीयते—तन्त्रेति। उपनिषदां तन्त्रच्छायानिदाने स्वयमन्यपरत्वे पूर्वस्मिन् पादे निषिद्धे तन्त्रेभ्यः तासामुपनिषदां दुर्बलत्वात् तदनुसरणं = तन्त्रानुसरणमेव न्याय्यमिति पर उज्जिहीते। अयमर्थः—सर्वव्याख्यानाधिकरणे, 'व्याख्याताः' इत्युपनिषदां व्याख्यानमुक्तम्। व्याख्यानञ्चोपबृंहणमेव। तच्चोपबृंहणं श्रुतेः स्मृत्या कर्तव्यम्। मन्वादिस्मृतिस्तु कर्मप्रतिपादनपरत्वात् कर्मभागोपबृंहणम्। तथाचानादेशिकत्वादुपनिषत् तपस्विनी न्यायोपबृंहणे सांख्यस्मृतिमेवाश्रयते। तेन समाश्रयणीयसांख्यस्मृत्यपेक्षया दुर्बलत्वात् तदनुरोधेनेयमुपनिषन्नेयेति। अधिकरणोत्थानेन सङ्गतिरप्यत्र परिस्फुरति। इत्थं पूर्वपक्षिणा वैयाकुलीमापादितां समाधत्ते पादान्तरेण सूत्रकार इत्याह—इत्थमिति। तत्तदित्यादि। तत्तत्सांख्यादिस्मृतिन्यायाभ्यां कलितमतिक्रमं = हिंसनं तत्तत्प्रतिक्षेपार्हैः प्रत्यस्त्रैर्वारयित्वा चलितं पूर्वपादोक्तमर्थं दृढीकरोति ॥ १५६ ॥

---

३. प्रथमचतुर्थोक्ताक्षेपेण द्वितीयाध्यायारम्भ इति पादसंगतिमाह तन्त्रेति। सांख्यादितन्त्रगतवाक्यकदम्बच्छायारूपोपनिषद्वाक्यजातमूलकमुपनिषदां ब्रह्मातिरिक्तकारणैकपरत्वं यत् शंकितम्, तस्मिन् चतुर्थपादेन निरस्ते सति, स एव तन्त्रसक्तः अद्य द्वितीये उज्जिहीते पुनः प्रत्यवतिष्ठते—सांख्यादितन्त्रग्रन्थानां स्पष्टमर्थप्रतिपादकतया तदपेक्षया उपनिषदां दुरवगाहतया दुर्बलत्वात् अस्मादृमल्पधियां सर्ववेदवेदनस्याभावेन च अर्थनिर्णयाकौशलात् सर्वद्रष्टृकृतसांख्यादितन्त्रमुपजीव्यैवोपनिषदर्थनिर्णयः कार्य इति। इत्थं प्रत्यवस्थाने सति सांख्ययोगकाणादादिस्मृति-तदनुगुणतर्कसैन्य(गण)कारितं प्रथमाध्यायनिर्णयातिक्रमं तत्तदर्हैः प्रत्यस्त्रैः प्रतितर्कैः मन्वादिबहुस्मृतिविरोध-हिरण्यगर्भगतगुणत्रयवश्यत्व-अणुकारणादिवादमिथोविरोधादिरूपैः निवार्य तद्विचलितं प्राच्यं प्रथमाध्यायोक्तं ब्रह्मकारणत्वरूपमर्थं पादतः प्रथमेन पादेन द्रढयति। अत्र कलितेति कश्चित् पाठः। चिन्तामणावपि तत्पदं दृश्यते। पृतनेति पदयोजनाप्रकाशिकयोः पाठः। प्रत्यस्त्रपदसत्त्वात् पृतनेति पाठ एव आद्रियत इव। अत्र पादत इति एकपादविवक्षैव चिन्तामणौ लक्ष्यते। पदयोजनायाम्, 'अत्र पादद्वये' इत्युक्तम्। पादत इत्यस्यापि स एवार्थं इष्ट इव ॥ द्वितीयपाद एव बहुतन्त्रविचारात् तन्त्रेभ्य इति बहुवचनात् द्वितीयपादोऽपि ग्राह्यो गम्यत इति चेत्, न ; परपक्षग्रहणेन प्रत्यवस्थानं प्रथमपाद एव कृतम् ; वारितञ्च ; द्वितीये तु स्वयमेव परपक्षदूषणमिति विशेषात्। अधिकरणस्य पञ्चाङ्गतया तत्रापि प्रत्यधिकरणं पूर्वपक्षिप्रत्यवस्थानसत्त्वेपि स्वपक्षदोषाक्षेपरूपैकसूत्रपणनेनैव सर्वनिरासस्य प्रथमपाद एव सुकरतया विशेषतो मतान्तरदोषविस्तरणं हि वैशद्याय। तन्त्रेभ्य इति बहुवचनं तु एतेन शिष्टापरिग्रहा अपि व्याख्याताः इति प्रथमपादगतसूत्रं मनसिकृत्येति पादयुगलत इति शब्दाप्रयोगात् ज्ञायते। दुर्बलत्वादिति पदमपि प्रबलस्वमतबाध्योऽयमस्मदौपनिषदवाद इत्यर्थं प्रदर्शयन् प्रथमपादमात्रं ग्राहयति ; तस्य बाधशंकायामुत्थितत्वात्। समबलत्वेन सत्प्रतिपक्षत्वपरासनं हि द्वितीयपादकृत्यम् ॥१५६॥

(१५७) निर्णीतं कर्मकाण्डे स्मृतिनयविहतौ निश्चलत्वं श्रुतीनां
चर्चा तत्सिद्धयेऽसौ पुनरिति विफलस्स्यात् द्वितीयाद्यपादः ।
मैवं गम्भीरनानाश्रुतिशिखरपरिच्छेद्यदुर्बोधतायाम्
आप्तोक्त्या तर्कतश्च श्रममनुसरणं पश्यतो ह्यत्र भङ्गः ॥ ४ ॥

द्वितीयाध्यायपादारम्भस्य नैरर्थक्यं परिहरति—निर्णीतमित्यादिना । कर्मकाण्डे हि विरोधाधिकरणादौ स्मृतिन्यायविरोधे श्रुतीनां निश्चलत्वं निर्णीतम् । वेदान्तोऽपि श्रुतिरेव । तत्सिद्धये= पूर्वसिद्धार्थसिद्धये, पुनरियं चर्चेति द्वितीयाध्यायाद्यपादो विफल एव स्यात् । नेत्याह मैवमिति । तदेव विवृणोति—गम्भीरेति । उपनिषदां गम्भीरत्वोपपादनात् तत्परिच्छेद्यस्यार्थस्य दुर्बोधत्वशङ्कायां कपिलाद्याप्ततमवाक्यैः तदुपस्काररूपतर्कैः सांख्यादितर्कैश्च तत्त्वार्थपरिज्ञानानुसरणं प्राप्तमिति पश्यतः कस्यचिन्मन्दमतेरत्र भङ्गः क्रियत इति न पौनरुक्त्यशङ्कावकाश इति ॥ १५७ ॥

---

४. पूर्वमीमांसया गतार्थत्वात् प्रथमपादानुत्थितिमाशंक्य परिहरति **निर्णीतमिति**। स्मृतिविरोधात् न्यायविरोधाच्च प्रथमाध्यायनिर्णीतः श्रुत्यर्थो न युक्त इति ह्यत्र शंका । पूर्वकाण्ड एव तत्परिहारः कृत इति पुनरुक्तः स्यात् ; एतन्मीमांसापूर्वभागात्मके कर्मकाण्डे जैमिनीये प्रथमतृतीये, **स्मृतिनयविहतौ**= स्मृतिविरोधे न्यायविरोधे च सत्यपि श्रुतीनां निश्चलत्वं श्रुतिप्रतिपादितानामर्थानामबाधितत्वं निर्णीतम् । 'औदुम्बरी सर्वा वेष्टयितव्या' इति स्मृतिः, 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति श्रुतिश्च मिथोविरुद्धे । तत्र कतरग्रहणम् ; विकल्पेनोभयग्रहणं वेति विचारे प्रत्यक्षश्रुत्यर्थादरणेन स्मृतेरप्रामाण्यमेव स्थापितम् । तन्न्यायेन प्रथमाध्यायावधारितश्रुत्यर्थादरणेन कपिलादिस्मृत्यप्रामाण्ये सिद्धे असौ एतत्पादे क्रियमाणा **तत्सिद्धये** तत्र साधितार्थसिद्ध्यर्था पुनश्चर्चैव भवतीति द्वितीयाध्यायप्रथमपादोऽयं **विफलः** व्यर्थः स्यादिति शंका । **स्मृतिनयविहतौ** इत्यस्य **स्मृतिनयस्य**=स्मृत्यधिकरणन्यायप्रवृत्तेः स्मृतीनामपि वेदानुमापकत्वात् वेदतुल्यं प्रामाण्यमिति न्यायस्य विरुद्धार्थकस्मृतिवाक्येऽपि प्रवृत्तेः विहतत्वे इत्यर्थो वा । अथवा स्मृतेः **नयस्य** अनुमानस्य च **विहतौ** विहतत्वात् बाधितत्वादित्यर्थः । ननु विरुद्धस्मृतेरप्रामाण्यं तत्रोक्तमिति सत्यम्; विरुद्धस्यानुमानस्याप्रामाण्यं तत्र कुत्रोक्तमिति चेत्–वेदमूलकत्वशंकास्पदस्य स्मृतेरेवाप्रामाण्ये अन्यथासिद्धानुमानाप्रामाण्यं दण्डापूपायितम् । यद्वा विरुद्धस्मृतिविषयेऽपि यत् वेदानुमानम्, तत् श्रुतिविरोधादयुक्तमित्युक्तौ श्रुतिविरुद्धविषयेऽनुमानं नोदेतीति ज्ञायत एव । हैतुकस्मृतिनिरासाच्च । तथा कल्पसूत्राधिकरणे कतिपयकल्पसूत्रवचनानां न्यायप्रदर्शनपूर्वकं वाक्यार्थनिर्णये प्रवृत्तानां न्यायस्य वेदविरोधेनाऽऽभासत्वे आभासत्वमित्युक्तत्वादपि न्यायस्य=अनुमानस्य श्रुत्या हन्यमानत्वमधिकरणसिद्धमिति । वैफल्यं परिहरति **मैवमिति** । **श्रुतिशिखराणां** वेदान्तानां गम्भीरत्वात् दुर्ग्रहार्थकत्वात्, **नाना**त्वात् मिथो विरुद्धार्थकसदसदादिपदघटितत्वात् असदज्ञायमानानेकशाखासत्त्वाच्च तैः **परिच्छेद्यस्य** निर्णेतव्यस्यार्थस्य दुर्बोधता तावदस्ति । तस्यां सत्यां तन्निर्णयस्य सहकारि किञ्चिदन्विष्यते । तत्र सर्वज्ञाप्तवचनं प्रधानसहकारि । आप्तेषु च महर्षिषु मन्वादीनां कर्मविषये आप्तत्वेऽपि तत्त्वविषये तथात्वनिश्चया-

(१५८) द्वाभ्यां स्मृत्या विरोधं परिहरति ततस्त्वष्टभिस्तर्कबाधं
तेनोपादानभावं द्रढयति तु विभोः कर्तृतां तद्द्वयञ्च ।
तत्तत्क्षेपात् तुलाग्रद्वयनमन(द्वितयनति)समुन्नामनीत्या प्रवृत्ते
शङ्कावर्गे परीक्षासमनिहितमतिः पक्षपातं रुणद्धि ॥ ५ ॥

स्मृतिविरोधपरिहारः कुत्र, न्यायविरोधपरिहारश्च कुत्रेत्याशङ्क्य द्वाभ्यामधिकरणाभ्यां स्मृतिविरोधपरिहारो भवति, अष्टभिः पुनरधिकरणैर्न्यायविरोधपरिहार इति विभज्य दर्शयति— द्वाभ्यामित्यादिना । उभाभ्यामपि परिहाराभ्यां फलितमर्थमाह—तेनेति । उपादानत्वं निमित्तत्वञ्च भगवतः सुदृढमेव स्थापितं भवतीत्यर्थः । तद्द्वयं चेति । क्वचिदुपादानत्वं क्वचिन्निमित्तत्वं क्वचि-

भावात् तदेकपरकपिलाद्याप्तवचनमेव सहकारि स्वीकार्यम् । तत्र यदि वैमत्यम्, तदा तर्को वा सहकारी । यस्यार्थस्य प्रतितर्केण बाधो न भवति, स श्रुत्यर्थो भवेत् । किञ्च कर्मकाण्डे श्रुतिविरुद्ध स्मार्तकर्मणस्त्याज्यत्वमुक्तम् । क्रियायां विकल्पसंभवात् तदनादरणं युज्यते । प्रामाणिकत्वसंभावनाया-मप्यननुष्ठानलक्षणमप्रामाण्यं तत्रेष्येत । अत्र तु श्रुतिस्मृत्योस्तत्त्वविषयकत्वात् श्रुत्यादरणे स्मृतेः सर्वथैवाप्रामाण्यमापतति । तदपेक्षया स्मृत्यनुकूलतया श्रुत्यर्थस्वीकारेणासदुन्नीतार्थत्याग एव युक्तः । अस्मदपेक्षया कपिलादिषु ज्यायस्त्वस्य निर्विचिकित्सत्वात् । तस्मात् तादृशाप्तोक्त्या तर्केण च स्वीकृतेन अनुसरणं तद्ग्रहणानन्तरमेवार्थनिर्णयाय श्रुतिसमीपगमनं तदुपादानं क्षमं युक्तं पश्यामः इति पूर्वपक्षी आह । तस्य ह्यत्र भंगः क्रियते । अतो मैवम् । अधिकाक्षेपसमाधानत्वान्न पौनरुक्त्यमिति ॥१५७॥

५. प्रथमपादे पेटिकाविभागं दर्शयति द्वाभ्यामिति प्रथमपादेन । कीदृशं कारणत्वं स्थिरयतीत्यत्र यथायथमित्याह द्वितीयपादेन । उत्तरार्धेन परमतानां दौर्बल्यमेकरूपमिति दर्शयति । द्वाभ्याम्= स्मृत्यधिकरणयोगप्रत्युक्त्यधिकरणाभ्यां कपिलस्मृत्या कृतं विरोधं बाधं परिहरति । स्मृत्येति तृतीयान्तम्, अष्टभिरित्यनेनैकरूप्याय । ततः अधिकरणद्वयानन्तरम् अष्टभिः अधिकरणैः नविलक्षणत्वादित्यादिभिः तर्केण चिकीर्षितं बाधं परिहरति । तत्र, विलक्षणत्वाधिकरण-शिष्टापरिग्रहाधिकरणाभ्यां तर्कसहकृतस्मृति-विरोधपरिहारः, ततः केवलतर्कविरोधपरिहार इति विभागोऽपि द्रष्टव्यः। तेन एवं विरोधपरिहारेण विभोः क्वचिदधिकरणे उपादानतामात्रं क्वचिन्निमित्तत्वमात्रं क्वचित् तदुभयञ्च स्थिरयति । उपसंहारदर्शनाधिकरणे प्रयोजनवत्त्वाधिकरणे च कर्तृत्वस्थापनम्, शिष्टापरिग्रहाधिकरणे चानेकमतनिरासात् निमित्तत्वोपादान-त्वोभयस्थापनम् । भोक्त्रापत्त्यधिकरणेऽप्येवं सुवचम् । शिष्टेष्वधिकरणेषूपादानत्वस्थापनमिति । अत्र प्रायः उत्तरोत्तराधिकरणपूर्वपक्षी पूर्वपूर्वापेक्षया स्वस्य बलं मन्यते । सूत्रकारस्तु पूर्वाविशेषमेवोत्तरमपि निरस्यतीत्यप्याहोत्तरार्धेन । नात्र प्रमाणातिक्रमेण पक्षपात इति च वदति । तुलायाः यत् अग्रद्वयं तत्रैकैकस्यापि नमनं नतिः कदाचित्, अथ समुन्नामः उद्गमनञ्च लोके तत्तद्वस्तुक्षेपादेव । एकवस्तु-निक्षेपे नतिः, ततः क्षेपे निरासे उन्नतिरिति । तद्रीत्या एकस्यां शंकायामुद्भाव्यमानायामेकमग्रं किञ्चिन्नमति, पुनरुत्तरे कृते चोन्नमति । सिद्धान्तपक्षे यावत् प्राशस्त्यम्, तावतः कुत्राप्यभावात्

त्युनरुपादानत्वं निमित्तत्वञ्चोभयमपि प्रकाशयतीत्यर्थः। तत्तद्वादिपरिकल्पितानां परस्परविरुद्धाना-मर्थतत्त्वानामेकप्रतिक्षेपे तदन्येषामर्थानां तुलाग्रनमनोन्नमनन्यायेन सद्भावासद्भावशङ्कावर्गे प्रवृत्ते परीक्षायां साम्येन निहितमतिः सूत्रकारः पक्षपातं रुणद्धि-साम्यमेव स्थापयतीत्युत्तरार्धस्य योजना॥

॥ अथ स्मृत्यधिकरणसारः॥

(१५९) सर्ता श्रुत्यैव गीतः कपिलऋषिरसौ वासुदेवांशभूतः
ख्यातो रामायणादौ प्रणिधिनिपुण(नियत)धीर्वक्ति(वेत्ति)वेदान्ततत्त्वम्।
तस्मादस्मद्विदूरे श्रुतिशिरसि तदुक्त्यैव निष्कर्षणं स्यात्;
न स्यादेकार्थमन्वाद्यनघबहुगिरा तत्र तत्त्वार्थसिद्धेः॥ ६॥

इति स्मृत्यधिकरणम्॥ ३६॥

अत्र संगतिः पूर्वमेवोक्ता। तदर्थविचारस्तु—उक्तं ब्रह्मणो जगत्कारणत्वं चालयितुं शक्यते, न वेति। किं वेदान्तवाक्यानि ब्रह्मकारणत्वपराणि, नेति। किम् अनवकाशसाङ्ख्यस्मृत्यनुसारे

---

सिद्धान्तसमतया स्थित्संभवेऽपि शंकोद्भावने सति समाधानलाभपर्यन्तं मनागवनतिः=परमतप्राशस्त्यबुद्धिः, तदपोहने चोन्नतिः, पुनस्ततः प्रबले, तस्मिन्नधिकरण एव वा अधिकरणान्तरेण शंकान्तरे प्राप्ते पुनर्नतिः। तदा च सर्वत्र साम्याधिक्यन्यूनत्वपरीक्षणनिपुणो बादरायणः सर्वामपि शंकामविशेषेण निरस्य, साम्यमेव मत्वा तत्तत्क्षेपात् स्मृतिमूलस्य तर्कमूलस्य च बाधस्य निरासात् तत्तद्वादिनस्तत्र तत्र स्थितं पक्षपातं स्वयं रुणद्धि; सर्वस्यापि क्षेप्यत्वादुपादेयाभावात्। यद्वा परोक्तिस्वोक्तिरूपतर्कप्रतितर्कवर्गे कतरस्य सौष्ठवमिति समं निहितमतिः पक्षपातं विनैवाऽऽर्जवेन तत्त्वं दर्शयति। अथवा तत्तत्क्षेपात् तस्य तस्य उपादानत्वस्य निमित्तत्वस्य तद्द्वयस्य च कृतं क्षेपमाहत्य तुलान्यायेन सिद्धान्तन्यूनीकरणे परपक्षरक्षणे च दृष्टया तत्तत्पूर्वपक्षिणा प्रवर्तिते शंकावर्गे तत्तद्वादिनः स्थितं पक्षपातं स्वयं समनिहितमतिस्सन् रुणद्धि नमनोन्नमने अनिच्छन् निमित्तत्वमुपादानत्वञ्च तुल्यमेव पश्यन् कस्याप्यौपचारिकत्वं नेच्छतीत्यर्थः॥

चि. टी. सद्भावासद्भावशंकावर्गे=संभवन्ति, न वेति विमर्शवर्गे॥ १५८॥

६. उक्तः पादार्थः। प्रथमाधिकरणार्थमाह सर्तेति। सर्ता सांख्यस्मृतिकर्ता कपिलाख्यः ऋषिः सर्ववेददर्शी असौ तर्कपारदृश्वा आदिसिद्धः श्रुत्या=श्वेताश्वतरोपनिषदैव (5. 2.), "ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानञ्च पश्येत्" इति उत्पत्तिप्रभृति ऋषित्वेन, आदिकाले सर्वज्ञानविशिष्टतया भृतत्वेन, भगवज्जायमानकटाक्षविषयत्वेन च गीतः श्लाघितः, रामायणादौ वासुदेवस्य परवासुदेवस्य नारायणस्य अंशभूतः ख्यातः अंशत्वेन स्तुतः, "यस्येयं वसुधा कृत्स्ना वासुदेवस्य धीमतः। कापिलं रूपमास्थाय धारयत्यनिशं धराम्" (बा. 40. 2.) इति। धारयतीत्यत्र य इति कर्तुरध्याहारः। रामायणादाविति आदिशब्देन भारतभागवतादिग्रहणम्। श्रीभागवतेऽस्य भगवदवतारत्वतत्त्वोपदेशकत्वादि सुप्रसिद्धम्। सर्वमिदं विशेषणं मन्वादिसर्वेतरवैलक्षण्यप्रदर्शि। प्रणिधिनिपुणधीः। न केवलशास्त्रजन्यज्ञानसंपन्नः, किंतु योगेन साक्षात्कृततत्त्वश्च। निपुणत्वं साक्षात्कारित्वम्। नियतेत्यपि पाठः। नास्य धर्मोपदेशरूपकार्यान्तरव्यासक्ततेत्याह वक्तीति।

विरोधो वेदान्तवाक्यानां प्रधानपरत्वमापादयति, नेति । किं साङ्ख्यस्मृत्या वेदोपबृंहणम्, उत मन्वादिस्मृत्येति । किं साङ्ख्यस्मृतिर्भ्रान्तिमूला, न वेति । अत्रावश्यमेव वेदान्तानां कपिलस्मृत्यनुसारे कारणमनुक्रमेणाह–स्मर्तेति । 'ऋषिं प्रसूतं कपिलम्' इति श्वेताश्वतरश्रुत्यैवासौ कपिलऋषिर्विज्ञातार्थतत्त्वत्वेन श्रूयते । ऋषित्वं हि ज्ञानवृद्धत्वम् । अमेयोऽयं हेतुरिति । अपरोऽप्यस्ति । रामायणादावयं कपिलो वासुदेवांश इति प्रख्यातः । न हि वासुदेवस्य भ्रान्तिः संभवति । अपिचायं प्रणिधिनिपुणधीः = योगाभ्यासातिशयनिपुणधीरिति श्रुतिपुराणादिषु सर्वत्रापि श्रूयते । अयमाशयः—मनुयाज्ञवल्क्यादयः केवलकर्मिणः, अयं तु ज्ञानैकनिष्ठः। तेनैतद्वाक्येनैव वेदान्तोपबृंहणं क्रियत इति । एवमतिशययुक्तत्वादस्माकमप्रत्यक्षार्थे श्रुतिशिरसि तदुक्त्यैव निष्कर्षणं स्यादित्याह—तस्मादिति । नैवमित्याह—न स्यादिति । तत्र हेतुचतुष्टयमाह—एकार्थेति। मन्वादिवाक्यानाम् एकार्थत्वेन परस्परविरोधाभावात्, 'यद्वै किञ्च मनुरवदत् तद्भेषजम्' इति सांसारिकसकलरोगभेषज-

---

तत्त्वमेव वक्ति । न च तत्त्वं वेदान्तप्रतिपाद्यादन्यत् । अतः सांख्यशास्त्रे तदुक्तं तत्त्वमेव वेदान्ततत्त्वम् । वेत्तीति पाठान्तरम् । ननु यद्ययं वासुदेवांशभूतः तत्कटाक्षितः तेन सर्वज्ञानवत्तया भूतश्च, कथं तर्हि वासुदेवापलापी निरीश्वरवादी स्यादिति चेत्—सेश्वरवादिभिः पुराणप्रवर्तकैरपि श्लाघितस्याऽऽस्तमत्त्वमावश्यकम् । ज्ञानातिशयसंपन्नतया श्रुतत्वाच्च । पुराणेषु यद्यपि भगवत्तत्त्वोपदेशकत्वेनैव प्रसिद्धिः, अथापि तदंशे पुराणमविश्वसनीयम् । साक्षात् तदुपदिष्टार्थधारकशिष्यपरम्पराप्रोक्तमर्थं तदिष्टत्वेनागृहीत्वा कथाप्रवृत्त-तददर्शिपश्चात्तनपुराणप्रवर्तकवाक्यं कथंकारं विश्वसिमः । अन्ततस्तदुक्तेरपि कपिलातिरिक्तस्य भगवतोऽसद्भाव एव तात्पर्यम् । अत एव तस्य धराधारकत्वमप्युक्तम् ; न केवलमुपदेष्टृत्वम् । तस्मात्=तदुक्तग्रन्थसद्भवात् तदन्येषां मन्वादीनामतत्त्वज्ञत्वाच्च अस्मद्विदूरे—अबहुश्रुतात। किंकास्मादृशजनदुर्ग्रहार्थे वेदान्ते अर्थनिष्कर्षः तदुक्तिसाध्य एव स्यादिति पूर्वपक्षः ।

निरस्यति न स्यादिति । कपिलान्यूनप्रभावशाश्यसंख्यमहर्षिसूक्तिसहकारेणार्थस्य निश्चेतुं शक्यतया तत्र श्रुतिशिरसि तत्त्वार्थज्ञानस्यास्माकं प्रागेव सिद्धत्वादित्यर्थः । भगवान् बादरायणः, 'कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम्' इति प्रशंसितः । 'मुनीनामप्यहं व्यास.' इति मानितः, सर्वज्ञस्वनिर्धारितरीतिविरुद्धत्वादेव कापिलमनादेयमिति वक्तुं प्रभविष्णुरपि अल्पज्ञ-अन्यसापेक्षास्मादृशगोष्ठीनिविष्ट इव भवन् मन्वादीन् पुरस्करोति । वस्तुतः अन्येषु सत्स्वपि आत्मानमप्यव्यक्तं घटयति च । एकार्था तेषामस्मद्गृहीतार्थग्राहितया स्मृतिनिरपेक्षश्रुतिस्वरसप्रतीतो योऽर्थः तदभिन्नार्थवादिनी परस्परमेककण्ठा च या मन्वादीनाम्, अनघानाम्—कपिलेन सत्कर्मणामपि पापमिश्रत्वकीर्तनात् सात्त्विकत्यागपुरस्सरकर्मानुष्ठानराहित्याच्च अनिरस्तरजस्तमोमलतदृषिविलक्षणानाम्—'यद्वै किञ्च मनुरवदत् तत् भेषजम्' इति जगद्भेषजभूतभाषणतया, अश्लाघिततदुक्तिकः ज्ञानवत्तया परं प्रशंसितः अत एवाऽऽर्जवराहित्यादनाप्तश्च यः कपिलः तद्वत् अघरहितानां यथावद्वर्णाश्रमधर्माराधितभगवदनुग्रहभावितबुद्धियोगतया योगजन्यसाक्षात्कारविरोध्यघेनाप्यस्पृष्टानां बहूनां भूयसामृषीणां पूर्वेषां या गीः स्मृतिः तया सहायभूतया लभ्यस्य तत्त्वार्थस्य, तत्परिशीलनं विनाऽपि स्वत एव प्रथमेनाध्यायेन सिद्धेः सिद्धत्वात्, साम्प्रतं परिशीलने

त्वेन श्रुतत्वात् कपिलवत् अस्थानक्रोधादिदोषानुपहतपरमशान्तप्रणीतत्वात् बहुश्रुतत्वाच्च तद्वाक्यानुसरणमेव न्याय्यम्। तेन तद्वाक्यैरेव तत्त्वज्ञानसिद्धेः कपिलवाक्यानुसरणमन्याय्यमित्यर्थः ॥ १५९

इति स्मृत्यधिकरणम् ॥ ३६ ॥

३७ ॥ अथ योगप्रत्युक्त्यधिकरणम् ॥ २-१-२ ॥

सूत्रम्—एतेन योगः प्रत्युक्तः ॥ ३ ॥

(१६०) वेदान् पूर्वं विधाताऽलभत भगवतः, सर्वविद्यानियुक्तो
वागीशश्चैष तस्मात् तदुदितविहतौ कम्पनं वेदमूर्ध्नः।
मैवं तस्यापि वेदापहृतिमुखविपद्दर्शनात् क्लेत्रिभावात्
भ्रान्त्यादिः संभवेदि(भ्रान्तिः संभाव्यते वे?)त्यगतिकविषये पूर्ववन्निर्वहामः ॥७॥

इति योगप्रत्युक्त्यधिकरणम् ॥ ३७ ॥

अत्राधिकाशङ्कोक्त्या भाष्य एव सङ्गतिः सुव्यक्ता, "योगस्मृतावपीश्वराभ्युपगमात् मोक्षसाधनतया वेदान्तविहितयोग[रूप]स्य च [विशदं] अभिधानाद्वक्तुर्हिरण्यगर्भस्य सर्ववेदान्तप्रवर्तनाधिकृतत्वाच्च(धिकारिषु श्रेष्ठत्वाच्च) तत्स्मृत्या(त्यैव) वेदान्तोपबृंहणं न्याय्यमिति (पूर्वपक्षोत्थानम्)" इति। तदर्थविचारस्तु—ब्रह्मकारणत्ववादस्तथैवावतिष्ठते, नेति। किं वेदान्तवाक्यानि ब्रह्मकारणत्वपराणि, उतान्यपराणीति। किमीश्वराधिष्ठितं प्रधानं तत्कारणम्, उत ब्रह्मेति। किमनवकाशयोगस्मृत्या वेदोपबृंहणम्, उत पराशरादिस्मृत्येति। किं योग-

---

सर्वस्मृत्यैककण्ठ्यावगमाच्च कपिलोक्त्या निष्कर्षो न स्यात्। सर्वज्ञः प्रजापतिरपि एकशतं वत्सरान् चरितब्रह्मचर्यायेन्द्रायापि जीवतत्त्वमेवोपदिश्य परतत्त्वोपदेशाय परं समयं प्रतीक्षाञ्चक्रे। तदुपदिष्टविरोचनतुल्यानामर्वाचीनसांख्यानां शिष्यत्वं न पूर्णम्। तत् तत्त्वैकदेशोपदेशि सांख्यमप्रमाणम्। पौराणिकादृतरीति कश्चेत् कपिलः, गृह्यताम्। अन्यादृशश्चेत्, अनादरणीय एव। ईश्वरावतारत्वं तु बुद्धादावनैकान्तिकमिति ॥ श्लोके अनघेत्यनेन द्वितीयसूत्रार्थस्यापि सूचनम् ॥१५९॥ **इति स्मृत्यधिकरणम् ॥३६॥**

७. परमात्मांशभूतस्यैवोपेक्ष्यत्वे का कथा जीवस्य चतुर्मुखस्य? अतो द्वितीयाधिकरणं व्यर्थमित्यत्र, अधिकाशंकां दर्शयन् अधिकरणार्थं संगृह्णाति **वेदानिति**। **विधाता** स्रष्टा ब्रह्मा स्रष्टृत्वस्य यथावत्संपत्तये **भगवत** एव भगवता कृपया प्रहितानेव सर्वान् वेदान् **पूर्वं** सर्गारम्भे **अलभत**। "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति हि श्रुतिः। स्वाभिमतसृष्ट्यादिमुख्यकार्यसंपत्तये कृतत्वात् उपदेशोऽन्यथाभावो न भवति। सृष्ट्यारम्भे उपदेशात् प्रलोभनीयजनाभावात् तदर्थमन्यथाकरणमपि न। वेदानिति सर्ववेदग्रहणात् न गृहीतांशन्यूनताऽपीत्युच्यते। शब्दोपदेशवत् साङ्गोपाङ्गत्रयोपदेशात् अर्थज्ञानेऽपि न न्यूनतेत्याह **सर्वेति**। सर्वासु विद्यासु कर्मब्रह्मतदनुबन्धिविषयासु स्वसृष्टानेकप्रजापतिमहर्षिदेवादेरप्युपदेष्टृतया **नियुक्तः** आज्ञप्तः। प्रवचनसामर्थ्यमप्यनितरसाधारणं वश्यधर्मपत्नीभूतवाग्देवीलब्धत्वादित्याह **वागिति**। **वाचः** सरस्वतीदेव्या **एवेशः** पतिः। एवम्भूतो हि स्वसृष्टलोकहितैकदृष्टिः कथमनाप्तकृत्यं कुर्यात्। तस्मात् तदुक्तयोगशास्त्रेण **विहतेः** विरोधात्। **विहतौ** इति

स्मृतिर्भ्रान्तिमूला, नेति। किं तत्प्रणेतुर्हिरण्यगर्भस्यापि भ्रान्तिः संभवति, नेति। अत्र सर्वत्रापि फलफलिभावः स्वयमेवोन्नेयः। तदर्थविचारपरम्पराप्राप्तानामुत्तरोत्तरेषामर्थानां विपर्यये पूर्वपूर्वविपर्ययप्रदर्शनरूपत्वात् द्वयोरपि पक्षयोः फलफलिभावस्य। तेन पूर्वपक्षे सिद्धान्ते च फलफलिभावः स्वयमेवोन्नेय इति न विशेषतः प्रदर्शयामः। विषयसंशयोत्थानकारणपूर्वपक्षसिद्धान्तन्यायनिर्णयतत्तत्फलानां वक्तुं प्राप्तानामपि भाष्यदीपयोरेव सुव्यक्तत्वात् विशेषतो न वक्तव्यमस्तीति संगतितदर्थविचारावेव सर्वतो(त्र) विस्तृणीमहि। अत्र पूर्वपक्षसिद्धान्तन्यायौ विभज्य दर्शयति—वेदानिति। पूर्वस्मिन् काले भगवतो वेदान् अलभत विधातेति श्रूयते, 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इति। नायमेको हेतुः; सर्वेष्वपि विद्यास्थानेषु प्रवर्तकत्वेन नियुक्त इति द्वितीयः। एतस्य च सर्वेष्वपि लोकेषु वागीशत्वप्रसिद्धिः पुनः तृतीयः। तस्मात्=हेतुत्रयात् हिरण्यगर्भोक्ति(क)व्याघातात् वेदान्तस्य चलनमेव भवति। उक्तमिमं पूर्वपक्षं प्रतिक्षिपति–मैवमिति। तत्र हेतुद्वयमाह—तस्यापीति। हिरण्यगर्भस्यापि मधुकैटभनिमित्तवेदापहारप्रमुखविपद्दर्शनात्, क्षेत्रिभावात्=त्रिगुणात्मकप्रकृतिशरीरवत्त्वात् भ्रान्त्यादिः संभविष्यतीत्यगतिकविषये तद्वचनस्य वेदविरोधो नास्तीति कथंचिदपि परिहर्तुमशक्यत्वात् कपिलवाक्यवदप्रमाणमेवेति निर्वहामः। वेदाविरोधस्य निर्वोढुमशक्यत्वे तद्वाक्यमप्रमाणमित्येव प्रतिपद्यामह इति भावः [इति] ॥ १६० ॥

इति योगप्रत्युक्त्यधिकरणम् ॥ ३७ ॥

## ३८ ॥ अथ विलक्षणत्वाधिकरणम् ॥ २-१-३ ॥

सूत्रम्—न विलक्षणत्वादस्य तथात्वञ्च शब्दात्॥ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्॥ दृश्यते तु॥ असदिति चेन्न प्रतिषेधमात्रत्वात्॥ अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्॥ न तु दृष्टान्त-

---

प्रकाशिकापाठः। चिन्तामणाविव पदयोजनायामपि विहृतेरिति पञ्चम्यन्त एव पाठः संमत.। वेदमूर्ध्नः वेदान्तस्य कम्पनं चलनं भवेदेव। वेदान्तप्रामाण्यस्यापरित्याज्यत्वेऽपि स्वरसतस्तदर्थतया प्रथमाध्यायोपपादितस्य प्रमेयस्य पातप्रागवस्थारूपं कम्पनमिति यावत्। न तु श्लाघनम्। योगशास्त्रार्थाविरोध्यर्थपरतया वेदान्तप्रामाण्यं निर्वाह्यमिति भावः। परिहरति मैवमिति। योगशास्त्रोक्तस्यार्थस्य प्रामाणिकत्वे सुनिश्चिते हि वेदान्तपातः स्वीकर्तव्यो भवेत्। तदेव न; चतुर्मुखस्यापि भ्रान्त्यादिसंभवादित्याह मैवमिति। सृष्ट्यारम्भ एव, भगवतो गृहीतवेदधारणस्य यथावत्करणात् प्रागेव मधुकैटभाभ्यां वेदापहारः कृतः। अपात्रे विद्योपदेशात् विस्मरणेन दुःखयन् ब्रह्मा पुत्रेण नारदेन प्रतिबोधित इत्यप्याहुः। सनकादिभिः परमात्मविषये प्रश्ने कृते तदुत्तरं वक्तुमपारयन् भगवन्तं प्रार्थ्य हंसरूपेणावतीर्णेन तेनैव विद्योपदेशं निर्वर्तयामासेति च श्रीभागवते। अतो विद्याऽपि न यथावत्। यद्यपि वागीशः, अथापि साऽप्यस्मै कदाचित् कुप्येदेव। सर्वस्या अप्यस्याः विपदः कारणं तस्यापि क्षेत्रिभावः कर्मपारवश्यमूलकप्राकृतदेहप्राप्तिः। अतोऽस्मिन् भ्रमप्रमादविप्रलम्भकरणापाटवानां संभावना समस्तीति। तर्हि किं योगशास्त्रमुपेक्षणीयमेव? तथासति भक्तियोगानुष्ठानपद्धतिरात्मानं न लभेतेत्यत्राह अगतिकेति। विरुद्धांशे स्मृत्यन्तरवत् उपेक्ष्यत्वेऽपि अन्यविषये ग्राह्यत्वमेव। पूर्ववत् सांख्यशास्त्रवत् कर्मकाण्डविचारितस्मृत्यन्तरवच्च। निर्वहाम इति। वेदवाक्य-सर्वमहर्षिवाक्याविरोधेन योगशास्त्रार्थवर्णनेष्टौ सिद्धो यथावन्निर्वाहः। तदनिष्टौ तदंशाप्रामाण्यस्यैव निर्वाहः=समर्थनमिति ॥ १६० ॥ इति योगप्रत्युक्त्यधिकरणम् ॥ ३७ ॥

भावात् ॥ स्वपक्षदोषाच्च ॥ तर्काप्रतिष्ठानादपि ॥ अन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॥४-१२॥

(१६१) विश्वं त्रैगुण्यवत्त्वात् (वत् स्यात्) त्रिगुणत उदितं नासमादित्ययुक्तम् ;
सर्वाकारेण साम्यं क्वचिदपि न भवेत् ; केनचित् साम्यमिष्टम् ।
यद्या हेतुव्यवस्थोचितगुणसमता गोमयाद् वृश्चिकादौ
स्थूलत्वं याति चेन्नः प्रकृतितनुरतः सर्वचोद्योपमर्दः ॥ ८ ॥

अत्र संगतिः भाष्यकारैरेवोक्ता, 'पुनरपि स्मृतिविरोधवादी तर्कमवलम्बमानः प्रत्यवतिष्ठते' इति। इममेवार्थं श्रीविष्णुचित्तार्याः प्राहुः—'कपिलहिरण्यगर्भाद्युपदेशं परित्यज्य तदुक्तैस्तर्कैर्वेदार्थमन्यथाकर्तुं प्रत्यवतिष्ठते' इति । तदर्थविचारस्तु—उक्तं ब्रह्मणो जगत्कारणत्वं संभवति, नेति । किं चेतनाद्ब्रह्मणोऽचेतनजगदुत्पत्तिः संभवति, नेति । किं सजातीयात् कारणात् सजातीयं कार्यमुत्पद्यते, उत विजातीयम् । किं कार्यकारणयोस्सालक्षण्यानुमानमनैकान्तिकम्, न वेति । तत्र कार्यकारणयोस्सालक्षण्ये नियामकत्वेनोक्तं सांख्यवचनविषयमर्थं उप(प्रति)क्षिपति—विश्वमिति । इत्थं किलाऽऽहुः साङ्ख्याः—सुखदुःखमोहात्मकत्वात् त्रैगुण्यात्मकं विश्वं त्रिगुणादेवोदेतुं—भवितुमर्हति। नासमात्। त्रैगुण्यरहितत्वेन असमात् परमात्मन उदेतुं भवितुं नार्हतीति। पूर्वपक्षमुपन्यस्य प्रतिक्षिपति—

८. केवलस्मृतेर्बाधकत्वायोगेऽपि सत्तर्कोपस्कृतायाः तर्कपराहतवेदान्तार्थबाधकत्वं स्यादित्याशयेन तर्कविरोधप्रदर्शनेन पूर्वपक्षी प्रत्यवतिष्ठते विश्वमिति । विश्वं जगत् स्वसदृशकारणोत्पाद्यं कार्यत्वात् घटादिवदित्यनुमानम् । सदृशं च कारणं प्रधानमेव सत्त्वादिगुणत्रयवत्त्वात् ; न ब्रह्म । अतो विश्वं त्रिगुणतः प्रधानात् उदितं जातम् । नासमात्=असदृशात् ब्रह्मणो न जातम्। ब्रह्म न विश्वकारणं विलक्षणत्वात् । यत् यद्विलक्षणं, तन्न तत्कारणमिति पूर्वपक्षी । अत्र प्रत्याह इतीति । इतीदं स्मृत्यनुकूलतया तर्कोपन्यसनमयुक्तम् ॥ हेतुमाह सर्वेति । यत इति पूरणीयम् । स्वसमोत्पाद्यमित्यत्र साम्यं सर्वप्रकारेण वा, किञ्चिद्रूपेण वा । आद्यं क्वचिदपि न भवेत् ; मृत्पिण्डे कार्यभूतघटादिगतघटत्वजलाहरणसाधनत्वादेरभावादिति दृष्टान्तासिद्धिः ; प्रतियोग्यप्रसिद्ध्या साध्याप्रसिद्धिश्च । द्वितीये सिद्धसाधनम्, पदार्थत्वप्रमेयत्वादिना विश्वसाम्यस्य ब्रह्मण्यपि सत्त्वादिति । ननु सरूपमेव कारणमिति व्यवस्थाविरहे मृत्तोऽपि स्वर्णघटोत्पत्त्यापत्तिः, पटाद्यापत्तिश्च । न च स्वर्णघटं प्रति स्वर्णं कारणमिति, पटं प्रति तन्तुः कारणमिति च कार्यकारणभावकल्पनात् नैवमापत्तिरिति वाच्यम् ; तथा कार्यकारणभावकल्पन एव किं मानमिति विचार्यत्वात् । अन्वयव्यतिरेकौ मानमिति चेत्-कयोः ? तन्तुपटयोरिति चेत्, एवं विशेषरूपेण कथनेऽपि सामान्यरूपेणाप्यन्वयव्यतिरेकयोः संभवतोस्त्यागायोगात् समयोरेवान्वयव्यतिरेकाविति भ्रमः । यद्यपि सर्वसाम्यं किञ्चित्साम्यं वा न व्यवस्थापकम्, अथापि कार्ये यद्वैचयप्रत्यभिज्ञा भवति, तत् उपादानमिति नियम्यते । घटादौ मृदियमिति मृत्त्वप्रत्यभिज्ञाऽस्त्येव । मृत्त्वञ्चावयवविशेषसंनिवेशविशेष एवेति संयोगरूपगुण एव । यद्वा गुणशब्दो धर्मवाची । एवञ्च त्रिगुणे विश्वस्मिन् अचेतने निर्गुणचेतनब्रह्मप्रत्यभिज्ञा न भवति ; प्रधानग्रहणे च भवति गुणसमतेति शंकायामाह भग्नेति । हेतुव्यवस्थायाः अस्येदं कारणमिति कार्यकारणभावव्यवस्थाया उचिता गुणसमता प्रत्यभिज्ञापकाकारैक्यं

इत्ययुक्तमिति । अत्र विकल्पयति—सर्वाकारेण साम्यं कार्यकारणयोर्भवतोच्यते, किं वा केनाप्याकारेण । तत्रापि किं कार्यकारणभावनियामकाकारेण, किं वा येनकेनाप्याकारेणेति विकल्पविभागः । तत्र प्रथमविकल्पं दूषयति—सर्वेति । कार्यकारणयोः सर्वाकारेण साम्यं न भवति (साम्यं अनुचितम्) तयोः कार्यत्वेन कारणत्वेन च विभक्ताकारेण दृष्टत्वात् । येनकेनाप्याकारेणेति तृतीयं पक्षं प्रागेव प्रतिक्षिपति-इष्टमिति । 'पर्वते परमाणौ च पदार्थत्वं व्यवस्थितम्(प्रतिष्ठितम्)' इति चाहुः। येनकेनाप्याकारेण साम्यं प्रसाधनीयमेव न भवति । तस्मात् कार्यकारणभावनियामकाकारेण साम्यमिति द्वितीयः पक्षोऽवशिष्यते । स च नेत्याह—भग्नेति। हेतुव्यवस्थोचितगुणसमता = कार्यकारणभावव्यवस्थापकगोमयत्वादिगुणसाम्यं कार्यकारणभूतयोर्वृश्चिकगोमययोर्नास्त्येव । गोमये गोमयत्वसत्त्वात् वृश्चिके तदभावाच्चेत्यर्थः । गुणसमता भग्नेत्यन्वयः । तेन सूक्ष्मचिदचिच्छरीरो भगवान् स्थूल-

---

न सर्वत्र, गोमयात् वृश्चिकस्य माक्षिकादितः क्रिम्यादेश्चोत्पत्तेरिष्टत्वात् । तत्र, इदं गोमयम्, इदं माक्षिकमित्येवं प्रत्यभिज्ञाविरहात् । तदेतत् **दृश्यते तु** इति सूत्रेणोक्तम् । अत्र नोपादानं विलक्षणत्वादित्यनुमानं गोमयादावनैकान्तिकम् । प्रथमोक्तमनुमानमपि वृश्चिकादावेवमिति भावः ।

**असदिति** चेदित्यादिसर्वसूत्रार्थसारमेकेन पादेन संगृह्याऽऽह **स्थूलत्वमि**त्यादिना । एतदुक्तं भवति—अत्र विलक्षणस्यापि कारणत्वोक्तौ चेतनाचेतनभावप्रयुक्तभेदे सत्येव ब्रह्मणः कारणत्वसंपत्तये द्रव्यभेदेऽपि कारणत्वमेवोक्तं स्यात् । तथाचासत्कार्यवादः स्यादिति चेन्न, सालक्षण्यप्रतिषेधमात्ररूपत्वाद्सद्वावयस्य । द्रव्यैक्यस्यैवेष्टत्वात् । गोमयवृश्चिकयोः प्रत्यभिज्ञाविरहेऽपि द्रव्यैक्यमेव ; विषमपरिणामरूपविवर्तस्येष्टेः। अत एवाप्रत्यभिज्ञा । नन्वेवं सति ब्रह्मणि कार्यजडप्रपञ्चगतसर्वहेयवत्त्वप्रसंगः ; द्रव्यैक्यात् । न च—'ब्रह्म वा इदमग्र आसीत्' इति श्रुत्या प्रागेव स्थितस्य कारणरूपस्यैव ब्रह्मशब्दवाच्यता । तस्यैव कार्यत्वेऽपि न ब्रह्मशब्दवाच्यत्वम् । तथाच ब्रह्म हेयरहितमित्युक्तिः प्रागवस्थाभिप्रायेणैव । अतो न दोष इति वाच्यम्-मानाभावात्। सृष्टिकालिकहेयस्य तदानीमभावेऽपि, 'न कर्माविभागादिति चेन्नानादित्वात्' इत्युक्तरीत्या तत्कालस्थसृष्टिप्रयोजककर्माविद्याद्यनेकहेयसंबन्धनिबन्धनस्यासामञ्जस्यस्य दुर्वारत्वाच्च । इदमभिप्रेत्य सूत्रे **अपीतौ**विति विशिष्य प्रयोग इति ॥ नैवम् ; हेयासंबन्धे दृष्टान्तभावात् । यथा बालो युवा जात इत्यादिवशात् बाल्ययुवाद्यैक्ये जीवे सत्यपि बालत्वयुवत्वादिकं न जीवे, तस्य धर्मस्य देहनिष्ठस्य परम्परयैव जीवाश्रितत्वात् । तद्वदत्रापि स्थूलत्व-महदहंकारादिभावादेः सर्वस्य हेयस्य प्रकृतिकार्यमात्रगतत्वात् परम्परयैव जीवे तत्सत्त्वात् विशिष्टे कार्यकारणभावस्वीकारान्नानुपपत्तिः। न च-तत्र शरीरात्मभावसत्त्वात् तथात्वेऽपि इह भूतादीनां जीवानां च ब्रह्मशरीरत्वाभावात् तद्युक्तम् ; शरीरलक्षणं हि, "चेष्टेन्द्रियार्थाश्रयः" इति **गौतमो**क्तमिति वाच्यम्—अन्यादृशशरीरलक्षणानां श्रुतिषु शरीरत्वेनाभिमतजीवप्रकृत्यादावभावेन अलक्षणत्वात् नियतशेषत्वाऽऽधेयत्वनियाम्यत्वरूपनिष्कृष्टशरीरलक्षणानां सद्भावेनात्रापि विशिष्टवाचित्वसिद्धेः ॥ तर्हि तत्तद्विशिष्टत्वरूपविकारसत्त्वमायातम् ; तदपि कथं निर्विकारस्येति चेत्—हेयरूपविकारवत्त्वमेव निषेधामः, न सामान्यतः । स तु **स्वपक्षदोषो** भवतः ; जीवस्य सर्वथा निर्विकारत्वोक्तेः । तथावादिना सृष्ट्युपपादनासंभवात् । वस्तुतः तर्कमवष्टभ्यात्राधिकरणे कृतः पूर्व

चिदचिद्विशिष्टरूपेणावतिष्ठत इति सुगममेतत्। तस्मात् सर्वस्यापि चोद्यस्योपमर्द एव। सूक्ष्मस्य तस्यैव द्रव्यस्य स्थूलरूपेणावस्थानमात्रस्यैव कार्यकारणभावरूपत्वेनास्माभिरभिधानात्। न ह्यस्माभिरीश्वर एव स्वरूपेण प्रकृतिपुरुषात्मना परिणमत इत्युच्यत इति ॥ १६१ ॥

(१६२) ईक्षा तादृक् बहु स्यामिति सति पठिता तेजसोऽपाञ्च दृष्टा
सालक्षण्यं ततः स्याज्जगत इति मृदुप्रज्ञपार्श्वस्थचोद्ये।
तत्तन्मूर्तेः परस्येक्षणमिदमिति तद्वाक्यभावापलापी
सामान्येनाभिमानिव्यवहरणमिह(दं) व्याहरत् पूर्वपक्षी ॥ ९ ॥

इति विलक्षणत्वाधिकरणम् ॥ ३८ ॥

अत्र पार्श्वस्थः कश्चित् मृदुप्रज्ञो मन्यते, 'तत् तेज ऐक्षत', 'ता आप ऐक्षन्त' इति कार्ये वस्तुनि चैतन्योपलम्भात् चैतन्यं कार्ये दृश्यते(कार्ये सर्वत्रेष्यते?); कारणे पुनर्वस्तुनि, 'तदैक्षत बहु स्याम्' इति चैतन्योपलम्भः सिद्ध एव। तेन कार्यकारणयोः सालक्षण्यमिति। तदिदमाह(मनुवदति)—

---

पक्षो न युक्तः ; तस्याप्रतिष्ठानात्। अन्यस्यान्यस्य तर्कस्यानुचिन्तनेऽपि अप्रतिष्ठानस्य प्रतिष्ठानमेवेति। तथाच प्रकृतिशरीरकतया ब्रह्म सर्वदा स्वयमीशत्वादिविशिष्टं सत् स्थूलत्वादिहेयं परं परम्परया लभत इति ब्रह्मण्यसामञ्जस्यं नास्ति; विश्वमपि ब्रह्मैवेति द्रव्यैक्यमपि सुरक्षितम्। अतः सर्वं चोद्यमुपमर्दितम्। ननु एवंविशिष्टवेषेण कारणत्वे चेतनत्वाचेतनत्वादिरूपकार्यकारणवैलक्षण्यमूलकः प्रश्न एव कथमुत्थित इति चेत्—कार्यमूर्णनाभितन्तुवत् न विशिष्टम्, किंतु विशेषणमात्रमिति मत्वा पूर्वपक्षात्। सर्वत्र सिद्धान्ताज्ञानादेव हि पूर्वपक्षः। अनेनापृथक्सिद्धयोर्धर्मधर्मिणोरप्युपादानोपादेयभावः स्थापितो भवति ॥१६१॥

९. नन्वस्मिन्नधिकरणे प्रथमसूत्र एव, जगद्ब्रह्मणोर्वैलक्षण्ये किं मानमित्याशंकायां जगद्गता कारत्वाक्षमात्रत्वेऽपि शब्दैकवेद्ये ब्रह्मणि अतिशयितज्ञानशक्त्यादिकस्य तदेकगम्यत्वात् जगतोऽचेतनत्वादेः शब्दतोऽप्यवगमाच्च वैलक्षण्यमिति तथात्वञ्च शब्दादित्युक्तम्। अथ कथञ्चित् जगतोऽपि चेतनत्वमस्त्विति सालक्षण्यसंपत्तिप्रत्याशया हठात्कारे केनचित् कृते तदसंभवोऽप्यदर्शि। अथ शब्दप्रमाणतश्चेतनत्वावगमात् अचेतनत्वानुभवोऽन्यथानिर्वाह्य इति पुनश्शंकायाम्, "अभिमानिव्यपदेशस्तु" इति सूत्रं प्रवृत्तम्। एवञ्च भाष्ये अथोच्येतेत्यारभ्यैव विस्तरेणैतदवतरणं भवत्विति चेत्—भवतु, मा वा; किमत्र तेन। तत्र भाष्येऽवतरणे, 'तं पृथिव्यब्रवीत्' इत्यादिवाक्यानि समाधानसूत्रस्याभिमानिपदानुगुणानि अभिमानिदेवतामादाय निर्वाह्याण्येव दर्शितानि। परंतु तत्सूत्रव्याख्यानमध्ये, "अहमिमास्तिस्रो देवताः" इति वाक्यमपि अभिमानिदेवतावैशिष्ट्यप्रदर्शकतयोपात्तम्। तत् कथं घटते। त्रिवृत्करणानन्तरभाविनामरूपव्याकरणावसर एवाभिमानिदेवतानां सृष्ट्या त्रिवृत्करणात् प्राक् अभिमानिवैशिष्ट्यायोगात्। न च भविष्यदभिमानिदेवतासंबन्धा इत्येव देवताः इति पदस्यार्थ इति वाच्यम्—तदुक्तेः प्रयोजनाभावात्। अतः, 'सेयं देवतैक्षत' इति प्रागुक्तदेवतामेव देवता इति पदेन गृहीत्वा स्वात्मकदेवताऽपृथक्सिद्धानि इमानि भूतानीत्येवार्थो वर्णनीयः। (परमात्मापृथक्सिद्धिश्चेयं "गौणश्चेन्नात्मशब्दात्" इति सूत्रे

2011



ईक्षेति। अयमर्थः—सति कारणे बहु स्यामिति परिपठिता तादृगीक्षा, तेजसोऽपाञ्च, 'तत्तेज ऐक्षत', 'ता आप ऐक्षन्त' इति दृष्टा। तेन कार्यभूतस्य जगतः कारणभूतात्मना सह सालक्षण्यं चैतन्ययोगेन(गः) स्यादिति मृदुप्रज्ञपार्श्वस्थस्य चोद्ये सति, तत्र सम्यगुत्तरमिदं युक्तम्-तेजःप्रभृतिमूर्तैः परस्य पुरुषस्येक्षणमिदमिति। इमं भावमपलप्य पूर्वपक्षी भावान्तरेण परिजहार—'तत्तेज ऐक्षत', 'ता आप ऐक्षन्त' इत्यादिकमभिमानिव्यपदेश इति (व्यपदेशकमिति?)। [1] अयं पुनः, व्यपदेशस्तेजःप्रभृतितत्तत्त्वाभिमानिदेवताविशेषव्यवहरणमिति सामान्येन प्राह; न पुनः परमात्मव्यपदेशो वा तत्तद्देवतामात्रपरो वेति विभज्य प्राह। तेन पूर्वपक्षिव्यवहारत्वाशास्माकं दोष इति ॥ १६२ ॥

इति विलक्षणत्वाधिकरणम् ॥ ३८ ॥ 1 अयं पुनः = पूर्वपक्षी तु ॥

---

प्रागुक्तैव। तथाचेदं वाक्यमभिमानिदेवतानामप्रतिपादकं कथमत्रोपात्तम्॥ उत्तरवाक्ये तदुक्त्या चोदकप्रश्नोऽपि तदनुबन्धीत्यूह्यत इति चेत्—तर्हि पूर्वोक्तं तेजआदौ परमात्मात्मकत्वमेव समाधानं वाच्यम्; न तु अभिमानिसंबन्धोऽयम् असंभावित इत्याशंकां परिहरन् तदनुसारेणैव भाष्यतात्पर्यमाह ईक्षेति श्लोकेन। अयमर्थ.—प्रौढाभ्यां पूर्वपक्षिसिद्धान्तिभ्यां जगतोऽचेतनत्वं नैवेष्टम्। एवञ्च वैलक्षण्यवादिनं पूर्वपक्षिणं प्रति चेतनत्वेन सालक्षण्यप्रश्नोऽयं न सिद्धान्तितदेकदेशिकृतः; किंतु पार्श्वस्थमृदुप्रज्ञकिञ्चित्कृतः। कदाचिदयम्, 'अस्ति भाति प्रियं रूपम्' इति सर्वस्य ब्रह्मपरिणामत्ववादिमृदुप्रज्ञयादवप्रकाशादिपार्श्वस्थोऽपि भवेत्। तेन, तं पृथिव्यब्रवीदिति वाक्यमादाय चोद्यं कृतमिति भाष्ये प्रदर्शितत्वेऽपि, 'तत् तेज ऐक्षत', 'ता आप ऐक्षन्त' इति वाक्यमादायापि चोद्यमभिप्रेतमेव स्यात्। प्रकरणगतवाक्योपेक्षायां मानाभावात्। स तु साक्षादेव जगति चैतन्यवादी सिद्धान्तिसमाधानं परमात्मन एव तदीक्षणमित्येवंरूपं नैव स्वीकुर्यात्। तथाचायं पूर्वार्धस्यार्थः। तादृगिति पदम्, तत्सदृशी मुख्यरूपैव न तु गौणीत्यर्थकम्। या इति पदाध्याहारोऽपि नापेक्षितः। बहु स्यामित्येवंरूपा सति ब्रह्मणि परिपठिता ईक्षा तादृगेव=मुख्यरूपैव तेजसोऽपाञ्च दृष्टा, तथैव पाठात्। एवञ्च तेजआदेरपि चेतनत्वं 'तं पृथिवी' इत्यादिस्थलान्तरवाक्यत इव प्रकृतवाक्यतोऽपि सिद्धमिति कथं वैलक्षण्यशंकेति तस्य चोद्यम्। अत्र प्रतिवदन् पूर्वपक्षी प्रकृतवाक्ये, पृथिव्यब्रवीदित्यादौ च वक्ष्यं समाधानं विवक्षन् स्वयमपि तेजआदिपदं तत्तदन्तर्यामिपरमिति न वक्तुमिच्छति। अत्रैवाधिकरणे जगतः परमात्मशरीरत्वासंभवस्य शरीरलक्षणप्रदर्शनेन तेन वक्ष्यमाणत्वात्। अतस्तं सिद्धान्तिसंमतं भावमपलपन्, पृथिव्यब्रवीत् इत्यादौ स्थितमेव समाधानमत्राप्यस्तु इति मन्यते। सर्वशक्तिना प्रागपि कतिपयदेवता कल्प्यताम्, नित्यसूरिर्वाऽर्थः स्यात्। अतः सामान्येन अभिमानीत्येव प्रायुंक्त। अतः पूर्वपक्ष्यभिमतः परिहारः तद्वाक्यरूपप्रकृतसूत्रभाष्ये एवमदर्शि। भाष्यकारभावस्त्वत्र, "गौणश्चेन्नाऽऽत्मशब्दात्" इत्येव। पार्श्वस्थः स्वानुकूलवाक्यं न त्यजेदित्याशयेन तदप्युदाहृतं भाष्ये। अवतरणे तदनुक्तिरन्यानेकवाक्योक्तिश्च निराबाधं सौत्राभिमानिपदनिर्वाहायेत्यलम्। एतावत्तात्पर्यवर्णनाभावे एतच्छ्लोकपूर्वार्धोक्तस्यार्थस्य भाष्यानारूढत्वात् एतच्छ्लोकोपरि शंका स्यात्, 'किमित्येतावती कल्पना; तिस्रो देवता इति वाक्योदाहरणं

३९ ॥ अथ शिष्टापरिग्रहाधिकरणम् ॥ २-१-४ ॥

सूत्रम्—एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ १२ ॥

(१६३) संवादाद(दा)क्षपादक्षपणककणभुग्भिक्षुपक्षेष्वणूनां
मिश्रं तद्धेतुकं स्यादिति मृदुमतिभिः श्वावराहक्रमोक्तौ(क्तिः) ।
अन्योन्यव्याहतार्थस्थपुटितकुहनायुक्तिदोषापनुत्त्यै
भाति त्रय्यन्तसूर्यः प्रतिमततिमिरस्तोमकुक्षिम्भरिर्नः ॥ १० ॥

इति शिष्टापरिग्रहाधिकरणम् ॥ ३९ ॥

एवमनुपपन्नकेवलतर्काभासमूलत्वात् अप्रतिष्ठितत्वात् वेदान्तविरुद्धत्वाच्चापरिहार्यदोषं साङ्ख्यपक्षं प्रतिक्षिप्य तत्तुल्यन्यायेन कणभक्षाक्षपादादिपक्षाणामप्युक्तदोषेण त्याज्यत्वमतिदिशतीति सङ्गतिः । पूर्वमपि, 'अत एव प्राणः', 'एतेन सर्वे व्याख्याता व्याख्याताः', 'एतेन योगः प्रत्युक्तः' इत्यातिदेशिकसङ्गतिरुक्ता; अत्रापि सैवोच्यते। तदर्थविचारस्तु—उक्तं ब्रह्मणो जगत्कारणत्वं संभवति, नेति । किं वेदान्तवाक्यानि ब्रह्मणो जगत्कारणत्वपराणि, उतान्यपराणीति । किं कणभक्षाक्षपादादितर्कविरोधाः वेदान्तवाक्यानां अन्यपरत्वमापादयन्ति, नेति । किं बहुवादिसंमतपरमाणुकारणवादनिरसनेऽपि तर्काप्रतिष्ठानहेतुः प्रभवति, नेति । अत्र पूर्वपक्षोत्थानप्रकारमनूद्य तत्प्रतिक्षेप-

तु भाष्ये, देवतापदग्राह्यं किमप्यस्तु परमात्मा वा अभिमान्यन्तरं वा ; तेजःप्रभृतिभूतानामचेतनत्वं सर्वथा भवतीत्येतावन्मात्रेणानास्थया भवतु' इति ॥ अभिमानिव्यवहरणमित्यस्य अभिमानिनः पृथिव्यादिशब्देन व्यवह्रियमाणत्वमित्यर्थः ; अभिमानिव्यपदेश इत्यस्य भाष्यदर्शितार्थानुसारात् । न तु अभिमानिकर्तृकं व्यवहरणमिति । सर्वोदाहरणानन्वयात् ॥१६२॥ इति विलक्षणत्वाधिकरणम् ॥३८॥

१०. अथ शिष्टानाम्=अवशिष्टानां सांख्ययोगव्यतिरिक्तानाम् अपरिग्रहाणां वैदिकपरिग्रहरहितानामणुकारणवादरूपाणां दर्शनानां निरासः । एकद्वतीर्थकराहततर्कापेक्षया बहुसंमतस्य तर्कस्य ज्यायस्त्वात् तत्सहकृतैर्मतैर्भूयोभिर्वेदान्तार्थस्य प्रागुक्तस्य परास इति तावन्मतदर्शिनः केचित् पूर्वपक्षं प्रवर्तयन्ति । तत्रोक्तौ तन्निरासाय सूर्यो भाति दीप्यते, सांख्ययोगसंमतस्य तर्कस्येव तत्तर्काणामाभासतायाः पूर्वयुक्तित इवान्योन्यव्याघातादपि सुगमत्वेनेतो निरस्तत्वेन शिष्टापरिग्रहा अपि व्याख्याता एवेति । तदर्थसार इह संवादादिति । भिक्षुकणभुगादिपदतुल्यतया अक्षपादेति पाठ एव साधीयान्; न तु आक्षपादेति । न्यायदर्शनकृत् गौतमोऽक्षपादः । क्षपणको जिनः । वैशेषिककृत् कणभुक् कणादः । भिक्षुः बुद्धः । रुद्रमते अणुकारणवादाप्रसिद्धेः । एषां पक्षेषु अणूनामेव जगत्कारणतया संवादः संमतिः ऐककण्ठ्येनोक्तिश्च वर्तते । तस्मात् जगत् अणुहेतुकं स्यादिति । स्यादित्यस्य श्वावराहक्रमेणोक्तावित्यन्वयः । यद्वा स्यादिति हेतुना श्वावराहस्य—"शुनो दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु दीर्घो वाच्यः" इति वार्तिकात् दन्तादिष्विव षष्ठीतत्पुरुषे शुनां वराहः=श्वकुलभर्त्स्यमानवराहः ; तस्य यः क्रमः अभिभूयमानता, तस्य अक्षपादादिदर्शनाभिभूयमानेऽस्मिन् त्रय्यन्तदर्शने तावत्तर्कावलम्बिना पूर्वपक्षिणोक्तौ सत्याम् । तत्तदुक्तप्रकारस्य पूर्वपक्षिणाऽनुवादे क्रियमाणे इति यावत् । प्रतिमतानि सर्वाण्येव तिमिराणि तमांसि तेषां

प्रक्रियामप्याचष्टे—संवादादिति। प्रकृतिकारणवादः साङ्ख्ये योगे च केवलमभिधीयते। परमाणुकारणवादः पुनः कणभक्षाक्षपादक्षपणकभिक्षुकादिबहुपक्षपरिगृहीतत्वात् सर्वथाऽऽदरणीय इति पूर्वपक्षिणोऽभिप्रायः। विश्वं तद्धेतुकं स्यादिति = द्व्यणुकादिक्रमेण परमाणुहेतुकमेव विश्वं स्यादिति मृदुमतिभिः—अल्पबुद्धिभिः श्ववराहक्रमस्यानुवाद इति। श्वानो हि वराहेषु परस्परविरुद्धा अपि तदानीं परस्परविरोधं परित्यज्य निपतन्ति। एवं परवादिनोऽपि परस्परविरोधं परित्यज्य वेदान्तबाधनाय प्रवर्तन्त इति श्ववराहन्यायः। तत्प्रतिक्षेपप्रकारमाह—अन्योन्येति। अन्योन्यव्याहतार्थबहुकुहनायुक्तिदोषापनोदनाय प्रतिमततिमिरस्तोमकुक्षिम्भरिर्वेदान्तसूर्योऽस्माकं भातीत्यन्वय इति। लोके हि सार्वत्रिकोऽप्यन्धकारः सूर्योदयमात्रेण सद्यः समुन्मूल्यते। एवं वेदान्तसिद्धान्तप्रसङ्गमात्रतः परश्शतमपि परसिद्धान्ताः स्वयमेव प्रक्षीयन्त इति ॥ १६३ ॥ इति शिष्टापरिग्रहाधिकरणम् ॥ ३९ ॥

## ४० ॥ अथ भोक्त्रापत्त्यधिकरणम् ॥ २-१-५ ॥

सूत्रम्—भोक्त्रापत्तेरविभागश्चेत्, स्याल्लोकवत् ॥ १४ ॥

(१६४) एको यस्यास्ति देहः स भवति विविधानन्तदुःखैकभोक्ता
विश्वं देहः प्रभोश्चेत्, स कथमविपतेत् विश्वदुःखानुभूतिम्।
इत्थं जीवेशसीमामपलपितुमनाः कोश(क्रोश)भाजां (जा) (जं?) श्रुतीनां
सम्राड्भृत्यादिनीत्या शममिह लभतां सा(स्वा?)म्यवैषम्यदर्शी ॥ ११ ॥

इति भोक्त्रापत्त्यधिकरणम् ॥ ४० ॥

---

स्तोमस्य **कुक्षिम्भरिः** भक्षकः नः=अस्मत्प्रतिपादितार्थपरः अत्यन्तः वेदान्त एव सूर्यः **अन्योन्यं** मिथः **व्याहताः** विरुद्धाः येऽर्थाः तुच्छनतिरिक्तत्वातिरिक्तत्व-एकान्तत्वानेकान्तत्व-नित्यत्वक्षणिकत्व-शून्यत्वाशून्यत्वादयः तैः **सम्पुटिताः** निम्नोन्नततया कृताः **कुहनायुक्तयः** आभासतर्काः, ता एव **दोषा** रात्रिः तदपनोदनसमर्थतया **भाति** दीप्यते। दोषा हि तिमिरं प्रसार्य सर्वं निमीलयति। सूर्योऽयं तिमिरनिरसनमुद्दिश्य दोषापनयनं कर्तुं प्रभविष्णुः। न च तन्निरसनमस्य दुष्करम्। सहस्रकिरणेन स्वतर्ककरैः तत्तत्कूटयुक्तिगतानामर्थानां मिथो विरोधप्रदर्शने सति समनन्तरक्षण एव शुनां विशीर्य पलायमानानां क्रमस्यैव तेषु दर्शनसंभवात्। **क्रमोक्तिरिति** प्रथमान्तः **पदयोजना**पाठो न साधीयान्। **युक्तिदोषेत्यत्र दोषा** रात्रिरिति **पदयोजनार्थः** श्लाघ्यः ॥१६३॥ **इति शिष्टापरिग्रहाधिकरणम् ॥**

११. अथ भोक्त्रापत्त्यधिकरणसारः। विलक्षणयोः कार्यकारणभावे असत्कार्यवादः स्यादिति शंकायां **प्रतिषेधमात्रत्वादित्यनेन**, सालक्षण्यप्रतिषेधेऽपि द्रव्यैक्यत्यागो नेत्युक्तम्। द्रव्यैक्ये सविकारत्वादसामञ्जस्यापत्तिश्च दृष्टान्तप्रदर्शनेन परिहृता। तेन दृष्टान्तवदिह विशिष्टद्रव्यैक्यमेव सिद्धम्। तेन विशेषणगतदोषस्य न विशेष्ये प्रसक्तिरित्युक्तमासीत्। अथ तथा देहगतदोषस्य देहिन्यभावेऽपि देहित्वनिबन्धनदोषस्य दुःखभोगस्य परे देहिनि जीव इवावर्जनीयत्वमाशंक्यते। तत्रैकदुःखानुभवोऽप्यापाद्यमानः पर्याप्तो जीवतौल्यमापादयितुम्, अथापि चमत्कारातिशयविधित्सया भंग्यन्तरेण तदाह। जगति एकैकोऽपि जीव एकैकमेव देहं परिगृह्य व्यापृतो लक्ष्यते। सः एकदेह एव सन्नपि **विविधानाम्**

पूर्वपक्षाणां परस्परविरोधादिबाहुल्यादनुपपत्तिः प्रदर्शिता। एवं तर्हि सूक्ष्मचिदचिच्छरीरक-परमात्मनः स्थूलचिदचिच्छरीरकपरमात्मरूप(त्मनो)विश्व[स्य]सृष्टिरिति भवत्पक्षेऽपि बहुविरोधेन वस्त्वनुपपत्तिरित्यादि(ति) पूर्वनिरस्तानामेव वादिनामाशंकया पूर्वपक्षोत्थानमिति सङ्गतिः। तदर्थ-विचारस्तु–जीवशरीरकस्य ब्रह्मणः स्वशरीरभूतात् जीवान्निरतिशयानन्दस्वभावतया यो विभाग उक्तः, स किं संभवति नेति। शरीरित्वे ब्रह्मणः स्वशरीरभूतजीवसुखदुःखभाक्त्वं प्रसज्यते, न वेति। किं दुःखादिभाक्त्वं शरीरित्वप्रयुक्तम्, उतान्यप्रयुक्तमिति। किं, 'न ह वै सशरीरस्य सतः प्रियाप्रिययोर-पहतिरस्ति' इति श्रुतिर्दुःखोपभोगस्य शरीरप्रयुक्ततामवगमयति, नेति। किमत्र शरीरशब्दः शरीरमात्र-वचनः, उत पुण्यापुण्यशरीरपर इति। अत्र(तत्र) पूर्वपक्षवादी मन्यते—यस्यैको देहोऽस्ति, स तु

आध्यात्मिकादीनाम् **अनन्तानाम्** आन्तमनुवर्तमानानामविच्छिन्नानां दुःखानामेकभोक्ता भवति। एकश्चासौ भोक्ता च एकभोक्ता। स्वदेहस्यैव स्वेनेव पुत्रकलत्रादिभिर्बहुभिः संबन्धसत्त्वेऽपि तद्देहमूल-सर्वविधदुःखभोक्तृत्वं स्वस्यैव; न संबन्धित्वमात्रेण परेषामिति सूच्यते **एक**शब्देन। मुख्यत्वं स्वामित्वेन। तेन, "संभोगप्राप्तिरिति चेन्न वैशेष्यात्" इति सूत्रतो गतार्थत्वशंकाव्युदासः। तत्र शरीरान्तर्वर्तित्वादि संबन्धमात्रेण परमात्मनो भोक्तृत्वशंकायां देहस्वामित्वरूपवैशेष्यं प्रदर्श्य परिहारः कृतः। अत्र पूर्वाधिकरणे परमात्मनो विश्वनिरूपितात्मत्वस्थापनात् देहमेकैकं प्रति जीवस्येव परमात्मनोऽपि स्वामित्वमायातमिति तत्प्रयुक्तो भोगोऽप्यापतेदेवेति पुनश्शंकेति भावः। तत्र वैशेष्यादित्युक्तं समाधानमेव विस्तीर्यते **लोकवदि**ति राजप्रजादिदृष्टान्तमुखेन। एतदुपर्यपि शंकायां तदेव विस्तरिष्यते उभयलिङ्गाधिकरणे श्रुतिप्रमाणमुखेन। तथाच एकदेहवत्त्वेऽपि अनन्तदुःखभोक्तृत्वमविशिष्टम्। एवमपि यदि परस्य वैषम्यं विवक्षितम्, तर्हि काममुच्यताम्, जीवः कतिपयदुःखानुभावी, परः सर्वदुःखानुभावीति; न तु भोक्तृत्वतदभावरूपं वैषम्यमिति पूर्वपक्षः।

एवं पूर्वार्धेन पूर्वपक्षाकारं प्रदर्श्य **लोकवदि**त्यस्यार्थं विशदयन् लोकन्यायप्रदर्शनेन स सुखेन निवर्तनीय इत्याह **इत्थ**मिति। शास्त्रसिद्धां जीवेश्वरभेदव्यवस्थाम् **इत्थं** पूर्वार्धोक्तापादनेनापलपितुं यस्य मनः, स पूर्वपक्षी **श्रमं लभताम्**=पूर्वपक्षादुपरतो भवतु। कथम्? **सम्राड्भृत्यादिनीत्या। आदि**शब्देन अन्यप्रजानामपि ग्रहणम्। आज्ञापारवश्यस्य भृत्येष्वाधिक्यात् विशिष्यापि तन्निर्देशः। राज्ञः प्रजानाञ्च शरीरित्वेन साम्येऽपि राज्ञा दण्ड्यत्वं भृत्यादेरेव भवति, न स्वस्य; दण्डने शास्यकर्तृकशासनातिवृत्तेरेव प्रयोजकत्वात्। राज्ञश्च स्वशास्यत्वाभावात्। तथा भगवदाज्ञातिक्रमस्य दुःखभोगहेतुत्वात्, स्वविषये स्वाज्ञाविरहात् न भगवतो दुःखावकाशः। परंतु शरीरद्वारैव दुःखस्योत्पादयितव्यत्वात् आज्ञातिवृत्तिः शरीरस्वामित्वं द्वारीकृत्य दुःखं जनयति; न तु स्वामित्वमेव दुःखहेतुः। अन्यथा शासनानुवर्तिनोऽपि स्वामित्वात् दुःखापातात्। अतः स्वामित्वं साधारणम्। एतदपि सूचयितुम् **आदिपदम्**। तेन अशास्य ग्रहणम्। यथा भृत्ये, तद्भिन्ने चाशास्ये सति राजदण्ड्यत्वं भृत्यस्यैव; शास्यस्य सतः शासनातिवृत्तिमत्त्वात्। न तु शरीरस्वामिनोऽपीतरस्येति। एतावत एव पर्याप्तत्वेऽपि श्लोके **कोशभाजाश्रुतीनामिति साम्य-वैषम्यदर्शी**ति चाधिकं विवक्षितवैशद्यार्थम् उक्तमस्ति। तत्रार्थे शब्दस्वरूपे चास्ति विवादः।

विविधानन्तदुःखभाक् भवति । युष्माकं परमात्मनो विश्वं देहश्चेत्, स परमपुरुषः स्वशरीरभूतविश्वनिमित्तकं दुःखं कथमतिपतेदिति ? । तदिदमाह-एक इति । इत्थं जीवेशसीमां शरीरसम्बन्धमात्रेणापलपितुमनाः पूर्वपक्षवादी कोशभाजां ब्रह्मरुद्रादिप्रवाहपराणां श्रुतीनां सम्राड्भृत्यादिनीत्या राजभृत्यन्यायेन साम्यं वैषम्यं च दृष्ट्वा शमं लभतां=प्रशमं भजतामित्यर्थः। राजानोऽपि स्वतन्त्रा एव भुञ्जते ; राजभृत्यास्तु तत्सेवया तादृग्विधं भोगमुपभुञ्जते । तद्वत् स्वाभाविकमेव सर्वशरीरित्वादिकं

---

**कोशभाजामिति** मूलकोशेष्वनेकेषु दृष्टः पाठः **चिन्तामण्यादृतः**। **कोशभाजे**त्यपि बहुषु दृश्यते। तत् पाठान्तरं **प्रकाशिका**ऽऽदृतम् । **पदयोजनायां कोशभाजामिति** पठ्यते । तद्रीत्यैव मुद्रणे प्रवृत्तैः तया सह मुद्रिते **चिन्तामणावपि** स एव पाठो निक्षिप्तः। **कोशभाजामिति** प्रयुज्य ब्रह्मरुद्रादिप्रवाहपराणां श्रुतीनामिति प्रयुक्तं **चिन्तामणौ** । तस्य तद्विवरणत्वे **कोशभाजामित्यस्य** कथं सोऽर्थो भवेदिति पृच्छन्ति । केचित् ब्रह्मरुद्रेति पदानुरोधेन **केशभाजामिति** पाठमुल्लिख्य कश्चेशश्च केशौ ब्रह्मरुद्रौ, यथा **केशवशब्दे** इति वदन्ति । श्लोके क्लिष्टपदप्रयोगः **आदिपदं** विना प्रकृते तदुभयमात्रग्रहणञ्च न परेभ्यो रोचते । एतदपेक्षया **कोशो** विभूतिः, विभूतिप्रतिपादिकानामित्यर्थविवक्षया ब्रह्मरुद्रादिप्रवाहपराणामित्युक्तमिति युक्तम् । तेन राजभृत्यन्यायेन विभूतिविभूतिमतोरैक्यसाम्यासंभवो दर्शितो भवति. **पदयोजनायां** तु ब्रह्मरुद्रेत्यर्थस्याघटमानतामालोच्येव तदस्पृष्ट्वा **कोशभाजां** भेदघोषिणीनामिति पदमर्थश्चान्यथा कृते । एवं पाठेऽपि **श्रुतीनामित्यस्य** कुत्रान्वय इति विचार्यम्। **पदयोजनायां श्रुतीनां संबन्धिन्या सम्राड्भृत्या दिनीत्येत्युक्तम्** । श्रुत्यभिमतयेत्युक्तं भवति । अस्माभिमतस्वरूपस्यार्थस्य सुखप्राप्तये बहुकोशदृष्टः **कोशभाजे**ति पाठ एव **प्रकाशिका**यामादृतः । श्रुतीनां हृदयकोशं प्राप्तया हृद्गतया अभिमतया सम्राड्भृत्यादिनीत्येति । **अस्मदाचार्यास्तु, 'चिन्तामणि-पदयोजनयोः** जीवेशभेदबोधकस्वरूपश्रुतिविशेषणे नैर्भर्यदर्शनात् **कोशभाक्पदं सीमाविशेषणमस्तु** । तथाच **कोशभाजमिति** पाठः । मध्यगतां हृद्गतां वा श्रुत्यन्ताभिमतां जीवेशसीमामित्यर्थः' इत्याशेरते ।

**साम्येत्यादेरर्थस्तु** जीवानामीशस्य शरीरित्वादिना साम्यं शास्यत्वाशास्यत्वादिवैषम्यञ्च पश्यन् इति । अत्र वैषम्यमेव वक्तव्यम्=अथापि किञ्चिदंशसाम्यमकिञ्चित्करमिति ज्ञापनाय साम्यानुवादः । राजभृत्यविषयेऽपीदं साम्यं वैषम्यञ्च द्रष्टव्यम् । यदि तु **स्वाम्यवैषम्यदर्शी**ति पाठः स्यात्, तदा जीवेशयोः स्वामित्वस्याविशेषेऽपि तत्र कर्ममूलकत्वस्वाभाविकत्वरूपवैषम्यं पश्यन्नित्यर्थं उचितः । सिद्धान्तार्थश्च विशदितो भवेत् । एवमीश्वरे राजनि च वर्तमानं स्वाम्यं प्रजासु वर्तमानमतिवृत्त्यनुवृत्तिरूपवैषम्यञ्च पश्यन्नित्यप्यर्थः स्यात्। स्वाम्यरूपं वैषम्यमिति वा ॥ दुःखवत् हेयस्य सांसारिकस्य सुखस्यापि ग्रहणेन भाष्य इव भोक्तृत्वापादनसंभवेऽपि श्लोके दुःखमात्रग्रहणम् आपाद्यस्यात्यन्तानिष्टत्वज्ञप्तये । अथवा सुखमपि दुःखकोटौ निवेश्य एवमुक्तिः । एवं निवेशनसूचनायैव **दुःखैके**ति **एक**पदप्रयोग इति चास्तु ॥

**चि. टी. स्वशरीरभूतेत्यादि** । स्वशरीरभूते जीवे तच्छरीरेण यत् सुखं दुःखं वोत्पाद्यते तत्समानस्य तस्य तदैव ब्रह्मण्यपि तेनोत्पादनऔच्यात् जीववत् सुखदुःखभाक्त्वापत्तिरिति भावः ।

भगवतः। भगवत्प्रसादादेव लब्धाधिकाराश्चतुर्मुखादयः स्वकर्मानुरूपं भोगमुपभुञ्जते। नैतावता भगवत्साम्यसिद्धिः, वैषम्यस्य स्पष्टमेव दृष्टत्वात्। अतः कर्मैव सांसारिकभोगनिमित्तम्; न पुनः शरीरित्वम् ॥ १६४ ॥ इति भोक्त्रापत्त्यधिकरणम् ॥ ४० ॥

४१ ॥ अथ आरम्भणाधिकरणम् ॥ २ १-६ ॥

सूत्रम्—तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ भावे चोपलब्धेः ॥ सत्त्वाच्चावरस्य ॥ असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् युक्तेः शब्दान्तराच्च ॥ पटवच्च ॥ यथा च प्राणादिः ॥ १५-२० ॥

(१६५) कार्यं धर्मैर्विरुद्धैः कट(घट) इव शकटात् कारणद्रव्यतोऽन्यत्
व्यापारः कारकाणां विफल इतरथेत्यर्धवैनाशिकोक्तौ(क्तिः)।
द्रव्यैक्येऽप्यस्तु सर्वं तदभिमतदशाभेदतोऽसच्छ्रुतिश्चे-
त्यव्यक्षाल्लाघवाच्च श्रुतिकथितजगद्ब्रह्मतादात्म्यमुक्तम् ॥ १२ ॥

अत्र भगवता भाष्यकारेणैव साक्षात् संगतिरुक्ता, 'असदिति चेन्न प्रतिषेधमात्रत्वात्' इत्यादिषु कारणभूताद्ब्रह्मणः कार्यभूतस्य जगतोऽनन्यत्वमुपपादितम्। इदानीं तदेवानन्यत्वमाक्षिप्य समाधीयते' इति। अथवा पूर्वं विलक्षणत्वाधिकरणे कार्यकारणयोस्सालक्षण्यं वदतः साङ्ख्यस्य तयोर्वैलक्षण्योपपादनेन प्रतिक्षेपः कृतः। अधुना पुनः तयोर्वैलक्षण्यवत् स्वरूपभेदोऽपि स्यादिति वदतो वैशेषिकादेः कार्यकारणयोरनन्यत्वोपपादनेन निराकरणं क्रियत इति सङ्गतिः। तेन द्रव्यावस्थयोर्द्वयोरपि नित्यत्ववादिनः साङ्ख्यस्य पूर्वं निरासः, अधुना पुनर्द्वयोरपि तयोरनित्यत्ववादिनो

---

तत्सेवयेत्यादि। श्लोके पूर्वार्धे तु सुखापादिततया राजभृत्यन्यायप्रदर्शनं शासनातिवृत्तितो भृत्ये दुःखस्य, तदभावात् राजनि तदभावस्य च दृष्टत्वात् तथाऽत्रेति ज्ञापयितुम्। भाष्यानुरोधोऽपि तदैव। अतः अत्राऽऽदौ सुखभोगे किञ्चिद्वैषम्योक्तिः, शरीरित्वेऽपि सुखभोग एव वैषम्ये स्थिते दुःखतदभावनियामकमपि तत्तुल्यतया सुगममिति ज्ञापनाय ॥ १६४ ॥ इति भोक्त्रापत्त्यधिकरणम् ॥ ४० ॥

१२. आरम्भणाधिकरणसारमाह कार्यमिति। चि. टी. भाष्येऽत्र प्रपूर्वाधिकरणेन संगतिरुक्ता। तामाह अत्रेति। भाष्योक्तामेव संगतिं किञ्चित्परिष्कृत्याह अथवेति। किं सालक्षण्यवैलक्षण्यविमर्शेन, धर्मिण एव भिन्नत्वादिति तार्किकाशयः। न चैवं भिन्नत्वाविशेषात् पटस्य घटाद्यपि कारणं स्यादिति वाच्यम्; सरूपयोरेव कार्यकारणभावात्। नेदं परेष्टं सालक्षण्यम्। किंतु सारूप्यं नाम, कारणान्वये कार्यान्वयः; कारणाभावे कार्याभाव इति एकान्वयव्यतिरेकानुविधाय्यन्वयव्यतिरेकवत्त्वमिति। इतः फलितमपि संगतित्वेनाऽऽह तेनेति। द्रव्यावस्थयोः द्रव्यस्यावस्थायाश्च। तयोः द्रव्यतदवस्थयोः। नन्वेवं विलक्षणत्वाधिकरणेन सहैव चेत् संगतिः, तर्हि भोक्त्रापत्तिसूत्रं पृथगधिकरणमकृत्वा तदधिकरणगुणसूत्रतयैव किं न भावितम्, संभोगप्राप्तिरिति सूत्रस्येवास्यापि तत्संभवादिति चेत्–तथा सति 'न तु दृष्टान्तभावात्' इति सूत्रस्यैव बालयुवराजभृत्यरूपदृष्टान्तद्वयमुखेन शंकाद्वयपरिहारपरत्वसंभवेन एतत्सूत्रवैयर्थ्यापादनमपि स्यात्। अथ रुमाक्षिप्तकाष्ठन्यायेन शरीरगतधर्माणामात्मनि प्राप्तिरिति शंकायाः, जीवस्य देहितया देहसंबन्धप्रयुक्तापुरुषार्थानुभववत् परस्यापि ततः स स्यादिति शंकायाश्च विषयभेदात्, एकं सूत्रमेकार्थं प्रयुक्त-

वैशेषिकस्य निरास इति विभागः। तदर्थविचारस्तु—उक्तं ब्रह्मणो जगत्कारणत्वं संभवति, नेति। किं ब्रह्मकार्यं जगत् ब्रह्मानन्यत्, उतान्यदिति। किमवस्थान्तरापन्नं कारणमेव कार्यम्, उत कारणादन्यत् कार्यमिति। किं बुद्धिशब्दान्तरादयोऽवस्थान्तरनिबन्धनाः; उत स्वरूपान्यत्वनिबन्धना इति। किं, 'वाचारम्भणं विकारो नामधेयम्' इत्यादीनि वाक्यानि बुद्धिशब्दान्तरादीनामवस्थान्तरनिबन्धनतामवगमयन्ति, नेति। अत्रासत्कार्यवादिपक्षं तावदुपन्यस्यति—कार्यमिति। कार्यं कारणतोऽन्यत् भवितुमर्हति विरुद्धधर्माध्यस्तत्वात्; यत् यदपेक्षया विरुद्धधर्माध्यस्तम्, तत् ततोऽन्यदेव; यथा घटः(कटः)शकटादित्यसत्कार्यवादिनामुपादानोपादेययोर्भेदसाधकमनुमानम्। अत्रानुग्राहकतर्कमाह—व्यापार इति। इतरथा = उपादानोपादेययोर्भेदाभावे। कारकाणां व्यापारो निरर्थकस्स्यात्। न हि स्वार्थमेव कारक-

---

मित्येव युक्तमिति सूत्रमेव इति चेत्—तद्वदेव एकमधिकरणमेकार्थे प्रवृत्तमित्यस्यैव युक्ततया पृथगधिकरणत्वमेव सम्यक्। भाष्ये तेनाधिकरणेन संगत्युपपादनं भोक्त्रापत्त्यधिकरणस्य तदधिकरणशेषत्वभ्रमये। अन्यथा हि शरीरात्मभावस्वीकारे दुःखानुभवापत्तेस्तत्परिहारस्य च अविरोधाध्याये कथं संगतिः। अतो भोगापत्त्या आत्मत्वायोगात् विशिष्टवेषेण कारणत्वाभावात् स्वरूपत उपादानत्वस्य च निर्विकारे दुर्वचतया कारणत्वमेव नेति पूर्वपक्षपर्यवसानम्। एवं सति पृथगधिकरणत्वकल्पनं तु ईश्वरस्य भोक्तृत्वाविशेषे तत्सत्त्व एव मानाभावात् नेश्वरोमननिमित्तमुपादानञ्चेति किञ्चिद्यथा पूर्वपक्षनिगमपि भवतीति ज्ञापनाय। नन्वास्तामिदम्। अस्याऽऽरम्भणाधिकरणस्याविरोधाध्याये कथं संगतिः पूर्वपक्षिणाऽपि कारणत्वस्येश्वरे इष्टत्वादिति चेत्—निमित्तत्वमिष्टम्; न तूपादानत्वम्; नतरां सर्वोपादानत्वम्। एतद्विस्तरः, भोक्त्रापत्त्यधिकरणेन साकमप्यत्र संगतिसंभवश्चास्मदीये भाष्यार्थदर्पणे द्रष्टव्यौ। विरुद्धधर्माध्यस्तत्वादिति। तदाक्रान्तत्वादित्यर्थः। अध्यास इहाऽऽक्रमणम्।

श्लोकार्थस्तु—प्रपञ्चस्येश्वरस्य चानन्यत्वमसंभवि। प्रपञ्चस्य विशिष्टब्रह्मरूपत्वे उपादानोपादेययोर्भेदेन कार्यभेदेन ब्रह्मभेदात् अनेकब्रह्मवादप्रसंगात्। उपादानोपादेयभेदश्चानुभविकः। युक्तयश्च सन्ति—कार्यं कारणात् भिन्नम्, तद्विरुद्धधर्मवत्त्वात्, यत् यद्विरुद्धधर्मवत् तत् तद्भिन्नम्, यथा कार्यकारणभावरहितं कटशकटादि। तत्र कटत्वशकटत्वे मिथो विरुद्धे। घट इव शकटादित्यपि पाठः। अत्र विरुद्धधर्माश्च पटत्वतन्तुत्वादिभिन्नजातिमत्त्व—विलक्षणबुद्धिविषयत्व-एकशब्दावाच्यत्वरूपविलक्षणशब्दबोध्यत्व-आच्छादनसूच्यन्तःप्रवेशादिभिन्नकार्यहेतुत्व-भिन्नकालोत्पन्नत्व-भिन्नायुष्कत्व-भिन्नसंस्थानकत्व-भिन्नसंख्याकत्वादयः इति भाष्य एव विशदम्। अत्रानुकूलतर्कमाह व्यापार इति। इतरथा= विरुद्धधर्मवत्त्वेऽपि भेदास्वीकारे अनन्यत्वे पटनिर्माणाय कुविन्दतन्तुतुरीवेमादीनां कारकाणां व्याप्रियमाणतैव व्यर्था। प्रागेव पटस्थितेः। इति अर्धवैनाशिकानां=वैशेषिकनैयायिकानामुक्तौ प्रवृत्तायाम्। वैनाशिकाः सर्वव्यक्तिनाशवादिनो बौद्धाः। नाशो नाम स्वाधिकरणक्षणोत्तरक्षणे स्वाभावः। उत्तरत्वं यथायथम्। तत्र कतिपयद्रव्यनित्यत्वस्वीकारेण अन्यद्रव्यादिनाशमात्रस्वीकारात तार्किका अर्धवैनाशिकाः। तत्तर्कानुकूलतया, 'असद्वा इदमग्र आसीत्' इति श्रुतेश्चासत्कार्यपरायाः प्रदर्शनेन च जगद्ब्रह्मान्यत्व-

व्यापार इति वक्तुं युज्यते; व्याघातादिति। इमं पक्षमनूद्य प्रतिक्षेप्तुमुपक्रमते—इत्यर्धवैनाशिकोक्ता-विति। वैनाशिकाः=बौद्धाः; द्रव्यविनाशवादित्वात्। अर्धवैनाशिकास्तु वैशेषिकाः सावयव-द्रव्येष्ववयविनो विनाशं वदन्ति; न परमाणुपरममहतोः। तेनार्धवैनाशिका इत्युच्यन्ते। तत्प्रतिक्षेपप्रकारं दर्शयति—द्रव्यैक्य इति। कारणकार्यरूपयोर्द्रव्ययोरैक्ये सत्यपि विरुद्धधर्माध्यासादिकं सकलमप्यवस्थाभेदेन तालीपलाशवाटङ्कन्यायात् युज्यते। ननु मया द्रव्यभेद उक्तः, त्वया पुनरवस्थाभेदः, अत्र को विशेष इत्याशङ्क्योत्तरमाह—तदभिमतदशाभेदत इति। अयमर्थः—कारणद्रव्यभेदवादिना कारणगतावस्थाभेदोऽप्यङ्गीक्रियते, तथा द्रव्यभेदोऽपि। तथाचोभयविधाङ्गी-कारे गौरवम्। ततो वरमवस्थाभेदमात्राङ्गीकारेण लाघवपक्षानुसरणम्। तेनैवावस्थाभेदेन कृत्स्न-स्यापि विरुद्धधर्मादिदोषस्य, भेदकत्वेन भवतोपन्यस्तस्योपपन्नत्वादिति। अवस्थाभेदानङ्गीकारे द्रव्यभेदोऽपि भवतो न सिध्येदिति हृदयम्। असच्छ्रुतिश्चेति—'असदेवेदमग्र आसीत्' इति कारणावस्थायां विश्वस्यासत्त्वमुक्तम्। कार्यावस्थायां सत्त्वं च सुप्रसिद्धम्। तत् कथमुपपद्यत इति चोद्यमवशिष्यते। तच्च परिहृतमेव कार्यावस्थायाः कारणावस्थायामसत्त्वात्। अथाप्यसत्पक्षं परित्यज्य त्वत्पक्षपरिग्रहे किं नियामकमित्याशङ्क्य नियामकं हेतुत्रयमाह—अध्यक्षादित्यादिना। प्रत्यक्षं तावदेकम्—न हि तन्तुव्यतिरेकेण पटो नाम किञ्चिदुपलभ्यते, अपितु तन्तव एव पटत्वावस्था-[मा]पन्नाः पट इति नामान्तरेण व्यपदिश्यन्ते। हेत्वन्तरमाह—लाघवादिति। पटद्रव्यस्य तन्त्ववस्था-

---

पूर्वपक्षे प्राप्ते, सर्वान्यथाकरणेन जगतो ब्रह्मानन्यत्वमेव सिद्धान्तितं तदनन्यत्वमित्यादिभिः। अनुमान-मन्यथासिद्धम्। तत्र पटत्वादिजातिरूपविरुद्धधर्मप्रदर्शनमयुक्तम्। तन्तुव्यतिषंगविशेषस्यैव पटत्वरूप-त्वात्। अवयवसंस्थानविशेषरूपाकृत्यतिरिक्ताया जातेरभावात्। विलक्षणावयवसंयोगोत्पादनार्थमेव कारकव्यापाराः। अतः कारकव्यापारवैयर्थ्याभावात् अनुकूलतर्काभावादसाधकमनुमानम्। एकस्यामेव मृदि पूर्वं पिण्डत्वावस्थायाः पश्चात् घटत्वदशायाश्च स्वीकारात् तदवृत्तिधर्मवत्त्वरूपतद्विरुद्धधर्मवत्त्वरूपो हेतुरसिद्ध एव। बाधितश्च। बुद्धिशब्दकार्यकालादिभेदश्च दशांशविषयकः। न च दशा तार्किकान-भिमता; अवयवसंयोगविशेषस्यैव दशात्वात्। अतो द्रव्यैक्येऽपि तदभिमतदशाभेदमादाय सर्वनिर्वाहः। 'असद्वा इदम्' इति श्रुतिरपि कार्यावस्थायाः प्रलयकाले विरहात् अवस्थाविशिष्टवेषेणासत्त्वबोधिका। नन्वसदुक्तत्यागेन एवमुक्तौ किं विनिगमकमिति चेत्—अत्राध्यक्षमनुकूलम्। तन्तव एव पटः, इत्यनुभवात्। (भावे चोपलब्धेः।) इदं कुण्डलं हिरण्यमिति कार्यभावे ऐक्यप्रत्यभिज्ञानात्। (सत्त्वाच्चापरस्य)। इदं सर्वं पूर्वाह्णे मृत्तिकैवासीत् इति कारणकालस्थितस्य कार्यैक्यस्यानुभवाच्च। लाघवाच्च। द्रव्यनाशं विना अवस्थानाशेनैव निर्वाहे नानाद्रव्य-तत्समवेतनानागुणोत्पत्तेः, तन्नाशस्य तत्तदनुगुणनानाकार्यकारणभावस्य च कल्पने गौरवात्। एकपलसुवर्णस्य तज्जन्यभूषणस्य च भेदे भूषणकाले सुवर्णस्यापि सत्त्वेन सुवर्णगुरुत्व-तत्समभूषणगुरुत्वोभयप्रयुक्ताधिक्यस्य तोलने दर्शनापाताच्च गौरवात्। एकगुरुत्वस्यापरगुरुत्वोत्पत्तौ वा तदधीनकार्ये वा प्रतिबन्धकत्वकल्पने तदपि गौरवम्। संयोगातिरिक्तघटत्वादेः कल्पनापि गौरवम्। एकस्मिन्नेव दारुपाषाणादौ अधिकांशच्छेदनभेदनादिना प्रतिमादिनिर्माणे अवयवसंयोगोत्पादनादर्शनाच्च। प्रसिद्धे घटेऽपि स दुर्वचः। कपालद्वयसंयोजनेन

भेदस्य चाङ्गीकारे गौरवम्, अवस्थामात्राङ्गीकारे लाघवम्। गौरवपक्षं परित्यज्य लाघवपक्षानुसरणमेव न्याय्यम्। श्रुतिकथितेति तृतीयो हेतुरुच्यते। कार्यकारणभूतयोर्जगद्ब्रह्मणोस्तादात्म्यम्, 'सदेव सोम्येदमग्र आसीत्' इत्युच्यते। न हि श्रुतहानमश्रुतकल्पनं वा न्यायविदोऽनुमन्यन्ते ॥१६५

(१६६) मायोपाधि-स्वशक्तिव्यतिकरितपरब्रह्ममूलः प्रपञ्चो
येषां तेऽप्यद्वितीयश्रुतिमवितथयन्त्यत्र तत्तद्विशिष्टे।
अप्राधान्यात् तथा नः प्रकृतिपुरुषयोरन्वरात्मप्रधाने
वाक्येऽस्मिन् स्थूलसूक्ष्मान्वय इति जगतोऽनन्यभावोपपत्तिः ॥ १३ ॥

अत्र कश्चिच्चोदयति—सूक्ष्मचेतनाचेतनविशिष्टं ब्रह्मैव स्थूलचेतनाचेतनवैशिष्ट्येनावस्थान्तरं भजेदिति कार्यकारणयोरनन्यत्वं भवन्तो निर्वहन्ति; एवञ्च सति कारणावस्थायामद्वितीयश्रुतिर्व्याहन्येत; ब्रह्मविशेषणयोश्चेतनाचेतनयोः कारणावस्थायामपि विद्यमानत्वादिति। एतदनूद्य प्रतिबन्द्या निर्वोढुमुपक्रमते—मायेति। अयमत्र भावः—ये तावत् मायोपहितं ब्रह्म जगदुपादानमिति वदन्ति, ये च उपाधिव्यतिकरितम्, ये च स्वशक्तिव्यतिकरितम्, तेषामपि पक्षे मायादीनां ब्रह्मविशेषणानां कारणा-

---

तदुत्पादनस्य मृन्मये इदानीमदर्शनात्। एकमृत्पिण्डादेव चक्रमध्ये घटादेर्निर्माणात्। अतस्तादात्म्यमेव। श्रुतिकथितत्वाच्च। सदेवेदमिति आदौ सर्वजगदभेदो ब्रह्मण्युक्तः। एकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यादिति कार्यकारणतादात्म्यञ्च लोकानुभवेन सह स्थापितम्। न च – सजातीयवस्तुष्वेकज्ञाने सर्वं ज्ञातं भवतीत्येव श्रुत्यर्थः; नखनिकृन्तनेनैकेन ज्ञातेन सर्वस्य कार्ष्णायसस्य ज्ञातत्वोक्तेः; अतो मृत्पिण्डदर्शने मृत्तिकात्वेन सर्वग्रहणमेव विवक्षितम्— इति शंक्यम्। तथा सति कार्यमध्ये एकदर्शनादेव सर्वदर्शनसंभवात् कार्यकारणदशाद्वयवर्णनस्य, मृन्मयमिति मयडादिप्रयोगस्य, पिण्डेति कारणदशाकथनादेश्च व्यर्थत्वात् ॥ चतुर्थपादत एव प्रायः सर्वसूत्रव्याख्यानं कृतप्रायं द्रष्टव्यम्; चकारेण 'पटवच्च', 'यथा च प्राणादि' इति सूत्रयोरपि ग्रहणम् ॥ १६५ ॥

१३. एवं परमाणुवादिमध्ये तार्किकसंमतं कार्यस्य कारणादन्यत्वं निरस्तम्। अथाद्वैतिनां शंकां परिहरति मायेति। ते पृच्छन्ति, 'एकमेवाद्वितीयम्' इति श्रुत्या शुद्धस्यैकस्यैवाऽऽदौ स्थित्यवगमात् चिदचिद्विशिष्टं ब्रह्म कारणमिति अनेकसद्भाववाद:—अद्वितीयब्रह्मसद्भाववादो न युक्त इति। तत्रायं समाधिः। अनादौ संसारे सृष्टिप्रलयपरम्परारूपे एतद्दशाद्वयहीनशुद्धदशा प्राक् कदाचिदासीदिति नैव वक्तुं शक्यम्; 'न कर्माविभागादिति चेन्नानादित्वात्' इत्युक्त्या, मायावादिभिरपि, 'जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा। अविद्या तच्चितोर्योगः षडस्माकमनादयः' इति प्रलयेऽनेकस्वीकारात्। शुद्धब्रह्मणः सृष्टिहेतुत्वे निष्प्रपञ्चब्रह्मप्रदेशस्यैवासम्भवापत्तेः; मुक्तिदशाया एवासिद्धिप्रसंगाच्च। अद्वैतिनोऽपि त्रयः। तेषां शंकरभास्करयादवप्रकाशानां मते प्रपञ्चस्य संजातमायाव्यतिकर-उपाधिव्यतिकर-शक्तिव्यतिकरं ब्रह्मैव मूलम्; न तु मायादिरहितम्। उपाध्युपहितं ब्रह्म कारणमिति भास्करमतम्। शक्तिविशिष्टं ब्रह्मेति यादवप्रकाशस्येत्यवधेयम्। तथाच येषां मते प्रपञ्च एवं मायादिव्यतिकरितब्रह्ममूलः, ते अद्वैतिनोऽपि शुद्धस्य कारणत्वायोगात् अत्र कारणवाक्ये स्थिताम् अद्वितीयश्रुतिम् अद्वितीयपदं

वस्थायां विद्यमानत्वात् अद्वितीयश्रुतिव्याकोपस्तुल्य एव। मायादीनामप्राधान्यात् अद्वितीयश्रुतिव्याघातं यदि परिहरन्ति, तर्हि वयमपि चेतनाचेतनयोरप्राधान्यात् अद्वितीयश्रुतिव्याघातं परिहरामः। एवञ्च सति सूक्ष्मचिदचिद्विशिष्टं कारणं स्थूलचिदचिद्विशिष्टं कार्यमित्यस्मिन् पक्षे न कश्चिदपि दोषः। शब्दान्वयस्तु–येषां मायोपाधिस्वशक्तिर्व्यतिकरितपरब्रह्ममूलः प्रपञ्चः, तेऽप्यत्राद्वितीयश्रुतिं तत्तद्विशिष्टे विशेषणाप्राधान्यादवितथयन्ति। तथैवास्माकमपि अन्तरात्मप्रधाने वाक्ये प्रकृतिपुरुषयोः स्थूलसूक्ष्माकारेण विशेषणतयाऽन्वय इति कारणभूतब्रह्मापेक्षया कार्यभूतस्य जगतोऽनन्यत्वोपपत्तिरिति॥

(१६७) विश्वारम्भे विवर्तं शकलपरिणतिं शक्तिशेषस्य सृतिं

व्यक्त्युल्लासौ विसृष्टिं विकृतिर्मानयतां तत्त्वपङ्क्तौ च सृष्टिम्।

तत्तद्वाक्यैकदेश(शः?)(शैः)स्वरस इति(मिति) मुधा कल्पयन्तस्तु मुग्धाः

सर्वश्रुत्यैकरस्यप्रणयिभिरधरीचक्रिरे तत्त्वविद्भिः॥ ४॥

इत्यारम्भणाधिकरणम्॥ ४१॥

---

किंचिद्विशिष्टवस्तुपरतयैव **अवितथयन्ति** अबाधितार्थिकां कुर्वन्ति। कथं विशेषणविशेष्यभेदे सति तथात्वमिति चेत्, **अप्राधान्यात्**। विशेषणसत्त्वेऽपि तस्याप्रधानत्वात् प्रधानस्य च ब्रह्मण एकत्वात्। तथैव **नः** अस्माकमपि प्रकृतिपुरुषयोः चिदचितोः ब्रह्म प्रति अप्राधान्यात् **अस्मिन् अद्वितीयपदघटिते** वाक्ये प्रधानतया तदन्तरात्मब्रह्मबोधके **सदादिपदार्थे** अप्राधान्येन सूक्ष्मचिदचित्संबन्ध, **इदम्पदार्थे** स्थूलचिदचित्संबन्धः, विशेष्यांशस्य चाद्वितीयत्वमिति जगतो विशिष्टब्रह्मरूपत्वादनन्यत्वोपपत्ति। न चास्मन्मत एव विशेषणमनेकमिति शंक्यम्; तन्मतेऽपि, 'मायाभिः पुरुरूप ईयते' इति मायानेकत्व जडजीवेश्वरभेदप्रयोजकोपाधिस्वशक्तिभेदकर्मानेकत्वादिबहुसद्भावात्। इयान् विशेषः- अस्माभिः शरीरात्मभावस्वीकारात्, 'आत्मा वा इदम्' इत्यादौ कस्यात्मेत्याकांक्षायां चिदचितोरात्मेति पूरण सौकर्यम्। 'तेज ऐक्षत', 'आपो वा इदमग्र आसन्' इत्यादौ विशेषणवाचिपदसत्त्वेऽपि शक्त्या विशिष्टलाभः। जगतोऽपि विशिष्टत्वादनन्यत्वञ्चानायासेन। शांकरमते जडानां ब्रह्मणश्च भेदात् अनन्यत्वं न यथावत्; अनन्यत्वं नाम अन्यस्य वस्तुनोऽभाव इति क्लिष्टकल्पना। अन्यमते सद्रूपब्रह्मैक्येऽपि, 'ज्योतींषि विष्णुः', 'सर्वं स वासुदेवः' इत्यादेरनुपपत्तिः। घटशरावयोरिव कार्यभूतयोः जगदीश्वरयोर्मिथोभेदात् अभेदप्रतीतेरस्वरसत्वात्। एतच्छ्लोकार्थस्तत्त्वमुक्ताकलापेऽप्याचार्यैरेवमुक्तः—

"साविद्यं केऽपि सोपाधिकमथ कतिचित् शक्तिभिर्जुष्टमन्ये

स्वीकृत्यैकाद्वितीयश्रुतिमपि जगदुस्तद्विशिष्टैक्यनिष्ठाम्।

नित्यत्वं विश्वहेतुत्वं प्रकृतिपुरुषयोर्हेतुतां विश्वकर्तुः

तद्वैशिष्ट्यञ्च शास्त्रप्रमितमजहतां कोऽपराधोऽतिरिक्तः॥" इति॥

अपराधः=अद्वितीयपदस्यात्यन्तमुख्यार्थत्यागरूपः। **शांकरोपनिषद्भाष्ये** निमित्तभूतकारणान्तररहितमित्येवाद्वितीयशब्दार्थ उक्तः॥ १६६॥

१४. चिदचिद्विशिष्टब्रह्मपरिणामभूतं जगदिति **'परिणामात्'** इति सूत्रानुरोधिनं प्रकारं विहाय तत्तद्युक्तमन्यत्व सर्वं विरोधादुपेक्ष्यमित्याह **विश्वेति**। "रभ राभस्ये" इति धात्वर्थवर्णनात् उपक्रम

एवं स्वसिद्धान्तेन सर्वश्रुत्यनुगुणं जगदुत्पत्तिप्रकारमुक्त्वा तत्तद्वादिपरिकल्पितान् पक्षान् अनूद्य तेषामाम्नायविरुद्धत्वात् असत्पक्षत्वमाह—विश्वारम्भ इति। विवर्तं—रज्ज्वादौ सर्पभूदलनाम्बुधारादिवत् मिथ्यापरिकल्पितम्, शकलपरिणतिं = चिदचिदीश्वराकारेण अंशे ब्रह्मण्यचिदंशस्य शकलस्य परमार्थपरिणतिम्, शक्तिशेषस्य सूतिं = चिदचिदीश्वरशक्तित्रयात्मके परस्मिन् ब्रह्मणि तत्तच्छक्तिभेदस्य सृष्टिम्, पूर्वं विद्यमानस्य कूर्मावयवस्याभिव्यक्तिवत् कारणे विद्यमानस्य कार्यस्याभिव्यक्तिम्, मुकुलावस्थायामनुल्लसितस्य पुष्पस्य कालेनोल्लासवत् विश्वस्योल्लासम्, भस्त्रिकान्तर्गतद्रव्यविसर्जनवत् विसृष्टिम्, विकृतिं—सन्मात्रस्यैव ब्रह्मणः प्रपञ्चाकारेण परिणतिम्, अनियतां तत्त्वपङ्क्तौ च सृष्टिं—कदाचिदग्नेरापः, कदाचिदद्भ्योऽग्निरिति नियममन्तरेण जगत्सृष्टिं श्रुतौ तेषुतेषु वाक्यैकदेशेषु स्वरसोऽयमर्थं इति मुधा कल्पयन्तो बालप्रायाः सर्वश्रुत्यैकरस्यप्रणयिभिरधरीचक्रिरे = निरस्ता इत्यर्थः। सूक्ष्मचिदचिद्विशिष्टाद्ब्रह्मणः स्थूलचिदचिद्विशिष्टं ब्रह्मैवोत्पद्यत इतीदमेव तत्त्वम्। एतद्विरुद्धाः सर्वे सिद्धान्ता निरसनीया इत्यर्थः ॥ १६७ ॥ इत्यारम्भणाधिकरणम् ॥ ४१ ॥

---

एवाऽऽरम्भः। स च प्रयत्नः तत्पूर्वकव्यापारो वेति विश्वारम्भः विश्वसृष्टि। सृज्यमानविश्वविषये इति यावत्। अवयविद्रव्योत्पत्तिवादस्य तार्किकेष्टस्य आरम्भवाद इति प्रसिद्धतया तत्परत्वे तु विश्वारम्भ इत्यस्य, तार्किकैर्विश्वस्य विभिन्नद्रव्यतयोत्पत्तौ कथ्यमानायामित्यर्थः। युक्त्या तेषां कथने एवम्भूते श्रुत्या अन्यादृशं कथनमन्येषामिति भावः। वाचारम्भणमित्यत्र तु आरम्भणम् = आलम्भनम्। आलभ्यते = स्पृश्यते। वाचा = वाचिककायिकव्यवहारार्थं विकारः = अवस्था घटादिनामधेयञ्च मृदादिद्रव्येण स्पृश्यते इत्यर्थ.। कारणद्रव्यस्यैव कार्यावस्थावत्त्वम् आरम्भणशब्दज्ञाप्यमित्याशयेनैव सूत्रे आरम्भण शब्दस्य विशिष्य ग्रहणादेवमेवार्थं। अत आरम्भणशब्देनाऽऽरम्भवादस्यैव प्रदर्शनात् अनन्यत्वसिद्धि कथनं विपरीतमिति न शङ्क्यम्। श्लोकार्थश्चिन्तामणौ स्पष्ट एव। तत्तद्वाक्येत्यत्राभिमतानि वाक्यानि यथायथं द्रष्टव्यानि—'इन्द्रो मायाभिः पुरुरूप ईयते', 'ज्ञानस्वरूपो भगवान् यतोऽसौ ...न तु वस्तुरूपः। ततो हि शैलाब्धिधरादिभेदान् जानीहि विज्ञानविजृम्भितानि', 'भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्', 'तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम', 'अव्यक्तं पुरुषे ब्रह्मन् निष्क्रिये संप्रलीयते', 'पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि', 'देवात्मशक्तिं स्वगुणैर्निगूढाम्', 'पराऽस्य शक्तिर्विविधैव श्रूयते', 'सर्गाद्या भावशक्तयः', 'अव्यक्तात् व्यक्तयः सर्वाः प्रभवन्त्यहरागमे', 'यदा स्वपिति शान्तात्मा तदा सर्वं निमीलति', 'यथाऽग्नेः क्षुद्रा विस्फुलिङ्गाः....एवमेवास्मादात्मनः सर्वे एवाऽऽत्मानो व्युच्चरन्ति', 'तत् तेजोऽसृजत', 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः', 'अग्नेरापः', 'अद्भ्योऽग्नि' इत्येवम्। शक्तिशेषस्येति। शेषशब्दो विशेषपरः। स च प्रभेदः। यद्वा बहुव्रीहिः; शक्तिमात्रावशेषस्य ब्रह्मण इत्यर्थः। शक्तिरूपं यत् प्रलये शिष्टम् तस्येति वा। विसृष्टिं=विभक्ततया सृष्टिम्। 'वाक्यैकदेशैः स्वरसमिति' इति प्रकाशिकापाठः। तदा तृतीयान्तस्य वर्णयन्त इत्यत्रान्वय। वाक्यैकदेशः स्वरस इति विभज्यार्थवर्णनं युक्ततरम ॥ १६७ ॥

इति आरम्भणाधिकरणम् ॥

४२ ॥ अथ इतरव्यपदेशाधिकरणम् ॥ २-१-७ ॥

सूत्रम्—इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ अधिकं तु भेदनिर्देशात् ॥ अश्मादिवच्च तदनुपपत्तिः ॥ २१—२३ ॥

(१६८) उक्तेऽनन्यत्वपक्षे चिदपि परिणतिर्ब्रह्मणः स्यात् ततस्त-
ज्जीवैक्यं तत्त्वमस्याद्यवगतमहतं दुःखभिन्धुश्च जीवः ।
अभ्रान्तस्तु स्वदुःखं न सृजति न च तत् क्रीडयाऽप्यस्य(स्तु) ; मैवम्
तात्स्थ्येनानन्यतोक्तेः ; तदपि चिदचितोस्तच्छरीरत्वसिद्धेः ॥ १५ ॥

इति इतरव्यपदेशाधिकरणम् ॥ ४२ ॥

अत्र सङ्गतिः श्रीविष्णुचित्तार्यैर्व्यक्तमुक्ता—"असदिति चेत्" इत्यत्र प्रस्तुतमप्यनन्यत्वं तस्याधिकरणान्तरत्वात् तत्र न साधितम्, आरम्भणाधिकरणस्य तत्प्रयोजयत्वात्। प्रतिपादनभेदाच्च। एवमनन्यत्वे समर्थिते अनभिमतमापतितमित्याह—इतरेति" इति। तदर्थविचारस्तु—उक्तं ब्रह्मणो जगत्कारणत्वं संभवति, न वेति। किं ब्रह्मणो जगत्स्रष्टृत्वे हिताकरणादिदोषः प्रसज्यते, न वेति। किं ब्रह्मणस्तत्त्वमसीति सामानाधिकरण्यावगततादात्म्यं स्वरूपैक्यलक्षणम्, उतात्मशरीरभावलक्षणमिति।

---

१५. विलक्षणत्वाधिकरणे "न तु दृष्टान्तभावात्" इति सूत्रेण देहात्मनोरिव जगद्ब्रह्मणोर्भेद उक्तः। चेतनत्वाचेतनत्वनिबन्धनस्य तदधिकरणपूर्वपक्षस्य जीवेश्वरविषये दुर्वचतया, प्रकृतेः सालक्षण्येन कारणत्वमिति स्वीकृत्य, चितां सांख्यमते निर्विकारत्वया च जगत्पदेन तत्राचेतनमात्रप्रस्तावात् अचेतनसर्वप्रपञ्चशरीरकत्वमेव तदधिकरणे सिद्धम्। भोक्त्रापत्त्यधिकरणे च अत एवाचेतनशरीरकत्वात् जीववत् परस्य दुःखित्वशंकायां जीववैषम्यमुपपादि। अथाऽऽरम्भणाधिकरणेऽनन्यत्वोक्तौ विशिष्टवेषेणानन्यत्वमचेतनविषय एव गृह्येत; न तु चेतनविषये; तत्र सालक्षण्यात् साक्षात् द्रव्यैक्यसंभवात्। अतः, तत्त्वमस्यादिविशेषवचनाच्चाभेदमेव सिद्धान्ती मन्येतेति कृत्वा पूर्वपक्षी प्रत्यवतिष्ठते। परंतु ब्रह्मणः कारणत्वस्य जीवानां कार्यत्वस्य च प्रमाणसिद्धत्वात् सूक्ष्मचिदचिद्विशिष्टब्रह्मणः, 'तदनुप्रविश्य सच्च त्यच्चाभवत्' इति श्रुत्यनुसारेण स्थूलदेहविशिष्टजीवविशिष्टब्रह्मरूपकार्योत्पत्तेरप्येष्टव्यत्वात् जीवे भेदस्यापि वक्तव्यतया जीवब्रह्मणोः प्रथमं कार्यकारणभाव एष्टव्यः। स च साक्षादेव जीवस्य तत्परिणामत्वेनेति सिद्धान्तिना वक्तव्यम्। तथा चैवं दोष इति पूर्वपक्षी प्रत्यवतिष्ठते। न चाचेतनस्यापि ब्रह्मपरिणामतया ब्रह्मणि हेयास्पदत्वशंकाऽप्यत्रैव अभिमताऽस्तु। सूत्रे हिताकरणादीति आदिना जडगतहेयत्वस्यापि प्रसंग उच्यतामिति वाच्यम्; अश्मादिवच्चेति दृष्टान्ततया कथनात् तद्विषयविचारस्यात्राविवक्षितत्वावगतेः। एवञ्चेदमधिकरणम् अश्माद्यचेतनवत् चेतनानामपि ब्रह्मातिरिक्तद्रव्यत्वस्थापकम्। भोक्त्रापत्त्यधिकरणे जीवसाम्यं वारितम्; अत्र तु जीवैक्यं वार्यते। वस्तुतस्तु विलक्षणत्वाधिकरणे अपीत्यादिसूत्राणामेतदधिकरणार्थसारकत्वात् तत्र एतदधिकरणापेक्षां विना विशिष्टवेषेण कारणत्वासिद्ध्या जीवे साक्षात् परिणामत्वशंका युक्तैव न च वाक्यान्वयाधिकरणे अवस्थितेरिति जीवब्रह्मणोर्भेदस्योक्तत्वात् कथमैक्यशंकेति

किमात्मशरीरभावलक्षणतादात्म्य एव, 'अस्मान्मायी', 'पृथगात्मानम्' इत्यादिभेदश्रुतिसामञ्जस्यम्, उतैक्यलक्षणेऽपीति। अत्र पूर्वपक्षमुक्त्वा तत्प्रतिक्षेपमाह—उक्त इति। पूर्वाधिकरणे कार्यकारणयोरनन्यत्वमुक्तम्। अस्मिन् पक्षे चेतनस्यापि कार्यत्वात् तस्यापीश्वरानन्यत्वं वाच्यम्। स तु चेतनः संसारदुःखं सर्वतोऽप्यनुभवति। ईदृशदुःखभाक्त्वमीश्वरस्य चेतनानन्यत्वेन पूर्वं प्रतिपादितस्य कथं संभवतीति संगतिरप्यत्राभिव्यज्यते। शब्दान्वयस्तु—अनन्यत्वपक्षे भवद्भिरित्थमुक्ते सति चेतनोऽपि ब्रह्मपरिणतिः स्यात्। ततः = तस्माद्धेतोः तत्त्वमस्याद्यवगतं तज्जीवैक्यमहतं स्यादेव। तथा ऐक्यमस्तु नाम। तथापि विरोधो दृश्यते। जीवो दुःखसिन्धुरेव। अस्तु दुःखसिन्धुर्जीवः; ततः किं नश्छिन्नमित्याशङ्क्याह—अभ्रान्त इति। किमीश्वरो भ्रान्तः, उताभ्रान्तः? भ्रान्तश्चेत्, ईश्वर एव न स्यात्। अभ्रान्तश्चेत्; स पुनः जीवस्वात्मनोरैक्यं जानाति, न वा? न जानाति चेत्, सर्वज्ञो न स्यात्। जानाति चेत्, स्वात्मनो जीवैक्यं जानन् कथमिव जीवे दुःखं जनयेत्। क्रीडया दुःखं जनयतीति चेत्, तच्च न। न खलु क्रीडया स्वशिरश्छेदमनुन्मत्तः कुरुते—इति पूर्वपक्षमाशङ्क्य प्रतिक्षिपति—

---

वाच्यम्; तस्याधिकरणस्य मैत्रेयीब्राह्मणस्य जीवपरत्वाभाव एव तात्पर्यात्। अवस्थितिसूत्रेण च अंशाधिकरणार्थस्यैव स्मारणात्, अंशाधिकरणस्य चैतदधिकरणोपरिप्रवृत्ताक्षेपपरिहारकत्वात् एतदुभयतः प्राक् तत्तैतत्प्रमेयसिद्ध्यभावात्। अस्मिन्नधिकरणे चेतनाचेतनोभयगतहेयास्पदत्वाशंकासंभवेऽपि अचेतनगतहेयविषये अनाशंकनम्, तद्गतविकारस्य दुःखवत् प्रतिकूलत्वास्फूर्त्या इष्टापत्तिं सिद्धान्ती कदाचित् कुर्यादिति मत्या। सिद्धान्तिना चाचिद्विकारोऽपि ब्रह्मणि नेष्यत इत्यंश एव अश्मादिवच्चेति दृष्टान्तव्याजेन स्पष्टीक्रियते। न च भोक्त्रापत्त्यधिकरणे ब्रह्माचेतनयोर्भेदः सिद्ध इति वाच्यम्; तस्याधिकरणस्य अपीत्यादिसूत्रमूलकं प्रसक्तत्वेन अपीत्यादिसूत्रस्यैतत्पूर्वत्वाभावे तस्याप्येतत्पूर्वत्वायोगात्। अत एवाऽऽरम्भणाधिकरणे तदधिकरणेन साकं संगतिर्भाष्ये नेष्टा। विलक्षणत्वाधिकरणे वैलक्षण्योक्तावपि कार्यकारणभेदो नेष्ट इति ज्ञापनायैवाऽऽरम्भणाधिकरणं प्रवृत्तम्। तदर्थमेव शिष्टापरिग्रहाधिकरणप्रसक्ततार्किकखण्डनमित्यलम् सर्वथा जीवे शंका युज्यते। तदत्र परिणामतां जीवेऽभिमत्य पूर्वपक्षमारचयति उक्ते इति। तर्हि कथमनन्यत्वं प्रागुक्तमिति चेत्, शास्त्रदृष्ट्येति सुग्रहमेव। सुग्रहस्याप्यस्य महर्ष्यन्तरसंमतत्वज्ञापनाय मतान्तरनिरासाय च, "अवस्थितेरिति काशकृत्स्न." इत्यादिसूत्रम्। अवस्थितेरित्यत्र, मञ्चाः क्रोशन्तीत्यत्रेव सहचरणस्थानेति न्यायदर्शनोक्तरीत्या स्थानरूपसंबन्धनिबन्धन औपचारिकः प्रयोगोऽभिमत इति न मन्तव्यम्; यतः अंशाधिकरणे ऐदम्पर्येण तदपृथक्सिद्धत्वं न्यरूपि ॥ चिदपीति अपिशब्दः जडप्रपञ्चसमुच्चायकः। तस्य ब्रह्मपरिणामत्वाभावपक्षेऽपि परिणामत्वानपायात्। कार्यकारणयोरनन्यत्वं पूर्वाधिकरणे उक्तम्। तस्मिन् पक्षे चितां जगदन्तर्गतानां साक्षात् ब्रह्मपरिणामत्वमेव सिध्येदित्यर्थः। ततः=एवञ्च तज्जीवैक्यं ब्रह्मजीवैक्यं तत्त्वमसिवाक्यात् स्वरसतोऽवगतम् अहतम् अक्षतम्। न च, 'सर्वमिदं ब्रह्म' इति जडप्रपञ्चैक्यं यथा विशिष्टवेषेण, तथाऽत्रापि स्यादिति वाच्यम्—तदैक्यासंभवात् तत्र तथावर्णनेऽपि अत्राक्लेशेन तत्साक्षात्परिणामत्वमूलकैक्यस्यैवाऽऽरम्भणाधिकरणाभिमतत्वसंभवात् ॥ अस्तु कामं तथैवेति चेत्—तर्हि जीवस्य सर्वस्य दुःखसिन्धुत्वात् तदभिन्नं ब्रह्म जीवदुःखोत्पादकं स्वस्यैवाहितं करोति, हितं न करोतीति स्यात्। ननु स्वस्य

मैवमिति । तदेव विवृणोति—तात्स्थ्येनेति । अयमर्थः—न हि वयं जीवब्रह्मणोः स्वरूपैक्येनानन्यत्वं ब्रूमः; अपितु, 'अवस्थितेरिति काशकृत्स्नः' इति जीवान्तर्यामित्वेन भगवतोऽवस्थानादेव । तच्चान्तर्यामित्वेनावस्थानम् अध्यात्मशास्त्रेषु शरीरात्मभावप्रतीत्युत्पादकश्रुतिसिद्धात् शरीरात्मभावादेवेत्यर्थः ॥ १६८ ॥ इति इतरव्यपदेशाधिकरणम् ॥ ४२ ॥

## ४३ ॥ अथ उपसंहारदर्शनाधिकरणम् ॥ २-१-८ ॥

सूत्रम् – उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ देवादिवदपि लोके ॥ २४, २५ ॥

(१६९) शक्तौ कर्तृप्रकृत्योरुपकरणगणोपस्थितौ कार्यकृत्त्वम् ;
तस्मादग्रे सदेकं किमुपकरणयेदित्यसत् शक्तिभेदात् ।
क्षीरायस्कान्तलूताविदशमुनिमुखान् वीक्ष्य तोष्टव्यमस्मिन्
सङ्कल्पादेव जीवो नुदति निजवपुर्विश्वरूपस्तथेशः ॥ १६ ॥

इति उपसंहारदर्शनाधिकरणम् ॥ ४३ ॥

एवं जगद्ब्रह्मणोः कार्यकारणभूतयोः विलक्षणत्वानन्यत्वशरीरित्वादिनिबन्धनाः दोषाः परिहृताः। 'परस्य ब्रह्मणः सर्वज्ञस्य सत्यसङ्कल्पस्य स्थूलसूक्ष्मावस्थसर्वचेतनवस्तुशरीरतया सर्वप्रकारत्वेन सर्वात्मत्वं सकलेतरविलक्षणत्वञ्चाविरुद्धमिति स्थापितम् । इदानीं सर्वज्ञस्य सत्यसङ्कल्पस्य परस्य ब्रह्मणः सङ्कल्पमात्रेण विचित्रजगत्सृष्टियोगो न विरुद्ध इति स्थाप्यते' इति भाष्यकारैरेव सङ्गतिरुक्ता । तदर्थविचारस्तु–किं ब्रह्मणो जगत्कारणत्वं संभवति, नेति । किं कार्यजननसमर्थस्य कारणस्य जनकत्वं नियमेन सहकार्यन्तरापेक्षम्, उत निरपेक्षमेवेति। पूर्वत्र हिताकरणादिदोषप्रसक्तिः परिहृता; अत्र पुनः पूर्वपक्षिणाऽभिहितं तादृशं दोषान्तरमपि परिहरति—शक्ताविति । अयमर्थः—कर्ता स

---

दुःखमपि स्वयं जनयन् जीवो दृष्टः । धारकमिति कृत्वा मारकं भुंक्ते, 'पल'शकुसुमभ्रान्त्या शुकतुण्डे पतत्यलिः' इति चेत्—तत्र हितत्वभ्रान्तिः कारणम् । ब्रह्म तु सर्वज्ञमभ्रान्तं कथं स्वदुःखं सृजेत् । ननु लीलारसानुबुभूषया बालकक्रियमाणं प्रहारं पित्रादिरनुमन्यते, तथा स्वयमपि स्वदुःखं जनयेदेवेति चेन्न— दुःखस्याल्पत्वे कथञ्चिदेवं स्यात् । न हि लीलया कश्चित् स्वशिरश्छिन्द्यात्; अग्नौ वा पतेत् । अतस्तत् हिताकरणमहितकरणं च क्रीडयाऽपि नास्य भवेत् । अतो ब्रह्म न जगत्कारणम् इति चेदिति ।

परिहरति मैवमिति । भेदश्रुतिबाहुल्यात् ब्रह्मणो जीववर्गादधिकत्वात् द्रव्यैक्याभावेन परिणामत्वासंभवादिति शेषः अतोऽचिदनन्यत्वमिव चिदनन्यत्वमपि ब्रह्मणः तात्स्थ्येन जीवस्थत्वादेव । उक्तं हि, "तत्स्थत्वादनुपश्यन्ति ह्येक एवेति साधवः" इति । तदपि जीवस्थत्वमपि न जीवाधारकत्वम् । किंतु जीवशरीरकत्वमिति अधिकरणान्तरज्ञेयमेतत् । अतो विशिष्टवेषेणैवानन्यत्वमनौपचारिकम् ॥१६८॥ ॥४२॥

१६. जीवेश्वरभेदात् स्वाहितकृत्त्वं स्वस्य नेति स्थितावपि न तस्य निमित्तत्वम्, नाप्युपादानत्वम्, उपकरणसंपत्त्यभावात् । यत् निमित्तमुपादानं वा भवति, तत् उपकरणसंपत्तिमदेव तथा । न च शक्तिमात्रं सहकारि । शक्तौ सत्याम् उपकरणसमवधाने च सत्येव लोके कर्तृप्रकृत्योः निमित्तोपादानयोः कार्यकृत्त्वं=कार्यजनकत्वमस्ति ; नान्यथा । तस्मात् तयोः सर्वत्रोपकरणसापेक्षत्वात् स्वयं शक्तमपि उपकरणसापेक्षं सत् ब्रह्म अग्रे प्रलयकाले एकं वस्त्वन्तररहितं किमुपकरणयेत्=उपकरणतया कं पदार्थं

भवतु, उपादानं वा। द्वयोरपि स्वरूपशक्तौ विद्यमानायामप्यपेक्षितोपकरणसन्निधान एव कार्यकरत्वं दृष्टम्। तस्मात्, 'असदेवेदमग्र आसीत्' इत्युक्ते सर्वसंहारकाले निमित्तोपादानरूपकारणद्वयात्मा परमपुरुषः किमुपकरणयेत्—किं वा सहकारीकुर्यादिति। उक्तं पूर्वपक्षं प्रतिक्षिपति—असदिति। अत्र(तत्र) हेतुमाह—शक्तिभेदादिति। कारणानि हि लोके नियतानि। तेषां शक्तयोऽपि नियताः। शक्तिश्च स्वरूपशक्तिः सहकारिशक्तिरिति द्विप्रकारा। तथाच घटोत्पत्तावन्याः शक्तयः, पटोत्पत्तावन्याः शक्तय इति दृष्टमेतन्नापलपनीयम्। तथाचेश्वरस्यापि स्वरूपप्रकृतिपुरुषकालात्मिकाः शक्तयः कारणावस्थायामपि सन्ति। अतो न दोष इत्यर्थः। अत्र तत्तदुचितसहकारिशक्त्युपादाने बहून् दृष्टान्तानाह—क्षीरेत्यादिना। क्षीरमातञ्चनेन दधि करोति। आतञ्चनं तु शीघ्रं दधिभावार्थं रसविशेषार्थं च। अयस्कान्तः सन्निधिमात्रेणायोद्रव्यमाकर्षति। लूता लालासहिता तन्तुं तनोति। देवाः ऋषयश्च स्वाभाविकप्रभावसहिताः विचित्राणि तत्तत्कार्याणि कुर्वन्ति। एवमन्यान्यप्युदाहरणानि द्रष्टव्यानि। तान् दृष्टान्तान् वीक्ष्य भवता सन्तोष्टव्यम्। अयथायथोक्तिं परित्यज्य सुखेनावस्थातव्यमित्यर्थः। सर्वलोकप्रसिद्धं परवादिभिरप्यनतिलङ्घनीयं दृष्टान्तान्तरमाह—सङ्कल्पादिति। जीवो हि कुलालादिः संकल्पमात्रेण शरीरं नुदति; स्वशरीराधिष्ठितदण्डादिना चक्रादिकम्, यत्र यदपेक्षितम्, तत्र तत्कार्यं कर्तुमित्यर्थः। एवमीश्वरोऽपीत्याह—विश्वरूप इति। विश्वशरीरत्वादीश्वरोऽपि सङ्कल्पमात्रेण सर्वं प्रणयतीत्यर्थः॥ १६९॥ इति उपसंहारदर्शनाधिकरणम्॥ ४३॥

## ४४॥ अथ कृत्स्नप्रसक्त्यधिकरणम्॥ २-१-९॥

सूत्रम्—कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा॥ श्रुतेस्तु शब्दमूलत्वात्॥ आत्मनि चैवं विचित्राश्च हि॥ स्वपक्षदोषाच्च॥ सर्वोपेता च तद्दर्शनात्॥ विकरणत्वान्नेति चेत् तदुक्तम्॥२६-३१॥

स्वीकुर्यात्। न चादृष्टमुपकरणमस्तीति शंक्यम्—अदृष्टस्य दृष्टकारणकलापसंघटनमुखेनैव कार्ये उपयोगात्। अन्यथा दण्डचक्रजलाद्यभावेऽपि घटो जायेतेति। अत्र सौत्रक्षीरदृष्टान्तानुसारेण पूर्वपक्षे उपादानस्यापि ग्रहणम्। भाष्यमुपलक्षणम्। निरस्यति इत्यसदिति। शक्तिभेदात्। उपकरणनिरपेक्षकार्यकरणसामर्थ्यरूपाऽपि शक्तिः लोके दृश्यते। यथा क्षीरं निरपेक्षमेव क्षीरत्वं विहायावस्थान्तरं भजते। अयस्कान्तः अयस आकर्षणे निमित्तं सामीप्यमात्रात्। लूताजन्तुः तन्तूपादानं निमित्तञ्च बाह्यनिरपेक्षः। एवं देवादयः श्रुतिपुराणप्रसिद्धाः। तान् दृष्टान्तान् वीक्ष्य अस्मिन् ब्रह्मणो निमित्तोपादानत्वे तुष्टिः=तृप्तिः कार्या। तस्य संकल्पः शक्तिसंपन्नस्तत् उभयविधकारणं कुर्यात्। किं बहुचिन्तया। एकैकोऽपि जीवः घटादिकरणे देहाद्युपकरणसापेक्षोऽपि स्वस्वदेहप्रेरणे बाह्योपकरणनिरपेक्ष एव॥ तस्य तं प्रति शरीरत्वात् तथेति चेत्, ईशोऽपि विश्वरूपत्वात् सर्वशरीरकत्वात् सर्वं नुदति प्रेरयति। सूत्रे देवादिवदपीत्यत्र चतुर्थपादार्थोऽप्यभिसंहितः। तत्सूत्रार्थस्तु—उपकरणपूर्णे लोके वर्तमाना अपि देवमहर्ष्यादयः स्वस्वलोके तन्निरपेक्षं संकल्पादेव कुर्वन्ति, तथा सर्वेश्वरः प्रलयेऽपि लोकेऽपि संकल्पादेव किं न कुर्यादिति॥

चि. टी. शक्तस्य इति। श्लोके शक्तौ इत्युक्त्या शक्तिरुपादानादिनिष्ठा अर्थान्तरम्। अत्र तु विष्णुपुराणोक्तरीत्या कालादीनामपि शक्तित्वमुक्तम्। घटपटादिकारणेषु शक्तित्वमौपचारिकम्। शक्त्युपादान इति। उपकरणनिरपेक्षत्वे दृष्टान्ता इति भाष्यादिगतिः। तत्रैव तात्पर्यम्॥ १६९॥

इत्युपसंहारदर्शनाधिकरणम्॥ ४३॥

(१७०) कृत्स्नं कार्यात्मना चेत् परिणमति, परं नावशिष्येत किञ्चित् ;
यद्यंशात् , निष्कलत्वश्रुतिविहतिरिदं स्याद् विशिष्टेऽपि तस्मिन् ।
ब्रह्मोपादानतैवं न घटत इति चेन्न ; स्वपक्षेषु(ऽपि) साम्यात्
तन्मानात् तद्गृहीतौ श्रुतिमितमपि(मिति) तल्लोकवत् स्वीकुरुष्व ॥ १७ ॥

अस्तु वा कालरूपबाह्यसहकारिरहितं जगत्कारणं ब्रह्म, तथापि स्वयम्, अपि सर्वचिदचिच्छक्तियुक्तं निरवयवं परमात्मस्वरूपं कथमिव, 'बहु स्याम्' इति सङ्कल्प्यानेककार्यतयाऽवतिष्ठत इत्याशङ्क्या सङ्गतिः। तदर्थविचारस्तु–प्रागुक्तमेव जगत्कारणत्वं सम्भवति, नेति। किं ब्रह्मणो जगत्कारणत्वे (जगदाकारेण कार्यत्वे) निरवयवत्वश्रुतिर्बाध्यते, न वेति। पूर्वं सहकार्यभावेन कारणत्वसामान्यचोद्यं परिहृत्य इदानीमुपादानत्वरूपकारणत्वविशेषे चोद्यविशेषमाचक्षाणस्य परिहारः क्रियत इतीममर्थमाह—कृत्स्नमिति। अयमत्र विकल्पः-कारणभूतं ब्रह्म कृत्स्नमप्येककार्यात्मना परिणमति उतैकदेशेन? यदि कृत्स्नम्, तर्हि ब्रह्मण एककार्यात्मना परिणतस्यावशेषाभावात् कार्यान्तरात्मना परिणाम एव न स्यात्। यदि एकदेशेन परिणामः, निष्कलत्वश्रुतीनां निरवयवत्वश्रुतीनां नित्यमेव व्याकोपः स्यादिति । इदं तु दूषणं न केवलं ब्रह्मस्वरूपकारणत्वे, अपितु चेतनाचेतनविशिष्टकारणत्वेऽपि तुल्यमित्याह—इदमिति । तस्मिन्= ब्रह्मणीत्यर्थः। एवं दूषणमुक्त्वा पूर्वपक्षे तत्फलमाह—ब्रह्मेति । एवं ब्रह्मण उपादानत्वं

---

१७. यथादर्शनं तत्रतत्रोपकरणगणनात् तदियत्ता भवति । यत् तन्निरपेक्षमपि कार्यकरं दृष्टम् , तत्तु तथैव स्वीकार्यम् ; तत्र द्वितीयस्तुरयमिदं ब्रह्म भविष्यतीति उपकरणापेक्षानियमो वारितः । अथोपादानत्वमेव न भवतीति प्रकारान्तरेणाऽऽक्षेपः। ब्रह्म न सर्वोपादानम् , निरवयवत्वात् । न सावयवम् , तथा श्रुत्युक्तत्वादिति । तदाह कृत्स्नमिति । निरवयवत्वात् ब्रह्मण एकदेशो कार्यात्मना परिणाम इत्यस्य दुर्वचत्वात् कृत्स्नस्यैव ब्रह्मणः कार्यजगद्रूपेण परिणामो वक्तव्यः । तथा चेत् , सृष्टिद्वये कार्यानुपयुक्तब्रह्मांशस्थितिर्न स्यात् । मा भूदिति चेत् , कस्य ध्येयत्वम् , मोक्षादिफलप्रदत्वञ्च? अर्थांशपरिशेषणार्थमेकदेशादेव परिणमतीति यदि, तर्हि 'निष्कलम्', 'एकमेवाग्रे' इत्युक्तनिरवयवत्वश्रुतिविरोधः । अतो निरवयवत्वमेव स्वीकर्तव्यमिति नावशिष्येतेति दूषणं स्यादेव । ननु निरवयवत्वेऽपि तस्य न शुद्धस्य कारणत्वम् ; कर्मानादित्वस्य, प्रलये चिदचिद्विशिष्टत्वस्य च प्रमाणसिद्धत्वात् । तथाच तत्तद्विशिष्टांशस्य परिणतत्वेऽपि विभुनि ब्रह्मणि प्रकृत्याद्यनवच्छिन्नप्रदेशस्याप्येष्टव्यतया न सिद्धान्ते इदं दूषणमित्यत्राह इदमिति । 'नावशिष्येत किञ्चित्' इति दूषणं चिदचिद्विशिष्टब्रह्मण्यपि स्यादेवेति । निरवयवत्वादेकवस्तुवैशिष्ट्य एव सर्वस्योपक्षीणतया अन्यवस्तुवैशिष्ट्यस्याप्यसंभवे सति का कथा किञ्चित्परिशेषस्येति भावः । पूर्वपक्षं निगमयति ब्रह्मेति ।

पूर्वपक्षं परिहरति नेति । हेतुमाह स्वपक्षेष्विति श्रुतेस्तु इति सूत्रोक्तहेतोः प्रथमं निर्देशे, श्रुत्यर्थस्यैव संप्रति विचार्यमाणत्वात् कथमयं हेतुरिति शंका स्यात् । अत उत्तरसूत्राद्युपस्कृततत्सूत्रविवक्षितहेतुनिर्देश एवं कृतः । निरवयवब्रह्मणो निखिलकारणत्वं कार्यानुपक्षीणांशसद्भावश्च श्रुत्याऽवगम्यते । अयमापातार्थो न सुस्वीकर इत्याक्षिपद्भिः किं श्रुतिरेवोपेक्ष्यते, किं वा स्वाभिमतेऽर्थान्तरे श्रुतिपर्यवसानमिष्यते?

न घटत इत्यन्वयः। इत्थमाशङ्कां परिहरिष्यन् पूर्वपक्षं निराकरोति – नेति। मायाविशिष्टं ब्रह्म कारणमिति मायावादिनः। उपाधिविशिष्टमिति भास्करीयाः। शक्तिविशिष्टमिति यादवप्रकाशीयाः। तेन तेष्वपि पक्षेषु दूषणं समानमित्याह—स्वपक्षेष्विति। एवं प्रतिबन्दीमुक्त्वा तेषामभिमतः प्रतिबन्दीपरिहारोऽपि तुल्य इत्याह–तन्मानादिति। अयं किल तेषां प्रतिबन्दीपरिहारः–मायोपाधिशक्तिविशिष्टब्रह्मप्रतिपादकप्रमाणबलात् तादृशं ब्रह्मास्माभिः स्वीक्रियत इति। एवं प्रमाणाभासबलात्

उभयथाऽपि तदभिमतं किमिति विचार्यम् ब्रह्मोपेक्ष्य जगत् प्रकृत्युपादानकम्, जीवविशिष्टप्रकृत्युपादानकम्, जीवविशिष्टपरमाणूपादानकमित्येवं वक्तव्यम्। तत्र प्रकृतेः परमाणूनाञ्च निरवयवत्वमेव तत्तदिष्टम्। जीवानामपि। तत्रैककार्ये प्रकृतेरुपक्षीणतया कार्यान्तरमपि न भवेत्। प्रागेव तु अनुपक्षीणांशसद्भावः। कृत्स्नस्य एकजीववैशिष्ट्ये एव क्षीणतया जीवान्तरवैशिष्ट्यमपि न भवेत्। एवं जीववैशिष्ट्ये क्षीणत्वात् परमाण्वन्तरवैशिष्ट्यमेव न भवेत्। जीवसंयोगरूपस्य वैशिष्ट्यस्यास्वीकारे च अदृष्टवदात्मसंयोगरूपकारणाभावात् अणोश्चलनमेव न स्यात्। प्रकृतेर्जीवसंनिधानमपि न स्यात्। अथ निरवयवप्रकृतिपरमाणुरूपधर्मिग्राहक प्रमाणबलात् सर्वक्षमतयैव तत्तत्सिद्धिरिति चेत्–किं तत्तदनुमानप्रमाणापेक्षयाऽपि दुर्बला श्रुतिः, येनात्र पर मेवमाक्षेप आनीयते। अनुमानापेक्षया च श्रुतेः प्राबल्यादेव अग्निहोत्रादिकर्म–तत्स्वर्गादिहेतुत्व–अग्नीषोमीयादिहिंसाधर्मत्व मृगचर्मादिशुचित्वाद्यखिलार्थसिद्धिः। **श्रुतिमतमपीत्यपि**ना पक्षद्वयमपि ग्राह्यमिति नोच्यते किंतु त्वत्पक्ष इवात्र पक्षेऽपि बाधकान्तरं नास्तीति बुध्यस्वेति। अथ पक्षद्वयमिथोविरोधात् कतरो ग्राह्य इति चेत्–सांख्यतार्किकविरोधात् तत्र कतरग्रहणम्॥ तदपि विचार्यमिति चेत्—प्रबलेन दुर्बलबाध.। तर्काणामप्रतिष्ठितत्वात् शब्द एव प्रबल:। अतः स्वरसार्थशब्दमूलत्वादस्मत्पक्ष एव ग्राह्य इति। **लोकवदि**त्यस्यायमर्थः–'आत्मनि चैवं विचित्राश्च हि" इति सूत्रोक्तरीत्या सर्वैरपि तीर्थकरैः आत्मनामचेतनवैलक्षण्येन चेतनत्वं सुखादिभाक्त्वं देहेन्द्रियमनःप्राणाद्यनेकवस्तुसंयुक्तत्वञ्च स्वीकृतम्। एवमनुमानप्रमाणसिद्धांशस्वीकारवत् प्रत्यक्षसिद्धेषु अवनिसलिलदहनपवनादिष्वत्यन्तविलक्षणकाठिन्य–शैत्य–औष्ण्य–सदागतित्वादयः स्वीकृताः। तत्तच्छक्तिमत्तया तत्तत्सिद्धिवत् एवम्भूततयैवैतद्ब्रह्मसिद्धिः। वस्तुतः अनुमानस्य लोकदृष्टरीतिभंगेन विलक्षणवस्तुसाधकत्वं न भवति। शब्दस्तु **लोकवत्**=प्रत्यक्षवत् बोधयेत्। एवं तार्किकैः पृथिवीत्वादिर्जातिरेकैका निरवयवा सर्वपृथिव्यादिवृत्तिः अंशाभावात् एकैकत्र पूर्णजातिमत्ताव्यवहारहेतुः विभ्वी तथापि पार्थिवद्रव्यद्वयमध्यगतजलाद्यसंबन्धिनी च संमता। जातेरावश्यकत्वे गत्यभावात् तथैव स्वीकार्यम्। सर्वैरपि संयोगो द्विष्ठोऽपि अंशं विनैव तत्तत्संबन्धी स्वीकृतः। एवं द्रष्टव्यम्॥

**चि. टी. मायाविशिष्ट**मित्यादि। अत्रेदं वक्तव्यम्—नानाधिकरणे शांकरादीनां पूर्वपक्षित्वम्; तेषां वेदान्तित्वात्। सांख्यतार्किकादिशंकापरिहारार्थत्वात् पादस्य। अतः सांख्यादिपक्षेष्वेव साम्यं वक्तव्यम्। अत एवोपरि श्रुतिमतमिदं स्वीकुरु इति तेषां मानान्तरमितत्वमुच्यते। न हि शांकरादयः श्रुतिमुपेक्ष्य मानान्तरेणैव स्वपक्षं साधयन्ति। तस्मात्, **स्याद्विशिष्टेऽपि तस्मिन् इति** पूर्वपक्षभागे, चिदचिद्विशिष्टे इत्यनुक्तत्वात् सर्ववेदान्तिपक्षेऽप्येष दोष इति बाह्यो वदतीति ज्ञापनाय

स्वत्पक्षस्वीकारे साक्षात्प्रमाणैः श्रुतिशतैः प्रतिपन्नमस्मत्पक्षपरिगृहीतं चेतनाचेतनविशिष्टं ब्रह्म सर्वलोकानुकूलं स्वीकुरुष्वेति। पक्षान्तराणि प्रत्यक्षप्रमाणविरुद्धत्वात् स्वीकर्तुमयोग्यानि, अस्मत्पक्षस्तु लोकवेदाविरुद्धत्वात् स्वीकर्तुं योग्य इति भावः ॥ १७० ॥

(१७१) संयोगाख्यं हि कार्यं विभुतदितरयोः स्यादणूनां मिथो वा
कात्स्न्र्येनांशेन वा तद् विहतमिति वदन् शून्यवादे निमज्जेत् ।
साङ्ख्योऽपि प्राह विभ्वीं प्रकृतिमिति कथं न्यूनसृष्टिस्ततः स्यात्
मायादिष्वेवमूह्यं निगमनिगदिता त्वक्षता पद्धतिर्नः ॥ १८ ॥

इति कृत्स्नप्रसक्त्यधिकरणम् ॥ ४४ ॥

एवं न्यायवादिनोऽपि शरीरात्मभावप्रतिक्षेपकाः परिहर्तव्याः; आकाशावयविपरमाणुसम्बन्धादीनां, तेषामपि पक्षे, सम्बन्धविषये कृत्स्नैकदेशविकल्पानुपपत्तेरपि(स्तेर)भावात्। स्वपक्षोक्तं दूषणमेकदेशेन परिहृत्य विस्तरेण परिहरिष्यन् माध्यमिकोक्तकृत्स्नैकदेशविकल्पप्रक्रियां तावदनुवदति-संयोगेति। परमाणुद्वयादिसंयोगात् द्व्यणुकादिसृष्टिरिति वैशेषिकादीनां प्रक्रिया। तत्र च जगत्कर्तेश्वरः स्वयं विभुरेव परमाणुभिः संयुज्य तान् अधितिष्ठतीति च ते प्राहुः। तत्र माध्यमिकः प्रत्यवतिष्ठते—परमाणुद्वयं कात्स्न्र्येन वाऽन्योन्यं संयुज्यते, उतैकदेशेन। कात्स्न्र्येन चेत्—परमाण्वोरन्योन्यं स्वरूपे निमज्जनादधिकपरिमाणद्व्यणुकादिकार्यं नारभ्येत। एकदेशेन चेत्, सांशत्वप्रसङ्गः। एवमणुः परमाणुर्विभुश्चेश्वरः कात्स्न्र्येन संयुज्यते चेत्, तर्हि तयोस्तुल्यपरिमाणत्वप्रसङ्गः। तथाचाणुः परमाणुरीश्वरवद्विभुः स्यात्. विभुरीश्वरः परमाणुवदणुरेव स्यात्। एकदेशेन संयोगे द्वयोरपीश्वरपरमाण्वोस्सावयवत्वप्रसङ्गेन निरवयवद्रव्यसद्भाव एव लोलुप्येत(प्यते)। तथा च निरवयवाभावात् सावयवकथनमपि साहसमेव स्यात्; निरवयवरूपपरमाण्वभावे तदवयवाश्रितत्वेन सतां द्व्यणुकादीनामपि स्वकव्यत्वादिति। इत्थं माध्यमिकेन स्वपक्षदूषणायोक्तमर्थं कणभक्षादि-

---

वाक्यमिदं तत्रैव मायेत्यारभ्य समानमित्यन्तं स्थितम्; पश्चात् वाक्यभ्रंशादेवमानुपूर्वी प्राप्तेति तर्क्यते। उत्तरश्लोकस्थितं वा। अथवा, 'तर्हि बाह्यानामस्माकं पक्षं भवत्पक्षञ्च विहाय एतद्दोषात्यन्तविदूरं शांकरादिमतमिष्यतामिति कस्यचिच्छंकायां तन्निषेधार्थमपीदं मूलमुपयुज्यते यथोत्तरश्लोक इत्याशयेन एवमुक्तमिति मन्तव्यम्। सर्वथा बाह्यपक्षनिरसनप्रधानतया श्लोकव्याख्यानमावश्यकम् ॥ १७० ॥

१८. स्वपक्षेषु साम्यादित्येतत् विशदयति संयोगेति। विभुतदितरयोरिति। विभुद्वयसंयोगो नास्ति; क्रियारूपकारणस्य दुर्वचत्वादिति केचित्। मा भूत् क्रिया; अजस्तु संयोगः स्यादेवेत्यन्ये तार्किका अपि। तथापि तत्र अंशत इति पक्षस्यानवकाशात् तदुपेक्षा। विभुपरिच्छिन्नयोः संयोगो यदि विभुः, न परिच्छिन्ने मायात्, यदि तत्र माति, विभौ स व्यापी न भवेत्। यद्यव्यापी, तर्हि संयोगतदभावावेकत्र स्याताम्। एतत् कथम्? न चांशभेदेन; निरंशत्वात् विभोः। अतः संयोगो जायमानः स्वयमेवौपाधिकमंशं वस्तुनि कल्पयतीति स्वीकर्तव्यम्। एवमेव निरवयवानेकाणुसंयोगा एकस्मिन्नणौ भवितुमर्हन्तीति वक्तव्यम्। प्रत्यक्षत्रसरेण्वतिरिक्तपरमाणुस्वीकाराभावपक्षे त्रसरेणूनामेव निरवयवत्वात् निरवयवेषु संयोगानामव्याप्यवृत्तित्वं प्रत्यक्षप्रमाणसिद्धमित्यप्युक्त्वा तन्न्यायेन सर्वत्र

पक्षनिष्ठो यदि वेदान्तिनं प्रति वदेत्, तदा स्वयमपि माध्यमिकपक्षे निमज्जेत्।
अयमत्र शब्दान्वयः-संयोग।रब्धं कार्यं विभुतदितरयोः स्यात्-ईश्वरपरमाण्वोर्वा स्यात्, अणूनां मिथो वा=परमाणूनामन्योन्यं च स्यात्, तत्रापि कात्स्न्र्येन वा स्यादंशेन वा स्यादिति विकल्पप्रकाराः। तत् विहतमेवेत्यस्मात् वेदान्तवादिनः प्रति वदन् परपक्षवादी स्वयं माध्यमिकवत् शून्यवादे निमज्जेत्।

अस्तु परमाणुकारणवादिनो वैशेषिकादेरिदं दूषणम्, तेन साङ्ख्यस्य किं दूषणमित्याशङ्क्याह साङ्ख्योऽपीति। इत्थं किल—साङ्ख्यानां प्रक्रिया—प्रकृतिर्विश्वं सृजति। सा च विभ्वी। सा पुनः सत्त्वरजस्तमसां सङ्घातात्मिकेति। तथाच कार्यं कुर्वती स्वात्मभूतैः(त)सत्त्वरजस्तमोभिः परस्परं संयुज्य करोति वा, किमेकैकश्येन। यदि संयुज्य, तदा कात्स्न्र्येन वा सत्त्वरजस्तमसां संयोगः, उतैकदेशेन। यदि कात्स्न्र्येन, तर्ह्येकमेव कार्यं प्रति सर्वेषां सत्त्वरजस्तमसां विनियुक्तत्वात् कार्यान्तरारम्भं प्रति अवशेषो न स्यात्। यद्येकदेशेन सम्बन्धः, तदा तेषां सत्त्वरजस्तमसां सांशत्वप्रसङ्गः। तथा च विभुत्वकल्पनाव्याघातः। यद्येकैकश्येन कारणम्, तदा कार्यस्य त्रिगुणात्मकत्वं न स्यात्—किञ्चित् सत्त्वेन सृज्यते, इतरत् रजसा, तमसा चान्यदिति। एवमादिदूषणकलापोपहता साङ्ख्योक्तप्रक्रियेति। कथं न्यूनसृष्टिस्ततः स्यादिति अस्यायमर्थः—विभ्वीं प्रकृतिमङ्गीकुर्वतः साङ्ख्यस्य कथं न्यूनसृष्टिः स्यात्। उक्तप्रकारेण दुष्टत्वादिति(त्यर्थः)। एवं साङ्ख्यादिपक्षप्रतिक्षेपप्रक्रियया मायोपाधिशक्त्युपहितब्रह्मपक्षेष्वपि दूषणमूह्यम्। अस्तु तुल्यत्वमस्मत्पक्षाणां त्वत्पक्षस्य च, अथापि त्वत्पक्षस्य परिग्रहे को विशेष इत्याशङ्क्याह—निगमनिगदितेति। अयमत्र विशेषः—'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः' इत्यस्मत्पक्षस्य श्रुतिशतनिगदितत्वात् तद्दूषणप्रलापो धर्मिग्राहकप्रमाणबाधितः। अस्मत्पक्षस्तु श्रुत्यानुकूल्यादवतिष्ठत एवेति। तदिदमाह—अक्षता पद्धतिर्न इति॥ १७१॥ इति कृत्स्नप्रसक्त्यधिकरणम्॥ ४४॥

---

संयोगस्याव्याप्यवृत्तिता यथापेक्षं सुवचा। यद्येवं नेष्यते, शून्यवाद एव स्यात्। तत्रैवं विकल्पैव सर्वमतक्षेपात्। न च शून्यवाद एव स्यादिति शंक्यम्—सर्वस्याप्रामाणिकत्वे कृत्स्नैकदेशविकल्प-तत्तद्दूषकयुक्ति-तद्व्याप्त्यादीनामप्यसिद्धतया दूषणस्यैवासंभवात्। तदर्थं लोके किञ्चिदंशस्वीकारे यन्मानं यत् यथा दर्शयति, तत् तथा स्वीकार्यमिति क्व शून्यवादस्यावसरः ?

अथ कार्यानुपक्षीणब्रह्मांशसद्भावमपि परमतरीत्या दर्शयति **सांख्योऽपीति**। प्रकृतिं **विभ्वीं** परममहतीम्, **इतिं**=परिमितमहदादिकार्योपादानत्वेन तदनवच्छिन्नांशवत्त्वेन निरवयवत्वेन च प्राह। कथमियं न्यूनपरिमाणवस्तुसृष्टिः। न च सत्त्वरजस्तमस्समुदायः प्रकृतिरिति तत्संयोगवैषम्यानुगुणा सृष्टिरिति वाच्यम्; तेषां मिथस्संयोग एव कथम्, एकसंयोगोपक्षीणस्यान्येन संयोगः कथम्, एकांशसंयोगोऽन्यांशसंयोगश्च कथम्। साम्यवैषम्यादि च कथम्, किंरूपश्चेत्यादिराक्षेपो जागर्त्येवेति। वेदान्त्येकदेशिमतेऽप्येष दोषः सम इत्याह **मायादिष्विति**। अद्वैतिनोऽपि प्रलये मायादिना ब्रह्म सद्वितीयं कृत्वैव सृष्टिमुपपादयन्ति। माया किञ्चिदंशेन परिणमति, कात्स्न्र्येन वा। कश्च मायासंबन्धो ब्रह्मणः, स कात्स्न्र्येन एकदेशेन वेत्यादि तुल्यम्। न च निर्विशेषवादिनं प्रति सांख्यादिकृतस्याऽऽक्षेपस्यैव नावसर इति वाच्यम्; प्रथमाध्याये ब्रह्मोपलक्षणलक्षणतया स्थापितं जगत्कारणत्वं व्यावहारिकं वाद्यन्तरेषु क्षेप्तुं प्रवृत्तेषु तत्प्रतिक्षेपार्थत्वादस्याध्यायस्य, विशिष्टव्यावहारिकब्रह्मविचारवत्याऽस्य तैर्निर्वाह

## ४५ ॥ अथ प्रयोजनवत्त्वाधिकरणम् ॥ २-१-१० ॥

सूत्रम्—न प्रयोजनवत्त्वात् ॥ लोकवत्तु लीलाकैवल्यम् ॥ वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथा हि दर्शयति॥ न कर्माविभागादिति चेन्नानादित्वात् ॥ उपपद्यते चाप्युपलभ्यते च ॥ सर्वधर्मोपपत्तेश्च ॥३२-३६॥

(१७२) आत्मार्थे विश्वसृष्टिः कथमपि सततावाप्तकामस्य न स्यात् ;
कारुण्याद् दुःखसृष्टिर्न भवति ; न च सा सर्वशक्तेश्चिकित्सा
सर्वज्ञः स्वात्मतृप्तस्तदिह न जगतो हेतुरित्यन्धचोद्यम् ;
लीलाऽप्तौ लोकवत् स्यात् ; अभिमति(त)समये सिद्धितस्त्वाप्तकामः ॥१९।

अत्र सङ्गतिविशेषप्रत्यायकं भाष्यम्—'यद्यपीश्वरः प्राक् सृष्टेरेक एव सन् सकलेतरविलक्षणत्वेन सर्वार्थशक्तियुक्तः स्वयमेव विचित्रं जगत् स्रष्टुं शक्नोति—तथापीश्वरकारणत्वं न संभवति ; प्रयोजनवत्त्वाद्विचित्रसृष्टेः, ईश्वरस्य च प्रयोजनाभावात्' इति । तदर्थविचारस्तु—किमुक्तं जगत्कारणत्वं ब्रह्मणः सम्भवति, नेति । [तदर्थं] किमवाप्तसमस्तकामस्यापि लीलया जगत्कारणत्वं सम्भवति, नेति । किमवाप्तसमस्तकामस्यापि लीला प्रयोजनम्, नेति । अत्र विकल्प्य दूषयति—आत्मार्थमित्यादिना । किमीश्वरस्य विश्वस्रष्टृता आत्मार्थम्, उत परार्थम् । आत्मार्थं तावन्न संभवति ; अवाप्तसमस्तकामत्वात् । तदिदमाह—सततावाप्तकामस्येति । परार्थत्वपक्षे कृपया विश्वसृष्टिरिति वक्तव्यम्, तदपि न वक्तुं शक्यत इत्याह—कारुण्यादिति । यदि कारुण्यात् विश्वं सृजति, तर्हि सुखरूपमेव विश्वं सृजेत्, न पुनः दुःखरूपम् । ननु दुःखरूपमपि सृजति, तदपि(अथापि) कारुण्यादेव । यथा दुःखरूपां चिकित्सां कुर्वन् चिकित्सको रक्षक इत्यभिधीयते, एवं दुःखरूपां विश्वसृष्टिं कुर्वन्नीश्वरोऽपि चिकित्सकवत् रक्षक एव स्यादित्याशङ्क्य परिहरति— न चेति । अयमत्र भावः—चिकित्सकस्तु अल्पशक्तिकत्वात् दुःखरूपां चिकित्सामकुर्वन् रक्षितुं न शक्नोति, अतो रक्षकस्यापि चिकित्सकस्य दुःखसृष्टिर्युज्यते । ईश्वरस्तु सर्वशक्तित्वात् दुःखसृष्टिमन्तरेणापि रक्षितुं शक्नोति,

---

स्यात् । अतस्तैरपि श्रुतेस्तु इत्येव समाधीयते । तत्र श्रुतिर्मायादिपक्षं न ब्रवीतीति निगमनिगदितत्वमसत्पद्धतेरेव भवतीति ब्रूमः ॥ १७१ ॥ इति कृत्स्नप्रसक्त्यधिकरणम् ॥ ४४ ॥

१९. विश्वसृष्टिः सततावाप्तसमस्तकामपुरुषकर्तृका न भवति, सृष्टित्वात्, घटादिसृष्टिवत् । अत्रानुकूलतर्कः— यदि तादृशपुरुषकर्तृकाऽपि सृष्टिः स्यात्, सृष्टिप्रयोजनेच्छयोः कार्यकारणभावभंगः स्यादिति इति शंकते आत्मार्थमिति । स्वार्थम्—स्वप्रयोजनायेत्यर्थः । सततावाप्तकामस्य सदैव प्राप्ताः कामाः इष्टानि येन तस्य । ननु स्वार्थत्वाभावेऽपि परार्थत्वसत्त्वात् नानुकूलतर्कदर्शितकार्यकारणभावभंग इत्यत्राह कारुण्यादिति । परार्थमित्यत्र परदुःखोत्पादनार्थत्वमपि किं विवक्षितम्, उत परापेक्षितसुखमात्रप्रतिलम्भनार्थत्वम् । नाद्य, दुरीश्वरत्वप्रसंगात् । परेष्टप्रापणानिष्टनिवर्तनेच्छारूपकारुण्याधीनत्वरूपान्त्यपक्षोऽपि न भवति; सृष्टेर्दुःखमयत्वात् । न च मुक्तिरूपमहासुखप्रापणेच्छया तन्नान्तरीयदुःखोत्पादनमिति वाच्यम्, दुःखमनुत्पाद्यापि मुक्तिप्रापणसंभवात् । लोके तु चिकित्सा भिषजा क्रियते, तस्य दुःखहेतुमकृत्वा सुखोत्पादनाशक्तत्वादित्यर्थः । तत्=स्वार्थत्वपरार्थत्वयोरभावात् स्वात्मतृप्तः स्वस्वरूपानन्दानुभवमात्रेणापि स्वं पूर्णं मन्यमानः सर्वज्ञः=अन्येषामितो दुःखं भवतीति, स्वस्य न किञ्चि

किमर्थं चिकित्सकनयात् दुःखसृष्टिरिति । तत्=तस्मात् कारणात् स्वात्मतृप्तः सर्वेश ईश्वरो जगत्सृष्टिहेतुर्न भवति इत्यन्धानामेव चोद्यम्। तदेवोपपादयति—लीलेति। 'लोकवत्तु लीलाकैवल्यम्' इति स्पष्टमेव सूत्रकारैरेव[परि]चोद्य परिहार उक्तः। यथा सार्वभौमो राजा पूर्वमेव परिपूर्णोऽपि द्यूतक्रीडादिकं करोति, एवमेव नित्यावाप्तसमस्तकामोऽपि भगवान् स्वयं विश्वसृष्टिसंहाररूपां द्यूतक्रीडां करोति। अत्र 'पश्यन्तीषु श्रुतिषु' इत्यादिकमाचार्यपद्यमेव पाठ्यम्। ननु पूर्वमविद्यमानस्य सन्तोषविशेषस्य प्राप्त्यर्थं द्यूतक्रीडा। तेन कथमीश्वरस्यावाप्तसमस्तकामत्वमित्याशङ्क्याह—अभिमते(ती)ति। यत् यदेष्टम्, तदा तस्य सिद्धिरवाप्तसमस्तकामता। न पुनः आगामिनां पुरुषार्थानां प्रागेव सिद्धत्वम्। तथाचेश्वरस्यापि, 'बहु स्याम्' इत्यादिसङ्कल्पात् यस्मिन् काले यदिष्यते जगत्सृष्ट्यादिकं मोक्षप्रदानादिकम्, तस्मिन् काले तस्य सिद्धिरेवावाप्तसमस्तकामत्वम्। अतः,' अवाप्तसमस्तकामत्वं लीलायोगश्च विरुद्धम्' इति भ्रान्तप्रलपितमेतत्॥ १७२॥

(१७३) विश्वं दुःखैकतानं विषममपि सदा निर्मिमाणस्य लीला
सञ्जायेतासमञ्जसमत इति भवेन्निर्दयत्वादिदोषः ।
मैवं बीजाङ्कुरादिक्रमविषमभवानादिकर्मौघभाजां
जीवानां सौति तत्तत्फलमिति करुणा(करणा?)साम्ययोरप्रहाणात् ॥ २० ॥

---

दिष्टमिति च जानन् प्रेक्षावान् इह—प्रकृतौ भवतो जगतो न हेतुर्भवेत्। नित्यविभूतौ आनन्दमयनानाजगत्कर्तृत्वमादाय जगत्कारणत्वलक्षणमिष्यते चेत्–काममस्तु। न तु, जन्मादि अस्य यत इति पूर्वपक्षः।

परिहरति इत्यन्धचोद्यमिति । अन्धानां पूर्णकामराजकर्तृककन्दुकक्रीडादिलीलाव्यापारादर्शिनां पूर्वपक्षोऽयम्। असौ विश्वसृष्टिः लोकवत् लौकिकराजक्रीडावत् लीला स्यात्। अयं भावः—अवाप्तसमस्तकामकर्तृकत्वे कार्यकारणभावभंग इति यत्, तन्न; अवाप्तकामस्यापि लीलारसेच्छादर्शनेन अविरोधात्। एवञ्च ईश्वरो न कर्ता प्रयोजनरहितत्वात्, यः कर्ता स प्रयोजनवानित्यपि निरस्तम्; हेत्वसिद्धेरिति। ईश्वरो न प्राप्यप्रयोजनः आप्तकामत्वादिति च बाधितम्; आप्तकामत्वस्य तदविरुद्धत्वादित्याह अभिमतेति। संकल्पमात्रसाध्यसर्वेष्टत्वमेवाऽऽप्तकामत्वम्। अतः संकल्पेन साधनमविरुद्धम्। मुख्यप्रयोजनविवक्षायामपि नाप्तकामत्वभंगः। वस्तुस्थितिपर्यालोचनया तु लीलैव फलमित्युक्तम्। एवं लीलात्वकथनात् आत्मतृप्तस्य कथं मुख्यप्रयोजनार्थव्यापार इत्याक्षेपनिरासः; तृप्तेष्वपि लीलादर्शनादिति। श्रुतिश्च, "एकस्तु पिबते देवः स्वच्छन्दोऽत्र वशानुगाम्" इति ॥ १७२ ॥

२०. नन्वीश्वरो यदि कन्दुकादिवत् अचेतनान्येव व्यापार्य लीलारसमनुभवेत्, निर्दोषः स्यात्। चेतनानपि आब्रह्मस्तम्बपर्यन्तान् स्वरसप्रावण्येन यथेच्छमुत्क्षिपन् अवक्षिपंश्च वैषम्यनैर्घृण्यदूषितः स्यादेव; चेतनेष्वनन्तदुःखोत्पत्तेस्तनो भावादित्याशंक्य परिहरति विश्वमिति। अनेन श्लोकेन परार्थत्वमपि सृष्टेः सिध्यति। एवञ्च परार्थं सृजन् परसमवेतफलदर्शनतः स्वयं लीलारसं भुंक्ते इत्युक्तं भवति। विश्वं जगत् सदा नानाप्रलयव्यवहितासु सर्वास्वपि सृष्टिषु दुःखैकतानं दुःखैकमनस्कं दुःखानुभवशीलं हेतुतः स्वरूपतः फलतश्च दुःखमयम्, विषममपि व्यक्तिभेदेन, सुखित्व-धनित्व-विद्वत्त्व-विक्रमवत्त्व-तद्विपरी-

अत्र कश्चिच्चोदयति—विश्वं दुःखैकतानं विषममपि सृजत ईश्वरस्यासमञ्जसवृत्तिः स्यादिति। तदिदमाह—विश्वमिति। अत्र विषमत्वम् एकस्य सुखित्वमपरस्य दुःखित्वमित्यादिकम्। अयमत्र शब्दान्वयः—विश्वं दुःखैकतानं विषममपि सदा निर्मिमाणस्येश्वरस्य लीला असमञ्जक्रमतः सञ्जायेत; असमञ्जो नाम कश्चिदयथाकर्मकारी सुप्रसिद्धः पुराणेषु, तस्य वृत्तान्तक्रमात् संजायेत। तत ईश्वरस्य निर्दयत्वादिदोषो भवेत्। इममर्थं प्रतिक्षिपति—मैवमिति। तमेव प्रतिक्षेपप्रकारं विवृणोति—बीजाङ्कुरेति। अयमर्थः—अनादिरयं कर्माविद्यादिचक्रप्रवाहः प्रतिपुरुषं प्रवर्तते। स च विचित्रः। तस्य च प्रवाहस्य तेषुतेषु कालेषु विपाको भवति। विपाकश्च फलप्रदानाभिमुख्यम्। तच्च बहुप्रकारम्। इमञ्चार्थं सर्वेऽपि सैद्धान्तिका न प्रतिक्षिपन्ति हि। अन्यथा सर्वेषामपि वादिनां सिद्धान्तप्रक्रियया तत्तत्कर्मचारित्वनियमायोगप्रसङ्गात्। तेनेश्वरः प्राचीनकर्मानुरूपं सर्वं सृजतीति सामान्यमेतदीश्वरकर्तृत्वम्। अथापि तत्तत्कर्मानुरूपं वैषम्यमपि न हीयत इति। करुणा-(करुणा?)साम्ययोरप्रहाणादिति। अयमर्थः—ईश्वरेण विश्वकार्यकरणस्य च तत्र च प्राचीनकर्मानुरूपवैषम्यस्य चापरित्यागादिति। ईश्वरो ह्यनादिस्वसङ्कल्पसिद्धं पुण्यपापादिनियमं तत्तत्काले तद्विपाकं च नान्यथयति। अस्मिन्नर्थे किं प्रमाणमिति चेत्-श्रुतिस्मृत्यादिरेव, अन्यथा पितृहन्तुः स्वर्गः स्यात्,

---

ताकार-तत्तारतम्यतो वैषम्यवच्च निर्मिमाणस्य सृजत ईश्वरस्य या ततो लीला, सा असमञ्जक्रमतः अयोध्यायामशेषान् पौरबालान् अहन्यहनि सरयूप्रवाहे प्रक्षिप्य तन्मरणदर्शनेन मुदितस्य सगरपुत्रस्य मूर्खस्यासमञ्जनाम्न इव संजायेत भवेत्। इति=अतः ईश्वरस्य निर्दयत्वं वैषम्यमिति च दोषो भवेत्। यावत् परिपूर्णैकरूपसुखवत्तयैव सर्वं न सृजेत, तावदयं दोषो भवत्येव। ईदृशलीलारसरूपप्रयोजनकल्पनात् वरं स्वप्रयोजनाभावकल्पनम्। ततश्चेश्वरासिद्धिरेव। अत एव परार्थत्वाभावश्च सिद्ध इति।

इदमपास्यति मैवमिति। अत्र हेतुः सापेक्षत्वादिति। तत्तज्जीवकृतकर्म दृष्ट्वा तत्फलप्रदानोचितसृष्टिमुखेनैव लीलारसानुभवात्। यथा हि मृगपक्ष्यादिपोषणेन लीलारसमनुभवन्तः तत्तदुचिताहारविहारपरिकल्पनेनैव तुष्यन्ति, तथेति। तत्तज्जीवकर्मवैचित्र्यमेव कथमिति चेत्—पूर्वकर्मबलात्। कर्मानादित्वात्। निरीश्वरदर्शनप्रवर्तकैर्देहातिरिक्तात्मवर्गस्थापकैः सर्वैरपि इदं स्वीकृतमेव। तदेव हि परिदृश्यमानं वैचित्र्यमुपपद्यते। तदिदं सेश्वरवादिभिरपीष्यते, यतस्तत्र श्रुतिशतमुपलभ्यते। न हि तत्र कचिदपि जीवेऽस्य पक्षपातः; असाधुकारिणां सर्वेषामविशेषेण शिक्षणात्, साधुकारिणां तथैव यथाकर्म रक्षणाच्च। नन्वेवं साम्ये सत्यपि निर्दयत्वं प्राप्नोत्येव; परदुःखनिराकरणेच्छाविरहात्। प्रत्युत तदुत्पादनप्रवृत्तत्वात् नृशंसश्च स्यादिति चेन्न; दण्ड्येषु दयानौचित्यस्यैव लोकसिद्धत्वात्। अन्यथा कर्मानुगुणफलप्रदत्वहानिरेवाऽऽपततीति किं कर्मवैचित्र्यवादेन। अत एव परमकारुणिक इत्युक्त्वा आश्रितवात्सल्यैकजलधिरित्युच्यते। कृतापराधा अप्यार्ता आश्रयन्ति चेत्, तत् आश्रयणं व्याजीकृत्य तद्दोषानादररूपवात्सल्येन तद्दुःखनिराचिकीर्षया त्वरत इति। अतः कारुण्यं सावकाशम्। किञ्चानाश्रितेषु अपराधिष्वपीश्वरस्य करुणा मुखान्तरेणास्त्येव। दण्डनेन चिकित्सान्यायेन दुःखमुत्पाद्य तत्तत् पापमपनयन् शुद्धस्य तस्योद्धरणमेव मोक्षपर्यन्तप्रदानेन चिकीर्षति। सर्वेषां स्वपरमसाम्यप्रदानमनीषयैव हि भगवान् सृष्टौ त्वरते। सर्वशक्तत्वे स्थिते चिकित्सकन्यायानुसरणमस्य कुत इति तु न शङ्क्यम्—कर्मानुगुण-

धर्मशीलस्तु नारकी स्यादिति ॥ कथं तर्हि पापशीलानां चैद्यादीनामपवर्गप्राप्तिरिति ॥ दत्तोत्तरमेतत् प्राचीनकर्मक्रमादिति । अत्र लोकसिद्धन्यायानुसारेण—
''क्रीडातः सृजतो विश्वं विहन्येत कृतार्थता । सुखैकतानं जनयेज्जगत् करुणया सृजन् ॥'
इत्यनुमानमव(मा)लम्ब्य, ईश्वरो न सृजतीति कौमारिलचोद्य(वचन)मपि दत्तोत्तरम् ॥ १७३ ॥

(१७४) दृष्टन्यायेन विश्वप्रजनकचिदचित्तत्त्वमेदप्रक्लृप्तौ
स्वेष्टप्रत्यर्थिधर्मोपनयननियतव्याप्तिवैयाकुली स्यात् ।
अत्यन्तादृष्टमर्थं भणितुमधिकृतात् शास्त्रतः सर्वकर्तुः
सिद्धौ बाधाद्यनर्हप्रमितिपरवती सर्वधर्मोपपत्तिः ॥ २१ ॥

इति प्रयोजनवत्त्वाधिकरणम् ॥ ४५ ॥

अदृष्टमर्थं कल्पयतां वैशेषिकाणां दृष्टानुसारेण कल्पनस्य न्याय्यत्वात् माध्यमिकाद्युक्तदृष्टानुसाराभावलक्षणदोषोद्घाटनरूपकृत्स्नैकदेशविकल्पाद्युपहतिः स्यात् । अस्माकं पुनः अपूर्वार्थप्रतिपादकागमावलम्बेनार्थतत्त्वमुपपादयतां दृष्टानुसारनैयत्याभावात् सर्वमेवार्थतत्त्वं समञ्जसमेवोपपादयितुं शक्यत इति [विवक्षेः?] सर्वसामान्यन्यायमाह–दृष्टेति । अयमत्र शब्दार्थः–दृष्टन्यायेन = दृष्टप्रकारेण विश्वप्रजनकः कश्चित् ईश्वरः । स पुनरीश्वरोऽनुमानेन कल्प्यते । विश्वप्रजनकोऽचित् परमाणुः। स पुनः त्र्यणुकपरमाण्व(द्व्यणुका?)नुमानेन कल्प्यते । तथाचोभयत्राप्यनुमानादेव परिक्लृप्तिः । तस्यां

फलप्रदानाभावे वैषम्यापत्तेः । यद्येवं सति ईषद्व्याजमात्रेणापि कल्पकोटिशतानुभवेऽप्यक्षयाणि कर्माणि उन्मूलयति, तत् तथा तन्नियमकल्पनं च सुजनसार्वभौमस्यास्य निरुपाधिककरुणाकार्यमेव । एवञ्च परान् प्रपञ्चात् मोचयितुमेव पुण्यपापफलान्यनुभावयितुमपनोदयितुञ्च सृष्टिं पौनःपुन्येन प्रवर्तयतीति सप्रयोजनत्वं सुस्थम् । तथाच तत्तद्बीजात् तत्तदंकुरोत्पत्तिः, तत्तदङ्कुरात् तत्तद्वृक्षाद्युत्पत्तिः, तत्तदनुसारात् फलभेद इति वैषम्यदर्शनात् तन्न्यायेन विषमं भवताम् अत एव बीजांकुरन्यायादनादीनां कर्मणाम् ओघं समूहमेव प्रवाहं भजतां जीवानां तदनुसारेण **विषमं फलं** तरतमभावापन्नसुखदुःखरूपं **सौति** उत्पादयति, नान्यदेति करुणायाः साम्यस्य वा न भंगः, न वैषम्यनैर्घृण्यापत्तिरिति उत्तरार्धस्यार्थः । **चिन्तामणौ करुणासाम्ययो**रिति पाठो गृहीत इव । परंतु **करुणे**त्येवानुवादोऽस्ति ॥ १७३ ॥

२१. एतत्पादान्तस्थं **सर्वधर्मोपपत्तेश्चे**ति सूत्रमन्तिमाधिकरणगुणसूत्रभूतमपि पूर्वाधिकरणेषु यद्यद्धर्मवैकल्यशंकया पूर्वपक्षाः प्रापिताः, तत्र तत्तद्धर्मस्थापनानन्तरं प्रयोजनाभावनिबन्धनशंकायां तत्परिहारस्याप्यत्र कृतत्वात् अपेक्षितयावद्धर्मसंपत्तिनिगमनभूतम् , परपक्षेष्वेव तद्वैकल्यम् उक्तम् उत्तरपादे विशदीकरिष्यमाणञ्चाभिप्रैतीति तदर्थमाह **दृष्टेति** । सांख्याः, वैशेषिकाः, अन्ये च युक्त्या जगत्कारणस्थापनप्रवृत्ताः दृष्टकार्यकारणरीत्यैवादृश्यमानं कारणं **विश्वप्रजनकं** निमित्तमुपादानं वा चिद्रूपमचिद्रूपञ्च ईश्वरप्रधानपरमाण्वादि कल्पयन्ति । तथा **प्रक्लृप्तौ**=कल्पने मूलकारणे प्रधाने परमाणौ ईश्वरे च तत्तदिष्टा ये धर्माः विभुत्व-परमाणुत्व-नित्यत्व-निरवयवत्व-सर्वज्ञत्व-सर्वशक्तित्वादयः, **तत्प्रत्यर्थिनः** तद्विरोधिनो धर्मा एव तत्रतत्र प्राप्नुयुः, लोके कारणे कुत्रापि तददर्शनात् । अतः तेषामविभुत्वानित्यत्वसावयवत्वाल्पज्ञानशक्तिकत्वादिरूपाणामुपनयनमेव कुर्वन्ती या लोकदृष्टाऽस्ति व्याप्तिः, तस्याः **वैयाकुली**

यत् कार्यं, तदल्पज्ञकर्तृकमिति तथातथा वैयाकुली स्यात्। यदि अल्पज्ञकर्तृकत्वं कार्यत्वबलात् पक्षेऽपि वर्तेत, तदानीमीश्वरासिद्धिः। यदि तु सर्वज्ञकर्तृकत्वम्, तदा विशेषविरोध इति वैयाकुली भवेत्। एवं परमाणुपरिक्लृप्तावपि घटादिकं सावयवं सावयवारब्धमेव दृष्टम्, एवं द्व्यणुकमपि सावयवं कार्यं निरवयवारब्धमेव कल्प्यते चेत्, विशेषविरोधः। द्व्यणुके सावयवारब्धत्वं भवतामिष्टं चेत्, तदा(चा)पसिद्धान्तः एवं संयोगस्यापि सावयवनिष्ठत्वमिति नियमोऽस्तीति परमाणोरपि सावयवत्वप्रसङ्ग इति च प्रसङ्गो भाव्यः॥ एवमानुमानिकजगत्कारणवादिपक्षे दोषमुक्त्वा स्वपक्षे दोषाभावमाह—अत्यन्तेति। अत्यन्तादृष्टं चिदचिच्छरीरकेश्वरकारणत्वमर्थं भणितुं प्रवृत्तात् शास्त्रात् सर्वकर्तुरीश्वरस्य सिद्धौ बाधप्रतिरोधायोग्यतत्त्वज्ञानपरतन्त्रा तादृशतत्त्वज्ञानप्रसिद्धा सर्वधर्मोपपत्तिरस्त्येव; सर्वेषामपि निमित्तत्वोपादानत्वसर्वज्ञत्वनिरवयवत्वादिधर्माणामुपपत्तिरस्त्येव। अतः आगमिकेश्वरबाधनं नरशिरःपवित्रत्वाद्यनुमानवदनादरणीयमेवेति न बाध इति ॥ १७४ ॥

इति प्रयोजनवत्त्वाधिकरणम् ॥ ४५ ॥

द्वितीयाध्यायप्रथमपादस्याधिकरणपूर्वपक्षोत्थानहेतुप्रदर्शनम्—

(१७५) साङ्ख्यस्मृत्या विरोधात् विधिमतविहतेः कार्यवैरूप्यतोऽस्मिन्
एकार्थानेकतन्त्रोदितविहततया देहभोगाविमुक्त्या।
कार्योपादानभेदात् स्वहितविहतितः कारकस्तोमहानेः
कृत्स्नांशाद्युहबाधात् कृतिविफलतयाप्युत्थितं प्रत्यविध्यत् ॥ २२ ॥

---

ष्याकुलता=भंगः स्यादिति स्वेष्टधर्मास्त्यक्तव्या एव भवेयुः। तथाच जगत्कारणस्यासिद्धिरेव तर्केण। शास्त्रं तु प्रत्यक्षवत् व्याप्तिनिरपेक्षत्वात् मिथोविजातीयानेकवस्तुप्रदर्शकप्रत्यक्षन्यायेन प्रत्यक्षदृष्टविजातीयमपि वास्तवमर्थं वेदयितुं प्रभवति। तादृशार्थं प्रतिपादयितुमेव शास्त्रं प्रवर्तते। अनधिगताबाधितार्थं प्रतिपादकं हि शास्त्रम्। युक्त्या बाधस्तु दुष्करः। तथासति अग्नेरौष्ण्यस्याप्यन्यत्रादर्शनात् युक्त्या बाधः स्यात् ॥ 'इतरवस्तुसाजात्यमूलकबाधकल्पना न युक्ता, साक्षात् अग्नावेवानौष्ण्यं स्वाभाविकमुपलब्धं चेत्, तदैव शंकावसरः' इति चेत्—अत्राप्येवम्। अतः शास्त्रतः सिद्धिपक्षे बाधानर्हा या शास्त्रजन्या प्रमितिः तत्परवती तदधीनसिद्धिः सर्वकर्तुः कारणत्वाद्यपेक्षितानां सर्वेषां धर्माणामुपपत्तिः प्राप्तिरिति सिद्धं प्रथमाध्यायप्रतिपादितस्य परस्य ब्रह्मणः परस्मृतियुक्तिभिरबाध्यत्वम् ॥

**चि. टी. चित् ईश्वर इति**। जगत्कारणमनुमानसाध्यं न भवतीत्यस्यैव प्रकृतत्वात् विश्वप्रजनकत्वस्य चिदचिद्विशेषणत्वमावश्यकम्। अजनकचेतनाचेतनानुमानप्रस्तावो नात्र। जीवानां जगत्कारणत्वं कैश्चिन्न शंक्यते; न च परिह्रियते। प्रत्युत जीवानामेव कारणत्वमन्वारुह्येश्वरानुमानं शास्त्रयोनित्वाधिकरणे निरस्यते। तद्ग्रहणेऽपि चित्पदेनैवेश्वरस्यापि ग्रहणसंभवात् एवं व्याख्यानमेव शोभनम् ॥ १७४ ॥

२२. अस्मिन् पादे यैर्हेतुभिः पूर्वपक्षिभिर्ब्रह्मकारणत्वमाक्षिप्तम्, तान् अधिकरणपूर्वपक्षहेतून् गणयन् पादार्थमुपसंहरति **सांख्येति**। **अस्मिन्**=पादेऽत्र आदरणीयसांख्यस्मृतिविरुद्धत्वं प्रथमाधिकरणे पूर्वपक्षहेतुः, चतुर्मुखाभिमतयोगशास्त्रविरुद्धत्वादीश्वरो नोपादानमिति द्वितीये। कार्यापेक्षया **अस्मिन्** ब्रह्मणि

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां
द्वितीयस्याध्यायस्य प्रथमः पादः ॥

उक्तानां दशानामधिकरणानां पूर्वपक्षोत्थानप्रक्रियां विशेषतो विभज्य दर्शयन् सामान्यतः तन्निराकरणमपि दर्शयति—सांख्यस्मृत्येति । साङ्ख्यस्मृतिविरोधात् स्मृत्यधिकरणे, चतुर्मुखस्मृतिविरोधात् योगाधिकरणे, कार्यकारणयोर्वैरूप्यात् विलक्षणत्वाधिकरणे, शिष्टापरिग्रहाधिकरणे पुनः अस्मिन् = कारणे ब्रह्मण्येकार्थनिकतन्त्रन्यायविहतत्वात्, भोक्त्रापत्त्यधिकरणे देहस्य भोगाविनाभावात्, आरम्भणाधिकरणे कार्योपादानयोर्भेदकथनात्, इतरव्यपदेशाधिकरणे स्वात्महितविरोधिकरणविरोधात्, उपसंहारदर्शनाधिकरणे सहकार्यभावात्, कृत्स्नप्रसक्त्यधिकरणे कृत्स्नैकदेशविकल्पबाधात्, प्रयोजनवत्त्वाधिकरणे पुनः ईश्वरव्यापारनैरर्थक्यादप्युत्थितं = विप्रतिपद्यमानं पूर्वपक्षवादिनं प्रत्यविध्यत् = निराकरोदित्यर्थः ॥ १७५ ॥

इति निखिलतार्किकचूडामणिना सर्वतन्त्रस्वतन्त्रेण
कुमारवेदान्ताचार्यापरनाम्ना श्रीमद्वैश्वामित्रवरदगुरुणा
विरचिते शारीरकाधिकरणचिन्तामणौ
द्वितीयस्याध्यायस्य प्रथमः पादः ॥

---

स्थितं वैलक्षण्यं तृतीये हेतुः । परमाणूपादानकत्वरूपैकार्थपरभूयस्तीर्थकरोक्तविरुद्धत्वं चतुर्थे । देहसंबन्धनिबन्धनभोक्तृत्वापत्तिरीश्वरत्वारिका पञ्चमे । उपादानोपादेयभेदस्यैव लोकसिद्धत्वात् एकविज्ञानेन सर्वविज्ञानस्य तन्निबन्धनस्य दुर्वचतया न ब्रह्मणः सर्वोपादानत्वमिति उपादानतानिषेधकमनन्यत्वं षष्ठे । जीवानां स्वानन्यत्वे स्वहिताकरणादिदोषप्रसक्त्या अन्यत्वात् पूर्ववदनुपादानत्वमिति स्वहितभंगप्रसक्तिरूपतर्कः सप्तमे । उपकरणकलापराहित्यमष्टमे । कृत्स्नस्य, अंशस्य च कारणतया य ऊहः, तत्र द्वितीयपक्षस्थापनाय ब्रह्मणि सावयवत्वस्य (आदिपदग्राह्यस्य) च य ऊहः, तेषां बाधितत्वं नवमे । सृष्टेर्निष्प्रयोजनत्वं दशमे । एतद्धेतुदशकमूलकमापादनमपाचकारेति ॥ एतत्पादप्रतिपिपादयिषितगुणसंग्रहस्तु—

मन्वाद्येकार्थवेदो विधिविहितरजोमूलतन्त्राद्यबाध्यो
वैलक्षण्येऽपि योनिर्गुणभवदणुयुक्त्यक्षतो दुःखदूरः ।
कार्यानन्यः स्वकार्याहितभुज इतरो बाह्यसाह्यानपेक्षः
कृत्स्नांशोहाद्यभेद्यो विहृतिनिजकृतिः स द्वितीयाद्य उक्तः ॥ इति ॥

इति वात्स्यसच्चक्रवर्तिवीरराघवाचार्यकृतिषु
अधिकरणसारावलिव्याख्यायां सारार्थरत्नप्रभायां
द्वितीयस्याध्यायस्य प्रथमः पादः ॥

शुभमस्तु

## द्वितीयाध्यायद्वितीयपादः

### ४६ ॥ रचनानुपपत्त्यधिकरणम् ॥ २-२-१ ॥

सूत्रम्—रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च ॥ पयोऽम्बुवच्चेत् तत्रापि ॥ व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ अन्यत्राभावाच्च न तृणादिवत् ॥ पुरुषाश्मवदिति चेत् तथापि ॥ अङ्गित्वानुपपत्तेश्च ॥ अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥ अभ्युपगमेऽप्यर्थाभावात् ॥ विप्रतिषेधाच्चासमञ्जसम् ॥ १—९ ॥

(१७६) बाधाभावादकम्पे स्थितवति निगमैः(मे) ब्रह्महेतुत्ववादे
भूयः किं वीतरागो वदति परपरीवादमत्रेत्ययुक्तम् ।
प्रख्यातप्राच्यनैकप्रतिसमयभवन्मन्दसन्देहशान्त्यै
तुल्यत्वभ्रान्तिसिद्धा प्रकरणसमता तर्कपादेन वार्या ॥ १ ॥

एवं पूर्वपक्षवादिभिः पूर्वस्मिन् पादे वेदान्तवाक्यानां स्मृतिन्यायाभ्यां बाधे निरस्ते सति तेषामेव परपक्षाणां शारीरकन्यायेन बाधः [स्वपक्षस्थापनपरः] प्रतिपाद्यत इति सङ्गतिः। अथवा पूर्वं शारीरकशास्त्रस्य परपक्षैर्बाधः परिहृतः, अधुना तैरेव परपक्षैस्तस्यैव शास्त्रस्य प्रतिरोधः परिह्रियत इति संगतिः। तत्रापि बाह्यविरोधपरिहारपरत्वात् कारणद्वारकविरोधपरिहारपरत्वाच्च पूर्वपादद्वयसङ्गतिः। उत्तरपादद्वये कार्यद्वारको विरोधः परिह्रियते। स चाऽऽन्तर इति वक्ष्यते। अत्र श्रीविष्णुचित्तार्यैरुक्तम्, 'एवं स्वपक्षे परोद्भाविता दोषाः परिहृताः। इत्थं परपक्षोऽप्युपपन्न इति पार्श्वस्थस्य संशयो निवर्त्यत इति परनिराकरणारम्भो विमृश्यते। स्वपक्षस्थापनपरपक्षनिराकरणाभ्यामर्थावधारणं निर्णय इति हि तद्विदः। प्रथमं निरीश्वरमते दूषणमाह' इति। इदमेव भगवता भाष्यकारेणैव विस्तरेण 'उक्तम्' इत्यादिना 'परपक्षप्रतिक्षेपायानन्तरः पादः प्रवर्तते' इत्यन्तेनोक्तम्। परपक्षप्रतिक्षेपेषु च साङ्ख्य-

---

१. द्वितीयद्वितीयस्य तर्कपादस्य कृत्यं विवेचयति प्रथमश्लोकेन। तत्र, "परपक्षाः प्रतिक्षिप्यन्ते" इति भाषित्वा, "इतरथा कस्यचित्" इति प्रवृत्तस्य भाष्यग्रन्थस्यावतरणं पूर्वार्धेनाऽऽह बाधाभावादिति। निगमैरिति पाठः प्राच्यः। पद्योजनायामपि निगमे इति पाठो न विरुद्धः। वेदकर्तृकः परब्रह्मण्येव निमित्तोपादानस्वरूपस्य हेतुत्वस्य वादः=कथनं पूर्वपादे बाधपरिहारात् निष्कम्पः सिद्धः। एवंसति स्वमतहानेः कथमप्यभावात् भूयः परगर्वशमनोपरि अत्र शमदमादिमत्पुरुषाधिकारिके शारीरके किमिति भगवान् बादरायणः वीतरागः ख्यातिलाभविजयवशीकरणनिरपेक्षः परेषां सांख्यादिमतस्थायिनां परीवादं दूषणमनेन पादेन वदतीति चेत्—तदयुक्तमित्यर्थः। नायं परपरीवादः; किंतु पूर्वपादे स्वमते किञ्चिद्दूषणपरिहारवत् अत्र दूषणान्तरस्यापि परिहार एवेति उत्तरभाष्याशयमाविष्करोति प्रख्यातेति। यत इत्यध्याहारः। तेषां वैदिकमतबाधनानुगुणशक्त्याविषयाभावेऽपि वेदवत् अनुमानस्यापि प्रमाणत्वाविशेषात् समबलता स्यादिति तुल्यत्वभ्रान्त्या सिद्धा या प्रकरणसमता पक्षद्वयसाम्यं सत्प्रतिपक्षता यतो वारणीया भवति। किमर्थम्? प्रतिसमयानां वैदिकप्रतिकूलमतानां सांख्यादीनां सर्वत्र प्रख्यातत्वात्, बहोः कालात् प्रवृत्तत्वेन प्राच्यत्वात्, अनेकत्वाच्च तेभ्यो भवन् जायमानः मन्दस्य संदेहः=तत्त्वं वेदोक्तं वा तदुक्तं वेति संशयः, तस्य शमनार्थम्। मन्दशब्देनात्र,

मतप्रतिक्षेपप्राथम्यं भाष्यकारैरेवोक्तम्–'कापिलमतम्' इत्यादिभाष्येण। अनेनैव भाष्यकारवचनेन पूर्वाधिकरणसङ्गतिरपि सूचिता भवति। अत्र पादान्तरारम्भं नैरर्थक्यादाक्षिप्य समाधत्ते—बाधेति। निगमैर्ब्रह्महेतुत्ववादे बाधाभावादकम्पे स्थितवति सति, वीतरागो भ[ग]वान् भूयः किं परपरीवादं वदतीति [आक्षेपः?]। एवं वदन्तं पूर्वपक्षिणं निराचष्टे—अयुक्तमिति। अयुक्तत्वमेव तावदुपपादयति—प्रख्यातेति। पूर्वं बाध एव परिहृतः; न पुनः प्रकरणसमता; अत्र पुनः सा परिह्रियत इति सप्रयोजन एव पादान्तरारम्भः। अयमत्र शब्दान्वयः—प्रख्यातानां प्राच्यानामनादिसिद्धानां नैकानां बहुप्रकाराणां प्रतिसमयानां सद्भावेन(संभवेन) भवतो जायमानस्य मन्दबुद्धीनां सन्देहस्यैव शान्त्यै तुल्यत्वभ्रान्तिसिद्धा प्रकरणसमता=वेदान्तेन तुल्यानि पक्षान्तराणीति भ्रान्तिसिद्धा प्रकरणसमता तर्कपादेन वार्यैति सफलोऽयं पादारम्भः॥ १७६॥

(१७७) षड्विंशालम्बि साङ्ख्यं स्फुटतरपठितं भारते योगतुल्यं
तत्स्थत्वात् पञ्चविंशस्त्विति च निगदितः सर्वतत्त्वान्तरात्मा।
तस्मात् सेशानतन्त्रं श्रुतिसमधिगतं स्थापयित्वाऽथ सूत्रैः
पक्षं त्वीशानपेक्षं प्रतिवदति नयैरुत्कटप्रत्यवायम्॥ २॥

अत्र परपक्षेषु साङ्ख्यपक्षस्य पूर्वभावित्वे कारणं भाष्य एव व्यक्तमुक्तम्, 'एतस्य सत्पक्षनिक्षेपसम्भावनाभ्रमहेतुत्वातिरेकात्' इति। अधिकरणसङ्गतिस्तु—पूर्वाधिकरणे प्रयोजनाभावात् निमित्त-

---

परमतखण्डनप्रकारस्य विशिष्य परिज्ञानाभावेऽपि यस्तावत् अनादिनिधनशास्त्रविपरीतार्थकत्वादेवान्य शास्त्रेष्वप्रामाण्यमातिष्ठते, यश्च प्रत्यक्षविरोध इव निर्णीतार्थवेदविरोधे परतर्काणामप्रतिष्ठितत्वमेवेत्यध्यवस्यति, न तादृशस्य श्रद्धावैकल्यप्रसक्तिरिति तद्विलक्षणो गृह्यते। **प्रकरणसमतेति**। सत्प्रतिपक्षस्य प्रकरणसमेति सूत्रारूढं नाम। 'पक्षप्रतिपक्षौ अनवसितौ प्रकरणम्' इति **न्यायभाष्यम्**। हेतुभिरुपपादनानन्तरमपि परोत्प्रेक्षितहेतुदौर्बल्याज्ञानात् तत्प्राचीनदशापरिस्थित्यनुवृत्तिसद्भावात् साम्यम्। समबलत्वेन गृह्यमाणप्रतिहेतुकत्वमिति यावत्॥

चि. टी. **परपक्षाः प्रतिक्षिप्यन्ते** इति यथाश्रुतभाष्यानुरोधेन **बाधः प्रतिपाद्यत** इति संगतिमुक्त्वा, उत्तरभाष्यानुसारेणान्यथाऽऽह **अथवेति**। न बाधार्थं प्रवृत्तिः; किंतु स्वदोषवारणार्थम्। अर्थसिद्धस्तु तेषां बाध इति भावः। **परनिराकरणारम्भ** इति। परनिराकरणरूपपादारम्भः पार्श्वस्थसंशयनिवर्तनोद्देश्यक इति विमृश्यते, सूत्रकृतो वीतरागत्वादित्यर्थः। **नैकानामिति**। न एकः प्रकारो यत्र तेषाम्, एकप्रकाररहितानाम्; बहुप्रकाराणामित्यर्थः। बहुव्रीहित्वान्न सर्वनामता। तर्काणां तर्कैरेवात्र प्रतिक्षेपात् **तर्कपाद** इति नामास्य पादस्य॥ १७६॥

२. ननु सांख्योक्तानां पञ्चविंशतेरपि तत्त्वानामस्माभिरपि स्वीकृतत्वात् योगमतमिव सांख्यमतमप्यत्र न विशिष्य निराकार्यम्॥ ईश्वरानुकूल्या निराकरणमिति चेन्न; भारते तत्साधनदर्शनादिति शंकां परिहरति **षडिति**। 'एक एवेति साधवः' इति साधुशब्दार्थे क्रोडीकार्या. सांख्या अन्ये; निराकार्याश्चेमे परे। भारते योगतुल्यतया पठितं सांख्यं तावत् षड्विंशं=पुरुषोत्तमम् आलम्बते=स्वीकरोति।

त्वानुपपत्तिः परिहृता ब्रह्मणः; अधुना परोक्तस्यानुपपत्तिरुच्यत इति। तदर्थविचारस्तु—किं प्रधानं जगत्कारणम्, नेति। किमचेतनस्य प्रधानस्य चेतनानधिष्ठितस्य पुरुषसन्निधानात् पङ्गुसन्निधानादन्धस्येव प्रवृत्तिहेतुत्वं संभवति, नेति। किमन्धस्य पङ्गुसन्निधानात् मार्गविलोकनव्यापारवत् पुरुषसन्निधानात् तच्छायापत्त्या ज्ञातृत्वं संभवति, नेति। अत्र हि साङ्ख्यं निराक्रियते; तत् भारते योगतुल्यतया हेतुहन्तव्यं नेत्युक्तम्, तत् कथं निराकरणमित्याशङ्क्य द्विविधं हि साङ्ख्यं निरीश्वरं सेश्वरं च, यन्निरीश्वरं तदेव हेतुहन्तव्यम्; यत् सेश्वरम्, तन्न हन्तव्यम्। अतः सेश्वरं [सांख्यं?]तत्तुल्यं योगपक्षं च विहाय निरीश्वरसाङ्ख्यमेवात्र निराक्रियत इत्यभिप्रायेणाह–षड्विंशेति। षड्विंशः परमात्मा चेत्, कथं पञ्चविंश आत्मेति श्रुतिषु परमात्मा निगद्यत इत्याशङ्क्याह—तत्स्थत्वादिति। अवस्थितेरिति पञ्चविंशस्यान्तर्यामितयाऽवस्थानात् षड्विंश एव, 'पञ्चविंश आत्मा' इति पञ्चविंशशब्देनाभिधीयते। न पुनर्निरीश्वरसांख्याभिमतो जीव एव पञ्चविंशशब्देनाभिधीयत इति। तस्मादत्र सेशानतन्त्रं = सेश्वरसाङ्ख्यं तत्तुल्यं योगञ्च श्रुतिसमधिगतं स्थापयित्वा अथास्मिन् पादे सूत्रकार ईश्वरानपेक्षमुद्भटप्रत्यवायं निरीश्वरसाङ्ख्यपक्षमेव प्रतिवदति = प्रतिक्षिपति नयैरि(न योगमि)ति सुसङ्गतमेतत् ॥ १७७ ॥

---

उक्तञ्च मन्त्रिकोपनिषदि, "तं षड्विंशकमित्येके सप्तविंशमथापरे। पुरुषं निर्गुणं सांख्यमथर्वशिरसो विदु." इति। सगुणपुरुषाः जीवाः सत्त्वादिगुणवश्यत्वात्। निर्गुणोऽयं तद्विलक्षण इति। अतोऽस्य सांख्यमतसिद्धत्वं श्रौतम्। इदं भारते **स्फुटपरिपठितम्**-'स्थित्यदनाभ्याञ्च' इति सूत्रश्रुतप्रकाशिकायाम्, **मोक्षधर्मे कपिलासुरिसंवादे,** पञ्चविंशतितत्त्वानि वर्गशब्देनोक्त्वा, 'एतस्मात् वर्गादपवृक्तः अपवर्गप्रदः क्षेत्रज्ञः' इति; **सनत्कुमारनारदसंवादे,** 'पश्यः पश्यति पश्यन्तमपश्यन्तञ्च पश्यति। प्रकृतिं क्षेत्रं क्षेत्रज्ञञ्चापरः क्षेत्रज्ञः षड्विंशकोऽवपश्यति' इत्यादीनि वाक्यान्युपात्तानि। तथा (318) सांख्यप्रतिपादके **वसिष्ठ-करालजनकसंवादे,** 'बुध्यमानो भवत्येष संगात्मक इति श्रुतिः। अनेनाप्रतिबुद्धेति वदन्त्यव्यक्तमच्युतम्। षड्विंशं विमलं बुद्धमप्रमेयं सनातनम्। स तु तं पञ्चविंशञ्च चतुर्विंशञ्च बुध्यते....षड्विंशं राज शार्दूल तदा बुद्धत्वमाव्रजेत्।....परेण परधर्मा च भवत्येष समेत्य वै....स्वतन्त्रश्च स्वतन्त्रेण स्वतन्त्रत्वमुपाश्नुते' इत्यादिकमत्रोदाहार्यम्। तथा (323) **जनकयाज्ञवल्क्यसंवादे,** "यदा तु मन्यतेऽन्योऽहमन्य एष इति द्विजः। तदा स केवलीभूतः षड्विंशमनुपश्यति। अन्यश्च राजन् स परस्तथाऽन्यः पञ्चविंशकः। तत्स्थत्वादनुपश्यन्ति ह्येक एवेति साधवः। यदा स केवलीभूतः षड्विंशमनुपश्यति। तदा स सर्ववित् विद्वान् न पुनर्जन्म विन्दति। एवमप्रतिबुद्धश्च बुध्यमानश्च तेऽनघ।" इत्यादि पूर्वोक्तविवरणरूपम्। एवं सांख्यनिरूपणे च (307), "सत्त्वं वहति शुद्धात्मा परं नारायणं प्रभुम्। प्रभुर्वहति शुद्धात्मा परमात्मानमात्मना। परमात्मानमासाद्य तद्भूता यतयोऽमलाः। अमृतत्वाय कल्पन्ते न निवर्तन्ति वा विभो" इति। उपरि च तत्र कापिलप्रस्तावः। तस्मात् स्वेश्वरसांख्यं कपिलोक्तमनपलप्यम्। इदमेव पूर्वाध्याये श्रुतिभिः स्थापयित्वा संप्रति, **ईशानपेक्षं** ईशापेक्षां विनैव जगत्कारणत्वोक्तिपक्षम् **उत्कटप्रत्यवायम्** वक्तुः श्रोतुश्च पापातिशयहेतुविपरीतज्ञानजनकं **प्रतिवदति** प्रत्याचष्टे। ननु, **चिन्तामणौ 'हेतुह**

(१७८) अव्यक्तादीन् पदार्थान् अनुमितिमुखतः स्थाप(कल्प)यन्तः स्वबुद्धया
षट्त्रिंशत्तत्त्ववादप्रभृतिषु न कथं सक्तिमिच्छन्ति साङ्ख्याः ।
तुल्याक्षेपोपपत्तीः श्रुतिनियतिमुचां कल्पनाः संमृशन्तो
दृष्टं नाऽऽपह्नुवीरन् लघुमनुमिनुयुः शेषमिच्छन्ति शास्त्रात् ॥ २ ॥

अत्र प्रस्तुतस्य साङ्ख्यपक्षस्याऽऽनुमानिकपञ्चविंशतितत्त्वप्रतिष्ठापकस्य पाशुपतादितुल्यप्रवृत्तित्वात् तत्कल्पितषट्त्रिंशत्तत्त्वादिकल्पनमपि तेनैव न्यायेन प्रसज्येत । यदि तत्रान्यथासिद्ध्यादिना तत् प्रतिक्षिप्यते, तर्हि तेनैव न्यायेनात्रापि प्रतिक्षिप्यत इत्याह—अव्यक्तेति । अयमत्र शब्दार्थः—अव्यक्तादीन् पदार्थान् अनुमानमुखेन स्वबुद्ध्या कल्पयन्तः सांख्याः शैवादिपरिकल्पितेषु षट्त्रिंशत्तत्त्ववादप्रभृतिषु कथं सक्तं नेच्छन्ति । तुल्याक्षेपेत्यादि—एवमाक्षेपे कृते साङ्ख्या यदि किञ्चिदुपपत्तिं वदन्ति, तत् अन्यवादिभिरपि वक्तुं शक्यते । तथा च तुल्याक्षेपोपपत्तियुक्ताः साङ्ख्यवैशेषिकादीनां श्रुतिनियतिमुचांकल्पनाः परामृशन्तो वेदान्तवादिनामग्रगण्याः प्रमाणप्रमेयविभागमित्थं कल्पयन्ति ।

न्तव्यं न' इति प्रयोगात् "सांख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा" इति वाक्यं गृहीतमिव । तत्र कस्य सांख्यस्य ग्रहणमिति चेत्— सेश्वरसांख्यस्येति अत्र व्याख्यानेषु प्रतीयते । निरीश्वरसांख्येऽपि पाशुपत इवाविरुद्धांशग्रहणं विवक्षितमिति पाञ्चरात्राधिकरणभाष्यतो ज्ञायते । स्फुटपरिपठितमित्यत्र विवक्षितानि भारतवाक्यानि तु प्रागेव दर्शितानि । अत्र पादे योगस्यादूषणं तु योगे ईश्वरस्योक्तत्वात् । तत्रोपादानत्वं न स्वीकृतमिति तद्दूषणं कार्यमिति चेत्–तर्कपादे तर्केणैव निरसनस्य कार्यतया ईश्वरस्य सर्वजगदुपादानत्वस्थापकतर्काभावात् तदविचारः ' श्रुत्या तद्बाधश्च प्रकृत्यधिकरण एव सिद्धः । इदमपि नयैरिति पदेन सूचितम् । नयैः न्यायैः=तर्कैरिति । बहुवचनमेकैकस्यापि सूत्रस्य पृथग्घेतुपरत्वात् । निगदित इत्यत्र निगमित इति पाठ एव पदयोजनेष्ट इति तद्वर्णितार्थमुखेन निश्चेतुं न शक्यते । निगद्यत इति तु चिन्तामणिः । तत्र श्रुतिष्विति पदं भारतस्याप्युपलक्षणम् ॥ १७७ ॥

२. सूत्रे अशब्दम्, आनुमानिकम्, आनुमानमिति पदैः प्रकृतिनिर्देशः तदाभासत्वसूचनेन अनुमानप्रमाणेन तदसिद्धिद्योतनार्थः । अतीन्द्रियप्रकृतिमहदहंकारतन्मात्रादीनां तदुत्पत्तिक्रमस्य चानुमानतस्साधनमशक्यमिति दर्शयति अव्यक्तेति । अनुमितिमुखतः अनुमानद्वारा अव्यक्तादीन् प्रकृतिमहदहंकारतन्मात्रादिरूपान् पदार्थान् स्वबुद्ध्या स्थापयन्तः श्रुतिप्रमाणं परित्यज्य साधयन्तः सांख्याः तथैव षट्त्रिंशत्तत्त्ववादप्रभृतिषु=पाशुपतैः कृते, 'तत्त्वानि लोके षट्त्रिंशत्संख्याकानि' इति विभागवचने, तथा तार्किकेष्टायां सप्तपदार्थ्याम्, बाह्यसंमतप्रकारान्तरेषु च कथमासक्तिं न रोचयन्ते । तर्कमात्रमूलकत्वे विनिगमनाविरह इति भावः । तत्र चेत् आक्षेपः, सोऽत्रापि तुल्यः ; यत्रोपपत्तिः, सा तत्रापि । अथ तदुपपत्तिविषयेऽप्याक्षेपोऽस्तीति चेत्, स इहापि । तथाच सर्वाः तत्तत्पुरुषकल्पनाः तुल्याक्षेपोपपत्तयः । द्वन्द्वानन्तरं तुल्यपदेन बहुव्रीहिर्वा ; तुल्य आक्षेपो यासां ता उपपत्तयो यासु ताः कल्पना इति बहुव्रीहिगर्भबहुव्रीहिर्वा । केवलकल्पनाः इमाः श्रुतिनियतिमुचाम्— अतीन्द्रियेऽर्थे श्रुतिरेव प्रमाणमिति नियमं त्यक्तवतां तर्कपरमाणां तुल्याक्षेपोपपत्तित्वेन विचारयन्तो वैदिकाः तत्त्वगणनां शास्त्रादिच्छन्ति ।

तत् यथा-दृष्टं नापह्नुवीरन्निति प्रत्यक्षप्रमाणपरिक्लृप्तिप्रकारः, लघुमनुमिनुयुरित्यनुमानप्रक्रियाप्रकार उच्यते। अनुमानवृत्तान्ते हि गुरुर्न कल्प्यते, लघुरेव पक्षः स्वीक्रियत इति न्यायविदां प्रक्रिया। शेषमिच्छन्ति शास्त्रादिति शास्त्रीयमर्यादोच्यते। प्रत्यक्षानुमानासिद्धमर्थमप्राप्तत्वात् शास्त्रेणै-वेच्छन्ति मनीषिण इत्यर्थ इति ॥ १७८ ॥

(१७९) कार्यं किञ्चित् कुविन्दप्रभृतिविरचितं दृश्यतेऽन्यच्च सर्वं
कर्त्रायत्तं श्रुतम्, तत् क्वचिदपि न पराधीनताभङ्ग इष्टः।
पङ्ग्वन्धक्षीरपाथस्तृणजलदतडिद्द्राव्ययस्कान्तपूर्वैः
दृष्टान्तैर्न त्वदिष्टं फलति; तदखिलं चेतनाधिष्ठितं नः ॥ ४ ॥

अत्र साङ्ख्यैरीश्वराधिष्ठानमन्तरेण सृष्टिरित्युक्तम्; तत्र विकल्प्योत्तरमाचार्याः प्राहुः। अयमत्र विकल्पक्रमः—किं प्रत्यक्षसिद्धलोकानुसारेण निरीश्वरत्वमुच्यते, किं वा शास्त्रानुसारेण, अथवा स्वकपोलकल्पितेन केवलं(ल) दृष्टान्तानुसारेणेति। तत्र क्रमेणोत्तरमुच्यते—कार्यमित्यादिना। लोकसिद्धमपि कार्यं कुविन्दप्रभृतिविरचितं दृश्यत इति न तत्र साधनीयं किञ्चित्। यत्तु महीमहीधरमहार्णवप्रभृति सकर्तृकत्वेनास्माभिर्न दृश्यते, तत् सर्वमपीश्वरायत्तमेवं श्रुतमेव; तत्रापि प्रमाणसिद्धत्वान्न विप्रतिपत्तिः कार्येत्याह—अन्यच्चेति। तस्मात् क्वचिदपि नेश्वराधिष्ठा-नासिद्धिरित्याह—तदिति। केवलं दृष्टान्तमात्रेण साध्यसिद्धिरिति तृतीयं कल्पं परिहरति—पङ्ग्वित्यादिना। 'पङ्ग्वन्धवदुभयोरपि संयोगः' इति प्रकृतिपुरुषयोगात् विचित्रजगत्सृष्टिरित्येवं दृष्टान्तमाहुः साङ्ख्याः। यथा पङ्गुः क्रियाशक्तिविधुरः, अन्धो दृक्शक्तिविधुरः, उभावपि परस्परोप-कारात् गमनं कुरुतः, एवं प्रकृतिपुरुषावपि सांसारिकप्रवृत्तिं कुरुत इति नेश्वरापेक्षेति तेषां भावः। क्षीरस्य दधिरूपेण परिणामे न चेतनापेक्षा; नापि जलस्य हिमकरकादिरूपेण परिणामे; तृणानामपि तथा, उपभुक्तस्य तृणस्य देहपुष्ट्यादिहेतुत्वे चेतनाधिष्ठानापेक्षा नास्तीति दृष्टान्ताः। तैर्दृष्टान्तैरचेतनानां चेतनाधिष्ठानं नास्तीति त्वदिष्टं न फलति; तेषां सर्वेषां पक्षत्वात्।

---

किं सर्वत्र शास्त्रमेव प्रमाणम्? न; दृष्टं नापह्नुवीरन्=प्रत्यक्षगृहीतार्थापलापो न भवति। तत्र तदेव प्रमाणम्। शास्त्रोक्तार्थस्य लघुत्वबलात् निष्प्रतिपक्षतर्कानुसारित्वे स्यादनुमानमेव प्रमाणम्। अतोऽनुमानस्य प्रकृतविषये प्रसरणाभावात् अनेकपरमाणुपक्षव्यावृत्तैकप्रकृतिकारणत्वपक्षः तत्र महद-हंकाराद्युत्पत्तिक्रमः सर्वस्येश्वरसृष्टत्वमित्यादिकं सर्वं शास्त्रादेव=शास्त्रसिद्धत्वेनैवेच्छन्तीति ॥ १७८ ॥

४. 'पयोम्बुवच्चेत् तत्रापि', 'अन्यत्राभावाच्च न तृणादिवत्', 'पुरुषाश्मवदिति चेत्-तथापि' इत्यादिसूत्रार्थं विशदयति कार्यमिति। जगतः कर्तृनिरपेक्षत्वं किं कार्यत्वादिहेतुना साध्यते, किं वा दृष्टान्तमात्रेण? नाद्यः, बाधात्। तत्र हि किञ्चित् पटादिकं कार्यं तन्तुवायप्रभृतिकृतत्वेनैव दृश्यते। अन्यत् अदृश्यमानकर्तृकं कार्यं सर्वमीश्वरादिकर्त्रधीनत्वेनैव श्रुत्यवगमितम्। तत् तस्मात् कर्त्रधीनत्वाभावरूपसाध्यं क्वचिदपि नेति। ज्ञानमात्रक्रियामात्रवत्पङ्ग्वन्धसमुच्चयमात्रात् समुचितसञ्चारवत् केवलचेतन-सव्यापारप्रकृतिमेलनमात्रात् जगदुत्पत्तिः; क्षीरस्य दधिरूपेण, पाथसः जलस्य द्राक्षादिरूपेण तृणस्य धेनुभुक्तस्य पयोरूपेण च परिणामः, मेघविद्युत्पवनायस्कान्तादीनां च चेतननिरपेक्षं कार्यकृत्त्वं

तादृशमखिलमपि चेतनाधिष्ठितमेवेति हि न्यायविद्भिरनुमानेन साध्यते । अस्माभिस्तु श्रुतिभिरिति विशेषः । तेन पक्षमेव दृष्टान्तं कृत्वा पक्षे साध्याभाव[प्र]साधनमनुमानवार्तानभिज्ञतां प्रकटयेदिति सर्वहास्यमिति ॥ १७९ ॥

(१८०) नन्वत्राचेतनानां स्वसमुचितविधौ कर्त्रधीनत्वमुक्तम् ;
शास्त्रारम्भे विधातुर्व्यनुददनुमितिं किम्परस्सूत्रकारः ।
पृच्छेयं नातितुच्छा, शृणु तदवहितः, सर्वकृन्नानुमातुं
नापह्नोतुञ्च शक्यस्तदुभयनियमादर्शनादित्यमंस्त ॥ ५ ॥

अत्र कश्चिच्चोदयति—शास्त्रयोन्यधिकरणे भवद्भिरनुमानस्य ईश्वरासाधकत्वमुक्तम् । अधुना पुनः अचेतनानां चेतनाधिष्ठानावश्यम्भावोऽस्तीति भवद्भिरुच्यते । उभयमपि सूत्रकारसम्मतमेव, तत् कथं विरुद्धभाषणमिति । तदिदमाह—नन्विति । अयमत्र शब्दान्वयः—अत्र ह्यचेतनस्य नानां) स्वोचितकार्यसृष्टौ चेतनाधिष्ठानमवश्यमपेक्षितमित्युक्तम् । शास्त्रारम्भे तु विधातुरनुमितिं सूत्रकार एव व्यनुदत् = निराचकारेत्यर्थः। तेन सूत्रकारः किम्पर इति = कमर्थमभिप्रैतीति पृच्छा । अत्रोत्तरमाह—पृच्छेयमिति । नातितुच्छोऽयं प्रश्नः । अतितुच्छोऽयं न भवतीति शिष्यं प्रति सन्तुष्यति । 'शृणु तदवहितः' इति सूत्रकारभावस्यातिगम्भीरत्वात् शिष्यं नियुङ्क्ते । गम्भीरमेव सूत्रकारभावं प्रकाशयति सर्वकृदिति । सर्वस्रष्टा परमपुरुषो नानुमानेन साधयितुं शक्यत इति शास्त्रयोन्यधिकरणभावः। स एव परमपुरुषो नानुमानेन बाधितुं शक्यत इत्येतदधिकरणार्थः । तेन द्वयोरप्यधिकरणयोर्न

---

च न । उभयसंमतस्यैव दृष्टान्तत्वसंभवात् । तत्र सर्वत्रेश्वराधीनताया एवास्माभिरुक्तेः । अतो विवाद विषयस्य न दृष्टान्ततेति असदनुमानं सुत्यम् ॥ १७९ ॥

५. ननु लघुमनुमिनुयुरित्युक्तत्वात् जगत् अकर्तृकमिति ईश्वराभावसाधने लाघवमितिचेत्-एवं तर्हि अकारणकमित्येवानुमीयताम्; प्रकृतेरप्यकल्पनात् अतिलाघवात्। अतो दृष्टव्याप्तिविरुद्धं लाघवं न सुस्वीकरम् । अन्यथा धूमादग्न्यनुमानमपि न स्यात् । लाघवात् निरग्निकधूमोऽयमित्यपि संभवात् । नन्वेवं शास्त्रयोनित्वाधिकरणविरोध इति शंकते नन्विति । अत्र अस्मिन्नधिकरणे यदि सूत्रकारेण अचेतनानां स्वसमुचितविधौ स्वकार्यकरणे कर्त्रधीनत्वं कर्तृसापेक्षत्वमित्थं कथितम्, तर्हि सः किम्परः=किं परम् उद्देश्यं यस्य सः किमभिप्रायकस्सन् शास्त्रारम्भे उपोद्घाते तृतीयेऽधिकरणे विधातुः जगतः स्रष्टुः पुरुषस्यानुमितिं व्यनुदत्—न्यषेधीत् । कर्त्रनुमानं दुष्करमित्यवोचदिति यावत् । कर्त्रनुमानकथन—तदसंभवकथनयोर्विरोध इति। ननु प्रश्नोऽयं तुच्छः; अत्र हि सामान्यतः कर्तारं विना कार्यं न भवतीत्युक्तम्; तत्र तार्किकाभिमत-सर्वज्ञसर्वशक्तिकर्तृविशेषानुमानासंभव एवोक्तः, जीवैरेव अन्यथासिद्धिकथनाच्च सकर्तृकत्वं तत्र संमतमेव हि भवतीति चेत्-नैवम् । नेयं पृच्छा तथाऽतितुच्छा भवति । निरीश्वरसांख्यैरीश्वरनिषेधस्यैव क्रियमाणत्वात् । आदिविद्वांसः कपिलादय उपदेष्टार इतिवत् विश्वामित्रादिनीत्या प्रलयकालेऽपि शिष्टाः केचित् सर्गारम्भनिर्वाहका भवन्तित्युल्लेखे तस्यापि निषेधो न तैः क्रियते । कथं तर्ह्यत्र सूत्रेषु सामान्यतः कर्त्रनुमानमेवोक्तमिति चेत्-उच्यते । एवममंस्त अमन्यत

परस्परविरोधः। अयमत्र भावः—यत् येन प्रमाणेन साधयितुं योग्यम्, तदेव हि तेन प्रमाणेन बाधितुमपि शक्यते। यथा प्रत्यक्षसिद्धो घटादिस्तेनैव प्रत्यक्षेण बाध्यते; न पुनः प्रत्यक्षाविषयः परमाण्वदृष्टादिः प्रत्यक्षेण बाध्यते। एवमनुमानाविषयत्वादीश्वरः साधयितुं बाधितुं च(वा) न शक्यत इति सूत्रकारस्याभिप्रायः। अयमत्रान्वयः—अनुमानस्येश्वरसदसद्भावरूपोभयार्थनियमादर्शनात् सदसद्भावप्रतिपादनमशक्यमिति ॥ १८० ॥

(१८१) सत्त्वाद्यान् द्रव्यभेदांस्त्रिगुणमिति समाहारतः कल्पयन्तः
तेषां नित्यं विभुत्वे समविषमदशाद्यत्र कीदृक् वदेयुः।
अन्योन्याध्यासक्लृप्तिः प्रकृतिपुरुषयोर्भोगमोक्षोपपत्त्यै
छायापत्त्यादिनीत्या कथमियमुभयाचेतनत्वे घटेत ॥ ६ ॥

अत्र साङ्ख्योक्तप्रक्रियाद्वयं पूर्वोत्तरार्धाभ्यामनूद्य दूषयति—सत्त्वाद्यानिति। समाहृतानि समुदितानि सत्त्वादीनि त्रिगुणमित्यत्र दूषणमाह—कल्पयन्त इत्यादिना। सत्त्वादीनां साम्ये संहारः, वैषम्ये सृष्टिरिति हि साङ्ख्यानां परिक्लृप्तिस्तेषां विभुत्वादेव वक्तुं न शक्यते; विभूनां वैषम्यस्य कथयितुमयोग्यत्वादिति। अपरा चेयं कल्पना—जीवगतं भोक्तृत्वं प्रकृतावध्यस्यते; प्रकृतिगतं कर्तृत्वं जीवेऽध्यस्यते; तेन कर्तृत्वभोक्तृत्वयोरन्योन्य(रेक)निष्ठत्वेनाध्यासात् संसारमोक्षयोरुपपत्तिरिति। अयमत्र शब्दान्वयः—प्रकृतिपुरुषयोरन्योन्याध्यासक्लृप्तिः संसारमोक्षयोरुपपत्त्यै जपाकुसुमरागस्य स्फटिकच्छायापत्त्यादिनीत्या परिकल्प्यत इति। तदिदं दूषयति—

---

सूत्रकारः—जगत् सकर्तृकं कार्यत्वादित्यनुमानं तावन्निर्दुष्टम्। ततः सिध्यन् कर्ता जीवसंघ एवेत्यत्र यदि किञ्चित् प्रमाणमुपलभ्यते, तदपि न निषेध्यम्। यदि च तद्विलक्षणः सर्वज्ञ इति विशेषे, तदपि दुर्निषेधम्। उभयथाऽप्युपपन्नत्वात् नेदमीश्वरैकान्तमीश्वरनिषेधकं वा। यदि विशिष्येश्वरं कश्चित् साधयेत् वारयेद्वा, तदा साध्याप्रसिद्धिरूपदोषदुष्टो हेतुः। अतः साध्यविशेषनिरूपितव्याप्तेः, तदभाव निरूपितव्याप्तेश्च दुर्ग्रहत्वमेव। किण्वादेर्विरूपात् तण्डुलादेरप्युत्पत्तिदर्शनात् सुप्रसिद्धकारणविजातीयमपि कारणं भवेत्; न तु सर्वथैव कर्त्रभाव इत्यर्थज्ञापनपरः सूत्रकार इति ॥ १८० ॥

६. एवं सांख्योक्तानां दृष्टान्तानां पक्षकोटिनिविष्टत्वात् प्रथमसूत्रोक्तमनुमानमव्यभिचरितम्, नापि सूत्रे व्याघात इत्युक्तम्। अत्राधिकरणे, 'व्यतिरेकानवस्थितेश्चानपेक्षत्वात्' इति सूत्रेण कलिच्छादिरूप नियामकनिरपेक्षत्वात् सृष्टिव्यतिरेकदशाया अप्यवस्थितिः कथमित्युक्तम्। 'अङ्गित्वानुपपत्तेश्च' इत्यनेन च सत्त्वरजस्तमोगुणेषु कदाचित् कस्यचिदंगित्वम्, कस्यचिदंगत्वम्—अप्राधान्यमिति, सृष्टिनियामकं वैषम्यं कथमित्युक्तम्। तदुभयं पूर्वार्धेनाह। उत्तरार्धेन चान्यसूत्रद्वयार्थम्। प्रथमपादेन प्रथमसूत्रगतचकारार्थो भाष्यदर्शितोऽपि ज्ञापितो भवति। सत्त्वाद्यानिति। अयमर्थः—सत्त्वरजस्तमांसि प्रधानस्य द्रव्यस्य किं गुणाः, किं वा त्रीण्यपि द्रव्याण्येव समाहारात् प्रधानमित्येकत्वम्। आद्ये, समन्वयादिति सांख्यकारिकास्थेन पदेन कार्येऽन्वितत्वात् सत्त्वादीनां कारणत्वमित्युक्तिर्न घटते; लोके कार्येऽन्वितानां शौक्ल्यादिगुणानां तत्कारणत्वादर्शनात्। अन्त्ये, द्रव्यत्रयाभिधयात् चतुर्विंशतिसंख्याविरोधात्। जगत एकद्रव्यमूलकत्वोक्तिव्याघातश्च। तेषां नित्यविभुत्वमेव तदिष्टम्। अन्यथा कार्यस्यैकैकस्य

कथमियमिति। विद्यमानमेव ह्यन्यत्र कल्प्यते न पुनरविद्यमानम्। इह तु चेतनत्वं जीवे न विद्यते, जीवस्य ज्ञानमात्रत्वेन चेतनत्वस्य भवद्भिरनङ्गीकारात्। नापि प्रधाने चेतनत्वम्, अचेतनस्वभावत्वादेव। ज्ञानचिकीर्षाप्रयत्नवत्त्वमेव हि कर्तृत्वम्, त्रयाणामपि जीवनिष्ठत्वेन प्रकृतिसम्बन्धो नास्त्येव। न च भोक्तृत्वं (कर्तृत्वं) जीवनिष्ठम्, भवत्पक्षे पुरुषस्य पुष्करपलाशवन्निर्लेपत्वेन ज्ञानादिसर्वधर्मविधुरत्वात्। तेनोभयत्रोभयमपि नास्तीत्यन्योन्याध्यासक्लृप्तिर्न घटत इति ॥ १८१ ॥

(१८२) पुंसां भोगापवर्गप्रभृति फलमिदम्, तच्च सर्वं प्रधाने ;
द्रष्टृत्वादेश्च क्लृप्तः(प्तिः) पुरुष इह पृथक् द्रष्टृतादिश्च बुद्धौ।
मुक्त्यै बद्धस्य शास्त्रं मुनिरकृत ततो नित्यमुक्तोऽस्मि(पि?) चेत्या-
द्यन्योन्यध्याहतोक्तिं वृषलपरिणये जैनभक्ता जपन्तु ॥ ७ ॥

---

त्रिगुणत्वासंभवापत्तेः। तथाच विभुद्वयसंयोग एष्टव्यः। तेषां समसंबन्धाच्च वैषम्यदशैव न स्यात्। अतो न सर्गः स्यात्। वैषम्यनियमे, प्रलयावस्था न स्यात्। कीदृक् किमधीनम्। दृशादीति द्वितीयान्तम्। अथ, 'अभ्युपगमेऽप्यर्थाभावात्, 'अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात्' इति सूत्रद्वयार्थः— समविषमदशापन्नप्रधानस्वीकारेऽपि भोगमोक्षरूपप्रयोजनं न सिध्यति। चैतन्यमात्रस्वरूपेषु जीवेषु चैतन्यवत्त्वाभावात्। ननु प्रकृतिदर्शनं नाम ज्ञानविशेषः। ज्ञानश्च विषयसंबन्धोऽन्तःकरणरूपप्रकृतिगतः। तस्याऽऽत्मनि चैतन्येऽध्यासः। सैवोपलब्धिः। विषयसंबन्ध एवायं वृत्तिरित्युच्यते। न च वृत्तेर्जडायाः कथं सविषयकज्ञानरूपत्वमिति शंक्यम्; स्वप्रकाशस्याऽऽत्मरूपचैतन्यस्य वृत्तौ प्रतिफलनात् वृत्तेर्ज्ञानत्वोपपत्तेः। एवमन्तःकरणगतसुखादीनां चैतन्ये आत्मनि अध्यासात् तस्य भोक्तृत्वम्। यदा च प्रकृतिपुरुषयोर्विवेकः, तदा सर्वेषामेषां धर्माणामात्मनिष्ठत्वाभावज्ञानात् मुक्तत्वसंपत्तिश्चेति चेत्— इयं भोगमोक्षोपपत्त्यै प्रकृतिपुरुषयोश्छायापत्त्यादिनीत्या अन्योन्याध्यासक्लृप्तिः कथं घटते। उभयोरप्यचेतनत्वात्। अयमर्थः— जपाकुसुमप्रभारूपच्छायायाः स्फटिके संबन्धात् तद्गतमारुण्यं स्फटिके आरोप्यते, अग्निसंतप्ते चायःपिण्डे अग्निगतमौष्ण्यमारोप्यते। इदमादिपदग्राह्यम्। तद्वत् आत्मगतचैतन्यस्यान्तःकरणे अध्यास इति आत्मनः चैतन्याश्रयत्वे घटेत। आत्मा हि त्वन्मते चैतन्यमेव; न तु चैतन्याश्रयः। यच्चान्तःकरणगतस्य ज्ञातृत्वस्याऽऽत्मन्यध्यास उपलब्धिरिति। इदमपि न घटेत। अन्तःकरणस्य जडत्वात् चैतन्याभावात्। आरोपितं चैतन्यमिति चेत्— आरोपितत्वोक्तिस्तत्र तदभावोक्तिरेव। अतश्च तत्राविद्यमानस्य तस्मादात्मन्यारोपः कथम्। ननु चैतन्ये विषयग्राहित्वमस्ति। तत् वृत्तावारोपितमिति चेत्— निर्विकारस्यात्मनो ग्राहित्वं कथम्। तत्सत्त्वे साक्षादेव भोगोपपादनान् अध्यासक्लृप्तिः कुतः। अध्यासस्याप्युपलब्धित्वाभिमतस्य विकारत्वात् निर्विकारत्वेन त्वदभिमते आत्मनि सोऽपि कथम्। प्रकृत्यात्मविवेकश्चात्मनोऽत एव दुर्वचः। अतो न मोक्षस्याप्युपपत्तिरिति ॥ १८१ ॥

७. अथ, 'विप्रतिषेधाच्चासमञ्जसम्' इत्यन्तिमसूत्रभाष्यार्थं संगृह्णाति पुंसामिति। व्याह-

साङ्ख्योक्तानामर्थानां सर्वेषामपि परस्परविरुद्धस्वभावत्वात् वृषलोद्वाहमन्त्रन्यायमातोद्-
शति—पुंसामिति । पुरुषाणां भोगापवर्गप्रवृत्त्यादिकं फलं भवति भोगापवर्गयोः पुरुषार्थशब्द-
वाच्यत्वादिति साङ्ख्याः स्वयमेव प्राहुः । अथापि, 'संसरति बध्यते मुच्यते च नानाश्रया
प्रकृतिः' इति प्रकृतेरेव भोगापवर्गौ भणन्ति । तदिदमाह—तच्च सर्वं प्रधान इति । अयमेको
विरोधः । विरोधान्तरमपि, 'सङ्घातपरार्थत्वात्' इत्यादिना प्रकृतिद्रष्टृत्वेन क्लृप्तः पुरुषः; द्रष्टृत्वं
पुनरन्तःकरणस्येति तत्रतत्र भणन्ति साङ्ख्याः। अयमप्यन्योन्यविरोधः। तदिदमाह—द्रष्टृत्वादेरिति ।
तृतीयमपि विरोधमाह—मुक्त्या इति। जीवस्य बद्धस्य मुक्त्यै सांख्यशास्त्रं कपिलमुनिरकृत ;
ततो नित्यमुक्तोऽस्म्यहमित्यादिपरस्परव्याहतोक्तिं वृषलपरिणये शूद्रविवाहे जैनभक्ताः परस्पर-
विरुद्धव्यवहारप्रवर्तकजैनसिद्धान्तभक्तास्साङ्ख्याः प्रवदन्तु। जैनानां व्याहतभाषित्वं स्याद्स्तीत्यादि-
सप्तभङ्गीप्रलापात् । वृषलपरिणय इति द्रमिडदेशीयोऽयं व्यवहारः । तस्मिन् देशे याजकाः
"अश्मानं पादेन प्रहर प्रहृत्य च न प्रहरामीति वद, असत्यवचनप्रायश्चित्तार्थमस्माकं द्रोणद्वयपरिमितं
धान्यं प्रयच्छ' इति मन्त्रं पाठयन्ति । तेन साङ्ख्यसिद्धान्तः सर्वोऽपि परिहासास्पदमित्यर्थ इति ॥

इति वचनानुपपत्त्यधिकरणम् ॥ ४६ ॥

---

तोक्तिबहुलं सांख्यशास्त्रम् । यथा—'पुरुषोऽस्ति भोक्तृभावात्' इति अकर्ताऽपि पुरुषो भोक्ता भवतीति पुंसां भोगाख्यः संसारः फलमित्युक्तम् । 'पुरुषस्य प्रधानदर्शनार्थं तथा कैवल्यार्थश्च प्रकृतिपुरुषसंयोगः, तत्कृतः सर्गः' इति च भोगवत् कैवल्यरूपमोक्षश्च पुंसां फलमित्युक्तम् । एवमुक्त्वा, कथं निर्विकारे इदं सर्वमिति विमृश्य भोक्तृत्वं मुक्तत्वञ्च प्रधानस्यैवेति, 'तस्मान्न बध्यतेऽद्धा न मुच्यते नापि संसरति कश्चित् । संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः' इति कारिकयोक्तम् । एष व्याघातः । तथा, 'नास्मि न मे नाहमित्यपरिशेषम्....उत्पद्यते ज्ञानम्' इति, 'न विकाररूपधर्माश्रयोऽस्मि नाहंकर्ता, न च मे फलस्वाम्यम्' इति यथावत् स्वदर्शनं मुक्तिहेतुर्भवति पुरुषस्येत्युक्तम् । एवं, 'प्रकृतिं पश्यति पुरुषः', 'पुरुषस्य दर्शनार्थम्', 'या दृष्टाऽस्मीति पुनर्न दर्शनमुपैति पुरुषस्य' इति पुरुषस्य सर्वद्रष्टृत्वम्, 'दृष्टा मयेत्युपेक्षकः' इत्युपेक्षकत्वम्, 'अधिष्ठानात्' इत्यधिष्ठातृत्वञ्चोक्त्वा तद्विरुद्धतया बुद्धौ प्रकृतिपरिणामभूतेऽन्तःकरण एव द्रष्टृत्वादिकम्, 'गुणकर्तृत्वे च तथा कर्तेव भवत्युदासीन' इत्यनेनोक्तम् । अत्र क्लृप्तिरिति पाठे पुरुषे इति सप्तमी क्लृप्तः इत्येव प्राच्य. पाठ ; पुरुषः इति विभागः । द्रष्टृत्वादेरिति पञ्चमी । 'कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च" इति अन्तःकरणादेरचेतनत्वात् द्रष्टृत्वायोगात् द्रष्टृत्वादिना पृथक् पञ्चविंशत्वेन पुरुष. क्लृप्तः=अनुमितः । अथ पुरुषस्य निर्विकारत्वात् तदयोगात् बुद्धेरेव द्रष्टृत्वादिकमिति कथनं व्याहतमेवेति । एवं दुःखत्रयाभिघातात् जिज्ञासा तदपघातके हेतौ' इति पुंसां मुमुक्षुत्वात् मुक्त्यर्थमिदं शास्त्रं मुनिरकरोत् ; ततः शास्त्रात् , 'न बध्यते नापि संसरति कश्चित्' इत्यस्मात् बन्धात्यन्ताभावरूपनित्यमुक्तिमानपि ज्ञायते श्लोके ततो नित्यमुक्तोऽस्मीत्यत्र अस्मीत्येतन्न स्वरसम् ; ततः शास्त्रात् नित्यमुक्त इति चाऽऽत्मा ज्ञायते, शास्त्रेण तथोच्यत इति व्याघातः प्रदर्श्यः । तत इति पञ्चमी ज्ञापकत्वे इति वक्तव्यम् । ततश्शब्दः अथेत्यर्थकस्सन् पक्षान्तरपरो वा । एवमन्योन्यव्याहता उक्तयो न सत्परिषदर्हाः । यदि कृतस्य कश्चिदुपयोगोऽपेक्षितः, तर्हि

४७ ॥ अथ महद्दीर्घाधिकरणम् ॥ २-२-२ ॥

सूत्रम्—महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ उभयथापि न कर्मातस्तदभावः ॥ समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ नित्यमेव च भावात् ॥ रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥ उभयथा च दोषात् ॥ अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ ९-१५ ॥

(१८३) कल्प्योपादानमेकं परममहदधिक्षिप्य नानाविधाणू-
पादानौघस्य दृष्टात् समधिकवपुषः कल्पनेऽनिष्टमाह ।
प्राज्ञाधिष्ठानशून्यप्रकृतिपरिणतिः प्राङ् निरस्ताऽथ सेशं
सूक्ष्माणुद्व्यणुकमूलद्व्यणुकमुखजगत्सृष्टिपक्षं पिनष्टि ॥ ८ ॥

अत्राचार्याः पूर्वोत्तराधिकरणयोः सङ्गतिमुभयथा प्राहुः—कल्प्येति । अनुमानपरिकल्प्या मूलप्रकृतिरेव विश्वस्योपादानमिति साङ्ख्यपक्षः पूर्वं प्रतिक्षिप्तः, अधुना पुनरनुमानपरिकल्प्याः नानाभूताः परमाणवो विश्वोपादानमिति परिकल्पनानिषेधः क्रियत इत्येका सङ्गतिः । अपरा—ईश्वरानधिष्ठितप्रधानकारणवादी पूर्वं निरस्तः, अधुना पुनर्निमित्तत्वेनेश्वराधिष्ठितपरमाणूपादानवादी निरस्यत इति सङ्गतिः । सेश्वरसाङ्ख्या न निराकरणीयाः । योगोऽपि तत्तुल्यत्वान्न निराकरणीयः। अतोऽत्र तत्प्रसङ्गाभाव इति पूर्वमेवोक्तम् । शैवमतस्य प्रधानकारणवादसाम्येऽपि पश्चान्निरासस्तु बाह्यत्वाधिक्येनेत्याहुः । इह च वैशेषिकबौद्धयोरपि परमाणुकारणवादित्वे तुल्येऽपि काणादमतस्य

वृषलपरिणये तेरुच्यमानवाक्यान्तरवत् साङ्ख्यमपि प्रयुज्यताम्। यदि तत्रार्थविरोधोऽस्तीति वृषल आक्षिपेत्, तदा जैनमतं भेदाभेदमुपन्यस्य तदेव तत्त्वमिति वञ्च्यताम्। एवं समर्थनेन व्याहृतोक्तिप्रायश्चित्तविधायकः पुरोहितोऽपि वञ्च्यताम् । चिन्तामणौ वृषलपरिणयकालप्रयुज्यमानं वाक्यजातं द्रष्टव्यम् ॥ १८२ ॥

८. साङ्ख्यनिरासानन्तरं वैशेषिकनिरासे संगतिं स्वयमेव द्वेधा दर्शयति कल्प्येति । अधिक्षिप्येत्यस्य आहेत्यत्रान्वयः । पूर्वाधिकरणे अनुमानेनोपादानकल्पनापक्ष एको निरस्तः । अन्योऽत्र निरस्यते । जगदुपादानमेकमिति पक्षो निरस्तः, अथानेकोपादानत्वपक्षक्षेपः । महदुपादानमिति निरस्तम्, अणूपादानमिति निरस्यते । सर्वमिदं प्रथमसंगत्यामन्तर्भूतम् । कल्प्यञ्च तत् उपादानञ्चेति कर्मधारयः । नानाविधत्वमणूनां गुणाधिक्यन्यूनत्वादिकृतपृथिवीत्वाप्त्वतेजस्त्ववायुत्वरूपजातिभेदेन । नास्य समूहस्यैककार्यकरत्वम्; कार्येषु पञ्चभूतोपादानकत्वस्य तैरस्वीकृतत्वात् । किंतु पार्थिवद्रव्यं पार्थिवानेकाणुमूलकम्; एवमन्यदपीति । ननु अणुसंघस्य कल्पनमित्ययुक्तम् । प्रधानस्येवादृश्यमानत्वाभावादित्यत्राह दृष्टात् समधिकवपुष इति । दृष्टा ये जालसूर्यमरीच्यादौ त्रसरेणवः तदपेक्षयाऽन्येषां अदृश्यानां तदुपादानभूतानामणूनामेव तैर्जगदुपादानत्वमनुमितमिति। वपुश्शब्दः स्वरूपपरः। दृष्टाण्वपेक्षया तदणूनां समधिकत्वं नाम अन्यत्वम्; संख्याधिक्यमपि। एकैकस्यापि त्र्यणुकस्य परमाणुषट्कघटिततया संख्याधिक्यावश्यम्भावात् । यद्वा समधिकवपुष इतीदं दृष्टादित्यस्य विशेषणम् । वपुः=परिमाणम् । समधिकं महत् परिमाणं यस्मात् तस्मात् दृष्टादित्यर्थः । महतश्चाक्षुषात् त्रसरेणोर्हेतोः परमाणुकल्पने इत्यन्वयः । त्रसरेणुः सावयवः महत्त्वात् । महत्त्वञ्च चाक्षुषत्वादिति, महत्त्वे सति चाक्षुषत्वात्, मूर्तत्वे सति महत्त्वादित्यादिना हि परमाणुसाधनम् .

प्रथमोपादानं साङ्ख्यवत्-वैदिकत्वाभिमानमात्रादिति चाहुः। तदर्थैविचारस्तु-किं विपाकदशापन्ना-दृष्टसचिवाः परमाणव ईश्वराधिष्ठिता; जगदारम्भका, न वेति। किं परमाणूनां संयोगद्वारावयव्या-रम्भकत्वे कारणान्तरस्थितिः कार्यप्रथिमा (कार्यप्रथिमा वा?)प्रसज्यते, न वे(ने)ति। अत्र प्रथमश्लोकस्य पूर्वोत्तराधिकरणसङ्गतिवादिनोऽयं शब्दान्वयः—कल्प्योपादानमेकम् = अनुमानकल्प्यमुपादानमेकं परममहत् प्रधानं प्रतिक्षिप्य दृष्टात् त्रसरेणोरधिकवपुषो नानाविधाणूपादानौघस्य पार्थिवाप्यतैज-सवायवीयाणूरूपोपादानौघस्य कल्पनेऽनिष्टमाहेत्येका सङ्गतिः। अपरा च सङ्गतिरुच्यते—प्राक्षेति। ईश्वराधिष्ठानशून्यमूलप्रकृतिपरिणतिः पूर्वाधिकरणे निरस्ता, अथास्मिन्नधिकरणे सेश्वरं सूक्ष्माणु-द्रव्यमूलं द्व्यणुकादिक्रमेण जगत्सृष्टिपक्षं पिनष्टि—निराकरोतीत्यर्थः ॥ १८३ ॥

(१८४) प्रागेवाऽऽरम्भणोक्तावपहृतविषया प्रागसद्द्रव्यक्लृप्तिः
काणादानामिदानीं क्षिपति बहुमुखं कारणप्रक्रियांशम् ।
त्रेधा हेतौ विभक्ते ह्यनुमितिशरणैस्तत्तदंशे यथार्हं
व्याघातादीन् विकल्पक्रमविविधगतीन् व्याहरत्यत्र सूत्रैः ॥ ९ ॥

ननु प्रागेवारम्भणाधिकरणे वैशेषिको निरस्तः; किमर्थमिदानीं पुनर्निरस्यत इत्याशङ्क्य प्राचीननिरासादाधुनिकनिरासे वैषम्यमाह—प्रागेवेति। अत्रायं शब्दार्थः—प्रागेवारम्भणाधि-

---

तेन सावयवारब्धत्वसाधने अवयवावयवसिद्धया परमाणुसिद्धिरिति । एवमर्थवर्णने ह्रस्वपरिमण्डलाभ्यां महद्दीर्घवदिति सूत्रार्थः प्रदर्शितो भवति । सूत्रे महादीर्घेत्यनुक्तिः दैर्घ्ये महत्त्वान्वय इति भ्रान्ति-व्युदासाय । शब्दसाधुत्वं तु महच्च दीर्घश्च महद्दीर्घे इति द्वन्द्वात् । महत्त्वदीर्घत्वरूपपरिमाणद्वयमर्थः । ततः अर्शआद्यचि तद्विशिष्टत्रसरेणुरूपद्रव्यलाभः । ह्रस्वपरिमण्डलाभ्यां द्व्यणुकपरमाणुभ्याम् । प्रयोज्यत्वं पञ्चम्यर्थः । परिमण्डलजन्यह्रस्वजन्यं महद्दीर्घमितिवत् सर्वमसमञ्जसमित्यर्थः । पूर्वसूत्रात् असमञ्जसपदानुषंगात् : एवं पूर्वार्धेन संगतिरेका दर्शिता । द्वितीया चोत्तरार्धेन । निरीश्वरप्रधानकारण-वादनिरासः पूर्वम्; सेश्वराणुकारणवादनिरास इहेति । प्रधानकारणकत्वमिष्टम्, न तु तन्निरीश्वरत्वम् । ईश्वरकारणकत्वमिष्टम्, न त्वणूपादानकत्वमिति विवेकः । सूक्ष्मेति । सूक्ष्माणुः परमाणुः । परमाणु-मूलकद्व्यणुकमूलकं जगदिति पक्षं पिनष्टि प्रतिक्षिपतीति ॥ १८३ ॥

९. आरम्भणाधिकरणेनास्य पौनरुक्त्यमाशंक्य परिहरति प्रागेवेति । प्राक् पूर्वपादे आरम्भ-णाधिकरणे काणादानां वैशेषिकाणाम् असद्द्रव्यक्लृप्तिः तत्कर्तृकं द्रव्यभूतासत्कार्यकल्पनं-तदनुमानम् अपहृतविषया बाधिता । अवयवातिरिक्तावयविवादः परं तत्र निरस्तः कार्यकारणैक्यस्थापनार्थम् । इदं तु परमाणुपुञ्जात्मकं जगदिति बौद्धवत् स्वीकारेऽपि घटते । तावता परमाणुद्रव्यद्व्यणुकद्रव्यनिरासो न सिध्यति । अत्र तु द्वाभ्यां परमाणुभ्यां निरवयवाभ्यां द्व्यणुकम् । तैस्त्रिभिः त्र्यणुकमित्येवं विलक्षणमणु, तन्निरवयवत्वं कारणत्वे तत्संख्यानियमः तद्गतपरिमाणस्य परम् अत्यन्तविगतपरिमाणं प्रति कारण-त्वाभावः द्वित्वत्रित्वसंख्याहेतुकत्वं तत्र परिमाणस्येति कारणप्रक्रियाया अंशं क्षिपतीत्यर्थः। सूत्रे वतिप्रत्यय-विवक्षितमाह त्रेधेति । कणादः स्वसूत्रग्रन्थे प्रथमतः कार्यकारणभावनिरूपण एव त्रैधर्यं दर्शयन् समवायि

करणे प्रागसद्द्रव्यकल्पनविरपह्नतविषया काणादानामिति सत्यमेतत्, तथापीदानीं कारणप्रक्रियांशं प्रतिक्षिपति । समवायिकारणम् असमवायिकारणं निमित्तकारणमित्यादिप्रक्रियाभेदान् प्रतिक्षिपतीत्यर्थः । उक्तमेव विवृणोति—त्रेधेति । अनुमितिशरणैः काणादादिभिः समवाय्यसमवायिनिमित्तभेदेन त्रेधा हेतौ विभक्ते सति तत्तदंशे व्याघातादीन् विकल्पक्रमेण विविधप्रकारान् बाधकान् अस्मिन् अधिकरणे सूत्रकारो व्याहरतीति न पौनरुक्त्यप्रसङ्ग इति ॥ १८४ ॥

(१८५) दृष्टस्याणोः प्रसूतिं द्व्यणुकमणुमपि स्थापयन्तोऽनुमित्या
दृष्टाकारानुसाराच निरवयवतायत्र वक्तुं क्षमेरन् ।
सर्वं सह्येत सूक्ष्मे प्रमितिपरवतां(ता?) जालकालोकलक्ष्ये
वक्तृागान् रूपायेद्(द्या?)स्मृतिरफलतया त्वा(सा ऽऽ?)न्यपर्येण नेया ॥१०

दृष्टं तावत् सर्वलोकसम्प्रतिपत्त्या जालसूर्यमरीचिस्थं द्रव्यं यत् तदेव, अणुतारतम्यं क्वचिद्विश्रान्तं परिमाणतारतम्यत्वादित्याद्यनुमानस्य विषयभूमिरिति तान्त्रिकाः । वेदान्तिनश्च तथैवानुमेनिरे । काणादास्तु ततः परमपि द्व्यणुकपरमाणुरूपद्रव्यद्वयमनुमानादन्यस्मात् कल्पयन्ति, विप्रतिपन्नं जालसूर्यमरीचिस्थं द्रव्यं सावयवं चाक्षुषद्रव्यत्वात् घटवदिति । तदेतदनुवदति—दृष्टस्येति । एवमनु-

असमवायि-निमित्तभेदेन त्रैविध्यमचकथत् । दर्शननिगमने च पुनरिदं प्रतिसंधापयामास । अयमंशः सर्वथा न घटते । अवयविद्रव्याभावात् तत्कारणचिन्तनमेव न स्थाने ; कथं तत्प्रभेदस्य । अत एवावयवद्वयसंयोगो नासमवायिकारणम् । अत एवावयविनि अवयवगतगुणजन्यगुणप्रसक्त्यभावात् तत्कारणत्रयमपि कल्पनामात्रम् । एवमुपरितनसूत्रैः विकल्पपूर्वकदोषोपन्यासश्चिकीर्षितः—आद्यं परमाणुकर्म समूलकम्, अमूलकं वा । समूलकत्वे कर्मकारणतया क्लृप्तं यत् कारणं तन्मूलकं वा, अदृष्टमात्रमूलकं वा । अदृष्टमपि भूतनिष्ठम्, आत्मनिष्ठं वा । तथा समवायीति प्रयोगः समवायसत्त्वे । तत्रैव न प्रमाणम् ; अनवस्था वा । स नित्योऽनित्यो वा । परमाणवश्च कार्यद्रव्यवत् रूपादिमन्तो न वेत्येवं विकल्प्य तत्रतत्र तदभिमतविपरीतगतिदर्शनात् व्याघात-अपसिद्धान्त-गौरव-अनुभवविरोधादिकं शिष्टापरिग्रहातिशयश्च सूत्रैर्वदतीति । उपरितनैः पद्यैः कतिपयविशदीकरणं द्रष्टव्यम् ॥ १८४ ॥

१०. महति दीर्घे त्रसरेणौ ह्रस्वपरिमण्डलजन्यत्वायोगमेव विवृणोति दृष्टस्येति । "रूपादिमत्त्वाच्च विपर्ययो दर्शनात्" इति सूत्रार्थोऽप्यत्रैवमुक्तो भवति । जालसूर्यमरीच्यादौ चरत् अतिसूक्ष्ममणु प्रत्यक्षसिद्धम् । तस्य रूपादियुक्तस्य सूक्ष्मप्रकृतिविलक्षणस्य सिद्धान्तेऽपि कार्यत्वमविवादम् । अथापि कार्यद्रव्यसामान्य स्वावयवसंयोगवशादेव जायत इति स्वयमेकां कल्पनां विधाय तस्य प्रसूति--कारणं तदवयवात्मकं कल्पयन्तः तस्यापि सावयवतया कारणान्तरमावश्यकमिति विभावयन्ति । दृश्यमानस्य त्रसरेणो दृश्यमानत्वादेव महत्त्वमेष्टव्यम् । महत्त्वञ्चानेकद्रव्यवत्त्वनियतम् । अनेकद्रव्यवत्त्वञ्च अनेकद्रव्यसाध्यद्रव्यसमवेतत्वम् । तथाचेदमनेकं द्रव्यं परमाणु । तत्साध्यद्रव्यं द्व्यणुकम् । तत्समवेतत्वमस्य । तत्रान्ततोऽवयवद्वयाभावे संयोगासंभवादणुद्वयीकारे अणुद्वयसंयोगात् द्रव्योत्पत्तिरिति तस्य द्व्यणुकमिति नाम । तस्य द्व्यणुकान्तरसंयोगे त्रसुरेणूत्पत्तिसंभवेऽपि उपर्युपरि स्थूलकार्योत्पत्तिशैघ्र्याय

मानं वदतां वैशेषिकादीनां दृष्टानुसारेणोत्तरोत्तरं कल्प्यम्; अनुमानशरणत्वात्। अनुमाने च दृष्टानुसारस्य न्याय्यत्वात्। तथा च निरवयवारब्धत्वं क्वचिदन्यत्र न दृष्टमिति अत्रापि निरवयवारब्धत्वं कल्पयितुमेव न शक्यते। तथाच न परमाणुसिद्धिः। तदिदमाह—दृष्टाकारानुसारादिति। नन्वणुतारतम्यं क्वचिद्विश्रान्तमिति परमाणुविश्रमोऽस्माभिः प्रमाणबलात् स्वीक्रियत इति चेत् स्वीक्रियतां नाम विश्रमः, अथापि न भवदभिमताप्रत्यक्षपरमाणौ विश्रमः, अपित्वस्मदभिमतजालसूर्यमरीचिस्थद्रव्येऽणुपरिमाणतारतम्यविश्रम इति विश्रमानुमानं सार्थकमेव। अतो न भवदभिमतपरमाणुसिद्धिः। नन्वस्मदभिमतपरमाणौ(णावपि) युष्मदभिमतजालसूर्यमरीचिस्थपरमाणावपि कृत्स्नैकदेशविकल्पानुपपत्तिस्तुल्या। तत् कथं तत्रापि विश्रमः स्वीक्रियत इत्यत्रोत्तरम्-सर्वं सह्येतेति। नहि दृष्टेऽनुपपन्नं नामेति न्यायः। दृष्टं च जालकालोकमध्यस्थम्। त्वदभिमतः परमाणुर्न दृष्टः। तेन दृष्टे तस्मिन् सर्वमपि दूषणाभासजातं सोढुं शक्यते प्रत्यक्षप्रमाणपरतन्त्राणामस्माकम्। केवलम(ला)नुमानशरणानां भवतां न सोढुं शक्यते। तेन न युष्मदभिमतपरमाणुसिद्धिः। किंच लाघवम[ष्य]स्माकमनुग्राहकतर्कः; दृष्टमात्रे विश्रमात्। भवतां तु गौरवं बाधकतर्कः; दृष्टादधिकयोर्द्व्यणुकपरमाण्वोः कल्पनादिति।

---

द्व्यणुकत्रयमेळनात् त्रसरेणूत्पत्तिरिष्यते। ततस्तस्य त्र्यणुकमिति नामेत्याहुः। एवं द्व्यणुकं तत्कारणं परमाणु चादृश्यमानमपि कल्पयन्ति तार्किकाः। न तथा **तान्त्रिकाः**=मीमांसकाः।

एवं कल्पयन्तस्तस्य परमाणोरपि तुल्यन्यायेन सावयवजन्यत्वमेव कल्पयितुं प्रभवन्ति, लोके घटादिकार्यकारणभूततदवयवकारणभूतस्य तदवयवस्यापि सावयवत्वस्यैव दर्शनात्। एवं कार्यत्वादिदर्शनात् तदपि परमाणौ स्वीकार्यम्। अतस्तत्र निरवयवत्वाकार्यत्वनित्यत्वनित्यरूपादिगुणवत्त्वादिकं वक्तुं न क्षमेरन्। एवं निरवयवे परमाणौ प्रदेशभेदस्य दुर्वचतया परमाण्वन्तरसंयोग तत्र प्रादेशिकतया स्वीकर्तुमपि न क्षमेरन्। अतश्च पृथुकार्योत्पत्तिरेव न स्यात्। ननु दृश्यमानानेकत्रसरेणुमिथोमेलनवशात् स्थूलतरकार्योत्पत्तिर्लोकदृष्टा नापलपितुं शक्यते। तत्र निरवयवत्वम्, तथात्वेऽपि प्रादेशिकसंयोगाश्च यथा स्वीक्रियन्ते, तथा परमाणावपि किं न स्यादिति चेत्–प्रतिवक्ति सर्वमिति। दृश्यमानं वस्तु यथायथा दृश्यते, तथातथा स्वीकार्यम्। अत एव, 'न हि दृष्टेऽनुपपन्नं नाम' इति न्यायः। त्वया तु त्रसरेणोः सावयवत्वं स्वीकृत्यैव प्रादेशिकसंयोग उपपादितः। तस्य तद्गतगुणस्य च कार्यत्वादिकं स्वीकृत्यैव तत्कारणकल्पना च कृता। अत उपर्युपर्यप्येवमेव त्वया कल्पनीयं भवेदिति न विश्रान्तेरवसर इति। **प्रमितिपरवतां** प्रत्यक्षप्रमितिदर्शितरीतिमाश्रित्य वस्तुतत्त्वस्वीकारिणां तृतीयान्तपदं वा। त्रसरेणावेव निरवयवत्वादिस्वीकारेणाव्याप्यवृत्तिसंयोगादिमत्त्वस्थूलकार्यजनकत्वादिकं सह्येत=युक्तमिति मन्येत। अतो न द्व्यणुकपरमाणू॥

ननु शास्त्रबलादेव परमाणुस्वीकारः, तथा हि स्मर्यते, 'जालसूर्यमरीचिस्थं सूक्ष्मं यत् परिदृश्यते। तस्याष्टमो वा षष्ठो वा भागोऽणुः परिकीर्तितः' इति **शिल्पशास्त्रे** देवताविग्रहप्रमाणनिर्णयावसरे, 'जालसूर्यमरीचिस्थं सूक्ष्मं चास्ति त्रुटेः परम्। भागोऽष्टमस्तृतीयो वा परमाणुरितीरितः' इति धर्मशास्त्रे स्वर्णस्तेयादिनिर्णयावसरे इति **आनन्ददायिन्याम्**, "ननु त्रसरेणोरष्टमः षष्ठो वा भागः

ननु क्वचित्स्मृतौ त्रसरेणौ वैशेषिकोक्तप्रक्रियया भागान् अनुसृत्य त्रसरेण्वादिपरिमितहिरण्यादिदाने फलनिर्देशो दृष्टः। तत् कथं त्रसरेणोर्निरवयवत्वं भवताऽभिधीयत इत्याशङ्क्याह-तद्भागानिति। तस्याः स्मृतेस्तद्भागख्यापने तात्पर्यं नास्त्येव; अफलत्वात्। ख्यापयेद्वेत्यत्र मा वेति शेषः। आन्यपर्येण नेया = तद्भागख्यापने प्रयोजनाभावात् त्रसरेण्वादिपरिमितद्रव्यदाने तात्पर्येणान्यपरत्वेन नेयेत्यर्थ इति ॥ १८५ ॥

(१८६) विश्रान्तिर्न क्वचिच्चेत् अवयवनिवहानन्त्यतो मानसाम्यं
माषक्षोणीभृतोः स्यादिति यदि, तदसत्, तारतम्यादनन्ते ।
वैषम्यं पक्ष्ममासप्रभृतिषु नियतं न ह्यनन्तेष्वनिष्टम्;
पारार्थ्यश्च जात्योर्न किमनुकथितं व्यक्त्यनन्तत्वसाम्ये ॥ ११ ॥

अत्र चानन्तावयवारब्धत्वे मशकमातङ्गयोरविशेषप्रसङ्ग इत्यादीनामुन्मत्तभाषणानां तत्त्वमुक्ताकलापादिष्वनेकप्रबन्धेषूक्तमपि [उत्तरस्मिन् निबन्धेऽपि] दिङ्मात्रेण दर्शयितुमुपक्रमते-विश्रान्तिरिति। इत्थं किल परमाणुकारणवादिनः प्राहुः, 'परमाणोरनन्तावयवारब्धत्वे मशकमातङ्गयोरनन्तावयवारब्धत्वाविशेषात् परिमाणतारतम्यं न स्यात्' इति। तदिदमभिधीयते-विश्रान्तिरिति। न क्वचित् परिमाण विश्रान्तिश्चेत्, अवयवनिवहानन्त्यात् माषमहीभृतोर्मानसाम्यं स्यादिति यदि वदसीति। अनूदितमर्थं प्रतिक्षिपति—तदसदिति। असत्त्वे हेतुमाह—तारतम्यादिति। अनन्तेऽपि तारतम्यस्य

---

परमाणु'रिति सर्वानुमतैः शिल्पिनां शास्त्रैः धर्मशास्त्रैः तन्मूलश्रुत्या च परमाणुसिद्धिः स्यात्" (1-19) इति सर्वार्थसिद्धिव्याख्यायामुदाहृतं द्रष्टव्यम् ॥ तत्राह तद्भागानिति। जालकालोकालोकलक्ष्यस्याणुत्मस्यापि भागान् ख्यापयेदित्यर्थः। ख्यापयेद्वा इति पाठो लक्ष्यते। वाशब्दस्य, "उपमायां विकल्पे वा" इत्यर्थद्वय एव प्रसिद्धिः। अतः अव्ययानामनेकार्थत्वमिति यथेच्छं वर्णनायोगात् ख्यापयन्ती इति पाठ उल्लिखितः। यदि त्वान्यपर्येणेत्यत्र तुशब्दोऽपि त्यज्यते, 'तद्भागान् ख्यापयेद्या स्मृतिःस्फलतया साऽऽन्यपर्येण नेया' इति पाठः समुचितः। स्मृतिवाक्यस्य तत्त्वनिरूपणार्थत्वाभावात् विध्यन्तरशेषत्वात् स्तुतिनिन्दार्थवादरूपत्वात् षष्ठत्वाष्टमत्वतृतीयत्वादिविकल्पोल्लेखादव्यवस्थादर्शनात् परमतानुवादमात्रत्वावसायाच्च न तत्त्वनिर्णायकत्वम्। औपाधिकप्रदेशकल्पनयाऽप्युपपत्तिरिति। शेषं सर्वार्थसिद्धौ तद्व्याख्याने चास्मदीये अलभ्यलाभाख्ये द्रष्टव्यम् ॥ १८५ ॥

११. महत्त्वरूपपरिमाणतारतम्यस्येव अणुपरिमाणतारतम्यस्यापि क्वचित् विश्रान्तत्वं वक्तव्यम्, परिमाणतारतम्यत्वादितीदं सिद्धान्ते घटत एव। दृश्यस्य त्रसरेणोरेव परमाणुत्वस्वीकारात्। एतत् विहायाधिककल्पनायां तुल्यन्यायादनवस्था तार्किकं प्रत्यापादिता। तत्र स प्रतिवक्ति, अनवस्था चेत्, मेरोरिव सर्षपस्यापि अनन्तावयवकत्वाविशेषात् इयत्तानवधारणात् तुल्यपरिमाणत्वापत्तिः। अतः स्वाभिमते परमाणौ विश्रम इति। इममनुकूलतर्कं निरस्यति विश्रान्तिरिति। इयत्ताया दुर्ग्रहत्वेनावयवानन्त्यसद्भावेऽपि तत्तदानन्त्ये न्यूनत्वाधिकत्वरूपतारतम्यमस्ति। तत् परिमाणतारतम्यप्रयोजकम्। आनन्त्ये तथाविधतारतम्यं चेष्टं त्वन्मत एव दृष्टञ्चेति। शब्दार्थस्तु--माषस्य धान्यविशेषस्य क्षोणीभृतः

विद्यमानत्वादित्यर्थः। एकपरमाण्ववयवानन्त्यात् पर्वतप्रविष्टानन्तपरमाण्ववयवानन्त्ये वैषम्यस्य वक्तुं शक्यत्वादित्यर्थः। उक्तमर्थं दृष्टान्ताभ्यां विविच्य प्रकाशयति—वैषम्यमिति। अनन्तेष्वपि पक्षमासप्रभृतिषु नियतं दृष्टं वैषम्यं न हि भवतामनिष्टम्। अयमर्थः—व्यतीता मासास्तावदनन्ताः, दिवसाः पक्षा मासा इत्यादयः सर्वेऽपि कालभेदा अनन्ता एव। तथापि पूर्वपूर्वेभ्य उत्तरोत्तरेषामाधिक्यमीश्वरेणापि नापलपितुं शक्यत इति। दृष्टान्तान्तरमपि दर्शयति—पारापर्यमिति। द्विधा हि जातिः परजातिरपरजातिश्च ; पृथिवीत्वादिः परजातिः, घटत्वादिरपरजातिरिति हि भवतां मतम्। तत्राश्रयाधिक्यात् पृथिवीत्वादीनां परजातित्वम्, आश्रयाल्पीयस्त्वात् घटत्वादीनामपरजातित्वमिति भवन्त एव कल्पयन्ति। तथाचाऽऽश्रयानन्त्येऽपि तारतम्यं भवतामेवेष्टमिति भवत्प्रक्रियां भवन्त एव परामृशन्त्विति ॥ १८६ ॥

(१८७) नादृष्टं किञ्चिदन्यत् श्रुतिसरणिजुषां देवतानुग्रहादेः
अन्यत्वे तस्य तज्ज्ञैरधिकृतनवकर्मक्लृप्तिसर्गादौ व्युदस्ता।
यत्ने यत्नानपेक्षां न किमनुमनुते ; स्याददृष्टेऽपि तद्वत् ;
भूतस्थादृष्टवादे द्व्यणुकृदणुगतादृष्टकल्पोऽत्र लूनः ॥ १२ ॥

अत्र, 'उभयथाऽपि न कर्म' इत्यस्मिन् सूत्रे सूत्रकारैरेव वैशेषिकाणाम्, 'अग्नेरूर्ध्वज्वलनम्' इत्याद्युक्तादृष्टकारितकर्मक्लृप्तिर्निरस्ता। तमेवार्थमदृष्टस्वरूपनिरूपणपूर्वकं दर्शयति—नादृष्टमित्यादिना

---

मेर्वादेश्च तुल्यपरिमाणकत्वं स्यात्, यदि क्वचिदवयवधाराविश्रान्तिर्न स्यात्। विश्रान्तिस्वीकारे तदारभ्य गणने संख्यातारतम्यं सुलभमिति भावः। इति यदि=एवं तार्किकः पृच्छेत् यदि, तदसत् ; अनन्तेऽवयवे= अवयवानन्त्ये इति यावत्। तारतम्यसत्त्वात्। तत्र दृष्टान्तमनेकमाह वैषम्यमिति। अनादौ संसारे अतीताः पक्षाः अनन्ताः ; मासाश्च तथा ; संवत्सराश्च। तत्र संवत्सरानन्त्यापेक्षया मासानन्त्यस्य, ततः पक्षानन्त्यस्य, ततो दिनानन्त्यस्य, ततो मुहूर्तानन्त्यस्य चाऽऽधिक्यमवश्यस्वीकार्यम्। व्यापककालस्य सर्वस्यानेकव्याप्यकालघटितत्वात् इदं सर्वसंमतम्। विशिष्य तार्किकमते द्रव्यत्वपृथिवीत्वघटत्वादिजातय इष्टाः। उत्तरोत्तरजातेर्व्याप्यत्वमस्ति। व्यापकजातिः परेति, व्याप्यजातिरपरेति च व्यवह्रियते। इदञ्च पारापर्यम्= परत्वमपरत्वञ्च जात्योः कथम् ; न्यूनव्यक्तिकत्वादपरत्वं जातेः, अधिकव्यक्तिकत्वात् परत्वमिति वक्तव्यम्। व्यक्तीनां संख्यातुमशक्यतया आनन्त्ये सति कथं न्यूनत्वाधिकत्वावगमः। आनन्त्ये तारतम्यमादायैव तत् तत्रोपपाद्यम्। तद्वत् मापमेर्ववयवानन्त्येऽपि तारतम्यात् परिमाणतारतम्योपपत्तिरिति ॥ १८६ ॥

१२. 'उभयथाऽपि न कर्मातस्तदभावः' इति सूत्रे भाष्ये परमाणुगतादृष्टपक्षो जीवात्मगतादृष्टपक्षश्च सर्गादौ परमाणुगतकर्मसाधकत्वेन दर्शितः। तत् किं पक्षद्वयमपि भाष्याभिमतमित्यत्राह नेति। श्रुतिदर्शितमार्गे गच्छतामस्माकं मते अदृष्टपुण्यपापशब्दवाच्यत्वाभिमतं देवतानुग्रहनिग्रहातिरिक्तं न भवति ; अन्ततः ईश्वरप्रसादः पुण्यम्, तत्कृतनिग्रहः पापमिति। जीवगतादृष्टवादिनस्तार्किकाः सेश्वराः। भूतादृष्टवादिनश्च निरीश्वराः। तत्र जीवादृष्टवादे ईश्वरसाधनं निरस्तम् आदौ शास्त्रारम्भे शास्त्रयोनित्वाधिकरणे। तदधिकरणं हि क्षित्यादिकर्तृतयेश्वरानुमाननिषेधकमिव, अचेतनत्वाददृष्टस्य

श्रुतिसरणिजुषामस्माकं देवतानुग्रहादेरन्यददृष्टं नाम किंचिन्नास्ति। अस्याऽदृष्टस्य देवतानुग्रहादेरन्यत्वेन जीवनिष्ठत्वे परिकल्पिते तज्ज्ञैः = तादृग्विधादृष्टस्वरूपज्ञैः अधिकयतनवत्क्लृप्तिः = अदृष्टादधिकस्य यतनवत ईश्वरस्य क्लृप्तिरादौ = शास्त्रारम्भे शास्त्रयोन्यधिकरणे निरस्ता। अयमर्थः-'जीवगतादृष्टादेव विश्वसृष्टिपरिग्रहे हेतुभूतयतनवत ईश्वरस्य कल्पनया किम्?' इतीश्वरकल्पना निरस्ता। नन्वदृष्टस्याचेतनत्वात् तत्प्रेरकत्वेन, अचेतनं चेतनाधिष्ठितमिति न्यायेनेश्वरयत्नापेक्षाऽस्तीत्याशङ्क्य तत्प्रयत्नमेव प्रतिबन्दीकरोति-यत्न इति। ईश्वरयत्नस्याचेतनत्वेऽपि यथा यत्नान्तरं तत्प्रेरकत्वेन नापेक्ष्यते, यत्नान्तरापेक्षायामनवस्थाप्रसङ्गात्, तथैव जीवादृष्टस्याचेतनत्वेऽपि ईश्वरयत्नापेक्षा नास्त्येव। अयमत्र शब्दार्थः-परवादी खल्वीश्वरयत्ने यत्नान्तरानपेक्षां न किमनुमनुते = अनुमनुत एवेत्यर्थः। स्याददृष्टेऽपि तद्वत् = ईश्वरयत्ने यत्नान्तरापेक्षाभाववत् अचेतनत्वे सत्यपि जीवादृष्टेऽपीश्वरयत्नापेक्षा न स्यादेव। तथाच जीवगतादृष्टस्य विश्वकारणत्वे सति नेश्वरसिद्धिरित्यर्थः।

---

तदधिष्ठात्रा चेतनेन भाव्यमिति सर्वजीवादृष्टाधिष्ठातृतयेश्वरानुमानस्यापि निषेधकमेव। अतः ईश्वरानुग्रहाद्यन्यत्वपक्षे तादृशादृष्टाभिसंधिमद्भिस्तार्किकैः कृता या अधिकयतनवत्क्लृप्तिः अदृष्टोत्पादककर्मानुकूलजैवयत्नाधिकस्य अदृष्टाधिकस्य च यत्नस्याऽऽश्रयतयेश्वरस्य कल्पनम्, सा व्युदस्ता। जगदुत्पत्तौ यत्नोऽपेक्षितश्चेत्, परम्परया पुण्यपापकर्मयत्नो जैव एव प्रयोजको भविष्यति। वस्तुतोऽदृष्टमेव यत्नं विनाऽपि शक्तमिति च भाव्यम्। नन्वचेतनमदृष्टं यत्नवन्तमधिष्ठातारमन्तरा कथं कार्यकरमिति चेत्-तदर्थं कल्पितस्य यत्नस्याप्यचेतनत्वात् तदधिष्ठानायान्यदपेक्षितं स्यादित्यनवस्था स्यात्। अतः अदृष्टं कल्प्यमानं धर्मिग्राहकप्रमाणवशात् यत्ननिरपेक्षकार्यकरणसामर्थ्यसंपन्नमेव कल्प्यमिति नेश्वरः सिध्येदिति। एवं वक्तुः जीवादृष्टनिरास एव तात्पर्यम्। तद्वत् भूतादृष्टवादे व्यवस्थाहेतोरीश्वरस्य तैरनंगीकारात् सर्वदा कार्योत्पत्तिः स्यादिति दोषवत्, जीवगतपुण्यादिकर्मणां भूतेष्वदृष्टोत्पादकत्वमयुक्तम् व्यधिकरणत्वादिति तन्निरासको दोषश्च भाषितः। धर्माधर्मलक्षणस्यादृष्टस्याऽऽत्मनिष्ठत्वं तार्किकेष्टम्। भूतादृष्टपक्षश्च संभाव्यते; यथा सांख्याः अचेतनायां बुद्धौ प्रकृतिपरिणामभूतायामेव धर्माधर्माविच्छन्ति आत्मनां निर्विकारत्वात् तदनाश्रयत्वमातिष्ठमानाः। व्रीहीन् प्रोक्षतीत्यादिषु संस्कारकर्मसु क्रियाजनितोऽतिशयः संस्काराख्योऽदृष्टविशेषो व्रीह्यादिष्वेव, तेषामेव क्रियाजन्यफलाश्रयत्वरूपकर्मत्वश्रवणादिति मीमांसकाः। तन्न्यायेन प्रधानयागादिजन्यमदृष्टमपि, यस्य भोग्यस्यानुभवाय जीवैः कर्म क्रियते तत्रैव भोग्ये तत्कारणे वा जातस्थितम्, तद्भोग्यं तं जीवं प्रति आनयतीति युक्तमिति। तार्किकास्तु संस्कारकर्माधीनमदृष्टमप्यात्मन्येव भवतीत्याहुः, तदुक्तं **न्यायकुसुमाञ्जलौ**, "संस्कारः पुंस एवेष्टः प्रोक्षणाभ्युक्षणादिभिः" इति। तत्र मणिकारो विवदते। तत्रास्मद्व्याख्याने विशदं कृतमुपपादनं द्रष्टव्यम्। न केवलमुल्लेखमात्रम्; भूतादृष्टवादो जैनकृत इति **न्यायभाष्यादवगम्यते**। तत्र हि ३-२-७४ सूत्रे, "कस्यचिद् दर्शनम्—अदृष्टं नाम परमाणूनां गुणविशेषः क्रियाहेतुः। तेन प्रेरिताः परमाणवः संमूर्च्छिताः शरीरमुत्पादयन्ति" इति। अत्र कस्यचिदिति पदम् आर्हतस्येति व्याख्यातम्। भूतेषु अवयविषु अदृष्टोत्पत्तिस्वीकारे तत्तद्द्रव्यनाशे तस्यापि नाशः स्यात्; तत्संताने चोत्तरत्र तज्जातीयादृष्टोत्पत्तेरिष्टौ अनन्तादृष्टकल्पना स्यादिति

एवं जीवगतादृष्टपक्षं निरस्य भूतगतादृष्टपक्षे द्व्यणुकृदणुगतादृष्टपक्षोऽत्र लूनः=द्व्यणुककारण-भूतपरमाणुगतादृष्टपक्षो भाष्यकारैरत्र विस्तरेण लूनः=निराकृत इत्यर्थः। अस्मिन् विषये विस्तरो भाष्य एव द्रष्टव्य इति ॥ १८७ ॥

(१८८) नित्यं सम्बन्धमेके निजगदुरपृथक्सिद्धसर्वानुवृत्तम्
नित्यं नित्येष्वनित्येष्वपि कतिचिदिमं तावदायुष्कमाहुः।
तत्तद्द्वन्द्वस्वभावप्रतिनियतिमुचां स्वात्म तेन व्यवस्था
गुर्वी त्वन्यस्य क्लृप्तिः कथमधिकजुषां नानवस्थादिदोषः ॥ १३ ॥

अत्र सूत्रकारः समवाय(व्यसमवायि)क्लृप्तिं स्वयमेव निराचकार। तदेवानूद्य निराकरोति-नित्यमिति। एके = वैशेषिका नित्यं सम्बन्धं निजगदुः। कतिचित् = प्राभाकरा नित्येषु नित्यमनित्येष्वनित्यं तमेव सम्बन्धं प्राहुः। अत्र अनित्येष्विति वचनं नित्यानित्ययोरप्युपलक्षणम्। इमं तावदायुष्कमाहुः-

---

लाघवात् भोग्यवस्त्वारम्भकपरमाणुष्वेव सर्वादृष्टोत्पत्तिरिति परमाण्वदृष्टवादिनामाशयः। इदं तत्र न्यायभाष्येऽपि निरस्तम्, "एतस्मिन् वै दर्शने गुणानुच्छेदात् अपवर्गे शरीरोत्पत्तिः; परमाणुगुणस्यादृष्टस्यानुच्छेद्यत्वात्" इति। कुसुमाञ्जलौ च सांख्यनिरासावसरे उक्तम्, 'अदृष्टस्य बाह्यगतत्वे द्रव्याणां सर्वसाधारण्यात् सर्वेष्वप्यात्मसु तत् भोगहेतुः स्यादिति प्रत्यात्मनियतत्वमदृष्टस्य' इति। सोऽयं परमाण्वदृष्टपक्षोऽत्र सूत्रकारेण लून इत्याह भूतेति। आत्मस्थमदृष्टमितिवत् भूतस्थमदृष्टमिति पक्षस्यापि स्थिनत्वात् तद्वादे=तत्पक्षे ये, कार्यद्रव्येष्वदृष्टोत्पत्तिपक्षे अनन्तोत्पत्तिविनाशकल्पना स्यादिति द्व्यणुकृदणून्=द्व्यणुकजनकान् परमाणूनेव गतमदृष्टमित्याहुः, तत्पक्षः उभयथेति सूत्रे निरस्त इत्यर्थ ॥

१३. अथ, "समवायाभ्युपगमाच्च साम्यादनवस्थितेः" इति सूत्रार्थं विवृणोति नित्यस्येति। लोके अप्राप्तयोः=असंबद्धयोः पृथक् स्थितयोः प्राप्तिः=संबन्धः संयोग. क्रियावशाज्जायमानो दृष्टः। स एव संयोगः कर्मजनितः प्राक् परमाणुषु विचारितः सूत्रकारेण। एवमजायमान संबन्धोऽत एव नित्यः कश्चिदस्ति। तस्य समवाय इति परिभाषा। स च पृथक्सिद्धव्यतिरिक्तसर्वगतः। सर्वेत्यनेन अद्रव्यस्यापि ग्रहणम्। घटपटादिद्रव्यसंबन्धः संयोगः। क्रियायाः द्रव्य एव भावात्। संयोगस्य च गुणत्वाद्द्रव्ये अयोगात्। अयं तु अपृथक्सिद्धयोरवयवावयविनोः संबन्धः। अत एवापृथक्सिद्धत्वाविशेषात् गुणगुणिनोः क्रियाक्रियावतोः जातिव्यक्त्योः विशेषनित्यद्रव्ययोश्चायं समवाय एव संबन्धः। एवमुन्नीतत्व देव द्रव्यादिविशेषान्तसर्वपदार्थातिरिक्तोऽयं षष्ठः। एवमिमं निजगदुस्तार्किकाः। सर्वानुवृत्तमिति। एक एवायं समवायः कल्प्यते लाघवात्। एकस्मिन्नेव संबन्धिभेदप्रयुक्त औपचारिको भेदव्यवहार इति एतत्पक्षः। पक्षान्तरमाह नित्यमिति। कतिचित् प्राभाकरास्तु संबन्धिनामनित्यत्वे संबन्धनित्यत्वायोगात् नित्यानित्यभेदेन समवायभेदम् अत एव नानात्वमाऽऽहुरित्यर्थः। इदं निरस्यति तत्तदिति। अयमर्थ -- संयोगवत् समवायो न प्रत्यक्षसिद्धः; अत एव हि समवायोऽतीन्द्रिय इति वैशेषिकाः। नैयायिकाः यद्यपि प्रत्यक्षः समवाय इत्याहुः। अथापि तत्र विवादादेव विशिष्टबुद्धित्वहेतुना संबन्धानुमानत एव

इमं समवायसम्बन्धं सम्बन्धिसमानायुष्कं सम्बन्धिद्वयसमानकालीनमित्यर्थः। अत्र समवायनैरपेक्ष्यमाह—तत्तदिति। अयमत्र विकल्पः—समवायो हि विशेषणविशेष्ययोरपृथक्सिद्धयोरन्योन्याश्लेषव्यवस्थापकत्वेन हि (?) भवद्भिः परिकल्प्यते। स च समवायो विशेषणविशेष्ययोरन्योन्यप्रतिसम्बन्धिस्वभावमुपजीव्य [स्वयं] व्यवस्थापयति, अथवा स्वयमेव। यदि स्वयमेव, तदा विरुद्धधर्मयोरपि विशेषणविशेष्ययोः स्वयमेव सम्बन्धः स्यात्। तथाच लोकविरोधः। न हि समवायः शैत्यदावानलयोरपि स्वयं सम्बन्धतां प्रतिपद्यते। एवञ्च तत्तत्सम्बन्धिद्वयस्वभावमुपजीव्य समवायो व्यवस्थापक इति पक्षः परिशिष्यते। तस्मिन्नपि पक्षे दोषमाह—गुर्वीति। सम्बन्धिद्वयस्वभावमुपजीव्य पुनः समवायस्यापि परिक्लृप्तिर्गुर्वी। समवायमन्तरेणापि शैत्यजले स्वभावादेव परस्पराश्लिष्टे, एवमौष्ण्यकृष्णवर्त्मनावपीति लघ्वीयं कल्पना ज्यायसीत्यर्थः। एवमसत्पक्षानङ्गीकारे समवायस्यापि सम्बन्धिनावुद्दिश्य विशेषणत्वेन व्यवहारदर्शनात् तत्रापि समवायान्तरं कल्पनीयम्।

---

तत्सिद्धिं तेऽप्याहुः। तत्रानुमीयमानः संबन्धो विशेष्यविशेषणोभयातिरिक्तत्वेन साध्यते, उत संबन्धत्व मात्रेण? आद्ये, अघट भूतलमित्यभावविशिष्टबुद्धावपि हेतुसत्त्वात् तत्रातिरिक्तसंबन्धानंगीकारात् व्यभिचारः। अन्त्ये, आधाराधेयस्वरूपात्मकत्वेऽप्यनुमानचारितार्थ्यात् सिद्धसाधनम्। न च रूपवान् घट इत्यादौ रूपादेः संबन्धत्वे मानाभाव इति वाच्यम्—भवन्मते समवायस्यैकत्वात् स्पर्शसमवायवति वायौ रूपसमवायस्याप्यावश्यकतया रूपवान् वायुरिति प्रतीतिरापद्यते। तत्र यदुक्तं रूपसमवायसत्त्वेऽपि रूपाभावात् न तथा प्रतीतिरिति, तस्य कोऽर्थः? कथं रूपसमवायसत्त्वे रूपाभावः? रूपवानित्यस्य रूपसमवायीत्येव ह्यर्थः। यदि रूपं समवायनिरपेक्षमेव किञ्चिद्द्रव्यनिष्ठाधिकरणतानिरूपकम्, नान्यनिरूपकमिति रूपस्वभाव इत्युच्यते, तर्हि तत्तद्वस्तु स्वरूपत एव संबध्नातीति स्वीकृतमिति किमनेन समवायेन। तथाच रूपादौ गुणे कर्मणि तत्तत्स्वभावव्यवस्थां परित्यजतां नीरूपेऽपि रूपवत्ताप्रतीत्यापत्तौ व्यवस्था तत्परिहाररूपा तेन समवायेन न भवतीति स्वभावप्रतिनियतिरिष्यते चेत्—तदात्मक एव संबन्धोऽस्तु; किमन्येन। रूपादेः संबन्धत्वं न क्लृप्तमिति चेत्-अतिरिक्तसमवायकल्पनापेक्षया तस्य तस्य संबन्धत्वकल्पन एव लाघवम्। धर्मिकल्पनातो वरं धर्मकल्पनमिति। न केवलमधिककल्पनागौरवम्; अनवस्थाऽपि। रूपसमवायवान् घट इति विशिष्टबुद्धिरपि तुल्यन्यायेन समवायातिरिक्तसंबन्धसापेक्षा स्यात्। तथा समवायीयसंबन्धवान् घट इति विशिष्टबुद्धिरन्या संबन्धोपरि संबन्ध इत्येवं संबन्धधाराप्रसरात्। अत्राहुस्तार्किकाः-समवायवान् घट इति न प्रत्यक्षम्, समवायस्यातीन्द्रियत्वात्। नानुमानम्, समवायस्य धर्मिग्राहकप्रमाणेन किञ्चिदनाश्रितत्वेनैवानुमानात् किञ्चिदाश्रयत्वाभावेन संबन्धानपेक्षणात्। रूपवानित्यस्य रूपसमवायीति यद्यप्यर्थः, अथापि समवायानुयोगीत्येव तदर्थः। न तु तत्र संबन्धान्तरमिति। तत्रोच्यते—रूपवानित्यस्यापि रूपानुयोगीत्यर्थोऽस्तु। ननु संबन्धस्यैवानुयोग्यपेक्षा, न रूपादेः। अभावस्य तु कुत्र किं नास्तीति नियमेन प्रतियोग्यनुयोगिसापेक्षत्वं दृष्टम्। अत एवाभावस्य संबन्धता; न तु रूपादेरिति चेत्—रूपाभावो नास्तीत्यादौ रूपाभावाभावस्य रूपात्मकतया स्वरूपसंबन्धसंभवात्। अस्मन्मते भावातिरिक्ताभावाभावेन भावस्यैव स्वरूपसंबन्ध इत्युक्त भवतीत्यतोऽपि

तथा चानवस्था। तत्र स्वभावसम्बन्धाङ्गीकारे अपृथक्सिद्धविशेषणविशेष्ययोरेव स्वभावसम्बन्धोऽङ्गीकार्यः;स्वभावसम्बन्धाङ्गीकारेणातिरिक्तस्य समवायाख्यस्य सम्बन्धस्यानुपलब्धिपराहतत्वादित्यर्थः॥

(१८९) निर्धूते सूत्रकारैरवयविपरमाण्वात्मके द्रव्यवर्गे

विश्वं(श्वं) व्याप्त्येक(विश्वव्याप्त्यैव)लक्ष्यं परममहदसत् स्यादथाद्रव्यमेव ।

मैवं ; दृष्टाणुतत्संहतितदुभयसम्बन्धसिद्धेरबाधात्

आगन्तुक्षोणितायैः श्रुतेरपि जगदारम्भणं ब्रह्मणीति ॥ १४ ॥

एवमवयविपरमाणुनिराकरणे सूत्रकारैः कृते सति परममहत्परिमाणमवशिष्यत इत्येकः पक्षः। अथवा तेनैव न्यायेन सर्वमप्यसत् स्यादित्यपरः। यद्वा द्रव्यरूपं वस्तु नास्ति, अद्रव्यमेवावतिष्ठत इत्यपरः। तथाच सर्वलोकविरोध इति कश्चिन्मनुते । तदिदमनुवदति—निर्धूत इति । अयमत्र शब्दान्वयः–सूत्रकारैरेव अवयविपरमाण्वात्मके द्रव्यवर्गे निर्धूते सति(?) विश्वं व्याप्त्येकलक्ष्यं (विश्वव्याप्त्यैव लक्ष्यं) परममहदेव स्यात्। अथवा असत् स्यात्; तेनैव न्यायेन महतोऽप्यभावात्। यद्वा–एवं द्रव्ये निरस्ते विश्वमद्रव्यमेव स्यात्। सर्वमप्येतदनुभवविरोधीति भावः। उक्तं चोद्यं प्रतिक्षिपति—मैवमिति। तत्र हेतुमाह—दृष्टेति। न ह्यस्माभिर्दृष्टं त्रसरेणुद्रव्यं तत्संहतिरूपं कार्यद्रव्यं तदुभयसम्बन्धादिकं बाध्यते; अपितु त्रसरेणुद्रव्यव्यतिरिक्तद्व्यणुकपरमाणुकल्पनमात्रमप्रामाणिकत्वात् गौरवतर्कोपहतत्वाच्च निरस्यते। तस्मान्नोक्तदोष इत्यर्थः। कथं तर्हि भवत्पक्षे प्रलयकाले क्षित्यादीनामभावात्

न समवायसिद्धिः । अतिरिक्तत्व एव स्वारस्यमिति चेत्—अनवस्थैव स्यात् । अत्रास्माभिर्यत् **वैशेषिकरसायने** तत्पक्षोपपादनं कृतम्—तदप्यत्रैवं विमृष्टं भवतीत्यलम् ॥

**चि. टी. नित्यानित्ययोरिति**। संबन्धिनोरुभयोर्नित्यत्व एव संबन्धस्य नित्यत्वम्। उभयोरनित्यत्व इव एकस्य नित्यत्वेऽपि अन्यस्यानित्यत्वे संबन्धस्यानित्यत्वमेव। यथा गोगोत्वयोः गगनशब्दयोः संबन्धस्य समवायस्येति भावः। **संबन्धिद्वयेति**। द्वयमपि मिलितं यावत्कालं तावन्मात्रकालकमित्यर्थः ॥ १८८ ॥

१४. नन्वेवं परमाण्वपलापे सर्वद्रव्यापलापः प्राप्नोतीति शंकां परिहरति **निर्धूते** इति। आरम्भणाधिकरणे अवयवातिरिक्तमवयवि निराकृतम्। अन्ततोऽवयवाश्च परमाणवः। तेऽत्र निराकृताः। एवमणुमध्यमपरिमाणद्रव्येषु दूषितेषु परममहत् द्रव्यमेव स्यादिति वक्तव्यम्। तदपि न। किमिदं परममहत्त्वम्। द्रव्याभावे महत्त्वस्याभावे कस्य पारम्यं कथ्यते। तद्धि विभुनि। न च विभुत्वं कस्यचित्। तद्धि व्याप्तत्वम्। विश्वस्य व्याप्तिश्च सर्वमूर्तद्रव्यसंयोगिता। मूर्तद्रव्याणामेवापलापे कथमिदं विभुत्वमपीति। एवञ्च परिमाणसंयोगाद्याश्रयतया द्रव्यसिद्धिरित्यस्याभावात् अद्रव्यमेव शिष्यते। तथाच रूपरसादिगुणसमुदाय एव द्रव्यमिति बाह्यपक्ष एव स्यादिति। परिहरति **मैवमिति**। गुणानामिव दृश्यमानत्रसरेणुरूपाणुद्रव्याणामपीष्टतया तत्संघातरूपस्तन्मिथस्संबन्धो दृष्टश्चेष्टश्चेति ईदृशावयवसंश्लेषभेदा एव क्षोणित्वादयः महत्त्वपर्यन्ताः। तदवच्छिन्नद्रव्याण्येव जगद्रूपसंनिवेशं भजन्तीति इदमेव च आरम्भणमिति न द्रव्यतदवस्थानामपलापः। परंतु उक्तरीत्या अणुसंघातविशेषरूपाः क्षोण्यादय इति स्यात्। श्रुतिस्तु मूलप्रकृतिः महदादिक्षोण्यन्तपरिणामान् प्राप्य क्षोणित्वादिसंस्थानमुखेन व्यष्टिरूपं पञ्चीकृत जगदारम्भं करोतीति भणति। तदेव तद्बाधकमानाभावात् तत्त्वम् ॥ अत्र चिन्तामण्युक्तः शब्दान्वयः

पञ्चभूतकार्यतया जगत्सृष्टिः सम्भवतीत्याशङ्क्य परिहरति—आगन्त्विति । प्रकृतावेव महदाद्यवस्थाविशेषा जायन्ते। तेन प्रकृतिरेव नित्या। महदादितत्त्वान्तराणि तु पञ्चभूतपर्यन्तानि अनित्यान्येव। तेनागन्तुकपृथिव्याद्यवस्थामापन्नैः प्राकृतैरेव द्रव्यैर्विश्वसृष्टिरुपपद्यत इति श्रुतिरेव जगदारम्भणं बम्भणीतीति न कश्चिदप्यस्माकं दोषः। यत्तु वैशेषिकैरुच्यते, 'जालसूर्यमरीचिस्थस्य सावयवारब्धत्वाभावे मनःपरमाण्वादिवत् द्रव्यस्य चाक्षुषत्वं न स्यात्' इति, तत् सोपाधिकत्वान्निरस्तमेव; अचाक्षुषत्वे हि प्रयोजकमनुद्भूतरूपवत्त्वमेव, न पुनः सावयवारब्धत्वाभाव इत्यादिकं युक्तिजातं न्यायपरिशुद्धिन्यायसिद्धाञ्जनादौ द्रष्टव्यम् ॥ १८९ ॥ इति महद्दीर्घाधिकरणम् ॥ ४७ ॥

## ॥ ४८ अथ समुदायाधिकरणम् २-२-३ ॥

सूत्रम्—समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न सङ्घातभावानिमित्तत्वात् ॥ उत्तरोत्पादे च पूर्वनिरोधात् ॥ असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधाप्राप्तिरविच्छेदात् ॥ उभयथा च दोषात् ॥ आकाशे चाविशेषात् ॥ अनुस्मृतेश्च ॥ नासतोऽदृष्टत्वात् ॥ उदासीनानामपि चैवं सिद्धिः ॥ १७—२६

(१९०) बाह्योक्ताचारमार्गः श्रुतिविहतिवशाज्जैमिनीये निरस्तः
तत्त्वांशं तर्कितं तैः प्रतिवदति गुरुर्जैमिनेरत्र पादे ।
निर्धूते तत्र पूर्वं निरुपधिकनयैरर्धवैनाशिकोक्ते
पश्चान् वैनाशिकानां जिनगिरिशमतक्षेपतः प्राक् क्षिणोति ॥ १५ ॥

असत्कार्यवादसाम्यात् कार्यविशेषे शरीरादौ क्षणिकत्वाद्यभ्युपगमसाम्याद्वा बुद्धिस्थतया वैशेषिकनिरासानन्तरं बौद्धनिराकरणमिति केचिदाचक्षते । अपरे तु परमाणूनामेकान्तत्वचातुर्विध्याभ्युपगमसाम्याद्बुद्धिस्थतया बौद्धमतनिरास इति सङ्गतिरिति। आर्हतमते स्थिरत्वास्थिरत्वादिभिरनैकान्त्यमैकविध्यं च परमाणूनां स्वीकृतम् । अत्र वैभाषिकसौत्रान्तिकयोः परमाणुकारणवादा-

---

क्लिष्ट । एकमेव वाक्यम् । श्लोके विश्वव्यापीति समस्तपाठः स्वरसः। अन्यथा तु व्याप्त्येकलक्ष्यं विश्वं समस्तमपि परममहत् कालेश्वरादिकं असत् स्यादित्यर्थः । चिन्तामणौ तालपत्रे विश्वं व्याप्त्येकलक्ष्यमिति विलिख्य विश्वव्याप्त्यैव लक्ष्यमिति शोधितमस्ति । तथैव मूलपाठोऽपि कतिपयतालकोशेषु ।

चि. टी. अनुद्भूतरूपवत्त्वमेवेति । ननु परमाणावुद्भूतरूपाभावे, त्र्यणुकेऽपि तदयोगात् प्रत्यक्षत्वं न स्यादिति उद्भूतरूपमेव स्वीकर्तव्यमिति चेन्न— अयं ह्यत्राऽऽशयः.—परमाणौ मानाभावात् त्रसरेणुपर्यन्तमेव तत्त्वम् । स चाक्षुष एव, य उद्भूतरूपः । यस्तत्राचाक्षुषः कश्चित्, स भर्जनकपालस्थवह्निवत् अनुद्भूतरूप इति मन्तव्यम् । अचाक्षुषत्वे सावयवारब्धत्वाभावो न प्रयोजकः—सावयवारब्धत्वस्य चाक्षुषत्वप्रयोजकत्वाभावात् । तथा सति भर्जनकपालानलस्यापि प्रत्यक्षापत्तेः । न चैवमुद्भूतरूपस्य परमाणोः द्व्यणुकस्य च प्रत्यक्षापत्तिः; तयोरेवाभावादिति ॥ १८९ ॥

१५. वैदिकाभासनिरसनपेटिका वृत्ता । वेदबाह्यनिरसनार्थं पेटिकान्तरमारभ्यते । तेषु बौद्धजैनपाशुपतेषु बौद्धनिरसनप्राथम्ये हेतुं किञ्चिदाशंकाशमनपूर्वकमाह बाह्येति । शंका चेत्थम्—ननु सांख्यतार्किकनिरसनं तावत् युक्तम् । न तु बाह्यनिरसनमिह; पूर्वमीमांसायामेव तन्निरासात् पौनरुक्त्यापातादिति । परिहारस्तु धर्ममीमांसायां धर्मविरुद्धकर्मनिरूपकशास्त्राप्रामाण्यस्यैव वक्तव्यतया

भ्युपगमेन प्रस्तावे सति बौद्धत्वमात्रसाजात्येन योगाचारमाध्यमिकयोरपि तदनभ्युपगमेन निरासः क्रियत इति चतुर्विधा बौद्धा इति वदतो भाष्यकारस्याभिप्रायः। तदर्थविचारस्तु—किं क्षणिकाः परमाणवो जगदारम्भकाः, नेति। तदर्थं क्षणिकानां तेषां किं सङ्घातकारणत्वं सम्भवति, नेति। अस्थिरादिषु स्थिरत्वादिबुद्धिरूपाविद्या परमाणूनां पृथिव्यादिसङ्घातरूपहेतुत्वमुपपादयति, नेति। वैशेषिकानन्तरं सङ्गतिविशेषवशात् बौद्धादीनां निरासे प्राप्ते तन्निरसनं द्विप्रकारमेव कर्तव्यम्, यथा आचारनिरसनं तत्परिगृहीतवस्तुनिरसनं चेति। पूर्वं तु बौद्धनिरसनं जैमिनीयेन काण्डेन कृतमिति, अधुना तत्तत्त्वमात्रनिरसनं क्रियत इत्याह—बाह्योक्तेति। बाह्योक्ताचारांशो वेदविरोधात् पूर्वकाण्ड एव निरस्तः। इदानीं पुनः तैस्तर्कितं= विचारितं तत्त्वांशं जैमिनेर्गुरुः= बादरायणस्तर्कपादे प्रतिवदतीत्यन्वयः। इत्थं बाह्यानां निरसनीयत्वे सिद्धे जैनशैवयोः पूर्वमेव वैनाशिकनिराकरणे कारणमाह—निर्धूत इति। बौद्धास्तावत् वैनाशिका एव परमाणुविनाशवादित्वात्। वैशेषिकादयस्तु अर्धवैनाशिकाः परमाणोर्विनाशाभावेऽपि द्व्यणुकादिद्रव्यविनाशवादित्वात्। तेन वैनाशिकत्वसाम्यात् वैशेषिकनिरासानन्तरं बौद्धनिराकरणमिति। अयमत्र शब्दान्वयः-तत्र= तेषु निराकरणीयेषु सत्सु पूर्वं निरुपधिकनयैः= निर्दोषन्यायैरर्धवैनाशिकोक्ते निर्धूते सति वैनाशिकानां पश्चात् जिनगिरिशमतक्षेपतः प्राक्= जैनपशुपतिमतक्षेपात्पूर्वमेव निराकरोतीति ॥ १९० ॥

(१९१) बुद्धोऽसौ स्वावतारैः सह परिगणितः श्रीधरेण स्वशास्त्रे
सर्वज्ञो नैव मुह्येत् च निखिलसुहृद् विप्रलिप्सेत कश्चित्।
तस्माद् बुद्धोक्तभङ्गे भजति भिदुरतां सात्वतादीति चेन्न
स्वानि(भी)ष्टप्रत्यनीकप्रमथनमनसा मोहनादिप्रवृत्तेः ॥ १६ ॥

---

सांख्यतार्किकयोस्तत्त्वविषय एव वैपरीत्यात् आचारविषये यथावद्वेदस्यैवानुसरणात् तत्र तन्मतदूषणं यथा न प्रसक्तम्, तथा बौद्धमततत्त्वदूषणमपि न प्रसक्तमिति बाह्याचारमात्रं तत्र दूषितम्। तत्त्वदूषणं तु तत्त्वेदम्परेण जैमिनेर्गुरुणा बादरायणेनैवात्र कर्तव्यमित्याशयमिति। उत्तरार्धे तार्किकसंनिकर्षो बौद्धस्य दर्श्यते, उभयेषामपि वैनाशिकत्वादेकानन्तरमन्यखण्डनमिति। सांख्याः सर्वस्याविनाशवादिनः। तार्किकाः अण्वादिकतिपयाविनाशवादिनः अवयविद्रव्यविनाशवादित्वादर्धवैनाशिकाः। अविनाशांशमादाय सांख्यानन्तर्यं तार्किकस्य, विनाशांशमादाय तदानन्तर्यं बौद्धस्य। विशेषतः पृथिव्यादिभेदेन परमाणुचातुर्विध्यमुभयसंमतम्, जैनेष्टं तु परमाणूनामेकविधत्वमिति वैलक्षण्यादस्य प्रथमं ग्रहणम्। एवं घटपटादिषु एकैकांशवियोगमात्रेण खण्डघटखण्डपटाद्युत्पत्तिस्वीकारात् अवयविनां क्षणिकप्रायत्वमेवेति अस्य क्षणिकत्वपक्षनेदिष्ठत्वमप्यत्र हेतुः। तत्रेति। पराभिमततत्त्वनिरासे क्रियमाणे इत्यर्थः। अत एव, 'तेषु निराकरणीयेषु' इति चिन्तामणिः। पूर्वं महद्दीर्घाधिकरणे निरुपधिकनयैः छद्मरहितैः निर्दोषैस्तर्कैः अर्धवैनाशिकेन तार्किकेणोक्ते तत्त्वक्रमे निर्धूते सति वैनाशिकानां बौद्धानां वैभाषिकसौत्रान्तिकयोगाचारमाध्यमिकानां चतुर्णां पश्चात् क्षिणोति। सर्वशून्यवादिनो माध्यमिकस्य वैनाशिकत्वाभावेऽपि बौद्धत्वेनेहैव निवेशः ॥ १९० ॥

१६. अस्मिन् पादे सूत्रकारेण पूर्वपक्षमनुकृत्वा परपक्षनिरसनरूपसिद्धान्तांशमात्रकथनेऽपि

अत्र बौद्धनिराकरणे भगवदुक्तपञ्चरात्रस्यापि निराकरणं स्यादित्याशङ्क्य प्रवर्तनप्रकारवैषम्येण परिहरति—बुद्ध इति। असौ बुद्धः श्रीधरेणैव स्वशास्त्रे = पञ्चरात्रे स्वावतारैस्सह परिगणितः। अस्तु परिगणनम्; ततः किमित्याशङ्क्याह-सर्वज्ञ इति। अयमर्थः-बुद्धोक्तशास्त्राप्रामाण्ये बुद्धस्य भ्रान्तत्वं वा विप्रलम्भकत्वं वा स्वीकर्तव्यम्; उभयमपि न सम्भवतीति(त्यर्थः)। सर्वज्ञत्वान्न भ्रान्तः, निखिलसुहृत्त्वान्न विप्रलम्भक इति भावः। एवमनङ्गीकारे प्रतिबन्दीमाह—तस्मादिति। इत्थं बुद्धवाक्यस्यापि प्रामाण्यावश्यम्भावात् बुद्धोक्तभङ्गे सात्त्वताद्यपि भिदुरतां भजेदिति। आशङ्कितमर्थं प्रतिक्षिपति—नेति। तदेवोपपादयति—स्वानि(भी)ष्टेति। 'एष एवासाधु कर्म कारयति तं यमधो निनीषति', 'क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु' इत्यादिश्रुतिस्मृतिभ्यामुक्तप्रकारेण स्वानि(भी)ष्टानां प्रत्यनीकानां राजसानां तामसानां च प्रमथने निवेशितमनसा भगवता तन्मोहनादिप्रवृत्तेः प्रमाणप्रसिद्धत्वादित्यर्थः। पञ्चरात्रेष्वाश्रितसंरक्षणार्थं प्रवृत्तेस्तत्रावेदकत्वमेवेति वाक्यशेषः(विशेषः) ॥ १९१ ॥

(१९२) दुर्वारा मोहनेच्छा निखिलजनयितुः केन मोहोऽन्यथा नः
तस्मात् कर्मानुरूपं दिशति फलमसौ तत्त्वबोधं भ्रमं वा।
स्वोक्त्यादेः सिद्धमेतत्, निरुपधिविषमो नैष; तस्मात् समोक्तिः
कारुण्याद् विप्रलिप्सा न यदि, वृजिनजं नेशनिघ्नं फलं स्यात् ॥ १७ ॥

---

पञ्चाङ्गत्वरूपाधिकरणलक्षणानुरोधेन पूर्वपक्षांशस्यापि संमतत्वात् पूर्वाधिकरणेऽन्विवाशापि तं प्रस्तौति बुद्ध इति। श्रीधरेण भगवता। शास्त्रे पञ्चरात्रे। स्वावतारैः मत्स्यकूर्मादिभिः। परिगणित इति। तस्मात् सर्वज्ञः सर्वसुहृच्चेत्यर्थः। विप्रलिप्सेत=वञ्चयितुमिच्छेत्। तस्मात्=कर्तुरेकत्वात्। अस्य भिदुरतां भजतीत्यनेनान्वयः। भिदुरता भेदवत्ता। भजति=भजेत्। भेदो भंगः अनादरणीयता। सात्त्वतादि सात्त्वतं, जयाख्यं पौष्करमित्यादिकं पञ्चरात्रम्। तस्मात् बौद्धागमस्य श्रुतितुल्यत्वात् सत्प्रतिपक्षत्वमिति भावः। निरस्यति नेति। न सत्प्रतिपक्षता, तुल्यबलत्वाभावात्। विप्रलिप्सामूलकत्वावधारणादिति भावः। तदाह स्वानिष्टेति। स्वस्यानिष्टाः ये स्वप्रत्यनीकाः विरोधिनः, तेषामिति विग्रहः। तेषां प्रमथने नाशने प्रवृत्तेन मनसा। तद्विषयकबुद्ध्येत्यर्थः। अनिष्टाः तामसाः, प्रत्यनीकाः राजसा इति विभागः पदयोजनायाम्। चिन्तामणौ तु, 'अनिष्टानां प्रत्यनीकानां राजसानां तामसानाञ्च' इति व्याख्यातम्। प्रत्यनीकाः प्रतिकूलकारिणः। ते द्विविधाः, आनुकूल्यस्यापि दर्शनात् कृतप्रतिकूलानुरूपशिक्षणविधानेन क्षिप्रमुद्धर्तुमिष्टाः, तदभावात् अनिष्टाश्चेति। असुरप्रायाः उत्तरे। अन्ये संसारिणः पूर्वे। श्लोके चिन्तामणौ च स्वानिष्टेत्यत्र स्वाभीष्टेति पाठोऽपि लक्ष्यते। तदा नैव क्लेशः। तद्विषये मोहने वञ्चने, तेन वेदेश्वरतद्भक्तजनविषयकविद्वेषाभिवर्धने तन्मूलकाधोगतिप्रापणे च भगवतः प्रवृत्तेरित्यर्थः ॥ यदि बुद्धो भगवदाविष्टजीवान्तरम्, तदा तस्यासर्वज्ञत्वमपि। तदा च भ्रान्त्याऽपि दुरुपदेश इति वक्तव्यम्। मोहनार्थमेव तत्र भगवदावेशस्य वक्तव्यत्वात् भ्रान्तिमूलोपदेशायोगात् रुद्रस्येव बुद्धस्य जीवत्वे मानाभावे साक्षात् भगवदवतारत्वस्यैव स्वीकारेऽपि न क्षतिः। सर्वज्ञोऽपि विप्रलिप्सयाऽन्यथोक्तवानिति भावः ॥ १९१ ॥

१७. ननु निखिलसुहृदो मोहनादिप्रवृत्तिर्न भवतीत्युक्तम्। निखिलसुहृत्त्वञ्च, 'समोऽहं

पूर्वत्र भगवतो विप्रलम्भकत्वमुक्तम्। विप्रलम्भकत्वं नाम मोहनेच्छा। सा निखिलजनयितुरीश्वरस्य दुर्वारा। अयमत्र विकल्पः—किमीश्वरः सर्वजनयिता, उत कतिपयजनयिता। निखिलजनयितृत्वे परमोहनस्यापि निखिलान्तर्गतत्वात् तत्रापीश्वरस्य जनयितृत्वमङ्गीकृतमेव। कतिपयजनयितृत्वे पुनः, ईश्वरत्वमेव भज्येत; शिक्षणरक्षणात्मककर्मद्वयकर्तुरेवेश्वरत्वात्। तदिदमाह—दुर्वारेति। उक्तार्थानुग्राहकतया तर्कमाह—केनेति। ईश्वरस्यासन्मोहजनकत्वाभावात् केनासन्मोहः स्यात्। एवमुपपादितमर्थं निगमयति—तस्मादिति। पूर्वपूर्वकर्मानुरूपं फलं तत्त्वज्ञानं भ्रमं वा पुंसामीश्वर एव जनयतीत्यर्थः। किमुपपत्तिमात्रपरिकल्पितमेतत्? नेत्याह स्वोक्त्यादेरिति। प्रमाणसिद्धमपीत्यर्थः। प्रमाणम्, 'तेषां सततयुक्तानाम्', 'क्षिपाम्यजस्रमशुभाम्' इत्यादिकं प्रसिद्धमेव। तर्हि विषम एवेश्वरः स्यात्; कस्यचित्सुखप्रदानात्, इतरस्य दुःखप्रदानात्; तेन समत्ववादो भज्येतेत्याशङ्क्योभयमपि परिहरति-निरुपधीति। अकारणवैषम्ये हि वैषम्यदोषः स्यात्। कर्मानुरूपवैषम्यमीश्वरे प्रमाणसिद्धत्वाद् इष्टमपि न दोष इत्यर्थः। अत एव सर्वसमोक्तिरपि सङ्गच्छते। ननु परमकारुणिकत्वादीश्वरस्य विप्रलिप्सा नास्तीति कश्चिदाचष्टे; तदनूद्य परिहरति-कारुण्यादिति(त्यादिना)। यदि कारुण्यादीश्वरस्य विप्रलिप्सा न स्यात्, तर्हि पापजन्यं फलमीश्वराधीनं न स्यात्। तथाचेश्वरस्य सर्वकर्तृत्वं भज्येतेति॥

(१९३) कल्प्यो बोद्धेति सर्वे सुगतमतविदो बोध्यमध्यक्षमेके
बुद्ध्याकारानुमेयं कतिचन, कतिचिद् बोध्यमिथ्यात्वमाहुः।
तत्तुल्यन्यायतोऽन्ये धियमपि जगदुः संवृतेरेव सिद्धां
तान् सर्वांस्तर्कमानैर्धति दितिजगुरून् अत्र वैभाषिकादीन्। १८॥

सर्वभूतेषु' इत्यादितः प्रसिद्धम्। अन्यथा कारुणिकत्वभंगश्च इत्यत्र युक्तिं प्रमाणञ्च प्रदर्श्योक्तमुपपादयति दुर्वारेति। निखिलसुहृत्त्ववत् निखिलजनकत्वमपि तस्य मानसिद्धम्। मोहरूपकार्यञ्च जगति प्रसिद्धम्। तज्जननेच्छायास्तस्मिन्नभावे कथं निखिलजनकता स्यात्। अन्यद्वारा मोहनमिति चेत्—तदाऽपि मोहानुकूलऽथापारेच्छा सिद्धा। मोहकान्तर्यामित्वात्। अन्यथा न केनापि मोहः स्यात्; बोधवत्। तस्मात् कारणत्वस्याऽऽवश्यकत्वात् स एवोभयं जनयति। परंतु कर्मानुरूपम्। अतो न वैषम्यम्। एतत् तत्त्वज्ञानमोहोभयजनकत्वम्, तस्य कर्मानुरूपत्वमिति सर्वं स्वोक्त्यादेः सिद्धम्। स्ववचनसिद्धम्, श्रुतिस्मृतिसिद्धम्, पञ्चरात्रेऽपि तथोक्तम्। 'मत्तः स्मृतिर्ज्ञानमपोहनञ्च', 'क्षिपाम्यजस्रमशुभाम् आसुरीष्वेव योनिषु', 'एष एव साधु कर्म कारयति तम्, यमेभ्यो लोकेभ्य उन्निनीषति। एष एवासाधु कर्म कारयति तम्, यमधो निनीषति', 'निमित्तमात्रमेवासौ सृज्यानां सर्गकर्मणि। प्रधानकारणीभूता यतो वैसृज्यशक्तय.' इत्येवम्। तर्हि कथं समत्वमिति चेत्-समत्वं नाम निष्कारणवैषम्याभावः। कारणपरिशीलनपूर्वकमेवानिष्टाकारप्रदानम्। अथ कारुण्यहानिं परिहरति कारुण्यादिति। निखिलजनकस्य पापफलप्रदायित्वमपि स्वीकर्तव्यम्। अन्यथा लोके पुण्यपापरूपं द्वैविध्यमेव न स्यात्। पुण्यफलानामपि तरतमभावापन्नत्वात् निकृष्टफलदातृत्वमपि तस्य न स्वीकर्तव्यं स्यात्। अतो वृजिनजं पापजन्यं फलं नरकादि ईशाधीनमेवेति राज्ञामिव राजाधिराजस्यापि दण्ड्यदण्डनात् न कारुण्यहानिरिति॥ १९२॥

१८. चतुर्विधेषु बौद्धेष्वुक्तक्रमेण उत्तरोत्तरस्य प्राबल्यम्। अधिकापलापित्वात्। तेषां

अत्र सौगतमतानुसारिणश्चत्वारः—वैभाषिकाः सौत्रान्तिका योगाचारा माध्यमिकाश्च । तेषां साधारणार्थमसाधारणार्थमप्यस्मिन् श्लोके विभज्य प्रदर्श्य, तान् सर्वान् सूत्रकारो निराकरोतीत्याह-कल्प्य इति । अत्र परसाधारणोऽयमर्थः—यदुत बोद्धा कल्प्यत इति । सर्वेषां बौद्धानां नैरात्म्यवादित्वात् आत्मा नास्तीति तेषां साधारणोऽर्थः । तेन बोद्धृबुद्धिबोध्येषु बुद्धिर्बोध्यश्चावशिष्यते । तत्र वैभाषिकस्य वैषम्यमाह—बोध्यमिति । एके = वैभाषिका बोध्यं प्रत्यक्षमित्याहुः । सौत्रान्तिकास्तु बोध्यं बुद्ध्याकारानुमेयं = बुद्धौ स्वाकारसमर्पकं बुद्धिगतेन स्वाकारेणानुमेयमित्याचक्षते । तेन बोध्यं(य) प्रत्यक्षं(क्षत्वं) वैभाषिकस्य, अनुमेयं(यत्वं) सौत्रान्तिकस्येति विभागः । कतिचित् = योगाचारा बोध्यस्य मिथ्यात्वमेवाहुः । तत्तुल्येति । साधने बाधने च बोध्यतुल्यन्यायतया बुद्धेरपि मिथ्यात्वं माध्यमिकाः प्रतिपेदिरे । बोद्धृमिथ्यात्वं सर्वसाधारणमिति प्रागेवोक्तम् । धियमपि संवृतेरेव सिद्धां संवृतिशब्दवाच्यमायाविशेषतस्सिद्धां माध्यमिका जगदुरित्यन्वयः । तान् सर्वान् दितिजगुरून् = असुरगुरून् वैभाषिकादीन् सूत्रकारस्तर्कमानैर्धृति खण्डयतीत्यर्थः ॥ १९३ ॥

(१९४) एकद्व्यादिस्वभावैर्यदणुभिरथवा तत्तदेकस्वभावैः
क्षोणीदेहादिपुञ्जप्रसृ(सू)तिरिति समामापि वैभाषिकेण ।
ज्ञानादानादि तत्र क्षणभिदुरतया बोध्यबुद्ध्योर्न सिध्येत्
निर्बाधा प्रत्यभिज्ञाऽप्यनुमितिमथनी शेषमन्यत्र सूक्तम् ॥ १९ ॥

अत्र खलु वैभाषिका द्वेधा वर्णयन्ति—गन्धरसरूपस्पर्शेषु स्पर्शैकस्वभावो वायुपरमाणुः, स्पर्शरूपद्विस्वभावस्तेजःपरमाणुः, स्पर्शरूपरसत्रिस्वभावोऽप्परमाणुः, स्पर्शरूपरसगन्धचतुस्स्वभावः पृथिवी(पार्थिव)परमाणुरित्येकः पक्षः; अपरस्तु, 'गन्धस्वभावः पार्थिवपरमाणुः, एवं रसस्वभाव

---

साधारणोऽसाधारणश्चार्थः प्रदर्श्यते कल्प्य इति । गुणसमुदायातिरिक्तद्रव्याभाववत् ज्ञानातिरिक्तस्याऽऽत्मनोऽभावस्तदिष्टः । ज्ञानमेव राहोश्शिर इतिवत् आधारत्वकल्पनया आलयविज्ञानमिति अहमिति च व्यपदिश्यते ; धर्मस्तु प्रवृत्तिविज्ञानमिति । अतः सर्वशून्यवादिनामिवान्येषामपि पक्षे ज्ञाता कल्पित एव । शून्यवादिनः सर्वं कल्पितम् । अन्येषां त्रयाणां ज्ञानज्ञेयोभयज्ञानमात्रान्यतरस्वीकारिणां मध्ये एके वैभाषिकाः बोध्यं ज्ञेयं बाह्यवस्तु अध्यक्षं प्रत्यक्षस्यापि यथार्हं विषयमाहुः । कतिचन सौत्रान्तिकास्तु—बाह्यवस्तुना ज्ञाने आकारोऽर्प्यते ; अतो घट इति ज्ञानं साकारं गृह्यते ; तेन गृहीतेन ज्ञानगताकारेण तदर्पकं तदाकारं बाह्यमनुमीयते— इति बाह्यस्यानुमेयत्वमाहुः । कतिचित् योगाचारास्तु बाह्याकारज्ञानाकाररूपाकारद्वये मानाभावात् स्वप्नादिवत् बाह्याभावेऽपि ज्ञानसंभवात् ज्ञानगताकारेणैव निर्वाहात् बोध्यं ज्ञेयं सर्वं कल्पितं मिथ्येत्याहुः । अन्ये माध्यमिकास्तु तत्तुल्यन्यायतः ज्ञातृज्ञेययोरिव ज्ञानस्यापि संवृतिसिद्धत्वम्=अविद्याकल्पितत्वमाहुः । इमे सर्वनास्तित्ववादिनः ईश्वरापलापिनां दितिजानाम् असुराणां गुरवः । तान् अद्य प्राप्तावसरे । अत्रेति पदयोजनापाठः । धृति खण्डयति अधिकरणत्रिकेण ॥ १९३ ॥

१९. तत्तद्वाशुक्तायाः तत्त्वप्रक्रियायाः वेदविरुद्धत्वरूपेणैकेनैवास्त्रेण निरस्तत्वेऽपि, केवलोपदेशमात्रेणार्थनिर्णये नूनमन्धपरम्परेति दूषणं पदं पद इति, तर्केणार्थनिर्णयनैपुण्यमस्तीति प्रगल्भमानानामहं-

(१९५) बोधेष्वाकारभेदं निजमुपरितनेष्वर्पयन् प्राक्तनोऽर्थः
तद्वैचित्र्यानुमेयः क्वचिदपि न तदा(तद)ध्यक्षतेति प्रजल्पन् ।
प्राक् पश्चाच्च प्रवृत्तैर्विहतिबहुलतां गौरवञ्च ब्रुवाणैः
शिक्षादक्षैः सयूथ्यैर्दमित उपशमं यातु सौत्रान्तिकाख्यः ॥ २० ॥

पूर्वं वैभाषिकपक्षस्य दूषणमुक्त्वा सौत्रान्तिकपक्षेऽपि विशेषेण दूषणं वक्तुमुपक्रमते— बोधेष्विति । इत्थं किल सौत्रान्तिकः प्राह—'इन्द्रियार्थसन्निकर्षकाले वर्तमानः प्राक्तनस्तदैव नष्टोऽर्थः तदुत्तरकालवर्तिनि ज्ञाने स्वाकारमर्पयति । स चार्थो ज्ञाने स्वसमर्पिताकारादनुमेय एव ।

---

ज्ञातृत्वमुमादातृत्वञ्च समुदायोत्पत्तिश्च न भवति । अतः बाह्यस्थैर्यं ज्ञातृस्थैर्यञ्च स्वीकार्यम् । एवं 'सोऽयं घटः', 'योऽहमद्राक्षम्, सोऽहमाददे' इत्येवं मेयमातृप्रत्यभिज्ञाऽपि निर्बाधा क्षणिकत्वानुमितिं मथ्नातीति। शेषमिति । अत्राधिकरणेऽनेकसूत्रोक्तमन्यत् सर्वमन्यत्र अस्मद्ग्रन्थेष्वपि प्रपञ्चितमित्यलमत्रेत्यर्थः॥१९४॥

२०. अथ विशिष्य सौत्रान्तिकदूषणप्रवृत्तस्य, 'नासतोऽदृष्टत्वात्' इति सूत्रस्यार्थमाह बोधेष्विति । ज्ञानोत्पत्तिसमकालत्वं वस्तुनो नापेक्षितम् । कारणत्वं हि प्राक्क्षणवर्तित्वेऽपि भवति । वस्तुनीन्द्रिय, संनिकृष्टे, जाते ज्ञाने वस्तुसमर्पिताकारशालिनि सति तेनाऽऽकारेण गृहीतेन तदाकार- समर्पकं वस्तु अनुमीयते । अतः प्राक्तनः पूर्वक्षणमात्रस्थितः ज्ञानोत्पत्तिकालावर्ती अर्थः वस्तु बोधेषु येषां पुंसामिन्द्रियसंनिकर्षः स्वस्मिन् तदीयेषु ज्ञानेषु उपरितनेषु स्वोत्तरक्षणजन्मसु स्वकीय- माकारविशेषमर्पयति । अर्थ इत्येकत्वमविवक्षितम् । एकैकस्याप्यर्थस्य गन्धरसरूपस्पर्शरूपानेकसमुदायत्वाद्वा तथोक्तिः। एवं समर्पिताकारगतनीलोष्णसुरभिमधुराद्याकारवैचित्र्यबलात् तत्तदाकारवान् अर्थः अनुमेय एव; न तु कुत्रापि तदध्यक्षता=वस्तुनः प्रत्यक्षविषयता । तदेति चिन्तामणिपाठः । अतः प्रत्यक्षं नाम प्रमाणमेव न भवति। क्वचिदपीत्यनेन, 'न प्रत्यक्षेण यावत्, तावदप्युपलम्भात्' इति न्यायसूत्रोक्तस्थलेऽपीति ज्ञाप्यते । इति प्रजल्पन् सौत्रान्तिकनामा बौद्धः स्वशिक्षणसमर्थैः सयूथ्यैः बौद्धैरेव प्राक् प्रवृत्तैः वैभाषिकैः, पश्चात् प्रवृत्तैः योगाचारैश्च दमितः सन् उपशमं यातु । स्वकीयैरेव दमितत्वात् नास्माकं स भरः । कथ दमितः ? तदाह विहतीति । पूर्वक्षणस्थितस्य उत्तरक्षणे चासतोऽर्थस्याऽऽकारः कथं ज्ञाने स्यात् । न हि अविद्यमाने धर्मिणि आकारो धर्मः स्यात् । अर्थगतश्चाऽऽकारो बाह्यः कथमान्तरे ज्ञाने संक्रामेत् । रूपरसगन्धादिसमुदाये आकारा नाम के सन्ति धर्मभूताः । न च रूपादिरेव ज्ञाने भवेत्; नीलं सुरभि, मधुरं शीतमिति व्यवहाराभावात् । अतो विहतिबहुलता । गौरवञ्च । सविषयक- त्वातिरिक्तसाकारत्वोक्तौ आकारद्वयकल्पने हि गौरवम्। योगाचारास्त्वाहुः एकस्यैवाऽऽकारस्योपलम्भात् ज्ञानगताकारेणैव निर्वाहे अर्थो बाह्य एव न स्वीकार्यः, कुतोऽनुमेयता । अतो गौरवमिति । अतस्तद्- मितोऽयम् । ननु माध्यमिकपक्षः प्रथमः; बुद्धस्य शून्यवादित्वात्। शिष्येषु कश्चित् ज्ञानमात्रम्, अथान्यो ज्ञानानुमेयं बाह्यम्, ततोऽन्यः तत् प्रत्यक्षञ्च प्राहेति योगाचारानन्तरः सौत्रान्तिको वैभाषिकात् प्राक्तनः। अतः प्रागिति कथं वैभाषिकग्रहणम्। स हि विहतिबहुलत्ववादी । एवं पश्चादिति कथं योगाचारस्येति चेत्-

आप्यपरमाणुः, रूपस्वभावः तेजःपरमाणुः, स्पर्शस्वभावो वायवीयः' इति। तदिदमाह एकद्व्यादीति। तत्रैवमन्वयः—एकद्व्यादिस्वभावैरणुभिर्यत्कार्यमारभ्यते, अथवा तत् कार्यं तदेकस्वभावैरारभ्यत इति क्षोणीदेहादिपुञ्जप्रभू(सू)तिर्वैभाषिकेण समाभाषि। इदं तु क्षणिकैरेव परमाणुभिरिति तैरुक्तम्। तत्र दोषमुद्घाटयति—ज्ञानादानादीति। अयमर्थः—बोद्धा तावन्नास्त्येव नैरात्म्यवादस्वीकारात्। तेन भवतां बुद्धिर्बोध्यश्चावशिष्यते तदुभयमपि क्षणिकमेव। तथाच क्षणिकत्वे ज्ञानमपि नोपपद्यते। प्रवृत्तिरपि नोपपद्यते। इन्द्रियार्थसन्निकर्षक्षण एव वेद्यं नष्टम्। ज्ञानोत्पत्तिक्षणे वेद्यं नानुवर्तते। कथं तस्य प्रत्यक्षेण वेद्यत्वम्? ज्ञानमपि स्वोत्पत्तिक्षण एव नष्टम्। तत्कथमर्थमवबोधयति? अनवबोधकश्च कथं प्रवर्तयेत्? तथाच ज्ञानार्थयोः क्षणिकत्ववादिनस्तत्रार्थावबोधनमर्थप्रवर्तनञ्च न घटते। ननु यत् सत् तत् क्षणिकं यथा जलधरपटलमित्याद्यनुमानात् क्षणिकत्वं प्रतिपद्यामहे इति बौद्धाः प्राहुः; तत्रोत्तरमाह—निर्बाधेति। स एवायं प्रदीप इति भ्रान्तप्रत्यभिज्ञादिव्यावृत्तिसिद्ध्यै निर्बाधत्वमुच्यते। स एवायं स्फटिक इति प्रत्यभिज्ञायाः खलु स्वारसिको बाधो न क्वापि दृश्यते। तेन सा प्रत्यभिज्ञा भवदनुमानं मथ्नातीत्यर्थः। शेषमिति। यत् क्षणभङ्गवादे वक्तव्यमवशिष्टम्, तत् सर्वमस्माभिः तत्त्वमुक्ताकलापे सूक्तमिति ॥ १९४ ॥

---

कारदमनस्य'त्र पादे क्रियमाणतया, सर्वत्र तदुक्तौ तर्काभासमूलकत्वस्य स्वेनापि वक्तव्यत्वेऽपि, भाष्यादित इव तत्त्वन्यायसिद्धाञ्जनादितोऽपि सर्वस्य सुगमत्वात् सर्वसूत्रार्थविवरणमुपेक्ष्य मुख्यमधिकरणसारं संगृह्णाति एकेति। तार्किकोक्तरीत्या पृथिव्यां रूपादिचतुष्टयम् अबादौ एकैकगुणाभाव इति कृत्वा, आकाशस्य तैस्तुच्छत्वोक्त्या च वायुपरमाणुः एकस्वभावः, तेजो द्विस्वभावमिति रीतिरादृता प्रायो बौद्धैः। गुणशब्दाप्रयोगेण स्वभावशब्दप्रयोगः गुणसमुदायो द्रव्यमित्याशयेन। तेष्वेव केचित्-पृथिवी गन्धैकस्वभावा, आपो रसस्वभावाः, तेजो रूपस्वभावम्, वायुः स्पर्शस्वभावः; अन्यत्र तदुपलम्भः संसर्गवशादिति मन्यन्ते। पक्षद्वयेपि ईदृशैः परमाणुभिः क्षोण्यादीनां भूतानां देहेन्द्रियघटपटादीनां भौतिकानाञ्चोत्पत्तिः। पुञ्जशब्दः अवयवसमुदायातिरिक्तावयविरूपद्रव्यनिषेधार्थः। अत्र प्रत्यक्षत्वमनुमेयत्वमिति मतभेदः परं वैभाषिकसौत्रान्तिकयोः। अतो वैभाषिकपदं सौत्रान्तिकोपलक्षणम्। सौत्रान्तिकमात्रस्य पृथक् दूषणमपि, 'नासतोऽदृष्टत्वात्' इति सूत्रेणोक्तम्। अत्रावयवातिरिक्तावयव्यभावोऽस्माकमपीष्टः। गुणगुण्यभेदनिरासस्तु सत्त्वादिरूपप्रकृतिवादिसांख्यनिरसनावसरे दर्शित एव। अतः क्षणिकत्वं प्रधानप्रतितन्त्रभूतमेषामत्र विशिष्य व्युदस्यते। तदाह ज्ञानेति। यत् समाभाषि तत्रेत्यन्वयः। सूत्रकारेण तदप्राप्तिरिति पदेन, क्षणिकानां परमाणूनां मिथः प्राप्तिरेव न भवति; क्रिया, क्रियातो विभागः, विभागादुत्तरसंयोग इति क्रमः एकक्षणमात्रस्थितेषु दुर्वच इति पुञ्जीभावप्रसक्तिरेव नेत्युक्तम्। अथापि भाष्ये ज्ञान-उपादानाद्यसंभवस्याप्युक्ततया सूत्रे उभयहेतुके इत्यस्य परमाणुहेतुके भूतरूपसमुदाये, भूतहेतुके भौतिकद्रव्यरूपसमुदाये तेषां न मेलनमितिवत्, कार्ये कर्तुरुपादानस्य च कारणत्वात्, कर्तृहेतुके उपादानकारणहेतुके च समुदाये कर्तुः उपादानस्य च ज्ञानमुपादानमित्यादिकमेव न भवति, इन्द्रियसंनिकर्षोपक्रम एव द्रव्यनाशादित्यपि विवक्षितमिति ज्ञापनाय ज्ञानादानादीति विशिष्योक्तम्। बोध्यस्य परमाण्वादेः बुद्धेः ज्ञानस्य च क्षणभिदुरतया एकक्षण एव नाशात् ज्ञेयत्वम् उपादेयत्वं

तदातनकाले(तदा=तत्काले?) न क्वचिदपि प्रत्यक्षता' इति। एवं जल्पन् सौत्रान्तिकः प्राक्प्रवृत्तै-र्वैभाषिकैः पश्चात्प्रवृत्तैर्योगाचारादिभिश्च व्याहतिबहुलतां कल्पनागौरवञ्च ब्रुवाणैः शिक्षादक्षैः=सयूथ्यैर्दूषणसमर्थैः स्वबन्धुभिरेव दमितो दूषितः—'स्वयं नष्टोऽर्थः कथं स्वाकारं कालान्तरवर्तिनि ज्ञाने समर्पयति? कथञ्च प्रत्यक्षरूपतया प्रतीयमानोऽर्थो बुद्धिगताकारेणानुमीयते? कथञ्च वा नीलपीताद्येकाकारदर्शने ज्ञानगतः कश्चिन्नीलाकारः विषयरूपोऽन्यो नीलाकार इत्याकारद्वयं भवता परिकल्प्यते?' इति दूषणकलापैर्दमित इत्यर्थः—उपशमं यातु॥ १९५॥

इति समुदायाधिकरणम्॥ ४८॥

## ४९॥ अथ उपलब्ध्यधिकरणम्॥ २-२-४॥

सूत्रम्—नाभाव उपलब्धेः॥ वैधर्म्याच्च न स्वप्नादिवत्॥ न भावोऽनुपलब्धेः॥ २७—२९॥

**(१९६) न ग्राह्यग्राहकौ स्तः क्वचिदपि विविधानादिसन्तानचित्रो**
**बुद्ध्यात्मा ह्यात्मकोऽयं स्फुरति भवदशातिक्रमे स्वात्मनैव।**
**योगाचारोक्तिरित्थं विषयविषयिणोर्बोधबाधौ समानौ**
**मन्वानैर्वारणीया स्वपरविभजनाद्यत्र न क्वापि सिध्येत्॥ २१॥**

पूर्वं बाह्यार्थास्थिरत्ववादिनो वैभाषिकाः सौत्रान्तिकेन सह निरस्ताः, अधुना बाह्यार्थनास्तित्ववादिनो योगाचारा निरस्यन्त इति सङ्गतिः। तदर्थविचारस्तु—किमर्थशून्यवादः समीचीनयुक्तिमूलः, न वेति। किं घटमहं जानामीतीदृशाकारो ज्ञानाकारः, उतार्थाकार इति। किमर्थव्यवहारानुगुण्यं नाम घटाद्याकारातिरेकेण ज्ञानाकारेण भासते, नेति। अत्र योगाचारपक्षमनुवदति—न ग्राह्येति। क्वचिदपि ग्राह्यग्राहकौ न स्तः। तर्हि, 'इदमहं जानामि' इति ह्यात्मकत्वेन बुद्धेः स्फुरणं

---

न; तथा व्यवस्थाविरहात्। आस्तिकमतवैपरीत्येन क्षणिकत्वे वैभाषिकेष्टे पश्चात् तन्निरासेन सौत्रान्तिके समागते तमपि निरस्य योगाचारे उद्युक्ते शून्यवादोऽन्ते प्रवर्तित इत्यपि सुवचत्वात्। वैभाषिकादिनाम्नामर्थाः अन्ये भाष्यार्थदर्पणेऽपि दर्शिताः। अथवा सूत्रे पूर्वोक्तत्वात् प्राक्प्रवृत्तता वैभाषिकस्य। पश्चादत्राऽऽगमिष्यति योगाचारः। सयूथ्यैरित्युपलक्षणम्। परमाणुवादादिना तार्किका अपि सयूथ्या इति वा। तदा च प्राचीनैरन्यैश्चाबौद्धैः कृतनिरसनप्रकारोऽपि ग्राह्यः। स च-क्षणिकस्यार्थस्य प्राक्तनस्य पश्चात्तने कथमाकारार्पणम्। आकारस्य क्षणिकस्य कथमुत्तरकालानुवृत्तिः। तत्रैवाऽऽकारार्पणमित्यत्र नियामक संबन्धश्च कः। तेनैव संबन्धेन घटज्ञानं पटज्ञानमित्यादेर्निर्वाहे किमिति आकारस्य ज्ञाने कल्पना गौरवादित्यादिरूपः। एवं वा-प्राक्='नासतो अदृष्टत्वात्' इति सूत्रात् पूर्वं, प्रवृत्तैः समुदाय इत्यादिसूत्रैः एतत्सूत्रतः पश्चात् प्रवृत्तैः उदासीनानामपीत्यादिसूत्रैश्च दोषं ब्रुवाणैः शिक्षादक्षैः दमितः सौत्रान्तिकः सयूथ्यैर्वैभाषिकादिभि स्सह दमितः उपशमं यातु। अनेन समुदायादिसूत्राणां सौत्रान्तिकसाधारण्यं दर्शितं भवति॥ १९५॥

२१. अथ, "नाभाव उपलब्धे." इति योगाचारखण्डनाधिकरणसारमाह न ग्राह्येति। ज्ञानज्ञेयोभयं पूर्वोक्तम्। अयं तु ज्ञानमात्रमभ्युपैति। ज्ञेयसद्भावप्रतीतिस्तु ज्ञातृसद्भावप्रतीतिवत् विपर्यय इति तन्मतम्। "अविभागोऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः। ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते॥" इति तत्संग्रहः। तदर्थश्च—ग्राह्यं ज्ञेयं ग्राहकः ग्रहीता आत्मा च न स्तः।

कथं स्यादित्याशङ्क्य परिहरति—विविधेति। बहुप्रकारा(रूपा)नादिवासनावशाद् विचित्ररूपा बुद्धिरेव ऽयात्मकत्वेन स्फुरति। आहुश्च योगाचाराः—'अविभागोऽपि बुद्धयात्मा विपर्यासित-दर्शनैः। ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते॥' इति। एवं संसारदशायां ऽयात्मकत्वेन स्फुरणे सिद्धे मुक्तिदशायां स्वरूपेण स्फुरतीत्याह—भवेति। इत्थमेषा योगाचारोक्तिरर्थज्ञानयोर्बोधं बाधञ्च समानतया बुध्यमानैर्विद्वद्भिर्वा(द्भिर्निवा)रणीया। अयमर्थः—यदि प्रतीतत्वाद् बोधः स्वीक्रियते, अबाधितप्रतीतिसिद्धत्वादर्थोऽपि स्वीकार्यः। यदि कयाऽपि कुसृष्ट्या बाधितत्वादर्थो न स्वीक्रियते, तर्हि तादृशीनां कुसृष्टीनां सुलभत्वाद् बोधोऽपि न स्वीकार्य इति ज्ञानज्ञेययोस्तुल्यत्वम्। तथाच ज्ञेयाभावे ज्ञानाभावः, ज्ञानस्य सद्भावे ज्ञेयस्यापि सद्भाव इत्युक्तं भवति। एवमनङ्गीकारे दोष-माह—स्वपरविभजनादीति। बाह्यार्थानङ्गीकारे खलु, 'अयं वादी, अयं तु परवादी, अयमस्वत्पक्षः, अयं तु परपक्षः, परवादिनां पराजयः, अस्माकं तु विजयः' इत्यादिकं सर्वमपि बाह्यार्थविभाग-रूपत्वादखिलं योगाचारपक्षे न सिध्येत्॥ १९६॥

---

क्वचिदपि स्वाप्नप्रत्यय इव जागरप्रत्ययेऽपि। तर्हि घटमहं जानामि, पटमहम् जानामि, नीलं जानामि, पीतं जानामीति घटपटनीलपीतादीनां बाह्यानाम् अहमर्थादेश्च ग्रहीतुर्भानं कथमिति चेत्, एष बुद्ध्यात्मा ज्ञानमात्रमेव अद्य संसारदशायाम् अनादिविविधसंतानचित्रतया ऽयात्मकः=ग्राह्यग्राहकग्रहणरूप भेदवानिव लक्ष्यते। उत्तरोत्तरग्रहे पूर्वपूर्वग्रहः कारणम्। ग्रहवैचित्र्यात् वासनावैचित्र्यम्। तत्र धारावाहिकज्ञानसंततौ सजातीयप्रत्ययः कारणम्। अन्यत्र विजातीयप्रत्यय एव। घटज्ञानधारायां प्रसृतायां झटिति पटज्ञानप्रसक्तिः कथमिति चेत्—वासनाबलात्। वासना नाम पूर्वज्ञाननिष्ठमुत्तर-ज्ञानकुर्वद्रूपत्वात्मकं सामर्थ्यमिति, आलयविज्ञानसंतानपतितमसंविदितं ज्ञानमिति च भामती। तत्र कार्यैकोन्नेयम्। तस्यापि ज्ञानरूपत्वान्नातिरिक्तस्वीकारापत्तिः। ज्ञानमात्रपरिशेषश्च भवदशातिक्रमे संसारविलये। निरुपप्लवा चित्संततिरेव मोक्ष इति। किमिति ज्ञेयापलाप इति चेत्-मानाधीना मेयसिद्धि-रिति ज्ञाने अवश्यस्वीकार्ये लाघवादितरदुपेक्ष्यत इति। निरस्यति योगेति। इत्थं योगाचारोक्तिः वारणीया। विषयेति। विषयो नीलादिः; विषयि ज्ञानम्। उभयमपि निरस्तं शून्यवादिना। उभयोरपि बोधः प्रतीतिः समानः। घटमहं जानामीति सविषय एव हि बोधोऽनुभूयते; न जातु निर्विषयः। तत्र कुयुक्त्या विषये बाध्ये बोधोऽपि बाध्यताम्। अर्धजरतीयमयुक्तम्। ज्ञानं विनाऽपि व्यवहारे शिशुरपि व्यवहरत्विति चेत्—वस्तु विनाऽपि व्यवहारे शशशृंगादिकमपि व्यवह्रियतामिति तुल्यम्। अतो बोधं बाधञ्च समानं मन्वानैर्बोधमात्रवादी योगाचारो वार्यः। किञ्च विषयं विना ज्ञानमात्रमिष्यते। कथमयं स्वपक्षः, स परपक्ष इति विभागः स्यात्; ज्ञानत्वस्याविशेषात्। आकारो भिन्न इति चेत्-स किं स्वाभाविकः, किंवाऽन्यसमर्पितः, आहो विषय एव। नाद्यः, अनेकावगाहित्वात् ज्ञानस्य तदयोगात्। न ह्येकमेव ज्ञानं घटपटकुड्यकुसूलादिसर्वजगदाकारं भवितुमर्हति। वासना-खण्डनाच्च तदयोगः। न द्वितीयः; तस्य सौत्रान्तिकपक्षत्वात्, तदिष्टौ बाह्यापलापायोगात्। अत एव न तृतीयः। असत्पक्षप्रवेशाच्च। स्वपरेत्यादेरेवं वाऽर्थः। पूर्वं ग्राह्यग्राहकद्वयप्रस्तावात् ग्राह्यस्या-त्याज्यत्वं विषयविषयिणोरित्यादिनोक्तम्। अत्र ग्रहीत्रपलापे, दोष उच्यते-एकेन ज्ञातमिदम्; अन्येन नेदम्, किं त्वन्यदिति विभागो न स्यात्। एकानुभूतमन्यः स्मरेत्। उपदेशादि च व्यर्थं स्यादिति॥१९६

(१९७) बुद्ध्यैक्यं बोध्यबोद्ध्रोर्न घटत इह ते सत्ययोरन्ययोर्वा
भिन्नत्वे ग्राह्यलक्ष्मक्षतिमभिमनुषे नात्र चित्रैक्यमर्थ्यम् ।
चित्रं द्रव्यं गुणं वा किमपि न च विदुः केऽपि भिन्नैकरूपं
तेनाऽऽत्मख्यातिवादः(दे) स्थितिमिह भजतु स्वप्रकाशत्वमात्रे ॥ २२ ॥

इत्युपलब्ध्यधिकरणम् ॥ ४९ ॥

इत्थं किलाऽऽहुर्योगाचाराः—'सहोपलम्भनियमात् अभेदो नीलतद्धियोः' इति बोध्यस्य नीलस्य तद्बोधेन इदमहं जानामीति सहोपलम्भनियमादैक्यमिति । एतत्तु बोध्यन्यायेन बोद्धुरपि योजयितुं शक्यते । तच्चासम्बद्धमिति वक्तुं विकल्पयति तावत्—बुद्ध्यैक्यमिति । किं बोध्यबोद्ध्रोः सत्ययो-र्बुद्ध्यैक्यमभिधीयते, अन्ययोः = असत्ययोर्वा । सत्ययोश्चेत् त्वयैव बोध्यबोद्धृसत्यत्वमङ्गीकृतमिति नास्माभिरन्साधनीयं किञ्चित् । असत्ययोश्चेत्—तर्हि बुद्धेरिव तयोरपि सत्यत्वं प्रसज्येत, यद्वा तयोरिव बुद्धेरप्यसत्यत्वमित्युभयतोऽपि दोष आवर्तते। अतो बोद्धृबुद्धिबोध्यानामभिन्नत्वं भवत्पक्षे न घटते । भिन्नत्वं तु न घटत इति भवान् ब्रूत इत्याह—भिन्नत्व इति । भिन्नत्वे ग्राह्यलक्षणायोगं भवन्त एव प्राहुः, यदि घटो घटज्ञानाद्भिन्नः, तर्हि पटवत् तस्य विषयो न स्यादिति । तर्हि भिन्नाभिन्नत्वं ब्रूमः, यथा चित्रं वस्तु भिन्नमभिन्नञ्च, तद्वत् धृबोद्धृबोध्यबोधात्मकमेकं भिन्नमभिन्नञ्चेति । तदप्य-सङ्गतमित्याह–नात्रेति । चित्रैक्यं भिन्नत्वेऽप्यभिन्नत्वमसङ्गतमित्यर्थः। ननु कथं इष्टमपलपितुं शक्यते? दृष्टं[हि?] चित्रपटादिकं द्रव्यं तन्निष्ठं चित्ररूपञ्च । तद्वदत्रापि बुद्ध्यादीनां त्रयाणां भिन्नाभिन्नत्वमित्या-

---

२२. योगाचारैः, 'सहोपलम्भनियमादभेदो नीलतद्धियोः' इति ज्ञाने विषयैक्यमुक्तम् । अविभागाऽपि बुद्धिर्ग्राह्यग्राहकबुद्धिरूपविभागवतीवाविवेकिनामिति बोध्यबोद्ध्रुभयैक्यं बुद्धावुक्तम् । तत्र विचार्यते–बुद्ध्या सह तयोरैक्यं वा भेदो वा । आद्ये, तयोः सत्यत्वमसत्यत्वं वा । सत्यभूतबोध्यबोद्ध्रैक्यं बुद्धौ वो न भवति । तथा सति ब्रह्मपरिणामजगद्वादिभास्करपक्ष इव जगदपलापायोगात् । असत्यत्वपक्षे च कथं सत्यासत्ययोरविभागोक्तिः ॥ ऐक्यं मा भूदिति चेत्–तन्न; 'बोध्यस्य भिन्नत्वे, तत्र बोधसंबन्धो वक्तव्यः। स च संयोगसमवायादिर्दुर्वच इति दृग्दृश्यसंबन्धानुपपत्त्या भेदो न' इति त्वयोक्तत्वात्। तदाहोपरि भिन्नत्वे ग्राह्यलक्ष्मणः=दृग्दृश्यसंबन्धस्यानुपपत्तिं हि त्वं मन्यसे । त्वं हि तत्राद्वैतिनां गुरुः । अत ऐक्यं त्वदिष्टम् । किञ्च सहोपलम्भनियमस्य भेदसाधकत्वादभेदो न युक्तः । दृग्दृश्यसंबन्धानुपपत्तिकथनमपि यदि दृग्दृश्यसंबन्धोपपादनार्थम्, तर्हि दृश्यानपलाप एवेति । किञ्च बोध्यस्य बोद्धुश्च मिथो भेदात् तदुभयैक्यं बोधे कथम् । तदाह **नात्र चित्रैक्यमर्थ्यमि**ति । चित्राभ्यां भिन्नाभ्यामैक्यं कथमिति । तथा विचित्रा-णामनेकेषामेकबोधे भानात् भेदे कथं चित्रैक्यम् । ननु चित्रमिति वस्तु एकमेव, यथा शुरभ्यशुरभ्यवयवा-रब्धघटः, यथा च चित्ररूपमित्यत्राह **चित्रमि**ति । अवयवसंघातातिरिक्तद्रव्यं वा नानारूपसमुदायातिरिक्तं चित्ररूपं वा न हि भवन्तो विदुः, वयं वा । तत्रापि मिथो भिन्नत्वमेव, न त्वेकत्वम् । **भिन्नैकरूपं** भिन्ना-भिन्नात्मकम् । भिन्नं सदेकमिति हि न सुस्वीकरम्; भेदाभेदविरोधात् । मिथो भिन्नानां विषयाणा-मेकत्वायोगात एकज्ञानैक्यं तेषु वा, भिन्नतावैदैक्यं ज्ञाने वा न भवति । तथाच **तत्त्वमुक्ताकलापे**ऽ

शङ्क्य दूषयति-चित्रमिति। चित्रं द्रव्यमेकं न स्वीकुर्महे; नापि चित्रं रूपमेकम्; अपितु सर्वं सङ्घातात्मकमेव। केऽपि न च विदुरिति सर्वविद्वत्सम्मत्या निराकरोति। भिन्नैकरूपमिति स्फुटमेव विरोधं प्रकटयति। तेनेति। तेनाऽऽत्मख्यातिवादो(दे)[1] ज्ञानस्वरूपमात्रे स्थितिं [भवान्] भजतु; न पुनर्ज्ञानातिरिक्तयोर्बोद्धृबोध्ययोरुपलम्भे। तयोस्सत्यत्वे भेदवादप्रसङ्गात्। असत्यत्वे तदैकात्मकस्य ज्ञानस्यापि असत्यत्वप्रसङ्गः इति माध्यमिकपक्षावतारः स्यात्। बोध्यबोद्धृप्रकाशेऽप्यसति, 'इदमहं जानामि' इति सर्वलोकोपलम्भविरोध इति ॥ १९७ ॥  इत्युपलब्ध्यधिकरणम् ॥ ४९ ॥

## ५० ॥ अथ सर्वथानुपपत्त्यधिकरणम् ॥ २-२-५ ॥

सूत्रम्—सर्वथानुपपत्तेश्च ॥ ३० ॥

(१९८) सत्त्वेऽसत्त्वे द्वये च द्वितयपरिहृतावप्यनिष्टप्रसक्तेः
सर्वं शून्यं चतुष्कोट्यतिगतमिति नामानतः स्वेष्टवादात्।
अक्षोभ्यं तत्प्रहाणे परमतमसती संवृतिर्नार्थसिद्ध्यै
तस्मादित्थं निषेधो निरुपधिक इह क्वाप्यदृष्टो न कल्प्यः ॥ २३ ॥

अत्र भाष्य एव सङ्गतिः स्पष्टा। माध्यमिकपक्ष एव सुगतमतकाष्ठा। पक्षान्तराणि तु शिष्यबुद्धियोग्यतानुगुण्येनार्थाभ्युपगमात् पूर्वमुपन्यस्तानि(न्यस्य निरस्तानि?), अधुना प्रधान एव पक्ष उपन्यस्य निरसिष्यत इति संगतिः। तदर्थविचारस्तु—किं माध्यमिकोक्तसर्वशून्यवादः संभवति, नेति। किं सर्वं कार्यं भावरूपम्, उताभावरूपमिति। किं सर्वकार्येष्वपि भाव एव कारणम्, उताभाव

---

(४-२०), "किश्चान्योन्यं विरुद्धैर्युगपदवगतैर्धीरभिन्ना कथं स्यात्" इति। ननु ज्ञेयज्ञानाभेदकथनं ज्ञेयाभावतात्पर्यकमिति चेत्—ज्ञानवेद्यत्वात् ज्ञेयमस्ति, ज्ञानग्राहिज्ञानान्तरानुदयात् ज्ञानमेव नास्तीति किं न स्यात् ॥ स्वयंप्रकाशात् न तदपलापो युक्त इति चेत्—परेणापि प्रकाशितत्वात् ज्ञेयापलापोऽपि न युक्तः। तथाच आत्मख्यातिरित्यस्य स्वप्रकाश इत्यर्थात् स्वेतरानधीनः स्वप्रकाश इत्येतावदेव सुस्वीकरम्; न तु ख्यातिरेव स्वयं नानावस्तुरूपेण ख्यायते, न तु वस्तु किञ्चिदस्तीति मतमिति ॥ तर्हि स्वप्नादावपि वस्तु स्यादिति चेत् न; बाधाबाधरूपवैषम्यात्। यत्तु निर्विषयचित्संततिरूपापवर्गस्य कथनम्, तदपि न; विषयाश्रयशून्यस्य ज्ञानस्य न भावः अनुपलब्धेः। तदिदमुपरि सूत्रद्वयोक्तम्।

1. श्लोके वाद इत्यस्य प्रथमान्तत्वेऽन्वयक्लेशो नास्ति। वादे इति सप्तम्यन्तपाठमनुसृत्य भवानिति कर्त्रध्याहारश्चिन्तामणौ। तदा श्लोकार्थस्तु—आत्मख्यातिवादे स्वीकृते भवान् ज्ञानस्य स्वप्रकाशत्वमात्रे स्थितिं भजतु, न त्वभेदेन तस्य ज्ञेयादिप्रकाशकत्वेऽपीति। चिन्तामणौ ज्ञानस्वरूपमात्रे इति मात्रपदेन ज्ञानगतज्ञेयाद्यभेदव्यावृत्तिः। उपलम्भ इति। अभेदेनोपलम्भे इत्यर्थः ॥१९७॥

२३. अथ माध्यमिकनिरासः— सर्वशून्यवादस्तदिष्टः। स च निरुपाधिकनिरधिष्ठाननिषेधवादः। इदं नास्ति, इह नास्ति, इदानीं नास्ति इति प्रसिद्धरीतित्यागेन केवलं नास्तीति वादः। तदभिमतमुपन्यस्यति सत्त्व इति। सर्वं शून्यम्—चतुष्कोटिविनिर्मुक्तमिति यावत्। चतसश्च कोटयो लोकोल्लिखिताः सत्त्वमसत्त्वं सदसत्त्वं सदसद्विलक्षणत्वमिति। तेषु चतुर्ष्वपि पक्षेष्वनिष्टप्रसंग एवम्—

इति। किं भावान्तरमभावः, उत तुच्छतत्त्वं नाम किञ्चिदिति। इत्थं किल माध्यमिकमत(पक्ष)-प्रक्रियामाहुः-'न सन्नासन्न सदसन्न चाप्यनुभयात्मकम्। चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः॥' इति। न सत् तावत्; नित्य(यं)प्रमाणप्रमेयभावस्य वक्तुमेव न शक्यत्वात्[1]; नाप्यसत्; असत्त्वादेव। नापि सदसत्; विरोधात्(देव)। नापि सदसद्विलक्षणं, तत एव। ततश्च चतुष्कोटिविनिर्मुक्तं शून्यमेव तत्त्व-मिति। तदिदमाह-सत्त्व इति। उक्तं मतं(पक्षं) प्रतिक्षिपति-नेति। तत्र हेतुमाह-अमानतः स्वेष्ट-वादादिति। अत्रायं विकल्पः—किं [2]प्रमाणादबाध्यं तत्त्वमिति ब्रूषे, उताप्रमाणात्। यदि प्रमाणात्, अस्मच्छिष्योऽसि। यद्यप्रमाणात्, त्वदुक्तशून्यवादो न सिध्यतीत्यर्थः। तर्हि विश्वास्तित्ववादवत् विश्वशून्यत्ववादमपि परित्यजाम इत्याशङ्क्य दूषयति—अक्षोभ्यमिति। विश्वशून्यत्वप्रहाणे विश्व-सत्यत्ववादिनां परेषां मतमक्षोभ्यमेव स्यात्॥ संवृत्या सर्वमपि सिध्यतीति चेत्, तदपि नेत्याह—असतीति। सा संवृतिरसती, सती वा। यद्यसती, तदा खल्वनर्थक्रिया[3]कारित्वात् विश्वासत्यत्वं न प्रसाधयेत्। यदि सती, कदापि न प्रसाधयेत्; स्वस्यैव विद्यमानत्वादित्यर्थः। इत्थं निरुपधिकनिषेध-वादिनो माध्यमिकस्य पक्षं प्रतिक्षिप्य निगमयति—तस्मादिति। दृष्टो हि सर्वत्र निषेधः सोपाधिक एव। तत्र, 'इदमत्र नास्ति' इति देशभेदोपाधिना निषेधः। 'इदमिदानीं नास्ति' इति कालभेदेन। 'इदमिदं न भवति' इति वस्तुभेदेन। एवं सोपाधिकनिषेधे सर्वत्र प्रामाणिके सति केवलं निरुपा-धिकमेव नास्तीति वदन् माध्यमिकवादी लोकविरोधात् बहिष्करणीय एव। काप्यदृष्टो न कल्प्य इति। निरुपाधिकनिषेधः सर्वत्राप्यदृष्टत्वान्न कल्प्य इत्यर्थः॥ १९८॥

---

यदि सत् स्यात, न किञ्चिद् बाध्येत; सर्वदा सर्वत्र सर्वथा च स्यात्। यदि असत्, न ख्यायेत क्वचिदपि कदापि। न च सदसत्; उक्तदोषद्वयप्रसङ्गात्। न चतुर्थः पक्षः। सदसदुभयवैलक्षण्ये हि केवलसद्वा केवलासद्वा। तत्र च दोष उक्तः। अतः कोटिचतुष्कातिलंघि शून्यमेव तत्त्वमिति। निरस्यति इति नेति। अमानतः=प्रमाणं विना स्वेष्टयत्किञ्चिद्वादरूपत्वादस्य वादस्य न साधुतेति। ननु सत एव मानान्वेषणम्; नास्तीति वदता न मानं वक्तव्यमिति चेत्—सतो मानापेक्षेति नियमसत्त्वे कथं सर्वाभावः। मानाभाव एव ते मानमिति च कथं मानास्वीकारः। स च मानाभावोऽसिद्धः; मानोप-लम्भात्। किञ्च केवलं 'नास्ति' इत्येतावदुच्यते चेत्-कथं परमतनिषेधः; परम तस्यापि त्वन्मतनास्तिरूपत्वेन परेणेष्टत्वात्। प्रतियोगिसमर्पणे च कथं निरुपाधिकनिषेधः। चतुष्कोटिविनिर्मुक्तमिति त्वयैवोक्त-त्वाच्च कोटिचतुष्के प्रतियोगिनि सति कथं निरुपाधिकनिषेधः। अनिष्टप्रसंगरूपोपपत्तिवादिना च कथं तत्प्रसंगनिषेधः शक्यः। अतः तत्प्रहाणे—नाहममानतो वदामीति वचने, मानादिस्वीकारात् परमत-मक्षोभ्यम्। ननु शून्यरूपतत्त्वसंवृतिरूपदोषकल्पितमिदं सर्वं व्यवह्रियमाणम्, वस्तुतो नास्तीति चेत्—संवृतिः सत्या न वा। अन्त्ये व्यवहाररूपार्थक्रियाकारितायै सा न भवति। आद्ये, कस्यचिदिष्टत्वात् न सर्वशून्यवादः। अतः अस्तीति सत्त्वम् अत्रेदमिदानीं नास्तीति सोपाधिकनास्तित्वञ्चेति यथायथ-मुभयमेव दृष्टमिति निरुपधिकनिषेधस्य काप्यदर्शनान्न स कल्प्यः इति। इह कापीत्यनेन त्वन्मतेऽपि न दृष्टः, लोकेऽपि न दृष्ट इत्युच्यते॥

चि. टी. 1 न शक्यत्वादिति। अशक्यत्वादित्यर्थः। 2 प्रमाणादित्यस्य ब्रूषे इत्यत्रान्वयः॥ 3. अनर्थेत्यादि। आर्थक्रियाकारित्वाभावादित्यर्थः॥ अर्थक्रिया=अर्थनिष्पत्तिः; कार्यमितियावत्॥

(१९९) प्राक् पश्चात् सत्त्वहानेर्गगनकुसुमवत् स्यान्न मध्येऽपि कार्यम्;
मैवं तत्रैव दृष्टेः; न यदि, कथमसौ मध्यकार्यादिशब्दः।
कार्यारम्भे निदानं विकृतिमत् उत नेत्यादिचिन्ताऽपि वन्ध्या
सामग्र्या कार्यसिद्धेर्भजति च गुणतां कारणस्यानवस्था ॥ २४ ॥

इत्थं किल माध्यमिकवादी मन्यते–'कार्यं घटादिकं प्रागभावकाले तावत् असदिति सुप्रसिद्धमेव। पश्चादपि प्रध्वंसकाले तथैव दृष्टम्। तथाच यथा पूर्वोत्तरदिवसयोरसतः शशविषाणस्य मध्यदिवसे असत्त्वम्, एवं प्राक्प्रध्वंसाभावकालयोरसतः कार्यस्य स्वकाले–मध्यकालेऽप्यसत्त्वम्' इति। तदिदमाह–प्रागिति। तदिदं प्रतिक्षिपति–मैवमिति। तत्रैवेति। प्रमाणादेव प्रमेयसिद्धिः। पूर्वोत्तरकालयोरदृष्टत्वात् कार्यं न विद्यते। मध्यकाले तु दृष्टत्वात् कार्यं नास्तीति वक्तुं न शक्यत इति। एवं सुहृद्भावेनोत्तरमुक्त्वा तथापि [1]न स्वीकुर्वतः पूर्वपक्षिणो बाधकमाह–न यदीति। एवमनङ्गीकारे, कार्यं मध्यकालेऽपि न स्यादिति कार्यादिशब्दप्रयोग एव न सङ्घटत इत्यर्थः। कार्यशब्दो हि प्रागसतो मध्ये सत्त्वमेवाह। मध्यशब्दोऽपि हि प्रागभावस्य प्रध्वंसकालावधिं प्रध्वंसस्य प्रागभावकालावधिं चाह। किमुक्तं भवति? वस्तुसद्भावमाहेत्यर्थः। तथाच वस्तुसद्भावानङ्गीकारे प्रतिकूलाप्रतिकूलव्यवहार एव न घटेतेति बाधकतर्कोपन्यासः। इत्थं माध्यमिकोक्तमेकमर्थं प्रतिक्षिप्य तदुक्तमर्थान्तरमप्यनूद्य परिहरति–कार्यारम्भ इति। एवं किलाऽऽह माध्यमिकः–'कार्यारम्भे कारणम(णं)विकृतमेव जनयेत्, उत [अ]विकृतम्। यद्यविकृतं, तदा सर्वदाऽपि जनयेत्; यदि विकृतम्, तदा विकारस्यापि कार्यत्वात् विकारान्तरमन्वेषणीयम्। तथाचानवस्थितिः' इति। इत्यादिचिन्ता वन्ध्येति= एवंविधा चिन्ता निरर्थिकेत्यर्थः। निरर्थकत्वमेवोपपादयति–सामग्र्येति। कारणस्य सहकारिसम्पत्तिः सामग्री। तथाच परस्परोत्पत्तिप्रसङ्गो(ङ्गश्च) निरस्तः। सामग्रीसम्पत्तावपि सामग्र्यन्तरापेक्षाऽस्ति। तथाचानवस्थितिप्रसङ्गोऽवशिष्यते। स तु गुण एव; सिद्धानवस्थानरूपत्वादित्याह–भजतीति। लोके कर्षणादिक्रमेण शालिसम्पत्तिपर्यन्तं सामग्रीपरम्पराक्रमोऽनुवर्तते। एवमनादौ संसारे, पूर्वपूर्वकारण-[प्र]क्रमेणोत्तरोत्तरकारणक्रमो जायत इति न कश्चिदपि विपश्चितां विप्रतिपत्तिगन्धावकाश इति ॥१९९

२४. पूर्वापरवन्मध्येऽप्यसत्त्वम्। अन्यथा कारणानवस्थेति दोषं परिहरति प्रागिति। कार्यं न स्वकालेऽपि सत्, प्राक् अभावात्, पश्चादप्यभावात् गगनकुसुमवादिति॥ मैवम्; उपलभ्यमानत्वात्। न यदि=तत्र मध्यकाले न दृष्टिश्चेत्, कार्यशब्दो मध्यशब्दः तत्प्रयुक्तः प्रागादिशब्दश्च न स्यात्। अतो गगनकुसुमवैलक्षण्यम्। उत्तरकालसत्त्वं हि कार्यत्वम्। स्वप्रागभावध्वंस स्वध्वंसप्रागभावोभयसत्ताकालो मध्यकालः। स च ध्वंसादिः कार्यादनन्य इति। ननु कार्यारम्भकं यत्, तत् किञ्चित् प्रति कार्यं न वा। आद्ये, तद् कस्य कार्यम्, तत्कारणमपि कस्य कार्यमित्येवमनवस्था। कारणस्याकार्यत्वे च तत्कार्यं प्रकृतमप्यनादि स्यात्, पूर्वमेव स्यादिति इति चेत्–इयं चिन्ताऽपि न युक्ता; कार्यपरम्परास्वीकारात्। कारणानवस्था ह्यनादौ संसारे सर्वेष्टा। अन्यथा कर्मानादित्ववादामिद्ध्या अपसिद्धान्तः स्यात्। अतोऽनवस्थेयं गुण एव, न दोष इति॥

1. न स्वीकुर्वतः = अस्वीकुर्वतः ॥ १९९ ॥

(२००) साध्यं हेतुस्तदङ्गप्रभृति च यदि वा संवृतेरेव सिध्येत्,
असद्वाक्यानुरोधादिह न कथमसिद्धयादिदोषा भवेयुः ।
तत्र प्रामाण्यबुद्धिर्न यदि, पठत तन्मानमित्यसदुक्तिम् ;
वस्तुस्थित्या न मानं तदिति यदि, समं त्वन्मतस्थापकेऽपि ॥ २५ ॥

'अधिकारोऽनुपायत्वान्न वादे शून्यवादिनः' इत्युक्तक्रमेण शून्यवादिनः स्वपक्षसाधकप्रमाणाभावात् शून्यं तत्त्वमिति वक्तुमेव न शक्यमित्यस्माभिरुक्ते सति शून्यवादी प्रत्यवतिष्ठते—अनुमानादेव सर्वं मे सिध्यतीति। तत्र चानुमानाङ्गं सकलमपि मे सत्यमेव सिध्येत् संवृतिमहिम्ना, या तत्त्वमर्थं संवृणोति= तिरस्करोति, सा संवृतिशब्दवाच्येति। तेन सांवृतिकप्रमाणसिद्धं शून्यं तत्त्वम्' इति। तदिदमनुवदति—साध्यमिति। साध्यम् अनुमानसाध्यम्, हेतुः= तत्साधनम्, तदङ्गं व्याप्त्यादिकम्। प्रभृतिशब्देन तदपेक्षितं तर्कादिकमुच्यते। सर्वं संवृतेरेव सिध्येत्= विपरीतज्ञानादेव सिध्येदित्यर्थः। अत्र दूषणमाह—असदिति। यदि तवानुमानसाधनाङ्गं सकलमपि संवृतिप्रमाणात् सिध्येत्-त्वद्वाक्यादेव सिध्येत्, तर्हि तादृशप्रमाणा[द्]सद्वाक्यानुरोधादेव तवानुमानदूषणाङ्गं सकलमपि कथं न सिध्येदित्यर्थः। अत्र पूर्वपक्षिणोऽभिप्रायमनुवदति—तत्रेति। युष्मद्वाक्यानुरोधे[1] मम प्रमाणबुद्धिर्नास्तीति, तर्हि मम वाक्यं त्वत्साधकदूषकत्वेन प्रयुज्यमानं प्रमाणमिति मदुक्तिं पठित्वा सन्तुष्यत॥ वस्तुस्थित्या तव वाक्यं प्रमाणं न भवतीति यदि वदसि, तर्हि त्वन्मतस्थापकेऽप्यनुमाने वस्तुस्थित्या प्रामाण्यं नास्त्येव; तत्प्रामाण्यस्य सांवृतिकत्वेनैव भवतैवाभिधानात्। तथा च समः समाधिः। अयमर्थः-त्वत्सिद्धान्तस्साधुरिति त्वद्वाक्य(तव वाक्य)प्रामाण्ये त्वत्सिद्धान्तोऽसाधुरिति मद्वाक्यस्यापि प्रामाण्यं स्यात्; मद्वाक्यस्याप्रामाण्ये त्वद्वाक्यस्याप्यप्रामाण्यं स्यात्; द्वयोः सांवृतिकत्वाविशेषादिति ॥ २०० ॥

---

२५. शून्यं तत्त्वमित्यस्य शून्यमेव प्रामाणिकमित्यर्थो वक्तव्यः। प्रमाणस्यैवासंमतौ कथं प्रामाणिकता। तत्र प्रमाणमनुमानमेव तैरुपन्यस्यते। तत्र पञ्चावयवः त्र्यवयवो वा न्याय इति पक्षत्यागेन उदाहरणोपनयरूपावयवद्वयमात्रवादिनाऽपि सौगतेन अनुमानं सपरिकरं स्वीकृतमिति कथं सर्वशून्यता। तदसंमतौ कथमनुमानं प्रमाणम्। तत्र तैरुच्यते— शून्यसाधकस्यानुमानस्य सांवृतिकं प्रामाण्यमिष्यते। संवृतिर्नाम तत्त्वच्छादको दोषविशेषः लोकव्यवहारो वा। व्यावहारिकं प्रामाण्यमिति यावदिति। तत् खण्डयति साध्यमिति। साध्यं हेतुः तदङ्गं व्याप्तिः पक्षधर्मता च ; पक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वानि वा। प्रभृतिपदमनुकूलतर्कं तादात्म्यतदुत्पत्त्यादि अविनाभावनियामकं च ग्राहयति। सर्वमिदमसिद्धं मानाभावात्। यदि संवृतिसिद्धं सर्वं लव्यवहारसिद्धमिति, तर्हि अस्माभिरसिद्ध्यादिदोषस्य तत्र कथ्यमानत्वात् असद्व्यवहारतस्त्वदुक्तस्य दुष्टत्वमेव किं न स्यात्। अथ तत्र असद्वाक्ये प्रामाण्यबुद्धिर्नेति चेत्-असिद्ध्यादिकमस्तीत्यसद्वाक्यं मानमिति असदुक्तिं पठत। एतदुक्तिवशादेवास्य सांवृतिक प्रामाण्यं किं न भवेत्। तथापि पारमार्थिकप्रामाण्याभावात् वस्तुस्थित्या न मानमिति चेत्—वास्तवप्रामाण्याभावः त्वदुद्दिष्टयाऽपि त्वदुच्यमाने वाक्येऽपि तदुक्तानुमानेऽप्यस्तीति अविशेष। सर्वलोकव्यवहारस्तु अस्माकमेवानुकूलः; न तु शून्यत्वपक्षस्येति॥ 1 अनुरोधे इति। अनुरोधप्रयोजिकेत्यर्थः ॥२००

(२०१) अख्यातिस्त्वन्यथाधीर्विषयरहितधीश्चा(स्वाऽ)नधिष्ठानबुद्धिः
बाह्यार्थाकारयोगः सदसदितरधीः शून्यधीरात्मधीश्च ।
भ्रान्तौ सर्वत्र तत्तत्परमतकथकैराहृताः पञ्चभेदाः
प्रायो बुद्धिर्यथार्था श्रुतिविदभिमता क्वापि भेदाग्रहादि ॥ २६ ॥

इति सर्वथानुपपत्त्यधिकरणम् ॥ ५० ॥

अत्र भ्रान्तिज्ञानप्रसङ्गात् तत्तद्वादिपरिगृहीतान् भ्रान्तिप्रकारान् अनूद्य, अन्ते स्वपक्षमपि निगमयति–अख्यातिरिति । प्राभाकराः शुक्तिरजतत्वयोरसंसर्गाग्रहात् शुक्तिरजतयोर्भेदाग्रहं भ्रान्तिस्थले प्रतिपेदिरे । सैवाख्यातिः ; असंसर्गस्याग्रहणात् भेदस्याग्रहणाच्च । नैयायिकाः पुनरन्यथाज्ञानं भ्रान्तिरिति प्राहुरिति कथयति—अन्यथाधीरिति । शुक्तिः रजतात्मना भातीत्यर्थः । विषयरहितधीरिति बौद्धैकदेशिनः । विपरीतज्ञानस्य विषय एव नास्तीति तेषां भावः । निर्विषयख्यातिवादित्वात् । सा अनधिष्ठानबुद्धिः–अयमपि बौद्धभेदः । तत्र गन्धर्वनगरादिकं स्वप्नमप्युदाहरन्ति । सौत्रान्तिकाः पुनः सन्निहिता नीलादयः स्वविषयबुद्धौ स्वाकारमर्पयन्ति, तथा बुद्ध्याऽऽरोपितनीलादिविज्ञानं भ्रान्तिरिति निश्चिन्वन्ति । सदसदितरधीः= मायावादिनः सदसद्विलक्षणस्यानिर्वचनीयस्य ख्यातिमाचक्षते । माध्यमिकाः पुनः शून्यस्यार्थस्य प्रतीतिरिति प्रलपन्ति । योगाचारास्तु

---

२६. असदेव ख्यायत इति शून्यवादनिरासेन सदेव ख्यायत इति स्थापने प्रवृत्तः, 'भ्रान्तौ कथं सतो विषयत्वम्, सर्वञ्च ज्ञानं भ्रान्तिरेवेत्यस्मदिष्टम्' इति बौद्धाक्षेपं परिहर्तुं भ्रान्तिपक्षान् वादिसंमतान् परिगणय्य स्वपक्षस्थं विशेषमन्ते दर्शयति अख्यातिरिति । अख्यातिः ख्यात्यभावः भ्रान्तिस्थले प्राभाकरेष्टः । इदं रजतमिति तादात्म्यभ्रमे शुक्तिरजतयोर्भेदस्याग्रह एवाख्यातिः । शंखे पीतरूपमिति भ्रमे शंखपीतयोः स्थितस्यासंसर्गस्याग्रह एवाख्यातिः । ननु भ्रान्तिर्नाम ज्ञानविशेषः ; अख्यातिश्चाभावः ; कथमुभयैक्यमिति चेत्—भेदाग्रहविशिष्टविशेष्यप्रकारज्ञानं भ्रान्तिरित्यदोषः । तुशब्दः अत्र पक्षे लाघवसत्त्वात् सिद्धान्तेऽप्यस्य गृहीतत्वरूपं वैलक्षण्यं दर्शयितुम् । तार्किकपक्षे भ्रान्तिः अन्यथाधीः= तदभाववति तत्प्रकारज्ञानात्मकं विशिष्टज्ञानम् । इदं स्वरसप्रतीतम् । यत्र ज्ञाने विषय एव नास्ति, तत् भ्रान्तिरिति केचित् । इदञ्च ज्ञानस्य किञ्चिदविषयकत्वं वा, विषयस्य कुत्राप्यसत्त्वं वा, प्रकृतस्थले विषयासत्त्वं वा । नाद्यः ; ज्ञानत्वनिर्विषयत्वयोर्मिथो विरोधात् । द्वितीये असत्ख्यातिपक्ष एव स्यात् । तदयुक्तम् ; शशविषाणस्यापि भानापत्तेः । न तृतीयः, अन्यथाख्यात्यादौ पर्यवसानात् । चशब्दोऽन्ते योज्यः । स्वेति पाठे भ्रान्तिरित्यर्थः । अख्यातिरित्यादौ सर्वत्रान्वयः । अनधिष्ठानबुद्धिरिति । "भ्रान्तौ रूप्यादिरर्थो विलसति निरधिष्ठान इत्याहुरेके" (त. मु. क. 4-29) । तैमिरिककेशस्तबकग्रहणमुदाहरणम् । तदयुक्तम् ; शुक्त्याद्यधिष्ठानाभाने रजतादिज्ञानानुत्पत्तेः । बाह्येति : बाह्यस्य घटादेराकारो युज्यते ज्ञाने, घट इति ज्ञानम् पट इति ज्ञानमित्यनुभवादित्यन्ये बौद्धाः । तादृशाकारविशिष्टज्ञानं भ्रान्तिरित्युक्तं भवति । अत्रेदं विचार्यम्— बाह्येन वस्तुना स्वाकारो ज्ञाने समर्पितो वस्तुगत्याऽस्ति चेत्–कथं तस्य भ्रान्तिता । बाह्यगताकारस्य ज्ञाने आरोपश्चेत्–अन्यथाख्यात्यादौ पर्यवसानम् । तदा भ्रान्त्यभ्रान्तिविवेकायोगश्च ।

स्वात्मैव बाह्यत्वेन बुध्यत इति भ्रान्तिप्रकारमालपन्ति। एवं विविच्योक्त्वा संकलय्य कथयति—भ्रान्ताविति। तत्तद्वादिभिरादृता एते पक्षभेदाः। एवं पक्षभेदान् अनूद्य यथार्थख्यातिलक्षणं श्रौतत्वात् स्वकीयमित्याह–प्राय इति। प्राचुर्यार्थः(र्थे?) अत्र प्रायश्शब्दं (प्राय इति शब्दं) प्रयुञ्जानस्यायमभिप्रायः–प्राचुर्येण सर्वत्र यथार्थख्यातिरेव सुलभा। पञ्चीकरणादिप्रक्रियया शुक्तौ रजतमस्ति, रजते च शुक्तिरप्यस्ति। सदृशे सदृशान्तरस्य विद्यमानत्वं तान्त्रिकैरप्यनुमन्यते। अत एव सोमाभावे पूतीकान् अभिषुणुयात् इत्युच्यते; पूतीकेऽपि सोमावयवस्य विद्यमानत्वात्। उक्तमिदं [1]यामुनाचार्यैः–"सोमाभावे च पूतीकग्रहणं श्रुतिचोदितम्। सोमावयवसद्भावादिति न्यायविदो विदुः॥" इति। तेन शुक्तौ विद्यमानमेव रजतं शुक्तिरजतज्ञाने गृह्यते। तेन विद्यमानरजतग्रहणात् यथार्थख्यातिः। अत्रायं विशेषः—शुक्तौ शुक्तिभूयस्त्वमस्ति, रजताल्पीयस्त्वञ्च। तथाच शुक्तिभूयस्त्वरजताल्पीयस्त्वाग्रहणसहकृतं विद्यमानरजतग्रहणं भ्रान्तिज्ञानमित्युच्यते। तथा चाख्यातिसंवलितयथार्थख्याति[2]ष्वप्यन्तविश्रामस्माकमभिमतेत्यर्थः। अत्र श्रुतिविदभिमतेति स्वपक्षस्य पारमार्थ्यसाधकं[3] सन्ध्याधिकरणविषयवाक्यं स्मार्यते। श्रूयते हि, 'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते। स हि कर्ता' इति। क्वापि भेदाग्रहादीति। यत्र द्रव्ये द्रव्यान्तरसद्भावो न लभ्यते, तत्र प्राभाकराभिमतो भेदाग्रहोऽसंसर्गाग्रहो वा स्वीकार्य इति भावः॥ २०१॥

---

आकारानर्पणस्थले आकारवत्त्वग्रहो भ्रान्तिरिति चेत्— अर्थेनाऽऽकारः समर्पयितुं शक्यते न वेति विचारे अनर्पणमेव सर्वत्रेति। एवं वाऽर्थः–वस्तुतो मुक्ताविव सर्वदा निराकाराया एव संविदः बाह्यार्थाकारायोगस्यैव वास्तवत्वात् तद्योगग्रहो भ्रान्तिरिति ज्ञानसामान्यं भ्रान्तिरेवेति। तर्हि आत्मधीरिति पक्षः स्यादिति चेत्– वक्ष्यते विशेषः। अथ मृषावादिनां पक्षः सदसद्विलक्षणविषयकज्ञानं भ्रान्तिरिति। शून्यधीः अभावस्यैव जगद्रूपभावात्मना ग्रहणमिति माध्यमिकपक्षः प्रकृतः। योगाचारपक्षश्च आत्मधीरिति। आत्मनः ज्ञानस्यैव सर्वोऽप्याकारः; न तु बहिः। अतो बहिर्वदवभासो भ्रान्तिः। यदा चाऽऽकाराणामपि विलयः, निराकारज्ञानसंततिमात्रम्—तदा मोक्ष इति। सिद्धान्तमाह प्राय इति। यथार्थं सर्वविज्ञानमिति प्राभाकराणामस्माकञ्चाविशिष्टम्। तत्र तन्मते शुक्तिरजतबुद्धिरूपभ्रान्तेर्विशिष्टबुद्धित्वं न भवति। शुक्तिदर्शनं रजतस्मरणञ्चेति ज्ञानद्वयं मिथोभेदस्य स्थितस्याग्रहविशिष्टमिति तैरुक्तेः। इयमेवाख्यातिः भेदाग्रहश्च। एवं सर्वस्या अपि बुद्धेर्यथार्थत्वे स्थिते प्राय इति विशेषणम्, बुद्धिपदस्य विशिष्टबुद्धिरूपार्थतात्पर्येण। तथाचास्मन्मते भ्रान्तिरूपद्रव्यप्रत्यक्षबुद्धिः विशिष्टबुद्धिरेव भवति। पञ्चीकरणप्रक्रियादिना शुक्त्यादौ रजतसदृशांशसद्भावेन इदं रजतमिति तदंशस्यैव शुक्त्यंशासंवलितस्य ग्रहणात् विशिष्टबुद्धित्वसंभवात्। अतो भ्रान्तिस्थले विशिष्टकबुद्धित्वस्वारस्यस्य प्रायो रक्षणम्। यत्रैवमंशोपपादनासंभवः, तत्र

---

1 अत्र यामुनाचार्यैरिति प्रयोगात् श्रीभाष्यस्थितः एतदर्थघटितः कारिकाकलापः न श्रीभाष्यकारीयः; किंतु यामुनाचार्यसिद्धिग्रन्थस्थित इत्याशयः तर्क्यते। (एवं विष्णुपुराणव्याख्याने विष्णुचित्तीयेऽप्यस्ति)। 2 अख्यातिसंवलितयथार्थख्यातिरित्यस्य क्वचित् भ्रान्तिस्थले अख्यातिरेव; क्वचिच्च यथार्थख्यातिरेवेत्यर्थश्च संभवति। 3 संध्याधिकरणेति त्रिवृत्करणश्रुत्य सूत्रलक्षणम्॥

## ५१ ॥ अथ एकस्मिन्नसंभवाधिकरणम् ॥ २-२-६ ॥

सूत्रम्—नैकस्मिन्नसंभवात् ॥ एवञ्चाऽऽत्माकार्त्स्न्यम् ॥ न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ ३१-३४ ॥

(२०२) संवादात् क्वापि भागे जिनमुनिवचसः शेषमप्यस्तु मानं
तस्मात् तेनोपरोध्योपनिषदिति कचोल्लुञ्छनानां दुराशा ।
वैघट्य(वम्य)स्यापि दृष्टेः ; न यदि, सुगतवागेवमेवास्तु सत्या
तेनान्योन्यं निरोधात् पुरुषवचनयोरप्रकम्प्या श्रुतिर्नः ॥ २७ ॥

'निरस्ताः' इत्यादिना भाष्य एव सङ्गतिरुक्ता । वैशेषिकबौद्धयोः परमाणुकारणवादिनोः परमाणुचातुर्विध्यसाम्यात् तन्निरासौ सङ्गतौ । अतो बौद्धानन्तरमार्हतनिरासः प्राप्त इति सङ्गतिः । एवं वा सङ्गतिः—परस्परविरुद्धकोटिषु[1] वैलक्षण्यवादी माध्यमिकः पूर्वं निरस्तः । 'न सन्नासन्न सदसत्' इत्यादिना सदसदादिकोटीनां निराकरणमेव हि तत्सिद्धान्तः । तदेव न्यायवादिभिर्निरस्यते, 'परस्परविरोधे तु न प्रकारान्तरस्थितिः' (न्या. कु) [2]इति । अधुना पुनः परस्परविरुद्धकोटीनामेकत्रैव समुच्चयवादी निरस्यते । स हि, 'स्यादस्ति स्यान्नास्ति' इत्यादिना सप्तभङ्गीमेव सिद्धान्तयति । तच्च न्यायवादिभिर्निरस्यते— 'नैकताऽपि विरुद्धानामुक्तिमात्रविरोधतः ।' इति । तदर्थविचारस्तु-किं जैनमतं समीचीनयुक्तिमूलम्, नेति । किमेकस्य वस्तुनः सत्त्वासत्त्व-नित्यत्वानित्यत्व-भिन्नत्वाभिन्नत्वाद्यनेककल्पभाक्त्वं सम्भवति, नेति । किं पर्यायस्वभावाभ्यां एकस्य वस्तुनो नैक[ऽनेक]स्वभावत्वमुपपादयितुं शक्यते, नेति । अत्र जैनवाक्यस्य क्वचित्संवादात् प्रामाण्यमाशङ्क्य बौद्धवाक्यप्रतिबन्द्या दूषयित्वा तयोरुभयोः परस्परविरोधादप्रामाण्ये, निष्प्रतिद्वन्द्वमेव वेदवाक्यप्रामाण्यं प्रतिपादयति—संवादादिति । अयमत्र शब्दार्थः—क्वचित्,='अहिंसा परमो धर्मः' इत्यादिवाक्यभागे श्रुतिसंवादाज्जिनमुनिवचसः, शेषमपि वाक्यजातं तत्तुल्यन्यायतया प्रमाणमस्तु । तस्मात् जिनमुनिवचसा उपनिषदुपरोध्या भवत्विति कचोल्लुञ्छनानां दुराशा । अत्र दुराशेत्युक्त्या प्रसक्तस्य दुष्टत्वं द्योत्यते । दुष्टत्वस्य प्रतिबन्द्योपपादनं वक्तुं दोषं तावदाह—वैघट्यस्यापि दृष्टेरिति ।

---

सर्वत्र प्रत्यक्षे ह्रदोऽग्निमानित्यादिपरोक्षज्ञाने च विशिष्टज्ञानत्वं नेष्यते । भेदाग्रहासंसर्गाग्रहरूपाख्यातिरेव तत्र । एवञ्च ज्ञानविषयस्य सर्वस्य विशिष्टस्यैकदेशस्य वा वस्तुतः सत्त्वात् असत्ख्यातिरेव नेति । शशविषाणशब्दादपि शशस्य विषाणस्य च सतो विशकलितप्रतीतिरेव। विस्तरस्तत्त्वमुक्ताकलापादौ॥२०१

२७. बुद्धस्य भगवदवतारत्वात् तदुक्तं प्रमाणमिति विप्रलम्भकत्वरूपयुक्त्यसंभवोपपादनपूर्वमाशंकितम् जिनस्य मुनेः भगवत्प्रेरितताया विष्णुपुराणेऽऽवगमेऽपि अवतारत्वासंभवात् प्रकारान्तरेण पूर्वपक्षं दर्शयति संवादादिति । क्वापीति अहिंसादिग्रहणम् । तस्मात् मानत्वार्हत्वात् अनवतारत्वेऽपि मुनित्वाज्जिनस्य तेन जिनवचसा उपनिषत् उपरोध्या भवतीति । कचोल्लुञ्छनशब्देन वेदविरुद्धाचारत्वं तत एवाश्रद्धेयत्वञ्च ज्ञाप्यते । परिहरति वैवम्यस्यापीति । वैघट्यस्येति च पाठः । तत्त्वविषयेजीवा-

---

1 कोटिषु वैलक्षण्यवादी=तत्तत्कोट्यभावसमुच्चयवादी । जैनस्तु तत्तत्कोटिसमुच्चयवादी ।

2 कुसुमाञ्जलिकारिकायामस्यां पूर्वार्धे बौद्धनिरासकम्, उत्तरार्धे जैननिरासकमिति सुशोभनमिदं श्रीकुमारवेदान्ताचार्यव्याख्यानम् ।

पिञ्छमलधारणादीनां बहूनां वेदविरुद्धानां इष्टेरित्यर्थः। न यदि-एवं बहुविरुद्धार्थइष्टावपि जैनमतस्य दुष्टत्वं न यदि, तर्हि सुगतवागेवमेवास्तु सत्या; तस्या अपि क्वाचित्कसंवादात्। ननु जैनवागपि सत्याऽस्तु; तथाऽस्तु सौगतवागपि सत्या। तथा च वेदो भ्रष्ट इत्याशङ्क्य परिहरति-तेनेति। तेन [1]पुरुषप्रणीतयोर्बुद्धजैनवाक्ययोः परस्परविरोधान्निरोधे सति, नित्यं श्रूयमाणत्वेन श्रुतिरनादिनिधनाविच्छिन्नसम्प्रदायत्वादप्रकम्प्यतां भजत इति निष्कण्टकोऽयं नैगमिकमार्गः॥ २०२॥

(२०३) सच्चासच्च द्वयञ्च द्वितयसमधिकं तच्च पूर्वैस्सहेति

स्यादस्तीत्यादिवाचा परिहितगगनैर्गीयते सप्तभङ्गी।

व्याघातस्तैः(स्ते) यदीष्टः, स्वसमयविहतिर्यद्यनिष्टः परोक्तः

त(त्व)द्वाक्यैर्न क्षतिः स्याच्च च निरुपधिकः क्वाप्यसत्त्वादियोगः ॥२८॥

तत्र सप्तभङ्गीस्वरूपमनूद्य तत्र व्याहतिलक्षणेन दूषणेन दुष्टत्वमुपपादयति—सच्चेत्यादिना। इयं किल सप्तभङ्गी-स्यादस्ति, स्यान्नास्ति, स्यादस्तिचनास्ति च, स्यादस्तिनास्तिविलक्षणम्, अस्ति स्यादस्तिनास्तिविलक्षणम्, नास्ति स्यादस्तिनास्तिविलक्षणम्, अस्ति नास्ति च स्यादस्तिनास्तिविलक्षणमित्येवंरूपा। तदेतत् दूषयति—व्याघात इति। तैः=परिहितगगनैर्व्याघात इति किमपि दूषणं यदीष्टं लोके शास्त्रे च, तदा स्वसिद्धान्तव्याघातः, अत्यन्तव्याघातदुष्टायाः सप्तभङ्ग्याः स्वसिद्धान्तत्वेनेष्टत्वात्। यदि व्याघातो नाम दूषणं नेष्टम्, तदापि दूषणमाह—यद्यनिष्ट इत्यादिना। दोषमेव

---

जीवभेदस्य, वस्तुस्थिरत्वस्य, अवस्थातदाश्रयद्रव्यादेश्च स्वीकारात् अहिंसाद्याचाराच्च साम्यं यथा, तथा तत्त्वे आचारे च वैषम्यं बहु दृश्यत एव॥ अस्तु वैषम्यम्; अत एव पृच्छाम:, तत् स्वीकृत्योपनिषदुक्तमेवोपरुध्यतामिति इति चेन्न—वैषम्यस्यापि इष्टेः—पिञ्छधारणाऽऽदित्यस्तम्भन-पाषाणपाटन-प्रतिमाजल्पनादिमोहनार्थक्षुद्रव्यापारभूयस्तया बुद्धिवैषम्यस्य स्पष्टमेव दर्शनात् वञ्चनार्थं शवत्र्यरणात् तदुक्तेर्विरुद्धावधारणादिति भावः। क्वाचित्कसंवादमात्रेण ग्राह्यत्वे सुगतवचोऽपि ग्राह्यं स्यात्। प्रतारकत्वमुभयत्राविशिष्टम्। तेन सुगतवागपेक्षया श्रेयस्त्वाभावेन पुरुषगतविप्रलिप्सादिदोषमूलकत्वरूपहेतोरविशेषात् वेदविरुद्धमन्यत् सर्वमप्रमाणमिति॥ २०२॥

२८. तर्कमूलकत्वात् तत्कृतत्वादिकमस्य तर्काप्रतिष्ठानात् मतान्तराविशेषमुपेक्ष्यत्वं सिद्धम्। अधिकं दूषणं "नैकस्मिन्नसंभवात्" इति सूत्रोक्तं विशदयति सच्चेति। सप्तानां भंगानां समुदायः सप्तभंगी। भंगाश्च सत्त्वादयः कयाचित् वाक्यभंग्या जैनैरुच्यन्ते। सा च चिन्तामणिदर्शिना॥ तत्र स्यादिति कथञ्चिदित्यर्थकमव्ययमित्याहुः। स्यादिति पक्षान्तरमप्यस्तु इत्युक्त्वा वा सा संभावनारूपतर्कसूचनपूर्वकं वा अस्तीत्यादिना सत्त्वादिकमपि स्थाप्यते इत्यपि स्यात्। सत्=स्यादस्ति, असत्=स्यान्नास्ति, द्वयञ्च=स्यादस्ति च नास्ति च, द्वितयसमधिकं=स्यादस्तिनास्तिविलक्षणम्, तच्च=सदसद्विलक्षणञ्च पूर्वैःसह=सत्तया, असत्तया, सदसत्तया च प्रत्येकं सहितम्, स्यादस्ति अस्तिनास्तिविलक्षणम्, स्यान्नास्ति

---

1 ननु पुरुषस्य बुद्धस्येश्वरत्वात् तत्प्रणीतत्वेनाप्रामाण्ये पाञ्चरात्रमप्यप्रमाणं स्यादिति चेन्न पुरुषप्रणीतत्वमिह पुरुषदोषमूलकत्वम्। दोषश्च विप्रलिप्सा बौद्धागम एव।

प्रकटयति—परोक्तेरिति। परेषामुक्तैर्जैनवाक्योक्तदूषणैर्न क्षतिः स्यात्=न दोषः स्यात्। अयमर्थः— व्याघातो हि सर्वत्र दोषोद्घाटनपर्यवसानभूमिः। तदभावे जैनः कथं परपक्षदूषणं वदेदिति। किञ्च स्यादस्तीत्यादिना वस्तूनामसत्त्ववादी निरुपाधिकमसत्त्वं वदति, उत सोपाधिकम्? यदि सोपाधिकम्, तदा वयमपि स्वीकुर्महे। घटो हि स्वदेशेऽस्ति, परदेशे नास्ति; स्वकालेऽस्ति, कालान्तरे नास्ति; स्वात्मनाऽस्ति, परात्मना नास्ति इति प्रामाणिका अपि वदन्ति। यदि निरुपाधिकम्; तदा व्याघातात् सर्वलोकविरोध एव। निरुपाधिकनिषेधो नाम घटो घटाद्यात्मना[ऽपि?] नास्तीति निषेधः। तथाच घटोऽस्ति, केनाप्यात्मना नास्तीत्यसङ्गतमेवैतत्; केनापीति स्वात्मनोऽपि निषेध्यकोटिनिवेशादिति ॥ २०३ ॥

(२०४) वृद्धिह्रासौ यथार्हं प्रतितनु भविनां देहभङ्गे(?) विमानं
मुक्तौ नित्योर्ध्वयानप्रभृति, गुरुतया नित्यपातं क्षमादेः।
धर्मादेर्व्यापकत्वं गगनवदथवा[ऽ]तादृशं पुद्गलत्वं
दुस्तर्कैः कल्पयन्तः श्रुतिनयकुशलैर्दूरमुत्सारणीयाः ॥ २९ ॥

इत्येकस्मिन्नसम्भवाधिकरणम् ॥ ५१ ॥

एवं स्फुटव्याघातदुष्टां जैनोक्तां सप्तभङ्गीं निरस्य तदुक्तानि अपराण्यप्यर्थान्तराणि उक्तेनैव न्यायेन श्रुतिनयकुशलैर्वेदान्तवादिभिर्निराकरणीयानीत्याह—वृद्धिह्रासाविति। भविनां=संसारिणां प्रतिशरीरं वृद्धिह्रासौ यथार्हमित्येकोऽर्थः। आत्मा शरीरपरिमाणत्वात् शरीरे वृद्धे वृद्धो भवति, ह्रासवति ह्रासवान् भवतीति हि जैनानां प्रक्रिया। मुक्तौ देहाभावे सति विगतमानमेवात्मानं प्रवदन्ति जैनाः। तत्र केचिन्मुक्त आत्मा नित्यमेवोर्ध्वं यातीत्याहुः। क्षमादेः पृथिव्यादेर्नित्यपातमप्याहुरेके। धर्मा-

---

अस्तिनास्ति विलक्षणम्, स्यादस्ति च नास्तिचास्तिनास्तिविलक्षणमिति वाचा गीयते प्रतिपाद्यते। कैः। परिहितगगनैः। परिहितं परिधानं कृतम् आच्छादकवस्त्रीकृतमाकाशं यैः। आकाशवस्त्रैः नग्नैः दिगम्बरैर्जैनैरिति। दूषयति व्याघात इति। तैः जैनैः स्वपक्षस्य परपक्षेण सह विरोध इष्टो न वा। यदीष्टः=आद्ये, स्वसमयविहतिः सर्वमविरुद्धमिति स्वपक्षविरोधः। यदि अनिष्टः, परोक्तेरविरोध एवेष्टश्चेत्—तद्वाक्यैः=परकीयैर्वाक्यैः स्वपक्षक्षतिर्न स्यादिति न पक्षान्तरं दूष्यं स्यात्। विपरिक्तौ वा। इदं प्रतिबन्ध्या दूषणम्। मुख्यं दूषणमाह न चेति। सत्त्वश्चासत्त्वञ्च भावाभावरूपत्वान्मिथोविरुद्धं कुत्रापि न स्यात्। अनुभवबलादिष्यते इति चेन्न—निरुपधिको न। उपधिं=विशेषणं विना सत्त्वासत्त्वयोर्मेळनं नास्ति। एतद्देशास्तित्वस्य देशान्तरसत्त्वस्य च मेलनमेवाऽऽनुभाविकमिति ॥ २०३ ॥

२९. उपरितनसूत्रैरात्मविषये तन्मते दूषणं दर्शितमन्यत्रापि दूषणोपलक्षणमित्याशयेनाऽऽह वृद्धीति। भविनाम्—जीवानां प्रतितनु तत्तद्देहानुरूपपरिमाणस्वीकारात् मातंगशरीरे वृद्धिम् उपचयम्, माक्षिकशरीरे ह्रासं संकोचम्, देहभंगे तदभावे विमानं परिमाणाभावम्। अत्र भविनामिति षष्ठीबहुवचनान्तानुसारेण प्रयोक्तव्ये विगतमानमात्मानमित्यर्थकपदप्रयोगो न स्वरसः। विमानपदस्य मानाभावरूपार्थयोगे देहभंगे त्वमानमिति पाठो युक्तः। अस्मद्गुरवस्तु देहभंगेऽपि मानमिति पाठोऽपि दृश्यते। मुक्तौ परिमितत्वस्य जैनभंगाधिकारे तदिष्टतायाः स्थापनात् देहभंगेऽपि मानं

धर्मयोर्गगनवद्विभुत्वमपि त एवाहुः। तत्र पक्षान्तरमप्याह—अथवेति। पुद्गलत्वम्—परिमित-वस्तुत्वमित्यर्थः। एतेषां दुस्तर्कैरेवं कल्पयतां श्रुतिनयनिपुणैर्वेदान्तवादिभिर्दूरोत्सारणीयत्वमेवा-वशिष्यते। दुराचारत्वात् दूरोत्सारणीयत्वं तावत् सुप्रसिद्धम्; अधुना स्वकपोलकल्पितदुर्वचन-वादित्वादपि दूरोत्सार[णीय]त्वमुच्यत इति ॥ २०४ ॥ इत्येकस्मिन्नसम्भवाधिकरणम् ॥ ५१ ॥

५२ ॥ अथ पशुपत्यधिकरणम् ॥ २-२-७ ॥

सूत्रम्—पत्युरसामञ्जस्यात् ॥ अधिष्ठानानुपपत्तेश्च ॥ करणवच्चेन्न भोगादिभ्यः ॥ अन्तवत्त्वम-सर्वज्ञता वा ॥ ३५—३८ ॥

(२०५) सर्वं जानाति रुद्रः श्रुतिषु च महितः सत्यवादी च दृष्टः
प्रख्यातं तद्गतश्च क्वचिदुपनिषदीत्यस्तु मानं तदुक्तिः।
मैवं देवेन दैत्यप्रमथनरुचिना मोहशास्त्राणि कुर्वि-
त्यादिष्टो ह्येष तन्त्रं निजमकृत ततस्तन्न शिष्टोपजीव्यम् ॥ ३० ॥

अत्र पूर्वपेटिकासङ्गतिर्भाष्यकारैरेवोक्ता, 'कपिलकणाद' इत्यादिना। पूर्वोक्तानां मतानाम् असामञ्जस्यात् वेदविरोधाच्च निराकरणे कृते तत् पशुपतिमतस्यापि समानमित्युच्यत इति। एवं पाशुप-तस्य प्रकृतिकारणवादसम्मत्या साङ्ख्यानन्तरं निराकरणे प्राप्तेऽपि, 'काणादशाक्यपाषण्डैः' इत्या-

तदिष्टमित्येवात्र वक्तव्यमिति प्राहु। बन्धकालिकश्चेत् देहभंग, पूर्वोक्तार्थोऽस्तु। यद्वा विमानमित्यस्य विशिष्टमानसहितमित्यर्थः। प्रभृतिपदमेतद्विशेषणम्। मुक्तौ देहाभावेऽपि मानविशेषसहितमूर्ध्वगमनादि कल्पयन्त इत्यर्थः। प्रभृतीति। मुक्तौ, जले पतितस्य पंकघनस्यालाबुफलस्य पंके क्षालिते ऊर्ध्वगमनवत् सततोर्ध्वगमनमात्मनः, अथवा अलोकाकाशं प्राप्य तत्रावस्थानम्, शरीरविशेषे स्थिरं प्रवेशं वा क्ष्मादेः भूम्यादिद्रव्यस्य गुरुत्वात् सर्वदा अधःपातमनुवर्तमानम्। धर्मस्याधर्मस्य चाकाशवत् स्वरूपेण सर्वव्यापित्वम्। धर्मादेरेव स्वरूपतो व्यापित्वमस्वीकृत्य भूतधर्मत्वं स्वीकृत्य तादृशं तत्तद्भौतिकतुल्यम् यद्वा अतादृशं गगनविलक्षणं पुद्गलत्वम्। उपचयापचयार्हं परिमितं वस्तु पुद्गलशब्दार्थः। धर्मादिविषये इदं पक्षद्वयं तत्त्वमुक्ताकलापेऽप्युक्तम्, "विभु किमपि परे पुद्गलांस्तत्सयूथ्याः" (5. 76) इति। एवं जैनभङ्गाधिकारेऽपि। सर्वमिदं दुस्तर्कैः कल्पयन्ति। जैनागमं प्रमाणीकृत्य बन्ध-मोक्ष-तद्धेतुप्रकारान् विवेचयन्ति। स चाऽऽगमो दुस्तर्कमूल एव। एवं वदन्तः श्रुतौ तदविरोधिनि तर्के च कुशलै-र्दूरमुत्सार्यन्ते। ननु द्रव्यस्थैर्यस्यानुभवसिद्धत्वात् प्रकृतेरिव जीवानामपि सविकारत्वेऽपि नित्यत्वं न हीयत इति चेत्—न परिमाणरूपविकारः सुवचः मोक्षकालिकपरिमाणस्य नित्यतया अनादित्वात् परि-माणान्तरासंभवात्। सादेर्नित्यता श्रुत्या कामं भवेत्; न युक्त्या। अन्यस्तु विकारः सर्वो धर्मभूतज्ञान-गतः। ज्ञानज्ञान्युभयं प्रत्यक्षानुमानश्रुतिरूपप्रमाणत्रयसिद्धमित्यादिकमाशय्य श्रुतिनयेत्युक्तम् ॥ २०४ ॥

३०. बौद्धजैनयोरिव पाशुपतस्यापि वेदबाह्यतत्त्वानारोभयत्वसाम्यात्, निरसनीयेष्वेकस्यैवाव शिष्टत्वाच्च पाशुपतमथ निराक्रियते। तत्र पूर्वपक्षं पूर्वार्धेनाऽऽह सर्वमिति। सर्वज्ञनाम्ना प्रसिद्धत्वात् सर्वं जानाति रुद्रः। स्वोत्पत्त्युत्तरक्षण एव 'अनपहतपाप्मा वा अहमस्मि; नामानि मे धेहि' इति

दिना काणादबौद्धादीनां वेदबाह्यत्वप्रसिद्धिप्राचुर्यात्, बौद्धजैनाभ्यां पुनः साक्षादेव वेदप्रामाण्यानङ्गीकाराच्च स्फुटविरोधेन तान् निरस्य, 'साङ्ख्यं योगः पञ्चरात्रं वेदाः पाशुपतम्' इति वेदसह(म)-पठितपशुपतिमतेऽप्यसामञ्जस्यं वेदविरोधश्चाधुना प्रकाश्यत इति सङ्गत्यविरोध इति केचित्। श्रीविष्णुचित्तार्यास्त्वेवमाहुः—"पूर्वमारम्भणाधिकरणे वैशेषिकस्य निरस्तत्वात् पूर्वोक्तार्थशेषप्रतिपादनेन वैशेषिकाधिकरणं प्रवृत्तम्। तत्र तावत् वेदानित्यत्ववादी निरस्तः। ततःपरं सौगतजैनाधिकरणे[ष्व?]पि वेदाप्रामाण्यवादिनौ निरस्तौ। अधुना पुनः पाशुपताधिकरणे सकलवेदान्तवेद्यपरमपुरुषपारम्यप्रतिभटवादिनो निरस्यन्त इत्युत्तरोत्तरनिराकरणीयेषु वेदबाह्यतातिशयेन सङ्गतिः" इति। इयमेव सङ्गतिः पूर्वाचार्यैः तेषुतेषु ग्रन्थेषु लिखितेतीमामेव प्राज्ञाः परिगृह्णन्ति। तदर्थ-विचारस्तु-पशुपतिमतं निःश्रेयसार्थिभिरुपादेयम्, उत नेति। किमस्य श्रुतिविरोधोऽस्ति, उत नेति। तत्र कपिलकणादसुगतादिमतानां निराकरणीयत्वेऽप्यनिराकरणीयमेव पाशुपतं मतमित्याशङ्कते—सर्वमिति। रुद्रः खलु सर्वज्ञतया श्रुत्यादिषु सुप्रसिद्धः। 'नमस्ते रुद्र मन्यवे' इत्यादिभिर्महितश्च। स च, 'क इति ब्रह्मणो नाम' इत्यादिना[1] परतत्त्वविषये सत्यवादी च दृष्टः। 'दासभूताः स्वतस्सर्वे' इति च रुद्रवाक्यम्। 'व्रतमेतत् पाशुपतम्' इति च रौद्रं व्रतमुपनिषद्यपि क्वचित् प्रदेशे प्रख्यातम्। अतस्तदुक्तिः प्रमाणमित्याशङ्क्य निराकरोति—मैवमिति। यद्यपि रुद्रः सर्वज्ञत्वादिगुणगणोपेतः, तथापि भगवता पुरुषोत्तमेन, 'त्वं हि रुद्र महाबाहो मोहशास्त्राणि कारय' इत्यसुरमोहनार्थमादिष्ट एष रुद्रो निजं तन्त्रमकृत। ततस्तत्तन्त्रं विशिष्टोपजीव्यं न भवति। यथा भागवतस्यापि पितामहस्य भगवन्नियमनेनासुरमोहनवचनमध्यात्मविदामनुपजीव्यम्, तद्वदिदमपि। दृश्यते हि, सर्वज्ञोऽपि पितामहो विरोचनस्य विपरीतोपदेशमाहेति। अतो भगवन्नियोगेनासुरमोहनार्थं प्रवृत्तत्वात् तन्मूलमपि तन्त्रं सत्त्वोत्तराणामनादरणीयमेव; तमोगुणप्रवर्तकत्वात् रुद्रस्य। श्रूयते हि लिङ्गपुराण एव-'तमसा कालरुद्रः स्यात् रजसा कनकाण्डजः। सत्त्वेन सर्वगो विष्णुः सर्वलोकनमस्कृतः॥' इति। मत्स्यपुराणेऽपि, 'अग्नेः शिवस्य माहात्म्यं तामसेषु प्रकीर्त्यते' इति। इदं पुनर्भगवद्गीतावचनं सर्वलोकप्रसिद्धम्—'प्रमादमोहौ तमसो भवतोऽज्ञानमेव च' इति। प्रमाणान्तरमपि महर्षिवचनम्, 'या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः। सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः॥' इति। एवम्, 'पश्यत्येनं जायमानम्' इत्यादिवचनसहस्रप्रतिपन्नतामसत्वेन रुद्रवाक्यमज्ञानहेतुत्वेन(त्वात्) आगमपरिपन्थित्वेन चानादर्तव्यमेव। क्वाचित्कसंवादोऽपि श्रुतिविरोधभूयस्त्वादनुपयुक्त एवेति॥ २०५॥

तेन रोदनात् ब्रह्मणा रुद्र इति कृतनामा। तदयमनघः। एवमेव शतपथब्राह्मणादौ पुराणादिषु च महितः। सत्येत्यादि त्रिपुरसंहारादौ स्वबलन्यूनत्वविष्णुसापेक्षत्वादिकं सत्यमवादीत्। 'ओमित्येवं सदा विप्राः पठध्वं ध्यात केशवम्', 'श्रीराम रामरामेति रमे रामे मनोरमे', 'क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम्' इत्यादिसत्यवादी च। अथर्वशिरसि देवान् प्रति सर्वान्तर्यामिणमुक्तवतोऽस्य विषये, 'व्रतमेतत् पाशुपतम्' इति व्रतमप्युपदिष्टमस्ति। इति हेतोः तदुक्तिः पाशुपतागमः मानं प्रमाणमेव स्यादिति पूर्वपक्षः। निरस्यति मैवमिति। पाशुपततन्त्रं सर्वं श्रुत्यनुरोधेनान्तर्यामिविषयकत्वादिना समर्थनीयमिति मा भूत्। हि यत एष रुद्रः भगवता, 'क्षिपाम्यजस्रमशुभान्' इति असुराधोगतिपापणपरेण, तेषां मोहनार्थमागममारचयेत्याज्ञप्तस्सन् निजं पाशुपतं तन्त्रम् आगमम् अकृत अकार्षीत्। ततः तस्मात् तत् शिष्टसमादरणीयं न भवति॥ 1 चि. टी. इत्यादिना—इत्यारभ्य॥ २०५॥

(२०६) प्राजापत्ये हि वाक्ये प्रकटमुपनिषत् प्राह देहात्मवादं
चक्रे लोकायतं तत् सुरगुरुरभजन्मोहन(क)त्वं मुकुन्दः ।
कण्वस्थाने च लोकायतिकपरिवृढा भारतेऽपि प्रगीताः
कार्यार्थो(र्थं) विप्रलम्भस्तदिह पशुपतेस्तद्वदेवोपपन्नः ॥ ३१ ॥

'वैष्णवानां यथा शम्भुः' इति प्रतिपन्नस्य रुद्रस्य कथं मोह[कत्व?]कल्पनमित्याशङ्क्य बहुभिर्दृष्टान्तैः तदेवोपपादयति—प्राजापत्य इति। दहरविद्याशेषभूतप्रजापतिवाक्ये देहात्मवादं प्रकटमेवोपनिषद्राह । तच्च लोकायतशास्त्रं सुरगुरुः = बृहस्पतिरेव सकलविद्याधिकारी चकार । भगवानेव बुद्धाद्यवतारमाश्रित्यासुरजनमोहनत्वमभजदिति[च] सुप्रसिद्धम् । अपि च महाभारते महर्षेः कण्वस्याऽऽश्रमे वर्तमाना लोकायतिकपरिवृढाः = श्रेष्ठाः प्रसिद्धा एव । एवञ्च पशुपतेरपि कार्यार्थो(र्थं) भगवदाज्ञानुपालनार्थो(र्थं) दृष्टान्तत्वेनोक्तोपनिषदादिवदुपपन्न एव विप्रलम्भ इति ॥ २०६ ॥

(२०७) शैवाद्याख्याविशेषैः पशुपतिसमयः स्याच्चतुर्धाऽन्यथा वा
श्रुत्याऽन्योन्यञ्च बाधः स्फुट इह तदसौ श्रापदुष्टाहं उक्तः
अग्राह्यान् वैदिकानामनुसृतनिगमाः सस्मरुस्तत्प्रविष्टान्
तत्त्वेऽप्यत्रान्यथात्वं सुगतजिनमतानन्तरोक्तिः क्रमाप्ता ॥ ३२ ॥

अत्र खलु पशुपतिसमयः शैवाद्याख्याविशेषैश्चतुर्धा पठ्यते लोके । स तु तथा चतुर्धा वा भवतु, एकधा वा । न तत्रादरः । वेदविरोधात्, अन्योन्यञ्च विरोधादप्रामाण्यं सुवचमेवेत्याह—शैवादीत्या-

---

३१. सत्यवादिनोऽपि समयविशेषे मोहकत्वं युज्यत इतीदमुपपादयति प्राजापत्य इति । छान्दोग्ये दहरविद्यानन्तरं प्रजापतिवाक्ये प्रजापतेरेव देहात्मपक्षोपदेशकत्वं स्पष्टमुच्यते । तत् = देहात्मवादरूपं लोकायतमतमकरोत् साक्षात् सुरगुरुः बृहस्पतिः । मुकुन्द एव बुद्धरूपेण मोहकत्वमभजत् । कण्वो महर्षिः प्रसिद्धः स्वस्थाने वैदिकानिव नास्तिकानप्यनेकविधान् शिष्यत्वेन परिगृह्यावासयदिति भारते (आदि. 91. 48) प्रसिद्धम् । तद्वत् पशुपतेरपि इह शैवागमाधिकारिविषये कार्यार्थम्—भगवच्छासनानुवर्तनार्थं विप्रलम्भनव्यापारो घटते ; स्पष्टप्रमाणबाधानुपपत्तेरिति ॥२०६॥

३२. ननु स्वैः परैर्वा सर्वज्ञत्वेन व्यवहृताः पुरुषाः बौद्धाद्यागमानां प्रणेतार इति साम्येऽपि पाशुपतस्य वेदसंनिकृष्टतया तार्किकानन्तरं विचार उपपन्नः । वेदबाह्ययोश्च तदनन्तरम् । न च पाशुपतमपि वेदबाह्यमेवेति शंक्यम् ; पाशुपतावान्तरभेदेषु कतिपयप्राह्यताया अपि वाराहपुराणे प्रतीयमानत्वात् । "एवमभ्यर्थितस्तैस्तु पुराऽहं द्विजसत्तम । वेदक्रियासमायुक्तां कृतवानस्मि संहिताम् । निश्वासाख्यां ततस्तस्यां लीना बाभ्रव्यशाण्डिलाः ।........ निश्वाससंहिता या हि लक्षमात्रा प्रमाणतः । सैव पाशुपती दीक्षा योगः पाशुपतश्च सः । एतस्माद्वेदमार्गाद्धि यदन्यदिह जायते । तच्छूद्रकर्मविज्ञेयं रौद्रं शौचविवर्जितम्" इति हि विवेकः कृतोऽस्ति —इति शंकायां सर्वस्यापि पाशुपतस्याप्रामाण्यं तत एव तत्त्वाचारांशयोर्विरोधात् वेदबाह्यत्वस्थापनार्थमेव बाह्यानन्तरमेतद्विचारः सूत्रकृदिष्ट इति चाऽऽशयेनाह—शैवेति । शैवं पाशुपतं कापालं कालामुखमिति चतसृभिराख्याभिः पाशुपतं चतुर्धा विभज्यते इत्यस्तु ।

विना बाधस्स्फुट इहेत्यन्तेन। तदेवोपपादयति-तदसाविति। तस्मादेव खलु-श्रुतिविरोधादेव असौ पशुपतिसमयो गौतमशापदुष्टानामेवार्ह इति मनीषिभिरुक्तः। किञ्च = अनुसृतनिगमाः = वैदिकाः परमर्षयः तत्प्रविष्टान् = शैवपाशुपतादिमतप्रविष्टान् अग्राह्यान् ससदुः। श्रूयते हि, 'शैवान् पाशुपतान्' इत्यादिमहर्षिवचनम्। कथमग्राह्यत्वमित्यत्राह-तत्त्वेऽपीति। अत्र = अस्मिन् पक्षे तत्त्वेऽप्यन्यथात्वम्। न केवलमाचारे, तत्त्वेऽप्यन्यथात्वमिति अपिशब्दार्थः। तेन तत्त्वाचारयोर्द्वयोरपि विरुद्धत्वादत्यन्तवेदविरुद्धत्वमेव। अतो वेदविरुद्धसुगतजिनमतानन्तरोक्तिः पशुपतिमतस्य क्रमप्राप्तेति निगमयति—सुगतेति ॥ २०७ ॥

(२०८) निष्ठा सर्वेषु नारायण इति वचनात् हेत्वहन्तव्यतोक्तेः
मानत्वोक्त्या च तन्त्रान्तरमपि महितं वेदवद् भारतादौ।
नातो बौद्धादिवत् तन्निरसनमिति चेत्-सत्यमंशे तु बाध-
स्तस्मान्नासौ पञ्चरात्रे क्वचिदपि, तदिह स्वीकृतिर्वेदतुल्या ॥ ३३ ॥

---

अन्यथा वा=अन्ततो गत्वा रुद्रपारम्यविश्रमादेकधा वा। अथवा अन्यथेत्यस्य पाशुपतबहिष्काराधिकारोक्तषाड्विध्यपरत्वं भवति चेत्, माभूत्। तत्र हि उपक्रमे, 'पाशुपतादिभेदेन चतुर्विधतया षड्विधतया वा विभक्ते पशुपतिमते' इत्युक्तम्। उपरि च, 'पाशुपते चतुर्विधे स्थिते, तत्र पशुपाशविधियोगप्रस्तावे, पशून् स्वाभाविककार्यकारण-आरब्धकार्यकारण-व्यावृत्तकार्यकारण - संरूढकार्यकारण- संमूढकार्यकारण-भाव्यकार्यकारणभेदेन षड्विधानुक्त्वा' इत्येवं षाड्विध्यं किञ्चिददर्शि। एवं भेदे सत्यपि सर्वस्यापि श्रुतिविरोधात् मिथो विरोधाच्च बाधः स्फुटः। न च निश्वाससंहितोक्तदीक्षादेर्वेदाविरोधो मन्तव्यः; तस्य राजसस्यापि तामसप्रभेदान्तराणामिव भगवच्छासनातिलंघित्वस्य श्रुतप्रकाशिकायामुपपादितत्वात्। अतो वेदक्रियासमायुक्तत्वादिकथनमपि कतिपयास्तिकजनमोहनार्थमेव। तत्=तस्मात् श्रुतिविरोधसद्भावादेव असौ पशुपतिसमयः सर्वः गौतमशापदुष्टानामेवार्हतयोक्तः। गौतमो हि गोवध्याकारणं स्वस्मिन् ऋषिभिर्मायया कृतं ज्ञात्वा, 'त्रिपुण्ड्रधारिणो यूयं भस्मोद्धूलनतत्पराः। भविष्यथ त्रयीबाह्याः मिथ्याज्ञानप्रलापिनः' इति शशाप। अथ सप्तर्षिभिः प्रार्थितो गौतमः कलौ तस्यावकाशमकल्पयत्। तत्र सत्यापयितुं भगवत्प्रेरितेन भवेन पाशुपतं सर्वं प्रणीतम्। अतः सर्वमिदं च बाह्यमेव। "वेदेन पञ्चरात्रेण भक्त्या यज्ञेन च द्विजैः। प्राप्योऽहं नान्यथा प्राप्यो वर्षलक्षैरपि द्विज" इत्यादिवचनात् वेदानुसारिभिरग्राह्या एव तन्मतप्रविष्टाः। तत्स्पर्शनेऽपि सचेलस्नानविधानात्। एवञ्च तत्त्वेऽन्यथात्वं रुद्रपारम्यवचनात्, षट्त्रिंशत्तत्त्ववादाच्च। अपिना आचारसमुच्चयः। उभयान्यथात्वं बौद्धजैनयोरपीति तदविशेषः। तयोर्निरीश्वरवादात् तदज्ञानमात्रम्। अत्र विष्णुं रुद्रञ्च स्वीकृत्य विपर्यासविधानात् वञ्चनमतिशयितमिति बाह्यतममेतत्। अतोऽन्ते निवेश इति ॥ २०७ ॥

३३. पुं बौद्धजैनवैलक्षण्यं पाञ्चरात्रसाम्यञ्च पाशुपते शंकमानस्याशयमनूद्य निरस्यति निष्ठेति। 'सर्वेषु च नृपश्रेष्ठ ज्ञानेष्वेतेषु दृश्यते। यथागमं यथान्यायं निष्ठा नारायणः प्रभुः' इति सांख्यपाशु-

अथ पशुपतिमतपरिग्रहे कारणविशेषान् अनूद्य निराकरोति-निष्ठेति। महाभारते साङ्ख्यादिषु सर्वेष्वेतेषु तन्त्रेषु, 'निष्ठा नारायणः परः' इति वचनात्, 'न हन्तव्यानि हेतुभिः तन्त्राणि' इत्युक्तेः, 'आत्मप्रमाणान्येतानि' इति मानत्वोक्त्या च पाशुपततन्त्रमपि वेदवन्महितं भावनीयमेव। अतो हेतोर्बौद्धादिवन्न तन्निरसनं प्राप्तमित्याशङ्क्य सत्यमित्यर्धाङ्गीकारेण निराचकार। कथमर्धाङ्गीकार इत्यत्राह—अंशेषु बाधस्स्यादिति। अंशे वेदविरुद्धे बाधः स्यात्। अविरुद्धांशे स्वीकारोऽपि स्यादित्यर्थः। तर्हि पञ्चरात्रेऽपि क्वचिद्बाधः क्वचिदबाधः स्यादित्याशङ्क्य वैषम्यं दर्शयति—नास्मा विति। पञ्चरात्रे हि तन्त्रे क्वचिदपि वेदविरुद्धांशो नोपलभ्यते। अतः काचित्कवेदविरोधयुक्तात् पाशुपतात् पञ्चरात्रस्य विशेष इत्यर्थः। उक्तार्थस्य प्रयोजनमाह-तदिति। सर्वत्र वेदविरोधाभावात् इह= पञ्चरात्रे स्वीकारो वेदतुल्य इति ॥ २०८ ॥

(२०९) दृश्यन्ते संगृहीता जगति ।इह समयास्ते च राज्ञाऽनुपाल्याः
तस्मान्नः पक्षपातः क्वचिदनुचित इत्यर्भकप्रायचोद्यम् ।
मुग्धैरन्ये गृहीताः, भवतु समयसंरक्षणोक्तिश्च धर्म्ये
निष्ठैक्योक्तिस्तदन्यग्रहृति(नि?)हृतिपरा तद्विरुद्धोक्तिदृष्टेः ॥ ३४ ॥

इति पशुपत्यधिकरणम् ॥ ५२ ॥

अत्र सर्वेषामपि समयानां साधारण्येन सङ्ग्राह्यत्वमाशङ्क्य निराकरोति—दृश्यन्त इत्यादिना श्लोकेन। जगति सर्वे समया संगृहीता एव दृश्यन्ते तत्तत्समयनिष्ठैः। ते च सर्वे समयाः

---

एतादितन्त्राणां नारायणपर्यवसानवचनात, 'सांख्यं योग पाञ्चरात्रं वेदाः पाशुपतं तथा। आत्मप्रमाणान्येतानि न हन्तव्यानि हेतुभिः'' इति पाशुपतस्यापि युक्तिभिरहन्तव्यत्ववचनात्, आत्मप्रमाणानीति प्रमाणत्वोक्त्या च पाशुपतसांख्यं तन्त्रान्तरं पञ्चरात्रभिन्न तन्त्रमपि वेदतुल्यतया महाभारते महित मिति न बौद्धादितुल्यनेति चेत्—सत्यम्। सत्यमित्यर्धाङ्गीकारे। सांख्योक्तप्रधानवत् योगशास्त्रोक्त योगवत् पाशुपतोक्तरुद्ररूपधर्मिणः अत्र धिन्त्वेऽपि तत्पारम्य तत्त्वान्तरकल्पनादितः अनेकदुराचारवचनाच्च अशे बाध एव पञ्चरात्रे तु अयौ आंशिकबाधोऽपि नास्ति। अतो वेदतुल्यतया स्वीकार इह=पञ्चरात्रे; न पाशुपते। ग्राह्याग्राह्यांशविवेचनस्य वेदार्थश्रवणपूर्वकमेव कार्यतया तत एव पशुपतिस्वरूपस्य ग्राह्यत्वे किमनेन। अत श्वदृतिधृतगोक्षीरवत् पाशुपतोक्तः पशुपतिरनुपादेयः तन्मूलप्रतिष्ठाविषयाचादे-रप्यत एवाग्राह्यतेति व्यासाशयः ॥ चि. टी. निराचकारेति। अत्र श्लोके इति शेषः ॥ २०८ ॥

३४. ननु बहुभिरास्तिकैरादरेणाऽऽलयनिर्माणादिभिः पाञ्चरात्राविशेषं राजभिः परिपाल्यमाने पाशुपतसमये कथमित्थं प्रद्वेषः। यतो राजभिः सर्वा अपि प्रजाः तत्तदिष्टसमयानुसारेण परिपाल्याः, अत एव सर्वसमादरणीयतैव सिध्यति। अत एव, 'निष्ठा नारायणः' इति वाक्यमपि सर्वस्य नारायणपर्यवसान-बुद्धया नारायणपारम्यवेदिभिरप्यादरणीयत्वमभिप्रैति इत्येवमाशंकामनूद्य परिहरति दृश्यन्ते इति। जगति समयाः सर्वेऽप्यभिज्ञैरेव पृथग्विधैराहृता दृश्यन्ते। राज्ञा च ते यथावत् परिपाल्याः; अन्यथा तत्तन्मतनिष्ठ-प्रतीक्षिताभीष्टभञ्जनप्रसंगात्। अतो राजवत् प्रजाभिरपि सर्वः सम एव भाव्य इति चेत् — चोद्यमिदमर्भक-प्रायस्य। क्रियाविकल्पसंभवात् आचारे सर्वत्र काममाग्रहः स्यात्; न तत्त्वभेदे; वस्तुनि विकल्पायोगात्।

प्रजापरिपालनं राज्ञः परमो धर्म इति वचनानुरोधेन राज्ञा विशेषेण परिपालनीयाः। तस्मादस्माकं पक्षपातः कश्चित् समये समुचितो न भवतीत्याशङ्क्य तदिदं बालबोधमित्याह—अभेकेति। तत्र हेतुमाह— मुग्धैरिति। अन्ये= वेदविरुद्धाः समयाः मुग्धैः= अज्ञैः परिगृहीताः। कुतः? वेदविरुद्धत्वादेव। तर्हि राज्ञां सर्वसमयसंरक्षणोक्तिः कथमिति चेत्, तत्राह—भवत्विति। राज्ञां सर्वसमयसंरक्षणोक्तेरेवमर्थ इत्युच्यते ; [1]न पुनर्वेदविरुद्धसर्वसमयसंरक्षणम्। तर्हि, 'सर्वेषामपि तन्त्राणां निष्ठा नारायणः परः' इत्युच्यते, कथं कश्चित् त्याज्यत्वमित्याशङ्क्याह— निष्ठैक्योक्तिरिति। अयमर्थः– 'निष्ठा नारायणः परः' इति परमर्षिणैवोच्यते। स तु स्वसिद्धान्तमेवाह। साङ्ख्यादीनां सर्वेषामपि तन्त्राणां प्रधानप्रतिपाद्यो नारायण एव पर्यवसानभूमिरिति वेदविदां [2]व्यासादीनां सिद्धान्तः। तेन तदन्यग्रहणमल्पज्ञानां स्वकपोलकल्पितमिति तदेव तदन्यग्रहणम्, 'निष्ठा नारायणः परः' इति निवार्यते। ननु प्रसक्तस्यैव हि निवारणं कार्यम्; इतरप्रसङ्गाभावे कथं निवार्यत इत्याशङ्क्योत्तरमाह—तद्विरुद्धेति। नारायणपारम्यविरुद्धोक्तेर्लोके दृष्टत्वात्। अयमर्थः—सर्वेषामपि तन्त्राणां नारायण एव पर्यवसानभूमिरिति वेदवित्सिद्धान्तः। इममर्थमजानानास्तद्विरुद्धमेव प्रलपन्ति; तन्निवारणार्थं, 'निष्ठा नारायणः' इत्युच्यत इति ॥ २०९ ॥

इति पशुपत्यधिकरणम् ॥ ५२ ॥

---

कथञ्च सेश्वरनिरीश्वरत्वादिकं समुचेतव्यम्। अतो वैदिकः समय एक एव। अन्येषु समयेषु वेदबाह्याः केचित्, अन्ये च कुदृष्टिभूताः। तेषां ग्रहीतारो मुग्धा एव। मन्वादिधर्मशास्त्रानुरोधिभिश्च राजभिर्महर्षिसमाजसत्यापितश्च यथसमयपरिपालने कार्येऽप्यधर्म्यं न पाल्यम्। अथतवे तु राज्ञां निर्णयाभावात् प्रजानां गतानुगतिकत्वाच्च सर्वसमयसंरक्षणम। ननु निष्ठैक्यस्योक्ततया तद्दृष्टौ सत्यां सर्वोऽपि समयः सत्य एवेत्यत्राह निष्ठेति। निष्ठा नारायणः परः इति वाक्य न तत्तद्दर्शनार्थप्रतिपादकम्, किंतु वस्तुस्थितिकथनेन अतत्परतया दर्शनान्तराणां हेयत्वपरम्। तत्र हि मतान्यन्यानि प्रदर्श्य, किमेतान्येकनिष्ठानि पृथङ्निष्ठानि वेति प्रश्ने, वक्तॄणां नानाबुद्धित्वात् नानैव मतानीत्युक्त्वा तत्तन्मतविषयस्य तत्त्वस्य प्रकृतिरुद्रादेर्वस्तुतो नारायणान्तर्यामिकत्वस्य **यथागम**=यथावेदं **यथान्यायं**=यथातर्कश्चावगमात् तत्तन्मतस्यैतथाऽनुक्तनया नानात्वमित्युपपाद्यते निष्ठावाक्येन। नन्वनुक्तमन्यतो ग्राह्यमिति न्यायेन नारायणसमुच्चयान्न दोष इति चेत्—तत्राह **तद्विरुद्धोक्तिदृष्टेरि**ति। प्रधाने अब्रह्मात्मकत्वस्य, रुद्रे पारम्यस्य, विष्णौ ततो निकर्षस्य एवमादेर्विरुद्धार्थस्य तत्रतत्रोक्ततया सामरस्यायोगात्। अतः नारायणानात्मकवस्तुग्रहस्य तत्त्वकृतस्य **निह्नुतिपरा** निह्ननार्थैव निष्ठैक्योक्तिः। नारायणनिष्ठां स्थितामपलपन्तीति अनुशोचनमत्र भगवता व्यासेन क्रियते। 'न हन्तव्यानि' इत्युक्तिश्च घटते, तत्तत्प्रतिपादितस्य वस्तुनो रुद्रप्रकृत्यादेः स्वरूपबाधाभावात्। तदंशे प्रामाण्यात्। वेदबाह्यकल्पिततत्तद्देवतावत वेदश्रुतानां ब्रह्मरुद्रेन्द्रसूर्यशक्तिसुब्रह्मण्यादीनां स्वरूपापलापायोगादिति। अत एव पाशुपतस्य विरुद्धार्थवादिनः रुद्रान्तर्यामिविष्णुविषयकत्वाभावात् **श्रुतप्रकाशिकादौ** त्यागः प्रपञ्चितः। सर्वमिदं सावधानसेविनां **श्रीभाष्य** एव व्यक्तम्। शारीरक इव महाभारतेऽपि मतान्तराप्रामाण्यमेव वर्णितमिति तत्र स्थापनात्। **परमतभंगे** च **पाशुपतबहिष्काराधिकारे** इदं नानामतत्वं समयान्तराणामुपेक्ष्यत्वञ्च पूर्वं पश्चाच्च प्रतिपादयद्भिराचार्यैः, "अन्तर्यामिपरताकल्पनया विरोधशमनेऽपि

५३ ॥ अथ उत्पत्त्यसंभवाधिकरणम् (पञ्चरात्राधिकरणम्)॥ २-२-८ ॥ सू. ३९—४२.
सूत्रम्— उत्पत्त्यसंभवात्॥ न च कर्तुः करणम्॥ विज्ञानादिभावे वा तदप्रतिषेधः ॥ विप्रतिषेधाच्च॥

(२१०) प्रामाण्यं कर्मकाण्डे(ण्ड) स्मृतिनयवशतः सात्वतस्यापि सिद्धम्
पादेऽस्मिन् संगतिश्च प्रतिमतदमने नास्त्यमुष्येति चेन्न ।
प्रत्यर्थित्वं विरोधभ्रममपनयता पञ्चरात्रस्य धार्यं
दुस्तर्काद्युत्थि(त्थ?)तोक्त्या तदितरसमयेष्वित्यनुस्यूत(ति)सिद्धिः ॥ ३५ ॥

अत्र सङ्गतिभाष्य एव सुव्यक्तमुक्ता, 'कपिलादितन्त्रसामान्यात् भगवदभिहित(ते?)परमनिःश्रेयस-साधनावबोधिनि पञ्चरात्रतन्त्रेऽप्यप्रामाण्यमाशङ्क्य निराक्रियते' इति । तदर्थविचारस्तु—पञ्चरात्रं किं साङ्ख्यादिवत् क्वचित् प्रमाणम्, उत कार्त्स्न्येन प्रमाणमिति । किमस्य क्वचित् श्रुतिविरोधोऽस्ति,

---

आचाराणां वेदविरोधो दुष्परिहरः" इति यत् कथनम्, तत् अभ्युपगमवादेन । सोऽपि वादः सेश्वरकापिल-अथर्वशिरःप्रभृत्युपनिषदादिपरिशीलनेनेति ध्येयम् ॥

**चिन्तामणौ**—1. नपुनरिति । समयसंरक्षणोक्तेरर्थ इति शेषः । 2. व्यासादीनामिति । न तु मतप्रवर्तकानां कपिलरुद्रादीनामित्यर्थः । **प्रमक्तस्यैवेति** । अशैवैस्तद्ग्रहणप्रसक्तौ किलेति यावत् । **प्रलपन्ति** । अद्वैतरूप स्वमतसंबन्धाभावेऽपि शैवेतरेऽपि केचित् स्मार्ता इति शेषः । तन्त्रे दृष्टत्वादिति वक्तव्ये, **लोके दृष्टत्वा**दित्युक्तिः—पशुपतग्रन्थस्याविरोधेनार्थवर्णनसंभवात् विरुद्धत्वं कथमित्याशंकायां पाशुपतमतप्रविष्टजनतारूपे लोके विरुद्धोक्तिदर्शनात् तस्य च तद्ग्रन्थमूलकत्वात् तदन्यथाकरणं दुष्करमित्याशयेन । न हि पाशुपतपाद्रियमाणेषु जनेषु पशुपत्यन्तर्यामितया भगवदाराधनपर एकोऽपि दृश्यते इति भावः । एवञ्च शैवकापालादिषु विरुद्धोक्तिदर्शनात् सर्वस्य वैदिकत्वशंका सुतरामसंगतेत्यपि सिद्धम् । तत्त्वेऽप्यत्रेत्यनेन **अधिष्ठानानुपपत्तेश्चे**त्यादिसूत्रार्थोऽपि संगृहीतः । ईश्वरस्यानुमानिकत्वमेव, न तु शास्त्रयोनित्वम्; अत एव विष्णानधीनत्वमित्युच्यते परैः । इदमयुक्तमिति शास्त्रयोनित्वाधिकरणे स्थितमेव । किञ्चानुमानात् तस्य रुद्रत्वोमापतित्व-त्रिणेत्रत्वादि कथं सिध्येत्, तादृशस्य कर्मवश्यताया एव वेदे प्रसिद्धेरिति ॥ **इति पशुपत्यधिकरणम् ॥ ५२ ॥**

३५. पञ्चरात्राधिकरणस्य पादासंगतिमाशङ्क्य परिहरति **प्रामाण्यमिति** । स्मृत्यधिकरणं **कर्मकाण्डे**-पूर्वमीमांसायाम् । इहापि स्मृत्यनवकाश इत्यादि । तत्र पूर्ववत् स्मृतित्वाविशेषात् पञ्चरात्रस्यापि प्रामाण्यं सिद्धमेवेति व्यर्थमेतत्॥ आचारविषये तत्र तत्सिद्धावपि तत्त्वविषये तदसिद्धमिति चेत्–न; आचारस्य भगवदाराधनरूपत्वात् तद्विषये प्रामाण्यस्य तत्त्वविषयप्रामाण्येऽपि पर्यवसानात् पृथग्वचनानपेक्षणात् । अतः शारीरके तद्विचारो व्यर्थः । ननु स्मृत्यधिकरणे श्रुत्यविरुद्धांश एव प्रामाण्यस्योक्तत्वया, महर्षिकृतासु स्मृतिष्विव पञ्चरात्रेऽपि प्रायिकं प्रामाण्यम्, उत कार्त्स्न्येनेति विशेषविचार इह । अत एव **चिन्तामणौ**, 'क्वचित् प्रमाणम्, उत कार्त्स्न्येन' इत्युक्तमित्याशंकायाम् अस्मिन् पादे तु सुतरामसंगतिरित्याह **पादे** इति । **प्रतिमतदमने** परमतनिरासकेऽत्र पादे पञ्चरात्रदमनमपि क्रियते चेत्, संगतिः

उत कश्चिदपि नास्तीति। किमत्र जीवोत्पत्त्यादिकं विवक्षितम्, उत नेति। सङ्कर्षणादिशब्दाः किं जीवादिशब्दविशेषणतया निर्दिष्टाः, उत जीवादिशब्दाः संकर्षणादिशब्दविशेषणतया निर्दिष्टा इति। तत्र श्रीपञ्चरात्रप्रामाण्यस्थापने साध्यतया स्वीक्रियमाणे पादार्थानुवर्तनं न सिध्येत्। प्रतिमतदमनं हि पादार्थः। तेन श्रीपञ्चरात्रस्याप्यस्मिन्नधिकरणे दमनं वर्णनीयमिति पूर्वपक्षोत्थानम्। तदिदमनुवदति—प्रामाण्यमित्यादिना। अयमर्थः—वेदप्रामाण्यात् वेदोपबृंहणभूतश्रीपञ्चरात्रप्रामाण्यमपि पूर्वकाण्डस्मृत्यधिकरण एव सिद्धम्। तेन तदत्र न वर्णनीयम्। अस्य च श्रीपञ्चरात्रप्रामाण्यसाधनस्य प्रतिमतदमनरूपेऽस्मिंस्तर्कपादे सङ्गतिरपि नास्ति, अर्थान्तरत्वादिति इमामाशङ्कां(त्वादित्याशङ्क्य) निराकरोति–नेति। प्रतिमतदमनरूपस्यास्य पादस्यार्थैक्यं प्रकारान्तरेणोपपादयति–प्रत्यर्थित्वमिति। अयमर्थः—श्रीपञ्चरात्रस्य वेदप्रत्यर्थित्वमत्र निवार्यते। पूर्वत्रापि साङ्ख्याधिकरणादौ तेषां तन्त्राणां वेदप्रत्यर्थित्वमेव निवार्यते। श्रीपञ्चरात्रस्य वेदानुकूलत्वात् वेदप्रत्यर्थित्वं नास्ति, साङ्ख्यादीनां कुत्सितयुक्तिमूलत्वेन दुर्बलत्वात् प्रत्यर्थित्वं नास्ति। तथाच

---

स्यात्; न तु अमुष्य प्रामाण्यस्थापनस्येति। निरासे हेतुमाह प्रत्यर्थित्वमिति। परमतदमनरूपस्यानुस्यूतस्यार्थस्यात्रासिद्धया न संगतिरिति न वाच्यम्; विरोधापनयनं पादानुस्यूतार्थ इत्यभ्युपगमात्। तच्च विरोधशंकापनयनमेव। शंका च मतान्तरेषु वस्तुनो वेदार्थविरोधसत्त्वात् तत्प्रमामूला। सा च तेषां दुस्तर्कोत्थताम् उत वा दुर्बलत्वोपपादनेन वार्यते। अत्र तु वेदार्थस्य पाञ्चरात्रार्थस्य चाविरोधे सत्येव वास्तवार्थाग्रहणात् विरोधभ्रममूला शंका। सा च वास्तवार्थाविरोधप्रदर्शनेन भ्रमनिवर्तनेन निवर्त्यत इति विशेषः। सम्यक्परिशीलने परप्रतिपाद्यानामर्थानां दुस्तर्कमूलत्वेनापरमार्थत्वात् तद्विरोधभ्रममूलो विरोधभ्रम एव तत्रापि। अत्रापि जीवोत्पत्त्यादिरूपार्थस्यापरमार्थस्य पञ्चरात्रार्थत्वाभ्रमनिबन्धन एव विरोधभ्रम इत्यपि ध्येयम्। तथाचानुस्यूतस्य पादार्थस्य सिद्धत्वान्न दोषः।

नन्वेवं सति पूर्वाधिकरणेष्विवात्रापि विरोधीति पूर्वपक्षः, अविरोधीति सिद्धान्त इति वक्तव्यम्। तदा च पूर्वपक्षिणा प्रामाण्यमेव पञ्चरात्रे स्वीकृतमिति कथमप्रामाण्यपूर्वपक्षः। वस्तुनो विरोधित्वमुखेन वेदेऽप्यप्रामाण्यं न सुवचम्। तत्प्रामाण्यस्य मीमांसाप्रथमाध्याये स्थापितत्वात्। अतो विरोधित्वं नाम वेदजनितयाथार्थ्यप्रतीतिविरोधिवास्तवार्थान्तरप्रतीतिप्रयोजकत्वमेव। अत एवमनुस्यूतार्थे दृष्टे अप्रामाण्यरूपपूर्वपक्षपरभाष्यसंगमनं सूत्राक्षरसंगमनञ्च कथम्? पञ्चरात्र विरोधि जीवस्योत्पत्त्यसंभवादित्याद्युक्तेरनन्वयादिति चेत्—उच्यते। परमतप्रामाण्यस्थापनार्थे पादे प्रामाण्यस्थापनं कथं संगच्छते इति शंकायाः परिहारप्रकारस्तावदन्योऽस्त्येव; यथा भेदनिरूपणाध्यायस्य द्वितीयस्यान्ते शाखान्तराधिकरणे तदपवादतया भेदप्रतिपादनम्, यथा च प्रकृतिविशेषनिर्धारणार्थे अष्टमेऽध्याये अन्ते तदपवादतया दर्वीहोमानां प्रकृत्यभावनिरूपणम्, तथा अप्रामाण्यापवादतया प्रामाण्यनिरूपणमत्र। अपवादे सति तदनुक्तौ पादे न्यूनतापत्तेरिति। यस्त्वातृप्तः कश्चिदनुस्यूतमर्थं शुश्रूषते, तस्य तृप्तिरेवमाधीयते। अस्यानुस्यूतार्थेऽप्यधिकरणविचारस्यान्यथाकरणं तु भ्रममूलेयं शंकेति व्युत्पादनायैव। अथवा अधिकरणप्रवृत्तिरेवं भाव्या—पूर्वाधिकरणेष्विवात्राप्यधिकरणे सर्वाण्यपि सिद्धान्तसूत्राणि भाव्यानीति

उभयत्रापि तन्त्राणां वेदप्रत्यर्थित्वनिराकरणस्याविशिष्टत्वात् उभयत्राप्यर्थानुवृत्तिरिति न कश्चिद्दोषः। अयमत्र शब्दान्वयः-पञ्चरात्रस्य वेदविरोधभ्रममपनयता सूत्रकारेण वेदप्रत्यर्थित्वं निवार्यमेतस्मिन्नधिकरणे। पूर्वेष्वधिकरणेषु न्याङ्ख्यादीनां दुस्तर्काश्रुति(स्थ?)तोक्त्या दुर्बलत्वेन वेदप्रत्यर्थित्वं निवार्यमिति सप्तस्वधिकरणेषु तर्कपादे वेदप्रत्यर्थित्वनिराकरणरूपानुस्यूतार्थसिद्धिरिति समञ्जसमेतत्। अयमत्र विशेषः—पूर्वत्र सङ्ख्यादिरूपवेदप्रत्यर्थितन्त्रवादी निरस्तः, अत्र पुनः श्रीपञ्चरात्रस्य वेदप्रत्यर्थित्वमस्तीति वदन् दुर्वादी निरस्यत इति ॥ २१० ॥

(२११) दृष्टाऽस्मिन् वेदनिन्देत्यनभिमतमृषेः सात्वते वैदिकत्वम्
मैवं वैशद्यमूलस्तुतिपरवचने वेदवैरस्यहानेः।
संगृह्याऽऽम्नायसारं प्रणयति भगवान् तद्धि (तत्र) भक्तानुकम्पी
श्रौतस्मार्तादिवच्च व्यभजदिह विभुर्वैदिकं तान्त्रिकञ्च ॥ ३६ ॥

अस्मिन् श्रीपञ्चरात्राधिकरणे वेदविरोधः पञ्चरात्रे नास्तीति प्रतिपाद्यत इत्युक्तं भवता। तन्नोपपद्यते; वेदविरोधस्य प्रत्यक्षदृष्टत्वात्। अतो महर्षेर्व्यासस्य पञ्चरात्रस्य वैदिकत्वम् अनभिमतमित्याशङ्कते-दृष्टेति। दूषयति-मैवमिति। तदेव विवृणोति-वैशद्येति। अयमर्थः—वेदवाक्यं प्रकृतिप्रत्ययादिव्यत्यासबाहुल्यादविशदार्थमेव; पञ्चरात्रं तु पुराणादिन्यायेन तादृशव्यत्यासाभावात् विशदार्थम्। तेन साङ्गेषु वेदेषु निष्ठामलभमानः शाण्डिल्यः पञ्चरात्रशास्त्रमधीतवानित्युच्यते। नैतावता वेदनिन्दाप्रसङ्गः। पदार्थस्तु-पञ्चरात्रेषु वैशद्यहेतुकप्रशंसावचने वेदवैरस्यप्रसङ्गाभावादिति। तदेव पुनः प्रकटयति—संगृह्येति। तस्मिन्नेव हि पञ्चरात्रतन्त्रे वेदसारं सङ्गृह्य भक्तानुकम्पी भगवान् विशदमेव प्रकाशयतीति तत्रतत्र श्रूयते। अतो न विरोधप्रसङ्ग इति। तत्=

पूर्वपक्ष्याशयः। तथैव सर्वमस्तु तथाच पञ्चरात्रं निर्णीतवेदार्थ विरोधि अविरोधि वेति विमर्शे विरोधीति पूर्वपक्षः। तत्र सिद्धान्त आरभ्यते—तस्य विरोधित्वे जीवस्योत्पत्ति, जीवान्मनस उत्पत्तिश्च स्वीकार्या स्यात्। तदयुक्तम्; तथाऽननुभवात् लोकविरोधादिति। सूत्रद्वये एवं गतेऽथ शंका, एवं तर्हि मतान्तरवत् पञ्चरात्रस्याप्रामाण्यमायातम्। तथाच पूर्वमीमांसास्मृत्यधिकरणविरोध इति। इमामधिकाशंकां प्रामाण्यस्य पनेनानन्तरसूत्रद्वयेन परिहरतीति। तथाचान्ततो यत् वक्तव्यम्, तद् भाष्ये दर्शितमिति तृप्तो भवेति अनुस्यूतार्थापेक्षी बोध्यत इति॥ श्लोके उत्थतोक्त्येति पाठः। उत्थितेति पाठे तु उत्थिताः इत्युक्त्येत्यर्थं कल्प्यः॥ २१० ॥

३६. ननु पञ्चरात्रस्य वैदिकत्वं न ऋषिसंमतम्, तत्र वेदनिन्दादर्शनात् वैदिकतान्त्रिकविभागदर्शनाच्चेत्यत्राऽऽह दृष्टेति। अस्मिन् पञ्चरात्रे वेदनिन्दा, 'सांगेषु वेदेषु निष्ठामलभमानः शाण्डिल्यः पञ्चरात्रमधीतवान्' इत्येवं दृष्टा। इति हेतोः सात्वते=पञ्चरात्रे वैदिकत्वं वेदानुसारित्वं ऋषेरनभिमतमिति चेत्—मैवम्। तद्वाक्यं वेदनिन्दारूपं न भवति। परव्यूहविभवहार्दार्चारूपविग्रह-तदाराधनादिकं विशदमवगम्यते पञ्चरात्रे, न तु वेदे इति वैशद्यमूला या स्तुतिः तत्परेऽस्मिन् वचने वेदविषये वैरस्यस्य=अनादरस्य हानेः=अभावात्। वेदार्थविशदीकरणेन तत्राऽऽदरस्यैवाभिवर्धनात्। तत् कथं ज्ञायत इति चेत्—तत्=पञ्चरात्रे हि भगवान् भक्तविषयानुकम्पया आम्नायानां सांगवेदानां सारमेव

पञ्चरात्रतन्त्रमित्यर्थः। तर्हि पञ्चरात्रस्य वैदिकत्वे सिद्धे वैदिकं तान्त्रिकमिति वैदिकतान्त्रिकयोः विभागकथनं कथं युज्यत इत्याशङ्क्य प्रतिबन्द्या परिहरति—श्रौतेति। यथा स्मार्तस्य श्रौतत्वे सत्यपि श्रौतस्मार्तविभागो लोके परिगठ्यते, एवं तान्त्रिकस्यापि वैदिकत्वे सत्यपि वैदिकतान्त्रिकव्यवहारो युज्यत इत्यर्थः। कथं तर्हि विभागः? इत्थम्। प्रत्यक्षश्रुतिमूलत्वे श्रौतत्वम्, अनुमितश्रुतिमूलत्वे स्मार्तत्वमिति यथा विभागः, तथा प्रत्यक्षवेदमूलत्वे वैदिकत्वम्, पञ्चरात्रानुमितश्रुतिमूलत्वे तान्त्रिकत्वमिति न कोऽपि विरोधः। उक्तं च श्रीविष्णुचित्तार्यैः—'वैदिकं तान्त्रिकं चेति विभागोऽयमुदीर्यते। वैदिकत्वे समानेऽपि श्रौतस्मार्तविभागवत्॥' इति॥ २११॥

(२१२) वेदानां मानतोक्तेस्तदनुसरणतः स्वस्य तन्मूलतोक्त्या
व्यावृत्तिर्मा ते बाह्यागमत इति न तत्तुल्यभावोक्तिरार्षी।
का हानिः क्षुद्रविद्याशबलमिति यथा तादृशे वेदभागे
मोक्षस्य प्रत्ययार्थं स्वगणितपरं सात्त्वते सिद्धिभेदाः॥ ३७॥

ननु, 'पञ्चरात्रं पाशुपतम्' इति सह(म)पाठो दृश्यते; तत् कथं पञ्चरात्रस्य वैषम्यमुच्यत इत्याशङ्क्याह—वेदानामिति। अयमर्थः—स्फुटदृष्टस्य वैषम्यस्यापलपितुमशक्यत्वादिति। वैषम्यमेव विभज्य(जन्) दर्शयति-वेदानां मानतोक्तेः=तस्मिन्नेव पञ्चरात्रे वेदप्रामाण्यप्रतिपादनात्, तदनुसरणतः-वेदानुसारात्, स्वस्य तन्मूलतोक्त्या-पञ्चरात्रस्य वेदा एव मूलमिति पञ्चरात्र एव कथनात्, बाह्यागमतः-पाशुपतादेः पञ्चरात्रस्य व्यावृत्तिः-विशेषो भातीति तत्तुल्यत्वकथनं=बाह्यागमतुल्यत्वकथनम् आर्षमेव न भवति=महर्षेर्व्यासस्याभिमतमेव न भवतीत्यर्थः। तेन पञ्चेतराणि शास्त्राणि रात्रीयन्त इति पञ्चरात्रशब्दनिर्वचनं योयुज्यत इत्युक्तं भवति। तर्हि वश्याकर्षण-स्तम्भन-मोहनादिक्षुद्रविद्याशबलत्वात् पञ्चरात्रं परित्याज्यमिति चेत्-तत्र वेदप्रतिबन्दीं वदिष्यन्नाह-का हानिरिति।

---

संगृह्य प्रतिकल्पं कालविशेषे गीतामिव प्रणयति। 'इदं महोपनिषदं चतुर्वेदसमन्वितम्' इति, 'महतो वेदवृक्षस्य मूलभूतः सनातनः' इत्यादेश्च भारते दर्शनात् वैदिकत्वमेव महर्षिसंमतम्। स्पष्टमिदं सर्वं श्रीभाष्ये। यत्तु वैदिकस्तान्त्रिकश्चेति विभागः, न स वेदात् पृथक्करणेन। लोके श्रौतं स्मार्तमिति विभागः प्रसिद्धः। न हि स्मृत्युक्तमवैदिकम्; वेदमूलकतयैव स्मृतेः प्रामाण्यात्। अतो यथा दृश्यमानवेदस्पष्टानवगतं वेदमूलकस्मृत्यवगतं स्मार्तमित्युच्यते, तद्वत् अधीयमानवेदाधीनविशदावगमाभावात् वेदवृक्षमूलांशभूतैकायनभागविशदोक्तार्थदर्शितन्त्रावगतत्वात् वैदिकैकदेशस्यैव तान्त्रिकत्ववाद इति॥ २११॥

३७. ननु जैनपाशुपतयोरिव पञ्चरात्रे क्षुद्रविद्यानां बहुलमुपलम्भात् मोक्षातिरिक्तानां सिद्धीनां वर्णनाच्च तत्तौल्यमेव स्यात्; अस्मिन् पादे उत्तरोत्तरं निकृष्टमतनिराकरणदर्शनाच्च पञ्चरात्रं निकृष्टतममेव सूत्रकृद्दिष्टं स्यादित्यत्राह वेदानामिति। शांकरभाष्य एव श्रीपञ्चरात्रस्य तत्त्वविषये आचारविषये च प्राबल्यतमत्वमुपपादीति नात्र बहु वक्तव्यमस्ति। बाह्यागमेषु वेदानां प्रामाण्यं नोच्यते। प्रत्युत तद्विद्वेष एव प्रदर्श्यते। वेदोपजीवनं विना स्वातन्त्र्येण प्रवृत्तत्वञ्चोद्घुष्यते। अत्र तु प्रतिपदं वेदप्रशंसा, कर्मसु वेदानामुपयोगः, स्वस्य वेदमूलकत्वकीर्तनञ्च। अतो बाह्यागमवैलक्षण्यं दृश्यत इति हेतोः तत्तुल्यत्ववचनं स्वबुद्धिपरिकल्पितम्, न तु कस्यापि ऋषेरभिमतम्। बहुक्षुद्रविद्यागर्भमिदमित्यनेन

क्षुद्रविद्याशबलमिति का हानिरित्यन्वयः । प्रतिबन्दीमेव दर्शयति–यथेति । अभिचारादिकर्मप्रतिपादकवेदभागे यथाधिकारं यथा परिग्रहः, तद्वदत्रापीत्यर्थः। तर्हि मोक्षविरोधात् सिद्धिभेदाः किमर्थं सात्वते कथ्यन्त इत्याशङ्क्य परिहरति–मोक्षस्येति । वेदेषु दृष्टफलेषु कारीर्यादिषु विश्वासादेव ह्यदृष्टफलेषु ज्योतिष्टोमादिषु विश्वासो जायते । एवमत्रापि मोक्षशास्त्रे फलसिद्धिविश्वासार्थं दृष्टफलक्षुद्रविद्योपदेश इति न कोऽपि विरोध इति । सिद्धिभेदा अगणिषतेति कर्मणि लुङ्प्रयोगः । सत् सत्त्वं गुणप्रधानत्वात्; तद्वान् परमपुरुषः सत्त्वान्। तेन प्रोक्तं शास्त्रं सात्वतमिति ॥ २१२ ॥

(२१३) जीवस्योत्पत्तिमाह प्रथयति च मनो जीवतत्त्वप्रसूतम्

तच्चाहङ्कारहेतुं व्यपदिशति ततः पञ्चरात्रं न मानम् ।

मैवं जीवादिवाचो ह्यभिदधति विभोर्व्यूहमेतानिह त्रीन्

तत्तत्तत्त्वाभिमानाश्रियतिमधिगता तेषु तत्तत्समाख्या ॥ ३८ ॥

अस्मिन्नधिकरणे चत्वारि सूत्राणि । तत्र द्वयं पूर्वपक्षप्रतिपादकम्, इतरद्द्वयं सिद्धान्तप्रतिपादकमिति विभागः । तत्र सूत्रानुरोधेन पूर्वपक्षमाह–जीवस्येति । 'वासुदेवात् सङ्कर्षणो नाम जीवो जायते' इति पञ्चरात्रतन्त्रं जीवस्योत्पत्तिमाह । तत् वेदविरुद्धम्; जीवनित्यत्वस्यैव, 'नित्यो नित्यानाम्' इत्यादिवेदप्रतिपाद्यत्वात् । 'सङ्कर्षणात् प्रद्युम्नसंज्ञं मनो जायते' इति तदेव पञ्चरात्रं मनसः सङ्कर्षणादुत्पत्तिमाह । तच्च वेदविरुद्धम्; इन्द्रियाणामाहङ्कारिकत्वात् । तच्चाहङ्कारहेतुं व्यपदिशति–तच्च

---

च का हानिः । तासां विद्यानामपि वेदमूलकत्वात् तत्प्रतिपादको वेदभागो यथा, तथा तत् मानमेव । न ह्यभिचारादिप्रतिपादकाथर्वणतदितरवेदभागानां क्षुद्रता । तथा नानाविधमन्त्रजप–तत्फलादिसिद्धिप्रदर्शनमपि स्वविवक्षिततममोक्षविषयकदृढविस्रम्भविधानार्थमेव कल्पते । वेदोऽपि हि सात्त्विककल्याणपुरस्सरानुष्ठानार्थमेव स्वर्गकर्मविध्यनप्रवृत्तोऽपि कर्मभेदेन फलान्तराणि प्रदर्श्य तत्र तानि विनियुज्य ततो लब्धविस्रम्भान् स्वाभिमतमोक्षार्थं तदनुष्ठानं शिक्षयति । अतो भारतविस्पष्टावगतप्रामाण्यातिशये पञ्चरात्रे तन्त्रान्तरसाम्यादिवचनमान्ध्यकृतमेवेति ॥ २१२ ॥

३८. पूर्वपक्षसूत्रद्वयार्थं पूर्वार्धेनाऽऽह जीवस्येति । "वासुदेवात् संकर्षणो नाम जीवो जायते; संकर्षणात् प्रद्युम्नसंज्ञकं मनो जायते; तस्मात् अनिरुद्धसंज्ञोऽहंकारो जायते" इति पञ्चरात्रवाक्यम् । तत्र प्रथमवाक्यं जीवस्योत्पत्तिमाह । श्रुतिविरोधात् युक्तिविरोधाच्च जीवस्योत्पत्त्यसंभवादिदमप्रमाणम् । न च संकर्षणस्य कस्यचिदत्रोत्पत्तिरुच्यते, न जीवस्येति शंक्यम्; जीवशब्दस्य विशेष्यवाचित्वात्, संकर्षण इति नाम्नस्तद्विशेषणत्वात् । एवमुत्तरवाक्ययोरपि स्वारस्यात् मनसोऽहंकारस्य च विशेष्यत्वं प्रद्युम्नानिरुद्धयोर्विशेषणत्वञ्च स्पष्टम् । संकर्षणादिशब्दार्थः क इति चेत्, अस्तु यःकश्चित्; किं तेन? जीवस्य संसारिणो बहुधाऽऽकृष्यमाणत्वात्, मनसो मननव्यापारेण प्रकाशहेतुत्वात्, अहंकारस्य निरोद्धुमशक्यत्वाच्च तथातथा व्यवहारोऽस्तु। यद्यपि मनसः, अहंकारस्य चोत्पत्तिरिष्टा, तथापि न कर्तृभूतात् जीवात् करणभूतस्य मनस उत्पत्तिः, किं तु सात्त्विकाहंकारात्। तथाऽहंकारस्य महदाख्यतत्त्वादुत्पत्तिः, न तु मनसः । अत्र तु द्वितीयवाक्यं मनः जीवतत्त्वप्रसूतत्वेन प्रथयति; तृतीयवाक्यञ्च तत्=मनः अहंकारस्य हेतुतया प्रथयति । ततः बाधितार्थप्रतिपादकत्वात् पञ्चरात्रं न प्रमाणमिति । इदं निरस्यति

मनः, 'तस्मादनिरुद्धाख्योऽहङ्कारो जायते' इत्यहङ्कारहेतुं व्यपदिशति पञ्चरात्रम्। तदपि वेदविरुद्धम्; अहङ्कारस्य महत्तत्त्वकार्यत्वात्। ततः पञ्चरात्रं न मानमिति पूर्वः पक्षः। तमिमं निराकरोति मैवमिति। प्रतिक्षेपप्रकारं विशदयति-जीवादीति। अत्र हि जीवमनोहङ्कारशब्दा जीवमनोहङ्काराभिमानिरूपान् संकर्षणप्रद्युम्नानिरुद्धनामकांस्त्रीन् भगवद्व्यूहभेदानेव कथयन्ति; तेषां तु जननं प्रादुर्भाव एवेति न कश्चिद्विरोधः। तर्हि जीवादिशब्दैस्संकर्षणादीनामपि व्यत्ययेनाभिधानमपि किं न स्यादित्याशङ्क्य परिहरति-तत्तदिति। अयमर्थः-संकर्षणो जीवमेवाभिमनुते, प्रद्युम्नो मनस्तत्त्वम्, अनिरुद्धोऽहङ्कारमेव, तेनाभिमाननियमाज्जीवादिव्यवहारनियम इति सुसङ्गतमेतत्। नियतिमिति—संकर्षण एव जीवशब्दस्य नियतिः, प्रद्युम्न एव मनश्शब्दस्य, अनिरुद्ध एवाहङ्कारशब्दस्येति प्रतिनियम इति ॥२१३॥

(२१४) जीवोऽस्मानाद्यनन्तः कथित इति तदुत्पत्तिपक्षो नहीष्टः
शब्दस्सङ्कर्षणादिर्न कथमपि समन्वेति जीवादिमात्रे।
श्रौतस्सृष्टिक्रमश्च स्वयमनुपठितस्तद्विरुद्धं न कल्प्यं
तस्मात् श्रुत्या मिथो वा न विहतिरिह तत्तन्त्रतात्पर्यदृष्टेः ॥ ३९ ॥

---

मैवमिति। अत्र जीवमनोहंकारशब्दाः न तत्तन्मात्रार्थकाः, किं तु जीवाद्यभिमानिपराः। अत एव संकर्षणादिपदान्येव विशेष्यसमर्पकाणि; जीवादिपदानि जीवादितत्त्वाभिमानित्वरूपविशेषणसमर्पकाणि। विभोः वासुदेवस्य चतुर्व्यूहत्वम्, संकर्षणादिशब्दानां व्यूहनामधेयत्वञ्च पञ्चरात्र-भारतादौ प्रसिद्धम्। ननु जीवस्यैवोत्पत्त्यसंभवे कथं भगवत उत्पत्तिरिति चेत्—न हि परमात्मा स्वरूपेण जायत इत्युच्यते, संकर्षणादिशब्दा हि वासुदेवादिजनितान् व्यूहान् अभिदधति=वदन्ति। रामकृष्णादिवत् अप्राकृतदिव्यविग्रहोत्पत्त्या तत्तद्विग्रहसंबन्ध एव ब्रह्मण उत्पत्तिः। भगवतः संकर्षणरूपविग्रहवत्तया जीवाभिमानिता, प्रद्युम्नरूपविग्रहवत्तया मनोभिमानिता; अनिरुद्धाख्यव्यूहवत्तया चाहंकारतत्त्वाभिमानिता। संकर्षणप्रद्युम्नानिरुद्धशब्दाः विशेष्यवाचिनः। अत एव संकर्षणादित्यादिपञ्चम्यन्तप्रयोगः; न तु जीवादित्येवम्। नियतिमधिगता तेषु तत्तत्समाख्येति। संकर्षणप्रद्युम्नानिरुद्धव्यूहेषु जीवमनोहंकारशब्दाः तत्तच्छब्दार्थविषयकाभिमानरूपनिमित्तेन व्यवस्थां प्राप्ता इत्यर्थः। यद्वा संकर्षणादिसमाख्याः जीवादितत्त्वाभिमानावच्छेदकविग्रहपरतया तत्रतत्र व्यवस्थिता इत्यर्थः। व्यक्तमिदं महाभारतेऽपीति परमार्थभूषणे प्रादर्शयाम। अनेन, "विज्ञानादिभावे वा तदप्रतिषेधः" इति सूत्रार्थं उक्तप्रायः। तदर्थो भाष्यादौ भाष्यार्थदर्पणे च व्यक्तः। अर्थान्तरमप्यत्र सूच्यते-विज्ञानस्य=विज्ञानमानन्दं ब्रह्मेत्युक्तस्य ब्रह्मणः आदिभूतो यो भावः व्यूहरूपाविर्भावः, तस्मिन्=तत्परत्वे तु श्रुत्या पञ्चरात्रवाक्यप्रतिषेधो न भवतीति। यद्वा विज्ञानस्य=विशेषाभिमानस्याऽऽदिः कारणं यो भावः आविर्भावः; तत्परत्व इत्यर्थः॥

चि. टी. गुणप्रधानत्वादिति। भावप्रधानत्वादित्यर्थः। केचित्तु सत् ब्रह्म; तद्वन्तः=सत्वन्तः। सत्वन्त एव सात्वताः। प्रज्ञादित्वात् अण्। सात्वतानामिदं सात्वतमित्याहुः। आगमप्रामाण्यरीतौ तु--सन्तः ब्रह्मविदः तद्वान् सत्वान्। "ततश्च सत्वान् भगवान् भज्यते तैः परः पुमान्। ते सात्वता भागवता इत्युच्यन्ते द्विजोत्तमाः ॥" इति ॥ २१३ ॥

पूर्वत्र जीवोत्पत्तिवादप्रवर्तकस्य पूर्वपक्षिणा वेदविरोध उक्तः ; तन्नोपपद्यते, जीवनित्यत्वस्य पञ्चरात्रे प्रतिपादितत्वादित्याह—जीव इति । अयमर्थः—'अचेतना परार्था च' इत्यारभ्य श्रीपञ्चरात्रतन्त्र एव, 'व्याप्तिरूपेण सम्बन्धस्तस्याश्च पुरुषस्य च' इति सर्वतः प्रकृतिपुरुष(जीव)योः सम्बन्धमुक्त्वा, 'स ह्यनादिरनन्तश्च' इति जीवस्यानादित्वमनन्तत्वञ्च साक्षादेव कथितम् । तेन तदुत्पत्तिपक्षो न दृष्टः = जीवोत्पत्तिपक्षः पञ्चरात्रे नैवेष्टः । यदि जीवोत्पत्तिरुच्यते, तदा 'सङ्कर्षणो नाम जीवो जायते' इत्यन्वयो वक्तव्यः, स च नोपपद्यते । जीवस्य सङ्कर्षणत्वाभावात् । एवं मनःप्रभृतिशब्दान्वयोऽपि न घटत इति वक्तुमनाऽऽदिशब्दः प्रयुज्यते । अस्मत्पक्षे जीवादिशब्दः सङ्कर्षणादीनां जीवाद्यभिमानित्वात् वक्तुं शक्यते ॥ तथाऽपि युष्मत्पक्ष एव स्वीकार्य इत्यस्मिन्नर्थे किं नियामकमित्यत्राह—श्रौत इति । श्रुतिसिद्धः प्रकृतिमहदहङ्कारादितत्त्वक्रम एव पञ्चरात्रतन्त्रे(सर्वत्र पञ्चरात्रे)-ऽप्यनुवर्तते । तेन श्रुतिसिद्धस्य पञ्चरात्रतन्त्रानुपठितस्य तत्त्वक्रमस्य विरुद्धमर्थं तत्त्वमत्र वाक्ये, 'वासुदेवात् सङ्कर्षणो नाम जीवो जायते' इत्यादौ नैव कल्प्यमित्यर्थः। एवं श्रुतिविरोधाभावमुपपादितं निगमयति-तस्मादिति । मिथो न विहतिरिति वचनं यत्र क्वापि तन्त्रे जीवोत्पत्त्यादिप्रसक्तो नास्ति। तस्मात् पञ्चरात्रतन्त्रे श्रुतिविरोधः समानजातीयतन्त्रान्तरविरोधोऽपीह क्वापि नास्तीति सार्वत्रिकमेव प्रामाण्यमिति निगमनाभिप्रायः(निगम्यते) । तत्र हेतुमाह—तत्तन्त्रेति । उपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गनिरूपणेन तत्तन्त्रेषु श्रीपञ्चरात्रतन्त्रेषु तात्पर्यस्य सम्यग्दर्शनादित्यर्थः ॥ २१४ ॥

(२१५) साङ्ख्या वैशेषिकाश्च श्रुतिपरिपठितं धर्ममैच्छन्न तत्त्वं
तत्त्वाचारौ तु बुद्धक्षपणकपशुपत्युक्तिषु श्रुत्यपेतौ ।
वेदोपस्कारिविष्णुस्मृतिवदवितथं(थे) पञ्चरात्राख्यतन्त्रे
तत्त्वं श्रुत्यन्तसिद्धं चरणमपि समं गृह्यमेदादिनीत्या ॥ ४० ॥

उक्तेष्वष्टस्वधिकरणेषु परस्परवैषम्यमाह—साङ्ख्या इत्यादिना । साङ्ख्या वैशेषिकाश्च श्रुतिपरिपठितं धर्मं ऐच्छन्, न पुनः श्रुतिपरिपठितं तत्त्वमित्येकः प्रकारः। प्रकारान्तरमप्युच्यते—तत्त्वाचाराविति । बौद्धाः क्षपणकाः पाशुपताश्च श्रुतिपरिपठितं तत्त्वमाचारञ्चान्यथाचक्रुः ।

---

३९. न वयं प्रामाण्यस्थापनामाथान्तरं कल्पयामः ; किंतु वाच्यार्थे तात्पर्याभावादित्याह जीव इति । 'स ह्यनादिरनन्तश्च परमार्थेन निश्चितः' इति जीवेऽनादित्वानन्तत्वयोः परमार्थतया प्रोक्तत्वात् अस्य वाक्यस्य तदुत्पत्तौ तात्पर्याभावः सिद्धः । किञ्च संकर्षणादिसंज्ञाः व्यूहतया पञ्चरात्रप्रसिद्धाः जीवादिशब्दार्थेषु जीवादिषु नान्वयं लभन्ते । किञ्च पञ्चरात्रे भूतशुद्ध्यादिनिरूपणावसरे प्रकृतिमहदहंकारादिक्रमेण श्रुतिदर्शितः सृष्टिक्रमोऽनूदितोऽस्तीति तद्विरुद्धतया जीवान्मनसः, मनसोऽहंकारस्योत्पत्तिर्वर्णयितुं न शक्यते ; तथा जीवोत्पत्तिरपि । तस्मात् यथाश्रुते वाक्यान्तरविरोधात् तत्तन्त्रतात्पर्यदृष्टेः तस्मिन्=तत्तदर्थाभिमानिव्यूहजन्मरूपार्थे तस्य तन्त्रवाक्यस्य तात्पर्यदर्शनात् न श्रुतिविरोधः न च वाक्यान्तरविरोध इति । अनेन विप्रतिषेधाच्चेति सूत्रार्थ उक्तो भवति ॥ २१४ ॥

४०. नन्वेवं तत्त्वे वैपरीत्याभावेऽपि श्रौताचारविपरीताचारपरत्वादेवाप्रामाण्यं पञ्चरात्रस्येत्यत्राह सांख्या इति । सांख्याः वैदिकाचाराणां हिंसामिश्रतया पापहेतुत्वस्यापि स्वीकारेऽपि विहितकर्मणां यथाम्नायं फलहेतुत्वमैच्छन् । वैशेषिकाश्च, 'तद्वचनादाम्नायस्य प्रामाण्यम्' इति धर्मवचनात्

अतस्तत्पक्षेषु तत्राचाराद्युभावपि श्रुतिविरुद्धौ। श्रीमत्पञ्चरात्रतन्त्रे वेदोपस्कारके तदुभयमपि नास्तीत्याह-वेदोपस्कारीति। यथा वेदोपस्कारिरूपे(पौ?) श्रीविष्णुस्मृतौ, तद्वत् वेदोपस्कारके श्रीपञ्चरात्रतन्त्रेऽप्यवितथं तावत् अत्यन्तसिद्धं तत्त्वमेवेति सर्वसम्मतम्। आचारोऽपि तथैव अत्यन्तसिद्ध एव। तदिदमाह—चरणमपि सममिति। ननु पञ्चरात्रतन्त्रे कश्चिच्चरणभेदो दृश्यते; तत् कथमित्याशङ्क्य परिहरति—गृह्यभेदाविनीत्येति। यथा आश्वलायनापस्तम्बादिगृह्यभेदात् श्रुतिमूलत्वे समानेऽपि कश्चिदाचारभेदः परिगृह्यते, एवमेकायनश्रुतिमूलपञ्चरात्रतन्त्रनिष्ठानुष्ठानभेदोऽपि श्रुतिमूलत्वादेव प्रामाणिकत्वेन स्वीकार्यं इति न क्वापि पञ्चरात्रतन्त्रे श्रुतिविरोधो वा श्रुतिमूलत्वाभावो वेति पञ्चरात्रश्रुत्योरैकरस्यमेवेत्यर्थः॥ २१५॥

(२१६) सर्यन्ते पञ्चयज्ञा मुनिभिरपि नमस्कारमन्त्रेण शूद्रे
तत्राधीतं हविष्कृत्प्रभृतिपदमिहाप्यंशतोऽस्याधिकारः।
योज्या दक्षोक्तकालक्रमगतिरभिगत्यादिभेदे तदुक्ते
ग्राह्यं पश्विष्टिसोमप्रभृतिवदखिलं युक्तितस्संकलय्य॥ ४१॥

ननु, 'ब्राह्मणैः क्षत्रियैर्वैश्यैश्शूद्रैश्च कृतलक्षणैः। अर्चनीयश्च सेव्यश्च नित्ययुक्तैस्स्वकर्मसु॥ सात्वतं विधिमास्थाय गीतस्संकर्षणेन यः॥' इति महाभारते पाञ्चरात्रिकधर्मानुष्ठाने शूद्राधिकार उच्यते। अपशूद्राधिकरणे तु वैदिकधर्मे शूद्रस्यानधिकार उक्तः। तत् कथं पञ्चरात्रस्य वेदविरोधाभाव इत्याशङ्क्य प्रतिबन्द्या परिहरति-सर्यन्त इति। 'नमस्कारेण मन्त्रेण पञ्चयज्ञान् समापयेत्।' इति स्मृतावपि शूद्रस्य पञ्चमहायज्ञाधिकार उक्तः। तथा, 'हविष्कृदाधावेति शूद्रस्य' इति शूद्रस्यापि श्रुतिसिद्ध-

---

प्रामाण्यं प्राहु। तत्त्व तु न श्रुतिप्रतिष्ठम्। अब्रह्मात्मकत्वस्य परम णूपादानत्वादेश्चोक्तेः। एवमेतत्पाद प्रथमाधिकरणद्वयविचारितमतद्वयस्थितिः। अनन्तराधिकरणविचारितेषु बौद्धजैनपाशुपतेषु तत्त्वाचारोभयमश्रौतम्। पञ्चरात्रतन्त्रे तु विष्णुकर्तृके वेदोपस्कारिणी=तदंगभूता तदुपबृंहणभूता या विष्णुकर्तृकस्मृतिः तद्वत् अवितथे अबाधितार्थके गमितं तत्त्वं वेदान्तसिद्धमेव अवितथमिति पाठे अर्थे अवितथत्वम्। चरणम् आचारः—धर्म. समः=ऋग्वेदादिधर्मवत् एकायनश्रुतिविहिततया श्रौतत्वेन सम एव। न च थापि ऋग्वेदादिविहितभिन्नत्वात् अप्रामाणिकत्वं शंक्यम्; गृह्यभेदन्यायेन समत्वात्। यथा आपस्तम्बाश्वलायनादेः गृह्येषु मिथो भेदसत्त्वेऽपि श्रुतिमूलकतया साम्यम्, तथा त्रयीधर्मस्य पाञ्चरात्रधर्मस्य च श्रुतिमूलकतया साम्यमेव। तदिदमाचारसाम्यं श्रीभाष्येऽपि विशदम्। गृह्यशब्दप्रयोगः आचारमात्रात् गृहीते, श्रुतौ दृष्टमशक्ये विषयेऽपि. मिथोविरोधेऽपि प्रामाणिकत्वस्वीकारादिहापि तथेति गमयितुम्॥२१५॥

४१. नन्वाचारे साम्यं दुर्वचम्; द्विजतुल्यतया शूद्राणामप्याचारविधानं पञ्चरात्रे। वैदिकस्तु तस्यापशूद्राधिकरणे पर्युदस्तः। एवं दक्षस्मृत्याद्युक्ताष्टकालपङ्क्तिया पञ्चरात्रपञ्चकालपङ्क्तियाविरुद्धा। तत् कथमविरोध इत्यत्राऽऽह सर्यन्त इति। मुनिभिः याज्ञवल्क्यादिभिरपि शूद्ररूपकर्तृविषये नमस्कारमन्त्रेण नम इति मन्त्रेण पञ्चमहायज्ञाः कर्तव्यतया सर्यन्ते, "नमस्कारेण मन्त्रेण पञ्च यज्ञान् समापयेत् (न हापयेत्)" इति। एवं तत्र शूद्रविषये हविष्कृत्पदमप्यधीतम्। प्रभृतिशब्देन बहुयाजिपदग्रहणम्। तेन शूद्रस्य हविष्कृत्त्वं बहुयाजित्वञ्चानुमतमस्ति। हविर्हि यागाङ्गद्रव्यम्। तथा चाहाऽऽपस्तम्बः,

धर्मानुष्ठानप्रकारः प्रख्याप्यते। तदिदमाह—तत्राधीतं हविष्कृत्प्रभृतिपदमिति। तत् कथं भवानस्मो-कुरुत इति प्रतिबन्दी। तत्र परिहारमाशङ्क्य तुल्यमित्याह—इहापीति। अयमर्थः—शूद्रस्याग्नि-विद्यासापेक्षेष्वेव कर्मसु नाधिकारः, वैदिकेष्वपि सत्यवचनादिवत् स्वजात्यनुरूपेषु कर्मस्वधि-कारोऽस्तीति यदि वदसि तर्हि श्रुतिमूलेषु पञ्चरात्रतन्त्रोक्तेषु धर्मेषु स्वाधिकारानुरूपेषु शूद्रस्या-प्यधिकारोऽस्ति, न सर्वत्राधिकारोऽस्माभिरुच्यत इति न क्वापि विरोधः। अंशत इति—स्वाधि-कारानुरूपानुष्ठानस्थलनिर्देशः। ननु प्रातरारभ्याहोरात्रमपि वैदिककर्मानुष्ठानं कर्तव्यमिति धर्म-शास्त्रेष्वभिधीयते। तथा च सति पञ्चरात्रोक्तपञ्चकालकर्मानुष्ठानस्य कः काल इत्याशङ्क्य परि-हरति—योज्येति। न हि सर्वोऽपि कालः स्मृतिभिर्नित्यनैमित्तिककर्मविधायिनीभिरुपरुध्यते। अपितु यावान् अनुष्ठानकालस्तावानेव परिगृह्यते। तथाच अभिगमनादीनामपि स्मृतिविहितधर्मानुष्ठान-कालाविरोधेनानुष्ठानसम्भवादनुष्ठानं योयुज्यत एव। अयमत्र शब्दार्थः—दक्षादिभिः परमर्षिभि-रुक्ता पञ्च(अष्ट?)कालक्रमगतिरपि [अभिगमनादि?]नित्यानुष्ठानकालेन सह योज्या। निपुणं निरूपयतामविरोधेन योजयितुं शक्यत इत्यर्थः। तदेतत् श्रौतदृष्टान्तक्रमेण दर्शयति—ग्राह्यमिति। यथा श्रुतमेव पश्विष्टिसोमप्रभृतिकं धर्मजातं यथाकालमेकेनैवाधिकारिणाऽनुष्ठीयते, तद्वत् श्रौतनित्य-नैमित्तिकादिकं पञ्चरात्रतन्त्रप्रोक्तं पाञ्चकालिकमपि धर्मजातमखिलं योग्यप्रकारेण संकलय्य सम्यग्ग्राह्यमित्यर्थः॥ २१६॥

---

"हविष्कृदेहीति ब्राह्मणस्य, हविष्कृदागहीति क्षत्रियस्य, हविष्कृदाद्रवेति वैश्यस्य, हविष्कृदाधावेति शूद्रस्य" इति वर्णानुरूपं हविष्कृत्त्वम्। एवम्, "बहुयाजिनोऽगाराच्छूद्रवर्जम्" इति शूद्ररूप-बहुयाजिनं विहायान्यस्य बहुयाजिनोऽगारात् अग्न्यानयनार्थकमपि सूत्रम्। तदिदं श्रीकृष्णमुनिवचन-पुरस्सरं श्रीपाञ्चरात्ररक्षायामप्याचार्यैरुक्तम्। अत इहापि वेदेऽप्यंशतोऽस्य शूद्रस्याधिकारोऽस्तीति तद्वदेव पञ्चरात्रेऽपि वचनबलादंशत एवास्याधिकारः, न सर्वत्रेति न मिथो वैलक्षण्यम्। यच्च दक्षादि-निर्दिष्टकालस्तावेन शंकितम्, तत्रोच्यते। प्रातस्संगवमध्याह्नापराह्णसायाह्नभेदेन दिवसस्य पञ्चधा विभागः प्रसिद्धः। एवं स्थिते दक्षेण कुतोऽष्टधाविभागः कथं संगम्यते। 'अष्टमे लोकयात्रां तु बहिस्सन्ध्यां ततः पुनः' इत्युक्त्वा रात्रिविषयं पृथगाह, 'प्रदोषपश्चिमौ यामौ वेदाभ्यासेन यापयेत्। यामद्वयं शयानो हि ब्रह्मभूयाय कल्पते' इति। तद्वत् अहोरात्रस्य पञ्चकालात्मना पञ्चरात्रे कुतो विभागोऽपि संगंस्यते। एकत्र द्विकस्यान्तर्भावप्रकारश्च श्रीपाञ्चरात्ररक्षायां नित्यानुष्ठानस्थापनाधि-कारे स्वरूपि। तदयमर्थः—दक्षोक्तानां कालानामष्टधात्वादिना विभक्तानां क्रमेण=पौर्वापर्यमनुसृत्य या गतिः=कर्मानुष्ठानपद्धतिः, सा अभिगत्यादिभेदे अभिगमनादिपञ्चकेऽपि योजयितुं शक्या। दक्षोक्त-रीत्या कर्मानुष्ठानेऽपि तत्रैतावत् अभिगमनकृत्यम्, तत एतावदुपादानकृत्यमिति विवेचने कृते, तत्तदवसाने अभिगमनादि समाप्य उपादानादिसंकल्पकरणमात्रेण पाञ्चकालिकप्रक्रिया हि रक्षिता भवति। तत्र श्रुतिस्मृत्यनुक्तपाञ्चरात्रकर्मप्रवेशो कथमनुष्ठानस्य सुशकतेति चेत्—कतिपयदिनेषु दक्षानुक्त-पशुयाग-दर्शादीष्टि-सोमयागप्रकृतिविकृत्याद्यनेकानुष्ठाने आपतिते कथं सर्वघटनम्। यथाहि युक्तितो विमृश्य घटनं तु सर्वत्र सुकरम्॥ २१६॥

(२१७) जातावाचार्यशब्दः क्वचिदिति न तथाऽऽचार्यदेवो भवेत्या-
म्नाते तत्प्रतीतिः, स्मृतिषु नियमिताल्लक्षणात् तत्प्रवृत्तेः ।
तद्वत् स्यात् सात्वतादावगतिकविषये रूढिभङ्गो न दोषो
विप्रादेरत्र शास्त्रे स्थितिरपि बहुधा भारतादौ प्रसिद्धा ॥ ४२ ॥

इति उत्पत्त्यसंभवाधिकरणम् ॥ ५३ ॥

अत्र कश्चिदाह—"पञ्चरात्रतन्त्रेष्वधिकारवचनं न जातितो विप्राणाम्, अपितु गुणविशेषादौपचारिकविप्राणाम्, 'न शूद्रा भगवद्भक्ता विप्रा भागवताः स्मृताः' इत्यौपचारिकनिर्देशस्तत्रतत्र दृश्यते" इति । एतदेव दृष्टान्तेन दर्शयति—जाताविति । लोके खलु शिष्टैराचार्यशब्दो जातावेव प्रयुज्यते । अथापि, 'आचार्यदेवो भव' इत्यादौ उपनीयाध्यापनादिरूपाचार्यलक्षणोपेतत्वादेव प्रयुज्यते । तत्प्रतीतिः—जातिप्रतीतिरित्यर्थः । तदिदमाह—स्मृतिष्विति । स्मर्यते हि, 'उपनीय तु यश्शिष्यम्' इत्यादि । एवं दृष्टान्तमुक्त्वा तद्वत् सात्वतादौ कर्माधिकारिणां विप्रब्राह्मणादिशब्द औपचारिकः स्यात् । तथाच न पञ्चरात्रस्य विप्राधिकारोऽस्तीतीमाम शङ्कां परिहरति—अगतिकविषय इति । अयमत्र न्यायनिर्णयः—यत्र खलु रूढिभङ्गमन्तरेण गतिर्नास्ति, तत्र रूढिभङ्गो न दोषः । वयमप्यनुमन्यामहे । इह पुनः पञ्चरात्रे विप्राणामधिकारवचने रूढिभङ्गो न कार्यः । पञ्चरात्रे मुख्यविप्राणामेव बहुषु प्रदेशेष्वधिकारवचनादित्याह—विप्रादेरिति । उक्तं हि महाभारते,

---

४२. जाताविति । अस्य श्लोकस्य साम्प्रदायिकोऽसदाचार्योपदिष्टः श्रीमदहोबललक्ष्मीनृसिंहाऽऽस्थाने मालोलपदसि असत्सतीर्थ्यनीलमेघ चार्योपन्यस्तः समध्यक्षश्रीरंगशठकोपयतीन्द्र श्रीगोष्ठीपुरसौम्यनारायणार्याद्यनुमोदितः सर्वानुमतोऽर्थः आगमप्रामाण्यानुसारी संगति लिख्यते—ननु पाञ्चरात्रे सात्वताचार्यभागवतशब्दैः पाञ्चरात्रिककर्माधिकारिणो निर्दिश्यन्ते । ते च शब्दा जातिविशेषे रूढाः । यदाह मनुः (10-23), 'वैश्यात्तु जायते व्रात्यात् सुधन्वाऽऽचार्य एव च । कारुषश्च विजन्मा च मैत्रः सात्वत एव च' इति । व्रात्यशब्दार्थश्च तत्रैवोक्तः, "द्विजातयः सवर्णासु जनयन्त्यव्रतांस्तु यान् । तान् सावित्रीपरिभ्रष्टान् व्रात्यानिति विनिर्दिशेत्" इति । एवं भागवतशब्दोऽपि अत्रैवर्णिकविषये लोकेऽपि प्रसिद्धः । एवं रूढ्यर्थसंभवे तत्त्यागेन योगार्थवर्णनं न युक्तम् । अतस्तन्मात्राधिकारिकं पञ्चरात्रमित्याशंकायामाह जाताविति । त्वदुक्तरीत्या आचार्यशब्दो जातिविशेषे रूढः, तथा प्रयुज्यते चेति हेतोः, 'आचार्यदेवो भव' इत्यधीतश्रुतिवाक्ये तथा—तज्जातिमत्तया तत्प्रतीतिः आचार्यशब्दार्थग्रहणं न हि भवति । 'उपनीय तु यः शिष्यं वेदमध्यापयेत् द्विजः । सकल्पं सरहस्यञ्च तमाचार्यं प्रचक्षते' इत्यादिवेदतदर्थाध्यापयितृविषयकतयैव संदर्भानुसारात् तत्पदप्रवृत्त्यवगमात् । तद्वत् पञ्चरात्रग्रन्थेषु सात्वतादौ=सात्वताचार्यभागवतादिशब्दे पूर्वापरसंदर्भादिविरोधस्य जागरूकतया अगतिकविषये असंबद्धरूढ्यर्थके रूढिभङ्गो न दोषः स्यात् । अपिच अत्र शास्त्रे पञ्चरात्रे अधिकारितया स्थितिः विप्रादेः विप्रक्षत्रियवैश्यादीनाम्, भारतादौ "ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः । अर्चनीयश्च सेव्यश्च नित्ययुक्तैः स्वकर्मसु । सात्वतं विधिमास्थाय" इत्यादिवाक्ये

'पञ्चरात्रविदो विप्रास्तस्य गेहे महात्मनः । प्रापणं भगवद्भुक्तं भुञ्जते चाग्रभोजनम् ॥' इति । इदं मुख्यविप्रविषयम् । न हि मुख्ये सम्भवत्यमुख्यकल्पना न्याय्येति मुख्यानुसरणमेव युज्यते । यथा, 'विप्रात् द्विषड्गुणयुतात्', 'विप्राणां ज्ञानतो ज्यैष्ठ्यम्' इत्यादिषु । आदिशब्दात् गौतममन्वादिपुराणप्रसिद्धिरपि संगृह्यत इति ॥ २१७ ॥ इति उत्पत्त्यसंभवाधिकरणम् ॥ ५३ ॥

(२१८) योगाः साङ्ख्यव्युदासात् कणचरदमनादक्षपादानुयाताः
बौद्धोन्माथेन लोकायतमुषितधियो जैनभङ्गात् तदुत्थाः ।
पत्युस्तन्त्रे पशूनां प्रकटितविहतौ तादृशापष्ठुनिष्ठाः
ध्वस्तास्तत्तुल्यतर्कागमशरणतया माऽस्मिन् कुदृग्भिः ॥ ४३ ॥

नन्वत्र साङ्ख्यादयो निरस्ताः; न पुनः पुनर्योगादयः । कथमस्य पादस्य कार्त्स्न्येन परपक्षप्रतिक्षेपरूपत्वमित्याशङ्क्य तत्तदेकैकवादिनिरसनात् सदृशानामन्येषामर्थान्निरासः स्यादित्याह—योगा इति । साङ्ख्यव्युदासात् योगा ध्वस्ता इत्यन्वयः । कणचरदमनादक्षपादानुयाताः । जैनभङ्गात् तदुत्थाः— भेदाभेदवादित्वसाम्येन तदुत्थाः = जैनोत्था भाट्टाः । पशूनां पत्युस्तन्त्रे प्रकटितविहतौ सति तादृशापष्ठुनिष्ठाः सौगतादयो(सौरादयो?) वादिनोऽस्मिन् = तर्कपादे कुदृग्भिः = शङ्करभास्करयादवप्रकाशादितन्त्रनिष्ठैस्साकं ध्वस्ता इत्यन्वयः । एतेषां ध्वंसहेतुमाह—तत्तुल्येति । अत्र प्रतिक्षिप्तपक्षतुल्यतर्कागमशरणत्वात् स्वयमपि प्रतिक्षिप्ता इत्यर्थः ॥ २१८ ॥

---

स्पष्ट'सद्धेतित'द्विरुद्धार्थकल्पनमयुक्तमिति । अयमर्थ आगमप्रामाण्येऽनुगृहीतः, "रूढ्या सात्वतशब्देन केचित् कुत्सितयोनयः । उच्यन्ते तेषु सत्स्वेष शब्दो नान्यत्र वर्तते' इत्यादि पूर्वपक्षे ; सिद्धान्ते च, "ततश्च सत्वान् भगवान् भज्यते यैः परः पुमान् । ते सात्वता भागवताः इत्युच्यन्ते द्विजोत्तमाः" इत्यादि । तथा च श्लोकोऽयं सिद्धान्तरूपेणैव प्रवृत्तः । नासौ चिन्तामण्याद्युक्तार्थानुसारेण पूर्वपक्षोत्तरपक्षोभयात्मा । एवमपि योजनाभेदात् सोऽप्यर्थो भवति न वेति विमृश्यम् ; अमुख्यविप्रत्वादिविवादस्य चतुर्थपादाभिमतवाक्येष्वपि तुल्यतया हेयत्वात् ॥ २१७ ॥

४३. न्यूनतापरिजिहीर्षया, अत्र कतिपयनिरासः सर्वबाह्यकुदृष्टिनिरासोपलक्षकः, अर्थतस्तत्सिद्धेरित्याह योगा इति । अस्मिन् तर्कपादे कुदृग्भिः शांकरभास्करादिभिर्वेदान्तविपरीतार्थवादिभिस्सह, सांख्यानां निरासात् तदनुसारिणः योगमतस्थाः ; कणादस्य वैशेषिकप्रवर्तकस्य दमनात् न्यायप्रवर्तकस्याक्षपादस्य गौतमस्यानुयायिनः, बौद्धानां प्रत्यक्षानुमानमात्रप्रमाणवादिनामुन्माथेन निरसनेन प्रत्यक्षमात्रप्रमाणवादिमतेन लोकायतेन चार्वाकसिद्धान्तेनापहृतचेतसो देहात्मवादिनः, जैनानां भेदाभेदवादिनां निरासात् तदुत्थाः ततः प्राप्तोऽपि तदुक्तयुक्तीः स्वानुकूलतया परिगृह्य स्वाभिमतं भेदाभेदं स्थापयन्तः भाट्टादयः, पशून पत्युः रुद्रस्य तन्त्रे पाशुपते प्रकटितस्य विहतिकरणात् तादृशेषु गुप्तेषु अपष्ठुमतेषु शाक्तसौरकौमारगाणपत्यादिषु रताश्च ध्वस्ता अभवन् । कथमित्यत्राह तत्तुल्येति । तत्तुल्यानां सांख्यादिभिः साक्षान्निरस्तैर्मतैस्तुल्यतर्काः पौरुषेयागमाश्चैव तेषां शरणमिति ॥ चिन्तामणौ—प्रकटितविहतौ सति=प्रकटिताः विहतयो यस्मिन्, तस्मिन् तथाभूते सति ॥ २१८ ॥

(२१९) पादेऽस्मिन् कापिलस्थैः कणभुगनुगतैर्वृद्धवैभाषिकाद्यैः
योगाचाराभिधानैः सुगतमतरहस्यशून्यवादप्रसक्तैः ।
अर्हत्सिद्धान्तभक्तैः पशुपतिसमयस्थायिभिश्चोपरोधं
क्षिप्त्वाऽथो पञ्चरात्रे(त्रं) श्रुतिपथमवदत् पञ्चमाम्नायदर्शी ॥ ४४ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां
द्वितीयस्याध्यायस्य द्वितीयः पादः ॥

अस्मिन् पादे प्रत्येकमधिकरणार्थान् विभज्य दर्शयति - पादेऽस्मिन्निति । कापिलस्थैरिति साङ्ख्याधिकरणे। कणभुगनुगतैरिति वैशेषिकाधिकरणे। वृद्धवैभाषिकाद्यैरिति वैभाषिकाधिकरणे। अत्र वृद्धशब्दप्रयोगो वैभाषिकज्ञित्वप्रदर्शनार्थः । केचित् एकद्व्यादिस्वभावैः परमाणुभिर्द्व्यणुकादि-सृष्टिमाहुः, अपरे पुनस्तत्तदेकैकस्वभावैरिति पूर्वमेव विभागः प्रदर्शितः । योगाचाराभिधानैरिति योगाचाराधिकरणे । सुगतमतरहस्यरूपशून्यवादप्रसक्तैर्माध्यमिकाधिकरणे इत्यर्थः । जैनाधिकरणे पुनरर्हत्सि(रार्हतसि)द्धान्तभक्तैः। पाशुपताधिकरणे पशुपतिसमयस्थायिभिश्च वेदोपरोधं क्षिप्त्वाऽथ अथो = पञ्चरात्राधिकरणे पञ्चमाम्नायदर्शी = भारतप्रवक्ता व्यासः श्रुतिपथमवददिति योजना ॥२१९॥

इति निखिलतार्किकचूडामणिना सर्वतन्त्रस्वतन्त्रेण श्रीमद्वरदार्यपरनाम्ना
कुमारवेदान्ताचार्येण विरचिते शारीरकाधिकरणचिन्तामणौ
द्वितीयस्याध्यायस्य द्वितीयः पादः ॥

---

४४. पादार्थं संगृह्णाति पादे इति । सप्तभिरधिकरणैः परमतं निरस्य अष्टमेनाधिकरणेन पञ्चरात्रे श्रुतिपथं प्रथमाध्यायोक्तां पद्धतिं स्थितां पादर्शयत् । तेनाध्यायद्वयेन सपञ्चरात्रश्रुत्यर्थः परं ब्रह्मेति प्राचीकशदिति ॥ पञ्चरात्रमिति पदयोजनापाठः। तद्विशेषणे श्रुतिपथपदे तत्र बहुव्रीहिरुक्तः ॥२१९॥

तत्तत्कर्मानुरूपं जगति जनिमतां स्वात्मवैमुख्यकांक्षी
सांख्यं वैशेषिकञ्च क्षणिकमपि जडं ज्ञानमस्वाप्यभावम् ।
सर्वानैकान्त्यमात्मन्यपि जगदुपतिरवञ्च शास्त्रैः प्रचार्य
स्वाप्तेभ्यः पञ्चरात्रं व्यधित य उदितः स द्वितीयद्वितीये ॥

इति वात्स्यचक्रवर्तिवीरराघवाचार्यकृतिषु
अधिकरणसारावलिव्याख्यायां सारार्थरत्नप्रभायां
द्वितीयस्याध्यायस्य द्वितीयः पादः ॥

—०—०—

## ॥ अथ द्वितीयस्याध्यायस्य तृतीयः पादः ॥

### ५४ ॥ अथ वियदधिकरणम् ॥ २-३-१ ॥

सूत्रम्—न वियदश्रुतेः ॥ अस्ति तु ॥ गौण्यसम्भवाच्छब्दाच्च ॥ स्याच्चैकस्य ब्रह्मशब्दवत् ॥ प्रतिज्ञाहानिरव्यतिरेकात्॥ शब्देभ्यः॥ यावद्विकारं तु विभागो लोकवत्॥ एतेन मातरिश्वा व्याख्यातः॥ असम्भवस्तु सतोऽनुपपत्तेः ॥ १—९ ॥

(२२०) सर्वं सांख्यास्तु नित्यं क्षणिकमखिलमप्यत्र वैभाषिकाद्याः
नित्यानित्यं समस्तं जिनपरिपठितां सप्तभङ्गीं पठन्तः ।
नित्यानित्ये विभज्याप्यभिदधति विपर्यस्य वैशेषिकाद्याः
श्रुत्युत्थांस्तान्निरुन्धन् श्रुतिभिरथ वियत्प्राणपादौ युनक्ति ॥ १ ॥

अत्र पूर्वोत्तरपादसङ्गतिर्भाष्य एव सुव्यक्तमुच्यते—'साङ्ख्यादिवेदबाह्यतन्त्राणां न्यायाभासमूलतया, विप्रतिषेधाच्चासामञ्जस्यमुक्तम् । इदानीं स्वपक्षस्य विप्रतिषेधादिदोषगन्धाभावख्यापनाय ब्रह्मकार्यतयाऽभिमतचिदचिदात्मकप्रपञ्चस्य कार्यताप्रकारो विशोध्यते' इति। अत्र पूर्वपादद्वयस्योत्तरपादद्वयेन सङ्गतिरस्माभिः पूर्वमेवोक्ता–कारणद्वारकबाह्यविरोधपरिहारपरौ द्वौ पादौ, अपरौ पुनः कार्यद्वारकान्तरविरोधपरिहारपराविति । अतःपरं कार्यविषयविरोधपरिहारपरयोः पादयोः परवाद्युक्तप्रक्रियां विभागेनानूद्य, तत्प्रतिक्षेपरूपस्वपक्षमन्ते निगमयति—सर्वमिति । अत्र चत्वारः पक्षाः प्रतिक्षेप्याः । द्रव्यञ्चाद्रव्यं च सर्वं नित्यमिति साङ्ख्याः प्रतिवदन्ति । सर्वं क्षणिकमिति वैभाषिकाः। सर्वं नित्यानित्यमिति जिनपरिपठितां सप्तभङ्गीं पठन्तः प्राहुः, द्रव्यात्मना नित्यम् , पर्या-

---

१. ब्रह्मणः कारणत्वं प्रथमाध्याये प्रामाणिकत्वेन दर्शितमबाधितं कुतर्कमूलकसंदेहानास्पदञ्चेति द्वितीयाध्याये पादद्वयेन प्रत्यपादि। अथ तत् कारणत्वं सर्वनिरूपितं वा न वेति श्रुतिविरोधाविरोधचिन्ता पादद्वयेन क्रियते इति उत्तरस्य पादद्वयस्यैकपेटिकात्वं दर्शयन्, पूर्वनिरस्तानां सांख्यादिनिष्ठानामेव तर्कं विहाय श्रुतिप्रदर्शनेन कतिपयविषये कारणत्वाक्षेपकत्वं यथासंभवं सुवचमित्यप्याह सर्वमिति । अस्मन्मतगतं वैलक्षण्यं व्युत्पादयितुं तत्र परमते मिथः स्थितमपि वैषम्यं व्यनक्ति । सत्कार्यवादस्यासदिष्टत्वेऽपि न सांख्यसाम्यम् । सांख्याः हि गुणगुणिविवेकं विहाय अत्र प्रपञ्चे सर्वमपि नित्यम्, न किञ्चिदुत्पद्यते, किंतु अभिव्यज्यत इति अभिदधति। वैभाषिकाद्यास्त्रयो बौद्धाः यत् यत् स्वीकुर्वन्ति, तत् सर्वमपि क्षणिकं सत् अनित्यमभिदधति । जिनोक्तां सप्तभंगीं पठन्तस्तदनुयायिनस्तु सर्वत्र नित्यत्वानित्ययोरविरोधं समुच्चयं मन्वानाः नित्यानित्यं सर्वमभिदधति । वैशेषिकाः पाशुपताश्च नित्यमन्यत् , अनित्यं त्वन्यदिति विभज्यापि (विभागं कुर्वन्तोऽपि) तेनाऽऽकारेणासत्संनिहिता अपि, किं नित्यं किमनित्यमिति शोधने क्रियमाणे आस्माकसिद्धान्तमननुरुध्य, विपर्यस्य=नित्ये अनित्यत्वम् अनित्ये नित्यत्वञ्च गृहीत्वैव प्रपञ्चे नित्यमनित्यञ्च पृथगभिदधति। यथा—द्रव्येष्वपि कानिचिन्नित्यानि परमाण्वाकाशादीनि, अवयविद्रव्याणि अनित्यानि । एवं गुणेष्वपि विभागः । घटत्वादयस्तु जातयः नित्याः इत्येवम् । अस्माभिस्तु-सर्वं द्रव्यं नित्यम्; अवस्थास्त्वनित्याः; आकाशपरमाण्वादिगताना-

यात्मनाऽनित्यमिति। [वैशेषिकाद्याः नित्यं किञ्चित् अनित्यमन्यदिति विभज्य ?] वदन्तोऽपि विपर्यस्य प्रवदन्ति। ((?) नित्यमेवानित्यमिति क्वचित्, क्वचित् पुनरनित्यमपि नित्यमिति प्राहुः। वैशेषिकाः खलु(?)) नित्यमेव चैतन्यमनित्यमिति वदन्ति; तथा नित्यमेवेश्वरविग्रहादिकं प्रमाणसिद्धं न सहन्ते; एवमनित्यमपि नित्ययन्ति। यथाऽनित्ययोर्धर्मतद्धर्मयोस्सम्बन्धं समवायात्मकमनित्यमपि नित्यमेव ब्रुवते। एवं परपक्षान् अनूद्य श्रुत्यवलम्बनेनोत्थितान् तान् श्रुतिभिरेव निरुन्धन् वियत्प्राणपादौ युनक्तीत्यन्वयः ॥ २२० ॥

(२२१) पूर्वत्राधिक्रियायां पुरुषजनिवचो नित्यतोक्त्या निरुद्धं(रुद्धं)
व्योमोत्पत्तौ तथैव स्थितिरिति वचसोर्व्याहतौ वक्ति कश्चित्।
सिद्धान्ती व्योमसृष्टिर्निगमशतमिता; नान्यथासिद्धिरस्याः;
वाय्वव्योमामृतो क्रजनिविधिविहतेर्युक्तिवैषम्यमाह ॥ २ ॥

अधिकरणसङ्गतिस्तु—श्रीमच्छ्रराद्याधिकरणे जीवोत्पत्तिवादो जीवाभिमानिसङ्कर्षणादिपरत्वादौपचारिक इत्युक्तम्; तर्हि तेनैव न्यायेन वियदुत्पत्तिवादोऽप्यौपचारिक एव स्यादिति शङ्कयोत्थानमिति। तदर्थविचारस्तु—किं वियदुत्पद्यते, नेति। किं, 'आत्मन आकाशस्संभूतः' इत्याकाशस्योत्पत्तिं प्रतिपादयति, नेति। किमत्र सम्भूतिशब्दो मुख्योत्पत्तिपरः, उत गौण इति। किमन्यत्र निरवयवस्यानुत्पत्तिदर्शनं निरवयवस्यास्य शब्दैकसमधिगम्यस्योत्पत्तियोग्यतामवगमयति, नेति। अत्र पूर्वोत्तराधिकरणयोस्सङ्गतिप्रदर्शनपूर्वकं पूर्वपक्षाद्यभिमतमनूद्य प्रतिक्षिपति—पूर्वत्रेति। अयमत्र शब्दार्थः—पूर्वस्मिन्नधिकरणे जीवोत्पत्तिवाक्यं पुरुषनित्यत्वप्रतिपादकवाक्येन बाधितमिति प्रसाधितम्। एवमाकाशोत्पत्तिविषयेऽपि वाक्ये नित्यत्वानित्यत्वप्रतिपादकवचसोर्विरोधे तथैव स्थितिरिति नित्यत्ववाक्येनानित्यत्वबाध इति कश्चित् वदति। एवं पूर्वपक्षयुक्तौ सिद्धान्त्यभिमतमाह-

---

मवस्थानामनित्यतया तद्विशिष्टाकाशादीनामनित्यत्वम्; सावयवत्वेऽपि नित्यविभूति-विग्रहादीनां श्रुतिबलान्नित्यत्वम्; जातयस्तु घटत्वादयः संस्थानरूपत्वादनित्या एवेत्युच्यते। एतद्विवेकप्रतिलम्भनाय पूर्वपक्षिणो निरुन्धन् वियत्पादप्राणपादौ अत्राध्याये घटयति; तेन सर्वकारणत्वं ब्रह्मणः प्रतिष्ठापितं भविष्यतीति। केऽत्र पादद्वये पूर्वपक्षिण इति चेत्-सन्तु सांख्यादय एव प्राङ्निरस्ता इत्याह तानिति। कथं निरस्तानां पुनरुद्यमः इत्यत्राह श्रुत्युत्थानिति। तर्कमुखेनोत्थानं शमितम्। अतस्तर्कं विहाय अस्मदादिश्रुतिवाक्यतो विरोधं प्रदर्शयन्ति, तत्त्वे संशयमापादयितुं तत्त्वं बाधितुं वा कामयमानाः। तन्निरोधार्थमियं पेटिका। श्रुत्युत्थानिति। श्रुतित उत्थितान्। बाधकश्रुत्यवष्टम्भनेनोत्थितानित्यर्थः ॥

चि. टी. कापिलस्थैरितीति। कापिलस्थैः कृतमुपरोधं क्षिप्स्वेत्येतदित्यर्थः। एवमुपर्यपि ॥२२०

२. पूर्वपादान्तिमाधिकरणेन संगतिं प्रदर्शयन् प्रथमस्य वियदधिकरणस्यार्थमाह पूर्वत्रेति। पूर्वत्र अधिक्रियायाम् अधिकरणे पुरुषजनिवचः 'संकर्षणो नाम जीवो जायते' इति जीवजन्मापातप्रतीतिजनकं वाक्यम्, 'स ह्यनादिरनन्तश्च' इति तन्नित्यत्ववचनप्रदर्शनेन निरुद्धम् अन्यथाकृतनिर्वाहम्। तथैव तद्वदेव व्योमोत्पत्तौ स्थितिः=आकाशोत्पत्तिवचनमपि उपचारतो निर्वाह्यमिति कश्चित् तार्किकादिः आह-शंकते। शंका चेयं न युक्त्या, किंतु वचसोर्व्याहतौ। आकाशोत्पत्तिवाक्यवत् तदनुत्पत्तिगमकवाक्यस्यापि सद्भावेन व्याहतिसद्भावादित्यर्थः। सिद्धान्तमाह सिद्धान्तीति। वियत्सृष्टिः प्रति-

सिद्धान्तीति । अयमर्थः—आकाशोत्पत्तिरनेकश्रुतिप्रतिपन्ना । न चास्यामन्यथासिद्धिरस्ति । अनन्यथासिद्धबहुश्रुतिप्रतिपन्नेऽर्थे जाग्रति एकोऽमुख्यो युक्त्याभासः परवादिकल्पितो जीवितुमेव नार्हतीति भवदुक्तं(बहुयुक्तिं) परित्यजामः। 'वायुश्चान्तरिक्षञ्चैतदमृतम्' इति श्रुत्यैवाऽऽकाशस्यामृतत्वमुक्तम्। तत्परित्यागे जीवामृतत्वोक्तेरपि परित्यागप्रसङ्ग इत्याशङ्क्य भाष्यकारोक्तवैषम्यं दर्शयति—वाय्वित्यादिना। इदं किलात्र वैषम्यम्—अनेकाः श्रुतयो ह्याकाशस्य जनिम्—उत्पत्तिं विदधति। एका श्रुतिरमृतत्वमनुवदति। अतो हेतोर्हि भग्ना। सा च वायुसहपाठादत्यन्तमवसीदति। वायोर्ह्यनित्यत्वं सर्वलोकसम्प्रतिपन्नम्। इह पुनर्जीवनित्यत्वमेव सर्वैवेदसम्प्रतिपन्नम्। उत्पत्तिवादस्तु क्वाचित्क एव। स चान्यथासिद्धः। तेनानन्यथासिद्धबहुश्रुत्यानुगुण्येनात्मनित्यत्वं युक्तम्। वैपरीत्यादयुक्तमाकाशनित्यत्वमिति वैषम्यसिद्धिरिति ॥ २२१ ॥

(२२२) तेजःप्राथम्यदृष्टेरमृतवचनतोऽनंशकद्रव्यभावात्
व्योमन्युत्पत्तिवाक् स्यादुपहितविषयैवात्मनीवेति चेन्न ।
प्राथम्यस्याश्रुतत्वात् प्रथमपठनतः कल्पनेऽन्येन बाधात्
(१) किञ्चामर्त्योक्तितुल्यं त्वमृतपदमिहानेकवाक्यैककण्ठ्यात् ॥ ३ ॥

अत्राकाशनित्यत्वप्रतिपादने पूर्वपक्षिपरिकल्पितान् उक्तान् सुबहून् हेतून् अनूद्य शिष्यप्रतिबोधनार्थं व्यक्तमेव निराकरोति—तेजःप्राथम्येत्यादिना। अयमत्र पूर्वपक्षयमिप्रेतो हेतुसमुदायः—सद्विद्यायां हि, 'तत्तेजोऽसृजत' इति प्रथममाकाशसृष्टिमनुक्त्वा तेजस्सृष्टिरेवोच्यते। तेनाकाशस्य सृष्ट्यवचनमाकाशनित्यत्वपरमित्येको हेतुः। 'वायुश्चान्तरिक्षञ्चैतदमृतम्' इत्यव्यवधानेनामृतत्ववचना-

---

पादकवाक्यस्य दुर्बलत्वात् बहून्यथाकरणमयुक्तमिति तन्नित्यत्वगमकवाक्यमेवान्यथनीयम्। तत्र तत्तेजोऽसृजतेति वाक्यम्, 'वायुश्चान्तरिक्षञ्चैतदमृतम्' इति वाक्यञ्च गमकमिति पूर्वपक्षी मन्यते। प्रथममयुक्तमिति अनन्तरश्लोके विशदयिष्यते। द्वितीयं तु वायोः व्योम्नश्चामृतत्वोक्तिरूपम्। तत्र वायोरमृतत्वं पूर्वपक्षिणो नेष्टम्। अतश्च तद्वदेव व्योमामृतत्वमपि तदेकरस्यात् गौणं मन्तव्यम्। उभयोरप्यमृतत्वमस्त्विति चेन्न-बहुवाक्यविरोधात् [स्वकार्यमहाभूतान्तरापेक्षया स्वस्य विलम्बेन नाशात् अमरत्वोक्तिवत् अमृतत्वोक्तिर्नेया] इति सिद्धान्ती च हेत्यन्वयार्थः ॥ २२१ ॥

३. संगतिप्रदर्शनाय संग्रहेणोक्तं पूर्वपक्षं सिद्धान्तञ्च विशदयति तेज इति। अयं पूर्वपक्षः—व्योमनि उत्पत्तिवाक् 'आत्मन आकाशः संभूतः' इति जननवचनम् आत्मनि इव जीवो जायत इत्यादौ अजे आत्मनीव उपहितविषया। यथा आत्मनि साक्षाज्जन्मायोगात् देहसंबन्धोत्पत्तिमादाय देहविशिष्टे तदारोपः, तथा पाञ्चभौतिकशरीरे भूतान्तरसंबन्धमादाय तद्विशिष्टाकाशे जन्मारोप इति। अनुत्पत्तौ सिद्धायां ह्येवं निर्वाहः; अतस्तां साधयति हेतुत्रयेण। सद्विद्यायां 'तत् तेजोऽसृजत' इति तेजस उत्पत्तौ प्राथम्यं दृश्यते; न तु आकाशस्य। तदुक्तं सूत्रे अश्रुतेरिति। नन्वेकत्राश्रवणेऽप्यन्यत्र श्रवणं पर्याप्तमिति चेन्न; कारणवाक्येषु अनुवादिवाक्यात् पूरोवादिवाक्यं पूर्वम्; तत्रापि सामान्येनोपक्रान्तं वाक्यं विशेषबोधिकारणवाक्यापेक्षया पूर्वमिति सर्वप्रथमं सद्विद्यावाक्यम्। तत्राश्रवणादाकाशादिकं नित्यमिति बुद्धिर्जाता। असंजातविरोधिन्यायेन तदविरोधेनैव पश्चाच्छ्रुतस्य कारण

वित्यपरः। अनंशकद्रव्यभावादिति तृतीयः। अतो व्योमन्युत्पत्तिवागुपहितविषयैव स्यात् घटाकाशादिविषयैव स्यादित्यर्थः। तत्र प्रतिबन्दीमाह—आत्मनीवेति। यथा भवद्भिः कुम्भकारो जायते रथकारो जायत इत्यादिरात्मोत्पत्तिवादो देहपरिग्रहविषय इत्यन्यथाक्रियते, तद्वदिहापीति प्रतिबन्दी। अनूदितमेतत् प्रतिक्षिपति–नेति। यत्तु प्रथमं तेजस्सृष्टयभिधानदृष्टेरित्युक्तम्, तन्न; प्राथम्यस्याश्रुतत्वात्। न ह्यत्र प्रथमं तेजस्सृज्यत इति प्रथमशब्दः श्रूयते। मा भूत् प्राथम्यश्रवणम्, अथापि प्रथमपठनमात्रेण तत् कल्प्यत इत्याशङ्क्य प्रतिक्षिपति—प्रथमपठनत इति। अन्येन बाधात्—बहुस्मृतीतिहासपुराणन्यायोपबृंहितेन, 'आत्मन आकाशस्सम्भूतः' इत्यादिना वाक्येन बाधादित्यर्थः। कल्पनं हि लैङ्गिकम्। 'तस्माद्वा एतस्मादात्मनः' इति पञ्चमीनिर्देशात् साक्षादेवाऽऽकाशस्य कार्यत्वं श्रुत्यैव प्रतीयत इत्यर्थः। संभूतशब्दोऽपि जननवाची। अमृतपदमवशिष्यते—तच्च चिरकालवर्तित्वमात्रप्रतिपादकामर्त्यादिपदवन्न नित्यत्वमुपपादयति। अत्र विनिगमने कारणमाह—अनेकवाक्यैककण्ठ्यादिति। 'द्वैधे बहूनां वचनम्' इति हि न्यायविदो निर्णयन्ति॥ २२२॥

---

वाक्यस्यार्थो निश्चेतव्यः। 'आत्मन आकाशः' इति वाक्यं तु विशेषपरत्वात् पश्चादवगन्तव्यम्। एवं, 'वायुश्चान्तरिक्षञ्चैतदमृतम्' इति अमृतपदं मरणरहितार्थकम् उत्पत्तिराहित्यमाक्षिपति। जातस्य मरणध्रौव्यात्। एवं जन्मविधि-तन्निषेधवाक्ययोर्मध्ये वियज्जन्मनिषेधवाक्यमनुकूलतर्कसनाथत्वात् प्रबलम्। अनुकूलतर्के हेतुश्च अनंशकद्रव्यत्वादिति। इदं सूत्रे वियत्पदेन सूच्यते। विशेषेण यत्—प्राप्नुवत् वियत्; सर्वव्यापीति यावत्। विभुत्वान्निरवयवत्वं सिद्धम्। तदाह अनंशकद्रव्यभावादिति। अवयवरहितत्वं गुणकर्मसाधारणमिति तत्रानेकान्तवारणाय हेतौ द्रव्यत्वदलमिति। पूर्वपक्षनिरासहेतुमाह प्राथम्यस्येति। तेजः प्रथमं जायते इति प्राथम्यस्य तेजउत्पत्तौ श्रवणे हि ततः पूर्वं न किञ्चिज्जातमिति स्यात्। अत्र तु तेजोजन्मवचनमेव प्रथमम्; न तज्जन्मप्राथम्यवचनम्। प्रथमं वचनात् प्रथममेव जन्मेति कल्प्यत इति चेत्—तत् कल्पनमनुमानमेव। जन्मश्रुतिसद्भावात् तद्विरुद्धमनुमानमकिञ्चित्करम्। अतोऽन्येन श्रुतिवाक्येन तद्बाधः। न चोपक्रमप्राबल्यमत्र; सामान्यस्य विशेषे उपसंहारेऽपि, विशेषवाक्यस्य सामान्यवाक्यनिरपेक्षमेवार्थबोधकत्वात् विशेषवाक्यात् प्राक् सामान्यवाक्यपाठाभावात् उपक्रमत्वासिद्धेः। उपक्रमेऽनुमानसिद्धस्यापि प्रत्यक्षेण शब्देन च बाधस्य लोके संमतत्वात् तत्रोपक्रमप्राबल्यायोगाच्च। कल्पनेऽन्येन बाधादिति वाक्यं पुनरावर्तते इति ज्ञापयितुं किञ्चेति प्रयोगः। तेन द्वितीयहेतुनिरासः आकाशस्यामृतत्वश्रवणेऽपि अनुत्पत्तिर्न कल्प्या। आकाशस्संभूत इत्युत्पत्तिश्रवणात् उत्पत्तिरस्तु, अमृतत्वञ्चामृतवचनादस्तु॥ जनने मरणमावश्यकमिति चेन्न; श्रुतिविरोधे तदनुमानायोगात्; सावयवत्वेनोत्पत्त्यनुमानायोगवत्। वस्तुतोऽमृतमिति वचनस्य कल्पकत्वमपि नास्तीत्याह अमर्त्येति। अमृतमिति वचनस्य हेतुद्वयेन निषेधे सत्येव किञ्चेति पदस्वारस्यमिति विमृश्य पूर्ववाक्यस्याऽऽवृत्तिर्दर्शिता। अमृतवचनस्य मुख्यार्थकत्वे हि अनुत्पत्तिकल्पनसंभावना। मुख्यार्थ एव न भवति। अन्यथा अमर्त्यपदबलात् देवानां मरणं न स्यात्। देवानामपि लयः प्रमाणसिद्ध इति चेत्—आकाशस्यापि लयः श्रुत एव। अतो वियदुत्पद्यत इति॥ किञ्चामर्त्येत्यत्र किञ्चेति पदस्थाने दैवेति वा अन्यद्वा पदं स्यादिति वा निरीक्ष्यम्॥ २२२॥

(२२३) यौक्त(युक्त)स्सत्कार्यवादः श्रुतिभिरनुमतो नावयव्यस्ति सूज्यः
तत्तद्द्रव्येषु नामान्तरभजनसहावस्थया सृष्टिवादः ।
इष्टाः शब्दाद्यवस्थास्तव निरवयवद्रव्यवर्गेऽपि तस्मात्
व्योमन्युत्पत्तिरुक्ता श्रुतिषु तदितरोत्पत्तितुल्या न बाध्या ॥ ४ ॥

इति वियदधिकरणम् ॥ ५४ ॥

वैशेषिकाः खलु, 'आकाशो नोत्पद्यते निरवयवद्रव्यत्वात्' इत्यनुमानं प्रयुञ्जते । तदसत्; व्यर्थविशेषणत्वात् । सर्वस्यापि हि द्रव्यस्य नित्यत्वेनैव प्रामाणिकत्वात् । द्रव्यत्वमात्रं तु त्वत्पक्षेणानैकान्तिकम् । ननु घटाद्युत्पत्तिस्तर्हि कथमुच्यते ? सत्कार्यवादादेवेति ब्रूमः । न पुनर्घटादिद्रव्यस्योत्पत्तिः। सदेव हि मृत्पिण्डादिकं पृथुबुध्नोदराकारादिरूपं प्राप्य घटादिकमित्युच्यते । तच्च युक्तियुक्तमेव । असमवायिकारणावस्थापन्नद्रव्यविशेषमन्तरेण कार्यावस्थायामपि द्रव्यान्तरस्यानुपलम्भात् । अयं च पक्षः श्रुतिभिरप्यनुमतः । तेन निरवयवद्रव्यत्वादिति व्यर्थविशेषणमेव । तेन तेषुतेषु द्रव्येषु नामान्तरभजनार्हावस्थया सृष्टिवाद इति सुशोभनमेतत् । तदिदमाह—यौक्त इत्यादिना । युक्तियुक्त इत्यर्थः। श्रुतिभिरनु(रभि)मत इति–'सदेव सोम्येदमग्र आसीत्' इति ह्युच्यते । 'यथा सोम्यैकेन' इति दृष्टान्तश्चास्मिन्नेव पक्षे सङ्गच्छते । एवं द्रव्योत्पत्तिवादं अनङ्गीकृत्याऽवस्थान्तरोत्पत्त्या कार्यत्वमुपपादयिष्यन् सा पुनरवस्थान्तरोत्पत्तिर्निरवयवद्रव्यवर्गेऽपि परवादिनापि न परित्याज्येत्याह—इष्टा इति । निःशब्दे ह्याकाशे सशब्दावस्थोत्पद्यते, एवं ज्ञानादिगुणविधुरेऽपि जीवे तद्गुणयोगः, तथा तत्तत्कार्ययोगादिविधुरेऽपीश्वरादौ संयोगादिः, नित्यानामेव परमाणूनां परस्परसंयोगः, पश्चात् पार्थिवपरमाणुषु पाकजगुणोत्पत्तिः इत्यादि स्वयमेव भाव्यम् । अयमत्र विशेषः—उपादानस्वरूपे नामान्तरभजनार्हावस्थान्तरापत्तौ कार्यत्वं वदन्ति । अन्यथाऽवस्थान्तर-

---

४. अथ निरवयवद्रव्यत्वादित्यनुमानं दूषयन् सर्वत्र साध्यांशमपि शोधयति यौक्त इति । नोत्पद्यत इति निषिध्यमानेयमुत्पत्तिः किमाद्यक्षणसंबन्धरूपा, उतावस्थारूपा । नाद्यः, तस्यासदनभिमततया सिद्धसाधनात् । तार्किकान् प्रति तदनुमानं कामं युज्यते, नास्मान् प्रति । अवयवातिरिक्तस्यावयविद्रव्यस्याभावेन कुत्रापि द्रव्ये आद्यक्षणसंबन्धायोगात् । अवयविद्रव्याभावश्च लाघवरूपयुक्त्या आरम्भणाधिकरणे उपपादितः। अतः सत्कार्यवाद एव युक्तियुक्तः । स मृत्पिण्डादिदृष्टान्तदर्शिश्रुतिवाक्यैः ; सदेवेदमग्र आसीदिति श्रुत्या चानुमतश्च । एवञ्च द्रव्यत्वरूपविशेष्ये आद्यक्षणसंबन्धरूपोत्पत्त्यभावात्मकसाध्यव्याप्तेरक्षतत्वात् निरवयवत्वरूपविशेषणं व्यर्थमपि । तन्निवेशे विशेषणासिद्धिश्च । आकाशस्य पि पञ्चीकरणादिना सावयवत्वस्येष्टत्वात् । सावयवत्वे स्यादनित्यत्वमिति चेत्—तत् इष्टमेव । तदा विभुत्वभंग इति चेत्—तदपीष्टम् ; प्रकृतिमहदाद्यपेक्षया वियतः परिच्छिन्नत्वात् । तथा सावयवत्वं नित्यत्वविभुत्वबाधकमित्यप्ययुक्तम् । धर्मभूतज्ञाने तदुभयस्वीकारात् । नन्ववस्था तावत परिणामः, स कथं निर्विकारे द्रव्ये स्यादिति चेत्—तत्राह इष्टा इति । आगन्तुकोऽपृथक्सिद्धो धर्मोऽवस्था । सा परिणामरूपा शब्दरूपरसादिरूपा च । तत्र निरवयवद्रव्ये विकाररूपपरिणामाभावेऽपि शब्दाद्यवस्थावत्त्वं तार्किकाणामपीष्टम् ; शब्दरूपगुणेनैवाऽऽकाशानुमानात् । इयञ्चावस्था सर्वद्रव्यवृत्तिः । तत्र नामान्तर-

प्राप्तिरूपमिति । एवमुपपादितमर्थं वैशद्याय निगमयति—तस्मादिति । श्रुतिष्वाकाशोत्पत्तिरुक्ता वायुवह्निजलपृथिव्युत्पत्तितुल्यत्वान्न बाध्येत्यर्थः । अयमर्थः—निरवयवत्वादुत्पत्तिनिराकरणे सिद्धसाधनम्, नामान्तरभजनार्हावस्थोत्पत्तिनिराकरणे लोकवेदयुक्त्युपलम्भविरोध इति ॥ २२३ ॥

इति वियदधिकरणम् ॥ ५४ ॥

## ॥ ५५ अथ तेजोधिकरणम् ॥ २-३-२ ॥

सूत्रम्—तेजोऽतस्तथाह्याह ॥ आपः ॥ पृथिवी ॥ अधिकाररूपशब्दान्तरेभ्यः ॥ तदभिध्यानादेव तु तल्लिङ्गात् सः ॥ विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशोऽभाक्तस्तद्भावभावित्वात् ॥ १०—१७ ॥

(२२४) कूटस्थाद् ब्रह्मणः स्याज्जगदखिलमिदं पुत्रपौत्रादिनीतेः
एतस्मात् प्राण इत्याद्यपि सुगममिहेत्यादिरूढोऽत्र मोहः ।
प्रागस्वान्तादिपाठक्रमत इतरसंक्षोभणेऽतिप्रसङ्गात्
ईक्षानुस्यूतिदृष्टेः प्रथममिव परं सौति तत्तच्छरीरि(रम्) ॥ ५ ॥

इति तेजोऽधिकरणम् ॥ ५५ ॥

अत्र सङ्गतिर्भाष्य एव सुव्यक्तमुक्ता—'ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य ब्रह्मकार्यत्वमुक्तम्; इदानीं व्यवहितकार्याणां किं केवलात् तत्तदनन्तरकारणभूतात् वस्तुन उत्पत्तिः आहोस्वित् तत्तद्रूपात् ब्रह्मण इति चिन्त्यते' इति । तदर्थविचारस्तु—महदहङ्कारादीनां सर्वेषां तत्त्वानां किं केवलात् पूर्वपूर्वतत्त्वमात्रादुत्पत्तिः, उत तत्तद्रूपाद्ब्रह्मण इति। किं, 'आकाशाद् वायुः' इत्यादिश्रुतिष्वाकाशादिशब्दा आकाशादिमात्रपराः, उत त[त्त]दवस्थब्रह्मपरा इति । किं, 'तेज ऐक्षत' इत्यादिष्वभिध्यानलिङ्गं तेजःप्रभृतिशब्दानां तत्तदवस्थब्रह्मपरतामवगमयति, नेति । किं तेजःप्रभृतिशब्दानां तत्तदवस्थब्रह्मपरत्वे लक्षणा स्यात्, नेति । किं तेजःप्रभृतिशब्दानामपर्यवसानवृत्त्या ब्रह्माभिधाने व्युत्पत्तिविरोधादिदोषो भवति, नेति । अत्र पूर्वपक्षमनूद्य निराकरोति—कूटस्थादिति । 'एतस्माज्जायते प्राणः' इत्यादिश्रुतेर्द्वयी हि गतिः

---

भजनार्हावस्थैव कार्यत्वमिति । अस्मा एव संभूत इति श्रुत्यर्थत्वात् अस्यास्तेजआदाविवाऽऽकाशेऽपि सिद्धतया न निषेधः सुवच इति ॥ २२३ ॥

५. यदि तेजसः पूर्वमाकाशोत्पत्तिः स्यात्, तर्हि तेजस सद्रूपब्रह्मजन्यत्वं कथम् । वायोरग्निरिति वायुजन्यत्वस्यैव तत्र संमतत्वात् । अतः तेजःप्राथम्यश्रुतेः आत्मन आकाश इति श्रुतेश्च मिथो विरोध एव । न च परम्परया ब्रह्मकारणत्वमेव तत्रेष्टमिति वाच्यम्, अप्पृथिव्यादावपि ब्रह्मण एव तथा कारणत्वोक्तिसंभवेन, तत्तेज ऐक्षत, आकाशाद्वायुरिति ब्रह्म विहाय तेजआदिनिर्देशस्यायुक्तत्वादिति शंकायाम्, कश्चित् कूटस्थपुरुषस्यैव ब्रह्मणः स्वानन्तरकिञ्चित्कार्यमात्रकारणत्वमेव स स्यात्, अन्यत्र तु परम्परयेत्येवाह । तमिमं पक्षं तेजोधिकरणे पूर्वपक्षतयोपन्यस्य सर्वकार्यसाक्षात्कारणत्वं ब्रह्मणि स्थाप्यते । तदाह कूटस्थादिति । नन्वेवं सति, 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च' इति प्राणादेः साक्षादुत्पत्तिवचनं विरुध्यत इत्यत्राह एतस्मादिति । खं वायुरित्युत्तरार्धे श्रुत्यन्तरसंवादेन खात् वायुः, वायोर्ज्योतिः, ज्योतिष आपः, अद्भ्यः पृथिवी इति पाठक्रमतः प्रतीत्या पूर्वार्धेऽपि एतस्मात् प्राणः, प्राणान्मन इत्येवार्थ इति । इदमेव

संभाव्यते । एतस्माद्ब्रह्मणः प्रकृत्यादिक्रमेण पृथिवीपर्यन्तं विश्वसृष्टिरित्येका; अपरा तु प्रकृत्यादि-पूर्वपूर्वतत्त्वशरीरात् ब्रह्मण एव पृथिवीपर्यन्तं कृत्स्नस्य विश्वस्य सृष्टिरिति । अत्र पूर्वपक्षवादी मन्यते—पुत्रपौत्रादिनीत्या कूटस्थाद्ब्रह्मणः परम्परया विश्वसृष्टिः 'एतस्मात् प्राणः' इत्यस्मिन् वाक्ये कल्पयितव्या । अस्मिन् वाक्ये, 'खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' इति पाठ-क्रमात् क्रम एव प्रतिपाद्यत इति प्रतीयते । 'आकाशाद्वायुः' इति श्रौतक्रमस्यात्रापि दृष्टत्वेन श्रुत्य-न्तरसंवादात् । तत्सहपाठसामर्थ्यात्, 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च' इत्यत्रापि प्रतीय-मानः पाठक्रमो विवक्ष्यते । तेन न ब्रह्मणः साक्षाद्विश्वसृष्टिरिति । ननु, 'एतस्माज्जायते प्राणः', 'तस्मादेतद् ब्रह्म नाम रूपमन्नञ्च जायते', 'तत्तेजोऽसृजत' इत्यादिकं त्वत्पक्षे न घटत इत्याशङ्क्य पूर्वपक्षी परिहरति—एतस्मादिति । अयमर्थः—अयमत्र विशेषः—"एतस्मात्" इत्यादिभिः शब्दै-र्हेतुत्वमात्रमुच्यते । तच्च हेतुत्वं व्यवहिताव्यवहितपक्षयोस्साधारणमित्यस्मत्पक्षेऽपि सुगममेवेति । निराकरोति—हेत्वित्यादिकहोऽत्र मोह इति । अयमर्थः—व्यवहिताव्यवहितयोरव्यवहिते सम्प्रत्यय इति हि न्यायविदां निर्णयः । तेन ब्रह्मण एवाव्यवहितकारणत्वे सम्भवति व्यवहितकल्पना न लघी-यसी । किञ्च, 'एतस्माज्जायते' इत्यत्रैतस्मादिति पदस्यानुषङ्गेण वाक्यार्थयोजनायां संभावितायाम्, 'एतस्माज्जायते प्राणः प्राणान्मनो मनस इन्द्रियाणीन्द्रियेभ्यः खम्' इत्यादिकया वचनव्यक्त्या पूर्वपूर्वानुषङ्गविपरिणामाभ्यामर्थोपवर्णनमन्याय्यमेव। अपिच एतस्माद् ब्रह्मण इत्यत्र ब्रह्मण एव कारण-भूतात् प्राणस्य साक्षादुत्पत्तिरुच्यते, मनःप्रभृतीनां परम्परयोत्पत्तिरिति वैरूप्यम्। अवैरूप्ये सम्भवति वैरूप्येण निर्वाहोऽपि जघन्य एव । किञ्च, 'पृथिव्यप्सु प्रलीयते' इत्यादिना सुबालोपनिषदादौ बहुस्मृतीतिहासपुराणाद्युपबृंहितं क्रमान्तरं प्रतीयते। तेन, एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च" इत्यादिक्रमकल्पनिर्बाध्यत एव । न हि क्वचिदपि स्मृतीतिहासपुराणादिषु प्राणान्मनस्सृष्टिर्मनस इन्द्रियसृष्टिरिन्द्रियेभ्य आकाशसृष्टिरित्यस्ति । अत्राप्यन्यथासिद्धिमाशङ्क्य परिहरति-प्राणेत्यादिना

---

कूटस्थतुल्यं कारणत्वमिति । इदं निरस्यति इत्यादिरिति । अयमूहः मोहः विपरीतज्ञानम् । प्राणस्त्वादि-पाठक्रमस्य उत्पत्ति क्रमदर्शित्वाभावात् । [खान्तं मनः।] तथासति बहुवाक्यसंक्षोभापत्तेः । तदा चातिप्रसंगः। सर्वत्र एकवाक्यपक्षपातेन बहुवाक्यभञ्जनापत्तिः भूयसांन्यायविरोधश्च । प्राणस्य भूतानन्तरमुत्पद्यमानत्वम् मन-आदेराहंकारिकत्वम्, खं वायुरित्युक्तभूतानामेकानन्तरमन्यजननञ्च संप्रतिपन्नम्। अत उपकरणे मुख्यप्राणस्य श्रेष्ठत्वात्, मनसोऽन्येन्द्रियापेक्षया प्राधान्याच्च तथा वचनक्रमः, खादिषु चोत्पत्तिक्रमादेव क्रमः इति वाक्यमिदं पाठक्रमेण तदुत्पत्तिबोधनार्थं न प्रवृत्तम् । किं तर्हि ? पूर्वं जायमानं वा पश्चाज्जायमानं वा सर्वमपि साक्षात् एतस्मात् ब्रह्मण एव साक्षाज्जायत इति सर्वं प्रति तस्याव्यवहितकारणत्वस्थापकमेतत् । निमित्तत्वोपादानत्वोभयरूपकारणत्वं ब्रह्मणि सर्वनिरूपितम्; सर्वशरीरित्वात् तस्येति । तत् तेज ऐक्षतेत्यत्र तत्पदार्थे वायुवैशिष्ट्यम्, आत्मन आकाश इत्यत्र आत्मपदार्थे अहंकारवैशिष्ट्यश्चार्थसिद्धमिति । ब्रह्मपदप्रयोगात् तत्तच्छरीरि इति क्लीबनिर्देशः पा० शरीरी इति। शरीरमिति पाठे बहुव्रीहिः। कर्तृ ।

इत्यादिरिति आदिशब्देनाऽऽक्षेपान्तरं गृह्यते । तदेवम्—तत् तेज ऐक्षतेत्यादौ ईक्षणान्वयाय तेजआदिशब्दानां तत्तद्विशिष्टब्रह्मपरत्वकल्पनेऽपि आकाशाद्वायुरित्यादौ आकाशादिविशिष्टपरमात्म-परत्वं न युक्तम् । तत्तच्छब्दस्य तावद्वाचित्वाभावात् । शरीरवाचकः शब्दःशरीरिपर्यन्तबोधक इति व्युत्पत्ति सिद्धमिति चेत्—आकाशादीनां शरीरत्वमेव न भवति । यावत्सत्तं तत्संबन्धे हि तत् । आकाशादि-

अतिप्रसङ्गादित्यन्तेन। अयमर्थः—अयं खलु भवतोऽभिप्रायः—'खं वायुः' इत्यत्र श्रुत्यन्तरसिद्ध-क्रम एव प्रतीयते; तत्सहपाठलिङ्गात्, 'मनस्सर्वेन्द्रियाणि' इत्यत्रापि पाठक्रम एवानुसर्तव्यः; तेन सुबालोपनिषदादिप्रसिद्धं क्रमान्तरमेव बाध्यत इति। तदिदमसारम्=सम्प्रतिपन्नबहुवाक्यानुसारेण असम्प्रतिपन्नैकवाक्यार्थोपवर्णनं हि न्याय्यम्। न पुनर्वैपरीत्येन परिकल्पनम्। न्यायविरुद्धार्थपरि-कल्पने सर्वशास्त्रार्थव्याकोपात्। तेनात्र क्रमो न विवक्ष्यते। अपितु पूर्वपूर्वतत्त्वविशिष्टात् ब्रह्मण एव विश्वोत्पत्तिरिति। इममर्थं श्रुतिरेवोपबृंहयतीति हेत्वन्तरमप्याह–ईक्षेति। 'तदैक्षत', 'तत्तेज ऐक्षत' 'ता आप ऐक्षन्त' इत्यादिषु कारणभूते ब्रह्मणीक्षणमेवानुस्यूतं दृश्यते। तत्र तत्तत्तत्त्वविशिष्टात् ब्रह्मण एव विश्वोत्पत्तौ युज्यत इतीक्षत्यधिकरणादौ सर्वत्रापि शास्त्रे समर्थितम्। उक्तमर्थं निगमयति–प्रथममिति। यथा प्रकृतिशरीरं ब्रह्म महत्तत्त्वं सृजति, तथा (एवं) महच्छरीरं ब्रह्माहङ्कारं सृजति, इत्यादिक्रमेण पृथिवीपर्यन्तं योजनीयमिति ॥ २२४ ॥ इति तेजोधिकरणम् ॥ ५५ ॥

## ५६ ॥ अथ आत्माधिकरणम् ॥ २-३-३ ॥

सूत्रम्—नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १८ ॥

(२२५) द्रव्यं सर्वं हि नित्यं कथितमवयविद्रव्यभङ्गेन पूर्वं
नित्यत्वं सूत्रकारः पुनरपि पुरुषे किं विशिष्याभिधत्ते ।
सत्यं नामान्तराहामिह(मप)नुदति द्वौ चेतनस्यानुपाधेः
प्रत्यक्त्वज्ञत्वधर्मौ तदिह नियमितौ शाश्वतौ क्षेत्रिणोऽपि ॥ ६ ॥

अत्र सङ्गतिर्भाष्ये, 'वियदादेः' इत्यादिनोक्ता। अयमाशयः—वियदधिकरणे तावत् परवादिभि-र्नित्यत्वेन परिगृहीतानां वियदादीनामुत्पत्तिः स्थापिता। समनन्तराधिकरणे पुनः कृत्स्नस्यापि कार्यजातस्य पूर्वतत्त्वशरीरकात् ब्रह्मणस्साक्षादुत्पत्तिरिति नियमितम्। इदानीं पुनः परवादिभिर्नित्य-त्वेनाभिमताकाशादेरिवात्मनोऽपि कार्यत्वं स्यादित्याशङ्क्य परिह्रियत इति विशेषसङ्गतिरिति।

---

सृष्ट्वा तदनन्तरमेव हि प्रवेशः कृतः श्रूयते। अत ईशाननुप्रविष्टवस्तुमात्रोत्पत्तिप्रतीत्या तदुपादानमपि ताव-न्मात्रमिति न ब्रह्म सर्वत्र साक्षादुपादानम्; संकल्पतो निमित्तत्वं तु सर्वत्रेत्यादिरूपः। एतत्परिहारश्च चतुर्थपादे द्रष्टव्यः। एतदधिकरणमुख्यार्थव्युत्पादकसूत्रमत्र, "चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशो भाक्तस्तद्भावभावित्वात्" इति। सर्वमिदं विशदं भाष्यार्थदर्पणे। तदभिध्यानादित्येतदर्थः ईक्षानुस्यूतीति। उत्पत्तिकालप्रभृति वस्तुसंबन्धस्य, 'तस्त्वष्टा विदधत् रूपमेति' इत्युक्तत्वात् अन्तर्यामि-श्रुत्यादितश्च शरीरित्वमावश्यकम्। तदाह तत्तच्छरीरीति ॥ २२४ ॥ इति तेजोधिकरणम् ॥

६. वियदादिकार्यत्वविचारार्थेऽधिकरणे, 'यावद्विकारं तु विभागो लोकवत्' इति महदादीना-मप्युत्पत्तिर्दर्शिता। तर्हि प्रकृतिरप्युत्पद्यत इति भ्रमनिवृत्तये, 'असंभवस्तु सतोऽनुपपत्तेः' इत्युक्तम्। शुद्धब्रह्मण उपादानत्वायोगात् तस्य हेयविकारापुरुषार्थानास्पदत्वाय चिदचिद्विशिष्टब्रह्मण एव सत्पदार्थ-तया प्रलयस्थायिनो विशेषणस्याप्यनुत्पत्तिः सिद्धा। अत आत्मनोऽनुत्पत्तिसाधनं व्यर्थमित्याशंक्य परिहरति द्रव्यमिति। कथितमिति। आरम्भणाधिकरणे इति शेषः। सत्यमित्यर्धाङ्गीकारे। द्रव्यस्याऽऽद्यक्षण-संबन्धरूपोत्पत्तिः अन्त्यक्षणसंबन्धरूपो नाशश्च नास्ति। अन्त्यक्षणसंबन्धो नाश इति इति कुत्र निरुक्तमिति

अथवा पूर्वमचिदुत्पत्तिप्रकारश्चिन्तितः; अधुना जीवोत्पत्तिवादानां प्रकारान्तरप्रदर्शनादन्यथासिद्धिः क्रियत इति। तदर्थविचारस्तु—किं जीव उत्पद्यते, नेति। किम्, 'तोयेन जीवान्' इत्यादिश्रुतिर्जीवोत्पत्तिं प्रतिपादयति, नेति। किमत्रोत्पत्तिवचनमुत्पत्तिपरम्, उत भोक्तृत्वार्थज्ञानसङ्कोचविकासपरमिति। किम्, 'न जायते म्रियते वा विपश्चित्' इत्यादिनित्यत्ववचनं जीवसृष्टिवचनस्य ज्ञानसङ्कोचविकासपरतामवगमयति, नेति। किमत्र नित्यत्ववचनमाकाशामृतत्ववचनवत् गौणम्, उत मुख्यमिति। किं मुख्यत्वानङ्गीकारे अकृताभ्यागमकृतविप्रणाशादि प्रसज्यते, नेति। अत्र पूर्वप्रतिपादितार्थेन गतार्थत्वादधिकरणोत्थानस्य नैरर्थक्यमाशङ्क्यैकदेशगतार्थत्वेऽपि तत्तद्विशिष्टार्थाभिधानसामर्थ्यात् अधिकरणोत्थानस्य सार्थकत्वं समर्थयते—द्रव्यमिति। इयं तत्र चोदकस्याशङ्का—पूर्वमवयविद्रव्यभङ्गात् सर्वमपि द्रव्यं नित्यमेवेति कथितम्। तेनाधुना पुनस्सूत्रकारो जीवस्य नित्यत्वं विशिष्य किमभिधत्त इति। उक्तं चोद्यमर्धाङ्गीकारेण परिहरति—सत्यमिति। अयमर्थः—नित्यत्वं तावत् द्रव्यस्य साधारण्येन सिद्धमेव। तथापि तत्तद्धर्मविशिष्टवेषेण विशेषोऽस्ति। त्रिगुणात्मके प्रकृतिद्रव्ये विकारविशेषात् स्वरूपे नामान्तरभजनार्हावस्थाविशेषोऽस्ति। तदेवोच्यते, 'मही घटत्वं घटतः कपालिका' इत्यादिना। न तथा जीवस्वरूपे नामान्तरभजनार्हावस्थाविशेषोऽस्ति। तदिदमाह—नामान्तरेति। अनुपाधेरिति—अनेन देहविशिष्टवेषेण ब्राह्मणक्षत्रियादिनामान्तरभजनार्हावस्थाविशेषसद्भावात्(वत्त्वात्) तादृशमवस्थान्तरं न स्वरूपानुबन्धीति दर्शयति। किं तर्हि स्वरूपानुबन्धीत्याशङ्क्य तादृशं रूपद्वयं दर्शयति—प्रत्यक्त्वेति। तत्=तस्मात्, उक्तप्रकारेण वैषम्यस्य प्रदर्शितत्वात्। प्रत्यक्त्वज्ञत्वधर्मौ क्षेत्रिणो जीवस्य शाश्वतौ नियमितौ। अयमर्थः—यद्ा

---

चेत्—अन्त्यक्षणावच्छिन्ने घटादौ विनश्यदवस्थ इति व्यवहारस्य तार्किकैरपि क्रियमाणतया, नाशाश्रयत्वरूपस्य नश्यत्त्वस्य सुवचत्वाय चैव निर्वचनं हि युज्यत एव। आस्तामेतत्। उक्तविधोत्पत्तिविनाशराहित्यं वियदादिद्रव्येऽपि तुल्यम्। अतो वियदादौ साधितोत्पत्तिर्नामान्तरभजनार्हावस्थारूपा। तथाच वियदुत्पद्यत इत्यस्य नामान्तरभजनार्हवियत्स्वरूपावस्थावदित्यर्थः। एवं जीवेष्वप्यवस्था स्वीकार्येति उत्तरश्लोकवक्ष्यमाणरीत्या पूर्वपक्षः प्राप्त इति भावः। ननु देवो मनुष्यो विप्रः क्षत्रियो जीव इत्यादि व्यवहारात् तादृशावस्थासत्त्वात् कथं तन्निषेध इत्यत्राह अनुपाधेरिति। देहादिविशेषणरहितस्येत्यर्थः। ननूक्तावस्थाविलक्षणः को धर्मः स्थिरः स्थित इत्यत्र तमाह प्रत्यक्त्वेति। अहमहमिति तत्तदात्मनः प्रकाशमानो धर्मः प्रत्यक्त्वम्, इदमिति भासमानधर्मविलक्षणम्। तदवच्छिन्नात्मनः किञ्चित्कार्यत्वं नैव भवतीति नित्यावस्थितः स धर्मः। स च शोधने स्वस्मै भासमानत्वरूपः। सर्वो हि पदार्थः आत्मने प्रकाशते, स्वात्मा तु स्वस्मै इति विशेषः। इदञ्च मानं ज्ञानायत्तमिति ज्ञेयज्ञ त्वैव यमेव प्रत्यक्त्वमिति वदन्त उदयनाचार्याः, 'प्रत्येतुः प्रत्येतव्याद्व्यतिरेकः प्रत्यक्त्वम्' इति निरवोचन्; वयं तु स्वयम्प्रकाशत्वादात्मनः धर्मभूतज्ञानं विनाऽपि स्वस्मै भासमानत्वमस्तीति ब्रूमः। एवञ्च ज्ञानोत्पादकसामग्र्यभावात् सुषुप्त्यादौ ज्ञानाभावेऽपि भासमानत्वमक्षतमिति प्रत्यक्त्वं स्थायि भवति। धर्मभूतज्ञानयोग्यत्वमादाय प्रत्यक्त्वोक्तौ तु तत् ज्ञानमप्यात्मनिष्ठमेवेति चेतनधर्मश्चैतन्यं ज्ञत्वमेवात्मत्वमित्यपि सुवचम्; सुतरां धर्मभूतज्ञानस्य नित्यत्वे श्रुतिसिद्धे। अतः प्रत्यक्त्ववत् ज्ञानमपि आत्मत्वमितीष्यते। नियन्तृत्वं हि आत्मत्वम्। नियमनं च ज्ञानविशेष एव। एवमभिप्रेत्याह **प्रत्यक्त्वज्ञत्वधर्मौ तदिह नियमितौ**

हि(स) जीवः कर्मवशात् देहसम्बन्धमनियमेन परिगृह्णाति, तदा सर्वदाऽपि प्रत्यक्त्वज्ञत्वधर्मौ स्वरूपं न मुञ्चतः। तेन स्वरूपे नामान्तरभजनार्हावस्थान्तराभावाज्जीवस्य नित्यत्वम्, प्राकृतस्य द्रव्यस्य स्वरूप एव नामान्तरभजनार्हावस्थान्तरभाक्त्वादनित्यत्वमिति विभागः । 'प्रत्येतुः प्रत्येतव्याद्व्यतिरेकः प्रत्यक्त्वम्। तच्च स्वस्मै भासमानत्वं परतः = स्वधर्मेण ज्ञानेन स्वस्मै भासमानत्वम्' इति न्यायवादिनः। वयं तु ब्रूमः—परतः स्वतश्च स्वस्मै भासमानत्वमिति ; परतः = स्वधर्मभूतज्ञानेन, स्वत = स्वात्मनेति । अहमहमिति स्वात्मप्रकाशः स्वरूपेण ; अत्र सुप्तोऽस्म्, ईदृशोऽहमिति विशेषाकारविशिष्टप्रकाशो धर्मभूतज्ञानेनेति विभागो द्रष्टव्यः। 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इति ज्ञानस्य नित्यत्वेन श्रुतिप्रतिपन्नत्वात्, 'यथा न क्रियते ज्योत्स्ना' इति स्मृत्या चोपबृंहितत्वात् तन्नित्यत्वमपि सिद्धमेव। अतः प्रत्यक् ज्ञातेति नाम्नोरन्यथाकरणाभावाज्जीवनित्यत्वमिति द्रष्टव्यम् ॥ २२५ ॥

(२२६) सच्छब्दार्थातिरिक्तं जनिमदखिलमित्यैतदात्म्यादिसिद्धम्
प्रोक्ता सृष्टिश्च जीवे, निरवयवनयस्त्वम्बरादौ निरस्तः ।
जीवोत्पत्तिस्ततस्स्यादिति न सत् अकृताभ्यागमादिप्रसङ्गात्
नित्यत्वाजत्वकण्ठोक्तिभिरपि; जननं त्वस्य देहादियोगः ॥ ७ ॥

अत्र पूर्वपक्षसिद्धान्तावारचयति—सच्छब्देति। 'सन्मूलाः' इत्युपक्रम्य, 'ऐतदात्म्यमिदं सर्वम्' इत्यभिधानात् सर्वासामपि प्रजानां सन्मूलत्वं सिद्धम्। तेन वियदादिवदात्मनोऽपि कार्यत्वमनुमन्तव्यम्। 'तोयेन जीवान् व्यससर्ज' इत्यादौ जीवसृष्टिश्च साक्षात्प्रोक्ता। यत्तु निरवयवत्वान्नित्यत्वमिति, तत् आकाशे व्यभिचारान्निरस्तमित्याह—निरवयवनय इति। तेन जीवोत्पत्तिः स्यादिति पूर्वपक्षिते तन्निराकरोति—न सदिति। हेतुमाह—अकृतेति। अकृताभ्यागमकृतविप्रणाशौ

शाश्वतौ इति। क्षेत्रिणोऽपि बद्धस्यापि। मुक्तस्य ज्ञानविकासस्य स्थिरत्वात् नित्यसूरिषु सर्वदा विकासाच्चाहमिति भानं स्थिरम्, न तु बद्धे इति न मन्तव्यम्; धर्मभूतज्ञानं विनैव स्वत एव तत्प्रकाशस्येष्टत्वादिति भावः। नन्वहमिति भानस्य प्रत्यक्षत्वात् आत्मनामनादित्वस्य बाह्यैरप्यंगीकृतत्वेनानुमानसिद्धत्वात्, 'नात्मा श्रुतेः' इति श्रुतिप्रमाणतोऽनुत्पत्तिसाधनं किमर्थमिति चेत्—तदप्यत्र ज्ञत्वधर्मघटनेन समाहितम्। श्रुतिप्रमाणोपन्यासे सत्येवानन्तरसूत्रे, 'ज्ञोऽत एव' इति अत इति वक्तुं शक्यते। न हि नित्यज्ञानवत्त्वं युक्त्या सुवचम्। श्रुतिस्तु, 'अविनाशी वा अरे अयमनुच्छित्तिधर्मा' इति धर्मस्यानुच्छेदवादिनी ज्ञाननित्यत्वे प्रमाणमिति भावः ॥ २२५ ॥

७. चेतनाचेतनात्मकप्रपञ्चे चेतनस्याप्यचेतनतुल्यं कार्यत्वमावश्यकमिति आत्मोत्पत्तिपूर्वपक्षे तत्र सिद्धान्तञ्चाधिकरणार्थमाह सदिति । 'ऐतदात्म्यमिदं सर्वम्', 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः', 'सदेव सोम्येदम्' इति इदंशब्दार्थे सज्जन्यत्वप्रयुक्ताभेदकथनात्, 'असंभवस्तु सतोऽनुपपत्तेः' इति सूत्रेऽपि सर्वस्योत्पत्तेरुक्तत्वात् अखिलम् अचेतनवत् चेतनमपि जनिमत्। अस्तु तर्हि देहसंश्लेषरूपजनिमात्रमित्यत्राह प्रोक्तेति । 'तोयेन जीवान् व्यससर्ज भूम्याम्' इति जीवत्वविशिष्टविशेषेण सृजिकर्मत्वकथनात् जीवत्वं कार्यावस्थेति ज्ञायते इति भावः । ननु अहमित्यनुभवकाले सर्वदा एकत्वेन प्रतिसंधानात् नानात्वाभावसिद्ध्या, सावयवत्वे अनेकसमुदायत्वापातात् निरवयवत्वमात्मनः

हि जीवनित्यत्वे हेतुतया न्यायवादिभिरुपादीयेते। यदि जीवः सादिरनित्यः कृतकश्च, तदा पूर्वमेवाकृतं सुकृतं दुष्कृतञ्चामुनाऽनुभवेत्। तथाचाकृताभ्यागमदोषः। तथैव चेदानीं कृतयोस्सुकृत-दुष्कृतयोरुत्तरस्मिन् जन्मनि विनाशः स्यात्। अत्र सुकृतदुष्कृतयोर्विनाश इति फलानुभवाभावः प्रसज्य(ज्ज्य?)ते। एवं युक्त्या जीवनित्यत्वमुपपाद्य श्रुत्यादिभिरप्युपपादयति—नित्यत्वेति। 'नित्यो नित्यानाम्' इत्यादिका नित्यत्वश्रुतिः, 'ज्ञाज्ञौ द्वावजौ' इत्यजत्वश्रुतिः। तर्हि चेतनाचेतनयो-र्द्वयोरपि भगवत उत्पत्तिः श्रुतिस्मृतीतिहासपुराणादिषु श्रूयते; तत् कथमित्याशङ्क्याह—जनन-मिति। पूर्वदेहप्रहाणं मरणम्, उत्तरदेहपरिग्रहो जननमिति न्यायवादिनामपि सम्मतमेतत्। अन्यथा प्रेत्यभावोपपादनायोगात्॥ २२६॥

(२२७) देहात्मत्वे जनिः स्यात्; तदिह न घटते जातमात्रस्य रागात्
ज्ञाने किण्वादि-मेघोपल-शबलपटप्रक्रियाऽत्यन्त(प्यत्र) दुस्स्था।
देहे गेहादितुल्या ममकृतिरनघा दोषतस्त्वैक्यमोहः
क्षिप्तं चैक्यानुमानं बलवदनुमितेः शास्त्रतस्तर्कतश्च॥ ८॥

उक्तार्थप्रतिषेधरूपं लोकायतपक्षं पुरस्कृत्य युक्तिभिस्तिरस्करोति—देहात्मत्व इति। अयमत्र शब्दार्थः—यदि देह एवाऽऽत्मा स्यात्, तदा देहस्य क्षणपरिणामित्वात् आत्मनोऽपि जनिः स्यात्।

---

सिद्धम्। निरवयवश्च नोत्पद्यत इति तार्किकादीनामपीष्टमित्यत्राह निरवयवेति। निरवयवत्वस्वीकारेऽपि श्रुतिबलात् वियत उत्पत्तिरेव। निरवयवस्य गुणादेरिव द्रव्यस्याप्युत्पत्तौ बाधकाभावात् श्रुतिबलाच्चेति प्रागुक्तत्वात् अम्बरादौ आदिपदग्राह्यमहदादावपि तत्स्वीकारात्। अन्यथा एकविज्ञानेन सर्वविज्ञान-प्रतिज्ञाहानिरपीति। निरस्यति इति न सदिति। हेतुमाह कण्ठोक्तिभिरित्यन्तेन। जीवोत्पत्तिबोधकश्रुतिः तन्निषेधश्रुतिश्चोपलभ्यते। तत्र तर्कोपस्कृतश्रुत्यादरेण श्रुत्यन्तरमन्यथानेयम्। जीवत्वेन जीवस्योत्पत्तिस्वीकारे ततः प्राक् तत्कृतकर्माभावात् प्रथमजन्मनि जीवानुभवः सर्वः प्रतिजीवं स्वाकृतकर्मफलानुभवरूप एव वक्तव्य इति वैषम्ये नियामकं न स्यात्। जीवनाशस्वीकारे च कृतकर्मनैष्फल्यापत्तिश्च। अतः, अजो नित्यः शाश्वत इति अजत्वनित्यत्वस्पष्टोक्तीः तर्कोपबृंहिता आदृत्य च उत्पत्तिश्रुतिरौपाधिकजन्मपरतया नेया। तच्च जन्म देहेन्द्रियमनःप्राणसंश्लेषरूपं वा तदधीनो धर्मभूतज्ञानीयो देहनियन्तृत्वशब्दाभिधेयो देहानुरूपपरिणामविशेषो वेति॥

चि. टी. अकृताभ्यागमकृतविप्रणाशशब्दार्थौ विशदयति यदीति। तत्र विनाशशब्द-विवक्षितमाह अत्रेति। प्रसज्यत इति। आपाद्यत इति यावत्॥ २२६॥

८. आत्मानुत्पत्तिस्थापकमिदं सूत्र 'देहेन्द्रियमनःप्राणधीभ्योऽन्यः' इत्युक्तवैलक्षण्योपलक्षक-मित्याशयेन देहातिरेकं व्युत्पादयति देहेति। अत्रैवं शंका-प्रत्यक्षत्वमात्मनः स्वरूपमिति भवतैवोक्तम्। स्थूलोऽहं नीलोऽहमिति देहात्मैक्यं प्रत्यक्षसिद्धम्। देहस्योत्पत्तिविनाशौ च प्रत्यक्षौ। तद्विरोधि अनुत्पत्त्यनुमानं बाधितम्। न च देहस्य पाञ्चभौतिकत्वात् भूतानां च जडत्वात् तत्कार्ये देहे चैतन्यं न स्यादिति शंक्यम्; कारणे तदभावेऽपि कार्ये तत्संभवात्। ननु कारणगुणपूर्वकः कार्यगुणो

तच्च न घटते । वीतरागजन्मादर्शनादिति न्यायवादिभिर्निरस्तत्वादित्याह—जातेति । सद्य एवोत्पन्नो बालः स्तन्याभिलाषं करोति । स चाभिलाषः पूर्वजन्मानुभवमन्तरेण न सम्भवति । तेन पूर्वोत्तर-जन्मनोर्जीवानुवृत्तिं प्रतिपद्यामहे । तत्र यदि देह एव चैतन्यं स्यात्, तदा देहावयवेष्वपि चैतन्य-मवश्यम्भावि भवेत् । कारणगुणप्रक्रमेण कार्यगुणारम्भस्य न्याय्यत्वात् । रूपादयो हि स्पर्शवद्विशेष-गुणास्तेनैव क्रमेणारभन्त इति दृष्टमेतत् । तेन देहे देहावयवेषु च चैतन्याङ्गीकारेऽनेकचेतनोप-लम्भप्रसङ्गः । चेतनानां च नानामनस्कत्वात् शरीरोन्माथप्रसङ्ग इत्यादिकं दूषणजातमनुसन्धेयम् । अत्र चार्वाकोक्तमनूद्य परिहरति—ज्ञान इत्यादिना । इयं किल चार्वाकसूत्रपरिपाटी, 'पृथिव्या-पस्तेजो वायुरिति तत्त्वानि । तेभ्यश्चैतन्यम् । किण्वादिभ्यो मदशक्तिवत्' इति । अयमत्र सूत्रार्थः— पृथिव्यादीनामसंहतानां चैतन्ययोगो नास्त्येव । संहतावस्थायामेव चैतन्यम् । एवं करचरणादीनां देहावस्थामापन्नानामेव चैतन्यम् । तथाच देहस्यैव चैतन्यगुणयोगात् देह एव चेतनः । यथा क्रमुकताम्बूलचूर्णानां संहतानामेव रागाश्रयत्वम्, न पुनः प्रत्येकम्; किण्वादिभ्यो मदशक्तिवदिति मदहेतुभूतद्रव्यजनकानां बहूनां किण्वादीनां न प्रत्येकं मदहेतुत्वशक्तिः, अपितु संहतानामेव— एवं संहतानामेव करचरणादीनां ज्ञानाश्रयत्वात् नानेकचेतनोपलम्भप्रसङ्गदोष इति । मेघोपलेति । जलस्य प्रत्येकं काठिन्याभावेऽपि करकात्मना परिणतस्यैव काठिन्ययोगः । शबलपटेति । सितरक्त-कृष्णानां तन्तूनां चित्ररूपाभावेऽपि पटे खलु तदारब्धे चित्ररूपं दृश्यते । एवमन्यदप्युदाहर्तव्यम् । अत्र दुस्स्थेति दृष्टान्तात् दार्ष्टान्तिकवैषम्यं दर्शयति । तथाहि–क्रमुकताम्बूलचूर्णेषु अवयव्यवस्थायां यो राग उपलभ्यते, स पुनरवयवेष्वप्यस्ति । कारणक्रमेण कार्यगुणारम्भस्य वैशेषिकैरुपपादनात् । तथाच तदानीमनेकरागयुक्तद्रव्यसद्भाववत् देहेऽप्यनेकचैतन्यवद्द्रव्यसद्भावप्रसङ्गादिकं तदव-स्थमेव । तेन मेघोपलदृष्टान्तोऽपि निरस्तः । यस्तु शबलपटदृष्टान्तः, सोऽपि निरस्तप्राय एव । शबलपटे हि चित्ररूपस्य तन्तुष्वभावेऽपि तज्जातीयस्य रूपसामान्यस्य शुक्लादिजातीयस्य कस्यचिदवयवेषु सद्भावोऽस्त्येव । तथाचात्रापि देहे विद्यमानस्य ज्ञानविशेषस्यावयवेष्वभावेऽपि

---

दृष्टः । अतः कारणावृत्तेः कार्ये कथमुत्पत्तिरिति चेत्— यथा किण्वादीनां प्रत्येकं मदाहेतूनामपि संघाते मदोत्पादकत्वम्, यथा मेघोपलानां करकाणां द्रवदशायामकठिनानां संघाते काठिन्योत्पादकत्वम्, यथा च शुक्लनीलादितन्तूनां संघाते चित्ररूपोत्पादकत्वम्, तथा देहाकारपरिणतभूतसंघातस्य चैतन्योत्पादकत्व-मित्युक्तिसंभवादिति ॥ अत्रोच्यते— देहस्यात्मत्वे हि जनिः=उत्पत्तिः । तत् देहात्मत्वमेव न संगच्छते; जातमात्रस्य=जननसमनन्तरक्षणविशिष्टस्यैव शिशोः स्तन्यपानविषयकरागदर्शनात् । रागस्येष्ट-साधनत्वस्मरणाधीनत्वात्, स्मरणस्य पूर्वानुभवजन्यत्वात्, पूर्वानुभवस्य पूर्वजन्मन्येव वक्तव्यत्वात् । तादृशानुभव-स्मरण-राग-प्रयत्नरूपगुणानामाश्रयस्यैकत्वात् देहे चास्मिन् पूर्वस्मिन् वा तदाश्रयत्वस्य दुर्वचत्वात् । अतो ज्ञानाश्रयो देहादन्य एव । यत्तु ज्ञाने देहगतत्वेनाभिमते किण्वकरकाचित्रपटादि-दृष्टान्तप्रदर्शनम्, तदपि दुःस्थम्— संघातस्यावयवसमुदायात्मकतया प्रत्यवयवमेव मदशक्तिकाठि-न्यादिस्थितिवत् देहे प्रत्यवयवं चैतन्यस्थितेः स्वीकार्यतया देहस्यानेकचेतनत्वापत्तेरनेकराजाधिष्ठितराज्यवत् क्षोभप्रसंगात् । अहमित्येकत्वानुसंधानविरोधाच्च न तदभ्युपगमो युक्तः । चित्ररूपदृष्टान्तस्तु नाना रूपातिरिक्तस्य तस्याभावादेवासंभवी । उपचयापचयादिना दशाभेदे देहभेदात् बाल्येऽनुभूतं किमपि वार्धके न स्मर्येत । द्रव्यैक्यमात्रेण स्मरणोपपादने मात्रानुभूतं पुत्रेणापि स्मर्येतेति । देहे इत्यादि । यत्तु स्थूलोऽहमिति

तज्जातीयं ज्ञानान्तरमस्तीत्यनेकचेतनोपलम्भप्रसङ्गस्तद्वस्थ एव । विस्तरस्तु परमतभङ्गे द्रष्टव्यः । अत्र चार्वाकोक्तं युक्तिविरोधं परिहृत्य तदुक्तस्य देहात्मवादस्य प्रत्यक्षविरोधं स्वयमप्याह–देह इति । यथा, 'मम गृहम्, मम क्षेत्रम्, मम पुत्रः, मम कलत्रम्' इत्यादिषु व्यतिरेकप्रत्ययात् भेदसिद्धिः, एवं मम देह इति व्यतिरेकस्य स्पष्टदृष्टत्वात् बाधकाभावेन निर्दोषत्वाच्च देहात्मनोर्भेदोऽङ्गीकर्तव्य एव । तदिदमाह—अनघेति । निर्दोषत्वादित्यर्थः । ममात्मेत्यत्र तु ममेत्यस्मच्छब्दस्य आत्मेति स्वरूपविषयस्याऽऽत्मशब्दस्य चैकार्थ्यावश्यम्भावात् व्यतिरेकप्रत्यय औपचारिक इत्यर्थः । तर्हि—स्थूलोऽहं कृशोऽहमिति सामानाधिकरण्येनैक्यं प्रतीयते ; तत् कथमित्याशङ्क्याह–दोषत इति । अनेकश्रुतिस्मृतिविरुद्धत्वात् देहात्मबुद्धिर्भ्रान्तिरित्यर्थः । तर्ह्यनुमानादेव देहात्मैक्यं प्रसाधयामीति चार्वाकमतं निराकरोति—क्षितमिति । देह एवात्मा अहम्बुद्धिगोचरत्वात् सम्प्रतिपन्नाहम्बुद्धिगोचरात्मवदित्यादिभिर्देहात्मत्वमनुमीयते । तत्तु अनैकान्तिकमेव । न ह्येकरूपबुद्धिगोचरतामात्रेण तत्तदैक्यसम्भवः। न हि रजतबुद्धिगोचरतामात्रेण शुक्तिकायां रजतत्वं सम्भवति । तेन बाधितबुद्धिगोचरो मिथ्या, अबाधितबुद्धिगोचरस्तथ्यमिति निर्णेतव्यम् । तेनाबाधितप्रत्ययगोचरत्वाभावात् देह आत्मा न भवत्येव । देहात्मैक्यानुमानक्षेपे हेतुत्रयमाह–बलवदनुमितेरित्यादिना । [1]'दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्' इत्यादिसूत्रोक्ताधिकबलानुमानात्, 'नित्यो नित्यानाम्' इत्यादिशास्त्रात्, 'वीतरागजन्मादर्शनात्' इति सूत्राभिप्रेततर्कबलाच्चेति ॥ २२७ ॥

(२२८) देहे(हं) देहातिरेके तदवधिनियतप्राणबुद्ध्यक्षरूपम्
धीसन्तानश्च नित्यं प्रलयविलयिनं स्यात्तुमप्यापवर्गात् ।
डिण्डीराभं सदब्धावविततविकृतौ जीवमिच्छन्त इत्थं
निर्धूता दूरमत्र श्रुतिभिरितरवत् बाधदोषोज्झिताभिः ॥ ९ ॥

इत्यात्माधिकरणम् ॥ ५६ ॥

---

प्रत्यक्षज्ञानम्, न तत् देहान्यत्वानुमाने बाधकम् । दोषमूलकतया भ्रान्तित्वात् । दोषश्चाऽऽत्मगतविशेषाकारादर्शनम् ॥ कथमिदमवगतमिति चेत्, मम शरीरं स्थूलं नीलम्, मम पाणिः, मम पादः, मम शिरः इति समुदाये अवयवे चाऽऽत्मभेदप्रत्यक्षस्याबाधितस्याऽऽपामरं प्रसिद्धतया प्रबलप्रत्यक्षावष्टब्धमनुमानं न दुर्बलभ्रान्तिबाध्यम् । मम गेहं मम क्षेत्रमित्यादिवत् मम देह इति प्रतीतिः । नैव जात्वपि अहं गेहम्, अहं देह इति प्रतीतिरस्ति । एवमैक्यप्रत्यक्षस्यैव क्षेपे ऐक्यानुमानं कथं स्यास्यति । अहं स्थूल इति तु अभिज्ञैरपि व्यवह्रियते । तेन स्थूलादिपदं शरीरमात्रवाचीव शरीरविशिष्टवाचीत्यपि ज्ञायते । एवमव्युत्पन्नस्तु स्थूलादिपदं शरीरमात्रपरमिति भ्रान्त्या देहात्मैक्यमारोपयन्ति । अतो भेदानुमितेर्भेदप्रत्यक्षोपष्टब्धतया बलवत्वात्, भेदविषयकशास्त्रात्, वीतरागजन्माकृताभ्यागमप्रसंगादितर्कतश्चैक्यज्ञानं बाधितमिति ॥

चि. टी. 1 दर्शनस्पर्शनाभ्यां=चक्षुषा त्वचा चेन्द्रियेण एकस्यार्थस्य ग्रहणात् 'योऽहं घटमद्राक्षं सोऽहं स्पृशामि' इति प्रत्यभिज्ञा जायते । चक्षुषस्त्वचो वेन्द्रियस्याऽऽत्मत्वे तत्तद्ग्रहणस्य विभिन्ननिष्ठत्वात् प्रत्यभिज्ञा न भवेदिति इन्द्रियस्यात्मत्वमनेन निषिध्यते । अत्र तु देहावयवभूतयोर्नयनगोलकस्य चर्मरूपत्वचश्चात्मत्वे दोषोद्भावनविवक्षया न्यायसूत्रमिदमुपात्तमिति ध्येयम् ॥ २२७ ॥

एवं युक्त्युपबृंहितश्रुत्यादिभिश्चार्वाकस्य प्रधानप्रतिपाद्यं देहात्मवादं निराकृत्य तत्सजातीयानि पक्षान्तराण्यप्युक्तैरनुक्तैश्च हेतुभिर्निराकर्तुमुपक्रमते—देह इति। केचिदाहुर्देह एवात्मेति। अपरे त्वात्मनो देहातिरेकेऽपि देहावधिनियतप्राणबुद्ध्यक्षरूप आत्मेति। यावद्देहभावीत्यर्थः। एवं चार्वाकपक्षमुक्त्वा सौगतपक्षमप्याह—धीसन्तानमिति। नित्यं धीसन्तानं केचिदाहुः। यथा सौगताः—'अत्थि भिक्खवो अकिदअं असंखअं एदस्स जन्तुणो सन्तण्णमाणस्स णाणावत्थाणं सम्पज्जइ' इति। (छाया–अस्ति भिक्षवोऽकृतकमसंक्षयमेतस्य जन्तोः सन्तन्यमानस्य ज्ञानावस्थानं सम्पद्यते)। तेन नित्यधीसन्तान आत्मेति प्राहुः सौगतैकदेशिनः। अपरे तु शून्यवादिनमनुसरन्तो द्विधा प्राहुः। आत्मनामाप्रलयमवस्थानमित्येके। अत्रापि विभागो द्रष्टव्यः—क्षणिकज्ञानसन्तानस्यामोक्षमवस्थानमिति सौगताः। मृषावादिनस्त्वामोक्षात् जीवभाव इति वदन्तस्स्थायित्वमभ्युपगम्य कृत्य आमोक्षावस्थानमभ्युपगच्छन्ति। निपुणं निरूपयतां(ता) तदुक्तं स्थायित्वमप्यनादरणीयमेव। बीजाङ्कुरन्यायेनाविद्याजीवभावयोरस्थायित्वस्य स्वयमेवाभिधानात्। विवरणपक्षे तु जीवभावस्य आमोक्षस्थायित्वात् अपुरुषार्थत्वमेव। विस्तरस्तु शतदूषण्याम्। भेदाभेदपक्षमाह—डिण्डीरेति।

---

९. देहातिरेको विस्तरेणोक्त। उत्पत्तिविनाशप्रतिषेधिना सूत्रेण उत्पत्तिविनाशवत्त्वमात्मन इच्छतां सर्वेषां पक्षः प्रतिक्षिप्तो भवतीति चार्वाक-सौगत-कतिपयमृषावादि-यादवप्रकाशरूपसर्ववादिनिरसनं दर्शयति देहे इति। देहमिति पाठः पश्चात्तनः। देहे इति सप्तम्यन्त एव पाठश्चिन्तामणितालकोशेऽपि। प्रतीकधारणमपि देह इति इत्येव मुद्रित इव। तत्र केचिदिति वाक्यदर्शनेन श्लोके देहमिति पाठो न कल्प्यः। अस्य देहातिरेकस्थापकपूर्वश्लोकोक्तार्थानुवादरूपत्वमेव। देहमिति पाठे देहात्मवादिनोऽपि क्षिप्ता इत्यर्थः स्यात्। तदा पूर्वश्लोकेऽपुनरुक्तिः स्यात्। इतरवदित्यस्य देहात्मवादिवदिति स्वरसार्थत्यागेन किमपि वक्तव्यं भवेत्। ननु सप्तम्यन्तत्वेऽनन्वय इति चेत्-न; नियतेत्यत्रान्वयात्। तथाच पूर्वश्लोकोक्तरीत्या देहातिरेके स्थिते तदवधि देहसत्तापर्यन्ततया देहे नियमेन स्थितानि यानि प्राणमनस्तदितरेन्द्रियाणि, तदन्यतमरूपं जीवमिच्छन्तः इतरवत् देहात्मकामवत् निर्धूताः इति सर्वचार्वाकव्युदासः। क्षणिकज्ञानसंततिरूपमेव जीवमिच्छन्तः सौगताः। स च धीसंतानः संसारदशायामिव मुक्तावपि प्रवहति। निरुपप्लवा चित्सन्ततिर्मुक्तिरिति शून्यवादीतरसौगतमतम्। अतस्तस्य नित्यमिति विशेषणम्। अन्ये तु जीवस्थैर्यवादिनोऽपि प्रलयविलयिन सृष्टिकालमात्रे प्रतिकल्पमुत्पद्यमानमिच्छन्ति। अयं पक्षः, 'नायं भूत्वा भविता वा न भूयः' इति श्रुत्या निर्धूतः। अन्तःकरणप्रतिबिम्बपक्ष एवं स्यात्। अत्र पक्षेऽप्यकृताभ्यागमकृतविप्रणाशादयो दोषाः। अन्ये तु उत्पन्नो वा प्रवाहानादिरुपाधिपरिच्छिन्नो वा अनाद्यविद्यागतानादिप्रतिबिम्बरूपो वा अपवर्गपर्यन्तं स्थायी मोक्षे नश्यतीति मन्यन्ते। तत्पक्षे निरस्ताखिलदुःखोऽहमनन्तानन्दभाक् स्वराट् भवेयमिति वेदलोकप्रसिद्धरीतिर्मोक्षार्थिप्रवृत्तिर्न स्यात् को हि स्वनाशं कामयेत। यादवप्रकाशस्तु सदब्धौ सन्मात्रब्रह्मरूपे समुद्रे फेनतरङ्गवत् भोक्तृभोग्योत्पत्तिरिति भोक्त्रापत्त्यधिकरणभाष्योक्तरीत्या डिण्डीराभं फेनतुल्यं शुद्धं स्वच्छ जीवमिच्छति। तत्पक्षेऽपि अकृताभ्यागमादिदोषो वाक्यान्वयाधिकरणे वर्णित एव। अवितथविकृताविति सदब्धिविशेषणम्। यथाभूतानन्तविकारास्पदे इत्यर्थः। मृषावादिमत इव न विकारकल्पनेति भावः। इत्थं पूर्वोक्तयुक्तिरीत्यैव निर्धूताः। न तत्तत्पक्षयुक्त्या

यादवप्रकाशीयाः खलु सन्मात्रब्रह्मरूपे सागरे पुनः अवितथविकृतौ तत्तत्कार्योपयुक्तविकारवति डिण्डीराभं फेनप्रायं जीवमिच्छन्ति। स्वाभाविकभेदाभेदवादिनो हि सन्मात्रब्रह्मणि सागरप्राये फेनतरङ्गबुद्बुदन्यायेन चिदचिदीश्वरतत्त्वत्रयसृष्टिमाचक्षते । एवं परपक्षाननूद्य, सर्वेऽपि वादिनः सत्तर्कसहितस्मृतीतिहासपुराणोपबृंहिताभिर्नित्यत्वश्रुतिभिर्निरस्ता इत्याह—निर्धूता इति । बाधदोषोज्झिताभिरिति । आकाशादिनित्यत्वश्रुतयः प्रबलतरश्रुत्यन्तरबाधिताः, आत्मनित्यत्वश्रुतयस्तु प्रबलतरयुक्त्यन्तरानुगृहीतश्रुत्यन्तरसंवादेन निर्बाधा इत्यर्थः॥ २२८ ॥ इत्यात्माधिकरणम् ॥

## ५७ ॥ अथ ज्ञाधिकरणम् ॥ २-३-४ ॥

सूत्रम्—ज्ञोऽत एव ॥ उत्क्रान्तिगत्यागतीनाम् ॥ स्वात्मना चोत्तरयोः ॥ नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ स्वशब्दोन्मानाभ्यां च ॥ अविरोधश्चन्दनवत् ॥ अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमात् हृदि हि ॥ गुणाद्वाऽऽलोकवत् ॥ व्यतिरेको गन्धवत् तथा च दर्शयति ॥ पृथगुपदेशात् ॥ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा ॥ १९-३२ ॥

(२२९) कैश्चित् ज्ञानत्वमात्रं कथितम्, उपधिजा ज्ञातृतैवात्मनोऽन्यैः
तत्र श्रुत्यादिबाधं प्रथयति विविधं ज्ञोऽत इत्यादिसूत्रैः ।
पूर्वन्यायादमुष्मिन् जनिलयरहिते नित्यबोधेऽत्र चोक्ते
सङ्कोचायर्हबुद्धेर्विकृतिवचनमप्यस्य सद्वारकं स्यात् ॥ १० ॥

अत्र सङ्गतिभाष्ये, 'वियदादिवज्जीवो नोत्पद्यत' इत्युक्तम्। तत्प्रसङ्गेन जीवस्वरूपं निरूप्यते इति। अयमर्थः—अस्मिन् पादे प्रथमद्वितीयाधिकरणयोः साक्षात्सङ्गतिः; कार्यस्वरूपनिरूपणपरत्वात्। तृतीयस्य त्वापवादिकी; नात्मोत्पद्यत इति पूर्वोत्पत्तिप्रतिषेधात्। उत्तरेषां चतुर्णामप्यधिकरणानां

---

श्रुतिबाधः संभवी । श्रुतीनां निर्दोषतया बाधदोषेणाप्युज्झितत्वात्। इतरवत् देहात्मवादिवत् । प्रकाशिकायां तु देहमिति पाठात् अस्य दृष्टान्तत्वासंभवं मनसिकृत्य इतरवत् पौरुषेयवाक्यवदित्यर्थ उक्तः । तत्तन्मतकारेष्टपौरुषेयवाक्यं वैधर्म्यदृष्टान्तः । तस्य बाधदोषवत्त्वमस्ति; श्रुतयस्तु तदुज्झिता इति भावः । इतरवदित्यस्य सामान्यतो मानान्तरवदित्यर्थोऽपि सुवचः ; मानान्तरस्य बाधदोषवत्त्वं भवतीति । एवम् इतरवत् अनुमानैरिवेत्यप्यर्थः स्यात्। श्रुतिभिर्युक्तिभिश्चात्राधिकरणे दूरं निर्धूता इति यावत् ॥२२८॥

१०. कार्यस्वरूपशोधनं वियदादिपादद्वयार्थः । तत्राऽऽत्मनोऽनुत्पत्तिकथनं कथं संगतमिति चेत्—यथा परमतनिरासार्थे पादे तदपवादतया पञ्चरात्रप्रामाण्यस्थापनम्, तथा कार्यत्वापवादतया जीवस्याकार्यत्वस्थापनमित्येकः प्रकारः। अन्यस्तु जीवे स्वरूपान्यथाभावरूपकार्यत्वनिषेधमुखेनान्यादृशकार्यत्वोपपादनं क्रियते इति । तत्र कार्यत्वं देहसंश्लेषरूपं वा तदधीनावस्थाविशेषविशिष्टज्ञानस्वभावकत्वं वेति । सर्वमिदमभिप्रेत्योक्तं जननं स्वस्य देहादियोग इति। सोऽयं कार्यत्वप्रकारः आत्माधिकरणज्ञाधिकरणोभयविचारफलितः । स्वरूपान्यथाभावनिषेधमात्रमात्माधिकरणार्थं इत्याशयेनायं विषयश्चिन्तामणौ अस्मिन् ज्ञाधिकरणे प्रस्तुतः । तत्रास्मिन्नधिकरणे सांख्यतार्किकपक्षद्वयप्रतिक्षेपेण स्वपक्ष उपन्यस्त इति

प्रासङ्गिकी सङ्गतिः; कार्यजीवस्वरूपनिरूपणप्रसक्तानां चतुर्णामप्यर्थानां परिशोधनात् । [अथ?] तृतीयचतुर्थयोस्तु विशेषतः सङ्गतिः कथ्यते । पूर्वाधिकरणद्वये हि वियदादीनां स्वरूपान्यथाकरणेन कार्यत्वमुक्तम् । तृतीयाधिकरणे जीवस्य स्वभावान्यथाकरणेन कार्यत्वमिति विशेषितम् । तत्र पूर्वपक्षवादी प्रत्यवतिष्ठते—यदि जीवस्य ज्ञानं स्वभावः, तदा खलु भवदुक्तिरियं सङ्गच्छते । अपितु ज्ञानं स्वरूपमेव । तेन कथं विभागेन व्यवहार इत्याशङ्कयाधिकरणान्तरमारभ्यते । तदर्थविचारस्तु— किं जीवश्चैतन्यमात्रवपुः, उत जडस्वरूप एवाऽऽगन्तुकचैतन्यः, अथवा ज्ञातृत्वरूप इति। किं ज्ञप्तिमात्रवपुष्ट्वे ज्ञानस्वरूपत्वतद्धर्मकत्वपरसर्वश्रुतिसामञ्जस्यम्, उतागन्तुकचैतन्यजडस्वरूपत्वे, उत ज्ञातृत्वैकस्वरूपत्वे इति । किं ज्ञातृत्वस्य स्वरूपत्वे सर्वत्रोपलब्धिः प्रसज्यते, नेति । तदर्थं किं जीवः सर्वगतः, उताणुरिति । अणुत्वे विप्रकृष्टार्थग्रहणाग्रहणे संभवतः, नेति । एकजातीयद्रव्ययोर्नियतधर्मधर्मिभाव उपपद्यते, नेति । एतस्मिन् खल्वधिकरणे जीवस्य ज्ञानस्वरूपमात्रत्वं जडस्यैव तस्याऽऽगन्तुकचैतन्ययोगश्च प्रतिक्षिप्य ज्ञानस्वरूपत्वसंवलितं ज्ञातृत्वमेव स्वभाव इति स्थाप्यते । तत्र पूर्वपक्षसिद्धान्तयोरपेक्षितानि औपनिषदवाक्यानि [यानि?] ये च तदर्थविशेषाः तानि सर्वाण्यपि भाष्य एव सुव्यक्तमुक्तानीति न विशेषतो वक्तव्यमिह किञ्चिदवशिष्यते । तथाप्येतदधिकरणविषये वेद्यानामनवद्यानामपि तत्रतत्रास्पृष्टावद्यत्वद्योतनाय यत्किञ्चिदिह कथ्यते । अत्र मृषावादिनः प्राहुः— ज्ञानमात्रमेवाऽऽत्मतत्त्वमिति । कणचरणाक्षपादपक्षनिक्षिप्तचेतसस्तु जडस्वरूपमप्यात्मतत्त्वमागन्तुकचैतन्यगुणकमिति प्रतिपेदिरे । तदिदं पक्षद्वयमप्यनूद्य प्रतिक्षिपति—कैश्चिदित्यादिना । उपधिजा ज्ञातृता—देहाद्युपाधिप्रयुक्तेत्यर्थः । कथितेति लिङ्गव्यत्ययः कार्यः । तत्र द्वयोरपि पक्षयोः श्रुत्यादिबाधं 'ज्ञोऽत' इत्यादिसूत्रैः सूत्रकारो विविधं प्रथयतीत्यन्वयः । ज्ञ इति ज्ञातृ(कर्तृ)वाचिपदम् । तेन ज्ञानस्वरूपस्यैवात्मनो ज्ञातृत्वमेव स्वभाव इत्युक्तं भवति । एकजातीययोरेव द्रव्ययोराश्रयाश्रयिभावः सम्भवतीति प्रथमसूत्र एवोक्तमिति भाष्यकारैरेव स्पष्टमभिहितम् । ननु जीवस्वरूपनित्यत्वे

---

दर्शयति कैश्चिदिति । कैश्चित् बौद्धैरद्वैतिभिर्माध्वैश्च । अन्यैः तार्किकैः उपधिजा देहाद्यवच्छिन्ने आत्मनि इन्द्रियार्थात्ममनस्संयोगादिहेतूपनिपाताधीना कथिता । अतो ज्ञातृत्वमागन्तुकमिति । तत्र पक्षद्वयेऽपि श्रुत्यादिबाधम् । द्रष्टा श्रोता घ्राता मन्ता विज्ञानात्मा पुरुषः । 'सर्वं ह पश्यः पश्यति', 'एतद् यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः' इत्यादिश्रुतिस्मृतिविरोधः ज्ञातृत्वं विहाय ज्ञानमात्रत्वस्वीकारे । 'अयमनुच्छित्तिधर्मा', 'न द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते', 'प्रज्ञा च तस्मात् प्रसृता पुराणी', 'तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता । सर्वभूतेषु भूपाल तारतम्येन वर्तते', 'तथा हेयगुणध्वंसादवबोधादयो गुणाः । प्रकाश्यन्ते न जन्यन्ते नित्या एवाऽऽत्मनो हि ते' इति विविधश्रुतिस्मृतिबाधः आगन्तुकज्ञानवत्त्वस्वीकारे । एवं पक्षद्वयनिरासेन ज्ञस्वाभाव्यरूपतत्त्वस्थापनफलितमर्थमाह पूर्वेति । पूर्वाधिकरणोक्तश्रुतियुक्तिभिः स्वरूपान्यथाभावात्मकजनिलयरहिततया सिद्धे अमुष्मिन् जीवात्मनि अत्र ज्ञाधिकरणे नित्यबोधे चोक्ते अनागन्तुकस्वाभाविकज्ञानवत्त्वेनाप्युक्ते सति, तर्हि सर्वदा सर्वज्ञत्वापत्तिरिति शंकायां कर्मतिरोहितत्वात् यथायथं संकोचविकासार्हत्वस्य ज्ञाने स्वीकारात् तथाविधबुद्धिकस्य अस्य स्वरूपतो निर्विकारस्यापि सविकारत्वकथनं सद्वारकं संकोचविकासरूपावस्थयोः साक्षादभावेऽपि ज्ञानद्वारा

तस्य च धर्मभूतज्ञाने स्वाभाविकतया नित्यत्वेन भवद्भिरङ्गीकृते सति स्वरूपस्वभावाभ्यां जीवस्य कार्यत्वाभावात् कथं वेदान्तेषु जीवोत्पत्तिवादा निर्वाह्या इत्याशङ्क्याह—पूर्वेति। पूर्वाधिकरणोक्तप्रक्रियया जीवनित्यत्वे सति, एतदधिकरणप्रक्रियया तज्ज्ञाननित्यत्वे च सति ज्ञानसंकोचविकासाभ्यामुत्पत्तिविनाशव्यवहारो घटत इत्यर्थः। अयमत्र शब्दान्वयः—पूर्वाधिकरणोक्तन्यायादमुष्मिन्=जीवात्मनि जनिलयरहिते, पुनरत्र नित्यबोधे चोक्ते सति संकोचाद्यर्हबुद्धियोगात् विकृतिवचनमप्यस्य(त्र) सद्वारकं=ज्ञानद्वारकं स्यादिति। अत्र ज्ञानस्य सङ्कोचविकासार्हत्वं 'प्रदीपवदावेशः' इत्यादिषु सूत्रकारैरेव साधयिष्यते ॥ २२९ ॥

(२३०) ज्ञातृत्वं ज्ञानता च श्रुतिभिरभिदधे नात्र पक्षे पतामः,
सर्वत्रात्मा न भायात् किमिति न, निगमैर्देहिनोऽणुत्वसिद्धेः।
स्वाभासैकस्वमूर्तेरविशदमहमस्सर्वदा भानमिष्टं
धीसङ्कोचात् सुषुप्तिप्रभृतिषु विशदोल्लेखमात्रोपरोधः ॥ ११ ॥

पूर्वं खलु-ज्ञानमात्रमागन्तुकमिति न्यायवादिभिरुक्तम्; न पुनर्ज्ञातृत्वम्, मृषावादिभिस्तु ज्ञानत्वं नित्यसिद्धं ज्ञातृत्वं तु तत्त्वतो नास्त्येव; अथाप्यविद्यापरिकल्पितमित्युक्तम्, अस्माभिस्तूभयस्मिन्नपि

---

सत्त्वादिति सिध्येत्। अयं भावः—पूर्वाधिकरणे जीवासाधारणधर्मः प्रत्यक्त्वम्, नावस्थारूपमित्युक्तम्। तच्च स्वस्मै प्रकाशमानत्वम्; स्वप्रकाशफलित्वम्। स्वविषयकज्ञानवत्त्वं प्रत्यक्त्वमिति तार्किकपक्षः ज्ञानमात्रस्वरूपवादिपक्षाननुकूलः। स्वप्रकाशफलित्वं तु सर्वसंमतम्। स्वप्रकाशश्चाय स्वत एव भवति, न धर्मभूतज्ञानमपेक्षते इति सर्ववेदान्तीष्टम्। एवञ्च ज्ञानस्वरूपमिदमेवात्मस्वरूपं लाघवात् सर्वविषयग्राह्यपि भवतु लाघवात्। तथाच प्रत्यक्षानुमितिस्मृत्यादयो विकाराः साक्षादात्मन एव। एवञ्च स्वरूपान्यथाभावरूपविकारोऽप्यस्तु काममिति वा ज्ञातृत्वादिकं बुद्धिगतं न त्वात्मगतमिति वा स्यात्। आगन्तुकज्ञानवत्त्वपक्षे च देहयोगमादायैव सविकारत्वं स्यात्। नित्यज्ञानसंकोचविकासपक्षे तु स्वभावान्यथाभावप्रयुक्तं सद्वारकत्वं विकारस्य सिध्यतीति ॥ विविधमित्यनेन ज्ञानस्वरूपत्व-ज्ञानस्वाभाविकत्व-मुक्तिकालिकसर्वव्यापिज्ञानविकास-सर्वानुभवादिपरवचनप्रयुक्तत्वं बाधस्योच्यते ॥

चि. टी. अभिहितमिति। तथाचात्र 'गुणाद्वा' इति सूत्रे भाष्यम्, "प्रथमसूत्रे स्थापितम्" इति। इत्यादिष्विति आदिना आलोकवत् पुंस्त्वादिवदिति एतदधिकरणसूत्रादिग्रहणम् ॥ २२९ ॥

११. अस्मिन्नधिकरणे ज्ञ इति पदस्वारस्यात् ज्ञानगुणकत्वं साध्यते। ज्ञानस्वरूपत्वं तु नोक्तम्। प्रत्युत, 'तद्गुणसारत्वात्तु तद्व्यपदेशः' इत्युक्तत्वात् न ज्ञानस्वरूपत्वप्रयुक्तस्तद्व्यवहार इति निश्चीयते। ज्ञानस्वरूपत्वे सर्वदा भानं स्यादिति दूषणञ्चान्तिमसूत्रेणोक्तम्। अतो ज्ञानगुणकत्वमात्रं स्वीकार्यम्। तस्य यावदात्मभावित्वं यदुक्तम्, तन्न घटते, तथासति सर्वदैवाऽऽत्मभानप्रसंगात्। अतः सुषुप्त्यादिरेव न स्यात् इति तार्किकशंकायाम्, ज्ञानस्वरूपत्वं सुषुप्त्यादिसंभवञ्च सूत्रकाराभिमतं विशदयति ज्ञातृत्वमिति। स्वप्रकाशकत्वेनाभिमतस्याऽऽत्मन एव सर्वप्रकाशकत्वसंभवात् धर्मभूतज्ञानं मा भूदिति शंकायां ज्ञानगुणकत्वं स्थाप्यते; न तु स्वप्रकाशकत्वं वारितमस्ति। अतः स्वप्रकाशकत्वमस्मदभिमतं पुरस्कृत्यैव तेनाऽऽशंकनात् अभिमतापरित्यागेनैव समाधानमुच्यत इति न ज्ञानस्वरूपत्व

पक्षे पक्षपातं परित्यज्य ज्ञानत्ववत् ज्ञातृत्वमपि स्वाभाविकमित्युच्यत इत्याह–ज्ञातृत्वमित्यादिना। श्रुतिभिः किल, 'जानात्येवायं पुरुषः' इत्यादिना ज्ञातृत्वमभिधीयते। 'यो विज्ञाने तिष्ठन्', 'विज्ञानं यज्ञं तनुते' इत्यादिना तु ज्ञानत्वमप्यभिधीयते। तेन वयमपक्षपातात् ज्ञानत्वं ज्ञातृत्वमुभयमप्यात्मनः परिगृह्णीम इत्यर्थः। अत्र चोदयति–सर्वत्रेति। जीवस्तावत् महदादिशब्दश्रवणात् विभुरेव। तथा च तस्य ज्ञानस्वरूपत्वे स्वाभाविकज्ञानगुणकत्वे च सर्वतः प्रकाशेतेति। परिहरति-नेति। 'एषोऽणुरात्मा चेतसा वेदितव्यः' इत्यादिभिर्निगमशतैर्जीवस्याणुत्वसिद्धेः। उक्तमतिप्रसङ्गं विकल्प्य दूषयति–स्वाभासेति। ज्ञानस्वरूप आत्मा सुषुप्त्यादावपि नित्यं प्रकाशते। तत्र किं विशदज्ञानं प्रसज्यते, उताविशदज्ञानम्? अविशदं चेत्, इष्टमेव; नित्यमेवात्मस्वरूपमात्रप्रकाशस्याङ्गीकारात्। विशदं चैतन्न स्यादेव; अत्र सुप्तोऽहम्, ईदृशोऽहमित्यादिविशदप्रकाशस्य निद्रादिदोषदूषितधर्मभूतज्ञानसंकोचेन

---

प्रतिषेधः। यदि युक्तिमात्रेण स्वप्रकाशत्वोक्तिः स्यात्, बाध्येतापि। श्रुतिभिः, 'हृद्यन्तर्ज्योतिः पुरुषः' 'विज्ञानात्मा पुरुषः' इति ज्ञानत्वस्यापि ज्ञातृत्वस्येव प्रतिपादनात् तदन्यतरमात्रस्वीकारिसांख्य-तार्किकादिपक्षं न रोचयामहे। यत्तु नित्योपलब्धिः स्यादिति, तत्र पृच्छ्यते, आत्मनः स्वप्रकाशत्वे स्वाभाविकज्ञानवत्त्वे च किं सर्वत्रात्मभानं स्यादिति प्रश्नः, सर्वदा आत्मभानं स्यादिति वा। नाऽऽद्यः, सर्वत्राऽऽत्मनोऽसत्त्वादेव तथा भानायोगात्। तदाह द्वितीयपादेन। उत्क्रान्तीत्यादिसूत्राण्येतत्स्थापकानि। तत्र हृदिपरमवस्थितेनाणुनाऽऽत्मना सर्वदेहव्यापिवेदनाद्यनुभवः कथमित्यत्र गुणभूतज्ञानमुखेनेत्युक्त्वा किमिति गुणस्य पृथक्स्वीकार इति शंकामपाचकार व्यतिरेक इत्यादिना सूत्रजातेन। यत्तु तद्गुणसारत्व-मुखेनैव ज्ञानव्यपदेशनिर्वाहात् ज्ञानस्वरूपत्वं नेष्टमिति—तन्न; अन्यविषादाशयात्। स उच्यते—किं ज्ञानशब्दस्य मुख्यार्थ एव ज्ञानमित्यादिश्रौतप्रयोगे ग्राह्य इत्यभिमतम्, उतामुख्योऽपीति। आद्ये सविषयके सकर्तृके गुणभूते ज्ञान एव जानातेः प्रयोगात् ज्ञानशब्दस्य तत्रो निष्पन्नतया निराश्रय-निर्विषयकात्मस्वरूपस्य तन्मुख्यार्थत्वाभावात् तद्गुणसारकतयैव तत्प्रयोगः। यदि तु ज्ञानस्याऽऽत्मनश्च स्वप्रकाशकस्वरूपधर्मसाम्यमालोच्य गौणः प्रयोगः, तदा स्वप्रकाशत्वं ज्ञानपदार्थः साक्षादेवात्मनीति। अस्त्वेतत्। सर्वत्राऽऽत्मभानं वारितम्; सर्वदा भानमापाद्यते चेत्–तत् किमविशदं विशदं वा। आद्ये आह स्वाभासेति। अन्त्ये आह धीस्थादि। अयमर्थः—अविशदभानमापाद्यमानं स्वतःप्रकाशरूपं वा, गुणाधीनं वा। नाऽऽद्यः। स्वाधीनप्रकाशरूपस्वाभासैकस्वरूपस्य अहमः=अहमर्थस्याविशदं भानम् अहमित्याकारकं सर्वदाऽस्त्येव। तर्हि सुषुप्तिर्न स्यादिति न; सुषुप्तिर्हि धर्मभूतज्ञानप्रसरस्याभावः। स च तत्कारणभूतार्थसंनिकर्षाद्यभावादस्त्येव। अविशदभानं नाम प्रत्यक्त्वैकत्वानुकूलत्वमात्रविशिष्ट-स्वरूपभानम्। विशदभानं तु मनुष्योऽहमित्यादिबाह्यदेहाद्युपश्लिष्टतया भानं नित्यत्वाणुत्वापहतपाप्मत्व-भगवच्छेषत्वाद्याकारविशिष्टभानञ्च। तत्राऽऽद्यं प्रत्यक्षादिप्रमाणप्रवृत्त्यधीनम्; अन्त्यं शास्त्राधीनम्। सुषुप्तिमूर्च्छादिषु तादृशविशदोल्लेखो न भवति; धीसंकोचात्। तर्हि एकत्वानुकूलत्वादिविशिष्टं धर्मभूतज्ञानेन गृह्यत इत्यपि न; स्वयमेव प्रकाशमानांशे धर्मस्यानपेक्षणात्। अतः सुषुप्तिरक्षता। ईदृशस्वाभासत्वं यावदात्मभावित्वाच्चेति चकारेण ज्ञापितमेव॥ कुतो न कण्ठोक्तमिति चेत्, परेषु प्रबलत्वाभिमतेन

अप्रसञ्जनीयत्वात्। तदिदं सर्वमभिप्रेत्याह—धीसङ्कोचादिति। धर्मभूतज्ञानसङ्कोचात् सुषुप्तिप्रभृतिष्वात्मविषयं विशदज्ञानमुपरुध्यते। अविशदं तु स्वरूपज्ञानं सुषुप्तावप्यनुवृत्तमेवेति न कश्चिद्दोषः॥२३०

**(२३१) धर्मस्थे त्वेवकारे त्रिविधमपि भवेत् तद्व्यवच्छेदकत्वम्**
**धर्मिण्यस्यान्वये स्यात् तदितरविषये तस्य धर्मस्य हानिः।**
**जानात्येवेत्यबोद्धा न भवति, जडता ज्ञानमात्रोक्तिवार्या**
**ज्ञानालोपादिवाक्यानुगुणविषयतां यात्यसावेवकारः॥ १२ ॥**

उक्तमेव ज्ञातृत्वं ज्ञानस्वरूपत्वञ्च विशदमेव श्रुतिभिरुपपादयिष्यन्, 'जानात्येवायं पुरुषः' इति श्रुत्यर्थं तावदाह—धर्मस्थ इति। अत्र जानात्येवेत्येवकारः प्रयुज्यते। एवकारस्य त्रिविधो ह्यर्थ विभाग उच्यते। 'विशेषणविशेष्याभ्यां क्रियया च समन्वितः। अयोगं योगमपरैरत्यन्तायोगमेव च॥ व्यवच्छिनत्ति धर्मस्य निपातो व्यतिरेकतः॥' इति। यद्यप्येवं धर्मस्थेन एवकारेण विवक्षावशात् त्रिविधमप्यवधारणं कर्तुं शक्यते, अथाप्ययोगव्यवच्छेद एव प्रधानतया विवक्ष्यते। धर्मिस्थे त्वेवकारे धर्मस्यान्ययोगव्यवच्छेद इति सुप्रसिद्धमेव। अत्र पुनः जानात्येवेति धर्मस्थो ह्येवकारो ज्ञातृत्वायोगव्यवच्छेदमेव प्रतिष्ठापयतीत्याह—जानातीति। अबोद्धा न भवति=कदाचिदपि ज्ञान-

---

सांख्येन पूर्वपक्षिणा ज्ञानस्वरूपत्वमभिमत्य ज्ञानगुणकत्वस्यैवाऽऽक्षिप्तत्वात् तत्राविवादात्। पश्चात्तु ज्ञानगुणकत्वमिदमागन्तुकज्ञानमात्रमिति तार्किकमतव्युदासाय पुंस्त्वादिनिदर्शनमिति। चतुर्थे चाध्याये **ज्ञाधिकरणे** एतद् विशदीभविष्यति॥ २३०॥

१२. धर्मभूतज्ञानस्य धर्मितो व्यतिरेकः, "जानात्येवायं पुरुषः' इति श्रुत्या **भाष्ये** दर्शितः। **एवमेवकारघटितवाक्योदाहरणं** तस्य स्वाभाविकत्वजिज्ञापयिषयेति वक्तव्यम्। एवकारस्यार्थत्रये प्रसिद्धत्वात् कथमित इष्टसिद्धिरिति शंकायामिष्टं साधयति **धर्मेति**। विशेषणवाचिपदसंगतः, विशेष्यवाचिपदसंगतः, क्रियावाचिपदसंगतश्चेति त्रिविधप्रयोगविषय **एवकारः**। तत्र क्रमेणायोगव्यवच्छेदः, अन्ययोगव्यवच्छेदः, अत्यन्तायोगव्यवच्छेदश्च प्रत्याय्य इति प्रसिद्धिः। एवञ्च प्रकृते अत्यन्तायोगव्यवच्छेद एवार्थः स्यादिति कादाचित्कज्ञानवत्त्वमेवेतः सिध्येत्। अतः सर्वात्मना कदापि ज्ञानस्यानाश्रयः कश्चिदात्मा नास्तीत्येतावदेवावधार्येतेति तार्किको मन्वीत। तत्र युक्तम्। **धर्मस्थे** विशेषणसंगते तु **एवकारे** व्यवच्छेदत्रयमपि यथाविवक्षं भवति। कथमिति चेत् - 'शंखः पाण्डर एव' इत्यत्र पाण्डरत्वायोगव्यवच्छेदः। 'रूपादिचतुष्टयं पृथिव्याम्, वायुस्तु स्पर्शवानेव' इति प्रयोगे स्पर्शान्यगुणानां रूपादीनां व्यवच्छेदात् अन्ययोगव्यवच्छेदोऽपि। 'सरोजं नीलगुणवदेव' इत्युक्तौ, 'नीलं सरोजं भवत्येव' इत्यत्रेवात्यन्तायोगव्यवच्छेदः प्रतीयते। न हि नीलातिरिक्तं सरोजं नास्तीति सुवचम्। किं तु सरोजं किञ्चिन्नीलमपि भवतीत्येव विवक्षितम्। **धर्मिणि** विशेष्ये तद्वाचकशब्दे **अस्य** एवकारस्यान्वये, **तदितरविषये** तद्धर्म्यतिरिक्ते धर्मिणि धर्मस्यायोगोऽर्थः। अन्ययोगव्यवच्छेदोऽयम् अन्यस्मिन् धर्मयोगव्यवच्छेदरूपः। विशेषणस्थले तु अन्यस्य धर्मस्य योगव्यवच्छेदः। प्रकृते तु ज्ञानातिरिक्तगुणानामप्यात्मनि सत्त्वात्, ज्ञानाभावस्य कदाचित् क्वचित् स्वीकारे च श्रुतिविरोधात् **जानात्येवे**त्यस्य **अबोद्धा न भवति**=सर्वदा बोधवानेवेत्यर्थः। ननु ज्ञानस्वरूपत्वात्मकधर्मव्यवच्छेदरूपान्य-

शून्यो न भवत्यात्मेत्यर्थः। तेन ज्ञातृत्वं स्थापितम्। ज्ञानस्वरूपत्वमपि श्रुत्यैव स्थापयति—जडतेति। 'विज्ञानं यज्ञं तनुते' इति श्रुतिरत्र विवक्ष्यते। एवं श्रुत्यर्थज्ञानत्वमुपपाद्य सिंहावलोकनन्यायेन एवकारार्थं पुनरपि परामृश्योपपादयति—ज्ञानेति। 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इति श्रुत्यर्थे जीवस्य ज्ञानलोपाभावमेवकारो निर्धारयन् तदानुगुण्यमेव भजत इति ॥ २३१ ॥

(२३२) उत्क्रान्तिस्पन्दनाणूपमितिवचनतोऽणीयसः शक्तिलाभे
धीभूम्ना यौगपद्यं त्ववयवनयतोऽनेकमूर्तिग्रहेऽपि ।
यत्राऽऽम्नातं विभुत्वं परविषयमिदं भाति तात्पर्यलिङ्गैः
जीवे व्यापित्ववादो मतिमहिमपरः, स्वच्छताद्याशयो वा ॥ १३ ॥

इति ज्ञाधिकरणम् ॥ ५७ ॥

अस्मिन् खल्वधिकरणे ज्ञानस्वरूपस्यात्मनो विभुत्वे सर्वत्रोपलम्भप्रसङ्ग इत्याद्यनिष्टप्रसङ्गपरिहारार्थं सूत्रकारैरेवाणुत्वं श्रुतिभिरुपपादितम्। महत्त्ववचनस्यान्यथासिद्धिरपि भाष्यकारैरुपपादिता। तदिदं सुखग्रहणाय संगृह्णाति–उत्क्रन्तीति। 'उत्क्रान्तिगत्यागतीनाम्' इत्यादिसूत्रोक्तं देहादुत्क्रमणं देशान्तरगमनं पुनरागमनम्, 'वालाग्रशतभागस्य', 'आराग्रमात्रो ह्यवरोऽपि दृष्टः' इत्याद्यणुद्रव्योपमानम्, 'एषोऽणुरात्मा चेतसा वेदितव्यः' इति साक्षादणुत्ववचनम्, एवमादितोऽणुत्वेन

योगव्यवच्छेद एवार्थः किं न स्यादित्यत्राह जडता ज्ञानमात्रोक्तिवार्येति। तथासति, 'ज्ञानस्वरूपः', 'अनन्तरोऽबाह्यः कृत्स्नो विज्ञानघन एव' इत्यादिविरोध इति भावः। ननु क्रियासंगतत्वात् एवकारस्य स्वरसार्थः अत्यन्तायोगव्यवच्छेद एवास्तु। तत्राह ज्ञानालोपेति। अत्यन्तपदघटनं हि कदाचित् ज्ञानाभावस्यापि स्वीकाराय। स तु, 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते', 'अनुच्छित्तिधर्मा' इति श्रुतिबाधितः। अतोऽधिकघटने गौरवमिव श्रुतिविरोधोऽपीति तदुपेक्ष्यमेवेति। अन्यथा, 'पार्थो धनुर्धर एव' इत्युक्तौ अत्यन्तायोगव्यवच्छेदो ग्राह्यः स्यात्। तदा च निन्देव, न स्तुतिः। त्रिविधार्थविषये शाब्दबोधवर्णनप्रकारः अस्मदीये **मीमांसासुधास्वादे** द्रष्टव्यः ॥ २३१ ॥

१३. अनुक्तैतदधिकरणसूत्रार्थमाह उपरितनश्लोके। **उत्क्रान्तिः** देहात् जीवस्योत्क्रमणम्। **स्पन्दनं** देहान्तर्बहिश्च सुप्तिपरलोकाद्यर्था गतिरागतिश्च। **अणुवचनं** **स्वशब्दः** एषोणुरात्मेति। **अणूपमितिः** आराग्रमात्रत्ववालाग्रशतांशशतांशसाम्यादिः। एतेषां वचनात् अण्वचितोऽप्यात्मा अत्यन्ताणुरेव जीवः। तर्हि **अणीयसः** अनेकशरीरपरिग्रहः कथम्। न च वेगेन गतागतकरणादेवमिति वाच्यम्, तथासति नियमेन धार्यत्वाद्यभावात् शरीरत्वमेव न स्यात्। मध्येमध्ये शरीरस्य मृतत्वापत्तिश्च। अतो यौगपद्यमेष्टव्यम्। अतो विभुत्वमेवेत्यत्राह **शक्ती**त्यादि। अणुत्वपक्षे एकस्मिन्नपि शरीरे सर्वावयवेषु वेदनाद्यनुभवः कथमित्यपि शंकनीयमस्ति। तत्र **धीभूम्ना** धर्मभूतज्ञानव्याप्त्या परिहारः।तदुक्तम्, 'गुणाद्वाऽऽलोकवत्' इति।अस्मादेवावयवन्यायात् अनेकशरीरस्थलेऽप्यनुपपत्तिपरिहारः। तत्परिग्रहश्च संकल्पशक्तौ योगादितः सिद्धायां भवेत्। अतो यौगपद्यमेव नानाधिष्ठानरूपस्यानेकमूर्तिपरिग्रहस्यास्तीति न दोषः। यत्तु वचनम्, 'स वा एष महानज आत्मा' इति, तत् **परविषयम्** परमात्मविषयकमिति **तात्पर्यलिङ्गैः** तत्परत्वगमकैर्हेतुभिर्ज्ञायते। 'सर्वस्य वशी सर्वस्येशानः' इत्यादेरुपरि पाठात्। दहरविद्याप्रकरणाच्च।

सिद्धस्यापि [1]जीवस्य शक्तिलाभे योगादिसामर्थ्यलाभे कथमनेकशरीरपरिग्रह इति चोद्यमेव हि परेषामभिमतम्। तत् परिहृतमेव धर्मभूतज्ञानविकासेन सूत्रकारैरेव ; 'प्रदीपवदावेशः' इत्यादिना प्रसाधितत्वात्। इदमेवैकस्मिन्नपि शरीरे, 'पादे मे वेदना, शिरसि मे सुखम्' ति जीवस्याणोरपि नानावयवप्रयुक्तसुखदुःखानुसन्धानेन समानमित्याह—अत्रयवनयत इति। अयमत्रान्वयः— अनेकदेहग्रहणेऽप्यणुतया प्रमाणसिद्धस्य जीवस्य यौगपद्यमनेकावयवेषु सुखदुःखप्रतिसन्धान-(यौगपद्य)वदुपपद्यत इति। यथा प्रदीपस्यैकत्रावस्थितस्यापि प्रभया धर्मभूतया तत्तत्प्रकाशका(नक)-रणत्वम्, एवमणोरपि जीवस्य प्रभास्थानीयेन धर्मभूतज्ञानेन तत्तत्प्रकाशक(नकर्तृ)त्वमपि युज्यत इति सन्तोष्टव्यमायुष्मता। विस्तरस्तूत्तरत्र भविष्यति। तर्हि तर्कं परित्यजामः; जीवस्य महत्त्वप्रतिपादक-श्रुतिमवलम्ब्याणुत्वं निराकुर्म इत्याशङ्क्य, 'यत्र विभुत्वमुच्यते, तत् परमात्मविषयतया नेतव्यम्' इत्याह–यत्रेति। परमात्मविषयकत्वनियामकं लिङ्गमाह–तात्पर्यलिङ्गैरिति। तात्पर्यलिङ्गपरामर्शाभावे 'पौर्वापर्यापरामृष्टः [2]शब्दोऽन्यां कुरुते मतिम्' इति न्यायः स्यादित्यर्थः। ननु, 'नित्यो व्यापी' इति जीवस्य व्यापित्वं(तिमत्त्वं) सर्वाचार्यसम्मतयामुनाचार्यैरेवोच्यते। तत् कथमित्याशङ्क्याह–जीव इति। जीवविभुत्वादः, 'स चानन्त्याय कल्पते' इति धर्मभूतज्ञानव्याप्त्या वा, सौक्ष्म्यात् सर्वचेतनान्तःप्रवेशसामर्थ्याद्वा भवतीति न कश्चिद्विरोधः॥ २३२॥ इति ज्ञाधिकरणम्॥ ५७॥

## ५८॥ अथ कर्त्रधिकरणम्॥ २-३-५॥

सूत्रम्—कर्ता शास्त्रार्थवत्त्वात्॥ उपादानात् विहारोपदेशाच्च॥ व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः॥ उपलब्धिवदनियमः॥ शक्तिविपर्ययात्॥ समाध्यभावाच्च॥ यथा च तक्षोभयथा॥ ३३-३९॥

(२३३) ज्ञातृत्वं पुंस इत्थं भवतु ; तदपि नामुष्य कर्तृत्वसिद्धिः
श्रुत्याद्यैस्तन्निषेधात् विकृतिविरहतश्चेत्यसत् इष्टबाधात्।
कर्तृत्वापह्नवोक्तेरविकृतिवचसोऽप्यान्यपर्यं हि गीतं
कर्ता शास्त्रार्थवत्त्वात् तदयमिह ; न च स्यादचोद्यनियोगः॥ १४॥

अत्र सङ्गतिर्भाष्ये, 'अयमात्मा ज्ञाता स चाणुपरिमाणः' इत्युक्तम्। इदानीं किं स एव कर्ता, उत स्वयमकर्तैव सन् अचेतनानां गुणानां कर्तृत्वमात्मन्यध्यस्यतीति चिन्त्यते' इति। अयमर्थः— ज्ञानचिकीर्षाप्रयत्नवतः कर्तृत्वात् कर्तृत्वोपयुक्तज्ञातृत्वनिरूपणानन्तरं तदेव कर्तृत्वं निरूप्यत इति। भोक्तृत्वमपि कर्तृत्वफलत्वात् कर्तृत्वेन सह निरूपितं भवति। तदर्थविचारस्तु— किमात्मैव कर्ता, उत

---

ननु, 'स चाऽऽनन्त्याय कल्पते', 'नित्यः सर्वगतः स्थाणुः' इति व्यापित्वं जीवेऽप्युच्यते इति चेत्— प्रथमवाक्यं मतेः=धर्मभूतज्ञानस्य महिम्नाः सर्वव्यापित्वस्य बोधकम्; द्वितीयं सर्वान्तःप्रवेशौपयिक-सूक्ष्मत्वमात्रपरम्। तेनाच्छेद्यत्वादिसिद्धिः। अतोऽणुरेव जीवः। अत एव हृदयमात्रे हस्तं निक्षिप्य अहमिति व्यवहरन्ति। तदुक्तम्, 'अभ्युपगमात् हृदि हि' इति॥

1 सिद्धस्यापीति। अपिशब्दः सामर्थ्यलाभेऽपीति उपर्यन्वेति। 2 पौर्वापर्यापरामृष्टः=किञ्चित् प्रति पूर्वत्वेन किञ्चित् प्रति अपरत्वेन चापरामृष्ट इत्यर्थः। अपरामृष्टपूर्वापरसंदर्भ इति यावत्॥ २३२॥

१४. लोके जानाति इच्छति करोतीति ज्ञातुरेव कर्तृत्वावगमेऽपि अचेतन एव कर्तृत्वस्य श्रुतिबोधितत्वादकर्तृत्वमिति शंकायामधिकरणारम्भः। तदाह ज्ञातृत्वमिति। श्रुत्याद्यैः श्रुतिस्मृतिवाक्यै-

प्रधानमिति। किमात्मनः कर्तृत्व एव ज्योतिष्टोमादिशास्त्राणामर्थवत्त्वम्, उत प्रधानस्य कर्तृत्व इति। कर्तृत्वनिषेधः किमात्मनः कर्तृत्वे सम्भवति, नेति। पूर्वोत्तराधिकरणयोः सङ्गत्यभिधानपूर्वकं पूर्वपक्षं वदति–ज्ञातृत्वमिति। ज्ञातृत्वमुक्तप्रकारेण भवतु नाम। तथापि न अमुष्य = जीवस्य कर्तृत्वं सिध्यति; श्रुतिस्मृत्यादिभिस्तत्तत्र जीवात्मनः कर्तृत्वनिषेधात्। 'हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम्' इति श्रुतिः। स्मृतिरपि, 'प्रकृतेः क्रियमाणानि' इति। विकृतिविरहतः = 'अच्छेद्योऽयमदाह्योऽयम्' इत्यादिना विकृतिप्रतिषेधात्; कर्तृत्वस्यापि विकृतिरूपत्वादित्यर्थः। उक्तमर्थं प्रतिक्षिपति—असदिति। तत्र हेतुमाह—दृष्टबाधादिति। दृष्टं हि शयनासनभोजनादिषु कर्तृत्वं जीवस्य, तत् निषिध्यमानं प्रत्यक्षादिसकलप्रमाणबाधितमित्यर्थः। न केवलं प्रमाणविरोधः, स्ववचनविरोधस्यापि विद्यमानत्वादितीममर्थं प्रदर्शयति—कर्तृत्वापह्नवोक्तेरिति। यदि कर्तृत्वमपह्नुते, नाहं कर्ताऽस्मीति, तदा स्ववचनविरोधः; तत्रैव कर्तृत्वात्। यदि नापह्नुते, अस्मदीयत्वात् वयमपि सन्तुष्यामः। तर्ह्यस्मन्मते विकाराभाववचनं कर्तृत्वाङ्गीकारे कथमुपपद्यत इत्याशङ्क्य तदपि भगवतैवान्यपरत्वेन निर्व्यूढमित्याह—अविकृतीति। अयमत्र, 'कार्यकारणकर्तृत्वे हेतुः' इत्यादेर्गीतावचनस्य भावः—जीवस्य कर्तृत्वं न नित्यसिद्धम्, अपितु प्रकृतिसम्बन्धप्रयुक्तमिति। न च तन्मिथ्या; औपाधिकस्य कर्तृत्वस्य सर्वदोपलभ्यमानत्वादिति। उपपादितमर्थं सौत्रक्रमेण निगमयति—कर्तेति। तत् = तस्मात्। इत्थमुपपादनादित्यर्थः। शास्त्रार्थवत्त्वात् = शास्त्रस्य प्रयोजनवत्त्वादित्यर्थः। कर्तुर्जीवस्य ऽभावे हि

रात्मनि तन्निषेधात् कर्तृत्वनिषेधात् विकृतिविरहतश्च निर्विकारत्वाच्च न अमुष्य जीवस्य कर्तृत्वसिद्धिरिति। निरस्यति इत्यसदिति। आत्मनि कर्तृत्वापह्नववचनस्य न कर्तृत्वनिषेधे तात्पर्यम्; अन्यपरत्वात्। वैदिकलौकिककर्मकर्तृत्वमात्मनः औपाधिकम् पूर्वकर्मवासनाप्रेरितदेहादिरूपप्रकृतिगतसत्त्वरजस्तमोगुणकृतमित्यर्थपरत्वात्। अपह्नवशब्दप्रयोगः स्थित एव कर्तृत्वे औपचारिकात् तदभाववचनात्। 'प्रकृतेर्गुणैः क्रियमाणानि' इति सत्त्वरजस्तमोगुणानां कर्तृत्वं यदुच्यते, तत् जीवगतकर्तृत्वस्य औपाधिकत्वसूचनाय गुणेष्वारोपात्। एवम्, 'मयि सर्वाणि संन्यस्य' इति सर्वेश्वरेऽपि कर्तृत्वन्यासो भाव्यः। कारयितृधीनत्वात् कर्तृत्वस्य तत्र तदुपचारः। तर्हि आत्मनः सविकारत्वापत्तिरिति चेत्—स्वरूपान्यथाभावरूपविकारविरहस्यैव तदर्थत्वम्। किञ्च, 'पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते' इति भोक्तृत्वमिष्टम्। एवं ज्ञातृत्वभोक्तृत्वयोः स्वीकारे आन्तरालिकं कर्तृत्वमपि तत्रैव युक्तम्। श्रुत्यादेः प्राबल्यात् कर्तृत्वनिषेधकवाक्यमन्यपरम्। पूर्वापरसंदर्भाच्चेदं सुगमं गीतायाम्। सर्वेश्वरे देहे इन्द्रियेषु गुणेषु च हि कर्तृत्वं गीतम्। कुत्र वास्तवं स्यात्। यत्तु हन्ता चेदिति वचनम्, तस्य कर्तृत्वनिषेधकत्वमेव नास्ति। अयमस्यार्थः—हननव्यापारो यत्र, तत्रैवं बुद्धिमनुभवामः—हन्ता डित्थः अहमेतं हनिष्यामीति मन्यते। हतश्च डपित्थः अहमनेन हत इति मन्यते। हतस्य मृतस्य कथमियं मतिरिति चेत्—मरणाव्यवहितप्राक्क्षणे भवेदेव। यथा वालिनः। युद्धे वीरस्वर्गं गतस्य च पूर्वजन्मवृत्तस्मरणं सुलभम्। इदं मतिद्वयमपि भ्रमः, डित्थस्य डपित्थात्महननकर्तृत्वाभावात्, डपित्थस्यैतद्धननकर्मत्वाभावादिति। कुतः कर्तृत्वं कर्मत्वं च नास्तीति चिन्तायां प्रकरणपरामर्शः कार्यः। प्रकरणे अविनाशित्वमुक्तम्। स एव हेतुः। तथाच आत्मनो नाशायोगात् तन्नाशकर्तृत्वमस्य तद्धननकर्मत्वं तस्य च न भवतीति। कर्तृत्वनिषेध उपलक्षणम्

शास्त्रस्य प्रयोजनवत्त्वं सिध्यति। अन्यथा अननुष्ठानलक्षणाप्रामाण्यप्रसङ्गादित्यर्थः। तर्ह्यचेतनस्य देहस्यैव शास्त्रनियोज्यत्वमित्याशङ्क्य प्रतिक्षिपति—न चेति। यस्तु नियोगं जानीते, स एव हि नियोज्यः। अबोद्धुर्देहस्य कथमिव नियोज्यत्वमभिधातुं शक्यत इति ॥ २३३ ॥

(२३४) किञ्च श्लोकत्यादिमग्नो निगदितुरहमः कर्तृताया निषेधः,
यद्यन्यस्याहमर्थात्, तदिदमुपनिषद्वेदिनः सिद्धसाध्यम्।
भोक्तृत्वस्याप्यभावे प्रसजति वितथं बन्धमोक्षादिशास्त्रं
प्राणादानात् विहारात् प्रकृतिसमधिकोऽस्मीति योगाच्च कर्ता ॥ १५ ॥

अथ कर्तृत्वनिषेधवादिनं विषयभेदेन विकल्प्य दूषयित्वा तत्रतत्र कर्तृत्वसहपठितं भोक्तृत्वमपि विशदमेव स्थापयति—किञ्चेति। अयमत्र विकल्पः—अहमः कर्तृत्वं नास्तीति वदन् वक्तुः स्वस्य वा अहमर्थवचनादौ कर्तृत्वं निषेधति, किं वा अचिद्वस्तुविशेषस्याहङ्कारस्य? यदि पूर्वः पक्षः परिगृह्यते, तदा स्ववचनविरोध इति प्रागेवोक्तम्। यद्युत्तरः पक्षः—तदा अहङ्कारस्य प्रकृतिकार्यत्वेनाकारणत्वादकर्तृत्ववचनं सिद्धसाधनमेव। अहमर्थादन्यस्य यदीति। आत्मनोऽन्यस्याहङ्कारस्य यदकर्तृत्वमुच्यत इत्यर्थः। उपनिषद्वेदिनः=देहातिरिक्तात्मयाथात्म्यवादिनो वेदान्तिन इत्यर्थः। न ह्यहङ्कारस्य कर्तृत्वं वयमनुमन्यामहे। इत्थं कर्तृत्वमुपपाद्य तत्तुल्यन्यायेन भोक्तृत्वमप्युपपादयति—भोक्तृत्वस्येति। कर्तृत्वभोक्तृत्वे हि [1]वीवधघटन्यायेन सहैवावतिष्ठेते इति

---

अविनाशिवस्तुकर्मकहननकारकत्व कस्यापि नास्तीत्येव विवक्षितम्। एवं प्रकृतानुगुणमर्थं विहाय सर्वकर्तृत्वनिषेधस्यैव श्लोकार्थत्वस्वीकारे श्लोके यत्किंचित्क्रियानिर्देशसंभवात् सामान्यनिर्देशसंभवाच्च विशिष्य हन्धातुप्रयोगो व्यर्थः स्यात्। तर्हि न हन्यते इत्येतावदलम्; न हन्तीति किमर्थमिति चेत्—त्वन्मते न हन्तीत्येव लम्, न हन्यत इति किमर्थम्। वस्तुतो न वैयर्थ्यमपि; अच्छेद्यत्वादिविशिष्टमिमं यथा शस्त्रादि न हन्ति, तथा सूक्ष्मशुद्धात्मस्वरूपं संकल्पोऽपि न हन्तीति च शुद्धात्मस्वरूपे हननकर्मत्वानुसंधानं न युक्तमित्यर्थव्यक्तये तथोक्तिसंभवात् ॥ २३३ ॥

१५. हननकर्तृत्वे कथ्यमाने सामान्यतः कर्तृत्वग्रहणमयुक्तमित्युपपादयन् कर्तृत्वसाधकसूत्रान्तरार्थसंग्रहमपि करोति किञ्चेति। अहं हन्तेति मतिर्भ्रम इत्युक्तम्। तत्र भवता अहं कर्तेति मतिर्भ्रम इत्यर्थवर्णनमयुक्तम्। अहमर्थो न कर्ता तथाश्रुत्युक्तत्वात् इत्यत्र'हमर्थपदेन कस्य ग्रहणम्। अहंशब्दो हि तच्छब्दप्रयोक्तृत्वोपलक्षितात्मव्यक्तिवाची। तत्र प्रयोक्तृत्वरूपे कर्तृत्वे प्रतीयमाने कथं कर्तृत्वनिषेधः। एवमनुमानप्रयोगादिकर्तृत्वाच्च। अतो निगदितुः वक्तुः कर्तृत्वनिषेधवचनादिकर्तृत्वसत्त्वात् बाधितः। ननु अहमर्थ इत्यस्य अहंशब्दार्थत्वेन भ्रान्त्या प्रतीतो देहेन्द्रियान्तःकरणादिरित्यर्थ इति चेत्—तत्र कर्तृत्वाभाव इष्ट इति सिद्धसाधनम्। अहंकारे कर्तृत्वाभावः सांख्यं त्वां प्रति अस्माभिः साध्येत, न तु त्वयाऽस्मान् प्रति। अत उपनिषद्वेदितुरित्युक्तम्। सूत्रकारेण शक्तिविपर्ययादिति भोक्तृत्वशक्त्यभावप्रसंग उक्तः कर्तृत्वसाधकतया। तत्र च नेष्टापत्तिमित्याह भोक्तृत्वस्यापीति। भोक्तृत्वास्वीकारे दुःखित्वस्यैवाभावेन तन्निवृत्तये मोक्षशास्त्रं नारभ्यम्। उपायानुष्ठानञ्च

---

1. वीवधघटौ=अंसनिक्षिप्तदण्डाग्रद्वयलम्बिनौ घटौ।

सर्वलोकसिद्ध(संमत)मेतत्। यः पुण्यमेव वा पापमेव वा करोति, स एव तत्फलमुपभुङ्क्ते, नापर इति सार्वलौकिकी प्रसिद्धिः। भोक्तृत्वाभावे सकलमपि बन्धमोक्षादिशास्त्रं वितथमेव प्रसजेत्। किञ्च कर्तृत्वं सर्वथा न परित्याज्यम्; पामरपरीक्षकाविशेषेणोच्छ्वासनिश्श्वासादिसर्वव्यापारेषु कर्तृत्वस्यैव सुप्रसिद्धत्वात्। [1]प्राणादानादिति प्राणव्यापारे हेतुत्वमुच्यते। विहारादिति चरणादिव्यापारकर्तृत्वम्। प्रकृतिसमधिकोऽस्मीति योगादिति। प्रकृतिविलक्षणात्मध्यानादित्यर्थः। चार्वाकव्यतिरिक्ता हि सर्ववादिनो देहातिरिक्तमात्मानं ध्यायन्ति। तत्रैव तेषां कर्तृत्वमपरित्याज्यमित्यर्थः॥

(२३५) व्यापारज्ञानवाञ्छाप्रशकनयतनायोगयुक्तिस्तु मन्दा
कार्ये सामग्र्यपेक्षे विधितदितरयोर्लोकसिद्धा प्रवृत्तिः।
सार्थं शास्त्रं हितोक्त्या; नियतिनियमिता शास्त्रयोग्या दशा सा;
ज्ञाता कर्ता च भोक्ता तदयमिह पुमान् भाति सर्वैः प्रमाणैः॥ १६॥

इति कर्त्रधिकरणम्॥ ५८॥

इत्थं ज्ञातृत्वकर्तृत्वभोक्तृत्वादीनि जीवनिष्ठानीत्युपपाद्य तदुपयुक्तं गुणजातमपि तन्निष्ठमेवेति विशदं प्रकाशयन् शास्त्रस्यार्थवत्त्वं जीवस्य कर्तृत्वादिषु सिद्धेष्वेव सिध्यतीत्युपपाद्य पूर्वोत्तराधिकरणार्थमुपसंहरति—व्यापारेति। लोके हि विधौ निषेधे वा कर्तुरधिकारिणो व्यापारादिकं

---

त्यर्थम्। प्राणेति। 'एवमेतत्प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते' इति वाक्येन प्राणान्= इन्द्रियाणि उपादाय स्वप्नलब्धशरीरे परिवर्तनं विहरणमुक्तम्। बाह्यविषयव्यापारे देहादेः कर्तृत्वेऽपि देहेन्द्रियादिप्रेरणविषयेऽलौकिके कर्तृत्वं ह्यात्मन एव वक्तव्यम्। प्रकृतीति। अहं प्रकृतेरन्य इति समाधिर्हि मोक्षहेतुः। न हि देहो बुद्धिर्वा प्राकृतमन्यद्वा प्रकृत्यन्यत्वेन गृह्येत। अतः समाध्यभावप्रसंगात् समाधेश्च सांख्यैः क्रियमाणत्वात् आत्मनः कर्तृत्वं तेन स्वीकृतमिति न सामान्यतः कर्तृत्वनिषेधः संभवतीति॥ चकारेण, 'उपलब्धिवदनियमः' इति सूत्रार्थविवक्षा। आत्मनो विभुत्वे यथा सर्वत्राऽऽत्मोपलब्धिप्रसंगः, तथा प्रकृतेः कर्तृत्वे आत्मनां भोक्तृत्वे अविशेषात् तस्याः सर्वसाधारणत्वात् सर्वस्य सर्वभोक्तृत्वप्रसंगः। अतोऽपि जीव एव कर्तेत्यर्थः॥

१६. एतदधिकरणगतसर्वसूत्रलब्धार्थसंग्रहः क्रियते व्यापारेति। आत्मनो विभुत्वं निर्विकारत्वं तत एव कर्तृत्वाद्यभावञ्च सांख्य आह। तत्र उपादानं विहारश्चेति व्यापारवत्त्वं सूचितम्। नात्र देहव्यापारविवक्षा; आत्मनिष्ठस्यैव प्रकृतत्वात्। शरीरान्तरसंचार इन्द्रियाधिष्ठानमित्यादिरात्मव्यापार उपादानादिति सूत्रविवक्षितः। ज्ञानं पूर्वाधिकरण एवोक्तम्। 'यथा च तक्षोभयथा' इत्यत्रेच्छारूपगुणोऽप्यभिमतः। प्रशकनं शक्तिः, 'शक्तिविपर्ययात्' इत्यत्र निर्दिश्यते। यतनं कर्तृत्वं प्रथमसूत्रे। एषामात्मन्ययोगवर्णनं

चि. टी. प्राणेति। 'उपादानाद्विहारोपदेशाच्च' इति सूत्रार्थानुवादोऽत्र। तत्रायमर्थो न भवति; उपदेशपदसत्त्वेन श्रुतेरेव ग्राह्यत्वात्। श्लोके उपदेशपदाभावादयमर्थ उक्तः। एवं प्रकृतीत्यादिकमपि, 'समाध्यभावाच्च' इति सूत्रार्थदर्शितत्वात्स्यपरम्॥ २३४॥

विशेषणजातं सामग्र्यनुप्रविष्टमेव। सामग्र्या हि सर्वकार्योत्पत्तिरिति न्यायवादिनो(विदो) वदन्ति। तेन, कुर्यात्, न कुर्यादिति विधिनिषेधशास्त्राधिकारिणो नरस्योपयुक्तानि विशेषणानि अपरिहार्याणी-नीत्यर्थः। व्यापारः = देहव्यापारः कर्तृत्वानुबन्धी। ज्ञानम् = ज्ञातृत्वमेव। वाञ्छा = भोक्तुरभिलाषः। प्रशकनं = शक्तिः। सा पुनः सार्वत्रिकी। यतनम् = प्रयत्नः। एते जीवे न सन्तीत्ययोगोपपादनं मन्दप्रलाप एव। मान्द्यमेवोपपादयति—कार्ये इति। प्रवृत्तिरूपे निवृत्तिरूपे वा तत्तत्कार्ये स्वोचित-सामग्रीसापेक्षे सति विधिशास्त्रे निषेधशास्त्रे च तत्तदनुगुणप्रवृत्तिः सर्वलोकप्रसिद्धा। तेन ज्ञातृत्वकर्तृत्वभोक्तृत्ववत् तदनुगुणं गुणजातमपि जीवस्यावर्जनीयमित्यर्थः। अत्र, 'कर्ता शास्त्रार्थ-वत्त्वात्' इति सूत्रार्थे प्रकटयन् प्राचीनकर्मपरिपाकविशेषात् शास्त्रानुष्ठानयोग्यावस्था जीवस्य सिध्यतीत्याह—सार्थमिति। हितोक्त्या सार्थं शास्त्रम्। हितञ्च कर्तुरधिकारिणः। तेन कर्तृत्वाभावे शास्त्रमेव भज्येत। सा च शास्त्रयोग्या दशा नियतिनियमिता = प्राचीनकर्मपरिपाकविशेषात् सिध्यतीत्यर्थः। तेनान्यस्यापि भवेदित्यादिकं चोद्यजातमपाकृतम्। तस्मात् सर्वैः प्रमाणैर्ज्ञाता कर्ता भोक्ता च पुमान् भातीति निगमयति—ज्ञातेति ॥ २३५ ॥ इति कर्त्रधिकरणम् ॥ ५८ ॥

## ५९ ॥ अथ परायत्ताधिकरणम् ॥ २-३-६ ॥

सूत्रम्—परात्तु तच्छ्रुतेः ॥ कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ ४०, ४१ ॥

(२३६) कर्ता न ह्यन्यतन्त्रः स्मरति खलु तथा पाणिनिश्चान्यथा चेत्
आज्ञा कुर्यान्न कुर्यादिति तु निगलिते भावनादेशवत् स्यात्।
नैवम्; कर्माक्षकालप्रभृति(प्रकृति)परवशे कर्तृतां तत्फलञ्च
स्वीकृत्याऽऽत्मेशमात्रे श्रुतिशतविदिते द्वेष इत्थं दुरन्तः ॥ १७ ॥

'इदं जीवस्य(स्योक्तं) कर्तृत्वं किं स्वातन्त्र्येण, उत परमात्मायत्तमिति [चिन्त्यते]' इति भाष्य एव सङ्गतिरुक्ता। तदर्थविचारस्तु-किं जीवस्य कर्तृत्वं परमात्मायत्तम्, उत स्वायत्तमिति। किं परमात्मा-यत्तत्वे विधिनिषेधशास्त्रानर्थक्यं(वैयर्थ्यं) स्यात्, नेति। अत्र जीवः स्वतन्त्रः, परतन्त्रो वा; स्वतन्त्रश्चेत्,

---

बुद्धौ तत्सद्भाववर्णनञ्च विभुत्वनिर्विकारत्वरूपयुक्तिमूलकं सांख्यकृतमयुक्तम्। विधितदितरयोः विधिनिषेधयोः। इदं बहुवचनं प्रवृत्त्यन्वयि। विधेर्निषेधस्य च प्रवृत्तिनिवृत्तिरूपकार्योद्देशेनैव प्रवृत्तिः। तच्च कार्यं सामग्र्यपेक्षम्। सामग्री च पूर्वोक्तज्ञानादिः। इयं लोकसिद्धा प्रवृत्तिः शास्त्रेऽपि भाव्या। तत्र शास्त्रप्रवृत्तिर्न प्रियमात्रोद्देशेन; किंतु हितस्य अनिष्टाननुबन्धिसुखहेतोर्बोधनेन शास्त्रं सार्थकम्। लौकिकविधिवत् शास्त्रं सर्वाधिकारिकमपि न भवति। पूर्वकर्मरूपनियत्यधीनवर्णाश्रमादिदशाऽप्यपेक्ष्यते। एतावद्वैषम्येऽपि ज्ञातृत्वकर्तृत्वभोक्तृत्वानां सामानाधिकरण्यमात्मनिष्ठत्वं च न शास्त्रं वारयतीति सर्वप्रमाणसिद्धं सर्वाकारवत्त्वमत्राधिकरणे साधितं मन्तव्यम् ॥२३५॥ इति कर्त्रधिकरणम् ॥ ५८ ॥

१७. स्वाधीनत्रिविधचेतनाचेतनस्वरूपस्थितिप्रवृत्तिकत्वं ब्रह्मणः प्रसिद्धम्। तत्र प्रवृत्त्यंशेऽपि तदधीनत्वं कियदिति विचार्य निर्णीयते; अचेतनव्यापाराणां चेतनसंकल्पमन्तरेणासंभवात् तन्न विचारणीय-मिति चेतनव्यापाररूपायां प्रस्तुतकृतावेव तत् विचार्यते। तत्र प्रथमसूत्रार्थे पूर्वोत्तरपक्षविशदीकरणेन दर्शयति कर्तेति। जैवं कर्तृत्वं परमात्मायत्तमिति न युक्तम्। कर्ता हि नान्यतन्त्रः, किंतु स्वतन्त्रः। न

'परात्तु तच्छ्रुतेः' इति पारतन्त्र्यकथनं कथं स्यात्। परतन्त्रश्चेत्, कुर्यात्, न कुर्यादिति विधिनिषेध-शास्त्रे कर्तृत्वं कथं स्यात्। न हि निगलितस्य पुरुषस्य धावनं विधीयत इति। तदिदमाह-कर्तेति। न हि परतन्त्रः कर्ता भवितुमर्हति। 'स्वतन्त्रः कर्ता' इति स्वातन्त्र्यमेव कर्तृत्वं स्मरति पाणिनिः। परतन्त्रं प्रति 'कुर्यात्', 'न कुर्यात्' इति प्रवृत्तिनिवृत्तिविधाने दोषमाह-अन्यथा चेदिति। न हि निगलितस्य पुरुषस्य धावनमादिश्यमानं शक्यते कर्तुमिति। एवं जीवस्येश्वरपरतन्त्रस्य करणाकरणविधानं न योयुज्यते। स्वातन्त्र्यपक्षस्तु भवतैव परित्यक्तः इत्युभयथाऽपि न घटत इति। उक्तं पक्षं प्रतिबन्द्या निराकरिष्यन् स्वरूपमेव तावत् प्रतिक्षिपति-मैवमिति। तदेव विवृणोति-कर्मेति। कर्माधीनं विश्वम्, इन्द्रियाधीनं कालाधीनं प्रकृत्यधीनं नियत्यधीनमिति च जीवस्य तत्तत्पारतन्त्र्ये सत्यपि जीवस्य कर्तृत्वं न भ्रश्यतीति वदामः। अयमर्थः—द्विविधं हि कर्तृत्वम्—प्रयोजककर्तृत्वम्, प्रयोज्य-कर्तृत्वञ्चेति। तत्र, 'अन्तःप्रविष्टश्शास्ता जनानां सर्वात्मा', 'य आत्मानमन्तरो यमयति' इत्यादि-प्रमाणबलात् यद्यपीश्वरस्यैव सर्वप्रयोजककर्तृत्वम्, तथापि तेनैवेश्वरेण दत्तशक्तिकस्य जीवस्यापि

---

केवलं लोकप्रसिद्धिः; पाणिनिरपि तथा स्वतन्त्रत्वेन कर्तारं व्याकरणरूपस्मृतौ निर्दिशति। अन्यथा चेत्=अस्वतन्त्रश्चेत्—आज्ञा व्यर्था। ननु परोपदेशश्रवणेन कार्यकर्तारोऽप्युपलभ्यन्ते। तत् कथं स्वतन्त्र एव कर्तेति इति चेन्न-परोपदेशस्य स्वातन्त्र्यवारकत्वाभावात्। स्वातन्त्र्यं हि स्वेतरकारकाप्रयोज्य-व्यापाराश्रयत्वम्, कर्तव्यविषयकज्ञानचिकीर्षाप्रयत्नाश्रयत्वं वा। इदं परोपदेशस्थलेऽप्यक्षतम्। न हि गामानयेति प्रेरणाधीनगवानयनकर्तृ वं स्वातन्त्र्यरूपं पाणिनिर्नेच्छति॥ तर्हि परायत्तं जीवस्य कर्तृत्वमिति सिद्धान्तः कथमाक्षिप्यत इति चेत्—स्वातन्त्र्यरूपज्ञानचिकीर्षासंपादकपरोपदेशाधीनत्वरूपं परायत्तत्वं न प्रतिषिध्यते। किंतु उपदेशमात्रेऽनुपरम्यान्तःप्रविश्य हस्तपादादिचालनेन कार्यनिर्वर्तकत्वरूपं प्रेरकत्वं प्रतिषिध्यते। तथाहि सति वात्यास्कन्दितस्य प्रवाहमध्यपतितस्य वा पुंसः क्रियेव अस्वाधीनो भवति सर्वः पुरुषव्यापारः। एवमचेतनप्रतिमादिवच्चेत् पुरुषस्य व्यापारः स्यात्-कुर्यादिति, न कुर्यादिति च विधिनिषेधरूपाज्ञाभूतं शास्त्रं किमर्थम्। न हि प्रतिमादिराज्ञाप्यते। प्रवर्तकश्चेश्वरः प्रकृतविषये पुरुषदेहं व्यापारयन् कर्तुमादिशति, अव्यापारयन् वा। आद्ये आदेशो व्यर्थः। अन्त्ये स्वयं व्यपरणा-समर्थे उपदेशः निगलिते=शृङ्खलाबद्धं प्रति धावेति क्रियमाणादेशवत् व्यर्थः; आदेष्टुर्मौढ्यापादकश्चेति। इमं पूर्वपक्षं निरस्यति मैवमिति। एवं मा भूत्। तत्र हेतुमाह कर्मेति। ईश्वरः प्रतिमाचालनन्यायेन प्रवर्तयतीति न ब्रूमः, किंतु ज्ञानेच्छाप्रयत्नान् उत्पाद्यैव; 'मत्तः स्मृतिर्ज्ञानमपोहनञ्च' इति तदुत्पादनप्रतीतेः। यत इदं कर्तृत्वम्, अतस्तत्फलञ्चानुभाव्यं भवति॥ अन्याधीनत्वे कथं निषिद्धव्यापारमुत्पाद्य फलप्रदानमिति चेत्-ईश्वरविषये विवादेऽपि, 'अधिष्ठानं तथा कर्ता करणं च पृथग्विधम्', 'कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम्' (श्वे.) इत्युक्तरीत्या न केवलजीवाधीनं किञ्चिदस्ति। किंतु सर्वं कर्माधीनं तत्तदिन्द्रियाधीनं कालाधीनं प्रकृत्यधीनं पूर्ववासनारूपनियत्यधीनं तत्तद्देहाधीनञ्च। आत्मा तु सतोऽसतो वा साधारणकारणम्, कर्मादिकमेव मुख्यञ्च। अतस्तत्परवशतया अवर्जनीयकृत्याश्रये कथं फलप्रदानम्। अन्यादृशकर्मकालदेहेन्द्रियादिमत्त्वे ह्यहमेवं न कुर्याम्, अतः कथं इदं मे फलमिति हि

प्रयोज्यकर्तृत्वमस्त्येवेति, 'कर्ता शास्त्रार्थवत्त्वात्' इति जीवकर्तृत्वमुच्यत इति न कश्चित् विरोधः। अयमत्र शब्दान्वयः—कर्मादीनां सामान्यकारणत्वमभ्युपगम्य तत्परतन्त्रजीवेऽपि कर्तृत्वमभ्युपगच्छद्भिर्भवद्भिरीश्वरप्रतिक्षेपप्रयासः श्रुतिप्रामाण्यप्रद्वेषनिबन्धनः। श्रुतयो हि जीव ईश्वरप्रेरित एव चिन्तितनिमिषितादिकं निखिलमपि कर्म करोतीति निर्मत्सरमेव प्रतिपादयन्ति। स्मृतयोऽपि तामेव श्रुतिमनुधावन्तीति निपुणविदां निर्णयः॥ २३६ ॥

(२३७) साधारण्येन हेतुः सलिलमिव विभुः सर्वकार्याङ्कुराणां
वैषम्यं त्वा(चा)विरिश्चात् प्रतिनियतफलैः प्राणिनां कर्मबीजैः।
साम्यं स्वस्य स्वगीतम्; श्रुतमपि; तदिहाधोनिनीषादिभेदः
तादृक्कर्मानुरूप फलमिति नियतोऽनादिरेष प्रवाहः ॥ १८ ॥

नन्वीश्वरस्यैव सर्वकारणत्वे केषाञ्चित् सुखप्रदानम्, परेषां दुःखप्रदानमिति वैषम्यदोषः स्यादित्याशङ्क्य कारणविभागप्रदर्शनेन परिहरति—साधारण्येनेति। अयमर्थः—लोके हि सर्वाङ्कुराणां साधारणकारणं सलिलम्, विशेषकारणं बीजमित्युक्तमेव। दृष्टमेतत्। एवमीश्वरोऽप्यतीतानागतवर्तमानरूपाणामशेषाणामपि कार्याणामेक एव कारणम्। तत्तत्पुरुषाश्रितानि पुण्यपापरूपाणि कर्माणि विशेषकारणानीति न वैषम्यगन्धः। ईश्वरस्य साम्यम्, 'समोऽहं सर्वभूतेषु' इति स्वगीतम्।

---

न ब्रवीति कश्चित्। सत्फलविषये समुचिततरं भावयंश्च असत्फलमात्रे कथमाशंकेत। एवमप्यस्य कर्तृत्वात् फलमवश्यानुभोक्तव्यञ्चेत्, एवमीश्वराधीनत्वेऽपि कर्तृत्वसत्त्वात् फलं भोक्तव्यमेव। अतोऽनन्तप्रमाणसिद्धस्येशस्य युक्त्या प्रतिषेधः केवलं द्वेषकृतः। द्वेषश्चेत्थम्भूतो दुरन्तः निष्फलः विपरीतफलहेतुश्चेति॥ आत्मेच्छामात्रे इति। अन्तर्यामिभूतेश्वरे इत्यर्थः। केवलेश्वर पूर्वपक्षीष्टः आज्ञादर्शित्वेन॥ अन्तः प्रविश्य नियमनाभावेऽपि कार्यसंभवे किमर्थमेतत् सिद्धान्ते इति चेत्-'स्वात्यन्तपारवश्यकल्पनाय स्वनियमनमन्तरा कार्यं नेच्छति भगवान्' इति श्रुतिबलाद्दृष्टव्यम्। न हि तत्र तस्य कश्चिदायासोऽस्ति॥ २३६ ॥

१८. एवं तर्हि स्वयमेव सति असति वा यथेच्छं प्रेर्य फलं दिशत ईश्वरस्य वैषम्य नैर्घृण्यञ्च दोषः स्यादिति शंकायां श्लोकद्वयेन क्रमेणोभयं परिहरति साधारण्येनेत्यादिना। 'एष एवासाधु कर्म कारयति तम्, यमधो निनीषति। एष एव साधु कर्म कारयति तम्, यमेभ्यो लोकेभ्य उन्निनीषति' इति वचनं हि अन्तर्यामित्वविवरणरूपम्। अतो वैषम्यमवर्जनीयमिति शंका। तद्वचनमन्यविषयकम् साम्यस्य प्रामाणिकत्वात् अन्तर्यामित्वं तदनुकूलं वक्तव्यम्। तथाच स्वातन्त्र्यवशादेवेश्वरः कर्मानुरूपं फलं दद्याम्, पुनः प्रेर्यं स्वेच्छयेति संकल्पितवानस्ति। प्रतिनियमनं कर्म शीलयति। अतो लोके ज्ञानं धनं मौढ्यं दारिद्र्यं सुखं दुःखमित्यादिकार्याणां बीजोत्पन्नाङ्कुरतुल्यानां विभुः व्यापी [सलिलमपि क्षेत्रं व्याप्नोति।] साधारण्येन अविशेषेण हेतुर्भवति। अङ्कुरेषु शालियवाद्याकारवैषम्ये हि न सलिलं प्रयोजकम्; तद्वत् अत्रापि। आविरिश्चात्=ब्रह्मप्रभृतिस्तम्बपर्यन्तानां प्राणिनां यत् वैषम्यं दृश्यमानम्, तत् प्रतिनियतफलैः व्यवस्थितफलोत्पादकैः बीजतुल्यैः कर्मभिः। तदधीनमिति यावत्। तदुक्तं पराशरेण, "निमित्तमात्रमेवासौ सृज्यानां सर्गकर्मणि। प्रधानकारणीभूता यतो वै सृज्यशक्तयः" इति। तदिदं साम्यम्, 'समोऽहं

'अन्तःप्रविष्टः शास्ता जनानां सर्वात्मा' इति श्रुतिप्रतिपन्नश्च। तेनानपलपनीयमेव साम्यम्। तर्हि कस्मिंश्चिद्विषये भगवानेव क्रुद्धस्सन् अधोनिनीषां करोति ; अपरत्र प्रसन्नस्सन् उन्निनीषामिति किमुच्यत इत्याशङ्क्य श्रुतिद्वयार्थं विविच्य दर्शयति—तदिहेति। यं पूर्वमेवात्यन्तपापप्रवणं भगवानधोनिनीषति, तमिदानीमसाधुकर्म कारयति। यं पुनरत्यन्तपुण्यप्रवणमुन्निनीषति, तमधुना साधुकर्म कारयतीति। अयमर्थः—पूर्वकर्मानुरूप्येण उत्तरेषु पुण्येषु पापेषु वा भगवानेव प्रवर्तयतीति। पूर्वकर्मानुरूप्यवचनात् वैषम्यदोषः परिहृत एव। 'न कर्माविभागादिति चेन्नानादित्वात्' इति कर्मप्रवाहस्यानादित्वात् इति तेन प्राचीनकर्मानुगुणतया भगवत एव सर्वदा सर्वत्र सर्वात्मप्रवर्तकत्वमिति न जीवस्य स्वातन्त्र्यम्। नापि क्वचिदपि परमपुरुषस्य कदाचिदप्यप्रवर्तकत्वम्। नापि च वैषम्यनैर्घृण्यादिकम्। इत्थं परदोषोऽश्रुत एव प्रयातीति सुशोभनमेतत् ॥ २३७ ॥

(२३८) काले दुःखोपशान्तिं जनयति भगवान् व्याजमात्रावलम्बी
या दुःखापाचिकीर्षा परहितमनसः सैव तस्यानुकम्पा ।
दत्ते देहादियोगं(दि योग्यं ?) दिशति च निगमं'मान् )'वक्ति वेदान्तसारं
निस्सीमानन्दयोगं निरुपधिसमये सौति पुंसां तयै(थै)व ॥ १९ ॥

'ननु प्राचीनकर्मानुरूपमीश्वरः फलं ददातीत्युक्तम्। तर्हि कर्मैव सुखदुःखप्रदानयोः तन्त्रम्। तेनेश्वरस्य का करुणा? किञ्च तस्या अपेक्षणम्? कथञ्च तस्याः संरक्षणोपकारप्रकारः सेत्स्यति' इत्याशङ्क्य सर्वमप्येतत् समाधत्ते—काल इति। अयमर्थः—परानुग्रहः करुणा। सा च स्वार्थनिरपेक्षपरदुःखनिराचिकीर्षा। तस्याश्च प्रयोजनं सत्त्वोत्तरदेहप्रदानादिमुखेन परमपुरुषकैङ्कर्यसाम्राज्यलाभप्रदानपर्यन्तः सर्वोऽप्युपकारविशेषः। अयमत्र शब्दान्वयः—काले = अज्ञातयादृच्छिकादि-

---

सर्वभूतेषु' इति स्वेनैव गीतायामुक्तम्। श्रुतमपि सुबालोपनिषदादौ, 'सर्वस्य शरणं सुहृत्', 'माता पिता भ्राता निवासः' इत्यादि। नन्वेवम्, 'एष एव' इत्यादिपूर्वोक्तवाक्यविरोध इत्यत्र, तत्तु व्यवस्थितविषयम्, न तु सर्वविषयकमित्याह अथ इति। स्वतन्त्रत्वात् स्वेच्छया यं कमप्यध एव नयेत्, कमप्युन्नयेच्चेति नानेन वचनेनोच्यते। तदा हि वैषम्यस्यावकाशः। किंतु योऽतिमात्रं प्रातिकूल्ये व्यवसितः, तं तदीयतादृशकर्मानुगुणफलदित्सायुक्तोऽध एव पातयति। यस्त्वतिमात्रमानुकूल्ये व्यवसितः, तमनुगृह्णन् उन्नयतीति। तत्तदपि तत्तत्कर्मफलमेव। उन्नयनञ्चेदम्, 'यमेभ्यो लोकेभ्य उन्निनीषति' इति सर्वलोकोपरितनलोकप्रापणरूपत्वावगमात् मोक्षदानरूपम्। अत एव शांकरोक्तरीत्या सर्वकर्मविषयकत्वेव पूर्वपूर्वकर्मफलदित्साया एवात्रोक्तिरिति वैषम्यपरिहारसंभवेपि न सर्वविषयकत्वं वाक्यस्य। अधोनयनञ्चासुरराक्षसयोनिष्वेव पातनम्। ये पुन. काष्ठाप्राप्तानुकूल्यप्रातिकूल्यरहिताः मिश्राधिकारिणः इतरे सर्वे संसारिणः, तेष्वनुजिघृक्षावसरप्रतीक्षत्वात् सर्वसुहृदोऽस्य यथाकर्मफलदानेऽपि न वैषम्यप्रसक्तिरिति ॥२३७॥

१९. वैषम्यं वारितम्। अथ नैर्घृण्यदोषशंकां परिहरन् सुजनसार्वभौमत्वमपि स्थापयति काले इति। बुद्धिपूर्वं कृतानां महतामप्यपराधानां फले दुःखेऽवश्योत्पाद्ये सत्यपि यत् अज्ञातं प्रासङ्गिकं यादृच्छिकं परमूलमित्यादि तत्तदपि सुकृतत्वेन परिगणय्य तद्व्याजेन दुःखानि निवारयति। तद्धि दयाकार्यमेव। दया द्विविधा—निर्हेतुका सहेतुका च। आद्या सार्वकालिकं परहितप्रावण्यम् निरुपाधिकसुहृत्त्वम्। द्वितीया

सुकृतसम्पत्तिकाले भगवान् दुःखोपशान्तिं जनयति । स च व्याजमात्रमवलम्ब्य करोति । अल्पीयसा सुकृतेनानन्तफलप्रदानात् सुकृतस्य व्याजत्वसिद्धिः । तेन तत्र करुणावकाशः । करुणाया लक्षणं वैशद्याय दर्शयति—या दुःखेति । परहितमनसः पुरुषस्य सैव परदुःखापचिकीर्षा करुणेत्युच्यते । कृपाफलं उपकारविशेषं दर्शयति दत्त इति । जायमानं हि पुरुषं यं पश्येत् मधुसूदनः। सात्त्विकः स तु विज्ञेयः' इत्युक्तरीत्या देहादि योगं(योग्यं?) तावत् सात्त्विकं दत्ते । दिशति च निगमम्—'साक्षान्नारायणो देवः' इत्युक्तरीत्या देशिकरूपेण स्थित्वा निगमं दिशति । 'सकल्पं सरहस्यञ्च तमाचार्यं प्रचक्षते' इति साक्षात्प्रधानाचार्यरूपेण वेदान्तशास्त्रमपि व्याचष्टे । ऐहिकमेतत्फलमनुकम्पायाः सहजायाः । आपवर्गिकमपि व्याचष्टे—निस्सीमेति । निरुपधिसमये देहावसानानन्तरं तयैव परमकृपया निस्सीमानन्दयोगं पुंसां सौति परस्मिन् पदे, 'निरञ्जनः परमं साम्यम्', 'भोगमात्रसाम्यलिङ्गाच्च' इत्युक्तं जनयतीत्यर्थः । एतत् सर्वं कृपाफलत्वान्न परिचोदनीयमित्यर्थः ॥ २३८ ॥

(२३९) दोषस्स्यान्निग्रहांशो यमयितुरिति चेन्नोपमर्दासहत्वात्
स्वा(ना)निष्टं नेश्वरे हि(हीश्वरस्य) प्रसजति न परानिष्टमस्य प्रतीपम् ।
कारुण्यं सावकाशं क्वचिदिति कथितं साक्षिताद्यञ्च सुस्थम्
इष्टे चैतत्स्वभावे, फलद इति धिया युज्यते तत्प्रवृत्तिः ॥ २० ॥

एवं निग्रहानुग्रहयोर्द्वयोरपि भगवन्निष्ठत्वादनुग्रहांशस्य गुणत्वं निग्रहांशस्य दोषत्वं स्यादित्याशङ्क्य परिहरति—दोष इति । सर्वनियन्तुरीश्वरस्य क्वचिन्निग्रहो दोषः स्यात् । सर्वसमत्वभङ्गादित्याशङ्का । उक्तामाशङ्कां प्रतिक्षिपति—नेति । तत्र हेतुमाह—उपमर्दासहत्वादिति । विकल्पासहत्वादित्यर्थः। विकल्पासहत्वमेव प्रकटयति—स्वा(ना)निष्टमिति । अयमर्थः—दोषो ह्यनिष्ट एव ; न पुनरिष्टः। तेन किमीश्वरस्य[1] दोषः स्यादित्यनिष्टं प्रसज्यते, किं वा जीवस्यानिष्टम्? न

अनुक्रोशानुकम्पादिपदमुख्यार्थः फलोपधायिका परदुःखनिराकरणेच्छैवोत्कटा । परहितप्रावण्यं नित्यसूरिप्रभृतिसर्वजीवविषयम् । दुःखापाचिकीर्षा संसारिविषयिणी । सा तत्रास्ति चेत् , कथं न करुणा ? अत एव तयैव सांसारिकदुःखनिराकरणेच्छयैव । तयैवेति क्वचित्कम् । देहादिकरणकलेबरादि योग्यं सात्त्विकं मानुषादि दत्ते । उपरि योगं सौतीति प्रयोगात् अत्र दत्ते इति प्रयोगात् योगमित्यत्र योग्यमिति पाठः स्यात् ; योग्यं देहादि दत्त इति । नारकदेहादिदानं न दुःखापाचिकीर्षाकृतम् । शास्त्रार्थग्रहणाय शरीरादि प्रदाय शास्त्रमपि प्रापयति । विरज्य वैकुण्ठप्रेप्सापाप्तये वेदान्तार्थप्रवचनमपि साक्षात् अन्यमुखेन च करोति । तथा निरुपधिसमये सञ्चितपुण्यपापप्रहाणावसरे निरवधिकानन्दस्थानपरमपदसंबन्धं सौति, येन स्वाभाविकस्वरूपाविर्भावः संपद्यते । अज्ञातसुकृतादिकं व्याजीकृत्य निरतिशयानन्दप्रापणपर्यन्तप्रवृत्तिर्हीयं तस्य सुजनसार्वभौमत्वं निश्चाययतीति कथं नैर्घृण्यावकाशः । यत्तु दण्ड्यान् दण्डयतीति, तन्न तन्नैर्घृण्यापादकम् । लोकेऽपि तदनिष्टेः । दण्डनस्यैव हि तत्त्वात् तदपि दयाकार्यमिति सुवचम् ॥ २३८ ॥

२०. नन्वेवं वैषम्यनैर्घृण्यपरिहारेऽपि निर्दोषत्वं न भवति, निग्रहस्यापि तेन क्रियमाणत्वात् तस्यैव दोषत्वादित्यत्राह दोष इति । निग्रहानुग्रहयोस्तेन क्रियमाणयोर्निग्रहरूपोंशो दोष एव नियन्तुरिति चेन्न ; उपमर्दे क्रियमाणे प्रश्नस्य तदसहत्वात्=पक्षशात् । कथमुपमर्द इति चेत्—यद्धि स्वानिष्टम् ,

1 ईश्वरस्येत्यस्य अनिष्टमित्यत्रान्वयः । अयं स्वानिष्टपदार्थः । परानिष्टपदार्थमाह जीवस्यानिष्टमिति ।

तावदीश्वरानिष्टप्रसञ्जनं कर्तुमेव शक्यते ; सर्वशासितुरीश्वरस्येश्वरान्तराभावेनानिष्टकर्तुरेवाभावात् । न च स्वस्य स्वयमेवानिष्टं करोति ; भ्रान्तत्वप्रसङ्गात् । परानिष्टप्रसञ्जनं पुनरिष्टप्रसङ्ग एव । ईश्वरनिग्रहस्य जीवानिष्टरूपत्वेनैव धर्मिग्राहकप्रमाणसिद्धत्वात् । न परानिष्टमस्य प्रतीपमिति—परानिष्टकरणमीश्वरस्य तत्तत्कर्मानुरूपमभीष्टत्वादनिष्टमेव न भवतीत्यर्थः । अन्यथा कर्मानुरूपफलप्रदानाभावे सतीश्वरत्वमेव भज्येत । प्रतिकूलमेव प्रसज्येत । एवं तर्हि निग्रहं कुर्वाणे कारुण्यस्य कोऽवकाश इत्याशङ्क्याह—कारुण्यमिति । अयमर्थः—ईश्वरस्य कारुण्यमस्तीत्यस्माभिरुच्यते, न पुनर्निग्रहो नास्तीति ; द्वयोरपि प्रमाणसिद्धत्वात् । 'अतिदूरमभक्तानां भक्तानां पुरतः स्थितः' इति ह्युच्यते । तेन कारुण्यावकाशो वाच्यः । करुणा हि द्विविधा—नित्याऽनित्या च । नित्या पुनः करुणा सर्वात्मसत्तादिसंरक्षणरूपिणी । अनित्या पुनस्तत्तदज्ञातसुकृतादिकर्मानुरूपविशेषफलप्रदानरूपा । तदुक्तमाचार्यपादैरेवान्यत्र स्तुत्यारम्भे—'मुकुन्दकरुणां वन्दे मुग्धेष्वधिकवत्सलाम् । स्वरूपसंस्तवौ यस्या निर्हेतुकसहेतुकौ ॥' इति । तेन सर्वात्मविषयं सकलफलप्रदानसङ्कल्परूपं सामान्यकारुण्यं नित्यमेव निर्हेतुकञ्च, एतत् तत्तत्काले विशेषफलप्रदानसङ्कल्परूपमनित्यं सहेतुकञ्चेति विभागः । अन्यथा कृत्स्नशास्त्राप्रामाण्यप्रसङ्गात् । कथितमिति । क्वचिदधिकारिणि कारुण्यं सावकाशमिति पूर्वश्लोक एवोक्तमित्यर्थः । तर्हीश्वरस्यैव सर्वकर्तृत्वे तत्र तत्र प्रमाणेषूच्यमानं साक्षित्वानुमन्तृत्वादिकं कथमुच्यत इत्याशङ्क्याह—साक्षितेति । तुलायां प्रमाणप्रमेयव्यवहारन्यायेनैकस्यैवेश्वरस्य कर्तृत्वकारयितृत्वसाक्षित्वानुमन्तृत्वादिसर्वलक्षणसमवायात् सर्वोऽपि व्यवहारो युक्त इत्यर्थः । स्वतन्त्रः कर्ता, प्रयोज्यकर्तुर्जीवस्य कारयितृत्वात् प्रेरकः, प्रवृत्तस्योत्तरोत्तरं प्रवर्तकत्वादनुमन्ता, अङ्कुरादिषु सलिलवत्(स्यैव) सर्वेष्वपि कार्येषु सामान्यहेतुत्वादुदासीनः, सर्वावस्थायां सर्वद्रष्टृत्वात् साक्षी, विशेषकार्येषु तत्तत्कर्मानुरूपं प्रवर्तकः कर्मभिस्सर्वं करोतीति सहकारी, सर्वस्वामित्वेन समाश्रितसंरक्षण(रक्षा)रूपफलस्यापि स्वफलत्वात् फली, 'फलमत उपपत्तेः' इति फलप्रदत्वात् फलद इति न कोऽपि विरोधः । तर्हीश्वरस्य निग्रहानुग्रहसाधारणस्य कथं प्रपदनीयत्वमित्याशङ्क्य परिहरति—दृष्ट इति । ईश्वरस्यैतत्स्वभावे दृष्टे सति

---

स्वानिष्टे पर्यवसायि वा स दोषः । स्वयमिष्टैव निग्रहकरणात् निग्रहः स्वानिष्टो न भवति । नापि स्वानिष्टपर्यवसायी । सर्वेश्वरत्वादेव तदनिष्टस्य ततस्तत्रोत्पादनं हि न केनापि शक्यं भवति । अत एव तस्य निर्दुःखता । परानिष्टं तस्मिन्नस्ति ; सोऽपि दोष एवेति चेत्—शुभगुणानपि स्वद्गतान् असूयवो नेच्छन्ति । तावता किं ते तस्य दोषाः ? अतः परानिष्टत्वमप्रयोजकमिति न तादृशानिष्टं न तद्वृत्तित्वानर्हम् । नन्वेवं तर्हि तस्यानवधिकातिशयं कारुण्यं न स्यादिति चेत्—न ; यत्र यत्र कारुण्यं प्रदर्शनीयम्, तत्र तत्र कचित् तदप्रसरणे हि अनवधिकातिशयत्वभंगः । तत्तु नास्तीति पूर्वश्लोके कथितम् ।

एवं तावत्—परमात्मनः सर्वप्रेरकत्वेऽपि जीवस्य स्वातन्त्र्यहानिर्न भवति ; अत एव निग्राह्यत्वमनुग्राह्यत्वञ्च ; तथापि परमात्मा निर्दोष एवेति कर्तृत्वं परप्रेरणाधीनमित्युक्तम् । एवं प्रेरकत्वे तस्य साक्षित्वमनुमन्तृत्वञ्च शास्त्रोक्तं कथम् ? साक्षित्वं हि निर्व्यापारत्वम् । अनुमन्तृत्वञ्च प्रथममप्रेरकतयास्थितस्य पश्चात् प्रवृत्तपुरुषाश्रयाविघातेन प्रवर्तकतया स्थितिरित्यत्राह साक्षितेति । जीवकृतकर्मनिरपेक्षं प्रवर्तकत्वाभावात् साक्षित्वम् । स्वप्रेरितं पुरुषं पश्चादपि न निवारयतीति अनुमन्तृत्वमिति प्रवर्तकत्वा-

सनाथानां संरक्षको भवति, अनाथानां शिक्षको भवतीत्येतत्स्वभावे दृष्टे सति। इदमेव दर्शनं प्रपदनप्रवृत्तिकारणमित्यर्थः। न पुनरिदं प्रपदनप्रवृत्तेर्विरुद्धम्=निग्रहानुग्रहसमर्थमेव राजानं प्रपद्यन्ते प्राणिनः; फलञ्च लभन्ते। न पुनरन्यतरासमर्थं कन्या(रथ्या?)पुरुषादिकम्। फलद इति धिया=निग्रहानुग्रहफलद इति धियेत्यर्थः॥ २३९॥

(२४०) प्रत्यङ्ङात्माऽहमर्थः प्रमितिपरवतां कर्तृतादिश्च तस्मिन्
स्वेच्छापूर्वप्रवृत्तेरयमचिदधिकस्तावते(दी)शानतुल्यः।
ईशस्तु स्वेच्छयैव प्रयतत इति तन्निघ्नमन्यत् समस्तम्
सारथ्यादिक्रमेण प्रतिनियतगतिस्स्यात् त्रयाणां प्रप(वृ)त्तिः॥ २१॥

नन्वीश्वर एव कर्ता चेत्, तर्हि मृत्पिण्डप्रायस्य जीवस्य किं कर्तृत्वम्? तथाच भोक्तृत्वमपि तथा न स्यात्, अकर्तुरभोक्तृत्वादित्याशङ्क्येश्वरोऽपि कर्ता जीवोऽपि तत्प्रयोज्यत्वेन कर्तेति कर्तृप्रकारविशेषं विभज्य दर्शयति—प्रत्यङ्ङिति। जीवस्य तावत् कर्तृत्वं सुप्रसिद्धमेव। अहं जानाम्यहं करोमीति प्रत्यगर्थ एव सर्वकार्येषु कर्ता स एवाऽऽत्मा; न पुनश्चिन्मात्रं नाप्यहङ्कारः; तयोर्द्वयोरप्यचेतनत्वात्। अत एवोच्यते—प्रमितिपरवतामिति। प्रमाणमार्गमनुसरतां(र्गानुसारिणां) सर्वेष्वपि कार्येषु परमात्मपरतन्त्रो जीवः प्रयोज्यकर्तेत्यर्थः। तदिदमाह—कर्तृतादिश्च तस्मिन्निति। ननु रथो गच्छतीत्यादावचितोऽपि कर्तृत्वं प्रतीयते; तत् कथमचेतनाधिको जीव इत्याशङ्क्य चिदचितोर्वैषम्यमाह—

---

विरोधेन निर्वचनीयम्। एवं तर्हि यथाकर्मफलप्रद इति ज्ञानात् कर्मणि जागरूकः स्यात्; न पुनरीश्वरं कश्चित् प्रपद्येतेत्यत्राह दृष्टे चेति। आनुकूल्यप्रातिकूल्यव्यवसायानुरूपफलप्रदत्वरूपे तत्स्वभावे शास्त्रतः स्पष्टमवगते सति आनुकूल्यसंकल्पादिघटितां प्रपत्तिमवश्यं कुर्यादेवेति भावः। चिन्तामणितालेऽपि यथाचिन्तामणि प्रपत्तिरित्येव पाठः। प्रवृत्तिरिति क्वाचित्कम्॥ २३९॥

२१ पूर्वाधिकरणे सांख्यरीत्या कर्तृत्वमचेतनस्यैवेत्याशंक्य जीवे तद्व्यापारविलक्षणं प्रयत्नाश्रयत्वरूपं कर्तृत्वं स्थापितम्। तस्य परमात्मायत्तत्वञ्चात्र। एवं व्यापारशालिनां त्रयाणां तत्त्वानां स्थिते साधर्म्यवैधर्म्ये विविनक्ति प्रत्यङ्ङिति। अहमर्थोऽहंकारः अन्तःकरणं बुद्धिः; कर्तृत्वादिकं तत्रैवेति सांख्यानुयायिनोऽद्वैतिनः। तत्र; प्रमितिपरवताम् अबाधितज्ञानपरतन्त्राणाम्, स्थितेऽपि ज्ञाने तदन्यथाकरणरूपस्वातन्त्र्यहीनानां सताम्; 'अहम्बुद्ध्या परागर्थात् प्रत्यगर्थो हि भिद्यते' इत्युक्तरीत्या आत्मैवाहमर्थः। तस्यैव प्रत्यक्त्वस्योभयसंमतत्वात्। एवञ्च तस्मिन् प्रतीच्येव कर्तृत्वादिकमपि ज्ञातृत्वकर्तृत्वभोक्तृत्वानां सामानाधिकरण्यात्। प्रवृत्तिर्द्विधा-यत्नरूपा व्यापारान्तररूपा च। आद्या स्वेच्छापूर्विका आत्मनिष्ठा। अन्त्या तु देहादावचिति। अतः अहमिच्छामि करोमीति स्वेच्छापूर्वप्रवृत्तिमत्त्वात् अयं जीवोऽचिद्विलक्षणो भवति। तावता प्रत्यक्त्वाहमर्थत्वस्वेच्छाधीनप्रवृत्तिमत्त्वाकारेण सर्वेश्वरतुल्यश्च। एवं चिदचितोर्वैधर्म्यं जीवेश्वरयोः साधर्म्यञ्चोक्तम्। अथेश्वरस्य वैलक्षण्यमाह ईशस्त्विति। स्वेच्छयैव प्रयतते। इतरेच्छानधीनप्रवृत्तिमान्। जीवप्रवृत्तेरितरेच्छाधीनत्वसद्भावात् तद्वैधर्म्यम्। अचिति तु प्रयत्न एव न भवति। प्रवृत्तिरूपसामान्यग्रहणेऽपि अन्येच्छानधीनत्वमचिति नास्ति। एवञ्चेशनिघ्नं तदधीनं समस्तं चेतनमचेतनञ्च। एवं स स्वाधीनत्रिविधचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदः। एवं तत्त्वेषु त्रिषु

स्वेच्छेति । स्वबुद्धिपूर्वप्रवृत्तिलक्षणकर्तृत्वयोगात् व्यापाराश्रयत्वमात्रलक्षणकर्तृत्ववतोऽचेतनात् अन्यो जीवस्तावदीशानतुल्य इति । बुद्धिपूर्वकप्रवृत्तिलक्षणकर्तृत्वमीश्वरस्यापि तुल्यमित्यर्थः । चेतनाचेतनकर्तृत्वाद्विलक्षणमीश्वरासाधारणकर्तृत्वमुक्त्वा विश्वस्य तत्पारतन्त्र्यं स्वभाव इति च निगमयति—ईशस्त्विति । उक्तमर्थं, 'यथा प्रयोग्य आचरणे युक्तः' इत्यादिश्रुतिप्रसिद्धयुग्यस्यन्दनसारथिक्रमेण स्थापयति—सारथ्यादिक्रमेणेति । सर्वप्रवर्तकत्वात् सारथिर्भगवान् । युग्यो जीवो रथबद्धाश्वस्थानीय इत्यर्थः । स्यन्दनं देहः ईश्वरप्रेरितचेतनप्रेर्यत्वात् । रथे हि सारथिना बद्धा युग्या यथेष्टं रथमाकर्षन्तीत्यर्थः । अयमत्र शब्दार्थः—त्रयाणां चिदचिदीश्वराणां प्रवृत्तिर्युग्यस्यन्दनसारथिक्रमेण प्रतिनियतप्रकारेति ॥ २४० ॥

---

व्याप्रियमाणेषु सारथ्यादिदृष्टान्तक्रमेण तत्रत्यपौर्वापर्यसाम्येन प्रवृत्तिर्भाव्या । प्रथमं सारथिः स्वेच्छयैव प्रवर्तते । ततो युग्या अश्वादयस्तत्प्रेरिताः प्रवर्तन्ते । तया प्रवृत्त्या रथे चलनात्मकप्रवृत्तिर्जायते । तदिदं श्रीमति रहस्यत्रयसारे स्पष्टमदर्शि, "युग्यस्यन्दनसारथिक्रमवति त्रय्यन्तसंदर्शिते तत्त्वानां त्रितये यथार्हविविधव्यापारसंतानिनि । हेतुत्वं त्रिषु कर्तृभाव उभयोः स्वाधीनतैकत्र" इति । एवं श्रुतिरपि, 'यथा प्रयोग्यः' इत्यादिः । एवं त्रयाणां प्रवृत्तिः प्रतिनियतगतिः । उपायः उपेयं हेतुः फलञ्च गतिः । व्यवस्थितकार्यकारणा भवतीति यावत् । तावदिति पाठेऽपि अव्ययस्य तावतीत्यर्थः ॥२४०॥

अत्र प्रथमश्लोके कर्माक्षेति सिद्धान्तारम्भात् नादृष्टं किञ्चिदित्याद्युत्तरश्लोकगतितश्च प्रथमप्रवृत्तिमारभ्य अविशेषेण परायत्तत्वमुदितं लक्ष्यते । भाष्यादौ प्रथममौदासीन्यं पश्चादनुमन्तृत्वमिति अन्तर्यामि श्रुतिसंकोचः कुत इति ज्ञायते । तथैव टीकायां व्याख्यातत्वाच्च । तस्य पक्षस्य निरसनेन भाष्यादेरान्यपर्यमत्र विवक्षितमिति कर्तृत्वं स्यादिति श्लोकतोऽवगम्यते इति सारावलिश्रुतप्रकाशिकयोर्भेदं बहवो ब्रुवन्ति । चिन्तामणिरेवं भेदमदर्शीति च । श्रीगीताभाष्यतात्पर्यचन्द्रिकाटिप्पणे टीकाचन्द्रिकयोरैकार्थ्यं स्पष्टं स्थितं प्रदर्श्य, स्वग्रन्थविरोधस्यायुक्तत्वात् सारावलेरपि तदैकार्थ्यं विवेचनीयमिति अस्माभिः प्रकटितम् । अत इह ऐकरस्यानुकूलं सर्वसारावलिश्लोकार्थो लिख्यते । चिन्तामणौ, 'प्रथमप्रवृत्तिरिति प्रवृत्तिप्राथम्यं दुर्वचमनादौ संसारे' इति यदुक्तम् , तत्र एककर्मसंतानप्रवृत्तिकूटान्तर्गतप्रथमप्रवृत्तिग्रहणासंभवो नोच्यते ; प्रथमकर्म, द्वितीयकर्मेति कर्मप्राथम्यग्रहणासंभव एव । अतोऽस्मद्व्याख्यानुकूलमेव तदिति ध्येयम् ।

अयमत्र परायत्ताधिकरणपूर्वपक्षसारः—जानातीच्छति यतते इति यत्नस्येच्छाजन्यत्वे संमन्तव्ये तत्रेश्वराधीनत्वमाचक्षाणैः ज्ञानेच्छापेक्षणं व्यर्थम् । तस्यैव वात्यावारिप्रवाहवत् प्रेरकत्वसंभवात् । एवञ्च ज्ञानोत्पत्त्यर्थयोर्विधिनिषेधशास्त्रयोर्वैयर्थ्यमेव । तदुक्तं भाष्ये, 'यो हि स्वबुद्ध्या प्रवृत्तिनिवृत्त्यारम्भशक्त , स एव नियोज्यो भवति' इति । इदमप्यत्र विवक्षितम्—यदीश्वरनियमनबलेनास्य निषिद्धे प्रवृत्तिरवर्जनीया, तदा तदननुष्ठेयत्वबुद्धिरस्य जाताऽपि न कार्यकरी । यदि च विहिते ईश्वरप्रेरणबलं न भविष्यति, तर्हि तदनुष्ठेयत्वबुद्धिरस्य सुदृढाऽप्यकिञ्चित्करीति किं विधिनिषेधशास्त्रेण इति । एवमत्र वायूदकनीत्या सर्वेश्वरस्य प्रेरकत्वमिति पूर्वपक्ष्याशयनिष्कर्षश्च एतत्सूत्रविवरणपरे, "दैवञ्चैवात्र पञ्चमम्"

(18 14) इति गीताभाष्ये तात्पर्यचन्द्रिकायां विशदः। तर्हि यथावत् परायत्तत्वास्वीकारे अन्तर्यामि श्रुत्यादीनां का गतिरिति चेत्—अत्रायं पूर्वपक्षाशयः—अतिविस्तृतानामशेषकर्मकाण्डानामुपनिषद्- न्तर्गतोपासनविधीनाञ्च वैयर्थ्यमपेक्ष्य कतिपयौपनिषद्वाक्यानां तदुपबृंहणानाञ्च वैयर्थ्यं वरमाश्रयितुम्। अतस्तादृशवाक्यजातं केवलमीश्वरप्रशंसार्थमसदर्थकथकमेवास्तु। यद्वा जगत्स्रष्टुः प्रवृत्त्युपयुक्तज्ञान विषयवस्तुसृष्टिव्यापारमात्रे प्रवृत्तिजनकत्वारोपेण प्रवृत्तमस्तु ; तादृशविषयाभावे पुरुषप्रवृत्त्ययोगात् तथा वाद इति। अथवा गौणो यः कश्चिदर्थ आश्रयणीयः। अन्यथा हि, 'एष एवासाधु कर्म कारयति' इत्यादि- वाक्यस्य यथाश्रुतार्थविवक्षायाम्, ईश्वरः कश्चिद्काण्डे अधो निनीषति; तदर्थं तमसाधु कर्म कारयति, अधो नयति च। पुरुषान्तरविषये तु विपरीतम् इति वैषम्यनैर्घृण्ययोरपि प्रसक्तिः स्यात्। ननु प्रागेव समाहितमेतत् वैषम्यनैर्घृण्ये इति सूत्रे इति चेत्—तत्र- तदनुसार्यर्थपरत्वे वाक्यमित्थम्भूतं स्यात्—एष एव तमधो नयति, योऽसाधु कर्माकार्षीत् इति, यद्वा एष एवासाधु कर्म कारयति तम्, यः प्राक् तदारम्भकपापमकरोत् इति। तस्मात् यथाऽस्य स्वच्छन्दप्रवृत्तिप्रतिपादकवाक्यस्यान्यथानयनम्, तथा सर्वस्यापि नियमनार्थकवाक्यजातस्येति—

अथ सिद्धान्तः—अन्यादृशसिद्धान्तोल्लेखौ द्वौ, 'कर्तृत्वं स्यात् कदाचित्' इति श्लोकाभ्याम्, कर्ता देव इति श्लोकेन च निरसिष्येते। वास्तवः सिद्धान्तः प्रथममुपन्यस्यते। अयमत्र विस्तरः— नियन्तृत्वश्रुतीनामप्रामाण्यस्य गौणार्थपरत्वस्य वा भगवद्वैभवहानिपरत्वात्यन्तानुपपन्नत्वात् यथाश्रुतिनियमनं स्वीकार्यमेव। विशिष्य चानन्यशेषतया अन्तर्यामित्वबोधनायैव प्रवृत्ता, प्रतिस्थानमन्तर्यमनमभ्यस्यन्ती ईषदंशस्याप्यत्यागाय शरीरात्मभावमप्युद्घोषयन्ती श्रुतिर्नैव स्वार्थप्रहाणमर्हति। एतदभिप्रायेण भाष्ये अन्तर्यामिश्रुत्युपादानम्। एतावता वायूदकादिवत् ईश्वरस्य प्रेरकत्वं नोच्यते ; येन विधिनिषेधवैयर्थ्यम्। ज्ञानेच्छाप्रयत्नाश्रयत्वरूपकर्तृत्वमभ्युपगम्य तस्येश्वरायत्तत्वं हि ब्रूमः। अतः प्रवृत्तिकारणीभूतेच्छाजनक यागाद्यर्थस्मृतिं तत्कारणमनुभवात्मकज्ञानं तन्निष्पत्त्यर्थप्रमाणेतिकर्तव्यताभूतमूहात्मकज्ञानम् एवमन्यच्चो त्पाद्य तद्द्वारैव प्रेरकत्वम्। एतदर्थं भाष्ये, 'मत्तः स्मृतिर्ज्ञानमपोहनञ्च' इति वाक्योपादानम्। अत्र तत्तत्पुरुषभेदेन इष्टानिष्टहेतुविचित्रप्रवृत्तिहेतुज्ञानजननात् ईश्वरे वैषम्यं न मन्तव्यम् ; ज्ञानोदयदेशे हृदि स्थितेन तत्र तत्र भूतानि प्रवर्तयता तेन, येन यादृशं यन्त्रमारूढम्, यत्र च माया यादृशगुणोद्भव मुखेन स्वपरिणामभूतयादृशपरिकरमुखेन च भ्रममुत्पादयेत्, तस्य तद्यन्त्रतादृशगुणतादृशपरिकरानुगुण्येनैव प्रवर्तनात्। तथाचान्तःप्रविश्य नियच्छन्नपि बाह्यसामग्रीसंघटनेन ज्ञानादिकमुत्पाद्यैव प्रवर्तयति। अतो न ज्ञानहेतुविधिनिषेधशास्त्रवैयर्थ्यम्। इदं ज्ञापयितुमुपरि, 'ईश्वरः सर्वभूतानाम्' इति वाक्योपादानम्। एवञ्चेश्वरो न भूतावेशन्यायेन प्रवर्तयतीति सिद्धम्। तदुक्तं कुसुमाञ्जलावपि, 'हेत्वभावे फलाभावात् प्रमाणेऽसति न प्रमा। तदभावात् प्रवृत्तिर्नो' इति। उपरि चोक्तम्, 'भूतावेशन्यायेन प्रवर्तने फलसिद्धिर्जीवस्य न स्यादिति उपदेशमुखेनैव प्रवर्तयति' इति।

अत्र पुनरप्याक्षेपः—एवं तर्हि ईश्वरः प्रवृत्तिहेतुसामग्रीसंघटकत्वात् प्रवृत्तिहेतुत्वेनोच्यत इत्यायातम्। एतदर्थश्चाऽऽचार्यादिवत् बहिरेव स्थित्वोपदेष्टव्यं संविधातव्यं वा साक्षात् परम्परया वा। अतः किमन्तःप्रविश्य नियमनेन। अत इदमन्तर्नियमनं बाह्यसामग्र्यधीनान्याहशप्रवृत्तौ प्रसक्तायां तद्विघटनेन स्वेच्छानुरोधेन प्रवृत्त्यन्तरसंपादनायेति ज्ञायते। एवं बलवदन्तर्नियमनपरवशेऽस्य किमर्थो विधिनिषेधविधिरिति॥ तत्रोच्यते— न खल्वयमीश्वर आचार्यादिवत् सकृत् संनिधाय सर्वोपदेशेन संतृप्तो भवति। किंतु यथासमयमपूर्वार्थज्ञानमिव अवगतार्थस्मृतिमपि जनयन् अस्खलितं प्रेरयति। तत्र च बाष्पशकटादिमहायन्त्रप्रवर्तकस्य यन्त्रमध्यस्थितिरिव यन्त्रारूढभूतप्रेरणप्रकृतस्य स्वतः सर्वव्यापिनः सर्वकारणभूतस्य सकरणग्रामकलेबरमुख्यस्थाने प्रवर्तनीयचेतनाधिष्ठिते सर्वग्रन्थिसमाहारात्मनि हृदि स्थितिः तत्तद्ग्रन्थिपरिस्थित्यादिपरिकलनेन यथावसरं चेतनस्य नियमनोपयोगिनी नाक्षेपमर्हति। अतश्च न जीवेष्टविजातीयस्वाभिमतप्रवृत्तिविधानार्थमन्तःस्थितिः, अपित्वनेकविधजीवप्रवृत्त्यन्यतमसंघटनार्थमिति न दोष इति।

एवञ्च करणकलेबरगतसत्त्वादिगुणोन्मेष-हृदयगतविचित्रवासनाविपाकाद्यनुसारि परमात्मनियमनमित्युक्त्या इदं दर्शितं भवति, यत् स्वतन्त्रजीवविषय एव विधिनिषेधसार्थक्यं स्यात्, न तु परतन्त्रविषये इति वदद्भिः पूर्वपक्षिभिः यदि बाह्यकरणकलेबराद्यनेकपारतन्त्र्यमवर्जनीयं न स्वातन्त्र्यभञ्जकं भवतीति मन्यते, तर्हि ईश्वरपारतन्त्र्येण परं किमपराद्धम्। तमिमं भाष्याशयमाविष्कर्तुमेव, "नैवं कर्माक्षकालप्रभृतिपरवशे" इत्याद्यधिकरणसारावलिवचनम्। प्रेरकश्च सः ज्ञानचिकीर्षाजननपूर्वकमेव सर्वत्र प्रवर्तयतीति स्पष्टं गीतायाम्। इदम्, 'कर्तुं नेच्छसि यन्मोहात् करिष्यस्यवशोऽपि तत्' (18. 64) इत्यत्र, 'परैर्धर्षणमसहमानः' इति विशेषणप्रदर्शनेन भाष्ये दर्शितम्। 'अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः' इति प्रश्ने च, 'काम एष क्रोध एष रजोगुणसमुद्भवः' (3. 37) इति पूर्वमनिच्छतोऽपि पश्चादिच्छाप्रादुर्भाव इति हि समाहितम्।

अथायमाक्षेपः—अस्ति देहेन्द्रियवासनाद्यपेक्षया परमात्मनि वैलक्षण्यम्। इन्द्रियादिकं खल्वर्णं जोषं भवितुमपारयत् अवश्यमेव यत्किञ्चिदनुभोक्तुं प्रवर्तते। तत्र इदमिति न विशेषव्यवस्था स्वतोऽस्ति। वासनाऽपि प्राचीनभोगसजातीयभोगजनिका इदमिति किञ्चिन्न विशिष्य गृह्णाति। तत्रैवं पुरुषे भोगार्थं व्याप्रियमाणे यदृच्छया कार्यान्तरबलेन यत् किमपि प्रसक्तसंनिधानम्, तदयं स्वार्थमप्युपयोजयति। यथा 'अलाभे मत्तकाशिन्या दृष्टा तिर्यक्षु कामिता' इति। यथा च मत्तेन्द्रियस्य महाराजकुमारस्य प्रागचिन्तित एवोपनतः परिचरणार्थं परिसरमुपसेदुष्यां चेट्यामेव लोचनव्यापारः। अतः सर्वत्र संघटनरीतिः विशेषप्रतिलम्भे कारणम्; न प्राचीनकर्म। कर्मपरिपाककालस्य वस्तुसमागमकालस्य चैकत्वात्तु इत्थम्भावः। ईश्वरस्तु नियमनकर्ता तत्कालैकदर्शी नियमनस्य संकल्पस्य विषयाधीनविशेषत्वात् अयमयमिदमिदमित्थमित्थं करोत्विति विशिष्यैव संकल्पयतीति ईदृशसत्यसंकल्पपराधीनेऽस्मिन् जने कथं पुण्यपापभेदकल्पनेति॥

अत्रेदं तावत् समाधानं वक्तुं सहसोत्सहेरन्—अदृष्टादेः सामान्यगोचरत्व एव न प्रमाणमस्ति।

ततः पुंसो यत् फलं यादृग्रूपं निष्पद्यते, तादृग्रूपतत्फलजनकं विशेषभूतमेवादृष्टं वासनादि च तस्मिन् से स्वीकुर्मः। तथाच येष्वयं परवशश्चेतनः, तेषु कारणेषु मध्ये वासनादिकमपि विशेषविषयम्, मात्मसंकल्पोऽपि तथेति नात्र कश्चिद्विशेषः। तथाच विशेषवासनाद्यनुसारेण विशेषतः संकल्पयन् श्वरो न जीवस्यास्थाने निग्रहानुग्रहहेतुः। इत्थमेव ह्यनादिरीश्वरकृता व्यवस्था, यत्-इदमिदं कर्म मेवं फलहेतुः; तत्र यत् कर्म यो ज्ञानचिकीर्षापूर्वं कुरुते, स तत्फलभागिति। अतः परमात्मसंकल्पा नकृतिरपि जीवो ज्ञानचिकीर्षापूर्वकमेव करोतीति भवत्येव फलभोक्तेति।

इदमेव समाधानं कृतप्रयत्नसूत्रविवक्षितमित्यपि परे व्याख्यातारो मन्वते। परंतु यदीदं नाधानं सूत्रकृदमंस्यत, तदा 'कर्मानादित्वमुक्तम्' इत्येवासूत्रयिष्यत्। अन्यथा सूत्रयन् वा, 'कृतापेक्षस्तु' येतावद्वा प्रायोक्ष्यत; न पुनः प्रयत्नेन प्रयत्नपदमधिकम्। किञ्चास्मिन् पक्षे जीवपुण्यापुण्य पाराणामिव भगवत्संकल्पानामपि प्रवाहानादित्वात् पूर्वकृतिबलात् फलभोग इत्युक्तौ, पूर्वसंकल्पबलादेव तिभेदात् फलमेद इति किं न स्यादिति शंका संततैव स्यात्। अतोऽन्यदेव समाधानमत्राभिप्सितम्। देवम्—यत् तावदुच्यते अयमयमिदमिदमित्थमित्थं करोत्विति ईश्वरः संकल्पयतीति, सत्यं तत्। ग्रैव संकल्पयति। परंतु यावत्संभवं कृतप्रयत्नापेक्षस्तु तथा संकल्पयति। प्रथमतः पुरुषे भवदुक्तरीत्या रणकलेबरवासनासंघटनकालपारवश्येन स्वयमेव विशेषविषये प्रयत्नमारब्धवति सति, तं ततस्तत्रैव विशिष्य कल्प्यानुमन्यमानः पुनः प्रेरयति संनिधापनवैधुर्येऽप्यर्थं बुद्धिस्थतां नयन्। तथाच, "अन्तःप्रविष्टः स्ता" इत्यादिना ईदृशानुमतिरूपनियमनविवक्षणसंभवान्न श्रुतिकदर्थनम्। एवं सूत्रस्वारस्यादिचिन्तयैव ाष्ये शांकर इव पूर्वकर्मानुगुण्यपरतया सूत्रमव्याख्याय तादात्विकप्रयत्नानुगुण्यपरतया व्याख्यानम्। वञ्च सति अत्रेयं शंकाऽवतरति-प्रथमप्रयत्ने ईश्वराधीनत्वमस्ति, न वा। अस्ति चेत्, प्रयत्नापेक्षत्वं तम्। न चेत्; तथैव पश्चादप्यस्तु; किं तेन? तथा तस्य सर्वकारणत्वभंगश्चेति। अत्रायं समाधिः— ासनादीनां विशेषगोचरत्वे तदनुसारेण विशेषरूपेणैव संकल्पयतीश्वरे नैव भवता दोषः कश्चिदुद्- ाटनीयः; तदनुसारित्वात् तस्य। अतोऽदृष्टस्य सामान्यरूपस्यैव यत्र देशकालदशाभेदरूपसहकार्यनुसारेण वेशेषपर्यवसानम्, तत्रैव। तत्र चादृष्टस्येश्वरसंकल्पातिरिक्तस्य सिद्धान्तेऽनंगीकारात् अदृष्टं सामान्य रूपमिति वदता संकल्पः सामान्यगोचर इत्येवोक्तं भवति। तथाच सामान्यवासनाद्यनुसारेण प्रवर्तयन् ईश्वरः अस्य पुरुषस्यैतद्वासनाधीनप्रवृत्तिर्जायतामिति सामान्यत एव संकल्पयति। कार्यान्तरार्थविषयान्तर- संनिधानोपयोगिपाचकनकर्मपरिपाकावसरोऽयमित्यवेक्ष्य तत्संनिधानमपि संकल्पयति। भवदुक्तरीत्या संघटन कालबलसमापतितं भोगप्रवृत्तेस्तद्विषयान्तरगोचरत्वमिति। अतः प्राथमिकप्रवृत्तावीश्वराधीनत्वमप्यक्षतम्। अतोऽस्यापि सामान्यसंकल्पस्यान्तर्नियमनशब्दार्थत्वसंभवादेतदुपेक्षणं न भाष्येष्टम्। नाप्यन्तर्यामि श्रुत्यर्थभंगः; अस्यापि तद्विषयत्वात्। प्रायिकविशेषसंकल्पं प्रति च तत्पूर्वभाविसामान्यसंकल्पाधीन- तदनुमतकर्म कारणमिति।

तदेवं वस्तुस्थितौ शोधितायां न सारावलिश्रुतप्रकाशिकादिग्रन्थेषु मिथो विरोधो लक्ष्यते।

तथाहि—**टीकायाम्**, 'प्रथमप्रवृत्तावीश्वरस्योदासीनत्वे सर्वकारणत्वभंगः' इत्याशंक्य तत्तत्समयविशेषानुरूपतत्तद्गुणतत्तद्ह्रासनोद्बोधहेतुकरणकलेबरप्रदानस्य कृतत्वात् अदृष्टाधीनस्वभावविशेषशालिविषयविशेषसंनिधानस्य चादृष्टवदीश्वरकृतत्वात् सर्वकारणत्वमस्तीति साधितम् । तर्हि कथमौदासीन्यमिति पुनराशंक्य, "अभिसंधिविशेषाभावादिति ब्रूम." इत्युत्तरितम्, विवृतञ्च । तथाचैतद्भोगप्रवृत्तिसाफल्याभिसंधिना विषयान्तरसंनिधापनं न कृतम्; किंतु कार्यान्तराभिसंधिना; परंतु भोगप्रवृत्तेरपि सामान्यवासनापरिपाकवशाज्जातत्वात अर्थात् संनिहितविषयकत्वं तस्याः समापतितम्; यथा शर्मिष्ठायां ययातेः; नातेश्वरे दोषः, न वा सर्वकारणत्वहानिरित्युक्तं भवति । "नियन्तृत्वश्रुतेस्तावान् संकोचो न स्वतः परः" इति **टीकाश्लोको**ऽपि प्रथमप्रवृत्तौ ईश्वरस्य नियमनमन्तर्यामिश्रुत्यनभिप्रेतमित्यर्थको न भवति । द्वितीयादिप्रवृत्तौ विशेषविषयकम्, प्रथमप्रवृत्तौ तु सामान्यविषयकमिति किञ्चित्संकोचेनार्थो ग्राह्य इत्यर्थक एव । अत एव, "न स्वतः परः" इत्याह । तस्यायमर्थः—न प्रथमप्रवृत्तौ सर्वथा नियमनमविवक्षितमिति मन्तव्यम्, नाप्यधोनिनीषादिस्थलीयप्रयोजकत्वमेवालोच्यत इति वक्तव्यम् । तथासति सर्वकारणत्वभंग-वाक्यस्वारस्यभंगादि स्यादित्याशयः । "मत्तःस्मृतिर्ज्ञानमपोहनञ्च" इति हि प्रथमप्रयत्नसाधारण्येनोच्यत इति प्रागेवोक्तम् ।

इत्थमेव च **सारावलेर**पि प्रवृत्तिः-प्रथमप्रवृत्तौ सामान्यतः संकल्पाश्रयत्वमपीश्वरस्य स्वीकर्तुं न युज्यते । इदानीमेवं प्रवृत्तिसंकल्पे कृते अस्य पुंसः संघटनबलादीदृशविपरीतभोगप्रसंगः स्यादिति सर्वज्ञेन तेन प्रागेव ज्ञातत्वात् तथा संकल्प्य निग्रहविधानायोगादित्याशंक्य, शंकेयं द्वितीयादौ विशेषप्रवृत्तिसंकल्पायोगचोद्यतुल्येति **कर्तृत्वं स्यादि**ति श्लोकेन दर्शितम् । प्रकारान्तरेण पूर्वपक्षोऽप्युपरि श्लोकव्याख्याने दर्शयिष्यते । प्रथमप्रवृत्तेरदृष्टाधीनत्वात् अदृष्टस्य संकल्परूपत्वादपि परायत्तत्वं दुस्त्यजमित्युक्त्वा, तर्हि साक्षित्वादि न घटत इति शंकायाम्, प्रवृत्तिविशेषोद्देश्यकसंकल्पानाश्रयत्वादिना तदुपपत्तिमासूच्य, ननु **भाष्ये**, 'उद्योगमपेक्ष्य तदनुमतिदानेन प्रवर्तयति' इत्युक्ततया उद्योगमनपेक्ष्य न प्रवर्तयतीति प्रथमप्रवृत्तौ नेश्वरो हेतुरिति सिद्धया भाष्यविरोध इत्याशंकायाम्, भाष्यमपि प्रथमोद्योगे सामान्यप्रवर्तनसाध्यत्वनिरासकं न भवति, विशेषप्रवर्तनाभाव एवाभिमत इति ज्ञापितमनन्तरश्लोके । **अथ कर्तादेव** इति श्लोकप्रवृत्तिश्चोपरि दर्शयिष्यते ।

एवं टीकासारावल्योरैकार्थ्यं वर्णनीयमिति, "दैवञ्चैवात्र पञ्चमम्" इत्येतत्तात्पर्य**चन्द्रिकया**ऽपि ज्ञायते । तत्र हि, "अयमभिप्रायः" इत्यारभ्य प्रथमं टीकारीत्यैव करणकलेबरप्रदानादिना स्थितं सामान्यतः कारणत्वमुदासीनत्वाविरोधेनोपपादितम् । 'प्रवृत्तिशक्तस्यान्यैरनिवार्यत्वेन स्वातन्त्र्यादिसिद्धेः' इति, 'इच्छाशक्तिमत्त्वे सति अनिवार्यत्वं हि स्वातन्त्र्यम्" इति **टीकासंमतमेवोक्तम्** । **अथ च**, अहितप्रवृत्तावनिवारणमनुमननम्' इति **टीकाभिप्राय** एव दर्शितः । न तु अहितप्रवर्तनमित्युक्तम् । तेन प्रवृत्ते अहितरूपविशेषविषयकत्वं प्रथमत ईश्वराधीनं न भवतीति ज्ञाप्यते । अन्ते च **कर्मनिष्पत्तये**

(२४१) कर्तृत्वं स्यात् कदाचित् करणवति परप्रेरणानिर्व्यपेक्षं
नो चेत्, तन्निग्रहार्थं कथमिति यदि, नः स्वेष्टपक्षेऽपि साम्यात्।
स्वेनापथ्यप्रवृत्तं न हि पुनरपि तत् कारयेयुर्दयार्द्राः
तत्रेत्थ(द)स्य स्वभावात्, इतरदपि न किं? निष्फलोऽधीतभङ्गः ॥ २२ ॥

अत्र केचिदाहुः 'जीवस्य [1]प्रथमप्रवृत्तावीश्वरः कारयिता न भवति, स्वयमेव जीवः प्रवर्तते, ईश्वरस्तदानीमुपेक्षते। यदीश्वर एव तत्र प्रयत्नतः प्रवर्तकः स्यात्, तदा आदावपि प्रवर्तकत्वात् निर्घृणो विषमश्च स्यादीश्वरः। जीवो न निग्राह्यः स्यात्; स्वयमकर्तृत्वात्। तदिदमनुवदति इत्यादिना तु प्रवृत्तिविशेषे जीवस्य स्वातन्त्र्यं दर्शितम्' इत्युक्तम्। तथा च यत्र सामान्यवासनानुसारेण सामान्यप्रवृत्तिसंकल्पमात्रे ईश्वरेण कृतेऽपि कार्यान्तरार्थसंनिधापितविषयविशेषं पुरुषः प्रवृत्तिविषयत्वेन स्वीकरोति, तत्रत्यप्रवृत्तौ जीवस्य स्वातन्त्र्यं परानधीनत्वमेवेति। अन्यादृशविशेषविषयकप्रवृत्तौ चानुमतिदानरूपः किञ्चित्कारः भाष्येणोच्यते।

यत्तु अधोनिनीषादिवाक्यम्, तत् सत्यं तथैव। तथाच भगवत्कर्तृत्वोन्निनीषाकामः भगवदानुकूल्य एव व्यवसितः स्यात्, भगवद्गताधोनिनीषाभीतः भगवत्प्रातिप्रातिकूल्येनाऽऽसुरं भावं नाश्रयेत् इति विधिनिषेधौ गम्येते। तथाच तादृशविध्यर्थानुष्ठातरि उन्निनीषाफलसंपत्तिः, निषेधोल्लंघिनि चाधोनिनीषा सिध्यति। अतः सर्वत्र प्रवृत्तौ यथायथं सामान्यतो विशेषतोऽपि वा पराधीन एव जीव इति॥

२२. 'कर्ता शास्त्रार्थवत्त्वात्' इति सूत्रेण शास्त्रस्यार्थवत्त्वं जीवस्य कर्तृत्वस्वीकारे सत्येव भवेदित्युक्तम्। अथ तस्य कर्तृत्वस्य परायत्तत्वं स्थाप्यतेऽत्र। लोके यदन्वयव्यतिरेकानुविधानं यत्र कार्ये दृष्टम्, तावत एव, कृष्यादाविव दृष्टस्य कारणकलापस्यैव स्वीकार्यत्वात् अलौकिकमीश्वरायत्तत्वं मा भूत्। तत्स्वीकारे प्राणिनां विषमरीतिकत्वात् तस्य वैषम्यनैर्घृण्ये स्याताम्। न च पूर्वकर्मानुसारेण तेन प्रेरणात्र स दोष इति शंक्यम्; पूर्वकर्मकर्तृत्वस्यापि परप्रेरणाधीनतया तत्र जीवस्य स्वातन्त्र्याभावात्। अत एवान्तर्यामिप्रेरणाधीनसर्वक्रिये जीवे मृत्पिण्डभूते ज्ञानस्याप्यनपेक्षितत्वात् व्यर्थमेव विधिनिषेधात्मकं शास्त्रमपि। अतः परायत्तत्वं परित्याज्यमिति शंकायाम्—वचनबलात् परायत्तत्वमेष्टव्यम्। ज्ञानचिकीर्षाप्रयत्नोत्पादनमन्तरा तस्य प्रवर्तकत्वाभावात् जीवानां तद्रूपं स्वातन्त्र्यमप्येष्टव्यम्। तज्ज्ञानसंपत्तये शास्त्रमपि सार्थम्। पूर्वकर्मानुसारेण प्रवर्तनादेव वैषम्यादिपरिहारश्च, कर्मवदीश्वरस्यापि कारणत्वं श्रुतिप्रतिपन्नत्वादनुपेक्ष्यमित्युक्तम्। एतावान् अर्थः, 'परात्तु तच्छ्रुतेः' इति सूत्रस्यैव भवितुमर्हति। एवमपि इदं समाधानं कस्यचित् पूर्वकर्मणः ईश्वरनिरपेक्षं कृतत्व एव भवेदिति कदाचित् तन्निरपेक्षकर्तृत्वा-

---

1 चि. टी. अत्र प्रथमप्रवृत्तिपदेन एकक्रियासंतानगोचरप्रवृत्तिकूटान्तर्गतप्रथमप्रवृत्तिरेव विवक्षितेति न। पूर्वकृतक्रियासंतानगोचरसर्वप्रवृत्तिरपि प्रथमप्रवृत्तिरेव; पुनः तद्रूपक्रियासंतानान्तरारम्भप्रभृति परमात्मानुमन्तेति विवक्षा। अत एव (कदाचित्) कल्पादाविति वक्ष्यति।

कर्तृत्वमित्यादिना यदीत्यन्तेन । तदिदं प्रतिक्षिपति—नेति । हेतुमाह—स्वेष्टपक्षेऽपि साम्यादिति । साम्यमेव प्रकटयति-स्वेनेति । अयमर्थः—यस्तावत् अपथ्ये प्रवर्तयति, स हि निर्दय एव स्यात्। तथाच प्रथममपथ्ये प्रवर्तयन्नीश्वरो निर्दयः स्यादिति हि भवतोच्यते । एवं यः स्वयमपथ्ये प्रवर्तते, तस्यानुमन्ताऽपि निर्दय एव हि । लोके दृष्टमेतत् । कूपे हि पतन्तं बालकं निवारयितुं समर्थोऽप्यनुमन्यमानो निर्दय एवेतीदमपि प्रसिद्धमेव । तस्मादीश्वरस्य पापप्रवृत्तावनुमन्तृत्वेऽपि निर्दयत्वमापतेदेव भवद्रीत्या । ननु [1]प्रथमप्रवृत्तौ तामनुसृत्यैवेश्वरोऽनुमन्ता, तस्मान्निर्दयो न भवतीति यदि वदसि—तर्हि प्रथमप्रवृत्तावपि जन्मान्तरीयचरमप्रवृत्तिमनुसृत्यैव प्रवर्तयतीति निर्दयत्वं नापतेदिति समः समाधिः । नन्वीश्वरस्य सर्वकार्यहेतुत्वस्वाभाव्यात् प्रवृत्तप्रवर्तकत्वलक्षणमनुमन्तृत्वमङ्गी-

वश्यम्भाव इति केचिदाशंकन्ते । न केवलमेतावत्; भगवतो बादरायणस्याप्ययमेव सिद्धान्तः इति च मन्यन्ते । कथमिति चेत्—अयमेव हि कृतप्रयत्नसूत्रार्थ इति तदाशयः । अयं ह्येतदर्थः—ईश्वरः पुरुषेण स्वप्रेरणां विना कृतं कर्मापेक्ष्य तदनन्तरमेव स्वयं प्रवर्तयति । यदि प्रथममेवायं प्रवर्तयेत्, किमिति विधिनिषेधौ । एवं हि विधिनिषेधप्रसक्तिः । इदमिदं कर्मेष्टसाधनम् इदमिदमनिष्टसाधनमिति शास्त्रेण विभागे कृतेऽपि जीवाः तदुपेक्षया यथेच्छं व्यापृताः । तदानीमीश्वरेण इदं कुर्यात् इदं न कुर्यादिति विधिनिषेधौ कृतौ । यदि तु प्रथममेवेश्वरः सति असति च प्रेरयेत्, विधिनिषेधवैयर्थ्यमपि । विहितनिषिद्धक्रियावैयर्थ्यमपि; तयोः फलजनकत्वं हि परपारवश्यं विना कृतत्व एवेति ।

न केवलं सूत्रकृत आशयः, श्रीभाष्यकाराभिमतोऽप्यर्थोऽयमेवेति सिद्धमस्य सूत्रकृदभिमतत्वम् । श्रीभाष्ये हि प्रथमत एवं परायत्तत्वे सर्वत्र प्रवर्तकत्वाविशेषात् परमात्मनः साक्षित्वमनुमन्तृत्वं च न स्यादिति श्रुत्यनुपपत्तिं व्यञ्जयन्, पुरुषेण कृतं प्रयत्नमपेक्ष्य तदनुमतिदानेन प्रवर्तयतीति स्पष्टमभाषत । साक्षित्वं क्रियमाणार्थदर्शित्वे सति तत्प्रेरणवारणोभयराहित्यम् । अनुमन्तृत्वं कृतस्य पुनः करणावसरे तदवारणेन कर्तुमेवाभ्यनुज्ञानमिति ।

एतत्परिजिहीर्षया प्रारभते कर्तेति । करणवति करणकलेबरादिसापेक्षे जीवे कर्तृत्वस्य तत्सापेक्षत्वेऽपि परमपुरुषप्रेरणानिरपेक्षत्वं कदाचित्-प्रथमत आवश्यकम् । एवं तेन कर्मणि पूर्णे निष्पादिते सति तस्य वासनाहेतुत्वात् तत्फलरूपेणोपर्युपरि प्रवर्तयतीति युज्यते । नो चेत्-प्रथमकर्मणोऽपि तत्प्रेरणाधीनत्वे, तेन तेषां जीवानां निग्रहादिकं कथं स्यादिति यदि, न=इति चेन्न । कुत इत्यत्राह स्वेति । प्रथमं कर्म परनिरपेक्षं कृतमस्तु । पापरूपतत्कर्मवासनानुसारेणेश्वरः पुनः कारयतीति स्वेष्टपक्षेऽपि स दोषो ह्यस्ति । कथमिति चेत्-स्वेन=स्वयमेव आपथ्ये पापे प्रवृत्तः पुरुषो हि दयार्द्रेण परमात्मना वारणीयः। तदानीमुदासीनत्वमपि दोषः । तथासति यत् पुनरपि तज्जातीय स एव कारयति, तत् कथं तस्य युक्तम् । तच्चेत् तस्य स्वभावादिति । तत्र सकृत् पापं कृतवतः पुनः पाप एव प्रवर्तनं तादृशस्वभावशालित्वादिति चेत्-

1 प्रथमप्रवृत्तौ=एकजन्मावच्छेदेन क्रियमाणेषु एकजातीयेषु कर्मसु प्रथमनिष्पाद्यक्रियासंतानविषयकप्रवृत्तौ । अनुमन्ता=कालान्तरे द्वितीयवारं तत्कर्मजातीयकर्मारम्भे अनुमन्तेत्यर्थः ।

कार्यमिति यदि, तर्हि तेनैव न्यायेन प्रथमप्रवर्तकत्वमपि न किमङ्गीकार्यम्? तदनङ्गीकारे, 'तेन विना तृणाग्रमपि न चलति' इत्यादिप्रमाणशतप्रसिद्धं सर्वदा सर्वस्येश्वरपारतन्त्र्यं भज्येतेतीश्वरत्वमेव न स्यात्। किञ्च निष्फलोऽयमधीतभङ्गः। सर्वकार्यकर्तृत्वं सर्वेश्वरत्वमधीतं निरर्थकमेव भवान्निराकरोतीत्यर्थः॥ २४१॥

(२४२) क्षेत्रज्ञानां समानां विषमयतनता तादृशादृष्टभेदात्
नादृष्टं त्वन्यदिष्टं नियमनभिदया शासितुर्हीशितु स्तत भाव्यम्।
साक्षित्वाद्यश्च नेतुः ममनिगमंमतं प्रेरकत्वं न रुन्धे
भाष्यादिग्रन्थलेशोऽप्यवहितमनसामैदमर्थ्यं भजेत॥ २३॥

कल्पादौ प्रथमप्रवृत्तिरीश्वरनिरपेक्षेति वदन् प्रवृत्तिमेवोपपादयितुं न शक्नोतीत्याह—क्षेत्रज्ञानां समानामिति। युष्मदभिमतप्रथमप्रवृत्तिवेलायां जीवानां विषमप्रवृत्तिस्तावन्न जीवस्वरूपनिबन्धना; जीवस्वरूपस्य तुल्यत्वेन वैषम्यनिबन्धनत्वायोगात्। तेन प्राचीनकल्पकृतकर्मनिबन्धनेति वक्तव्यम्। कर्म च वेदान्तसिद्धान्ते नेश्वरसंकल्पादन्यदिति कर्मनिबन्धनं प्रवृत्तिवैषम्यं वदन्नीश्वराधीनत्वमेव स्थापयतीत्यर्थः। निर्मूलमेव प्रवृत्तिवैषम्यमिति तु चार्वाकपक्षे निक्षिप्येत। अयमत्र शब्दान्वयः—कल्पादौ समानां क्षेत्रज्ञानां विषमयतनता तदनुगुणादृष्टभेदादेव भवति। ततः

---

ईदृशस्यैवेश्वरतया शास्त्रोक्तत्वात्–तस्य सोंशो न दोषायेति चेदिति यावत्। इदमपि न किम्–प्रथममेव प्रवर्तनमपि स्वभावादेवास्तु। यत् कर्म तत्प्रेरणां विना कृतमिति मन्यसे, तदपि तत्कारितमेवास्तु। सर्वप्रेरकत्वरूपान्तर्यामित्वश्रुतिभंगो निष्फलः कुत. स्वीकार्य इति भावः॥ २४१॥

२३. न केवलमधीतान्तर्यामित्वाभंगाय प्रथममपि प्रवर्तकत्वस्वीकारः; किं तु अदृष्टाख्यतत्त्वशोधनेऽपि तदवर्जनीयम्। अत: प्रमाण-संप्रदायवाक्यार्थोऽप्यन्यविध एवेत्याह क्षेत्रज्ञानामिति। समानां अनादिकालप्रवृत्तौपाधिकाकारं विहाय विमर्शे एकप्रकाराणां क्षेत्रज्ञानां बन्धवशात् विविधानां जीवानां यत्ने ऐकरूप्याभावः उच्चावचता, तदनुरूपे अदृष्टे वैलक्षण्यादेव। अदृष्टमात्मगतं भौतिकं वा पुण्यापुण्यरूपं नेष्टं सिद्धान्ते। किं तर्हि? शासितुः परमात्मनः नियमनभिदया निग्रहानुग्रहरूपसंकल्पभेदरूपेणैव भाव्यम्। भगवत्संकल्पविशेष एवादृष्टमिति। एवञ्च प्रथमतो यत् जीवकर्मवैषम्यम्, तत्र प्राक्तनादृष्टमेव नियामकं पश्यद्भिः भगवत्संकल्प एव नियामक उक्तो भवतीति कथं कर्तृत्वं कदाचित् परप्रेरणानिर्व्यपेक्षं स्यात्। अतोऽन्तर्यामिश्रुतिवशाच्च सर्वत्र तस्य प्रवर्तकत्वे सति यत् साक्षित्वादिभंग इति, तत्रोच्यते साक्षित्वाद्यमिति। प्रवर्तयितुरपि साक्षित्वपदविवक्षितं तावत्, 'तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम्' इत्युक्तरीत्या पूर्वकर्मानुसारेणैव प्रवर्तनात् निरपेक्षव्यापृत्यभाव एव। अनुमन्तृत्वं च प्रथमं प्रवर्तितवतोऽपि पश्चात् तूष्णीमस्थित्वा प्रतिव्यक्ति सहायीभावः। एवमेकः प्रकार उक्तः। अन्यश्च प्रथमप्रवृत्तिविषयकसंकल्पस्य विशेषविषयकत्वाभावः साक्षित्वम्। प्रवृत्तपुरुषगतविशेषविषयकप्रवृत्त्यभ्यनुज्ञानमनुमतिरिति। सूत्रस्य भवदभिमतार्थकत्वं तु भाष्यविरोधादपि न युक्तम्। भाष्यं तु न भवदनुकूलम्, तदाह भाष्यादीति। ननु, "सर्वासु क्रियासु पुरुषेण कृतं प्रयत्नम् उद्योगमपेक्ष्यान्तर्यामी" इत्युक्त्वा

किमित्यत्राह–नादृष्टमिति । ईश्वरसङ्कल्पादन्यददृष्टमिति किञ्चिन्नेष्टमित्यर्थः । फलितमाह–नियमनेति । तत्र–अस्मिन् काले अदृष्टशब्दाभिधेयेनेश्वरस्य नियमनेन भवितव्यमित्यर्थः । तेनादृष्टहेतुकप्रवृत्तिवैषम्यं वदता भवता प्रथमप्रवृत्तावपीश्वरहेतुत्वमेव स्थापितं भवतीत्यर्थः । तर्हीश्वरस्य साक्षित्वोदासीनत्वानुमन्तृत्वादिकं तस्यैव प्रवर्तकत्वे कथं घटत इति चोद्यमवशिष्यते । तन्न न ; सर्वेषामपि प्रामाणिकत्वेन पूर्वमेव लक्षणभपन्वयस्य कथनादित्याह–साक्षित्वाद्यमिति । इदं साक्षित्वाद्यं तुल्यप्रमाणप्रमितमीश्वरस्य सर्वदा प्रेरकत्वं न रुन्धे = न बाधत इत्यर्थः । ननु भाष्यादिषु ग्रन्थेषु

---

प्रथममुदासीनत्वरूपं साक्षित्वं सिध्यति । "तदनुमतिदानेन प्रवर्तयति" इत्युक्त्या अनुमन्तृत्वं प्रवृत्तप्रवर्तकत्वमवगम्यते; न त्वादितः प्रवर्तकत्वम् । अतो जीवः सर्गारम्भेऽन्यदा वा यदा ईश्वरनिरपेक्षमेव कर्मैकं निष्पादितवान्, तदा तदवलोक्य तत्फलदानप्रवृत्तः तादृशे कर्मणि तत्फलभूतकार्ये वा पुनरनुमतिं ददातीति द्वितीयादिकर्मण्येवेश्वरस्य नियन्तृत्वमिति चेत्–उच्यते । यदि सकृतकर्मनिष्पादितमवेक्ष्य द्वितीयादिकर्मण्येव नियन्तृता, तदा 'कृतं प्रयत्नमपेक्ष्य' इति प्रयत्नशब्दो व्यर्थः । प्रयत्नपदेन उद्योगविवक्षैव भाष्ये दर्शिता ; न तु कर्मपूर्तिविवक्षा । अतः प्रथमप्रयोगेऽपि कर्मणि द्वितीयक्षणप्रभृतीश्वरापेक्षैव भाष्यादवगीयते । अत एव, "परमात्मानुमतिमन्तरेणास्य प्रवृत्तिर्नोपपद्यते इत्यर्थः" इति अनुमत्यभावे कर्मव्यतिरेकः प्रादर्शि । तेन प्रवृत्तोऽप्यनुमत्यभावे तत्कर्मनिष्पत्त्यौपयिकपुष्कलप्रवृत्तिमान् न भवतीति दर्शितम् ! सकृदपि कर्मपूर्त्यभावे कथं कर्मफलदित्सा भवेदिति कृत्वा प्रथमकर्मपूर्तिपर्यन्तं तूष्णीम्भावे तत्प्रेष्यमाणे किं तत् प्रथमं कर्मेति वक्तव्यम् । अनादौ संसारे एतत्कल्पप्रथमकर्मणोऽपि पूर्वकल्पकर्माधीनभगवत्प्रीतिकोपान्यतराधीनतया प्रथमत्वाभावात् । तत्तत्कल्पे तत्तज्जन्मनि वा क्रियमाणैकजातीयकर्मापेक्षया प्राथम्यमेव प्रथमशब्दार्थ इति निर्वचनेऽपि उक्तरीत्या तस्य परमात्मप्रेरणानधीनत्वासिद्धेः । एवं, 'कृतोपेक्ष्य ततोऽनुमत्य' इति तत्त्वसारसूक्तेरपि सकृत्कार्यनिष्पत्तिः परमात्मानमन्तरेत्यर्थे तात्पर्यं नास्ति । अवहितमनसाम्=प्राचीनादृष्टाधीनत्वे, अदृष्टस्य परमात्मसंकल्परूपत्वे, "परमात्मना दत्तैस्तदाधारैश्च करणकलेबरादिभिः तदाहितशक्तिभिः स्वयं च जीवात्मा तदाहितशक्तिः सन् कर्मनिष्पत्तये स्वेच्छया करणाद्यधिष्ठानरूपं प्रयत्नमारभते" इति गीताभाष्ये चानुसंहिते प्रथमकर्मण्यपि भूयसि भगवदधीनत्वमेव तदभिमतोऽर्थ इति ऐदम्पर्यावबोधः स्यात् ।

ननु तर्हि प्रथमकर्मणीव द्वितीयकर्मण्यपि पूर्वकर्मनिरपेक्षप्रवृत्त्यभावरूपं साक्षित्वमक्षतमिति, 'प्रथममुदासीनः' इति कथम् । प्रथमकर्मणोऽपि अनादिसंसारे पूर्वकृतजातीयत्वात् तत्र प्रवर्तनमप्यनुमतिरेवेति द्वितीयविषय एवानुमन्तृत्ववचनञ्च कुत इति चेत्–सत्यम्—अत एव उदासीनत्वानुमन्तृत्वप्रेरकत्वादिपदानामेकैकव्यक्तिविषयेऽपि संभावितत्वं मुखभेदेन, अत एवाविरोधश्च संप्रदायवाचयानि, 'तस्य कर्तारमपि' इत्यादिप्रमाणपरामर्शेन वर्णयन्ति । शंकराचार्यैश्चात एव कृतप्रयत्नापेक्षः इत्यस्य पूर्वकृतधर्माधर्मापेक्ष इत्यर्थोपवर्णनेन प्रथमद्वितीयादिवैषम्यमुपेक्षितम् । एवं स्वीकारे मनस्तृप्तिमलभमानेन त्वया विधिनिषेधसार्थक्याय किञ्चिदंशे परमात्मनिरपेक्षत्वस्याऽऽकांक्षितत्वात् तदाकांक्षापूरणमपि केनचित्

'तत्रोपेक्ष्य ततोऽनुमत्य' इत्यादिषु प्रथमक्षणे तावदुपेक्षा, द्वितीयादिक्षणेष्वनुमतिरिति विशेषनिर्देशो दृश्यते; तत् कथमीश्वरस्य कर्तृत्वं कारयितृत्वञ्चेत्याशङ्क्याह—भाष्यादीति। सर्वदा स्वातन्त्र्येण कर्तुरेवेश्वरस्य कारयितृत्वादिधर्मान्तरलक्षणसमावेशात् सर्वमप्युपपद्यते। न हि [1]प्रथमप्रवृत्तिरिति

प्रकारेण सुकरमित्यालोच्यैव सूत्रकारः प्रयत्नापेक्ष इति प्रयत्नपदं प्रयत्नपूर्वकं प्रायुङ्क्त। शांकरवत् पूर्वकर्मसापेक्षत्वमेवाविवक्षिष्यच्चेत्, 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्' 'न कर्माविभागादिति चेन्नानादित्वात्' इति प्रागुक्त्यैव विहितप्रतिषिद्धवैयर्थ्यादिपरिहारात् पृथक् सूत्रं नैवाकरिष्यत्। पूर्वज्ञातार्थे किञ्चित्प्रमेयशिक्षणायैवैतत्सूत्रारम्भः। तत्तावदाह-अस्तु त्वत्संमतरीत्या किञ्चिदौदासीन्यं पश्चादेव सम्यक् प्रवर्तकत्वञ्च-तथापि इदं द्वितीयकर्मविषये इति न। किंतु एकैकस्य कर्मणो यजनहननादेरनेकक्षण कूटसाध्यक्रियापुञ्जात्मकस्य निष्पत्तौ प्रयत्नकूटस्यापेक्षिततया तत्कूटान्तर्गतप्रथमप्रयत्ने औदासीन्यम् अप्रवर्तकत्वम्, द्वितीयप्रयत्नेऽनुमन्तृत्वम्। यदुक्तं प्राक्, अनादिकर्मप्रवाहे कुत्र कर्मणि प्राथम्यं स्यादिति चिन्तामण्यादौ दूषणम्—तत् त्वद्दूषणे प्रगल्भते। अत्र त्वेकैकक्रियासंतानेऽपि प्रयत्ने प्राथम्यं सुवचम्। न हि, 'आद्यपतनासमवायिकारणं गुरुत्वम्' इति निर्वचने कृते, संसारस्यानादित्वात् पतने आद्यत्वं दुर्वचमिति कश्चित् ब्रूयात्। एतावतैव साक्षित्वानुमन्तृत्वनिर्वाहे अन्तर्यामिश्रुत्यादिसंकोचो न युक्तः। तदेवोक्तं श्रुतप्रकाशिकायाम्, 'नियन्तृश्रुतेस्तावान् संकोचो न स्वतः परः' इति।

ननु प्राक् पूर्वादृष्टाधीनत्वं प्रयत्नानामुक्तम्, तत्र, इदमयं करोतु इति परमात्मसंकल्पाधीनत्वे सर्वप्रयत्नेष्वविशिष्टे कथं निष्प्रमाणं प्रथमप्रयत्ने तन्निरपेक्षत्वमुपन्यस्य शुश्रूषुस्तप्यते इति चेत्—एवं वक्त्राशयो विशद एव टीकायां तात्पर्यचन्द्रिकायाञ्च। कर्मजन्यादृष्टरूपः संकल्पः अज्ञात-यादृच्छिक-प्रासंगिक-बुद्धिपूर्वकादि-विविधसुकृताद्यायत्तः। क्वचित् साधारणकारणसंघटनमात्रे, एतदधीनं कार्यं भवत्विति सामान्यसंकल्पेनैव भगवान् कार्यं निर्वर्तयति, क्वचित्तु इत इदमेव कार्यं भवतु इति विशिष्य संकल्पयति। तत्र विशेषसंकल्पाधीने कर्मणि प्रथमप्रवृत्तेरपि परमात्मप्रेरणाधीनत्वेति न तत्र साक्षित्वम्। यत्र तु सामान्यतः संकल्पेऽपि अर्थाद्विशेषे पर्यवसानम्, तत्र विशेषांशे परमात्मसंकल्पस्य नैर्मर्याभावात् साक्षिता। प्रथमा च प्रवृत्तिर्जाता यं विषयविशेषमवगाहते, तद्विषय एवोपर्युपरि प्रवृत्तिसंतानविधानेन सहायीभावस्तत्रयेत्यनुमन्तृत्वम्। कश्चित् विरोधिमारणे प्रथमं व्याप्रियते। अन्यो विरोधिमारणार्थाभिचारिककर्म श्येनादि विधाय मारणे प्रवर्तते। तत्र द्वितीये मारणव्यापारो विशिष्य परमात्मानुमत्यधीन इति स्पष्टम्। तद्वत् प्रथमव्यापादनक्रियायामपि प्रथमप्रवृत्तिमात्रे औदासीन्येऽपि पश्चात् अयमिदं करोतु इति विशेषसंकल्प एव भगवत इति तत्र भगवत्प्रेरणमस्त्येव। एवमपि तस्यानु-

[1] ननु भाष्ये प्रथमं साक्षित्वं पश्चादनुमन्तृत्वमिति विभागकथनात् प्रथमप्रवृत्तिर्न पराधीनेति शंकायामाह नहीति। भाष्यं निर्वहति तथापीति। तत्प्रवृत्तिप्राथम्यं एककर्मसंबन्धिप्रवृत्तिकूटान्तर्गत प्रथमप्रवृत्तिगतम्; न तु कल्पारम्भ-जन्मारम्भप्राथम्यमिति भावः।

काचित् दशास्ति; प्रवृत्तिप्रवाहस्यानादित्वात्। अथापि प्राथम्यवचनं तत्तत्कालविशेषावच्छिन्नकर्तृत्वा-दिपरमिति न कश्चित् विरोधः ॥ २४२ ॥

(२४३) कर्ता देवः फलानाम्, न तु करणभूतः प्रेरकश्चेत्ययुक्तम्
सर्वश्रुत्यादिकोपात्; न भवति न फलं कर्मणः पापचर्या।
कर्माधीनं तु चिन्ताद्यपि हि भवभृतो भाषितं भाष्यकारैः
जन्तूनां देवतानामपि करणगणाधिष्ठितं(तिं) वक्ष्यतीत्थम्(ति) ॥ २४ ॥

इति परायत्ताधिकरणम् ॥ ५९ ॥

अत्र प्रकारान्तरेण विकल्प्य दूषयित्वा प्रकृतमेवार्थं प्रतिष्ठापयति—कर्तेति। ईश्वरस्य सार्वकालिकं कर्तृत्वं प्रतिक्षिपन् फलप्रदत्वमपि किं प्रतिक्षिपसि, यदि वा न? फलप्रदत्वस्यापि प्रतिक्षेपे सर्वशास्त्रव्याकोपात् फलप्रदत्वमङ्गीकृत्य प्रथमक्षणे कर्तृत्वप्रतिक्षेप एव वक्तव्यः। तच्च हास्यम्—जीवस्य प्रथमं पुण्यपापवृत्त्योः पूर्वजन्मानुष्ठितकर्मफलत्वात्। तेन पुण्यपापविषयजीव-कर्तृत्वे ईश्वरस्य कारयितृत्वेन कर्तृत्वाभावे, पूर्वकर्मफलप्रदायित्वमीश्वरस्य कथं भवेत्। तेन फल-प्रदत्वाङ्गीकारे सर्वदा कर्तृत्वं कारयितृत्वं चाङ्गीकृतमेव। तदनङ्गीकारे फलप्रदत्वस्य का वार्ता? उत्तरोत्तरप्रवृत्तीनां पूर्वपूर्वप्रवृत्तिफलत्वात्। अयमत्र शब्दान्वयः—देवः फलानां कर्ता करणभूतो जीवस्यानुष्ठानकाले प्रेरको न भवतीत्ययुक्तम्। तत्र हेतुमाह—सर्वेति। तदेव विवृणोति—न भवतीति। पापचर्या पूर्वकृतस्य कर्मणः फलं न न भवति। फलमेव भवतीत्यर्थः। द्वौ नञौ प्रकृतमर्थं सूचयत(द्रढयत?) इति न्यायात्। पापचर्येति पुण्यस्याप्युपलक्षणम्। न केवलं पुण्य-पापरूपं कर्म पूर्वकर्मफलम्; चिन्तितनिमिषितादिकं तु सर्वमपि पूर्वकर्मफलमिति भाष्यकारैरेव सुव्यक्तमभिहितमित्याह—कर्माधीनं त्विति। न केवलमेतावदेव; सर्वेषामपि जन्तूनां देवतानाञ्च

मतिशब्दव्यवहारोऽप्रथमप्रवृत्तिविषयकत्वादिति। एतेन—भाष्ये, "उद्योगमपेक्ष्यानुमतिदानेन प्रवर्तयति" इति भाषितत्वात्, उद्योगमनपेक्ष्य न प्रवर्तयतीति लाभात् अनुमन्तृत्वमेव; प्रवर्तकत्वं नैव भवतीत्यपि शंकाऽपि निरस्ता-पूर्वकर्माधीनसंकल्पस्य यत्र विशेषरूपता, तत्र प्रवर्तकत्वस्यावर्जनीयत्वात् ॥

२४. एवं द्वितीयादिकर्ममात्रप्रवर्तकत्वमिति पक्षो दूषितः। कश्चित्तु सर्वेश्वरत्वेऽपि तस्योपायप्रवर्तकत्वं नास्ति देवः फलानामेव कर्ता दातेत्याह। प्रकृतभाष्यमपि उद्योगमपेक्ष्येति उपायमनुष्ठीयमानं दृष्ट्वेत्यर्थकम्। अनुमतिदानेन प्रवर्तयतीत्यस्य फलानुभवार्थप्रवर्तनपरत्वमेवेति च मन्यते तदाह कर्तेति। अत्र शंकितुर्भाष्यस्यार्थान्तराशयाभावे भाष्यवाक्यान्तरप्रदर्शनेन समाधिर्न स्यात्। निरस्यति इतीति। इतीदमयुक्तम्। दातेत्यप्रयुज्य कर्तेति प्रयोगः सर्वस्रष्टृत्वभंगोऽपि स्यादिति व्यंक्तुम्। सर्वेति। 'भ्रामयन् सर्वभूतानि' इत्यादिकं भाव्यम्। युक्त्यन्तरमाह न भवतीति। पापारम्भकपापानां फलानि हि पापान्येव। फलकर्तृत्वे पापप्रवर्तकत्वमपीष्टमेवेत्यर्थः। प्रकृतभाष्यस्यैव अन्यथाऽर्थकल्पनमनेकभाष्यग्रन्थादिविरोधादयुक्तमित्याह कर्माधीनमिति। आनन्दमयाधिकरणे, कर्माधीनचिन्तितनिमिषितादिसकलप्रवृत्तिजीवस्वरूपत्वमिति प्रवृत्तिसामान्ये कर्माधीनत्वोक्त्या उपायानुष्ठानस्य कर्माधीनत्वं हि स्पष्टम्। जन्तूनामिति। केनोपनिषदि उपायानुष्ठानादिप्रवृत्तजीव-व्यापाराणां किंकिंदेवताधीनत्वमिति प्रश्ने, देवदेवाधिष्ठानस्य मुख्यत्वं प्रत्युत्तरे प्रदर्शितम्।

तत्तच्चक्षुरादिकरणाधिष्ठानं परमात्मप्रेरणायत्तमिति भाष्यकार एवोचरः विशदं प्रकाशयन्तीत्याह - जन्तूनामिति। करणगणाधिष्ठितमिति भावे निष्ठा। अधिष्ठानमित्यर्थः ॥ २४३ ॥

इति परायत्ताधिकरणम् ॥ ५९ ॥

६० ॥ अथ अंशाधिकरणम् ॥ २-३-७ ॥

सूत्रम्—अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ मन्त्रवर्णात् ॥ अपि स्मर्यते ॥ प्रकाशादिवत्तु नैवं परः ॥ स्मरन्ति च ॥ अनुज्ञापरिहारौ देहसंबन्धाज्जोतिरादिवत् ॥ असन्ततेश्चाव्यतिकरः ॥ आभास एव च ॥ अदृष्टानियमात् ॥ अभिसन्ध्यादिष्वपि चैवम् ॥ प्रदेशभेदादिति चेन्नान्तर्भावात् ॥ ४२—५२ ॥

(२४४) जीवादत्यन्तभिन्नः पर इति बहुधा व्याहरत् सूत्रकारो
भेदाभेदश्रुतीनां घटकनिगमतः शास्त्रवश्च व्यपोढम् ।
उक्ताक्षेपे समाधावपि न समधिको हेतुरत्रास्ति ; सत्यं
पादांशाद्युक्तिमुख्यद्रढुकमतिमतक्षिप्तये त्वंशचिन्ता ॥ २५ ॥

अत्र सङ्गतिप्रदर्शनपूर्वकं संशयप्रकारबाहुल्यं तत्कारणञ्च भाष्य एव सुव्यक्तमुक्तम्—'जीवस्य कर्तृत्वं परमपुरुषायत्तमित्युक्तम्। इदानीं किमयं जीवः परस्मादत्यन्तभिन्नः, उत परमेव ब्रह्म भ्रान्तम्, उत ब्रह्मैवोपाध्यवच्छिन्नम्, अथ ब्रह्मांश इति संशय्यते। श्रुतिविप्रतिपत्तेः संशयः' इति। अत्र ब्रह्मांश इति किं विशेष्यैकदेशरूपोंऽशः, किं वा विशिष्टैकदेशरूपो विशेषणांश इति विकल्पो भाष्याभिप्रायस्थः। स च वक्ष्यते। इत्थं चेह सङ्गतिरुच्यते—यदि जीवस्य कर्तृत्वं परमात्माधीनम्, तदा राजभृत्यादिन्यायेन तस्य परमात्मांशत्वकथनमप्यौपचारिकमेव स्यादिति शङ्कया पूर्वपक्षोत्थानमिति। तदर्थविचारस्तु-जीवः किं परमात्मनोऽत्यन्तभिन्नः, उतानन्यः परमात्मैव, उतोपाधिभेदभिन्नः, उत स्वतो भिन्नाभिन्नः, उत परमात्मनो विशेषणतया अंश इति। तदर्थं कस्मिन् पक्षे भिन्नत्वाभिन्नत्वादिविषयसर्वश्रुतिमुख्यत्वमुपपद्यते, कस्मिन्नेति। अधिकरणोत्थानं पूर्वपक्षसिद्धान्तयोर्विशेषहेत्वभावात् आक्षिप्यार्धाङ्गीकारेण समादधाति-जीवादिति। जीवादत्यन्तभिन्नः परमात्मेति बहुधा भेदव्यपदेशप्रतिपादकैः सूत्रैरुपापीपदत् सूत्रकारः। अभेदप्रतिपादकानां च वाक्यानां भेदप्रतिपादकैरैक्यै-

सूत्रकृता च, 'ज्योतिराद्यधिष्ठानं तु तदामननात् प्राणवता शब्दात्' इति सर्वप्रेरणाधीनत्वं देव विशदमुक्तम्, भाष्ये च विशदं व्याख्यातमिति सर्वविरुद्ध उक्तार्थो न युक्त इति भावः। मूले अधिष्ठितिमिति पाठे सुगम एवार्थः ॥ २४३ ॥ (५९)

२५. शरीरात्मभावे सिद्ध एव सर्वात्मना परायत्तत्वं जीवप्रवृत्तौ सिध्येत्। अन्यादृशार्थकात् अंशव्यवहारात् शरीरात्मभावे संदेहे सति अंशशब्दार्थशोधनमत्र क्रियते। विवक्षितस्यांशत्वस्य मुख्यार्थत्वं न भवतीति, अन्यादृशांशत्वमेवोपपन्नमिति च न शंक्यमिति निरूप्यत इत्याशयेनाधिकरणावैयर्थ्यमुपपादयति जीवादिति। संगतिर्भाष्यार्थदर्पणेऽपि विशदा। बहुधा=नेतरोऽनुपपत्तेः, भेदव्यपदेशात्, अधिकं तु भेदनिर्देशात् इति बहुकृत्वो जीवादत्यन्तभिन्नत्वं परस्योक्तवान्। तेन परमात्मभिन्नत्वं जीवस्यापि सिद्धम्। ननु 'नानाव्यपदेशादन्यथा च' इत्युभयविधव्यवहारप्रदर्शनार्थमिदमधिकरणमित्यत्राह भेदेति। ब्रह्मणो जीवाद्भेदे, विज्ञानघन एवेत्याद्यभेदः कथमित्याशंक्य, 'अवस्थितेरिति काशकृत्स्नः' इति घटकश्रुतिमादाय शास्त्रं विरोध व्यपोढं निरस्तम्। अतो नात्र वक्तव्यं शिष्यते, ननु प्रमेयस्योक्तत्वेऽपि

विरोधोऽपि घटकश्रुत्या परिहृत एव। न चात्र पूर्वपक्षे सिद्धान्ते वा कश्चिद्विशेषहेतुरुपादीयते। तेन नेदमधिकरणमारभ्यमिति कश्चिदचूचुदत्। अत्र भेदाभेदश्रुतीनां घटकश्रुत्या शाश्वतं व्यपोढमिति शरीरात्मभावश्रुतयो विवक्ष्यन्ते। [1]उक्ताक्षेपे = पूर्वपक्षे समाधौ = सिद्धान्ते च न समधिको हेतुरत्रास्ति = विशेषहेतुरत्र नास्तीत्यर्थः। इमं पूर्वपक्षमर्धाङ्गीकारेण निराकरोति-सत्यमिति। तदेव प्रकटयति—पादेति। क्वचित्, 'पादोऽस्य विश्वा भूतानि' इति विश्वं पादशब्देनोच्यते। क्वचित् 'ममैवांशो जीवलोके जीवभूतस्सनातनः' इत्यंशशब्देन जीव उच्यते। क्वचित् 'विष्णुशक्तिः परा प्रोक्ता' इत्यादिना शक्तिशब्देन भगवद्विशेषणभूतं विश्वमुच्यते। एवं तनु-रूप-शरीरादिशब्दैरपि। तत्रतत्र मुह्यतां बहूनां कुमतीनामभिमतार्थक्षेपणाय पौनःपुन्येन चिन्तनमिति साफल्यमेवाधि[2]कृतेरिति न विरोधः॥ २४४॥

(२४५) अंशत्वं रामकृष्णप्रभृतिषु घटतां विग्रहांशावतारात्
जीवे ब्रह्मांशतोक्तिर्ननु निरवयवं ब्रह्म वक्तुर्घटेत।
ब्रह्मातश्चित्समष्टिः प्रतिपुरुषमिह त्वंशता चेत्ययुक्तं
विश्वस्रष्टुर्बहु स्यामिति बहुभवनख्यातुरेकत्वसिद्धेः॥ २६॥

अत्र पूर्वपक्षी मन्यते—रामकृष्णादिषु वासुदेवांशत्वं वक्तुं शक्यत एव, अब्धौ तरङ्गाणामिव वासुदेवविग्रहादेवावतारविशेषाणां प्रादुर्भावात्। जीवे तु ब्रह्मांशभावोक्तिर्निरवयवमेव ब्रह्म वक्तुर्भवतो न घटेत। अतश्चित्समष्टिर्ब्रह्म। प्रतिपुरुषमपि ब्रह्मांशत्वं वक्तव्यमिति। तदिदमाह—अंशत्वमित्यादिना, अंशता चेत्यन्तेन। तदिदं प्रतिक्षिपति-अयुक्तमिति। अयुक्तत्वमेव विवृणोति-

तदाक्षेपकहेत्वन्तरोपन्यासः, परिहारकहेत्वन्तरोपन्यासो वाऽधिकरणकृत्यम'स्त्वत्याह उक्तेति। एवमधिकरणानुत्थितिशंकां परिहरति सत्यमिति। पादोऽस्य सर्वा भूतानि, ममैवांशो जीवलोके, यथाऽग्नेर्विस्फुलिंगाः एवमेते प्राणाः इति पादत्वांशत्वस्फुलिंगसाम्योक्त्या मुह्यतां बहूनां कुमतीनां मतानां क्षेपाय तदर्थविचारः। अवयवित्वं हि अवयवसमुदायात्मकद्रव्यैकदेशत्वं वा, निरवयवसंबन्ध्यौपाधिकप्रदेशत्वं वा, तत्तुल्यत्वं वा तादृशवस्त्वेकदेशतुल्यपरिमाणत्वं वा विशिष्टवस्त्वेकदेशत्वं वा स्यात्। तत्र नान्त्यः, विशिष्टघटकतत्स्वरूपमंशत्वं हि विशेषणे विशेष्ये च समानमिति ब्रह्मणोऽप्यंशत्वापत्तेः। अतः पूर्वेषु पक्षेष्वेकतमः स्वीकार्य इति शंकेति॥ २४४॥

२६. तत्र प्रथमपक्षशंकां परिहरति अंशत्वमिति। 'विष्णोरर्धं महभागम्, अर्धांशेनावतीर्णस्य विष्णोर्वीर्याणि शंस नः' इति रामकृष्णादिषु ब्रह्मांशत्वव्यवहारात् जीवेऽपि तथा स्यात्। अतो ब्रह्मेति चित्समुदायस्यैव कथनात् पुञ्जान्तर्गतैकैकपरमाणुवत् जीवानां चितां ब्रह्मैकदेशत्वमिति प्रतिजीवमंशत्वमित्ययुक्तम्। यतः निरवयवं ब्रह्मेति वक्तारं प्रति एवमुपपादनं न घटते। सूत्रकारश्च, 'निरवयवत्वशब्दकोपो वा' इति वदन् तत्र महते। रामकृष्णादौ तु युज्यते। न हि शुद्धस्याऽऽत्मनो रामादिनाम; किंतु अप्राकृतविग्रहविशेषविशिष्टस्य। तस्य विग्रहः परमपदस्थपरवासुदेवाख्यनित्यविग्रहैकदेश इति, 'तत् विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत्। समस्तशक्ति रूपाणि तत् करोति जनेश्वर। देवतिर्यङ्मन-

1 उक्तेति अस्मिन्नाक्षेपे वा समाधानमुखभेदे वेत्यर्थः स्यात्। 2 अधिकृतेः-अधिकरणस्य।

विश्वसृड्ढुरिति। अत्र विश्वस्रष्टा कश्चिदेकः, 'बहु स्याम्' इति स्वस्य बहुभवनं सङ्कल्पयति। स चैक एव। न हि जीवसमष्ट्यवेको बहुभवनसङ्कल्पयिता विद्यते। समष्टिर्नाम सङ्घातविशेष एव। स तु बहुभवनसङ्कल्पाश्रयो न भवति। सङ्घातरूपसमष्ट्याश्रयाश्च पुरुषा बहव एव। न तेष्वेकत्वमस्ति। तेनैकस्य पुरुषस्य, 'बहु स्याम्' इति सङ्कल्पस्तत्पक्षे न सङ्गत एव॥ २४५॥

(२४६) व्योमैकं स्यात् घटाद्यैः पृथक्, उपधिगणैर्ब्रह्म बह्वंशमेवम्;
तत्रोपाधिव्यपाये भवभृदयमियात् ब्रह्मतामित्ययुक्तम्।
स्वानर्थारम्भदोषस्थ्यात् प्रतिनियतगुणप्रत्यभिज्ञाद्यदृष्टेः
छिन्नाच्छिन्नांशचिन्तोदितबहुविहतेः साम्यशब्दाच्च मुक्तौ॥ २७॥

पूर्वं जीवसमष्टिर्ब्रह्मेति पक्षं प्रतिक्षिप्याधुना पुनः प्राक्तनप्रक्रमेणोपाधिब्रह्मवादं प्रतिक्षिपति—व्योमेति। यथैकमेवाकाशं घटादिभिरुपाधिभेदैः पृथक् स्यात्, एवं ब्रह्मापि देहोपाध्यवच्छेदाद्बह्वंश स्यात्। तथा सति उपाधिव्यपाये=देहविगमे भवभृदयं=जीवोऽयं ब्रह्मतामियात्=प्राप्नुयात्, यथा घटादिविगमे घटाकाशादिकं महाकाशतां प्राप्नुयादिति। एतत् प्रतिक्षिपति—इति अयुक्तमिति। तत्र हेतुमाह—स्वानर्थेति। अयमर्थः—युष्मत्पक्षे ब्रह्म जीवस्य स्वतादात्म्यं जानाति, न वा? जानाति चेत्, स्वस्वरूपस्यानर्थकरसंसारं न कुर्यादेवेति न जगदारम्भसिद्धिः स्यादिति बाधकमाह। तर्हि न जानातीति भ्रम इत्याशङ्क्याह—प्रतिनियतेति। योगिनां सर्वज्ञानां नानाशरीरप्रयुक्तसुखदुःखादिप्रत्यभिज्ञानं दृष्टमेव। एवमीश्वरस्यापि पुण्यपापारब्धनानाशरीरप्रयुक्तस्वात्मनिष्ठसुखदुःखप्रत्यभिज्ञावश्यम्भावादीश्वरस्य न सा घटेतेति पूर्वोक्तं तत्त्वस्यमेव। एतस्य पक्षस्य प्रतिक्षेपकं

---

नुष्यारूपाचेष्टावन्ति सलीलया' इति विष्णुपुराणवचनादिसिद्धम्। अत. शरीरगतमशत्वं शरीरिणि व्यवहियत इति तत्रोपपन्नम्; न त्विहेति। अवयवसमुदायरूपत्वे ब्रह्मणोऽनुपपत्तिरप्याह विश्वेति। निष्कलमित्यादिश्रुतिविरोधवत् श्रुत्यनुपपत्तिरपि। अहं बहुस्यामिति संकल्पनात् तत पूर्वमेकत्व पश्चाद् बहुत्व च सिद्धम्। अवयवसमुदायरूपत्वे च पूर्वमेव बहुत्वं स्यात् चिरसनष्टिरूपत्वे च ब्रह्मणः, अहमिति संकल्पाश्रयस्तु कोऽवयवः। अहमिति प्रत्यक्त्वं हि एकैकस्यैव भवेत्, न संघस्य। देवमनुष्यतिर्यगादिषु च बहुषु एकैकस्य तत्संघरूपब्रह्मत्वाभावाच्च तन्न युक्तम्। संघान्तर्गतस्यैकस्य अहमिति ग्रहणे तस्य बहुजीवत्वं कथम्। एकैकांशस्यैकैकजीवतायास्त्वदिष्टत्वात्। प्रत्येकमात्मनामेकत्वेनानुभूयमानत्वादेकत्वं सिद्धम्। तत् ब्रह्मण्यपि तुल्यम्। अतो नायं संघातपक्षः॥ २४५॥

२७. मृषावादिषु उपाध्यवच्छिन्नं ब्रह्म जीव इति वादिनोऽपि सन्ति। भास्करमतञ्चैतदेव। अत इदमंशत्वमस्त्विति शङ्कित्वा परिहरति व्योमेति। व्योम एकमपि घटादिभिः पृथग् भवति। व्योम निरवयवमिति नैयायिकमतेऽपि घटाकाशो मठाकाश इत्येवमाकाशभेदा इष्यन्ते; उपाधिभेदात्। एवं=तथा देहान्तःकरणादिभेदात् ब्रह्मणि बह्वंशत्वं नानाजीवत्वम्। उपाधेर्घटादेरपाये व्योमभेदापायवत् तत्त्वज्ञानेनाविद्याक्षये उपाध्यभावात् ब्रह्मण एकतेति। इदमयुक्तम्। एवं हि सति ब्रह्म स्वानर्थं स्वयमेव सृजतीति स्यात्। तत् दुःस्थम्। अयमनर्थः स्वस्येति न जानाति चेत्, ब्रह्मासर्वज्ञं स्यात्। जानाति चेत्, न सृजेत्। आत्मन एकत्वे सौभरिणा एकदेहावच्छिन्नेन तदन्यदेहावच्छेदेनानुभूतं

दोषान्तरद्वयमनुक्रमादाह—छिन्नेत्यादिना । अयमर्थः उपाधिसंसृष्टं ब्रह्म जीव इति भवद्भिरुच्यते । किमुपाधिसंसृष्टं ब्रह्म सर्वत्रापि जीवभावेन सुखदुःखादिकमनुभवति, किं वा उपाधिना छिन्नं ब्रह्म च्छिन्नांशेन संसरति, अथवा पुनरच्छिन्नमेव ब्रह्म यत्र यत्रोपाधिसंसर्गः, तत्रतत्र संसारदुःखमनुभवति, अथवा उपाधिरेव जीवः, किं वान्य एव कश्चिदुपाधिसंसृष्टो जीवतामश्नुत इति । सर्वे पक्षा न सङ्गच्छन्ते । प्रथमपक्षे तावत् सर्वदा सर्वेष्वपि प्रदेशेषु ब्रह्मण उपहितत्वं स्यादित्यत्यन्तदौस्थ्यमेव । द्वितीयपक्षे पुनरच्छेद्यस्य ब्रह्मणश्छेद्यत्ववादो जिह्वाच्छेदनमेव तनोति । तृतीयेऽपि पक्षे सर्वस्य ब्रह्मप्रदेशस्य कालभेदेनोपाधिसम्बन्धादुपहितत्वमुपाधिवियोगाद्वियुक्तत्वमिति प्रतिक्षणं बन्धमोक्षप्रसङ्गः । उपाधेरेव संसारित्वे चार्वाकपक्षः परिगृहीतःस्यात् । उपाधिसंसृष्टोऽन्य इति पञ्चमपक्षोऽपि पञ्चत्वमेव गच्छति; ब्रह्मव्यतिरिक्तस्य पुरुषस्य कस्यचिदस्वीकारादिति । साम्यशब्दाच्च मुक्ताविति—मुक्तौ, 'निरञ्जनः परमं साम्यमुपैति' इति साम्यवचनात् स्वरूपैक्यवादो न युज्यत इत्यर्थः ॥ २४६ ॥

(२४७) मायोदन्वत्यपारे प्रतिफलति मृषावीचिषु ब्रह्मचन्द्रः
छायांशास्तस्य जीवा इति कतिचिदुशन्त्येतदालोचनीय(दुन्मत्तगीत)म् ।
न ब्रह्म द्रष्टृ तेषामचिदपि हि (न) तथा स्वेन कल्प्यो न जीवः
क्लृप्तेः प्राक् स्वात्महानेः, त्रितयसमधिकः कल्पकस्त्वत्र मृग्यः ॥ २८ ॥

एवं भास्करपक्षं निराकृत्य मृषावादिपक्षं प्रतिक्षिपति—मायेति । अविद्याख्यसागरे मिथ्याभूतासु वीचिस्थानीयासु बुद्धिषु चन्द्रस्थानीयं ब्रह्म प्रतिफलति । तस्य च्छायांशा जीवाः=प्रतिबिम्बस्थानीया जीवा इत्यर्थः । एवं केचिदिह मृषावादिपक्षनिष्ठा वदन्ति । एतत् प्रतिक्षिपति—एतदालोचनीयमिति । तदेव तदङ्गीकर्त(कृतस्य?) विकल्पासहत्वेन प्रकटयति—न ब्रह्मेत्यादिनोत्तरार्धेन । चन्द्रप्रतिबिम्बानां द्रष्टृभिरेव दर्शनं दृश्यते । कः पुनरिह द्रष्टा? किं ब्रह्मजीवव्यतिरिक्तमचिद्द्रव्यमेव किञ्चित्, अथवा जीव एव, यद्वा त्रितयव्यतिरिक्तः कश्चिदन्य इति विकल्पाः । नाद्यः; ब्रह्मणो द्रष्टृत्वाभावादित्याह—न ब्रह्म द्रष्टृ तेषामिति । तेषां पक्षे ब्रह्मणो द्रष्टृत्वं नास्तीत्यर्थः ।

---

प्रत्यभिज्ञायते, तथा सर्वजीवभूतं ब्रह्म एकैकदेहेऽपि अन्यदेहानुभूतमपि स्मरेत् । तददृष्टेः सुखदुःखादिव्यवस्थादर्शनात् नैकत्वम् । दोषान्तरमाह छिन्नेति । तत्तदुपाधिना ब्रह्मणश्छिन्नत्वात् एकेन नान्यानुभूतप्रत्यभिज्ञेति चेत्-तन्न; अच्छेद्यत्वात् अनवयवत्वाच्च । छिन्नस्यच्छिन्नेनैकत्वमपि न भवति । अच्छेदपक्षे च, किं ब्रह्म जीवः, उपाधिर्जीवो वा ॥ ननु नैवम्; उपाधिविशिष्टं ब्रह्म जीव इति चेत्, तत् ब्रह्मोपाध्युभयातिरिक्तं वा तदेव वेति समन्वयाधिकरणभाष्ये भास्करपक्षदूषणे विस्तरोऽत्रानुसंधेयः । ऐक्ये साम्यश्रुतिविरोधोऽपि दोष इत्याह साम्येति ॥ २४६ ॥

२८. अंशत्वं सूर्यप्रतिबिम्बे सूर्यांशत्ववत् औपचारिकम्; भिन्नत्वे प्रतीयमानत्वे सति सर्वैतत्कार्यकरणासामर्थ्यादिति पक्षं क्षेप्तुमाह मायेति । कुत्र प्रतिफलति? कथं तत्रानेकता? तदुपपादयति मृषात्वं न वीचिमात्रे, किंतु मायाया अपीत्यर्थसिद्धम् । मृषापदं वा पृथक्कृत्य उदन्वतीत्यत्र योजनीयम् । मृषाभूता मायैव समुद्रः तत उत्थिता बुद्धिरूपपरिणामा अन्तःकरणाख्या एव वीचयः । तत्र चन्द्रस्थानीयं ब्रह्म प्रतिफलति, तत्रैकैकाऽपि छाया प्रतिबिम्बो जीवः । अंशत्वं

द्वितीयोऽपि पक्षो न कक्षीकार्य इत्याह—अचिदपि हि तथेति। तस्यापि द्रष्टृत्वं नास्तीत्यर्थः। तर्हि जीव एव जीवादिकं कल्पयतीति तृतीयः पक्षः परिशिष्यते। सोऽपि नेत्याह—स्वेनेति। तत्र हेतुमाह—क्लृप्तेः प्रागिति। जीवक्लृप्तेः पूर्वं जीव एव नास्ति। स कथं जीवं कल्पयेदित्यर्थः। तर्हि चतुर्थः पक्षः परिगृह्यतामित्याशङ्क्य तस्य युष्मत्सिद्धान्तबहिर्भावादाशङ्कनीयत्वमेव नास्तीत्याह-त्रितयेति। न ह्येवंवादा जीवब्रह्मभ्योऽन्यं कञ्चित् प्रपञ्चकल्पकत्वेन कल्पयन्ति मृषावादिन इति॥

(२४८) सन्मात्रं ब्रह्म सर्वानुगतम् ; इह पुनर्नित्यसिद्धास्त्रयोंऽशाः
जीवेशाचित्प्रभेदादिति च कतिचनेदञ्च नोदञ्चनीयम्।
सत्तामात्रानुवृत्तेस्तदधिकवपुषश्शासितुर्ब्रह्मतोक्तेः
ब्रह्मत्रिविधवाक्यं निरवयवतया निश्चितेऽन्याशयं स्यात् ॥ २९ ॥

अथ यादवप्रकाशपक्षमनूद्य प्रतिक्षिपति सन्मात्रमिति। सन्मात्रं ब्रह्म चिदचिदीश्वरतत्त्वत्रये सदित्यनुगतमेव वर्तते। इह=सन्मात्रब्रह्मणि जीवेश्वराचिद्भेदात् त्रयोंऽशा नित्यसिद्धा इति कतिचन=यादवप्रकाशमतानुसारिणः प्राहुः। तन्मतं प्रतिक्षिपति—इदञ्च नोदञ्चनीयमिति। इदं न ग्राह्यमित्यर्थः। अत्र ह्यन्ये हेतुमाह—सत्तेति। व्यक्तिषु जातिरिव चिदचिदीश्वरतत्त्वत्रये सत्तासामान्यमनुवर्तते ; न पुनः सदित्येकं द्रव्यं त्रिष्वनुवर्तत इत्यर्थः। वेदान्तेषु सत्तातिरिक्तस्य विश्वशासितुः पुरुषस्य ब्रह्मत्वमुच्यत इत्याह—तदधिकवपुष इति। तेन चेतनाचेतनयोर्द्वयोरन्तर्यामितया विश्वनियामकं ब्रह्मतत्त्वमनुवर्तत इति वेदान्तसिद्धान्तसमयनमित्यर्थः। तर्हि, 'भोक्ता भोग्यं

---

तत उपपन्नम् इति मृषावादिष्वेव केचित्। तत् निरस्यति एतदिति। तेषामिति। तेषामद्वैतिनां पक्षे इत्यर्थः। यद्वा तेषां छायारूपाणां जीवानाम्। अथवा माया-तद्गीवि-तत्प्रतिबिम्बानां सर्वेषां द्रष्टा कल्पकः कः? कल्पकाभावे मृषात्वासिद्धेः। न हि ब्रह्म द्रष्टृ शुद्धचैतन्यरूपत्वात्। न हि अचिदपि द्रष्टृ ; अचित्त्वादेव। अतो ब्रह्म अचिच्च न तेषां द्रष्टृ। तथेति उपर्यन्वेति। उक्तसमुच्चये। जीवोऽपि न स्वं द्रष्टा। न हि जीवः कल्प्यः स्वेनैव कल्प्यते। क्लृप्तेः=कल्पनात् प्राक् स्वाभावात्। अन्यथा आत्माश्रयात्। नन्वसौ कल्पको द्रष्टा कश्चिदन्य इत्यत आह त्रितयेति। त्वया ब्रह्म-जीव-तत्कल्प्यरूपार्थत्रयस्यैव स्वीकृतत्वात् तथोक्तायोगादिति। एवं प्रतिबिम्बवादे च मुक्तौ आत्मनाशः स्यात्। अतः सुरेश्वराचार्यमतमिदमप्यापातरमणीयम्। 'तत् त्वमसि' इत्यैक्यस्य त्यक्तत्वात ॥ २४७ ॥

प्रतिबिम्बपक्षे ईश्वरप्रतिबिम्बत्वमपि जीवस्य वक्तुं शक्यते, जीवैश्वरैक्यञ्च सूर्यतत्प्रतिबिम्बैक्यवदिति। एवं निर्वाहोऽपि फल न भवति, दोषाश्च तत्रोक्ता जाग्रति, तं यादवप्रकाशपक्षमनूद्य निरस्यति सन्मात्रमिति। सर्वानुगतं चिदचिदीश्वराख्यतत्त्वत्रितये घटशरावादौ मृदिवानुगतमस्ति किञ्चित्। तत् अस्तीति प्रतीतत्वात् सन्मात्रम्। तदेव ब्रह्म। तर्हि घटशरावादीनामिव कदाचित्परिणामे त्रयाणामनित्यत्वं स्यात्। अपरिणामे मिथो विलक्षणतया तत्त्वत्रयमेव स्यात्। तत्र त्रिषु सत्तेति कश्चिद्धर्मः अनुगतः प्रतीयत इत्येव स्यात् अतो नाद्वैतमिति शंकायां पूर्वपक्षी प्रत्याह नित्येति। सर्गारम्भे तत्परिणामेऽपि शक्तिरूपेण पूर्वं स्थितत्वात् जीवानां पश्चान्नाशाभावाच्च नित्यसिद्धत्वमिति। इति च कतिचन यादवप्रकाशीयाः। उशन्तीति पूर्वश्लोकादनुषंगः। इदञ्च मतं नोदञ्चनीयम् नोत्थाप्यम्। किंत्वधः पतितमेव। शक्तिसन्मात्रयोर्भेदे अद्वैतहानेः। शक्तीनां चिदादीनाञ्च भेदे

प्रेरितारम्' इति(त्यादि) ब्रह्मत्रैविध्यकथनं कथमित्याशङ्क्य परिहरति—ब्रह्मत्रैविध्येति। नात्र तुल्यतया तत्त्वत्रयं ब्रह्मत्रैविध्यमित्युच्यते; अपितु चेतनाचेतनविशिष्टब्रह्मणि विशेषणविशेष्यांशभेदेन त्रैविध्यमुच्यत इति न कोऽपि विरोधः। अन्याशयत्वे हेतुमाह—निरवयवतया निश्चित इति। न हि निरवयवे सर्वव्याप्ते ब्रह्मणि स्वरूपतो भेदकथनं प्रमाणपदवीमुपढौकते ॥ २४८ ॥

(२४९) मेरोरंशः किरीटप्रभृतिरिति नयान्नित्यभिन्नेऽशतोक्तिः
साजात्याल्पत्वमूला गमयितुमुचितेत्यागमासन्नपक्षे ।
अंशोक्तिः स्यादमुख्या; स हि निपुणधियामेकवस्त्वेकदेशः
तस्माज्जीवो विशिष्टे भगवति गुणवत् तत्प्रकारोंऽश उक्तः ॥ ३० ॥

कश्चित् वेदान्तासन्नवादी प्राह—मेरोरंशः किरीटप्रभृतिरितिवत् ब्रह्मांशो जीव इति ज्ञानानन्दत्वेन ब्रह्मसाम्यात् स्वयमल्पत्वाच्चाभिधीयत इति। एतत्पक्षमनूद्य प्रतिक्षिपति मेरोरंश इत्यादिना। अस्मिन् आगमासन्नपक्षे दोषोऽस्तीत्याह—अंशोक्तिरिति। न हि मेरोरंशः किरीट इत्यत्र किरीटस्य मेरुस्वरूपांशत्वमस्ति। तेनांशोक्तिरमुख्या स्यात्। मुख्यामुख्यविभागदर्शनार्थमंशशब्दार्थमेव व्युत्पाद-

---

चिदादीनां कार्यत्वापत्तेः। जीवानां कार्यत्वे अकृताभ्यागमादिप्रसंगात्। अतो नित्येषु तेषु सत्त्वैवानुवर्तते धर्मः; न तु सदिति द्रव्यं किञ्चित्। किञ्च सन्मात्रब्रह्मणा सहैक्यं जीवानां नोच्यते शास्त्रे; किन्तु सन्मात्राधिकस्वरूपस्य शासितुः ईश्वरत्वप्रयोजकसर्वाकारविशिष्टस्यैव ब्रह्मत्वमुच्यते। तदैक्यञ्च तत्त्वमसीति। नन्वीश्वरमात्रे ब्रह्मत्वमित्ययुक्तम्। 'भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्' इति त्रयाणां ब्रह्मत्वोक्तेरित्यत्राह ब्रह्मत्रैविध्येति। त्रितयस्य प्रत्येकं ब्रह्मत्वे एकत्वासिद्धिः। समुदायस्य ब्रह्मत्वे सावयवत्वापत्तिः। बृहत्त्वात् बृंहणत्वाच्चेत्यादिसर्वबाधश्च। अतो ब्रह्मणि विशिष्टे चिदचितोरप्राधान्येनान्तर्भावविवक्षया त्रैविध्योक्तिः विशिष्टे कारणत्वकार्यत्वाद्युपपादनाय ॥ २४८ ॥

३०. एवमद्वैतिभिरुच्यमानाः जीवस्य ब्रह्मांशत्वप्रकारा निरस्ताः। अथ द्वैतिभिरुच्यमानं शोधयति। तत्रात्यन्तभेद एव सूत्रेष्ट; नानाभावादिति प्रथमनिर्देशात्। अन्यथा चेत्यन्वाचयात् अद्वैतं साम्प्रतिकं न्यूनमिति ज्ञायते। तथाच यथा मेरोरंश किरीट इति प्रयोगे किरीटान्तर्गतस्य सुवर्णस्य मेरुतोऽनानीतत्वात् मेरुशकलसमपरिमाणत्वमात्रविवक्षा, तथा निरवयवब्रह्मसंबन्धिप्रदेशेन यत्किञ्चिदणववच्छिन्नेन समपरिमाणो जीव इत्येतावानेवांशशब्दार्थः। यदा तु जीवानामपि विभुत्वम्, तदा जीवानां ब्रह्मांशत्वं नाम तद्गत शक्तिज्ञानवत् सर्वविषयकत्वं जीवशक्तिज्ञानयोर्नास्तीति तच्छक्तिज्ञानविषयात्यन्तन्यूनविषयकशक्तिज्ञानकत्वरूपमेवांशत्वं मन्तव्यम्। साजात्याल्पत्वमूलेति। तत्साजातीयत्वे सति ततोऽल्पत्वमंशत्वम्। मेरोरंशः काष्ठमिति व्यवहाराभावात् साजात्यविवक्षा। आधिक्ये वा साम्ये वा अंशत्वव्यवहाराभावात् अल्पत्वोक्तिः। एवमेतन्मूलकतया गमयितुं निर्वोढुमुचिता अस्मता अंशशब्दप्रयोगविषयता। एतत्पक्षस्याद्वैतपक्षतो वैलक्षण्यमाह इत्यागमासन्नेति। परमात्मनो दुःखित्वादिहेयास्पदत्वापादकात् जगदपलापरूपाच्च पक्षात् द्वैतपक्षः श्रेयानिति भावः। तर्हि कथमेतदनिष्टमित्यत्र तत्रदोषमाह। अंशोक्तिरिति।

यति—स हीति। अंशो हि निपुणधियामेकवस्त्वेकदेशः। किरीटस्तु मेरोः नांशः—स्वरूपैकदेशः तत्सजातीयद्रव्यान्तरत्वात्। तद्वज्जीवोऽपि न ब्रह्म(णः)स्वरूपैकदेश इत्यर्थः। कथं तर्हि जीवो ब्रह्मांश इति परिचोदनापरिहारेणांशत्वमेव निर्धारयति—तस्मादिति। तस्मात्=एवमुपपादनात् चेतनाचेतनविशिष्टे ब्रह्मणि जीवस्तत्पृथक्सिद्धविशेषणत्वेन ब्रह्मांश इत्युच्यत इति वेदान्तनिर्णयः ॥२४९।

(२५०) उक्तं नित्योपलब्धिप्रभृति परमते पूर्वमेव ह्यनिष्टं

भूयस्तादृक् प्रसङ्गः प्रकथित इह किं भोगसङ्कीर्णतादे:(दिः)।

मैवं; पूर्वं हि बाह्यप्रसृतिमशमयत्; साम्प्रतं ब्रह्मवाद-

व्याजोत्थितान् कुदृष्टीन्; परिहृतिरिति च स्यात् भविष्यन्नयेषु ॥ ३१ ॥

अत्र पौनरुक्त्यमाशङ्क्य प्रतिक्षेप्यवादिभेदात् तन्नेति परिहरति—उक्तमित्यादिना। पूर्वमेव= बाह्यवादिप्रतिक्षेपसमये नित्योपलब्ध्यनुपलब्धिप्रसङ्गादिकं तर्कजातमुक्तम्। अधुना जीवस्य

---

निपुणधियामिति। एकवस्त्वेकदेशत्वेन निपुणधीसंमत इत्यर्थः। तर्हि अद्वैतपक्ष एवांशत्वं स्यादिति शंकायां तथा नेत्याशयेनाह तस्मादिति। एकवस्त्वेकदेश इत्यत्रैकपदेन विशिष्टग्रहणात् तदेकदेशत्वं विशेषणस्येति भावः। ननु विशिष्टैकदेशत्वं विशेष्यस्यापि; अत एव विशेषणांशो विशेष्यांश इति उभयत्रांशपदप्रयोग इति चेन्न, विशेषात्। एकविशिष्टापरस्वरूपे समुदाये घटकयोर्द्वयोरपि समप्राधान्ये उभयत्राविशिष्ट एवांशत्वव्यवहारः। धर्मधर्मिभावे प्रकारप्रकारिभावेन गुणप्रधानभावे तु धर्मादावेवांशत्वव्यवहारः, न धर्म्यादौ। एवं रूपविशिष्टघटस्यांशो रूपमितिवत् घटस्यांशो रूपमित्यपि व्यवहारोऽस्ति। न तु रूपस्यांशो घट इति। घटस्य धर्मितया तन्मात्रोक्तावपि विशेषणस्यार्थादाक्षेपसंभवात् रूपे अंशत्वं युक्तम्। यथा जीवो वक्तीत्युक्तौ जीवे वचनोपयुक्तमुखादिवैशिष्ट्यस्यार्थसिद्धिः, तद्वत्। रूपस्य घटोंश इति नोच्यते, घटस्य धर्मत्वाभावादाक्षेपानौचित्यात्। राजा समागत इत्युक्तौ परिजन आक्षिप्येत, परिजन आगत इत्युक्तौ न राज्ञ आक्षेपः सुलभः। तद्वत् चिदचिद्विशिष्टब्रह्मांशत्वस्य विशेष्येऽपि सत्त्वेऽपि ममैवांश इत्यादौ ममेति विशेष्यस्यैव निर्देशात् तदंशत्वं तत्प्रकारत्वरूपं ज्ञायते। इदं गमयितुं तत्प्रकार इत्युक्तम्। गुणवदिति पदेन, 'प्रकाशादिवत्तु; नैवं परः' इति सूत्रार्थसूचनम्। द्रव्यमपि प्रकाशः शरीरञ्च प्रकारतया अंशत्वेन व्यवह्रियते। तथेह भाष्यम् ॥ तथाच द्वैताद्वैतव्यपदेशयोर्द्वयोरपि मुख्यत्वं याद्दशनिर्वचने स्यात्, तादृशमंशत्वं स्वीकार्यम्। प्रकारप्रकारिभावरूपांशांशित्वस्वीकारे च प्रकारवाचिनां प्रकारिपर्यन्तार्थकत्वस्याभाव्यात् अद्वैतव्यपदेशो मुख्य एव संपद्यते। तावद्विवक्षाविरहे, 'ब्रह्ममे कितवाः' इत्यादिकं वेदो न प्रयुञ्जीत। धीवरादिनीचात्यन्ताभेदप्रत्यायने निन्दापर्यवसानात्। तदन्तर्यामित्वरूपार्थस्तु सौलभ्यादिगुणावहत्वात् स्तुतिरेव भवतीति ॥ २४९ ॥

३१. पादांशाद्युक्तिमुख्यदित्यनेन गुणवत् तत्प्रकारः इत्यनेन च, 'मन्त्रवर्णात्', 'अपि स्मर्यते', 'प्रकाशादिवत्तु, नैवं परः', 'स्मरन्ति च' इति सूत्राणामर्थो ज्ञापित एव। अथ स्वपक्षे भोगसांकर्याभावकथनं सूत्रद्वयेन, अद्वैतिपक्षे तदापादनमनन्तरसूत्रैः। इदमापादनमनुक्तिसिद्धत्वान्न वक्तव्यमित्याशंक्य कुदृष्टिमत

ब्रह्मस्वरूपांशत्वे भोगसङ्कर[1]प्रसङ्गादिकमुपक्षिप्य प्रतिक्षिप्यते। तत् पौनरुक्त्यं किं न स्यादित्याशङ्कां परिहरति—मैवमिति। अत्रोभयत्र प्रकारभेदेन परिहारं प्रकटयति—पूर्वमिति। पूर्वं हि बाह्यनिराकरणप्रसङ्गेन सर्वमुक्तम्। अधुना पुनर्ब्रह्मवादव्याजेनोत्सिक्तान् कुदृष्टीन् प्रशमयतीति विभागः। अयं

---

निरासनैर्भयादिति समाधानमाह उक्तमिति। परेषां सांख्यादीनां मते नित्योपलब्धिप्रभृतिकमनिष्टमापादितम्, 'नित्योपलब्ध्यनुपलब्धिप्रसंगोऽन्यतरनियमो वाऽन्यथा' इति। तत एव सिद्धत्वात् सर्वेषामात्मनां भोगसांकर्यं स्यात्, अदृष्टसंपादककर्मानुष्ठानाभिसंध्यादिकमपि सर्वसाधारणं स्यादिति अत्र क्रियमाणः प्रसंगः पुनरुक्तः किमिति क्रियत इति उत्तरसूत्राणां वैयर्थ्यशंका। नन्वियं शंकैव न भवति; नित्योपलब्धिसूत्रे हि चैतन्यस्वरूपाणामात्मनां विभुत्वे सर्वत्रोपलब्धिः स्यादित्यादिदूषणमुक्तम्, अत्र तु भोगसांकर्यादिकमापाद्यते इति विषयभेदादिति चेन्न-तस्मिन् सूत्रे भाष्ये, करणायत्तोपलब्धेरपि सर्वेषामात्मनां सर्वगतत्वेन सर्वैः करणैः सर्वदा संयुक्तत्वात् अदृष्टादेरप्यनियमादुक्तदोषः समानः इति तार्किकपक्षं प्रस्तुत्य अदृष्टानियमादेरत्रोच्यमानस्यापि सूत्राभिमतत्वप्रदर्शनात् पौनरुक्त्यसिद्धेः। अत एव प्रभृतीति पदम्। एवं कर्त्रधिकरणे, "उपलब्धिवदनियमः" इति सूत्रे नित्योपलब्धिं दृष्टान्तीकृत्य प्रकृतिकर्तृत्ववादिसांख्यपक्षे भोगसांकर्यादिकं यदुक्तम्, तदप्यत्र तत्पूर्वकप्रभृतिपदेन ज्ञाप्यत इति ध्येयम्। आत्मनां स्वतो नानात्वपक्षेऽपि प्रकृतेः कर्तृत्वेन स्वीकृतायाः साधारण्यात् देहेन्द्रियादीनां सर्वेषां विभुभूतसर्वात्मस्पृष्टत्वात् अभिसंध्यनुष्ठानादृष्टफलभोगानां सांकर्यं यदि अवर्जनीयम्, का कथा ब्रह्मण एकस्यैव सर्वजीवत्वे इति सूत्रैरेभिः प्रबोध्यते। पूर्वमिति। बाह्यपदेन सांख्यतार्किकाणामपि ग्रहणम्। तेषां प्रसरं पूर्वनिर्दिष्टसूत्रतोऽशमयत्। साम्प्रतम् अस्मिन्नधिकरणे ब्रह्मवादेन-अन्यादृश व्याख्यानव्याजेन वेदविरोधितर्कावष्टम्भेन गर्वितान् ब्रह्मजीवैक्यवादिनः कुदृष्टीन् अशमयदिति भेदात् न सूत्राणां वैयर्थ्यम्। एतत्सूत्राभावे हि तर्कमूलकपक्षनिरासेऽपि श्रुतिमूलकब्रह्मैक्यपक्षो न व्यासनिराचिकीर्षित इति प्रत्यवस्थीयेतेति सिद्धमेषामावश्यकत्वम्। एवं स्थलान्तरेऽपीमं प्रकारमतिदिशति परिहृतिरिति। 'तदन्तरप्रतिपत्तौ' इत्यादिना नानाजन्मानुवृत्तत्वे जीवानामुपपादिते सति, सुप्ता एव-किमुत्तिष्ठन्ति, उतान्ये इत्येवंरूपः नास्तिकानामप्यसंभवन् संशयः कथं सूत्रकारस्य। अतः, 'स एव तु कर्मानुस्मृतिशब्दविधिभ्यः' इति सूत्रं व्यर्थमिति शंकायाम्, मृषावादिनिरासार्थमिति समाधिः। ते हि, 'अहमर्थः कर्तृत्वादिमान् अहंकार एव; स च प्रतिसुषुप्ति विलीयते' इति वदन्ति। एवम्, न तु दृष्टान्तभावात्, अश्मादिवच्च तदनुपपत्तिः, तदनन्यत्वम् इत्यादौ सविकारत्वाद्यसामञ्जस्यपरिहारेण विशिष्टरूपेण ब्रह्मण उपादानत्वे स्थिते, अहिकुण्डलाधिकरणप्रवृत्तिर्हि भास्करादिपक्षप्रतिक्षेपायैव। 'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्', 'अग्न्यादिगतिश्रुतेरिति चेन्न-भाक्तत्वात्' इत्येवं वागादिविषयेऽग्न्यादेरधिष्ठातृत्वे, अग्न्यादेर्जीवतया तद्व्यापारस्यापि परायत्ताधिकरणेनैव तदायत्तत्वे च सिद्धे, 'ज्योतिराद्यधिष्ठानं तु तदामननात्' इति सूत्रं सर्वदेवतैक्यात् देवताधिष्ठानं ब्रह्माधिष्ठानञ्चेति न द्वयं

---

1 असंकरप्रसंग इति समासदर्शने संकीर्णतादेरिति षष्ठ्यन्तपाठ इष्टो ज्ञायते।

परिहारो यत्रयत्र पौनरुक्त्यप्रसङ्गः, तत्रतत्र सर्वत्रापि कर्तव्य इत्याह—परिहृतिरिति ॥ २५० ॥

(२५१) मिथ्याज्ञानादिचक्रे मरुति भगणवद् घूर्णमानस्य जन्तोः
प्रत्यक्तत्त्वप्र(त्त्वाव)बोधात् भवपरिहरणे सर्वतन्त्राविगीते ।
शुद्धात्मज्ञानगर्भां परभजनभिदामङ्गभेदांश्च वक्ष्यन्
मीमांसारम्भसिध्यद्वपुषमपि पुनश्शोधयामास जीवम् ॥ ३२ ॥

अत्र सर्वेऽऽद्यपाद एव मीमांसारम्भे जीवस्वरूपस्य प्रसाधितत्वात् किमर्थमधुना जीवस्वरूपशोधनं क्रियत इत्याशङ्क्य पूर्वोत्तरसङ्गतिविशेषाभिधानेन परिहरति–मिथ्येति । अयमत्र शब्दान्वयः- अविद्याकर्मवासनारुचिप्रकृतिसम्बन्धात्मके चक्रे, मरुति नक्षत्रगणवत्, घूर्णमानस्य जीवस्य प्रत्यक्तत्त्वावबोधात्= आत्मतत्त्वावबोधात् संसारपरिहरणे सर्वसिद्धान्तसम्मते सत्यपि, पुनरत्र सूत्रकारस्तृतीयाध्याये शुद्धात्मज्ञानगर्भां परभजनभिदां परमात्मशरीरभूतस्वात्मोपासनरूपतया वा

---

भवतीत्यद्वैतिमतापाकरणार्थम् । 'उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत्' इत्यादिना मुक्त्यर्थगतिहेतुसूक्ष्मशरीर सिद्धावपि, 'तदापीतेः संसारव्यपदेशात्', सूक्ष्मं प्रमाणतश्च तथोपलब्धे ' इत्यादिना सूक्ष्मदेहगत्याद्युक्तिः इहैवामृत इति परमतस्य सम्यक्प्रशमनार्थेवेत्यादिकमत्र विवक्षता भविष्यत्स्वयेषु भविष्यत्सु अधिकरणेषु च इति=एवम्भूतः परिहारः स्यादित्युक्तम् ॥ २५० ॥

३२. ननु संसारिणामात्मनां देहाद्यतिरिक्तात्मतत्त्वज्ञानादेव मुक्तिरिति सर्वतान्त्रिकसंमतम् । अतो जीवात्ममीमांसनमत्र व्यर्थम् । न च ब्रह्मणो वेदान्तार्थत्वात् तज्ज्ञानादेव मुक्तिरिति जीवात्मज्ञानानावश्यकत्वमतिनिरासार्थमिदमिति वाच्यम्—उपनिषत्सु सर्वत्र 'न जायते म्रियते' इति जीवनिरूपणस्य क्रियमाणत्वात्, 'कश्चित् धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्' इति प्रत्यगात्मज्ञानस्याधीयमानत्वात् मुक्तिकालिकप्रत्यक्तत्त्वस्थितिविमर्शं विना मुक्त्यर्थप्रयत्नायोगाच्च तदुपेक्षणायोगात् । मा भूत् तन्त्रान्तरोपजीवनम् ; मीमांसाशास्त्रस्यैकत्वात् पूर्वभाग एव स्वर्गाद्यर्थकर्माधिकारित्वज्ञप्तये आत्मनित्यत्वस्य स्थापितत्वात् पौनरुक्त्यमेव स्यादित्याशंकां परिहरति मिथ्येति । मिथ्याज्ञानं देहात्मभ्रमादि अविद्यापदवाच्यम् । आदिना कर्म-वासना-रुचि-प्रकृतिसंबन्धग्रहणम् । यथा मरुत्संघसहायेन ध्रुवेण भ्रमितो भगणः ग्रहनक्षत्रादिर्मरुद्वशः उदयास्तमयभाक् भ्रमति, तथाऽस्मिन् कर्माविद्यादिचक्रे घूर्णमानस्य भ्रमतः गतागतं कुर्वतो जन्तोः क्षेत्रज्ञस्य प्रत्यक्तत्त्वस्य स्वात्मयाथात्म्यस्य प्रबोधादेव भवस्य संसारस्य परिहृतिरिति सर्वशास्त्रसिद्धम् अतो न वक्तव्यम् । तथाऽयं जीवः मीमांसारम्भसिध्यद्वपुश्च । पूर्वमीमांसोपक्रम एव देहातिरिक्तस्वरूपमेतत्स्वरूपं सिद्धम । अतोऽपि न वक्तव्यम् । अथापि शोधयामास । नित्यत्वे कथं कार्यत्वम् , कथमेकविज्ञानेनैतद्घटनसर्वविज्ञानमिति शंकापरिहाराय, तथा तान्त्रिकेषु मिथो विवादात् ज्ञानत्वज्ञातृत्वकर्तृत्वादेः स्थापनाय, तन्त्रान्तराचर्वितपरायत्तत्वतदंशत्वप्रकारव्युत्पादनाय चेदं शोधनम् । एवं शोधिते किल तत्त्वे सात्त्विकत्यागपुरस्सरानुष्ठाने कार्ये सात्त्विकत्यागतत्त्वं सम्यगवधारितं स्यात् । अतः परभजने भक्तियोगे भेदं नानात्वं तदंगकर्मानुष्ठान-शमदम-बाल्यपाण्डित्यादि च तृतीये वक्ष्यन् तदुपयोगितयैवं चकार ।

स्वात्मशरीरकपरमात्मोपासनरूपतया वा देहातिरिक्तविशुद्धात्मज्ञानगर्भां परमात्मभक्तिभिदां तदङ्गभेदांश्च = कर्मविशेषांश्च वक्ष्यन् मीमांसारम्भसिध्यद्वपुषमपि जीवं पुनश्शोधयामासेति न पौनरुक्त्यदोषप्रसङ्ग इति । तत्र हि देशान्तरकालान्तरादिभाविफलानुभवयोग्यं स्थायिजीवस्वरूपमात्रं प्रसाधितम् ; इह [1]पुनर्ज्ञातृत्वकर्तृत्वभोक्तृत्वपरमात्माधीनत्वादियुक्तो जीवो विशोध्यत इति विशेषः ॥

(२५२) क्लृप्तिर्व्योमादिकेऽपि, क्रमभुवि च विभोः प्राच्यतत्त्वैर्विशिष्टात्,
जीवस्यैपाधिकौ तु प्रजननविलयौ, चिद्घनज्ञातृताऽस्य ।
कर्तृत्वं पारतन्त्र्यं, गुणतनुनयतो विश्वरूपांशता चे-
त्याम्नायान्योन्यबाधव्यपनयनवियत्पादसाध्यानि सप्त ॥ ३३ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां
द्वितीयस्याध्यायस्य तृतीयः पादः

उक्ताधिकरणसप्तकार्थान् विभज्य दर्शयति—क्लृप्तिरित्यादिना । परवादिभिर्नित्यत्वेनोक्ते व्योमादिकेऽपि क्लृप्तिः = सृष्टिः प्रथमाधिकरणे प्रतिपाद्यते । द्वितीयाधिकरणे तु पूर्वपूर्वतत्त्वविशिष्टात् परमात्मनः साक्षादेवोत्पत्तिरुच्यते—क्रमभुवीति । 'आकाशाद्वायुः' इत्यादिना क्रमेणोक्तेऽपीत्यर्थः । क्लृप्तिः प्रतिपाद्यत इत्यनुषज्यते । तृतीये पुनरधिकरणे जीवस्य प्रजननविलयौ देहोपाधिप्रयुक्तौ व्यक्तावित्युक्तौ । चतुर्थाधिकरणे पुनरस्य जीवस्य ज्ञानघनत्वसहितं ज्ञातृत्वमुक्तम् । पञ्चमादिष्वधिकरणेषु कर्तृत्वादित्रयमुच्यते । गुणतनुनयत इति । यथा गुणगुणिनावपृथक्सिद्धौ, यथा च

---

एतावदपि न पर्याप्तमिति पुनस्तृतीये अपहतपाप्मत्वादिशुद्धात्मस्वरूपशोधनमपि करिष्यति । अत्र कर्तृत्वोपयुक्ताकारचिन्ता, तत्रोपास्यत्वोपयुक्ताकारचिन्तेति भेदात् तदुपासनावश्यकत्वप्रतिपादनावसरे तद्वक्ष्यति । परभजनं हि परमात्मविषयकभक्तियोगः। तत्र अहं ब्रह्मास्मीत्येवमपहतपाप्मत्वादिप्राप्याकारविशिष्टान्तर्यामितया परमात्मग्रहणात् शुद्धात्मज्ञानगर्भम्। कर्मकर्तृत्वभोक्तृत्वादिकं तु वस्तुन स्थितमपि नोपास्यम् । औपाधिककर्तृत्वादेर्मुक्तावप्राप्त्यां तदुचितस्वरूपनिरूपणं तत्र । क्षेत्रज्ञज्ञानस्य क्षेत्रज्ञानगर्भत्वात् क्षेत्रस्य पाञ्चभौतिकत्वादिति व्युत्पादनाय वियदादिपरीक्षाऽप्यत्रेति सर्वमुपयुक्तमावश्यकञ्चेति भावः ॥ २५१ ॥

३३. एतत्पादाधिकरणानामर्थान् संकलयति क्लृप्तिरिति । तार्किकादिनिरासेन आकाशादेः सृष्टिः ; क्रमभुवि एकस्मादन्यदिति क्रमेण जायमाने च तत्र महदाकाशादौ स्थिता क्लृप्तिः पूर्वोत्पन्नाचितत्त्वविशिष्टात् परमात्मनः ; आत्मनः साक्षाज्जननमरणसाहित्यात् देहधर्मभूतज्ञानविकाररूपोपाधिप्रयुक्तमेव जन्मादि ; ज्ञानस्वरूपत्वसंवलितं ज्ञातृत्वमपि अस्य=आत्मनः । कर्तृत्वं नाचेतने, किंत्वस्यैव ; तस्य कर्तृत्वस्य च परायत्तत्वम् ; घटादिकं प्रति नैल्यादिगुणस्येव, जीवं प्रति देहस्येव, दीपादिकं प्रति प्रभाया इव विश्वशरीरकं परमात्मानं प्रति अंशत्वं चास्य इति सप्त विषयाः साधिताः । नात्र केवलतर्कमूलकाक्षेपनिरासः । किं तर्हि ? स्वपक्षसाधकश्रुतिप्रदर्शनपूर्वकोपक्षिप्ताक्षेपपरिहारः ।

---

1 ज्ञातृत्वकर्तृत्वादेरात्मनि वास्तवत्व एव मुक्तावपि तत्सिद्धिरिति इह तच्छोधनमिति भावः ।

देहदेहिनौ, तथा जीवाः परमपुरुषस्यापृथक्सिद्धविशेषणत्वादंशा इत्यर्थः। आम्नायेति। वेदवाक्याना-मन्योन्यविरोधपरिहरणपरे वियत्पादे सप्तार्थाः प्रत्यधिकरणं विभज्य प्रतिपाद्यन्त इत्यर्थः ॥ २५२ ॥

इति निखिलतार्किकचूडामणिना सर्वतन्त्रस्वतन्त्रेण
श्रीमद्वरदार्यापरनाम्ना कुमारवेदान्ताचार्येण
विरचिते शारीरकाधिकरणचिन्तामणौ
द्वितीयस्याध्यायस्य तृतीयः पादः ॥

—o—o—

अथ द्वितीयस्याध्यायस्य चतुर्थः पादः

६१ ॥ प्राणोत्पत्त्यधिकरणम् ॥ २-४-१ ॥

सूत्रम्—तथा प्राणाः ॥ गौण्यसंभवात् तत्प्राक्श्रुतेश्च ॥ तत्पूर्वकत्वाद्वाचः ॥ १-३.

(२५३) अक्षाद्युत्पत्त्यनुक्तौ न हि फलम्, अधिकाशङ्कनं त्वत्र मन्दं
तत्संख्यादेः परीक्षाऽप्यनुकृतवलिभुग्दन्तचिन्तेति चेन्न ।
एतेष्वब्रह्मकार्यं किमपि कथयतां बाधनेनार्थवत्त्वात्
तत् [1]साक्षात् सङ्गतिः स्यात् प्रथमचरमयोः, मध्यमानां प्रसङ्गात्(ङ्गः?)॥३४॥

अत्र प्रयोजनाधिक्याभावेन पादान्तरारम्भमाक्षिप्य समाधत्ते—अक्षादीति । अयमिह शब्दार्थः—आत्मन उत्पत्त्यभावसमर्थनं ब्रह्मस्वसमर्थनमित्यादिकं फलविशेषवत्त्वात् कर्तव्यमेव । अचिद्विशेषरूपस्येन्द्रियादेरुत्पत्तिकथनमत्यन्ताभास[2]प्रयोजनमेव । यत्किञ्चिदधिकाशङ्कापरिहारार्थ-मधिकरणमारभ्यते चेत्, तदपि स्पष्टमिह न दृश्यते । तदिदमाह—मन्दमिति । नन्वस्याधिकं

अतः श्रुतिविरोधव्यपनयनं सप्तसु विषयेषु कृतम् । अथान्यविषयेऽपि श्रुतिविरोधशमनमेव करिष्यते । तथाचान्योन्यश्रुतिबाधव्यपनयनपेटिकासंबन्धिवियत्पादसप्ताध्यानीमानि सप्तेति ॥ २५२ ॥

इति वात्स्यसत्वचक्रवर्तिवीरराघवाचार्यकृतिषु
अधिकरणसारावलिव्याख्यायां सारार्थरत्नप्रभायां
द्वितीयस्याध्यायस्य तृतीयः पादः ॥

३४. चिदचित्समष्टितत्त्वानां ब्रह्मकार्यत्वप्रकारः प्रतिपादितः; व्यष्ट्यन्तर्गतानां ब्रह्मकार्यत्वमत्र प्रतिपाद्यते । तत्रोपकरणानां निरूपणं प्रथमम् । अन्ते व्यष्टिदेहानामपि तत्कार्यत्वमुच्यते । कारणत्व-प्रतिष्ठापनार्थे द्वितीयेऽध्याये कार्यत्वांशशोधकत्वादन्त्यपादद्वयस्य नेन्द्रियसंख्या परिमाणादिविचारस्य प्राधान्यम्। कार्यत्वं तु प्रधानमपि न वक्तव्यम्, प्रागेव सिद्धत्वादित्याशंक्य परिहरति अक्षेति । अक्षाणाम् इन्द्रियाणां मुख्यप्राणस्य चोत्पत्तिः, 'असंभवस्तु सतोऽनुपपत्तेः', 'अन्तराविज्ञानमनसी' इत्यादितः सिद्धा । सिद्धाया एवानूक्तिः अनुवाद इति चेत्-सप्रयोजनानुवाद एवापौनरुक्त्यमिति प्रयोजनं वक्तव्यम्। अधिकाशंकापरिहार इति चेत्— शंकैव मन्दा। जीवस्यानादित्वात् तदुपकरणमप्यनादि, यथा तार्किकमते मन इति श्रुतिविरोधेन

[1] साक्षात्=प्रतिपाद्यप्रमेयारूपा । [2] आभासप्रयोजनमिति बहुव्रीहिः । विशिष्य तदुत्पत्तिज्ञानस्य विशेषफलं नेत्यर्थः ।

फलमिन्द्रियसंख्यादिपरिज्ञानमित्याशङ्क्याह–तत्संख्यादेरिति। न हि काकदन्तसंख्यापरिज्ञाने किञ्चित्प्रयोजनमस्ति। तद्वदिन्द्रियाण्यप्येकादश वा षड्वेत्यादिविशेषपरिज्ञाने न किमपि फलमुपलभामहे। आशंकितमर्थं प्रतिक्षिपति—नेति । प्रतिक्षेपार्थं प्रकटयति—एतेष्विति । प्रकृतेऽपि प्रपञ्चस्य ब्रह्मकार्यत्वं हि प्रतिज्ञातम् । तत् केषांचिद्ब्रह्मकार्यत्वसमर्थनाभावे श्रुतिविप्रतिपत्त्या कस्यचित् मन्दस्य विप्रतिपत्तिरप्रतिपत्तिर्वा स्यात् । शिष्यानुग्रहार्थैव हि सूत्रकारस्य[सर्वे] प्रवृत्तिः । तस्य तु प्राणादिकार्यपरिशोधनार्थः पादारम्भः सार्थक एव । तत्र स्यात् प्राणकार्यत्वप्रतिपादकस्य प्रथमाधिकरणस्य 'संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्' इति चरमाधिकरणस्य च साक्षादिह सङ्गतिः, मध्यमानां प्रासङ्गिकी सङ्गतिरिति विभागः ॥ २५३ ॥

(२५४) अष्टावत्राधिकाराः, प्रथम इह वियन्नीतिरुक्तेन्द्रियाणां,
तेजोवन्नोक्तनीतिं द्रढयति चरमे व्यष्टिभेदस्य सृष्टौ ।
संख्या-मानादिचिन्तास्वपि तदुपहितोपासनाद्यै फलं स्यात्
प्राणादिभ्यः प्रमाता पृथगिति विशदीकर्तुमप्येष पादः ॥ ३५ ॥

अत्र पादे पुनः अधिकरणसङ्ख्यामधिकरणार्थभेदं तत्तदधिकरणप्रयोजनञ्च विभज्य दर्शयति—अष्टाविति । अष्टावधिकरणान्यत्र पादे प्रोक्तानि । तत्र प्रथमाधिकरणे वियन्नीतिरिन्द्रियाणामुक्ता । यथा वियत्पादे प्रथमं वियत उत्पत्तिरुक्ता, एवं प्राणपाद इन्द्रियाणामुत्पत्तिरुच्यते । यद्यपि

---

शंकायाम्, देहोऽपि तर्हि स्यादनादिरिति स्यादिति। अतो मन्दत्वमेव तद्विचारस्य। तस्यैव व्यर्थत्वे तत्संख्या-परिमाणविचारस्तु काकदन्त[संख्या]चिन्तामनुकरोति । अनुकृता बलिभुग्दन्तचिन्ता ययेति बहुव्रीहिः । शंकापरिहारे हेतुमाह एतेष्विति । ब्रह्मणः सर्वकारणत्वाक्षेपकैरिह केषाञ्चित् ब्रह्मकार्यत्वाभावः शंक्यते । तत्रान्त्याधिकरणे देहेषु चतुर्मुखकार्यत्वेऽपि ब्रह्मकार्यत्वं नेति शंकनात् विशेषणाभावप्रयुक्तो विशिष्टाभावः । अक्षेषु विशेष्याभावप्रयुक्तः। कथञ्चित् कार्यत्वेऽपि तेषां तार्किकरीत्या भौतिकत्वसंभवात् चतुर्मुखादिकार्यत्वमेव स्यादिति शंकायां आहङ्कारिकत्वेनाक्षाणां समष्टिगतत्वात् साक्षाद् ब्रह्मकार्यत्वमेवेत्यप्यत्राभिमतम्। तथाच तर्कं विहाय श्रुतिं पुरस्कृत्य किमपि अक्षादिकं ब्रह्मकार्यं नेति शंकमानानां बाधनादर्थवान् सप्रयोजनः पादः। तत् तस्मात् कार्यत्वस्थापनात् प्रथमचरमयोः अक्षदेहविषयकयोरधिकरणयोरत्रसंगतिः साक्षात् कार्यत्वविषयत्वात् । संख्यादिविचाररूपाणां मध्यगतानामधिकरणानां पूर्वपादे जीवज्ञत्वकर्तृत्वाद्यधिकरणानामिव प्रसंगात् प्रसक्तत्वाच्च संगतिः स्यात्। प्रसंग इति पाठसत्त्वे तु मध्यमानां प्रसंगः संगतिरित्यवदातम्॥२५३॥

३५. अधिकरणानि संख्याय, साक्षात्संगतयोरादिमान्तिमाधिकरणयोः क्रमेण पूर्वपादप्रथम-द्वितीयाधिकरणानुरूप्यम्, प्रासङ्गिकनिरूपणविषयाणां काकदन्तपरीक्षात्वाभावञ्चाऽऽह अष्टाविति। अत्र द्वितीयाध्याये प्राणपादे अधिकाराः अधिकरणानि अष्टौ गण्यन्ते । श्रेष्ठश्चेति सूत्रम् अणवश्चेत्येतदधिकरणान्तर्गतम् । अत एव मुख्यप्राणोत्पत्तिस्थापकतया साक्षात्संगतिसत्त्वेऽपि तद्विहाय प्रथमचरमयोरेव साक्षात्संगतिः पूर्वश्लोके उक्ता । इह पादे प्रथमेऽधिकरणे प्राणा इति इन्द्रियाणि निर्दिश्य तेषामात्मन्यायेनानुत्पत्तौ तथेति सौत्रपदेनाऽऽशंकितायाम् आहङ्कारिकत्वेन साक्षाद्विकाराश्रयत्वात् तामसाह-

चक्षुरादीनामुत्पत्तिः काणादैरक्षपादैरप्युच्यते। अथापि मनस उत्पत्तिर्नोच्यते तेन। प्रतिक्षेप्यविशेषलाभादधिकरणारम्भः सप्रयोजन एव। चरमाधिकरणप्रयोजनमाह–तेजोबन्नेति। यथा तेजोबन्नादिशरीरकः परमात्मा समष्टिसृष्टावुत्तरोत्तरकार्यं करोतीति समर्थितम्, एवं व्यष्टिसृष्टावपि चतुर्मुखादिशरीरकः परमात्मा तत्तत्कार्यं करोतीति समर्थनात् सप्रयोजनमेव चरमाधिकरणमिति भावः। तर्हि मध्ये संख्यापरिमाणादिकं किमर्थं चिन्त्यते कार्यकारणभावप्रतिपादनानुपयोगादित्याशङ्क्याह–संख्येति। इन्द्रियसंख्यापरिमाणादिचिन्तनेऽपि तत्तद्विद्याविशेषेषु तत्तत्सङ्ख्यापरिमाणादियुक्तेन्द्रियादिविशिष्टपरमात्मोपासने, 'नागृहीतविशेषणा' इन्यायेन सप्रयोजनत्वात् सर्वमपि पादे[अत्र?] चिन्तनं सफलमेव। प्रकारान्तरेणापि साफल्यमाह–प्राणादिभ्य इति। 'देहेन्द्रियमनःप्राणधीभ्योऽन्योऽनन्यसाधनः' इत्यादिना यामुनाचार्यैर्देहादिभ्यः परत्वेन जीवात्मा निर्दिश्यते। तत्र प्रयोजनवानेव परिमाणसङ्ख्यादिविशेषविचार इति सफल एव सर्वोऽपि[1] पादः ॥ २५४ ॥

(२५५) अग्रे सत्तामृषीणां श्रुतिरभिदधती प्राणतां वक्ति तेषां
नात्र ब्रह्मैव वाच्यं बहुवचनहतेस्तेन नित्याक्षसिद्धिः।
मैवं; तत्सृष्टिदाढर्यात्; बहुवचनमिदं पाश्चनीत्यैव नेयं
प्राणर्षित्वे परात्मन्यपि हि सुघटिते तन्निरुक्त्यादिसाम्यात् ॥ ३६ ॥

इति प्राणोत्पत्त्यधिकरणम् ॥ ६१ ॥

अत्र पादसङ्गतिर्भाष्ये 'ब्रह्मव्यतिरिक्तस्य वियदादेः कृत्स्नस्य कार्यत्वेनोत्पत्तावुक्तायां जीवस्य कार्यत्वेऽपि स्वरूपान्यथाभावलक्षणोत्पत्तिरपोदिता। तत्प्रसङ्गेन जीवस्वरूपं शोधितम्। सम्प्रति

कारोत्पन्नस्य वियत इव सात्त्विकाहंकारादेषामुत्पत्तिरेवोक्ता। चरमे संज्ञामूर्तिक्लृप्त्यधिकरणे व्यष्टिविशेषाणां सृष्टौ चतुर्मुखस्य स्वतः कर्तृत्वं वा परान्तर्यामिकतया वेत्याशंकितम्। तत् तेजोधिकरणे तेजआदीनां केवलानामुपादानत्वम्, परान्तर्यामिकतया वेति कृताशंकातुल्यम्। तत्र यथा तेजआद्यन्तर्यामिण एवोपादानत्वमुक्तम्, तथाऽत्र निमित्तभूतचतुर्मुखान्तर्यामिण एव देवमनुष्यादिसंतानसृष्टावपि निमित्तकारणत्वमुच्यते इति तदधिकरणानुरूप्यम्। मध्यमाधिकरणेषु च क्रमेण इन्द्रियाणां, संख्यायाः, मानस्य=परिमाणस्य, श्रेष्ठस्य उपकरणभूतवायुविशेषतायाः, तदणुत्वस्य, सर्वत्र ज्योतिराद्यधिष्ठानस्य, तदन्यमात्रेन्द्रियत्वस्य च चिन्तानामपि फलं तथाभूततद्विशिष्टोपासनाद्यात्मकम्, यद्वा उपासनादिलम्भनम्॥ एतद्विचारप्रयोजनमन्यदप्याह प्राणेति। इन्द्रियादीनां नित्यत्वे तेषामेवात्मत्वसंभवात् किमन्यजीवकल्पनेनेति शंकापि जीववैधर्म्यस्य तेषु स्थितस्यैवं विवेचनात् वार्यत इति ॥

शि. टी. 1. सर्वोऽपीति। सर्वांशेनापीत्यर्थः ॥ २५४ ॥

३६. प्रथमाधिकरणपूर्वोत्तरपक्षौ संगृह्णाति अग्रे इति। 'ऋषयो वाव तेऽग्रे असदासीत्' इति अग्रे=सृष्टेः प्राक् कार्यावस्थारहितानामृषीणां सत्तां शतपथब्राह्मण (6-1-1) रूपा श्रुतिः अभिदधती वदन्ती, 'के ते ऋषयः' इति प्रश्नपूर्वकं, 'प्राणा वाव ऋषयः' इति प्रत्याह अमुख्यार्थकात् ऋषिशब्दार्थमविज्ञाय प्रष्टुं प्रति मुख्यार्थकपदप्रयोग एव सुतरं कुर्तं स्यात्। अतो मुख्यार्थ एव तदर्थं स्यादिति भावः। ननु तर्हि नेन्द्रियाणि प्राणाः। अमुख्यतादृशार्थग्रहणापेक्षया ब्रह्मरूपार्थग्रहणमेव युक्तम् अवलक्षकल्पनाविरहादित्यत्राह

जीवोपकरणानामिन्द्रियाणां प्राणस्य चोत्पत्त्यादिप्रकारो विशोध्यते' इति। तदर्थविचारस्तु—किमिन्द्रियाणि जीववन्नोत्पद्यन्ते, उत वियदादिवदुत्पद्यन्त इति। किं 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इति वाक्यं तेषामुत्पत्तिं प्रतिपादयति, नेति। किं 'असद्वा इदमग्र' इत्यादिवाक्यं सृष्टेः प्राक् इन्द्रियाणां सद्भावमवगमयति, नेति। किं प्राणशब्द इन्द्रियपर उत परमात्मपर इति। किं 'प्राणा वाव ऋषयः' इत्यत्र ऋषिशब्दः प्राणशब्दस्य परमात्मपरतामवगमयति, नेति। अत्र पूर्वपक्षमनूद्य निराकरोति–अग्र इत्यादिना। 'असद्वा इदमग्र आसीत्। तदाहुः किं तदासीदिति। ऋषयो वाव तेऽग्रेऽसदासीत्। तदाहुः के ते ऋषय इति। प्राणा वाव ऋषयः' इति जगदुत्पत्तेः पूर्वमृषीणां सद्भावमुक्त्वा तेषां प्राणत्वमप्यभिधीयते। न चात्र ऋषिशब्देन ज्ञानवृद्धत्वात् ब्रह्मैव वाच्यमिति वक्तुं शक्यते। ऋषय इति प्राणा इति च बहुवचनविरोधात्। तेन नित्येन्द्रियसिद्धिरिति पूर्वपक्षानुवादः। निराकरोति—मैवमिति। श्रुतिस्मृतीतिहासपुराणेषु शतशः प्रदेशेषु इन्द्रियाणां सृष्टिवचनदार्ढ्यात् प्रतिसंहारकाले तत्सद्भाववचनं न घटत एव। तर्हि बहुवचनविरोध इत्युक्तमवशिष्यते[1] तदपि न; 'अदितिः पाशान्' इतिवत् बहुत्वस्यौपचारिकत्वात्। पाशाधिकरणे हि पाशबहुत्वं पाशैकत्वस्य प्रमाणसिद्धत्वात् पाशावयवबहुत्वपर(रूप?)मिति निरणैषुर्न्यायवृद्धाः। तेन चेतनाचेतनविशिष्टब्रह्मांशभूतविशेषणबहुत्वात् बहुवचनमपि युज्यत एव। तदिदमाह—बहुवचनमिति। ननु प्राणत्वमिन्द्रियेषु प्रसिद्धम्; ऋषित्वमपि ज्ञापकत्वात् कथञ्चिदुपपद्यते; न परमात्मनीत्याशङ्क्याह—प्राणर्षित्वे इति। सर्वप्राणिप्राणनहेतुत्वात् प्राणत्वं तावदुपपद्यत एव। परमात्मनि तावत् ऋषित्वमपि

---

बहुवचनहतेरिति। ब्रह्मग्रहणे मुख्यप्राणग्रहणे च बहुवचनार्थभंगः। श्रुतिषु एकवचनप्रयोगे मुख्यप्राणवायोः, बहुवचनप्रयोगे चेन्द्रियाणां ग्रहणस्य व्यवस्थितत्वात् निरूढिरियं नोपेक्ष्येति। एवञ्च प्रलये स्थित्यवगमात् अक्षाणां नित्यत्वसिद्धिरिति पूर्वः पक्षः। तदिति। इन्द्रियोत्पत्तिप्रतिपादकबहुश्रुतिविरोधायोगात् अक्षाणां सृज्यतया प्रलये स्थित्ययोगात् प्रलयस्थायि ब्रह्मैव ग्राह्यम्। एवं वाक्यार्थाविरोधाय ब्रह्मग्रहणे सिद्धे बहुवचनं पाशाधिकरणन्यायात् एकत्वलक्षकं वा विशेषणबहुत्वपरं वा भविष्यति। ननु अग्रे इत्यस्य प्रलयपरत्वं विहाय इन्द्रियकार्योत्पत्तेः प्राक् इत्यर्थ इष्यताम्। तथाच प्रसिद्धार्थ एव ग्राह्य इत्यत्राह प्राणर्षीति। अयमर्थः—अग्रे इति पदं तावदिह प्रथमम् असद्वा इदमग्र आसीत् इति वाक्ये श्रुतम्। तत्रासत्पदेन गतिसामान्यात् ब्रह्मग्रहणं कृतम्। किं तदसदिति प्रश्नपूर्वकं प्रवृत्ते, ऋषयो वा अग्रे असदिति वाक्येऽपि इन्द्रियाणामनुपस्थितिरेव। अचेतनापेक्षया चेतनोत्तमे ऋषित्वं च सुघटितम्। एवमृषित्वासत्त्वाश्रयनिष्ठं प्राणत्वं नेन्द्रियगतं भवितुमर्हति। तर्हि प्रश्नप्रतिवचने किमर्थं इति चेत्—उपासनार्थं तु परस्मिन् प्रश्नप्रतिवचनमुखेन प्राणत्वऋषित्वयोरुक्तिर्भविष्यति। सर्वमिदं तु इति शब्दे विवक्षितम्। इन्द्रियेष्वपि तदमुख्यत्वं दर्शयति तदिति। इन्द्रियेषु प्राणशब्दस्य न रूढिः। श्रुतौ, 'तस्यैतस्यैते रूपमभवन् तस्मादेत एतेनाऽऽख्यायन्ते' इति मुख्यप्राणविधेयत्वात् तेषु प्राणशब्दप्रयोगः। ब्रह्मणोऽपि सर्वप्राणिप्राणनहेतुत्वात् निरुक्त्याश्रयणात् मुख्यार्थत्यागस्तुल्यः। परमात्मपरत्वे निरुक्तिः,

---

1 अवशिष्यत इत्यनेन तथा प्राणाः इति पूर्वपक्षसूत्रोक्त सर्वं पूर्वस्योक्त्यैव परिहृतमित्यालोच्य स्वानुक्तांशमात्रं वक्तव्यं गौणीत्यनेन सूत्रकृदाहेति ज्ञापयति।

ज्ञानयुक्तत्वात् सुतरामुपपद्यते। तदिदमाह—तदिति। निरुक्तिश्चेत्, तुल्या। रूढिश्चेत्, सापि च तथा। अस्माभिरपि ब्रह्मण्येव रूढिरिति वक्तुं शक्यत्वादिति। यद्वा प्रयोगप्राचुर्यमादिशब्देन विवक्ष्यत इति ॥ २५५ ॥ इति प्राणोत्पत्त्यधिकरणम्।

...o—o...

## ॥ ६२ सप्तगत्यधिकरणम् ॥

सूत्रम्—सप्त गतेर्विशेषितत्वाच्च ॥ हस्तादयस्तु स्थितेऽतो नैवम् ॥ २-४-४-५

(२५६) सप्त प्राणाश्चरन्तीत्युदितम्, अभिहितास्ते विशिष्यापि योगे
तस्मात् सप्तेन्द्रियाणीत्यसत्, अधिकवचोदृष्टितोऽस्माऽऽन्यपर्यात्।
लक्ष्मैषां सात्त्विकाहङ्करणपरिणतिद्रव्यता चाविशिष्टा
भेदेनोक्तिः प्रधाने मनसि फलवती कर्मबोधेन्द्रियेभ्यः ॥ ४ ॥

एवमिन्द्रियाणां कार्यत्वमुक्तम्। तेषां संख्याऽपि चिन्त्यत इति सङ्गतिः। तदर्थविचारस्तु—किमिन्द्रियाणि सप्त, उतैकादशेति। किं 'सप्त इमे लोका येषु चरन्ति' इति सप्तानां गतिश्रवणम् इन्द्रियाणां सप्तसङ्ख्याकत्वमवगमयति, नेति। किं 'दशेमे पुरुषे प्राणा आत्मैकादशः' इति प्राणशब्देन निर्दिष्टानामेकादशसंख्याकत्वं वागादीनामिन्द्रियत्वमवगमयति, नेति। अत्र पूर्वपक्षी प्राह—सप्त प्राणा इति। सप्त प्राणाश्चरन्तीति श्रुतौ सप्तत्वमुदितं प्राणानाम्। ते च विशिष्याभिहिता योगे—

---

इन्द्रियपरत्वे मुख्यप्राणरूप(विधेय)स्वरूपलक्ष्यार्थग्रहणमिति भेदः आदिपददर्शितः। एवमृषिशब्देऽपि परमात्मापेक्षया इन्द्रियविषये जघन्यत्वं ग्राह्यम्। एवमपि साम्यादित्युक्तिः रूढ्यर्थत्यागमात्रेण। यद्वा ऋषिप्राणशब्दयोः धातूपरितनप्रत्ययेन यथायथं संभावितसाधनत्वविवक्षणात् निर्वचनं तुल्यम्। सूत्रे तत्प्राक्श्रुतेश्च इत्यत्र असत्पदघटितवाक्येन प्राक्स्थितेन स्वरसतो ब्रह्मणो ग्रहणादित्यर्थोऽपि ज्ञायते। अग्रे इत्यनेन इन्द्रियव्यापारतः प्राक् इत्यर्थस्वीकारेऽपि तस्यापि परमात्मपूर्वकत्वस्याक्षततया असदादिपदेन परमात्मग्रहणं नासंभवि। इदमपि आदिसाम्यादित्यत्र विवक्षितम् ॥ २५५ ॥

३७. प्रसंगादिन्द्रियसंख्या विचार्यते। पूर्वाधिकरणे—'प्राणत्वं परस्मिन्नपि घटते। ऋषित्वं तु परस्मिन्नेव सुघटितम्। न त्विन्द्रियेषु; तेषां ज्ञानाश्रयत्वाभावात्। ज्ञानसाधनत्वरूपार्थस्वीकारेऽपि ज्ञानेन्द्रियाणामेव तत् स्यात्; न कर्मेन्द्रियेषु। अतो गौणता' इति दूषणमभिमतम्। अथ शंकते सप्तानामेवेन्द्रियत्वात् हस्तादीनां तथात्वे मानाभावात् शरीरावयवातिरिक्तहस्तादीन्द्रियसद्भावे मानाभावाच्च ऋषिशब्दस्यात्यन्तगौणतोक्तिर्न युक्तेति। एवंरूपेण च प्रसक्तत्वात् इन्द्रियसंख्याविचारः। इन्द्रियाणि सप्तैव, 'येषु चरन्ति प्राणा गुहाशया निहिताः सप्तसप्त' इति श्रुतौ, 'सप्त प्राणा लोकेषु चरन्ति' इत्युदितं हि। ननु सप्तसप्तेति वीप्सयाऽऽधिक्यमवगम्यते। अतश्चतुर्दश प्राणा इति युक्तं वक्तुमिति चेन्न; हस्तादीनां गुहाशयत्वाभावेन चतुर्दशग्रहणायोगात्। गुहा हि हृदयम्। इन्द्रियकन्दस्थानं हि हृदयम्। न च चरतां सप्तत्वेऽपि इन्द्रियत्वमचरत्साधारण्येन स्यादिति शंक्यम्, हस्तादीनामपीन्द्रियत्वे तत्सञ्चारस्याप्यवश्यवक्तव्यत्वात्। सर्वेषु लोकेषु ज्ञानवत् कर्मणोऽपि जैवस्य प्रसिद्धेः। अतः सप्तादि

योगप्रतिपादके 'यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह। बुद्धिश्च न विचेष्टेत तामाहुः परमां गतिम्॥' इति वाक्य इत्यर्थः। परमां गतिमिति हि मोक्षार्थगमनरूपत्वात् योग एवोच्यते। तस्मात्— एवमुपपादनात् सप्तैवेन्द्रियाणि। एतत् प्रतिक्षिपति—असदिति। अत्र हेतुमाह—अधिकेति। वाक्यान्तरेष्विन्द्रियाणामधिकसङ्ख्याकत्ववचनात् सप्तत्ववचनमन्यपरमेव। तच्चोक्तं भाष्ये, 'न्यून-व्यपदेशास्तु तत्रतत्र विवक्षितगमनादिकार्यविशेषप्रयुक्ताः' इति। न तु स्वरूपत इन्द्रियाणां सप्तत्वम्, अपितु सप्तलोकसञ्चरणोपाधिना सप्तत्वमुच्यते। तच्च सञ्चरणमेकादशानामप्युपलक्षणम्; प्रमाण-बलात्। 'यदा पञ्च' इति न सङ्ख्यापरं परगतिप्रतिपादने...(?)। तर्हीन्द्रियलक्षणसम्पन्नत्वे हि एकादशेन्द्रियाणामिन्द्रियत्वम्। तत् कथं लक्षणमित्याशङ्क्याह—लक्ष्मेति। अयमर्थः—सात्त्वि-

---

चरन्तीति प्रभाववर्णनमिह, न तु सप्तान्यगतिव्यवच्छेद इति स्यात्। अतः सर्वग्रहणे कर्तव्ये सप्तेति निर्देशः तदन्येन्द्रियाभावादेव। ननु तानि सप्त हस्तादीन्येव स्युरिति चेन्न; गुहाशयत्वानन्वयात्। ततो विशिष्य ग्रहणं तेषामेवोक्तम्। यदा पञ्चेति वाक्ये ज्ञानसाधनानि पञ्च मनः बुद्धिश्चेति सप्तानामेव कीर्तनात् यदा यस्यां दशायां इमे सप्त अवतिष्ठन्ते निर्व्यापारा भवन्ति, सा दशा परमा गतिरिति तदर्थः। तस्याश्च गतित्वमुपायत्वम्। परमगतिर्योग इति च प्रसिद्धम्। एवं विशेषनिर्देशाच्च चक्षुरादयः सप्त प्राणा इति। निरस्यति इत्यसदिति। अधिकसंख्याप्रतिपादवाक्यदर्शनात् अत्र पूर्वोक्त-वाक्ययोः आन्यपर्यम् अन्यपरत्वम्, इतरेषामिन्द्रियत्वव्यवच्छेदकत्वाभावोऽवसीयते। तच्च वाक्यम्, 'दशेमे पुरुषे प्राणाः आत्मैकादशः', 'इन्द्रियाणि दशैकञ्च' इत्यादि। आत्मशब्द इह मनःपरः। नन्वेवं बुद्धेरिन्द्रियत्वं न सिध्येदिति चेन्न; एकस्यैव मनसः वृत्तिवैचित्र्येण बुद्धिचित्ताहंकाररूप-शब्दान्तरैरपि व्यवहार्यत्वात् मनःपदेन सर्वग्रहणात्। नन्वनुगतधर्ममुखेनैवेन्द्रियशब्देन सर्वेषां निर्देश्यत्वात् ज्ञानसाधनत्वरूपधर्मस्य च कर्मेन्द्रियेष्वभावेन कथं तेषामिन्द्रियतेत्यत्राह लक्ष्मेति। एषामनुगतं लक्ष्म= लक्षणं तु सात्त्विकाहंकारपरिणामरूपद्रव्यत्वम्। तामसाहंकारजन्यमहाभूतव्यवच्छेदाय सात्त्विकेति। अहंकारशब्दस्य अनात्मनि अहंबुद्धिरूपाहंकृतिसाधनार्थकत्वात् अहंकरणेति उपपन्नम्। ननु प्राणा आत्मेति प्राणभिन्नतया मनःकथनात्, 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इति इन्द्रियाति-रिक्ततया निर्देशाच्च न मनस इन्द्रियत्वमित्यत्राह भेदेनेति। मनसो ज्ञानसाधनत्वेऽपि 'ज्ञानानि मनसा सह' इति श्लोके पृथक् निर्देशः गोबलीवर्दन्यायात् ज्ञानमात्रसाधनपेक्षया ज्ञानकर्मोभयसाधनस्य प्राधान्यादिति वक्तव्यतया तद्वदेव सर्वत्रोपपत्तेः। अतः। कर्ममात्रसाधन-बोधमात्रसाधनेन्द्रियापेक्षया भिन्नतया मनउक्तेः प्राधान्यज्ञापनमेव फलम्। यथा कर्मेन्द्रियाणि ज्ञानेन्द्रियजन्यज्ञानसापेक्षतया ततोऽप्रधानानि, तथा मनसो व्यापृतत्वभावे ज्ञानेन्द्रियाणामप्यकिञ्चित्करत्वस्य, 'अन्यत्रमना अभूवं नापश्यम्' इति श्रुतिसिद्धतया तत्प्राधान्यमभिमतमिति। हस्तादीनामकथनमीदृशलक्षण्यादेव; न तु गत्यभावात्; तेषामेव गतेः सिद्धान्तीष्टत्वादिति ध्येयम्। सूत्रे, "हस्तादयस्तु स्थिते" इति स्थितपदप्रयोगात् गतौ तेषामनन्वय इति न शंक्यम्, पादरूपेन्द्रियाभावे गतेरेवायोगात्। वचनादानादेः भूतसूक्ष्मरूप-

काहङ्कारद्रव्यविकृतित्वं हीन्द्रियलक्षणम्। तदेकादशानामप्यविशिष्टमेव। तर्हि पञ्चेन्द्रियान्तराणि सामान्येनोक्त्वा मनसा सहेति मनसः पृथगभिधानं किमर्थमित्यत्र प्रयोजनविशेषमाह-भेदेनेति। कर्मेन्द्रियेभ्यो ज्ञानेन्द्रियेभ्यश्च प्रधाने मनसि भेदेनोक्तिः तत्प्राधान्यप्रदर्शनेन फलवतीत्यर्थः॥२५६॥

(२५७) देहव्याप्येकमक्षं कतिचिदकथयन् भागतो भिन्नकृत्यं
केचित् कर्मेन्द्रियाणि श्रुतिपथविमुखास्तत्यजुः क्षुद्रतर्कैः।
क्षेत्रज्ञस्याऽऽहुरेके सह करणगणं बुद्ध्यहङ्कारचित्तैः
अन्ये तं चित्तवर्जं निजगदुरिति तान् अर्थतोऽत्र व्युदास॥ ५॥

इति सप्तगत्यधिकरणम्॥ ६२॥

अत्र पादे (संख्यावादे?) पक्षविशेषाणां वैविध्येनाङ्गीकारप्रकारविशेषान् उक्त्वा तेषां निराकरणमप्यर्थात् भाष्य (सूत्र?) एव सिद्धमित्याह-देहेति। केचिदाहुः-एकमेवेन्द्रियं देहव्यापि। तदेव देहाङ्गभूतकरचरणादिस्थानविशेषनिवासात् नानात्वेनाभिधीयते, नानाकार्यञ्च करोतीति। केचित् पुनः श्रुतिपथविमुखाः काणादाक्षपादादयः क्षुद्रतर्कैः कर्मेन्द्रियाणि तत्यजुः-ज्ञानेन्द्रियमेवास्ति; न कर्मेन्द्रियमिति। अपरे पुनः पुराणादिश्रवणमात्रेण बुद्ध्यहङ्कारचित्तैस्सह चतुर्दशेन्द्रियाणि क्षेत्रज्ञस्य=पुरुषस्याहुः। तादृशाश्चान्ये केचन चित्तं मुक्त्वा त्रयोदश करणानीति निजगदुः। इति तानर्थतो भाष्य(सूत्र?) कारो निराचकार। एकादशेत्युपपादनात् न्यूनाधिकसङ्ख्यानिरासोऽत्रार्थसिद्ध इत्यर्थः॥ २५७॥

---

देहेऽपि श्रुतत्वाच्च। तेषामिन्द्रियाणि विना हस्तपादादिशरीरावयवत एव निर्वाहे स्थूलदेहे इहापि तथा श्रुवचत्वात् कर्मेन्द्रियाण्येव न स्युः। न चेष्टापत्तिः। सात्त्विकाहंकारत सर्वोत्पत्तिवचनविरोधात्। स्थिते इति पदं तु गत्यादिना प्राणसत्त्वादिना स्थितिकाले हस्तादेरुपकरणत्वस्येष्टत्वात् तेऽपि प्राणा एव; गत्यादिकमसाधकमिति तात्पर्येण प्रयुक्तम्॥ २५६॥

३८ श्रुतिविप्रतिपत्त्या इन्द्रियसप्तत्वपूर्वपक्षे प्राप्ते तन्निरासार्थेनानेनाधिकरणेण तर्कमूलकेन्द्रियवादा अव्यवस्थिताः सर्वे निरस्ता इति तावद्वादप्रदर्शनपूर्वकमाह देहेति। श्रुतिपथविमुखाः कतिचित् क्षुद्रतर्कैः एकमेवेन्द्रियं देहे आपादशीर्षस्थितं नेत्रगोलकादिदेशभेदावच्छेदेन रूपरसगन्धस्पर्शशब्दग्राहि चक्षुरादितया व्यवह्रियते। तत्तद्देहप्रदेशावच्छेदेन तदेव तत्तत्कार्यकरमित्यकथयन्। तत्र अतीन्द्रियत्वादिन्द्रियस्य रूपादिग्रहणभेदेनानुमानत एव सिद्ध्या धर्मिग्राहकमानत एव तेषां भिन्नतया सिद्धतया लाघवमकिञ्चित्करमिति न्यायदर्शने उक्तम्। तेन देहव्यापित्वेन संमतं त्वगिन्द्रियमेव सर्वक्षममिति पक्षोऽपि निरस्तः। श्रुतिबलात् ज्ञानेन्द्रियमेवमिच्छन्तः केचित् कर्मेन्द्रियसद्भावपरश्रुतिविमुखाः तानि परं तत्यजुः। उक्तमेकादशात्मकं करणगणं बुद्ध्यहंकारचित्तैः सह चतुर्दशात्मक सौबालश्रुतिमादायाऽऽहुरेके। सांख्यास्तु करणं त्रयोदशविधम्, अन्तःकरणं त्रिविधमिति निजगदुः। अत्र सप्तत्वपूर्वपक्षः सर्वोप लक्षणम्। अतो नैवम् इति सूत्रभागस्य ईदृशं सप्तत्ववादतदन्यवादरूपं द्वयं सर्वं नेति सर्वनिरासकत्व मपि स्यादिति। अर्थतः एकनिरासकहेतुनैव व्युदास=व्युदस्तवान्॥ २५७॥

## ॥ ६३ प्राणाणुत्वाधिकरणम् ॥

सूत्रम्—अणवश्च ॥ श्रेष्ठश्च ॥ ६—७.

(२५८) सर्वेष्वानन्त्यवादात् परिमितिनियमानुक्तितश्चेन्द्रियाणां
व्याप्तिस्सिद्धेति चेन्न ; प्रयदखिलतनूत्क्रान्तिगत्यागतिभ्यः ।
वृत्त्या दूरस्थधीः स्यात् ; भजनविधिपरेऽनन्ततोक्तिः स्वकार्यैः ;
कन्दस्थानाश्च तत्तत्तनुषु विकृतिमद्द्रव्यभावात् पृथुत्वम् ॥ ६ ॥

इति प्राणाणुत्वाधिकरणम् ॥ ६३ ॥

इन्द्रियाणां संख्योक्ता ; इदानीं स्वरूपपरिमाणं चिन्त्यत इति सङ्गतिः । तदर्थविचारस्तु—किमिन्द्रियाणि सर्वगतानि, उताणुपरिमाणानीति । किं 'त एते सर्व एव समास्सर्वेऽनन्ताः' इत्यानन्त्यवचनं सर्वगतत्वमवगमयति, नेति । किमानन्त्यश्रवणं 'अथ यो हैताननन्तानुपास्ते' इत्युपासनफलव्यापारबाहुल्यपरं उत सर्वगतत्वपरमिति । किं 'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इत्युत्क्रान्तिश्रवणं परिमितत्वे सति अप्रत्यक्षत्वमणुत्वमवगमयति नेति । अत्र पूर्वपक्षमुपन्यस्यति—सर्वेष्विति । सर्वे एते समा अनन्ता इति सर्वेषामिन्द्रियाणामानन्त्यपाठात् परिमितिनियमानुक्तितश्च = एतस्येन्द्रियस्येदं परिमाणमिति परिमाणविशेषानुक्तितश्च इन्द्रियाणां व्याप्तिस्सिद्धेति चेदिति।

---

३९. इन्द्रियाणां संख्या स्थापिता ; परिमाणं विचार्यते । देहवत् परिच्छिन्नत्वसंभावनायामपि विभुत्वे श्रुतिरस्तीति मत्वा पूर्वपक्षः । तमाह **सर्वेष्विति** । बृहदारण्यके, 'त एते सर्व एव समाः सर्वेऽनन्ताः' इति आनन्त्यमुक्तम् । तत्रेन्द्रियाणां वस्तुपरिच्छेदाभावप्रसक्तिर्नास्ति । कार्यत्वस्य कथिततया कालापरिच्छेदोऽपि न । परिशेषादानन्त्यं देशापरिच्छेद एवेति विभुत्वं श्रौतमित्याशयः । यद्यप्यत्र सर्वपदेन प्रकृतानां मनोवाङ्मुख्यप्राणानामेव ग्रहणम्, अथापि मनोवाचोरुक्तमेवान्येषामप्याश्रीयते ; वैषम्ये मानाभावात् । यदि परिमाणविशेषो विशिष्य निर्दिष्टः स्यात्, तर्हि विभुत्वं नेष्येत ; न तथेत्याह **परिमितिनियमानुक्तित** इति । कार्यत्वेऽपि विभुत्वं भवितुमर्हतीत्याशयः । विभुत्वे च संसारिविषये सर्वत्रोपकरणत्वं सुगममिति । इदं निरस्यति **न प्रयदिति** । प्रयतां म्रियमाणानां जीवानां सर्वेषां तनुभ्यः एषामुत्क्रान्तिगत्यागतिश्रवणात् न विभुत्वम् । 'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इति उत्क्रान्तिगत्यागतिश्रवणात् आत्मवदणुत्वस्यैव युक्तत्वात् । ननु चक्षुरादेरविभुत्वे दूरस्थघटादिग्रहणं कथमित्यत्राह **वृत्त्येति** । वृत्तिः संनिकर्षः । इन्द्रियाप्यायकतेजःप्रभृतिद्रव्यं कदाचित् विकासं प्राप्य घटादिना संबध्नाति । तथासंनिकृष्टमेव गृह्यत इति न दोषः। उक्तामानन्त्यश्रुतिं निर्वहति **भजनेति** । 'सर्व एवानन्ताः' इति वाक्यम्, 'एतान् अनन्तानुपास्ते, अनन्तं स लोकं जयति' इत्युपासनवाक्यशेषभूतं न विभुत्वविधानैदम्परम् ; उत्क्रान्त्यादिबलादेव परिच्छेदान्तरवत् देशपरिच्छेदस्यापि सिद्ध्या, अनन्तपदस्य असंख्यत्वार्थेऽपि प्रयोगदर्शनाच्चान्यासिद्धश्च । उपासनवाक्ये लोकविशेषणभूतमानन्त्यं हि न देशापरिच्छेदरूपम् । तस्मादसंख्यत्वमेव तत्रान्यम् । यद्यपि इन्द्रियाणामसंख्यत्वमात्मनामिव दुर्वचम्-अथापि प्रत्येकमिन्द्रिये आनन्त्यस्य तस्य दुर्वचतया कार्यासंख्यत्वप्रयुक्तमेवैकैकस्याप्यानन्त्यम् । ननु चक्षुरादिकं किं गोलकादावस्ति, हृदि वा । उभयत्र स्थितिः श्रूयते । अणोश्च कथमुभयगतत्वं

एतत् प्रतिक्षिपति-नेति। तत्र हेतुत्रयमाह-प्रयदिति। प्रयतां सर्वेषां तनुभ्य उत्क्रान्तेः, तदा देशान्तर-गमनात् पुनरागमनाच्चेत्यर्थः। नन्विन्द्रियाणामणुत्वे दूरगतार्थप्रतीतिः कथं स्यादित्याशङ्क्याह—वृत्त्येति। 'वृत्तिराप्यायनार्थैर्भूतैः(द्रव्यैः)' इत्यन्यत्रोक्तम्। वृत्तिः = प्रसरणम्। तद्धि आप्यायकैर्भूतैर्जायते। अयमर्थः—यद्यपीन्द्रियाणामणुत्वम्, तेन स्वरूपविभुत्वाभावेऽप्याप्यायनार्थैर्भूतैः(द्रव्यैः)-ब्रह्माण्डोदरवर्तिकृत्स्नवस्तुग्रहणानुरूपं विभुत्वं सङ्घटत इति। यथा चक्षुषो गोलकान्तः स्थितत्वेऽपि तत्प्रकाशात् सर्वतोदिक्कप्रसराद्ण्डोदरवर्तिवस्तुग्रहणं काणादानाम्। तर्हीन्द्रियोपासनविधिपरे वाक्ये हि इन्द्रियाणामनन्तनोक्तिः कथमित्याशङ्क्याह—स्वकार्यैरिति। इन्द्रियकार्यैरित्यर्थः। परिमितान्यपि हीन्द्रियाणि प्रतिबन्धकाभावे असंख्यातान् विषयान् गृह्णन्तीति प्रदीपप्रकाशादिवद् दृष्टमेव। ननु सर्वेन्द्रियकन्दभूते हृदय एव तत्तत्नुष्विन्द्रियाणामवस्थाने कथं पृथुत्व(पृथक्त्व)मित्याशङ्क्याह—कन्देति। विकाशिद्रव्यत्वात् सर्वतोदिक्कप्रसरात् पृथुत्वं युज्यत इत्यर्थः॥ २५८॥

इति प्राणाणुत्वाधिकरणम्॥ ६३॥

## ॥ ६४॥ वायुक्रियाधिकरणम्

सूत्रम्—न वायुक्रिये पृथगुपदेशात्॥ चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः। अकरणत्वाच्च न दोषस्तथा हि दर्शयति॥ पञ्चवृत्तिर्मनोवद् व्यपदिश्यते॥ ८—११॥

(२५९) प्राणः प्रागुक्तनीत्या परजनित इति स्थापितो(ते), वायुमात्रं,
देहान्तस्तत्क्रिया वा स इति न, पृथगुत्पत्तिवादात् सहास्य।

युगपदिति चेत्-न वयमणुत्वमणुपरिमाणकाष्ठारूपं ब्रूमः। किंतु अदृश्यत्वौपयिकं सूक्ष्मत्वमेव। तथाच देहगतनानावयवव्याप्तित्वं यथायथं भवितुमर्हतीति। तदाह कन्देति। मूलस्थाने हृदि सर्वेन्द्रियस्थितिः श्रुता; गोलकादौ च। अतः पृथुत्वमेवेष्यते। शैलपणुत्वं तु न जीवदत्यन्ताल्पपरिमाणत्वम्। किंतु अनुपलभ्यमानतया सूक्ष्मत्वम्। ननु विभूनामपि अनुपलभ्यमानत्वसत्त्वात् कथं तेन विभुत्वरूप-पूर्वपक्षकोटिव्युदास इति चेत्-उपलब्ध्ययोग्यपरिच्छिन्नपरिमाणत्वमणुत्वमित्युक्तं **न्यायसिद्धाञ्जने**। तत्र परिच्छिन्नत्वोक्त्या विभुत्ववारणम्। उपलब्ध्ययोग्यत्वं तु स्वरूपकथनम्; परिच्छिन्नानां महतामुपलम्भात् कथमनुपलम्भ इति शंकावारणाय। कियत् तत् परिमाणमित्यत्राव्यवस्थां दर्शयति तत्तत्नुष्विति। परिगृहीतशरीरानुरूपमाप्यायकवस्तुबलात् परिमाणतारतम्यम्। अणुशब्दस्यानुपलभ्यमानेत्यर्थोऽपि न भवति। अस्मन्मते दृश्यमानत्रसरेणुनोऽपि सूक्ष्मस्याणोरनिष्टत्वात्। उपलब्ध्यनुपलब्ध्योश्च योग्यतानिबन्धनत्वात्। अणवः पार्थिवादयो ह्युपलभ्या एव। आत्मेन्द्रियादयस्तु अयोग्यत्वादनुपलभ्याः। जीवानामप्यदृश्यत्वं नात्यन्ताणुत्वप्रयुक्तम्। अनाप्यायितशुद्धेन्द्रियपरिमाणं स्वाभाविकमपि जीववत् त्रसरेणुप्रमाणत्वमित्यत्र न प्रमाणमस्ति। अतो यथायथं पृथु भवितुमर्हति॥ २५८॥

४०. मुख्यप्राणस्य स्वरूपविशेषे अणुत्वे च संदेहेऽपि उत्पत्त्यंशे संदेहाभावात् श्रेष्ठश्चेति सूत्रं न पृथगधिकरणमिति उत्पत्तिसिद्धवत्कारेण सूचयन् वायुक्रियाधिकरणार्थमाह **प्राण** इति। ननु जन्माणुत्वयोर्द्वयोः प्रसक्तयोर्जन्मनि अविवादे अणुत्वमेव विचार्यम् उपस्थितत्वात्। तद्विहाय वायुत्वादिविचारः कथमिति चेत्—वायुत्वपक्षे क्रियात्वपक्षे चाणुत्वकोटिकसंशयाप्रसक्त्या अणुत्वनिश्चयानन्तरं तद्विचारासंभवात् एतद्विचारः प्रथममिति। मुख्यप्राणः प्राक् प्रथमाधिकरणे उक्तन्यायेन तत्सृष्टिदार्ढ्येन परमात्मोत्पादितत्वेन स्थापित

द्रव्यत्वं द्रव्यवर्गे पठनत उचितं ; नैष तत्त्वान्तरं स्यात्
तेजस्त्वे वाय्ववस्थात्यजनवदिह तत्त्यागहानेः कदाऽपि ॥ ७ ॥

इति वायुक्रियाधिकरणम् ॥ ६४ ॥

पूर्वेणैव तुल्यन्यायतया सिद्धं श्रेष्ठस्यापि प्राणस्योत्पाद्यत्वमुपजीव्य तत्तत्स्वरूपविशेषचिन्ता क्रियते। तदर्थविचारस्तु—किं श्रेष्ठप्राणो वायुमात्रमथ तत्क्रिया वा, अथ कश्चन विशेषमापन्नो वायुरिति। अत्र पूर्वोक्तनी(री)त्या प्राणस्यापि श्रेष्ठस्य परजनितत्वं स्थापितमेव। तस्य स्वरूपमेवाधुना विचार्यते। किं देहान्तर्वायुमात्रं किं वा (वायुमात्रम्, किंवा देहान्तः?) तत्क्रियामात्रमिति। एतद्नुवदति—प्राण इति। उभयमपि नेत्याह— नेति। तत्र हेतुमाह – पृथगिति। 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च' इति प्राणस्य, 'खं वायुर्ज्योतिः' इत्युक्तवायुना सह पृथगुत्पत्तिवादात्। द्रव्यवर्गे पठनाच्च द्रव्यत्वमेव समुचितम्। इत्थं वायु[मात्र]त्वं वायुक्रियात्वञ्च निरस्तम्। तर्हि तत्त्वान्तरत्वं(रं) स्यादित्याशङ्क्य परिहरति—नेति। तत्त्वान्तरत्वाभावे हेतुमाह-तेजस्त्व इत्यादिना इति। यथा वायुत्वावस्थापरित्यागेन तेजस्त्वावस्थाप्राप्तिः, एवं वायुत्वावस्थापरित्यागेन प्राणत्वावस्थाप्राप्तिरस्ति चेत्–तत्त्वान्तरत्वं स्यात्; न चैवमस्ति। तस्माद्वायुविशेष एव प्राण इति ॥२५९॥

इति वायुक्रियाधिकरणम् ॥ ६४ ॥

॥ ६५ ॥ श्रेष्ठाणुत्वाधिकरणम् ॥

सूत्रम्—अणुश्च ॥ २-४-१२ ॥

(२६०) उक्तः प्राणस्त्रिलोक्या सम इति स जगद्व्यापकोऽस्त्वित्ययुक्तं
जीवाश्मन्यायतस्तत्सहपठिततदुत्क्रान्तिगत्याद्य(दि)बाधात्।

---

एव। स्थापिते इति पाठे इत्यस्मिन् स्थापिते सतीत्यर्थः। अतो न तज्जन्म विचार्यम्। अथ सः प्राणः वायुमात्रं वाय्वाख्यमहाभूतसामान्यं वा, देहान्तःतत्क्रिया उच्छ्वास निश्वासाद्यात्मक-देहान्तर्गत वायुगतस्पन्दरूपक्रिया वेति पूर्वपक्षीष्टं कोटिद्वयं न भवति। कोटिद्वयमिति ज्ञापनाय सूत्रे वायुक्रिये इति द्वन्द्वः। न तु वायुः क्रिया चेत्युभयमपि प्राण इति पूर्वपक्षः। अनन्यलभ्यस्यैव शब्दार्थत्वात् एकत्र शक्त्यैव व्यवहारनिर्वाहात्। तन्निरासे हेतुमाह पृथगुत्पत्तिवादादिति। सूत्रे उपदेशादित्यस्य उत्पत्तिवादादित्यर्थः। सहेत्यत्र वायुनेत्यादिः। अत्र मुख्यप्राणस्य वायुना सह पृथगुत्पत्तिकथनात्। वायुप्राणयोरैक्ये वायूत्पत्तिरेव प्राणोत्पत्तिरिति पृथग्वचनं न युक्तम्। क्रियात्वपक्षनिरासः कथमनेनेत्यत्र विशदयति द्रव्यत्वमिति। प्राणस्य क्रियात्वे अद्रव्यत्वात् द्रव्येण सहोत्पत्तिर्नोच्येत। द्रव्यवर्गमध्यपाठात् द्रव्यत्वमेव सुचितमिति। तर्हि वाय्वतिरिक्तं वायुपरिणामभूतं तेजस्तत्त्वमिवायं प्राणोऽपि तत्त्वान्तरं स्यादित्यत्राह नैष इति। तत्त्वान्तरत्वं हि न द्रव्यभेदात्; सर्वस्यैकप्रकृतिद्रव्यत्वात्। किन्तु तेजस्तत्त्वे वायुत्वावस्थाराहित्यादेव तत्। तद्वदिह न; तत्त्यागस्य वायुत्वावस्थाराहित्यस्य प्राणे हानेः अभावात्। शरीरान्तस्सञ्चारी वायुरेव हि प्राणः। पृथग्वचनं चक्षुरादिवत् महायत्वात्। करणत्वाभावेऽपि उपकरणत्वातिशयात् ॥ २५९ ॥

४१. 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' इत्येवमुत्क्रान्तिगत्यागतिश्रवणेऽपि प्राणस्य व्यापकत्वपरवचनबहुत्वात् विभुत्वमेवेत्यधिकाशंका। 'सर्वेऽनन्ताः' इति वाक्यस्यान्यार्थकत्वेऽपि 'सम एभिस्त्रिभिर्लोकैः'

स्तुत्यर्था सर्वसाम्यश्रुतिरिह करणक्षेत्रधृत्यादिहेतौ ;
देहेऽनल्पोपकारः स्फुरति च दशधा वृत्तिभेदैर्विभक्तः ॥ ८ ॥
इति श्रेष्ठाणुत्वाधिकरणम् ॥ ६५ ॥

'श्रेष्ठश्च' इत्यत्र श्रेष्ठप्राणस्यापि ब्रह्मकार्यत्वं तुल्यन्यायसिद्धं प्रतिपादितम् । तस्य च, 'न वायुक्रिये पृथगुपदेशात्' इत्यत्र स्वरूपविशेषो वर्णितः। अधुना पुनः अणुत्वमुपवर्ण्यते। तदर्थविचारस्तु–किं प्राणः सर्वगतोऽथवाऽणुरिति । किं, 'सम एभिस्त्रिभिर्लोकैः[एभिर्लोकैस्समः]' इत्यानन्त्यव्यपदेशो विभुत्वमवगमयति, नेति । किं, 'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इति प्राणस्य गतिश्रवण-मानन्त्यश्रवणस्य प्राणायत्तस्थितित्वेन स्तुत्यर्थत्वेन गौणत्वमवगमयति, नेति । अत्र, 'सम एभि-स्त्रिभिर्लोकैः' इति त्रैलोक्यसाम्यवचनात् स जगद्व्यापको भवत्विति पूर्वपक्षमाह—उक्त इत्यादिना । तत् प्रतिक्षिपति—अयुक्तमिति । तत्र हेतुमाह—जीवेति । जीवस्य इन्द्रियाणाञ्च देहा-दुत्क्रान्तिः श्रूयते, तथा प्राणस्यापि। तेन विभुत्वं न घटते; उत्क्रान्तिगत्यागतीनाम(नां) बाधादित्यर्थः। 'सम एभिस्त्रिभिर्लोकैः' इत्यादिः सर्वसाम्यश्रुतिरिह कथमित्याशङ्क्य स्तुत्यर्थत्वेन निर्वहति—स्तुत्यर्थेति । स्तुतावपि हेतुमाह—करणेति । अयमर्थः—करणक्षेत्रधृत्यादिहेतौ प्राणे देहविषये बहु-पकारकत्वमस्ति । स च वृत्तिभेदैर्दशधा विभक्तः प्राणः। दृश्यते हि प्राणापानव्यानोदानसमानरूपेण पञ्चविधो वायुः। तथा नागकूर्मकृकरदेवदत्तधनञ्जयभेदेनापि(रूपेणापि) पञ्च [विधा] वायवो ह्यायुर्वेदादिप्रसिद्धाः, योगतन्त्रे विस्तृताश्च । ते चोपकारकत्वभेदात् भिन्नाः । तेन स्तुतिविषयत्वं युज्यत इति ॥ २६० ॥ इति श्रेष्ठाणुत्वाधिकरणम् ॥ ६५ ॥

---

इत्यादिभाष्योपात्तवाक्यानि व्यापित्वे स्वरसानि। तथा, 'तत् सूत्रं तदन्तर्यामिणञ्च ब्रूहि' इति अन्तर्यामि-तुल्यत्वस्यान्तर्यामिब्राह्मणे श्रवणादपि विभुत्वं व्यक्तमिति पूर्वपक्षः । निरस्यति इत्ययुक्तमिति । प्राणिनां सर्वत्र वर्तमानत्वात् तत्तद्देहान्तःकार्यकरत्वरूपावस्थामादाय वायोरेव प्राणशब्दव्यवहार्यत्वात् वायोर्व्यापित्वेऽपि प्राणस्य व्यापित्वं न सिध्येत्। अतः जीवाश्वन्यायतः जीवस्येन्द्रियाणाञ्चेवोत्क्रान्तिप्रभृतिसिद्धं परिच्छिन्न-त्वमबाध्यम्; साहचर्यादेकरूपोत्क्रान्त्याद्युक्तेरेव युक्तत्वात् । सर्वलोकसाम्यं निर्वहति स्तुतीति पादेन । यावति देशे त्रयो लोकाः, तावति व्यापित्वमेव तत्समत्वमिति कथमवगम्यते ; जीवदेहेन्द्रियादीनामपि सर्वत्र स्थित्या तेषु परिच्छिन्नेष्विवात्रापि साम्यस्य सुवचत्वात् । करणानाम् इन्द्रियाणां क्षेत्राणां देहानां धृतेः धारणस्य, 'विविधा च पृथक् चेष्टा' इत्युक्तसर्वक्रियायाश्च हेतुत्वं यत् प्राणगतम्, तत् सर्वत्रा विशिष्टमिति साम्यम् । "राज्यं वा त्रिषु लोकेषु सीता वा जनकात्मजा। त्रैलोक्यराज्यं सकलं सीताया नाप्नुयात् कलाम्" इति सीतायास्त्रैलोक्याधिक्येन स्तुतिवत् प्राणस्य साम्येन स्तुतिरिति च ॥ देहेऽनल्पोपकारः । देहेन्द्रियाद्युपकारकतया ततो वैशिष्ट्यञ्चेति स्तुतिः । व्यानादीनामपि सद्भावात् प्राणमात्रकथनं कुत इत्यत्राह स्फुरति चेति । पञ्चवृत्तिरिति सूत्रमुपलक्षणम् । प्राणापानव्यानोदान-समानभेदा इव, 'नागश्च कूर्मः कृकरो देवदत्तो धनञ्जयः' इत्युक्ता अन्येऽपि भेदाः पञ्च ग्राह्याः । सूत्रे मनोवदिति एतदाशयमपि। एकमेव मनः मनोबुद्धिचित्ताहंकारभेदेन चतुर्धा कथ्यमानमपि, 'कामः संकल्पो विचिकित्सा' इत्यादिना नानाभेदमप्युच्यते। तथा पञ्चधेव दशधाऽप्युच्यते प्राण इति ॥२६०॥

६६ ॥ अथ ज्योतिराद्यधिष्ठानाधिकरणम् ॥ २-४-६ ॥

सूत्रम्—ज्योतिराद्यधिष्ठानं तु तदामननात् प्राणवता शब्दात् ॥ तस्य च नित्यत्वात् ॥ १३—१४ ॥

(२६१) भोक्तॄणां देवतानामपि तनुकरणाधिष्ठितिर्नैशतन्त्रा
तत्स्वातन्त्र्यप्रदानादिति न ; तनुभृतस्तच्छरीरं हि सर्वे ।
नित्ये तत्पारतन्त्र्ये क्वचिदपि न भवेत् राजसामन्तनीतिः
प्राणन्यायात् प्रभुत्वं तदिह परवशं चेतनानां स्वशक्ये ॥ ९ ॥

इति ज्योतिराद्यधिष्ठानाधिकरणम् ॥ ६६ ॥

अत्र सङ्गतिर्भाष्ये, "सश्रेष्ठानां प्राणानां ब्रह्मण उत्पत्तिरियत्ता परिमाणञ्चोक्तम्। तेषां प्राणानामग्न्यादिदेवताधिष्ठितत्वञ्च पूर्वमेव, 'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्' इत्यनेन सूत्रेण प्रसङ्गादुपपादितम्। जीवस्य च स्वभोगसाधनानामेषामधिष्ठातृत्वं लोकसिद्धम्। 'एवमेवैष एतान् प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते' इत्यादिश्रुतिसिद्धञ्च। तदिदं जीवस्याग्न्यादिदेवतानाञ्च प्राणविषयमधिष्ठानं किं स्वायत्तम्, उत परमात्मायत्तमिति विचार्यते" इति। तदर्थविचारस्तु—ज्योतिरादीनाम्—अग्न्यादीनां जीवस्य चेन्द्रियाधिष्ठानं किं परमात्मायत्तम्, उत स्वायत्तमिति। किं तेषां तत्रतत्र नैरपेक्ष्यप्रतीतिः समीचीना, उत भ्रान्तिमूलेति। किं नैरपेक्ष्यप्रतीतौ बाधकं प्रमाणमस्ति, न वेति। तत्र पूर्वपक्षमालपति-भोक्तॄणामिति। तत्तच्छरीरे भोक्तॄणां—जीवानां [देवतानां?]चक्षुराद्यधिष्ठात्रीणामग्न्यादिदेवतानामपि देहेन्द्रियाद्यधिष्ठानं नेश्वराधीनम्; तत्स्वातन्त्र्यप्रदानादिति। अयमर्थः—ईश्वरः खलु सामान्येन सर्वेषामपि चेतनानां ज्ञानचिकीर्षाप्रयत्नादिप्रदानेन स्वातन्त्र्यमापादयति। तेनेश्वरेण दत्तस्वातन्त्र्या जीवाः करणकलेबराद्यधिष्ठाने स्वयमेव प्रवर्तन्त इति युक्तम् [इति ?]। तन्निराकरोति—नेति। तदेव विवृणोति—तनुभृत इति। अयमर्थः-सर्वे

९. इन्द्रियाणां प्राणशब्दवाच्यत्वं कथम्, मुख्यप्राणस्योक्तं श्रेष्ठत्वञ्च कथमिति विमर्शे प्राणायत्तस्थितिप्रवृत्तिकत्वं तेषु यथाप्रमाणमवगम्यते। तस्यापि प्राणस्याचेतनत्वात् चेतनाधिष्ठेयत्वमवर्जनीयम्। तत्र भोक्तृचेतनाधिष्ठेयत्ववत् प्रमाणबलात् वागादीनां सर्वेषामग्न्यादिदेवताधिष्ठानमपि प्रतिनियतं स्वीकार्यम्। सर्वमिदमधिष्ठानं परायत्तमिति प्रागुक्तमेव। अथापि यथा सकृत् सार्वभौमदत्ताधिकारैः परिसरभूपतिभिः यावत्स्वाधिकारकालं स्वातन्त्र्येण प्रजा नियम्यन्ते, तथा परमात्मलब्धाधिकारैर्जीवैरित्याशंक्य सार्वभौमवत् परस्य पृथक्सिद्धत्वाभावात् अन्तरात्मत्वात् सार्वदिकमेव तदधिष्ठानापेक्षणमित्युक्तमस्मिन्नधिकरणे। तदिदमाह भोक्तॄणामिति। भोक्तारः तत्तद्देहस्वामिनो जीवाः। देवताः करणप्रेरकाग्न्यादयः। तैः क्रियमाणं देहेन्द्रियाद्यधिष्ठानं सर्वदा सर्वेश्वराधीनमिति न; तेन तेभ्यः स्वातन्त्र्यस्य दत्तत्वादिति पूर्वपक्षः। निरस्यति इति नेति। तनुभृतः जीवाः सर्वे भोक्तृभोजयितृरूपाः तस्य ईशस्य शरीरभूताः किलेति पूर्वार्धस्यार्थः। 'तस्य च नित्यत्वात्' इति सूत्रस्यार्थमाह नित्ये इति। कादाचित्काधिकारदानमेव पर्याप्तमिति राजसामन्तविषये स्यात्। राज्ञोऽसर्वज्ञत्वात् सदा संनिहितत्वाभावात् प्रमादविषयात् अशक्तत्वाच्च। परमात्मा तु तद्विलक्षण इति प्रतिक्षणं तदधीनत्वमेवेति भावः। संगतिं दर्शयितुमाह प्राणन्यायादिति। यथा देहेन्द्रियव्यापारः सर्वदा मुख्यप्राणाधीन एव, तथा चेतन-

तनुभृत:—जीवा ईश्वरस्य शरीरमेव । शरीरञ्च नियताधिष्ठेयं नियतशेषञ्चेति निरणैषुः । तेन नियतपरतन्त्रा एव जीवाः । 'तत् सृष्ट्वा, तदेवानुप्राविशत्', 'तेन विना तृणाग्रमपि न चलति' इत्यादिप्रमाणशतप्रतिपन्नत्वात् । तेन राजसामन्तनीतिः क्वचिदपीश्वरपरतन्त्रे न स्यादेव । सामन्ताः खलूच्छ्वासनिश्श्वासचिन्तितनिमिषितादिकार्येषु स्वतन्त्रा अपि राजाज्ञामप्यनुवर्तन्ते । न चैवमीश्वरपरतन्त्रेषु स्वातन्त्र्यगन्धोऽप्यस्ति । तत्र दृष्टान्तमाह-प्राणन्यायादिति । न हि जागरावस्थायामेव प्राणिति, अपितु सुषुप्त्यवस्थायामपि । न हि सुषुप्त उच्छ्वासादौ स्वतन्त्रबुद्ध्या प्रवर्तते, अपित्वीश्वरप्रेरित एवेति हि भवतामपि सिद्धान्तः ॥ तर्हि कार्यवर्गेषु कर्तुः प्रभुत्वमस्ति । जीवस्य करणप्रेरणादिषु स्वातन्त्र्याभावे कथं तत् प्रभुत्वमित्याशङ्क्य परिहरति-प्रभुत्वमिति । जीवानां स्वशक्यविषये प्रभुत्वमपि परमात्मपरतन्त्रमेव ; प्रयोज्यकर्तृत्वात् । ईश्वरस्यैव प्रयोजककर्तृत्वात् । समुद्रलङ्घनादौ अशक्यकार्ये कर्तृत्वप्रसङ्गोऽपि नास्तीति वक्तुं स्वशक्य इत्युक्तम् ॥ २६१ ॥

इति ज्योतिराद्यधिष्ठानाधिकरणम् ॥ ६६ ॥

### ६७ ॥ अथ इन्द्रियाधिकरणम् ॥ २-४-७ ॥

सूत्रम्—त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ भेदश्रुतेर्वैलक्षण्याच्च ॥ १५—१६ ॥

(२६२) प्राणोऽपि स्याद्धृषीकं भृशमुपकरणात् ; तेषु मुख्यत्ववादात्
उत्क्रान्त्यादौ च साम्यादिति यदि, न, पृथक्छब्दनैस्तस्य भेदात् ।
कण्ठोक्तादिन्द्रियत्वान्मनसि तु घटते गोबलीवर्दनीतिः ;
न प्राणे सात्त्विकाहङ्करणविकृतिता ; शब्दसाम्यादि मन्दम् ॥ १० ॥

इति इन्द्रियाधिकरणम् ॥ ६७ ॥

पूर्वं, 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति । प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इति जीवोत्क्रमणे प्रधानप्राणसहितानां सर्वेषामपि प्राणानामुत्क्रमणमित्युक्तम् । तत्रेन्द्रियशब्दवाच्यत्वं किं

---

कर्तृकमधिष्ठानं परायत्तमेव । यथा च प्राणगतं प्रभुत्वं तस्याचेतनत्वात् चेतनमन्तरा स्वव्यापारकर्तृत्वायोगात् परवशमेव, तथा चेतनगतमपि परमात्मवशमेवेति । ननु सुषुप्त्यादौ प्राणव्यापारे प्राणिभूत जीवसंकल्पसापेक्षत्वादर्शनात् कथं तत्परवशत्वमिति चेत्—जीवसंनिधानाभावे प्राणे तत्सामर्थ्याभावात् तद्वशत्वमस्त्येव । संकल्पाधीनत्वविवक्षायां तु परवशत्वं परमात्मवशत्वरूपं भाव्यम् । अत्रेदमपि सूचितं भवति ; तदुच्यते—ननु मुख्यप्राणस्याचेतनत्वात् सर्वदा चेतनाधीनत्वात् तन्नाम्ना प्राणा इति इन्द्रियाणां व्यवह्रियमाणत्वं प्राणस्य श्रेष्ठनामकत्वञ्चात्र पूर्वाधिकरणोक्तं न घटते इति शंकायामेतदधिकरणप्रवृत्तिः । तत्र परवशत्वेऽपि प्राधान्यमपि युज्यते । अन्यथा भोक्तृणामपि देवताधीनत्वात् शेषित्वं मा भूत् ; देवतानामपि परमात्माधीनत्वात् आराध्यत्वं मा भूत् । न चाचेतनवदत्यन्तपारतन्त्र्यं चेतनेषु नास्तीति शंक्यम्—परमात्मनोऽन्तर्यामित्वात् तत्पारतन्त्र्ये चेतनाचेतनयोरविशिष्टत्वादिति व्युत्पादितमत्रेति ॥

१०. प्राणस्य श्रेष्ठस्यापि अक्षाविशेषं चेतनाधीनत्ववत् इन्द्रियशब्दवाच्यत्वमपि स्यात्, प्राणशब्दार्थत्वादिति शंकायामिन्द्रियाधिकरणप्रवृत्तिः ; तदर्थमाह प्राणोऽपीति । मुख्यप्राणोऽपि हृषीकं=हृषीकेन्द्रियादिशब्दवाच्यः स्यात् ; उपकरणत्वात् । भृशम् अतिशयेनोपकारकत्वात्

सर्वेषामपि प्राणानाम्, उत प्रधानप्राणव्यतिरिक्तानामिति व्यवहारविशेषनियमार्थं पुनरारभ्यत इति सङ्गतिः। तदर्थविचारस्तु किं सर्वे प्राणा इन्द्रियाणि, उत मुख्यप्राणव्यतिरिक्ता इति। किं श्रोत्रादिषु मुख्यप्राणे च प्राणशब्द एकनिमित्तेन वर्तते, उत निमित्तभेदेनेति। अत्र पूर्वपक्षी मन्यते—प्राणोऽपि हृषीकम्=इन्द्रियं स्यादिति। भृशमिति–जीवोपकारकत्वमेव हीन्द्रियाणां स्वभावः। तत्तु प्राणे भृशं=बहुलमेवोपकारकत्वमस्तीति। हेत्वन्तरमप्याह—तेष्विति। इन्द्रियेषु मुख्यः प्राणः इति प्राणस्य मुख्यत्वप्रतिपादनादिति। तृतीयमपि हेतुमाह—उत्क्रान्त्यादाविति। उत्क्रान्त्यादौ हि सर्वतः प्रबल एव प्राण उत्क्रान्त्यादिकं निर्वहतीति लोकदृष्टमेतत्। तेन प्राण एव प्रधानेन्द्रियमिति। उक्तं प्रतिषेधति—नेति। तत्र हेतुमाह—पृथगिति। 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च' इति, 'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इति च प्राण इति पृथगभिधानेन तस्येन्द्रियेभ्यो भेदात्। तर्हि, 'मनस्सर्वेन्द्रियाणि' इति मनसोऽपि पृथगभिधानादनिन्द्रियत्वं स्यादित्याशङ्क्य समाधत्ते–कण्ठोक्तादिति। 'मनष्षष्ठानीन्द्रियाणि' इति मनसः कण्ठोक्तादिन्द्रियत्वात् श्रुतहानिर्मा भूदिति इन्द्रियत्वं घटत एव। तर्हीन्द्रियाणीति सामान्येनोक्तत्वात् मनस इन्द्रियत्ववचने पौनरुक्त्यमिति पुनराशङ्क्य परिहरति–गोबलीवर्दनीतिरिति। वैषम्यान्तरमप्याह–न प्राण इति। इन्द्रियलक्षणं हि सात्त्विकाहङ्कारविकृतित्वम्; तन्मनसि विद्यते। तेन लक्षणाभावान्न प्राणस्येन्द्रियत्वम्। अथापि प्राणशब्दवाच्यत्वमात्रेणेन्द्रियत्वं स्यादिति मन्दाशङ्कामुत्थाप्य परिहरति–शब्देति। न ह्यक्षशब्दवाच्यतामात्रेण विभीतकादीनामिन्द्रियत्वमस्ति, नापीन्द्रियादीनां वृक्षविशेषत्वमित्यर्थः ॥ २६२ ॥

इतीन्द्रियाधिकरणम् ॥ ६७ ॥

---

प्रधानेन्द्रियत्वं स्यात्; मनसोऽपि अतो न्यूनमेवेन्द्रियत्वं भवेत्। प्राणेऽयं हि मुख्यप्राणः। न च—मुखे संचारित्वं मुख्यत्वम्; अत एव, 'आसन्यं प्राणमूचुः' इति श्रुतिः। आस्ये भवो ह्यासन्यः; आस्यशब्दस्याऽऽसन्नादेशादिति वाच्यम्—तद्वत् प्राधान्यरूपमुख्यत्वस्यापि स्थितत्वात्। आसन्यशब्दस्यापि आसनार्हत्वं राजत्वमित्यर्थसंभवाच्च। तथाच तेषु मुख्यत्वं तत्साजात्ये सत्येव स्वरसम्। अत इन्द्रियत्वमपि। किञ्चोत्क्रान्तिगत्यागतिषु साहं=यौगपद्यं श्रूयते। अनेन–इन्द्रियत्वमिन्द्रसंबन्धित्वम्; इन्द्रश्च चेतनः। तत्संबन्धित्वञ्च तेन सहोत्क्रान्त्यादिमत्त्वमित्युक्तं भवति। पूर्वपक्षमुपसंहृत्य निरस्यति इति यदि, नेति। हेतुमाह पृथगिति। पृथग्भूतैः शब्दनैः व्यवहरणैरस्येन्द्रियेभ्यो भिन्नत्वादित्यर्थः। बहुवचनेन तद्व्यपदेशात् भेदश्रुतेः वैलक्षण्यादित्युक्तहेतुत्रयग्रहणम्। 'इन्द्रियाणि दशैकञ्च' इति मुख्यं प्राणं विहायेन्द्रियपदप्रयोगात्, 'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इति इन्द्रियार्थकप्राणशब्दविवक्षितभिन्नत्वावगमनात्, इन्द्रियेषु प्राणशब्दप्रयोजकस्य वैलक्षण्यस्य, 'त एतस्यैव सर्वे रूपमभवन्' इत्यवगमनाच्चेत्यर्थः। तेन इन्द्रियपदघटकेन्द्रपदेन प्राणं गृहीत्वा तदधीनत्वमिन्द्रियत्वमित्यर्थज्ञापना। 'ततः प्राणोऽजायत। स इन्द्रः' इति मुख्यप्राणस्येन्द्र इति निर्देशादिति। ननु, 'मनः सर्वेन्द्रियाणि च' इति मनसोऽपि सर्वेन्द्रियभिन्नत्वमवगम्यत इत्यत्राह कण्ठेति। 'इन्द्रियाणि दशैकञ्च' इति मनस इन्द्रियत्वं स्पष्टमुक्तमिति तत्रेन्द्रियपदं गोबलीवर्दन्यायात् मनोभिन्नेन्द्रियपरम्। किञ्चेन्द्रियलक्षणं सात्त्विकाहंकारजन्यत्वं विष्णुपुराणावगमितम्। न तत् प्राणे। प्राणशब्दप्रयोगमात्रेणेन्द्रियत्वापादनं तु गोशब्दबोध्यत्वेन किरणादौ सास्नापुच्छाद्यापादनतुल्यमिति। आदिना जीवोपकरणत्वरूपधर्मग्रहणम् ॥२६२॥

६८ ॥ अथ संज्ञामूर्तिक्लृप्त्यधिकरणम् ॥ २-४-८ ॥

सूत्रम्—संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ मांसादि भौमं यथाशब्दमितरयोश्च ॥ वैशेष्यात्तु तद्वादस्तद्वादः ॥ १७-१९ ॥

(२६३) मन्वाद्यैः स्मर्यतेऽसौ सरसिजवसतिर्व्यष्टिनामादिकर्ता
जीवेनानुप्रविश्येत्यपि कथितमतः प्रेष्यकृत्यक्रमोऽत्र ।
तत्रैको हि प्रवेष्टा त्रिवृतमकृत च व्याकरोदित्यधीतः
तत्तज्जीवान्तरात्मा सृजति च भगवांस्तादृशं कार्यजातम् ॥ ११ ॥

अत्र पेटिकासङ्गतिर्भाष्ये—'भूतेन्द्रियादीनां समष्टिसृष्टिर्जीवानां कर्तृत्वञ्च परस्मात् ब्रह्मण इत्युक्तं पुरस्तात् । जीवानां स्वेन्द्रियाधिष्ठानञ्च परमात्मायत्तमिति चानन्तरं स्थिरीकरणाय स्मारितम् । या त्वियं नामरूपव्याकरणात्मिका प्रपञ्चव्यष्टिसृष्टिः, सा किं समष्टिजीवरूपस्य हिरण्यगर्भस्यैव कर्म, उत तेजःप्रभृतिशरीरकस्य परस्याबादिसृष्टिवत् हिरण्यगर्भशरीरकस्य परस्य ब्रह्मण इतीदानीं चिन्त्यते ।' इति ।

अयमर्थः—अत्र तृतीयपादादारभ्य इतः पूर्वमेका पेटिका । तत्र भूतेन्द्रियसमष्टिनिरूपणम्, अथ व्यष्टिसृष्टिनिरूपणमिति पेटिकासङ्गतिः । व्यष्टेश्चोपकरणत्वात् तत्सृष्टिनिरूपणमिति पादसङ्गतिः । पूर्वाधिकरणे, 'खं वायुर्ज्योतिः' इत्यादौ समष्टिसृष्टेः परमात्मकर्तृकत्वमुक्तम्; अधुना पुनर्व्यष्टिसृष्टिर्जीवात्मकर्तृकतया प्रतिभातीति शङ्कोत्थानेनावान्तरसङ्गतिः। इदञ्चाभिप्रेतम्—जीवोपकरणानां प्राणानामुत्पत्त्यादिकं निरूपितम्। तैर्जीवस्य संयोगकरणं हि व्यष्टिसृष्टिरिति च सङ्गतिः । तदर्थं विचारस्तु—किं ब्रह्मणः साक्षात्सर्वकारणत्वं श्रुतमुपपद्यते, उत नेति। तदर्थं व्यष्टिनामरूपव्याकरणं किं हिरण्यगर्भमात्रकर्तृकम्, उत तदवस्थब्रह्मकर्तृकमिति । तदर्थं, 'अनेन जीवेन' इति जीवसामान्यस्य कर्तृत्वश्रुतिः

---

११. करणकलेबरयोर्मध्ये करणानां कार्यत्वे संदेहः शमितः । कलेबरस्य कार्यत्वसंदेहाभावात् तद्विशिष्टवेषेणाऽऽत्मनि कार्यत्वस्य च प्रागेवोक्तत्वात् तत्कार्यत्वं किं निरूपितमिति परं विचार्यते । हिरण्यगर्भनिरूपितमिति शंकते मन्विति । 'सेयं देवतैक्षत-हमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इति श्रुतौ जीवशब्देन हिरण्यगर्भग्रहणम् । अनेन=मदुत्पादितेन संनिहितेन ब्रह्मरूपेण जीवेन— तन्मुखेनेति यावत् । नाम रूपञ्च कुर्यामित्यर्थात् । जीवपदेन विशिष्य विधातृग्रहणं कथमिति चेत्, तत् विव्रियते—चारेण परबलं संकलयानीत्यत्र संकलने चारस्येवात्र जीवस्य व्याकरणे कर्तृत्वमवगम्यते । जीवश्चायं तत्तद्देहान्तर्निविष्टो यः स न भवति; तस्य व्याकरणकर्मत्वेऽपि कर्तृत्वायोगात् । नापि मातापित्रादिः, तद्देहानुप्रवेष्टृत्वाभावात्; तत्तद्रूपव्याकरणस्य तद्बुद्धिपूर्वकत्वाभावाच्च । अतो जीवविशेषः परदेवतासहायभूतो ग्राह्यः । स हिरण्यगर्भः; 'नाम रूपञ्च भूतानां कृत्यानाञ्च प्रपञ्चनम् । वेदशब्देभ्य एवाऽऽदौ देवादीनां चकार सः' इत्यादिना मन्वाद्यैर्भगवन्नाभिपद्मोद्भवः व्यष्टिनामरूपकर्तृत्वेन स्मर्यते हि । तथाच यथा चारेणेति वाक्यं चारभूतप्रेष्यकृत्यं संकलनं ज्ञापयति, तथा अनेन जीवेनेति वाक्यं जीवभूतचतुर्मुखकृत्यम् । ननु नामरूपकर्तृत्वस्य चतुर्मुखे संभवेऽपि अनुप्रविश्येत्युक्तप्रवेशकर्तृत्वं कथम्? न हि देवमनुष्यतिर्यक्स्थावरात्मकेषु व्यष्टिदेहेषु चतुर्मुखो निविष्ट इत्यत्र किञ्चित् प्रमाणमस्तीति चेत्—अत एव चतुर्मुखेनेत्यनुक्त्वा जीवेनेत्युक्तम् । व्यष्टीभवज्जीवसमष्टि-

किं जीवसमष्ट्याश्रयकेवलहिरण्यगर्भकर्तृकत्वमवगमयति, उत जीवमात्रविशिष्टपरमात्मकर्तृकत्वमिति। तदर्थं किं केवलहिरण्यगर्भमात्रकर्तृकत्वे त्रिवृत्करणनामरूपव्याकरणयोः श्रूयमाणयोरेककर्तृत्वं घटितम् नेति। तदर्थं किं त्रिवृत्करणे हिरण्यगर्भस्य कर्तृत्वं संभवति, नेति। तदर्थं किं त्रिवृत्करणं हिरण्यगर्भोत्पत्तिस्थानभूताण्डसृष्टेरुत्तरकालिकं वा पूर्वकालिकं वेति। तदर्थं किं 'नामरूपे व्याकरोत्। तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' इति पाठक्रमः, अण्डान्तर्वर्तित्रिवृत्करणप्रदर्शनम् अन्नादीनां त्रिवृत्करणश्रुतिश्च त्रिवृत्करणस्याण्डसृष्ट्युत्तरकालिकतावगमयति, नेति। किमेते त्रयो हेतवः प्रबलाः, उत दुर्बला इति। तेषां प्राबल्ये त्रिवृत्करणस्याण्डसृष्ट्युत्तरकालिकतावगमकतया तस्य हिरण्यगर्भकर्तृकत्वसम्भवेन त्रिवृत्करणनामरूपव्याकरणयोः कर्त्रैक्यश्रुत्युपपत्तेः, 'अनेन जीवेन' इति निर्देशस्य हिरण्यगर्भमात्रकर्तृकत्वज्ञापकतया व्यष्टिनामरूपव्याकरणं हिरण्यगर्भमात्रकर्तृकमिति परब्रह्मणः साक्षात्सर्वकारणत्वं न स्यात्। पाठक्रमादीनां दुर्बलत्वे त्रिवृत्करणस्याण्डसृष्ट्युत्तरकालिकत्वासिद्धेस्तत्र हिरण्यगर्भस्य कर्तृत्वासम्भवेन त्रिवृत्करणनामरूपव्याकरणयोः कर्त्रैक्यायोगात् तदुपपत्त्यर्थं, 'अनेन जीवेन' इति निर्देशस्य जीवसमष्टिशरीरकपरमात्मकर्तृकत्वावगमकतया व्यष्टिनामरूपव्याकरणं हिरण्यगर्भशरीरकपरमात्मकर्तृकमिति परब्रह्मणः साक्षात्सर्वकारणत्वमुपपन्नमिति सिध्यति।

अत्र पूर्वपक्षवादी मन्यते—मन्वाद्यैर्महर्षिभिः सरसिजवसतिरेव नामरूपव्याकरणकर्तृत्वेन कथ्यते(?) स्मर्यते च (?) (स्मर्यते=कथ्यते?) 'नामरूपञ्च भूतानाम्' इति। न च स्मृतिमात्रम्; श्रुतिरपि, 'अनेन जीवेन' इति। अतश्चारेणानुप्रविश्य परबलं सङ्कलयानीति प्रेष्यकृत्यक्रमोऽत्रेति शङ्कते–मन्वाद्यैरिति। उक्तमर्थं प्रतिक्षिपति–तन्नेति। तदेव विवृणोति--एक इति। एक एव हि प्रवेष्टा, 'अनेन जीवेनात्मनाऽनुप्रविश्य' इति, त्रिवृतमकृत='तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' इति, 'नामरूपे व्याकरोत्' इति चाधीतः। तेन त्रयाणामेककर्तृकत्वं सिद्धम्। तर्हि कथं चतुर्मुखकर्तृके

---

भूतेनेति तदर्थः। तथात्वं चतुर्मुखस्य प्रसिद्धम्। तदन्तर्गतैकैकजीवगतमनुप्रवेशकर्तृत्वं तत्प्रयोजके समष्टिभूते चतुर्मुखे उच्यते। नामरूपकर्तृत्वं तु साक्षादस्ति। ईशग्रहणेऽप्यनुप्रवेशो दुर्वच एव। तस्य प्रागेव सर्वत्र व्याप्ततयाऽनुप्रवेशस्य नूतनस्याभावात्। व्यष्टिजीवमादायेति तूभयोस्तुल्यमिति। पूर्वपक्षमिमं निरस्यति तन्नेति। हेतुमाह एक इति। अत्र श्रुतौ, त्रिवृत्करणम् अनुप्रवेशो नामरूपव्याकरणमिति त्रयमेककर्तृकं प्रतीतम्। त्रिवृत्कृतेभ्यो ब्रह्माण्डे उत्पादिते तत्र तादृशभूतेभ्यश्चतुर्मुखमुत्पाद्य तस्मै परेणाधिकारो दीयते। ततः त्रिवृत्करणं चतुर्मुखकर्तृकं न भवति। तत्समानकर्तृके च प्रवेशव्याकरणे। अतः श्रुतिवाक्यमीशस्यैव व्याकरणकर्तृत्वमाह। प्रवेशकर्तृत्वं पूर्वपक्षिण इव तत्तद्व्यष्ट्यन्तर्गततत्तज्जीवमादायैव भवतु। वस्तुतः पूर्वं स्थितस्यैव परमात्मनः अनुप्रवेशोऽन्यविध इहोच्यते। स च व्यष्टिदेहव्यापिज्ञानप्रसरवज्जीवनियमनानुरूपः परमात्मधर्मभूतज्ञानपरिणामविशेषस्तावद्व्यापी इत्युपपादितं छान्दोग्यपरिष्कारे। तथाचोत्पाद्यजीवविशिष्टत्वेन रूपेण प्रवेष्टृत्वम्। उत्पादकजीवविशिष्टत्वेन रूपेण च नामरूपव्याकरणकर्तृत्वम्। स च जीवः मातापित्रादिरिव कामं चतुर्मुखोऽपि भवतु। तत्रतत्र विशेषणभूतजीवभेदेऽपि विशेष्ये त्रितयकर्तृत्वं सुस्थम्। तदयं श्लोकार्थः—त्रिवृत्करणकर्तृत्वेन व्याकरणकर्तृत्वेन चैक एवाधीतः। न तत्र भेदो युक्तः। तस्यैव च प्रवेष्टृत्वं वक्तव्यम्। अतः चतुर्मुखस्य त्रिवृत्करणकर्तृत्वासंभवात् तत्कर्ता पर एव सर्वं सृजति=व्याकरोति। तत्र त्रिवृत्करणं साक्षात्। व्याकरणं तु आदिसृष्टौ चतुर्मुखादिविषये स्वयमेव करोति; ततो जीवद्वारा च करोति।

परमात्मनः कर्तृत्वमित्याशङ्क्याह-तत्तदिति । यथा, 'तत्तेज ऐक्षत', 'तदपोऽसृजत' इत्यादौ तेजःप्रभृतिविशिष्टस्य परमात्मनः कर्तृत्वम्। एवं चतुर्मुखादिविशिष्टस्य परमात्मन एव समष्टिसृष्टिवत् व्यष्टिसृष्टावपि कारणत्वमित्यर्थः ॥ २६३ ॥

(२६४) या जीवेनाऽऽत्मनेति श्रुतिरियमपि न ब्रह्मजीवैक्यमाह
प्रागेवैकोऽन्तरात्मा वपुरितर इति (तदिति)स्थायिभेदाभिधानात् ।
तेनेशस्तद्विशिष्ट[ः]स्वकरणकतयाऽनुप्रवेशेऽपि कर्ता
जीवे तत्कर्तृतायामिह न हि घटते क्त्वाश्रुतिः कर्तृभेदात् ॥ १२ ॥

अत्र परपक्षोक्तप्रक्रियां स्वपक्षेण भङ्क्त्वा, 'अनेन जीवेन' इति वाक्यार्थं विशिष्य शिष्यशिक्षायै विशदयन् निगमयति--या जीवेनेति । 'अनेन जीवेनात्मना' इति श्रुतिर्न जीवब्रह्मणोरैक्यमाचष्टे । प्रागेव=पूर्वमेव । एक एवान्तरात्मा, सर्वं तस्य वपुरिति श्रुतिस्मृतिसूत्रोपबृंहणादिभिर्नित्यसिद्ध-भेदोपपादनात् । एवं परोक्तमर्थं निरस्य परमात्मन एव नामरूपव्याकरणवदनुप्रवेशेऽपि कर्तृत्वं जीवविशिष्टवेषेणेति निगमयति--तेनेति। एवमुपपादनात् तद्विशिष्टः=जीवविशिष्ट एव नामरूपव्या-करणवदनुप्रवेशेऽपि कर्ता। स्वकरणकतया-जीवशरीरकतया। 'करणं साधकतमक्षेत्रगात्रेन्द्रियेष्वपि' इति करणशब्दस्य गात्रवाचित्वात् । अथवा स्वस्यैव साधकतमतया। ईश्वरो हि, 'विवक्षातः कारकाणि भवन्ति' इति न्यायेन साधकतमतया करणतयापि व्यपदेष्टुं शक्यते। स्वतन्त्रतया कर्तृत्वेन

स च जीवः देवमनुष्यतिर्यगादेरेकैकसंतानेऽपि पूर्वपूर्वो यः, स सर्वोऽपि । तथा निमित्तभूतब्रह्मादिरपि । अत एव वक्ष्यति, 'पञ्चीकर्तुः स्वनाभिपद्मवक्त्रवचित्वात्' इति । अस्य प्रकृत्यर्थत्वाभावेऽपि स्मृतिसिद्धत्वं दुरपलपम् । एवं प्रवेष्टृत्वमपि संभावितसर्वजीवद्वारा भाव्यमिति ॥ २६३ ॥

१२. अथ जीवेनात्मनेत्यत्र प्रकृत्यर्थः प्रत्ययार्थश्च क्रमेण विचार्येते । अत्राद्वैती स्वमत-सिद्धमभिमत्य मुखं प्रसारयति—जीवेनात्मनेत्यस्य जीवभूतेन मयेत्यर्थः। जीवस्य देहे प्रवेष्टृत्वात्, ईशस्य च व्याकर्तृत्वात् कथं समानकर्तृकत्वमिति शंकायां जीवेशैक्यान्न दोष इति यः परिहारो वक्तव्यः, तस्य स्पष्टीकरणाय जीवेनात्मनेत्यद्वैतकण्ठोक्तिरिति । तं निवर्तयति पूर्वार्धेन । नेयं श्रुतिर्ब्रह्मजीवैक्यं बोधयेत्। अंशाधिकरणान्तेन प्रागेव अन्तरात्मा अन्यः, जीवाः तद्वपुर्भूताः, तथा अचितश्चेति सर्वत्र भेदस्य स्थायितया उक्ततया शरीरवाचिशब्देन शरीर्यभिधानमिति जीवविशिष्टाभेदस्यैव आत्मना मया इत्युक्ते ईशे वक्तव्यत्वात् । अथ द्वैती शंकते—जीवेनात्मनेति आत्मपदं न स्वेनेत्यर्थकम् । तथासति तृतीयया कर्तृत्वोक्त्यसंभवात् । अनभिहिते कर्तरि हि तृतीयाऽनुशिष्यते । अनुप्रविश्येति ल्यपा ईशः कर्ताऽभिहितः । व्याकरणकर्ता हि प्रवेशकर्ता ल्यबुक्तः । अतो जीवात्मा इति प्रथमैव स्यात् । तृतीयाश्रवणात् जीवमात्रं जीवात्मपदेनोच्यते । तस्य स्थितं यत् प्रवेशकर्तृत्वं स एव तृतीयार्थः । अतो नात्राद्वैतप्रसक्तिरिति । तत्राह तेनेति । चतुर्थपादार्थः पूर्वं प्राग्वः । जीवमात्रे स्थितं कर्तृत्वं तृतीयार्थश्चेत्, जीवकर्तृकानुप्रवेशस्यैव धात्वर्थत्वात् तत्कर्तृत्वं ल्यपा कथमुच्येत ; ल्यबुक्तस्य कर्तुर्व्या-करणकर्तृभिन्नतया ततो भेदात् । अतस्तृतीयायाः करणत्वार्थकत्वमाहत्य जीवकरणकानुप्रवेशकर्तृत्वं परमात्मनि वक्तव्यम् । तदा च आत्मपदवैयर्थ्यम् । अतो जीवपदं जीवविशिष्टार्थकम् । आत्मपदं स्वार्थकम्

व्यवहारः सुप्रसिद्ध एव । जीवस्यैवानुप्रवेशकर्तृत्वपक्षे प्रधानभूतं दोषमाह--जीव इति। जीवस्य प्रवेशकर्तृत्वे क्त्वाश्रुतिर्न घटते, जीवस्य प्रवेशकर्तृत्वादीश्वरस्य नामरूपव्याकर्तृत्वादिति ॥ २६४ ॥

(२६५) अग्न्यादावण्डमध्यस्थितिमति कथितं रूपभेदैस्त्रिवृत्त्वं
तेजोबन्नाशितोक्तावपि विशदमिद तेन वेधास्त्रिवृत्कृत् ।
मैवं ब्रह्माण्डसृष्टिर्भवतु कथमसावत्रिवृत्कारपूर्वा
भुक्तेऽन्नादौ त्रिधोक्ता परिणतिरितरत् संनिकृष्टे प्र[र्वस्य] दृष्टिः ॥ १२ ॥

नन्वण्डमध्यस्थितिमति अग्न्यादौ रूपभेदैस्त्रिवृत्त्वमुक्तम्, 'यदग्ने रोहितं रूपम्' इत्यादिना । 'अन्नमशितं त्रेधा विधीयते' इत्यादाविदमेव त्रिवृत्करणं विशदमुक्तमिति चतुर्मुखस्यैव त्रिवृत्करणकर्तृत्वमिति कश्चिन्मन्दः प्राह—अग्न्यादावित्यादिना । तत् प्रतिक्षिपति—मैवमिति । तदेव विवृणोति—

---

जीवस्येव जीवविशिष्टरूपेण स्वस्यापि अनुप्रवेशकरणत्वविवक्षया तृतीया घटते । तथाच जीवविशिष्टस्वकरणकानुप्रवेशसमानकर्तृकनामरूपव्याकरणकर्त्री परा देवतेति वाक्यार्थ इति । विशेषविचारः **छान्दोग्यभाष्यपरिष्कारे** द्रष्टव्यः । **चिन्तामणौ** प्रथमयोजनायां **तद्विशिष्टः** इति पृथक्पदम् । **स्वकरणकतयेत्यत्र** स्वपदं स्वकीयपरम् । **करणशब्दः** शरीरार्थकः । तृतीयायाः करणत्वार्थं विहाय हेतुत्वाद्यर्थपरत्वादिपक्षेणापि श्लोकनिर्वाहार्थमेवं व्याख्यानम् ॥ २६४ ॥

१२. ननु स्यात् त्रिवृत्कर्तुर्व्याकर्तुश्चैक्यम् । त्रिवृत्करणमपि चतुर्मुखकर्तृकमेव । श्रुतौ, 'अन्नमशितं त्रेधा विधीयते' इत्यादिना तेजोबन्नरूपे आहारे त्रिवृद्भाव उक्तः । आहारश्चाण्डान्तर्गतः । तथा, 'यदग्ने रोहितं रूपम्' इत्यादिना अग्न्यादिष्वेव त्रिवृत्कृतत्वं प्रदर्शितम् । ते चाण्डान्तर्गताः । अतस्ते चतुर्मुखसृष्टा एव । एवम्, 'अनुप्रविश्य नामरूपे व्याकरोत् । तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' इति पाठक्रमादपि व्याकरणानन्तरं त्रिवृत्करणमित्यवगमात् चतुर्मुखकर्तृकत्वं नासंभवि— इति शंकायां **मांसादीति** सूत्रं प्रवृत्तम् । तत्र अन्नमशितमिति वाक्यमूलकप्रश्नस्यैव परिहारः कृतः, अन्यांशापेक्षया इह पूर्वपक्षिभ्रान्तेः प्रबलत्वात् तद्वारणमभिप्रेत्य । अन्यांशपरिहारश्च सुगम इति । अयमर्थः—त्रिवृत्करणं पञ्चीकरणोपलक्षणम् । पञ्चीकरणं हि एकैकस्यापि व्यष्टिगतस्य पाञ्चभौतिकत्वसंपादनाय । तत् कथं रूपव्याकरणानन्तरं भवेत् । रूपं हि मूर्तिरेव । इदमेव सूचयितुं सूत्रे मूर्तिपदप्रयोगः । सर्वव्यष्ट्याधारभूतस्याण्डस्य चतुर्मुखमूर्तेश्च पाञ्चभौतिकत्वात् अण्डसृष्टेः प्रागेव त्रिवृत्करणम्। अत एव, 'नामरूपे व्याकरवाणि, तासां त्रिवृतं त्रिवृतमेकैकां करवाणि' इति संकल्पक्रमोऽपि घटते । लोके हि कार्यसंकल्पानन्तरमेवोपायसंकल्पः । एवं फलोपायभावात् उपायस्य प्रागावश्यकतया त्रिवृतमकरोदिति वाक्यं प्रथमतया योजनीयम्, अर्थक्रमानुरोधात् । यत्तु अन्नमशितमिति प्रदर्शनम्, न तत् एकैकाहारगतभूतत्रयविवेचनरूपम् । तथासति भागत्रयं तेजोबन्नरूपम् उत्पत्तिक्रमात् स्यात् । तन्न घटते ; अन्नस्थविष्ठभागादेस्तेजस्त्वाद्ययोगात् । उत्तरोत्तरस्य सूक्ष्मत्वोक्तिविरोधाच्च । तेजस्तो जलस्य सूक्ष्मत्वायोगात् । अतः पृथिवी जलतेजांसि क्रमेण निर्दिश्यन्त इति वक्तव्यम् । तदपि न ; न हि मांसादिकमाप्यादिरूपं भवितुमर्हति ; किंतु

'नानावीर्याः' इति श्लोके त्रिवृत्कृतानामेव भूतानां सृष्टिसामर्थ्यमित्युक्तम् । अण्डसृष्टेः पूर्वं त्रिवृत्करणाभावे कथं ब्रह्माण्डसृष्टिर्भवतु । यत्तु, 'अन्नमशितं त्रेधा विधीयते' इति, तेन त्रेधा परिणतिमात्रमुच्यते ; न पुनस्त्रिवृत्करणम् । त्रिवृत्करणं हि नाम त्रयाणामेकीकरणम् ; नपुनर्विभागः । इयं त्रिधोक्ता परिणतिः । इतरत् भूतेषु भूतान्तरसंनिकर्षस्य दृष्टिः प्रदर्शनमित्यर्थः ॥ २६५ ॥

---

भौममेव । अतस्तत्तत्पर्याये निर्दिष्टस्य त्रिकस्यापि एकभूतत्वात् नेदं त्रिवृत्करणप्रदर्शनम् । अतः प्रत्याहारं त्रिविधपरिणामविशिष्टत्वमेवोच्यते । अग्न्यादौ तु भूतत्रयघटितत्वप्रदर्शनमेव ॥ अण्डसृष्टेः प्रागेव त्रिवृत्कृतत्वे तदातनवस्तु हि तथा प्रदर्श्यमिति चेत्—अण्डान्तर्गतपुरुषं प्रति अण्डबहिर्भूतवस्तुप्रदर्शनायोगात् अत्र तत्प्रदर्शनम् । तेन तदपि प्रदर्शितप्रायम् । अतो न चतुर्मुखः त्रिवृत्कृत् । श्लोकार्थस्तु-लोहितशुक्ल-कृष्णात्मकरूपैस्त्रिभिः तेजोबन्नगतैः प्रदर्शितैः अण्डमध्यस्थिते अग्न्यादावेव भूतत्रयात्मकत्वकथनात् तस्य चतुर्मुखकर्तृकत्वं भवेदेव । अशितं अन्नमापस्तेज इति त्रिविधमादाय एकैकस्मिन्नपि स्थूलसूक्ष्मसूक्ष्मतर पृथिव्यप्तेजोभागवत्त्वं यत् कथितम्, तत्राप्यण्डान्तर्गतत्वं विशदम् । अशितमिति पीतोपलक्षणम् ; 'आपः पीतास्त्रेधा विधीयन्ते' इति पीतपदप्रयोगात् । तेन त्रेधाः विधिरेव त्रिवृत्कृदिति शंका । निरस्यति नैवमिति । ब्रह्माण्डस्य पाञ्चभौतिकत्वात् त्रिवृत्कारपूर्वैव सा भवेत्, न तु त्रिवृत्कारपूर्वभिन्ना । भुक्ते अशिते पृथिव्यादौ कथितं तु न त्रिवृत्कृतत्वरूपम् । किंतु एकजातीयपरिणामत्रयवत्त्वम् । इतरत् अग्न्यादित्रिवृत्त्वकथनं तु सत्यं संनिकृष्टवस्तुनि भूतत्रयात्मकत्वप्रदर्शनमेव । असंनिकृष्टस्य प्रदर्शनासंभवात् अग्न्यादेरेव संनिकृष्टत्वात् तत्र प्रदर्शनमिति यावदिति ॥ पूर्वार्धे श्रुतिक्रमेण अग्न्यादिकं पूर्वम्, पश्चात्त अशितं पस्तुत्य पूर्वपक्षः कृतः । उत्तरार्धे अशितविषयकसमाधानस्य सूत्रकण्ठोक्त-त्वात् प्रथममुक्तिः । अन्यदर्थसिद्धमिति सूत्रकृतोपेक्षितमिति पश्चादुक्तिः । तत्र संनिकर्षस्य दृष्टिः, संनिकृष्टः प्रदृष्टिः, संनिकृष्टे प्रदृष्टिः इति पाठत्रयं दृश्यते । प्रथमं चिन्तामण्याघाहृतमिव । परंतु तदर्थवर्णनप्रकारो न प्रश्नसमाधानं भवति । अण्डसृष्टेः प्रागेव त्रिवृत्करणं चेत्, तत्प्रदर्शनं=भूतत्रय-संवलनप्रदर्शनं अण्डान्तर्गतवस्तुनि कुत इति हि प्रश्नः । तत्र इतरत् एकस्मिन् भूते भूतान्तरसंनिकर्षस्य मेलनस्य प्रदर्शनमितीदं कथमुत्तरं स्यात् । प्रश्नसमाधानरूपत्वं परित्यज्य वाक्यद्वयार्थवैलक्षण्यमात्रवर्णन-रूपत्वेष्टौ तु तथा स्यात्—अशितवाक्यं परिणामत्रयपरम्, इतरत् अग्न्यादिवाक्यमेव त्रिवृत्कृतत्वस्य भूतमिथस्संनिकर्षस्य बोधकमिति । तदा तत् बुद्धबोधनं स्यात् । संनिकर्षपदस्वारस्यम् । प्रश्नस्यानु-त्तरणात् न्यूनता च । तस्मात्, "अण्डान्तर्वर्तिष्वग्न्यादित्यादिषु त्रिवृत्करणप्रदर्शनं श्वेतकेतोः शुश्रूषो-रण्डान्तर्वर्तित्वेन तस्य बहिर्वस्तुषु त्रिवृत्करणप्रदर्शनायोगात् त्रिवृत्कृतानां कार्येषु अग्न्यादित्यादिषु क्रियते" इति भाष्यार्थ इह विवक्षित इति तदुचितरीत्या व्याख्येयम् । इतरदिति सामान्ये नपुंसकम् । संनिकृष्टेः प्रदृष्टेरिति पाठोऽपि स्यात् । उभयमपि पञ्चम्यन्तम् । संनिकर्षबलादग्न्यादेरेव प्रकर्षेण दृश्यमानत्वात् अग्न्यादेः कथनम् ; न तु विप्रकृष्टस्यादृष्टस्य इत्यर्थः । इदानीम् इतरदित्यत्र न लिङ्गान्तरनसक्तिः । एवं ब्रह्मणः सर्वनिरूपितसर्वविधकारणत्वे स्मृतिविरोधो वा तर्कविरोधो वा श्रुति-विरोधो वा नास्तीत्युपपादितमनेन द्वितीयेनाध्यायेन ॥ २६५ ॥

द्वितीयाध्यायचतुर्थपादाधिकरणार्थानां विभज्य प्रदर्शनम्—

(२६६) अक्षाणां जन्मसंख्यापरिमितय इह प्राणवायोस्स्वरूपं
तत्सौक्ष्म्यं देवतादेस्तदुभयविषयाधिष्ठितौ पारतन्त्र्यम् ।
प्राणस्यानिन्द्रियत्वं बहुविधचिदचिद्व्यष्टिनामादि चाऽऽद्यात्
पञ्चीकर्तुः स्वनाभिप्रभवकवचितादूचिरे प्राणपादे ॥ १४ ॥

अत्र पादेऽधिकरणाष्टकार्थान् विभज्य व्याचष्टे—अक्षाणामित्यादिना । इन्द्रियाणां जन्म, तेषामेकादशत्वं संख्या, परिमाणश्चाणुत्वं, मुख्यप्राणस्य स्वरूपं, तस्यैव मुख्यप्राणस्याणुत्वं, देवतानां जीवानाञ्च मुख्यामुख्यप्राणाधिष्ठाने पारतन्त्र्यं, तत्र मुख्यप्राणस्यानिन्द्रियत्वं, बहुविधचिदचिद्व्यष्टिनामरूपव्याकरणं स्वनाभिप्रभवचतुर्मुखशरीरकात् आद्यात्=समष्टिसृष्टौ तेजोबन्नादिशरीरकत्वेन तत्तत्कार्यसृष्टिहेतोः पञ्चीकरणहेतुभूतात् परमपुरुषात् परब्रह्मभूतादेव भवतीत्येतेऽर्था विशदमूचिरे प्राणपाद इति ॥ २६६ ॥

उत्तरपादद्विकस्यापि परपक्षनिरासकत्वम्—

(२६७) नित्यत्वं व्योम्नि वाताद्यणुषु च पुरुषेऽप्यज्ञतादीन् अपार्थान्
श्रोत्रादौ भूततायं मनसि च विभुतां नित्यतत्त्वान्तरत्वम् ।
प्राणेष्वात्मादिभावं स्वपदनियमनस्वैरितां स्वर्गिवृन्दे
वेधस्युन्मुक्तयन्तृक्रममपि वदतां पादयुग्मेऽत्र भङ्गः ॥ १५ ॥

पूर्वपादाभ्यामेव परपक्षप्रतिक्षेपः कृतः; उत्तरयोरनयोः पादयोः किमवशिष्टं प्रतिक्षेप्यमित्युयुत्सानस्य कस्यचिदत्यन्तबालकस्यात्रापि प्रतिक्षेप्यपक्षान् क्रमेण प्राह—नित्यत्वमित्यादिना ।

---

१४. अधिकरणाष्टकार्थसंग्रहः अक्षाणामिति । जन्मसंख्यापरिमितय इति अक्षविषयकाधिकरणत्रयार्थः । प्राणवायोरित्यनेन वायुविशेषत्वमेव स्वरूपम्, न तु सामान्यम्, न वा क्रियेत्युक्तं भवति । तस्य सौक्ष्म्यम् अणुत्वेत्युक्तम् । तदुभयेति अक्षप्राणोभयेत्यर्थकम् । नामादीति आदिपदेन रूपग्रहणम् । आद्यात् परमात्मतः । तत्क्रियमाणमित्यर्थः । स्वनाभिप्रभवः ब्रह्मा, तत्कवचितात् तेन संजातकवचात् । ब्रह्मा हि कञ्चुकस्थानीयः । एतद्विशेषणेन, चतुर्मुखकर्तृकत्वबोधकस्मृतिविरोधपरिहारः । प्रथमान्तानां सर्वेषाम् इह प्राणपादे ऊचिरे इति वचनकर्मत्वम् । अतः आद्यादिति नामादीत्येतद्विशेषणम् । आद्यपुरुषजन्यत्वविशिष्टनामादि चेत्यर्थः । आद्यजन्यत्वेनोचिरे इत्यर्थस्तु न; नामादेरेवाऽऽद्यजन्यताय अधिकरणोक्तत्वात् । अन्यत्रापि तत्सद्भावेऽपि अत्र पादे सर्वत्र तद्विध्यभावात् ॥ २६६ ॥

१५. मिथश्श्रुतिविरोधप्रदर्शनेन स्वपक्षसिद्धिमभिमन्वानाः तर्कप्रधानाः श्रुतितात्पर्यप्रकटनेन शमिताः । तथाच तत्त्वालोक एको निस्समस्तान् समस्तानपि पक्षान् भनक्तीत्याह नित्यत्वमिति । व्योम वियत् नित्यमिति तार्किकाः । तथा वायुतेजोजलभूमीनां परमाणुषु नित्यत्वं तदिष्टम् । 'आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी' इति सर्वस्य भूतस्य कार्यतायाः अन्यादृशोपादानकत्वस्य च श्रौतत्वात्

वियदधिकरणे तावत् व्योम्नि नित्यत्वं, वातादिपरमाणुषु नित्यत्वं, पुरुषे ज्ञानरूपत्वाभावेन पाषाणवत् मूढत्वं, श्रोत्रादावाकाशत्वादिकं, मनसि विभुत्वं नित्यतत्त्वान्तरत्वं प्राकृतवस्तुव्यतिरेकेण नित्यतत्त्वान्तररूपत्वं, मुख्यामुख्यप्राणेष्वात्मादिभावं, स्वर्गिवृन्दे = देवतासमूहे स्वनियाम्यनियमने स्वातन्त्र्येण कर्तृत्वं तद्वत् जीवानामपि स्वकरणाधिष्ठानस्वातन्त्र्यं, निर्मुक्तयन्त्रक्रमेण निर्जराणामधिपेऽपि पितामहे स्वातन्त्र्येण नामरूपव्याकरणकर्तृत्वमपि वदतां वादिनामेतस्मिन् पादयुग्मे भङ्ग इत्यर्थः ॥ २६७ ॥

द्वितीयाध्यायस्य मृषावादिपक्षविरुद्धत्वनिरूपणम्—

(२६८) तर्कैरापातसत्यैरविहतिकथने व्याहतिः स्थापिता स्यात्
सम्यग्भिर्वस्तुवृत्त्या तदिति यदि, तदा स्वाभिमानोपरोधः ।
तेनाध्यायो विरोधप्रशमनकृदसौ बौद्धबन्धोर्विरुद्धः
सौत्री तर्काप्रतिष्ठा श्रुतिपथविमुखस्वैरवादेषु योज्या ॥ १६ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां
द्वितीयस्याध्यायस्य चतुर्थः पादः ॥
अध्यायश्च समाप्तः ॥

अविरोधाध्यायस्य मृषावादिपक्षविरुद्धत्वमेवेत्याह—तर्कैरित्यादिना । अयमत्र विकल्पः—किं व्यावहारिकसत्यैस्तर्कैरविरोधः कथ्यते, किं[वा?] पारमार्थिकसत्यैरिति । नाद्यः; अविरोधस्थापकानां

---

तद्भंगः । **पुरुषे** जीवे नित्यधर्मभूतज्ञानाभावः ज्ञानस्वरूपत्वाभावः कर्तृत्वपरात्मायत्तत्वतदंशत्वाभावश्च तत्तदिष्टः । श्रोत्रेन्द्रियमाकाशाख्यं भूतमेव किञ्चिदुपाध्यवच्छिन्नम्; त्वगादिकं तु भौतिकमिति तार्किकः । विभु मन इति मीमांसकः । अणु तदिति तार्किकः । अस्माकमप्यणुत्वमिष्टं यद्यपि, तथापि तद्वत् परमाणुत्वं नेष्टम् । तस्य नित्यत्वं नवमद्रव्यत्वञ्च तार्किकमीमांसकोभयाभिमतम् । **प्राणेषु** इन्द्रियेषु आत्मत्वं चार्वाकाभिमतम् । यद्यपि **श्रोत्राद**ावित्यादिपदस्याऽऽ**त्मादिभाव**मित्यत्रानुषंगो भवेत्, अथापि मुख्यप्राणतत्प्रभेदानामप्यात्मत्वं चार्वाकेष्टमिति ज्ञप्तये **प्राणे**ष्विति पदम् । **आत्मादी**ति **आदि**ना ज्ञ-कर्तृग्रहणम् । ज्योतिराद्यधिकरणकृत्यं दर्शयितुमाह **स्वे**ति । **स्वर्गिवृन्दे** देवव्यूहे देहेन्द्रियाद्यधिष्ठातृस्वामिमते **स्वपदानां** स्वकीयवस्तूनां स्वाभिमानिकदेहादीनां नियमने राजभृत्यन्यायेन **स्वैरितां** स्वातन्त्र्यमर्धास्तिकाभिमतम्, **वेधसि** विधातरि नामरूपोत्पादके हिरण्यगर्भे **उन्मुक्तयन्त्रक्रमम्** । यथा अचेतनं यन्त्रं चेतनापेक्षमपि प्रथमक्रियामात्रे चेतनोत्पादिते ततः स्वयमेव निरन्तरक्रियासंतानहेतुस्सत् पिष्ट-पुस्त-वस्त्रादिकमुत्पादयति-एवमयं नामरूपे व्याकरोतीति वादः पौराणिकादीष्टः । **नियमनस्वैरिता**मिति नियमनांशे परानपेक्षत्वं देवतानामुक्तम् । अत्र तु नामरूपव्याकरणरूपोत्पत्तावपीति भेदो द्रष्टव्यः । एषां भंग अत्र वियत्पादप्राणपादयोः सिद्ध इति ॥ २६७ ॥

१६. अविरोधाध्यायस्यास्य मृषावादिप्रतिकूलतामाह **तर्कै**रिति । उद्भाविते विरोधे **अविहतेः** अविरोधस्य कथनमत्र क्रियते । तच्च तर्कैः । ते तर्काः **आपातसत्याः**=व्यावहारिकसत्या एवेति चेत्, उपायासत्यत्वे फलस्यासिद्धिरेवेति **व्याहतिः** विरोध एव स्थापिता स्यात् । **वस्तुगत्या सम्यग्भिः** परमार्थसत्यैरेव तर्कैः

तर्काणां व्यावहारिकसत्यत्वे परमार्थतो व्याहतिः स्थापितैव स्यात् । नापरः; वस्तुवृत्त्या सम्यग्भिस्तर्कैर्यद्यविरोधं वदसि—तदा स्वाभिमानोपरोधः—चिन्मात्रव्यतिरिक्तार्थस्य पारमार्थ्योपपादने अपसिद्धान्तः । तदिदमाह—सम्यग्भिरिति । एवं दूषणमुक्त्वा फलितमाह—तेनेति । अविरोधाध्यायोऽयं बौद्धबन्धोः = मृषावादिनो हि विरुद्ध एव । कथं तर्हि, 'तर्काप्रतिष्ठानात्' इति सूत्रकारेण निरस्तैस्तर्कैर्भवतां परपक्षप्रतिक्षेप इत्याशङ्क्याह—सौत्रीति । इयं खलु तर्कजातं श्रुतिविरुद्धम् अविरुद्धञ्चेति । तेन तर्काप्रतिष्ठानवचनं, 'आर्षं धर्मोपदेशञ्च' इत्युक्तप्रकारेण वेदविरुद्धतर्कविषयतया योज्यम्; न पुनर्वेदेतिकर्तव्यतारूपतर्कविषयमिति कृतमनेन कृपणजननिरासप्रयासेन ॥ २६८ ॥

इति निखिलतार्किकचूडामणिना सर्वतन्त्रस्वतन्त्रेण
कुमारवेदान्ताचार्यापरनाम्ना श्रीमद्वेङ्कटनाथगुरुणा
विरचिते शारीरकाधिकरणचिन्तामणौ
द्वितीयस्याध्यायस्य चतुर्थः पादः ॥
अध्यायश्च समाप्तः ।

—o—o—

॥ तृतीयस्याध्यायस्य प्रथमः पादः ॥

(२६९) साध्या मुक्तिर्न चेत् स्यात्, प्रसजति विफला साधनाध्यायक्लृप्तिः
साध्या चेन्नश्वरी स्यात्, कथमिह पुनरावृत्तिशून्योऽपवर्गः ।
मैवं ब्रह्मानुभूतिः परमजनवता प्रागसिद्धैव साध्या
धीसङ्कोचप्रणाशस्त्वियमिति च भवत्युत्तराध्यायनीता ॥ १ ॥

एवं सिद्धविषयनिरूपणपरपूर्वद्विकचिन्ता कृता । अथ साध्यविषयनिरूपणपरोत्तरद्विकचिन्तायाम् उत्पत्तिक्रमेण चतुर्थाध्यायनिरूपणीयसाध्यांशात्पूर्वं साधनचिन्ता तृतीये क्रियत इति द्विकसङ्गतिः, अध्यायसङ्गतिश्च । एतत् सर्वं 'अतिक्रान्त' इत्यादिना सविस्तरं भाष्य एवोक्तमिति तत्रैव द्रष्टव्यम् । तृतीयाध्यायपादद्वन्द्वसंगतिरपि तत्रैव भाष्ये सुव्यक्तमुक्ता, 'उपासनारम्भाय्यर्हितोपायश्च प्राप्यवस्तुव्यतिरिक्तवैतृष्ण्यं प्राप्यतृष्णा चेति तत्सिद्ध्यर्थं जीवस्य लोकान्तरेषु सञ्चरतो जाग्रतः

---

तत् अविहतिकथनं यदि वोऽभिमतम्, तदा, **स्वाभिमानस्य** एकमेव सत्यमिति स्वसिद्धान्तस्योपरोधः । अपसिद्धान्त इति यावत् । **तेन** उभयथाऽपि **बौद्धबन्धोः** प्रच्छन्नबौद्धस्य अविरोधाध्यायोऽयं विरुद्धः । ननु सूत्रकृतैव **तर्काप्रतिष्ठानात्** इति तर्कसामान्यमप्रतिष्ठितमसत्यं स्वीकृतमिति कथं तद्विरुद्धः सत्यत्वपक्ष आद्रियते इति चेत्—एवं तर्हि फलस्याप्यसिद्धिरेवेति । असत्यत्वाविशेषे कथं स्वपक्षजयः । परतर्काणां व्यावहारिकसत्यत्वमपि नास्तीति चेत्—व्यावहारिकसत्यस्यापि परमार्थासत्यत्वस्य स्वेष्टत्वात् असाधकत्वमविशिष्टं स्यात् । अतो वेदशास्त्रविरोधितर्कमालाप्रतिष्ठानमेव सूत्रोक्तमिति मन्तव्यम् ॥ २६८ ॥

इति वात्स्यचक्रवर्तिवीरराघवाचार्यकृतिषु
अधिकरणसारावलिव्याख्यायां सारार्थरत्नप्रभायां
द्वितीयस्याध्यायस्य चतुर्थः पादः ॥

—o—o—

स्वपतः सुषुप्तस्य मूर्च्छितस्य दोषाः, परस्य च ब्रह्मणस्तद्रहितता कल्याणगुणाकरत्वञ्च प्रथमद्वितीययोः पादयोः प्रतिपाद्यते(न्ते?)' इति। अधिकरणसङ्गतिरुत्तरत्र भविष्यति। अत्र कश्चिच्चोदयति-साध्येति। मुक्तिः साध्या, न वा? न चेत्, साधनाध्यायक्लृप्तिर्विफला प्रसजति। साध्या चेत्, सा मुक्तिर्नश्वरी स्यात्। ततश्च कथं पुनरावृत्तिशून्योऽपवर्गः स्यादिति। तदेतत् प्रतिक्षिपति—मैवमिति। प्रतिक्षेप-प्रकारं दर्शयति—ब्रह्मेति। परभजनवता पुरुषेण प्रागसिद्धैव साध्या। तदनुभूतेः साध्यत्वादनित्यत्वं स्यादित्याशङ्क्य परमतप्रक्रिययैव अनित्यत्वं परिहरति—धीसङ्कोचेति। ज्ञानसङ्कोचप्रणाश एव ब्रह्मानुभूतिः। प्रध्वंसस्य च कृतकत्वेऽपि प्रणाशो नास्तीति परवादिनोऽपि वदन्ति। तेन ब्रह्मानु-

---

श्री.। १. सिद्धं ब्रह्म लक्षितं स्वरूपतः परीक्षितञ्च। अथोपायविषयत्वफलविषयत्वाकारतो निरूप्यते। तदिदं साध्यपरं द्विकम्। तत्रोपायरूपसाध्यपरत्वात् आद्यः साधनाध्यायः। अन्त्यः तत्फलभूतमुक्ति-परत्वात् फलाध्यायः। तत्र साध्यद्विकमिति, तत्रायं साधनाध्याय इति च व्यवहारो न घटते इति शंकते साध्येति। फलत्वाभिमता हि मुक्तिः। सा न साध्या; नित्यमुक्तत्वादात्मनः। एवञ्च मुक्तिर्न साध्या स्याच्चेत्, तत्साधनत्वं न कस्यापीति साधनाध्यायस्य क्लृप्तिः=विधानं व्यर्थम्। अथ मुक्तिः साध्या स्याच्चेत्, सा नश्वरी स्यात्। आदिमतो विनाशध्रौव्यात्॥ इष्टापत्तिरिति चेत्, इष्ट=नश्वरत्वपक्षे, 'न च पुनरावर्तते' इति अपवर्गस्य मुक्तेः पुनरावृत्तिशून्यत्वं श्रुतं कथमुपपद्यते? ननु 'न च पुनरावर्तते' इति आत्मनः किल पुनरावृत्तिशून्यत्वमुक्तम्; नापवर्गस्येति चेत्—उच्यते। 'न च पुनरावर्तते' इत्यस्य, 'इमं मानवमावर्तं नाऽऽवर्तन्ते' इति वाक्यानुरोधात् प्राकृतलोकप्राप्तिरहितो भवतीत्यर्थः। सा च प्राप्तिः पुनर्जन्म रूपा। अत एव ह्युक्तम्, 'मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते' इति। तत्र, 'आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन' इति लोकानां पुनरावृत्तिः=नाशपूर्वकोत्पत्तिरुक्ता। सा च नष्टव्यक्तिसजातीयव्यक्त्य न्तरोत्पत्तिः। आत्मनः पुनरावृत्तिश्च देहसंश्लेषविनाशे तत्संश्लेषसजातीयदेहान्तरसंश्लेषरूपजन्मैव। प्रकृते च पुरुषस्य प्रकृतिसंबन्धो यः तदुच्छेदरूपमुक्तेर्नाशे स्वीकारे पूर्वप्रकृतिसंबन्धसजातीयप्रकृतिसंबन्धः पुंस उक्तो भवति। एवञ्चापवर्गस्य पुनः प्रकृतिसंबन्धस्य च पुंसि सामानाधिकरण्यात् पुनरावृत्तिसहित एवा-पवर्गः, न तु तच्छून्यः। एवं पुनर्जातस्य प्रकृतिसंबन्धस्य पुनर्नाशे चापवर्गस्यापि पुनरुत्पत्त्या लोकानां पुनरावृत्तिवत् अपवर्गपुनरावृत्तिरपि स्यादेवेति॥ नित्यमुक्त आत्मेति पक्षस्यासदनिष्टत्वात् मुक्तिः साध्यैवेति स्वीकृत्योत्तरमाह मैवमिति। परिपूर्णब्रह्मानुभव एव मुक्तिः। स च ज्ञानविकासविशेषः परभजनवता परभक्तिमता पुंसा तेन भजनेनैव साध्यते। एवं साध्यत्वेऽपि न तन्नाशः; तस्य विकासस्य ज्ञान संकोचध्वंसरूपत्वात्। ध्वंसस्य च नाशायोगात्। सादिरनन्तः प्रध्वंस इति तल्लक्षणात्। अन्यथा नष्टस्य पुनरुन्मज्जनप्रसंगात्। अतः सादेर्नाशो ध्वंसातिरिक्तविषय एव। इयमनुभूतिस्तु ज्ञानसंकोच-ध्वंस एवेति उत्तरावध्यतीता ध्वंसरहितैवेति। ननु ध्वंसनित्यत्ववादिभिस्तस्य भावातिरिक्तत्वमपीष्यते; अत इयमनुभूतिः प्रणाशरूपेति व्याहतमिति चेन्न; भावान्तराभाववादेऽपि नाशस्य नाशो नास्ति हि॥ कथमेतत्। घटत्वावस्थानाशरूपकपालत्वावस्थाया अपि नाशदर्शनादिति चेत्, सत्यम्; अवस्था नश्यति।

भूतिः प्रणाशरूपत्वादुत्तरावधिरहितेत्यर्थः। अयमर्थः—असत्पक्षेऽपि भावान्तराभावाङ्गीकारात् भाव एवाभावोऽपि स्यात्। 'न च पुनरावर्तते' इति प्रमाणवचनान्नित्यत्वसिद्धिश्च। धियो विकासः स्वाभाविक एव वेदान्तसिद्धान्ते। उपाधिवशात् सङ्कोचो जातः। तस्मिन् सङ्कोचे निवृत्ते स्वाभाविको विकास एवावतिष्ठत इति हि. 'स चानन्त्याय कल्पते' इति श्रुत्यैव साक्षादुच्यत इति॥ २६९॥

(२७०) पादाभ्यामत्र पूर्वं जनयति भविनां ब्रह्मविद्याधिकारं
पश्चात् तेषामुभाभ्यां वदति बहुविधां तामशेषैस्सहाङ्गैः।
ऐश्वर्यादौ विरक्तिं निरवधिविभवे पूरुषे चाभिलाषं
विद्याभेदावलम्बं तदुपकरणमप्याह पादैः क्रमेण॥ २॥

अत्र तृतीयेऽध्याये पूर्वोत्तरपादद्वन्द्वयोरर्थविभागं चतुर्णामपि पादानामर्थभेदञ्च दर्शयति—पादाभ्यामिति। वैराग्यपादोभयलिङ्गपादाभ्यां भविनां जीवानां ब्रह्मविद्याधिकारं जनयति। पश्चात्

---

अथापि नाशो न नश्यति। उत्तरं जायमानानां कपालत्वचूर्णत्वरजस्त्वाणुत्वावस्थानां सर्वासामपि घटत्वावस्थानाशरूपत्वस्वीकारात् नाश उत्तरावधिरहित एव, नाशत्वानाक्रान्तावस्थारहित एव। तद्वदिह एकरूपधीविकासपरम्परा दीपज्वालावद् भवन्ती सर्वाऽपि धीसंकोचध्वंसरूपेति साऽनुभूतितिरेव संकोचध्वंसरूपमुक्तिरिति। इति चेति चकारः साध्यत्ववत् उत्तरावध्यतीतत्वमप्यस्तीति समुच्चये। यद्वा नाशत्वसमुच्चयश्चकारार्थः। विकासरूपभावत्ववत् नाशत्वमप्यस्तीति नित्यत्वमेष्टव्यम्। नाशोऽतिरिक्त इति पक्षेऽपि धीविकासो जातः केवलभावरूपोऽपि नित्यो भवितुमर्हति। लोकरूपप्रमाणात् नाशानाश इष्यते; विकासानाशोऽपि वेदरूपप्रमाणादेष्टव्यः। एतत्पक्षे मुक्तिरूपज्ञानविकासो न धारावाहिधीसंततिवत् अनेकात्मा, किंतु एक एव स्थायीति चकारेण ज्ञापितं भवति। तथाच मुक्तेः नित्यत्वेऽपि साध्यत्वात् साधनाध्यायत्वमस्य संगच्छत एवेति॥ २६९॥

२. अध्यायार्थो दर्शितः; अत्र पादचतुष्टये द्विकद्वयं विभज्य प्रथमद्विकं ब्रह्मविद्याधिकारोत्पादकम्, उत्तरद्विकं तदधिकारे सति कर्तव्यप्रतिपादकमित्याह पूर्वार्धेन। **पूर्वं जनयति, पश्चात् वदति** इत्यन्वयेऽपि पूर्वपादाभ्याम् उत्तरपादाभ्यामिति अर्थसिद्धम्। **तेषां** भविनाम्—तानुद्दिश्य बहुविधां सद्विद्यादहरविद्यादिप्रकारां **तां** ब्रह्मविद्याम् **अशेषैः** व्यापार-व्यापारोपरम-बाल्य-पाण्डित्यादिरूपैर्विधां गैस्सह वदति। सांगविद्यानिरूपणं द्विककृत्यम्। अथोक्तमेव विभज्य पादचतुष्कप्रत्येकार्थतया दर्शयति ऐश्वर्येति। प्राप्येतरवैतृष्ण्योत्पादनं प्रथमपादेन। तदयं वैराग्यपादः। तत्रेतरत् ऐश्वर्यं कैवल्यञ्च। लोकान्तरगतागते इह निरूप्येते, 'सर्वे च्यवनधर्माणः' इति वचनात् कैवल्यं प्राप्तस्याप्यागतिरुक्ता भवति। भक्तियोगमन्तरेणानादिपुण्यपापक्षयायोगात्, कृतस्य कर्मणोऽवश्यमनुभोक्तव्यत्वाच्च केवलस्य पुनर्भवनं ह्यवर्जनीयम्। द्वितीयपादे अखिलहेयप्रत्यनीकत्वकल्याणगुणाकरत्वरूपोभयलिङ्गं ब्रह्मेति भण्यते। तेन निरवधिविभवपूरुषरूपप्राप्यवस्तुनि तृष्णाऽभिवर्ध्यते। इदमुभयमेव अधिकारं जनयतीत्यनेन प्रागुक्तम्। अत्र विरक्तिमभिलाषञ्चाऽऽहेत्युच्यते। वैराग्य-अभिलाषोत्पत्त्युपयोग्यर्थजात-

उभाभ्यां पादाभ्यां तेषामेव जीवानामङ्गैस्सहितां तामेव ब्रह्मविद्यां प्रदर्शयतीत्यर्थः। चतुर्णामपि पादानामर्थभेदान् अनुक्रमेण दर्शयति—ऐश्वर्यादाविति। ऐश्वर्यादौ विरक्तिर्वैराग्यपादे, उभयलिङ्गपादे तु निरवधिविभवे परमपुरुषे निरतिशयाभिलाषोत्पत्तिः, गुणोपसंहारपादे तु विद्याभेदावलम्बः, विद्याङ्गपादे पुनर्विद्योपकरणसम्पत्तिरिति विभागः ॥ २७० ॥

(२७१) संसारोद्विग्नचेतास्तनुभृदधिकरोत्यत्र शारीरकांशे
वैराग्यार्थस्तु पादः किमिति पुनरसौ सूत्रकारैर्निबद्धः ।
सत्यं प्राप्यान्तराणां निरयगणतुलारोपणं मुक्त्युपाय-
प्रारम्भेऽभ्यर्हितं स्यात्; त्वरत इह खलु स्पष्टदृष्टस्वदोषः(बोधः) ॥ ३ ॥

अत्र कश्चिच्चूचुदत्-वेदान्तश्रवणवेलायां विरक्त एवाऽऽदितः प्रवर्तते। तेन प्रागेव वैराग्यस्य सिद्धत्वात् पुनस्तृतीयाद्यपादे वैराग्यसम्पादनं न कर्तव्यमिति। तदिदमाह—संसारेति। अस्मिन् शारीरकशास्त्रे संसारोद्विग्नचेता जीव एवाधिकरोति। अतः शास्त्रारम्भ एव वैराग्यं सिद्धम्। पुनरत्र वैराग्यपादः किमर्थमारभ्यत इति। अर्धाङ्गीकारेणोत्तरमाह—सत्यमिति। द्विविधं हि वैराग्यं शास्त्रश्रवणौपयिकं तावदेकम्, उपासनानुष्ठानौपयिकञ्चान्यत् वैराग्यम्। तदत्र निरूप्यत इति न पादारम्भनैष्फल्यम्। तदेतत् विशदयति—प्राप्येति। 'एते वै निरयास्तात स्थानस्य परमात्मनः' इति परमात्मस्थानापेक्षया स्वर्गादीनां निरयतुल्यतानुसन्धानमुपासनारम्भोपयुक्तम्; तदस्मिन्नेव पादे

---

माहेत्यत्रैव तात्पर्यम्। **विद्याभेदावलम्बम्**—नानाभूतासु विद्यासु स्वशक्त्यैकविद्यामात्रस्यानुष्ठेयत्वम्, **तदुपकरणं** वर्णाश्रमधर्मादि असाधारणं साधारणञ्चान्यदाहेति। तथाचाध्यायद्वयेन नित्यानित्यवस्तुविवेकः कृतः। इहामुत्र फलभोगविराग इह प्रथमपादेन। मुमुक्षुत्वञ्च द्वितीयेन पादेनेति ध्येयम् ॥ २७० ॥

३. एवं वैराग्योत्पादनार्थत्वे प्रथमपादवैयर्थ्यं शंकते संसारेति। **संसारात्** गतागतश्रमजादुद्विग्नं भीतं चेतो यस्य स **तनुभृत्** जीवः अत्र अथातो ब्रह्मजिज्ञासेत्यादौ **शारीरकांशे** शारीरकरूपे मीमांसाभागे अधिकरोति। तदिदम्, 'अधिगताल्पास्थिरफलकेवलकर्मज्ञानतया संजातमोक्षाभिलाषस्य अनन्तरस्थिरफलब्रह्मजिज्ञासा ह्यनन्तरभाविनी' इति भाष्ये व्यक्तम्। अतः शारीरकारम्भ एव वैराग्यस्य संपन्नतया वैराग्यार्थ एव भवन् पादः कुतः कृतः। व्यर्थ इति यावत्। अर्धांगीकारेण प्रतिवक्ति **सत्य**मिति। प्राप्यान्तराणि बहुविधानि-ऐहिकानि, आमुष्मिकाणि, कर्मकाण्डोक्तकर्मलभ्यानि, उपासनलभ्यानि, 'चतुर्विधा भजन्ते माम्' इति भगवद्भक्त्येकलभ्यानि अतिदैवतानि फलानि च, कैवल्यञ्चेति। ततः सर्वतो विरक्तिरुपनिषत्परिशीलनानन्तरमेव लभ्या। तथा तेषु अल्पत्वास्थिरत्वादिमात्रग्रहणापेक्षया सर्वदादुःखमिश्रत्व-देहात्मभ्रान्त्यादिमूलकत्व-स्वाभाविकानन्दविरुद्धत्वानां ज्ञापनं, एते वै निरयास्तात स्थानस्य परमात्मनः' इत्युक्तरीत्या नरकतुल्यत्वज्ञापनञ्चा**भ्यर्हितम्** उपयुक्ततमम्। 'अभ्यासवैराग्याभ्यां तन्निरोधः" इति इतरवैतृष्ण्य-प्राप्यविषयतृष्णयोर्योगेऽन्तरंगत्वात्। तमेव दृष्टविषयोपयोगं दर्शयति **त्वरत** इति। अत्र हि स्वस्य जागरस्वप्नसुषुप्तिमूर्छासु स्थिता दोषाः सूत्रैर्विविच्यन्ते। तेन स्पष्टदृष्टाः स्वदोषाः येन, स इह=परभजने त्वरते हीति। दोषपदस्थाने बोधपदपाठमपेक्ष्य प्रवृत्ता **चिन्तामणि-व्याख्या पदयोजनाया**मपि असरसतया भाविता। दोषा एवात्र संदर्भे सूत्रदर्शिताः; न जीवस्वरूप-

सिध्यतीति सफलोऽयं वैराग्यपादारम्भः। तदिदमाह—मुक्त्युपायप्रारम्भेऽस्यर्हितं स्यादिति। तदेव विशदयति—त्वरत इति। स्पष्टदृष्टस्वबोधः—'परमपुरुषः सर्वशेषी, अहं पुनः सूरिवन्नित्यमेव तदनुभवयोग्यः; अथापि कर्मवशात् संसरामि' इति स्पष्टदृष्टस्वज्ञानवान् पूर्वं व्याधत्वेनावस्थित-राजकुमारवत् स्वस्वरूपस्य सम्यगवलोकनेन पुनरसङ्कुचितब्रह्मानुभवाय त्वरत इत्यर्थः ॥ २७१ ॥

## ६९ ॥ तदन्तरप्रतिपत्त्यधिकरणम् ॥ ३-१-१ ॥

सूत्रम्—तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ प्राणगतेश्च ॥ अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ प्रथमेऽश्रवणादिति चेन्न, ता एव ह्युपपत्तेः ॥ अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ भाक्तं वाऽनात्मवित्त्वात्; तथा हि दर्शयति ॥ १-७ ॥

(२७२) देहाद्यं भोग्यनीत्या दिवि भुवि च गतौ तत्र तत्रैव लभ्यं
प्राणाद्यैर्भूतसूक्ष्मैरपि किमिह मुधा पूर्वदेहाद् गृहीतैः ।
जीवस्याणोर्गतिश्च स्वयमुपजनयेदीश्वरः प्राणनीत्या
मैवं स्वच्छन्दकृत्ये श्रुतिमितनियतौ गौरवोक्तेरयुक्तेः ॥ ४ ॥

पूर्वाधिकरणे, 'संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्' इत्यत्र मूर्तिप्रसङ्गः कृतः। अधुना पुनरेकां मूर्तिं परित्यज्य देशान्तरे मूर्त्यन्तरप्राप्तौ किं पूर्वमूर्तिसंगतभूतसूक्ष्मैः परिष्वक्तो याति, नेति विचार्यते। तदर्थविचारस्तु—किं देहान्तरं गच्छन् जीवो भूतसूक्ष्मैर्देहबीजैस्संपरिष्वक्तो रंहति, उतासंपरिष्वक्त इति। 'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति प्रश्न-प्रतिवचने किं संपरिष्वक्तस्य रंहणं गमयतः, नेति। किं श्रद्धादिशब्दैरवस्थाविशेषापन्नानि अबादि-द्रव्याण्युच्यन्ते, उत तत्परिष्वक्तो जीव इति। किं केवलेष्टापूर्तकारिणां पितृयाणेन निवर्तने, 'एष सोमो राजा' इति[श्रुत] सोमशब्दस्य सोमदेहजीवपरत्वम् [किं] 'तस्या आहुतेस्सोमो राजा संभवति'

---

याथात्म्यम्। तत् तृतीयपादेऽवगंस्यते। बोधे दृष्टविशेषणं च न युज्यते। लब्धेति हि तदा स्यात्। दृष्टस्य=स्थूलोऽहं मनुष्योऽहमित्येवं गृहीतस्य अहमिति स्वयंप्रकाशस्य च स्वस्य विषये शास्त्रमूलो बोधः स्पष्टो यस्य इति वा विवक्षणीयं स्यात्। स्वपदेनाऽऽत्मग्रहणेऽपि ऐश्वर्यदोषानुक्तिर्न भवति, स्वस्य औपाधिकाः क्षुद्रफलपावण्यापादिताः संसारे जागरादौ कैवल्ये च ये दोषाः, ते स्पष्टदृष्टा इत्येवार्थात्। दृष्टेत्यत्र दुष्टेति पाठोल्लेखोऽपि क्रियेत, बोधपदपाठमादृत्य। दोषपदघटितपाठ एव भूम्ना लक्ष्यते ॥ २७१ ॥

४. प्रथमाधिकरणार्थमाह देहेति। 'तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम्' इति प्रथमसूत्रम्। पूर्वाधिकरणे संज्ञामूर्तिप्रसक्तिरुक्ता। तच्छब्देन संज्ञामूर्त्युभयग्रहणसंभवेऽपि संज्ञाया आवश्यकत्वाभावात् मूर्तिर्गृह्यते। अन्या सा तदन्तरम्। मूर्तिं गृहीतां विसृज्य मूर्त्यन्तरग्रहणाय जीवः संपरिष्वक्तः प्राणेन्द्रियभूतसूक्ष्मविशिष्टः रंहति=गच्छति। न तु न रंहति, नापि असंपरिष्वक्तः। तत्राणुत्वस्य प्रागुक्तत्वात् रंहतीत्यपि सिद्धम्। संपरिष्वक्तत्वं विधेयम्। पूर्वपक्षस्तु-यत् भोग्यजात-मनुभवितुं गच्छति, तत्र सह नयति। कुतः? भोगस्थान एव तल्लाभसम्भवात्। तद्वत् भोगायतनं स्थूल-देहोऽपि तत्रैव दिवि भुवि च लप्स्यते। प्राणेन्द्रियाप्यायकाश्च तत्रैव लभ्याः सन्ति। तद्वत् भोगोपकरणानां प्राणस्येन्द्रियाणाञ्च तत्रैव लभ्यत्वात्, त्यज्यमानात् देहात् तेषां ग्रहणं कुतः। मुधा व्यर्थं गृहीतैरेभिः

इति सोमशब्दस्य सोमदेहजीवपरतामवगमयति, मेति। अत्र पूर्वपक्षमाह—देहाद्यमिति। पूर्वदेहान्निष्क्रान्तस्य पुरुषस्य देशान्तरप्राप्तौ तत्रतत्रैव देहेन्द्रियादिकं कर्मानुरूपमपूर्वं सिध्यत्येव, यथा तत्र भोग्यमुपलभ्यते। तस्मात् पूर्वदेहात् गृहीतैः प्राणाद्यैर्भूतसूक्ष्मैश्च सम्परिष्वक्त एव यातीति कल्पनागौरवं स्यात्। ननु जीवस्य गमनं भूतसम्बन्धमन्तरेण कथं घटत इत्याशङ्क्याह—जीवस्येति। परिमितमानत्वं हि गमने कारणम्। तेनाणोर्जीवस्य गमनमणुत्वादेव सङ्गच्छते। द्रव्यान्तरसंयुक्तस्येति कल्पने गौरवमेव दोषः। ईश्वर एव, 'ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति' इति प्राणनीत्या जीवस्यापि गतिं जनयतीति। उक्तं पक्षं प्रतिक्षिपति—मैवमिति। तदेव विवृणोति—स्वच्छन्देति। यत् यथेश्वरः करोतीति श्रुतिप्रमितम्, तत् तथैवेति प्रामाणिकैरभ्युपगन्तव्यम्; न पुनः ईश्वरकृत्ये श्रुतिसिद्धे गौरवादिदोष उद्भाव्यः। आनुमानिक्यां हि कल्पनायां गौरवदोषमुदाहरन्ति न्यायवादिनः। श्रुतिप्रमितनियतौ स्वच्छन्दकृत्ये गौरवाभिधानस्यायुक्तत्वादिति अमेघोऽयं हेतुर्निर्देशः॥ २७२॥

(२७३) नानाजातीयराशिं व्यपदिशति जनो भूयसोंशस्य नाम्ना
प्राचुर्यादेवमापः पुरुषवचस इत्युच्यते भूतवर्गः।
व्यष्टिं पञ्चीकृतैस्तैस्सृजति हि स विभुस्तारतम्यं पुनश्च
श्रद्धाशब्दस्त्विहाऽऽपः कथयति निगमे तत्समाख्यावदुक्तेः॥ ५॥

ननु पञ्चाग्निविद्यायां भूतसूक्ष्मैः परिष्वक्तो जीवो यातीति भवद्भिरुच्यते। तत्र कोऽयं

किं फलम्। अत एव तेषामाधारतया भूतसूक्ष्मनयनमपि व्यर्थम्। ननु मुख्येति पदं व्यर्थमिति चेत्, प्राणादिभिरेभिः किम्। तत्रतत्र तेषां स्थितेः। ततश्चोत्क्रमणकाले तद्ग्रहणप्रयासोऽपि व्यर्थः इति कथनात् अवैयर्थ्यात्। ननु तेषामभावे जीवगतिरेवोपपादिता न स्यादित्यत्राह जीवस्येति। किं जीवस्य विभुत्वात् गत्यसंभवात् प्राणभूतादिगतिमादायैव जीवस्य गन्तृत्वमुपपाद्यमित्याशयः, किं सोऽणुरपि न देहं विना गमनसमर्थः स्यादिति। नाद्यः, 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' इति तन्मात्रोत्क्रमणोक्त्या अणुत्वेन तदनपेक्षणात्। नान्त्यः; अचेतनप्राणादिकमिव चेतनमपि ईश्वरः स्वसंकल्पमात्रेण नयेत्, सुषुप्तौ सत्समीपनयनादिति। पूर्वपक्षं निरस्यति मैवमिति। प्रश्ननिरूपणाभ्यामित्येतदभिप्रेतमाह स्वच्छन्देति। सर्वस्य तत्र लाभसंभवेऽपि, परमात्मनस्तल्लम्भनसामर्थ्ये सत्यपि, एकदेहोपयुक्तान्येवोपकरणानि देहान्तरेऽप्युपकरणयति, एकदेहान्तर्गतभूतसूक्ष्माणां केषाञ्चित् तत्र स्थूलदेहबीजतामप्यापादयति परः प्राचीनवासनानुवृत्तये, मध्येमार्गं संभावितस्वल्पज्ञानकर्मेन्द्रियव्यापारप्रतिलम्भनाय चेति नियन्तव्यम्। अतो नयने गौरवमित्युक्तिः श्रुतिविरोधादयुक्ता। श्रुतानुरोधेन फलानि चिन्तनीयानि; न तु गौरवबुद्ध्या श्रुतत्यागः। स्वच्छन्दभगवत्कृत्यस्य नियतिः नियम. श्रुत्या मिता। अतो न कदापि प्राणभूतसूक्ष्मरहितो रंहतीत्यास्थेयम्॥

चि. टी. किं केवलेति। अवगमयति, नेति इत्यन्तमेकं वाक्यम्। मध्येऽपि किमिति पाठः क्वाचित्कोऽपपाठः। प्रथमवाक्ये एष इति जीववाचिपदसामानाधिकरण्यात् तत्रत्यसोमराजपदस्य जीवपरत्वसिद्धौ द्वितीयवाक्यघटकसोमराजशब्दस्यापि जीवपरत्वं तदैकार्थ्यायेति भाष्यार्थ इह भाव्यः॥ २७२॥

५. प्रश्ननिरूपणाभ्यामित्यस्यायमर्थः—'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति प्रश्नः। तेनापां पञ्चाऽऽहुतयो भवन्ति। पञ्चम्यामाहुतौ देहपर्यायपुरुषशब्दवाच्यता तासां भवति।

भूतपञ्चकवाचकश्शब्दः? श्रद्धाशब्द एव जलवाचक उपलक्षणन्यायेन भूतपञ्चकं वदतीति चेत्; श्रद्धाशब्दस्यैव कथं जलवाचकत्वमित्याशङ्क्योभयीमपि शङ्कां परिहरत्यनुक्रमेण—नानाजातीयेत्यादिना। अयमर्थः-लोकेऽपि जनो नानाद्रव्यसङ्घातरूपे वस्तुनि बहुद्रव्यनाम्नैव व्यवहरतीति दृष्टमेव, घृतप्रचुरमौषधं घृतमेवेति।[अतः?] श्रद्धाशब्दो जलवाचकत्वाज्जलसंसृष्टानि भूतान्तराण्यपि वदतीति। नन्वन्यभूतवाचकः शब्दः कथमन्यस्यापि भूतस्य वाचक इत्याशङ्क्य देहे जलस्य भूयस्त्वात् जलवाचकश्शब्दो भूतान्तराण्यपि वदतीति युक्तमेवेत्याह—प्राचुर्यादिति। श्रद्धाशब्दोक्तन्यायोऽयम्, 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इत्यप्छब्देऽपि समान इत्याह—एवमिति। तर्हि एकभूतेन सृष्टिः किं न स्यादित्याशङ्क्याह—व्यष्टिमिति। पञ्चीकृतैरेव हि भूतैर्देहादिषु सर्वत्रापि सृष्टिर्दृश्यते। तत्र तारतम्यमपि दृश्यते। वातपित्तश्लेष्मादिवैषम्यं तत्तद्भूतवैषम्यप्राचुर्यादेव हि देहेषु जायते। तदिदमाह—तारतम्यमिति। श्रद्धाशब्दः कथं सलिलवाचीति द्वितीयं चोद्यमवशिष्यते

देहरूपेण परिणमन्तीति यावत्। इदं किं त्वं वेत्थ इति श्वेतकेतुं विप्रं प्रति प्रवाहणस्य राज्ञः प्रश्नः पञ्चाग्निविद्यायाम्। अत्र के पञ्चाग्नयः, के होतार इत्यादिकमर्थात् पृष्टमिति **निरूपणात्**=विस्तृतप्रतिवचनादवगम्यते। तत्र द्युलोकं प्रथममग्निं प्रस्तुत्य, 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति' इत्युक्तम्। देवशब्दस्य देवप्रेर्येषु इन्द्रियेषु प्रयोगः प्रसिद्ध उपनिषत्सु। मुख्यतया मुख्यप्राणभेदानां ग्रहणमिह वक्ष्यते। आत्मगुणभूतश्रद्धाया होम्यत्वायोगात्, प्रश्न इव निरूपणावसानेऽपि, 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति अपां होम्यतायाः स्पष्टमवगमात्, श्रद्धाशब्दस्याप्सु प्रयोगस्यान्यत्र दृष्टेश्चापामेव होम्यत्वं निश्चेयम्। एवञ्च भूतप्राणेन्द्रियसंपरिष्वक्तत्वं प्रश्ननिरूपणोभयावगम्यमासीत्। तत्राप्छब्देन भूतपञ्चकग्रहणं देवशब्देन प्राणग्रहणञ्च समर्थयितुमुपरि सूत्रद्वयम्, 'त्र्यात्मकत्वात्तु भूयस्त्वात्', 'प्राणगतेश्च' इति। तत्र प्रथमस्यार्थमाह नानेति। सूत्रे त्र्यात्मकत्वादित्यस्य पञ्चात्मकत्वादित्यर्थः। प्रसिद्धार्थस्यैव हेतुतया निर्देशात्। देहानां पाञ्चभौतिकत्वस्य प्रसिद्धत्वात्। इमानि देहोपादानभूतानि पञ्च भूतानि प्रत्येकं पञ्चीकृतान्येव। अपञ्चीकृतस्य व्यवहाराभावात्। ततः प्रागेव सर्वेषां भूतानां पञ्चीकृतत्वात् तादृशभूतसूक्ष्मपञ्चकपरोऽप्छब्द इति प्रथमसूत्रपदार्थः। तर्हि अप्छब्देन सर्वव्यवहारः कथमित्यत्रोक्तं **भूयस्त्वादिति**। पञ्चसु अपां भूयस्त्वं देहे लोहिताद्यंशभूयस्त्वादवगन्तव्यमिति भाष्ये स्पष्टम्। भूयोंशमादायैव लोकव्यवहार इतीदमुपपाद्यतेऽत्र पूर्वार्धेन। **नानाजातीयशालिमिति**। क्षीरघृततैलान्नानां जलगुडक्षीरादिमिश्रत्वेऽपि क्षीरादिपदैरेव व्यवहारः, न तु जलादिपदैः। तद्वत् प्रकृतेऽपीत्यर्थः। अपञ्चीकृतपञ्चभूतग्रहणं नात्राभिमतमित्याह **व्यष्टिमिति**। तेन **तारतम्यं पुनश्च** भवति। अपञ्चीकृतानां भूतानां पञ्चीकरणकाले एकैकस्य भूतस्यार्धम्, अन्येषां भूतानां चतुर्थांशाश्च मेल्यन्त इति यथा आधिक्यन्यूनभावरूपं तारतम्यम्, तथा देहोपादानभूतेषु पञ्चीकृतभूतेष्वपि, अर्धांशपादांशनियमाभावेऽपि तत्तदर्हतया भूतांशमेलनात् तारतम्यं पुनरपीत्यर्थः। पाञ्चभौतिकत्वावगमः कथमिति चेत्, वातपित्तश्लेष्ममांसमुखविवराद्यवयवदर्शनात्। ननु प्रथमपर्याये श्रद्धाशब्दस्यैव श्रवणात् उपक्रमानुरोधेन 'आपः पुरुषवचसः' इत्यत्रापि श्रद्धैव ग्राह्येत्यत्राह **श्रद्धेति**। आत्मगुणस्य देहात्मना परिणामायोगात् होम्यत्वायोगाच्चोपसंहारा-

तत्रोत्तरम्—श्रद्धाशब्दस्त्विति। तत्र हेतुमाह—निगम इति। 'श्रद्धा वा आपः' इति निगमे श्रद्धासमाख्यावत्त्वेनापामुक्तेः ॥ २७३ ॥

(२७४) द्यौः पर्जन्योऽथ पृथ्वी तदनु च पुरुषो योषिदित्येवमेतान्
पञ्चाग्नीन् कल्पयित्वा परिकरसहितांस्तेषु पञ्चाग्निविद्या।
श्रद्धाख्यं भूतसूक्ष्मं क्रमपरिणतितस्सोमवर्षान्नरेतो-
रूपं हव्यं सजीवं तनुधरमकृतो जुहुतीति ब्रवीति ॥ ६ ॥

इति तदन्तरप्रतिपत्त्यधिकरणम् ॥ ६९ ॥

अत्र कानि पञ्चाग्नित्वेन परिकल्प्यन्ते ; कानि वा होतव्यानि ; के च ते होतार इत्याशङ्क्य सर्वमेतद्विविच्य दर्शयति—द्यौरिति। द्यौः पर्जन्यः पृथिवी पुरुषो योषिदिति पञ्चाग्नयः। परिकरसहितान् इत्यग्निकल्पनोपकरणसाहित्यमुच्यते। श्रद्धासोमवर्षान्नरेतांसि होतव्यानि। श्रद्धाख्यं

---

नुसारेणोपक्रमेऽर्थो ग्राह्य इति भावः ॥ निगमे='अपः प्रणयति ; श्रद्धा वा आपः' इति वेदे तत्समाख्यावत् अब्वाचकपदवत् तत्प्रयोगात्। तत्समाख्यावदुक्तेरित्यस्य श्रद्धेति समाख्यावत्त्वेनोक्तेरित्यर्थश्चिन्तामणौ। श्रद्धाशब्दार्थे शेषं परिष्कारादौ द्रष्टव्यम् ॥ २७३ ॥

६. पञ्चाग्निविद्यायां के ते पञ्चाग्नयः, अग्निषु कथमपां होम्यत्वमित्यत्र तद् विशदयति। द्यौरिति। पुण्यकर्मा फलानुभवाय दिवं गच्छति। तत् अग्नावाहुतीर्हुत्वाऽनुष्ठितपुण्यः द्युलोकेऽग्नौ होम्यत्वेन वर्ण्यते। पुण्यानुभवानन्तरं प्रतिनिवर्तमानः पर्जन्यपृथिवीपुरुषयोषित्सु क्रमेण प्रविश्य पुनर्जन्म लभते। इममर्थं पञ्चस्वग्निषु होम्यत्वकल्पनया श्रुतिर्ब्रवीति। अतो जीवस्य होम्यत्वं सिद्धम्। जीवापेक्षया जीवाधारस्य भूतस्य स्थूलत्वात् तदादाय, गौः मनुष्यः देव इत्यादिव्यवहारवत्, 'आहुतावापः', 'प्राणस्तेजसि', 'श्रद्धां जुह्वति' इति भूतग्रहणेन व्यवहारः। अनग्नीनां द्युप्रभृतीनामग्नित्वेन कल्पना ; अग्नेः समिद्धूमार्चिरङ्गारविस्फुलिङ्गरूपपरिकरसद्भावात् द्युप्रभृतिसंबन्धिषु परिकरेषु तत्परिकरत्वकल्पना। तथाच अदोलोकपरिकरेषु आदित्य-रश्मि-अहश्चन्द्रनक्षत्रेषु, पर्जन्यपरिकरेषु वाय्वभ्रविद्युदशनिह्रादुनिषु, पृथिवीपरिकरेषु संवत्सराकाशरात्रिदिगवान्तरदिक्षु, पुरुषपरिकरेषु वाक्प्राणजिह्वाचक्षुश्श्रोत्रेषु, योषापरिकरेषु च उपस्थ-उपमन्त्रण-योनि-अन्तःकरण-अभिनन्देषु यथाक्रममग्निपरिकरसमिद्धूमार्चिरङ्गारविस्फुलिङ्गत्वभावनाः। होम्यद्रव्याणि च श्रुतानि श्रद्धासोमवर्षान्नरेतांसि। तत्र प्रश्ने, 'यथा पञ्चम्यामाहुतावापः' इति, प्रतिवचने च, 'इति तु पञ्चम्यामाहुतावापः' इति श्रवणात् अपामेव सर्वत्र होम्यत्वप्रतीत्या ता एव श्रद्धादिशब्देन व्यवह्रियन्ते इति ज्ञायते। आपश्च भूतसूक्ष्माणीति प्रागेवोक्तम्। तासां श्रद्धाशब्देन विवक्षा भाष्यार्थदर्पणदर्शितरीत्या, 'एह्येहीति तमाहुतयः सुवर्चसः सूर्यस्य रश्मिभिर्यजमानं वहन्ति' इति श्रद्धापूर्वकयजमानहुतसोमादिद्रव्यरसाप्यायितत्वस्यापि भूतसूक्ष्मेषु ज्ञापनायेति भाव्यम्। तत्र द्युलोके चन्द्रवद्देवभोग्यदेहग्रहणात् सोमराजभावः। पुण्यफलभोगावसाने पतने प्राप्ते तस्य सोमराजदेहस्य पर्जन्ये लयः। तद्भूतसूक्ष्माणां वर्षजलप्रविष्टतया वर्षशब्देन व्यवहारः। एवं पृथिव्यां हुतस्य

भूतसूक्ष्मं क्रमपरिणामेन सोमवर्षान्नरेतोरूपं भवतीत्यन्वयः। सजीवमिति। जीवसहितं भूतसूक्ष्ममित्यर्थः। भूतसूक्ष्मविशिष्टो जीवो होतव्य इति भावार्थः। जीवस्यैव प्राधान्यात्। तनुधरमरुतः= पितृ(?)देहधारकमरुतो जुह्वतीत्यर्थः॥ २७४॥ इति तदन्तरप्रतिपत्त्यधिकरणम्॥ ६९॥

—o—o—

७०॥ अथ कृतात्ययाधिकरणम्॥३ १-२॥ (सू. ४ ११)

सूत्रम्- कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवञ्च॥ चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः॥ आनर्थक्यमिति चेन्न तदपेक्षत्वात्॥ सुकृतदुष्कृते एवेति तु बादरिः॥८-११॥

**(२७५) इष्टापूर्तादिरूपं तनुभृदिह शुभं कर्म यत्किञ्च कुर्यात्**
**भुक्त्वा कृत्स्नं तदन्ते पुनरवनिमियादित्यसत् दृष्टबाधात्।**
**कारस्न्येनेत्यश्रुतत्वात् सुकृतफलतया जातिभोगाद्यधीनैः**
**तस्मात् प्रारब्धशेषैस्तदितरसहितैरापतेत् स्वर्गवान्यः॥ ७॥**

अत्र सङ्गतिर्भाष्ये, "केवलेष्टापूर्तदत्तकारिणां धूमादिना पितृयाणेन पथा गमनं कर्मफलावसाने पुनरावर्तनञ्चाऽऽम्नातम्, 'यावत्सम्पातमुषित्वा, अथैतमेवाध्वानं पुनर्निवर्तन्ते' इति। तत्र प्रत्यवरोहन् जीवः किमनुशयवान् प्रत्यवरोहति, उत नेति संशय्यते" इति। तदर्थविचारस्तु किं,

वर्षस्यान्नभावः। तथा अन्ने प्रविष्टं भूतसूक्ष्मं पुरुषे अन्नमुखेन प्रविश्य रेतसि प्रविष्टं रेत इत्युच्यते। ततो योषायां प्रवेशः। अयं प्रवेश एव पञ्चमो होमः। ततो गर्भोत्पत्तिः। तदयं श्लोकार्थः—पञ्चाग्निविद्यानामको वेदभागः द्युप्रभृतीन् स्वस्वपरिकरसहितान् पञ्चपरिकरसहिताग्नित्वेन कल्पयित्वा, 'तनुधरमरुतः शरीरधारकाः भूतसूक्ष्मैः सहाऽऽगच्छन्तः समस्ताः प्राणवायवः प्रथमं श्रद्धाख्यं भूतसूक्ष्मपञ्चकं दिवि चन्द्ररूपेण परिणतं पर्जन्ये वर्षरूपेण परिणतं पृथिव्याम् अन्नरूपेण परिणतं पुरुषे रेतोरूपेण परिणतं योषायाञ्च जुह्वति। अत एव सर्वस्य हव्यता। सजीवता च तस्य प्रागेवोपपादिता। तत एव पुरुषवचस्त्वम्। पर्जन्यं प्राप्तस्य पृथ्वीप्राप्तौ नातिविलम्ब इति अथेत्यनेन दर्शितम्। पृथ्वीं प्राप्तस्यान्नीभूय रेतस्सिचि संश्लेषोऽत्यन्तविलम्बेनापि स्यादिति तदनुचेत्यनेन सूच्यते। 'तं देवाः श्रद्धां जुह्वति इति देवशब्दः देवपर्यायमुख्यप्राणेन्द्रियपरो भवेत्। तथाऽपि वायोरेव प्रक्षेपसामर्थ्यात् होतृत्वेन मरुद्ग्रहणं कृतम्। पञ्चाग्निविद्यां कल्पयित्वा इति ब्रवीतीत्यन्वयः। श्रद्धाख्यमित्यादि द्वितीयार्धम्। चिन्तामणौ रेतोरूपं भवतीत्यन्वय इति कथनम्, रेतोरूपमित्यस्य परिणतितो रेतोभविष्यदित्यर्थज्ञापनाय। तनु इत्यस्य पितृदेहेत्यर्थवर्णनं रेतोभिप्रायेण लेखकप्रमादापतितम्। देवाः श्रद्धां जुह्वतीति वाक्ये पितृदेहाप्रसक्तेः॥ २७४॥

७. अयं पादः कृत्स्नः पञ्चाग्निविद्याविचाररूप एव। तत्र द्युलोके गत्वा स्थितिरुक्ता। आगतिरनन्तराधिकरणे। स्वर्गं गतस्य पुनरावृत्तिसमये भुक्तशिष्टं कर्म किमप्यस्ति, उत सर्वमनुभूतवत एव 'प्रतिनिवृत्तिरिति विशये, 'यावत्संपातमुषित्वा' इति स्वर्गलोकगमनाख्यसंपतनहेतुकर्मणः कृत्स्नस्यानुभवप्रतीतेः, 'प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम्' इति सर्वकर्मावसान एव निवृत्तिवचनात् कर्मा

'यावत्सम्पातमुषित्वा अथैतमेवाध्वानं पुनर्निवर्तन्ते' इति आम्नातो निवर्तमानः सानुशयो निवर्तते, उत निरनुशय इति। किं, 'यावत्सम्पातम्' इति वाक्यं सम्पातशब्दस्य फलदानप्रवृत्तकर्मपरत्वाभावेन सर्वकर्मपरत्वात् निरनुशयस्य निवर्तनमवगमयति, नेति। किमत्र सम्पातशब्दः कर्ममात्रपरः उत फलप्रदानप्रवृत्तकर्मपर इति। किं, 'तद्य इह रमणीयचरणा अभ्याशो ह यत् ते रमणीयां योनिमापद्येरन्' इति वाक्यं सम्पातशब्दस्य फलप्रदानप्रवृत्तकर्मपरतामवगमयति, नेति। किं, 'रमणीयचरणाः' इति चरणशब्द आचारपरः, उत कर्मपर इति। अत्र पूर्वपक्षी मन्यते—इष्टापूर्तादीति। श्रौतस्मार्तं कर्म यद्यदिह करोति, तत् कृत्स्नमपि स्वर्गादौ स्थलान्तरे भुक्त्वा तदन्ते पुनरिहाऽऽयाति। अतो निरनुशय एवायाति। अनुशयो नाम—फलोदयपर्यन्तमात्मन्यनुशेत इति कर्मवर्ग उच्यते। तेन सर्वं कर्म भुक्त्वा स्वयमेवायातीति पूर्वपक्षिणोऽभिप्रायः। तत् प्रतिक्षिपति—इत्यसदिति। अत्र हेतुमाह—दृष्टबाधादिति। सर्वेषामपि कर्मणां परत्रैवोपभोगादनन्तरमागमने कर्मानुरूपं केचिच्चण्डालयोनिमापद्यन्ते केचिद्ब्राह्मणयोनिमिति दृष्टं वैषम्यं बाध्येत। किञ्च, 'प्राप्यान्तं कर्मणस्तस्य' इत्यत्र कार्त्स्न्येन कर्मणोऽन्तं प्राप्येति न श्रूयते। तेनोपभुज्यमानस्य कर्मणोऽन्तं प्राप्य कर्मान्तरेण सहाऽऽगच्छतीति कार्यानुरूपं स्पष्टमेतत्। युक्त्यन्तरमप्याह—सुकृतेति। 'रमणीयचरणा रमणीयां योनिमापद्येरन् कपूयचरणाः कपूयां योनिमापद्येरन्' इति सुकृतदुष्कृतफलत्वेन जातिभेदाद्यध्ययनात्। उक्तमर्थं निगमयति—तस्मादिति। प्रारब्धशेषैस्तदितरसहितैरिति। अयमर्थः—कर्म-

---

र्जनार्थमेव च प्रत्यावृत्ते. पुरुषे न किञ्चित् कर्म शिष्टमस्तीति पूर्वपक्षः। सिद्धान्तस्तु **कृतस्य** कर्मणः **अत्यये** फलभोगावसाने अनुशयवानेव=अवशिष्टकर्मसहित एव प्रत्यावर्तत इति। तदाह **इष्टेति**। 'अथ य इह ग्रामे इष्टापूर्ते दत्तमित्युपासते, ते धूममभिसंभवन्ति', 'यत्किञ्चेह करोति' इति वचनात् **इह** लोके **तनुभृत्** तदुचिताधिकारो जीवः **इष्टं** यागादि, **पूर्तं** तटाकनिर्माणादि, **दत्तं** दानमित्येवंरूपं पुण्यं कर्म यत् किमपि करोति, तत् कृत्स्नं तत्र भुक्त्वा **अन्ते** भोगावसाने कर्मार्जनायैव पुनः भूमिं प्रत्यागच्छेदिति पक्षो न युक्तः। **दृष्टबाधात्**। कर्मणः शिष्टत्वाभावे जन्मैव न स्यात्। ईश्वरकरुणाकृतं जन्मेति चेत्, न दुःस्येत्। एकरूप एव च सर्वः स्यात्। दृश्यमानसुखदुःखादिविचित्रोत्तमनीचनानाजन्मता न भवितुमर्हति। किञ्च कार्त्स्न्येनानुभूय प्रत्यावर्तत इत्यस्याश्रुतत्वाच्च तदन्तेऽवरोहेदिति न; यावत्संपातमित्यस्य प्रकृतकर्मफलानुभवावसानपर्यन्तमित्येवार्थः। ननु, 'यत्किञ्च करोति तस्य कर्मणः' इत्यत्र. कार्त्स्न्यमेवोक्तम्, 'ईशावास्यमिदं सर्वं यत् किञ्च जगत्यां जगत्' इत्यत्रेवेति चेन्न, तत्रेव.न सर्वपदाभावात्। अथ, 'य कश्च शब्दो वागेव सा' इत्यादौ सर्वपदाभावेऽपि यत्किञ्चपदमात्रेण तत्प्रतीतिरस्ति। **यत्किञ्चित्पदा**पेक्षया **यत्किञ्च**पदस्येदमेव वैलक्षण्यमिति चेन्न, असति बाधे तथा ग्रहणेऽप्यत्र तावद्विवक्षणायोगात्। न ह्यनादिकालसंचितं सर्वं कर्मानुभूय पश्चादेव निवर्तनमिति सुवचम्; स्वर्गेतरलोकानुभाव्यानां तत्र फलकल्पनायोगात्। स्वर्गार्थकर्मस्वपि प्रतिबन्धवशात् विलम्बितफलानामेकदैवानुभवस्य दुर्वचत्वात् तेषामेव शिष्टत्वावश्यम्भावे लोकान्तरानुभाव्यकर्मविषये कः संदेहः। यत्किञ्चेति वचस्तु इष्टपूर्तादि वैचित्र्यपरम्। तात्पर्यं तु-कदाचित् युगपदेव बहुकर्मानुभवप्रसक्तावपि अवश्यं तावतोऽप्यन्तो भवत्येव, पुनरावर्तनमवर्जनीयमित्यंश एव। युक्त्यन्तरमाह **सुकृतेति**। 'तद्य इह रमणीयचरणाः', 'य इह कपूयचरणाः', 'प्रेत्य कर्म फलमनुभूय ततः

विपाकशास्त्रेष्वेकस्यैव कर्मणः स्वर्गादिफलं तदन्ते पुनरैहिकफलमपि भोक्तव्यत्वेनाभिधीयते। तेन प्रारब्धफलमपि कर्म भुक्त्वा तदवशेषेणाभुक्तफलेन कर्मान्तरेण च युक्तः पुनरावर्तत इति सर्वप्रमाणाविरोधेन नेतव्यमिति। स्वर्गपान्थ इति, 'गतागतं कामकामा लभन्ते' इति प्रमाणमुपदर्शयति॥

(२७६) धूमं रात्रिश्च पक्षं तिमिरकलुषितं दक्षिणावृत्तिमासान्
पश्चाल्लोकं पितॄणां गगनमपि मृतश्चन्द्रमभ्येति कर्मी।
प्रत्यावृत्तौ तु चन्द्रात् गगनसततगौ धूममभ्रञ्च मेघं
व्रीह्यादीन् याति रेतस्सिचमथ जननीं यातनाचक्रवर्ती॥ ८॥

अत्र, 'यथेतमनेवञ्च' इति सूत्रखण्डे गमनागमनयोर्वैषम्यस्याभिधानात् तदेव वैषम्यं दर्शयति—धूममिति। धूमं रात्रिं तिमिरकलुषितं पक्षं दक्षिणावृत्तिमासान् पश्चात्पितृलोकं गगनं चन्द्रमपि मृतः कर्मी प्राप्नोति। प्रत्यावृत्तौ तु चन्द्राद्गगनं, गगनाद्वायुं, ततो धूमं, तस्मादभ्रं, अभ्रान्मेघम्, अत्राभ्रमेघशब्दौ च अर्थभेदादपुनरुक्तौ, अपो बिभर्तीत्यभ्रशब्देन कथ्यते मेघ एव। 'मिह सेचने' इति सेचनावस्थाविशिष्टवेषेण स एव मेघ इत्युच्यते। व्रीह्यादीन्=पितृभक्षणीयव्रीह्यादीनित्यर्थः। रेतस्सिगिति जनक उच्यते। अथ जननीं यातीत्यन्वयः। यातनाचक्रवर्तीति। यातनाचक्रे वर्तते इत्यर्थः। अथवा संसारवर्त्मनि सर्वत्र वर्तत इति चक्रवर्ती॥ २७६॥

---

शेषेण विशिष्टदेशजातिकुलरूपायुश्श्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते' इति नानाजातिवृत्तादीनां कथनादनुशयवत्त्वं स्पष्टम्। तस्मात् **स्वर्गपान्थः** स्वर्गमार्गे गतागतकृत् किञ्चित्कर्मानुभवाय स्वर्गमस्थिरं गतः शिष्टबह्वनुभवाय स्वस्थानं भूलोकं प्रति, संचितं प्रारब्धं चेति द्विविधे कर्मणि प्रारब्धस्यापि बहुलोकबहुजन्मानुभवनाश्यत्वसंभवेन स्वर्गानुभवमात्रेण नाशायोगात् प्रारब्धकर्मशेषैर्बहुभिः **तदितरसहितैः** संचितकर्मसमेतैः सर्वथाऽननुभूतैः पुनरापतेत्॥ २७५॥

८. गतौ आगतौ च प्राप्यमार्गवैलक्षण्यं, 'यथेतमनेवञ्च' इति सूत्रभागेनोक्तम्। तत् विशदयति **धूम**मिति। **कर्मी** इहानुष्ठितकर्मा **मृतः** मरणानन्तरम् प्रथमतो धूमं ततो रात्रिं ततः **तिमिरकलुषितं पक्षं** कृष्णपक्षम्, **दक्षिणावृत्तिमासान्** सूर्यस्य दक्षिणादिगावर्तनसंबन्धिमासान् दक्षिणायनम्। ततः पितृलोकं ततः आकाशं ततश्चन्द्रशब्दवाच्यं स्वर्गलोकमभ्येति, फलानुभवानन्तरं प्रत्यागमने तु चन्द्रात् यथागतमाकाशमायाति। ततस्तु मार्गो भिन्नः, यस्मात् गगनात् **सततगं** सदागतिं वायुं प्राप्य धूमाभ्रमेघान् प्राप्य वर्षभूतः पृथिवीं प्राप्य व्रीहितिलौषधिवनस्पत्यादिस्थावरसंगतः तत्तत्फलेन धान्यादिना मिलित्वा भोक्तारं पुरुषं प्राप्य तद्रेतसि श्लिष्टः तेन रेतस्सेको यत्र कृतः तत्र योषायां विशन् तां जननीं कुर्वन् जायते। अभ्रं तत्, यत् अपो बिभर्ति, न तु सिञ्चति। **मेघः**=मिह सेचने। वर्षावस्थः। **यातनाचक्रवर्ती**। न केवलमेतावत्। स स्वर्गलोके फलानुभवात् पश्चाद्वा पूर्वं वा नरकयातनाचक्रे निविश्य भ्रमणमपि करोति। नरकयातनानुभवप्रकारोऽनन्तराधिकरणे बहुभिः सूत्रैरुक्तः। अथवा योऽयं स्वर्गेऽनुभवः, यश्च भूमौ प्रवेशोऽनुभवायाऽऽचरणाय च, सर्वमिदं विवेचने क्रियमाणे यातनाचक्रमेवेति भावेन यातनाचक्रवर्तीत्युक्तम्। 'तच्चक्रवदुभयोर्लोकयोः सुख एव वर्तते' इति वाक्यस्मारणाय **चक्रवर्ती** इति पदप्रयोगेऽपि, "तस्माज्जुगुप्सेत" इति पञ्चाग्निविद्यावाक्यमनुसृत्य वैराग्यजननाय सुखाभासानां यातनात्वेन कीर्तनम्॥ २७६॥

(२७७) आचारांशस्य साध्यं चरणवचनतो जातिभोगादिकं स्यात्
कर्माचारौ विभक्तौ श्रुतिषु इति न सत्; गत्यभावात् तथोक्तेः।
मुख्यं वृत्त्या हि कर्मण्यपि चरणवचो नैकदेशे निरोध्यं
जात्यादिः कर्मभेदप्रभव इति मिते(ऽ?)चिन्त्यमाचारसाध्यम् ॥ ९ ॥

अत्र पूर्वपक्षवादी मन्यते—पूर्वकृतकर्मशेषेणावरुह्य जात्यादिकं प्राप्नोतीति भवतोक्तम्; तन्नोपपद्यते; कपूयां योनिमित्यादिना वाक्येन चरणस्यैवोपादानात् तस्य च केवलाचारमात्रत्वादिति। तदिदमाह—आचारेति। आगतस्य जातिभोगादिकं केवलाचारमात्रसाध्यं स्यात् चरणवचनात्। ननु आचार एव कर्म, कर्मैवाचार इत्याशङ्क्य विभागमाह—कर्मेति।; श्रूयते हि—'यान्यनवद्यानि कर्माणि', 'यान्यस्माकं सुचरितानि' इति। तदिदं प्रतिक्षिपति—न सदिति। तत्र हेतुमाह—गत्यभावादिति। आचारशब्दस्य कर्मवाचकत्वेऽपि कर्माचारयोर्द्वयोरपि तस्मिन् वाक्ये दृष्टत्वात् गत्यभावेन शब्दसाफल्यार्थं तथाकथनम्। तदेवोपपादयति—मुख्यमिति। वृत्त्या=प्रवृत्त्या कर्मण्यपि मुख्यं चरणवचनं नैकदेशे आचारमात्रे निरोध्यम्। पुण्यं कर्माचरति, पापं कर्माचरति इति हि प्रयोगप्रसिद्धिरुपलभ्यते। एवं जात्यादिः कर्मभेदप्रभव इति कर्मविपाकशास्त्रैस्तत्रतत्र, 'चण्डालः प्रेत्य जायते', 'शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते' इति प्रमिते सति आचारसाध्यमचिन्त्यमेव। न चिन्त्यमित्यर्थः। दृढतरप्रमाणप्रमितत्वात्। दृश्यते ह्याचारसाध्यतया, 'सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु' इत्यादावुत्तरकर्माधिकारादिकम् ॥ २७७ ॥

---

९ ननु, 'प्राप्यान्तं कर्मणस्तस्य' इति कर्मफलस्य निश्शेषानुभव एवोक्तः। 'रमणीयचरणाः कपूयचरणाः' इति चरणशब्दप्रयोगात् तत इह जन्मक्षेमादिकमाचारफलमिति ज्ञायते। अतः कर्मशेषरूपानुशयराहित्यमवरोहति जीवजाते उपपन्नमिति शंकते आचारेति। चरणवचनतः चरणशब्दस्यैव प्रयोगात् जातिभोगादिकं जातिविशेषभोगविशेषादिकं कथितमाचारस्यैव फलमस्तु। ननु कर्माचारयोरैक्यमेवेत्यत्र बाधकमाह कर्मेति। श्रुतौ, 'यान्यनवद्यानि कर्माणि', 'यान्यस्माकं सुचरितानि' इति विभज्योक्तौ इति। शंकां निरस्यति इति न सदिति। गत्यभावात् तथोक्तेरित्यस्यार्थस्तु—तथोक्तेः=विभज्य कीर्तनात् तन्मात्रेण गत्यभावात्=कर्माचारयोर्भेदावगत्यसंभवादिति। तथोक्तेरिति षष्ठ्यन्तं चेत्, तथावचनस्य भेदावगमकत्वाभावादित्यर्थः। अथवा कर्मचरितयोः पर्यायत्वेऽपि पृथक्कीर्तनात् गत्यभावेन तथोक्तेः-विभज्यार्थवर्णनादित्यर्थ एवास्तु। कुत इत्यत्राह मुख्यमिति। लोकप्रसिद्धिमतिक्रम्य शब्दार्थशिक्षणमयुक्तमिति भावः। आचार इव कर्मण्यपि वृत्त्या=प्रयुज्यमानतया चरणमिति वचः=पदं मुख्यं सत् एकदेशे आचारमात्रे निरोध्यं न हि=न हि संकोचयितुमर्हमित्यर्थः। 'प्रेत्य कर्मफलमनुभूय ततश्शेषेण' इति गौतमवाक्येन, 'ततः परिवृत्तौ कर्मफलशेषेण जातिं रूपम्' इत्यापस्तम्बवाक्येन च जात्यादि. कर्मफलमिति मितम्। एवञ्च रमणीयचरणा इति चरणपदमपि कर्मपरमेव ज्ञायते। तर्हि निष्फलत्वादाचार उपेक्ष्यः स्यादित्यत्र, 'आनर्थक्यमिति चेन्न' इति सूत्रार्थं विवरिष्यन् संग्रहेण प्रतिवक्ति चिन्त्यमाचारसाध्यमिति: आचारफलं किमिति चिन्तने बहु लभ्यमित्यर्थः। चिन्तनफलमनन्तरश्लोकेन विशदयिष्यति। चिन्तामण्यादौ तु अचिन्त्यमिति पदविभागं कृत्वा प्रसिद्धत्वान्न चिन्त्यमिति,

(२७८) प्राप्ताचारातिवृत्तौ प्रतिपदमृषयः सस्मरुः प्रत्यवायान्
प्राचीनांहःप्रणाशं तदनुसरणतः पुण्यकर्मार्हताश्च ।
नातः सत्कर्ममात्रात् त्रिदिव इति धिया तत्परित्यागशङ्का
न ह्याचारप्रहीणे श्वदृतिजलसमः शोधको वेदवर्गः ॥ १० ॥

इति कृतात्ययाधिकरणम् ॥ ७० ॥

अत्र प्रसङ्गादाचारस्यावश्यकर्तव्यत्वमाह—प्राप्तेति । इत्थं किल कश्चिन्मनुते, 'कर्मानुष्ठानादेव स्वर्गादिसिद्धिः, किमनेनाचारेण' इति । तत्रोत्तरं प्राप्तेत्यादि । प्राप्तानां सन्ध्यावन्दनादीनामतिवृत्तौ ऋषयः प्रतिपदं प्रत्यवायानाहुः । उत्तरकर्मानधिकारादीन् दोषानित्यर्थः । तदनुसरणतः = आचारानुसारात् प्राचीनपापप्रणाशश्चाहुः । 'यदह्ना पापमकार्षम्' इत्यादिभिः(दि हि?) श्रूयते । 'शुचिना कर्म कर्तव्यम्' इत्यादिना पुनराचारानुसारात् पुण्यकर्मार्हताश्चाहुः । एवमेतैर्हेतुभिः सत्कर्ममात्रात् त्रिदिव इति धियैवाचारस्य परित्यागो नार्ह इत्याह—नात इति । अत्र प्रमाणं दर्शयति, 'आचारहीनं न पुनन्ति' इत्यादिकम्—न हीति । आचारप्रहीणे पुरुषे श्वदृतिजलसमो वेदवर्गः शोधको न भविष्यतीत्यर्थः ॥ २७८ ॥ इति कृतात्ययाधिकरणम् ॥ ७० ॥

## ७१ ॥ अथ अनिष्टादिकार्यधिकरणम् ॥ ३-१-३ ॥

सूत्रम्—अनिष्टादिकारिणामपि च श्रुतम् ॥ संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ स्मरन्ति च ॥ अपि सप्त ॥ तत्रापि तद्व्यापारादविरोधः॥ विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ न तृतीये तथोपलब्धेः ॥ स्मर्यतेऽपि च लोके ॥ दर्शनाच्च ॥ तृतीयशब्दावरोधः संशोकजस्य ॥१२–२०॥

---

कर्मफलजात्यादिकमाचारफलत्वेन न चिन्तनीयमिति चार्थो वर्णितः । तथासति, 'जात्यादिः कर्मभेदप्रभव इति मितोऽचिन्त्य आचारसाध्यः' इति श्लोकः स्यात् । जात्यादिरिति पुंलिंगं प्रयुज्य आचारसाध्यमिति क्लीबप्रयोगो न स्यात् । अस्तु ॥ २७७ ॥

१०. अथ तदपेक्षत्वादिति सूत्रखण्डाभिमतं व्यनक्ति । पुण्यमाचरति पापमाचरति इति कर्मण्याचारशब्दप्रयोगादविशेषेऽपि श्रुतौ, कर्म, चरितमिति विभज्य निर्देशः, 'श्रुत्यादिस्पष्टावगतं सर्वं कर्म', 'यत् प्राचामाचरणमात्रेण प्रामाणिकत्वेनावधृतं तत् चरितम्' इति विवक्षित्वेति भाव्यम् । तत्राऽऽचरणं निष्फलम् ; कर्मण एवानुष्ठितात् त्रिदिवादिफलसंभवादित्यत्र प्रत्याह प्राप्तेत्यादिना । आचारस्य फलत्रयमस्ति, अकरणे प्रत्यवायः (पापम्), तदनुसरणे करणे पूर्वपापनाशः, फलार्थपुण्यकर्मानुष्ठानयोग्यतासिद्धिश्च । अतः फलार्थकर्माननुष्ठायिभिरप्याचारो न त्याज्यः । अनुष्ठायिभिस्तु आचाराभावे योग्यताहान्याऽनधिकारात् कृतमपि काम्यं निष्फलं स्यादित्यादर्तव्यः । अत आचारहीनत्वे असद्भूतात् कर्मणो न स्वर्गादिरिति । इदमेवोक्तं तदपेक्षत्वादिति । वेदः जलवत् शोधकोऽपि आचारहीनाभ्यस्तः श्वचर्मरूपदृतिधृतजलवत् शोधको न भवतीति तदुचरितमन्त्रः तत्कृतकर्म च कथं फलहेतुरिति । आचारपदं सुकृतदुष्कृतसाधारणमिति बादरिमतं स्वीकृतम् । आचारशब्दः कर्मातिरिक्तवाचीति कार्ष्णाजिन्याद्याशयो नेष्टः । सैवैरप्याचाराणां नैष्फल्यं नेष्टम् । तत् सिद्धं कर्मशेषरूपानुशयवान् प्रत्यवरोहतीति ॥ २७८ ॥

(२७९) सर्वेषां देहपाते सति नियमवती चन्द्रमःप्राप्तिरुक्ता
तस्मात् पापोत्तराणां निरयगतिपुरस्कारिणी सेति चेन्न ।
लोकः सम्पूर्यते तैर्न पर इति गिरा संकुचेत् सर्वशब्दः
तेऽतस्तद्यातनान्ते तत इह सहसा कुत्सितां यान्ति योनिम् ॥ ११ ॥

अत्र सङ्गतिर्भाष्ये, 'केवलेष्टापूर्तदत्तकारिणश्चन्द्रमसं गत्वा सानुशया एव निवर्तन्त इत्युक्तम् । इदानीमनिष्टादिकारिणोऽपि चन्द्रमसं गच्छन्ति, नेति संशय्यते' इति । तदर्थविचारस्तु— किमनिष्टादिकारिणोऽपि यमयातनामनुभूय चन्द्रमसं गत्वा निवर्तन्त, उत नेति । किं, 'ये वै के च' इति वाक्यमनिष्टादिकारिणामपि चन्द्रमसः प्राप्तिमवगमयति, नेति । किमत्र सर्वशब्दः प्रेतमात्रविषयः, उतेष्टादिकारिप्रेतविषय इति । किं पितृयाणगमनमनिष्टादिकारिणामपि, उतेष्टादिकारिणामेवेति । किं, 'य इमे ग्राम इष्टापूर्ते' इत्युपक्रमः पितृयाणस्येष्टादिकारिमात्रविषयत्वमवगमयति, नेति । किमनिष्टादिकारिणां पञ्चमाहुतिमन्तरेण पुरुषत्वसम्पत्तिरस्ति, नेति । 'वेत्थ यथा केनासौ लोको न सम्पूर्यते' इत्यस्य प्रतिवचने, 'अथैतयोः पथोः' इत्युपक्रम्य, 'जायस्व म्रियस्वेत्येतत् तृतीयं स्थानं तेनासौ लोको न सम्पूर्यते' इत्येतस्य तृतीयस्थानस्य, स्वर्लोकारोहाभावः पञ्चमाहुतिमन्तरेण पुरुषत्वनिष्पत्तिमवगमयति, नेति । अत्र पूर्वपक्षमारचयति—सर्वेषामिति । सर्वेषां देहपाते सति नियमवती चन्द्रमसः प्राप्तिरुक्ता । तस्मात् पापोत्तराणाम्=अधिकपापोपहतानामपि निरयगतिपुरस्कारिणी चन्द्रप्राप्तिरिति । उक्तं प्रतिक्षिपति—नेति । प्रतिक्षेपमेव विवृणोति—लोक इति । अयमर्थः—'चन्द्रमसमेव ते सर्वे गच्छन्ति' इति सर्वशब्दासङ्कोचार्थमेव ह्यनिष्टादिकारिणामपि चन्द्रमसः प्राप्तिर्भवतोच्यते । 'तेनासौ लोको न सम्पूर्यते' इति वचनबलात् सङ्कोचो न दोष इति । उक्तमर्थं निगमयति—त इति । अनिष्टादिकारिणस्ते यमशासनेन तद्यातनान्ते चन्द्रमसमप्राप्यैव कुत्सितां योनिं प्रतिपद्यन्त इति ॥ २७९ ॥

---

११. देवयानेन गच्छतां पुनरावृत्तिर्न भवति । अन्ये सर्वे पुनःपुनर्जायन्ते । जन्मप्रकारश्च पञ्चाग्निविद्यायां दर्शितः । तेन पुण्यकारिभिरिव पापकर्मभिरपि चन्द्रादाकाशादिक्रमेणावरुह्यैव जन्मनो लम्भनीयत्वात् तेषामपि चन्द्रमःप्राप्तेरावश्यकत्वमिति पापकर्मफलभूतनिरयप्राप्त्यनन्तरं पुनर्जन्मार्थं चन्द्रगमनमेष्टव्यम् । तदिदम्, 'ये वै के चास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' इति श्रुतितोऽप्यवधार्यत इति पूर्वपक्षमाह सर्वेषामिति । नियमवती नियमेन भाविनी नियतभावित्वेनोक्ता । पापोत्तराणामिति अनिष्टादिकारिणामिति पदव्याख्यानम् । इष्टपदं यागपरम्; इष्टादिकारिणः इष्टं पूर्तं दत्तमित्युक्तकाम्यकर्मरूपपुण्यकारिणः । तद्भिन्नाः अनिष्टादिकारिणः कृत्याकरणाकृत्यकरणरूपपापयुक्ताः । तेषामपि सा चन्द्रप्राप्तिः निरयगतिपुरस्कारिणी पापफलानुभवार्थनरकगतिं पुरस्कृत्य पश्चाद्भाविनीति । सिद्धान्तमाह- लोक इति । 'अथैतयोः (देवयानपितृयाणयोः) पथोर्न कतरेणचन, तानीमानि क्षुद्राणि....एतत् तृतीयं स्थानम्, तेनासौ लोको न संपूर्यते' इति तैः पापकर्मभिरसौ चन्द्रलोको न प्राप्यते इति गिरा श्रुत्या, 'चन्द्रमसमेव ते सर्वे' इति वाक्ये सर्वशब्दः संकुचेत् तद्भिन्नविषयः स्यात् । तर्हि कथं जन्म; तत्राह ते इति । तद्यातनान्ते तत्तन्नरकानुभवावसाने ततः यातनास्थानात् इह भूमौ सहसा पञ्चविधाहुतिरूपविलम्बितागमननिरपेक्षमेव कुत्सिताम्=पापकर्मशेषानुभवार्हां योनिं यान्ति ॥ २७९ ॥

(२८०) जन्मप्राप्तिर्जरायुप्रभृतिषु भविनां कर्मपाकैर्विचित्रा ;
भूयिष्ठैः पुण्यपापैर(स्त्व)पवदनवती पञ्चमाहुत्यपेक्षा ।
तद्वत् धूमादिमार्गः ; कति कति च शुभैरुत्कटैर्देहपाते
दिव्यं रूपं विमानादिकमपि सपदि प्राप्य याताः प्रसिद्धाः ॥ १२ ॥

इत्यनिष्टादिकार्यधिकरणम् ॥ ७१ ॥

ननु पञ्चमाहुत्यपेक्षया जन्मवतां जन्म कथ्यते ; कथं तर्हि पापोत्तराणां पञ्चमाहुतिमन्तरेण जन्म भवतीत्याशङ्क्याह जन्मेति । [1]जरायुजप्रभृतीनां जन्म तावत् प्रमाणप्रतिपन्नमेव । अथापि पञ्चमाहुत्यपेक्षा वक्तुं न शक्यत एव पितृशरीरात्(?)मातृशरीरप्रवेशादर्शनात् । कथं तर्हि पञ्चमाहुत्यपेक्षावचनमित्याशङ्क्याह—भूयिष्ठैरिति । अयमर्थः—पञ्चमाहुत्यपेक्षावचनं सामान्यम् । तत्तु यत्रापवादो नास्ति, तत्रैवावकाशं लभते ; नान्यत्र । भूयिष्ठादृष्टजन्मानो द्रौपदीधृष्टद्युम्नादयः पञ्चमाहुतिं नापेक्षन्ते । एवं (?) [1]जरायुजादयोऽपि भूयिष्ठपापजन्यत्वात् । तद्वदेव=पञ्चमाहुत्यपेक्षावत् धूमादिमार्गोऽप्यपवदनवानित्यर्थः । अस्मिन्नर्थे सुकृतविशेषादतिशयितात् ब्रह्मलोकप्राप्तिपर्यन्तं स्वनिष्पन्नदिव्यदेहादिपरिग्रहेण प्रयाताः कति कति श्रूयन्ते । त एव पञ्चमाहुत्यनपेक्षदेहपरिग्रहे दृष्टान्ततयोपादेया इत्यर्थः ॥ २८० ॥ इत्यनिष्टादिकार्यधिकरणम् ॥ ७१ ॥

## ७२ ॥ अथ तत्स्वाभाव्यापत्त्यधिकरणम् ॥ ३-१-४ ॥

सूत्रम्—तत्स्वाभाव्यापत्तिरुपपत्तेः ॥ २२ ॥

(२८१) आहुत्योर्देहवत्त्वं प्रथमचरमयोर्निर्विवादं ; तथा स्यात्
जन्मैवाऽऽकाशवायुप्रभृतिषु भवतेरन्वयादित्यसारम् ।

---

१२. ननु, 'तेनासौ लोको न संपूर्यते' इति वचनं संपूरणशब्दस्वारस्यात् फलानुभवार्थचन्द्रलोकनिवासप्रतिषेधमात्ररूपं भवतु । पञ्चमाहुतिप्राप्तये चन्द्रलोकगमनपूर्वकनिष्क्रमणं तु न वार्यतामित्याशंकायाम्, पञ्चमाहुतिनिरपेक्षनानाजन्मदर्शनादिना संकोचावश्यकत्वमाह जन्मेति । भविनां संसारिणां जन्मप्राप्तिर्हि जरायुप्रभृतिषु [गर्भवेष्टनचर्म जरायु । प्रभृतिपदेनाण्डादिग्रहणम् ।] आण्डजं जीवजमुद्भिज्जमिति श्रवणात् कर्मपरिपाकानुसारेण विचित्रा नानाप्रकारा भवति । तद्वत् पञ्चमाहुत्यपेक्षाऽपि भूयिष्ठपुण्यविषये भूयिष्ठपापविषये च सापवादा । अतिशयितपुण्याः पापोत्कटाश्च केचित् आहुतिचतुष्टयं विहाय पञ्चमाहुतिमात्रेण जायमाना दृश्यन्ते । येषामप्राप्यापि यत्रकचिदपि जायन्ते । तद्वदेव धूमादिमार्गोऽपि अपवदनवान् । कतिपयविषये स न भवतीति यावत् । तदुपपादयति कतिकतीति । बहवः इत्यर्थः । शरभंगादयः उत्कटपुण्यवशात् देहपातसमनन्तरमेव धूमादिमार्गं विहाय दिव्यरूपं प्राप्य दिव्यविमानमारुह्य स्वर्गादिकं याताः श्रीमद्रामायणादौ प्रसिद्धाः । तद्वत् द्रौपदीधृष्टद्युम्नादयः चन्द्रमण्डलावरोहाहुत्यादि विनैव जाताः प्रसिद्धाः । कतिकतिचेति चकारेण पूर्वार्धोक्तयुक्त्या धूमादिमार्गं विना यातानामिव पञ्चमाहुत्यनपेक्षं जातानामपि प्रसिद्धिः समुच्चीयते । तेन, 'सर्पतेऽपि च लोके' इत्यादिसूत्राणामर्थो गमितो भवति ।

चि. टी. 1. जरायुजेत्यत्र जरासन्धेति वा पदान्तरं वा स्यात् । न हि जरायुजत्वे पञ्चमाहुत्यनपेक्षत्वम् । अस्मिन्नर्थे इत्यस्य श्रूयन्ते इत्यत्रान्वयः । ब्रह्मलोकपदं चतुर्मुखलोकार्थकम् ॥२८०॥

रेतःसिग्भावनीत्या पृथगभिलपनानर्हतामात्रमत्र(मेव)
द्युक्वोः(द्युभ्वोः) पुण्यप्रसाध्यं फलमिह पठितं ; नास्ति भोगश्च मध्ये ॥१३॥
इति तत्स्वाभाव्यापत्त्यधिकरणम् ॥ ७२ ॥

अत्र सङ्गतिर्भाष्ये, 'इष्टादिकारिणो भूतसूक्ष्मपरिष्वक्ताः सानुशयाश्चन्द्रमसोऽवरोहन्ति' इत्युक्तम्। अवरोहप्रकारश्च–'अथैतमेवाध्वानं पुनर्निवर्तन्ते यथैतमाकाशमाकाशाद्वायुम्, वायुर्भूत्वा धूमो भवति, धूमो भूत्वा अभ्रं भवति, अभ्रं भूत्वा मेघो भवति, मेघो भूत्वा प्रवर्षति' इति वचनात् यथेतमनेवञ्चेत्युक्तम् । तत्राख्याऽऽकाशादिप्रतिपत्तौ देवमनुष्यादिभाववदाकाशादिभावः, उत तत्साद्दश्यापत्तिमात्रम्' इति । तदर्थविचारस्तु, 'यथेतमाकाशम्' इत्याकाशादिभावो देवमनुष्यादि-भाववदाकाशादिदेहापत्तिः, उत तत्साद्दश्यापत्तिमात्रमिति । अत्र कश्चित् मन्यते—पञ्चस्वाहुतिषु प्रथमचरमयोराहुत्योर्देहवत्त्वं निर्विवादमेव, 'तस्या आहुतेस्सोमो राजा सम्भवति', 'पञ्चम्यामाहु-तावापः पुरुषवचसो भवन्ति' इति देहवत्त्वस्य प्रकटमेव कथनात्। तथा आकाशवायुप्रभृतिष्वपि जन्मैव स्यात्; पुरुषस्य, 'सोमो राजा भवति' इति प्रथमश्रुतस्य भवतेर्धातोरन्वयादिति। तदेतदाह–आहुत्योरिति। तन्निराकरोति—असारमिति। तदेव प्रकटयति—रेतस्सिगिति। यथा पितृ-शरीरप्रवेशो केवलं संसर्गमात्रम्, एवमाकाशादिभावेऽपि संसर्गविशेषात् पृथगभिधानानर्ह-तामात्रमेवाकाशादि[भाव?]वादिना शब्देनाभिधेयमित्यर्थः। उक्तार्थे हेतुमाह(?) द्युभ्वोरिति। मध्ये शरीरपरिग्रहे शरीरस्य पुण्यफलभोगार्थत्वात् पुण्यफलमपि श्रूयेत। न च तच्छ्रूयते। न च कश्चिदुप-भोगो दृश्यते इत्यर्थः ॥ २८१ ॥ इति तत्स्वाभाव्यापत्त्यधिकरणम् ॥ ७२ ॥

---

१३. अवरोहणो जीवस्याऽऽकाशप्राप्तिं वायुप्राप्तिञ्चोक्त्वा उपरि कथ्यते वायुर्भूत्वा धूमो भवतीत्यादि । तत्रायं पूर्वपक्षः—यथा, 'सोमो राजा भवति', 'आपः पुरुषवचसो भवन्ति' इति प्रथम-चरमयोः संसरतो जीवस्य तत्तच्छरीरकत्वेनोत्पत्तिः । तथा आकाशवाय्वादिशरीरकत्वेनोत्पत्तिरेव ; पूर्ववत् भवतेः प्रयुक्तत्वात् । आकाशविषये भवतेरश्रवणेऽपि तद्वदेव द्वितीयान्तेनोक्तवायुविषये वायुर्भूत्वेति श्रवणात् तथाऽऽकाशेऽपि सोऽभिप्रेत इति मन्यत इति । तं निरस्यति इत्यसारमिति । हेतुमाह रेत इति । आकाशवाय्वादीनां एतदवरोहणात् प्रागेव स्थिततया जीवान्तराधिष्ठिते तत्रायं कथमधिष्ठातृत्वेन स्यात् ॥ वचनबलादुभयाधिष्ठेयत्वं स्वीकार्यमिति चेन्न ; 'यो रेतस्सिञ्चति तद्भूय एव भवति' इत्यत्र हि रेतस्सेककर्तृजीवभावस्य दुर्वचतया तद्देहे एतदीयभूतसूक्ष्मापृथग्भावमात्रविवक्षया तद्भावोक्तिरित्येव वक्तव्यम् । नन्वत्र रेतस्सिग्भावो भाषितः कथमवगम्यत इति चेत्—तद्भवतीत्यन्वयात् । तदिति सामान्ये नपुंसकं रेतस्सिगर्थकम् । यद्वा तद्भूये इत्येकं पदम्, रेतस्सिग्भावे इत्यर्थकम् । तदा भवतीत्यनेन ततः पूर्वं जन्माभावोऽपि प्रत्युक्तो भवति । तत्साहचर्यात् तथैव सर्वत्र पृथग्व्यवहारानर्हतारूपं तत्स्वाभाव्यमेवेति । कर्मजन्यत्वेनाकथनात् भोगाभावाच्च न मध्ये प्राप्तं शरीरमित्याह द्युक्वोरिति । इह प्रकरणे, 'य इमे ग्रामे इष्टापूर्ते दत्तम्' इत्युपक्रम्य सोमराजभाव उक्तः, भुवि च रमणीयचरणा इत्यारभ्य योनिप्राप्तिरुक्ता। एवं पुण्यफलत्वेन तदुक्तिवत् आकाशादिभावे कर्मफलत्वं नोक्तम्। न स्वल्पोऽपि भोगस्तत्रोच्यते। अतो नाकाशादिकं शरीरमिति। द्युभ्वोरिति पाठो न शुद्धः। समाहारद्वन्द्वे द्विवचनायोगात्। इतरेतरयोगे द्युभुवोरिति स्यात्। अत इह द्युक्वोरिति क्वचित् कोशे उपलभ्यः पाठो ग्राह्यः ॥ २८१ ॥ इति तत्स्वाभाव्यापत्त्यधिकरणम् ॥ ७२ ॥

## ७३ ॥ अथ नातिचिराधिकरणम् ॥ ३-१-५ ॥

सूत्रम्—नातिचिरेण विशेषात् ॥ २३ ॥

(२८२) व्योमादिस्थित्यवस्था चिरमचिरमिति व्यक्तनिर्देशहानेः
शुक्लावस्थानयात् स्यात् अनियतिरिति न स्वारसिक्याः प्रवृत्तेः ।
व्रीह्यादिभ्यो हि दुर्निष्प्रपततरमिति(पतरमिति तु) श्रूयते ; तेन पूर्वं
शीघ्रं तत्तद्दशायास्त्यजनमिति परिज्ञायते वाक्यशक्त्या ॥ १४ ॥

इति नातिचिराधिकरणम् ॥ ७३ ॥

अत्र सङ्गतिर्भाष्ये, 'आकाशप्राप्तिप्रभृति यावद्व्रीह्यादिप्राप्ति किं तत्रतत्र नातिचिरं तिष्ठति, उतानियम इति विशये' इति । तदर्थविचारस्तु–किमाकाशप्राप्तिप्रभृति व्रीह्यादिप्राप्तेः प्राक् आकाशादिषु चिरं तिष्ठति, उताचिरेण निष्क्रामतीति । व्रीह्यादिप्राप्तौ, 'अतो वै खलु दुर्निष्प्रपतरम्' इति दुर्निष्प्रपततरत्वाभिधानमन्यत्राचिरनिष्क्रमणमवगमयति, नेति । अत्र पूर्वपक्षमाह—व्योमादीति । अत्र जीवस्य व्योमादिस्थित्यवस्था चिरमचिरमिति व्यक्तमेव विशेषनिर्देशाभावात् मातृशरीरे शुक्लावस्थान्यायेनानियतिरेव स्यात् । शुक्लावस्था हि परिपूर्णगर्भपर्यन्तमवस्थाने चिरं, मध्ये पाते पुनरचिरमिति दृष्टमेव । निराकरोति—नेति । तत्र हेतुमाह—स्वारसिक्या इति । 'अतो वै खलु दुर्निष्प्रपतरम्' इति स्वारसिक्याः वाक्यप्रवृत्तेर्विद्यमानत्वादित्यर्थः । तदेव स्वारसिकत्वमाह—व्रीह्यादिभ्य इति । व्रीह्यादिभ्यो हि दुर्निष्प्रपतरमिति विशेषवचनमितरेभ्यः सुप्रपतरत्वमाचष्टे । तेन पूर्वं वाक्यशक्त्यैव शीघ्रं तत्तद्दशा(तदवस्था)यास्त्यजनमिति परिज्ञायते । विषयविशेषे दुर्निष्प्रपतरत्वाभिधानं इतरत्र दुर्निष्प्रपतरत्वं निषेधतीत्यर्थः ॥ २८२ ॥ इति नातिचिराधिकरणम् ॥७३॥

---

१४. 'यथैतमाकाशमाकाशाद्वायुम्' इति व्योमवाय्वोरवस्थितिमुक्त्वा, 'वायुर्भूत्वा' इति तामेवावस्थितिं वायुभावरूपेण वक्तीति, अभ्रं भवतीत्यादिनाऽपि तत्तदवस्थितिरूपतत्तद्भाव एवोक्त इति निर्णीतम् । अथेयं व्योमादौ स्थितिश्चिरमचिरं वेति विशये चिरमिति अचिरमिति वा अनियतिः नियमरहिता, अन्यतरपक्षस्य व्यक्तमनिर्देशात् । अनियतौ तु युक्तिरस्तीत्याह शुक्लावस्थानयादिति । शुक्लेऽवस्थितिः शुक्लावस्था । शुक्लदशा वा । रेतसि संश्लिष्टो जीवः तदैव योषां प्रविशतीति न हि नियन्तुं शक्यम् ; गृहस्थरेतस्त्वेऽपि योषित्संगमकालविलम्ब–तदर्थप्रवृत्त्यादेरनियमादिति । शुक्लावस्थानयादित्यस्य स्रावपात-पूर्णगर्भप्रसवाद्यव्यवस्थानादनियतिरित्यर्थोऽपि वर्ण्यते । इमं पूर्वपक्षं निरस्यति इति नेति । स्वारसिक्याः प्रवृत्तेरिति । श्रुतिवाक्यस्वरसप्रवृत्तिबलादचिरमिति नियतिरुचितेत्यर्थः । क्रमेणाऽऽगमनवर्णने हि विलम्बहेत्वकथनात् अविलम्बेनाऽऽगमनमेव स्वरसप्रतीतम् । बाधके सत्येव स्वरसत्यागः । वाक्यप्रवृत्तिरचिरत्वतात्पर्यिकेति चोपरितनवाक्यादवगम्यत इत्याह व्रीहीति । 'ततो वै खलु दुर्निष्प्रपतरम्' इति श्रुतिः व्रीह्यादिभ्यो दुःखातिशयेन कालविलम्बेन निष्पत्यते जीवेनेति वदन्ती व्रीह्यादिभावात् प्राक् तदभावं गमयति । दुर्निष्प्रपततरमित्यत्र एकतकारलोपश्छान्दस इति भाष्यानुसारात्, अत्रार्थतोऽनुवादे तकारद्वयघटनं कृतम् । 'दुर्निप्रपतरमिति तु' इत्यपि पाठः । तदा श्रौतपदानुवाद इति भाव्यम् । वाक्यशक्त्या वाक्यसामर्थ्यात् । वै इत्यवधारणात् । अत एव दुर्निष्क्रमणत्वातिशयवचनात् तदितरत्र तथात्वव्यवच्छेदादिति ॥

## ७४ ॥ अथ अन्याधिष्ठिताधिकरणम् ॥ ३-१-६ ॥

सूत्रम्—अन्याधिष्ठिते पूर्ववदभिलापात् ॥ अशुद्धमिति चेन्न शब्दात् ॥ रेतस्सिग्योगोऽथ ॥ योनेः शरीरम् ॥ २४-२७ ॥ इति शारीरके तृतीयाध्याये प्रथमः पादः ॥

(२८३) जन्म व्रीह्यादिनाम्ना श्रुतमिह तदिदं देवमर्त्यत्ववत् स्यात्
नैरात्म्यं स्थावराणां न च निगमविदः स्थापयन्तीति चेन्न ।
पुण्यस्यैव प्रवृत्ते फलपरिगणने स्थावरत्वोक्त्ययोगात् ;
रेतस्सिग्वर्ष्मणीव ह्युपचरति जनिं स्थावरेऽप्यन्यदेहे ॥ १५ ॥

भाष्य एव सङ्गतिर्व्यक्ता, "अवरोहन्तो जीवा व्रीह्यादिभावेन जायन्त इति श्रूयते, 'मेघो भूत्वा प्रवर्षति, त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा जायन्ते' इति । ते किमन्यैर्भोक्तृभिर्व्रीह्यादिशरीरैरधिष्ठितान् व्रीह्यादीनाश्लिष्यन्ति, उत ते भोक्तारो व्रीह्यादिशरीरा जायन्त इति विशये, जायन्त इति वचनात् देवो जायते मनुष्यो जायत इतिवत् व्रीह्यादिशरीरा एवेति प्राप्ते उच्यते" इति । तदर्थविचारस्तु—अवरोहतो जीवान् प्रति, 'त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा जायन्ते' इति श्रुतिः किमन्यभोक्तृशरीरभूतव्रीह्यादिशरीरा जायन्त इति गमयति, नेति । जायन्त इति वचनं किं देवो जायते मनुष्यो जायत इतिवदुत्पत्तिपरम्, उत सम्बन्धमात्रपरमिति । जायन्त इति श्रवणस्य, 'कपूयचरणाः' इत्यादिवत् कर्मसम्बन्धाभावः संश्लेषमात्रपरतामवगमयति, नेति । अत्र पूर्वपक्षी मन्यते—जन्मेति । व्रीह्यादिभावेन जायन्त इति ह्यत्र जन्मैव श्रूयते । अत इदं जन्म देवत्वमर्त्यत्ववत् स्यात् । ननु स्थावराणां नैरात्म्यमेव । तेन कथं स्थावरभावेन जीवस्य जन्मेति कश्चिदाह । तदिदं वेदान्तबहिष्ठस्य वचनमित्याह—नैरात्म्यमिति । इमं पूर्वपक्षं निराकरोति—नेति । तदेव विवृणोति—पुण्यस्येति । पञ्चाग्निविद्यायां हीष्टापूर्तादिकर्मकारिणां पुण्यफलमभि-

१५. मध्येपथ व्रीह्याद्योषधिरूपेण जन्म श्रुतम् । तत्र व्रीह्यादिकमवरोहज्जीवशरीरम्, उत मध्ये वासस्थानमात्रमिति विशये पूर्वपक्षमाह जन्मेति । व्योमादिभावः व्योमादिधर्मसदृशधर्मवत्त्वरूपं स्वाभाव्यमिति युक्तम्, जायते इत्यनुक्तेः । अत्र तु, 'व्रीहियवास्तिलमाषा जायन्ते' इति श्रुतम् । जीवस्य जन्म च देहलाभ एव । तदेव व्रीह्यादिनामवाच्यताऽस्य स्यात् । नामरूपव्याकरणस्य संनियोगशिष्टत्वात् । अतो व्रीह्यादिनामयुक्तं जन्म श्रुतमिह वाक्ये इति, सोमो राजा भवति, आपः पुरुषवचसः इति देवभाव-मर्त्यभाववत् मध्येऽपि जन्म । ननु देवमर्त्ययोश्चरत्वात् सजीवत्वात् जन्म युज्यते ; न तु व्रीह्यादौ ; तत्र जीवाभावस्य जैनादिभिरुक्तेरित्यत्राह नैरात्म्यमिति । देवतिर्यङ्मनुष्यस्थावरात्मना चतुर्धा जन्म हि श्रुतिस्मृतिपुराणप्रसिद्धम् । 'आण्डजं जीवजमुद्भिज्जम्' इति श्रुतिः । स्थावरे वैचित्र्यमपि विशदं वर्णितमस्ति । 'अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः' इति च स्मर्यते । वैज्ञानिकनिश्चयोऽप्येवमेव । अतो व्रीह्यादेः शरीरत्वं सुवचमेवेति । निरस्यति इति चेन्नेति । सत्यं व्रीह्यादयः शरीरम् । तदधिष्ठातारोऽन्ये जीवाः सन्त्येव । एवं स्थावरेऽन्यजीवदेहेऽस्यावरोहतो यः संसर्गः, तत्र जनिशब्दस्यामुख्यः प्रयोगः । तत्र हेतुनाह पुण्येति । देवभावः पुण्यफलमिति प्रागुक्तम् । ततो निवृत्तौ अन्ते पुण्यपापानुसारिजन्मभेद उक्तः । पुण्यापुण्योभयफलवर्णनात् पूर्वमुच्यमानं सर्वं, जन्मरूपं चेत्, पुण्यफलभेदरूप

धीयते। एवं प्राधान्येन पुण्यफलाभिधानप्रसङ्गे, 'शरीरजैः कर्मदोषैर्याति स्थावरतां नरः' इति स्थावरजन्मप्राप्तिरूपं पापफलमभिधीयत इति न युक्तमेतत्। तर्हि, 'जायन्ते' इति साक्षाज्जननं कथमभिधीयत इत्याशङ्क्य अन्याधिष्ठिते पितृशरीरे यथा जनिवचनम्, तथा अन्याधिष्ठिते व्रीह्यादिशरीरेऽपि जनिवचनमवरोहतो जीवस्य औपचारिकमिति न कश्चिद्विरोधः ॥ २८३ ॥

(२८४) हिंसायोगादशुद्धं श्रुतिविहितमपि न्याय्यमिष्टादिकं; तत्
पापांशं व्रीहिभावप्रभृतिषु सुकृती भुङ्क्त इत्यप्ययुक्तम्।
उक्ता मन्त्रार्थवादैः पशुहितमिति सा तच्चिकित्सावदेषा(षाम्)
ब्रूते यज्ञे वधोऽसाववध इति मनुः; स्तौति निन्दा त्विहान्यत् ॥ १६ ॥

अत्र कश्चिच्चोदयति— 'दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः' इति साङ्ख्याः हिंसायोगादंशेनाविशुद्धत्वं यज्ञादीनां वदन्ति। तेन पुण्यांशफलं स्वर्गादि; पापांशफलं तु व्रीह्यादिभावः। अतः पुण्यफलप्रसङ्गेऽपि पापफलाभिधानं युक्तमेवेति। तत्रैतदनुवदति—हिंसेति। पश्वालम्भादिरूपहिंसायोगात् अशुद्धं श्रुतिविहितमपीष्टादिकं तदिति न्याय्यम्। अतः सुकृती व्रीह्यादिभावप्रभृतिषु पापांशं भुङ्क्त इति। अनूदितमर्थं प्रतिक्षिपति-अयुक्तमिति। तत्र हेतुमाह— उक्तेति। मन्त्रैरर्थवादैश्च पशुहितमित्येव खल्वेषा हिंसोक्ता। 'न वा उ एतन्म्रियसे' इत्यादिर्मन्त्रः। अर्थवादोऽपि, 'हिरण्यशरीर ऊर्ध्वं स्वर्गं लोकमेति' इति। ननु श्रुतिरपि योग्यमेवार्थं ब्रूयात्। दुःखजननरूपस्य संज्ञपनस्य कथं पशुहितत्वमित्याशङ्क्य दृष्टान्तेनोपपादयति—तच्चिकित्सावदिति। लोके हि अधिकसुखप्राप्तिहेतुभूतमल्पदुःखात्मकं शस्त्रलवनक्षाराग्निकर्मादिकं हितमित्येवाभिधीयते;

---

मित्येव युक्तम्। न च व्रीहितिलादिस्थावरभावः पुण्यफलमित्यत्रौचित्यमस्ति। 'कर्मदोषैर्याति स्थावरतां नरः' इति च दोषाधीनत्वं तस्य प्रमितम्। अतः पूर्वोत्तरयोरिव जन्महेत्वनिर्देशात् पापरूपहेतुकल्पनानौचित्याच्च नेदं जन्म। रेतस्सिग्भावसाहचर्याच्च। न हि रेतस्सिक्पुरुषरूपेणायं जायते। अतस्तस्य वर्ष्मणि=शरीरे अस्य संयोग एव वक्तव्य इति तावत्पर्यन्तं सर्वत्र संश्लेषमात्रम्, न तु जन्मेति भाव्यम् ॥ २८३ ॥

१६. हिंसाशब्दशक्यार्थानभिज्ञतीर्थकरगोष्ठीनिविष्टः उत्सर्गापवादन्यायमप्यजानन् किञ्चिदाशङ्कते। तदाह हिंसेति। आशंका चेत्थम्—पुण्यफलपरिगणने स्थावरत्वोक्तिरयुक्तेति न युक्तम्। प्रसक्तस्य पुण्यस्य पापगर्भत्वात् अंशभेदेन फलद्वयवर्णनसंभवात्। इष्टादिकं ज्योतिष्टोमयागादिकं स्वर्गार्थतया श्रुतिविहितमपि अशुद्धं पापमिश्रमेव, हिंसायोगात् पशुहिंसागर्भत्वात्। तत्=तस्मात् सुकृती पुण्यकृत् पुण्यांशफलं स्वर्गेऽनुभूय प्रत्यवरोहन् पापांशफलमनुभवति व्रीह्यादिस्थावरभावे इति। इमां परिहरति इत्ययुक्तमिति। अत्र हेतुमाह उक्तेति। मीमांसकादिभिर्हिंसात्वं स्वीकृत्योत्सर्गापवादन्यायं प्रदर्श्य,—'न हिंस्यात् सर्वा भूतानि' इति वाक्यं सर्वपदघटितमपि विहितव्यतिरिक्तविषयकमेव। अतो विहितहिंसातः पापं नोत्पद्यते— इति समाहितम्। श्रीभाष्यकारास्तु स्थिते हि हिंसात्वे तादृशे समाधाने यतितव्यम्। हिंसात्वमेव नेत्यभाषिषत। अभ्युपगमवादापेक्षया तत्त्वकथनस्यैव युक्तत्वात् तदेव दर्शयत्यत्र। हिंसा हि न मरणानुकूलव्यापारः। अमारके परपीडापर्यवसायिन्यपि व्यापारे, 'स यदि मातरं

तद्वदित्यर्थः। ननु तर्हि बन्धुवधोऽपि हितस्यादित्याशङ्क्य हिताहितविभागः शास्त्रैकसमधिगम्य इत्यभिप्रायेणाह—ब्रूत इति। 'यद्वै किञ्च मनुरवदत् तद्भेषजम्' इत्युक्तवचनप्रामाण्यशाली भगवान् मनुर्यज्ञे वधस्य वधत्वमेव नास्तीत्याह। हिंसात्वं नास्तीत्यर्थः। अशास्त्रीयमार्गेण प्राणवियोजने हिंसात्वं प्रसज्यते। यथा राज्ञां युद्धे शत्रुवधो न हिंसा। यथा वा चोरवधः। तथैव सर्वत्र विषयभेदेन हि पुण्यापुण्यव्यवस्था। आत्महननमपि क्वचित्पुण्यकोटिमाटीकते, 'ब्राह्मणार्थे गवार्थे वा सम्यक्प्राणान् परित्यजेत्' इति। तेन न यज्ञादिषु हिंसा, न च तत्फलानुभवः, नापि विधिस्पृष्टो दोषः, नापि हिंसकत्वं वैदिकानामिति रमणीयमेतत्। ननु ज्ञानप्रसङ्गेषु इतिहासपुराणेषु क्वचित् कर्मनिन्दा दृश्यते, तत् कथमित्याशङ्क्याह—स्तौतीति। 'न हि निन्दा निन्द्यं निन्दितुं प्रवर्तते, अपितु निन्दितादितरत् प्रशंसितुम्' इति न्यायेन तत्रतत्र विवक्षितज्ञानादिप्रशंसार्थैव कर्मनिन्दा। न चात्यन्तमवश्यकर्तव्यकर्मनिन्दा अध्यात्मशास्त्रेषु; फलसङ्गकर्तृत्वादिनिन्दायामेव तत्र तात्पर्यात्। तात्पर्य(यर्थे ?) हि शब्दः प्रमाणमिति हि तान्त्रिकाः। अन्यथा, 'कर्मण्यकर्म यः पश्येत्' इत्यादिकं सकलमपि गीताशास्त्र(शास्त्रकलापो) लोलुप्येतेति ॥ २८४ ॥

(२८५) कर्तुर्दोषं दिशेत् संज्ञपनमिह पशोस्तत् क्रतोश्चोपकुर्यात्
तस्मादस्मिन्निषेधं क्षिपति न विधिरित्यब्रुवन् सांख्यभक्ताः।
निर्धूते पश्वनर्थे न खलु तदुचितं; पिष्टपश्वादिकल्पः
तत्तत्कालाधिकारिप्रतिनियत इति क्वापि न स्यात् विरोधः ॥ १७ ॥

अत्र कश्चिदाह—किमनेन कथञ्चित् समाधानेन। सांख्याः खलु तत्त्वविदग्रगण्याः संज्ञपनं

वा पितरं वा...भृशमिव प्रत्याह, स पितृहा मातृहा....इति श्रौतलौकिकप्रयोगसत्त्वात्। अतो वेदनाजनकव्यापारो हिंसा। परंतु एवम्भूतेऽपि चिकित्सारूपव्यापारे भिषजि हिंसकत्वव्यवहाराभावात् अतिशयितसुखानुदर्कवेदनाजनकव्यापारो हिंसेति निष्कृष्टव्यम्। एवञ्च प्रकृते सा हिंसात्वाभिमतक्रिया पशुहितमिति, 'देवां इदेषि पथिभिः सुगेभिः' इति सुखोदर्कतया उक्ता यतः, तत् तस्मात् एषा हिंसात्वेन शंक्यमाना चिकित्सावत् भिषक्कृत्यवत् हिंसालक्षणानाक्रान्तैव भवति। अत एवेति प्रसिद्धं पाठं विहाय एषामिति पाठं दृष्ट्वा तन्निर्वाहः कृतः पदयोजनायाम्। एषां पशूनामिति। बहुवचनान्तपशुशब्द इह सुखोपस्थितो न भवति। अहिंसात्वे युक्तिरुक्ता; मानमप्याह ब्रूते इति। तत्र वधत्वेनाभिमतो व्यापारः वस्तुतो वधो न भवति, वधलक्षणस्यैवाभावादिति तदर्थः। ननु, 'पुराणेषु पशुयागं कुर्वन्तः परलोके पशुभिर्हन्यन्ते' इत्येवं हिंसामयत्वं पुरस्कृत्य कर्माणि निन्द्यन्ते। मनुश्चाह, 'कुर्यादन्यन्न वा कुर्यात् मैत्रो ब्राह्मण उच्यते' इति। ईदृशवचनशतविरोधाय हिंसात्वं पापञ्चाभ्युपेयमित्यत्राह स्तौतीति। इह हिंसामयकर्मविषये निन्दा अन्यत्= ज्ञानं स्तौति। निन्दावाक्यस्य अपार्थमादाय निन्दने न तात्पर्यम्। किन्तु परमात्मज्ञानं संपाद्यम्, केवलकर्मठत्वमयुक्तमिति ज्ञानस्तुतावेव। परमात्मज्ञानरहितः अनुत्पन्नसात्त्विकत्यागो राजसतामसश्च प्रायेण ख्यातिलाभादिदृष्ट्या प्रवर्तेत, तदा तेषु पशुवधपरिशेषेषु नामयज्ञेषु पशूनां न हितं स्यादित्याशय इति ॥

१७. सांख्यैः, 'दृष्टवदानुश्रविकः' इति वेदविहितस्यापि लौकिकस्येव निषिद्धत्वं पापहेतुत्वञ्चेष्टम्। प्रकृते हिंसाशब्दार्थानन्वयात् हिंसात्वाभावेऽपि हिंसाया इव मारणस्यापि तत्रतत्र

दोषमाहुः। अन्यथा कथं पुराणादिभिः पिष्टपशूपादानादिप्रसङ्गः उच्यत(क्रियते?) इति। इत्थं खलु साङ्ख्यानामभिप्रायः—'न हिंस्यात्' इति निषेधो रागप्राप्तहिंसाविषयः। 'आलभेत' इति वैधहिंसा विधिप्राप्ता। विधिनिषेधयोर्विरोधे विहितव्यतिरिक्तविषयो निषेध इति विषयभेदेन विधिनिषेधव्यवस्था कर्तव्येति मीमांसका वदन्ति। तन्न युज्यते। विरोधे सत्येव हि विषयभेदेन व्यवस्था कार्या। स एवमत्र न विद्यते। संज्ञपनविधिर्हि पश्वालम्भने(नेन) क्रतुसादृगुण्यमाह। 'न हिंस्यात्' इति निषेधो हिंसायाः पापहेतुत्वम्। एकमेव कर्म विधिनिषेधाभ्यामुभयमपि सुखदुःखात्मकं कार्यं करोतीति को विरोधः। तेन सविषान्नभक्षणन्यायेन हिताहितरूपं यज्ञादिकमिति। तदनुवदति—कर्तुरिति। सांख्यभक्ता इति परिहासवचनम्। उक्तेऽपि शुक्ले मार्गे पुनःपुनः परिचोदकः केवलं भक्त्यैव साङ्ख्यसिद्धान्तप्रक्रियां प्रलपतीत्यर्थः। अयमत्र निर्णयः—अहितत्वप्रसङ्गमेव निनारयितुं सयुक्तिके मन्त्रे चार्थवादे च जाग्रति, महाजनपरिग्रहादालम्भनविधिवचनप्रामाण्ये च तिष्ठति कथं सांख्यः पापसङ्करं प्रवदेदिति। तदिदमाह—निर्धूत इति। कथं तर्हि पुराणेतिहासादिषु पिष्टपश्वादिकल्पनं कथ्यत इत्याशङ्क्य तदपि कालविशेषनियतधर्मविशेषत्वान्न विरुध्यत इत्याह—पिष्टेति। यथा घटिकाव्यवस्थादिविशेषात् धर्मव्यवस्था धार्मिकैरेव परिगृह्यते, एवमिहापीति न कश्चिद्विरोधः॥२८५॥

(२८६) किञ्चोत्सर्गापवादक्रममिह जहतः कीदृशी नित्यहिंसा
शुद्धं न क्वापि सिध्येत् तव हि विधिपदं स्पृष्ट(स्पष्ट)तन्निषेधम्।
यत्रासत्यादि वैधं तदनु च विहिता निष्कृतिस्तन्निमित्ता
तत्रागत्या तथा स्यादितरवत्; अथवा केवलं तन्निमित्तम्॥ १८॥

पुनरपि सांख्यपक्षे दोषान्तरं समुच्चिनोति—किञ्चेति। तदुपपादयति—उत्सर्गेति। अयमर्थः—

---

निषिद्धतया यागे च 'पशुं, संज्ञपयति' इति मारणस्य विहिततया तत्रोत्सर्गापवादन्यायमवलम्ब्यैव तस्यापापत्वं वक्तव्यम्। सांख्यास्तु अत्रोत्सर्गापवादन्यायस्याप्रवृत्तिमाशयानाः विहितस्य निरवकाशत्वे उत्सर्गबाधः स्यात्। विधिनिषेधयोरेकार्थत्वे च निरवकाशता। इह तु संज्ञपनं क्रत्वर्थं; क्रतुप्रकरणे विहितत्वात्। मारणनिषेधस्तु पुरुषार्थः पुरुषे पापमुत्पादयन्नपि नैव क्रतुफलं निरोत्स्यति। अत इह यागे विहितं संज्ञपनं कर्तुर्दोषमप्यावहतु, क्रतोश्चोपकरोतु; विरोधाभावात्। अतो विधिरयं न निषेधं बाधते इत्याहुः। इमं सांख्यवादं निरस्यति निर्धूतं इति। मारणनिषेधोऽपि परवाधनर्थपर्यवसानचिन्तयैव। अभ्युदयहेतुत्वश्रुतिबलात् अनर्थहेतुत्वे वारिते सति न तत् निषेध्यम्। ननु पशुहिंसानिन्दनेन पिष्टपशुयागप्रवृत्तिर्महर्षीणामुपरिचरवसूपाख्याने भारते स्मर्यते। अतः पिष्टघृतादिना पश्वाकारं विधाय कर्मानुष्ठानविधानात् अशुद्धिः प्राणिपशुयागेऽभ्युपगन्तव्येत्यत्राह पिष्टेति। कृतयुगे पिष्टपशुर्विहितः। तथा कालान्तरेऽप्यधिकारिविशेषे स भवति। 'पशुमारणकर्मदारुणोऽप्यनुकम्पामृदुरेव श्रोत्रियः' इति कारुणिकस्यापि विधिबलात् दारुणत्वं भवतीत्येतन्न सार्वत्रिकम्। केषाञ्चित् श्रीकूरनाथतुल्यानां धैर्यविष्टम्भदूरमेव हि हृदयं भवति। ते पिष्टपशुनैव कृतकृत्या भवितुमर्हन्ति। अतः प्राणियागस्य निष्पापत्वस्वीकारे बाधकं न किञ्चिदिति॥ घटिकेति। कालापनोदत्वात् मुहूर्तत्रयानन्तरमेव शुद्ध्या च मानुष्ठानमिति॥ २८५॥

१८. उत्सर्गापवादन्यायमपि प्रदर्श्य सांख्यं निरस्यति किञ्चेति। 'यदाहवनीये जुहोति'

यद्यपि, 'स्वर्गकामो यजेत' इत्यादिषु काम्यविधिषु स्वर्गरागात् तत्साधनक्रतूपकारकहिंसायां पुरुषः प्रवर्तत इति तत्र हिंसांशस्य पापरूपत्वात् तत्फलं ब्रीह्यादिस्थावरभावेनानुभूयत इत्युच्यते। तथाऽप्यत्र उत्सर्गापवादन्यायं जहतस्तव, 'शरदि पशुमालभेत' इत्यादिनित्यहिंसा कथं सिध्येत्। तत्र हिंसा नित्यप्राप्ता न रागजन्या। ननु तत्रापि रागोऽस्ति, सर्ववर्णिनामपि स्वधर्मानुष्ठानेऽपरिमितसुखप्राप्तिवचनादिति चेत् न; नित्यकाम्यलोपप्रसङ्गात्। तदिदमाह—कीदृशी नित्यहिंसेति। नित्यहिंसैव न सिध्येदित्यर्थः। ननु पिष्टादिनापि नित्यत्वसिद्धेर्विरोधो नास्तीति चेत्, तत्राह तव हीति। सर्वत्रोत्सर्गापवादन्यायं जहतस्तवेत्यर्थः। श्रुतिपुराणादिषु पञ्चमहायज्ञप्रस्तावे, 'पञ्च सूना गृहस्थस्य वर्तन्तेऽहरहस्तथा। 'खण्डनी पेषणी' इत्यादिना पेषणादेरपि हिंसात्वकथनात् तव विहितेषु

---

इति सामान्यविधिः, पदे जुहोतीति विशेषविधिः। तत्र विशेषव्यतिरिक्तविषयकत्वं सामान्यविधेः सर्वस्वीकृतमिति सोऽयमुत्सर्गापवादन्यायः। तद्वत् हिंसासामान्यनिषेधः हिंसाविशेषविधिविषयव्यतिरिक्तविषयक इति उत्सर्गापवादनयप्रवृत्तिरिहापीष्टा मीमांसकानाम्। शांकरादावप्येवम्। व्याख्यातारस्तत्र विवदन्ते। सांख्यास्तु क्रत्वर्थतया विधिं पुरुषार्थतया निषेधञ्चैकत्रापि घटयन्तो नात्रोत्सर्गापवादन्यायप्रवृत्तिमनुमन्यन्ते। श्रीभाष्ये सांख्यरीत्या पूर्वपक्षमुपक्षिप्य तत्परिहारे उत्सर्गापवादन्यायेन कार्ये तदुपेक्ष्य हिंसात्वाभावात् न निषेधप्रसक्तिरिति प्रकारान्तरानुसरणात् सांख्यवदेवोत्सर्गापवादन्यायाप्रवृत्तिरिहेष्टा स्यादित्यभ्यूहितुमवसरोऽस्ति। ननु तर्हि सौत्रामणीयेष्टिविहितसुरापानादौ, 'न सुरां पिबेत्' इति निषेधविषयत्वस्यापि सांख्यरीत्या प्रसंगे कः परिहारः? न हि तत्राहिंसात्ववत् अत्रासुरापानत्वमेव वक्तुं कश्चित् प्रगल्भेतेति चेत्—सत्यम्। तादृशे विशेषविधिस्थले सर्वत्र, 'नात्र पापमस्ति' इति विशेषवचनसत्तां पुरस्कृत्यैव स प्रसंगो वारणीयः। इत्थमेव टीकातात्पर्यचन्द्रिकादावुक्तम्। उत्सर्गापवादन्यायप्रवृत्तिमेवोपपाद्य तान्त्रिकरीत्यैव समाधिरप्यभिमत इति च सुवचम्। भाष्यार्थदर्पणो द्रष्टव्यः। अत्र चोत्सर्गापवादन्यायं पदाहवनीयस्थले परं स्वीकृत्य इह विशेषविधिविशिष्टसामान्यनिषेधस्थले तमस्वीकुर्वतः सांख्यस्य पक्षे दोष उपक्षिप्यते। जहत इत्यन्तेन तस्य तन्न्यायप्रवृत्तेरिष्टत्वं ज्ञाप्यते। इहोत्सर्गापवादन्यायं जहतः सांख्यस्य तव नित्यहिंसा कीदृश्यभिमता। काम्यकर्मणि हिंसायां क्रत्वर्थतया विधिविषयत्ववत् पुरुषार्थनिषेधविषयत्वस्यापीष्टौ नित्यज्योतिष्टोमपशुबन्धादिसंबन्धिहिंसायामपि तथात्वमिति अशुद्धत्वादकरणापत्तिः। तव हि विधिपदं=विधेयं सर्वं स्पृष्टतन्निषेधम् तत्तन्निषेधविषयोऽपि भवतीति कुत्रापि कर्मणि शुद्धत्व विधिविषयस्य न भवेत्। न च नित्ये पिष्टपशु पिष्टपश्वादावपि किञ्चिद्रूपेण स्यादेव हिंसा। 'तण्डुलान् पिनष्टि' इति विहितपेषणादावपि, 'पञ्च सूना गृहस्थस्य' इति पञ्चमहायज्ञविधायकवाक्यार्थवादानुसारेण दोषसद्भावावगमात्। नन्वियमिष्टापत्तिरेव। आनुश्रविके सर्वत्र दोषसद्भावस्य सांख्योक्तत्वात्। पञ्च सूनोपन्यासस्तु न घटते। तत्र यद्विषये पेषणादि विहितम् तस्य सजीवत्वेऽपि सुखदुःखवेदनाविरहेण हिंसात्वाप्रसक्तेः तदुपश्लिष्टजन्त्वादिहिंसापत्तावपि तत्र विधिविषयत्वस्य दुर्वचतया एकत्र विधिनिषेधयोरसमावेशादिति चेत्—बलवदनिष्टाननुबन्धीष्टसाधनत्वं विधिगम्यम्, इष्टाधिकानिष्टसाधनत्वं निषेधगम्यम्। एकत्र तदुभयसमावेशः

निषेधाविषयः किंचिदपि नास्त्येव ॥ एवमस्त्विति चेन्न ; मन्त्रार्थवादविरोधस्य पूर्वमेवोक्तत्वात् । ननु 'विवाहकाले ऋतुसम्प्रयोगे' इत्यादिना, 'अनाक्रोश्यमाक्रोश्य, अनृतं वोक्त्वा त्रिरात्रमक्षारलवण-भोजनम्' इति चानृतकथनं विधाय तत्प्रायश्चित्तं विधीयते; तत्र कथमिति चेत्-सत्यं; तत्रागत्या तदाश्रयणमित्याह—यत्रासत्यादि वैधमिति । इतरवदिति । अनृतकथनविधानवत् प्रायश्चित्त-विधानमपि स्यादित्यर्थः । अथवा तत्र विहिते दोष(षा ?)सद्भावेन प्रायश्चित्तं न विधीयते । किंतु जातेष्टिवन्नैमित्तिकमेव किञ्चित् तद्विधीयत इति न विधिनिषेधयोरेकविषयत्वमित्याह-अथवा केवलं तन्निमित्तमिति । तत्=अनृतकथनं पुत्रजननवत् निमित्तमात्रमित्यर्थः ॥ २८६ ॥

(तृतीयाध्यायप्रथमपादस्य सांख्यमायावादिपक्षनिराकरणे विशेषोपकारकत्वप्रदर्शनम् ।)

(२८७) अश्लिष्टं विग्रहाद्यैर्नभ इव मुसलैः क्षेत्रिणं केचिदाहुः
कर्माकर्तारमेवं; फलमपि विविधोपाधिभेदैकनिष्ठम् ।
अव्यक्तस्यापवर्गं ; भवभुजमपि चानादिमुक्तस्वभावम् ;
तेषामित्थं मनीषां बहिरकृत नयैरेष वैराग्यपादः ॥ १९ ॥

एतस्य पादस्य सांख्यमायावादिनोः पक्षनिराकरणे विशेषेणोपकारकत्वं दर्शयति—अश्लिष्टमिति । एवं किल सांख्याः प्राहुः ; केचिन्मायावादिनश्च—बाधकैर्देहादिभिरश्लिष्टं, नभो मुसलैरिव, क्षेत्रिणं प्राहुः । न ह्याकाशो मुसलप्रहारैर्बाध्यते । एवं बाधकैर्देहादिभिः सांख्यमृषावाद्युक्तमात्मतत्त्वमपि न बाध्यते असङ्गतत्वा(असंगत्वा ?)दिति । इत्थं फलभोक्तृत्वं नास्तीत्युक्त्वा कर्तृत्वमपि नास्तीत्याह— कर्माकर्तारमिति । अत्राप्याहुरित्यनुषज्यते । तर्हि जीवस्य कर्तृत्वाभावे कुत्र फलमित्याशङ्क्याह— फलमित्यादि । जीवोपाधिभूताहङ्कारनिष्ठमित्यर्थः । तर्हि सांसारिकफलमस्त्वहङ्कारादेः ; मोक्षः कस्येत्याशङ्क्य मोक्षोऽपि प्रकृतेरित्याह—अव्यक्तस्येति । 'संसरति बध्यते मुच्यते च नानाश्रया

---

शास्त्रसंमतो न भवति । अतः सांख्यमतं न शास्त्राभिमतम् । तथाच सूत्रम्, 'अशुद्धमिति चेन्न शब्दात्' इति। अथ सांख्यः पृच्छति-असत्यादि अनृतवचनादि, 'नानृतं वदेत्' इत्यादिना निषिद्धमपि क्वचित् वैधं भवति, 'विवाहकाले रतिसंप्रयोगे' इत्याद्यभ्यनुज्ञाविधिविषयत्वात् । तत्रापि पापमस्तीति सांख्यमतमेव शास्त्रेणापि स्थाप्यते, 'अनृतं वोक्त्वा त्रिरात्रमक्षारलवणभोजनम्' इति प्रायश्चित्तविधानादिति। तदाह यत्रेति। परिहरति तत्रेति । प्रायश्चित्तविधानबलात् तत्र पापेष्टावपि अन्यत्र प्रायश्चित्तानुक्त्या पापाभाव एवेति । इतरवत् अनभ्यनुज्ञातानृत इव। अथ तस्य प्रायश्चित्तरूपताऽपि नेति समाधानान्तरमाह अथवेति । 'पञ्चानृतान्याहुरपातकानि' इति पापाभावविषयकस्पष्टवचनविरोधात् न तत् निष्कृतिरूपम् किंतु, 'उपरागे स्नायात्' इत्यादिवत् अनृतवचनविशेषे नैमित्तिककर्मविशेषस्य विधानम् । एतदकरणे प्रत्यवायः स्यात्; न त्वनृतवदनात् पापमिति ॥ २८६ ॥

१९. सांख्यानुसारिणो मृषावादिनः, 'आत्मा नित्यमुक्तो निर्विकारः । अतो न बन्धो न मोक्षोऽस्य । बुद्धिस्तु अव्यक्तपरिणामः देहाद्युपाध्युपश्लेष-कर्मकर्तृत्व-फलभोक्तृत्ववती । अत उपधौ उपाधावेव सर्वम् । भवभुक्त्वेन मन्यमानो जीवस्तु अनादितयामुक्त एवेत्याहुः । अत्र पादे, 'रंहति संपरिष्वक्तः,

प्रकृतिः' इति हि साङ्ख्यप्रक्रिया। 'तस्मान्न बध्यते नापि मुच्यते नापि संसरति कश्चित्' इति जीवस्यानादिमुक्तत्वमेवाहुः। 'पुरुषस्तु सदा पुष्करपलाशवन्निर्लेपः' इति साङ्ख्यानामाख्यानम्। अत्र सर्वत्र आहुरित्यन्वयः। इदं साङ्ख्यमृषावादिनोरभिमतं जीवस्यैव संसारसम्बन्धप्रतिपादनात् सूत्रकारो निराचकारेत्याह—तेषामिति। अयं वैराग्यपादः साङ्ख्यमृषावादिनोर्मतं बहिरकृत=निराचकारेत्यर्थः। अत्रायं विशेषः-साङ्ख्यानां प्रकृतिः सत्या, प्रकृतिसम्बन्धप्रयुक्ताः सुखदुःखादयो दोषा [1]मिथ्येति पक्षः। मृषावादिनां पुनर्मायापि मिथ्या तत्सम्बन्धप्रयुक्तसंसारोऽपि मिथ्येति पक्षः। पक्षद्वयमपि संसारसम्बन्धपारमार्थ्यप्रतिपादनेन निराकृतमित्यर्थः॥ २८७॥

तृतीयाध्यायप्रथमपादाधिकरणार्थानां विभज्य निरूपणम्—

(२८८) पादे त्वर्थाः षडस्मिन् वपुरिह विजहद् भूतसूक्ष्मैस्सहेयात्;
भुक्तस्वर्गोऽवरोहेदनुशयसहितो मात्रया[ऽ?] भिन्नमार्गः।
चन्द्राबाप्त्यादि न स्यान्निरयपथजुषाम्; अम्बरादौ सदृक्त्वं
तस्माच्छीघ्रोऽवरोहः; परवपुषि चिरं व्रीहिपूर्वे तु योगः॥ २०॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां
तृतीयस्याध्यायस्य प्रथमः पादः॥

अत्रोक्तानां षण्णामधिकरणानामर्थभेदान् विभज्य दर्शयति—पाद इति। अस्मिन् पादे षडर्थाः प्रतिपाद्याः। तानेवार्थान् अनुक्रमेणाह—वपुरिति। वपुः=देहं विजहज्जीवो भूतसूक्ष्मैस्सहेयादित्येकोऽर्थः। अपरस्तु—भुक्तस्वर्गः सानुशय एव यदेतमनेवश्चावरोहेदिति। तृतीयःपुनः निरयपथजुषां=नरकमार्गेण गच्छतां चन्द्रावाप्तिर्न स्यादिति। चतुर्थोऽप्याकाशादिसादृश्यमेव; न पुनस्तद्रूपेण जन्मेति। आकाशादेरवरोहः शीघ्र एवेति पञ्चमः। षष्ठोऽपि परशरीरे व्रीह्यादौ चिरं योगमात्रमिति।

---

सोमो राजा भवति, पुरुषवचसः, कृतात्ययेऽनुशयवान्, यथाकारी यथाचारी, संयमने त्वनुभूय, योनेश्शरीरम्' इत्यादिभिः विग्रहेन्द्रियश्लिष्टत्व-कर्तृत्व-फलभोक्तृत्वादि स्पष्टं घुष्टम्। अतः पाद एष नयैः= अधिकरणैरर्थात् तेषां मनीषां बहिरकृत=निराचकार॥ २८७॥

२०. अधिकरणानां षण्णामर्थमाह पादे इति। इह भूमौ वपुः स्थूलदेहं विजहत् त्यजन् जीवः परलोकं भूतसूक्ष्मादिसंपरिष्वक्तः इयात् गच्छेत्। स्वर्गमनुभूयावरोहन् अनुशयवानेवावरोहेत्। आगमनमार्गे गमनमार्गनिविष्टेषु आकाश एवागम्यते; अन्यत् सर्वमन्यदेव। अतो मात्रया स्वल्पांशमात्रेण पूर्वेणोपलक्षितः भिन्नमार्ग एव भवति। मात्रया अभिन्नेत्यर्थो वा। इष्टादिकारिभिन्नानां=नरकमार्गे गच्छतां पुनर्जन्मार्थं चन्द्रलोकप्राप्तिः पञ्चमाहुत्यपेक्षा च न भवति। आकाशवाय्वादि चाऽऽगच्छन् न तद्भावं गच्छति; किंतु पृथग्व्यवहारानर्हसंसर्गविशेषरूपं साभाव्यम्। प्रायोऽवरोहः सर्वत्र शीघ्र एव। जायन्त इति पदश्रवणेऽपि व्रीहिपूर्वे व्रीह्योषधिप्रभृतौ जीवस्यावरोहतः शरीरत्वेन परिग्रहो नास्ति। तस्य परवपुष्ट्वात्=

---

1, मिथ्येति पक्ष इति। बुद्धिसंबन्धितया सत्यानामपि जीवसंबन्धित्वांशे मिथ्यात्वम्।

योगस्तु—संसर्गमात्रमित्यर्थः ॥ २८८ ॥

इति निखिलतार्किकचूडामणिना सर्वतन्त्रस्वतन्त्रेण
श्रीकुमारवेदान्ताचार्यपरनाम्ना श्रीमद्वरदगुरुणा
विरचिते शारीरकाधिकरणचिन्तामणौ
तृतीयस्याध्यायस्य प्रथमः पादः ॥

—०—०—

## ॥ तृतीयस्याध्यायस्य द्वितीयः पादः ॥

(२८९) ब्रह्मैव स्वैः स्वभावैर्बहुमुखमवदत् प्राक्तनाध्याययुग्मे
तस्येहाऽऽकृष्य चिन्ता किमिति पुनरसौ साधनाध्यायमध्ये ।
मैवं ; विद्याः प्रभेत्तुं विशदयति परं ; तद्धि तद्रूपभेदात्
सिद्धोपायादिभावं प्रथयति च विभोः प्राप्यतृष्णाप्रथिम्ने ॥ १ ॥

अत्र वैराग्यपादानन्तरमुभयलिङ्गपादारम्भमाक्षिप्य समाधत्ते—ब्रह्मैवेति । पूर्वमुभाभ्याम् अध्यायाभ्यां सर्वैरपि स्वैः स्वभावैरन्वितं ब्रह्म प्रत्यपादि । अयञ्च साधनाध्यायः । अस्मिन्नध्याये समन्वयाविरोधाध्यायप्रतिपाद्यस्य ब्रह्मणः पुनराकृष्य चिन्ता किमर्थेति चोदकाभिप्रायः । चोद्यं निराकरोति—मैवमिति । अयमत्राभिप्रायः—सत्यमयं साधनाध्यायः। अथापि ब्रह्मचिन्ता विशेषतः कर्तव्यैव । साधनं हि द्विविधम्—साध्योपायः सिद्धोपायश्च । सिद्धोपाय ईश्वरः । साध्योपायः सद्विद्यादिभेदवती तद्भक्तिरेव । विद्याभेदश्च रूपभेदात् । रूपञ्च विद्यायाः प्राधान्येन वेद्यं ब्रह्मैव ।

तत्तज्जीवान्तरशरीरत्वात् । स्वर्गे शरीरं प्राप्तस्य भूमौ योनिप्राप्त्यनन्तरमेव स्थूलशरीरप्रादुर्भावादिति चकार्थः; साधिता इति शेषः ॥ २८८ ॥

इति वात्स्यसत्वकवर्तिवीरराघवाचार्यकृतिषु
अधिकरणसारावलिव्याख्यायां सारार्थरत्नप्रभायां
तृतीयस्याध्यायस्य प्रथमः पादः ॥

—०—०—

## ॥ तृतीये द्वितीयः पादः ॥

१. उभयलिङ्गपादोऽयं निर्दोषत्वकल्याणगुणाकरत्वविशिष्टब्रह्मविषयकः । तत्त्वहितपुरुषार्थपरे शारीरके तत्त्वांशस्य पूर्वद्विके विस्तरेण निरूपितत्वात् इयं पुनरुक्तिः स्यादिति शंकित्वा परिहरति ब्रह्मैवेति । ब्रह्मैव=यदत्र पादे निरुरूपयिषितम्, तदेव स्वैः स्वभावैः ईक्षणाऽऽनन्दमयत्वाप्राकृतविग्रहाद्यनेकाऽसाधारणधर्मैर्विशिष्टतया सूत्रकारः स्थापयामास पूर्वद्विके । तत एव प्राप्यविषयतृष्णायाः सुलभत्वात्, 'परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि' इत्युक्तक्रमेण प्राप्यतृष्णां जनयित्वा इतरवैतृष्ण्यं पूर्वपादे जनयामासेत्येवमुक्तिसंभवात् इतरविषयवैतृष्ण्यजननानन्तरं पुनस्तदाकर्षणं किमर्थम् । न केवलं पुनरुक्तिः, संगतिश्च नास्ति ; साधनाध्यायत्वादस्य साधनस्य भक्तियोगतदंगादेरेव वक्तव्यत्वात् । तदाह साधनाध्यायमध्ये इति । मैवमिति । विषयान्तरवैतृष्ण्यस्येव प्राप्यविषयतृष्णाया अपि तत्तद्वस्तुज्ञानाधीनत्वात्

तस्य च भेदस्तद्गुणभेदात्। एवञ्च साधनाध्यायप्रतिपाद्यसाधनरूपभक्तिविषयत्वेन, स्वयञ्च सिद्धोपायतया साधनाध्याये ब्रह्मचिन्ता विशेषेण सङ्गच्छत इति। तत्र ब्रह्मचिन्तनस्य विद्योपकारकत्वं तावदाह—विद्या इति। तद्धि तद्रूपभेदादिति। तत् = ब्रह्मविशदीकरणं, तद्रूपभेदात् = तद्गुणभेदात् तेनोभयलिङ्गत्वादिविशेषणोपेतं ब्रह्मात्र चिन्तनीयमित्यर्थः। अस्य सिद्धोपायत्वप्रतिपादनार्थं ब्रह्मचिन्तनं सफलमित्याह—सिद्धेति। द्वयं खलु विशेषतः प्रतिपाद्यम्—ब्रह्मणः सिद्धोपायत्वं सिद्धप्राप्यत्वञ्च। एतदुभयप्रतिपादनं प्राप्ये ब्रह्मणि तृष्णाविशेषसिद्ध्यर्थम्। तृष्णाविशेषाभावे खलूपायाधिकार एव पुरुषस्य न स्यात्। स्वर्गकामो हि यागादिष्वधिकुरुते। एवं परब्रह्मप्राप्तिकामो हि ब्रह्मोपासनेष्वधिकुर्यात्। तथा चोभयलिङ्गपाद उपासनानुष्ठाने विशेषेणोपकरोतीति शारीरकशास्त्रसारोऽयं पाद इति न नैरर्थक्यप्रसङ्गः। तृष्णाप्रथिम्न इति—तृष्णाभिवृद्ध्यर्थमित्युच्यते। अभिवर्धते ह्यत्र तृष्णा, 'स स्वेनैव फलप्रदः' इत्युक्तप्रकारेण स्वप्रापकत्वेन स्वयमेव ब्रह्मणि परिज्ञाते इति भावः॥ २८९॥

(२९०) नैर्गुण्यं ब्रह्मणश्चेत्, वितथ इह गुणैर्ब्रह्मविद्याविभागः
सोऽस्त्वेतैः कल्पितैश्चेत्, श्रुतिमतविहतिः; नात्र दृष्टिक्रमोऽपि।
निर्दोषत्वञ्च नित्यं यदि वदसि, मुधा दोषशान्त्यर्थयत्नः
कल्प्यं चेत्, दुष्टता स्यात् प्रकृतिरिति परक्षिप्तये चैष पादः॥ २॥

किञ्च अखिलहेयप्रत्यनीककल्याणैकतानताप्रतिपादनपरोऽयमुभयलिङ्गपादो मृषावादिप्रभृतीनां परेषां प्रतिक्षेपे विशेषेणोपकरोतीति सफल एवेत्याह—नैर्गुण्यमिति। ब्रह्मणो नैर्गुण्यं चेत्, गुणोपसंहारपादाधिकरणेषूभयलिङ्गपादप्रतिपादितकल्याणगुणभेदैर्ब्रह्मविद्याविभागो वितथस्स्यात्। ननु

---

ज्ञानं जनयितुं वस्तु वक्तव्यमेव। परं प्रागेवोक्तत्वान्न वक्तव्यमस्तीति शंक्यते। गीतादशमाध्यायदृष्टरीत्या उत्कटतृष्णायाः गुणविभूतिविस्तारज्ञानाधीनत्वात् सामान्यतो ज्ञातानामपि विशेषरूपेण स्थूणानिखातरीत्या जैत्रसर्वदशानिर्वाहकत्व-दुष्टसर्वसंसर्गसमानकालिकनिर्दोषत्व-निर्विकारत्व-निखिलकल्याणाकरत्व-निरतिशयप्राप्यत्वप्रापकत्वादिधर्माणां ज्ञानमुत्पादयितुमयं द्वितीय. पादः। एवं तृष्णातिशये सत्येव विद्यामनुतिष्ठेदिति विद्यावान्तरभेदं तृतीये पादे दर्शयिष्यन् तदर्थमपि पूर्वज्ञातं विशदयति। तत् विशदीकरणं हि तद्रूपभेदात् ब्रह्मणो विशेषणभूतगुणमूर्त्यादिभेदमादायैव। यत्तु साधनाध्याये कथं संगतिरिति, तत्राप्याह सिद्धेति। साधनं हि सिद्धरूपं साध्यरूपञ्च। तत्र साध्योपायात् धर्मत एव फलमिति मतिं परित्यज्य, 'परस्य पुंसः प्रसादनार्थः साध्योपायः'; 'धातुः प्रसादान्महिमानमीशम्', 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' इति सिद्धोपायप्राधान्यं प्रथममेवमुपवर्ण्य पश्चात् तत्प्रसादकं भक्तियोगं तदुपकारकं धर्मादि च क्रमेण वदति। आदिना उपेयत्वपरिग्रहः; पराधिकरणे तदुक्तेः। उपेयान्तरासंभवनिर्धारणं हि आवश्यकमेव। प्राप्यतृष्णाप्रथिम्ने इति पादफलोक्तिः॥ २८९॥

२. मुख्यं फलं प्रोक्तम्। परमतक्षेपरूपमार्थिकं फलान्तरमाह श्लोकद्वयेन। सूत्रकारो यावत् यावत् प्रमेयं विस्तृणीते, तावत् तावत् परमतं प्रतिक्षिप्तं भवतीति। तत्र निर्गुणं निर्दोषं निर्विशेषं ब्रह्मेति परैरुच्यते। तत्र निर्विशेषत्वमेव मुख्यं वक्तव्यम्। जीवब्रह्मैक्यवादात् दोषप्रसक्तौ तद्वारणाय

कल्पितैरेव गुणैर्ब्रह्मविद्याविभागस्स्यादिति परपक्षमनुवदति—सोऽस्त्विति । तत् प्रतिक्षिपति—श्रुतिमतविहतिरिति । अनादिनिधनाविच्छिन्नसम्प्रदायतया प्रतिपन्नस्य श्रुत्यर्थस्य कल्पितत्वे किम् अकल्पितं स्यात् ? तथा च गुणानां कल्पितत्वं वदन् वेदान्तबहिर्भूत इत्यर्थः । ननु वेदान्तेऽपि, 'मनो ब्रह्मेत्युपासीत' इत्येवमादिषु, 'गरुडमात्मानं जानीयात्' इत्यादिवत् दृष्टिविधिर्दृश्यते ; तद्वद्त्रापि स्यादित्याशङ्क्य निराकरोति-नात्रेति। एकत्रागत्या दृष्टिविधिपरिग्रहे सर्वत्रापि तथैव स्यादिति न वक्तुं शक्यत इत्यर्थः। अन्यत्रान्यगुणारोपेणानुसन्धाने हि दृष्टिविधिः। ब्रह्मणस्तु सत्यत्वज्ञानत्वादिकं स्वरूपनिरूपकगुणत्वादबाध्यमित्यर्थः । एवं कल्याणगुणैकतानत्वप्रतिपादकप्रमाणविरोधात् मृषावादिनो दोषमुक्त्वा निर्दोषत्वप्रतिपादकप्रमाणविरोधादपि मृषावादिपक्षस्य दुष्टत्वमाह-निर्दोषत्वमिति । ब्रह्मनिर्दोषत्वञ्च नित्यमेवेति प्रमाणानुसारेण यदि वदसि, तदा ब्रह्मव्यतिरिक्तस्य संसरतो जीवस्याभावात् ब्रह्मणो नित्यनिर्दोषत्वाच्च मुधा=निरर्थक एव संसाररूपदोषशान्त्यर्थो वेदान्तश्रवणादिप्रयास इति नैरर्थक्यमेव शास्त्रारम्भस्य । तर्हि निर्दोषत्वं ब्रह्मणः कल्प्यमिति वदाम इति परस्याभिप्रायमाशङ्क्य प्रतिक्षिपति-कल्प्यमिति । निर्दोषत्वं कल्प्यं चेत्, दुष्टैव ब्रह्मणः प्रकृतिस्स्यादिति पुनश्शास्त्रारम्भवैयर्थ्यमिति परेषां प्रतिक्षेपायोभयलिङ्गपादः सफल एव ॥ २९० ॥

(२९१) किञ्चादौ चिन्त्यभावः प्रमितिविषयता स्वप्रभत्वं सुखत्वं
विश्वाधिष्ठानता च स्वबहुभवनधीर्निर्विशेषे कथं स्यात् ।
सर्वश्रुत्यर्थहानं स्ववचनविहतिः सर्वमानैश्च बाधो
मायावैयात्यभाजामिति सगुणदशोपास्तिपादश्च दुस्स्थः ॥ ३ ॥

इत्थं निर्विशेषत्वस्य मिथ्यात्वे दोषं दृष्ट्वा पुनस्सत्यत्वं वदतो बम्भ्रम्यमाणस्य मृषावादिनो बहूनपि दोषानाह—किञ्चेति । ब्रह्मणो निर्विशेषत्वपारमार्थ्ये, ब्रह्मजिज्ञासा कर्तव्येति आदौ चिन्त्य-

---

निर्दोषत्वोक्तिः । कल्याणगुणाकरत्ववादिमतनिरासाय निर्गुणत्वोक्तिः । यदि नैर्गुण्यं ब्रह्मणोऽस्मिन् पादे निर्दिधारयिषितम्, तर्हि अनन्तरपादे गुणोपसंहारः क्रियमाणोऽनुपपन्नः स्यात् । इह=अस्मिन्नध्याये (उत्तरपादे) । नैर्गुण्यप्रतिपादकसूत्रं किमपि नास्तीत्यन्यदेतत् । कल्पितैः आरोपितैः गुणैः सः विद्याविभागोऽस्तु इति चेत्-'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इत्यादिश्रुतितात्पर्यभंगः । ननु, 'मनो ब्रह्मेत्युपासीत' इत्येवमतत्त्वोपासनमपि विहितं दृश्यत इत्यत्राह नात्रेति । विद्याभेदानां मुक्तिहेतुत्वात् तत्त्वज्ञानत्वं दृष्टित्वाभावो भवताऽपि संमन्यते । तत्क्रतुन्यायेन यथोपासनफलवचनाच्च तात्त्विकत्वं सिद्धम् । उपासनार्थतां विहाय तत्त्वपरेष्वपि वाक्येषु गुणगणादिवर्णनात् कल्पितत्वकथाया नैवावकाश इति । अथ निर्दोषत्वविषये आह निर्दोषत्वमिति । जीवो निर्दोषब्रह्मज्ञानात् स्वयमपि निर्दोषो भवतीति शास्त्रम् । तत्र जीवब्रह्मैक्यं वस्तुतो निर्दोषत्वञ्च यदि मन्यसे, जीवस्य निर्दोषत्वात् तदर्थयत्नो व्यर्थः स्यात् । तत् निर्दोषत्वं ब्रह्म वा तद्भिन्नं वा । आद्ये उक्त एव दोषः । अन्त्ये तत् कल्प्यमेव स्यात् । तस्य कल्प्यत्वे तत्प्रतियोगिनो दोषाः सत्याः स्युः । तदा च दुष्टैव ब्रह्मणः प्रकृतिः स्यात् ॥ २९० ॥

३. पूर्वोक्तदूषणदूषितं निर्विशेषत्वं विधान्तरेणापि दूषयति किञ्चेति । निर्विशेषवादी शारीरकं तत्परतया व्याकुर्यात् । आदौ ब्रह्मजिज्ञासापदोक्तजिज्ञासाविषयत्वं कथम् । अत्र ज्ञायात्वर्थः

स्ववादो न स्यात्, तथा प्रमाणगोचरत्वमपि। तथैव स्वसिद्धान्तसारभूतं स्वयम्प्रकाशत्वमानन्दरूपत्वं विश्वाध्यासाधिष्ठानत्वं 'बहु स्याम्' इति स्वस्य बहुभवनसङ्कल्पः, एतादृशं सर्वमपि गुणजातं निर्विशेषे ब्रह्मणि कथं स्यात्? न कथंचित् स्यादित्यर्थः। एते गुणा यदि परमार्थाः, तदा सगुणवादप्रसङ्गः। अपरमार्थाश्चेत्, स्वयम्प्रकाशत्वानन्दत्वयोरप्यपरमार्थत्वे स्वसिद्धान्तस्य मूलोच्छेदः। बौद्धादिभ्यो वैषम्यञ्च किं स्यात्॥ अयमर्थविरोध उक्तः; श्रुतिविरोधमप्याह—सर्वेति। श्रुतिप्रमाणविरोधमुक्त्वा स्ववचनविरोधमप्याह—स्ववचनेति। प्रत्यक्षादिकृत्स्नप्रमाणविरुद्धवादित्वादिकं मृषावादिनः सुप्रसिद्धमेव। 'दुर्घटत्वमविद्याया भूषणं न तु दूषणम्' इति तत् भूषणं चेत्; ब्रह्मैवाविद्या, निरधिष्ठान एव भ्रमः, निष्प्रकाशमेव ब्रह्मेत्यादिकमप्यत्यन्तदुर्घटं श्रेष्ठमेव भूषणं स्यादिति माध्यमिकविजयतूर्यमेव जोघुष्येत। मायावैयात्येत्यादि—मायाधार्ष्ट्यात् कष्टां दशामापन्नानामष्टपादकल्पानां मृषावादिनामिह गुणोपसंहारपादप्रतिपाद्यं सकलमपि सगुणोपासनं समूलोन्मूलनमर्हतीति सर्वशास्त्रव्याकोपः॥ २९१॥

(२९२) त्यक्तं दोषैर्गुणाढ्यं यदि पुनरिह तद् ब्रह्म चिन्त्येत पादे,
जीवस्वप्नाद्यवस्थामननमथ कथं संघटेतेति (जाघटीतीति) चेन्न।
स्वाप्नार्थस्रष्टृभावप्रभृतिबहुविधब्रह्ममाहात्म्यसिद्धयै,
जन्तोरस्य स्वमुक्तावतिपरवशताज्ञप्तये चैतदत्र ॥ ४ ॥

अस्मिन् उभयलिङ्गपादे यदि ब्रह्म चिन्त्यमुच्यते, तर्हि जीवस्य स्वप्नाद्यवस्थाकथनं कथं सङ्घटेतेत्याशङ्क्य स्वप्नादिसृष्टिरपि भगवत्सङ्कल्पादेव सिध्यतीति तत्प्रदर्शनस्यापि भगवन्माहात्म्यप्रदर्शनपरत्वादस्मिन् पादे सङ्गतिर्युज्यत इति परिहरति—त्यक्तमिति। अयमत्र शब्दार्थः—दोषैस्त्यक्तं गुणाढ्यं

फलं प्रमितिरिति भामत्युक्तम्। प्रमितिविषयत्वं शास्त्रयोनित्वम्; तत् कथम्। न जातु कश्चित् नाहमिति विपर्येति, न संदेग्धि; अतो नित्यस्वयंप्रकाशमिति शांकरोक्तम्। तत् स्वप्रभत्वं स्वयंप्रकाशत्वं धर्मभूतं कथम्? समन्वयाधिकरणसिद्धमानन्दरूपत्वम् जन्माद्यधिकरणसिद्धजगत्कारणत्वप्रयोजकमीक्षत्यधिकरणलभ्यं मिथ्याभूतसर्ववस्त्वधिष्ठानत्वं तादृशकारणत्वनिर्वाहकबहुभवनसंकल्प इत्यादिकं नेष्यते चेत्—न शारीरके विचार्यं स्यात्। इष्यते चेत्, न निर्विशेषत्वम्। एवञ्च सर्वश्रुत्यर्थत्यागः। जिज्ञास्यत्वादिकमुक्त्वा निर्विशेषमित्यपि कथनात् व्याहतिः। सविशेषब्रह्मजगत्सत्यत्वादिपरसर्वप्रमाणबाधितत्वञ्च मायावैयात्यभाजाम्। मायया धार्ष्ट्यं भजताम्। कथं सर्वमनुपपन्नमुच्यत इति प्रश्ने, पक्षान्तरवत् स्वपक्षोऽपि दुर्निरूपश्चेत्—सर्वं दुर्निरूपमिति असत्पक्षजय एवेति धृष्टं कथयतामित्यर्थः। ननु नास्मन्मते सर्वश्रुत्यर्थहानम् सगुणवाक्यानामुपासनविध्येकवाक्यतया सार्थक्यादित्यत्राह सगुणेति। उपासनलभ्यस्य फलस्य, 'न च पुनरावर्तते', 'सर्वं ह पश्यः पश्यति' इति नित्यत्व-सविशेषत्वरूपेण पारमार्थिकत्वस्य सिद्धतया उपासनार्थं सगुणत्वं कल्पितमित्युक्त्यसंभवात्॥ २९१॥

४. परमात्मन उभयलिङ्गत्वनिरूपणं चेत्-पादकृत्यम्, जीवावस्थानिरूपकप्रथमभागोऽसंगत इत्याशंक्य नात्र जीवानामवस्थावत्त्वमात्रप्रतिपादने तात्पर्यम्, किंतु तत्तज्जीवावस्थानिर्वाहकत्वरूपपरमात्मगुणवर्णन एवेति विचारप्रक्रियैव सुगममिति मत्याह त्यक्तमिति। तर्हि पूर्वपादोक्तजागरदशानिर्वाह-

ब्रह्म यदि पुनरिह चिन्त्येत, तर्हि जीवस्य स्वप्नाद्यवस्थामननमथ वैराग्यपादानन्तरमस्मिन् पादे कथं संघटेतेति शङ्का । तामिमां निराकरोति—नेति । तदेव विवृणोति—स्वाप्नेति । स्वाप्नार्थस्यापि भगवानेव स्रष्टेति तत्स्रष्टृभावप्रभृतिबहुविधब्रह्ममाहात्म्यसिद्ध्यै तथा अस्य जन्तोः स्वमुक्त्यत्यन्तपरवशताज्ञप्तये चैतज्जीवस्य स्वप्नाद्यवस्थामननमत्र क्रियते । अयमर्थः—न जीवः स्वप्राधान्येनात्रोच्यते, अपि तु परमात्मनो जाग्रत्स्वप्नसुषुप्त्यादिसर्वावस्थाकर्तृत्वप्रतिपादनार्थमिति परमात्मैवास्मिन् पादे सर्वत्र प्राधान्येनोच्यत इति ॥ २९२ ॥

(२९३) पादस्यास्याऽऽद्यमर्धं कतिचिदधिजगुः पूर्वपादस्य शेषं
पश्चादर्धञ्च(पश्चार्धञ्चात्र) साक्षादनुघटितमुपास्त्यर्थतत्तद्गुणोक्तेः ।
एतन्नातीव हृद्यं प्रबलितकथने चातुरीवैपरीत्यात्
ब्रह्मोक्तौ जीवदोषग्रह इह तु मुखं तत्प्रतिद्वन्द्वसि(न्द्विबु)द्धेः ॥ ५ ॥

अत्र केचिदाहुः—'अस्मिन्नुभयलिङ्गपादे पूर्वार्धे जीवपरं वैराग्यपादशेषभूतम्; उत्तरार्धं परमात्मपरमिति । एतदनुवदति—पादस्येति । पश्चादर्धमस्मिन् पादे (पश्चार्धञ्च अत्र=अस्मिन् पादे) साक्षादनुघटितमुपास्त्यर्थतत्तद्भगवद्गुणोक्तेरिति(त्यर्थः) । इदमेकदेशिमतं नातीव हृद्यमिति

---

कत्वेनापि तत्र ब्रह्म कथितमिति स्यादिति चेत्-स्यान्नाम । अत एव तस्यापि पादस्य ब्रह्मजिज्ञासारूपता । किंतु तत्र लोकान्तरगतागतादिकं जीवस्यास्तीति साध्यते । कर्मफलं भोक्तुं कर्म कर्तुं च जीवः स्वातन्त्र्येण स्वयं प्रवर्तमानमात्मानं मन्यते । तदनुमर्देन तत्र हेयता परम् आविष्कृता । इह तु स्वप्नादौ स्वकारिततायाः स्वथमेव जीवेनाग्रहणात् परमात्मकारितत्वं निर्विवादमिति तथैव तदुपपादनमिष्यत इति । स्वाप्नेति । जाग्रद्दशानुभाव्यपदार्थसृष्टिरेवाऽऽश्चर्यभूतेति तत्कारणं मायेत्युक्तम् । तत् आश्चर्यमनाश्चर्यभूतञ्च स्यात् । स्वाप्नार्थास्तु एकमात्रेण अल्पकालमात्रे अनन्तवस्तुसंमेलनानर्हसंकटस्थले अनेकसंवत्सरादिदीर्घकालानुभाव्यतया, जागरदृष्टवस्त्वभेदग्रहेण च विचित्रमनुभूयन्त इति ईदृशानन्तस्वाप्नप्रपञ्चस्रष्टरि गृह्यमाणो महिमातिशयः प्रथमं प्रादर्शि । प्रभृतिपदेन जीवसुषुप्त्याधारतया जीवायासपरिहारकत्वरूपातिशयः मूर्च्छामात्रेण प्राणरक्षकत्वमित्यादिग्रहणम् । स्वप्रस्तावे, 'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ' इति स्पष्टसूत्रितम्, सुषुप्त एवोत्तिष्ठतीति कर्मानुस्मृत्यधिकरणादिसिद्धञ्चाऽऽविष्करोति जन्तोरित्यादिना । स्वबुद्धिपूर्वविशेषप्रयत्नं विनास्थितावपि प्राक्तनकर्मनिकुरुम्बायत्तस्वप्ननिद्रामूर्च्छादयः मुक्त्युपायप्रतिबन्धका इति मेतव्यमिति भावः ॥ २९२ ॥

५. कतिचित्—स्थिरचरराशिमध्यगतस्य राशेः पूर्वोत्तरसंसृष्टांशयोः स्थिरत्वचरत्ववत् अस्य पादस्याधिकरणाष्टकात्मकस्याऽऽद्यमर्धं जीवावस्थाप्रतिपादकत्वात् पूर्वपादशेषभूतम्, पश्चाद्विद्यमानम् उत्तरमधिकरणचतुष्कं च गुणोपसंहारपादशेषभूतम् । पश्चादनुघटितम् गुणोपसंहारपादेन संगतम् । साक्षादिति । दोषाणां गुणवत् परनिष्ठत्वाभावात् साक्षात्संघटितता न भवति । अपि तु अभावद्वारेति भावः इत्याहुः ।

एवमर्थविभागस्य पूर्वोत्तरसंगतत्वमात्रे उपयोगः स्यात्; तत्तच्छेषत्वमात्रस्य सूत्रकृदभिमतत्वे तु तत्तदर्थं तत्तत्पाद एव योजयेत् । उपासनाविधायकवाक्यशेषान्तर्गतगुणविचारत्वाभावाच्चोत्तरार्धं न गुणोपसंहारपादे

निराकरोति-एतदिति । तत्र हेतुमाह-शबलितेति। सङ्कीर्णकथने चातुरीवैपरीत्यादिति । तर्हि पाद-पूर्वार्धे जीवदोषग्रहणं किमर्थमित्याशङ्क्य ब्रह्मगुणाभिव्यक्त्यर्थमिति परिहरति—ब्रह्मेति । संसरतो जीवस्य कथने हि संसारमोचकस्य परमात्मनो माहात्म्यं सिध्यतीत्यर्थः । शब्दार्थस्तु—जीवदोषग्रह इह तु मुखम्=उपाय इत्यर्थ इति ॥ २९३ ॥

७५ ॥ अथ सन्ध्याधिकरणम् ।। ३-२-१ ॥

सूत्रम्—सन्ध्ये सृष्टिराह हि ॥ निर्मातारञ्चैके पुत्रादयश्च ॥ मायामात्रं तु कार्त्स्न्येनानभि-व्यक्तस्वरूपत्वात् ॥ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ देहयोगाद्वा सोऽपि ॥ सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ १-६ ॥

(२९४) स्वप्नेऽर्थाः सन्तु सृष्टास्तदपि बहुविधा दुस्त्यजा भ्रान्तिरत्र
प्रध्वस्तानामिदानीन्तनवदनुभवात् स्थायित्वादिभ्रमाच्च ।
सत्यं श्रुत्यादिसिद्धे श्रुतपरिहरणायोगतः सृष्टिमात्रं
स्वीकुर्मोंऽशे तु बाधात् भ्रममपि हि यथाजागरं न क्षिपामः ॥ ६ ॥

अत्र चोदयति, 'स्वप्नसृष्टिः परमार्थभूतेति भवद्भिरुच्यते; तत् कथं सङ्गच्छते? अतीतानागतयोरपि स्वप्ने दर्शनात् । असम्भावितार्थदर्शनं हि जागरे मिथ्या । किंपुनः स्वप्ने । अतः स्वप्नसृष्टिर्न परमार्थभूता' इति । तदिदमाह—स्वप्न इति । अयमत्र शब्दान्वयः—स्वप्नेऽर्थाः सृष्टास्सन्तु । अथापि बहुविधा भ्रान्तिरत्र स्वप्ने दुस्त्यजा ; प्रध्वस्तानां पित्रादीनामिदानीन्तनवदनुभवात् स्वप्न-

---

निवेशमर्हति । प्राप्यतृष्णौपयिकगुणगणसहितसिद्धोपायत्वरूपसाधनत्वपरत्वमेवास्य युक्तमित्यर्थ अथवा द्वितीयपादस्यायमर्थः—पूर्वार्धं पूर्वशेषम्; उत्तरार्धमेव मुख्यसंगतमस्मिन् पादे इति । तदा पश्चादर्धम् उत्तरार्धम् । साक्षादनुघटितमित्यस्य मुख्यसंगतमित्यर्थः । शबलितकथने पूर्वोत्तरपादसंबन्ध्यर्थद्वयकथने इति प्रथमकल्पेऽर्थः । द्वितीये तु पूर्वपादसंबन्धिसाक्षात्संबन्ध्यर्थद्वयकथने इति । पश्चादर्धश्चात्रेति मूलपाठान्तरानुगुणत्वात् स्वरसत्वाच्च द्वितीय एवार्थोऽस्तु । चातुरीवैपरीत्यात् सूत्रकृतामचातुर्यप्रसंगात् । अतः पूर्वार्धस्यापि गुणविशेषेद्म्परत्वात् सर्वं साक्षात् संगतमिति भावः । गुणकथनपरेणापि पूर्वार्धेन जीवदोषाणामपि कथनात् तत्प्रतिद्वन्द्वस्य=तत्प्रत्यनीकत्वस्य उभयलिङ्गमित्यत्र विवक्षिततया तदपेक्षित-प्रतियोगिसमर्पकतयाऽप्युपयोग इत्यर्थमाह ब्रह्मेति । पूर्वपादस्यापि जीवदोषपरत्वात् दोषशेषप्रतिपादकभागं पूर्वं निवेश्य तदभावविशिष्टकथनमुपरि । अतः, 'स्रष्टृत्वादिगुणकथनपरत्वे पादान्त एव कस्मात् संध्याधिकरणादिकं न स्यात्' इति न शंक्यम् ॥ २९३ ॥

६. पादानुस्थितिशंका पादांशस्य पूर्वपादघटनीयत्वशंका च परिहृते । प्रथमाधिकरणा-नुस्थितिशंकामुद्भाव्य परिहरति द्वाभ्याम् । स्वाप्नपदार्थासत्यत्वं सर्वलोकप्रसिद्धम् । सत्यपि बाधज्ञाने सत्यत्वस्वीकारे शुक्तिरजतादिकमपि सत्यं सृज्यं स्यात्, अतो ज्ञानभ्रान्तिवारणाय सृष्टिस्वीकार इत्ययुक्तम्। सृष्टिस्वीकारेऽपि भ्रान्तीनामवर्जनीयत्वाच्च । तथाहि—स्वप्नेऽर्थाः सृष्टा इत्येवास्तु । तदपि=तथापि बहुविधा भ्रान्तिर्दुस्त्यजा । स्वप्ने हि स्वकीयपुत्रमित्रकलत्रादिभिर्व्यवहारः क्रियमाणो दृश्यते । ते पुत्रादयः

लब्धानां सुव(स्व)र्णादीनामस्थिराणामपि स्थायितादिभ्रमाच्च। अतः स्वप्नस्यापारमार्थ्यं तव वक्तव्यमिति। तदिदमर्धाङ्गीकारेण निराकरोति-सत्यमिति। तत्राङ्गीकृतमनङ्गीकृतञ्च विभज्य दर्शयति-श्रुत्यादीति। श्रुत्यादिसिद्धेऽर्थे श्रुतहानायोगात् सर्वकर्तुर्भगवतस्तत्कालमात्रे तत्तत्पुरुषमात्रानुभाव्य-वस्तुसृष्टिमङ्गीकृत्यात्यन्तव्याहतेष्वर्थेषु बाधादेव जागरवत् भ्रान्तित्वमङ्गीकृत्य सर्वं निर्वहन्तः श्रुतिसिद्धमर्थं न क्षिपाम इति ॥ २९४ ॥

(२९५) कश्चिद्योगप्रभावान्निजपरभवनस्वैरसञ्चारनीत्या
निष्क्रान्तः पूर्वदेहात् विशति परवपुः पूर्वमाप्नोति भूयः ।
इत्थं स्वप्नेऽप्युदन्तस्थितिरिति कतिचित् श्वासवृत्त्याऽन्यथा (तथा)ऽन्ये
चित्तोद्बुद्धीप्रसूत्येतरतनुभजने सौभरिन्यायसिद्धेः ॥ ७ ॥

तर्हि स्वयमेकत्र वर्तमानस्य स्वप्ने देशान्तरगमनं पारमार्थिकं कथं स्यादित्याशङ्क्य नाना-

जागरे स्थिता एव वा, अन्ये वा। नाऽऽद्यः; प्रबोधानन्तरम्, 'स्वप्ने आगत्य त्वयैवं व्यवहृतं किल' इति तैरसह सह पे तैस्तदस्वीकारात्। तादृशानां सुषुप्तिस्थाने प्रवेशानवकाशाच्च। तेषामन्यत्र सुदूरे स्थिततायाः स्पष्टत्वाच्च। तथासति सृष्टिपक्षत्यागप्रसंगाच्च। नान्त्यः; त एवेमे पुत्रमित्रकलत्रादय इति ज्ञानस्य, तदीयव्यवहारस्य जागरव्यवहारानुबन्धित्वज्ञानस्य, तेषां स्वव्यवहारवस्तूभत्वज्ञानादेश्च भ्रान्तिताया अवर्ज-नीयत्वात्। तत्र नष्टानां केषाञ्चित् वर्तमानतया ग्रहणात्, तत्कालमात्रभावितया सृष्टेषु तेषु चिरकालानु-वृत्तत्वानुवर्तिष्यमाणत्वग्रहणाच्च। इतो वरं स्वाप्नज्ञानं सर्वं भ्रमात्मकमिति यथानुभवं स्वीकरणम्। अतस्तत्सृष्टेरेवाभावे सा सृष्टिः जीवकृता वा ईश्वरकृता वेति परीक्षेयं नूनं गगनारविन्दगन्धप्रकारविचार एवेति। एवमुद्भावितां सर्वां भ्रान्तिं स्वीकृत्य विचारानौचित्यं परिहरति सत्यमिति लोके चिरकालानुभाव्यानि स्वल्पकालानुभाव्यानि बहुनुभाव्यानि द्वित्रमात्रगोचरभूतानि विचित्राणि वस्तूनि दृश्यन्ते। जागरवत् स्वाप्नानुभवोऽपि कर्मफलमिति स्थिते वस्तुवास्तवत्वे का नः क्षतिः। जीवानां तथासृष्टिसामर्थ्यं मा भूत्राम। स हि कर्ता। तस्य को भारः; किमशक्यम्। न चेयमसत्कल्पना। श्रुत्यादिसिद्धेः॥ श्रुतेः सृष्टौ न तात्पर्यमिति चेन्न; श्रुतपरिहरणायोगात्। न ह्युत्पन्नविनष्टाः जागरानुभूता अपि उत्पत्तिकल्पनागौरवात् मिथ्यात्वेनेष्यन्ते। अतः सृष्टिमेव स्वीकुर्मः। उक्तांशेषु भ्रमत्वमपि स्वीकुर्मः। यथा जागरे केषुचिदंशेषु भ्रमस्यावर्जनीयत्वेऽपि सर्वो जागरो भ्रान्तिसिद्ध एवेति नेष्यते, तद्वदिति। भ्रमज्ञानं च तत्र यथा जागरं यथार्थं सर्वविज्ञानमित्यसत्पक्षे प्राभाकरपक्ष इवाख्यातिरूपं भविष्यतीत्यन्यदेतत्। अनेन, 'संध्ये सृष्टिराह हि' इति सूत्रमावर्तते। प्रथमेन सृष्टिस्थापनम्; द्वितीयेन तस्यां जीवकर्तृकत्वशंकेति सूच्यते। अत एव प्रथममेतदुक्तिः॥ २९४ ॥

७. ननु स्वप्ने देहादेः सृष्ट्यङ्गीकारे तत्र पुत्रमित्रकलत्रादिदेहेषु ते पुत्रमित्रादिचेतनाः न प्रविशन्तीति निर्णीतम्। तथाच तत्रत्याश्चेतनाः पुत्रादिभूमिकाभूतोऽन्य एवेति वक्तव्यम्; निर्जीवत्वे व्यवहारायोगात्। वस्तुसत्यत्ववत् व्यवहारसत्यत्वस्यापि युक्तत्वात्। तथा च ते सन्तु जीवसमष्टिनिविष्टा

शरीरपरिग्रहवतो योगिन इव विश्वकर्तुर्भगवतः सङ्कल्पप्रभावात् सर्वं सङ्घटत इत्याह—कश्चिदिति। अयमत्र शब्दान्वयः—कश्चिद्योगी योगप्रभावात् स्वपरगृहयोः स्वैरसञ्चारन्यायेन पूर्वदेहान्निष्क्रान्तो विशति परवपुर्देहान्तरं प्राप्नोति। तेनैव तत्र सञ्चारादिकमपि करोति। पूर्वं शरीरमपि भूयः समागत्य(स्य) प्राप्नोतीति। तथा स्वप्ने पूर्वशरीरं परित्यज्य भगवता सृष्टं शरीरान्तरं स्वप्नद्रष्टा प्राप्नोति; स्वप्नान्ते पूर्वशरीरं पुनः प्राप्नोतीति केचित् प्रतिपेदिरे। तदिदमाह-इत्थमिति। पक्षान्तरमप्याह—श्वासवृत्त्येति। अयं खल्वन्येषामभिप्रायः—यदि स्वप्ने शयितः पुरुषः पूर्वशरीरं परित्यज्य शरीरान्तरं परिगृह्णाति, तदा पूर्वस्मिन् शरीरे श्वासवृत्तिर्न स्यात्। अतस्तस्मिन्नेव शरीरे जीवोऽवतिष्ठते। भगवता सृष्टेषु तु स्वाप्नेषु शरीरान्तरेषु, 'प्रदीपवदावेशः' इति वक्ष्यमाणन्यायेन धर्मभूतज्ञान-व्याप्त्या सौभरिन्यायस्य सिद्धत्वात् धर्मभूतज्ञानव्याप्त्यैव शरीरान्तरपरिग्रह इति निरणैषुरिति॥

---

अन्ये। स्वयं तु स्वप्नानुभावी यत् आत्मानं व्याघ्रं सिंहं महाराजं महाब्राह्मणं वा विभिन्नदेहस्वामिन-मनुभवति, तत्र तदासृष्टे तत्तद्देहे यद्ययमात्मा प्रविष्टः स्यात्, शयानो देहो निर्जीवः स्यादिति शंकायां तत्समर्थनेन स्वाप्नसृष्टिं निर्वहति कश्चिदिति। यथा जनाः योगी च निजं भवनं विहाय तत्रास्थित्वा परेषां भवनेष्वपि संचरन्ति स्वैरं यथेच्छम्, तद्वत् योगी योगप्रभावात् परकीयं देहं प्रविश्य विहृत्य पुनः स्वदेह प्रविशतीति जागरवृत्तम्। इत्थम् उक्तयोगिरीत्या स्वप्नेऽप्युदन्तस्थितिः स्वाप्निकव्यवहारनिर्वाहः। तथा च यथा योगी स्वशरीरं निश्चेष्टं कृत्वा परशरीरे प्रविश्य पुनः स्वशरीरमायाति, तथा स्वप्नदृगिति कति-चिदाहुः। केषांचित् पक्ष एव। एवं स्वदेहान्निष्क्रमणांगीकारे योगिदेहवत् निष्प्राणत्वापत्त्या स्वप्नभुजः पूर्वदेहे सम्यक् श्वासानुवृत्तिदर्शनात् तादृशयोगितौल्यं त्यक्त्वा अन्ये अन्यथाऽऽहुः। कथमित्यत्र विवृणोति चित्तेति। आत्मा सुप्तदेह एव वर्तते, न बहिर्याति। अथापि आत्माधारे चित्ते संबध्य या स्थिता धीः धर्मभूतज्ञानम्, तस्याः स्वप्नसृष्टदेहे प्रसरणं भवति। यथा सौभर्यादिर्योगी एकस्मिन्नेव देहे स्थितोऽपि स्वचितात् धियः धर्मभूतज्ञानस्य प्रसृत्याऽन्यानपि स्वार्थं सृष्टान् व्याप्नोति, तद्वदयं स्वाप्निकशरीराणि व्याप्नोति। कात्स्न्र्येनानभिव्यक्तस्वरूपस्यैकदेहनियमनानुरूपो ज्ञानप्रसरो यथेश्वरायत्तः, तथा बहुदेहव्यापी ज्ञानप्रसरोऽपि तदायत्त एवेति। बृहदारण्यकश्रुतौ, 'अथ रथान् रथयोगान् पथस्सृजते ; स हि कर्ता' इत्यादिकमभिधाय, 'स्वप्नेन शारीरमभिप्रहत्य' इति मन्त्रेण पूर्वोक्तयोगितुल्यतां प्रदर्श्य, अनन्तरमन्त्रेण प्राणरक्षणपूर्वकदेहान्तरस्थितिरुक्ता, 'प्राणेन रक्षन्नवरं कुलायं बहिष्कुलायादमृतश्चरित्वा। स ईयतेऽमृतो यत्र कामं हिरण्मयः पुरुष एकहंसः' इति। प्रथमदेहे स्थितिर्जीवस्य, अन्यत्र धर्मभूतज्ञानमात्रव्याप्तिः ; यद्वा देहं पूर्वं धर्मभूतज्ञानप्रसरणेन सप्राणं रक्षन् अन्यत्र याति आयाति चेत्युभयथाऽपि न दोषः। न चैवं पूर्वदेहेऽपि सौभरेरिवानुभवाद्यापत्तिः। तत्र साक्षात् ज्ञानद्वारा वा स्थितेः तदातनसजीवत्वमात्रोप-युक्तत्वात्। सुषुप्तिकाल इव तदा तत्रेन्द्रियाभावेन चानुभवाद्यभावोपपत्तेः। अत एव अहं व्याघ्रः, अहं सिंहः इति स्वप्ने व्याघ्रत्वाद्यभिमानेऽपि मनुष्यत्वाभिमानोऽप्यनुवर्तत इत्यपि सुवचम्। प्रबुद्धश्चाऽऽह, अहं स्वप्ने व्याघ्र आसमिति। इन्द्रियाणामन्यत्र गमनाच्च, 'तन्नाऽऽयतं बोधयेदित्याहुः। दुर्भिषज्यं हास्मै भवति, यमेष न प्रतिपद्यते' इति तत्रोपरि श्रूयते। अतोऽपि सृष्टित्वस्यस्वीकार्या॥ २९५॥

(२९६) उक्तं पत्या प्रजानां भविनि दहरवत् सत्यसंकल्पताद्यं ;
पुत्रादेश्चैष कर्ता ; प्रकृत इह सृजेत् स्वाप्नमर्थंश्च ; मैवम् ।
मुक्तौ तादृग्गुणोक्तेरनभिमतसृष्टत्वादनादेरयोगात्
स्वा(स्व)प्नानां सूचकत्वादपि निखिलजगत्कर्तुरेषाऽपि(हि) सृष्टिः ॥ ८ ॥

अत्र सङ्गतिर्भाष्ये, 'एवं कर्मानुरूपगमनागमनजन्मादियोगेन जाग्रतो जीवस्य दुःखित्वं स्थापितम् । इदानीमस्य स्वप्नावस्था परीक्ष्यते' इति । तदर्थविचारस्तु—'न तत्र रथा न रथयोगा न पन्थानो भवन्ति' इत्यारभ्य स्वाप्नसृष्टिराम्नायते, सा किं पारमार्थिकी, उत मायामात्रमिति । किं, 'सृजते सः हि कर्ता' इति निर्देशः पारमार्थिकतामवगमयति, नेति । किमयं निर्देशः सृष्टिकर्तुः कर्तृत्वपरः, उत स्वप्नज्ञानवत् कर्तृत्वपर इति । किं प्रजापतिवाक्यावगतसत्यसङ्कल्पत्वस्य जीवस्य स्वप्ने सङ्कल्पमात्रात् सृष्टिः सम्भवति, नेति । 'य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः' इति जीवस्य स्वप्ने सङ्कल्पमात्रात् स्रष्टृत्वमवगमयति, नेति । किमिदं वाक्यं जीवपरम्, उत परमात्मपरमिति । अस्मिन् खल्वधिकरणे स्वप्नसृष्टिर्जीवकार्यम्, उत परमात्मकार्यमिति चिन्त्यते । अत्र पूर्वपक्षवादी मन्यते–उक्तमिति । उक्तं हि दहरवाक्यशेषभूते प्रजापतिवाक्ये प्रजानां पत्या सत्यसङ्कल्पताद्यं दहरवत् = दहराकाशवत् जीवस्यापि भवतीति । भविनीति सप्तमी । जीवे इत्यर्थः । तेन स्वसङ्कल्पात् सृष्टिः स्वप्ने जीवस्यैव समुचिता । किञ्चात्र पुत्रादीनां सृज्यत्वमुच्यते । पुत्रादिसम्बन्धो जीवस्यैव सङ्घटते रथादीनां जीवानुकूलवस्तूपलक्षणत्वात् । तेन पुत्रादिकर्तृत्वेन प्रकृतो जीवः स्वाभीष्टं स्वाप्नमर्थं सृजेदित्यर्थः । इममर्थं प्रतिक्षिपति–मैवमिति । तत्र हेतुमाह—मुक्ताविति । तादृग्गुणोक्तेः= जीवस्यापहतपाप्मत्वादिगुणाष्टकाविर्भावस्योक्तेः स्वप्नावस्थायामन्धप्रायो जीवः कथमपहतपाप्मत्वादिगुणाष्टकं प्राप्नुयादित्यर्थः । हेत्वन्तरमप्याह—अनभिमतेति । यदि जीवः स्वयमेव स्वार्थं स्वप्ने सृजति, तदानीं नियतमेवानुकूलं सृजेत् । सुप्तः खलु कदाचित् प्रतिकूलानपि स्वप्ने पश्यति । तत्र युज्यते सत्यसङ्कल्पत्वे जीवस्य स्वप्रतिकूलं स्वयमेव कथं सृजेदिति । तृतीयमपि हेत्वन्तरमाह—

---

८. सृष्टिरूपपक्षस्थापनादाश्रयासिद्धिः परिहृता । अथ साध्यं विचार्यते, संध्ये स्वप्ने वस्तुसृष्टिः जीवकर्तृका । स हि कर्तेति जीवमेव ह्याह । अस्य प्रकरणस्य, 'किंज्योतिरयं पुरुषः' इति जीवविषयकत्वात्, कतम आत्मेति जीवस्यैव पुनः प्रस्तावात्, 'स हि स्वप्नो भूत्वेमं लोकमतिकामति' इति वाक्ये सहीति तस्यैवोक्तेः, 'रथान् सृजते' इत्यत्र कर्तृतया तस्यैव स्फूर्तेः, पुनः सहिकर्तेत्यत्र स इत्यपि तमेव परामृशेत् । स इत्यनेन कर्तृत्वोपयोग्याकारविवक्षा । तमाकारं स्पष्टमाह उक्तमिति । छान्दोग्ये दहरविद्यानन्तरे प्रजापतिवाक्ये प्रजापतिनेन्द्रं प्रति भविनि जीवे सत्यसंकल्पत्वादिकमुक्तम् । अतः श्रुतिप्रसिद्धाकारः स इत्युच्यते । द्वितीयसूत्रविवक्षितयुक्तिमाह पुत्रादेश्चेति । 'कामं कामं पुरुषो निर्मिमाण.' इति सर्वकाम्यनिर्मातृत्वमुक्तम् । तत्र स्वसंबन्धिकाम्यनिर्मातृत्वमेव स्वरसम् । कामाश्च के इति विमर्शे, 'सर्वान् कामान् छन्दतः प्रार्थयस्व, शतायुषः पुत्रपौत्रान् वृणीष्व' इति पूर्वकठवाक्यस्फूर्त्या पुत्रादय एव कामा इति ज्ञायते । पुत्रादिनिर्मातेत्युक्तौ पुत्रादिप्रतिसंबन्धिन एव निर्मातृत्वेन ग्रहणं युक्तम् । तथाच पुत्रादेश्चैव एव कर्ता ; प्रकृतश्च पूर्वोक्तरीत्या एष एवेति । अर्थंश्चेति चकारः प्रकृत इत्यनेन संबध्यते । पूर्वपक्षं निरस्यति मैवमिति । सिद्धान्तसूत्रचतुष्टयसिद्धान् हेतूनाह मुक्तावित्यादिना । तादृग्गुणानां, 'संकल्प-

स्वाप्नानां सूचकत्वादिति। शुक्लानि सर्वाणि शुभावहानीत्येवं स्वप्नेऽपीश्वरसङ्कल्पेन स्वयमागतानि शुक्लादीनि शुभाशुभसूचकानीति प्रतिपत्तव्यमित्यर्थः। तस्मादीश्वरस्रष्टृत्वमेव स्वप्नप्रपञ्चस्य तदिदमाह—निखिलजगदिति ॥ २९६ ॥

(२९७) कामं कामं विधातेत्यपि णमुलुचितोऽनूद्यते चेश इत्थं
सोऽयं सुप्तेषु जागर्त्यपि विशदमिदं सम्परिष्वक्तवाक्यात्।
तत्तत्कालावसानाः कति कति नियता जागरेऽप्यर्थभेदाः
तत्तत्कर्मानुरूपं फलवितरणमित्येतदप्युक्तमाप्तैः ॥ ९ ॥

अत्र, 'कामं कामं पुरुषो निर्मिमाणः' इति विषयवाक्ये किं णमुल्प्रत्ययेनाभिधानम्? किं वा(?) कामं काममिति कर्मभूतविषयविशेषाभिधानम्? इत्याशङ्क्य भगवतस्सत्यसङ्कल्पस्य स्रष्टृत्वाभिधानार्थं णमुलेव समुचित इत्याह—कामं काममिति। जीवस्यासत्यसङ्कल्पस्य कर्तृत्वायोगात्। तथा च सतीश्वर एवानूद्यते। अयं च परमात्मा सुप्तेषु पुरुषेषु जागर्ति। तेन तस्याश्चर्यरूपकार्यकरणे कर्तृत्वं युज्यत इत्यर्थः। तस्य जागरणञ्च श्रुतिसिद्धमित्याह—विशदमिति। 'प्राज्ञेनात्मना सम्परिष्वक्तः' इति हि श्रूयते। ननु जागरवत् स्वप्नस्यापि परमार्थसृष्टिरूपत्वे कथं तत्तत्कालावसायित्वम्; कथं वा तत्तदेकैकपुरुषमात्रानुभाव्यत्वम् इत्याशङ्क्य निरङ्कुशस्वतन्त्रेश्वरसङ्कल्पविशेषादित्यभिप्रायेण परिहरति—तत्तदिति। न केवलं स्वप्न एव तत्तत्कालावसानकार्यसृष्टिः, अपितु जागरेऽपि मेघोदयादीनां तादृक्त्वेनोपलम्भो दृश्यते। ननु तथाप्येकपुरुषानुभाव्यत्वं न दृश्यत इति चेत्—तदपीश्वरसङ्कल्पादिति मन्तव्यम्। दृश्यन्ते हि मन्त्रौषधसिद्धाञ्जनादिप्रभावात् तत्तत्पुरुषमात्रानुभाव्या विषयविशेषाः। अपर्यनुयोज्यः खल्वीश्वरप्रभावविशेषः। (विश्वामित्राद्योऽपि?) सङ्कल्पमात्रात् विश्वं सृजन्ति, अनुग्रहमात्रादेव द्रष्टव्यमपि दर्शयन्ति। अत एवोच्यते, 'दिव्यं ददामि ते चक्षुः पश्य

---

देवास्य पितरस्समुपतिष्ठन्ति' इत्युक्तसर्वेष्टसृष्ट्यौपयिकाविर्भावशालिगुणानां मुक्तावेवोक्तेः। स्वप्ने सुखानिष्टानामप्युत्पत्त्या स्वस्मिन् तद्धेतुत्वायोगात्, स्वेष्टानिष्टसूचकमिदमिति स्वयमेव ज्ञात्वा स्वार्थं स्वयं सृजनीत्यस्यायोगाच्च न जीवः सृजेत्। एवं बाधकहेतून्यासः ॥ २९६ ॥

९. पूर्वपक्षहेतून् निरस्यति कामंकाममिति। कामशब्देन पुत्रादिग्रहणात् स्वार्थतदपेक्षिपितृजीवस्यैव स्रष्टृत्वं युक्तमित्युक्तम्। काम्यमानस्याकाम्यमानस्य चोभयस्य स्वप्ने निर्माणदर्शनात् काममात्रोक्तेरयोगात्। किञ्चित्काम्यासिद्धेश्च। कामानित्येवोक्तिसंभवात् द्विरुक्तेरनावश्यकत्वाच्च। अतो णमुल्प्रत्ययोऽयम्। संकल्प्य संकल्प्येत्यर्थः। इष्टमनिष्टञ्च संकल्प्य निर्मिमाण इत्यर्थः। अतो य एष सुप्तेष्विति यच्छब्देनानूद्यते ईश एव। किञ्च सुप्तेषु जागर्तीति सुप्तपदेन जीवानां गृहीतत्वात् एष इति स पर एव वक्तव्यः। न च सुप्तेष्विन्द्रियेषु इत्यर्थवर्णनम्। इन्द्रियाणामचेतनानां सुप्तत्वासुप्तत्वरूपावस्थाद्वयाभावात्। स्वप्नानुभववेलायामिन्द्रियाणां व्यापृततया सुप्तत्वाभावाच्च। सुप्तपदेन देहग्रहणे बहुत्वानन्वयाच्च। अतः सुप्तेषु स्वप्नमनुभवत्सु जागररहितेषु जीवेषु यो जागर्तीति प्राज्ञ उच्यते। सुप्तपदेन निर्माणाशक्तत्वञ्चोक्तम्। संपरिष्वक्तवाक्यात्='प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्' इति सुषुप्तिविषयवाक्याच्च सर्वदशायां जाग्रत्त्वं परस्य विशदम्। तत्तत्कालेति। नन्विदमर्थम् अपरमार्थत्वशंकायां परमार्थत्वस्थापकम्। अस्य जीवस्रज्यमीश्वरस्रज्यं वेति

मे योगमैश्वरम्' इति । स्वप्नदर्शनस्येश्वरसृज्यत्वे हेत्वन्तरमप्याह—तत्तत्कर्मानुरूपं फलवितरणमिति । स्वप्नदर्शनं हि सुखदुःखात्मकत्वात् कर्मफलम्, कर्म चेश्वरसङ्कल्पविशेष इतीश्वरायत्तत्वमेव स्वाप्नस्यार्थजातस्य । पापी हि पापानुरूपं स्वप्नं पश्यति ; धर्मोत्तरस्तु तदनुरूपमिति महानयं मार्गः सर्वैरप्यनतिलङ्घनीय एव । एतदप्युक्तमाप्तैरिति । अयमभिप्रायः—कस्यचित् क्वापि काले शुभप्राप्तिः, इतरस्य पुनरशुभप्राप्तिरिति निमित्तसामुद्रिकतत्तद्ग्रहसञ्चारादिना विद्वद्भिरभिधीयते । प्रतिबन्धाविना यदि तन्न स्यात्, तत् स्वप्नेऽपि न प्राप्यत इति तैरेवाभिधीयते । अतोऽपि कर्मफलत्वं सिद्धं स्वाप्नस्य सुखदुःखादेरिति ॥ २९७ ॥

(२९८) मायामात्रोक्तिलाभात् श्रुतिमुखसुगता विश्वमिथ्यात्वमाहुः
शास्त्रारम्भे तदेभिः कथितमिह ततोऽसङ्गतत्वादिदुस्स्थम् ।
मायाशब्दो न मिथ्यावचन उपचरत्वन्ततः(त्वत्र तत्) किं ततस्स्यात्
सत्येऽस्त्रादौ प्रयोगादुचितनियमने सोऽयमाश्चर्यतार्थः ॥ १० ॥

इति सन्ध्याधिकरणम् ॥ ७५ ॥

अत्र, 'मायामात्रं तु कार्त्स्न्येन' इति सूत्रे मायाशब्दप्रयोगमात्रमवलम्ब्य श्रुतिमुखसुगताः = वेदवादच्छन्नबौद्धा मृषावादिनो विश्वमिथ्यात्वमाहुः। तन्मतं दूषयति-मायेति । तत् = प्रपञ्चमिथ्यात्वं तैः शास्त्रारम्भे कथितमिति पुनरत्राभिधाने पौनरुक्त्यमसङ्गतत्वञ्च । तेनेश्वरविचित्रसृष्टिः स्वप्नप्रपञ्च इत्येतदेवात्रोच्यते ; न पुनर्विश्वमिथ्यात्वम् । मायाशब्दमात्रावलम्बनेनैव हि मृषावादिनामिदमभिधानम्, तदपि तेषामनालम्बनमित्याह—मायाशब्द इति । न हि लोके मायाशब्दो मिथ्यावचन इत्याभिधानिकाः पठन्ति । 'माया तु वयुनं ज्ञानम्' इति हि नैघण्टुका ज्ञानविशेष एव मायाशब्दं प्रयुञ्जते । 'इन्द्रो मायाभिः पुरुरूप ईयते' इत्यादावीश्वरः सङ्कल्पविशेषैर्नानारूपोऽनुभूयत इति सूच्यते । आह च पराशरः—'अनेकशक्तिरूपाणि तत् करोति जनेश्वर । देवतिर्यङ्मनुष्याख्या चेष्टावन्ति स्वलीलया ॥ जगतामुपकाराय न सा कर्मनिमित्तजा ॥' इति ।

---

विचारमध्ये का प्रसक्तिः । न चापरमार्थत्वात् कल्पनामात्रत्वात् जीव एव कल्पकः शुक्तिरजतादेरिवेति शंकेति वाच्यम्; तदापि सृष्टिस्थापकप्रथमश्लोक एवास्य संगत्यौचित्यादिति चेत्-एवं रीत्या स्यादुत्थानम्—नन्वीश्वरश्चेत् कर्ता, सर्वं चिरस्थायि सृजेत्, अशक्तजीवसृष्टत्वादेव स्वाप्नं सर्वं शीघ्रं नश्यति, सर्वानुभाव्यञ्च भवतीति शंकायां तदन्यथयति तत्तदिति । जागरे सर्वमीश्वरकृतमिति स्वीकृतम् । तत्र न सर्वे चिरस्थायिनः, न च सर्वानुभाव्याः । कर्मानुरूपफलप्रदत्वादीश्वरस्य तत्तदुचितस्रष्टृत्वं तस्यैव युज्यते इति । आप्तैः ज्योतिश्शास्त्रादिविद्भिः । यद्वा उत्तरश्लोकान्वयेन मिथ्यात्वनिराकरणपरमेवास्तु एतदुत्तरार्धमपि ॥२९७

१०. अस्मिन्नधिकरणे मायाशब्दश्रवणमात्रेण विश्वमिथ्यात्वं व्यासाभिमतमिति व्यवस्यन्ति । मायाशब्दस्य मिथ्यावचनत्वेऽपि तदसिद्धिं वस्तुतोमिथ्यार्थकत्वाभावञ्चार्धद्वयेनाऽऽह मायेति । अद्वैतस्थापकं किमपि पदं लभ्येत वेति ब्रह्मसूत्रे गवेषयद्भिः मायामात्रमिति पदमेकं लब्धम् । तत्राभिमतो वाक्यार्थः क इत्यविमृश्य, पराभिध्यानमूलबन्धमोक्षदेहयोगसूचकत्वादिसत्यत्वस्थापकार्थजातमनवधाय च सहसैव विश्वमिथ्यात्वं वदन्ति श्रुतिमुखसुगताः श्रुतिर्मुखे येषां ते, श्रुतिबाह्यविलक्षणाः वेदवादप्रच्छन्ना बौद्धाः । इदमयुक्तम् । अस्याधिकरणस्य विश्वमिथ्यात्वसाधकत्वे पुनरुक्तिः स्यात् । शास्त्रारम्भे ब्रह्मजिज्ञासाधिकरणे तत्त्वज्ञानमात्रेण

लीलेति स्वसङ्कल्प एवोच्यते। स च सङ्कल्पो ज्ञानञ्च माया। अतो न मायाशब्दो मिथ्यावाची, अपितु आश्चर्यसृष्टिवाची, यद्वा तत्सृष्टिहेतुभूतशक्तिविशेषवाची, अथवा तत्तत्सृष्टिनिदाननिमित्त-भूतसङ्कल्पविशेषवाची। दृश्यन्ते हि प्रयोगाः, 'देवमायेव निर्मिता' इति। मिथ्यात्वे हि कल्पितेति व्यपदिश्येत। अन्यदपि—'तेन मायासहस्रं तत् शम्बरस्याशुगामिना। बालस्य रक्षता देहमेकैकश्येन सूदितम्॥' इति। अत्र हि सूदितमिति नाश्यत्वमेवोच्यते। नाशो हि परमार्थसत्प्रध्वंसः। अन्यथा बाध्यत्वमेवोच्येत। बाधो हि प्रतिपन्नोपाधौ निषेध्यत्वमिति मृषावादिनो वदन्ति। 'मायां तु प्रकृतिं विद्यात्' इति मायाशब्दस्य मिथ्यार्थत्वव्यावृत्त्यर्थं हि प्रकृतिं विद्यादिति कथ्यते। अत एव, 'मायामृगो हतः' इत्यत्र मारीचस्य प्रध्वंस एव वर्ण्यते। मेघनादमायादिष्वपि मन्त्रविशेषसाध्यपरमार्थसर्पा-णामेव मायेति व्यवहारः। कथमन्यथा गरुडप्रभावविशेषैर्निराकरणीयत्वं युज्यते? किञ्च सर्वलोक-प्रसिद्धोऽयं व्यवहारः। सामभेददानदण्डमायेन्द्रजालोपेक्षा इति सप्तोपाया नीतिशास्त्रेषु निर्दिश्यन्ते। तत्र मायेन्द्रजालयोर्वैषम्यमुच्यते। मन्त्रादिशक्तिविशेषात् परमार्थसर्पादिसृष्टिर्माया। तस्मादेव मन्त्रादिशक्तिविशेषात् अपरमार्थगजतुरगरथपादातादिप्रदर्शनेन परकटकभञ्जनमिन्द्रजाल-फलमिति। एवमन्यत्राप्युदाहरणानि द्रष्टव्यानि। अथापि पुराणेषु पामरप्रयोगेषु च मिथ्याविषयेऽपि मायाशब्दः प्रयुज्यत इत्याशङ्क्योत्तरमाह—उपचरत्विति। न ह्यौपचारिकः प्रयोगः शब्दस्य शक्ति-विशेषं नियमयतीत्यर्थः। तदिदमाह—किं तत इति। प्रयोगप्राचुर्यमितिहासपुराणादिष्वपि प्राचुर्येण सत्यभूत एवासुरराक्षसाद्यादावेव दृश्यत इत्याह–सत्य इति। 'मेघोदयः सागरसंनिवृत्तिः(संनिवेशः)' इत्युपक्रम्य, 'विष्णोर्विचित्राः प्रभवन्ति मायाः' इति पुराणे(णादि)ष्वपि पठ्यते। तर्हि कृत्स्नस्यापि कार्यस्य मायाशब्दवाच्यत्वे किं नियामकमित्याशङ्क्याह—उचितनियमन इति। अयमर्थः—आश्चर्यरूपकार्यविशेषो मायेत्युच्यत इति इन्द्रजाले मायाशब्दाभिधानमाश्चर्यरूपत्वाविशेषादौप-चारिकमिति मायेन्द्रजालयोर्विभागः। 'दैवी ह्येषा गुणमयी मम माया दुरत्यया' इति वचनं त्रिगुणस्यैव विचित्रप्रपञ्चसृष्टिहेतोर्मायाशब्दवाच्यत्वं व्यक्तमेव स्थापयति॥ २९८॥

इति सन्ध्याधिकरणम्॥ ७५॥

---

मुक्तिमुपपादयद्भिर्विश्वमिथ्यात्वस्थापकं तदधिकरणमित्युक्तत्वात्। असंगतत्वञ्च। जाग्रत्स्वप्नाद्यवस्थासु जीवानां दोषसद्भावस्थापकसंदर्भे विश्वमिथ्यात्वस्थापनं हि विपरीतमेव फलेत्। अत एव स्वाप्नमिथ्यात्वमपि नाधिकरणार्थः। अबाधितस्य विश्वस्यैव मिथ्यात्वे प्रथमं सिद्धे स्वाप्नासत्यत्वस्य दण्डापूपायितत्वेन तन्निरूपण-वैयर्थ्यञ्च। व्याघातश्च। शुक्तिरजतादेरिव स्वाप्नार्थसृष्टेरेव तदिष्टत्वात्। अतो व्याघातासंगतत्वपुनरुक्तत्वैः तदुक्तं दुःस्थम्। मायाशब्दस्यापार्थकल्पनया च मायाशब्दमात्रेण जगन्मोहयन्तीत्यहो माया मायिनाम्। मायाशब्दो हि न मिथ्यावाची; देवमायेव निर्मिता, तेन मायासहस्रं तु, मायया सततं वेत्ति, विष्णोर्विचित्राः प्रभवन्ति मायाः, मायां तु प्रकृतिं विद्यात्' इत्येवमाश्चर्यसर्गकरेषु मायाशब्दप्रयोगात्। ऐन्द्रजालिकेषु असत्येषु मायाशब्दप्रयोगः तादृशमायाकार्यत्वनिबन्धनः। कामं मायाशब्दः अत्र मिथ्याभूतेऽर्थे उपचरतु= अमुख्यतया वर्तताम्। ततः किं स्यात्। को हि मुख्यार्थत्यागेनामुख्यमर्थं स्वीकरोति। अतः शम्बराद्या-द्यनेकतथ्यवस्तुविषयप्रयोगदर्शनात् उचितनियमने सर्वानुगतार्थव्यवस्थापने, आश्चर्यत्वमेव मायाशब्दप्रवृत्ति-निमित्तम्। तदाश्रये तत्सृष्टिकरे च तच्छब्दप्रयोगः। अथवा आश्चर्यसर्गकरे प्रयुक्तो मायाशब्दः; अयं तु सौत्रो मायाशब्दः स्वाप्नार्थविषयकः आश्चर्यार्थक एव। अथवा विचित्रसूचनकरत्वात् आश्चर्यकर इत्येवार्थोऽस्तु॥

॥ ७६ ॥ अथ तद्भावाधिकरणम् ॥ ३-२-२ ॥

सूत्रम्—तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ अतः प्रबोधोऽस्मात् ॥ ७, ८ ॥

(२९९) स्थानं जन्तोः सुषुप्तौ श्रुतिरनियमतो वक्ति नाड्यः पुरीतत्
हार्दं ब्रह्मेति; तस्मादिह भवतु मिथो नैरपेक्ष्यात् विकल्पः।
तन्न प्रासादखट्वाशयनवदुपकृत्यन्तरैर्योजितानां
पक्षे पक्षे विकल्पः क्रमघटितचतुर्दोषयुक्तो न युक्तः ॥ ११ ॥

अत्र सङ्गतिभाष्ये, 'इदानीं सुषुप्तिस्थानं परीक्ष्यते' इति। पूर्वं स्वप्नो निरूपितः; इदानीं सुषुप्तिस्थानमित्यर्थः। तदर्थविचारस्तु—किं नाडीपुरीतद्ब्रह्मणि जीवस्य विकल्पेन सुषुप्तिस्थानानि, उत समुच्चयेनेति। किमेषां प्रासादखट्वापर्यङ्कवत् कार्यभेदोऽस्ति, नेति। 'सत आगच्छामहे' इति ब्रह्मणः प्रबोधश्रवणं ब्रह्मणः पर्यङ्कस्थानीयतामवगमयत् किं कार्यभेदमवगमयति, नेति। अत्र पूर्वपक्षी मन्यते—स्थानं जन्तोरित्यादि। जन्तोः सुषुप्तौ श्रुतिरनियमतो नाड्यः पुरीतत् ब्रह्मेति च स्थानं वक्ति=वदति। तस्मात् त्रयाणामपि स्थानानां मिथो नैरपेक्ष्यात् नाड्यो वा पुरीतद्वा ब्रह्म वेति विकल्प इति पूर्वः पक्षः। उक्तमर्थं प्रतिक्षिपति—तन्नेति। प्रतिक्षेपमेव युक्त्या विवृणोति—प्रासादेति। अयमर्थः—समुच्चये कार्यभेदाभावे हि विकल्पो न्याय्यः। अत्र पुनः कार्यभेदेन समुच्चयेन योजितानां प्रासादखट्वापर्यङ्कन्यायेन नाडीपुरीतद्ब्रह्मणां विकल्पो न न्याय्य एव। स च विकल्पोऽष्टदोषदुष्ट एव। तदेवाह—पक्षे पक्ष इति। 'व्रीहिभिर्यजेत', 'यवैर्यजेत' इति विकल्पेन अनुष्ठीयमानयोर्व्रीहियवयोः प्रथमं व्रीह्यनुष्ठाने यवशास्त्रविषयौ द्वौ दोषौ स्तः, यवशास्त्रे प्रामाण्यत्यागोऽप्रामाण्यस्वीकारश्चेति। समनन्तरं कदाचित् यवशास्त्रानुष्ठाने व्रीहिशास्त्रे प्रामाण्यत्यागोऽप्रामाण्यस्वीकारश्चेति द्वौ दोषौ स्तः तस्मिन्नेव व्रीह्यनुष्ठानसमये यवशास्त्रे त्यक्तप्रामाण्यस्वीकारः

---

११. परमात्मनो विश्रमस्थानत्वरूपो महागुण उच्यते। तत्र पूर्वपक्षमाह स्थानमिति। 'यत्रैतत् सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानाति, आसु तदा नाडीषु सुप्तो भवति' इति तदभावे=स्वप्नाभावे नाडीषु सर्पणोक्तेः सुषुप्तस्य नाड्य आधार इति ज्ञायते। 'ताभिः (नाडीभिः) प्रत्यवसृप्य पुरीतति शेते' इति श्रुतेः पुरीतदाख्यलोहितमांसपिण्डस्य शयनाधारत्वम्। 'यत्रैतत् पुरुषः स्वपिति नाम, सता सोम्य तदा संपन्नो भवति' इति सद्विद्यायां सतः स्थानत्वमुक्तम्। सच्च ब्रह्म। सर्वत्र ब्रह्मण आधारत्वादत्र को विशेष इत्यतो विशिनष्टि हार्दमिति। अन्तर्याम्यवतारभूतं विग्रहविशेषावच्छिन्नमत्र विवक्षितम्। तत्परिष्वंग एव संपत्तिः। परमात्मापृथक्सिद्धेर्वा संयोगस्य वा सार्वकालिकत्वाद्विशेषाभावात्। तस्मात् त्रयाणामाधारत्वश्रवणात् व्रीहियवयागकरणत्वन्यायेन निरपेक्षाधिकरणत्वप्रतीतेः कदाचित् किञ्चित् सुषुप्त्यधिकरणम्। तथा च ब्रह्मैव विश्रमस्थानमिति नेति पूर्वपक्षः। निरस्यति तन्नेति। व्रीहियवयोः पुरोडाशादिप्रकृतिद्रव्यतया एकरूपेणैव करणत्वात् विकल्पमन्तरा नैरपेक्ष्यं प्रतीतं न रक्षितुं शक्यम्। अत्र प्रासादे खट्वायां पर्यङ्के शेते इत्यत्रेव तत्तत्सम्युपात्तस्याधिकरणत्वस्यैकरूपत्वाभावेन एकैकमप्यधिकरणत्वं सजातीयाधिकरणत्वनिरपेक्षमेवेति तदभंगात् समुच्चय एव। अन्यथा विकल्पे दोषापत्तेः। अष्टदोषदुष्टो विकल्प इति व्रीहियवस्थले मीमांसकैरुक्तम्, यवानुष्ठानपक्षे व्रीहिशास्त्रे प्रामाण्यत्यागाप्रामाण्यस्वीकारः,

स्वीकृताप्रामाण्यपरित्यागश्चेति द्वौ दोषौ भवतः। पुनः परिवृत्य व्रीहिशास्त्रानुष्ठानरूपे तृतीये प्रयोगे व्रीहिशास्त्रे त्यक्ताप्रमाण्यस्वीकारः स्वीकृताप्रामाण्यपरित्यागश्चेति द्वौ दोषौ स्त इति प्रयोगत्रयात् अष्टदोषदुष्टत्वं द्वयोरपि शास्त्रयोश्चत्वारश्चत्वारो दोषा इति प्रथमानुष्ठानवेलायां द्वौ दोषौ, द्वितीयानुष्ठानवेलायां चत्वारः, तृतीयानुष्ठानवेलायां पुनर्द्वौ दोषाविति बुद्ध्या विभज्य, धीमद्भिर्भावनीयम्। [1]प्रकारान्तरेणाप्यष्टदोषदुष्टत्वमाहुर्विकल्पविषयमाचार्याः—व्रीह्यनुष्ठाने यवशास्त्रे प्रतिपत्त्यनुष्ठानापूर्वफलबाध इति चत्वारो दोषाः। एवं यवानुष्ठाने व्रीहिशास्त्रे प्रतिपत्त्यनुष्ठानापूर्वफलबाध इति चत्वारो दोषा इत्यष्टदोषदुष्टत्वम्। तेनायमर्थः—गत्यभावे विकल्पः स्वीकार्यः। सम्भवन्त्यां गतौ समुच्चय इति। अत्र प्रासादखट्वापर्यङ्कन्यायेन समुच्चयस्य सम्भवात् विकल्पो न स्वीकार्यः। क्रमघटितचतुर्दोषयुक्त इति—प्रयोगत्रयसिद्धमष्टदोषदुष्टत्वमनुवदति। तेन प्रयोगद्वयादिति बालकानां प्रतिभासो दुष्प्रतिभास इत्यर्थः॥ २९९॥

## ७७॥ अथ कर्मानुस्मृतिशब्दविध्यधिकरणम्॥ ३-२-३॥

सूत्रम्—स एव तु कर्मानुस्मृतिशब्दविधिभ्यः॥ ९॥

(३००) मुक्तिर्ब्रह्मण्यपीतिर्जहदसुखगणा तादृशीयं सुषुप्तिः
श्रुत्यैव ख्याप्यतेऽतस्तदनु तनुभृदुद्बुध्यमानस्ततोऽन्यः।
मैवं कर्मानुवृत्तेः स्मरणनियमतः पूर्व एवेति शब्दात्
मोक्षोपायादिशिष्टेः स्वपदनुवदनात् प्राच्य एव प्रबुद्धः॥ १२॥

सङ्गतिर्भाष्ये, 'किं सुषुप्त एव प्रबोधसमय उत्तिष्ठति, उतान्य इति संशये' इति। तदर्थविचारस्तु किं सुषुप्तादन्यः प्रबोधसमये उत्तिष्ठति, उत स एवेति। किं सुषुप्तौ सकलोपाधिविनिर्मोकोऽस्ति, उत नेति। किं कर्मानुस्मृतिशब्दविधयः सकलोपाधिविनिर्मोकाभावं गमयन्ति, नेति। ननु सुषुप्ति-

---

अथ व्रीह्यनुष्ठानपक्षे पूर्वं तत्र त्यक्तस्य प्रामाण्यस्य स्वीकारः, स्वीकृताप्रामाण्यत्यागश्च। एवं व्रीहिशास्त्रे चत्वारो दोषाः। एवं व्रीह्यनुष्ठानं प्रथममाहत्य यवशास्त्रे चतुष्कमुपपाद्यम्। द्वयोर्विकल्पे अष्टौ दोषाः। त्रयाणां विकल्पे ततोऽधिकाः। अत्र नाडीपुरीतद्ब्रह्मरूपस्थानत्रयविकल्पादावियमस्तीत्याशयेन अष्टेत्यनुक्त्वा पक्षेपक्षे चतुर्दोषेत्युक्तम्। स्वपतः पुरुषस्य व्री हयवशास्त्रानुष्ठातुरिव, एतच्छास्त्रार्थं करिष्यामि, तच्छास्त्रार्थं सत्यक्ष्यामीति बुद्ध्यभावेऽपि परीक्षकबुद्ध्या तदुपपादनं कार्यम्। अन्ततः, "कार्यभेदेन समुच्चये संभवति पाक्षिकबाधगर्भो विकल्पो न न्याय:" इति श्रीभाष्योक्तदोषस्य न हानिरिति ध्येयम्। उपकृत्यन्तरैरिति। कस्यचित् साक्षादाधारत्वम्, अन्यस्य तदाधारतया परम्परयेति उपकारभेदः। न च ब्रह्मणः सर्वाधारत्वात् प्रासादस्थानीयत्वमेव कस्मान्नेति शंक्यम्=सति लयस्य, तत्परिष्वज्यमानत्वस्य तत्र आगमनरूपस्य प्रबोधस्य च श्रवणात् पर्यङ्कस्थानीयत्वस्यैव प्रतीयमानत्वात्। परम्परया ब्रह्माधारकत्वस्य जागरे सर्वदैव वर्तमानतया विशेषाभावाच्च। ब्रह्मणोऽनुपलभ्यत्वाच्चोपलभ्यनाड्यादेरप्युक्तिः॥ २९९॥

१२. सुषुप्तिर्वर्णिता। सुषुप्तप्रबुद्धयोरैक्यसाधकाधिकरणार्थमाह मुक्तिरिति। जहत् त्यजत् असुखानां दुःखरूपाणां सर्वेषां गणः यां मुक्तिम्, सा जहदसुखगणा। मुक्तौ कालिकसंबन्धेनासुखं न भवति। समानकालिकयोरेव कालिकसंबन्धात् एकारमावच्छेदेन मुक्तेरसुखस्य च यौगपद्याभावात्।

---

1 प्रकारान्तरेणेति। श्रुतप्रकाशिकायां 57. पुटे द्रष्टव्यम्।

र्गम मुक्तिप्रायैव। मुक्तिः किल जहदसुखगणा = दुःखसङ्घातविरहिता ब्रह्मण्यपीतिरेव = प्रलय एव श्रुत्यैव ख्याप्यते। तेन तदनु सुषुप्त्यनन्तरमुद्बुध्यमानस्तनुभृत् अन्य एवेति पूर्वपक्षानुवादः क्रियते—मुक्तिरिति। इमं पक्षं प्रतिक्षिपति—मैवमिति। मुक्तेः स्वापस्य विशेषं दर्शयति—कर्मानुवृत्ते-रित्यादिना। पूर्वकर्मानुवृत्तेः। कर्मफलस्य सुखदुःखादेर्दर्शनात् कर्मानुवृत्तिर्दृश्यत एव सुप्तोत्थितस्य। तेन स एवोत्थित इति मन्तव्यम्। अनुस्मृतिरपि। पूर्ववासनानुभूतमर्थं सुप्तोत्थितः स्मरन्नेव दृश्यते। अन्यत्वे कथमिव स्मरणं सम्भवति? शब्दोऽपि, 'त इह व्याघ्रो वा' इत्यादिभाष्योपात्तः। विधिरपि। सुषुप्तस्यैव मुक्तत्वे मोक्षार्थविधयः कथं सङ्घटेरन्? अयत्नलभ्यस्य किं यत्नेनेति। स्वपदनुवदनादिति। 'नाह खल्वयमेवम्' इत्यादिना, 'नाहमत्र भोग्यं पश्यामि, विनाशमेवापीतो भवति' इति सुषुप्तस्यानुवदनाच्च प्राचीन एव विनष्टप्रायः पुरुषः प्रबुद्धो भवतीति मन्तव्यम्॥ ३००॥

(३०१) जीवानादित्वमूचे; इषदनुकरणं क्षेप्स्यते चापवर्गे;
स्वर्गाद्यर्थप्रवृत्तिः श्रुतिनयविदिता; सौगताद्याश्च भग्नाः।
कल्पान्तेऽप्येकनोक्तिः नियमितविषया नामरूपप्रहाणात्;
भूयश्चिन्ता सुषुप्तेः प्रलयसमदशासञ्जिहासादिसिद्ध्यै॥ १३॥

इति कर्मानुस्मृतिशब्दविध्यधिकरणम्॥ ७७॥

अत्र सुषुप्तस्यैव प्रबोधनसमये पुनरुत्थानमिति किमर्थं स्थाप्यते, विशेषप्रयोजनाभावादित्याशङ्क्यात्यन्तोपयुक्तं प्रयोजनविशेषमाह–जीवानादित्वमित्यादिना पद्येन। जीवानाम् अनादित्वसिद्ध्यर्थमिदं सूत्रं चेत्–तन्नो(त् प्रो?)क्तमेव; 'न कर्माविभागादिति चेन्न; अनादित्वात्' इत्यादिना। मोक्षे इषदनुकरणक्षेपणं–मूढत्वक्षेपणमनेन सूत्रेण क्रियते चेत्–तदप्युत्तरत्र करिष्यते। स्थायित्वोपपादनेन

---

इयं मुक्तिर्ब्रह्मणि जीवस्याप्यय इति प्रसिद्धम्। 'स्वमपीतो भवति' इति सुषुप्तिरपि ब्रह्मण्यपीतित्वेन ख्याप्यते। न च मुक्तस्य पुनः संसारः। अतः प्रबुद्धोऽपि सुषुप्तादन्य इति पूर्वपक्षः। निरस्यति मैवमिति। कर्मादीन् सौत्रान् चतुरो हेतून् विवृत्य गणयति कर्मेति। कर्मानुवृत्तिः वैदिकलौकिकपूर्वारब्धकार्यानुवृत्तिः पुण्यपापरूपादृष्टानुवृत्तिश्च; स्मरणनियमः=अनुसरणम् पूर्वं सुषुप्त एवाहमिति प्रत्यभिज्ञा पूर्वानुभूतस्मरणञ्च। पूर्व एवेति शब्दादिति। 'व्याघ्रो वा वराहो वा दंशो वा मशको वा यद्यद् भवन्ति, तदा भवन्ति' इति देहादिसंघातजीवात्मोभयमपि यत् पूर्वं तदेव प्रबुद्धमपीति स्पष्टवचनादित्यर्थः। आभवन्ति पुनर्भवन्ति; पश्चादपि त एव सन्तीत्यर्थः। मोक्षेति। यदि सुषुप्तावेव मुक्तिः अनायासेन स्यात्, किमिति मोक्षोपायविधानम्। ऐहिकामुष्मिकफलार्थविधानं वा कथं भवति रात्रौ मोक्ष्यद्विषये। सूत्रार्थ आसीत्। भाष्ये, 'न चासौ सर्वोपाधि' इत्यादिना भाषितमधिकमर्थं संगृह्णाति स्वपदनुवदनादिति। इदञ्च भाष्यं सुषुप्तेः अभोग्यरूपत्वं मुक्तेर्भोग्यरूपत्वमिति वैलक्षण्यप्रदर्शकम्। तेन मुक्तिसुषुप्त्यैक्यासंभवसिद्धिः। एवं स्वपदनुवादोऽप्यनुस्मृतिफलभूतः शब्देऽन्तर्भूतो वा सुप्तप्रबुद्धभेदबाधक इति भावः। असुखगणेत्यत्रासुखं संसारानुभवसामान्यम्॥ ३००॥

१३. ननु सुषुप्तप्रबुद्धयोर्भिन्नत्वं न कश्चिल्लोके प्रतिपद्यते। न च प्रत्यक्षविरुद्धं शास्त्रप्रमेयं स्यात्। प्रत्यक्षसिद्धाकारस्य तद्विपरीताकारस्य च शास्त्रज्ञेयत्वात्। ननु ज्ञातोऽप्यर्थः अर्थान्तरसूचनाय ज्ञाप्यते इति चेत्–किं तत् सूच्यमिति विमृश्याक्षिपति जीवेति। जीवानादित्वं न सूच्यार्थः। तद्धि, 'न

जीवानां स्वर्गाद्यर्थप्रवृत्तिः क्रियते चेत्—साऽपि श्रुतिनयविदिता—कृत्स्नस्यापि मीमांसाशास्त्रस्य, [जीव?]स्थायित्वमन्तरेणानुपपत्तेः स्वर्गाद्यर्थप्रवृत्तिरपि श्रुत्या तदनुग्राहकन्यायेन च पूर्वमेव विदिता। आत्मस्थैर्योपपादनेन [1]क्षणभङ्गभङ्गश्चेत्–सोऽपि सौगताधिकरणादिषु सिद्धः। जीवस्य सुषुप्तावीश्वरैकत्वनिराकरणार्थमिदमधिकरणं चेत्–तस्य कल्पान्तेऽप्येकत्वमपि नामरूपादिप्रहाणमात्रात्(त्रेण); न पुनः स्वरूपैक्यादिति तत्रतत्रोक्तम्। तेन साऽप्युक्तिर्नियमितविषया। अतो भूयश्चिन्ता सुषुप्तेः(तेषु) न कर्तव्या–इति कस्यचित् बालप्रायस्य चोद्यमनूदितं परिहरति—प्रलयसमदशासञ्जिहासादिसिद्ध्या इति। नैयायिक[2]दुर्दुरूटाः केचित् पाषाणप्रायमेव मोक्षं वदन्ति। तर्हि, 'नाहमत्र भोग्यं पश्यामि', 'विनाशमेवापीतो भवति' इति निन्दिता सुषुप्तिरपि मुक्तिस्स्यात्। नेयं मुक्तिरिति मनीषिभिः प्रार्थ्यते। एवं पाषाणवत् मुक्तिरिति वैराग्यपादे तन्मुक्तिनिन्दया तज्जिहासाविशेषोऽपि सिध्यति(तीति)। तदर्थमयं प्रसङ्ग(प्रस्ताव?) इति न नैरर्थक्यमित्यर्थः॥३०१॥ इति कर्मानुस्मृतिशब्दविध्यधिकरणम्॥७७॥

कर्मानादित्वात्' इत्यादावेवोक्तमस्ति। तार्किकोक्तं दृषदनुकरणं पाषाणकल्पत्वं अपवर्गे मुक्तौ क्षेप्तुमित्यपि न; चतुर्थचतुर्थे, 'भोगमात्रसाम्यलिङ्गाच्च' इत्यन्तेन क्षेप्स्यते हि तत्। अपवर्गस्वरूपमुपरि शोध्यताम्; सुषुप्तप्रबुद्धयोर्भेदे स्वर्गाद्यर्थप्रवृत्तिरपि न स्यात् किल। अतस्तत्स्थापनमेव फलमस्तु इत्यपि न। सा हि कर्मकाण्डे प्रागेव श्रुत्या युक्त्या च सिद्धा॥ आत्मनां क्षणिकत्वं बौद्ध आह। देहे उपचयापचयतो भेदे आत्मभेदमपि देहात्मवादी चार्वाको ब्रूयात्। तेषां भङ्गार्थमिति चेत्–अत्र द्वितीयद्वितीये, पूर्वं कर्मकाण्डे च ते सर्वे भग्ना एव। वेदान्ते सति ब्रह्मणि जीवस्य सुषुप्तौ लयप्रतिपादनात् तदर्थविवेचनार्थमेतदिति चेत्, तत्राह कल्पेति। 'तमः परे देव एकीभवति', 'उभावेतौ लीयेते परमात्मनि' इति प्रलये लयशंका कथं परिहार्या? कर्मानादित्वोक्त्या, प्रलये सूक्ष्मचिदचिद्विशिष्टगमकसत्त्वेन, पृथिव्यादिवत् लयानुक्त्या च एकीभावोक्तिः नामरूपप्रहाणपूर्वकसंसर्गविशेष एवैकीभाव इति नियमिता(व्यवस्थापिता)र्थविशेषेति तच्छंकापरिहारे ज्ञाते, सुषुप्तौ लयशंका कथम् इति। एवमाशंक्य प्रयोजनान्तरार्थमिदमित्याह भूय इति। अयं भावः–सुषुप्तौ परब्रह्मसंपत्तेः पूर्वाधिकरणे उक्तत्वात् संपरिष्वंगवाक्येन स्तुतिप्रतीतेश्च सुषुप्तेर्मुक्तितुल्यत्व शंकायाम्, तत्र एव, 'सुखमहमस्वाप्सम्' इति प्रतीत्या च सुषुप्तेर्भोग्यत्वभ्रान्तौ सत्याम् अत्र, यदि प्रलयदशायामेव देहाभावेऽपि जीवः पूर्वकल्पान्ते प्रलीनः कल्पान्तरारम्भे जन्मार्थमनादिकर्मादिजटिलोऽवतिष्ठते, तर्हि सुषुप्तौ देहादिसद्भावात् पूर्वदिनादिकृत्याविस्मरणाच्च ततोऽधिकं कर्मजटिल एवास्तीति सुषुप्ते प्रलयसमदशा प्रलयान्यूनदशा साधनीया। तत्सिद्धौ, स्वप्नावस्थायामिव सुषुप्त्यवस्थायामपि संजिहासा=हातुमिच्छा सिद्धयेत्। तद्विलक्षणत्वात् मुक्तेः, (आदिपदग्राह्य) तद्वश्यप्रेप्साप्रयत्नादिकमपि सिध्येत्। एवं तद्दशानिर्णयमूलक–तज्जिहासादिसिद्ध्यै इदमधिकरणम्। अयमेवार्थः पूर्वं मुक्तिवैलक्षण्य प्रतिपादनेन ज्ञापित इति। चिन्तामणौ प्रलयसमदशायाः पाषाणकल्पत्वस्य संजिहासायै इति व्याख्यातम्। पदयोजनायां काणादकल्पितपाषाणकल्पत्वरूपतदर्थमुपेक्ष्य प्रतिदिनानुभूयमानप्रलय-समदशेत्युक्तम्। अन्ततः पूर्वोक्तार्थ एव सर्वाभिमतः स्यात्॥ ३०१॥

1. क्षणेति। क्षणे भंगः, एकक्षणमात्रेण नाशः क्षणिकत्वम्, तस्य बौद्धमतस्य भंग इत्यर्थः। 2. नैयायिक; दुर्दुरूटः दुरुत्क्षेपकर्ता। दुरु उत्क्षेपे। कूटप्रत्ययः। வாக்கிலும் தூக்கி எறிகிறவன்,

## ७८ ॥ अथ मुग्धाधिकरणम् ॥ ३-२-४ ॥

सूत्रम्—मुग्धेऽर्धसम्पत्तिः परिशेषात् ॥ १० ॥

(३०२) जाग्रत्स्वप्नौ न बाह्यावगमविरहितौ श्वासपूर्णा सुषुप्तिः
तस्मात् मुग्धिर्मृतिस्स्यात् प्रशमितकरणप्राणवर्गेति चेन्न ।
मृत्यादेर्हेतुभेदात् स्थितिमृतिविशयात् उत्थितेरानियत्यात्
मर्तुं प्रक्रम्य मध्ये विरमति विधिनेत्यत्र तुर्यार्धभावः ॥ १४ ॥

इति मुग्धाधिकरणम् ॥ ७८ ॥

जाग्रत्स्वप्नसुषुप्तिरूपावस्थाविशेषान् परिशोध्य, अनन्तरं मूर्च्छारूपा सुषुप्तितुल्यावस्था विचार्यत इति सङ्गतिः। जाग्रत्स्वप्नयोः प्रज्ञायुक्तत्वात् सुषुप्तिमूर्च्छयोः प्रज्ञाविलोपकरूपत्वात् तयोर्मिथस्सङ्गतिः। तदर्थविचारस्तु—किं मूर्च्छा जाग्रत्स्वप्नसुषुप्त्यादीनामन्यतमावस्था, उतावस्थान्तरमिति । किं लक्षणतो भेदो व्यवस्थापयितुं शक्यते, नेति। किं सूक्ष्मप्राणसम्बन्धो मूर्च्छेति लक्षणं भवति, नेति। अत्र पूर्वपक्षी प्राह—'जाग्रत्स्वप्नसुषुप्तिमरणभेदेन चत्वारो ह्यवस्थाविशेषा लोके प्रसिद्धाः। तत्र जाग्रत्स्वप्नौ बाह्यज्ञानविरहितौ न भवतः। सुषुप्तिश्च श्वासपूर्णत्वान्न मूर्च्छा। अतो मूर्च्छा मरणमेव प्रशमितकरणप्राणवर्गत्वादिति । तदिदमनुवदति—जाग्रदिति । तत् प्रतिक्षिपति—नेति । मूर्च्छामरणयोर्भेदे कारणभेदमेव तावत् प्रमाणयति-मृत्यादेरिति। अभिघातादिमात्रात् मूर्च्छा, शिरश्छेदादेर्मरणमिति मूर्च्छामरणकारणयोर्भेदादित्येको हेतुः । हेत्वन्तरमप्याह—स्थितीति । मूर्च्छिते पर्यन्तस्थिताः स्थितो वा मृतो वेति विशेरते । स च संशयो मूर्च्छामरणयोर्वैषम्यमावेदयति । तृतीयमपि हेतुमाह-उत्थितेरिति । मूर्च्छितेष्वेव कश्चित् मन्त्रौषधादिविभवात् पुनरुत्तिष्ठते(ति?) । मृतस्तु गच्छत्येव । [बहुशः]एवमुत्थानस्यानियतत्वादित्यर्थः । तर्हि मूर्च्छेति कोऽयमवस्थाविशेष इत्याशङ्क्याह—मर्तुमिति । मर्तुं प्रक्रम्य विधिना मध्ये विरमतीति मरणस्या(णाया)र्धसम्पत्तिरूपावस्थाविशेषो मूर्च्छेति परिकल्पनीयमिति। अर्धमरणं मूर्च्छेत्यर्थः ॥ ३०२ ॥ इति मुग्धाधिकरणम् ॥

---

१४. स्वप्नसुषुप्ती अत्र दर्शिते। मृतिरूपावस्था पूर्वपाद एवार्थादुक्ता। वक्ष्यते च चतुर्थद्वितीये। मूर्च्छावस्थैवावशिष्टाऽत्र निरूप्यते । मृतिशब्दार्थत्वाऽऽपातप्रतीतस्य पृथगेतावदनिष्कर्षात् मृतिमूर्च्छयोरेकत्वशंका। मूर्च्छायां प्राणकरणप्रशमो लक्ष्यते, मृतौ च। जागरे स्वप्ने च करणानामिन्द्रियाणां कृत्यं स्पष्टम्। सुषुप्तौ तदभावेऽपि श्वासप्रश्वासाधिक्यस्योपलम्भात् प्राणकृत्यं पूर्णम्। तथाच करणप्राणवर्गव्यापारोपरतिरेव मृतिः मूर्च्छा चेति पूर्वपक्षः । निरासे हेतुमाह मृतीति । मृतेः मरणस्य आदिपदग्राह्याया मूर्च्छायाश्च हेतुभेदात् कारणवैचित्र्यात् कार्ययोरपि भेद एव । शिरश्छेदादेर्मृतिहेतोर्मूर्च्छाहेतुत्वाभावात्। कारकहेतुभेद उक्तः। भेदज्ञापकहेतुमाह स्थितीति। तत्र ज्ञापकं हेतुमाह उत्थितेरिति यद्यपि अभिघातो मूर्च्छाद्वारा मृतिमपि जनयेत्, अथापि मर्तुं प्रक्रम्य=मृतिहेतुं प्राप्य मध्ये पुरुषो विरमति मृतिप्रतिबन्धकविशिष्टो भवति। तत्र हेतुः विधिः जीवनभाग्यम्। प्रतिबद्धमृतिहेतुकत्वं मूर्च्छा। प्रतिबन्धापाये मृतिः। प्रतिबन्धमध्ये मारकव्यापारनाशे उत्थितिरिति तदनैयत्यम्। आनियत्यम् अनियतत्वम्। मृतौ प्राणनिष्क्रमणम्। मूर्च्छायामुपरतव्यापारप्राणसंबन्धः। अत्र मूर्च्छायां तुर्यार्धभावः मृत्यर्धत्वम् ॥३०२॥

जीवेश्वरैश्वर्यापहरणप्रवृत्तकुहनावादमोमुह्यमानान् निराकर्तुं, 'न स्थानतोऽपि'इत्यधिकरणमारभ्यते। अनेकरूपङ्गम्=बहुप्रकारमित्यर्थः ॥ ३०४ ॥

(३०५) हेयं वस्तु स्वतो यत् स्थितिरिह हि भवेद् दुःखकृत् स्वेच्छयाऽपि ;
त्याज्यत्वं नान्यथा स्यादिति न ; निरुपधेर्हेयभावस्य हानेः ।
नित्यस्वातन्त्र्यभाजो भविन इव दशाभेदतो नाप्यवद्यं
श्रुत्यैवैकत्र देहे परतदितरयोः शुद्ध्यशुद्धी ह्यधीते ॥ १७ ॥

'दोषदर्शनाद्' इत्यादिना भाष्ये सङ्गतिर्व्यक्ता। प्रदर्शिता चास्माभिः पूर्वमेव। तदर्थविचारस्तु—सुषुप्त्युत्क्रान्त्यादिस्थानेषु स्थितस्य जीवस्य ये भवन्त्यपुरुषार्थाः, ते तदन्तर्यामिणः तच्छरीरस्यापि प्रसज्यन्ते, नेति। किं जीवस्यापुरुषार्थसम्बन्धः शरीरसम्बन्धनिबन्धनः, उत कर्मसम्बन्धनिबन्धन इति। किं सशरीरस्यापि ब्रह्मण उभयलिङ्गत्वं श्रुतिप्रतिपन्नं कर्मसम्बन्धस्यैवापुरुषार्थत्वहेतुतामवगमयति, नेति। किं श्रुतिप्रतिपन्नमुभयलिङ्गं तात्त्विकम्, उतातात्त्विकमिति। किं, 'अथात आदेशो नेति नेति' इति प्रकृतः सर्वविशेषनिषेधः, उत प्रकृतैतावत्त्वनिषेधः इति। किं सर्वविशेषनिषेधे वाक्योपक्रमोपसंहारसामञ्जस्यम्, उत प्रकृतैतावत्त्वनिषेधे इति। अत्र पूर्वपक्ष्यभिप्रायं विशेषतः प्रदर्श्य सिद्धान्त्यभिप्रायेण निराकरणमपि दर्शयति—हेयमिति। इत्थं किल पूर्वपक्षी मन्यते—पूयशोणितादिमज्जनं हि यथा राजकिङ्करस्य हेयम्, तथा राज्ञोऽपि हेयमेव ; अन्यथा तस्य हेयत्वमेव न स्यात्। तथाचेश्वरस्यापि जीववत् देहावस्थानं दुःखकारणमेव स्यात्। ननु जीवः कर्मपरतन्त्रो देहे वर्तते ; ईश्वरः स्वेच्छयैव ; अतो न दोष इत्याशङ्क्य परिहरति—स्वेच्छयाऽपि पूयशोणितादिमज्जनं (मज्जने अनर्थो?) दृश्यते। अपर्यनुयोज्यत्वात् वस्तुस्वभावानामित्यर्थः।

उक्तमर्थं प्रतिक्षिपति—नेति। तत्र हेतुमाह—निरुपधेरिति। अयमर्थः—लोके हि त्याज्यो-

---

एकैकत्रोभयसद्भावज्ञापनाच्च। जीवेशैक्ये जीवस्य सदोषत्वादेव ब्रह्मसदोषत्वस्य स्थित्या वैलक्षण्यबोधस्यासंभव एव। उभयलिंगपादे उभयलिंगत्वं स्थापनीयम्, न तु परस्य नोभयलिङ्गमिति निषेध्यम्। उभयलिङ्ग निषेधपाद इति हि तदा नाम स्यात्। निर्दोषत्वमात्रस्थापने तार्किकसंमतमुक्तात्मतुल्यमेव ब्रह्म स्यादिति उभयलिंगत्वस्थापना। स्वप्रकाशत्ववत् सर्वगुणाकरत्वमपि सूत्रेण दर्श्यत इति तद्वदेव धर्माणामाविद्यत्वपक्षो निर्मूलः। तत्पक्षे च सदोषत्वनिर्दोषत्वयोर्जीवे ईशे च न विशेष इति न विशेषप्रसक्तिरित्यादि विमृश्यम्। अद्वैतिभिः निषेध्यमुभयलिंगम्, केवलसाकारत्वं निराकारत्वविशिष्टसाकारत्वञ्च। अत्र श्लोके तैः स्थाप्यमुभयलिंगमप्यस्ति निर्गुणत्वं निर्दोषत्वञ्चेत्यपि ज्ञाप्यते ॥ ३०४ ॥

१७. अधिकरणपूर्वपक्षोत्तरपक्षौ संगृह्णाति हेयमिति। स्वतः स्वभावतो यत् हेयम्, इह स्थितिः=तद्वस्तुसंबन्धो दुःखकृत् दृश्यते। सा स्थितिः परेण कार्यमाणैव दुःखहेतुः, यथा कारागृहस्थितिश्चोरस्य, न तु काराधिकारिणः स्वेच्छाकृता इति नास्ति, स्वेच्छाकृताऽपि दुःखकृदेव। यथा पूयशोणितादिगर्तमज्जनम्। अन्यथा=स्वतो दुष्टत्वाभावे त्याज्यत्वं न स्यात्। तथाच हेयभूतजागराद्यवस्थापन्नवस्तुसंबन्धः परस्य दुःखकृदेवेति पूर्वपक्षः। इमं निरस्यति इति नेति। हेतुमाह निरुपधेरिति। जीवावस्थानाम्, अन्येषां प्राकृतानां वस्तूनाञ्च हेयत्वस्य निरुपधिकत्वाभावात्। उपाधिप्रयुक्तमेव तेषां

(३०४) नैर्गुण्यं निर्गुणोक्तेर्गुणवचनमिहाऽविद्यधर्मार्थवादो
नैर्दोष्यं वस्तुवृत्त्या ; तदितरदखिलं स्वाप्नभोगादितुल्यम् ।
इत्थं जीवेशभूमापहरणकुहनावादमोमुह्यमानान्
क्षेप्तुं 'नस्थानतोऽपी'त्यधिकरणमथाऽऽरभ्यतेऽनेकशृङ्गम् ॥ १६ ॥

पूर्वाधिकरणे संसरन्तं मरणावस्थाधीनं जीवं वैराग्यातिशयसिद्ध्यर्थमुक्त्वा प्राप्यतृष्णाविशेषसिद्ध्यर्थं भगवत उभयलिङ्गत्वमुच्यत इति सङ्गतिः। तदिदं व्यक्तमेव दर्शयति—नैर्गुण्यमिति। अत्र मृषावादिनां पक्षमनूद्य विशेषतस्तत्प्रतिक्षेपार्थमेवेदमधिकरणं प्रवृत्तम्। ते खल्वेवमाहुः—'निर्गुणं निरञ्जनम्' इति ब्रह्मणो नैर्गुण्यमेव प्रामाणिकम्। तर्हि, 'सत्यकामः सत्यसङ्कल्पः' इत्यादिगुणवचनस्य का गतिरित्याशङ्क्याह—गुणवचनमिति। अविद्यापरिकल्पितधर्मार्थवादमात्रमेव गुणवचनम्। प्रलोभनार्थमित्यर्थः। तर्हि गुणाभावे किं ब्रह्मणो दोषवत्त्वमेव स्वाभाविकमिति भवतोच्यत इत्याशङ्क्याह—नैर्दोष्यमिति। अयमर्थः—ब्रह्मणि नैर्गुण्यं नैर्दोष्यं चोभयमपि स्वाभाविकमिति। तदिदमाह—वस्तुवृत्त्येति। तर्हि श्रुतिपुराणादिसिद्धं ब्रह्मगुणविग्रहादिकं संसारसम्बन्धश्च सर्वलोकप्रसिद्धः किं भवेदित्याशङ्क्याह—तदितरदिति। उक्तमेतदेकदेशमात्रमस्माभिः। इत्थम्=एवं

---

१६. अत्र मृषावादिमतनिरासरूपं प्रथमाधिकरणकृत्यं संग्रहेणाऽऽह नैर्गुण्यमिति। त एवमाहुः-निर्गुणत्वं निर्दोषत्वञ्च वस्तुवृत्त्या वास्तवं ब्रह्मणि। 'निर्गुणं निरञ्जनम् इत्युक्तेः। तत्र निर्दोषत्वे विवादो न द्वैतिना क्रियेत। 'सत्यकामः सत्यसंकल्पः' इत्यादिश्रवणात् सगुणत्वप्र तीत्या कथं निर्गुणत्वमिति विवादः परमस्ति। तत्र **गुणवचनं** गुणबोधकवाक्यम् अविद्याधीनधर्मविषयकार्थवादरूपम्। ननु आविद्यत्वे असत्यत्वं स्यात्। अत्र सत्यकामः इति सत्यत्वप्रतीतिविरोध इत्याक्षेपपरिहाराय **अर्थवाद** इत्युक्तिः। असत्यस्य सत्यत्वेन प्रशंसा क्रियते, जीवसंबन्धिकामापेक्षया किञ्चिद्वैलक्षण्यमभिप्रेत्य। **ततः**=तस्मात् **इतरत्** अभावरूपोक्तधर्मातिरिक्तं सर्वज्ञत्वसर्वशक्तित्वकारणत्वोपास्यत्वफलप्रदत्वादि सर्वं जीवगतस्वप्नभोगवत् मिथ्याविषयकम्। चिदचित्प्रपञ्चस्यैवाभावात्। सर्वरूपप्रतिसंबन्ध्यभावे सार्वज्ञ्यादेः का प्रसक्तिः। गुणश्च हि तत्रेष्टः? सर्वो ज्ञानं शक्तिर्वा। उभयं विषयाभावादसिद्धमिति। **भोगपदं** भोग्यपरं वा। तदा **इतरदिति** सर्ववस्तुग्रहणमपि। इत्थं **जीवेशभूम्नोः** जीवस्यौपाधिकज्ञानसंकोचादिदोषसत्त्वेऽपि अपहतपाप्मत्वसत्यकामत्वभगवत्कैंकर्यसाम्राज्यरूपो यो **भूमा**, यश्च सर्वशेषित्वाधारत्वनियन्तृत्वनित्यसूरिनित्यानुभाव्यत्वादिरूप ईश**भूमा**, तयोरपहरणेन कुहनावादेन सकलगुणविभूत्यपलापात्मना **मोमुह्यमानान्** स्वोक्तमप्रकम्प्यमिति स्वयमेव मुधागर्वेण मोहातिशयं प्राप्तान् क्षेप्तुमिदमधिकरणम्। इद **मनेकशृंगम्** अनेकमुखम्। वस्तूनां हेयत्वात् तत्संबन्धरूपदोषवत्त्वं निर्दोषेऽपि दशाभेदेन दुष्टमिति शंका, ब्राह्मणादिनामभाक्त्वात् कर्मवश्यत्वापातः इति च निर्दोषत्वांशे आक्षेपः, अथ नेतिनेतीति निषेधात् गुणानां वस्तूनाञ्च मिथ्यात्वशंका, ज्ञानमात्रत्वोक्त्या तदन्यगुणाभावशंका जलाद्युपाध्यसंबन्धिसूर्यविलक्षणत्वात् दुष्टत्वशंका। मूर्तामूर्तप्रपञ्चनिषेधात् निष्प्रपञ्चत्वशंका। उभयलिंगत्वाय सर्वैतत्परिहारस्य क्रियमाणतया अनेकशृंगत्वम्।

अत्र जीववत् जागरादिसंबन्धात् दुष्टत्वशंकायाः क्रियमाणत्वात् जीवब्रह्मभेद एवेष्टो ज्ञायते।

जीवेश्वरैश्वर्यापहरणप्रवृत्तकुहनावादमोमुह्यमानान् निराकर्तुं, 'न स्थानतोऽपि' इत्यधिकरणमारभ्यते। अनेकश्रृङ्गम्=बहुप्रकारमित्यर्थः ॥ ३०४ ॥

(३०५) हेयं वस्तु स्वतो यत् स्थितिरिह हि भवेद् दुःखकृत् स्वेच्छयाऽपि ;
त्याज्यत्वं नान्यथा स्यादिति न ; निरुपधेर्हेयभावस्य हानेः ।
नित्यस्यातस्त्र्यभाजो भविन इव दशाभेदतो नाप्यवद्यं
श्रुत्यैवैकत्र देहे परतदितरयोः शुद्ध्यशुद्धी ह्यधीते ॥ १७ ॥

'दोषदर्शनात्' इत्यादिना भाष्ये सङ्गतिर्व्यक्ता। प्रदर्शिता चास्माभिः पूर्वमेव। तदर्थविचारस्तु-सुषुप्त्युत्क्रान्त्यादिस्थानेषु स्थितस्य जीवस्य ये भवन्त्यपुरुषार्थाः, ते तदन्तर्यामिणः तच्छरीरस्यापि प्रसज्यन्ते, नेति। किं जीवस्यापुरुषार्थसम्बन्धः शरीरसम्बन्धनिबन्धनः, उत कर्मसम्बन्धनिबन्धन इति। किं सशरीरस्यापि ब्रह्मण उभयलिङ्गत्वं श्रुतिप्रतिपन्नं कर्मसम्बन्धस्यैवापुरुषार्थत्वहेतुतामव-गमयति, नेति। किं श्रुतिप्रतिपन्नमुभयलिङ्गं तात्त्विकम्, उतातात्त्विकमिति। किं, 'अथात आदेशो नेति नेति' इति प्रकृतः सर्वविशेषनिषेधः, उत प्रकृतैतावत्त्वनिषेधः इति। किं सर्व-विशेषनिषेधे वाक्योपक्रमोपसंहारसामञ्जस्यम्, उत प्रकृतैतावत्त्वनिषेधे इति। अत्र पूर्वपक्षयभि-प्रायं विशेषतः प्रदर्श्य सिद्धान्त्यभिप्रायेण निराकरणमपि दर्शयति—हेयमिति। इत्थं किल पूर्वपक्षी मन्यते—पूयशोणितादिमज्जनं हि यथा राजकिङ्करस्य हेयम्, तथा राज्ञोऽपि हेयमेव; अन्यथा तस्य हेयत्वमेव न स्यात्। तथाचेश्वरस्यापि जीववत् देहावस्थानं दुःखकारणमेव स्यात्। ननु जीवः कर्मपरतन्त्रो देहे वर्तते; ईश्वरः स्वेच्छयैव; अतो न दोष इत्याशङ्क्य परिहरति—स्वेच्छयाऽपि पूयशोणितादिमज्जनं (मज्जने अनर्थो?) दृश्यते। अपर्यनुयोज्यत्वात् वस्तुस्वभावानामित्यर्थः।

उक्तमर्थं प्रतिक्षिपति—नेति। तत्र हेतुमाह—निरुपधेरिति। अयमर्थः—लोके हि त्याज्यो-

---

एकैकस्योभयसद्भावज्ञापनाच्च। जीवेशैक्ये जीवस्य सदोषत्वादेव ब्रह्मसदोषत्वस्य स्थित्या वैलक्षण्योक्त्यसंभव एव। उभयलिंगपादे उभयलिंगत्वं स्थापनीयम्, न तु परस्य नोभयलिङ्गमिति निषेध्यम्। उभयलिङ्ग निषेधपाद इति हि तदा नाम स्यात्। निर्दोषत्वमात्रस्थापने तार्किकसंमतमुक्तात्मतुल्यमेव ब्रह्म स्यादिति उभयलिंगत्वस्थापना। खप्रकाशत्ववत् सर्वगुणाकरत्वमपि सूत्रेण दर्श्यत इति तद्वदेव धर्माणामाविद्यत्वपक्षो निर्मूलः। तत्पक्षे च सदोषत्वनिर्दोषत्वयोर्जीवे ईशे च न विशेष इति न विशेषप्रसक्तिरित्यादि विमृश्यम्। अद्वैतिभि निषेध्यमुभयलिंगम्, केवलसाकारत्वं निराकारत्वविशिष्टसाकारत्वञ्च। अत्र श्लोके तैः स्थाप्यमुभयलिंगमप्यस्ति निर्गुणत्वं निर्दोषत्वञ्चेत्यपि ज्ञाप्यते ॥ ३०४ ॥

१७. अधिकरणपूर्वपक्षोत्तरपक्षौ संगृह्णाति हेयमिति। स्वतः स्वभावतो यत् हेयम्, इह स्थितिः=तद्वस्तुसंबन्धो दुःखकृत् दृश्यते। सा स्थितिः परेण कार्यमाणैव दुःखहेतुः, यथा कारागृहस्थिति-श्चोरस्य, न तु काराधिकारिणः स्वेच्छाकृता इति नास्ति, स्वेच्छाकृताऽपि दुःखकृदेव। यथा पूयशोणि तादिगर्तमज्जनम्। अन्यथा=स्वतो दुष्टत्वाभावे त्याज्यत्वं न स्यात्। तथाच हेयभूतजागराद्यवस्था-पन्नवस्तुसंबन्धः परस्य दुःखकृदेवेति पूर्वपक्षः। इमं निरस्यति इति नेति। हेतुमाह निरुपधेरिति। जीवावस्थानाम्, अन्येषां प्राकृतानां वस्तूनाञ्च हेयत्वस्य निरुपधिकस्याभावात्। उपाधिप्रयुक्तमेव तेषां

पादेयभाव उपाधिभेदेनान्यथाक्रियते। यथा प्रातरनुकूलमौष्ण्यं मध्याह्ने प्रतिकूलमेव; शैत्यं च मध्याह्नेऽनुकूलं प्रातः प्रतिकूलमेव। एवं पुरुषभेदेनापि दृश्यते। पशूनामनुकूलं तृणादिकं मनुष्याणां प्रतिकूलम्। एवमवस्थाभेदेनापि। क्षुधितस्यानुकूलमन्नं मृष्टमेव भुक्तवतः प्रतिकूलमेव। तदिदमुक्तं भगवता पराशरेण—'तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते। तदेव कोपाय यतः प्रसादाय च जायते॥ तस्मात् दुःखात्मकं नास्ति न च किञ्चित् सुखात्मकम्॥' इति। प्रतिपत्तृ(प्रतिसंबन्धि ?)- भेदेनापि सुखदुःखविभागो दृश्यते। एकस्मिन्नेव बालके तव पुत्रोऽयमित्युक्ते सुखम्, शत्रुपुत्र इत्युक्ते दुःखम्। एवं तत्तदुपाधिभेदात् सुखदुःखविपरिणामः सर्वलोकसाक्षिकः सुप्रसिद्धः। एवं पुण्यपापात्मकर्मोपाधिवशात् जीवानां सुखदुःखविभागो नापह्नोतुं शक्यते। यथा लोके वातपित्तश्लेष्मवतामनुकूलप्रतिकूलात्मकवस्तुवैषम्यमायुर्वेदादिषु पठ्यते, तथैवोपलभ्यते च। तस्मान्नेश्वरस्य शरीरेष्ववस्थानात् कर्मसम्बन्धकथनं तत्प्रयुक्तसुखदुःखसम्बन्धकथनं वा योयुज्यते।

नन्वीश्वरस्यापि शरीरसम्बन्धादेव कर्मसम्बन्धोऽपि स्यादित्याशङ्क्य परिहरति-नित्येति। अत्रायं विकल्पः-किमीश्वरशब्देन सर्वस्वामी विश्वजगन्नियन्तोच्यते, किं वा राजादिमात्रम्। उत्तरत्र चेत्, सिद्धसाधनमेव; राजादीनामपि सुखदुःखानुभवस्यापि विभाव्यमानत्वात्। पूर्वत्र, नेश्वरत्वमेव सिध्यति; सुखदुःखादिकमनुभवति, ईश्वरश्चेति व्याघातात्। कर्मफलं हि सुखदुःखानुभवः। कर्म चेश्वराज्ञापरिपालनतदुल्लङ्घनजनितो गुणविशेष एव; अथवा अध्यात्मशास्त्रमर्यादया शासितुरीश्वरस्य निग्रहानुग्रहसङ्कल्पः। तेनेश्वरस्य कथं सुखदुःखानुभवप्रसङ्गः? यदि वदसि मोहात्, 'ईश्वरस्यापि कश्चन प्रशास्ता अस्ति' इति-तदा, 'न तत्समश्चाभ्यधिकश्च दृश्यते' इत्यादिश्रुतिरेव भवतः कपोल-ताडनं करोतु। ताडितोऽपि यदि प्रलपसि, बहिष्कुर्वन्तु भवन्तं ब्रह्मवादिनः। तस्मादीश्वरस्याऽऽ-ज्ञापकेश्वरान्तराभावान्न शास्त्रवश्यत्वम्, शास्त्रवश्यत्वाभावान्न कर्मानुबन्धः, कर्मसम्बन्धा-भावाच्च न शरीरसम्बन्धप्रयुक्तसुखदुःखानुभवप्रसङ्ग इति मानामानविवेककोविदानां महानु-

---

हेयत्वमित्यर्थः। वस्तूनां हेयत्वं दुःखकृत्त्वं वा स्वाभाविकं न भवति। अत एव शीतोष्णान्नविटकुलटादीनां कस्याञ्चिदवस्थायां गृह्यमाणत्वं कदाचित् त्यज्यमानत्वञ्च। 'तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते तदेव कोपाय यतः प्रसादाय च जायते' इत्यादि भाष्यम्। नन्वयमंशो द्वितीयसूत्रे भाषितः कथमिह ततः प्राक् प्रथमसूत्रव्याख्याने निवेश्यत इति चेत्—न; 'सर्वत्र हि', 'प्रत्येकमतद्वचनात्' इति सूत्रखण्डद्वयाभिप्रेत त्वात् भाष्ये उत्तरत्रोक्तावपि पूर्वसूत्रेऽप्यभिप्रेतत्वज्ञापनायात्रोक्तिसंभवात्, 'पूयशोणितादिमज्जनं हि स्वेच्छाकारितमप्यपुरुषार्थ एव' इति पूर्वपक्षभाष्यविषये प्रथमसूत्रेण किञ्चिद्रूपेण परिहारस्य कार्यत्वात्। यद्वा लोके वस्तु किञ्चित् स्वयमशुद्धं संसर्गवशादप्यशुद्धं भवति। जीवात्मा स्वतश्शुद्धोऽपि औपाधिकाशुद्धि-युक्त एव भवति। परमात्मा स्वतोऽपि शुद्धः विविधाशुद्धसंसर्गेऽपि च शुद्ध एव। अयमेव स्वभावविप्रकर्ष इत्युच्यते। 'देशविप्रकर्षात् कालविप्रकर्षाद्वा किञ्चिदसंबन्धः क्वचित् स्यात्। तदभा-वेऽपि देशकालसंनिकर्षे सत्यपि परस्मिन् हेयसंबन्धः हेयसंबन्धमूलदुःखास्पदत्वं वा न भवति। तस्य स्वभावतः तदुत्पादानर्ह-तत्प्रतिभटवस्तुत्वात्। तथाच प्रथमसूत्रे परमात्मवस्तुस्वभावविमर्शेन निर्दोषत्व मुक्तम्। उत्तरसूत्रे जगतोऽपि वास्तवहेयत्वानर्हतया दोषानापादकत्वमुच्यते। एवञ्च निरूपयेरित्यस्य उपाध्यनालीढं प्रतीत्यर्थः। तादृशं प्रति जगतो हेयत्वाभावादिति। द्वितीयसूत्रार्थमाह नित्येति। यथा

भावानां मार्गः। अयमर्थः, श्रुत्यैव व्यक्तमेव विभज्य दर्शित इत्याह—श्रुत्यैवेति। 'द्वा सुपर्णा' इति हि श्रुतिरेकस्मिन् देहे वर्तमानयोर्जीवपरमात्मनोरेकस्य कर्मफलोपभोगम्, इतरस्य कर्मफलभोगाभावेन निरतिशयदीप्तियोगञ्चाऽऽह। 'द्वा सुपर्णा' इत्यत्र जीवपरमात्मानावेव विभज्योक्ताविति प्रागेव प्रसाधितम्। पैङ्गिश्रुतिविरोधाभावोऽपि तत्रैव विशदं प्रकाशित इत्युपरम्यतेऽस्माभिः॥ ३०५॥

(३०६) ब्रह्मक्षत्रादिदेहेष्वणुरिव विभुरप्यात्मभावेन तिष्ठन्
तत्तच्छब्दाभिलप्यस्तदिह स न कथं तत्तदादेशवश्यः।
मैवं न ज्ञाप्यतेऽसावविदितविरहात्, शासितृत्वाच्च शास्त्रः
किंश्वज्ञो ह्यन्यतन्त्रो जगति हितविदा बोध्यते प्रेर्यते च॥ १८॥

अत्र कश्चिदुक्तमर्थं तत्त्वम्, "आन्ध्यात् अतिगर्वाच्चाजानन् पुनश्चोदयति। तथा हि–'कणभक्षादिपक्षे ईश्वरस्य धर्माधर्मयोः प्रेरकत्वेन शरीरान्तरवस्थानेऽपि शरीरित्वाभावाच्च ब्राह्मणादिशब्दवाच्यत्वम्। तेन, 'ब्राह्मणो यजेत', 'क्षत्रियो यजेत' इत्यादिवाक्येषु विधिगोचरत्वप्रसङ्ग एव नास्ति। युष्माकं सिद्धान्ते पुनः ब्रह्मक्षत्रादिशब्दानां प्राधान्येनेश्वरवाचकत्वात् ईश्वर एव विधिगोचरतामश्नुते। कुर्यात्, न कुर्यादिति नियाम्यत्वादीश्वरत्वमेव भज्येत" इति। तदिदमनुवदति–ब्रह्मक्षत्रादीति। अथात्र शब्दार्थः–ब्रह्मक्षत्रादिदेहेष्वणुर्जीव इव विभुरीश्वरोऽप्यात्मभावेन=शरीरप्रेरकत्वेन तिष्ठन् तत्तच्छब्दाभिलप्यः=भवदनुमत्या ब्राह्मणादिशब्दवाच्य एव भवति। तेन सः=ईश्वरो ब्राह्मणत्वाद्युपाधिविशिष्टः तत्तद्विधिवश्यः कथं न भवति? ईश्वरत्वाच्च भवतीति चेत्–न हि साक्षात् श्रुतिप्रतिपन्नेऽर्थे नास्तिकत्वमङ्गीकर्तव्यम्। तस्मात् विधिनिषेधशास्त्रगोचरस्येश्वरस्य सर्वत्रोपाकरत्वमिति। तमिममन्धप्रलापं निराकरोति—मैवमिति। तदेव विवृणोति—न ज्ञाप्यत इत्यादिना। अयमत्र विकल्पः—विधिरिति किमज्ञातज्ञापनमप्रवृत्तप्रवर्तनं वा भवतोच्यते? न तावदज्ञातज्ञापनमीश्वरस्य सम्भवति। तदाह—न ज्ञाप्यतेऽसाविति। तत्र हेतुमाह—अविदितविरहादिति। सर्वज्ञत्वादित्यर्थः। न हि दिवाकरस्य दीपेन कश्चिदुपकारः क्रियते। अप्रवृत्तप्रवर्तनमपि न सम्भवतीत्याह—शासितृत्वादिति। ईश्वरस्य हि सर्वप्रशासितृत्वादितरप्रशासनाविषयतया, पूर्वं स्वयमप्रवृत्तस्य

---

अपहतपाप्मत्वादिस्वभावत्वेन भुक्तं जीव एवैव हेयत्वं वस्तूनां स्वभावात्, तथा परं प्रत्यप्यस्त्विति चेत्—जीवस्यानादिकर्मोपाधिबलात् ईश्वरपरतन्त्रतया दशाभेदेन हेयसंबन्ध एव भवतीति युज्यते दुःखित्वम्। न च सार्वकालिकस्वातन्त्र्यशालिनः पराज्ञातिलंघनाद्युपाधिप्रसक्तिरस्ति। अत एव सुबालोपनिषत्, 'अपहतपाप्मा दिव्यो देव एको नारायणः' इति अन्तर्यामिणि नित्याविर्भूतापहतपाप्मत्वमप्राकृतदिव्यविग्रहवत्त्वञ्च देवत्वे=द्योतमानत्वे कारणतया निर्दिशति॥ ३०५॥

१८. 'अरूपवदेव हि तत् प्रधानत्वात्' इति सूत्रार्थे सावतरणमाह अत्रेति। परस्याऽऽदेशवश्यत्वाभावान्नोपाधिरित्युक्तम्। तस्य ब्राह्मणक्षत्रियादिजीवविशिष्टाकारेणाऽऽदेशवश्यत्वात्। नामरूपव्याकरणश्रुत्या ब्राह्मणादिशब्दः परमात्मपर्यन्त इति वेदान्तव्युत्पत्तिः। मुख्यार्थत्यागस्यान्याय्यत्वात् 'ब्राह्मणो यजेत' इत्यादिविधिविषयत्वं विशिष्टपरमात्मन एवेति। निरस्यति मैवमिति। नेत्यादि। शासनं हि विधिः; शासितृत्वं कर्मकर्तव्यताविषयकाज्ञातज्ञानहेतुव्यापारवत्त्वम्। तत् ज्ञानं यस्मिन्नुत्पादनीयम्, स एव प्रेर्यः कर्ता। शासकेनेश्वरेण कथं स्वयं स एव ज्ञाप्यते। शास्यत्वशासितृत्वे च

प्रवर्तनमपि न सम्भवति। उक्तार्थस्य द्रढिम्ने लोकदृष्ट्या व्यतिरेकदृष्टान्तमाह—किञ्चिज्ज्ञ इति। लोके हि राजा भृत्यादयः किञ्चिज्ज्ञत्वात् कर्तव्येषु बोध्यन्ते, परतन्त्रत्वात् प्रेर्यन्ते चेति सर्वलोकदृष्टं नापह्नोतव्यम्। तस्मात्, 'सर्वज्ञ ईश्वरो बोध्यः प्रेर्यश्च स्यात्' इति वचनं न बुद्धिमतां वादः; अपितु बुद्धिहीनानामित्युपहसन्ति सन्तः। यत्—श्रुतिप्रतिपन्नत्वात् ब्राह्मणादिशब्दवाच्यस्येश्वरस्यापि प्रशास्यत्वम्-इति, तदपि हास्यम्-श्रुतिर्हि योग्यमेवार्थं वदति। न त्वत्यन्तायोग्यं श्रुत्यन्तरविरुद्धञ्चेति स्वयमेव भावयतु भवानपीति ॥ ३०६ ॥

(३०७) उत्सर्गेणापवादं न खलु नयविदः क्षोभणीयं क्षमन्ते
तस्मात् ब्राह्मे गुणादौ विधिविषयमतिक्रम्य तिष्ठेन्निषेधः।
एवं क्रान्ते निरोधे न हि समविषयापच्छिदान्यायसिद्धिः
दृष्टो नित्यं निषेधः पर इह च ततः स्यादुपक्रान्तिनीतिः ॥ १९ ॥

अस्मिन् उभयलिङ्गाधिकरणे ह्यखिलहेयप्रत्यनीकत्वं कल्याणैकतानत्वञ्चोभयलिङ्गत्वेनोच्यते। एवञ्च त्रिभिर्न्यायैर्निपुणनिरूपितैरुपपाद्यम्। 'न हिंस्यात् सर्वा भूतानि', 'अग्नीषोमीयं पशुमालभेत' इत्यत्रोत्सर्गापवादन्यायः, विहितव्यतिरिक्तविषयत्वात् निषेधशास्त्रस्येति। 'प्रजापतिर्वरुणाय अश्वमनयत्' इत्यादावुपक्रमाधिकरणन्यायः; उपसंहारादुपक्रमो बलीयान्; उपक्रमस्यासञ्जातविरोधित्वादुपसंहारस्य सञ्जातविरोधित्वादिति। 'यद्युद्गाताऽपच्छिद्येत(न्यात्?)' इत्यादावनियतपौर्वापर्यविरोधे पुनः अपच्छेदाधिकरणन्यायः; 'पूर्वबाधेन नोत्पत्तिरुत्तरस्य हि सिध्यति' इति पूर्वं बाधित्वैवोत्तरस्योत्पत्तेः। अत्र मृषावादिनः प्राहुः—सगुणवाक्यानि तावत् प्रवर्तन्ते। तानि तु पूर्वाण्येव; विधिरूपार्थप्रतिपादकत्वात्। निर्गुणवाक्यानि तु पराणि; निषेधरूपार्थप्रतिपादकत्वात्। लोके हि विधिपूर्वको निषेध इति सुप्रसिद्धमेतत्। तेन विधायकस्य प्रत्यक्षप्रमाणस्य च पूर्वभावित्वात् बाध्यत्वम्। निषेधकानां, 'निर्गुणं निरञ्जनम्', 'नेह नानास्ति किञ्चन' इत्यादीनां वाक्यानां परत्वात् बाधकत्वम्। एवमनुमानस्यापि। तथा कर्मशास्त्राणामपि। यानि तु वाक्यानि वेदान्तेऽपि सगुणोपासनपराणि, तान्यपि कर्मशास्त्रतुल्यत्वात् इत्थमेव बाध्यानि। यानि पुनः सगुणब्रह्मस्वरूप-

विभिन्नव्यक्तिनिष्ठे। तस्मात् यथा, 'शिखी ध्वस्तः' इत्यादौ शिखांश एव ध्वंसान्वयः, यथा च 'पृथिव्यां तिष्ठन्' इत्यादौ विशेषणमात्रविवक्षया प्रयोगः, तथा विधिघटकं ब्राह्मणादिपदं तत्तज्जीवमात्रविवक्षया प्रयुक्तम्। कर्मकाण्डपरिशीलनावसरे वेदान्तव्युत्पत्तेः प्रसक्तिरपि नास्ति। तस्मात् तत् ब्रह्म ब्राह्मणादिशरीरकं भवदपि अरूपवदेव तद्रूपरहिततुल्यमेव; प्रधानत्वात् शासितृत्वेन शास्यत्वायोगात् शरीरं प्रति अस्याऽऽत्मत्वं न कर्मवश्यत्वनिबन्धनम्, किंतु स्वाभाविकसर्वात्मत्वान्तर्गतमिति ॥ ३०६ ॥

१९. जागरादितत्तदवस्थशरीरसंबन्धेऽपि, पृथिव्यादिसकलप्राकृतवस्तुसंबन्धेऽपि, निर्दोषत्वम् कर्मवश्यत्वशंकाप्रसक्त्यभावाच्च निर्दोषत्वमुक्तम्. अथ ज्ञानादिगुणो न स्वीकार्यः; ग्राह्यस्याभावात्। न च स्वमेव तद्ग्राह्यम्, स्वप्रकाशतया तदनपेक्षणादिति शंकायाम्-स्वप्रकाशत्ववत् श्रुतिवाक्यवैयर्थ्याय सकलकल्याणगुणाकरत्वमपि स्वीकर्तव्यमिति उपर्युच्यते; तत्र, 'दर्शयति चाथो अपि स्मर्यते' इति श्रुतिस्मृतिवाक्यानि अनुसंहितानि। तदाशयश्च-अद्वैत्यभिमतापच्छेदनयप्रवृत्तिरत्र नास्ति, किंतु उत्सर्गापवादनयस्योपक्रमनयस्य चेति बोधनीयमिति। तदेव बोधयति उत्सर्गेणेति। सामान्यतो गुणनिषेधे सत्यपि कतिपये गुणाः

पराणीति, कानिचित् वाक्यानि सगुणवादिभिरभिधीयन्ते, तान्यपि विधिविषयत्वात् पूर्वभावित्वात् बाध्यानि। निर्गुणवाक्यानि तु निषेधविषयत्वात् चरमभावित्वेन बाधकत्वाच्च प्रमाणत्वेनावतिष्ठन्ते ; यथा अपच्छेदाधिकरणे उद्गातृप्रतिहर्त्रपच्छेदयोरनुक्रमेण जातयोर्निमित्तयोः परस्परविरुद्धप्रायश्चित्त-द्वयप्रसङ्गे पूर्वापच्छेदनिमित्तप्रायश्चित्तं बाधित्वा, उत्तरापच्छेदनिमित्तप्रायश्चित्तमेवानुष्ठीयते । तेनात्रापि विधिवाक्यविषयगुणं बाधित्वा निर्गुणवाक्यविषयभूतनैर्गुण्यमेव प्रामाणिकैरङ्गीकर्तव्यमिति। तदिदमितरन्यायद्वयनिरूपणेन प्रतिक्षिपति—उत्सर्गेणेति। 'न हिंस्यात् सर्वा भूतानि' इत्युत्सर्गः। 'अग्नीषोमीयं पशुमालभेत' इत्यपवादः। तत्र अपवादेनोत्सर्ग एव क्षोभ्यते; न पुनः उत्सर्गेणापवाद इति तान्त्रिकप्रक्रिया। तेन(अत्र च?), 'निर्गुणं निरञ्जनम्' इत्युत्सर्गः। 'सत्यकामः सत्यसङ्कल्पः' इत्यपवादः। एकस्य सामान्यविषयत्वात्; इतरस्य च विशेषविषयत्वात्। तेन सगुणवाक्येनैव निर्गुण-वाक्यं हेयगुणविषयतया सङ्कोचनीयमिति नीतिविदां निर्णयः। तदिदमाह—तस्मादिति। 'निर्गुणं निरञ्जनम्' इति ब्राह्म(ब्रह्म)गुणादौ निषेधः, 'सत्यकामस्सत्यसङ्कल्पः' इत्यादिविधिविषयमतिक्रम्य तिष्ठेत्। एवमुत्सर्गापवादन्यायेन सगुणनिर्गुणवाक्ययोर्विषयभेदेन विरोधशान्तिमुक्त्वा, विरोधे शान्ते सति अपच्छेदाधिकरणन्यायापेक्षैव नास्तीत्याह—नहि समविषयेति। तुल्यविषयत्वे सत्येव ह्यपच्छेदाधिकरणन्यायः प्रवर्तते । अपच्छेदयोः अपच्छेदत्वेन तुल्यत्वात् । अत्र पुनर्न्यायान्तरसिद्धेन विषयभेदेन विरोध उपशान्तः। तेन तदुपशमनहेतुरपच्छेदाधिकरणन्यायो नैरर्थक्यात् अनपेक्षणीय एव। विषदष्टस्य मणिमन्त्रादिष्वन्यतमेन विषदोषपरिहारे किमितरेण प्रतिविधानाभासेन ? अत्राप-च्छेदाधिकरणन्यायप्रसक्त्याऽऽभासत्वमेव प्रदर्शयति—दृष्ट इति । अयमर्थः—अनियतपौर्वापर्यविषये

---

विशिष्य विहिताः सन्ति। यथा निर्गुणमिति सत्त्वेऽपि, 'सत्यकामः सत्यसंकल्पः, सर्वज्ञः, पराऽस्य शक्ति र्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इति विधिः। तत्र, 'न हिंस्यात् सर्वा भूतानि' इति निषेधस्य, 'पशुमालभेत' इत्यादिविहितव्यतिरिक्तविषयत्वं मीमांसकसंमतम्। अन्यथा—उत्सर्गेणापवादस्य क्षोभे—निर्गुणवाक्यप्रवृत्त्या सर्वज्ञत्वादिगुणानामपि निषेधस्वीकारे, अग्नीषोमीयादिहिंसाऽपि 'न हिंस्यात्' इति निषिद्धेति स्वीकर्तव्यं स्यात्। न च तदिष्टम्। अतः उत्सर्गशास्त्रेणापवादशास्त्रं न क्षोभणीयम्। क्षोभणीयं **क्षमन्ते**=क्षोभणीयत्वोक्तिं न सहन्त इत्यर्थः। तस्मात् ब्रह्मसंबन्धिगुणादौ **निषेधः**=गुणविग्रहादिनिषेध, विशेषविहितगुणादिकमतिक्रम्य **तिष्ठेत्**=तद्व्यतिरिक्तविषय एव स्यात्। अत्रापच्छेदन्यायमानयन्ति अद्वैतिनः। द्वयोर्विरोधे एकतरस्य स्वीकार्यत्वे उत्तरशास्त्रस्वीकारेण पूर्वशास्त्रात्यजनं तत्रोक्तमिति। तर्हि पूर्वशास्त्राप्रामाण्यापत्तिरित्याशङ्क्य, इदं शास्त्रं पूर्वम्, इदञ्च परमिति नियमाभावात् कदाचित् स्वनिमित्त-प्रथमभावात् पूर्वशास्त्रं भवदेव अन्यदा—तस्य निमित्तस्य पश्चाद्भावे उत्तरशास्त्रं स्यादिति, तदा तत्प्रामाण्य स्थित्या नाप्रामाण्यस्य सार्वदिकत्वमित्युक्तम्। तथाच अनियतपौर्वापर्यस्थलेऽपच्छेदन्यायः। प्रकृते तु सगुणवाक्येन गुणवत्त्वग्रहणानन्तरमेव निर्गुणमिति तन्निषेधस्त्वया वक्तव्य इति इदं नियतपौर्वापर्य-स्थलम्। अतो बाधस्वीकारे नियमेन पूर्ववाक्यमप्रमाणमेव स्यात्। सामान्यनिषेधस्य विहितव्यति रिक्तविषयकत्वे तु वाक्ययोर्विभिन्नार्थमादाय सावकाशत्वात विरोधः स्वयं शाम्यति। पौर्वापर्यनियमे तु उत्तरस्य पूर्वसापेक्षत्व तदुपजीवित्वं नियतम्। तदा च अन्योन्यनिरपेक्षत्वरूपं साम्यं न भवति। अपच्छेदन्यायस्तु **समविषयः** अन्योन्यनिरपेक्षत्वेन विषयसाम्यं यत्र तत्रैव। अतः समविषयस्य

ह्यपच्छेदाधिकरणन्यायप्रसङ्गः;यथा कदाचित् उद्गाता पूर्वं अपच्छिद्यते(न्यात्?)कदाचित् प्रतिहर्ता,तेन तत्रोत्तरप्राबल्यम्। इह तु नियतपौर्वापर्यमेव; विधिः पूर्वो निषेधः पर इति भवतैव नैयत्याभिधानात्। तस्मादुपक्रमाधिकरणन्यायेन सगुणवाक्यस्यैव प्राबल्यमिति। तदाह—तत इति। उपक्रमाधिकरणे हि दातृप्रतिग्रहीत्रोः कस्याश्वप्रतिग्रहेष्टिरिति चिन्तायामुपक्रमवाक्यानुसारेण दातुरित्येव निर्णीतम्। तेनात्रापि पूर्वप्राबल्यात् सगुणवाक्यानामेव प्राबल्यम्, न पुनर्निर्गुणवाक्यानामिति निर्णेतव्यम्। अत्र वक्तव्यशेषमशेषमपि तत्त्वमुक्ताकलापव्याख्याने, तत्त्वटीकादौ च द्रष्टव्यम्। भाष्ये च प्रथमसूत्र एव, 'उत्तरप्राबल्यकथनं माध्यमिकविजयप्रसङ्गेनापहसि(स्ति?)तम्' इति। तदेवात्र विस्तरेणानुसन्धेयमवहितकरणै(मधिकगुणै)रन्तेवासिभिः। किञ्चोपजीव्यविरोधमालपन्ति न्यायविदः। यथाहुः—'पूर्वात् परबलीयस्त्वं तत्र नाम प्रतीयते(ताम्?)। अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत्॥' इति। तेन स्वरूपे स्वप्रामाण्ये च भेदप्रतीतिसापेक्षाणां भेदनिषेधशास्त्राणां प्राबल्यकथनमश्रुतमीमांसानां श्रुतविस्मृतमीमांसानां वा कथनम्। न हि इदं पूर्वम्, इदं परमिति भेदप्रतीतिमन्तरेणापच्छेदाधिकरणेऽपि प्राबल्यदौर्बल्यनिर्णय। न च तत्प्रतीतिमन्तरेण प्रामाण्यनिर्णय इत्युपरम्यते॥३०७

(३०८) सत्त्वं कार्यस्य गोपायति 'कथमसतः सद्भवेत्' इत्यधीतिः
द्रव्यान्यत्वं हि कार्ये व्यपनयति परं 'मृत्तिकेत्येव' शब्दः।
अन्तर्भावात् विशिष्टे भगवति जगतो 'नेह नाने'ति युक्तं
निर्दिष्टेयत्त्वशङ्कां प्रशमयति परे 'नेतिनेती'ति चोक्तिः॥ २०॥

"तर्हि श्रुतिमेवाश्रयामः। सा हि प्रपञ्चमिथ्यात्वमेव सर्वत्र वदति। तत् तत्त्वमेव। न खलु माता विषं ददाति। तेन, 'असदेवेदमग्र आसीत्' इत्यादिश्रुतिसिद्धत्वात् प्रपञ्चमिथ्यात्वमेव तत्त्वम्" इति केचित् प्रलपन्ति। तदेतत् श्रुतिपर्यालोचनयैव प्रतिक्षिपति—सत्त्वं कार्यस्येति। अयमर्थः—'कथमसतः सज्जायेत' इति वाक्यं हि कार्यस्य सत्त्वमङ्गीकृत्य कारणासत्त्वमेव प्रतिक्षि-

अपच्छेदन्यायस्य=अपच्छेदन्यायस्य सिद्धिर्नेह। निषेधवाक्यं नित्यं परत्वेनैव दृष्टम् न कदाचित् पूर्वं भविष्यति। एवं सापेक्षस्थले च उपक्रमन्यायप्रवृत्तिर्मीमांसकेष्टा। तत्र पूर्वविरोधेनोत्तरवाक्यस्यार्थो ग्राह्यः; संजातविरोधिकस्यास्वीकार्यत्वात्। पूर्ववाक्यार्थग्रहणकाले च उत्तरवाक्यग्रहणाभावेन तद्विरोधास्फुरणस्यैव प्रायिकत्वात्। एवञ्च स्वाभाविकज्ञानशक्त्यादिविधायकवाक्यसापेक्षं निर्गुणवाक्यं विरोधस्य संजातत्वात् गुणत्वेन रूपेण विहितव्यतिरिक्तव्यक्तीरेव निषेध्यतया स्वीकुर्वन् तावन्मात्रवृत्तिधर्ममेव प्रतियोगितावच्छेदकतयाऽनुजानाति। एवमुपक्रमाधिकरणप्रवृत्त्या उत्सर्गापवादनयस्यैव सिद्धिरिति॥ एवं सामान्यविधेः विशेषविधौ, सामान्यनिषेधस्य च विशेषनिषेधे पर्यवसानमपि ग्राह्यम्। अतः सामान्यतो गुणवचनं हेयातिरिक्तगुणे, सामान्यतो गुणादिनिषेध अस्वाभाविकगुणनिषेधे च पर्यवस्येत्। वार्ताकं न भक्षयेत्, श्वेतवार्ताकं न भक्षयेदित्यनयोरेवमैककण्ठ्यं मीमांसकैरेव(कुतूहलवृत्तौ) कृतम्। शेषमस्मत्परमार्थभूषणे सगुणनिर्गुणवादे द्रष्टव्यम्॥ ३०७॥

२०. 'प्रकाशवच्चावैयर्थ्यात्' इत्यनन्तरसूत्रावतरणे उपात्तसत्यज्ञान दिवाक्यमूलकशंकापरिहारकसूत्रार्थविवरणभूतः पूर्वश्लोकः। अथ तत्र "नेतिनेतीत्यादिभिः" इति भाष्ये आदिशब्देन विवक्षितानां श्रुतीनां नेति नेतीत्यस्याश्च निर्वाहमाह सत्त्वमिति। 'सदेव सोम्येदमग्र आसीत्' इति वाक्यं सजातीयविजातीयस्वगत

पति । तेन कार्यमपि सत्, कारणमपि तदित्युक्तं भवति । तेन, 'तद्धैक आहुः' इत्येकशब्दप्रयोगात् असत्त्वस्य परपक्षत्वमेव प्रतीयते । शब्दान्तरस्तु—कथमसतः सज्जायेतेत्यधीतिः कार्यकारणयोः द्वयोरपि सत्त्वमवगमयतीति । ननु मा भूदिदं वाक्यम्; 'यथा सोम्य' इति वाक्यमस्माकमवलम्बनं स्यादित्याशङ्क्य परिहरति—द्रव्यान्यत्वमिति । तदपि वाक्यं कार्यकारणयोर्द्रव्यान्यत्वमात्रमेव प्रतिक्षिपति; न पुनः प्रपञ्चमिथ्यात्वं प्रतिपादयतीत्यर्थः। तर्हि, 'नेह नानाऽस्ति किञ्चन' इति वचनम् अस्माकमवलम्बनमिति च भवद्भिर्न वक्तव्यमित्याह—अन्तर्भावादिति। विशिष्टे भगवति (ब्रह्मणि) विशेषणानामन्तर्भावात्, 'नेह नाना' इति वाक्यमप्यब्रह्मात्मकनानात्वमेव प्रतिक्षिपति । तर्हि साक्षात्, 'नेति नेति' इति प्रपञ्चनिषेधकं वाक्यमस्माकं कुलधनमिति चेत्—तदपि स्वप्नलब्धसुवर्णमित्याह—निर्दिष्टेति। पूर्वं ब्रह्मणः कानिचित् विशेषणान्युक्त्वा, 'निर्दिष्टेयत्त्वमेव ब्रह्मणः' इति मन्दस्य शङ्कां नेति नेतीति वादो व्यपनयति । 'इति न इति न' इति प्रागुक्तप्रकारविशेषमात्रं निषिध्यते, न पुनर्वक्ष्यमाणं (उक्तं वक्ष्यमाणञ्च?) गुणजातमपि । अत एव सूत्रकारः प्राह—'प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः' इति । एवं सर्वासामपि श्रुतीनां विषयभेदेन प्रामाण्यसिद्धेः सगुणब्रह्मवादिनामेव वेदान्तार्थनिर्णयसाद्गुण्यमिति निर्गुणवादो निर्गुणानामेव स्वेच्छालापः ॥ ३०८ ॥

---

भेदरहितमित्यर्थकत्वात् जगन्मिथ्यात्वसाधकमिति यत्, तन्न युक्तम्। तत्र, "केचिदाहुः असदेवेदमग्र आसीदिति; तन्न युक्तम्, कथमसतः सज्जायेत? सत्त्वेव सोम्येदमग्र आसात्" इति कारणसत्त्वस्यापकवाक्यराशिः । तत्र च इदमिति दृश्यमानस्यापरामर्शात् सत्त्वं सुस्थमिति अस्य सतः कारणं कथमसत् स्यात्; तस्मात् कार्यमिव कारणमपि सदेवेत्युपपादनात् तद्विरोधेन प्रपञ्चासत्त्वं तद्वाक्यार्थविवक्षितमिति को ब्रूयात् । 'कथमसतस्सज्जायेत इत्यस्याधीतिः अधीयमानवाक्यं कार्यस्य सत्त्वं गोपायतीति-असत्त्वापत्त्यर्थि भवति । अस्तु तर्हि 'मृत्तिकेत्येव सत्यम्' इति वाक्येन मृत्तिकामात्रं सत्यं तत्कार्यमसत्यमिति स्यात् तेन तन्न्यायेन जगद्रूपकार्यस्य मिथ्यात्वमित्यत्राह द्रव्येति । मृत्तिकैव सत्य इति वाक्यानुपूर्व्यभावात् इतिशब्दघटनेन मृत्तिकेत्येवेति प्रयुक्तत्वात् विकारस्य मृत्तिकाशब्दवाच्यत्वमेव सत्यमित्युक्त्या कारणभूतमृद्द्रव्यापेक्षया कार्यस्यान्यत्वबुद्धिं व्यपनयति परम् । तदपनयनमेव, 'मृत्तिकेत्येव' इत्याकारकशब्दस्य कृत्यम्। 'नेह नानास्ति किञ्चन' इति श्रुत्यर्थमाह अन्तरिति । अद्वैत्यभिमतार्थस्वीकारेऽपि इह नाना=अनेकं नास्ति सर्वस्य चेतनाचेतनरूपस्य परमात्मविशेषणत्वात् तावद्विशिष्टस्य तस्यैकस्यैवेह सत्त्वात्। तथा किञ्चनेति पदस्वारस्याय इह किमपि नाना=पृथग्भूतमीश्वरान्नास्तीत्यर्थोक्तौ वा, नाना=विना, 'न तदस्ति विना यत् स्यान्मया भूतं चराचरम्' इत्युक्तरीत्या, परमात्मानं विना किमपि नास्तीत्युक्तौ वाऽपि सर्वविशिष्टमेकमेवास्तीत्युक्तं भवत्येव। अतो न जगन्मिथ्यात्वपर्यवसाय्यद्वैतसिद्धिः। या तु, 'द्वे वा ब्रह्मणो रूपे' इति मूर्तामूर्तरूपद्वयं प्रस्तुत्य, 'तस्य यथा माहारजनं वासः....' इति कुसुम्भरक्तवस्त्र-धवलकम्बल-इन्द्रगोप-सौदामनीवर्णदिव्यमङ्गलविग्रहश्चोपदिश्य, 'नेति नेति' इति निषेधोक्तिः, सा चोक्तिः, 'प्रक्षालनाद्धि पंकस्य दूरादस्पर्शनं वरम्' इति न्यायेन स्वोपदिष्टाकारस्य स्वयं निषेधायोगात्, इति न=एतावदेव न, इतोऽधिकमप्यस्तीति निर्दिष्टमात्रवत्त्वशंकाशमनेनाधिकवस्तुसत्त्वप्रतिपादिका । उपरि, 'अथ नामधेयं सत्यस्य सत्यमिति; प्राणा वै सत्यं तेषामेष सत्यम्' इति श्रवणात् प्रागुक्ताचेतनमूर्तामूर्तप्रपञ्चवत् चेतनप्रपञ्चसत्त्वस्यापि ततोऽवगमाच्च स एवार्थ इति निश्चीयते ॥ ३०८ ॥

(३०९) तत्तद्वस्तुप्रदेशे सकलगुणतया पूर्णदृश्यः परात्मा
वृद्धिह्रासादिभेदोज्झित इति हि जलाधारसूर्योपमोक्तिः ।
अस्पर्शोदाहृतिश्चेत्, न हि घटकरकाकाशदृष्टान्तयुक्तिः
तस्माद् ब्रह्म द्विलिङ्गं द्विविधविभवमित्येव वेदान्तपक्षः ॥ २१ ॥

इति उभयलिंगाधिकरणम् ॥ ७९ ॥

"ननु सन्त्वेतानि समाधानानि ; अथाप्यसमाधेयमिदमेकं दृश्यते। सर्वत्रावस्थितस्य भगवतः, 'जलाधारेष्विवांशुमान्' इति दृष्टान्त उपादीयते। तद् मिथ्यात्वमेव प्रतिपादयति" इति कश्चिन्मनुते, तस्याप्युत्तरमाह—तत्तद्वस्त्विति । तात्पर्यं हि शब्दः प्रमाणम् । नात्र जीवानां मिथ्यात्वं विवक्ष्यते; प्रमाणविरुद्धत्वात् । अपितु ब्रह्मणः सर्वत्रावस्थितस्यापि विशेषणभूत-तत्तद्वस्तुगतवृद्धिह्रास-भाक्त्वमेव केवलं निषिध्यते । यथा तरङ्गेषु प्रतीयमानस्य चन्द्रबिम्बस्य तरङ्गगतवृद्धिह्रासादिभाक्त्वं न परमार्थतो विद्यते, एवं सर्वान्तर्यामित्वेनावस्थितस्य परस्य ब्रह्मणः तत्तद्वस्तुप्रयुक्तदोषसम्बन्धो नास्तीति । अयमत्र भावः—अविद्यमानस्य चन्द्रस्य यथोपाधिप्रयुक्तदोषाभावः, एवं विद्यमानस्यापि ब्रह्मणः प्रभावविशेषात् औपाधिकदोषप्रसङ्गाभाव इति दृष्टान्तप्रदर्शनमात्रमेतदिति। अयमत्रान्वयः—तत्तद्वस्तुप्रदेशे सकलगुणतया परिपूर्णं दृश्यः परात्मा वृद्धिह्रासादिभेदविधुर इति हि, 'जलाधारेष्विवांशुमान्' इत्युच्यते । तात्पर्यानुगुणमेवार्थस्योपवर्णनीयत्वात् ॥ किमर्थमियं क्लिष्टकल्पना ; असंसर्गार्थमेवात्र निदर्शनमुच्यत इत्याशङ्कते—अस्पर्शोदाहृतिश्चेदिति । सर्वैरस्पृष्टमेवात्र ब्रह्मोच्यत इत्यर्थः । तत्रोत्तरमाह—न हीति । न ह्येक एव दृष्टान्तो महर्षिभिरुच्यते । क्वचित्, 'जलाधारेष्विवांशुमान्' इति ; इतरत्र, 'आकाशमेकं हि यथा घटादिषु पृथक् भवेत्' इति क्वचिदविद्यमानं प्रतिबिम्बमुदाह्रियते, अपरत्र विद्यमानमेवाकाशम् । तेनोभयदृष्टान्तसामञ्जस्यार्थमुचित एवार्थ उदाहर्तव्यः ; न पुनस्तत्तद्दोषैरस्पृष्टत्वमेव । अन्यथैकोपादाने इतरप्रच्यवनादुभयमपि न सिध्येत् ।

एवं विस्तरेणार्थतत्त्वमुपपाद्योभयलिङ्गत्वं निगमयति—तस्मादिति । द्विलिङ्गम् = अखिलहेयप्रत्यनीककल्याणैकतानत्वादुभयगुणयुक्तम्। द्विविधविभवम् = उभयविभूतिविशिष्टम्। 'पुरुष एवेदं सर्वम्'

---

२१. 'अत एव चोपमा' इत्यादिसूत्रार्थमाह तत्तदिति 'जलाधारेष्विवांशुमान्' इत्यनेन यथा सूर्यो जलाशयस्पर्शरहितः, तथा परमात्मा सर्ववस्तुसंबन्धरहित इत्युच्यते । कथञ्च पृथिव्यादौ सति परमात्मा विभुस्तदसंबन्धी स्यात् । अतः पृथिव्याद्यसत्यत्वमेष्टव्यम् । अत एव चाद्वैतित्वमिति चेत्—न्न ; "आकाशमेकं हि यथा घटादिषु पृथक् भवेत् तथाऽऽत्मैकोऽप्यनेकस्थो जलाधारेष्विवांशुमान्" इति घटादिसंबन्ध्याकाशदृष्टान्तस्यापि कथ्यमानतया उभयदृष्टान्तसामञ्जस्यायानुगतार्थस्यैव दृष्टान्तद्योत्यस्य कस्यचित् वक्तव्यत्वात् । सूक्ष्मेक्षणे तत्रैव वाक्ये, यथाऽऽकाशस्तथा आत्मा एक एव अनेकस्थोऽपि=वस्तुतोऽनेकसंबन्धी सन्नपि जलाधारेषु सूर्य इव भवति=असंबन्धितुल्य एवेत्यर्थस्यैवावगमात् यथा असंबन्धिनो वृद्धिह्रासभाक्त्वं नास्ति, तथा संबन्धिनोऽपि तन्नास्तीत्यर्थ एव तात्पर्यम् । आकाशः खलु घटकरकादिसंबन्ध्यपि न तदीयन्यूनाधिकपरिमाणादि लभते, किंतु एक एवावतिष्ठते । तद्वत् परमात्मेत्यर्थः । अत्र वृद्धिह्राससूत्रभाष्ये, "पृथिव्यादिस्थानान्तर्भावात् स्थानेन परस्य ब्रह्मणः स्वरूपतो गुणतश्च पृथिव्यादिस्थानागतवृद्धिह्रासादिदोषभाक्त्वमात्रं सूर्यादिदृष्टान्तेन निवर्त्यते" इति गुणन्यूनत्वाभावस्याप्युक्ततया

इत्यादिप्रमाणप्रसिद्धविभूतिद्वयविशिष्टमित्यर्थः। विवृतं हि भगवता पराशरेण, 'समस्तकल्याण-गुणात्मकोऽसौ' इत्यादिना। वेदान्तपक्ष इति कथनं मृषावादिपक्षस्य बौद्धपक्षनिक्षेपार्थम् ॥३०९॥
इति उभयलिङ्गाधिकरणम् ॥ ७९ ॥

## ८० ॥ अथ अहिकुण्डलाधिकरणम् ॥ ३-२-६ ॥

सूत्रम्—उभयव्यपदेशात्त्वहिकुण्डलवत्॥ प्रकाशाश्रयवद्वा तेजस्त्वात्॥ पूर्ववद्वा॥ प्रतिषेधाच्च ॥१६-१९

(३१०) विश्वस्रष्टुः स्वदुःखप्रजननमिह न स्वांशतोऽचित्त्ववत्त्वौ
मृत्तत्कार्यादिकश्च स्वरसमिह बहूदाहृतं सप्रतिज्ञम्।
तस्मादव्याकृतादिर्विहरणनियता विक्रियैवेति चेन्न
स्वांशे मौढ्यं वितन्वन् विहरति भगवानित्यनर्थानपोहात् ॥ २२ ॥

सङ्गतिर्भाष्ये, 'तस्याचिद्वस्तुनो ब्रह्मरूपत्वप्रकार इदानीं चिन्त्यते ब्रह्मणो निर्दोषत्वसिद्ध्यर्थम्' इति। अयमर्थः—पूर्वाधिकरणे ब्रह्मणो निर्दोषत्वं प्रतिज्ञातम्। तस्य निर्दोषत्वस्य प्रतिष्ठापनार्थम् अचिद्वस्तुनो ब्रह्मरूपत्वमहिकुण्डलन्यायेन, उत प्रभाप्रभावन्न्यायेन, अथवा विशेषणविशेष्यभावेनेति चिन्त्यत इति पूर्वाधिकरणेन सङ्गतिरिति। तदर्थविचारस्तु-किमचिद्वस्तुनो ब्रह्मरूपत्वमहिकुण्डल-न्यायेन, उत प्रभाप्रभावद्रूपेण, उत विशेषणविशेष्यभावेनांशांशित्वेन इति। किं, 'स एष महानज आत्माऽजरो अमरः' इत्याद्यचिद्धर्मप्रतिषेधो विशेषणविशेष्यभावेन ब्रह्मरूपत्वं प्रपञ्चस्यावगमयति, नेति। अत्र पूर्वपक्षमाह-विश्वस्रष्टुरिति। विश्वस्रष्टुः परमपुरुषस्य स्वांशतोऽचिद्वर्गप्रजनने स्वदुःख-कारणत्वं नास्त्येव। अचितो दुःखाभावात्। अंशतश्चाचित्त्ववत्त्वौ मृत्तत्कार्यादिकश्च बहूदाहृतं दृष्टान्त-जातं सप्रतिज्ञं स्वरसमेव भवति। अतो ब्रह्मैवाव्याकृतादिसृष्टिं विहारवशात् विक्रियामपि करोति।

---

तदुक्तये, 'सकलगुणतया पूर्णहृदयः' इत्युक्तम्। अधिकरणार्थमुपसंहरति तस्मादिति। द्विलिंगम् निर्दोषत्वकल्याणगुणाकरत्वरूपचिह्नद्वयवत्। मूर्तामूर्तप्राकृतप्रपञ्चस्य माहारजनवासआदितुल्यवर्णप्राकृत रूपाणाञ्च वर्णनाच्च उभयविभूतिमत्त्वं प्रकरणादपि लभ्यम् ॥३०९॥ इत्युभयलिंगाधिकरणम् ॥

२२. अहिकुण्डलाधिकरणे मूर्तामूर्तप्रपञ्चात्मकप्रकृतेः ब्रह्मपरिणामत्वशंका क्रियते। इयं न भवितुमर्हति, इतरव्यपदेशाधिकरणे चेतनात्मकपरिणामस्याप्ययोगे कथिते, ततो न्यूनाचेतनात्मना परिणाम शंकाया अप्रसक्तेः। तत्राधिकरणे अश्मादिवच्चेति दृष्टान्तकथनादपि अचेतनाभिन्नत्वमशक्यशंकमिति ज्ञायत इत्यधिकरणानुत्थितिशंकां परिहरति विश्वेति। चेतनात्मना परिणामो मा भूत्, दुःखस्यात्मनि सत्तया तस्य स्वदुःखापादकत्वप्रसंगात्। स्वांशस्य अचेतनात्मना परिणामकरणे तु तद्वत् न दुःखप्रजननप्रसक्तिः। अतो भवत्वचेतनैक्यमेवेत्यधिकशंका। दु खादिकं यथा हेयम्, तथा मौढ्यम् अचैतन्यमपि हेयमेवेति परिहारः। उपष्टम्भकयुक्तिमपि दर्शयति मृदिति। मृत् अयः सुवर्णं वा दृष्टान्ततयोपात्तं साक्षात्परिणा-मभागेव दृष्टम्। अतो जडप्रपञ्चस्य ब्रह्मपरिणामत्वे तत् स्वरसम्। सप्रतिज्ञम्-'एकविज्ञानेन सर्वविज्ञानं भवति' इति प्रतिज्ञापूर्वकमित्यर्थः। सिद्धान्ते प्रकृतेर्ब्रह्मणश्च भिन्नद्रव्यत्वादैक्यवर्णनं क्लिष्टमिति भावः। विहरणनियतेति। जीव एव दुःखोत्पत्तेः, अचेतने दुःखोत्पत्तिप्रसक्त्यभावात् स्वमंशतोऽचेतनं कृत्वाऽपि

ततो विकाररूपाऽप्यचित्सृष्टिर्युज्यत एवेत्यर्थः। तदिदं प्रतिक्षिपति—नेति। तदेव विवृणोति—स्वांश इति। अयमर्थः—द्विविधो ह्यनर्थः—दुःखप्रजननमित्येकः, निरतिशयसुखानुभवयोग्ये वस्तुनि मौढ्यापादनमित्यपरः। अचिद्वस्तुनश्चिद्विलक्षणत्वेन दुःखजननाभावेऽपि निरतिशयज्ञानानन्दात्मनि वस्तुन्यंशे अचिद्रूपतया मौढ्यापादनमपि स्वानर्थापादनमेव। तस्मादचिद्रूपस्वांशसृष्टिर्न घटत एव॥

(३११) कश्चिन्नित्योऽचिदंशो विविधविकृतिमान् ब्रह्मणीत्याहुरेके
फेनादिन्यायतोऽन्ये सति विकृतिवशाद् ब्रह्म सर्वं समागात्।
चन्द्रज्योत्स्नादिनीत्या कतिचिदिह जगद्ब्रह्मणोरैकजात्यं
सर्वे ते सर्ववेदस्वरसगतिहतेरत्र विश्रासनीयाः॥ २३॥

इत्यहिकुण्डलाधिकरणम् ॥ ८०॥

उक्तपक्षेण सह पक्षान्तराण्यप्यनूद्य निराकरोति—कश्चिदिति। पूर्वं ब्रह्म स्वयमेव स्वस्मिन् अचित्त्वमापादयतीत्याशङ्क्य दूषितम्; अधुना पूर्वोक्तदोषपरिहारार्थं केचित्, अनादिसिद्धो नित्य एव कश्चिदचिदंशो विविधविकृतिमान् वर्तत इत्याहुः। तत्रापि विरोधस्तदवस्थः; सर्वज्ञस्य ब्रह्मणो नित्यमेव तादृशमौढ्यसंवलितरूपकल्पनस्यात्यन्तदौस्थ्यात्। पक्षान्तरमनुवदति—फेनादीति। सन्मात्रे ब्रह्मणि, सागरे फेनतरङ्गबुद्बुदन्यायेन चिदचिदीश्वरात्मकं तत्त्वत्रयं विकृतिवशाज्जायत इत्यन्ये प्राहुः। तदपि तादृशमेव; निर्विकारे विकारकल्पनात् स्वानर्थकरणदोषस्य तादवस्थ्याच्च।

---

विहरेदिति भावः। तत्र प्राक् अश्मादिवदिति कथन लोकरीतिमनुसृत्य। श्रुतिमद्धप्रकृत्यैक्यमादाय तु अत्र भास्करादिनयेन पूर्वपक्षः। तं निराकरोति इति चेन्नेति। इत्यनर्थेति। इति वक्तव्यत्वात् मौढ्यरूपानर्थस्य निवृत्त्यभावात्। अनुकूलतया स्थितं ज्ञानभावं को हि स्वस्य स्वयं लोपयेदिति। एवं निर्विकारत्वश्रुतेरर्थवर्णनेऽपि क्लेशः, स्वरूपपरिणामस्यापि स्वीकृतत्वात्॥ ३१०॥

२३. एतदधिकरणनिषेध्यान् पक्षानाह कश्चिदिति श्लोकेन। सूत्रद्वये पक्षद्वयस्यैव प्रतीतावपि, उभयव्यपदेशादिति पदस्वारस्यात् पक्षान्तरनिरासस्याप्यवगमात् तन्निरस्यं पक्षमपि प्रथमं प्रदर्शयन् पक्षत्रयमाह। स्वांशे स्वयं मौढ्यापादनमयुक्तमिति दोषः चिदंशस्याचित्त्वकल्पने हि स्यात्। 'ब्रह्मणः कश्चिदंशः सर्वदाऽप्यचिदेव; स प्रकृतिशब्दव्यपदेश्यः सर्वजडात्मना विकुरुते' इति स्वीकारे न स दोष इति मन्यन्ते एके। इदं निरस्तम् उभयव्यपदेशादिति सौत्रपदेन। यदि ब्रह्मांशः कश्चिन् नित्याचिद्रूपः,तर्हि तस्यांशत्वे किं प्रमाणम्, पृथग्द्रव्यतैव स्यात्। 'तदैक्षत, तत् तेजोऽसृजत, इमास्तिस्रो देवताः' इति चितः पश्चादचिद्भावप्राप्त्यवगमात्, 'आत्मैवेदं सर्वम्' इति नियन्तृभूतचेतनांशैक्यस्य सर्वस्मिन् प्रतीयमानतया च एकांश एव कालभेदेन चित्त्वाचित्त्वयोः स्वीकार्यत्वात्। अतः अहेः कुण्डलभावो यथा पश्चात्, तथा आत्मनः पश्चादचिद्भावः। अतः समुद्रे फेनतरङ्गबुद्बुदरूपभेदत्रयवत् चिदचिदीश्वररूपभेदत्रयं सन्मात्रे इति यादवप्रकाशीयाः। 'ब्रह्मपरिणतिरिति भास्करगोत्रे युज्यते' इति न्यायकुसुमाञ्जल्युक्तरीत्या प्रकृतेः परिणामत्वेऽपि जीवस्य परिणामरूपत्वं न भास्करेष्टम्। अतः भास्करपक्षे प्रकृतिरेव ब्रह्मणो नित्याचिदंश इति वा अचिद्रूपेण परिणाम इति वा स्वीकार्यम्। कतिचित्तु चन्द्रवत् ब्रह्म, तद्धर्मभूतज्योत्स्नावत्

कतिचित् (अपरे) पुनः चन्द्रचन्द्रिकान्यायेन जगद्ब्रह्मणोरैकजात्यमेव ब्रुवते। ननु जगद्ब्रह्मणोरैक्य-प्रतिपादकवेदान्तवाक्यानामननुकूलत्वादनादरणीयमेव। वस्तुत्वमात्रेण साजात्यञ्चेत्, सर्वलोक-प्रसिद्धत्वाच्च वेदान्तवेद्यम्। आत्मतया साजात्यं चेत्, अचिद्वस्तुनि नास्त्येव। ईश्वरत्वेन साजात्यञ्चेत्, तत्त्वत्रयपरिक्लृप्तिपराहतम्। 'भोक्ता भोग्यं प्रेरितारम्' इति श्रुतिविरुद्धञ्च। अतो विशेषण-विशेष्यभावेन ऐकात्म्यमिति वेदान्ततत्त्ववेदिनां निर्णयः। तेन सर्वे वादिनः सर्ववेदान्तवाक्य-स्वारस्यानुगतिविरोधादत्र विश्वसनीया इति शब्दान्वयः॥ ३११॥ इत्यहिकुण्डलाधिकरणम्॥ ८०॥

## ८१॥ अथ पराधिकरणम्॥ ३-२-७॥

सूत्रम्— परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः॥ सामान्यात्तु॥ बुद्ध्यर्थः पादवत्॥ स्थानविशेषात् प्रकाशादिवत्॥ उपपत्तेश्च॥ तथाऽन्यप्रतिषेधात्॥ अनेन सर्वगतत्वमायाम-शब्दादिभ्यः॥ ३०—३६॥

(३१२) सेतुं तीर्त्वेत्यधीतेः परि(मित)मितिवचनात् प्राप्यसम्बन्धिनोक्तेः
अन्याधिक्यश्रुतेश्चप्यतिवहननयात् कारणं प्रापकं स्यात्।
प्राप्यं त्वन्यत् भवेदित्यसत्; अनवधिके कारणे प्राप्यतोक्तेः
सेतुत्वाद्युक्तिरस्मिन् बहु भरविहतां वृत्तिमर्ज्ञां करोतु॥ २४॥

भाष्य एव पूर्वाधिकरणनिगमनवाक्यान्वितेन उत्तराधिकरणोपक्रमवाक्येन सङ्गतिरुच्यते—'ब्रह्मणो निर्दोषत्वेन कल्याणगुणाकर(त्मक)त्वेन चोभयलिङ्गत्वमपि सिद्धम्। इदानीम् अस्मात् परस्मात् जग-न्निमित्तोपादानरूपपरमकारणात् परब्रह्मणः परमपि किञ्चित् तत्त्वमस्तीति कैश्चित् हेत्वाभासैराशङ्क्य

---

प्रकृतिद्रव्यमित्याहुः। सिद्धान्तादस्य को भेद इति चेत्—प्रकृतिद्रव्यस्यापि ब्रह्मशब्दवाच्यतया एकजाती यत्वमेतदिष्टमिति भेदः। तत्र मानं तु, 'भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्' इति भोक्तृभोग्यप्रेरयितृरूपविधात्रयस्यैकत्र ब्रह्मणि दर्शनम्। तर्हि जीवे पूर्वमंशत्वं स्थापितं भज्येतेति चेत्—भज्य ताम्, किं तेनेति। इदं द्वितीयसूत्रोक्तम्। सर्वं निरस्यति सर्वे इति। 'अनन्तरोऽबाह्यः कृत्स्नो विज्ञानघन एव, प्रज्ञानघन एव' इत्यादिश्रुतेः, 'आह च तन्मात्रम्' इत्यादिसूत्रस्य च स्वारस्यं भज्यते भाचदंशनित्यत्वे। नियन्तृत्वाकारेण सर्वव्यापित्वं भज्यते प्रकृत्यात्मना परिणामपक्षेऽपि ज्योतींषि विष्णुः, भुवनानि विष्णुः' इति ईश्वरेणाभेद एव प्रपञ्चे शास्त्रोक्तः, न तु सम्बन्धेन। स च शरीरात्मभावरूप एव भवितुमर्हति। अतः प्राक्समर्थितमंशत्वमेव चेतनाचेतनयोरिति। सर्ववेदान्तरस्येत्यत्र अप्रतिषेधाच्चेति सूत्रार्थः विकारप्रति षेधादिकमप्यभिमतम्॥ ३११॥

२४. स्वातिरिक्तचेतनाचेतनात्मकप्रपञ्चेश्वरत्वेन परत्वं सिद्धम्। परत्वमौलभ्यरूपगुणयोरन्तर्गतं मुख्यपरत्वं परमात्मनि स्थाप्यते इतोऽधिकस्य निरसनेन। पूर्वपक्षसूत्रे प्रथमे सेतुव्यपदेश-उन्मानव्यपदेश-संबन्धव्यपदेश-भेदव्यपदेशा उक्तब्रह्माधिकवस्तुसाधकतयो ज्यस्ताः। तान् आह सेतुमिति। 'एतमेव सेतुं तीर्त्वा अन्धस्सन् अनन्धो भवति' इति संसारिणः अज्ञस्य सेतुभूतेदानीं तिलंघनेन प्रत्यक्षज्ञानं भवत उक्तः तदयं सेतुः उपायः; प्राप्यमन्यदिति ज्ञायते परिमितीति। षोडशकलब्रह्मविद्यायां चतुष्पादिति परिमितत्वेन

निराक्रियते' इति। तदर्थविचारस्तु—यदिदमुभयलिङ्गं ब्रह्म, किमस्मात्परमपि किञ्चित् तत्त्वमस्ति, उत नेति। किमस्यैव परत्वे सेतून्मानसम्बन्धभेदव्यपदेशानामुपपत्तिरस्ति, न वेति। अत्र सूत्रकारेणोपात्तान् पूर्वपक्षहेतून् अनुक्रमेणानूद्य सौत्रक्रमेण परिहारमपि दर्शयति—सेतुमिति। 'एतं सेतुं तीर्त्वा' इति तरितव्यत्ववचनात्, 'चतुष्पाद् ब्रह्म षोडशकलम्' इति ब्रह्मणः परिमितत्ववचनात्; प्राप्यसम्बन्धितोक्तेः='अमृतस्यैष सेतुः' इति प्राप्यस्यान्यस्यामृतस्य प्रापकतया तत्सम्बन्धित्वेनाभिधानात्; अन्याधिक्यश्रुतेरपि='परात्परं पुरुषमुपैति दिव्यम्', 'परात्परं यन्महतो महान्तम्' इति सर्वस्मात् परस्यान्यस्य श्रुतेश्च। अतिवहननयात्=आतिवाहिकन्यायेनायं परमपुरुषो विश्वकारणभूतः प्रापक एव स्यात्; न पुनः प्राप्यः; प्राप्यश्चान्यदेव किञ्चित् भवेदिति [1]व्योमातीतवादिनः। तदिदं प्रतिक्षिपति—असदिति। यत् जगत्कारणम्, तदेव ध्येयम्, 'कारणं तु ध्येयः' इति नियमात्। यच्च ध्येयम्, तदेव प्राप्यम्, 'ब्रह्मविदाप्नोति परम्', 'ब्रह्मवेद ब्रह्मैव भवति' इति प्राप्यप्रापकयोरैकत्वनिर्णयात्। अतो योऽमृतस्य सेतुः तदेवामृतमिति श्रय्यन्तवादिनां निर्णयः। अस्मिन् ब्रह्मणि सेतुत्वाद्युक्तिः कथमिति चेत्—अत्रोत्तरम्—सेतुत्वेति। बहुप्रमाणैरविरुद्धां वृत्तिमङ्गीकरोतु। ईश्वरस्यैव तावत् प्राप्यत्वं प्रापकत्वञ्च सकलवेदान्तसिद्धत्वादङ्गीकरणीयमेव। तेन सेतुत्वाद्युक्तीनां योग्यार्थकल्पनयाऽर्थोपवर्णनं कार्यमित्यर्थः। अन्यथा लोके मुख्यामुख्यप्रयोगविभागो न स्यात्, अमुख्यप्रयोगाणां परित्याज्यत्वञ्च स्यात्, उपक्रमोपसंहारादितात्पर्यलिङ्गपरिशोधनेन विदुषां तत्तत्र वाक्यार्थोपवर्णनमपि न स्यादिति सर्वशास्त्रसङ्क्षोभः॥ ३१२॥

---

वचनात् अपरिच्छिन्नमन्यदिति ज्ञायते। "अमृतस्यैष सेतुः" इति सेतोरस्य, प्राप्यस्यामृतस्य च संबन्धः षष्ठ्या व्यपदिश्यते। **अन्याधिक्यश्रुतेरपि**। अन्यस्य=जगत्कारणादस्मादन्यस्य आधिक्येन=परतरत्वेन ततो यदुत्तरतरम्, 'अक्षरात्परतः परः' इति श्रवणाच्च तत् प्राप्यान्तरं प्रति इदं कारणत्वेनोक्तं ब्रह्म प्रापकं स्यात्। प्रापकत्वप्रकारमाह **अतिवहननयादिति**। यथा अर्चिरादय आतिवाहिकाः प्राप्येनाऽऽज्ञप्ताः मुक्तमधिकारिणं नयन्ति, तद्वदिदमपि नेतृ स्यादिति। निरस्यति **इत्यसदिति**। उक्तानां हेतूनां व्यपदेशरूपाणामन्यथासिद्धिं विवक्षुः कारणादन्यस्य प्राप्यत्वे बाधकं प्रथममाह **अनवधिके** इति। यत् कारणमेतावता निर्धारितम्, तस्यानवधिकत्वं पूर्वावधिरूपकारणराहित्यं देशकालवस्तुपरिच्छेदराहित्यरूपसर्वोत्कर्ष[ब्रह्मशब्दार्थं] चोपन्यस्य प्राप्यत्वस्याप्युक्तत्वादिदमसदित्यर्थः। एवमन्यथाकरणहेतुप्रतिपादकमेव, 'अनेन सर्वगतत्वमायामशब्दादिभ्यः' इति सूत्रम्। 'ब्रह्मैवेदममृतं पुरस्तात् ब्रह्म पश्चात्', 'आत्मैवेदं सर्वम्', 'तेनेदं पूर्णं पुरुषेण' इत्यादिकं अनन्तत्वं कारणत्वं प्राप्यत्वञ्च वदति; अमृतब्रह्मणोरैक्यञ्च। 'ब्रह्मविदाप्नोति परम्' इत्यत्र च, 'अनन्तं ब्रह्म, आत्मन आकाशः संभूतः, आनन्दमयमात्मानमुपसंक्रामति' इति ब्रह्मणस्तादृशत्वं प्राप्यत्वञ्चोच्यते। व्यपदेशानामर्थान्तराभिप्रायत्वं श्लोकान्तरदर्शयिष्यमाणं संग्रहेणाऽऽह **सेतुत्वादीति**। **आदिना** उन्मानादिग्रहः। **बहुभिर्बाधयान्तरैरबाधिता वृत्तिः** अर्थबोधनप्रकारः॥३१२॥

---

1 **व्योमातीतेति**। व्योमशब्दवाच्यदहराकाशरूपपरब्रह्मापेक्षयाऽधिकं तदतीतं 'तस्मिन् यदन्तस्तत्' इत्युच्यमानं सदाशिवाख्यं परतरमिति वादिनः।

(३१३) सेतुत्वं सेतुतुल्यात् विधरणनियमात् बन्धनाद्वाऽत्र युक्तं
व्याप्तेऽप्यस्तूपाधेः परिमितिवचनं सार्थकं सूत्रितं प्राक् ।
चातुष्पद्यञ्च तत्तच्छ्रुति(स्मृति)भिरनुगुणं कल्प्यतेऽनन्तभूम्नः
स्वस्येत्येव मृतस्येत्यभिहितमथवा मुक्तिरेवामृतं स्यात् ॥ २५ ॥

अत्र पूर्वं सेतुत्वादिवचनं योग्यार्थकल्पनया योज्यमित्युक्तम्। तानेव योग्यान् अर्थान् अनुक्रमेण दर्शयति—सेतुत्वमिति। सेतुत्वं सेतुतुल्यात् विधरणनियमात् = धारकत्वनियमादित्यर्थः। भगवानेव हि सर्वधारकः। अर्थान्तरमप्याह—बन्धनादिति। स एव भगवान् असङ्करेण सर्वमपि वस्तुजातं सम्बध्नाति। परिमितिवचनस्यापि गतिमाह-व्याप्तेऽपीति। व्याप्तेऽप्यस्मिन् = परस्मिन् ब्रह्मणि परि-

२५. आद्यानां त्रयाणां निर्वाहं विवृणोति सेतुत्वमिति। 'सामान्यात्तु' इति सूत्रेण सामान्यात् सेतुत्वव्यपदेश इत्युक्तम्। पूर्वपक्षिणाऽपि प्राप्यान्तरप्रापकत्वरूपसादृश्यमादायैव सेतुशब्द-निर्वाहात् सामान्यादिति पदेन तद्व्यावृत्तिः कथमिति चेत्-सादृश्यरूपगौणार्थं पूर्वपक्षीष्टः। सूत्रकृतस्तु योगव्युत्पत्त्या बन्धकत्वरूपं सेतुब्रह्मोभयसाधारणं प्रवृत्तिनिमित्तमिति। इदं बन्धनादित्युक्तम्। तेन, 'एष सेतुर्विधरण एषां लोकानामसंभेदाय' इति वाक्याभिप्रेतमभिसंधाय चिदचिद्वस्तुजातगतधर्मासंकरकरत्व-रूपमर्थविशेषं दर्शयति। सेतुतुल्यात् विधरणनियमात् इति तु—गौणार्थस्वीकारेऽपि प्राप्यान्तर-प्रापकत्वरूपसादृश्यमेवेति किम्। प्रापकत्वग्रहणेऽपि प्राप्यान्तरेत्यंशस्यापि गौणार्थघटनञ्च किमर्थम्। धारकत्वरूपगौणार्थ एव च शक्यः स्वीकर्तुम्। बन्धकत्वरूपार्थपक्षे तस्य सेतुशब्दघटकधात्वर्थत्वात् योगार्थ एव। धारकत्वरूपार्थस्वीकारे, तस्य धात्वर्थत्वाभावात् गौणता। तथाच विधारकत्वरूपसादृश्यमेव किं न स्यात्। सर्वथाऽप्यसंकरकरत्वोक्तिरेवेत्यभिप्रायेण। उन्मानव्यपदेशं परिमितिवचनादित्युक्तं निर्वहति व्याप्ते इति। अपरिमितस्यापि परिमितत्वेन वचनम्, 'अणोरणीयान्, अंगुष्ठमात्रः, प्रादेशमात्रम्' इत्यादौ उपाधेः उपाधिबलात् सार्थकम्। सूत्रितं प्रागिति। इदम् अर्भकौकस्त्वादित्याद्युक्तमित्यर्थः। अयं द्वितीयः पादो न पृथक् उन्मानविषयकपूर्वपक्षपरिहारकः; किंतु तृतीयपादशेषभूतः। भाष्ये चतुष्पात्त्व-रूपोन्मानस्यैव प्रदर्शितत्वात्। तथा चैवं विशिष्टार्थः—श्रुतमिदं ब्रह्मणः परिमितत्वं न स्वाभाविकम्, येना-न्यदपरिमितं कल्प्येत। स्वयमपरिमितस्यापि परिमितिवचनं तत्तदुपाधिबलादर्थवदिति सार्थकत्वेन सूत्रैर्दर्शितं प्रागेव, 'निचाय्यत्वादेवम्', 'अभिव्यक्तेरित्याश्मरथ्यः', 'हृद्यपेक्षया तु' इत्येवं बहुत्र। पुनरप्युक्ति-रधिकाशंकया। तथाचाणुहृदयादितत्तत्परिच्छिन्नत्वमिव चातुष्पद्यं च पादचतुष्टयमितत्वमपि, गायत्री विद्यायां भूतपृथिवीशरीरहृदयैः, षोडशकलब्रह्मविद्यायामेकैकस्य पादस्य कलाचतुष्कं प्रदर्श्य प्रकाशवान् अनन्तवान् ज्योतिष्मान् आयतनवानित्युक्तपादैः, माण्डूक्योपनिषदि जागरितस्थानादिपादैः, पुरुषसूक्ते 'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि' इति पादैश्च कल्प्यते। संख्याविशेषानिर्देशात् तावन्मात्रा-मितत्वमुक्तमिति न मन्तव्यम्। अणुजीवाद्यवच्छिन्नत्ववत् पादचतुष्टयावच्छिन्नत्वमप्येकदेश एवोपासनार्थ-माद्रियते। यथा, 'मनो ब्रह्मेत्युपासीत' इत्यत्र ब्रह्मत्वेन दृष्टयोगास्यस्य मनसः वाक् पादः प्राण पादश्चक्षुः

मितिवचनं सार्थकमिति दहराकाशादिप्रश्नेषु तत्रतत्र सूचितमेव। 'चतुष्पात् ब्रह्म' इति वचनं तु, 'पादोऽस्य विश्वा भूतानि' इतिवत् तत्तच्छ्रुतिभिरनुगुणमेव कल्पनीयमनन्तभूम्नोऽपि ब्रह्मणः। 'अमृतस्यैष सेतुः' इत्यमृतरूपस्य ब्रह्मण इति वा ब्रह्मप्राप्तिरूपमोक्षस्यामृतस्येति वा योजनीयम् ॥३१३

(३१४) अन्यस्याऽऽधिक्यवादे परमवधितया कारणं यत्र दृष्टं
तत्र ह्यव्याकृतादिः तदवधिः, इतरापेक्षयाऽपौ परश्च।
यस्मादन्यत् परं नेत्यभिहितविषये तत्परोक्तेरयुक्तेः
एवन्त्वादित्यनुक्तिस्तत इति, यदि वा व्याप्यमुक्तं तदस्तु ॥ २६ ॥

इति पराधिकरणम् ॥ ८१ ॥

अत्र नारायणस्य परत्वमङ्गीकृत्य तस्मादप्यन्यस्य परत्वमुच्यत इति पूर्वपक्षिणा वर्ण्यते। तत्र दृष्टान्तोऽप्युक्तः। यथा, 'अक्षरात् परतः परः' इत्यत्र परतोऽक्षरादन्यः पर[नर?] इति पर उच्यत इति। एवमुक्ते दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमाह—अन्यस्येति। अयमर्थः-दृष्टान्ते हि प्रथमान्तपरशब्द-निर्दिष्टस्य परस्याऽऽधिक्यवादे पञ्चम्यन्तपरशब्दनिर्दिष्टमवधितया दृष्टम्। तस्य च परशब्दवाच्यत्वं

---

पादः श्रोत्रपाद इति पादचतुष्टयकथनमात्रेण वागाद्यतिरिक्तविभूतिस्तस्य न वार्यते किंतु प्रकृतोपासनोपयुक्तमेतावदित्यभिप्रायेणैव तावन्मात्रोक्तिः—तथा तत्तत् चतुष्पात्त्व बुद्ध्यर्थम्; न तावता तावन्मात्र परिच्छिन्नत्वमिति। अतस्तदनन्तभूमैवेति। संबन्धव्यपदेश समर्थयते स्वस्येति। अमृतस्येति पदेन स्वस्येत्येवाभिहितम्, न तु स्वभिन्न मृतम्। 'ब्रह्मैवेदममृतं पुरस्तात्', 'एष आत्माऽन्तर्याम्यमृतः', 'अमृतो हिरण्मयः' इति ब्रह्मणस्तथात्वप्रसिद्धेः। स्वस्येत्यनुक्त्वा अमृतस्येत्युक्तिः हृदयादिस्थानगतहार्दादिरूपास्वतया सेतुर्भवन् न हार्दादिरूपं स्वं प्रापयति, किंतु अमृतं परंज्योतिरित्यवगमनाय। न च संबन्धस्य द्विष्ठत्वात् अमृतं सेतुतो भिन्नमेवेति शंक्यम्; आधाराधेयभावादेस्तथात्वेऽपि, प्राप्यप्रापकभावोपादानोपादेयभावदृश्यदर्शकभावादिसंबन्धस्यैकस्मिन्नपि संभवात्। तथाच सूत्रम् उपपत्तेश्च इति। श्रुतौ स्वस्य स्वप्रापकत्वश्रवणाद्भेदमुपपन्नमित्येव ज्ञायते। अर्थान्तरग्रहणेऽपि न ब्रह्मातिरिक्तपरवस्तुसिद्धिप्रसक्तिरित्याह अथवेति। संसारमोक्षस्थितिबन्धहेतुत्वेन श्रवणात् ततो ह्यन्य बन्धविपर्ययौ इति। 'मुक्तिः कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृतम्' इति कोशादमृतं मोक्षः ॥ ३१३ ॥

२६. अथ चतुर्थीं भेदव्यपदेशशंकां परिहरति अन्यस्येति। भाष्ये, 'अक्षरात् परतः परः', 'परात् परं पुरुषम्'. 'ततो यदुत्तरतरम्' इत्यादिवाक्योपादानात् तत्र प्रथमेन परपदेन ब्रह्म गृहीत्वा तद्भेदः प्राप्ये व्यपदिश्यत इति पूर्वपक्षाशयात् तन्निरास इह विवक्षितः—यत्र, परतः परः, परात् परम् इति वाक्यद्वये अन्यस्याऽऽधिक्यवादे द्वितीयपरशब्दाक्तस्यान्यस्य कथनरूपे, पञ्चम्यन्तपरशब्देन कारणमेकं परम् अवधितया दृष्टम्, तत्र वाक्यद्वये ब्रह्मैव पञ्चम्यन्तपरशब्दार्थ इत्यत्र न किञ्चित् प्रमाणमस्ति, तदवधिः=द्वितीयं परं प्रति अवधिः अव्याकृतादिरेव। अक्षरात् परत इत्यस्य महदाद्यपेक्षया परभूतादक्षरादित्यर्थस्वीकारे परादित्यस्याव्याकृतं प्रधानमर्थः। अक्षरात् प्रधानात्=यः परः जीवः

तत्कार्यरूपमहदाद्यपेक्षया इति वचनान्निर्णीतम्। तत्र स्वकार्यापेक्षया परस्मादक्षरात् परो जीवो वा परमात्मा वेति वक्तुं शक्यते। इह पुनः, 'न ह्येतस्मादिति नेत्यन्यत् परमस्ति' इति परमात्मापेक्षया परः प्रतिक्षिप्यते। तस्मात् अन्यः परो न कल्पनीय एव। ननु 'ततो यदुत्तरतरम्' इत्यत्र तच्छब्देन प्रकृतं परमपुरुषं निर्दिश्य ततोऽप्युत्तरतरं तत्त्वान्तरं निर्दिश्यते। अतः परमपुरुषादुत्तरं तत्त्वमस्तीति केचिदूचुः। तत् परिहरति—एवन्त्वादिति। तत्र तत इत्यनेन एवन्त्वादिति हेतुरनूद्यते। पूर्वं बहुभिः प्रमाणैः परमपुरुष एव परतरत्वमित्युपपादितत्वादित्यर्थः। तेन, 'यदुत्तरतरम्' इत्यादिकं परमपुरुषमेवाह; न पुनस्तत्त्वान्तरम्। तत इति शब्दस्यार्थान्तरमप्याह–यदि वेति। ततः=परमपुरुषव्याप्यत्वेन पूर्वोक्तात् प्रपञ्चात् उत्तरतरं यद्रूपमनामयमित्यन्वयः। अत्रापि परमपुरुष एव परत्वेनोच्यते। यदि परमपुरुषादुत्तरतरं वस्त्वस्तीत्यभिधीयते, तदा(तत्र ;?) [1]प्रकरणोपक्रमे पुरुषसूक्तप्रत्यभिज्ञानेन परमपुरुषादुत्तरस्य प्रतिक्षेपाद्(पात्। तद् ?)पक्रमोपसंहारयोरुपक्रमबलीयस्त्वस्य न्याय्यत्वादुपक्रमानुगुण्येनोपसंहारवाक्यमस्मदुक्तप्रक्रिययैव योजनीयमिति भावः। इयमत्र शब्दयोजना–अन्यस्य=ईश्वरस्य, 'अक्षरात्परतः परः' इत्याधिक्यवादे परं प्रकृत्यादिकं अवधितया यत्र दृष्टम्, तत्र तस्मिन्नेवोदाहरणे तदवधिः=अव्याकृतादिस्तदपेक्षया अवधिस्स्यात्। स्वयञ्च, 'अक्षरात् परतः परः' इति स्वकार्यवर्गात् परत्वेनापि निर्दिश्यते। अत्र तु, 'न ह्येतस्मादिति नेत्यन्यत्परमस्ति' इति 'इति न' इत्युपदिष्टादन्यत् परं नास्तीति परान्तरराहित्येनोपदिष्टे विषये तत्परोक्तेः=तस्मात्परस्यान्यस्योक्ते-

---

तस्मात् पर इत्यर्थे जीव एव परः। परात् परं पुरुषमित्यत्र परादिति जीवसमष्टिभूतचतुर्मुखग्रहणेन तदवधिकपरत्वं परमात्मन एवोच्यते; न तु ततोऽधिकस्य। न हि नारायणात्परः इति विशिष्य निर्देशोऽस्ति॥ चतुर्मुखस्य वा जीवस्य वा अव्याकृतस्य वा प्रथमपरशब्दार्थत्वं कथमिति चेत्, यथायथं देवादिजीवतः, प्रधानतः, महदादितश्च परत्वं तत्र तत्रास्त्येवेति। ननु, 'तेनेदं पूर्णं पुरुषेण सर्वम्' इत्युक्तं पुरुषं तत इति निर्दिश्य तदुत्तरतरमन्यदुच्यते श्वेताश्वतरे। एवञ्चैकैककण्ठ्यात् अक्षरात् परतः परः, परात् परम् इत्यत्र पञ्चम्यन्तपरशब्देनापि एतत्पुरुषग्रहणमित्यत आह यस्मादिति। तत्र पूर्वार्धे, 'यस्मात् परं नापरमस्ति' इति श्रवणात् तस्य यस्मात्परम् उत्कृष्टमन्यन्नास्तीत्यर्थकत्वात् स्वापेक्षया परराहित्येनोक्तं पुरुषमेव तत इति शब्देनोपादाय ततः परं किञ्चित् कथमुच्येत। अतः तदपेक्षया परोक्तेरयुक्तत्वात् तत इति पदस्यार्थान्तरं वक्तव्यम्। एवञ्च परतः पर इत्यादेरपि पूर्वोक्त एवार्थः। चिन्तामणौ यस्मादन्यदित्यत्र, 'न ह्येतस्मादिति नेत्यन्यत् परमस्ति' इति वाक्योपादानं परनिषेधकत्वरूपार्थैक्येन भाष्यकृतामिव तस्यापि स्मृत्यारूढत्वात्। यस्मादिति पदसत्त्वात् भाष्यानुरोधात् पदयोजनोक्तरीत्या च पूर्वान्वयमेव ग्राह्यम्॥ तर्हि तत इत्यस्य कोऽर्थ इति चेत्—नेदमवधिसमर्पकम्, किंतु हेतुसमर्पकम्; तत इति तस्माद्धेतोरिति। तदाह एवन्त्वादिति। पुरुषस्यैव सर्वोत्कृष्टत्वादित्यर्थस्यानुवादः तत इति पदेन। उत्तरार्धे तदन्वयः। अयं भावः—अयं ह्यत्र दशमो मन्त्रः। अष्टमो मन्त्रः [1]वेदाहमेतमिति पुरुषसूक्तप्रत्यभिज्ञापकः। तत्र, 'नान्यः पन्थाः' इति अन्यनिषेधः। तदनन्तरया, यस्मात् परं नेति पूर्वोक्त्या च तस्योत्तरतरत्वं ज्ञातम्। यत्—यस्मात्। अरूपमनामयञ्च तत् पूर्वोक्तम् उत्तरतरम्, ततः=तस्मात् तद्वेदिनाममृतत्वमिति। समनन्तरश्रूयमाणे उत्तरपदे अवधिसापेक्षेऽन्वयं विहाय तत इत्यस्योत्तरार्धेऽन्वये

रयुक्तेः तेन परत्वकल्पनं परमपुरुष एव पर्यवस्यति । 'ततो यदुत्तरतरम्' इत्यत्र तु पञ्चम्यन्तस्य तच्छब्दस्य हेतुपरत्वमित्येको निर्वाहः । अवधिपरत्वेऽपि पूर्वोक्तात् परमपुरुषव्याप्यात् प्रकृतत्वेन तच्छब्देन निर्देष्टुं योग्यादित्य[र्थ इत्य?]परो निर्वाह इति ॥ ३१४ ॥

८२ ॥ अथ फलाधिकरणम् ॥ ३-२-८ ॥

सूत्रम् - फलमत उपपत्तेः । श्रुतत्वाच्च । धर्मं जैमिनिरत एव । पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥

(३१५) आराध्यः कर्मकाण्डस्थितनयनिवहस्थापितानां क्रियाणां
अध्यक्षो देवतानामनुपधिमहिमा मध्यकाण्डोदितानाम् ।
अत्राप्येतावतोक्तो भवभयचकितप्राप्त्युपास्त्येकलक्ष्यं(क्ष्यः)
तत्तच्छास्त्रार्थयोग्यं दिशति फलमिति ख्याप्यतेऽथात्युदारः ॥ २७ ॥

अत्र पूर्वोत्तराधिकरणयोस्सङ्गतिमाह—आराध्य इति । यत्र हि परत्वमौदार्यञ्च, स एव हि सेव्य इति लोकप्रसिद्धम् । परत्वे सत्यपि कदर्यस्यासेव्यत्वात् । तथौदार्ये सत्यपि निर्धनस्यासेव्यत्वात् । तेनोत्तरपादप्रतिपाद्योपास्यत्वसिद्ध्यर्थं भगवतः परत्वमुक्तं पूर्वाधिकरणे ; इह पुनः फलप्रदत्वकथनात् औदार्यमुच्यत इति पूर्वोत्तराधिकरणसङ्गतिः । तदिदं परत्वं भगवतस्त्रिकाण्ड्यां सर्वत्रोक्तमनूद्य तदन्वितमौदार्यमधुना प्रख्याप्यते । अन्वयार्थस्तु—'सर्वे वेदा यत्रैकं भवन्ति', 'सर्वे होतारो यत्रैकं भवन्ति', 'वर्णाश्रमाचारवता' इत्यादिभिः प्रमाणैः प्रथमकाण्डे विष्णुरेव सर्वकर्मसमाराध्यतया निर्णीतः । मध्यमकाण्डेऽपि, 'अग्निरवमो देवतानां विष्णुः परमः' इति स एव सर्व-

---

क्लेशः सोढव्य इति भावः । तं क्लेशं विनेवार्थमाह यदिवेति । यद्वेत्यर्थः । पूर्ववाक्ये पूर्णं सर्वमिति प्रथमानिर्दिष्ट शब्दप्राधान्यात् तत इति गृह्यते । तच्छब्दस्य तदर्थपरामर्श एव स्वरसत्वात् । अतः तत्=तत इत्यत्र प्रकृतिभूततच्छब्दवाच्यं व्याप्यत्वेन पूर्वमन्त्रोक्तं सर्वमस्तु । तस्मादुत्तरतरत्वञ्च प्रकृतस्यैवोच्यत इति । भाष्य-वेदार्थसंग्रह-सर्वार्थसिद्ध्याद्युक्तमप्यत्रानुसंधेयम् । अविरोधेनार्थवर्णनमिष्टम् । अर्थो यःकश्चिदस्तु इत्याशयेन यदिवेत्यादि ॥ ३१४ ॥

२७. परत्वेनाधिगतस्य ततः पराभावेन परमत्वं स्थापितम् । परत्वं सौलभ्यञ्च सेव्यताप्रयोजकधर्मौ । तत्राचेतनं चेत् परम अनन्याधीनञ्च, तत् स्वत एवोपादातुं शक्यतया सुलभं भवेत्, चेतनस्य सुलभत्वमिष्टवस्तुप्रदानौपयिकौदार्यद्वारैव वक्तव्यम् । अत औदार्यमतिशयितमत्रोच्यते । परत्वेनाधिगमश्चास्य न केवलं ब्रह्मकाण्डेन, किंतु पूर्णमीमांसयाऽपीत्याह आराध्य इति । कर्मकाण्डे प्रथमे पूर्वमीमांसाद्वादशाध्याय्यां स्थितैः नयनिवहैः अधिकरणगणैः स्थापितानां जनितसंदिग्धांशनिश्चयानां क्रियाणां दर्शपूर्णमासादिवैदिकधर्माणां वस्तुगत्या यः आराध्यः, 'अहं हि सर्वयज्ञानां भोक्ता', 'वर्णाश्रमाचारवता पुरुषेण परः पुमान् विष्णुराराध्यते' इत्युक्तेः । ननु अग्न्यादिदेवतासु विधिविहितासु सतीषु कथमयमाराध्य इत्यत्राह अध्यक्ष इति । मध्यकाण्डे संकर्षाख्ये काशकृत्स्नीये उदितानां प्रथमकाण्डप्रतिपादितकर्माराध्यतया प्रतीतानामुपास्यानामग्न्यादिदेवतानामध्यक्षः नियन्ता अन्तर्यामी । इतरदेवताद्वारा सर्वाराध्यः । 'ये यजन्ति पितॄन् देवान् ब्राह्मणान् सहुताशनान् । सर्वभूतान्तरात्मानं

देवतान्तर्यामित्वेन तदध्यक्षतया प्रतिपादितः। अस्मिन्नपि ब्रह्मकाण्डे पुनरेतावता दशभिरपि पादैर्भाषितः भवभयचकितप्राप्युपास्यैकलक्ष्य इति। प्रागेवास्मिन् पादे विशदतरमुपपादितम्। अथोभयलिङ्गपादान्ते विद्याप्रतिपादनारम्भे तत्तच्छास्त्रार्थयोग्यं नित्यनैमित्तिककाम्यरूपाणां प्रवृत्तिनिष्ठधर्माणाम्, कर्मयोगज्ञानयोगभक्तियोगादिरूपाणां निवृत्तिनिष्ठधर्माणाञ्चानुगुणं फलं दिशतीति विद्यारम्भसिद्ध्यर्थं विशदमुपपाद्यते। न हि प्रयोजनमन्तरेण प्राणिनां प्रवृत्तिः सम्भवति। न च प्रयोजनं प्रदातारमन्तरेण। न च प्रदातृत्वं परत्वौदार्याभ्यां विना। नापि चैतौ गुणौ पुरुषोत्तमादुभयविभूतिविशिष्टस्वात्मप्रदानमहावदान्यात् भगवतो नारायणादन्यत्र सम्भवत इति भावः॥ ३१५॥

(३१६) कृष्यादेर्मर्दनादेरपि भवति फलं द्वारतो वाऽन्यथा वा
धर्माणां साधनत्वं श्रुतिभिरवगतं दोषबाधोज्झिताभिः।
तस्मादीशप्रसादात् फलमिति तु वचस्तत्प्रशंसेति चेन्न;
श्रौताराध्यप्रसादत्यजनकदनतोऽपूर्वक्लृप्तेरयोगात्॥ २८॥

सङ्गतिरुक्ता। तदर्थविचारस्तु–किं सापूर्वात् कर्मोपासनात् स्वर्गादिफलोत्पत्तिः, उत कर्मोपासनप्रीतात् वाग्वाद्यवस्थात् केवलाच्च परस्मात् ब्रह्मण इति। किं, 'स एवैनं भूतिं गमयति', 'यमेवैष वृणुते तेन लभ्यः' इत्यादिवाक्यशेषो वाग्वाद्यवस्थस्य केवलस्य च फलप्रदातृत्वमवगमयति,

विष्णुमेव यजन्ति ते' इति स्मरणात्। इदमभिप्रेत्य चोक्तं संकर्षे, 'स विष्णुराह हि तं ब्रह्मेत्याचक्षते'इति। अत्रापि=मुमुक्ष्वधिकारिके अन्तिमकाण्डे शारीरकेऽपि, एतावता दशपाद्या परमकारणत्वपरमानन्दत्वादिधर्मप्रतिष्ठापनेन भवभयचकितानां प्राप्येतरवैतृष्ण्यप्राप्यतृष्णाभिवर्धनेन प्राप्यत्वोपास्यत्वाकारवत्त्वेनोक्तः। अत एव अनुपधिमहिमा परत्वकाष्ठां प्राप्य स्थितः, 'भोक्ता च प्रभुरेव च' इत्युक्तरीत्या वेदपूर्वभागोत्तरभागरूपकर्मोपासनशास्त्रचोदितधर्माहं फलं दिशतीति स्थाप्यते। तेनास्य मुमुक्षायां सत्यामपि संसारन्यूनताभीतासु देवतासु पापाराधितासु विविधक्षुद्रफलप्रतिलम्भनप्रलोभनेन परिपन्थिभूतासु कथं मोक्षोपायसाधनसंभव इति शंका वार्यते। देवतान्तराराधनकर्मभिरप्ययमेवाऽऽराध्यः, एतद्विहितानेव कामान् एतत्तो गृहीत्वा एतदनुभूतास्ता दिशन्तीति सर्वफलप्रदेऽस्मिन् सुलभे नैव परतो भयमिति ज्ञाप्यते। अपेक्षिते तु क्षुद्रफले तासां देवतानामधिकारप्रच्यवे अयं तत्र प्रतिभूरिति न तत्र संन्देग्धव्यमिति च। सर्वस्यान्यतस्सिद्धावपि स्वावसरे तत्स्मारणमुचितम्। वक्ष्यते चान्यत् फलमेकान्तरितश्लोकेन। अतोऽवसरसंगत्या कार्यैक्यरूपसंगत्या च महौदार्यनिरूपणमिति भावः॥ ३१५॥

२८. अस्मिन्नधिकरणे आदौ सूत्रद्वयेन सिद्धान्तमुपन्यस्य जैमिनिपक्षरूपं पूर्वपक्षं तृतीयेन प्रदर्श्य चतुर्थेन सिद्धान्तमेव बादरायणः समर्थयते। तेन संप्रदायप्राप्तेऽपि परमात्मनः सर्वफलप्रदत्वे आदौ जैमिनेस्तत्रानास्थेति ज्ञाप्यते। तदाशयं सिद्धान्तञ्चेह संगृह्णाति कृषीति। कृष्यादेर्मर्दनादेरित्यनेन; 'लोके हि कृष्यादिकं मर्दनादिकं च कर्म साक्षाद्वा परम्परया वा' इति भाष्यं प्रत्यभिज्ञाप्यते। अयमर्थः–लौकिककर्मणां चेतनव्यापाररूपद्वारमन्तरेण फलजनकत्वं नास्तीति न नियमः, तदन्तरैव तद्दर्शनात्। तत्र किञ्चित् साक्षादेवाविलम्बेनोद्दिष्टफलजनकम्, यथा तैलेन देहमर्दनादि देहे आरोग्यस्य। किञ्चित्

नेति। किमयं वाक्यशेषो यथाप्रतीयमानार्थः, उतान्यपर इति । अत्र पूर्वपक्षवादी मन्यते— कृष्यादेरिति। लोके कृष्यादेर्मर्दनादेरपि फलमस्तीत्यविवादमेतत्। अन्यथा प्रवृत्त्ययोगात्। तच्च फलं दृष्टद्वारेणैव जायते, न पुनरदृष्टद्वारा ; कल्पनागौरवप्रसङ्गात्। अव्यवहितफलोत्पत्तौ दृष्टमपि द्वारं नापेक्षते । धर्माणां पुनः साधनत्वं श्रुत्यवगतत्वादपरित्याज्यमेव। न च, 'आदित्यो यूपः' इत्यादिवत् श्रुतिरत्र बाधवती । तेन बाधदोषोज्झिताभिः श्रुतिभिरवगतत्वादस्यैव धर्माणां साधनत्वम्। इत्थं धर्माणां साक्षात् साधनत्वे श्रूयमाणेऽपि, ईश्वरप्रसादात् फलमिति वचनमीश्वरप्रशंसार्थमेवेति कल्पयितुं युक्तम्। आशङ्कितमर्थं प्रतिक्षिपति— नेति। तत्र हेतुमाह—श्रौतेति। अत्रायं विभागः—कर्मैव कालान्तरभाविफलं ददातीत्येकः पक्षः। कर्मव्यतिरिक्तमपूर्वाभिधानमित्यपरः। कर्मरूपाराधनप्रीतो देवताविशेष इति तृतीयः। प्रथमपक्षे कर्मणश्चिरप्रध्वस्तत्वात् फलहेतुत्वमेव न सम्भवति। द्वितीये तु पक्षे श्रुतहानाश्रुतकल्पनाभ्यां द्वौ दोषौ स्तः। श्रूयते हि, 'स एनं प्रीतः

परम्परया ; यथा कृषिचिकित्सादिव्यापार उचितकालविलम्बेन दृष्टकार्यपरम्परया धान्याङ्गसंपत्यादेः । तथा शास्त्रविहितानामपि धर्माणां फलसाधनत्वं भवितुमर्हति साधनत्वे किं प्रमाणमिति चेत्— धर्मशब्दवाच्यतैव मानम् । धृतिश्च प्रीतिः सुखम् इष्टफलं श्रेय इति । लिङ इष्टसाधनत्वमेवार्थ इति केचित्। कृतिसाध्यत्वमर्थ इति पक्षेऽपि इष्टसाधनत्वमनुमेयम्; तज्ज्ञानं विना प्रवृत्त्यभावात्। प्रवर्तकव्यापारो विधिरिति पक्षे तेन इष्टसाधनत्वं कृतिसाध्यत्वमुभयमनुमेयम् । बलवदनिष्टाननुबन्धित्वमपि । एवञ्च श्रुत्या तदर्थापत्त्या वा विधिविषयाणां साधनत्वस्यावगतत्वात् तस्य च कृष्यादाविव परम्परयाऽप्युपपत्तेः किं मध्ये चेतनव्यापारेण। ननु कृषिचिकित्सादौ बीजगात्रादिषु उत्तरफलभूताः व्यापारा अङ्कुरोत्पत्त्यादयो दृश्यन्ते, नैवमिह यागादौ कृते स्वर्गादिरूपश्रुतफलसंगतिद्वारभूतव्यापाराणामन्वयव्यतिरेकाभ्यां दर्शनमिति चेत्— अदर्शनादेवादृष्टव्यापार इति ब्रूमः । तच्चादृष्टं स्वर्गादिरूपफलहेतुविषयगतमिति केचित्। अनित्यानन्तवस्तुनिष्ठतया कल्पनमपेक्ष्याऽऽत्मनि कल्पने लाघवमिति कर्तृगतमेवादृष्टमपूर्वाख्यमिति ब्रूम इति । द्वारत इत्यस्य कतिपयद्वारैरित्यर्थः । कृष्यादिविषयमिदम् । अन्यथा=साक्षात् इदं मर्दनादिविषयम् । पूर्वार्धे फलमिति प्रयोगात् साधनत्वं फलसाधनत्वमित्यर्थसिद्धम् । फलसाधनत्वमवगतमपि कदाचित् अप्रामाणिकमित्युपेक्ष्येत, यदि तत् दुष्टपुरुषोक्तवाक्यादिमूलकत्वेन ज्ञातं स्यात्, यदि वा अवगतस्य पश्चात् बाधः स्यात्, यथा, 'क्षीरं पिब, शिखा ते वर्धिष्यते' इति वाक्ये । नैवमत्र ; श्रुतित्वादित्याह दोषबाधोज्झिताभिरिति । एवञ्च पूर्वत एव फलसिद्धौ देवताप्रसादेश्वरप्रसादकल्पनानपेक्षणात् तथा बोधक, 'तत्प्रसादात् परां शान्तिं स्थानं प्राप्स्यति शाश्वतम्' इत्यादिवाक्यं केवलमर्थवादः, कथमपि प्ररोचनया प्रवृत्त्युत्पादनायेति ।

इमं जैमिन्याशयं निरस्यति इति चेन्नेति। श्रुतिकण्ठोक्तो य ईशप्रसादः तस्य त्यजनात् अपलापरूपात् कदनात् दोषात् अपूर्वस्य अश्रौतस्य अज्ञातस्य देवापूर्वशब्दवाच्यस्य कल्पनमयुक्तम्। अपूर्वकल्पनस्यैवासंभवे प्राभाकरेण यत् तस्य लिङ्वाच्यत्वकल्पनम्, तत् सुतरामयुक्तम्। अयमाशयः-धर्माणां द्वारमन्तरा न फलसाधनत्वमिति स्वीकृतम्। धर्मवेदकवाक्यशेषैः स्पष्टमेव देवताप्रीतिः द्वारत्वेन कथ्यते। लोके च द्विविधं द्वारं

प्रीणाति' इत्यादिना देवताया एव फलप्रदत्वम्। तेन तृतीयः पक्षः औचित्यादर्थविरोधाभावाच्च स्वीकर्तव्य इति देवताया एव फलप्रदत्वं सिद्धम्। इदं तु सामान्यम्। 'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च' इति सर्वकर्मसमाराध्यत्वं सर्वकर्मफलप्रदत्वं चोच्यते। अप्रदानशीलस्य हि प्रभुत्वं गगनकुसुम-कूर्मरोम-नरविषाणादिष्वन्यतमायते। तेन प्रभुत्वमिति फलप्रदत्वमेवोच्यत इति भाष्यकारा निरणैषुः। तस्यैव वक्तुं योग्यत्वादाकाङ्क्षितत्वाच्चेति ॥ ३१६ ॥

(३१७) यद्यप्याराध्यमूलं फलमिति(मपि) फलं देवताधिक्रियायां
कर्मापेक्षा तथोक्ता फलजननपरप्रेरणादौ, तथापि।
साक्षित्वानादरत्वप्रभृतिपरगुणान् प्रेक्ष्य तत्प्रीणनादौ;
शङ्कातङ्कैर्निरुद्धांस्त्वरयितुमधुना तादृशोदारतोक्तिः ॥ २९ ॥

अत्र फलप्रदत्वकथने तत्रतत्र पूर्वोक्तार्थविशेषेण पौनरुक्त्यमाशङ्क्य प्रतिक्षिपति—यद्यपीति पूर्वं हि देवताधिकरणे, 'प्रीतिः फलप्रदानञ्च देवतानां न विद्यते' इति वदतां प्रतिक्षेपात् फलप्रदत्वमुक्तमेव। समनन्तरं तु 'कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः' इत्यस्मिन्नपि सूत्रे पूर्वकर्मानुरूपं पुण्यपापयोरीश्वरः प्रवर्तयतीति कर्मफलमीश्वराधीनमित्युक्तम्। तत् किमर्थं फलप्रदत्वमत्राप्युच्यते? तदेतदङ्गीकृत्यैव प्रतिक्षिपति—तथापीति। 'साक्षी चेता', 'अवाक्यनादरः'

---

दृष्टम्, कृष्यादौ बीजादिवस्तुगतावस्थाविशेषरूपम्, राजसेवानुवर्तनादौ तत्प्रीतिरूपञ्च। तत्र प्रथमप्रकारासंभवे सिद्धे दृष्टद्वितीयप्रकाररीत्या च देवताप्रसादे प्राप्ते तदुपेक्षणेन अक्लृप्तपूर्वकल्पनाप्रयास एवापूर्वत्वादुपेक्ष्य इति ॥ अत्रेदं बोध्यम्—न पूर्वमीमांसायां कुत्राप्यपूर्वं द्वारमिति कण्ठोक्तम्। नाप्यत्र; अपूर्वं जैमिनिरित्यनुक्त्वा धर्मं जैमिनिरित्येवोक्तत्वात्। धर्मशब्दः पुण्यरूपापूर्वार्थक एवेति चेत्—धर्मशब्दस्य कर्मण्येव हि मीमांसकादिप्रसिद्धिः। न तु तार्किकमतादृष्टविशेषे। अतो देवतानामाराध्यत्वं क्वचिदस्तु। तावता देवताप्रीतिर्न द्वारम्; मण्डूकादीनां तिरश्चाम्, ओषध्यादीनाञ्च देवतात्वात्। देवतानाराधनभूतानेकदानोपवासकृच्छ्रादिकर्मसद्भावाच्च। अतो धर्मजन्यं किमपि द्वारं स न स्वीकरोति। द्वारमस्वीकृत्य धर्म उपलक्षणतया हेतुः, धर्मोपलक्षितं किमपि स्थायि फलहेतुरिति तद्वादः। धर्मजन्यप्रीतिरेव द्वारमिति बादरायणपक्षः। भाष्यादावपूर्वग्रहणं तस्यार्वाचीनोक्तस्यापि निराकार्यतया। देवताप्रीतेः क्वचित् स्थिताया अपि आनन्दरूपत्वात् संकल्परूपत्वाभावान्न फलहेतुता। संकल्परूपत्वेऽपि सर्वत्राभावात् न स फलहेतुरिति स मेने। विस्तरेण सर्वमसत्कृतायामुपयुक्तमीमांसायां द्रष्टव्यम् ॥ ३१६ ॥

२९. एतदधिकरणवैयर्थ्यमुद्भाव्य परिहरति यद्यपीति। देवताधिक्रियायां शारीरके प्रथमतृतीयपादे देवताधिकरणे, देवताविग्रहादेः, ततस्तासामुपासकत्वस्येव, 'अनेकप्रतिपत्तेर्दर्शनात्' इति तदाराध्यतायाश्च स्थापनात् तत्प्रीतिद्वारा फलमिति फलितम् अर्थादुक्तमेव भवति। पदयोजनाऽपि फलमिति इति पाठमिच्छतीव। कर्मापेक्षेति। "वैषम्यनैर्घृण्ये न सापेक्षत्वात्" इत्यत्र फलदाने कर्मापेक्षः पर इत्युक्तम्। "कृतप्रयत्नापेक्षः" इत्यत्र प्रेरणे स कर्मसापेक्ष इति चोक्तम्। "ज्योतिराद्यधिष्ठानं तु तदामननात्" इत्यत्र मनुष्यादिविषयमग्न्यादिदेवताधिष्ठानमपि तत्संकल्पाधीनमित्युक्तत्वात् अग्न्यादेरनुग्रहशक्तिः परमात्माधीनेति गम्यते। एवं सर्वेश्वरस्य सर्वफलप्रदत्वमवसीयते। अतः पुनरुक्तमिदमधिकरणमिति चेत्—सत्यम्; तथापि

इत्यादौ तत्रतत्र वेदान्तवाक्ये साक्षित्वानादरत्ववचनात् तच्छ्रवणमात्रेण बिभ्यत उपासकस्योपासनप्रवृत्तिरेवोत्सीदेत् । तेनेश्वरस्योपेक्षकत्वादिशङ्कातङ्कपङ्किलबुद्धेरुपासकस्य भयनिवारणार्थं परमोदारस्य भगवतः श्रियः पत्युः शरणागतरक्षणैकतानचित्तस्यौदार्यमेव प्रधानगुणमस्मिन्नधिकरणे प्रतिष्ठापयति सूत्रकार इति साफल्याच्च पौनरुक्त्यगन्धावकाशः ॥ ३१७ ॥

(३१८) सम्राजः सानुकम्पात् पितुरुचितविदः साम्यभाजो वदान्यात्
स्थाने विन्दन्ति पुत्रा नियतरुचिभिदायन्त्रितास्तंतमर्थम् ।
तत्र प्राप्यं स्वतो यत्, विहतिरिह यतः, तत्प्रशान्तिश्च यस्मात्,
देयं यच्चा(द्वाऽ)विशेषात् दमनमपि, यथालोकमत्रापि तत् स्यात् ॥ ३० ॥

इति फलाधिकरणम् ॥ ८२ ॥

ईश्वरस्य फलप्रदानप्रकारं राजतत्पुत्रन्यायेन लोकदृष्टप्रक्रियया प्रतिष्ठापयति—सम्राज इति । लोके हि केषाञ्चित् पुत्राणां कश्चिदपि पिता सम्राडेव भवति । स च सानुकम्पः कर्तव्याकर्तव्ययोरुचितमप्यर्थं जानाति । सर्वेषु च पुत्रेषु साम्यमेव भजते । वदान्यश्च भवति । सर्वेष्वपि पुत्रेषु औदार्यमपि साधारणमेवेत्यर्थः। एवम्भूतात् पितुः पुत्रा नियतरुचिभिदायन्त्रिताः स्वस्वेच्छानुरूप्येण स्वाभीष्टं तंतमर्थं विन्दन्ति = लभन्ते। एवं परमपुरुषादप्येतद्गुणजातोपेतात् पुत्रकल्पाः सर्वे तत्सेवकाः पुरुषाः स्वाभीष्टमर्थं लभन्त इति शेषः। तत्र(अत्र) प्राप्यप्रापकतद्विरोधितदुपशमनादिकं सकलमपि पितापुत्रन्यायेनेश्वरेऽपि स्यादिति विशदं प्रकाशयति—तत्रेति। स्वतः प्राप्यं गृहक्षेत्रादिकं दायरूपं यत्, यत पित्राज्ञोल्लङ्घनादिहेतोस्तस्य विहतिर्भवति। तत्प्रशान्तिश्च यस्मात्—पुनरागस्य तत्पादप्रणामादेः, यच्च देयं घनाभरणपट्टवस्त्रच्छत्रचामरादिकम् अविशेषात् अपराधक्षामणाभावे दमनमपि= शिक्षणमपि, यथालोकं तत् सर्वमत्रापि स्यात् । राजभृत्यस्य तु राजाज्ञोल्लङ्घने पादच्छेदादि दमनम्, तत्पुत्रस्य तु जीविकासङ्कोचादिकम् । एवमभागवतानां पापफलं शास्त्रोक्तं नरकप्रापणा(यातना)दिकम् । भाग-

---

तत्रतत्र तस्य सिद्धवत्कथनेऽपि परमात्मानुग्रहस्य संभवदाक्षेपपरिहारेण साधनार्थमेतत् । अनुग्रहस्य द्वारत्व न भवति । तस्यानियतत्वात् । स्थितोऽपि हि सः, 'साक्षी चेता केवलो निर्गुणश्च' इत्युक्तरीत्या निर्व्यापारः दोषाणां सावधानं द्रष्टा च, अवाकी, अनादरः, 'मोक्षमिच्छेज्जनार्दनात्' इत्युक्तधा फलान्तरप्रदानविमुखः, 'पद्मपलशतेनापि न क्षमामि वसुन्धरे' इति प्रायश्चित्तावश्यश्चेति। एवंविधपरत्वोपयुक्तं गुणगणं शास्त्रतो गृहीत्वा, न स प्रीणयितुं शक्य इति शंकमाना भीताः ये दूरीभवन्ति, तानप्युपासनादौ त्वरयितुं तां विपरीतबुद्धिं शमयितुं तत्सौलभ्यस्थिरीकरणमिति ॥ ३१७ ॥

३०. स्वकुलव्याधकुलादिसंवृद्धस्वकुमारकराजन्यायेन सर्वलोकपितुः संसारिविषये परमौदार्यमिति वदान्यताप्रयोजकसंबन्धविशेषेण सह गुणान् गणयन् ज्ञापयति **सम्राज** इति । **साम्यभाजः** दार्ष्टान्तिके, 'समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः' इति स्थितस्य, औदार्यविषयनिश्चयोपयोगितया नित्यसूरिपरिषदा साम्यमेव प्राप्तस्येति वा । **स्थाने** तत्तद्भोगस्थले । तत्तदवसर इति वा । युक्ततयेति वा । **नियतया** स्वयं व्यक्तिभेदेन विलक्षणतया व्यवस्थितया **रुचिभिदया** विभिन्नपुरुषार्थविषयरुच्या **यन्त्रिताः** एकमाले व्यवस्थापिताः **अर्थं** पुरुषार्थम्; दायधनं वा । **तत्रे**त्यादिकं दार्ष्टान्तिके यथायथं विभजनीयम् । **तत्रे**त्यस्य सम्राट्पितृसाम्ये सतीत्यर्थः । दार्ष्टान्तिके स्वतः प्राप्यं भोगसाम्यादि । **विहतिरिह यतः**—

वतानां तु बुद्धिपूर्वकापराधप्रसङ्गे, 'न खलु भागवता यमविषयं गच्छन्ति । इहैवैषां केचिद्दण्ड्या भवन्ति' इति काणत्वखञ्जत्वादिकमेव दमनम् । तेन, 'लघुर्दण्डः प्रपन्नस्य राजपुत्रापराधवत्' इत्युक्तप्रकारेण प्रपन्नानामपराधानुरूपदण्डनमत्यल्पमेव स्यादिति सकलफलप्रदे भगवति परमकारुणिके विश्वासेन ब्रह्मविद्यानुष्ठानं सहसैव कर्तव्यमिति इदमधिकरणमुपासनारम्भमेव सन्धुक्षयति ॥३१८॥

इति फलाधिकरणम् ॥ ८२ ॥

(३१९) शुद्धानन्दे तदित्थं शुभगुणजलधौ सत्यनित्यस्वदेहे
देवीभूषायुधाद्यैरतिशयिनि कनद्भोगलीलाविभूतौ ।
शेषित्वाधारभावप्रभृतिबहुविधस्थास्नुसम्बन्धदीप्ते
दृष्टिः स्वर्गापवर्गप्रसवितरि हरौ निर्निमेषा श्रुतिर्नः ॥ ३१ ॥

पादार्थेषु प्रधानार्थविशेषान् प्रकटयन् भगवत्पारम्यबुद्धिमुद्दीपयति— शुद्धानन्द इति । अयमत्र शब्दार्थः—तत् = एवमुपपादनात् शुद्धानन्दस्वरूपे परस्मिन् ब्रह्मणि शुभगुणजलधौ सत्यनित्यस्वदेहे = परमार्थनित्यविग्रहवति देवीभूषणायुधपरिजनपरिच्छदादिभिरतिशयिनि । कनद्भोगलीलाविभूताविति विभूतिद्वयविशिष्टत्वमाह । कनदिति देदीप्यमानत्वमुच्यते। 'अथ यदतः परो दिवो ज्योतिर्दीप्यते' इति हि श्रुतिः । शेषित्वेति । आधेयत्वविधेयत्वशेषत्वैर्विश्वस्य शरीरत्वम्, आधारत्वादिभिरीश्वरस्य शरीरित्वमिति वेदान्तार्थतत्त्वनिर्णयसारः । सम्बन्धस्य स्थास्नुत्वं नित्यसिद्धत्वम् । स्वर्गापवर्गप्रसवितरीति, 'फलमत उपपत्तेः' इत्यधिकरणार्थं विशेषतः प्राह । एवम्भूते हरौ निर्निमेषा दृष्टिः = अस्माकं श्रुतिरेवाबाधितप्रमाणमित्यर्थः। तेन श्रुतिसिद्धेष्वेतेष्वर्थेषु विवादो न वैदिकैः कर्तव्य इत्यर्थः । तेन [1]कक्षानुमानतुल्यैरनुमानाभासैरीश्वरगुणविग्रहविभूत्यादिकं निराकुर्वतां सर्वेषामेव पूर्ववादिनां श्रुतिरेव परिपन्थिनीति नरशिरःपवित्रत्वानुमानमपि ते नमस्कुर्वन्तु । पुरस्कुर्वन्तु च, 'ब्राह्मणेन सुरा पेया' इत्यादिकमपि वचनम् । अथवा मनुष्यत्वादिभिः स्वब्राह्मण्यमपि तिरस्कुर्वन्त्विति हास्यमेवावशिष्यते ॥ ३१९ ॥

---

एतद्विघातकं प्रतिबन्धकमनादिकर्म । तत्प्रशान्तिश्च यस्मात्=भक्त्या प्रपत्त्या वा। देयं यद्वा विशेषात् । यत् तदुपायनिष्पत्त्यर्थं विशेषात् तत्तदवसरे पृथक् पृथक् देयं वा भवति । कस्यचिदधिकारिणः किञ्चित् कदाचित् देयं भवेत्, अन्यस्य तु अप्रतिबन्धेनोपायपूर्तिरिति वाशब्देन ज्ञाप्यते । यद्वाविशेषादित्यपि पाठात् अविशेषाद्विवा । दमनेऽन्वयो वा । दमनमपि उपायप्रतिबन्धकपापप्रायश्चित्ताननुष्ठाने शिक्षणमपि तत्पापपरिहाराय कर्तव्यं तत्तदधिकारिभेदेन यत् भवेदिति यत्पदानुषंगः अपिशब्दतोऽवगम्यते । अत्रापि परमात्मसंश्रितपुरुषविषयेऽपि । तत् स्यात् । तच्छब्दः सकलयच्छब्दप्रतिसंबन्धी ॥ ३१८ ॥

३१. सम्राजो दृष्टान्ततया कथनं व्युत्पादनार्थम् । तस्य परमात्मनश्च महदन्तरमस्तीति प्रदर्शयन्, ईदृशोऽस्मिन् न पितृत्वमात्रं संबन्धः अपितु अनेके इति च ज्ञापयन् सर्वैतद्विषये नित्या श्रुतिरेव नश्चक्षुः । प्रत्यक्षदृष्टार्थं इवात्र निस्संदेहेन भाव्यमित्याह शुद्धेति । शुद्धत्वं दुःखलेशेनाप्यमिश्रत्वम् । सत्यनित्येति । नित्येत्यनेनैव सत्यत्वे सिद्धेऽपि सत्येति कथनम् अनित्यस्वदेहरूपोऽवतारादिरपि सत्यः, न त्वैन्द्रजालिक इति ज्ञापनार्थम् । स्थास्नवः=स्थिराः संबन्धाः तैः प्रकाशमाने ॥ ३१९ ॥

---

1 कक्षानुमानेति । कुत्र सरट इति विवादे गुरोः कक्षे सरटः प्रविष्ट इत्यनुमानतुल्यैरित्यर्थः॥

तृतीयाध्यायद्वितीयपादाधिकरणार्थानां विभज्य कथनम्—

(३२०) पादे स्वाप्नार्थहेतुस्तदयमिह सुषुप्त्याधृतिः सुप्तगोप्ता
मुग्धोद्बोधादिकर्ता त्वनघशुभगुणोऽचिद्भिरंशी स्वदेहैः ।
पारम्यस्यैकसीमा सकलफलद इत्युच्यते भक्तिभूम्ने
सत्ये ह्येवं(त्वेवं) गुणादावथ परभजने रूपभेदादि चिन्त्यम् ॥ ३२ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां
तृतीयस्याध्यायस्य द्वितीयः पादः ॥

उत्तरत्र विद्याभेदेषु गुणभेदकथनार्थमेतत्पादे प्रत्यधिकरणमुक्तान् अर्थभेदान् प्रत्येकमुपादाय प्रकटयति—पाद इति । स्वप्नस्वप्नार्थस्रष्टा, सुषुप्त्याधृतिः = सुषुप्त्याधारः, सुप्तगोप्ता = सुप्तस्य विनाशाभावेन संरक्षकः, मुग्धोद्बोधादिकर्ता = मूर्च्छितस्योद्बोधं कदाचित् करोति ; कदाचित् मरणमिति आदिशब्दार्थः । अनघशुभगण इत्युभयलिङ्गत्वमुच्यते । अचिद्भिरंशी स्वदेहैरित्यहिकुण्डलाधिकरणार्थ उच्यते । अथ पराधिकरणार्थः—पारम्यस्यैकसीमेति । एक एव परः ; तस्मात् परो नास्तीत्यर्थः । सकलफलद इति फलाधिकरणार्थः । एवमुच्यते भगवान् किमर्थमित्याशङ्क्याह—भक्तिभूम्न इति । वक्ष्यमाणब्रह्मविद्यारूपभक्त्यभिवृद्ध्यर्थमित्यर्थः । ननु व्यावहारिकं गुणजातमेतादृशमस्त्विति वयमपि ब्रूम इति मृषावादिनः प्रवदन्ति ; तत्रोत्तरमाह—सत्ये ही(त्वि)ति । एवमुक्ते गुणादौ सत्ये सत्येव ह्यनन्तरपादे परभजनादौ रूपभेदादिकं वक्तुं शक्यते । अयमर्थः—तत्त्वमेव वेदान्तशास्त्रमुपपादयति । तत्प्रतिपाद्यमर्थजातमतत्त्वं चेत्—किं तत्त्वम् ? न किमपीति चेत्, माध्यमिकसङ्करप्रसङ्गः । विशेषणम् अतत्त्वम्, विशेष्यमात्रं तत्त्वमिति चेत्-कः(किं) प्राह? श्रुतिरिति चेत्-वाच्यत्ववेद्यत्वादिभिः पुनरपि मिथ्याभूतं ब्रह्म स्यात् । स्वयम्प्रकाशं तदिति चेत्, किं तत् स्वयम्प्रकाशत्वम् ? अवेद्यत्वे सति अपरोक्ष[त्व]व्यवहारानुगुणत्वमिति चेत्—व्यवहारानुगुणत्वादेव पुनरपि मिथ्यात्वमुन्मज्जेत् । स्वयम्प्रकाशत्व[स्य]मृषात्वान्न दोष इति चेत्, स्वयम्प्रकाशत्वस्य मिथ्यात्वे परप्रकाशत्वमेव तथ्यमिति पुनरपि दृश्यत्वात् मिथ्यात्वं समर्थयसे ब्रह्मण इत्यसम्बद्धवादिना भवता विवादमपि कर्तुमपत्रपामहे ॥ ३२० ॥

इति निखिलतार्किकचूडामणिना सर्वतन्त्रस्वतन्त्रेण
श्रीकुमारवेदान्ताचार्यपरनाम्ना श्रीमद्दैश्वामित्रवरदगुरुणा
विरचिते शारीरकाधिकरणचिन्तामणौ
तृतीयस्याध्यायस्य द्वितीयः पादः ॥

---

३२. अधिकरणार्थान् संगृह्णाति पादे इति । तत् तस्मात् अयं परमात्मा इह तृतीयद्वितीये पादे । आधृतिरिति पदम् आधारार्थकम् । संघातश्चेतनधृतिरित्यत्र तथाव्याख्यानात् । सुप्तगोप्ता, बहिष्कुलायाद्गतस्य देहं रक्षति, पुनस्तत्राऽऽनयति चेति । अचिद्भिः प्रकृतिप्राकृतैः स्वदेहभूतैरंशी । तेषां जीववदंशत्वमहिकुण्डलाधिकरणोक्तम् । परभजने परभक्तौ तत्त्वज्ञानरूपभक्तियोगप्रभेदे । रूपभेदः उपास्यगुणभेदप्रयुक्तोपास्यभेदः । एवमुत्तरेण संगतिर्दर्श्यते ॥ ३२० ॥

इति वात्स्यमहाचक्रवर्तिवीरराघवाचार्यकृतिषु
अधिकरणसारावलिव्याख्यायां सारार्थरत्नप्रभायां
तृतीयस्याध्यायस्य द्वितीयः पादः ॥

॥ तृतीयस्याध्यायस्य तृतीयः पादः ॥

८३ ॥ सर्ववेदान्तप्रत्ययाधिकरणम् ॥ ३-३-१ ॥

सूत्रम्—सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ भेदान्नेति चेत् एकस्यामपि ॥ स्वाध्यायस्य तथात्वे हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ दर्शयति च ॥ उपसंहारोऽर्थाभेदात् विधिशेषवत् समाने च ॥ १—५ ॥

(३२१) तत्त्वज्ञानानुविद्धं हिततममनघं मोक्ष्यमाणस्य वक्तुं
तत्त्वे निर्धूय तर्कज्वरजनितमहासन्निपातप्रलापान् ।
निष्पन्ने तत्त्वबोधे न किमपि विदुषा साध्यमित्युद्गृणद्भ्यो
यावज्जीवानुवर्त्यं मुररिपुभजनं मुक्तिलाभाय वक्ति ॥ १ ॥

एवं पूर्वोक्तैर्दशभिः पादैर्मोक्षोपायोपयुक्तं तत्त्वज्ञानं प्रतिष्ठापितम् । उत्तरत्र षड्भिः पादैः परब्रह्मप्राप्तिरूपफलसंवलितं तद्धेतुभूतमुपासनं विशदमेव प्रकाश्यत इति पूर्वोत्तरयोरन्वयमाह—तत्त्वज्ञानेति । मोक्ष्यमाणस्य पुरुषस्य तत्त्वज्ञानानुविद्धं हिततममुपासनमुत्तरत्र वक्तुं तत्त्वे विषये तर्कज्वरजनितमहासन्निपातप्रलापान् परवादान् निर्धूय, अधुना तत्त्वबोधे निष्पन्ने सति तत्त्वज्ञानस्य सञ्जातत्वात्, 'दग्धाखिलाधिकारत्वात् ब्रह्मज्ञानाग्निना मुनिः । वर्तमानः श्रुतेर्मूर्ध्नि नैव स्याद् वेदकिङ्करः ॥' इति वेदकिङ्करत्वमपलपद्भ्यो मृषावादिभ्यः, 'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते' इति श्रुतिसिद्धं यावज्जीवानुवर्त्यं मुररिपुभजनं मुक्तिसिद्धये वक्तीत्यन्वयः ।

---

१. तृतीयाध्यायस्य साधनाध्यायत्वात् तत्र पादचतुष्टयप्रतिपाद्येऽर्थचतुष्टये तृतीयपादोच्यमानस्य भक्तियोगस्यैव मुख्यसाधनत्वात् तमत्राध्यायार्थत्वेनाह तत्त्वेति । तत्त्वहितपुरुषार्थेषु तत्त्वस्य ज्ञाने जाते पश्चादेव हितोत्पत्तिरिति तदनुविद्धं उत्तरतया तेन संबद्धं हिततमम् । तस्यानघता तत्त्वज्ञानस्यायथावस्थितत्वे न स्यात् । अनघतायां सत्यामेव तत्र प्रवृत्तो मोक्ष्यमाणो भवेत् । अतो मोक्ष्यमाणं प्रति अनघं वक्तुमिच्छन् तत्त्वज्ञानं यथावस्थितं संपादयितुमनाः प्रथमाध्यायप्रतिपादिते ब्रह्मरूपतत्त्वविषये हैतुकोद्भावितर्करूपज्वरजनितसंनिपातावस्थानिबन्धनान् द्वितीयाध्यायसर्वाधिकरणपूर्वपक्षरूपान् प्रलापान् प्रतितर्कात्मकसदौषधमूलं निर्धूय मुररिपुभजनरूपं साधनं वक्ति । एतद्वचने किं स्यादिति चेत्-तदाह निष्पन्ने इति । परे हि-तत्त्वज्ञानं यथावदुत्पादनीयमेव । तस्मिन् निष्पन्ने तु पश्चादन्यत् हितं किमस्ति कर्तव्यम्? वाक्यार्थज्ञानादेव मुक्तेः । विद्वानित्यस्य तत्त्वविषयकवाक्यार्थज्ञानवानित्येवार्थः । अतस्तस्मिन् ज्ञाने निष्पन्ने सति किमन्यत् साध्यमस्तीत्याहु । इत्युद्गृणद्भ्यः अद्वैतिभ्यः= एवं कथयद्भ्यस्तान् शिक्षयितुं प्रतिबोधयितुम् । यद्वा पदयोजनोक्तरीत्या, अन्धकाराय दीप इत्यत्रेव चतुर्थी । तान् निवर्तयितुमित्यर्थः । न निर्विशेषज्ञानं वाक्यजन्यं मुक्तिहेतुः, 'किंतु मुररिपुभजनं प्रीतिरूपापन्नदर्शनसमानाकारध्यानात्मकम्; तदपि यावज्जीवानुवर्त्यम्; तत एव मुक्तिरिति सूत्रकारो वक्ति । तत्र यावज्जीवानुवर्त्यत्वांशश्चतुर्थाध्याये वक्ष्यते । भजनरूपं तदत्रोच्यते । मोक्ष्यमाणस्येति पदेन तत्पक्षे श्रुतिविरोधं दर्शयति । 'तत्त्वमसि' इति वाक्यार्थज्ञानं स्वत एव मुक्तिहेतुरिति तन्मतम् । तत्, 'फलमत

इत्थं किल मृषावादी मन्यते—य एव ह्यहङ्काराविमुक्तः, स एव वेदकिङ्करः ; कर्तृत्वभोक्तृत्वयोः अनात्मधर्मत्वात्। काम्य[कर्मसु]कर्तृत्वं तावत् संसारहेतुत्वान्निरस्तमेव ज्ञानिनः। ब्रह्मोपासन-कर्तृत्वमपि तथैव निरस्तम्, तस्यापि सांसारिकधर्मान्तर्भावात्। ब्रह्म तु न ज्ञेयं नोपास्यं न प्राप्यमपि। न च वेदैरयमर्थो ज्ञाप्यते ; नित्यस्वयम्प्रकाशत्वात्। स्वयम्प्रकाशत्वमपि न निरुच्यते। तदनिर्वचने कथं ब्रह्मसिद्धिरिति चेत्—मा भूत् ब्रह्मसिद्धिः। अत एव ह्यध्यात्मविदः प्रवदन्ति, 'अवचनेनैव प्रोवाच' इति। एवमसम्बद्धवादिनो मिथ्यावादिनः सद्विद्यामपि[1] स्वसमयसारभूततया परिगृहीतां परित्यजन्ति, किमुत दहरविद्यादिकान् विद्याभेदान् विविधगुणपरिष्कारयुक्तान्। अतस्तत्प्रतिक्षेपाय आरभ्यत इति ॥ ३२१ ॥

(३२२) भीमाभ्यो यातनाभ्यः पितृपथगमनावर्तनादेश्च बिभ्यत्
तृष्णां कृष्णामृताब्धौ परिणयति परां यावता तावदुक्तम्।
इत्थं लब्धाधिकारः परमधिकुरुते साधने यत्र साङ्गे
पादद्वन्द्वे परस्मिन् तदिह बहुभिदावर्बरं निर्ब्रवीति ॥ २ ॥

अत्र तृतीयाध्याये चतुर्णामपि पादानामर्थभेदं द्विकद्वयस्याप्यर्थभेदात् मिथोभेदं पौर्वापर्य-नियमञ्च दर्शयति—भीमाभ्य इति। अत्र पूर्वपादद्वयेऽधिकारसम्पत्तिहेतुरधिकारश्च संसारविरक्ति-संवलितो भगवति तृष्णायोगः। उभावेतावुभाभ्यां पादाभ्यामभिधीयेते इति विशदं प्रकाश्यते। तत्र भीमाभ्य इत्यादिना वैराग्यपादार्थमाह; तृष्णामित्यादिनोभयलिङ्गपादार्थम्। अयमत्र शब्दान्वयः(र्थः)-

उपपत्तेः' इत्यनेन, ज्ञानानन्तरमपि प्रदातारं विना फलं न भवतीति कथनादपि निरस्तम्। तथा तत्त्वमसि-वाक्यानन्तरम्, 'आचार्यवान् पुरुषो वेद। तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये' इति वाक्येन ज्ञानानन्तरमपि केनापि पुरुषेण विमोक्ष्यमाणत्वं ज्ञाप्यते। अतोऽत्रापि विद्यायामाचार्योत्पादितं ज्ञानं मुररिपुभजनोपयोग्येव। यावत्पदेन च यावज्जीवानुवर्तनीयत्वम्, सहसा वाक्यार्थज्ञानान्मोक्षाभावश्च सिध्यति। एवमध्यायप्रधानार्थपरतया श्लोकोऽयं व्याख्यातः। पादद्वयविषयश्चोपरि वक्ष्यते। अस्तु वा दशपाद्यर्थानुवादेन तृतीयपादार्थकथनरूप एव। तदा स्वाप्नार्थस्रष्टृत्वादि—उभयलिंगत्वोभयोक्त्या पादद्वयस्य वैराग्याद्यर्थस्यापि तत्त्वज्ञानार्थत्वमिति वक्तव्यम् ॥ ३२१ ॥

२. नन्विदं भजनं चेत् अध्यायार्थः, प्रथमपाद एव तत् कस्मान्नोक्तमिति प्रश्ने, तस्य प्राप्येतर-वैतृष्ण्य-प्राप्यतृष्णोभयसाध्यत्वात् तदुभयार्थमाद्यद्वयं परिक्लृप्तमित्याह **भीमाभ्य** इति। **यातनाः** नरकवेदनाः। **पितृपथः** धूमादिमार्गः। तत्र गमनागमनसाध्यस्य फलस्य यातनातुल्यत्वज्ञप्तये यातनाभ्य इति पूर्वमुक्तिः। **आदिना** सोमराजभावपुनर्जननादिग्रहणम्। **बिभ्यत्**=भीतिमान् पुमान्। **कृष्णो** मुररिपुः अमृतसागर इव तत्र **पराम्** उत्कटां **तृष्णां** प्राप्यत्वपर्यन्तामाशां **यावता** यावदाकारसंपत्तौ **परिणयति** निरन्तरं लभते। मोक्षार्थभक्तियोगधर्मानुष्ठानं कृष्णतृष्णारूपपत्नीसहचरेणैव कार्यमिति तां कन्यां **परिणयति**=विवाहेन लभत इति भावः। **तावत्**, भवकृष्णयोर्दोषगुणमयत्वरूपं वैलक्षण्यं

1. **सद्विद्यामपीति**। अयमर्थः श्लोके **मोक्ष्यमाणस्ये**त्यादिपदमूचित इति सारार्थरत्नप्रभातोऽवगन्तव्यम्।

यावता कृष्णामृताब्धौ तृष्णां परिणयति, तावदुक्तमिति। उत्तरपादद्वयार्थमाह—इत्थमिति। अयमत्र शब्दान्वयः—उभाभ्यां पादाभ्यां लब्धाधिकारो यत्र साङ्गे साधने प्रवर्तते, तत् साङ्गं साधनं परस्मिन् पादद्वन्द्वे बहुभिदाबर्बरं निर्ब्रवीति—बहुभेदेन विषमितं विकल्पितं निर्ब्रवीति सूत्रकारः। अयमर्थः—ब्रह्मविद्याविशेषाः खलु, 'नाना शब्दादिभेदात्' इति सप्रमाणकं भिन्नतयोपदिष्टाः। 'विकल्पोऽविशिष्टफलत्वात्' इत्येकफलसाधनत्वेन त एव विकल्पिताः। एवमुभयाकारयुक्तसाधनजातमुपदिश्यत इति। अयमत्रानुक्रमः—वैराग्यपूर्वं हि प्राप्यतृष्णा जायते। प्राप्यविषयकप्रेप्सायां जातायामुपायाधिकारः। उपाये प्रवृत्तस्याधिकारिणः पुरस्तादुपाये निर्णीते, उपरिष्टात् करणस्थानीयसर्वब्रह्मविद्याङ्गकर्मोपादित्सा जायत इति विद्याङ्गपादस्य पश्चाद्भाव इति ॥ ३२२ ॥

(३२३) एकस्मिन्नेव पादे निपुणनयकृता न द्वयोस्तर्कणं स्यात्
भेदोऽभेदश्च नैको विषय इह भवेदन्यहानप्रसङ्गात्।
तस्मादस्मिन् प्रकीर्णा नयविततिरिति प्रेक्षितग्रन्थचोद्ये
वेद्यावच्छिन्नविद्यानियमकृदयमित्यैदमर्थ्य(त्यैकयमर्थे?) समर्थ्यम् । ३ ॥

ननु पादार्थाभिधाने भगवता भाष्यकारेण, 'इदानीं ब्रह्मोपासनानां गुणोपसंहारविकल्पनिर्णयाय विद्याभेदाभेदचिन्ता प्रस्तूयते' इत्युक्तम्; अत्र कोऽयं पादार्थः? किं भेदचिन्ता, उत अभेदचिन्ता, अथवा क्वचिद्भेदचिन्ता क्वचिदभेदचिन्ता, यद्वा भेदाभेदचिन्तेति। नाद्यः; सार्वत्रिकत्वाभावात्। अत एव न द्वितीयः। न च तृतीयः; अनुवृत्तार्थासिद्धेः। न चतुर्थः; भेदाभेदात्मकस्य चिन्तनीयस्य व्याहतत्वेन तद्विषयचिन्ताया अयोगात्। चिन्ताशब्देन संशयात्मकं विचारमभिधाय पक्षद्वयाभिधानेऽपि एतस्मिन् पादे गुणोपसंहारानुपसंहारचिन्ता हीयेत। सैव हि चिन्ता पादेऽस्मिन् प्रधानभूता; 'गुणोपसंहारपादः' इति समाख्यायोगात्। तदिदं सर्वमभिप्रेत्याह—

---

पादद्वयेनोक्तम्। इत्थम् एतन्मूल तत्लाभात् लब्धाधिकारः अधिकारिविशेषणं भासः यत्र परभजने तृतीयपादोच्यमाने, तुरीयपादवक्ष्यमाणकर्मादीतिकर्तव्यताविशिष्टे परम् अतिशयेन अधिकुरुते प्रवर्तते, तत् भजनं साङ्गं—भजनमङ्गञ्च परस्मिन् उत्तरस्मिन् पादद्वये बहुभिदाबर्बरं सद्विद्यादहरविद्यादि-संन्यासिगृहस्थधर्मादिभेददन्तुरं निर्ब्रवीति निश्शेषं वक्ति—सर्वसाधारण-तत्तदसाधारणोभयविधधर्मविवेचनपूर्वकमुपदिशति ॥ ३२२ ॥

३. तृतीयपादप्रमेयं निष्कृष्टं किंभूतमिति विचारयति एकस्मिन्निति। ननु, 'गुणोपसंहार-विकल्पनिर्णयाय विद्याभेदाभेदचिन्ता प्रस्तूयते' इति भाष्य एवोक्तत्वात् किमत्र विचार्यमिति चेत्-बहूनां सूत्राणामेकाधिकरणत्वेन एकपादत्वेन एकाध्यायत्वेन एककाण्डत्वेन एकपेटिकात्वेन एकशास्त्रत्वेन च व्यवहारस्तत्तदैक्यनिबन्धनः। अतेषामेकपादत्वमेकमनुगतमर्थमादाय वक्तव्यम्। तत्र भाष्योक्तः गुणोपसंहारः=गुणसमुच्चयः गुणविकल्पश्च पादार्थ इति वा, विद्याभेदः तदभेदश्च पादार्थ इति वा न वक्तुं शक्यते, अर्थैक्याभावात्। अर्थैक्याभावे च नयकर्तुर्नैपुण्यहानिः स्यात्। ननु भास्करमीमांसकादिभिर्भेदाभेदः एकत्वेन व्यवह्रियते। अतोऽर्थैक्यमेवेत्यत्राह भेदाभेदश्चेति। व्यक्त्यात्मना भेदः, जात्यात्मना चाभेद इति उभयोरेकनिष्ठत्वमभिसंधाय तैरेकत्वेन व्यवहारः क्रियते; स त्वंशो नास्माकमिष्टः। वस्तुत इह भेदः

एकस्मिन्निति । अयमत्र शब्दार्थः—एकस्मिन् पादे एक एवार्थः स्वीकार्यो निपुणनयकृता पुरुषेण । द्वयोस्तर्कणं = विचारो न स्यात्। भेदाभेद इत्येकोऽर्थो नास्त्येव, शब्दप्रयोगमात्रेण शशविषाणादिवद् अस्तित्वेऽपि तस्यैव चिन्तनमस्मिन् पादे स्यात्; न पुनरन्यस्य गुणोपसंहारानुपसंहारादेश्चिन्तनम्। तदिदमाह—अन्यहानप्रसङ्गादिति । उक्तमर्थं सङ्कलय्य निगमयति—तस्मादिति । एवं विकल्पदुष्टत्वादस्मिन् पादे प्रकीर्णा नयविततिः = न्यायविस्तरः प्रशिथिल इति प्रेक्षितग्रन्थचोद्ये = 'विद्याभेदाभेदचिन्ता क्रियत' इति दृष्टभाष्यग्रन्थस्य कस्यचित् पुरुषस्य चोद्ये सति, वेद्यावच्छिन्नविद्यानियमकृदयं पाद इत्यैदमर्थ्यं तात्पर्यं समर्थ्यम् । अयमर्थः—नात्र भेदो नाप्यभेदः प्रधानतया चिन्त्यते; भेदाभेदौ गुणोपसंहारानुपसंहारार्थावेव । तेन गुणोपसंहारपादप्रसिद्धिरपि युज्यते । तर्ह्युपसंहारोऽनुपसंहारो वा पादार्थ इति पुनश्चोद्यमुन्मज्जतीति चेत्–यथायोग्यमुपसंहारानुपसंहारान्यतरनिर्णय पादार्थ इत्यैकार्थ्यसिद्धिः । वेद्यावच्छिन्नविद्यानियमकृदयमिति । वेद्यं भिन्नं चेत्–विद्या च भिन्ना, अभिन्नं चेत्, सा चाभिन्ना । तेन वेद्यानुरूपं विद्यानियमनमिति पादार्थैक्यसिद्धिः । अत्र वेद्यभेदस्तु गुणभेदात्; न पुनः ब्रह्मभेदात् । तेन गुणोपसंहारपादप्रसिद्धिः सुतरां सङ्घटत इति ॥ ३२३ ॥

---

कासाञ्चित् विद्यानाम्, अभेदश्चान्यासामिति एकनिष्ठत्वाभावात् भेदाभेदैक्यं सर्वथैव दुर्वचम् । किञ्च भेदाभेद इति किं भेद उच्यते, अभेदो वा, उभयातिरिक्तो वा । सर्वथा स इह न विषयः; तथासति तस्य अभेदत्वे भेदस्य, भेदत्वे अभेदस्य, अन्यत्वे भेदाभेदद्वयस्य हानप्रसंगात् विचार्यैक्याभंगप्रसंगात् । ननु पादेऽत्र पेटिकाद्वयमस्तु; एकत्र भेदः अन्यत्राभेदश्च विषय इति चेत्—तावता पादैक्यं कथम् । न च स विभागोऽपि, नयविततेः अधिकरणगणस्य विकीर्णत्वात् । इदमपि घटयन् उपसंहरति तस्मादिति । परिहारमारभते इतीति । प्रेक्षितग्रन्थचोद्ये प्रेक्षितो भेदाभेदोभयपरभाष्यग्रन्थो येन पुंसा, तदीये चोद्ये=तेनैवं शंकायां क्रियमाणायाम् ऐदमर्थ्यं भाष्यकारोक्तार्थपरत्वं अयं पादः वेद्यावच्छिन्नविद्यानियमकृदित्युक्त्वा समर्थनीयम् । वेद्यानि रूपाणि तत्तद्गुणविशिष्टब्रह्मात्मकानि; तदवच्छिन्नाः विद्याः उपासनाः; तासां नियमं व्यवस्थां करोत्ययं पादः । पादकृत्यं विद्याव्यवस्थापनमित्युक्तौ ऐक्यं भवति हि । सद्विद्यादहरविद्याक्षरविद्यादयो मिथो भिन्नाः; अनेकत्र श्रुता अक्षरविद्या दहरविद्या अन्या वा न शाखाभेदेन नाना इति व्यवस्था अत्र क्रियते । नन्वेवं भेदोऽभेदश्च इत्येवोक्तं भवति । अस्तु । तथाऽपि व्यवस्थापदेनैकेन सर्वक्रोडीकारे विषयैक्यमेव । अत एव, सर्वेभ्यो ज्योतिष्टोमः इति एकसर्वपदेनानेकफलोद्देशे उद्देश्यानेकत्वम्, 'विविदिषन्ति यज्ञेन' इत्यत्र विधेयानेकत्वं वा वाक्यभेदापादकं न वाक्यविदिष्टम् । तद्वत् व्यवस्थापदेनोभयग्रहणेऽपि न दोषः । न च भेदाभेदौ इत्यनेन व्यवस्थेत्यत्र द्विवचनं भवति । अतस्तदेकत्वमेव । विद्यायां वेद्याकारावच्छिन्नत्वविशेषणात् विद्यातु वेद्यावच्छिन्नत्वांशे नियमः=इयमियं विद्या एतावद्गुणविशिष्टरूपवती इति वेद्याकारेयत्तावधारणं पादकृत्यमित्युक्तं भवति । क्वचित् भेदे स्थापिते कांश्चित् गुणान् विहाय गुणसंख्यानम्, अभेदे च समुच्चयेन संख्यानमिति सर्वथा तदियत्ताऽनुगतैव । एतदवधारणस्य भेदाभेदावधारणाधीनत्वात् भेदाभेदचिन्तेत्युक्तम् । अतस्तदर्थकत्वं नानुपपन्नम् । कृत् इत्यनेन भेदाभेदादेरनेकत्वेऽपि पादकार्या चिन्ता वा निर्णयो वा एकत्वेन भाव्यतामित्यपि सूच्यते ॥ ३२३ ॥

(३२४) आख्यावन्तं गुणानां निजगदुरुपसंहारतः पादमेतं
विद्यैक्यार्थे तदस्मिन् अपवदनतया भेदचिन्ता प्रसक्ता ।
इत्थं शुश्रूषुशङ्कामिह शिथिलयितुं भाषितं भाष्यकारैः
तद्भेदाभेदमीमांसनमिह; विषयस्त्वत्र(स्तत्र) चोक्तोऽनुवृत्तः ॥ ४ ॥

पूर्वस्मिन् श्लोके वेद्यावच्छिन्नविद्यानियमकत्वमिति पादस्यैकार्थ्यं समर्थितम्। अत्र कश्चिदाह—अस्त्वैकार्थ्यम्; अथापि विद्यैक्यप्रतिपादकेऽस्मिन् पादे अभेद एवैकः पादार्थः। न पुनर्विद्याभेदः। तर्हि, 'विद्याभेदाभेदचिन्ता' इति कथं भाष्यकारैरुच्यते इति चेत्—अपवादप्रदर्शनम्। विद्यैक्यमेव पादार्थः। ऐक्यासम्भवे क्वचिद्भेदोऽपि स्यादिति अपवाद एव प्रदर्श्यते, न पुनर्भेदः पादार्थभूत इति। इमामाशङ्कामनुवदति-आख्यावन्तमिति। अयमत्र शब्दार्थः—गुणानामुपसंहारतो गुणोपसंहारपाद इत्याख्यावन्तमेतं पादं निजगदुः। तत्=तस्मात् कारणात् आख्यासामर्थ्यात् विद्यैक्यप्रतिपादकेऽस्मिन् पादे भेदचिन्ता तु अपवादत्वेनैव प्रसक्ता; न पुनः पादार्थतया। इमामाशङ्कां परिहर्तुमेव भाष्यकारैरुक्तम्, 'विद्या भेदाभेदचिन्ता' इति। तदाह-इत्थमिति। कः पुनः सर्वानुवृत्तः पादार्थ इति चेत्—तत्राह विषय इति॥ ३२४॥

(३२५) निस्सीमानन्दनाडिन्धमनिरुपधिकानन्तमस्वद्गुणौघे
विद्याभेदैर्विभज्य प्रणिधिरिह यदि, प्राप्तिरप्यंशतः स्यात् ।
मैवम्; तैरेव धर्मैः तदितरमहितैः पूर्णकामस्य पूर्णं
प्राप्यं ब्रह्मैव नान्यत् किमपि फलमतः तत्क्रतुन्यायसिद्धिः ॥ ५ ॥

अत्र कश्चिच्चोदयति— गुणभेदात् विद्याभेद इति भवद्भिरुक्तम्; तर्हि फलभेदोऽपि स्यात्। 'यथाक्रतुरस्मिन् लोके पुरुषो भवति, तथेतः प्रेत्य भवति' इति हि श्रूयते, 'तं यथायथोपासते, तथैव(तथैव)

---

४. तर्हि गुणनियम इत्यनुक्त्वा विकल्पोपसंहारभेदाभेदपदप्रयोगो भाष्ये कुत इत्याशङ्कायाम्, गुणोपसंहारपाद इति प्रसिद्धिमत्त्वादस्य पादस्य, उपसंहारः पादार्थः, तत्प्रयोजकश्चाभेदः पादार्थः, इत्युक्त्वा भेदविचारस्तदपवादतया वा प्रसंगाद्वेति केचिन्मन्येरन्; तन्निवारणार्थमित्याह आख्येति। गुणानामुपसंहारतः=गुणोपसंहाररूपार्थे पादमेतं नामवन्तमाहुः; गुणोपसंहारेत्यन्वर्थनामकमाहुरित्यर्थः। शुश्रूषोः शिष्यस्येत्थं शंकां निवर्तयितुम्, भेदोऽपि प्रधानार्थ एवेति गमयितुं भेदाभेदमीमांसनं भाषितमित्यन्वयः। तर्हि ऐक्यभंग इति चेत्-तत्र विषय इत्यादि पृथग्वाक्यम्। अनुवृत्तोऽर्थो दर्शितः पूर्वश्लोके एवेत्यर्थः प्रथमाधिकरणे उपसंहारोक्त्या तु गुणोपसंहार इति नाम॥ ३२४॥

५. ननु विद्याभेदे गुणानुपसंहारः, विद्यैक्ये तदुपसंहार इति भवदुक्तं न युक्तम्। उपसंहारानुपसंहारयोः प्रेप्सितफलवैषम्यमेव हि प्रयोजकम्। तथाहि तत्क्रतुन्यायः, यथाक्रतुः यत्प्रकारावच्छिन्नोपासनवान् तत्प्रकारभाक् भवतीति। अतो यावत्प्रकारप्राप्तीच्छा, तावद्विषयकोपासनवान् भवतीति फलेच्छावैषम्यमेव गुणविकल्पसमुच्चयप्रयोजकम्। न च तत्क्रतुन्यायात् उपासितगुणावश्यप्राप्तिरेवोच्यते, न त्वनुपासितगुणानवाप्तिरिति शंक्यम्— उपासितानां जगत्कारणत्वसर्वशक्तित्वमोक्षप्रदत्वसर्वस्वामित्वसर्वाधारत्वानवधिकातिशयगुणादीनां जीवे प्राप्त्यसंभवेनायोगव्यवच्छेदायोगात्। अत एवकारः अन्ययोगव्यवच्छेदक एव।

भवति' इति च। तेन यद्गुणविशिष्टं भगवन्तमुपास्ते, तद्गुणविशिष्टमेव प्राप्नोतीति श्रुत्यर्थः। विशेषविधौ शेषनिषेधस्य न्याय्यत्वात् उपास्यगुणव्यतिरिक्तगुणविशिष्टभगवत्प्राप्तिरर्थात् निषिध्यत इति परिपूर्णब्रह्मानुभवो मोक्ष इति वादमात्रमेव स्यात्। तदिदमनुवदति–निस्सीमेति। निस्सीमानन्दपर्वोत्कर्षहेतुभूतनिरुपधिकानन्तसम्पद्गुणौघे परमात्मनि वेद्याकारभेदप्रयुक्तभेदवत् विद्याभेदे विभज्य प्रणिधिर्यदि स्यात्, तर्हि प्राप्तिरपि ब्रह्मणि अंशतः एकदेशेन स्यात्। यावान् उपासनविषय आकारः, तावानेव प्राप्याकारः स्यात्। तथाच न परिपूर्णब्रह्मानुभवः फलमित्यापतेत्। एतच्चोद्यमपाकरोति–मैवमिति। अपा(निरा)करणमेव विवृणोति–तैरेवेति। अयमर्थः–'यथाक्रतुरस्मिन्लोके पुरुषो भवति' इत्यत्रोपास्याकारस्यान्यूनभावेन प्राप्तिरुच्यते। 'तथैव भवति' इति कृत्स्नस्याप्युपास्याकारस्य

---

नन्वेवं परिपूर्णब्रह्मानुभवं प्रति किमुपासनं कारणम्। न च पूर्णोपासनं केनचित् कर्तुं शक्यम्–परमात्मसंपदां गुणानाञ्चानन्ततया तदयोगादिति चेत्–अत एव न पूर्णानुभवो मोक्षः। किंतूपासितमात्रप्राप्तिरेव। अपुनरावृत्ति-अकर्मबन्धादिकं परमस्तु सर्वसाधारणमित्यत्रोक्तोपसंहारानुपसंहारविचारार्थतया तत्क्रतुन्यायार्थमाह निस्सीमेति। प्रथमपादो जीवात्मनि भगवत्साम्यासंभवपूर्वपक्षदर्शकः। संपदां गुणानां च ओघे इति विग्रहः। तत्र विभज्य=कतिपयसंपद्गुणांशे प्रणिधिः उपासनम्। यदीति। उपासनमेवोपेक्ष्यम्। अन्यदा पूर्णोपासनस्य दुष्करत्वादेवमेवोपास्यमिति फलमपि तावन्मात्रविषयकमिति भावः। निरस्यति मैवमिति। अयं भावः–यथोक्तं भगवतोऽनवधिकानन्दवत्त्वमानन्दवल्ल्यामुपपादितम्। तत्र तन्मादिन्धमाः तद्धेतुभूताः निरुपधिका अनन्ताः संपदः विभूतयः गुणाश्चेति युवा स्यादित्यादिना गुणसंपत्प्रस्तावादेव सुगमम्। तस्य भगवतो महाविभूतेरानन्दो ह्यपरिच्छिन्न एव। तावान् आनन्दश्च तत्रैव मुक्तेऽप्युक्तः। स च संपूर्णानुभवनिबन्धनः। तदुक्तमन्यत्र, 'सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः' इति। इदञ्च स्वरूपाविर्भावात्। आत्मनां स्वरूपसाम्यञ्च प्रजापतिवाक्ये श्रुतम्, भगवता गीतञ्च। स्वरूपाविर्भावं प्रति कर्मबन्धः प्रतिबन्धकः। तदुच्छेदे चोपासनमार्गा एव हेतवः। उपासनस्य परिमितगुणविषयकत्वेऽपि बन्धोच्छेदकत्वं समम्। ततः सर्वप्रकारानुभवे स्वतः प्राप्ते तत्क्रतुन्यायः कथमन्यव्यवच्छेदं कुर्यात्। अत एव एवकारोऽयोगव्यवच्छेदकः। न च जीवेषु कारणत्वादियोगाभावात् तद्भंगः। जगद्व्यापारवर्जमित्युक्ततया व्यवस्थितगुणव्यतिरिक्तविषय एव प्राप्त्यप्राप्तिविचारात्। प्राप्यत्वेनानुसंहितेषु गुणेषु उपासितगुणानाम् अप्राप्तिर्नास्तीत्येव तदर्थः। अत एव, 'कविं पुराणमनुशासितारम्' इत्यत्र तात्पर्यचन्द्रिकायाम् कवित्वादीनां गुणानामुपास्यत्वेऽपि प्राप्यत्वेनानुसंधानाभावान्न प्राप्तिरित्युक्तम्। एवञ्च पूर्णानुभव एव मुक्तिः। स च नियतगुणोपासनादेवेति न तत्क्रतुन्यायमादाय यथेच्छगुणोपसंहारानुपसंहारसंभव इति। अर्थस्तु—पूर्णकामस्य परिपूर्णब्रह्मानुभवरूपमुक्तिकामनावतः पुंसः तैः तत्तद्विद्यानियतैरुपासितैः तदितरसहितैः अनुपासिताशेषगुणयुक्तैः पूर्णं ब्रह्मैव प्राप्यम्। तैरेवेत्येवकारेण न गुणान्तरप्राप्तिव्यवच्छेदः; तदितरसहितैरित्युक्तेः। अतस्तदितरसहितैस्तैरेव, न स्वसहितैरित्यर्थः। अन्येषामुपासनविषयत्वव्यवच्छेदो वा एवकारार्थः॥ अयोगव्यवच्छेदेष्टौ, 'ब्रह्मैव फलं नान्यत्' इति अन्ययोगव्यवच्छेदः किमर्थमुच्यत इति

प्राप्त्यभिधानात् । न्यूनत्वे पुनरुपास्याकारस्य कृत्स्नत्वमेव भज्येत । अधिकाकारमस्यन्मस्त्वत्र न विधीयते, नापि निषिध्यते ॥ विशेषविधौ शेषनिषेधन्यायात् निषिध्यत इति चेत्— अयमपि भ्रान्तिमूल एवोपन्यासः । विधायकप्रमाणान्तराभावे हि आर्थो निषेधः परिगृह्येत । अत्र तु विधायकमस्ति, 'निरञ्जनः परमं साम्यमुपैति' इति श्रुत्यैव परमसाम्याभिधानात् । इदञ्च परमसाम्यं भोगमात्र(त्रं) एवेति सूत्रकारैरेव स्थापयिष्यते, 'भोगमात्रसाम्यलिङ्गाच्च' इति । तेन, 'न हि वचनविरोधे न्यायः प्रभवति' इति न्यायेनाधिकनिषेधो(धे) दुर्न्यायबेद्दिनामेव निर्णयः ॥ नहीश्वर-साम्याङ्गीकारे जीवस्यापीश्वरत्वं प्रसज्यत इति चेन्न ; सूत्रकारैरेव मात्रशब्दं प्रयुञ्जानैर्निरस्तत्वात् । शब्दार्थस्तु—तैरेव धर्मैरुपास्यैरेव भगवद्गुणैस्तदितरसहितैरनुपास्यैर्गुणैरपि सहितैः पूर्णं ब्रह्मैव पूर्णकामस्य मुक्तस्य प्राप्यमिति नान्यदत्र फलमस्ति । स्वर्गादिसाधनेषु तु साम्यमन्यत् फलमन्यदिति

---

चेत्— परिमितोपासनात् परिमित फलमिति त्वदुक्तं नेति पूर्वपक्षखण्डनाय *पूर्णकामक.र्यैकाम्यपरमात्मोपासने हि अन्यत् फलं स्यादिति ज्ञापनार्थश्च तदुक्तिः । तथैव भवतीति तत्क्रतुन्यायघटक एवकारस्तु उपासितगुणायोगव्यवच्छेदपर एव । तद्गुणायोगव्यवच्छेदोक्तौ च तद्भिन्नक्षुद्रफलाभावोऽर्थसिद्ध इति ।

इदमत्राऽऽकूतम्—उपासनानां मोक्षफलजनकत्वमिव फलान्तरहेतुत्वमप्यस्ति ; 'चतुर्विधा भजन्ते माम्' इत्युक्तेः । तत्र ब्रह्म यद्यद्गुणवत्त्वेनोपास्ते, तत्तद्गुणवान् स्वयं भवतीत्यर्थे जीवब्रह्मणोर्भेदात् तत्सजातीयगुणवत्त्वं जीवस्येत्येव वक्तव्यम् । तत्र भगवदसाधारणपूर्वोक्तगुणोपासनात् तथाभूतगुणवत्त्वं जीवस्य दुर्वचम् । एवं कविपुराणमिति श्लोके ऐश्वर्यार्थोपासनविधायके उक्ताः ईश्वरगुणाः ऐश्वर्यरूपफलकाले जीवस्य न संभवन्ति । अतः प्राप्यतयासिद्ध-यदाकारवत्तया ब्रह्मोपास्ते तदाकारवान् भवतीत्येव वक्तव्यम् । ऐश्वर्यार्थोपासने भगवान् स्वस्मै देययादृशस्वसाम्यैश्वर्यविशिष्टतयोपासितः, अन्ते स्वगत-उपासितैश्वर्यसमानतादृशैश्वर्यप्रदो भवतीति स्थिते मुक्त्यर्थोपासनेऽपि स्वप्राप्ययादृशाकारवत्तया ब्रह्मोपास्ते, तादृशाकारवान् भवतीत्यर्थः स्यात् । तत्र एवकारः तदयोगव्यवच्छेदपर एव । स्वाप्राप्यभगवदसाधा-रणाकाराणामुपासनेऽपि न तत्प्राप्तिनिर्बन्धः । शतपथब्राह्मणे तु, "तं यथायथोपासते तदेव भवति' इति तत्क्रतुवाक्यम् । तत्र उपासते इति बहुवचनम् ; भवतीति चैकवचनम् । जीवाः यादृशाकारवत्तया ब्रह्मोपासते, तत् ब्रह्म तथाभूतमेव तेभ्य आविर्भवतीति तदर्थः । तत्प्रकरणे च परिशील्यमाने परमात्मा भक्त्योपासनानुरूपं मृगपक्षिमनुष्यादिरूपवानप्याविर्भवतीति ज्ञायते । एवञ्च तदनुसारेण प्रकृतच्छान्दोग्य तत्क्रतुवाक्यार्थवर्णने यद्यद्धर्मविशिष्टवस्तूपासनवान् भवति, तत्तद्विशिष्टवस्तुप्राप्तिमान् तादृशवस्त्वनुभववान् भवतीत्येव वक्तव्यम्— तत्र तेषां धर्माणां जीवनिष्ठत्वं न सिध्यति । किंतु ब्रह्मगततया तेषां जीवैरनुभा-व्यत्वमेव । तत्र मोक्षस्य पूर्णब्रह्मानुभवरूपत्वात् अन्ययोगव्यवच्छेदायोगात् अयोगव्यवच्छेद एवकारार्थः । तथाचानेन श्लोकेनोच्यमानं तावत्, ऐश्वर्यादिकामनया भगवदुपासकः उपासितगुणान् तदाश्रयं ब्रह्म च विहायान्यत् फलं लभेतापि । पूर्णब्रह्मकामस्य तु मुमुक्षोः उपासितानुपासितसर्वगुणविशिष्टब्रह्मातिरिक्तं फलं प्राप्यं न भवतीति तत्त्वस्थित्यनुसारेण तत्क्रतुन्यायस्वरूपं वक्तव्यमिति न स्वेच्छया किञ्चिदुपसंहार-तदभावौ भाव्यौ । अतस्तत्क्रतुन्यायसिद्धिः । अनुपासितगुणव्यवच्छेदपरत्वोक्तौ पूर्णमोक्षपरसर्वशास्त्र-

प्रसिद्धमेतत् । तेनात्र तत्क्रतुन्यायेनोपास्यानुपास्यसकलगुणविशिष्टं तदेव ब्रह्म प्राप्यमिति तत्क्रतुन्यायः सिध्यति । तेन न क्वचिदपि विद्यासु फलवैषम्यप्रसङ्गः ॥ ३२५ ॥

(३२६) भेदः शब्दान्तराद्यैर्विधिषु नियमितः कर्मकाण्डे द्वितीये ;
संयोगाद्यैक्यतोऽन्यः समुदयनियतात् ; सैव विद्यासु नीतिः ।
आदौ तेनैव शाखान्तरनयमुदितं चोदनादेरभेदात्
श्रुत्यैवाऽऽक्षिप्य भूयः प्रतिसमधित तं भेदकान्यार्थतोक्त्या ॥ ६ ॥

अत्र पादसङ्गतिर्भाष्ये, "उक्तं ब्रह्मोपासिसिषोपजननाय वक्तव्यं ब्रह्मणः फलदायित्वपर्यन्तम् ; इदानीं ब्रह्मोपासनानां गुणोपसंहारविकल्पनिर्णयाय विद्याभेदाभेदचिन्ता प्रस्तूयते" इति । अधिकरणावतारमप्याह 'प्रथमं तावत्' इत्यादिना । 'फलमत उपपत्तेः' इत्यत्र उपास्यस्य ब्रह्मणः सर्वफलप्रदाने प्राधान्यमुक्तम् ; अधुना पुनर्मूर्धादिपादपर्यन्तपरिक्लृप्त्या सविग्रहब्रह्मोपासनरूपाया वैश्वानरविद्यायाः परविद्यान्तरात् प्राधान्येन, सैव प्रथमं विचार्यते। अत एव भगवता पराशरेण ब्रह्मविद्याप्रसङ्गे सविग्रहमेव ब्रह्म प्रथमं चिन्तनीयं शुभाश्रयत्वात्, ब्रह्मस्वरूपं तु न योगयुजा चिन्त्यम्, आरूढयोगेनैव चिन्त्यमित्युक्तम्। अस्याश्च विद्यायां पूर्वकाण्ड(ण्डोक्त)शाखान्तराधिकरणोक्तसकलन्यायसमुच्चयस्य विद्यमानत्वात् एतद्विचारपूर्वकमेव विद्यान्तरविचारौचित्यात् एषैव विद्या पूर्वं विचार्यत इत्यभिप्रायः। एतदेव, 'प्रथमं तावत्' इति द्वाभ्यामपि पदाभ्यां द्योत्यते। तदर्थविचारस्तु—नानाशाखास्वधीताया वैश्वानरादिकाया विद्यायाः किं प्रतिशाखं भेदः, उतैक्यमिति । किं शाखान्तरे प्रत्यभिज्ञाऽस्ति, नेति। किं, 'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवत् यैस्तु चीर्णम्' इति शिरोव्रतवतामाथर्वणिकानां विद्योपदेशनियमो भेदोत्पादकतया प्रत्यभिज्ञाविरोधी, नेति । किं शिरोव्रतं विद्याङ्गम्, उताध्ययनाङ्गमिति । अत्र कर्मकाण्डशाखान्तराधिकरणोक्ताभेदकन्यायैरभेदमुक्त्वा

---

विरोधात् तत्क्रतुन्यायो न सिध्येत् । सर्वत्रोपास्यस्य वस्तुनः प्राप्तिकाले अनुपासितानेकांशवत्त्वाऽनुभव एव शब्दश्रुतदेवदत्तादिप्रत्यक्ष इव प्रसिद्धः । शाण्डिल्यविद्यायामिह, 'इति यस्य स्यादद्धा न विचिकित्साऽस्ति' इति अपेक्षितफलायोगव्यवच्छेद एवोच्यते । तेन मुमुक्षुविषये तद्विरुद्धफलाभावरूपान्ययोगव्यवच्छेदोऽपि कामं स्यात् । तत्क्रतुवाक्यमिदमपूर्वविधायकं वा, अनुवादरूपं वेत्यादिविवेकार्थे छान्दोग्यपरिष्कारपरिशिष्टादि द्रष्टव्यम् ॥ ३२५ ॥

६. अथाधिकरणसारमारभते । तत्र प्रथमाधिकरणे अक्षरविद्यादीनां शाखाभेदेन भेदमाशंक्य परिहारः कृतः । तत्र भेदकप्रमाणानां पूर्वमीमांसोक्तानामेव ग्राह्यत्वात् तत्रैव शाखाभेदे तदधीनभेदो नास्तीत्युक्तत्वात् कथं शंकोत्थितिरित्यत्र, उपनिषदि किञ्चिद्वचनं श्रूयमाणं शंकोत्थापकमस्तीति प्रज्ञाप्य तत्परिहारक्रमोऽपि सूत्र एवादर्शि । तत् सर्वं संगृह्णाति भेद इति । शब्दान्तर-अभ्यास-संख्या-संज्ञा-गुण प्रकरणान्तराणि षट् कर्मभेदकप्रमाणानि तत्र द्वितीये उक्तानि । तत्र सर्वत्र तदन्यतमाधीन एव भेदः= **नियमितः** व्यवस्थापितः; नान्यथा । **अन्यः** अभेदस्तु तदपवादतया तत्रैव द्वितीयान्ते शाखान्तराधिकरणे संयोगाद्यैक्यतो नियमितः । संयोगाद्यैक्यं नाम संयोगरूपचोदनासमाख्यानामेकरूपत्वम् । **संयोगः** फलसंयोगः । विहितस्य संबन्धि फलमिति यावत् **रूपं** तत्र, यागस्य द्वे रूपे द्रव्यं देवता चेत्युक्तद्रव्यदेवताद्वयम् । **चोदना** विधानप्रकारः । **आख्या** नामधेयम् । एषाम् **विशेषः** वैलक्षण्याभावः । तदेवात्र

पुनर्भेदकन्यायैराक्षिप्य भेदकानां तेषामन्यार्थत्व(मान्यपर्यं)प्रदर्शनेनाभेदमेव पुनः प्रतिष्ठापयामास सूत्रकार इत्याह–भेद इत्यादिना । अयमर्थः–कर्मकाण्डे हि संयोगरूपचोदनाख्याऽविशेषात् कर्मणामैक्यमुक्तम् । संयोगो नाम फलसंयोगः । रूपञ्च द्रव्यदेवते । द्रव्यदेवते हि कर्मणो रूपमिति तान्त्रिकाः । चोदना लिङ्लोट्तव्यप्रत्ययादिशिरस्कः क्रियावाचिशब्दः । आख्या ज्योतिष्टोमादिनामधेयम् । तेषामविशेषात् कर्मैक्यमिति, 'संयोगरूपचोदनाख्याऽविशेषात्' इति सूत्रार्थः । भेदकप्रमाणानि तु शब्दान्तरादीनि । अपर्यायशब्दः शब्दान्तरं यजति जुहोति ददातीत्यादि । अभ्यासस्तु, 'समिधो यजति', 'तनूनपातं यजति' इत्यादिरूपः पुनःपुनः पाठः । सङ्ख्या –'तिस्र आहुतीर्जुहोति' इत्यादिषु दृष्टा त्रित्वादिः । गुणस्तु, 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' इत्यादिषु श्रुतः वाजिनादिः । 'उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोति' इत्यादिषु प्रकरणान्तरमुपलभ्यते । नामधेयमपि भेदकं दृश्यते, 'अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिः' इत्यादौ । तेन पूर्वकाण्डोक्तन्यायकलापैर्भेदकैरभेदकैश्चेदमधिकरणं व्याख्यातम् । तत्र शब्दान्वयस्तु—कर्मकाण्डे द्वितीयाध्याये शब्दान्तरायैर्भेदो विधिषु नियमितः–प्रतिपादितः। समुदयनियनात् = समुचितात् संयोगाद्यैक्यतः(क्यात्) संयोगरूपचोदनाख्याऽविशेषात् अन्यः कर्मणामभेदोऽपि स्थापितः । कर्मब्रह्मकाण्डयोरैकशास्त्र्यात् न्यायप्रवृत्तेरपि तुल्यत्वात् विद्यायामपि कर्मनीतिरेव नीतिः। इत्थं सामान्येनार्थतत्त्वमभिधाय एतस्याधिकरणस्य सिद्धान्तारम्भपूर्वकत्वात् प्रथमं सिद्धान्तमभिधाय पूर्वपक्षाभिप्रायेणाऽऽक्षिप्य पुनस्तमेव सिद्धान्तं स्थापयामास सूत्रकार इति दर्शयति–आदाविति। शब्दान्वयस्तु–तेनैव = कर्मकाण्डेनैव चोदनादेरभेदादादावुदितम्–उक्तं शाखान्तरनयं श्रुत्यैवाक्षिप्य = श्रुत्यन्तर्गतात् भेदकप्रमाणादाक्षिप्य तं पूर्वोक्तमेवार्थं प्रतिसमधित = स्थापयामास । तत्र हेतुमाह भेदकान्यार्थतोक्त्येति । भेदकस्य प्रमाणस्य अर्थान्तरे तात्पर्यादित्यर्थः ॥३२६॥

(३२७) शाखासु प्रक्रियाऽन्या श्रवणमपि पुनर्दृष्टमत्राविशेषं
विद्याभेदस्ततः स्यादिति न, तदुभयं युक्तमभ्येत्यभेदात् ।
तेषामेवेति वाक्यात् क्वचिदुपजनिता भेदशङ्का त्वयुक्ता
स्वाध्याये ब्रह्मविद्यापदमिह हि भवेत् तद्गतेनान्वयोक्तेः ॥ ७ ॥

---

ऐक्यमित्युच्यते । संयोगादिश्च न शब्दान्तरादिवत् प्रत्येकं कार्यकरः, किन्तु मिलित एव । तदुच्यते समुदयनियतादिति । समुच्चयबलेन सहैव स्थितादित्यर्थः । इदं सर्वं पूर्वकाण्डवृत्तम् । सैव विद्यासु नीतिरिति । कर्मविषये उक्तैव विद्याभेदाभेदोभयविषयेऽपीत्यर्थः । अत्रापि शब्दान्तरादिषट्कमेव प्रत्येकं विद्याभेदे प्रमाणम्। तदपवादेनैक्यम्=अभेदोऽपि विद्याविषये स्थितानां संयोगादीनां चतुर्णामविशेषादेव । एवमप्यधिकाशंकयाऽत्र विचार इति ज्ञापनार्थम् आदौ प्रथमसूत्रे तेनैव कर्मकाण्डकृतनियमनबलेनैव चोदनादेः चोदनारूपसंयोगाख्याचतुष्टयस्य अभेदात् अविशेषात् उदितं सूत्रकृदुक्तं शाखान्तरनयम् विद्यायाः सर्ववेदान्तप्रत्ययत्वम् , एकस्या एव सर्ववेदान्तप्रत्यायितत्वं श्रुत्यैव=बाधकयुक्त्यभावात् 'तेषामेवैतां ब्रह्मविद्यां वदेत' इति वाक्यमात्रेणाऽऽक्षिप्य=विद्याभेद एव स्वीकार्य इत्याशंक्य भेदकान्यार्थतोक्त्या तृतीयसूत्रेण भेदकत्वाभिमतस्य श्रुतिवाक्यस्यान्यार्थकत्वप्रदर्शनेन तमेव शाखान्तरनयम् अभेदतया भूयः पुनः प्रतिसमधित । धाधानोर्लुङ्। प्रतिसंहितमकरोत् ॥ ३२६ ॥

अत्रोक्तार्थापवादरूपं विद्याभेदहेतुमनूद्य तत्परिहारमपि भाष्योक्तमेव विशदं प्रकाशयति—शाखास्विति । अयमर्थः—अविशेषपुनश्श्रवणात् प्रकरणान्तराच्च विद्याभेद एवात्र समुच्चितः । 'समिधो यजति', 'तनूनपातं यजति' इत्यादौ यजति यजतीत्यविशेषपुनश्श्रवणात्, 'उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोति' इत्यत्र प्रकरणान्तराच्च कर्मभेदो दृष्टः । एवमत्रापि ताभ्यामेव हेतुभ्यां विद्याभेदोऽङ्गीकार्य एव। अयमत्रान्वयः—ब्रह्मविद्यावादिनीषु शाखासु तत्रतत्र प्रक्रिया अन्या दृष्टा। अत्र च अविशेषमपि पुनश्श्रवणं दृष्टं ततो विद्याभेदः स्यादिति । तदेतत् प्रतिक्षिपति—नेति । अविशेषपुनश्श्रवणं प्रकरणान्तरञ्च अध्येतृभेदात् युक्तमेव। अयमर्थः—इत्थं किल मीमांसकानां

---

७ द्वितीयतृतीयसूत्रार्थमाह **शाखास्विति** । शाखाभेदेऽपि उपासनविधेः, अक्षरत्वादिविशिष्टब्रह्माख्यस्य रूपस्य, मोक्षरूपफलस्य, अक्षरविद्येति नाम्नश्चाविशेषेऽपि भेदकतया प्रदर्शितश्रुतिवाक्यानुसारेण भेदे वक्तव्ये, विद्याभेदसाधकं शब्दान्तराद्यन्तर्गतं किं प्रमाणमिति विमर्शे, तत् संभवत् दर्शयितुं द्वितीयसूत्रं प्रवृत्तम्। तदर्थमाह **प्रक्रियेति**। **प्रक्रिया** प्रकरणम् । **अन्या प्रक्रिया** प्रकरणान्तरम् । एकशाखाविहितायाः अक्षरादिविद्यायाः यत्नोपस्थापकविशेषाभावस्तदिति यावत् । **शाखासु** शाखाभेदे प्रकरणान्तरं दृष्टमित्यर्थः । द्वितीयमाह **श्रवणमिति** । अविशेषपुनश्श्रवणमप्यत्र दृष्टमित्यन्वयः । दृष्टा च दृष्टञ्च दृष्टमित्येकवद्भावः। **अविशेषं** विधेयान्तरश्रवणरहितम्। स एवाभ्यास इत्युच्यते। 'अग्निहोत्रं जुहोति, दध्नाजुहोति' इत्यत्र नाभ्यासः । दध्नेति विधेयान्तरसत्त्वात् । तथाच षट्सु द्वयमिदमत्र संभावितम्। एतदन्यतरदत्र तत्तदक्षरविद्यादिभेदसाधकं भविष्यतीति । पूर्वमीमांसायां नित्याग्निहोत्रात् कुण्डपायिनामयनान्तर्गतं मासाग्निहोत्रं प्रकरणान्तरप्रमाणबलात् भिन्नमित्युक्तम् । 'समिधो यजति, तनूनपातं यजति' इत्यादौ यजति यजति इति पञ्चकृत्वोऽभ्यासात् समित्तनूनपादादिपदानां किञ्चिद्विधायकत्वाभावात् विधेयभेदाभावे वाक्यवैयर्थ्यात् पञ्च प्रयाजा विधीयन्त इत्युक्तम् । तद्वदिह शाखाभेदात् प्रकरणान्तरं वा भवतु, अक्षरं वेदेति पुनर्विध्यभ्यासो वाऽस्तु ; विद्या भिद्यतामिति पूर्वपक्षः। निरस्यति **इति नेति** । हेतुमाह **तदिति** । तदुभयं अभ्यासप्रकरणान्तररूपप्रमाणद्वयम् **अध्येतृभेदात्** तत्तच्छाखाध्येतृपुरुषभेदादन्यथासिद्धमिति विद्याभेदनं विनैव युक्तं भवतीत्यर्थः । अविशेषपुनश्श्रवणरूपस्याभ्यासस्य अनन्यथासिद्धस्यैव भेदकत्वम् । शाखान्तरे पुनश्श्रवणं तु तदध्येतृपुरुषं प्रति विधानार्थमित्यन्यथासिद्धत्वान्न भेदकमिति । तथैवेहापि । न चेह यथा मासाग्निहोत्रं कुण्डपायिनामयनरूपसत्रप्रकरणे श्रूयते, तथा अक्षरविद्यादिकमन्यप्रकरणे श्रूयते ; किंतु स्वप्रकरण एव । एकरूपगुणविशिष्टाक्षरपरवाक्ये च तद्विधानुपस्थितिर्दुर्वचा । न चैकैकशाखायामपि प्रमेयनिरूपणमादितः आन्तमेकशाखादृष्टक्रमेणैव भवतीति नियमोऽस्ति । अतोऽप्रयोजक ईदृशप्रकरणभेद इति । **भाष्ये प्रतिपत्तृभेदा**दित्यस्य तत्तदुपाख्यानश्रुत(विद्याग्राहि)पुरुषभेदादिति नार्थ इति ज्ञापनाय **अध्येतृभेदा**दिति व्याख्यानम् । ननु किमनेन पूर्वमीमांसोक्तभेदकप्रमाणेष्वन्यतमनिर्धारणप्रयासेन । तेषामेवैतामिति श्रुतिवाक्यमेव विद्याभेदगमकं भविष्यतीत्यत्र तदन्यथयति **तेषामिति** । **मुण्डकाक्षर**विद्यायाम्, "तेषामेवैतां ब्रह्मविद्यां वदेत, शिरोव्रतं विधिवत् यैस्तु चीर्णम्" इति वाक्ये शिरोव्रत-

मर्यादा-अविशेषपुनश्श्रवणं प्रकरणान्तरञ्च विधेयभेदावहमेव; यद्यन्येन भेदो न स्यात्। प्रतिपन्ने भेदे सति अविशेषपुनश्श्रवणं प्रकरणान्तरञ्च न भेदकमेव। तेनात्र प्रतिपन्नभेदस्य विद्यमानत्वात् न विद्याभेदप्रसङ्गः। ननु, 'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवत् यैस्तु चीर्णम्' इति शिरोव्रतवतामेव ब्रह्मविद्योपदेशनियमात् विद्याभेदोऽस्त्विति मयोक्तम्; तत्र कोऽयं परिहार इति पूर्वपक्षिणोऽभिप्रायमाशङ्क्य, तत्रापि परिहारमाह—अयुक्तेति। कथमयुक्तत्वमित्यत्राह—स्वाध्याय इति। अत्र ब्रह्मविद्यापदं स्वाध्यायवाचकमेव न पुनर्विद्यावाचकम्, 'नैतदचीर्णव्रतोऽधीयीत' इति वेदव्रतेन वेदाध्ययनस्यान्वयोक्तेरित्यर्थः॥ ३२७॥

(३२८) रूपैक्याद्वैक्यसिद्धौ किमितरदुपसंहार्यम्; अन्यो गुणश्चेत्,
भेदो न स्यात्; विकल्प्यं तदिह किम्; अफला तेन चिन्तेति चेन्न।
वेद्याकारैक्यमैक्यं दिशति तदधिकं किञ्चिदाकृष्यतेऽङ्गम्;
कर्मण्यप्येवमेव ह्युपहृतिविषयो भेदकांशातिरिक्तः॥ ८॥

इति सर्ववेदान्तप्रत्ययाधिकरणम्॥ ८३॥

अत्र कश्चिच्चोदयति रूपैक्यादिति। रूपैक्यात् विद्यैक्ये सिद्धे सति किमितर(किमन्य)दुपसंहार्यम्? तदेव रूपैक्यमिति चेन्न; इतरेतराश्रयादिप्रसङ्गात् रूपैक्यात् विद्यैक्यम्, विद्यैक्यात् रूपैक्यमिति। अथवा चक्रकमेव रूपैक्यात् विद्यैक्यम्, विद्यैक्यात् वेद्याकाररूपगुणोपसंहारः, गुणोपसंहारात्

---

व्रतामेवैतद्ब्रह्मविद्योपदेशः कर्तव्य उच्यते। शिरोव्रतं नाम शिरसा अङ्गारपूर्णपात्रधारणमाथर्वणिकैककार्यम्। तेन, यदि बृहदारण्यकोक्ताक्षरविद्या च इयञ्चैका स्यात्, कथमाथर्वणिकमात्राधिकारिका स्यात्। बृहदारण्यके पाठस्य शुक्लयजुरध्येतृत्वात्। तदपेक्षया अस्या भिन्नत्वे तु आथर्वणिकमात्रार्थत्वमस्याः घटत इति। एवं क्वचित् अक्षरविद्यायामुपजनिता भेदशङ्का तु अयुक्ता, तस्या अक्षरविद्याभेदसाधकत्वस्यैवाभावे कथं तन्न्यायेन वैश्वानरादिसर्वविद्याभेदसाधकत्वम्। तदेवोपपादयति स्वाध्याये इति। तत्र वाक्ये ब्रह्मविद्यापदं वेदरूपवाक्यजातमित्यर्थकम् नोपासनार्थकम्। तथा चेतां विद्याम्=एतन्मुण्डकवेदं वक्ष्यमाणमाथर्वणिकानेवाध्यापयेदिति तदर्थः। वेदपरत्वे युक्तिमाह तद्व्रतेनेति। तद्व्रतेन वेदव्रतेन अन्वयोक्तेः= अस्याः ब्रह्मविद्यायाः संबन्धकथनादित्यर्थः। अयं भावः—शिरोव्रतेन ब्रह्मविद्यासंबन्ध इहोक्तः। शिरोव्रतञ्च वेदव्रतमेव, "इदमपि वेदव्रतेन व्याख्यातम्" इति विषयान्तरनिरूपणावसरे समाचाराख्ये ग्रन्थे अस्य शिरोव्रतस्यैव वेदव्रतशब्देन निर्देशात्। कथञ्च वेदव्रतमिति तस्य नाम? नूनं वेदाध्ययनाङ्गत्वस्य शिरोव्रतरूपे पात्रधारणे सद्भावात्। एवं वेदाध्ययनाङ्गत्वावगम, "नैतदचीर्णव्रतोऽधीते" इति वाक्येनाधीते इति पदेन प्रतिष्ठापितश्च। अतो वेदव्रतरूपशिरोव्रतान्वयितयोक्त ब्रह्मविद्यापदं स्वाध्यायपरमेवेति मुण्डकाध्ययनस्य तावन्मात्रकार्यत्वेऽपि तदर्थोपासनस्य वेदान्तरविहितोपासनैक्यं शाखान्तरनयसिद्धं निर्बाधम्॥

८ अत्र किञ्चिदाशङ्क्य समाधत्ते रूपेति। रूपभेदात् विद्याभेदः, रूपैक्ये विद्यैक्यमित्युच्यते। तत्र रूपपदेन न ब्रह्मग्रहणम्। तस्यैक्यात्; भेदस्य दुर्वचत्वात्। गुणविशिष्टब्रह्मग्रहणेन रूपैक्योक्तौ प्रागेव गुणवैशिष्ट्यसिद्ध्या गुणोपसंहारस्तत्फलमिति कथम्॥ कतिपयगुणग्रहणेन रूपैक्ये अन्ये गुणा उपसंह्रियन्ते चेत्-सत्यत्व-

रूपैक्यमिति। तर्हि वेद्याकारादन्यो गुण उपसंहार्य इति चेत्-स चान्यो विरुद्धो वा किं वा अविरुद्धः। विरुद्धश्चेत्, तर्हि विरुद्धधर्मयोरेकत्रोपसंहाराङ्गीकारे सति लोके सर्वत्र भेद एव न स्यात्। उष्णत्वशीतत्वयोरेकत्रोपसंहारसम्भवे कोऽन्यो भेदकः? तेन कर्मणां विद्यानां वा तत्तदसाधारणभेदकधर्मोपसंहारे यागदानहोमादीनां सद्विद्यादहरविद्याभूमविद्यादीनां भेद एव न स्यात्। ननु विकल्पेन उपसंहारः स्यात्—कदाचित् एकधर्मान्वयः, अन्यदा तद्विरुद्धान्यधर्मान्वय इति॥ तदपि न; विकल्पस्याष्टदोषदुष्टत्वात्। किञ्च विकल्प एवात्र न सम्भवति; स्वधर्मस्य श्रुत्यैवोपदिष्टत्वात्। अन्यस्य विरुद्धधर्मस्य श्रुत्या अनुपदिष्टत्वात्। तुल्ययोर्हि विकल्पः; न पुनरतुल्ययोः। तेनोपसंहार्यो धर्मः कोऽयमिति। तस्मात् भेदाभेदचिन्ता गुणोपसंहारानुपसंहारार्थेति व्यर्थाभिधानमिति। तदेतदनुवदति—रूपैक्यादिति। शब्दान्वयस्तु—रूपैक्याद्दैक्यसिद्धौ किमितर(मन्य)दुपसंहार्यम्? अन्यो गुणश्चेत्-विद्यान्तरादिव्यवस्थितो गुणश्चेत्, कर्मणां विद्यानां वा क्वचिदपि रूपभेदव्यवस्थितो भेदो न स्यात्। विकल्प्यं तदिह किमिति। अत्र किमिति प्रतिक्षेपे। विकल्प्यं तद्रूपमिह न भवत्येव विद्यान्तरासाधारणत्वात्। तेन एवमुपपादनेन भेदाभेदचिन्ता न गुणोपसंहारानुपसंहारार्था भवतीति निष्फलेति। अत्रोत्तरम्—नेति। उपसंहार्यानुपसंहार्यविभागं व्यक्तमेव दर्शयति-वेद्याकारेति। वेद्याकारैक्यं विद्यैक्यं दिशति। तत्तु वेद्याकारैक्यमनुपसंहार्यमेव प्रागेव सिद्धत्वात्। तेन न चक्रकम्, नाप्यन्योन्याश्रयः। तथा च विद्याया ऐक्ये सिद्धे तदधिकं=विद्याया ऐक्यापादकाकारादधिकम्= अन्यदेव किञ्चिदङ्गमाकृष्यते। तच्चापि तत्तच्छाखासु सर्वत्र श्रुतं चेत्, अनुपसंहार्यमेव; श्रुतत्वात्। क्वचिदेव श्रुतं चेत्—तदानीं कर्मैक्यात् विध्यैक्याच्च शाखान्तरेऽप्युपसंहर्तव्यमिति न्यायमार्गः।

---

ज्ञानत्वादिगुणैक्येन सर्वगुणोपसंहारः क्रियेत! तथाच रूपभेदात् विद्याभेदो न भवेत्। **विकल्प्यं तदिह किम्।** अनुपसंहार्यं किमपि न भवति। **तेन** गुणानुपसंहारपक्षस्याभावेन उपसंहारानुपसंहारचिन्ता व्यर्थेति।

परिहरति **नेति**। गुणोपसंहार इत्यत्र गुणपदं न कल्याणगुणमात्रपरम्। किंतु गुण-अंगोभयपरम्। अंगे गुणशब्दप्रयोगो मीमांसकप्रसिद्धः। **रूप**पदेन ब्रह्मविशेषणभूतगुणादिवेद्याकारग्रहणम्, तदैक्ये विद्यैक्यम्। तदैक्यं पुरस्कृत्य एकत्र शाखायामुक्तं वेद्यातिरिक्तमङ्गभूतं किञ्चित् अन्यत्रोपसंह्रियते। यथा वैश्वानरविद्यायां प्राणाग्निहोत्रादिकमेकत्र वेदे उक्तमन्यत्रापि नीयते। एवमत्र अंगस्योपसंहार्यस्य स्पष्टत्वादेव वैश्वानरविद्या विशिष्योदाहृता। **तदधिक** ऐक्यप्रयोजकवेद्याकारभिन्नं वेद्यमवेद्यं वा किञ्चित् **अंगं** विद्योपयोगि **आकृष्यते**=उपसंह्रियते। ननु **श्रुतप्रकाशिकायां** रूपातिरिक्तस्याङ्गस्योपसंहार उक्तः, तथैवेहापि वक्तव्यम्॥ न; रूपस्याप्युपसंहारात्। 'दर्शयति च' इति सूत्रे **तैत्तिरीयदहरविद्यायां** वेद्याकाराणामपहतपाप्मत्वादीनामेवोपसंहारकथनात्। ननु दहराक्षरादिविद्यासु ब्रह्मधर्मत्वेन प्रथममवगतानां दहरत्वाक्षरत्वादीनामेव रूपत्वम्, अन्येषामपहतपाप्मत्वादीनां तु रूपत्वं विना गुणत्वमिति वेद्याकारेऽपि रूपारूपोभयविषयत्वमस्त्विति चेत्-एवं न सर्वत्र सुवचम्। उपकोसलविद्यादिषु, 'कं ब्रह्म खं ब्रह्म' इति कत्वखत्वादीनां गुणानामेव रूपत्वात्। प्रतीतकतिपयरूपग्रहणेन रूपैक्यमाकलय्यावशिष्टरूपोपसंहारस्य सति गमके क्रियमाणत्वात्। अतः **तदधिक**मित्यस्य सामान्यतो वेद्याकारातिरिक्तमिति नार्थः; किंतु ऐक्यप्रयोजकत्वेनावगतवेद्याकारातिरिक्तं सर्वमिति हि **चिन्तामणिः**। **अंगपद**मिह रूपस्यापि वेद्यस्य ग्राहकमेव।

इयं किल मर्यादा किं भवतैव परिकल्पितेत्याशङ्क्य कर्मकाण्डविदामपीयमेव मर्यादेति स्वोक्तमर्थं सर्वविद्वज्जनसम्मत्या द्रढयति—कर्मण्यपीति । अस्मदुक्तानङ्गीकारे सर्वशास्त्रव्याकोपः स्यादित्यर्थः । अयमत्र शब्दान्वयः—कर्मण्यपि = कर्मकाण्डेऽपि एवमेव = एवम्प्रकारेणैवोपसंहारविषयो गुणो भेदकगुणातिरिक्त एव स्वीकृतः । अत्र हि यागदानहोमादीनां भिन्नानां कर्मणां तत्तदसाधारणधर्मात् भेदकादतिरिक्तः कश्चित् धर्मः संयोगरूपचोदनाद्यविशेषात् कर्मैक्ये सिद्धे तस्मादेवैक्यात् सर्वत्रोपसंह्रियत इति । अयमर्थः—कर्मसु परस्परविरुद्धो धर्मो नोपसंहार्यः, रूपाद्यैक्यादैक्ये सिद्धेऽपि ऐक्यापादकं रूपमपि नोपसंहार्यम्, तद्व्यतिरिक्तमपि रूपमेकत्रैव प्रतिपन्नं चेत्, इतरत्रोपसंहार्यम् । तत्रोभयत्रापि प्रतिपन्नं चेत्—अनुपसंहार्यमेवेति तान्त्रिकगोष्ठीनिष्ठानां निर्णयः ॥ ३२८ ॥

इति सर्ववेदान्तप्रत्ययाधिकरणम् ॥ ८३ ॥

## ८४ ॥ अथ अन्यथात्वाधिकरणम् ॥ ३-३-२ ॥

सूत्रम्—अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ न वा प्रकरणभेदात् परोवरीयस्त्वादिवत् ॥ संज्ञातश्चेत् तदुक्तम्, अस्ति तु तदपि ॥ व्याप्तेश्च समञ्जसम् ॥ ६—९ ॥

(३२९) प्राग्वत् शाखाविभेदेऽप्युपशमितभिदा तादृगुद्गीथविद्या
स्यादेका चोदनाद्यैः; तदसदुभयथा रूपभेदोपलब्धेः ।
गाता गेयश्च गेये सकलमसकलश्चेति वैषम्यसिद्धौ
शेषाभेदोऽप्यभेदं न गमयति; भिदा त्वेकभेदेऽपि सिध्येत् ॥ ९ ॥

अत्र सङ्क्षेपभाष्ये, 'एवं चोदनाद्यविशेषात् विद्यैकत्वम्, एकत्वे च गुणोपसंहारः कर्तव्य इत्युक्तम् । अतःपरं कासुचन विद्या अधिकृत्य प्रत्यभिज्ञाहेतुभूतचोदनाद्यविशेषोऽस्ति, नेति निरूप्य निर्णीयते' इति। तदर्थविचारस्तु-अस्त्युद्गीथविद्या वाजिनां छन्दोगानाञ्च, किमुभयत्र विद्यैकत्वम्, उत विद्याभेद इति । तदर्थं विचार्यते—किमुभयत्र विद्याप्रत्यभिज्ञानमस्ति, नेति । किमुभयत्रोद्गीथस्यैवो-

---

तस्यापि ब्रह्मोद्देशेनोपासनान्वयितया विधानादंगत्वाक्षतेः । अत्राऽव्यवस्थां कर्मकाण्डेऽपि दर्शयति कर्मण्यपीति । तत्र यागस्य द्वे रूपे द्रव्यं देवता च । अन्यानि चांगकर्माणि । तत्रोपसंहारोऽङ्गानामेवेति न; अग्निहोत्रहोमादौ स्वशाखाविहितद्रव्यातिरिक्तद्रव्यस्य शाखान्तरतो ग्रहणात् । अनुक्तायाः देवतायाः अंगभूतमन्त्रादित उपसंहाराच्च । अतः सर्वत्र उपहृतिविषयः उपसंह्रियमाणमङ्गं भवतीति । भेदकेति । रूपं तु भेदकं नोपसंह्रियते, तर्हि तैत्तिरीयदहरविद्यायामपहतपाप्मत्वादि मा भूदिति न युक्तम् । 'तस्मिन् यदन्तस्तदुपासितव्यम्' इति वाक्यस्य तद्ग्रहणेनैवार्थस्य वर्णनीयत्वात् । एवं तु गमकस्य कस्यचिदभावे रूपं तत्रतत्र प्रतिनियतं स्यादिति । अत्र समानाधिकरणभाष्यार्थदर्पणादि द्रष्टव्यम् ॥ ३२८ ॥

९. अक्षरवैश्वानरादिविद्यानामाख्यायैक्यात् शाखाभेदेऽप्यैक्यं स्थूणानिखननन्यायेन स्थापितम् । तद्वत् असुरपरिभवार्था उद्गीथविद्याऽप्येका स्यादिति शंकायामनन्तरमधिकरणम् । तत्र पूर्वपक्षमाह प्राग्वदिति । छान्दोग्यबृहदारण्यकयोरुभयोः श्रुता उद्गीथविद्या तादृक् मिथस्तुल्या, उभयत्र, 'अनेनैनान् अभि हनिष्यामः', 'हन्तासुरान् यज्ञे उद्गीथेनात्ययाम' इति फलकारणतया उद्गीथमेव ब्रुवती उपशमितभिदा= बृहदारण्यके उद्गातरि प्राणदृष्टिः, अन्यत्र उद्गीथे प्राणदृष्टिः इति भिदाशमनात् शाखाविभेदेऽपि प्राग्वत् पूर्वाधिकरणोक्ताक्षरविद्यादिवत् चोदनाद्यैरेका उपासनचोदनात्वात् असुरपराभवरूपफलात्

पावनकर्मत्वम्, उत छन्दोगानामुद्गीथावयवप्रणवस्येति। किमुभयत्रोद्गीथशब्दः [कृत्स्न?]उद्गीथपरः, उत छन्दोगानामुद्गीथावयवभूतप्रणवपरः इति। किं, 'ओमित्येतदक्षरमुद्गीथमुपासीत' इति प्रणवपरोद्गीथशब्दस्योपक्रमस्थत्वम्, 'उद्गीथमुपासाञ्चक्रिरे' इत्युद्गीथशब्दस्य प्रणवपरतामवगमयति, नेति। पूर्वं वैश्वानरविद्यायां संयोगरूपचोदनाख्याऽविशेषात् विद्यैक्यमुक्तम्; एवं तर्हि विद्यान्तरेष्वपि तेनैवाविशेषेण विद्यैक्यं ग्राह्यम्। तत्रोदाहरणत्वेन तावदुद्गीथविद्योच्यते। तदिदमाह—प्राग्वदिति। वैश्वानरविद्यावत् शाखाभेदेऽप्युपशमितभिदा स्यादेकैवोद्गीथविद्या। इत्थमाशङ्क्य तदेतन्निराकरोति—तदन्यदिति। तत्र हेतुमाह—उभयथेति। रूपभेदो हि सर्वेष्वपि भेदकेषु प्रधानः। स च रूपभेदोऽत्र न ऐकविध्येनोपलभ्यते, अपितूभयथा। तेन भेदकप्रमाणभूयस्त्वात् भेद एवाङ्गीकार्यः। उक्तमेव भेदकप्रमाणद्वैविध्यं दर्शयति—गातेति। क्वचिदुद्गीथविद्यायामुद्गाता ध्येयतयोच्यते, अपरत्र तु गेयम्। अयमेको रूपभेदः। रूपभेदान्तरमप्याह—गेय इति। क्वचित् सकलगेयानुध्यानम्, अन्यत्रासकलगेयानुध्यानमिति विभागः। एवं रूपवैषम्यसिद्धौ संयोगरूपचोदनाख्यासु रूपव्यतिरिक्तानां संयोगादीनामभेदोऽपि विद्याया अभेदं न गमयत्येव। तदेव विवृणोति—भिदेति। इयं खलु मीमांसकानां मर्यादा–संयोगरूपचोदनाख्यानामेकभेदेऽपि कर्मभेदः सिध्येदेव [इति?]। तद्वदत्रापि प्रधानभूतस्यैकस्यापि रूपस्य भेदे सिद्धे विद्याभेदोऽङ्गीकर्तव्य एव। अत्र पुनः प्रधानस्य रूपस्य भेद उभयथा दृश्यते। तेन सुतरामपि विद्याभेदः सिद्ध इति भावः॥ ३२९॥

(३३०) छन्दोगोद्गीथशब्दस्तदवयवपरः प्रक्रमादिप्रसिद्धेः
कृत्स्नोद्गीथाभिधायी प्रकरणनियमाभावतो वाजिनां स्यात्।
उद्गीथोक्तिश्च नैषामुपचरण(चरित)वती गातरि प्रक्रमस्था
तत्कर्त्रा साधनीये द्विपदुपशमने तत्फलत्वोक्त्यबाधात्॥ १०॥

---

उद्गीथविद्यासंज्ञकत्वात् अध्यस्तप्राणभावोद्गीथविषयकत्वाच्च एकरूपचोदनफलाख्यारूपा स्यात। कथं भिदाशमनमिति चेत्–उद्गीथे गानकर्मण्येव उद्गातृत्वस्यामुख्यतया कल्पनात्। अन्यथा उद्गीथेनात्यया-मेत्यत्रोपक्रमे उद्गीथशब्दस्योद्गात्रर्थकत्वस्य स्वीकार्यत्वरूपदोषापत्तेरिति पूर्वपक्षः। निरस्यति तदसदिति। रूपभेदस्य द्वेधोपलभ्यमानत्वादिति हेतुः। तद्विशदयति गातेति। 'अथ हैनमासन्यं प्राणमूचुः त्वं न उद्गाय' इति उद्गातरि प्राणदृष्टिरेव बृहदारण्यके। न चोद्गीथेनात्ययामेति उद्गीथस्य करणतया गृहीतत्वात् कथमुद्गातुः तत्त्वमिति शंक्यम्, उद्गीथविशिष्टवेषेणैव तस्य ऋत्विजः करणत्वात् उद्गीथस्यापि करणकोटिप्रवेशेन तदुपपत्तेः विरोधाभावात् साक्षात् श्रुताया उद्गातरि प्राणदृष्टेर्बाधायोगात्। तथाच गाता एकत्र रूपम्, अन्यत्र छान्दोग्ये उद्गीथाख्ये गेये प्राणदृष्टिविधानात् तदेव तत्र रूपमिति रूपभेदः। अन्यदपि वैषम्यम्—छान्दोग्ये प्रणवरूपोद्गीथाक्षरस्यैव पूर्वं पश्चाच्च व्यपदेशात् तत्रोपास्यः उद्गीथोऽक्षरमात्रम्; बृहदारण्यके तु तथाविधप्रकरणाभावात् अविशेषात् पूर्ण एवोद्गीथो ग्राह्य इति सकलासकलभेदोऽपीति। एवं वैषम्ये सति शेषाभेदः आख्याफलचोदनासु अभेदः ऐक्यं न गमयेत्। चतुष्टयैक्य एवाभेद इति प्रागेवोक्तत्वात्॥ ३२९॥

पूर्वमुद्गीथविद्ययोर्भेदसिद्ध्यर्थं वेद्याकारभिदा प्रतिज्ञाता। तामेव वेद्याकारभिदां विशदयन् पादयति—छन्दोगेति। छान्दोग्य(छन्दोग)वाक्ये तावत् उद्गीथशब्दस्तदवयवभूतप्रणवपर एव। तत्र हेतुमाह—प्रक्रमादिप्रसिद्धेरिति। छान्दोग्यवाक्योपक्रमे उद्गीथशब्दस्य प्रणवपरत्वेनाभिधानात्। वाजसनेयके तु नियामकप्रकरणाद्यभावात् उद्गीथशब्दः कृत्स्नोद्गीथाभिधायी। तेन क्वचित्कृत्स्नोद्गीथाभिधायी अन्यत्रोद्गीथावयवभूतप्रणवाभिधायीति रूपभेदः सिध्यति। उद्गीथो नाम सामावयवो भक्तिविशेषः, तदवयवः प्रणव इति तयोर्भेदः प्रसिद्धः॥ एवं तर्हि वाजिनामुद्गीथशब्द उपक्रमस्थ औपचारिकस्स्यात्, उद्गातर्युद्गीथशब्दप्रयोगात्। तेनोपचार एव दोष इति चेत्—नायोपचारदोष इत्याह—तद्विति। अयमर्थः—उद्गाता नाम उद्गीथस्य कर्ता, तत्कर्तृ (त्कर्तृ)साधनीये कार्ये तस्याप्युद्गीथस्य 'नागृहीतविशेषणा...' इति न्यायेन साधनत्वमस्त्येव। तेन 'उद्गीथेनात्ययाम' इत्युद्गीथस्यैव साधनत्वोपदेशे सति नोपचारप्रसङ्ग इति शब्दार्थः। द्विषद्दुपशमने = शत्रुपराजये। तत्फलत्वोक्त्यबाधात्—उद्गीथफलत्वोक्तेर(त्वकथनस्या)बाधादिति॥ ३३०॥

(३३१) यद्यप्यब्रह्मविद्या परपरिभवनाद्यैहिकार्थप्रयुक्ता

न ग्राह्या मोक्षशास्त्रे, तदपि समतया तत्परीक्षेति केचित्।

काम्या विद्याऽप्यनिष्टव्यपनयनमुखैर्ब्रह्मविद्योपयुक्तैः

तत्तत्साध्यप्रभेदैर्भवति समुचितालोचनेत्याहुरन्ये(रेके)॥ ११॥

गुणोपसंहारपादे ब्रह्मविद्यैव सञ्चिन्तनीया, अध्यात्मशास्त्रत्वात्। तथा सैव सर्वत्र सञ्चिन्त्यते च। अथापि किमत्र स्वयमब्रह्मविद्या शत्रुपराजयादिक्षुद्रफलान्तरार्थी चोद्गीथविद्या सञ्चिन्त्यत इत्याशङ्क्य द्वेधा समाधानमाह—यद्यपीति। तत्रैकदेशिभिरुक्तः परिहारस्तावदुच्यते—यद्यपि

१०. 'अत्र उद्गातृविद्यात्वे उद्गीथविद्येति कथं संज्ञेति शंकायां संज्ञाया मुख्यगौणोभयरूपत्वात् उद्गातृविशेषणतयोद्गीथविषयकतायाः विद्यायामक्षतत्वाच्च न दोष इति संज्ञात इति सूत्रेण ज्ञापितम्। छान्दोग्येऽप्यत्र खण्डे सकलोद्गीथग्रहणमेव स्यादिति शंकापरिहारः व्याप्तेश्चेति सूत्रेण क्रियते। तदिदं गाता गेयं च गेये सकलमसकलश्चेत्यत्राभिसंहितम्। तदेव विशदयति छन्दोगेति। प्रक्रमादिप्रसिद्धेः। प्रक्रमे= ओमित्येतदक्षरमुद्गीथमुपासीत' इति उपनिषदारम्भे। आदिना एतत्खण्डान्ते, 'य एतदेवं विद्वान् अक्षरमुद्गीथमुपास्ते' इति, चतुर्थखण्डे च, 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्युक्तिस्थलग्रहणम्। प्रकरणनियमाभावतः छान्दोग्य इवाक्षरप्रकरणकृतसंकोचनसङ्कोचाभावात् कृत्स्नोद्गीथो बृहदारण्यके। प्रस्तावोद्गीथप्रतिहाराख्यासु साममक्तिषु मध्यमाग उद्गीथः, तत्राऽऽद्यांशः प्रणवरूपमक्षरम्। एषां वाजिनां प्रक्रमे उपक्रमे स्थिता, 'उद्गीथेनात्ययाम' इति उद्गीथोक्तिः उद्गीथशब्दः गातरि उद्गातरि उपचरणवती लाक्षणिकी स्यादिति न शंक्यम्; उद्गातृत्वं हि उद्गीथविशिष्टगानकर्तृत्वम्; तत्र पुरुषस्येव विशेषणभूतोद्गीथांशस्यापि करणत्वसद्भावात् लक्षणां विनैवोपपत्ते। अतो द्विषदुपशमनम् असुरपराभवस्तत्रापि उद्गीथस्यापि फलमेव। तत् सिद्धं रूपं भिन्नमिति॥ ३३०॥

११. मुमुक्षुशास्त्रे शारीरके क्षुद्रफलोद्गीथविद्याविचारं समर्थयति यद्यपीति। समतयेति। उपनिषद्विहितोपासनत्वाविशेषादित्यर्थः। यदि उद्गीथविद्यादीनां मुमुक्षुं प्रति अनपेक्षितत्वं स्यात्,

इयमब्रह्मविद्यैव, क्षुद्रफलार्थी च; तेनात्र न ग्राह्या च मोक्षशास्त्रे—तथापि संयोगरूपचोदनाख्याऽविशेषादिति न्यायेन सञ्चिन्तनीयत्वाविशेषादत्र सञ्चिन्त्यत इत्येकदेशिनामयं पक्षः। अपरेषां तु इयं विद्या काम्याऽपि ब्रह्मविद्यानुष्ठानोपयुक्तस्य तद्विरोधिनिराकरणस्य साधनत्वेनोपदिष्टत्वात् उपयोगविशेषस्य विद्यमानत्वेन ब्रह्मविद्यान्तर्गतत्वात् तत्र विशेषतस्सञ्चिन्तनीयेति। शत्रवो हि विद्यानुष्ठानप्रतिपक्षा वादादयः, तत्प्रवर्तकाश्च पुरुषा इति। तेषां परिभवश्च विद्यासाद्गुण्यमेवापादयतीत्युद्गीथादिविद्याचिन्तनमत्रैव विशेषेण सङ्गच्छत इति ॥ ३३१ ॥

(३३२) अज्ञातब्रह्मतत्त्वः कथमिव विमृशेत् कुत्रचित् ब्रह्मदृष्टिम्
तस्मात् तत्तादृशीनां समुचितमगतेरत्र मीमांसनं स्यात् ।
आदध्युः कर्मणाश्च स्वफलवितरणे वीर्यवत्त्वातिरेकम्
ब्रह्मध्यानार्थकर्मातिशयजननतः प्रस्तुतापेक्षितं तत् ॥ १२ ॥

इत्यन्यथात्वाधिकरणम् ॥ ८४ ॥

अत्रैवोद्गीथविद्यायाश्चिन्तनीयत्वे प्रकारान्तरेणापि हेतुद्वयमाह—अज्ञातेति। इदं किल हेतुद्वयं—उद्गीथाद्युपासनानि ब्रह्मदृष्टिरूपाणि, तानि च द्रष्टव्यब्रह्मपरिज्ञानाभावे कर्तुमेव न शक्यन्ते। [1]तेनोद्गीथाद्युपासनचिन्तनस्यात्रैव सङ्गतिः। अत एव पूर्वं द्रष्टव्यब्रह्मविषयवैश्वानरविद्यादिकमस्मिन् पादे प्रथममेव चिन्तितम्; इदानीं [2]ब्रह्मदृष्टिरूपोद्गीथादिविद्या चिन्त्यत इति। अयमत्र शब्दान्वयः—अज्ञातब्रह्मस्वरूपयाथात्म्यः कथमिव कुत्रचिदुद्गीथादिषु ब्रह्मदृष्टिं विमृशेत्। तस्मात् ब्रह्मज्ञानमन्तरेण उद्गीथादिदृष्टिविधीनामशक्यचिन्तनत्वात् अगत्या अत्रैव ब्रह्मकाण्ड एव चिन्तनी-

उपनिषदि तत्प्रस्ताव एव न स्यात्। बहुजन्मसाध्यस्य बह्वन्तरायस्य भक्तियोगस्य साधने मुमुक्षुः श्रान्तो मा भूदिति तदपेक्षितनानाविध-भवत्युपयुक्तफलसाधनसौकर्यार्थैवोपनिषत् आदरेण सर्वं न्यहे त्याशयेन पक्षान्तरमाह काम्येति। सर्वमिदं लघुसिद्धान्ते भाष्ये द्रष्टव्यम्। चिन्तामणौ चैतत्फलं भवत्युपयुक्ततयोपपादितम्। समुचितालोचना सम्यगुचितो विचारो यस्याः सा ॥ ३३१ ॥

१२. दृष्ट्युपासनानि द्विविधानि ब्रह्मदृष्टिरूपाणि, तदन्यदृष्टिरूपाणि च। उभयान्यपि मोक्षातिरिक्तफलकतया काम्यान्येव। तत्रान्त्यानां ब्रह्मशास्त्रेऽस्मिन् संगतिः द्वेधोपपादिता। आद्यानां तु अन्यार्थत्वेऽपि एतच्छास्त्र एव निरूप्यत्वादपि संगतिः, तत्रापि मोक्षार्थब्रह्मध्यानोपयोगिफलहेतूनां तु तन्तोऽपि हेतोः संगतिरिति अर्धद्वयेनाऽऽह अज्ञातेति। कुत्रचित्= नाम ब्रह्मेत्युपासीत' इत्येवं नामादौ विहितां ब्रह्मदृष्टिं ब्रह्मत्वारोपात्मकमुपासनं विषयभूतब्रह्मज्ञानरहितः कथं विचारयितुं शक्नुयात्। अत इहैव, मोक्षे संबन्धाभावेऽप्यगतेः=अन्यत्र निरूपणासंभवात् तत्तादृशीनां=मनोवागादित्यादौ ब्रह्मदृष्टिरूपाणाम्, उद्गीथादौ हिरण्मयपुरुषप्राणाकाशादिपरमात्मदृष्टिरूपाणाञ्च मीमांसनं समुचितमेव। तत्र कासाञ्चिदाधिकसंगतिमप्याह आदध्युरिति। भक्तियोगनिष्ठैः तद्योगशेषत्वेन फलान्यपेक्ष्य तदर्थे कर्मसु क्रियमाणेषु, तानि

1 उद्गीथाद्युपासने त। परमात्मदृष्टिरूपोपासनेत्यर्थः। 2 ब्रह्मदृष्टिरूपेति। शत्रुगमनार्थोद्गीथविद्याया मुख्यप्राणदृष्टिरूपत्वेऽपि, परोवरीयस्त्वादिवत् अन्याऽपि भवतु इति भावः।

यता स्यात्; न पुनः कर्मकाण्डे; ईदृशसङ्गत्यभावात्। अयमेको हेतुः उद्गीथाद्युपासनचिन्तनानामत्रैव कर्तव्यत्व उक्तः। हेत्वन्तरमप्युपयोगविशेषरूपं दर्शयति—आदध्युरिति। 'यदेव विद्यया करोति, तदेव वीर्यवत्तरम्' इति विद्याङ्गकर्मणां वीर्यवत्तरत्वापादकत्वेनोद्गीथविद्या विशेषेणाश्रय कर्तव्या, वीर्यवत्तरत्वं नाम विद्याङ्गकर्मणामप्रतिबद्धफलत्वम्। प्रतिबन्धकाभावे हि विद्याङ्गकर्माणि ब्रह्मविद्यां सहसैव साधयितुं शक्नुवन्ति। तेन ब्रह्मविद्योत्पत्तिप्रतिबन्धकनिराकरणार्थत्वात् स्वयं ब्रह्मदृष्टिरूपत्वाच्च उभयथाऽप्युद्गीथादिविद्यानामत्रैव चिन्तनं समुचितमित्यर्थः। अयमत्र निर्णयः—विद्याङ्गकर्मणां स्वफलवितरणे वीर्यवत्त्वातिरेकमुद्गीथादिविद्याः स्वव्याद्ध्युः। तस्मात् ब्रह्मध्यानार्थकर्मणामतिशयजननेनोद्गीथाद्युपासनचिन्तनं प्रस्तुतापेक्षित(नार्थ)मेवेति ॥ ३३२ ॥

इत्यन्यथात्वाधिकरणम् ॥ ८४ ॥

## ८५ ॥ अथ सर्वाभेदाधिकरणम् ॥ ३-३-३ ॥

सूत्रम्—सर्वाभेदादन्यत्रेमे ॥ १० ॥

(३३३) ज्यैष्ठ्यश्रैष्ठ्यादिसाम्ये क्वचन समधिकं भाति वासिष्ठ्यपूर्वं
तेनेत्थं रूपभेदात् बहुनिगमगता भिद्यतां प्राणविद्या।
मैवं; वागादितत्तद्गुणपरवशतावर्णनस्याविशेषात्;
वागाद्यैः स्वस्वधर्मोपचरणमकृतं तावता(यत् ततः?) स्यान्न भेदः ॥ १३ ॥

इति सर्वाभेदाधिकरणम् ॥ ८५ ॥

पूर्वस्मिन्नधिकरणे रूपभेदात् विद्याभेद इत्युक्तम्, ततः पूर्वं वैश्वानराधिकरणे रूपैक्यात् विद्यैक्यमिति। अधुना पूर्वाधिकरणवत् रूपभेदात् विद्याभेदमाशङ्क्य तत्प्रतिक्षेपेण वैश्वानराधिकरणवत् रूपैक्यात् विद्यैक्यमेव पुनः प्रतिष्ठाप्यत इति सङ्गतिः। तदर्थविचारस्तु—छन्दोगानां कौषीतकिनाञ्च प्राणविद्या आम्नाता। किमुभयत्र विद्यैक्यम्, उत भेद इति। किमुभयत्र वसिष्ठत्वादिगुणकमुपासनम्, उत कौषीतकिनां तद्विधुरमिति। किं कौषीतकिनां प्राणविद्यायामपि वसिष्ठत्वादिप्राप्तिरस्ति, नेति। किं

---

कर्माणि प्रतिबद्धफलानि मा भूवन्निति तेषां फलप्रदानहेतुशक्त्याधिक्यरूपमप्रतिबद्धफलकत्वं तादृश्यो [illegible]: आदध्युः संपादयेयुः। उक्तं हि, 'यदेव विद्ययेति हि', 'अप्रतिबन्धः फलम्' इति। एवमपेक्षित [illegible]नहिमजनकतया मुमुक्ष्वर्थप्रस्तुतोपयुक्तमपि भवति तत् ब्रह्मदृष्टिमीमांसनमित्यर्थः ॥ ३३२ ॥

१३. मोक्षार्थविद्या प्रथमाधिकरणे, मीमांसिता। अन्यार्था दृष्टिरूपविद्या द्वितीये। अथादृष्टिरूपा मोक्षातिरिक्तफला प्राणविद्या विचार्यते। पूर्वाधिकरणोक्ते प्राणदृष्टिरूपोपासने भेदवत् अदृष्टिरूप गोपासनेऽपि भेद इति शंका। मुख्यप्राणस्य वागादीन्द्रियापेक्षया ज्येष्ठत्वं गर्भे इन्द्रियव्यापारतः प्रागेव आदित एवास्य व्यापृतत्वात्। श्रेष्ठत्वं स्वाधीनसर्वेन्द्रियगुणव्यापारकत्वात्। वसिष्ठत्वं वसुमत्तरत्वं वाचि, प्रतिष्ठात्वं चक्षुषि, संपत्त्वं श्रोत्रे आयतनत्वं च मनसि। इमानि प्राणायत्तानि प्राणविद्येयं बहुनिगमगता छान्दोग्यकौषीतकिवाजसनेयकरूपशाखात्रयगता। त्रिष्वपि निगमेषु प्राणस्य ज्यैष्ठ्यश्रैष्ठ्यवत्त्वगुणास्यत्वं ज्येष्ठश्रेष्ठभावरूपफलहेतुत्वञ्च श्रुतमिति तेष्वंशेषु साम्यम्। परंतु क्वचन=छान्दोग्यवाजसनेयकयोः वागादिगतं वासिष्ठ्यपूर्वं=वसिष्ठत्वादिकं समधिकं भाति मुख्यप्राणनिष्ठत्वेनाप्युक्ततया कौषीतक्युक्तापेक्षयाऽधिकत्वेन प्रतीयते। तेन

कौषीतकिनाम्, 'यदहं वसिष्ठाऽस्मि त्वं तद्वसिष्ठोऽसि' इत्यनुवादाभावेऽप्युपक्रमे प्राणायत्तस्थिति-कार्यकरत्वाभिधानात् वागादीनां तथारूपवसिष्ठत्वादिप्राप्तिः प्राणविद्यायां गम्यते, नेति । तत्र पूर्वपक्षमाह(पक्षः)—छान्दोग्यवाजसनेयककौषीतकिब्राह्मणेषु ज्यैष्ठ्यश्रैष्ठ्यादीन्यधीतानि प्राणे, कौषीतकिविद्यायामस्य सर्वस्यापि गुणजातस्य साम्येऽपि केवलं वागादिवसिष्ठत्वादिकम्, 'म(अस्य)द्वसिष्ठत्वादिकं त्वद्वसिष्ठत्वाधीनम्' इति वागादिभिः प्राणमुद्दिश्य नानूदितम् । तदित्थं रूपभेदात् बह्वीषु शाखासु प्रतिपन्ना प्राणविद्या भिद्यतामिति । इमं पूर्वपक्षमनुवदति—ज्यैष्ठ्येति । तत् प्रतिक्षिपति—मैवमिति । वागादीनां तत्तज्ज्यैष्ठ्यश्रैष्ठ्यवासिष्ठ्यादिगुणानां प्राणपरवशतावर्ण-नस्याविशेषात् । वागाद्यैः प्राणे स्वस्वधर्मोपचरणमात्रं न कृतम्, तावता न रूपभेदः । वागादीनां वसिष्ठत्वादेः प्राणाधीनत्वोपपादनादेव वागादिवसिष्ठत्वं प्राणवसिष्ठत्वमित्यर्थादुक्तं भवतीति न पृथग्वक्तव्यमवशिष्यते । तेन न रूपभेदात् विद्याभेदावकाश इति । तदेतत् सर्वं भाष्य एव सुव्यक्तं विवृतमिति नाचार्यैर्विवरणीयमवशिष्टं किञ्चिदस्तीत्युपरम्यते ॥ ३३३ ॥

इति सर्वाभेदाधिकरणम् ॥ ८५ ॥

## ८६ ॥ अथ आनन्दाद्यधिकरणम् ॥ ३-३-४ ॥

सूत्रम्—आनन्दादयः प्रधानस्य ॥ प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ इतरे त्वर्थसामान्यात् ॥ आध्यानाय प्रयोजनाभावात् ॥ आत्मशब्दाच्च ॥ आत्मगृहीतिरितरवदुत्तरात् ॥ अन्वयादिति चेत् स्यादवधारणात् ॥ ११—१७ ॥

(३३४) नानाशब्दादिभेदादिति खलु भिदुरां वक्ष्यति ब्रह्मविद्यां
रूपं विद्यान्तरस्य प्रकरणपठितात्(तं) नान्यदन्यत्र योज्यम् ।
तस्मात् सत्यत्वपूर्वाः तदितरगुणवत् स्युर्व्यवस्थापनीयाः;
मैवं, ब्रह्मस्वरूपावगतिरिह यतस्तद्धि सर्वास्वपेक्ष्यम् ॥ १४ ॥

---

हेतुना न्यूनगुणकत्वाधिकगुणकत्वरूपवैषम्यात् कौषीतकिप्राणविद्या अन्यप्राणविद्या च भिन्ना । न च उभयत्र प्रतिनियतगुणाधिक्ये भेदो युक्तः; न्यूनाधिकत्वमात्रेण भेदे अधिकगुणकविद्यां कोपि नानुतिष्ठेदिति शंक्यम्-प्राणविद्य फलस्य मोक्षभिन्नतया तत्र तारतम्यसंभवेन फलातिशयेच्छायामधिकगुणकोपासनसंभवात् । न च, 'यदहं वसिष्ठाऽस्मि त्वं तत् वसिष्ठोऽसि' इत्यादिना वागादिगतवसिष्ठत्वादेः प्राणे उक्तेरयुक्तत्वेन नैतैः प्राणस्य गुणवत्त्वमिति शक्यम्; तदवर्तित्वेऽपि तत्राऽऽरोप्योपासनसंभवादिति पूर्वपक्षः । निरस्यति मैवमिति । वागादीनां तत्तद्गुणव्यापाराणाञ्च प्राणपरवशत्वं तावत् सर्वत्र घुष्टम् । तेन कौषीतकि-ब्राह्मणेऽपि वसिष्ठत्वादिहेतुत्वं प्राणे ज्ञायत एव । वागादिकृत तद्विषयवाक्यप्रयोगस्तु, यदहं वसिष्ठाऽस्मि इत्यादिरेकत्र नास्ति तस्य वाक्यस्य, मन्निष्ठं वसिष्ठत्वं त्वन्निष्ठमित्यर्थोक्तौ आरोपो वक्तव्यः स्यात् । तदपेक्षया अहं वसिष्ठाऽस्मीति यत्, ततस्ते वसिष्ठत्वं ज्ञेयम्; त्वयि तदभावे मयि तदुत्पत्त्यसंभवादिति वागादिगत-वसिष्ठत्वादिहेतुत्वमेव तद्वाक्यार्थः । स च तद्वाक्याभावेऽपि ज्ञात एव । अतोऽन्यत्रापीमे गुणाः सन्ति । एवञ्चैकरूपफलत्वविषये गुणन्यूनाधिकत्वकृतफलतारतम्यकल्पनक्लेशोऽपि नास्तीति विद्यैक्यमेवेति ॥३३३॥

१४. त्रिविधान्युपासनानि त्रिष्वधिकरणेषु विमृष्टानि । अथैकान्तरिताधिकरणे प्राणविद्यानुबन्ध्येव

पूर्वं त्रिभिरधिकरणैः विद्यानां भेदाभेदचिन्ता कृता। तत्र च वैश्वानरविद्यायाम्, 'वायुः प्राणः' इति वायुः परमपुरुषप्राणत्वेन ध्येयतया परिकल्पितः। उद्गीथविद्यायां पुरुषोद्गीथादिषु प्राणदृष्टिरूपत्वेन प्राणप्रसङ्गः कृतः। इतः पूर्वस्मिन्नधिकरणे साक्षात् प्राण एव निरूपितः। अतोऽपि च पूर्वेषामधिकरणानां परस्परसाङ्गत्यम्। अस्मिन् खल्वधिकरणे ज्यैष्ठ्यश्रैष्ठ्य दिगुणोपपादनान्तर्भावेन वसिष्ठत्वादीनामप्यनुसन्धेयत्वमुक्तम्। तत्प्रसङ्गात् ब्रह्मणः सर्वविद्यावेद्यत्वात् तत्स्वरूपनिरूपकधर्माणामानन्दादीनां तत्स्वरूपनिरूपणान्तर्भावेनानुसन्धेयत्वमुच्यत इति सङ्गतिः। भाष्ये च सङ्गतिः स्पष्टां दृश्यते, 'अत्र ब्रह्मस्वरूपगुणानां सर्वासु परविद्यासूपसंहारोऽस्ति, नेति चिन्त्यते' इति। तदर्थविचारस्तु—किमानन्दादयो गुणाः सर्वासु विद्यासूपसंहार्याः, उत यत्र श्रूयन्ते, तत्रैवेति। किमानन्दादीनामैश्वर्यादिवत् गुणत्व(ण)पृथक्त्वमात्रमेव, उत ब्रह्मस्वरूपवत् स्वरूपप्रतीत्यनुबन्धित्वमस्तीति। पूर्वपक्षाभिप्रायेण सङ्गतिं प्रदर्शयन् पूर्वपक्षं तावदाह—नानाशब्देति। अयमर्थः—पूर्वं गुणभेदाद्विद्याभेद इति भवतैवोक्तम्। तेन तत्रतत्र श्रुतानामन्येषां गुणानां व्यवस्थितिः सिद्धा। तद्वदेव सत्यत्वादीनामपि धर्माणां ब्रह्मस्वरूपव्यतिरिक्तानां विद्याभेदेन व्यवस्थितिरिति पूर्वपक्षिणोऽभिप्रायः। उत्तरत्र सूत्रकारः, 'नाना शब्दादिभेदात्' इति गुणभेदात् भिन्नां ब्रह्मविद्यां वक्ष्यति। तेन स्वप्रकरणपठितात् रूपादन्यत् विद्यान्तरस्य रूपम् अन्यत्र=विद्यान्तरे न योज्यम्। उभयत्रापि पठितं चेत्–उभयत्रापि योज्यमस्तु नाम। इयमेव हि नीतिविदां मर्यादा। तस्मात्=एवं न्यायमर्यादया निर्णीतत्वात् सत्यत्वपूर्वा गुणा अपि=सत्यत्वज्ञानत्वानन्तत्वानन्दत्वामलत्वान्यपि तदितरगुणवत् व्यवस्थापनीयाः स्युरिति पूर्वः पक्षः। तदिद(तमिम)मपाकरोति–मैवमिति। अपाकरणप्रकारमेव विवृणोति—ब्रह्मेति। [ब्रह्मस्वरूपावगतिर्यतो गुणजातात् भवति, तत् सर्वत्रैव योज्यम्।] अयमर्थः—लोके हि वस्तूनां गुणाः द्विविधाः। तत्र स्वरूपनिरूपकाः केचित्, निरूपितस्वरूपविशेष-

---

विप्रक्ष्यति। अथापि क्षुद्रोपासनानामत्र प्राधान्येन विचारो नास्तीति गमयितुं तद्विचारमध्येऽपि मोक्षार्थोपासनानि सूत्रकृत् घटयति। अत एवोद्गीथविद्याविचारस्य बहुशः क्रियमाणत्वेऽपि न ते विचारा एकत्र समुच्चीयन्ते। अतः काम्यविद्यासनादरं वहन् संगतिविशेषपुरस्कारेणानन्दमयविद्याविचारमेवानन्तरं वर्तयति। तत्र शाखान्तरेऽपि प्राणविद्यासंबन्धिवसिष्ठत्वादिगुणानुवृत्तिवत् सर्वासु परविद्यासु एतद्विद्योक्तानन्दादिगुणानामनुगतत्वमाहेति संगतिः। तथाच, 'रूपभेदात् श्रूयमाणात् विद्याभेदः' इति निरूपितस्वरूपविशेषणभूतधर्मविषयकः। स्वरूपनिरूपकभूतानि विशेषणानि तु एकत्रोक्तान्यपि ब्रह्मवत् सर्वानुगतान्येवेति विवेचितं भवति। प्रथमाधिकरणे आख्यैक्ये विद्यैक्यस्योक्ततया तद्भेदे विद्याभेदस्य सिद्धतया सद्क्षरदहरादिविद्या विभिन्ना इति ज्ञातमेव। विशिष्याऽऽख्याभेदादिसद्भावं ज्ञापयितुमेव, 'नाना शब्दादिभेदात्' इत्यधिकरणे पूर्वमीमांसागतकर्मभेदकप्रमाणावतरणसिद्धमपि भेदं विशदयिष्यति। एवं भिन्नत्वेनावधार्यासु विद्यासु अत्रोक्तसत्यत्वादिगुणानामनुवृत्तिर्भवति न वेति विचार्यते। तत्र पूर्वोत्तरपक्षौ संगृह्णाति नानेति। इति खलु इत्यधिकरणे किल। एवञ्च तत्रतत्र विद्यान्तरत्वसिद्धौ विद्यान्तरपठितम् एकविद्यास्थलपठितादन्यत् रूपम् अन्यत्र अपठिततद्रूपायां विद्यायां न योज्यं भवति। तस्मात् ब्रह्मवल्ल्यां पठिताः सत्यत्वपूर्वाः सत्यत्वज्ञानत्वानन्तत्वानन्दत्वादयः तदितरगुणवत् विद्यान्तरपठितगुणानामत्रानुपसंहारेण तत्रैव व्यवस्थापनवत् एतद्विद्यागतान्नमयात्मत्व-प्राणमयात्मत्वादीनामन्यत्र अनयनवत्तत्रैवेति निर्धारणीया इति पूर्वपक्षः। परिहरति

काश्यपरे । यत् स्वरूपनिरूपकं, तत् वस्तुस्वरूपप्रसङ्गे सर्वत्रान्वेति । यथा घटप्रसङ्गे घटत्वम् । निरूपितस्वरूपविशेषकं तु रक्तत्वकृष्णत्वादिकं तत्रतत्र व्यवतिष्ठते । एवं स्वरूपनिरूपकत्वादानन्दादीनि सर्वत्रानुवर्तन्ते । अपरे पुनः [1]प्रियशिरस्त्वादयः तत्रतत्र व्यवतिष्ठन्त इति सर्वविद्यासाधारण्यमेवानन्दादीनाम् । ब्रह्मस्वरूपेति । ब्रह्मस्वरूपावगतिर्यस्माद्भवति, तत् स्वरूपवत् सर्वासु विद्यास्वपेक्षणीयमिति । [2]प्रथमन्वारोहः । स्वरूपनिरूपकधर्मत्वात् स्वरूपप्रतिपत्त्यर्थमेवेति तत्त्वम् ॥३३४॥

(३३५) सत्यत्वं विश्वहेतौ बहुविधचिदचिद्विक्रियाजालहानेः

ज्ञानत्वं ज्ञातृभावात् स्वरबहुलतया स्वप्रकाशत्वतश्च ।

त्रिद्वयेद्वा भस्तु सर्वं प्रमितमिह परिच्छित्तिभिर्ब्रह्मणोऽन्यत्

तस्माऽऽनन्त्यं वियोगात् तिसृभिरपि सदा निर्मलानन्दधाम्नः ॥ १५ ॥

प्रसक्तं सत्यत्वादिकं स्वरूपेण विभज्य दर्शयति—सत्यत्वमिति । सत्यत्वं विश्वहेतौ परस्मिन् ब्रह्मणि बहुविधचिदचिद्विक्रियाजालहानेर्भवति । ज्ञानत्वं ज्ञातृभावात् भवति । ज्ञानशब्दः कर्तर्यपि प्रयुज्यते, 'कृत्यल्युटो बहुलम्' इति कर्तर्यपि ल्युट्प्रयोगसम्भवात् । 'नन्दिग्रहिपचादिभ्यो ल्यु-

मेवमिति । ब्रह्मेति । ब्रह्मस्वरूप धर्मि सर्वानुगतमिति निर्विवादम् । एकैकस्यापि वस्तुनः स्वरूपानुबन्धि-अननुबन्ध्युभयविधधर्मवत्त्वं प्रसिद्धम् । तद्वत् ब्रह्मणः किं स्वरूपानुबन्धीति विमर्शे, केचित् तथात्वेनाव-सीयन्ते । स्वरूपानुबन्धित्वं नाम, स्वावगतिनिरपेक्ष(त्वसमानकालिक)स्वरूपावगतिकत्वाभावः स्वरूपाव-गतित्वव्यापकस्वावगतित्वकत्वं वा । तादृशधर्माणां धर्मिणा सह नियतप्रतीतिरिति ते सर्वत्रानुसंधेया इति । एवञ्च निर्विशेषब्रह्मवादो नानाविशेषनियमप्रदर्शनेन नितरां निरस्तः ॥ यतः=यद्धर्मावगत्या सहैव ब्रह्मस्वरूपावगतिः, तत् रूपं सर्वासु विद्यास्वपेक्ष्यमिति तुरीयपादार्थः। सूत्रे आनन्दादय इति पदप्रयोगेऽपि सत्यत्वपूर्वा इत्युक्तिरिह, सत्यं ज्ञानमनन्तमिति क्रमं श्रौतमनुसृत्य । सूत्रे आनन्दपदप्रयोगस्तु-प्रथम-वाक्येऽनुक्तस्यापि, 'अन्योऽन्तर आत्माऽऽनन्दमयः', 'आनन्दो ब्रह्मेति व्यजानात्' इत्युक्तस्य सत्यत्वादिवत् अनुगतत्वमिति व्युत्पादनायेति ध्येयम् ॥ ३३४ ॥

१५. 'सत्यं ज्ञानमनन्तम्' इति पदानां जन्माद्यधिकरणभाष्यदर्शितमर्थमाह सत्यत्वमिति । सत्यत्वं=सत्यशब्दवाच्यत्वम् । एवं ज्ञानत्वमानन्त्यमिति पदयोरप्यर्थः । अन्यथा व्यधिकरण-विभक्त्यनन्वयात् । विश्वहेतावित्यनेन जगत्कारणत्वरूपलक्षणे कथिते निमित्तत्वोपादानत्वरूपद्विविध कारणत्वावगतिमूलदोषशङ्कायां तत्परिहारार्थतया सत्यं ज्ञानमिति वाक्यप्रवृत्तिः; अत एवेदं शोधकवाक्य-मित्युच्यत इति सूचितम् । ननु सत्यत्वादीनां स्वरूपनिरूपकधर्मत्वे तज्ज्ञानं विना ब्रह्मज्ञानाभावे तज्ज्ञाना-नन्तरमेव जगत्कारणत्वरूपनिरूपितस्वरूपविशेषणधर्मज्ञानं भवतीति, कथं पश्चात् कारणत्वनिबन्धनदोषशंका? अत एवेह सत्यं ज्ञानमिति प्रथमं श्रूयते; पश्चादेव आत्मन आकाशः संभूत इति कारणत्वोक्तिरिति चेत्-

1. प्रियशिरस्त्वेति । अतद्गुणसंविज्ञानबहुव्रीहिः। प्रियादीनां साधारणत्वात्, शिरस्त्वादीनां कुत्राप्यनुपा-सनात् । 2 अन्वारोह इति । स्वरूपनिरूपकत्वातिरिक्तं हेतुत्वं यत इति विवक्षितमिति कृत्वा परमुक्तम् ।

णिन्यच:' इति कर्तर्येव ल्युट्प्रयोगमाश्रित्य निर्वोढुं शक्यत्वात्। 'तद्गुणसारत्वात्तु तद्व्यपदेशः' इति ज्ञानगुणसारे ज्ञानशब्दस्य प्रयोक्तुमपि(प्रयोग इति वक्तुमपि) शक्यत्वात् । स्वरूपस्य स्वप्रकाशत्वेन स्वप्रकाशस्वरूपवाचिनो ज्ञानशब्दस्य तत्रैव समन्वयाच्च । नन्वत्र कर्तृत्वेन भावत्वेन प्रत्ययभेदेनापि बहुधा निर्वाहे सति अर्थभेदात् स्वरभेदः स्यादित्याशङ्क्य तत्राप्युत्तरमाह—स्वरबहुलतयेति। स्वरस्य वैकल्पिकत्वादित्यर्थः। यत्र स्वरानुपपत्तिर्न विद्यते, तत्र तथैव स्वीकार्यम् । यत्र पुनः स्वरभेदोऽङ्गीकार्यः, तत्र 'बहुलं छन्दसि' इति स्वरादीनां बहुलत्वेन न सङ्करः किञ्चित्। अन्यथा कथं 'उणादयो बहुलम्' इत्यादिव्यपदेशो भगवतः पाणिनेरपि । त्रिविधपरिच्छेदाभावरूपं ब्रह्मणोऽनन्तत्वं वक्तुं परिच्छेद-प्रकारमाह—त्रिद्व्येकाभिरिति । त्रिपरिच्छिन्ना घटादयः; देशतः कालतो वस्तुतश्च परिच्छिन्नत्वात्। द्विपरिच्छिन्नः परमाणुः; अणुत्वादनन्तधर्मित्वाच्च । एकपरिच्छिन्नः पुनः कालः; विभुत्वे नित्यत्वे च

---

न; भृगुवल्ल्युक्तरीत्या किं ब्रह्मेति जिज्ञासायां लक्षणावतारात् तदा बृहत्त्वादिनैव ज्ञाने सत्यपि सत्यत्वादिना ज्ञानस्य प्रसक्त्यभावात् । यद्यपि किं ब्रह्मेति प्रश्ने सत्यं ज्ञानमित्यप्युत्तरं दीयेत, तथापि अप्रसक्तप्रतिषेधरूपदोषापत्त्या सत्यादिपदैः चिदचिद्विकारजातहान्यादिकथनायोगात् विकारादिप्रसक्तिः कथमिति शंकायाम्, 'विकारिद्रव्यकारणत्वाद्विकारप्रसक्तौ तन्निषेधः, विकारिचेतनवत् संकुचितज्ञानत्व-परिच्छिन्नत्वादिप्रसक्तौ तन्निषेधः' इत्येव वक्तव्यमिति प्रसक्तिसंपादकं विश्वहेतुत्वञ्च नमित्यभिप्रायेण तदुक्तिः । लोके हि उपादानकारणेषु स्वरूपविकाराः, निमित्तकारणेषु कुलालादिषु रागद्वेषादिस्वभाव-विकाराश्च नियताः । तद्वैलक्षण्यमत्र ज्ञाप्यते । ज्ञातृमात्रो नाम नित्यासंकुचितज्ञानकत्वम् । तेन कदाचित् संकुचितज्ञानमुक्तजीवव्यावृत्तिः । सत्यपदेनाचेतनानां बद्धचेतनानाञ्च व्यावृत्तिः । ज्ञानपदं कथं ज्ञानवदित्यर्थकमिति चेत्—अत्र ज्ञानशब्दस्यान्तोदात्तत्वेनैवाध्ययनात् तस्य च स्वरस्य अर्शआद्यजन्तत्व निबन्धनत्वात् ज्ञानविशिष्टमित्यर्थ एव स्वरस इति । स्वरराहित्यस्थल इवात्रापि ज्ञानत्वं स्वयंप्रकाशत्वमित्यर्थ-वर्णनं तु, 'व्यत्ययो बहुलम्' इतीदमनुसृत्य स्वरव्यत्ययकल्पनया । तदाह स्वरबहुलतया स्वप्रकाशत्वतश्चेति। ज्ञातृत्वात् ज्ञानशब्दवाच्यता; स्वयंप्रकाशत्वाच्च । द्वितीयार्थस्वीकारश्चेह स्वरस्तदर्थं विना समापतित इति स्वीकारेणेति । चकारो वाकारार्थे । एकदाऽर्थद्वयविवक्षणायोगात् । अथवा ज्ञानत्वं स्वयंप्रकाशत्वम् । तस्य स्वाश्रयत्वस्वाश्रयाश्रयत्वोभयसंबन्धेन धर्मिण्यन्वयकल्पनया युगपदेव स्वप्रकाशत्वस्वप्रकाशज्ञाना-श्रयत्वोभयभानोपपत्तिरिति टीकानुरोधी निर्वाहः। तदाऽत्र चकारार्थः समुच्चयः। भाष्येऽत्र ज्ञानवत्त्वमात्रो-क्तिस्तु जडानां विधान्तरेण वारितत्वात् मुक्तव्यावृत्तेरेवापेक्षितत्वात् । शंकितदोषपरिहारकत्वात् वाक्यस्य कारणत्वे जडत्वापत्तिरित्यापादनानवकाशात् तस्य दोषत्वासंप्रतिपत्तेश्चेति विमृश्यम् । अनन्तमिति पद स्यार्थमाह त्रीति । तिस्रः द्वे एका चेति त्रिद्व्येकाः । तादृशीभिः परिच्छित्तिभिः प्रमितं परिच्छिन्नं भवति इह जगति सर्वम्। तिस्रः परिच्छित्तयः—देशपरिच्छेदः कालपरिच्छेदो वस्तुपरिच्छेदश्च । महदादिकं कार्यं सर्वं परिच्छेदत्रयवत्; प्रकृतिपुरुषादिकं कालपरिच्छेदरहितं देशवस्तूभयपरिच्छिन्नम् । नित्यमुक्तज्ञानादेर्नित्य व्यापिनः कालदेशपरिच्छेदौ न स्तः; वस्तुपरिच्छेदमात्रम् ॥ यथा कालपरिच्छेददेशपरिच्छेदौ किञ्चित्काल-मात्रकिञ्चिद्देशमात्रविशिष्टस्वरूपौ, तथा वस्तुपरिच्छेदोऽपि किञ्चिद्वस्तुमात्रविशिष्टस्वरूपः स्वेतरसर्ववस्तु-

सति केवलमनन्तर्यामित्वेन वस्तुपरिच्छिन्नत्वात्। ब्रह्मण आनन्त्यमप्याह—तस्येति। तिसृभिः परिच्छित्तिभिरयोगात् परब्रह्मण आनन्त्यमिति। 'सदा निर्मलानन्दधाम्नः' इति वचनमानन्दस्य ब्रह्मगुणेषु प्राधान्यप्रख्यापनार्थम् (?)॥ ३३५॥

(३३६) उक्तं जन्मादिसूत्रे ननु निखिलजगद्धेतुता ब्रह्मलक्ष्म
स्यात् तेनैव स्वरूपावगतिरिह मुधा सत्यतादीति चेन्न।
हेतोरीशस्य हेत्वन्तरगतविविधावद्यवर्गप्रसक्ते
शङ्कारूढे क्रमेणेतरविभजनतस्तस्य साफल्यसिद्धेः॥ १६॥

ननु जन्मादिसूत्र एव ब्रह्मणो लक्षणमुक्तम्। तच्च लक्षणं लक्षणत्वादेव समानासमानजातीयव्यावर्तकम्, (समानजातीयव्यावर्तकमसमानजातीयावर्तकञ्चेत्यर्थः।) अतस्तेनैव लक्षणेनालम्; किमर्थमिदं स्वरूपलक्षणमिति सत्यत्वादिकमुच्यत इत्याशङ्क्य प्रयोजनविशेषाभिधानेन परिहरति—उक्तमिति। अयमत्र शब्दान्वयः—जन्मादिसूत्र एव निखिलजगद्धेतुता ब्रह्मलक्ष्मेत्युक्तम्। नन्विति चोद्यं द्योतयति। तेनैव स्वरूपावगतिः स्यात्। सत्यत्वादिकमत्र निरर्थकमेव। सत्यादिशब्देन तदेव ब्रह्मोच्यते चेत्—पौनरुक्त्यम्। अन्यच्चेत्—तर्हि ब्रह्म न स्यात्। न हि ब्रह्मद्वितयमस्ति। लक्षणान्तरं चेत्—कृतकरत्वादेव नैरर्थक्यम्। प्रयोजनविशेषोऽस्ति चेत्—तत् किमिति विशदं प्रकाशयेति पराभिप्रायः। तदेव परिहरति—नेति। तदेव विवृणोति—हेतोरिति। ईश्वरस्य जगत्कारणत्वे प्रतिपन्ने कारणत्वाशङ्कितदोषपरिहारार्थं सत्यत्वादिकमभिधीयत इति प्रतिपन्नब्रह्मस्वरूपपरिशोधनार्थं सत्यत्वादिकमभिधीयत इति भाष्यकारैरेव प्रागेवोक्तम्। अचित्संसृष्टजीवमुक्तनित्यानामनुक्रमेण व्यवच्छेदात् तेन रूपैर्विलक्षणत्वेन [प्रतिपन्न] ब्रह्मस्वरूपपरिशोधनार्थं सत्यादिवाक्यमपीति न नैरर्थक्यप्रसङ्गः। किञ्चास्मत्पक्षे ब्रह्मणि नानागुणोपादानमुपासनार्थम्, अथवा फलदशायामनुसन्धानार्थमिति सर्वसाफल्यसिद्धिः। अयमन्वारोहः; स्वरूपनिरूपकधर्मत्वात् स्वरूप-

---

विशिष्टत्वाभावः। सर्वान्तरात्मन्येव सर्वविशिष्टत्वसंभवात् देशकालपरिच्छेदराहित्याच्चानन्तशब्दवाच्यत्वम्। तदाह **तस्येति**। तस्य ब्रह्मणः तिसृभिरपि परिच्छित्तिभिर्वियोगात् आनन्त्यं भवति। **निर्मलानन्दधाम्न** इति अमलत्वानन्दित्वस्वरूपस्वरूपनिरूपकधर्मान्तरद्वयसद्भावज्ञापनाय। आनन्दत्वं वा आनन्दित्वं वा कतरः स्वरूपनिरूपकधर्म इति उपरि चिन्तयिष्यते। अत्र धामपदप्रयोगात् आनन्दमयत्वमेव स्वाभिमतमिति ज्ञाप्यते। तथाच **आनन्दादय** इति सौत्रपदेन सत्यत्वज्ञानत्वानन्तत्वानन्दत्वामलत्वरूपधर्मपञ्चकम् अभिमतमिति सिद्धम्। अमलत्वं विशिष्याक्षरध्यधिकरणेन स्थापयिष्यते च॥ ३३५॥

१६. पूर्वश्लोके **विश्वहेतौ** इति पदप्रयोगेण सूचितमर्थं स्वयमेव विशदयति **उक्तमिति**। **हेतोरिति**। लक्षणतः इतरव्यावृत्तत्वेन ब्रह्म ज्ञायत एव सर्वैरप्युपासकैः। लक्षणमन्तरा दुःशकञ्च ब्रह्म ज्ञातुम्। तेन स्वरूपावगतिः सिद्धेति **इह** आनन्दादय इति सूत्रे उच्यमानं सत्यत्वादिकं व्यर्थमिति॥ उच्यते। चिदचिद्वस्तुभिन्नत्वं यद्यपि लक्षणतो ब्रह्मणि ज्ञातम्, तथाऽपि चिदचिद्विजातीयत्वं न ज्ञायेत। तद्भिन्नत्वेऽपि तद्वत् विकारादिदोषवत्त्वसंभवात्। शोधकवाक्यं तु तद्वैजात्यमपि दर्शयतीति भावः। **क्रमेण**=बद्धमुक्तनित्यक्रमेण **इतरविभजनतः** चिदचिद्वैजात्यज्ञापनेन तस्य सत्यतादेः साफल्यमिति। **चिन्तामणौ अयमन्वारोह** इत्यादेरयं भावः-प्रथमतः सत्यपदात् निरुपाधिकसदित्यर्थः प्रतीयते।

प्रतिपत्त्यर्थमेवेति तत्त्वम् ॥ ३३६ ॥

(३३७) नन्वाध्यानं प्रियाद्यैरपि भवति शिरःपक्षपुच्छादिरूपैः ;
बाढं तत्र प्रियाद्यैस्तदवगतिरतस्ते तु सर्वानुवृत्ताः ।
पुच्छत्वंशो निरंशे न भवति ; न च तद्दृष्टिरुत्कृष्टतत्त्वे
तस्मात् चित्याग्निरूपकमवदिह कृतं रूपणं ब्रह्मणि स्यात् ॥ १७ ॥

ननु ब्रह्मध्यानार्थं सत्यत्वादि अनुसन्धेयमित्युक्तं भवता, तर्हि ब्रह्मानुध्यानं प्रियशिरस्त्वाद्यनुसन्धानेनापि सिध्यतीत्याशङ्क्य वैषम्यं दर्शयति—नन्विति । अयमत्र शब्दार्थः—ब्रह्मानुध्यानं, 'तस्य प्रियमेव शिरः' इत्यादिभिरपि सिध्यतीति । प्रियशिरस्त्वादीनामपि ब्रह्मणि नियमेनानुसन्धानं स्यादित्याशङ्क्य तत्रार्धाङ्गीकारमाह—बाढमिति । अयमर्थः—त्वदुक्ते किञ्चिदङ्गीक्रियते ; किञ्चिच्च न । प्रियादीनां परमानन्दरूपब्रह्मान्तर्भावादङ्गीकारः, पक्षादीनां परिकल्पनामात्रत्वादनङ्गीकारश्च । तेन प्रियादीनामपि ब्रह्मस्वरूपावगतिहेतुत्वात् ते प्रियादयो गुणाः सर्वानुवृत्ताः । प्रियाद्यैस्तदवगतिः= प्रियमोदप्रमोदादिभिर्ब्रह्मस्वरूपावगतिरित्यर्थः । तर्हि पुच्छत्वादिकमपि 'ब्रह्म पुच्छं प्रतिष्ठा' इत्यादिभि-

---

सत्त्वोत्कर्ष एव स्वरूपनिरूपकधर्मः । कारणत्वग्रहे सविकारत्वशङ्कावसरे च स एव धर्मः सविकारवैलक्षण्यरूपेण विमृश्यत इति । अथवा अयमित्यस्य किञ्चेत्यादिस्वग्रन्थाशिरेवार्थः ॥ ३३६ ॥

१७. द्वितीयचतुर्थादिसूत्रार्थं संगृह्णन्, 'प्रियशिरस्त्वाद्यप्राप्तिः' इत्युक्त्या प्रियमोदादीनामनुपास्यत्वमिष्टमिति भ्रमं वारयति नन्विति । आध्यानम् उपासनं, 'ब्रह्मविदाप्नोति' इति वचाय विहितमिति, 'आध्यानाय प्रयोजनाभावात्' इति सूत्रभाष्ये व्यक्तम् । आनन्दत्वात् प्रियमोदादीनाम्, तेषामेव शिरःप्रभृत्यवयवत्वोक्त्या च ब्रह्मानन्दोपासने सर्वत्र सति शिरःपक्षादिरूपप्रियमोदादिकमप्युपास्येतेति शंका । अर्धाङ्गीकारेण प्रतिवक्ति बाढमिति । आनन्दोपासनं प्रियाद्युपासनमेव । 'आनन्दमयप्रतिपत्त्यर्थमानन्दमयं ब्रह्म प्रियमोदादिरूपेण विभज्यते' इति भाषितत्वात् प्रियाद्यैस्तदवगतिर्भवति । अतः ते=प्रियमोदादयः सर्वानुवृत्ताः स्वरूपनिरूपकनिविष्टत्वात् सर्वविद्यानुयायिनः, उपास्याश्च । परंतु शिरःपक्षादिरूपेणोपासनं न भवति । कुत इति चेत्—किं वस्तुगत्या शिरःपक्षादिमदेव ब्रह्मेत्याशयः, किं वा प्रियादौ शिरस्त्वादिदृष्टिः, आहो विशदावगतये रूपणमात्रम् ? नाऽऽद्यः ; ब्रह्मणो वा गुणस्य वा निरवयवत्वात् शिरआदेरप्रसक्तेः । सांशत्वे दोषश्च दर्शितः सूत्रे, 'उपचयापचयौ हि भेदे' इति । तदर्थस्तत्रैव द्रष्टव्यः । न द्वितीयः ; 'मनो ब्रह्मेत्युपासीत' इत्यादिवत् क्वचनेतरविषयदृष्टिविधिर्भवेऽपि ब्रह्मांशभूतप्रियादीनामत्युत्कृष्टत्वात् तत्र शिरस्त्वादिना निकृष्टदृष्टिविधानायोगात् । ततस्तृतीयपक्ष एव शिष्यते । वैशद्याय तथा रूपणेऽपि उपासनकाले रूपणमुखविशदावगतप्रियादिमात्रं ग्राह्यम् । तथाच प्रियशिरस्त्वाद्यप्राप्तिरित्यस्य प्रियशिरस्कत्वाद्यप्राप्तिरित्यर्थात् प्रियाद्यप्यनुपास्यमित्यर्थो मा भूत् । शिरआद्यप्राप्तिरेवेष्टा । यदि तु प्रियादिषु शिरस्त्वाद्यप्राप्तिरित्यर्थ उच्यते, तदा प्रियाद्यप्राप्तिरुक्तेति दोषस्य न प्रसक्तिः । रूपणे किञ्चित् दृष्टान्तयति चित्येति । अस्य वक्ष्यमाणपूर्वविकल्पाधिकरणनिबन्धनत्वाद्यर्थ-

रधीतमनुपन्धेयं स्यादित्याशङ्क्य असम्भवाचे-याह-पुच्छाद्यंश इति । असम्भवमेवाह—निरंश इति । निरंशे ब्रह्मणि पुच्छाद्यंशो न भवतीत्यन्वयः । तर्हि ब्रह्मणि पुच्छत्वदृष्टिः स्यात्, दृष्टिविधौ ह्यविद्य मानस्य दर्शनं भूषणमेव स्यादित्याशङ्क्य परिहरति-न चेति । अपकृष्टे ह्युत्कृष्टदृष्टिविधानं दृष्टिविधिः । यथा, 'मनो ब्रह्मेत्युपासीत' इत्यादौ । इह पुनर्ब्रह्मणि पुच्छत्वादिदृष्ट्यभ्युपगमे, विपरीतमेव स्यात् । उत्कृष्टब्रह्मणि अपकृष्टपुच्छत्वादिदृष्टिविधेरयोगात् । तर्हि, 'तस्य प्रियमेव शिरः' इत्यादेः कथमिह परिकल्पनमित्याशङ्कायां तत्परिकल्पने निर्वाहमाह—तस्मादिति । एवं प्रियशिरस्त्वादीनां बुद्ध्यारोहार्थत्वोपपादनात् उत्तरत्राभिधीयमानचित्याग्निरूप(श्येन)क्रमवदिह परस्मिन् ब्रह्मणि शिरः-प्रभृतिपरिकल्पनं समुचितमेव ॥ ३३७ ॥

(३३८) आनन्दत्वप्रधानं कतिचिदिह विदुः सौत्रमानन्दशब्दं
धर्मानन्दाभिधानं तदुभयवचनं वेति पश्यन्ति केचित् ।
ज्ञानोक्तौ चैतदेवं(चैवमेतत्) ; तदितरसमता यावता स्वाभ्युपेया(?)
तावद्धर्मानुवृत्तिर्बहुभजनपदे ब्रह्मणि स्थाप्यतेऽत्र ॥ १८ ॥

इत्यानन्दाद्यधिकरणम् ॥ ८६ ॥

अत्र आनन्दादिशब्दानामर्थभेदं पक्षभेदेनोक्त्वा भाष्यकाराभिमतप्रकारेण स्वी(स्व)यमर्थं निगमयति–आनन्दत्वेति । केचिदत्र सौत्रमानन्दशब्दं स्वरूपस्य आनन्दरूपत्व(स्वरूपानन्दत्व)प्रधानं वर्णयन्ति। अपरे पुनः धर्मानन्दाभिधानमाहुः। 'तद्गुणसारत्वात्' इति न्यायेनानन्दित्वमेवानन्दशब्दः प्रा-

मदाद्यार्थं वर्णयन्ति । तत्र मनश्रद्धादिषु व्यापारविशेषेषु धर्मित्वदृष्टिरेव क्रियते ; न स्वधर्मः किञ्चित् रूपमुच्यते । दृष्टिपक्षं निराकृत्य रूपणपक्षमादृत्य वचनावसरे दृष्टविषयाग्नेर्दृष्टान्तत्वकथनम् न घटते । अत एव, 'असौ वाव लोकोऽग्निश्चितः' इति तत्रत्यवाक्यान्तरप्रतिपाद्यं चिताग्निसंबन्धि किञ्चिदिह ग्राह्यमित्यपि न भवति । तत्रापि दृष्टिविधेरेवेष्टत्वात् । तत्र रूपणांशमात्रमादाय दृष्टान्ततेत्यपि न स्वरसम् । अतो वैतानिकाग्निविषये सेश्वरमीमांसायां 1-2-46, 'अभिधानेऽर्थवादः' इति सूत्रे शाबरभाष्यादि-विवक्षिततयोक्तम्, 'चत्वारि शृङ्गा त्रयोऽस्य पादाः' इत्यादिरूपणमभिमतं स्यात्। यद्वा, 'श्येनचितं चिन्वीत' इति अग्नौ श्येनादिशिरःपक्षपुच्छकल्पनवत् स्फुटत्वादेवेदं रूपणम् । चित्याग्नेः स्थण्डिलस्य रूपे प्राणप्रभृत-शीर्षादिशब्दमुख्यार्थरूपणवत् इहापि रूपणमित्यर्थः स्यादिति विमृश्यते । चीयमानेऽग्नौ चित्यशब्दो निपातितः । अस्तु तावत्, यत् युक्तम् । अत्र श्लोके प्रियादेः मयट्प्रकृत्यर्थस्य सर्वविद्यानुवृत्तेरुक्ततया आनन्दमयत्वविशिष्टं ब्रह्म सर्वानुगतमिति, आनन्दादय इति सूत्रे आनन्दपदे एतावद्विवक्षेति च सिध्यति । तर्हि एतद्विद्यावेद्यस्य सर्वस्य सर्वसाधारणत्वे इयं पृथग्विद्या न स्यादिति चेत्— जीवमुख्यप्राणसूत्रे, 'तदनुप्रविश्य सच्च त्यच्चाभवत्' इत्याद्युदाहरणेन सदसच्छरीरकत्वोपासनस्यापि भाषिततया तस्यैतदसाधारणत्वात् । एवमन्नमयादिनिरूपितात्मत्वादिकमपि ग्राह्यम् ॥ ३३७ ॥

१८. 'सत्यं ज्ञानमनन्तं ब्रह्म, आनन्दो ब्रह्म' इति स्वरूपनिरूपकवाक्ये ज्ञानानन्द-पदयोरर्थविषये सिद्धान्तिनामभिप्रायमेदं दर्शयति आनन्दत्वेति । कतिचित् सिद्धान्तिष्वेव केचित्, इहाधिकरणे 'आनन्दादयः प्रधानस्य'' इति सूत्रे आनन्दशब्द आनन्दत्वपरः, "गुणाः सत्यज्ञान-

ह्येति। तथा तृतीयं पक्षमाह—तदुभयवचनमिति। आनन्दित्वमानन्दत्वञ्चोभयमपि आनन्दशब्दः कथयतीति। अत्र पक्षद्वयमपि विकल्पेनैककोटित्वेनोपात्तम्। अयमर्थः—आनन्दत्वमेवोच्यत इत्येके। अपरे आनन्दित्वमेव, यद्वोभयमपीत्याहुः। यद्वा केचिच्छ[1]ब्दावृत्त्या पक्षत्रयमपि त्रयाणां पक्ष इति पृथक्पृथक् पक्षत्वेन वाच्यम्। अत्रानन्दशब्दोक्तमर्यादां ज्ञानशब्देऽप्यतिदिशति—ज्ञानोक्ताविति। ज्ञानत्वं ज्ञानित्वं तदुभयं वा ज्ञानशब्देनोच्यत इति। एवं पक्षभेदान् उक्त्वा भाष्यकाराभिप्रेतं पक्षं वैशद्याय दर्शयति—तदितरसमतेति। अयमर्थः—ब्रह्मस्वरूपप्रतिपत्तिवेलायां ब्रह्मव्यतिरिक्तार्थसाम्यशङ्का यावता विशेषणेन न स्यात्, तावद्धर्मानुवृत्तिः=तावद्विशेषणानि बहुभजनपदे=सर्वब्रह्मविद्यावेद्ये परस्मिन् ब्रह्मणि अनुसन्धेयानीति अत्र स्थाप्यते। तानि च सत्यत्वज्ञानत्वानन्तत्वानन्दत्वामलत्वानि अनुक्रमेणोपयुक्ततया भाष्य एव स्थापितानीति तत्रैव विस्तरेण द्रष्टव्यम्॥ ३३८॥

इत्यानन्दाद्यधिकरणम् ॥८६॥

---

प्रभृतय" इति श्रीकूरेशसूक्तौ सत्यादिशब्द इव। स्वरूपस्यापि आनन्दत्वेन तद् विहाय गुणभूतानन्दोक्त्ययोगादिति विदुः। केचित्=अन्ये तु स्वायत्ते शब्दप्रयोगे इह भावप्रधाननिर्देशस्यायुक्तत्वात, 'कं ब्रह्म' इत्यत्र, 'सुखविशिष्टाभिधानादेव च' इति गुणभूतानन्दस्यैव सूत्रदर्शितत्वात् आनन्दमयपदस्थान एव श्रुताविह, आनन्दो ब्रह्मेति व्यजानात्' इति आनन्दपदस्य प्रयुक्तत्वात्, विशिष्यास्ऽऽनन्दमीमांसाया वर्तितत्वात्, 'आनन्दं ब्रह्मणो विद्वान्' इति वाक्याच्च धर्मभूतानन्दस्यैवाभिधानमत्र। यदि स्वरूपानन्दत्वमपि वक्तव्यं स्थिरत्वादित्याग्रह, तर्हि कामं स्वप्रकाशानुकूल्यं आनन्दपदप्रवृत्तिनिमित्तम्। तस्य स्वाश्रयत्व-स्वाश्रयाश्रयत्वोभयसंबन्धेनान्वय इति विमृशन्ति। ज्ञानोक्तौ ज्ञानशब्देऽप्येवमेव सिद्धान्तिनामाशयभेदः। अथ स्वपक्षमाह तदितरेति। भाष्ये सत्यादिपदार्थनिरूपणावसरे शोधकवाक्यस्यास्य चिदचिदशेषवस्तुवैलक्षण्यपरतयाऽर्थो वर्णितः। 'आनन्दो ब्रह्मेति व्यजानात्' इत्यत्रापि अन्नप्राणमन-प्रभृत्यचेतनचेतनवैलक्षण्येनाऽऽनन्दग्रहणेनैव भृगुणा जगत्कारणव्यक्त्यवधारणं कृतम्। स्वरूपभूतानन्दत्वं सर्वजीवसाधारणम्। श्रुतौ च मनुष्याद्यानन्दक्रमेणातिशयितगुणभूतानन्दपादायैव व्यावृत्तिः क्रियते। अनुकूलतया भासमानस्वरूपस्यापि परमात्मनो जीवानामिव गुणभूतदुःखास्पदता यदि स्यात्, कथं स विलक्षणः स्यात्। स्वरूपानन्दत्वं तु हेम्नः आमोद इवानिश्चयमानम्। अतो धर्मभूतानन्दोऽवश्यग्राह्यः। तेन जीवपमता वार्यते। स्वाश्रयत्वस्वाश्रयाश्रयत्वरूपसंबन्धमध्ये सर्वजीवातिशायिनिरतिशयानन्दव्यक्तिरूपगुणस्यैव भानमित्यस्य दुर्वचतया व्यावृत्तवस्तुलाभो न भवति। ज्ञानपदे च भाष्ये व्यावृत्तिलम्भनाय गुणभूतज्ञानमेवोक्तम्। अतो गुणमात्रग्रहणं पर्याप्तमिति। एवमेव श्लोकाशयः पूर्वश्लोके प्रियादीनां सर्वानुवृत्तत्वकथनादपि ज्ञायते। यावतेति। घटज्ञानपटज्ञान.तदानन्दैतद नन्देति रीत्या विशेषग्रहणे निरूपितस्वरूपविशेषणता स्यादिति तद्वारणमिष्यते। परतु स्वरूपस्वयंप्रकाशत्व स्वरूपानुकूल्ययोरेव ज्ञानत्वानन्दत्वरूपस्वरूपनिरूपकतया प्रचुरप्रसिद्धिः। बहुभजनपदे इत्यनेन सर्वविद्यानुवृत्तिरस्य धर्मस्य ज्ञाप्यते॥ ३३८॥

---

1. केचिच्छब्देति। केचिदिति शब्दमावर्त्य, 'धर्मानन्दाभिधानम्' इति केचित् पश्यन्ति, तदुभयवचनमिति अन्ये केचित् पश्यन्तीति योजनायेति भाव।

## ८७ ॥ अथ कार्याख्यानाधिकरणम् ॥ ३-३-५ ॥

सूत्रम्—कार्याख्यानादपूर्वम् ॥ १८ ॥

(३३९) आचामेदित्यपूर्वाचमनमिह विधेः प्राणविद्यावतः स्यात् ;
मैवं ; स्मृत्यादिसिद्धेः परमनुविहिता प्राणवासस्त्वदृष्टिः ।
भुञ्जीतेत्यादिनीत्या विधिरपि घटते प्राप्तधात्वर्थनिष्ठः ;
प्रागुक्ता प्राणविद्या तदिदमवसरे चिन्तितं त्वङ्गमस्याः ॥ १९ ॥

पूर्वप्रस्तुतावशिष्टतया सङ्गतिर्भाव्या । तदर्थविचारस्तु—छान्दोग्यवाजसनेयकवाक्ययोः प्राणवासोदृष्टिपरत्वमाचमनीयास्वप्सु प्रतीयते, नेति । अत्र पूर्वपक्षमाह—आचामेदिति । भाष्ये वाक्यार्थस्य विस्तृतत्वात् शब्दान्वयमात्रप्रदर्शनमत्र क्रियते । अत्राचामेदि(त्ये)ति विधिश्रवणात्, विधेश्च 'अप्राप्ते शास्त्रमर्थवत्' इति न्यायेनापूर्वार्थे तात्पर्यात् स्मृत्याचारप्राप्ताचमनव्यतिरिक्तमाचमनान्तरं विधीयत इति । तमिमं पक्षं प्रतिक्षिपति—मैवमिति । प्रतिक्षेपप्रकारमाह—स्मृत्यादीति । भोजनाङ्गस्याचमनस्य स्मृत्यादिसिद्धत्वात् प्राणवासस्त्वानुसन्धानमपूर्वमेवात्र विधीयते । तेनापूर्वार्थविशेषविधानादस्मिन् पक्षे न विधिभङ्गः। तर्ह्यपूर्वाचमनविधानाभावे पूर्वस्य तस्याचमनस्य सिद्धत्वात् आचामेदिति कथं विधिश्रवणमित्याशङ्क्याह—भुञ्जीतेति । यथा, 'स्नात्वा भुञ्जीत' इत्यत्र प्राप्ते भोजने विधिः श्रूयते, अथापि विधिरप्राप्तस्नानविधानपर एव-एवमत्राप्याचामेदिति पूर्वप्राप्ताचमने विधिः श्रूयतां नाम, अथाप्यप्राप्तप्राणवासस्त्वानुसन्धान एव विधिर्भवेत् । अतो न शब्दान्वयविरोधः।

---

१९. अपूर्वाधिकरणोपन्यस्तायां प्राणविद्यायाम् अशनपूर्वापरकालयोराचमनम्, आचान्तानामपां प्राणवासस्त्वञ्चोक्तम् । तत्र किमाचमनविधिः किंवा अपां प्राणवासस्त्वानुसंधानविधिरिति चिन्तायाम्, आचमनविधिरिति पूर्वपक्षः, वासस्त्वानुसंधानविधिरिति सिद्धान्तः । तौ पूर्वोत्तरपक्षावाह आचामेदिति । 'तस्मादेवंविदशिष्यन् आचामेत्, अशित्वा चाऽऽचामेत्'इति वाक्ययोः विधेःम् आचमनरूपधात्वर्थे विधिदर्शनात् आचमनमेव विधेयम् । नन्वपूर्वत्वे हि विधेयता । अशनसंबन्ध्याचमनं तु स्मृत्याचारप्राप्तमेवेति चेत्-तत्राह प्राणविद्यावत इति, अपूर्वेति च । सर्वसाधारण्येन प्राप्तमाचमनं न प्राणविद्यांगं भवति । अतः प्राणविद्यांगतया विधीयते । तत्फलश्चाऽऽचमनाननुष्ठाने प्राणविद्यावैकल्यम्, करणे साद्गुण्यमिति । इदमसाधारणमाचमनं साधारणाचमनेन सह तन्त्रेणानुष्ठीयताम्; अथवा विशेषरूपस्यास्यानुष्ठानत एव प्राणविदः प्रासङ्गिकोपकारलाभात् स्मृत्याचारप्राप्तस्याननुष्ठानं भवतु । वासस्त्वानुसंधानविधिस्तु न ; प्रायः श्रुताविह अनुसंधानवाचकपदाभावादिति पूर्वपक्षः । निरस्यति मैवमिति । स्मृत्यादीति आदिना आचारग्रहः । प्राणविद्यामध्ये आचमनविधानस्य सर्वसाधारणस्मृत्याचारप्राप्ताचमनमूलत्वायोगात् तत एव प्राणविदोऽपि प्राप्ते आचमने अब्वासस्त्वानुसंधानस्यैवात्यन्ताप्राप्तस्य विध्यौचित्यात् तदनुसृत्य प्राणवासस्त्वदृष्टिः परमप्सु विहिता भवति, लाघवादिति । आचामेदिति हि आचमने विधिश्रवणमित्यत्राह भुञ्जीतेति । 'स्नात्वा भुञ्जीत' इत्यादौ भोजने विधिश्रवणेऽपि यथा स्नाने विधिसंक्रम इष्यते, धात्वर्थस्य भोजनस्य विधानमन्तरेव प्राप्तत्वात् । तथा प्राप्तधात्वार्थनिष्ठः=स्मृतिप्राप्ताचमनोत्तरश्रुतो विधिरपि, 'एवंविदाचा-

अन्यत्र स्थितस्य विधिश्रवणस्य उपक्रमोपसंहारादिनात्पर्यलिङ्गगतार्थेनान्यत्रान्वयेन नि ि: ानित्र-काणां सम्पत एवेति तथैवात्र स्यात्। प्राप्तधात्वर्थनिष्ठ इति पूर्वेप्र प्राच्य ानमु यते। श्र ाण नत्रास्तु, तथापि तात्पर्यमन्यत्रेत्यर्थः। अत्राप्युपक्रमोपसंहारादिप्रगम्र्शेन वाक्यस्य प्राण ा नस्त्रानुसन्धान-विधानपरत्वं भाष्य एव विवृतमिति विस्तरभयानुपगम्यते। ननु प्राणवि्य पूर्वमप्युक्ता; किमर्थ-मिदानीमप्युच्यत इति बालिशचोद्ये परिहारमाह—प्राणिति। पूर्वं प्राणवि्य ां मे ा मेशचिन्ता कृता, इदानीं प्राणविद्या ानात्र मनीयानामपां प्राण ासस्त ानु न्ध्या रू ा ं चिन्त्या इत्यधि-करणभेदोपपत्तिः ॥ ३३९ ॥

(३४०) आदावन्ते च वासःपरिधिरभिहितो मन्यतिश्चात्र दृष्टै
सा चाऽऽराध्यप्रियार्था ; स्तुतिरिह न भवेत् गत्यलाभा(भावा)भिनन्द्या।
युक्तश्चापूर्वभावात् परिदधतिगिरा तद्विधानाभिनन्द्यः
प्राणश्चाऽऽराधनीयः परिहितवसनो युज्यते सद्भिरद्भिः ॥ २० ॥

इति कार्याख्यानाधिकरणम् ॥ ८७ ॥

एवमुक्तेऽप्यधिकरणार्थे शिष्याणां वैशद्याय उक्तान् अनुक्तांश्च हेतुविशेषान् संगृह्य कथयति—आदाविति। उपक्रमोपसंहारयोर्वासःपरिधानाभिधानमित्येको हेतुः। अपरमपि हेतुमाह—मन्यतिरिति। 'मन्यन्ते' इति मन्यतिशब्दप्रयोगो दृष्टिविध्यर्थ एव। ननु प्राणवासस्त्वमस्तु, अनेन किं प्रयोजनमित्याशङ्क्य प्रयोजनमाह—सा च आराध्यप्रियार्थेति। अयमर्थः—विहितायाः क्रियायाः योग्यमेव प्रयोजनं कल्प्यम्। यथा विहिताया आचमनक्रियायाः प्रयोजनमाराध्यप्रीतिः, एवं प्राणवास-

मेत्', तद्विद्वांसः श्रोत्रिया........आचमन्ति' इति वाक्यद्वयोर्विशेषणतया श्रुते वेदने सक्रमति। अपां वासस्त्वमिति वेदनेन सहाचामेत्, तथा विद्यादिति यावत्। अस्य विचारस्य संगतिः कैत्यस्य, अनन्तर-श्लोकेनान्यां वक्ष्यन् भाष्ये कण्ठोक्तां संगतिं पूर्वमनुकृत्वा श्लोकान्ते दर्शयति प्राणेति। तर्हि आनन्दा-द्यधिकरणात् प्रागेवेदं चिन्तनं युक्तमित्यत्रोक्तम् अवसर इति। न खल्वेकविषये वक्तव्यं सर्वमुक्त्वा तत एवान्यत् प्रस्तोतव्यमिति अन्यादृशग्रन्थशैली मीमांसायामनुसर्तव्या। पूर्वमवस्थितो वाऽन्यस्य वा संगतिविशेषेण जिज्ञासोरुपस्थितस्य विषये शंकोच्छेदनमेवैतत्कृत्यम्। अतो मध्ये विषयान्तरनिवेशः सहजः। अत इह मध्ये आनन्दवल्लीविषयजिज्ञासायाः प्राप्तत्वादस्यावसरो नासीत। अथ प्रियशिरस्त्वादिप्रस्तावे अद्वासस्त्वमपि तत्तुल्यतया गृहीतं प्राप्तशंकावकाशमासीदिति सम्प्रत्ययेऽवसर इति ॥ ३३०. ॥

२०. इदमेव सिद्धान्तविशदीकरणव्याजेन व्यक्तीकरोति आदाविति। छान्दोग्ये 'किं मे वासः' इत्युपक्रमः, 'अद्भिः परिदधति' इत्युपसंहारः। बृहदारण्यके, 'आपो वासः' इत्युपक्रमः, 'एतमेव तदनमनग्नं कुरुते' इत्युपसंहारः। अतः आदावन्ते च=उपक्रमे उपसंहारे च परिधानं श्रु म । पूर्वपक्ष इहैवं प्राप्तः—यथा प्रियशिरस्त्वादिकं नोपास्यगुणः, वस्तुतस्तस्य ब्रह्मण्यभावात्। उक्तरीत्या शिरस्त्वादेः विषयवैशद्यार्थकृतरूपणमात्रत्वात्— तथा अद्वासस्त्वमपि न वास्तवम्। न च धारणाकर्षणानहाणामपां वासस्त्वं संभवति। अतः, 'आपोमयः प्राणः' इत्याद्यनुसारेण वासस्त्वरूपणमात्रम्। 'अपो वास इत्युपासीत' इति उपासनविधिनैव श्रूयते। एवंवित् इति, विद्वांसः इति च पदं तु प्राणविद्यानिष्ठार्थकम्; न वासस्त्वानु-

स्वानुसन्धानस्यापि प्रयोजनमाराध्यप्रीतिरेव। सा च मन्यतिः(दृष्टिः? मतिः?) आराध्यप्रियार्थत्वन्वयश्च ननु प्राणवासस्त्वानुसन्धानवचनं स्तोत्रमेव किं न स्यादित्याशङ्क्य प्रतिक्षिपति—स्तुतिरिति। गत्यभावे हि स्तुतिरभिनन्द्या। अत्रापूर्वार्थविधानेन गतिसम्भवे सति स्तुतिर्न कल्प्येत्यर्थः। अन्यत्र च, 'अद्भिः परिदधति' इति परिधानरूपापूर्वार्थस्य विशेषतः प्रतिपादनात् प्राणवासस्त्वानुसंबन्धानविधिर्युक्त एव। किञ्च प्राणोऽत्राऽऽराधनीयत्वेन प्रतिपाद्यते। आराधनीयस्य च देवताविशेषस्याद्भिः परिधानवचनमाराधनाङ्गत्वात् युज्यत एव। यथा लोके वस्त्रप्रदानं (वासःपरिधानं) देवताराधनाङ्गम्, तद्वदिहापीति भाव्यम्॥ ३४०॥ इति कार्याख्यानाधिकरणम्॥

## ८८॥ अथ समानाधिकरणम्॥ ३-३-६॥

सूत्रम्— समान एवञ्चाभेदात्॥ १९॥

(३४१) स्यानद्वन्द्वे वशित्वप्रभृतिविरहिता वाजिभिस्तद्युता चा-
म्नीता शाण्डिल्यविद्या; तदिह भिदुरता कल्पनीयेति चेन्न।
आरण्योक्त वशित्वाद्यपि खलु विततिः सत्यसङ्कल्पतायाः
साऽग्नीनाऽग्नेरहस्येऽप्यधिकविरहतो नात्र विद्यैक्यबाधः॥ २१॥

---

संधानार्थकम्। आचामन्ति परिदधति आचामेदित्येतदर्थ एव पर्यवसानम्, न तु विद्यादिरर्थे यत्तु माध्यन्दिने वचनम्, 'एतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते' इति मन्यतिपदघटितम्, तदपि प्राणमुपासते इत्यर्थकमपि भवितुमर्हति। अतो वागादिषु श्रैष्ठ्यं प्राप्तस्य प्राणस्य तत्कृतस्तुतिमात्रमिदमिति प्राणमात्रवेदनमेव कार्यमिति। तत्र समाधिः—परिधिर्हि परिधानं हि उपक्रमे उपसंहारे च; नाचमनम्। अतस्तत्र न वाक्यतात्पर्यम्। एकत्र मन्यन्त इति श्रवणेन अद्भिरनग्नकारित्वमननावगमात् सर्वत्र तद्विवक्षा युज्यते। न च तदुपासनरूपदृष्टिः निष्फला; आराध्यप्राणदेवता प्रीतिद्वारा ज्यैष्ठ्यश्रैष्ठ्यप्राप्तिवत सर्वान्नित्यवासोलम्भुकत्वयोरपि प्राप्तेः कथ्यमानत्वात्। अन्यथा वागादीनां प्राणायत्तत्वविषयोपाख्यानमात्रस्य पर्याप्ततया अन्नवास प्रस्तावमूलकस्तुतेर्वैयर्थ्यात्। तदाह स्तुतिरिति। गत्यभावे हि तावति विश्रान्तिः। प्रियशिरस्त्वस्थले शिरस्त्व कथनं वैशद्याय, प्रियादिमात्रमुपासने विषय इत्युक्तम्। तद्वदत्र वासस्त्वकथनं वैशद्याय, अप्मात्रमुपास्यमिति न वक्तुं शक्यत इति। नन्वपां वासस्त्वासंभव एव गत्यभावः; दृशिपदस्य प्रायेणाभावाच्च रूपणमात्रं स्यादित्यत्राह युक्तश्चेति। परिदधतिगिरा=परिधानमात्रवाचिनाऽपि शब्देन प्राणे अन्नूपवस्त्रधारित्वदृष्टिविधाने वाक्यस्याभिसंधिर्युक्तः। सद्भिश्च प्राणोपासनेन प्राणाराधनात् तैरयं अद्भिः परिहितवसनत्वेन=ध्रुवरूपत्वेन युज्यते=योगविषयीक्रियते। यदि प्राणध्यानमत्र प्रकृतं न स्यात्, प्राणेन्द्रियविषयकाख्यायिका परं स्यात्। तदा दृष्टिकल्पनागौरवात् स्तुतिमात्रता स्यात्। अतः प्राणोपासनविधिरेव दृष्टिविधिरेव। प्राक् वस्त्रार्पणम्; भोजनानन्तरं तद्वस्त्रमपनीय संचार-शयनानुकूल वस्त्रान्तरपरिधानञ्च युज्यते। तथा अत्र पिधानात् अपां व्यापित्वात् आच्छादकत्वाच्च वासस्त्वभावनं युज्यते। ईशावास्यमिति ईश्वरे वस्त्रतुल्यत्वं दिगम्बरादेश्च परिधानरूपत्वं तत्तत्र व्यापित्वधिया कथ्यते च॥ ३४०॥

अत्र पूर्वाधिकरणं प्राणविद्याशेषत्वेन प्रसङ्गसङ्गत्यो(त्येत्यु)क्तम्, तत्पूर्वाधिकरणे पुनः स्वरूपनिरूपकधर्माणां स्वरूपप्रतीत्यन्तर्भावेनोपसंहार्यत्वमुक्तम्। अधुना पुनः सत्यसंकल्पत्वान्तर्भूतानां वशित्वादिगुणानामुपसंहार उच्यत इति सङ्गतिः। तदर्थं विचारस्तु-वाजसनेयके अग्निरहस्ये बृहदारण्यके च शाण्डिल्यविद्या आम्नाता। किमत्र विद्या भिद्यते, नेति। किमुभयत्र [1]रूपभेदोऽस्ति, नेति। किमग्निरहस्ये वशित्वादिप्राप्तिरस्ति, नेति। किं मनोमयत्वसत्यसंकल्पत्वाम्नानमेव गुणिप्रत्यभिज्ञया वशित्वादिप्राप्तिं गमयति, नेति।

(३४२) शाखैक्येऽध्येतृभेदो न भवति ; न गुणः कश्चिदन्यो विधेयः
तस्मादुक्ताविशेषश्रवणमिह पुनः किं न विद्यां विभिन्द्यात्।
मैवं ; यद्यप्यनूक्तिर्न तु गुणविधये कल्पते स्यात् (कल्पतेऽस्याः) तथापि
व्यक्त्यै सौकर्यतश्च व्यसनसममनन्यायतस्त्वैक्यमेद्रः ॥ २२ ॥

[शाखैक्ये इति?] अत्र पूर्वपक्षी मन्यते—'समिधो यजति' इत्यादिवत् अविशेषपुनश्श्रवणात् विद्याभेदोऽवर्जनीयः। नचाध्येतृभेदात् अभेद इति वाच्यम् ; शाखैक्ये तति अध्येतृभेदासम्भवात्। एकस्यां शाखायामध्येतृभेदो न सम्भवतीति साधारणोऽयं न्यायः। अतोऽत्र विद्याभेदः स्यादिति। न चात्र गुणविधिः कश्चित् दृश्यते, येन विधेक्यमाश्रीयेत। यदि गुणाभि-

२२. पूर्वाधिकरणे स्मृत्याचमनस्याचमनरूपत्वात्र तद्विधिरित्युक्तम् ; तद्वदेव वशित्वादेरपि सत्यसंकल्पत्वानतिरिक्तत्वान्न पृथक्तया विधिरित्युच्यत इति सगतिः। अत्र गुणभेदात् भेद इति पूर्वपक्षः, तदभेदादैक्यमिति सिद्धान्त इति भाष्यसरणिः। अतः शाखैक्य इति श्लोकस्यास्मत्पक्षरीत्या पूर्वोत्तरपक्षपरत्वं न युक्तम्। स्यानद्वन्द्व इति श्लोक एव प्रथम इति वक्ष्यते। एवमप्यत्र स्थितरीत्यैवार्थो वर्ण्यते। अत्र शांकरे अभ्यासरूपभेदकप्रमाणात् भेद इति पूर्वपक्षः; सिद्धान्तस्तु-अधिकगुणश्रवणादविशेषपुनश्श्रवणं नास्तीति। तर्हि कुत्रोपासनविधिरिति चेत् —यत्र गुणभूयस्त्वम् तत्र विधिः, अन्यत्र प्राप्तोपासनानुवादेन गुणमात्रविधानं यथातन्त्रप्रसिद्धीति भाष्यद्वयेऽपि अग्निरहस्य-बृहदारण्यकरूपैकयजुश्शाखान्तर्गतशाण्डिल्यविद्यासंदर्भग्रहणेनैव विचारः ; न तु छान्दोग्यबृहदारण्यकोभयगतवाक्यग्रहणेन। अस्मद्भाष्ये शांकररीतित्यागे, छान्दोग्यवाक्यत्यागे च कारणं क्रमेण दर्शयितुं द्वौ श्लोकौ। स्यानद्वन्द्वे इति श्लोकेनैव यथाभाष्यं पूर्वोत्तरपक्षोक्तिरिति विवेकः। तत्र शांकररीतिमनमिकृत्य, अभ्यासात् भेदः कुतो नेति पृष्ट्वा प्रतिवक्ति शाखेति। किं न विद्यां विभिन्द्यादिति घोरणी, कुतश्शांकरत्याग इत्याक्षेपाभिप्राया। अध्येतृभेदात् यत्र पुनःश्रवणसार्थक्यम्, तत्र नाभ्यासः प्रमाणम्। इह तु नाध्येतृभेदः। उभयोरप्येकशाखागतत्वात्। अथ शांकरोक्तं कञ्चिदंशमुपेक्ष्य अन्यथा परिष्कृत्याभ्यासपूर्वपक्षं शंकिता स्थापयति न गुणः कश्चिदन्यो विधेय इति। शांकरे पूर्वपक्षे अपूर्वगुणविधानार्थमनुवादोऽस्तु इत्याशंक्य, एकत्र पठितानामपि समानतया पाठात् पुनरुक्तिदोषः, कुत्र विधिः कुत्रानुवाद इत्यनिर्णयश्चेत्युक्तम्। वस्तुतोऽत्र वशित्वादीनां सत्यसंकल्पतारूपतया गुणान्तराभावस्येष्टत्वात्र गुणविधा-

1 अत्र भाष्यस्थयोजनानुसारेण फलफलिभावोक्त्या तद्विषयश्लोकस्यैव प्राथम्यमुचितम्। एतद्व्याख्यानमुपरि।

धानमत्र स्यात्, तदा खलु पूर्वस्यामेव विद्यायां गुणविधानार्थं पुनश्श्रवणमिति वक्तुं शक्येत। तस्मात् विद्याभेदः स्वीकर्तव्य इति। तदिदमाह—शाखैक्य इति। अयमत्र शब्दार्थः—शाखैक्ये सिद्धे सति अध्येतृभेदोऽस्तीति वक्तुं न शक्यते। अत्र कश्चिदपि गुणो न विधेयः। तेन गुणविधानार्थं पुनरभिधानमिति न वाच्यम्। तस्मादुक्ताविशेषश्रवणमिह विद्यां कथं न भिन्द्यादिति। उक्तं पक्षं प्रतिक्षिपति—मैवमिति। प्रतिक्षेपप्रकारमाह—यद्यपीति। अत्र गुणविधिर्नास्तीति भवतोक्तम्। तत् तथैव; विधेयस्य गुणान्तरस्यात्रादर्शनात्। तथापि पूर्वोक्तस्यैवात्रानूक्तिर्व्यक्त्यै सौकर्यतश्च स्यादेव। व्यक्त्यै = विविच्याभिधानेनोक्तार्थाभिव्यक्त्यै। सौकर्यतश्च = शिष्याणां सौकर्यार्थं च। तत्र दृष्टान्तमाह—व्यसनेति। लोके हि समासेनोक्तमर्थं [1]विग्रह(विस्तर?)वाक्येन व्यासेनापि वदन्ति। तद्वदत्रापि सत्यसङ्कल्पत्वशब्देनोक्तमेव तदन्तर्गतं वशित्वादिकं वशित्वादिशब्देनापि विव्रियते। तेन विवरणार्थमेव पुनरनुवाद इति न कश्चिद्दोष इति ॥ ३४२ ॥

---

नार्थतया चरितार्थतेति विमृश्य तदनुरूपपूर्वपक्षः कर्तुमुचित इत्याशयः। अथ पूर्वपक्षासंभवं दर्शयति मैवमिति। गुणविधानार्थमनुवाद इति शांकरोक्तं न घटते, विधेयगुणाभावात्। तथापि अस्या अनूक्तिः अनुवाद एव स्यात्। अतो नाभ्यासः। किमर्थमनुवाद इति चेत्—व्यक्त्यै सौकर्यतश्च। यदि वशित्वादिप्रतिपादकघट्टस्यानुवादरूपता, तदा सत्यसंकल्पत्वविशदप्रकाशनार्थमिति ब्रूमः। यदि अन्यो घट्टोऽनुवादः, तदा विस्तरेणोक्तस्य संग्रहेण कथनं धारणसौकर्यायेति वदामः। सौकर्यत इति चतुर्थ्यर्थे तसिः। इत्थं निर्वाहः प्रसिद्ध इत्याह व्यसनेति। 'इष्टं हि विदुषां लोके समासव्यासधारणम्' इति। व्यासः व्यसनं विभज्य कथनं व्यक्त्यर्थम्। समसनं संक्षेपोक्तिः ग्रहणसौकर्याय। एवं तन्न्यायेन ऐक्यसिद्धिर्भवतीति पुनश्श्रवणप्रयोजनसद्भावात् अविशेषपुनश्श्रवणरूपाभ्यासप्रसक्त्यभावात् नात्राभ्यासः, यो भिन्द्यात् इति विमृश्य शांकररीत्या रचना भाष्ये नादृता। एतदुक्तं भवति—अभ्यासपूर्वपक्षिणा वशित्वादेः सत्यसंकल्पत्वस्य चाभेदो ज्ञातो न वा। आद्ये उक्तरीत्या परिहारं स मन्येत। न ज्ञातश्चेत्—गुणविधानार्थानुवादसंभवात् अविशेषपुनश्श्रवणं नास्त्येव। यदि एकत्राधिकगुणश्रवणम्, एष एव निर्वाहः। यदि उभयत्राधिकगुणस्थितिः, तर्हि गुणभेदात् रूपभेदात् विद्याभेद इति नाभ्यासस्यावकाशः। किञ्चात्राभ्यासात् भेदोऽस्तु इति वक्तुं न शक्यते। अभ्यासात् भेदस्थापनस्य किं फलम्? प्रयाजस्थले तु पञ्चप्रयाजपृथगनुष्ठानं फलम्। न चात्रोपासनद्वयं कश्चित् करिष्यति, अविशिष्टफलतया विकल्पात्। अतो गुणाद्भेद इति पूर्वपक्षप्रवर्तनमेव भाष्यादृतमिति॥ एवमेतच्छ्लोकतात्पर्यवर्णनात्, कथं भाष्योक्तरीतित्यागेन प्रकारान्तरेण पूर्वपक्षः सिद्धान्तश्चात्र क्रियत इति शंकाया नावकाश इति ध्येयम्। शिष्टमुपरिष्टात्। अत्र अस्या इति पाठः सम्यक्। अस्याः एकत्रोक्तविद्याया एवानूक्तिः अनुवादः यद्यपि गुणविधये= गुणविधानार्थं न कल्पते, तथापि व्यक्त्यर्थं धारणसौकर्यार्थं चास्या अनूक्तिः कल्पते। अतो व्यसनसमसनन्यायत ऐक्यसिद्ध्या मैवमित्यन्वयः। स्यादिति पाठे कल्पते इत्यस्य नानुषंगः ॥ ३४२ ॥

---

1 विग्रहेति। अत्र, 'इष्टं हि विदुषां लोके समासव्यासधारणम्' इत्यस्य विवक्षितत्वात् एवं पदं न स्यात्। तर्हि व्यसनसमसनाभ्यामित्येव वक्तव्यम्, न तु न्यायत इतीति चेन्न—दृष्टान्तान्तरग्रहणाय श्लोकप्रत्यभिज्ञापनाय तदुक्तिसंभवात्।

(३४३) छन्दोगैर्वाजिभिश्च स्फुटमनुपठिता भाति शाण्डिल्यविद्या
भेदाभेदावमर्शस्त्विह किमिति न संदर्शितो भाष्यकारैः ।
तद् ब्रूमो यत्रयत्राधिकपरिपठनं तत्रतत्राधिकानां
अन्तर्भावादियुक्तावनधिकमधिकं(धिकमनधिकं) वेति साधारणोक्तेः ॥ २२ ॥

अत्र कश्चिच्चोदयति—ननु वाजसनेयकवाक्ये स्थलद्वयपठिता शाण्डिल्यविद्या भाष्यकारैरुदाहृता ; न पुनः छान्दोग्यवाजसनेयकयोः पठिता शाण्डिल्यविद्या भिन्ना अभिन्ना वेति विचारिता । तत् किमर्थमित्याशङ्क्य एकत्र निर्णीतस्य न्यायस्येतरत्रापि स्वयमेव योज्यत्वात् स्वयमेव शिष्या विद्वाङ्कुर्वन्त्विति भाष्यकाराभिप्राय इति परिहरति—छन्दोगैरिति । अयमत्र शब्दार्थः—छन्दोगैः तथा वाजिभिश्च स्फुटमेवानुपठिता शाण्डिल्यविद्या भाति । इहोदाहरणे भेदाभेदावमर्शो भाष्यकारैः किमिति न संदर्शित इति । इमामाशङ्कां परिहरति—तद् ब्रूम इति । तदेव विवृणोति—यत्रयत्रेति । वाजसनेयके वा छान्दोग्ये वा यत्रयत्र वशित्वाद्यधिकपठनं दृश्यते, तत्रतत्राधिकानां गुणानां सत्यसङ्कल्पत्वादिगुणान्तर्भावादियुक्तौ सत्यामधिकमनधिकं(नधिकमधिकं) वेति साधारणो(वेत्यनादरेणो)केर्युक्तत्वादित्यर्थः। एकत्र निर्णीतन्यायसिद्धार्थस्य पुनरभिधानापेक्षाभावादित्यर्थः ॥ ३४३ ॥

[स्थानद्वन्द्वे वशित्वप्रभृतिविरहिता वाजिभिस्तद्युता चा-
धीता शाण्डिल्यविद्या तदिह भिदुरता कल्पनीयेति चेन्न ।
आरण्योक्तं वशित्वाद्यपि खलु विततिः सत्यसङ्कल्पतायाः
साऽधीताऽग्नेरहस्येऽप्यधिकविरहतो नात्र विद्यैक्यबाधः ॥]

इति समानाधिकरणम् ॥ ८८ ॥

पुनः उक्तस्यार्थस्यात्यन्तवैशद्यार्थं वाजसनेयकोक्तस्थानद्वन्द्वस्थशाण्डिल्यविद्यायाः प्रकारभेदं दर्शयन् अत्र विद्यैक्यसिद्ध्यर्थं रूपभेदाभावमप्याह—स्थानद्वन्द्व इति । वाजसनेयके ह्यग्निरहस्ये

२३. भाष्योपरि प्रश्नद्वये एकः परिहृतः । अन्यं परिहरति छन्दोगैरिति । छान्दोग्ये बृहदारण्यके च शाण्डिल्यविद्या श्रूयते। तत्र भेदोऽभेदो वेति विचार एव कस्मान्न प्रवर्तित इति प्रश्नः। अयमाशयः—शाखाभेदे अध्येतृभेदात् एकस्या एव विधिसंभवात् विध्यैक्यमित्युक्तं प्रथमाधिकरणे । इदञ्च संयोगरूपाद्यविशेषे । यदा तु वशित्वादिरन्यो रूपविशेषः, तदा भेदसंभवात् भेदपूर्वपक्षः, वशित्वादेरनतिरिक्तत्वे चतुष्टयस्याविशिष्टत्वात् विद्याया अभेद एवेति सिद्धान्त इत्येवाधिकरणरचना कस्मान्न कृतेति प्रश्नः इति । अत्र परिहारमाह तद् ब्रूम इति । भाष्ये अध्येतृभेदादिमत्ताया अभावात् स्थलद्वय प्रदर्शनं तृतीयस्याप्युपलक्षणम् । शाण्डिल्यविद्येत्यप्युपलक्षणम् । स्फुटज्ञानार्थं किञ्चिदुदाहरणम् । तदयं भाष्यार्थः—यत्राधिकरूपपठनम्, तत्र भेद इति पूर्वपक्षः । सिद्धान्तस्तु-- यत्रयत्र स्थलेऽधिकपरिपठनमस्ति, तत्रतत्र तत्तत् रूपमधिकं वा पूर्वावगतरूपविततिर्वेति विमृश्य अधिकस्यान्तर्भावे युक्तिमत्त्वे अभिन्नम्, अनन्तर्भावे युक्तिसत्त्वे भिन्नमिति सर्वसाधारण्येन भाष्यप्रवृत्तिरिष्टा ; वैशद्याय तु उदाहरणविशेषे तत्प्रदर्शनमिति ॥ ३४३ ॥

एवं भाष्ये अभ्यासादेर इत्येतदुपेक्ष्य गुणाद्भेदपूर्वपक्षः एकशाखास्थवाक्यद्वयविषयकत्वादरुणञ्च

वशित्वादिविरहिता सत्यसङ्कल्पत्वाद्युक्तिमती शाण्डिल्यविद्या समाम्नाता। बृहदारण्यके वशित्वाद्यविरहिता सैवाम्नाता। तेनात्र वेद्यभेदेन रूपभेदात् शाण्डिल्यविद्याया भिदुरता कल्पनीयेति चेत्—तदिदं प्रतिक्षिपति—नेति । तदेव विवृणोति—आरण्येति । बृहदारण्यकोक्तं वशित्वादिकमग्निरहस्योक्तसत्यसङ्कल्पताया भिन्नं चेत्, तदा रूपभेदात् विद्याभेद इति वक्तुं शक्यते। न चैतन्द्भिन्नम्;

सम्यगित्युपपादितम् ; भाष्यरीत्या पूर्वोत्तरपक्षौ संगृह्णाति स्थानेति ॥ वाजिभिः शुक्लयजुर्वेदिभिः स्थानद्वन्द्वे एकशाखागते अग्निरहस्ये बृहदारण्यके च पूर्वत्र वशित्वादि विना, उत्तरत्र तेन सह शाण्डिल्यविद्या अधीता। अतो गुणाद्भेदः। न चाग्निरहस्यविहितविद्याविषयब्रह्मानुवादेन वशित्वादिगुणमात्रविधिरस्तु इति वाच्यम्—अनेकगुणविधाने वाक्यभेदादिति । निरस्यति इति चेन्नेति । आरण्ये= बृहदारण्यके उक्तं वशित्वादि अग्निरहस्योक्तसत्यसंकल्पत्वविस्तार एव । अतोऽधिकगुणाभावान्न विद्याभेद इति । ननु यदि वशित्वादिकं गुणान्तरं स्यात्, तदा भेदकत्वमिष्यते न वा । आद्ये समाने इति सूत्रोक्त्या गुणान्तरसाम्यदर्शनात् अग्निरहस्यविद्या न्यूनगुणका, अन्या चाधिकगुणका भवतीति कथं द्वयोर्विकल्प इति चेत्—यस्मात् गुणभेदो ज्ञायते, ततः फलतारतम्यं स्वीकार्यमिति मुख्यमुक्त्यतिरिक्तपरमात्मस्थानानुभव एव फलमस्तु ; अर्चिरादिमार्गादेर्मुख्यमुक्तिगमकस्याभावादिति । सिद्धान्ते तु गुणैक्यात् फलभेदकत्वकाभावात् उपसर्कैक्यात् विद्याद्वयायोगाच्च मुख्यमुक्तिरेव फलमिति ॥

शाखैक्ये इति पूर्वश्लोकः स्थानद्वन्द्वे इति श्लोकानन्तरमस्ति चेत्-सामञ्जस्यम् । तदेवम्-भवता स्थान इति श्लोकेन गुणविधानायोगस्योक्तत्वात् मीमांसकोक्ताविशेषपुनःश्रवणरूपात् अभ्यासात् भेदशंकेति । तस्यैव भाष्योक्तपूर्वोत्तरपक्षवर्णनरूपतया मुख्यत्वम्। शाखैक्ये इति श्लोकोक्तयोः अभ्यासाधीनभेदपूर्वपक्षतत्परिहारयोर्भाष्यानुक्तत्वात्; टीकायां निरस्तत्वाच्च। अतस्तत्र स्वसिद्धान्ताभिमताधिकरणरचनारूपत्वकथनमयुक्तम्। अभ्यासमूलः पूर्वपक्षस्तु शांकरभाष्ये। अतस्तदनुवादतत्खण्डनरूपत्वमस्य वक्तव्यम्। परंतु तत्रैवमुक्तम्-उभयत्र समानगुणानामिवापूर्वगुणानामपि श्रवणात् प्राप्तोपासनानुवादेन गुणविधित्वे समानगुणश्रवणवैयर्थ्यप्रसंगात्, कुत्रोपासनविधिः कुत्र गुणविधिरित्यत्र गमकादर्शनाच्च विशेषाभावादविशेषपुनःश्रवणरूपाभ्यासादुपासनभेद इति पूर्वपक्ष इति। इह तु श्लोके विधेयगुणस्य कस्याप्यभावात् अविशेषपुनःश्रवणमित्युच्यते। अतः शांकरखण्डनार्थतन्मतानुवाद इत्यत्रापि न सामञ्जस्यं लक्ष्यते। यदि तु स्थानद्वन्द्वे इति श्लोकः प्रथमं स्यात्, तदा शांकरचिन्तनेऽप्यत्रोक्तं सर्वमुपपन्नम्-तदानीमेवमुक्तं भवति-शांकरे गुणान् उभयत्राभ्युपगम्य अभ्यासात् भेदशंकनं कृतमयुक्तमित्युपेक्ष्य हि भाष्ये गुणाद्भेद इति पूर्वपक्ष कृतः ; परिहृतश्च। यदा च गुणोऽधिक उभयत्र नास्तीति सिद्धान्तः कृतः, तदा तर्हि स्यादविशेषपुनःश्रवणरूपोऽभ्यासः इति शांकरपूर्वपक्षोन्मज्जनमेवेति तन्निरासः कथमिति शंकते पूर्वार्धे। उत्तरार्धे तु—गुणविधानमादाय यथा सविशेषता, तथा व्याससमासाभ्यामपि सविशेषत्वं मीमांसकानुक्तमपि सुस्वीकरम् । प्रसिद्धौ हि सर्वत्र व्याससमासौ । अत एव हि, 'स्वपदानि च वर्ण्यन्ते' इति भाष्यलक्षणम् । न्यायकुसुमाञ्जलिन्यायरत्नमालादयो ग्रन्थाश्चात एव कारिकातद्विवरणरूपेण प्रवृत्ताः । श्रुतप्रकाशिकायाञ्चाऽऽनन्द-

सत्यसङ्कल्पत्वविवरणरूपत्वात् वशित्वादेः। तेन रूपभेदाभावात् न विद्याभेदः। तदेवोपपादयति — सेति। सा सत्यसङ्कल्पता अग्नेः रहस्ये = अग्निरहस्ये अधीता। सत्यसङ्कल्पताया विवरणरूपत्वात् वशित्वादिकमपि तत्रैवाधीतमेव भवति। तेन रूपभेदाभावात् न विद्याभेद इत्याह–अधिकविरहम इति॥ इति समानाधिकरणम्॥ ८८॥

८९॥ अथ सम्बन्धाधिकरणम्॥ ३-३-७॥

सूत्रम्— सम्बन्धादेवमन्यत्रापि॥ न वा विशेषात्॥ दर्शयति च॥ २०—२२॥

(३४४) अक्ष्यादित्योपलक्ष्ये भगवति भजनं चोदनादेरभेदात्
एकं स्यात्; तेन नाम्नोरनियतिरिति न; स्थानतो रूपभेदात्।
स्थानं तत्स्थत्वबुद्ध्यै ह्युपदिशति; न चेत्, स्याम रूपातिदेशः;
तस्मादर्काक्षियोगादहरहमिति तन्नामनी स्थापनीये॥ २४॥

इति सम्बन्धाधिकरणम्॥ ८९॥

पूर्वं शाण्डिल्यविद्यायां रूपभेदाभावात् विद्यैक्यमुक्तम्; तर्हि बृहदारण्यकोक्तादित्यमण्डलाक्ष्यन्तर्वर्तिपुरुषविषयविद्यायामपि रूपभेदाभावात् विद्यैक्यमित्याशङ्क्य स्थानभेदात् रूपभेदोऽस्तीत्यभिधीयत इतीह सङ्गतिः। तदर्थविचारस्तु—आदित्याक्ष्यन्तर्वर्तिनोराम्नाते किमेते नामनी यथाश्रुतमेकैकत्रव्यवस्थिते, उतोभयत्राप्यव्यवस्थयोपसंहार्ये इति। किमत्र विद्यैक्यम्, उत नेति। किं

मयाधिकरणादौ विस्तरेणोक्तोऽर्थो धारणसौकर्याय श्लोकरूपेण संगृह्यते। तत्र पौर्वापर्यं यथारुचि। एवं पुनश्श्रवणस्य सप्रयोजनत्वात् नाभ्यासरूपमिह प्रमाणमित्युच्यते। अतः शाखैक्ये इति श्लोकस्य द्वितीयत्वं युक्तम्। अपिचात्र श्लोके किं विषयवाक्यमधिकृत्यायं विचारः प्रवर्तेत इति न स्पष्टम्। तत्तु स्थानद्वन्द्वे इति श्लोक एवादर्शि। प्रत्युत अस्मिन् श्लोके इहेति पदप्रयोगात् प्रकृते वाक्ये इत्येव तदर्थात् तद्विशेषावधारणार्थमपि स्थानद्वन्द्व इत्यस्य प्राथम्यं परिमाह्यम्। अन्यथा आचामेदिति श्लोकदर्शितविषयवाक्ये इत्यर्थः स्यादिति॥

अत्र विशिष्य वशित्वादिगुणप्रस्तावाभावात् इदं विवक्षितमिति ज्ञायते, यत्–उभयत्र गुणाःश्रूयन्त इति यंयं गुणं मनसिकृत्य शांकरे उक्तम्, स सर्वोऽपि गुणः व्यासमासरूप एव भवतीति नापूर्वगुणप्रसक्तिरिति॥

२४. गुणभेदात्मकरूपभेदादिव स्थानरूपोपाधिभेदादपि विद्याभेद इति दर्शयति संबन्धाधिकरणे। स्थानस्य रूपत्वाभावात् व्याहृतिशरीरकसत्यत्वविशिष्टब्रह्मोपासनत्वस्योभयत्राविशिष्टत्वात् विद्यैक्यमिति पूर्वपक्षः; तमाह अक्षीति। उपलक्ष्य इति। अक्षिरूपे स्थाने, आदित्यमण्डले चोपास्यो भगवान्। तस्य स्थानं चन्द्रस्य शाखाग्रमिवोपलक्षणमात्रमिति भावः। अतः चोदनासंयोगाख्यारूपाविशेषात विद्यैक्यम्। एतत्पूर्वपक्षफलमाह तेनेति। अहरिति अहमिति च नामनी उपास्यस्योक्ते। विद्यैक्यात् अक्षिस्थानकोपासनेऽप्यहर्नाम, अन्यत्राप्यहंनामेति सिध्यतीति। पूर्वपक्षं निरस्यति इति नेति। स्थानमपि रूपमेव। ब्रह्मविशेषणत्वादिति भावः। ननु स्थानकथनं वस्तुस्थितिवचनमात्रम्; न तस्योपासने प्रवेशः; किन्तु प्रथमतो ब्रह्मप्रतिबोधे इत्यत्राह न चेदिति। एवं तर्हि उपासनस्य स्थानाविषयकस्य

ह्याहृतिशरीरस्योपास्यत्वमुभयत्र विद्यैक्यं गमयति, नेति। किमुपास्यगुणैक्यमात्रमभेदहेतुः, उत स्थानैक्यमपीति। स्थानं किमुपास्यान्तर्गतम्, उत नेति। अत्राक्ष्यादित्यान्तर्वर्तिनोः पुरुषयोरुपासने रूपैक्यात् विद्यैक्यमाशङ्क्य उभयत्रापि स्थानभेदेन रूपभेदात् इति दर्शयति—अक्षीति। शब्दार्थस्तु—अक्ष्यादित्योपलक्ष्ये भगवति भजनं संयोगरूपचोदनाद्यैक्यादेकमेव स्यात्। तेन द्वयोरपि नाम्नोरुभयस्थानस्थे परस्मिन् ब्रह्मणि अनियतिरेव स्यादिति। तमिमं पक्षं प्रतिक्षिपति—नेति। तत्र हेतुमाह—स्थानत इति। स्थानभेदेन रूपभेदस्य विद्यमानत्वात्। तमेव रूपभेदमुपपादयति—स्थानमिति। स्थानं हि भगवतः तत्स्थानावस्थितत्वप्रतिपत्त्यै उपदिश्यते। अत्र प्रतिबन्दीमाह—न चेदिति। यदि स्थानं [1]नैरर्थक्येनोपदिश्यते, तर्हि तत् स्वरूपमपि तादृग्विधमेव स्यादित्यर्थः। उक्तमर्थं सहेतुकं निगमयति—तस्मादिति। अनयोर्नाम्नोर्व्यवस्थयैवोपसंहार इत्यर्थः ॥ ३४४ ॥

इति सम्बन्धाधिकरणम् ॥ ८९ ॥

## ९० ॥ अथ सम्भृत्यधिकरणम् ॥ ३-३-८ ॥

सूत्रम्—सम्भृतिद्युव्याप्त्यपि चातः ॥ २३ ॥

(३४५) सम्भृत्यादिर्गुणौघः प्रकरणपठनाभावतः सर्वविद्या-
स्वन्वीयेतेति चेन्न ; क्वचिदगतिकतो(मतो?) लिङ्गतः स्थापितत्वात्।
अल्पस्थानासु विद्यास्वघटितवपुषः स्वोचितस्थानवृत्तेः
द्युव्याप्तेरेकमन्त्रे सहपठनवशात् तत्समस्थानिनोऽन्ये ॥ २५ ॥

इति सम्भृत्यधिकरणम् ॥ ९० ॥

पूर्वाधिकरणे नाम्नोः स्थानभेदात् व्यवस्था कृता; इह पुनरनारभ्याधीतस्य सम्भृत्यादिकस्यापि तेनैव स्थानभेदेन व्यवस्थोच्यत इति सङ्गतिः। तदर्थविचारस्तु—राणायनीयानां खिलेषु,

---

द्विरावृत्तौ मानाभावात् सकृदेव ब्रह्मोपासनं स्यात् ॥ सत्यमेतत्। न हि आदित्ये तदुपासकेन अक्षिस्थानेऽपि तदुपासनं सिद्धान्तिनोऽपीष्टमिति चेत्-अस्तु कामम् ॥ एवं तर्हि विद्याभेदानिष्टौ छान्दोग्ये उद्गीथोपासनघट्टे अक्ष्यादित्याधारकपरमात्मोपासनस्थलेऽपि तुल्यन्यायात् विद्यैक्यं स्यात्। तदा च तत्रोपदेशत एव पुण्डरीकाक्षत्वादिरूपस्य सिद्धतया आदित्योपासनोपदिष्टरूपनामादेरक्ष्युपासनेऽतिदेशनं कृतं व्यर्थं स्यात्। अतः स्थानमपि भेदकमेवेति। न चेदित्यस्य, विद्याभेदो न चेदित्यर्थः। दर्शयति चेति सूत्रार्थकथनमिह। सिद्धान्तफलमाह तस्मादिति। स्थापनीये इति। क्रमेण व्यवस्थापनीये इत्यर्थः। एवमतिदेशश्रवणादेव नात्र ज्योतिष्टोमस्यैकस्य देवताभेदेनाऽऽवृत्तिवत् एकस्योपासनस्य स्थानभेदेनाऽऽवृत्तिः ; किंतु विद्या पृथगेव विधीयते इति च ज्ञाप्यते ॥ ३४४ ॥

२५. विद्याविशेषान्तर्गतत्वात् अहरहंनाम्नोर्व्यवस्थायामपि अनारभ्याधीतानां सर्वसंबन्धस्य पूर्वमीमांसकोक्ततया न व्यवस्थेति शङ्कया प्रवृत्तमिति दर्शयन् पूर्वोत्तरपक्षावाह सम्भृतीति। 'ब्रह्म ज्येष्ठा' इति वाक्यस्य किञ्चिद्विद्याप्रकरणगतत्वाभावात् अनारभ्याधीतता। अनारभ्याधीतानां सर्वगामित्वम्, प्रकृतिविकृतिसद्भावे प्रकृतित एव विकृतावतिदेशतः प्राप्तिसंभवात् प्रकृतिगामित्वं चेति मीमांसानिर्णयात्

---

1 नैरर्थक्येनेति। यदि स्थानोपदेशस्य नोपासनान्वयितया साफल्यमित्यर्थः।

'ब्रह्मज्येष्ठा वीर्या सम्भृतानि' इत्यादिवाक्यानि श्रूयन्ते। तत्र सम्भृतिद्युव्याप्त्यादिकं कथ्यते। तत् किं सर्वविद्यासु उपसंहार्यम्, उत कासुचिदेवेति। तदर्थं विचार्यते-किमनारभ्याधीतानां सर्वासु विनियोगः, उत कासुचिदेवेति। किं सामर्थ्यं सर्वासु विद्यासु विनियुङ्क्ते, उत कासुचिदेव विनियुङ्क्त इति। अत्र पूर्वपक्षमाह—सम्भृत्यादिरिति। 'ब्रह्म ज्येष्ठा' इत्यादिवाक्योक्तः सम्भृत्यादिगुणौघः प्रकरणपठनाभावात् सर्वास्वपि विद्यास्वन्वीयेतेति। सिद्धान्तमाह—नेति। अत्र हेतुमाह—क्वचिदिति। अयमर्थः—न सर्वत्रान्वेति; अपितु क्वचिदेव, अगतिकात् लिङ्गात् क्वचिदेवेति स्थापितत्वात्। लिङ्गस्यागतिकत्वमनन्यथासिद्धत्वम्। तदेव हि प्राबल्यहेतुः; अन्यथासिद्धानां हेतूनां दुर्बलत्वात्। अनन्यथासिद्धत्वमेव विशदं प्रकाशयति—अल्पेति। अयमर्थः—'ब्रह्म ज्येष्ठा' इति मन्त्रे, 'ब्रह्माग्रे ज्येष्ठं दिवमाततान' इति ब्रह्मणो विश्वव्यापित्वमुक्तम्। तच्च विश्वव्यापित्वमल्पस्थानासु विद्यासु न घटते, अपितु व्याप्त्या ब्रह्मोपासनेष्वेव घटते। तेनैतन्मन्त्रस्थविश्वव्याप्त्यादेः स्वोचितस्थानवृत्तेः

---

एतद्वाक्योक्ताः वीर्यसंभारादयः परमात्मगुणाः सर्वास्वपि विद्यास्वन्वयं लभेरन् इति नेत्यर्थः। तत्र हेतुमाह क्वचिदिति। अत इति सौत्रं पदं पूर्वाधिकरणसिद्धान्तसूत्रगतं विशेषादिति परामृशति। महरादिनाम्नो भिन्नविद्यागतत्वं विशेषः। अत्र सर्वविद्यान्वयानर्हत्वम् किञ्चिन्मात्रान्वयसामर्थ्यं विशेषः। तदाह लिंगादिति। लिंग=सामर्थ्यम्, योग्यता। अगतिकतः इति पञ्चम्यन्तं तद्विशेषणम्। गतिः अन्यथा निर्वाहः; तद्रहितात् लिंगादिति। अगतिमत इति वा पाठः। एतद्विशेषणकथनञ्च—यथा स्वरूपनिरूपकधर्मभूतमानन्त्यमपरिच्छिन्नत्वं हृदयादिपरिच्छिन्नत्वञ्च न मिथो विरुद्धम्, तथा द्युव्याप्तेरल्पदेशपरिच्छिन्नत्वस्य चाविरोधोऽस्त्विति शंकावारणार्थम् स्वाभाविकापरिच्छेदेन सह औपाधिकपरिच्छेदस्य न विरोधः। अल्पदेशावच्छिन्नत्वमहादेशावच्छिन्नत्वरूपौपाधिकाकारद्वयं त्वेकत्र न निवेशमर्हति। अत्र, 'अग्रे दिवमाततान' इति किञ्चित्कालावच्छिन्नद्युलोकव्याप्तिरुच्यते। उत्तरार्धे भूतप्रथमजन्यत्वरूपावतारश्च। तदातनी दिव्यविग्रहद्वारकव्याप्तिरपीयं स्यात्। न च, 'सोऽयं देवदत्तः' इत्यत्र यथा तत्तेदन्तयोरविरोधः, तथाऽत्रापि स्यादिति शंक्यम्; तत्र हि एकधर्मिनिष्ठत्वं द्वयोर्भवति, देशद्वयसंबन्धविरोधः कालभेदेन परिहृियत इत्यलाक्षणिकत्वमेवोच्यते; न तु एतद्देशावच्छेदेन वस्तुनि तद्देशावच्छेदोऽपि। इह तु हृदयाद्यवच्छिन्नत्व-तदधिकदेशावच्छिन्नत्वयोर्मेलने तत् कीदृशपरिच्छिन्नोपासनं स्यात्। अतो गत्यभावात् अल्पायतनव्यतिरिक्तविषयकविद्यायामेव निवेश इति। स्थापितत्वादित्यनेन, 'सप्तदश सामिधेनीरनुब्रूयात्' इत्युक्तं साप्तदश्यं पाञ्चदश्यावरुद्धे कर्मणि न भवतीति पूर्वमीमांसोक्तैव रीतिरियमिति ज्ञाप्यते। लिंगमेव विशदयति अल्पेति। स्थानवृत्तेरिति षष्ठी चेत्, विशेषणम्। यद्वा पञ्चमी। द्युव्याप्तेरिति षष्ठी। यासु विद्यासु अल्पं दहरस्थानमुपास्यम्, तासु विद्यासु अघटितवपुषः अनन्वितस्वरूपायाः द्युव्याप्तेः विशालद्युलोकपरिच्छिन्ने स्वोचितवैश्वानरविद्यादिगतस्थान एव वृत्तेः वर्तमानत्वादित्यर्थः। नन्वस्तु द्युव्याप्तेरव्याप्तिता। वीर्यसंभृतेः किमायातम्। अणुदेशेऽपि पूर्णः सर्वशक्तिर्हि परमात्मेत्यत्राह एकेति। अन्ये संभृतवीर्यरूपा गुणाः द्युव्याप्तिबोधिमन्त्र एव सहपठितत्वात्, 'तेनार्हति' इति तच्छब्देन एकवाक्यतया प्रतीते मन्त्रे वाक्यभेदकल्पनानुपपत्तेश्च, 'संनियोगशिष्टानां सह वा प्रवृत्तिः

अवश्यम्भावादेकस्मिन् मन्त्रे द्युव्याप्त्या सह पठिता इतरे सम्भृत्यादिधर्माः तत्समस्थानिनः = द्युव्याप्तिर्यत्र वर्तते, ते तत्रैव सह वर्तन्त इति तत्समस्थानिन इति ॥३४५॥ इति सम्भृत्यधिकरणम् ॥ ९० ॥

९१ ॥ अथ पुरुषविद्याधिकरणम् ॥ ३-३-९ ॥

सूत्रम्—पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॥ २४ ॥

(३४६) आख्याद्यैक्यादभेदः पुरुषविषययोर्विद्ययोरित्ययुक्तम्
यज्ञाद्याकारक्लृप्तेरिह विषमतया रूपभेदप्रसिद्धेः ।
तादर्थ्यात् तैत्तिरीये परभजनफलं मुक्तिरत्राप्यनूक्ता
छान्दोग्ये पूर्णमायुः फलमिति तु तयोर्भाति संयोगभेदः ॥ २६ ॥

द्युव्याप्तिसन्निधिसमाम्नातस्य सम्भृत्यादेः तत्समानस्थानानुप्रवेशात् एकविद्यान्वय उक्तः; इदानीं ब्रह्मविद्यासन्निधिसमाम्नातपुरुषविद्याया ब्रह्मविद्याशेषत्वमुच्यत इति सङ्गतिः । तदर्थविचारस्तु—तैत्तिरीयके, 'तस्यैवं विदुषो यज्ञस्य' इत्यादिना पुरुषविद्या आम्नाता; तथा छान्दोग्येऽपि, 'पुरुषो वाव यज्ञः' इत्यादिना पुरुषविद्या आम्नाता । किमुभयत्र विद्यैक्यम्, उत विद्याभेद इति, तदर्थं विचार्यते–किमुभयत्र रूपफलसंयोगभेदोऽस्ति, न वेति । किम्, "प्राह षोडशवर्षशतं जीवति" इति छान्दोग्योक्तायुःप्राप्तिरेवोभयत्र फलम्, उत तैत्तिरीयपुरुषविद्यायां ब्रह्मप्राप्तिः फलमिति । किं तैत्तिरीयपुरुषविद्या, 'ब्रह्मणे त्वा महस ओमित्यात्मानं युञ्जीत' इति प्रकृतब्रह्मविद्याङ्गम्, उत नेति ।

---

सह वा निवृत्तिः' इति न्यायेन द्युव्याप्तिप्रवेशार्हविद्यास्थलमात्रगामिन एवेति । एतदर्थमेव सूत्रे संभृतिद्युव्याप्ति इति समाहारः कृतः ॥ चिन्तामणौ विश्वव्यापित्वमिति पदं न सर्वव्यापित्वरूपानन्त्यपरम् । किंतु स्थूलपरिच्छिन्नत्वपरमिति ध्येयम् । भाष्यटीका च द्रष्टव्या ॥ ३४५ ॥

२६. यथा संभृत्यादेः शाण्डिल्यविद्यादौ न संबन्धः, तथा पुरुषविद्यायाः न्यासविद्यया न संबन्धः; छान्दोग्यपुरुषविद्यैक्यादिति शंकया संगतिः । तदैक्यमेव पूर्वपक्षीष्टमुद्भाव्य निरस्यति आख्येति । आख्यारूपचोदनासंयोगेषु आख्यैक्यमितरैक्यापेक्षयाऽतिशयितमित्याशयेन आख्याया विशिष्य निर्देशः । उभयत्र पुरुषविद्येति व्यवहारौचित्यमस्ति । तत्रतत्र रूपाणां भेददर्शनेऽपि पुरुषानुबन्धिषु यज्ञावयवत्वकल्पनमिति सामान्याकारेण रूपाभेदः । तैत्तिरीये वेदनक्रियाश्रवणाभावात् फलाश्रवणाच्च चोदनासंयोगाविशेषोऽपि कथञ्चिदेवमुपपाद्यः—अन्यस्यान्यथारूपणं हि चिन्तनार्थमेव । पुरुषविद्यात्वे सिद्धे, एकत्र श्रुतमेव फलमन्यत्रापीष्यत इति फलैक्यमपीति । इदं निरस्यति इत्ययुक्तमिति । यज्ञेति । न हि पुरुषानुबन्धिनां यज्ञानुबन्धि(षु यज्ञावयव)त्वकल्पनमिति सामान्याकारेण रूपैक्यं युक्तम्; विशेषांशानामेव चिन्तनीयत्वात् तेषु चातीव भेददर्शनात् । फलैक्यमप्ययुक्तमित्युपपादयति तादर्थ्यादिति । न्यासविद्या तावत् पूर्वं विहिता सफला । अत्र फलाश्रवणात्, 'फलवत्संनिधावफलं तदङ्गम्' इति न्यायेन तादर्थ्यं न्यासविद्यार्थत्वं सुगमम् । ननु य एवं 'विद्वानुदगयने प्रमीयते' इत्युपक्रम्य पश्चात् ब्रह्मप्राप्तिरूपफलोक्त्या साक्षान्मुक्त्यर्थता किं न स्यादिति चेत्—अस्याः पुरुषविद्यायाः ब्रह्मविषयकत्वात् ब्रह्मप्राप्तिहेतुत्वायोगात् अङ्गिफलमेवाङ्गे उपचर्यते, प्रजापतिवाक्ये जीवात्मविद्यायां परविद्याफलकीर्तनवदि-

किं, 'तस्यैवं विदुषः' इति निर्देशो ब्रह्मविद्याङ्गत्वमवगमयति, नेति । अत्र पूर्वपक्षमुपन्यस्य प्रतिक्षिपति—आख्यैक्यादिति । संयोगरूपचोदनाख्यानामैक्यात् पुरुषविषययोर्विद्ययोरभेद इति । तमिमं पूर्वपक्षं [उपन्यस्य] प्रतिक्षिपति—अयुक्तमिति । संयोगरूपचोदनाख्याविशेषात् पुरुषविद्ययोरैक्यमित्ययुक्तम् । अयुक्तत्वमेव दर्शयति—यज्ञाद्याकारक्लृप्तेरिति । तैत्तिरीयके यथा यज्ञाद्याकारक्लृप्तिः, न तथा छान्दोग्ये । उभयत्रापि वैषम्यस्य दर्शनात् । तेन रूपभेदात् विद्याभेदः । किञ्च तैत्तिरीयके पुरुषविद्याया ब्रह्मविद्याशेषत्वात् पूर्वोक्तब्रह्मविद्याफलमेव अत्र फलतया निर्दिश्यते । छान्दोग्ये तु आयुःप्राप्तिः फलत्वेनोच्यते । तेनोभयत्रापि फलभेदोऽस्तीति न संयोगाद्यविशेष इति विद्यैक्यम् ॥ ३४६ ॥

(३४७) स्पष्टे रूपादिभेदे हठसमुपनतो नामसाम्यादिमात्रात्
पुंविद्यापूर्वपक्षो मृदुरिति विफलाऽधिक्रियैवेति चेन्न ।
अन्यैव न्यासविद्याप्रकरणपठिता तद्विधानप्रधाने-
त्यस्मात्तत्त्यादिसिद्ध्यै विभजनमनयोरित्यतीवार्थवत्त्वात् ॥ २७ ॥

अत्र कश्चित् पुरुषविद्याप्रसङ्ग एव न कर्तव्यः प्रस्फुटपूर्वपक्षहेत्वभावादित्याशङ्कते, तामाशङ्कां प्रतिक्षेप्तुमनुवदति—स्पष्ट इति । द्वयोरपि पुरुषविद्ययोः रूपादिभेदे स्पष्टे सति नामसाम्यादिमात्रात् हठेनैव समुपनतः पुरुषविद्यापूर्वपक्षः अत्यन्तमृदुत्वादवाच्य इति एतद्(इदम)धिकरणं विफलमेवेति ।

---

त्यालोचनीयम् । तथा च न्यासविद्य रूपपरभजनफलमुक्ता मुक्तिरेवात्र पुरुषविद्यायां तादर्थ्यात् अस्या न्यासविद्याङ्गत्वात् अनूक्ता अनूदिता । एवञ्चास्या अन्यार्थायाः षोडशाधिकवर्षशतजीवित्वरूपपूर्णायुःफलसाधनच्छान्दोग्यपुरुषविद्यया सह फलैक्यं नैव भवति । यत्तु छान्दोग्ये आयुःफलकीर्तनानन्तरं मोक्षप्राप्तिरूपं फलमुक्तम्, तत् आयुरवसानेऽनुष्ठेयतया विहितकिञ्चिदुपायफलम् । सर्वथा उभयं भिन्नमेव । पुरुषविद्येति नाम छान्दोग्ये प्रसिद्धम् । अत्र त्वाख्याऽपि सा न प्रसिद्धा ; पुरुषपदाश्रवणात् । शेषं भाष्यार्थदर्पणे ॥ ३४६ ॥

२७. 'त्र्यम्बकलान्तवादिन्यधिकरणगणे पौनरुक्त्योक्तबाधौ मन्दत्वासंगतत्वे" इत्युक्तमन्दत्वोदाहरणमिदमिति प्रदर्श्य तात्पर्यमुद्घाटयति स्पष्टे इति । पूर्वश्लोकव्याख्योक्तरीत्या रूपभेदे फलभेदे च स्पष्टे सति पुरुषविद्येति नामसाम्यम्, आदिपदविवक्षितम्, 'पुरुषो वाव यज्ञः', 'विदुषो यज्ञस्य' इत्युभयत्र पुंसि यज्ञत्वकल्पनासाम्यञ्च परमवेक्ष्य कृतः हठसमुपनतः आग्रहमूलक पुंविद्येयमिति पूर्वपक्षः मृदुः मन्दः इति=अतः अधिक्रिया अधिकरणमिदं व्यर्थमिति । नेति निषेधे हेतुमाह अन्यैवेति । अयमत्र पूर्वपक्षिसिद्धान्तिनोराशयः-छान्दोग्ये, 'पुरुषो वाव यज्ञः' इत्यारभ्य पुरुषानुबन्धिषु यज्ञानुबन्धिवस्तुरूपताकल्पनपूर्वकफलवचनात् विद्यात्वं निर्विवादम् । तैत्तिरीये पुरुषतदनुबन्धिषु यज्ञतदनुबन्धित्वकल्पनमन्यादृशमस्ति । परंतु फलं नोच्यते । तावता सर्वमिदं रूपणमात्रमित्युक्तौ प्रकृतोपयोगोऽस्य वक्तव्यः । पूर्वं न्यासविद्या श्रुताऽस्ति । स च परभजनविशेषः । अत्रोक्तपुरुषतदनुबन्धिनां तत्रान्वयो न लक्ष्यते । किञ्च सारूप्ये लक्ष्यमाणे रूपणं भवेत् । प्रायोऽत्र सारूप्यञ्च दुर्ग्रहम् । अतः श्रुत्या स्वाच्छन्द्येन कृतो दृष्टिविशेष

इमामाशङ्कां निराकरोति—नेति । निराकरणे कारणमाह–अन्येति । अत्र खलु द्वे विद्ये । 'ब्रह्मणे त्वा महस ओमित्यात्मानं युञ्जीत' इति पूर्वं विहिता न्यासविद्या अन्या । इयं तु, 'तस्यैवं विदुषः' इत्याम्नाता पुरुषविद्या तच्छेषभूता अन्या । तेन न्यासविद्याप्राधान्यकथनार्थं तच्छेषभूता पुरुषविद्या पुनश्च विशोध्यते । छान्दोग्यस्था पुरुषविद्या पुनःआयुःप्राप्त्यर्थत्वेन विधानात् न ब्रह्मविद्याङ्गभूतया त्वनया पुरुषविद्यया तादात्म्यं भजत इति न पुरुषविद्ययोरैक्यप्रसङ्ग इति । वक्तव्यमशेषं न्यासविंशत्यादिषु प्रबन्धान्तरेषु व्यक्तमुक्तमिति नेह प्रतन्यते ॥ ३४७ ॥

---

एवायम् । न च परभजने दृष्टविषयोपयोगोऽस्ति दृष्टीनाम् । न चान्यत्र कुत्रापि परभजनाङ्गतया दृष्टिविशेषाः विहिता सन्ति। न चास्य साक्षान्मुक्तिरेव फलं भवितुमर्हति, येनोत्तरश्रुत्यब्रह्मप्राप्ते. फलत्वावयैनैकवाक्यता स्यात् । ब्रह्मतत्त्वज्ञानमात्रसाध्यत्वात् तस्य । तर्हि पुरुषावयवेषु यज्ञावयवत्वकल्पना-साम्येनास्याः विद्यायाः छान्दोग्यपुरुषविद्याप्रकृतिकत्वं स्वीकृत्य ततः फलमप्यतिदिश्य साफल्यं संपाद्यमिति चेत्—प्रकृतिवत् विकृतिः कर्तव्येत्यतिदेशो हि इतिकर्तव्यतामात्रस्य ; न तु फलस्य । उपासनाप्रकारस्य पूर्णत्वाच्च नात्रेतिकर्तव्यतापेक्षा । अनन्तत् फलमस्याश्चेत् वक्तव्यम्, तत् तदैक्ये सत्येव ॥ कथमैक्यम्, कल्पनानां मिथो विरोधादिति चेत्-अविरुद्धांश एकत्रोक्तोऽन्यत्रोक्तेन समुच्चीयते । विरुद्धाना तु विकल्पः, यथा वैश्वानरविद्यायामुपासकशरीरे मूर्धादिपादान्ते कल्पितस्य प्रादेशमात्रत्वस्य, उपासकमुखे चिबुकान्ते कल्पितस्य प्रादेशमात्रत्वस्य च । अतो रूपभेदादिकमुपमर्द्य विद्यैक्यं वक्तव्यमिति पूर्वपक्ष्याशयः । सिद्धान्तिनस्तु उपासनैक्यसिद्धौ फलैक्यम्, फलैक्यसिद्धौ उपासनैक्यकल्पनेत्यन्योन्याश्रयः ; अष्टदोषदुष्टानामनेकेषां विकल्पानां स्वीकारापत्तिश्च । न च नैष्फल्यपरिहाराय गौरव सह्यम्, सफलन्यासविद्यासंनिधिपाठात् तदङ्गत्वसंभवात् । दृष्टविधया वाऽन्यथा वा कथमङ्गत्वमिति चेत्-दृष्टिविधीनां क्रतुमध्यनिर्दिष्टानां वीर्यवत्तरत्वं फलं श्रूयतेऽन्यत्र, यदेव विद्यया करोति तदेव वीर्यवत्तरं भवतीति । अत्र यद्यपि इष्टिपशुसोमहोमानां सर्वेषां निर्देशोऽस्ति, तथापि तेषु न तदपेक्षयोत्कृष्टवस्तुदृष्टिः, किंतु आत्मशरीरोरोलोमादिषु यजमानादिदृष्टिरिति नास्याः क्रत्वङ्गद्वारा क्रतूपयोगित्वम् । एवमपि पूर्वविकल्पाधिकरणोक्तरीत्या ईदृशदृष्टीनाम् इष्टिपशुसोमहोमकार्यकरत्वावसाय तु यज्ञादिनैरपेक्ष्येण तद्वदेव विद्यांगत्वमवसेयं स्यात् । तथाच तैत्तिरीयविद्या अन्या=छान्दोग्यपुरुषविद्यातोऽन्यैव ; न्यासविद्याप्रकरणपठिततया न्यासविद्यानप्रधाना न्यासविद्याविधिमुपजीव्य प्रवृत्तेति अस्यामस्वातन्त्र्यादेः=पृथक्फलार्थित्वाभाव-अन्याङ्गत्व-छान्दोग्यविद्यास्वातन्त्र्याणां सिद्ध्यै द्वयोरित्थं भेदनिरूपणमिति अतीवार्थवत्त्वात् मुमुक्षुक्रियमाणन्यासविद्या संबन्धित्वज्ञानात् इतो बह्वर्थविवेचनसिद्धेः नाधिक्रिया विफलेति । न्यासविद्येति पृथक् पदं कृत्वा न्यासविद्या अन्येत्यर्थं वर्णयन्ति । न्यासविद्याया एकत्वान्यत्वचिन्ताया अप्रसक्तत्वात् किमिति तत् विधेयम् । प्रकरणपठितेत्यनेन कस्यान्यस्य प्रकरणे न्यासविद्यायाः पठितत्वमुच्यते । पुरुषविद्याप्रकरणे पठितेति तु न युक्तम् । न ह्यत्र पुरुषविद्या प्रधानम् । अतो न्यासविद्याप्रकरणपठितेति समस्तं पदम् । अन्यत्वं तु विधेयं पुरुषविद्यायामत्र छान्दोग्यपुरुषविद्यान्यत्वमेव । अथवा, 'ओमित्यात्मानं युञ्जीत' इत्युक्तयोगप्रपञ्चनमेव तस्यैवंविदुष इत्यादि । अत एव, 'ब्रह्मणो महिमानमाप्नोति' इति संग्रहे उक्तं विस्तरे उपसंहियत इति शंकां परिहर्तुं तृतीयपाद इति चिन्तामण्याशय ॥ ३४७ ॥

(३४८) यद्येवं यज्ञदृष्टिः परविदि पुरुषे चोद्यते सानुबन्धे
यज्ञस्यानङ्गभूतं कथमिह विविधं कल्प्यते तत्तत्र ।
तस्मात् प्रक्रान्तविद्यास्तुतिरियमुचितेत्याहुरेकेऽन्यथाऽन्ये
तिष्ठत्वेतद्वि(त् द्वि)धाऽपि प्रकृतसुघटि(ट)ता; सम्प्रदायस्तु चिन्त्यः ॥२८॥

इति पुरुषविद्याधिकरणम् ॥ ९१ ॥

अत्र पुरुषविद्याविषयपक्षद्वयं तत्तदेकदेशिप्रोक्तमनूद्य, उभयथापि भाष्यकारपरिकल्पिताधिकरण-चिन्ता सङ्गच्छत इति संदर्शयति—यद्येवमिति। अयमत्र केषाञ्चित् पक्षः—उभयत्र यज्ञदृष्टिर्न कल्प्यते, अपितु पूर्वोक्तन्यास(ब्रह्म)विद्यानिष्ठस्य माहात्म्यप्रदर्शनार्थं सकलमपि कर्मजातं तस्य शरीर एव वर्तत इति यज्ञक्लृप्त्या प्रशंसामात्रमुच्यते । यज्ञानङ्गभूतचातुर्मास्यादेर्मध्ये परिकल्पनात् । अपरे पुनरेवं

---

२८. एवं न्यासविद्याङ्गत्वमस्या उक्तम् । तदेवाङ्गत्वं किंरूपमिति विचारयन् तत्राभिप्रायभेदं दर्शयति ; तदर्थे न्यासविद्यास्वरूपमपि गमयति यदीति । प्रथमं शांकरपक्ष उच्यते । इयं पुरुषविद्या तस्यैवमित्यादिवाक्यराशिर्यज्ञदृष्टिपर इति किल प्रागुक्तम् । अत्र विदुष इति परविद्यानिष्ठः प्रक्रान्त उच्यते । तस्मिन् यज्ञत्वेन दृष्टिर्नाम सोमयागत्वेन दृष्टिः । तत्र पुरुषानुबन्धिषु सोमयागानुबन्धिवस्तु-दृष्टिर्युज्यते । अननुबन्धिदर्शपूर्णमासचातुर्मास्यादित्वकल्पना कथम् । अत्र पुरुषतदनुबन्धिषु सर्वकर्मत्व कल्पना, सर्वदा पुरुषतदनुबन्धिसद्भावात् सर्वकर्मानुष्ठानं सिद्धमिति न्यासविद्याया इतरनिरपेक्षत्वसूचनेन स्तुतिरिति न्यासविद्याविध्यर्थवाद एवायं वाक्यराशिः । तावतैव वाक्यराश्यर्थस्य न्यासविद्याङ्गत्ववाचो-युक्तिः । तथाच किञ्चिदपि न विधीयते इति पुरुषविद्यानाम्नाऽस्याः व्यवहारोऽपि विचार्य इत्याहुः । अत्र शांकरसूत्रपाठः पुरुषविद्यायामिव चेति । अन्ये श्रीभाष्यस्वरसार्थदत्तदृष्टयः अन्यथाऽऽहुः । एतत्पुरुषविद्या यथाश्रुति तत्तदंशचिन्तनार्थैव ; उक्तरीत्या न्यासविद्याङ्गत्वमेवेति । अर्थवाद इति शांकरपक्षस्याप्यदूष्यत्वं मनसि निधायाऽऽह तिष्ठत्विति । सुघटिता सुघटनेति पाठद्वयम् । द्वितीयपाठे एतत् उक्तं मतभेदरूपं तिष्ठतु । द्विधाऽपि प्रकारद्वयेनापि प्रकृतस्य श्रुतिवाक्यस्य भाष्यस्य च सुघटता सुखेन घटमानताऽस्तीत्यर्थः । परंतु एतदिति पृथग्वाक्यमफलम् । प्रथमे तु एतद्द्विधेत्येकं पदम् । इयं द्विधाऽपि द्वितीयार्थवर्णनरीतिरपि प्रकृतसुघटिता तिष्ठत्विति एकवाक्यता । तिष्ठत्वित्यनेनात्रेषत् क्लेशोऽस्तीति सूच्यते । तथाहि न्यासविद्यां प्रति अस्याश्चिन्तनाया अङ्गत्वे तत् अङ्गत्वं किंरूपम् । उपासनापेक्षितसर्व यज्ञकार्यकारित्वं चेत्–कर्माणि त्याज्यानि स्युः ॥ अस्तु; तथैवाधिकारिविशेषे इति चेत्–'सहकारित्वेन च' इत्युक्ताङ्गत्वविशेषेणानुष्ठानस्य बाधेऽपि, 'आश्रमकर्मापि' इति प्राप्तनिषेधे मानाभावात् तदनुष्ठाने अवर्जनीये तत एव कार्यसिद्धावेतच्चिन्तनं व्यर्थं स्यात् । अथ—यज्ञरूपनित्यकर्ममात्रत्यागः सांध्यादिरूपान्यान्यधर्मा-नुष्ठानं त्वस्ति । यज्ञस्त्वाश्रमकर्मतयाऽपि नानुष्ठेयः। अथवा यो यज्ञानुष्ठानाशक्तः, तस्य विद्यानिष्पत्तिविघाता भावाय तच्चिन्तनोक्तिरिति वक्तव्यम् । तदा अर्थवादतयाऽपि निर्वाहसंभवे तावत्तात्पर्यकल्पने गौरवमिति । श्रीभाष्यस्यापि संप्रदायाविरोधेन तात्पर्यं वर्णनीयमित्याशयेनाह संप्रदायस्तु चिन्त्य इति । अस्मदीये

मन्यन्ते—अपर्यनुयोज्यस्वभावा खलु श्रुतिः। अतस्तत्प्रामाण्यवशात् तादृग्विधं यस्मात्परमस्तीति तत्कल्पनरूपा पुरुषविद्याऽपि काचित् विद्यत इति पुरुषविद्ययोर्भेदोऽपि प्रतिपाद्यत इत्यैक्यासिद्धिः। तेन क्वचित्पक्षे पुरुषविद्ययोरभावादैक्यासिद्धिः; पक्षान्तरे तु तयोरूपादिभेदादैक्यासिद्धिरित्यैक्य-निराकरणार्थमिदमधिकरणं सङ्गच्छते। तदिदं सर्वमभिप्रेत्याह—तिष्ठत्विति। द्वयोरपि पक्षयोर्भाष्य-कारकल्पिताधिकरणप्रकारस्य सुघट(टित)त्वैव वर्तते। तर्हि कोऽयं परमार्थ इत्याशङ्क्य यथासम्प्रदाय-मभिधीयताम्, असाम्प्रदायिकपक्षो न संग्राह्य इति सामान्यतः प्राह—सम्प्रदाय इति। युक्तियुक्त-त्वात् प्राक्तन एव पक्षः परिग्राह्य इत्यर्थः॥ ३४८॥ इति पुरुषविद्याधिकरणम्॥ ९१॥

९२॥ अथ वेधाद्यधिकरणम्॥ ३-३-१०॥

सूत्रम्—वेधाद्यर्थभेदात्॥ २४॥

(३४९) युज्येरन् ब्रह्मविद्यापरिसरपठिताः शन्न इत्यादिमन्त्राः
तादर्थ्यात् सर्वविद्यास्विति न तदुदिताधीतिशेषत्वलिङ्गात्।
नो चेत्, अन्येऽपि तद्वत् सविधपठनतः सन्तु शुक्रं प्रविष्ये-
त्येवम्प्रायास्तदर्थाः; न च घटत इदं लिङ्गतो दुर्बलत्वात्॥ १९॥

इति वेधाद्यधिकरणम्॥ ९२॥

ब्रह्मविद्यासन्निधिसमाम्नानात् ब्रह्मविद्याङ्गत्वं पुरुषविद्याया उक्तम्, इदानीं पुनर्ब्रह्मविद्यासन्निधि-समाम्नातानां, 'शन्नो मित्रः' इत्यादिमन्त्राणां ब्रह्मविद्याङ्गत्वं स्यादिति शङ्कया सङ्गतिः। तदर्थ-

---

तैत्तिरीयपरिष्कारे एतद्विवेचनं द्रष्टव्यम्। अयमत्राशयः-शांकरे न्यासपदेन संन्यासरूपतुर्याश्रमग्रहणात् तत्र यज्ञानामभावात् संन्यासिस्थितिरेव सर्वयज्ञानुष्ठानमिति स्तूयत इत्यर्थवादता। अस्मन्मते न्यासपदेन परभजनमेव भक्तियोगविशेष एव गृहीतश्चेत्—एतच्चिन्तनमङ्गं विधेयं तत्र कथमुपकरोतीति विचार्यम्। संप्रदायस्तु श्रीभाष्यकारपरमाचार्यैतः प्रवृत्तः न्यासो भरन्यास प्रपत्तिरिति। 'प्रपत्तेः क्वचिदप्येवं परापेक्षा न विद्यते' इति यज्ञादिनिरपेक्षत्वं प्रसिद्धम्। तथाच तदेव नैरपेक्ष्यमेतद्वाक्यावसेयमित्येवं-रूपेणैतद्वाक्यराशेर्न्यासविधिवाक्येनैकवाक्यतया तदंगत्वमस्ति। उक्तञ्चेदं न्यासविंशतौ, "न्यासः प्रोक्तोऽतिरिक्तं तप इति कथितः स्वस्वरश्चास्य कर्ताऽहिर्बुध्न्योऽप्यन्वभाषीत् अगणि दिविषदामुत्तमं गुह्य-मेतत्" इति। प्रपत्तेरङ्गापेक्षत्वात् सर्वयज्ञाननुष्ठानेऽपि अयमनुष्ठितक्रतुशततुल्यः स्वस्वरः। एवमेव दृ-ष्टार्थः पाञ्चरात्रग्रन्थेनोऽप्यवसीयते। अतो न्यासो भरन्यासः। न च ब्रह्मरुद्रेन्द्रादयः संन्यासा-श्रममनुतिष्ठन्तीति प्रसिद्धम्। इदमेव भाष्येऽपि निगूढम्, न्यासविद्य स्वरूपशोधने निश्चीयतेति विशिष्य नोद्घाटितम्। तत् सिद्धं शांकरे अस्मत्संप्रदाये च तैत्तिरीयविद्वद्वाक्यराशेः किञ्चिच्चिन्तनविधायकः, किंतु कस्यचिदधिकारिणः यज्ञाद्यनपेक्षयैव कार्यसिद्धिप्रदर्शकः। अनपेक्षया कार्यसिद्धिर्हि उपरि, 'य एवं विद्वानुदगयन' इत्यादिश्रुत्याऽपि कथ्यत इति॥ ३४८॥

३०. वेधाद्यधिकरणे -तदुपनिषदारम्भगतवाक्यराशेः शन्नेष-प्रवर्ग्य-अग्निष्टोम-आदि विभिन्नार्थकतया तेषामर्थानाञ्च न्यायादशकर्माङ्गत्वस्य प्रमाणान्तरसिद्धतया कथं परविद्यारूपतक्तियोगाङ्ग-

विचारस्तु—किमुपनिषदारम्भेष्वधीताः, 'शुक्रं प्रविध्य', 'शन्नो मित्रः' इत्यादयो मन्त्राः प्रवर्ग्यादीनि च कर्माणि विद्याङ्गम्, उत नेति । किमेषां श्रुतिलिङ्गवाक्यैः कर्मस्वेव विनियोगः, उत ब्रह्मविद्यायां प्रकरणाद्विनियोगः । किमेषां प्रकरणपाठोऽङ्गत्वाय, उत द्विवाकीर्त्यरिण्यानुवाक्यतायै । अत्र पूर्वपक्षमाह—युज्येरन्निति । 'शन्नः' इत्यादिमन्त्राणां ब्रह्मविद्यापरिसरपठितत्वात् तेषां विद्याशेषत्वा-विशेषाच्च सर्वविद्यास्वपि शेषत्वेन युज्येरन्निति । तदेतत् प्रतिक्षिपति—नेति । तत्र हेतुमाह—तदुदितेनेति । अयमर्थः—लिङ्गात् तत्तत्कर्मशेषत्वं प्रतीयते; सन्निधेर्ब्रह्मविद्याशेषत्वम् । तत्र लिङ्गसन्नि-ध्योर्लिङ्गस्यात्यन्तबलीयस्त्वं सर्वेषामपि सम्मतम् । तत्र, 'शन्नो मित्रः' इत्यादिमन्त्रस्य, 'नमो ब्रह्मणे' इत्यादिना लिङ्गेनाध्ययनशेषत्वस्य स्पष्टदृष्टत्वादत्यन्तकनीयसा सन्निधिना कल्पनीयं ब्रह्मविद्याशेषत्वं बाध्यत एव । एवमनङ्गीकारे विपक्षे बाधकमाह—नो चेदिति । 'शन्नो मित्रः' इत्यादिमन्त्रस्य ब्रह्मविद्याशेषत्वे, 'शुक्रं प्रविध्य' इत्यादिमन्त्रस्यापि ब्रह्मविद्यासन्निधिसमाम्नातस्य ब्रह्मविद्याशेषत्वं स्यात् । तत्तु विरुद्धमेव, 'शुक्रं प्रविध्य हृदयं प्रविध्य' इति परपीडाप्रार्थनात्मकस्य[1] कर्मणो ब्रह्मविद्या-विरोधित्वेन तदङ्गत्वकल्पनायोगात् । लिङ्गतो दुर्बलत्वाच्च सन्निधिसमाम्नानस्य । तेन न ब्रह्मविद्या-शेषत्वमिति कथं सर्वविद्याङ्गत्वकल्पनं योयुज्येत ॥ ३४९ ॥ इति वेधाद्यधिकरणम् ॥ ९२ ॥

## ९३ ॥ अथ हान्यधिकरणम् ॥ ३-३-११ ॥

सूत्रम्—हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दःस्तुत्युपगानवत्तदुक्तम् ॥ २५ ॥

(३५०) शाखे द्वे मुक्तिभाजः क्वचन कथयतः पुण्यपापप्रहाणं
सूनेऽन्या तत्प्रवेशं प्रियतदितरयोर्दायसंक्रान्तिकाले ।
हानञ्चोपायनञ्च क्वचिदिति पृथगाम्नातसम्पर्कसिद्धिः
वाक्यं शाखान्तरस्थं भवति हि विहिताकाङ्क्षया वाक्यशेषम् ॥ ३० ॥

अत्र ब्रह्मविद्यासन्निधिसमाम्नातानां, 'शुक्रं प्रविध्य' इत्यादीनां ब्रह्मविद्यानङ्गत्वमुक्तम् । तथा

---

शंकेत्याशंक्य श्रीभाष्ये, 'अस्मिन्नधिकरणे तैत्तिरीयोपनिषदुपक्रममात्रस्यैव भक्तिविद्याङ्गत्व-तदभाव-विचारः । सूत्रे वेधादिकथनं तु दृष्टान्तार्थम्' इति समाहितम् । अतस्तन्निष्कर्षानुसारेण पूर्वोत्तरपक्षौ प्रवर्तयति युज्येरन्निति । तैत्तिरीये विविधपरविद्याविधिदर्शनात् । स्वतन्त्रफलादर्शनात् तदर्थत्वस्य वाच्य-त्वात् उपक्रमवाक्यानां सर्वसाधारण्यस्य युक्तत्वात् । सर्वविद्यासु एतन्मन्त्राणां योगः अन्वय इति पूर्वपक्षः । निरस्यति इति नेति । वेधादिवाक्यानामिव स्ववाच्यार्थाङ्गत्वमेव युक्तम् । वेधाद्युदाहरणम्—असंबद्धान्वयस्य क्वचित् स्वीकारे अन्यत्रापि तदापत्तिरित्यापादनाभिप्रायेणेत्याशयेनाऽऽह नो चेदिति । स्पष्टस्वार्थत्यागेनान्यकल्पने शुक्रमित्यादयोऽन्येऽपि तदर्थाः उपनिषत्प्रतिपाद्यतदङ्गभूताः स्युरित्यर्थः । इष्टापत्तौ दोषमाह नचेति । हेतुमाह लिंगतो दुर्बलत्वादिति । संनिधिसमाम्नानाद्धि विद्याङ्गत्वं शंक्यते । संनिधिश्च स्थानरूपं प्रमाणम्, तत् ततः प्रबलं प्रकरणञ्च लिङ्गरूप-प्रतिपाद्यार्थसामर्थ्यापेक्षया दुर्बलम् ॥ अतो लिङ्गतो वेदाध्ययन एव विनियोगः एषाम् । अन्येषाञ्च वेधादिष्विति । 1. प्रविध्य इत्यस्य वेधनं कुरु इत्यर्थः । लोट् । अत एव चिन्तामणौ प्रार्थनात्मकस्येत्युक्तम् ॥ ३४९ ॥

३१. साक्षात्पठितानामपि मन्त्राणां विद्याङ्गत्वाभावे अपठितस्य हानस्य तच्चिन्तनस्य वा कथं विद्याङ्गत्व-मिति शंकया हान्यधिकरणप्रवृत्तिः । अत्र हानादिचिन्तनं सर्वविद्यागं न वेत्येव विचारः । स हानादेः

सन्निधिसमाम्नातहानोपायनचिन्ता अनन्तरं प्राप्तेति सङ्गतिः। अथवा, 'शुक्रं प्रविध्य' इत्यादिमन्त्राणां लिङ्गात् तत्तत्कर्मशेषत्वमुक्तम्; इह पुनः उपायनस्य प्रहा(ही)णविषयत्वरूपार्थसामर्थ्यलिङ्गात् उभयोरन्योन्यानयनियमेनोभयोरुभयत्रानुसन्धेयत्वमुच्यत इति सङ्गतिः। तदर्थविचारस्तु—'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्', 'तथा विद्वान् पुण्यपापे विधूय' इति क्वचित् सुकृतदुष्कृतयोर्हानिचिन्तनमाम्नानम्। 'सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इत्युपायनचिन्तनं क्वचिदाम्नातम्; क्वचिदुभयचिन्तनम्, 'तत् सुकृतदुष्कृते धूनुते तस्य प्रिया ज्ञातयस्सुकृतमुपयन्ति अप्रिया दुष्कृतम्' इति; तत्र किं हानिचिन्तनोपायनचिन्तनोभयचिन्तनानि समुच्चीयेरन्, उत विकल्पेरन्निति। किमुपायनं हानिशेषतया विद्याङ्गम्, उत स्वतन्त्रतयेति। किम्, उपायनवाक्यं शाखान्तराधीतमपि हानिवाक्यशेषभूतम्, उत स्वतन्त्रम्। किं कौषीतकिनामुभयाम्नानमुपायनवाक्यस्य हानिवाक्यशेषताविरोधि, नेति। अत्र विषयं विशोध्य उद्ग्रन्थमेव पूर्वपक्षं निराकुर्वन् सैद्धान्तिकमर्थं सम्यगेव प्रमाणन्यायाभ्यामुपपादयति—शाखे द्वे इति। अयमत्र शब्दान्वयः—द्वे शाखे मुक्तिभाजः पुरुषस्य पुण्यपापप्रहाणं क्वचित् कथयतः। अन्या पुनः शाखा प्रियतदितरयोर्द्वयोर्संक्रान्तिकाले पुण्यपापप्रवेशं ब्रूते। प्रियाप्रिययोः पुण्यपापसङ्क्रान्तिमाचष्ट इत्यर्थः। क्वचित् शाखायां हानञ्चोपायनञ्च समुच्चित्य कथितमिति अन्यत्र पृथगाम्नातयोस्तयोस्सम्पर्क एव न्यायानुगृहीतप्रमाणविषयत्वेन सिध्यति। असन्निहितानां

---

सर्वसाधारण्ये सिद्ध एव सुकरः। सूत्रकृताऽपि हानोपायनसमुच्चय एव सूत्रेणोक्तः। चिन्तनविषयविचारे सत्यपि तत्कथनं चिन्तनस्य तदुपजीवित्वात्। अन्यथा तत्क्रतुन्यायभंगात्। अतो हानोपायनसमुच्चयस्थापनव्याजेन सूत्रार्थमाह **शाखे** इति। सूत्रे हानौ उपायनशब्दशेषकत्वमुक्तम्। हानिरेवोपासकस्यापेक्षिता। हान्युपजीवित्वादुपायनस्य, तस्यापि ग्रहणम्। एकतरोक्तावन्यतरस्यापि ग्रहणमिति वक्तव्ये हानिस्थले उपायनमपि ग्राह्यमित्यस्य प्राधान्येन सूत्रे उक्तिः, 'उपायनस्य हान्युपजीवित्वात् तदुक्तौ हानेर्ग्राह्यत्वेऽपि हानेरुपायनमन्तरापि सिद्धेर्नोपायनस्य ग्राह्यता। प्रायश्चित्तेन पापहानौ क्रियमाणायामुपायनानपेक्षणात्' इति शंकावारणाय। अत्र विधूयेति धूननरूपहानस्यैवोक्ततया तस्योपायनापेक्षाऽस्त्येवेति तात्पर्यमिति व्यक्तं **भाष्यार्थदर्पणे**। श्लोकार्थस्तु—द्वे शाखे छान्दोग्यं मुण्डकञ्च **मुक्तिभाजः** मुक्तिं प्रेप्सतः **पुण्यपापप्रहाणं** हानिमात्रं कथयतः। **क्वचने**ति पदं पुण्यपापहानं भक्तिप्रारम्भकाले अन्तिमप्रत्ययोत्पत्त्यनन्तरञ्चेति कालद्वये भवति। तत्र प्रथमावसरे उपायनस्य दुर्वचत्वादनुक्तिर्युक्ता। उपायनस्य यदा प्रसक्तिः तदाऽपि=देहवियोगकालेऽपि तावन्मात्रं वक्तीति ज्ञापनाय। अनयोः शाखयोस्तच्चिन्तनमप्युक्तमित्यवसेयम्। "अश्व इव रोमाणि विधूय पापम्", 'पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" इति तद्वाक्यद्वयम्। **अन्या** शाट्यायनिशाखा, 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्" इति **प्रिये** सुहृदि, **तदितरस्मिन्** द्विषति च **तत्प्रवेशं** पुण्यपापोपायनं **ब्रूते**। एवं पृथगाम्नातयोः हानोपायनयोः **संपर्कस्य** मेलनसिद्धिः, **क्वचित्** कौषीतकिशाखायाम्, "तत् सुकृतदुष्कृते धूनुते। तस्य प्रियाः ज्ञातयः सुकृतम्, अप्रिया दुष्कृतम्" इति हानञ्चोपायनञ्चोक्तमिति **हेतुने**ति। तेन समुच्चययोग्यतावसायात्। ननु हानिवाक्यमेकस्यां शाखायाम्, उपायनवाक्यमन्यस्यां शाखायाम्, एवं दूरस्थयोः कथमेकवाक्यतेत्यत्राह **वाक्य**मिति। आकांक्षानुरोधेन उभयोः संपर्को युज्यते। अनेकेषु

शाखान्तरस्थानां वाक्यानामन्योन्यान्वयसिद्धिः कथं स्यादित्याशङ्क्य सर्वशाखाप्रत्ययन्यायमेव प्रागुक्तमिह प्रत्यभिज्ञापयति—वाक्यमिति ॥ ३५० ॥

(३५१) इत्थं ब्रह्मज्ञकर्मत्यजनमितरसंक्रान्तिमप्युक्तमस्तु
स्याच्चिन्तायां व्यवस्था पृथगनुपठनादित्यसत् क्लृप्तिदौस्स्थ्यात् ।
सर्वेषां मुक्तिभाजां द्वितयमपि यथोपास्तिसाध्यं समानं
तच्चिन्ताऽसौ तथा तन्महिमविद इति स्थापनीयोभयत्र ॥ ३१ ॥

पूर्वं हानोपायनयोर्वैकल्पिकत्वं पूर्वपक्षिणोक्तं प्रमाणतर्काभ्यां परिहृतम्। तर्हि मा भूत् तयोर्वैकल्पिकत्वम्, तथापि तच्चिन्तने वैकल्पिकत्वं स्यादित्याशङ्क्य तदपि नेत्याह—इत्थमिति। अयमत्र शब्दार्थः—इत्थं ब्रह्मज्ञानां कर्मत्यजनं-कर्मप्रहाणं प्रियाप्रिययोस्सङ्क्रान्तिसम्पृक्तमस्तु नाम। चिन्तायां पुनर्व्यवस्था = विकल्प एव भवतु। कुत इत्यत्राह—पृथगनुपठनादिति। तत् प्रतिक्षिपति—असदिति। सर्वत्रैकरूप्येण कल्पने सम्भाव्यमाने सत्यपि वैरूप्येण कल्पनाया अन्याय्यत्वादित्यर्थः। तदिदमाह—क्लृप्तिदौस्स्थ्यादिति। वैरूप्यकल्पनाया अन्याय्यत्वमेव विशदं प्रकाशयति—सर्वेषामिति। सर्वेषामपि मुक्तिभाजां द्वितयमपि हानमुपायनमुभयमपि यथोपासनं साध्यं समानमेव। एवं हानमुपायनञ्च पुण्यपापयोरस्तीत्युक्तम्। तद्वत् हानोपायनचिन्ता च ब्रह्मविन्माहात्म्यविदः उपासकस्याधिकारिणः कर्तव्येत्युभयत्र हानोपायनयोरपि चिन्ता स्वीकार्या। यथोपासनं फलप्राप्तिरिति नियमेन हानोपायनचिन्ताऽभावे हानोपायनरूपफलप्राप्तेरयोगात्। लोके खलु दृष्टा-

---

उदाहरणेषु तत्तदाकांक्षानुरोधेन दूरस्थवाक्यस्यापि विप्रकृष्टवाक्यं प्रति शेषत्वदर्शनात्। कर्मकाण्डे तत् द्रष्टव्यम्। अनेन चतुर्थपादेन कुशाच्छन्दस्तुत्युपगानवत् इति सूत्रव्याख्यानं संगृहीतम्॥ ३५० ॥

३१. पादस्योपासनविचाररूपत्वात् इदमप्यधिकरणं हानोपासनोपायनयोः समुच्चयनियमस्थापकम्। तच्छेषतयैव हानोपायनयोस्समुच्चयो विचारितः। अथ गुरुणो पूर्वपक्षसिद्धान्तौ दर्शयति इत्थमिति। इत्थं हानोपायनयोर्मिथस्सापेक्षत्वोपपादनेन ब्रह्मोपासककियमाणं पुण्यपापरूपकर्महानम्, ब्रह्मज्ञेतरस्मिन् सुहृदि द्विषति च तत्पुण्यपापोपायनयुक्तमस्तु। द्वयोः समुच्चय एव सर्वाधिकारिविषयेऽप्यस्तु। तथापि हानचिन्ता उपायनचिन्ता च प्रत्येकमेव क्वचित् स्यात्, यतो हानोपायनयोरेकैकमात्रपठनम्। अन्यथा एकतरपाठवैयर्थ्यात्। न च तदचिन्तने तदप्राप्तिः, चिन्तितमात्रलाभस्य तत्क्रतुवचनार्थत्वाभावात्। अयोगव्यवच्छेदस्यैव तत्र विवक्षिततया उपसितातिरिक्तांशयोगरूपान्ययोगव्यवच्छेदस्यार्थत्वाभावेन एकचिन्तनेऽप्युभयलाभसंभवादिति पूर्वपक्ष। निरस्यति इत्यसदिति। उक्तरीत्या हानमात्रवचनस्योपायननिवर्तकत्वाभावे सति तच्चिन्तनस्यापि स्वरसप्राप्ततेन तत्यागेन एकैकचिन्तनकल्पनस्यैव दुःस्थत्वात्=साधकयुक्तिरहितत्वात्। अन्यथा क्वचिदप्युपासने कस्यापि चिन्तने मा भूत्—तदनुपासनेऽपि तत्प्राप्तिसंभवेनाऽऽवश्यकत्वाभावात्। गतिचिन्तनादिवत् फलचिन्तनस्योत्साहार्थत्वात् फलरुच्यायातत्वाच्च तदातनोपायननिश्चयस्य हाननिश्चयदार्ढ्यावहत्वाच्चोभयचिन्तनमेव न्याय्यम्। तदाह सर्वेषामिति। एकैकमात्रं यत्र श्रुतम्, तद्विद्यानिष्ठानामपि मुमुक्षूणाम् मुक्तिप्राप्तिप्राक्काले यथा साध्यं

निष्टचिन्तयोरिष्टानिष्टफलप्राप्तिः स्वफलमेवेति हि सर्वैर्मन्यन्ते । अतो हानोपायनयोर्ब्रह्मविद्याफलत्वात् उपासनदशायां फलचिन्तनं कर्तव्यमेवेति निर्णयः । श्रूयते हि उपासनदशायां फलचिन्तनम्, 'ब्रह्मलोकमभिसम्भवानि', 'एतमितः प्रेत्याभिसम्भवितास्मि' इत्यादि । 'विष्णुर्जयतु नासुरः' इति ब्रह्मविदां विष्णुभक्तिविरोधिनिराकरणं प्रार्थनीयतया फलमेवेति सुप्रसिद्धमेव ॥ ३५१ ॥

(३५२) कर्त्रा तेनैव भोग्यं(ज्यं?) शुभमितरदपि स्थापितं कर्मकाण्डे
तस्मात् ब्रह्मज्ञकर्म द्विषति सुहृदि वा नापतेदित्ययुक्तम् ।
विद्यामाहात्म्यतो यद्विगलति विदुषः कर्म, तत्साम्यतुल्यं
विद्वत्प्रद्वेषभक्त्योः फलमिति कथने वाक्यतात्पर्यमिद्धैः ॥ ३२ ॥

इति हान्यधिकरणम् ॥ ९३ ॥

नन्वत्र प्रियाप्रिययोः सुकृतदुष्कृतसङ्क्रान्तिरुपदिष्टा । सेयं विरुद्धैव । न ह्यन्येन कृतं कर्मान्यत्र सङ्क्रामति । न ह्यन्यकर्मफलमन्यत्रोत्पद्यते, अकृताभ्यागम-कृतविप्रणाशप्रसङ्गात् । तेन विरुद्धमेतत् भवदुक्तमित्याशङ्क्ते—कर्त्रेति । अयमत्र शब्दान्वयः—यः करोति कर्म, तेनैव कर्त्रा तत्फलं भोग्यमिति कर्मकाण्डे स्थापितम् । दृश्यते हि, 'शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात्' (३-७-१८) इति । तस्मात् ब्रह्मज्ञकर्म शत्रौ मित्रे वा सङ्क्रामतीति न घटते । तदिदं प्रतिक्षिपति-अयुक्तमिति । विद्यामाहात्म्यत इति । अयमर्थः—न ह्यस्माभिर्ब्रह्मविन्निष्ठपुण्यपापयोः प्रियाप्रिययोस्सङ्क्रान्तिरुच्यते, नापि प्रियाप्रिय-

---

द्वितयमपि समानम्, तथा साधनभूतचिन्ताऽपि तथा=समाना । उपास्तीति हानचिन्तार्थकम् । तत्साध्यस्य समानत्वे तदपि समानं भवितुमर्हतीति स्पष्टत्वाय तदुक्तिः । यद्वा विद्याबलादेव हानोपायनयोः संभवात् चिन्तनमपि मा भूदिति ज्ञापनायोपास्तिपदेन ब्रह्मविद्याग्रहणमेव । एकतराचिन्तनेऽपि उभयं भवेत्, उपासनमाहात्म्यादिति किल पूर्वपक्षाशयः । एवं तर्हि तन्माहात्म्यविदः एकतरचिन्ताऽपि माभूत् । आस्थाबलादिति चेत्-तदुभयाविशिष्टम् । तत्तत्प्रकारचिन्तनबलात् तत्तदयोगव्यवच्छेदस्य तत्क्रतुवाक्यार्थत्वात् इदं चिन्तितत्वादवश्यभावीति निश्चयौचित्यमपि । एवं विद्याकार्यहानोपायनोभयचिन्तनं विद्यामाहात्म्याऽऽवेदनरूपमपि भवति । नियतसंपृक्तयोर्मध्ये एकतरचिन्तने अन्यतरस्याप्युपस्थितेः स्वयं भावात् तदातनचिन्तनस्य जातस्य निषेधायोगश्च । अतः तथेति समानत्वाद्धेतोः उभयत्र उभयविषयेऽपि चिन्ता स्थाप्यैव ॥ ३५१ ॥

३३. ननु विद्वत्कर्मणां तत्स्नेहिद्वेषिषु संक्रम इत्युक्तं न घटते । संक्रमो ह्ययं तेषु स्वफलं सुख दुःखञ्च जनयितुमिति वक्तव्यम् । तत् पूर्वमीमांसाविरुद्धम् । तत्र हि यजेत स्वर्गकाम इत्यादौ कर्मसाध्यतया ज्ञातं फलं कुत्र भवतीति विचारे, 'शास्त्रदेशितं फलमनुष्ठातरि' इति, यः शास्त्रेण प्रवर्त्यते तस्मिन्नेव तत्प्रवृत्त्यधीनकर्मफलमिति कर्मफलयोः सामानाधिकरण्यं स्थापितम् । तुल्यनयात्, 'यो ब्राह्मणायावगुरेत, तं शतेन यातयात्' इत्यादिवचनप्रतिपादितरीत्या च यः शास्त्रेण निवर्त्यते तत्रैव निषिद्धानुष्ठानफलमपीति सिद्धम् । तस्मात् शुभमशुभं वा फलं विहितनिषिद्धकर्मजन्यं तत्तत्कर्त्रैव भोज्यमिति हेतोः ब्रह्मज्ञस्य निष्पन्नमोक्षोपायस्य यत् कर्म तत् द्विषति सुहृदि वा नापतेत् न फलं

फलयोः सुहृदि दुर्हृदि वा जननम्; अपि तु स्वकर्मफलमेव सुहृदां दुर्हृदामप्युच्यते । यो हि ब्रह्म-विद्विषये प्रीणाति, यश्च तस्मै द्रुह्यति, तयोरुभयोरपि स्वाचरितस्य सुकृतस्य दुष्कृतस्य च निष्फलत्वा-योगात् स्वकीयकर्मफलमेवोच्यते। तर्हि स्वकर्मफलभोगे कर्मफलसंक्रान्तिवचनं कथं स्यात्? तदिदमव-हितमनाश्शृणु—अन्यकर्मणोऽन्यत्र संक्रान्तेरयोगात् अन्यकर्मफलस्यान्यत्र जननायोगाच्च न कर्मसंक्रा-न्त्यतिदेशः, नापि फलजननातिदेशः; अपितु तत्तत्कर्मफलपरिमाणमेवोच्यते। परमकारुणिकेन भगवता यावत्पुण्यफलमध्यात्मवित्सु न दत्तम्, तावत्पुण्यफलमध्यात्मविदनुकूलेषु स्वकृतानुकूल्यफलतया दीयते; यावत्पापफलमध्यात्मवित्सु न दत्तम्, तावत्पापफलमध्यात्मवित्प्रतिकूलेषु स्वकृतप्रातिकूल्य-फलतयादीयत इति। तेनाध्यात्मविदनुकूलप्रतिकूलयोर्द्विषमानफलपरिमाण[प्रदर्शन]मात्र मत्रोच्यते; न पुनरन्यकर्मणामन्यत्र संक्रान्तिरिति सर्वं समाहितम्॥ ३५२ ॥ इति हान्यधिकरणम्॥ ९३ ॥

९४ अथ साम्परायाधिकरणम् ॥ ३-३-१२ ॥

सूत्रम्—साम्पराये तर्तव्याभावात् तथा ह्यन्ये ॥ छन्दत उभयाविरोधात् ॥ गतेरर्थवत्त्वमुभ-यथाऽन्यथा हि विरोधः ॥ उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ यावदधिकारमवस्थितिराधि-कारिकाणाम् ॥ २६-३०.

(३५३) कर्मोद्धूतिर्मुमुक्षोः क्वचिदुपनिषदि श्रूयते साम्पराये
मार्गेऽन्यत्रां, द्वयैवं शकलश इह तच्चिन्तनञ्चास्तु मा भूत् ।
न ह्युक्तं कर्मसाध्यं पथि फलमथ गत्यर्थदेहानुवृत्ति
मुक्त्यै विद्यैव कुर्यादघहतिवचने पाठतोऽर्थो बली च(बलीयान्) ॥ ३३ ॥

जनयेदिति केषाञ्चिदाशङ्का । तामनुवदति कर्त्रेति । निरस्यति इत्ययुक्तमिति । श्रुत्यहृदयाज्ञानादिदं चोद्यमित्याशयः । तदुपपादयति विद्येति । संक्रमप्रतिपादकश्रुतिभिः सुहृदां द्विषताञ्च स्वकृतकर्मफलभोक्तृ-त्वमेवोच्यते, न ब्रह्मवित्कर्मफलभोक्तृत्वमिति न कश्चिद्दोष इति भावः । इदमत्र विवक्षितम्— संक्रम एवायं किंरूप इति चिन्त्यम् । कर्मणां पुण्यपापरूपाणामद्रव्यत्वात् एकस्मात् स्थलात् स्थलान्तरप्राप्तिरूपः संक्रमो अश्वरोमनखसंपृक्तरजसामिव न वक्तुं शक्यः । अतोऽन्यत्र संक्रमो नाम अन्यनिष्ठफलजनकत्वमेव । तत् कथमित्येव हि प्रश्नः । अन्यत्वाविशेषात् सर्वत्र फलं सर्वं स्यादिति शंकापरिहाराय तन्नियामकतया प्रीतिद्वेषावेव मित्रामित्रगतौ वाक्याद्वगताविति स्थिते तत्प्रीतिद्वेषयोरेव तत्तत्फलजनकत्वं श्रुतिमतमिति मन्यताम् । तज्जन्यमानं फलं किंरूपं कियदिति ज्ञापनाय ब्रह्मवित्कर्मसंक्रमोक्तिः । तथाच एतत्कर्म तत्र संक्रामतीत्यस्य, प्रियाप्रियपुरुषकृतौ ब्रह्मविद्विषयप्रीतिकोपौ ब्रह्मविदनुभाव्यकर्मजफलसमानं फलं स्वाश्रयेषु जनयतः इत्येवार्थः । तत्र प्रियाणामप्रियाणाञ्चानेकत्वात् प्रीतिद्वेषयोस्तारतम्यसद्भावाच्च कस्य कियत्कर्मसमानं फलमिति विवेकः तत्फलप्रतिलम्भकपरमपुरुषैकसाध्यः । तदयमर्थः—ब्रह्मविदनुभूतं येषां कर्मणां फलम्, तानि तु नष्टान्येव । यानि तु विद्यामाहात्म्यात् विगलन्ति प्रामादिकानि बुद्धि-पूर्वाणि च, तेषु यावत्कर्मसाम्यं स्नेहिद्वेषिगतस्नेहद्वेषयोः फलविषये कल्पयितुं युक्तम्, तावत् विमृश्य विद्यामाहात्म्यविगलद्बुद्धिपुण्यपापरूपकर्मसाध्यफलतुल्यं फलं विद्वद्विषयकभक्तिप्रद्वेषयोः सुहृद्द्विषद्गतयोः कल्पयति परमपुरुष इत्येवं कथ्यते चेत्, संक्रमवाक्यतात्पर्यमिदमेवेति सिद्ध्येदिति ॥ ३५२ ॥

सङ्गतिभाष्ये, "सुकृतदुष्कृतयोर्हानिमुपायनञ्च सर्वासु विद्यासु चिन्तनीयमित्युक्तम्। तद्धानं किं देहवियोगकाले देहादुत्क्रान्तस्याध्वनि च, उत देहवियोगकाल एवेति विशये" इति। तदर्थविचारस्तु—किं सुकृतदुष्कृतहानं देहवियोगकाले अध्वनि च, उत देहवियोगकाल एवेति। किमुभयत्र हानिश्रवणम्, उत देहवियोगकाल एवेति। किं, 'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति' इत्युपक्रम्य, 'स आगच्छति विरजां नदीम्। तां मनसाऽत्येति। तत् सुकृतदुष्कृते धूनुते' इति चरमश्रुतस्य, 'तत् सुकृतदुष्कृते धूनुते' इति वाक्यावयवस्य, 'स एतं देवयानम्' इत्येतस्मात् प्रागन्वयः, उत यथापाठमन्वय इति। किं, 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इत्यशरीरस्य सुखदुःखाननुभवश्रवणानुरोधेन प्रागन्वयवर्णनं न्याय्यम्, उत देवयानगमनश्रवणानुरोधेन सूक्ष्मशरीरस्थित्यर्थं यथापाठमन्वयवर्णनं न्याय्यमिति। अत्र पूर्वपक्षी मन्यते—ताण्डिनो हि देहवियोगकाले सुकृतदुष्कृतविधूननमधीयते, 'अश्व इव रोमाणि विधूय' इत्यादिना। कौषीतकिनस्तु, 'स आगच्छति विरजां नदीम्। तां मनसाऽत्येति। तत् सुकृतदुष्कृते धूनुते' इति विरजातरणानन्तरं सुकृतदुष्कृतविधूननमामनन्ति। तेनोभयवाक्यप्रामाण्यात् उभयत्र अंशेन सुकृतदुष्कृतविधूननम्, तच्चिन्तनमपि ब्रह्मविदा कर्तव्यं तथैवांशेनेति स्थितम्। तदिदमाह—कर्मोद्धूतिरिति। शब्दान्वयस्तु—क्वचिदुपनिषदि कर्मविधूननं मुमुक्षोर्देहवियोगकाले श्रूयते; अन्यस्यामुपनिषदि मार्गे। तेन द्वयमपि प्रमाणम्। शकलशो द्विधैवमस्तु केषाञ्चित् कर्मणां देहवियोगकालेऽपरेषां मार्गे इति। चिन्तनमपि

२३. हानिचिन्तनमुपायनचिन्तनञ्च समुच्चेतव्यमित्युक्तम्। कीदृशाकारमं चिन्तनं... मिति विचार्यते। चिन्तनमनुच्चयवत् हानकालसमुच्चयोऽपि किं न इति च तत्र पूर्वपक्षमाह कर्मेति। मुमुक्षोर्भवन्ती कर्मोद्धूतिः पुण्यपापविधूननं क्वचिदुपनिषदि=छान्दोग्ये, 'अश्व इव रोमाणि विधूय पापं........धूत्वा शरीरम्' इति सांपराये देहवियोगरूपमरणकालभवित्वेन श्रूयते। अ यस्यां कौषीतक्युपनिषदि 'स आगच्छति विरजां नदीम्....तत् सुकृतदुष्कृते धूनुते' इति मार्गे अर्चिरादिरूपब्रह्मप्राप्तिमार्गमध्यभावित्वेन श्रूयते। इह अत्र विकल्पे मानाभावात् उभयमुच्चये एवं श्रुतिद्वयप्रामाण्यात् द्विधा प्रकारद्वयेन शकलशः भागरूपेणास्तु। तच्चिन्तनं च उद्धूतचिन्तनमपि शकलशोऽस्तु न च सूक्ष्मशरीरवियोगकाल एव धूननमस्तु, धूत्वा शरीरमिति तद्ग्रहणसंभवादिति वाच्यम्, शाट्यायनके 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्याम्' इति पुत्रेषु दायप्राप्तिपर्यन्तकालवोक्त्या स्थूलदेहवियोगकालस्यैव ग्रहणादिति। निरस्यति मा भूदिति अविशेषेण मरणकाल एव सर्वो धूनने श्रुत्यर्थे संभवति, विभागकल्पने गौरवात् कर्मशेषश्च तदा स्यात्, यदि कर्मफलं मार्गेऽनुभोक्तव्यं कल्प्यत् स्यात्। कर्मसाध्यं फलं पथि भवत् किमपि न श्रुतमस्ति। ननु सूक्ष्मशरीरोपत्तेः प्राक् कर्मनाशे तदेव नोत्पद्येत। यथा तृणजलायुका नवतृणग्रहणानन्तरं पूर्वतृणं त्यजति, तद्वत् सूक्ष्मदेहग्रहणानन्तरमेव देहवियोग इति तदुत्पत्तेः परस्तादेव कर्मनाशे समनन्तरक्षणे सूक्ष्मशरीरमपि नश्येत्। एवञ्चात्रैव मुक्तौ अर्चिरादिगतेः तद्द्वारा जीवगमनस्य च न कश्चिदर्थः=प्रयोजनम्। एवञ्च गतिश्रुतिरप्यर्थरहिता स्यात्। उभयथेत्येके तु तदर्थवत्त्वम्—इत्यत्राह गतीति। गत्वैव मुच्यते; न त्वत्र। गत्यर्थं तस्य देहस्य सूक्ष्मस्यानुवृत्तिम् अविनाशं विद्यैव कुर्यात्। अन्यथा मुक्त्यसंभवात्। विद्यैव कर्माभावेऽपि सूक्ष्मदेहं स्थापयतीत्यर्थः।

शकलशोऽस्त्विति । तदिदं प्रतिक्षिपति—मा भूदिति । तदेव विवृणोति—न हीति । यदि मार्गे किमपि फलमुक्तं स्यात्, तदा तत्फलार्थं कर्मविशेषोऽस्तीति वक्तुं शक्येत । मार्गानुभाव्यफलाभावात् सफलं कर्म सर्वमपि साम्पराये नश्यतीत्यर्थः । ननु यदि सर्वं कर्म देहावसाने नश्येत्, तर्हि अर्चिरादिमार्गेण गमनमेव न स्यात्। तथाच निरर्थक एवाध्यात्मविदां प्रयास इत्याशङ्क्य परिहरति—अथेति । मुक्त्यै गत्यर्थदेहानुवृत्तिं ब्रह्मविद्यैव कुर्यात् । तर्हि द्वयोः प्रमाणयोः तुल्यबलत्वात् कथं देहावसान एवेति नियम इत्याशङ्क्य पाठक्रमादर्थक्रमस्य बलीयस्त्वेन देहावसाने कर्मक्षयस्यार्थक्रमप्राप्तत्वात् पाठक्रमप्राप्तं मार्गे कर्मक्षयं बाधित्वा अर्थो वर्ण्यत इति न कश्चिद्विरोधः ॥ ३५३ ॥

(३५४) निश्शेषं कर्म नश्येदिह यदि विदुषः स्थूलदेहान्तमात्रे
विश्राम्येत् तस्य तावच्चिरमिति हि वचो नार्थवत्त्वं गतेः स्यात् ।
गत्वा सम्पद्य चाऽऽविर्भवनमिति न संबोभवीतीत्ययुक्तं
स्यात् धीसङ्कोचमात्रस्थितिकृदनुगतः सूक्ष्मसंस्कारयोगः ॥ ३४ ॥

इति साम्परायाधिकरणम् ॥ ९४ ॥

स्यादेतत्—निश्शेषं कर्म विदुषो यदीहैव नश्येत्, तदा, 'तस्य तावदेव चिरम्' इति वाक्यं स्थूलदेहान्तमात्रे विश्राम्येत् । तथाच तदानीमेवासौ मुक्तस्स्यात् । एवञ्च सति अर्चिरादिगमनस्य प्रयोजनवत्त्वं न स्यात् । न चार्चिरादिगमनं नास्तीति वक्तुं शक्यम्; 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इत्यर्चिरादिमार्गेण गत्वा परमपुरुषप्राप्त्यनन्तरमेव मोक्षस्याम्नातत्वात् । तत् कथं स्थूलदेहावसाने निश्शेषकर्मविलोप इति कस्यचित् शङ्का । तदिदमनुवदति—निश्शेषमिति ।

यथा लोको जीर्णमपि तटाकं सस्याभिवर्धनादिव्यवसायाभावेऽपि स्नानादि कर्यमित्यध्यवसाय अंशतो रक्षति, तद्वत् । स्वर्गादिगमनौपयिकसूक्ष्मदेहोत्पत्तिः स्थितिश्च यथा पृथक्कर्मनिरपेक्ष स्वर्गादि फलार्थानुष्ठितकर्मप्रभावादेव । तथा विद्यामाहात्म्यादेव तत् सर्वमितीष्यताम् । अतो न तदर्थं कर्मानुवृत्तिः । मार्गे बहुभिर्बरार्पणादिसंमाननमपि विद्याफलमेव । पश्चादप्राकृतदेहमपि दास्यन्त्या विद्यायाः एतत्सूक्ष्मदेहदानमीषत्करम् । अतः पथि तरितव्यस्य=प्राप्यस्य भोगस्याभावात् कर्मक्षयः प्रागेवेति अर्थस्वभावे चिन्तिते पाठक्रमादर्थक्रमस्य प्रबलत्वात्, 'कौषीतकिपाठानुरोधेन मार्गे कर्मक्षयः' इतीदमुपेक्ष्य प्रागेव स इष्यते । तदाह अथेति । अप्रहतिवचने पुण्यपापक्षयवचनविषये पाठक्रमापेक्षया अर्थस्वभावो बलीयान् । श्रुती चेति चकारेण छन्दत उभयाविरोधादित्युक्ता देहवियोगकालभावित्वपरश्रुतिः समुच्चीयते । श्रुत्योर्विरोधे अर्थौचित्यं निर्णायकम् । श्रुत्यन्तरमन्यत्र नेयम् । तावता क्रमभंगमात्रम्, न श्रुतिभंगः ॥ ३५३

३४. ननु, 'अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते ।....तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता । सर्वभूतेषु भूपाल तारतम्येन वर्तते' इति कर्मण एव ज्ञानसंकोचतारतम्यहेतुताया उक्तत्वात् सर्वकर्मक्षये देहवियोगकाल एव ज्ञानविकासप्राप्तिरिति वक्तव्यम् । तथा च गतिः किमर्थमेषितव्येति शंकायाम्, गतेरर्थवत्त्वमित्यादिसूत्रे एतच्छंकातत्परिहारावभिमतावित्याशयेनाऽऽह निश्शेषमिति । इह एतल्लोक एव स्थूलदेहस्यान्तमात्रे विनाशावसर एव विदुषः कर्म निश्शेषं नश्येच्चेत्—'तस्य तावदेव चिरम् यावन्न विमोक्ष्ये' इति वचोऽस्यैवार्थे स्थूलदेहान्तमात्रे विश्राम्येत् । निखिलकर्मक्षणानन्तरं विलम्बेन

क्तशङ्कां निराकरोति—अयुक्तमिति। अयुक्तत्वमेवोपपादयति—स्यादिति। अयमर्थः—सुखदुःखादि-फलप्राप्तिहेतुः कर्मकलापो देहावसाने यद्यपि विश्रान्तः, तथापि परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पत्तिपर्यन्तं ज्ञानसङ्कोचमात्रहेतुसूक्ष्मकर्मशेषोऽनुवर्तते। कथमेतदिति चेत्, 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति श्रुतिसामर्थ्यात्। न हि स्वाभाविकज्ञानवतः पुरुषस्याकारणक एव तावन्तं कालं ज्ञानसङ्कोच इति वक्तुं शक्यते। न च तस्य भगवन्निग्रहशेष-मन्तरेण कारणान्तरमस्तीति। तेन भगवन्तं प्राप्तस्यैवासङ्कुचितब्रह्मानुभवरूपमोक्षसिद्धेः साक्षादेव श्रुतत्वात्तदनुक्रमेणैव भगवन्निग्रहनिवृत्तिरिति सिद्धम्॥ ३५४॥ इति साम्परायाधिकरणम्॥ ९४॥

## ९५॥ अथ अनियमाधिकरणम्॥ ३-३-१३॥

सूत्रम्—अनियमस्सर्वेषामविरोधश्शब्दानुमानाभ्याम्॥ ३२॥

(३५५) पन्थाः स्यादर्चिरादिः फलमिह सकलब्रह्मविद्यासु, मा वा;
प्रारभ्याधीतियोगात् प्रकरणनियता तस्य चिन्तेति चेन्न।
सर्वासां तद्य इत्थं विदुरिति वचसाऽस्मात(त्राथ) येचेति चोक्त्या
मार्गे साधारणेऽस्मिन् तदनुसरणतस्तद्द्वेवास्य चिन्ता॥ ३५॥

पूर्वाधिकरणे स्थूलदेहावसान एवार्चिरादिमार्गोपक्रमे स्थूलसर्वकर्मक्षयः, सूक्ष्मसंस्कारशेषेण परं ज्योतिरुपसम्पन्नस्यैव स्वेन रूपेणाभिनिष्पत्तिरित्युपक्षिप्तम्। तत्र(अत्र) प्रस्तुतोऽयमर्चिरादिमार्गो यस्यां विद्यायामधीतः, तद्विद्यानिष्ठस्यैव स्यात्, किं वा सर्वविद्यानिष्ठस्येति चिन्त्यत इति सङ्गतिः।

---

मोक्षणीयस्य कस्यचिदभावात्। कर्मक्षयविवक्षयैव हि तस्य तावदेवेति वाक्यस्य भक्तियोगारम्भशरीरा-वसानपर्यन्तमित्यर्थमुपेक्ष्य, यावदधिकारमवस्थितिराधिकारिकाणामित्यालोच्य प्रारब्धकर्मचरमशरीरवियोगे तदुत्तरभोक्तव्यसर्वकर्मक्षये इत्यर्थ उक्तः। तथाच स्वरूपाविर्भावोऽपि तदैवेति, गतिज्योतिस्संपत्त्युभयाऽऽ-नन्तर्यमाविर्भावस्य कथितमनुपपन्नं स्यादिति। सूत्र इवात्रापि गतेरर्थवत्त्वमित्यस्य गतिश्रुतेरभिधेय-वत्त्वमित्यर्थ एव वाऽस्तु। खण्डयति इत्ययुक्तमिति। प्राप्तव्यफलाभावात् प्रापकपुण्यपापत्यजनमादावे-वेत्युक्तम्। अर्चिरादिगतिब्रह्मसंपत्त्यनन्तरमेव स्वरूपाविर्भावस्योक्ततया तावत्पर्यन्तं धीसंकोचः सिद्धः। प्राकृतसदसल्लोकावच्छिन्नसुखदुःखानुभवहेतुपुण्यपापप्रणाशेऽपि धीसंकोचस्थित्या सामान्यतो विधिनिषेध-विषयकर्मत्वमेव धीसंकोचं प्रति कारणमित्यनंगीकृत्य, तालपत्रमयकटादौ प्रसरणातस्याप्रतिबन्धकस्य स्थितस्थापकसंस्कारस्येव धर्मभूतज्ञानप्रसरप्रतिबन्धकस्य संस्कारविशेषस्यानुवृत्तिरूह्यते। स चानादिर्नैकः। उत्पत्तेः अत एव ध्वंसस्य चावश्यकत्वात्। अतः संस्कारात् अदृढात् दृढः, दृढात् दृढतर इति अनादिकालात् क्रमेणानुवृत्तः सूक्ष्मः कर्मफलत्वात् कर्मशेषः संस्कारः कर्मक्षयानन्तरमपि मार्गे मुमुक्षुमनुगतः स्यादिति। न हि मृषावादिमते तत्त्वज्ञाने सति मिथ्यात्वाविशेषात् अविद्यया सह वासनाया अपि विनाशवत् सर्वनाशावश्यकता। अतः संस्कारः कश्चित् स्यात्स्वतीति॥ ३५४॥

३५. पुण्यपापहानस्येवार्चिरादिगतेरपि सर्वब्रह्मविद्याफलत्वात्, गतेरर्थवत्त्वमिति पूर्वाधिकरणे उपस्थितत्वात् तच्चिन्तनमपि साधारणमिति स्थापयितुं मार्गस्य सर्वोपासनसाधारण्यमनियमाधिकरणोक्तम्।

निष्ठांश्चानूद्य अर्चिरादिमार्गो विधीयते, तेन सर्वासामपि विद्यानामर्चिरादिमार्गः फलतया साधारण एव। तेन ब्रह्मविद्यानिष्ठानां फलचिन्तनस्यावश्यकत्वात् अर्चिरादिमार्गचिन्तनमपि तद्वदेव मार्गवदेव साधारणं स्यादिति। न हि फलानुसन्धानमन्तरेणोपायनिष्ठानामुपासनं सम्भवति। अत एव, 'ब्रह्मलोकमभिसम्पद्यन्ते' इति चिन्तनमवश्यकर्तव्यत्वेन प्रतिपादितमिति पूर्वमप्युक्तमस्माभिः ॥३५५

(३५६) हेयोपादेयमार्गाद्वितयमुपदिशन् मुक्तिदाता मुमुक्षोः
योगी यः कश्चनैतत्सरणियुगलविन्मुह्यते(?) नेत्यगायत्।
तस्मात् साद्दशाधी अविशदविशदीकर्तृवाक्यावमर्शात्
ब्रह्मप्राप्त्यर्हकृत्स्नप्रणिहित(हिति?)विहितं(घटितं) मार्गचिन्ताविधानम् ॥३६॥

गतिचिन्तनावश्यकर्तव्यत्वं भगवद्वाक्यपरामर्शेनाप्युपपादयति—हेयोपादेयेति। अयमर्थः— हेयमार्गो धूमादिमार्गः। उपादेयमार्गः पुनः अर्चिरादिमार्गः। उभयमपि मार्गमुपदिशन् मुक्तिदाता भगवान्, 'नैते सृती पार्थ जानन् योगी मुह्यति कश्चन' इति गतिचिन्तनस्यावश्यकर्तव्यत्वमगायत्। तस्मादस्मदादीनामधीतानां विशदार्थविशदीकर्तुर्भगवतो वाक्यावमर्शात् ब्रह्मप्राप्त्युपयुक्तकृत्स्नार्थप्रणि-

---

शाखाभेदे तत्र तदुपक्रमध्येतृभेदात् सम्यक्वैव। उपकोसलविद्या तु पञ्चाग्निविद्यया सह छान्दोग्यरूपैकशाखागतेति तत्र तत्पठनं व्यर्थमिति स्यात्। तदपि न। तत्र तेऽर्चिषमेवेति एवकारश्रवणादेवकारार्थविधान एव नैर्भर्यात्। ब्रह्मविदमुद्दिश्य कर्तव्यशव्यकर्माकरणेऽपि स विद्यामाहात्म्यात् अर्चिरादिमार्गमेव प्रतिपद्यते इति पुत्रादिकर्तव्यशव्यकर्मनिरपेक्षत्वविधानेदम्परं तद् वचनमिति ॥ ३५५ ॥

३६. ननु, 'तद्य इत्थं विदुः' इत्यादि वाक्यतो ब्रह्मोपासनावगतावपि, गतेस्तत्फलत्वोक्तावपि गतिचिन्तनं कुत्र विहितमस्ति इत्याशङ्कायां गीतां तत्र प्रमाणयति हेयेति। एतदर्थमेव सूत्रे शब्दानुमानाभ्यामित्यत्रानुमानपदमिति भावः। शब्दानुमानाभ्यामित्यस्य श्रुतिस्मृतिभ्यामित्यर्थः। 'अत एवः शब्दात्' इत्यत्रेव शब्दपदेनैव स्मृतिग्रहणसम्भवे अनुमानपदप्रयोगः सत्या मार्गाभ्यामस्य सर्वब्रह्मवित्साधारण्यं युक्तञ्च उपचारितमिति ज्ञापनार्थः। श्रुतौ, 'द्वे सृती अशृणवम्' इति आमुष्मिकप्रापकौ मार्गौ द्वावेवेति वचनात् तत्रैकतरस्य धूमादिमार्गस्य क्षुद्रस्वर्गार्थस्य या हेयत्वम् अन्यस्य देवयानस्योपादेयत्वञ्च ज्ञाप्यते गीतायाम्। तेन मुमुक्षुमात्रान्वयसाधारण्यमर्चिरादौ सिध्यति। तत्र, "तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः" इति मार्गोद्देशं कृत्वा तदनन्तरमनुपरम्य, "नैते सृती पार्थ जानन् योगी मुह्यति कश्चन" इति तज्ज्ञानं प्रतिष्ठितं कथं मोहाभावायेति विशिष्य वचनात् गतिचिन्तनमावश्यकमिति। अगायत् गीतायामुपादिशत। मुक्तिदाता भगवान् मुमुक्षोः हेयोपादेयमार्गौ उपदिशन्, 'योगी' इत्यादिकमगायदित्यर्थः। तस्मादादीन्। अस्मादृशानां या अधीतयः तत्तच्छाखाध्ययनानि। ताभिर्लब्धाभिरप्यविशदः व्यक्तमानुपूर्व्येण साधनत्वेन चाज्ञातः यो मार्गः तस्य विशदीकर्तुः भगवतः यद्वा विशदावतु विशदीकारकं यद् वचनं तदवमर्शादवगम्यते ब्रह्मप्राप्त्यर्हः=मुमुक्षुभिः कृत्स्नेषु सर्वेषु प्रणिहितेषु सविद्यारूपोपासनेषु घटितमेतत् चिन्तादिमार्गचिन्ताविधानमिति। शंकितांशपरिहारोचितविशेषांशलाभः एवं व्याख्याने। चिन्तामण्याद्युक्तमपि द्रष्टव्यम्। मुमुक्षोरुपदिशन् इत्युक्त्या धूमादिमार्गज्ञानस्य,

हितविहितम्(घटितम्)। प्रणिहितं प्रणिधानं भावे निष्ठा। अयमत्र निर्णयः—न केवलमत्र मार्गचिन्ताविधानमुच्यते ; अपितु ब्रह्मप्राप्त्युपयुक्तं यद्यत्र प्रामाणिकमुपलभ्यते, तत् सर्वमपि चिन्तनीयं देहावसानसर्वकर्मक्षयप्रियाप्रियसंक्रान्त्यर्चिरादिमार्गविरजातरणादिकं सर्वमपि फलत्वादुपायदशायां चिन्तनीयमिति ॥ ३५६ ॥

(३५७) हानादेरर्चिरादेरपि किमभिहितं चिन्तनं सूत्रकारैः ?

विद्याङ्गत्वादिसिद्ध्यै यदि, भवतु तदाऽनन्तरे पाद एतत् ।

मैवं; विद्याङ्गतायामपि भजनमिवेदञ्च धीत्वाविशेषात्

कर्मादिभ्यो विभक्तं कथयितुमिह तत्सूत्रणं स्थानपाति ॥ ३७ ॥

इत्यनियमाधिकरणम् ॥ ९५ ॥

अत्र सूत्रकारैर्हानोपायनाभिधानस्य पादसङ्गतिमाशङ्क्य परिहरति—हानादेरिति । अयमत्र पूर्वपक्षिणो भावः—हानोपायनादिचिन्तनं विद्याङ्गमेव, अङ्गं च निरूपणीयमुत्तरत्र विद्याङ्गपादे, अयञ्च पादो विद्यास्वरूपोपदेशपरः, तस्मादत्र कथं सङ्गतिरिति । हानादेरर्चिरादेरपि सूत्रकारैश्चिन्तनं किमर्थमिहाभिहितम् ? विद्याङ्गत्वसिद्ध्यै चेत् , तदा अनन्तरे(रं) विद्याङ्गपादे भवतु नात्रेति। इमामाशङ्कां प्रतिक्षिपति—मैवमिति । अत्रैव गतिचिन्तनादिसूत्रस्य स्थानपातित्वमस्त्येव । कुत इत्यत्राह—विद्याङ्गतायामिति । गतिचिन्तनादेर्विद्याङ्गत्वे सत्यपि भजनमिव साधनभूतमुपासनमिव उपासनाङ्गभूतमिदञ्च गतिचिन्तनादिकमपि कर्मादिभ्यो विभक्तं इति कथयितुमिह तत्सूत्रणं स्थानपातीत्यन्वयः। अयमत्र भावः—विद्याङ्गानि कानिचित् ज्ञानरूपाणि, कानिचित् क्रियारूपाणि, ज्ञानरूपाणां गतिचिन्तनादीनां प्रधानभूतविद्यातुल्यत्वप्रदर्शनार्थमिह तच्चिन्तनम् , इतरेषां कर्मरूपाणां प्राचुर्येण विद्याङ्गपादे चिन्तनमिति विभागः। नेत गतिचिन्तनादेः स्थान एवाभिधानमिति नास्थानपातित्वशङ्कावकाशः ॥ ३५७ ॥ इत्यनियमाधिकरणम् ॥ ९५ ॥

---

'वेत्थ यथा देवयानपितृयाणयोर्व्यावर्तने' इत्युक्तरीत्या हेयपितृयाणव्यावृत्तया देवयानज्ञानार्थमिति ज्ञाप्यते । योगी कश्चनेति गीताश्लोके सत्त्वात मुमुक्षु प्रत्येवोभयगतिवचनम् । न विद्यापूर्वदत्तकारिणं प्रति । कर्मिणो मार्गज्ञानस्यावश्यकत्वाभावाच्च । अत एव कर्मकाण्डे तदनुक्तिः । एवमुभयज्ञानेऽपि चिन्तनं देवयानमात्रविषयकमिति, 'योगी भवार्जुन' इत्यत्र भावितम् । मुह्यते इत्यात्मनेपदस्यासाधुत्वे, 'योगी नो कश्चनैतत्सरणियुगळविन्मुह्यतीत्यभ्यगायत्' इति रीत्या पाठः शोधनीयः। गीतायां यच्छब्दाभावात् अत्रापि य इत्यनपेक्षितम् । अपिशब्दः न केवलं मार्गोपदेशः, चिन्तनोपदेशोऽपीति समुच्चयार्थः । मुह्यताकेति पाठो वा । मुह्यतादिति लोट् ॥ ३५६ ॥

३७. पादासंगतिमाशंक्य परिहरति हानेति। परविद्याविचारमध्ये तदनन्तर्गतं हानादिचिन्तनमर्चिरादिगतिचिन्तनञ्च सूत्रकारैर्वक्तुमुचितम् । विद्यांगत्वस्य विद्यावत् फलादिकर्तव्यत्वस्य च सिद्धये अभिहितमिति चेत्–अभिधेयत्वेऽपि अंगपाद एवाभिधानं युक्तमिति । परिहरति मैवमिति । उत्तरपादे वक्ष्यमाणानि कर्मशमदमादीनि न धीरूपाणि । इमे तु चिन्तने धीरूपे इति विद्यासादृश्यात् अत्राभिहिते इति। इदं सर्वं चिन्तनं भजनं भक्तियोगमिव कर्मादिभ्यो विभक्तत्वेन कथयितुमिह पादे एतद्विषयसूत्रकरणं स्थानपाति उचितावसरप्राप्तमेवेत्यर्थः अन्थारम्भे मन्दत्वासंगतत्वे इत्युक्तासंगतत्वोदाहरणमिदमपि ॥

## ९६ ॥ अथ अक्षरध्यधिकरणम् ॥ ३-३-१४ ॥

सूत्रम्–अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत् तदुक्तम् ॥ इयदामननात् ॥ ३३, ३४ ॥

(३५८) यस्यामस्थूलतादिः प्रपठित उचितं चिन्तनं तस्य तस्याम् ;
नान्यस्याम् ; मानहानेः ; न यदि, नियमनं कस्य कुत्रेति चेन्न ।
हेतुत्वोक्षेयदोषव्यपनयनमिह ब्रह्मविद्यासु सर्वा-
स्वानन्दाधिक्रियोक्तक्रमनियमितमित्यस्य सार्वत्रिकत्वात् ॥ ३८ ॥

पूर्वमर्चिरादिगतेः सर्वविद्यासाधारण्येन श्रुतत्वात् तच्चिन्तनस्यापि न्यायप्राप्तं सर्वविद्यासाधारण्यं प्रतिपादितम् । अधुना पुनः अक्षरधियां सर्वविद्यासाधारण्यं न वेति चिन्त्यत इति सङ्गतिः। पूर्वाधिकरणे प्रकरणं पूर्वपक्षहेतुः, अत्रापि तथेति वा सङ्गतिः । तदर्थविचारस्तु—बृहदारण्यके गार्गिब्राह्मणे, 'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वम्' इत्यादि। अस्थूलत्वादिकं तत्रैवोपसंहार्यम्, उत सर्वासु विद्यास्विति। तदर्थं विचार्यते—किं निषेधरूपाणामस्थूलत्वादीनामेव ब्रह्मासाधारणाकारतया ब्रह्मस्वरूपनिरूपकत्वम्, उत केवलज्ञानानन्दादीनामिति। किमस्थूलत्वादिकं विना शङ्कितकृत्स्नदोषव्यावृत्तिप्रतीतिरस्ति, नेति । अत्र पूर्वपक्षी मन्यते—ननु गार्गिब्राह्मणादिषु क्वचिदेवाक्षरत्वादिकमाम्नातम्। यस्यां तु विद्यायां यावद्गुणजातमाम्नातम्, तावदेव तत्रोपसंहार्यं तत्प्रकरणपठितत्वात्। अन्यथा सर्वं सर्वत्रोपसंहार्यमिति सद्विद्यादीनां गुणसङ्करः स्यात्। ब्रह्मस्वरूपप्रतिपत्तिस्त्वानन्दादिभिरेवेति प्रागेवोक्तम्। तेन किमनेनाजागलस्तनायमानेन ब्रह्मस्वरूपप्रतिपत्तावक्षरत्वादिना गुणेनेति । तदिदमनुवदति—यस्यामिति । अन्यत्रानुपसंहार्यत्वमाह—नान्यस्यामिति । तत्र हेतुमाह—मानहानेरिति। सर्वस्यापि गुणस्य सर्वत्रोपसंहारः स्यादित्यर्थः । एवं पूर्वपक्षमनूद्य दूषयति—नेति । पूर्वपक्षप्रतिक्षेपप्रकारं विशदमेव दर्शयति—हेतुत्वेति । अयमत्राभिप्रायः—न केवलं ब्रह्मगुणमात्रमत्रोच्यते, अपि तु कारणत्वाशङ्कितदोषपरिहारेण स्वरूपप्रतिपत्तिहेतुर्गुणविशेषः। स पुनरमलत्वम्; तेन सहिताः सत्यत्वादयोऽपि । तथाहि–सत्यत्वं सविकारमचिद्वस्तु व्यावर्तयति ; [1]ज्ञानत्वं विलुप्तबुद्धिकं तत्संसृष्टं जीवम् ; अनन्तत्वं पूर्वावधिमन्तं मुक्तम् ; आनन्दत्वमपि परवादिपरिकल्पितं निरानन्दमीश्वरम्। तेनामलत्वेन नित्यो व्यावर्त्यते । यद्यप्यनन्तपदेनैवाणुस्वरूपो नित्योऽपि व्यावर्त्यते, तथापि धर्मभूतज्ञानतो देशकालाभ्यामानन्त्यस्य तस्मिन् विद्यमानत्वात् कथञ्चिदानन्त्यं वक्तुं शक्यते । अमलत्वं तु सर्वेषां व्यावर्तकमेव । नित्योऽपि परतन्त्रचेतनत्वात् संसारे स्वरूपयोग्यतावान् केवलं भगवदपचाररूपसहकारियोग्यताऽभावात् नित्यमेवासंसारी वर्तते । ईश्वरस्तु स्वतन्त्रचेतनत्वात् संसारे स्वरूपयोग्यतारहितः। तेनेदमेवामलत्वमीश्व-

---

३८. अंगं सत् यत् सर्वविद्यासाधारणं तत् उक्तम् । अंगिनि प्रधानांशः सर्वसाधारणतया प्रागुक्तादधिकोऽपि घटनीयोऽथ प्रदर्श्यते **यस्या**मिति । **यस्यां** गार्गिविद्यायां अस्थूलमनण्वह्रस्वमित्यादिना अस्थूलत्वादिर्धर्मः प्रकर्षेण पठितः। तस्य चिन्तनं तस्यामेवोचितम् ; नान्यस्यां विद्यायाम् । कुतः ? **मानहानेः** अन्यत्रचिन्तनसाधकमानाभावात् । **न यदि**=अन्यथा, कस्य धर्मस्य कुत्र **नियमनं** व्यवस्थापनम् । सर्वः सर्वसाधारणः स्यात् । निरस्यति नेति । हेतुमाह हेतुत्वेति । **हेतुत्वेन** जगत्कारण-

---

1. अत्र चिन्तामण्युक्तोऽर्थः क्लिष्टः । 2. अत्र जन्माद्यधिकरणभाष्यरीतितोऽन्या गतिः ।

रस्यासाधारणमेव । किञ्चनरर्सं रणनियर्तकत्वमीश्वरस्यासाधारणम् , तथामलत्वमेव । तेन स्वयं मलरहितत्वात् इतरमलप्रतिभटत्वाच्च ईश्वर एवामल इत्युच्यते । तर्हि मलत्वमेवास्तु ; किं सत्यत्वादिभिरिति चोद्यमवशिष्यते । तत्राह नास्तीत्याह—हेतुरेवेति । द्वेधा हि लक्षणमभिधीयते—एकेनैव विशेषणेन कृत्स्नालक्ष्यव्यावृत्तिरित्येकः पक्षः ; अपरस्तु नानाविशेषणैः युक्तस्य क्रमेणालक्ष्यव्यावृत्त्या लक्ष्यस्वरूपनिरूपणं क्रियते तदिदमिति भाष्यकाराभिप्रायः अयमत्र शब्दार्थः— कारणत्वेन वस्त्वन्तरनिष्ठदोषा आशङ्क्यन्ते । तेषां व्यपनयनं सत्यज्ञानानन्तानन्दामलत्वैः क्रियते । तेन क्रमाद्दोषव्यपायप्रतिपत्तिः । प्रतिपत्तिसौकर्यार्थमनुक्रमादर्थविशेषप्रतिपत्तौ दृष्टान्तमाह—आनन्देति । आनन्दमयाधिकरणेऽन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया उत्तरोत्तरं क्रमादेवाधिकत्वेन प्रतिपाद्यन्ते । एवमत्राप्यनुक्रमेण सर्वाधिकत्वेन भगवान् प्रतिपाद्यते । तेन प्रथमत एवामलत्वेन भगवतः सर्वाधिकत्वप्रतिपत्तौ किमेभिः सत्यत्वादिभिर्विशेषणैरिति चोद्यं परिहृतमेवेति । अस्य सार्वत्रिकत्वात्—एतस्यानुक्रमबोधनन्यायस्य(?) सर्वलोकप्रसिद्धत्वादित्यर्थः ॥ ३५८ ॥

(३५९) सत्यत्वाद्यैः स्वरूपावगतिरभिहिता सर्वविद्यानुवृत्त्या
भूयस्तत्त्वव्यधर्मेष्वधिकरणमिदं स्यात् वृथैवेति चेन्न ।
कैश्चिज्ज्ञातस्वरूपे क्वचिदितरगतं किञ्चदन्यत्क्षेप्यं
व्यावृत्त्या न स्वरूपावगतिरत इति प्रेक्षणस्यात्र(स्योत्र) रोधात् ॥ ३९ ॥

अत्र कश्चिच्चोदयति--सत्यत्वाद्यैर्गुणैः स्वरूपावगतिरभिहिता सर्वविद्यानुवृत्त्यया । तेन भूयोऽपि तत्तुल्यधर्मेष्वक्षरत्वादिष्विदमधिकरणं वृथैव स्यादिति । तदिदमनुवदति—सत्यत्वाद्यैरिति । अनूदितमर्थं निराकरोति—नेति । निराकरणप्रकारमेव विवृणोति—कैश्चिदिति । 'लब्धरूपे क्वचित् किञ्चित् तादृगन्यन्निषिध्यते' इति न्यायेन वस्तुस्वरूपप्रतिपत्तौ विशेषणान्तरैः निरासार्थं पश्चादेव

स्वेनावगतेन उन्नेयाः उत्प्रेक्ष्या ये दोषाः तद्व्यपनयनं शोधकवाक्यकार्यमिति तद्व्यपनयनम् इह नादेः प्रागेव सर्वब्रह्मविद्यासाधारणतया आनन्दाद्यधिकरणदर्शितरीत्या नियमनं व्यवस्थापितम् इति= अतः अस्य स्थूलादिव्यावर्तनस्यापि सत्यज्ञानादिवत् इतरव्यावृत्तधीहेतुत्वोपपादनात तद्वदेव सत्यत्वादिवदेव अस्य अस्थूलत्वादेः सार्वत्रिकत्वात् सर्वविद्यागतत्व त् ॥ ३५८ ॥

३९. आनन्दाद्यधिकरणेन गतार्थतामाशङ्क्य परिहरति सत्येति । आनन्दादय इत्यत्र आदिना सत्यत्वादिग्रहणम्। ब्रह्मस्वरूपावगतिः सत्यत्वाद्यैरेव भवति। तदर्थं तेषां सर्वविद्यानुवृत्तिरत्र स्थापितत्वात्। तत्र यदि अस्थूलत्वादि विना तावन्मात्रेण तदवगतिर्न भवेत्, तर्हि तत्र आनन्दादेरिव एषामपि ग्रहणं भविष्यति । यदि भवेत्, अत्राधिकरणे एतदावश्यकत्वं स्थापयितुमशक्यमिति पूर्वपक्षाशयः । परिहारे हेतुमाह कैश्चिदिति। आनन्दाद्यधिकरणे सत्यत्वज्ञानत्वानन्दत्वादीनामिव अनन्तत्वास्थूलत्वादीनामपि ग्रहणं सिद्धान्तीष्टम् । तत्र घटते ; निषेधस्य किञ्चिद्रूपेण धर्मिज्ञानाभावे दुश्शकत्वात । धर्मिणि ज्ञाते तु स्वरूपस्यावगतत्वात् निषेधवचनं व्यर्थम् । तत्रानन्तत्वं सर्वदेशसंबन्ध–सर्वकालसंबन्ध–सर्ववस्तुसामानाधिकरण्यात्मकभावरूपमेव समर्थ्यतापि। नैवमस्थूलत्वादि । कैश्चित् सत्यत्वघटत्वपटत्वादिभिर्ज्ञातस्वरूपे वस्तुन्येव स्थूलत्वाणुत्वादिकं निषेध्यम् तत्र निषेधात् प्रागेव स्वरूपस्यावगतिर्जातेति, व्यावृत्त्या स्वरूपावगतिर्भविष्यतीति न युक्तमिति एवम्भूतस्य पूर्वपक्षिप्रेक्षणस्य उत्प्रेक्षणस्यात्र रोधात् निरासादित्यर्थः । अयं

व्यावृत्तिप्रतिपत्तिः। तथाच वस्तुस्वरूपप्रतिपत्तौ व्यावृत्तिप्रतिपत्तिर्नोपकरोतीत्यनध्यक्षित(त्यशिक्षित)-न्यायः कश्चित् मन्यते। तत्प्रेक्षणस्यात्रोपयोगार्थमिदमधिकरणं सफलमेवेत्यर्थः। अयमत्र भावः—लोके, 'कर्मव्यतिरिक्तत्वे सति जातिमात्राश्रयो गुणः' इत्यादौ व्यावृत्तिप्रतिपत्तिरपि गुणादिस्वरूपविशेष-प्रतिपत्तावुपयुज्यते। तद्वदत्रापि ब्रह्मस्वरूपप्रतिपत्तौ व्यावृत्तेः प्रतिपत्तिरुपयुज्यते। तर्हि, 'लब्धरूपे क्वचित्किञ्चित् तादृगन्यन्निषिध्यते' इत्यस्य कोऽर्थः? केनापि प्रकारेण सिद्धे वस्तुनि इतरव्यावृत्तिरूपं प्रकारान्तरमपि प्रतीयत इति न कश्चिद्दोषः। अयमर्थः—विधिनिषेधयोः पूर्वं विधिरूपेण केनापि प्रकारेण प्रतिपन्ने वस्तुनि पश्चात् निषेधप्रवृत्तिः; न पुनरत्यन्ताप्रतिपन्ने इति॥ ३५९॥

(३६०) व्यावर्त्यानन्त्यतस्तद्व्युदसनमपि हि स्यादनन्तं ततस्त-
 च्चिन्ता[ऽ?] किञ्चिज्ज्ञसाध्या जलधितरणवन्नोपदिश्येत; मैवम्।
 तत्तत्सामान्यधर्मानुगतिकवलिताशेषभेदोपदेशे
 तादृक्चिन्तोपपत्तेरनवममिति वा गृह्यतां संगृहीतिः॥ ४०॥

इत्यक्षरध्यधिकरणम्॥ ९६॥

अत्र कश्चिदाह—व्यावर्त्यानामनन्तत्वात् व्यावृत्तिरप्यनन्ता; तस्याः पुनरानन्त्ये तद्व्यावर्त-कमप्यनन्तमेव वाच्यम्। तथाच कर्तुमेव न शक्यते। न ह्यशक्यं सागरतरणं कैश्चिदुपदिश्यते। अशक्यविधाने वाक्यस्याननुष्ठानलक्षणाप्रामाण्यप्रसङ्गादिति। तदिदमनुवदति—व्यावर्त्येति। अयमत्र शब्दान्वयः—व्यावर्त्यानन्त्यात् व्यावर्तनमप्यनन्तं स्यात्, तेन तच्चिन्ता = व्यावृत्तिचिन्ता किञ्चिज्ज्ञ[ा?]साध्यतया नोपदिश्येत। तत्राशक्योपदेशे दृष्टान्तमाह—जलधितरणवदिति। तदिदं प्रतिक्षिपति—मैवमिति। प्रतिक्षेपप्रकारमेव प्रदर्शयति—तत्तदिति। द्रव्यत्वगुणत्वकर्मत्वादिसामान्य-

भावः—किञ्चिद्रूपेणावगतिमात्रात् न पूर्णस्वरूपावगतिः। इतरव्यावृत्तिर्यावता भवति, तावद्धि स्वरूपम्। सत्यत्वादिज्ञानेऽपि स्थूलादिसंशयसंभवात् तद्व्यावृत्तिज्ञाने सत्येव पूर्णस्वरूपावगतिरिति। तथाच यथा वायुस्वरूपग्रहणं रूपरहितस्पर्शवानिति रूपराहित्यात्मकव्यावृत्तिवैशिष्ट्येन, तद्वत् अस्थूलत्वादिविशेषित-सत्यत्वादिविशिष्टग्रहणं स्वरूपग्रहणम्। तदुद्देशेनान्येषां गुणादीनां विधानात् तेषां निरूपितस्वरूप-विशेषणतेति। अत्रायं विवेकः—सत्यत्वादिधर्मैः बुद्ध्यवतारक्रमेण प्राकृत-मुक्त-नित्यव्यावृत्तिः कृता। 'आनन्दमयोऽभ्यासात्' इत्यत्रान्ततो निष्कृष्टेन, अहमुभयविभूतिस्वामित्वाद्यशेषसमृद्धोऽस्मीत्याकारका-नन्दवत्त्वेन च सर्वव्यावृत्तिः। एवमपि हेयप्रत्यनीकत्ववैशद्यायास्थूलत्वाद्युपदेशः। अनेन वैजात्येन सर्वव्यावृत्तिः। अस्तु अवश्यग्राह्यमिदममलत्वमात्रम्; नित्यसूरीणामपि परतन्त्रचेतनतया हेययोग्यताऽस्त्येव। तदभावस्तु कर्मरूपसहकारियोग्यताविरहादिति अमलत्वेनैव तद्वारणे किमर्थमन्यदिति चेत्—स्वरूपेणावगतौ जातायां तदवच्छिन्नोद्देशेनैवामलत्वस्य विधेयतया भावमुखेन प्रथमं तद्बोधस्याऽऽवश्यकत्वात्। तत्र विनिगमनाविरहात् सत्यज्ञानानन्तत्वानन्दानां प्रथमं ग्रहणम्। गुणान्तराणां तु अस्वरूपनिरूपकत्वान्नापेक्षा॥

४०. एवं तर्हि ब्रह्मस्वरूपस्यानन्तधर्मघटितत्वादग्रहणमेवेत्याशंक्य प्रत्याह व्यावर्त्येति। स्थूलाणुह्रस्वदीर्घादीनां व्यावर्त्यानामसंख्यत्वात्। तद्व्युदसनानि=तद्भेदा अप्यसंख्याः। अतस्तेषां ग्रहणं किञ्चिज्ज्ञासाध्यत्वात सागरप्लवनवत् अशक्यत्वान्नोपदेश्यमिति न; स्थूलाणुह्रस्वदीर्घाणि

धर्मोपादानेनानन्तानामपि व्यक्तीनां यथा लोके निरासः क्रियते, एवमत्रापि प्रतिक्षेप्याणां धर्मिणां सामान्यधर्मोपादानेन निरासः स्यात्। अथवा एकेनैव विशेषणेन सर्वधर्मव्यावृत्तिः सेत्स्यतीत्याह–अनवममिति। 'अनवमं ब्रह्म' इत्येकेन विशेषणेनापरेषां प्रतिक्षेप्याणामवमानां संगृहीतिर्गृह्यताम्–संग्रहेणोपादानं स्वीक्रियतामित्यर्थः॥ ३६०॥ इत्यक्षरध्यधिकरणम्॥ ९६॥

## ९७॥ अथ अन्तरत्वाधिकरणम्॥ ३-३-१५॥

सूत्रम्—अन्तरा भूतग्रामवत् स्वात्मनोऽन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत्॥ व्यतिहारो विशिंषन्ति हीतरवत्॥ सैव हि सत्यादयः॥ ३५—३७॥

(३६१) सूत्रस्वारस्यलाभात् प्रथममसुभृतः पूर्वपक्षे निवेशः
सिद्धान्ते ब्राह्मणश्चेत्यधिकरणगति[:]स्तोकशङ्कापनुत्यै।
साक्षाद्ब्रह्मेति वाक्यद्वयमवमृशतामन्यशङ्कैव न स्यात्
इत्यालोच्याथ भाष्ये परविषयतया पूर्वपक्षोऽप्युपात्तः॥ ४१॥

हेयप्रत्यनीकत्वं ब्रह्मणोऽसाधारणं चेत्—अशनायाद्यतीतत्वविशिष्टं ब्रह्म स्यात्; प्राणितृत्वादि-विशिष्टस्तु जीवस्स्यादिति शङ्कया सङ्गतिः। तदर्थविचारस्तु—'यत् साक्षादपरोक्षाद्ब्रह्म, य आत्मा सर्वान्तरः, तं मे व्याचक्ष्व', 'यदेव साक्षादपरोक्षाद्ब्रह्म, य आत्मा सर्वान्तरः, तं मे व्याचक्ष्व' इति प्रश्नः उषस्तकहोलयोः। प्रतिवचनमपि, 'यः प्राणेन प्राणिति, स त आत्मा सर्वान्तरः' इत्येकत्र; 'योऽशनायापिपासे शोकं मोहम्' इत्याद्यन्यत्र। किमुभयत्र विद्यैक्यम्, उत विद्याभेद इति। किं पूर्वत्र

---

एकेन परिमितपदेन एवं यावत्संभवं तत्तत्साधारणधर्ममुखेन विशेषान् क्रोडीकृत्य तत्तत्सामान्यधर्मा-वच्छिन्नतावद्विशेषप्रतियोगिकभेदोपदेश इति स्वीकारे व्यावृत्तीनां संग्रहेयतया सुग्रहत्वात्। सर्वक्रोडी-कारेण एकैव वा व्यावृत्तिरस्त्वित्याह अनवममिति वेति। इदमेव संप्रदाये अमलमिति व्यवह्रियत इति ध्येयम्। अवमम्—दुष्टम्। अकिञ्चिज्ज्ञसाम्येति पदविभागो युक्तः॥ ३६०॥

४१. अक्षरधियां साधारण्यात् विद्याभेदकत्वं नेत्युक्तम्। उषस्तकहोलविद्यापठितधर्माणामपि तद्विद्याभेदकत्वं नेत्युच्यत इति संगतिः। नन्वत्र प्रश्नवाक्ये, 'यत् साक्षादपरोक्षात् ब्रह्म, य आत्मा सर्वान्तरः' इति साक्षाद् ब्रह्मपदादिश्रवणेन परमात्मपरत्वे स्पष्टे परविद्याद्वयं वा एकैव वेत्येतावानेव पूर्वपक्षो युक्तः। पूर्वपक्षांशश्च एकेनैव सूत्रैकदेशेन दर्शितोऽस्ति। स नूनमेकविषयक एव स्यात्। तत् किमिति जीवविषयकत्वपूर्वपक्षोऽपि भाष्ये निवेश्यते इत्याक्षेपे सूत्रस्वारस्यादिकमादृत्य प्रथमपूर्वपक्षः, प्रश्नवाक्यस्वारस्यमादृत्य द्वितीय इत्याह सूत्रेति। अन्तरा भूतग्रामवत्स्वात्मन इति हि सूत्रम्। भूतग्राम-वत्त्वविशेषणं स्वात्मपदञ्च जीवात्मग्रहणे स्वरसम्। तत्र भूतग्रामवत्त्वञ्च पाञ्चभौतिककरणकलेबरवत्त्वात् इन्द्रियाणामपि भूताप्यायितत्वात्। प्राणस्यापि पञ्चीकृततया सर्वभूतमयत्वात्। जीवानां तत्तत्स्थानेक जन्तुप्राणियुक्तत्वादपि भूतग्रामवत्त्वम्। अनेन सर्वान्तरत्वं उपपादितं भवति। अयं भावः—प्रश्नवाक्यं पूतिकूष्माण्डायितं न परमात्मैकान्तम्। तत्र यद्यपि साक्षाद् ब्रह्मेत्युक्तत्वात् ब्रह्मपदमुख्यार्थविषयकप्रश्न इत्यवगमात् परमात्मपरत्वप्रतीतिः; अथापि अपरोक्षादित्युक्तसमन्वयः कथम्। 'तदवयक्तमाह हि'

जीव उपास्यः परत्र परः, उतोभयत्र पर एवेति । किं तत्र, 'यः प्राणेन प्राणिति, स त आत्मा सर्वान्तरः' इत्यादिप्रतिवचनपर्यालोचनया जीवस्योपास्यत्वं प्रतीयते, नेति । किं सर्वान्तरत्वप्राणनकर्तृत्वे देहाद्यपेक्षया जाग्रदवस्थापेक्षया च औपाधिके, उत निरुपाधिके इति । किं, 'न दृष्टेर्द्रष्टारं पश्येः', 'न मतेर्मन्तारं मन्वीथाः' इति पुनःप्रश्नप्रतिवचनपर्यालोचनया, 'य आत्मनोऽन्तरः', 'को ह्येवान्यात्' इति प्रतिपन्ने ब्रह्मणो निरुपाधिकसर्वान्तरत्वप्राणनकर्तृत्वे प्रतीयेते, नेति । किं, 'न दृष्टेर्द्रष्टारम्' इति दृष्टेः=ज्ञानहेतुना द्रष्टारं ब्रह्म न मन्वीथा इति वाक्यार्थः, आहोस्वित् दृष्टेरनुभूतेः द्रष्टारं न मन्वीथा इति । अत्र भाष्ये द्वौ पक्षावभिहितौ । एकत्र पक्षे क्वचिज्जीवपरत्वमाशङ्क्य सर्वत्र परमात्मपरत्वनिर्णयः । अन्यत्र उभयत्र परमात्मपरत्वे सत्यपि पूर्वत्र गुणभेदाङ्गीकारेण रूपान्तरविशिष्टब्रह्मपरत्वम् ; उत्तरत्र परमात्मासाधारणाशनायाद्यतीतत्वादिगुणानुबन्धात् रूपान्तरविशिष्टपरमात्मपरत्वमित्याशङ्क्योभयत्रापि रूपाभेदादेकरूपपरमात्मपरत्वमिति निर्णीयत इति । अत्र द्वयोरपि पक्षपरिकल्पनयोः कारणं वैषम्यञ्च दर्शयति—सूत्रेति । पूर्वस्यां कल्पनायां सूत्रस्वारस्यलाभः कारणम्, 'भूतग्रामवत्(त)' इति जीवस्य दर्शनात्। उत्तरस्यां तु श्रुतिस्वारस्यलाभो हेतुः ; द्वयोरपि प्रश्नयोः, 'साक्षादपरोक्षाद्ब्रह्म' इति ब्रह्मस्वरूपप्रश्नदर्शनात् । अयमत्र शब्दान्वयः—सूत्रस्वारस्यलाभात् प्रथमप्रसुभृतः=जीवस्य पूर्वपक्षे निवेशः, सिद्धान्ते तु ब्रह्मणो निवेशः। अयं

---

इत्यादिना परोक्षत्वेन तस्य प्रसिद्धत्वात् । अपरोक्षमित्युक्तौ अस्मदपरोक्षमित्यर्थ एव स्वरसः । घटपटादीनामप्यपरोक्षत्वमस्ति । अतोऽत्र स्वतोऽपरोक्षत्वं सर्वदाऽपरोक्षत्वञ्च विवक्षितम् । एकैकस्यापि स्वात्मैव नित्यस्वयंप्रकाश इति जीव एव तत् । एतत्सूचनायैव सूत्रे स्वात्मन इति पदम् । साक्षादपरोक्षमित्यन्वयेन इतरनिरपेक्षस्वप्रकाश इत्यर्थोऽपि घटते । ब्रह्मशब्दस्तु गीतायां जीवात्मनि भूरिप्रयुक्तः । उत्तरवाक्यञ्च, 'यः प्राणेन प्राणिति योऽपानेनापानिति' इति पञ्चवृत्तिप्राणाधिपत्वमुच्यते । एवं च सूत्रस्वारस्यवत् उपनिषत्स्वारस्यमपि । इदं दर्शयितुम् असुभृत इति पदप्रयोगः । अतः पूर्वपक्षे जीवात्मनः सिद्धान्ते ब्रह्मणश्च घटनं पूर्वम् । द्वितीयसूत्रावतरणे तु भाष्ये परमात्मविषयकतयैव पूर्वपक्षोत्थापनं प्रथमसूत्रेण जीवपक्षव्यावर्तनात् प्रश्नवाक्यस्वारस्यमभिलक्ष्य । अयं भावः—द्वितीयकहोलप्रश्ने, 'यदेव साक्षादपरोक्षात्' इति एवकारश्रवणात् प्रश्नद्वयमेकविषयकमिति ज्ञायते । द्वितीयप्रश्नोत्तरं परमात्मविषयकमिति निर्विवादम् । अतः प्रथममपि प्रश्नवाक्यम्, 'साक्षात् ब्रह्म सर्वान्तरः' इति अनेकपदस्वारस्यात् परमात्मविषयकमेव । प्राणितृत्वं परमात्मनः कथमिति चेत्—सुषुप्तावपि तस्यैव प्राणव्यापारनिर्वाहकत्वात् । 'न प्राणेन नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ', 'प्राणस्य प्राणम्' इति प्रसिद्धं प्राणनव्यापारनिर्वाहकत्वं तस्य । अपरोक्षत्वं कथमिति त्ववशिष्यते । तत् याज्ञवल्क्य एवोपरि, 'पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् अथ मुनिः' इत्यादिनोपपादयिष्यति । 'अपि संराधने प्रत्यक्षानुमानाभ्याम्' इति च सूत्रम् । भाष्ये सार्वकालिकमापरोक्ष्यं सर्वदेशकालसंबन्धित्वमित्युक्तम् । तथाच सूत्रस्वारस्यानुरोधिस्तोकशंकापनुत्त्यै पूर्वपक्षसिद्धान्तयोः प्रथमं जीवपरनिवेशः । अथ तु स्तोकेति विभागे अल्पेत्यर्थः । तोकेति चेत्, बालिशेत्यर्थः । पूर्वपक्षेऽपि परमात्मनिवेशेनैवाधिकरणरचना । सूत्रे तत्स्वारस्यत्वात् भाष्ये इति श्लोके प्रयोगः । एतदुक्तं भवति—विद्या भिन्नेति पूर्वपक्षः, अभिन्नेति

तोकशङ्कापनुत्त्यै = बालिशशङ्कापनोदनायेत्यर्थः। अत्र तोकशङ्कापनुत्त्यै उत्तरमपि विचारानन्तरमुक्तमिति—साक्षादिति। 'यत् साक्षादपरोक्षाद्ब्रह्म' इति ब्रह्मशब्दानुपादेन प्रश्नद्वयस्य सम्यग्ज्ञानं विदुषां अन्यशङ्कैव न स्यादिति विचार्य पूर्वत्रापरितोषात् अथानन्तरं भाष्ये परमात्मविषयत्वम्। पूर्वपक्षोऽपि परिकल्पित इति ॥ ३६१ ॥

(३६२) यत्साक्षादित्यमुष्मिन् श्रुतिशिरसि परं ब्रह्म वेद्यं यदेवे-
त्येतस्मिंश्चास्त्वथापि प्रतिवचनभिदा तत्र रूपं भिनत्ति ।
विद्याभित् प्रष्टृभेदोऽप्ययमिति यदि, नानूद्य भूयोऽनुयोगात्;
पश्चादुक्तश्च दोषात्यय इह न भिदां मीति साधारणत्वात् ॥ ४२ ॥

अत्र स्वाभिमतामुत्तरपक्षकल्पनां शिष्याणां सुखप्रतिपत्त्यर्थं पूर्वपक्षसिद्धान्तविभागेन विशदं प्रकाशयति—यत्साक्षादिति। अयमत्र शब्दान्वयः—'यत्साक्षात्' इत्यमुष्मिन् वाक्ये, 'यदेव साक्षात्' इत्येतस्मिंश्च वाक्ये परं ब्रह्मैव वेद्यमस्तु; अथापि प्रतिवचनभेदो रूपं भिनत्त्येव। रूपभेदात् विद्याभेदश्च सिध्यति। न केवलं रूपभेदात्, प्रष्टृभेदादपि विद्याभेदः सिध्यतीत्याह—विद्याभिदिति।

---

सिद्धान्तः। तत्र सूत्रकृत् विकल्पयति—किमुपास्यधर्मिण एव भिन्नत्वात् विद्याभेद इत्युच्यते, धर्मभेदाद्वा। नाऽऽद्यः इति प्रथमसूत्रेणोच्यते प्राणितृत्वादेरपि परमात्मधर्मत्वेन। द्वितीयपक्षे वक्तव्यं द्वितीयसूत्रेणाऽऽह गुणानां मिथो व्यतिहारात् तेषां भेदकत्वमेव न भवतीति। न चैवं व्यतिहारस्वीकारे सर्वत्र गुणभेदात् भेद एव न स्यादिति चेन्न; उपास्याकारत्वे हि गुणभेदाद् भेद एव स्यात्। अत्र तु उपास्यस्वरूपज्ञानवैशद्याय उपासनानन्तर्भूतधर्मकथनम्। पूर्वाधिकरणे स्वरूपनिरूपकधर्ममादाय वैशद्यमुपपादितम्। अत्र बहिरङ्गधर्ममादायेति विशेषः। अतो वैशद्यार्थत्वादेव व्यतिहारः। अनुपास्याकारत्वज्ञापनार्थमेव उपदेशवदिति प्रयोगः। न हि सद्विद्यायां प्रतिखण्डमुपास्याकारा अपूर्वाः प्रदर्श्यन्ते। अपितु दृष्टान्तादिभिः, 'तत्सत्यं स आत्मा' इत्येतदेवोपपाद्यते। तद्वदिति। परविषयतया पूर्वपक्षोऽपीति। शांकरे परविषयतयैव पूर्वपक्षः कृतः। सोऽप्यत्र। परं तु तत्राभ्यासरूपभेदकप्रमाणात् भेद इति शंकितम्, इह तु गुणात् भेद इति विशेष इति ॥ ३६१ ॥

४२. ननूपास्याभेदात् विद्यैक्ये प्रथमसूत्रसाधिते सर्वगुणसमुच्चयस्य स्वतःसिद्धत्वात् अनन्तरसूत्रेण गुणव्यतिहारस्थापनं व्यर्थम्। अत एव शांकरे तत् अन्यविषयं पृथगधिकरणं कृतमित्याशंकायां भाष्यरीत्या पुनर्विद्याभेदशंकया तत्सूत्रप्रवृत्तिरिति वक्तुं भाष्यार्थमनुवदति यदिति। उपदेशवदिति सद्विद्यायामिव विद्यैक्यकथनमयुक्तम्। तत्र प्रतिखण्डं वेद्याकारस्याधिकस्यानुक्तेः। इह तु प्राणितृत्वाशनयातीतत्वादिधर्मभेदः स्पष्टः। किञ्च तत्र श्वेतकेतुमेकमेवोद्दिश्य सर्वखण्डप्रवृत्तिः। अतो विद्यैक्यम्। अत्र उषस्तादन्यः कहोलो द्वितीयप्रश्नप्रवर्तकः। तं प्रति सैव विद्या यद्युच्येत, तर्हि तत्रोक्तो धर्म एवात्रापि वक्तव्यः। न चेत्, एकैकं प्रत्यपि पूर्णधर्माकथनात् वक्तुरनैपुण्यमयथोपदेष्टृत्वञ्च स्यात्। अत प्रथमसूत्रोक्तरीत्या यत्साक्षादिति प्रथमवाक्ये यदेव साक्षादिति द्वितीयवाक्ये च सारूप्य-प्रकार घटितत्वादिना परं ब्रह्मैव वेद्यमिति स्वीकर्तव्यत्वेऽपि याज्ञवल्क्यकृतः प्रतिवचनप्रकारो विभिन्नरीतिकत्वात्

प्रष्टृ(प्रष्टुः)भेदोऽपि विद्यां भिनत्तीत्यर्थः। क्वचिदुषस्तः प्रष्टा, अपरत्र कहोलः। यदीति पूर्वपक्षानुवादं द्योतयति। तदिदं प्रतिक्षिपति—नेति। तत्र हेतुमाह—अनूद्येति। 'यदेव साक्षादपरोक्षाद्ब्रह्म' इति सावधारणमनूद्योषस्तेन श्रुतस्य पूर्वस्यैव ब्रह्मणः पुनरनुयोगादित्यर्थः। तर्हि पश्चादुक्तमशनायाद्यतीतत्वं विद्यां भिनत्तीत्याशङ्क्य, तदपि न भिनत्तीत्याह—पश्चादुक्त इति। अयमर्थः—पश्चादुक्तं ह्यशनायाद्यतीतत्वं पूर्वाधिकरणोक्तामलत्वान्तर्गतमेव। तच्चामलत्वं सर्वविद्यासाधारणत्वात् न विद्यां भिनत्तीति। अथवा द्वयोरपि प्रष्ट्रोरसाधारणत्वात् सब्रह्मचर्येण सन्निहितयोः साधारणत्वादित्यर्थः(त्युक्तं भवति)। एवं विद्यैक्ये सिद्ध विशदप्रतिपत्त्यर्थः प्रष्टृभेदो न विद्यां भिनत्तीति भावः॥३६२

(३६३) सद्विद्यायां यथा हि प्रतिवचनभिदा प्रश्नभेदानुसारात्
विद्यैकत्वे विशेष्यं(विशिष्य) प्रकटयति परां देवतामेवमत्र(मेव तत्र)।

---

वेद्याकारभेदक एव। एवमयमुषस्तकहोलरूपप्रष्टृभेदोऽपि विद्याभेदक इति चेदिति यद्यन्तभागार्थः। निरस्यति नेति। तत्र हेतुमाह अनूद्य भूयोऽनुयोगादिति। यथा सद्विद्यायां, 'भूय एव मा भगवान् विज्ञापयतु' इति भूयःपदबलाद्विद्यैक्यावगमः, तथाऽत्रापि यदेव साक्षादिति एवकारघटनात् पूर्वप्रश्नानुपूर्व्येण प्रश्नाच्च अनूद्य तद्विषय एव भूयः प्रश्न इति ज्ञायत इति भावः। ननु भूयस्तत्प्रश्नश्चेत्, उषस्त एव कस्मान्न पृच्छेदिति चेत्—अतिशयितबुद्धित्वात् प्राणितृत्वादिकं परमात्मन एव युक्तमिति सोऽवधारयामास। कहोलस्तु स्वयमनवधारयन् प्रश्नमसमाहितं मन्यमानः उषस्तस्य साहाय्यकेऽभिनिविष्टः पप्रच्छ। याज्ञवल्क्यस्तु जीवासंभावितमशनायातीतत्वादिकमुपदिश्य ईदृश एव मया प्राणितृत्वादिमान् उक्त इति स्वाशयमाविश्चकारेति। अथ चैवमुक्तं भवति—प्रथमतः प्राणितृत्वोपदेशे उषस्तस्याप्यतृप्तिरासीत्। अत एव गोत्वाश्वत्वयोरिव ब्रह्मत्वप्राणितृत्वयोर्विरोधोऽस्तीति सोऽवोचत्। अथ याज्ञवल्क्यः, 'न दृष्टेर्द्रष्टारं पश्येः' इत्यादिना जीवो न ग्राह्य इत्याचष्ट। तदर्थे विचिकित्सया उषस्ते तूष्णीके कहोलः, न दृष्टेरिति वाक्यस्य द्रष्टारं दृष्टिपदवाच्यज्ञानस्वरूपातिरिक्तं न पश्येरित्यर्थं गृहीत्वा, तावता प्रकृतोषस्तशंकापरिहारो न भवतीत्याशङ्क्य तमेव प्रथमप्रश्नं पुनरावर्तयामास। अथ याज्ञवल्क्ये अशनायातीतत्वादिजीवव्यावृत्ताकारमुक्तवति, उषस्तकहोलौ द्वावपि, प्राणितीति वाक्यं परमात्मगतप्राणितृत्वपरम्, न दृष्टेर्द्रष्टारं पश्येरिति वाक्यं च दृष्टिमत्यादिकर्तारं जीवात्मानं प्रश्नवाक्यार्थत्वेन न गृह्णीया इत्यर्थकमित्यवधारयामासतुः। एवं व्यतिहारार्थमेवेदं सर्वमुपन्यस्तम्। न तु वेद्यरूपभेदोक्तिः। वेद्यरूपं तु अपरोक्षत्वब्रह्मत्वसर्वान्तरत्वादि एवम्भूतपरमात्मगतमेव, न त्वन्यगतमिति ततो निश्चितं भवतीति। एवमुपनिषद्गतिः सूत्रोक्ता। यत्त्वत्र पूर्वपक्षिणोक्तम्—प्रथमोक्तगुणातिरिक्तगुणकथनान्न विद्यैक्यमिति, तत् प्रकारान्तरेण निरस्यति पश्चादिति। अयं भावः—नात्र दहरविद्यायामपहतपाप्मत्वादेरिवोपास्यस्य गुणजातस्योक्तिः; वैशद्यविधानायैवानेकधर्मकथनमिति प्रागेवोक्तत्वात्। एवञ्चास्य वाक्यस्याखिलहेयप्रत्यनीक इत्यत्रैव तात्पर्यम्। तच्चामलत्वं सर्वविद्यासाधारणमेव सर्वजीवव्यावर्तनायोक्तमिति अस्य साधारण्यात् विद्याभेदकत्वमेन न भवतीति ॥ ३६२ ॥

तेनोषस्तः कहोलश्रुतमपि स च तत्संश्रुतं सङ्कलय्य
ध्यायेतां ब्रह्म सर्वान्तरमिति फलवत् तत्र सब्रह्मचर्यम् ॥ ४३ ॥

इत्यन्तरत्वाधिकरणम् ॥ १७ ॥

ननु भाष्ये सद्विद्यादृष्टान्तेन साधारण्यमुपपादितम्; तत्र प्रष्टैक्याद्विद्यैक्यमङ्गीकुर्महे। तेन सर्वेषामप्युत्तराणां साधारण्यमस्तु नाम। इह तु प्रष्टृभेदात् कथमुत्तरसाधारण्यमित्यजानानस्य कस्यचिच्चोदकस्योक्तमेवार्थं विशदं प्रकाशयति—सद्विद्यायामिति। अयमत्र भावः—अस्तु नाम सद्विद्यायां प्रष्टैक्यम्, अस्तु च(व)ात्र प्रष्टृभेदः—अथाप्युत्तरसाधारण्यमङ्गीकर्तव्यमेव। लोके ह्येकमेवाचार्यमुद्दिश्य द्वयोः शिष्ययोरागतयोरेकार्थं पृष्टवतोरुपदेशवेलायामेकैकाभिमुख्येनोक्तमर्थद्वयं द्वयोरपि प्रतिपत्तमुपादेयमनुसन्धेयञ्च भवति। एवमत्राप्युभयत्राप्युक्तमुत्तरमुभयोरपि साधारणमेव। किं कारणमत्रेति चेत्—तयोः सब्रह्मचर्यमेव। उभौ खलु सहैवागत्य पृष्टवन्तौ उभयमप्युत्तरं लब्धवन्ताविति लोकदृष्टानुकूलमेतत्। अयमत्र शब्दान्वयः—उपक्रमोपसंहारादिपरामर्शेन विद्यैकत्वे प्रतिपन्ने सति सद्विद्यायां यथा प्रतिवचनभेदः प्रश्नभेदानुसारात् परामेव देवतां विशेष्यं विशिष्य प्रकटयति, तेनैव न्यायेन उषस्तः कहोलश्रुतमपि कहोलश्चोषस्तश्रुतमपि सङ्कलय्य प्रतिपद्य ध्यायेतां(पयेयातां) सर्वा-

४३. सद्विद्यायामपि भेद एव किं न स्यादिति शंकमानं प्रति प्रवृत्तम्, 'सैव हि सत्यादयः' इति सूत्रम्। ततोऽस्यार्थकथनपूर्वकं प्रकृतमुपपादयति सद्विद्यायामिति। "सैव, 'सेयं देवतैक्षत' इत्युक्तैव तत्रोपास्या। सत्यादयो हि प्रतिखण्डमनूद्यन्ते, 'ऐतदात्म्यमिदं सर्वम् स आत्मा तत्त्वमसि' इति" इति तत्सूत्रार्थः।-तद्दृष्टान्तेन प्रकृते वक्तव्यमुच्यते श्लोकेन। यथा, सद्विद्यायां सदेव, सेयं देवतेत्युपक्रान्तां देवतामेतच्छब्देन परामृश्य ऐतदात्म्यमिदं सर्वमित्यादिना प्रतिखण्डमुपसंहारात्, प्रश्नभेदानुसारात्—भूय एव विज्ञापयत्विति पुनःपुनः पूर्वोक्तविषय एव प्रश्न इत्येवंरूपप्रश्नविशेषानुसाराच्च विद्यैकत्वे सिद्धे प्रतिवचनभिदा भिन्नभिन्नरीत्या प्रवृत्तं प्रतिवचनम् उपासने विशेष्यतया परां देवतामेव सदाख्यामनुस्यूततया प्रकटयति। इति उपपादितरीत्याः अत्यन्तप्रसिद्धिज्ञसये। विशेष्यमिति सामान्यतो नपुंसकम्। एवमत्र—तथाऽत्र उषस्तकहोलविद्यायामपि, 'य आत्मा सर्वान्तरः', 'एष त आत्मा सर्वान्तरः' इत्युपक्रमोपसंहारबलात् एककारात्वा विद्यैकत्वे सिद्धे प्रतिवचनमेकमेव वेद्यं प्रकटयतीत्यर्थः। तेनेति। विद्यैकत्वस्य सिद्धत्वेन, वेद्यरूपाणां खण्डश उक्तेर्युक्तताया: प्रागेवोक्ततया सर्वान्तरवेद्यवस्तुविशदज्ञानार्थतया कतिपयधर्मोपदेशः; न तु रूपोपदेश इति उषस्तकहोलौ एकतरार्थमुक्तमपि उभयार्थं मत्वा वैशद्यं प्राप्य, तान् धर्मान् उपेक्ष्य सर्वान्तरत्वादिमात्रविशिष्टब्रह्मविद्यामनुतिष्ठेताम्। कहोलश्रुतम् कहोलेन स्वकृतप्रश्नप्रत्युत्तरतया श्रुतम्। स च—कहोलश्च। तत्संश्रुतम्—उषस्तेन स्वप्रश्नप्रत्युत्तरतया सम्यक् श्रुतं, यः प्राणेन प्राणितीति प्रथमम्, अथ विशदीकरणात् न दृष्टेर्द्रष्टारमिति तदनन्तरञ्च श्रुतम्॥ तत्र एवमवगमे सति सब्रह्मचर्यम् उभयोरेकविद्यानिष्ठत्वं सफलम् वैशद्यावगतिरूपफलायाऽऽसीत्। अत्र जनकसदसि याज्ञवल्क्यजिगीषयैव सर्वैः प्रश्नकरणात् उभयोरेनयोस्तच्छिष्यत्वाभावात् अन्यस्मिन्नप्येकस्मिन्नेवोभयोर्विद्याग्रहणमित्यत्र मानाभावाच्च कथमेकगुरुशिष्यत्वरूपसब्रह्मचर्यसिद्धिः। अस्य याज्ञवल्क्यवाक्यस्य

न्तरमेव ब्रह्म । ननूक्तः सद्विद्यायामेकः प्रष्टेति विशेषः । तेन तत्र विद्यैक्यमस्तु ; एवं तत्रापि विशेषोऽस्ति, यत् पुनस्तद्ब्रह्मचर्यमित्याह—फलवदिति । यथा लोके शृण्वतां बहूनां सब्रह्मचारिणां शास्त्रश्रवणवेलायां प्रत्येकचोद्यप्रशमनार्थः पृथगुपदेशः सर्वसाधारणः, तथोषस्तः कहोलश्रुतं सङ्कलय्य स च कहोलः उषस्तश्रुतं सङ्कलय्य द्वावपि सर्वान्तरं ब्रह्म ध्यायेतामित्युक्तं भवति ॥३६३॥

इत्यन्तरत्वाधिकरणम् ॥ ९७ ॥

९८ ॥ अथ कामाद्यधिकरणम् ॥ ३-३-१६ ॥

सूत्रम्—कामादीतरत्र तत्र चाऽऽयतनादिभ्यः॥ आदरादलोपः॥ उपस्थितेऽतस्तद्वचनात्॥ ३८-४० ॥

(३६४) आकाशं ताण्डिनस्तच्छयितमधिजगुर्वाजिनस्तेन विद्या
भिद्येतात्रेति चेन्न ; द्विविध इह यतो ब्रह्मनिर्देश एषः ।
सर्वाधारत्वपूर्वः परतरविषयः सामगाकाशशब्दो
विश्वेशाधारतोक्त्या सुषिरविषयताऽन्यत्र ; रूपं तु नान्यत् ॥ ४४ ॥

प्राणित्वादीनामशनायाद्यतीतत्वानाञ्चैकधर्मिनिष्ठत्वात् विद्यैक्यं प्रतिपादितम् ; अत्र तु अपहतपाप्मत्वादिगुणाष्टकस्य च वशित्वादेश्च धर्मिभेदाशङ्कया पूर्वपक्षोत्थानमिति सङ्गतिः । तदर्थविचारस्तु—'अथ यदिदमस्मिन्' इति दहरविद्यायां छान्दोग्ये अपहतपाप्मत्वादिविशिष्टमुपास्यं ब्रह्म, वाजसनेयके वशित्वादिविशिष्टम्, उतोभयत्राप्यपाप्मत्वादिविशिष्टमिति । तदर्थं विचार्यते—किं

---

वादप्रतिवादरूपतया उपदेशरूपत्वाभावादेव हि सूत्रे सद्विद्या उपदेशवदिति उपदेशपदेन गृहीता । दार्ष्टान्तिकांशविधर्मावच्छिन्नवाचकं हि दृष्टान्तपदं प्रयोक्तव्यम् । सद्विद्यायाः पितृकृतोपदेशरूपत्वात् तदक्षतम् । अत एव उपदेशान्तरवदिति शांकरपाठोऽस्माभिर्नाद्रियते । प्रकृतस्योपदेशरूपत्वाभावात् । तत् कथमेनयोः सब्रह्मचारितेति न शंकनीयम् । तदभावे मानाभावात् । प्रकृते ध्यायेतामित्युक्त्या एकविद्यानिष्ठत्वरूपसब्रह्मचर्यस्यैव विवक्षितत्वाच्च । ननु, 'भूय एव विज्ञापयतु' इत्यत्र, भूमविद्यायां भूयःपदस्येव अधिकमित्यर्थः किं न स्यादिति चेन्न-तत्र नाम्नो भूयः, वाचो भूय इति पञ्चम्यन्तबलात् तथाऽर्थावगमात् । इह तदभावात् । तत्रोपसंहारभेदात्, अत्र ऐतदात्म्यमिति प्राचीनोपसंहारस्यैव प्रतिपर्यायं सत्त्वाच्च । शांकरे अक्षरधियामित्यादौ, 'सैव हि सत्यादयः' इत्यन्ते पञ्चाधिकरणानि परिकल्पितानि । अस्माकं तु द्वे एवाधिकरणे । अस्त्वधिकरणोभयलिंगाधिकरणादावेवात्रापि, "तादर्थ्येऽनन्तरत्वेऽप्यधिकरणभिदा नाल्पसारैः प्रकल्प्या" इति प्रागुक्तमनुसंधेयम् । एवमुपर्यपि ॥३६३॥

४४. कामाद्यधिकरणपूर्वोत्तरपक्षौ संगृह्णाति आकाशमिति । अत्र चिन्तामणौ छान्दोग्यवाक्यात् भिन्नं ताण्डिवाक्यं श्लोकाभिप्रेतमिति मत्वा श्लोकोऽन्यथा व्याख्यातः । तत्र मूलं ताण्डिनोऽन्ये, छन्दोगा अन्ये इति मतिः । ताण्डिच्छन्दोगयोरैक्यं पदयोजनायां शांकरभाष्ये ह्यान्यधिकरणे छान्दोग्यवाक्यस्य ताण्डिवाक्यत्वेनोक्तत्वं प्रदर्श्य स्थापितम् । प्रकाशिकायां साम्परायाधिकरणश्रुतप्रकाशिकायां, 'ताण्डिनः छन्दोगाः' इति व्याख्यातमिति प्रदर्शितम् । तेन श्रीभाष्येऽपि शांकर इव, 'अश्व इव' इति छान्दोग्यवाक्यं ताण्डिवाक्यत्वेनोपात्तमित्युक्तं भवति । अतोऽत्र श्लोके

वाजसनेयके हृदयायतनत्वसत्यसङ्कल्पत्वावान्तरविशेषवशित्वादिमुखेन [illegible]-पहतपाप्मत्वादीनां प्रतिपत्तिरस्ति, नेति। (?) [अत्र छान्दोग्यवाजसनेयकवाक्ययोर्विद्याभेदाभेदचिन्ता भाष्ये व्यक्तमुक्ता, न पुनस्ताण्डिनां वाक्यमुपात्तम्; अथापि तद्वाक्यस्यापि न्यायसिद्धं ब्रह्मविषयत्वमनूद्य भाष्योक्तामपि प्रक्रियां छान्दोग्यवाजसनेयकयोरेकविद्यात्वप्रकटनं निश्शेषशङ्कानिराकरणेन प्रकटयति](?) आकाशमिति। अयमत्र वाक्यार्थः—आकाशं ताण्डिनो ध्येयमधीयते, वाजिनस्त्वाकाशशयितं पुरुषम्। तेन ताण्डिवाक्ये वाजसनेयकवाक्ये च विद्या भिन्नेनेति कस्यचिच्चोद्यम्(च्छङ्का)। तत्(त) प्रतिक्षिपति—नेति। तत्र हेतुमाह—द्विविध इति। द्विविधोऽपि निर्देशो ब्रह्मनिर्देश इति निर्णीतो यतः, अतस्ताण्डिवाजसनेयकवाक्ययोर्न विद्याभेद इति सिद्धम् (?) अतः परं तु भाष्यानुक्रमेण छान्दोग्यवाजसनेयकवाक्ययोर्भेदचिन्ता समन्यते (?) सर्वाधारत्वपूर्वैर्भगवदसाधारणैर्गुणगणैस्सामगाकाशशब्दः, 'दहरोऽस्मिन्नन्तर आकाशः' इति छान्दोग्यस्थाकाशशब्दः परमात्मविषयः। वाजसनेयके तु, 'य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते सर्वस्य वशी सर्वस्येशानः' इति वशित्वादिगुणोपेतस्य भगवत आकाशे शयानत्ववचनात् आकाशशब्दः परमात्मा-

---

छान्दोग्यदहरवाक्यस्यैव ताण्डिवाक्यत्वेनोक्ततया भाष्योक्तपूर्वपक्षसिद्धान्तयोरेव पूर्वार्धे प्रदर्शनम्, तत्र सिद्धान्तयुक्तिप्रदर्शनमुत्तरार्धे इति निराबाधम्। चिन्तामणिग्रन्थं तु प्रक्षिप्तं वाऽन्यथा वेति किं तद्विचारेण। तदयमर्थः—**ताण्डिनः** छन्दोगाः, छान्दोग्यदहरविद्यायाम्, दहरोऽस्मिन्नन्तराकाशः तस्मिन् यदन्तस्तदन्वेष्टव्यम् इति वाक्येन दहराधिकरणनिर्णीतरीत्या **आकाशम्** अपहतपाप्मत्वादिगुणधर्मितयोपास्यं परमात्मानम् **आकाश**शब्दवाच्यत्वेनाधिजगुः। वाजिनस्तु **बृहदारण्यके**, 'स वा एष महानज आत्मा.... ...य एषोऽन्तर्हृदय आकाशः तस्मिन् शेते सर्वस्य वशी सर्वस्येशानः' इति वाक्ये य एषोऽन्तर्हृदय आकाश इति **आकाश**शब्देन दहराधिकरणे दहरविद्योपास्यत्वेन स्थापितं ब्रह्म निर्दिश्य **तच्छयितं** तस्मिन् ब्रह्मणि शयितत्वेन तत्स्वामितया वशित्वादिविशिष्टमन्यमधिजगुः। **तेन** ध्येयधर्मिभेदेन अत्र शाखयोः विद्या एका अन्यस्या भिन्ना स्यादिति पूर्वपक्षः। निरस्यति **नेति**। हेतुमाह **द्विविध** इति। **यतः**=यस्मात् कारणात् एकस्य ब्रह्मण एव **द्विविधः** आकाशत्वाकाशशायित्वरूपप्रकारद्वयेन एव निर्देशः। ननु आकाशत्वेन निर्दिष्टे ब्रह्मणि शयानत्वेन तस्य ब्रह्मण एव निर्देशः कथं भवेदित्यत्र आशयं विशदयति **सर्वेति**। बृहदारण्यके वशित्वादिविशिष्टात्माधारत्वेन निर्दिष्ट आकाशस्तावत् हृदयसुषिररूप एव; न तु ब्रह्म। प्रसिद्धं हि सुषिरस्य ब्रह्माधारत्वं **तैत्तिरीये**, 'तस्यान्ते सुषिरं सूक्ष्मं तस्मिन् सर्वं प्रतिष्ठितम्' इति। यदि विश्वेशं प्रति आधारतयोक्तत्वात् अयमाकाशः सुषिरात्मा भूताकाशः, तर्हि छान्दोग्याकाशोऽपि तथैवास्तु, 'तस्मिन् यदन्तः' इति उपास्यान्तराधारत्वस्याविशिष्टत्वादिति न मन्तव्यम्। 'यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' इति बाह्याकाशभिन्नत्वेन तं निर्दिश्य, 'उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते' इत्यादिना सर्वाधारत्व-अपहतपाप्मत्वादिगुणादिभिरुक्तैः **सामगानां** ताण्डिनामाकाशशब्दः परब्रह्मविषय एव। नन्वेवं धर्मिभेदाभावेऽपि उपास्यरूपभेदादेव विद्याभेदः स्यात्; एकत्र सर्वाधारत्वाद्युक्तेः, अन्यत्र पुरशायित्वः

धारभूतसुषिरवाचकः। अत्र द्वयोरपि विद्ययोः रूपभेदमाशङ्क्य परिहरति—रूपं तु नान्यदिति। छान्दोग्ये वाजसनेयके चोभयत्राप्यपहतपाप्मत्वादिगुणविशिष्टः परमपुरुष एवानुसन्धेयतयोच्यत इति रूपभेदो नास्तीति न विद्याभेद इति भाष्य एव विस्तृतम्॥ ३६४॥

(३६५) छन्दोगानामुपास्यं प्रथितमिह गुणैरष्टभिर्ब्रह्म जुष्टम्
तच्चान्येषां वशित्वप्रभृतिघटितमित्यस्तु रूपे तु(रूपस्य) भेदः।
मैवम्; यत् तत् वशित्वाद्यपि तदिह भिदा सत्यसङ्कल्पतायाः
इत्यैकार्थ्यं निरूढं; परमपि दहरोपासनं तद्वदूह्यम्॥ ४५॥

अत्र छान्दोग्यवाजसनेयकवाक्ययोरविरोधोपपादनप्रकारमुक्त्वा [तेनैव प्रकारेण ताण्डिवाजसनेयकवाक्ययोरविरोधं सिद्धं कृत्वा] तैत्तिरीयकोक्तदहरवाक्यमप्यनेनैव प्रकारेणोपपाद्यमित्याचष्टे—छन्दोगानामिति। अयमर्थः—छन्दोगानामुपास्यं ब्रह्म अपहतपाप्मेत्याद्युक्तगुणाष्टकजुष्टं प्रथितमेव। तच्च=ब्रह्म अन्येषां=वाजसनेयिनां वाक्ये वशित्वादिगुणघटितमिति रूपभेदोऽस्तु। अतो विद्याभेदोऽस्त्विति पूर्वः पक्षः। इमं निराकरोति—मैवमिति। निराकरणप्रकारमाह—यत्तदिति।

---

वशित्वाधिपतित्वाद्युक्तेरित्यत्राह रूपं तु नान्यत् इति। छान्दोग्ये, 'दहरं पुण्डरीकं वेश्म' इति वेश्मपदं सुषिरार्थकमेव; तदभावे वेश्मत्वायोगात्। बृहदारण्यकोक्तं वशित्वादि सर्वं छान्दोग्योक्तमेवेति च न रूपभेदः। इदं समनन्तरमेव व्यक्तीभविष्यति॥ ३६४॥

४५. रूपभेदमेव स्पष्टमाशंक्य परिहरति छन्दोगानामिति। यद्यपि छान्दोग्ये, 'उभे अस्मिन् द्यावापृथिवी' इति सर्वाधारत्वं यदुक्तम्, तत् नोपास्यत्वेन। किंतु दहराकाशस्याल्पपरिमाणत्वात् तत्र किं स्यादित्याशंकायाम्, नायं स्वतोऽल्पपरिमाणः बाह्याकाशान्यूनपरिमाणत्वात्; अत एव अयं सर्वजगदाधार इति महत्त्वोपपादनार्थमेवोक्तम्। इदं महत्त्वं वाजिभिरपि, 'स वा एष महानज आत्मा' इति महत्पदेन ज्ञापितम्। उपास्यौपाधिकपरिमाणावच्छिन्ने सर्वाधारत्वस्य दुर्वचत्वात् तत्र तदुपासनमशक्यञ्च। 'किं तदत्र विद्यते, यदन्वेष्टव्यम्' इति प्रश्नोत्तरतया, 'तस्मिन् कामाः समाहिताः' इत्युक्त्या कामानामेवोपास्यगुणत्वं सिध्यति। न च द्यावापृथिव्यादीनां कमनीयत्वेन कामपदेन ग्रहणं युक्तम्। विवृतञ्चोपरि; 'अपहतपाप्मा विजरः' इत्यादिवचनपूर्वकम्, 'तद्य इहाऽऽत्मानमनुविद्य व्रजन्ति एतांश्च सत्यान् कामान्' इति अपहतपाप्मत्वादेः कामशब्देन ग्रहणात् सत्यकामव्यतिरिक्तानामन्येषां क्षुद्रवस्तूनां तत्राग्रहणमवगम्यते। एवं सर्वाधारत्वादेरुपास्यगुणत्वाभावेऽपि अपहतपाप्मत्वादेस्तथात्वस्येष्टतया, बृहदारण्यके तान् विहाय वशित्वादेरेवापूर्वस्योक्त्या गुणाद्भेदो दुर्वार इति चेत्—यत् अपहतपाप्मत्वादिगुणाष्टकं छन्दोगानामिष्टम्, तत् अन्येषां च वाजिनामपीष्टम्। वशित्वादिर्हि सत्यसंकल्पत्वविततिरेव। अतः सत्यसंकल्प इति निर्देशे, वशी इत्यादिनिर्देशेऽपि न रूपभेदः। न चापहतपाप्मत्वाद्यनुक्त्या तदभावः शंक्यः, उभयत्र प्रतिनियतगुणाभावेन न्यूनाधिकगुणवत्त्वे भेदस्य दुर्वचत्वात्। तथासति गुरुलघुभावात् विकल्पानापत्तेः। अतो न्यूनकथनम् अधिकानामुपलक्षणमेव। अष्टानां च

यत्तत् वशित्वादि गुणजातम, तत् सत्यसङ्कल्पताया मेव एव। वशित्वं हि स्ववशे वर्तमानत्वम, अथवा इतरान् स्ववशे वर्तयतीति निरुच्यते। तत् सत्यसङ्कल्पत्वमेव प्रकारान्तरेणोच्यते। तदिदमाह— तदिह भिदेति। इत्यैकार्थ्यं निरूढम्=छान्दोग्यवाजसनेयकवाक्ययोरैकार्थ्यं निरूढमित्यर्थः। [एवं ताण्डिवाजसनेयकवाक्यद्वयं निर्णीतम्।] एवं तैत्तिरीयकस्थमपि दहरवाक्यं तद्वदेव छान्दोग्य-वाजसनेयकवाक्यवत् विचारणीयमित्यर्थः॥ ३६५॥

(३६६) नन्वाकाशो गुणाद्यैः पर इति दहराधिक्रियायां पुरोक्तम्
तस्मान्नान्यार्थशङ्केत्यधिकरणमिदं नोज्झिहीतेति चेन्न।
व्योमातीतं निमित्तं दहरमिदमुपादानमित्युद्गृणन्तः
पूर्वं क्षिप्ताः प्रसङ्गात् पुनरपि गमिनाऽच्छिन्नमूलत्वमत्र॥ ४६॥

इति कामाद्यधिकरणम्॥ ९८॥

ननु दहराधिकरणे प्रागेव दहरवाक्यं निरूपितम्; तत् किमत्र प्रस्तूयत इत्याशङ्क्य प्रयोजनविशेषात् न पौनरुक्त्यमिति परिहरति—नन्विति। "दहराकाशः परमात्मा साधारणगुणाद्यैः परमपुरुष एवेति दहराधिकरणे प्रागेवोक्तम्। अतः परमात्मव्यतिरिक्तार्थशंका नास्ति। तस्मादिदमधिकरणं नोज्जिहीत" इति कश्चिदाचष्टे। तत्(तं) प्रतिक्षिपति—नेति। पौनरुक्त्याभावमुपपादयति—

---

गुणानां तत्रतत्र संनियोगशिष्टत्वात् एकोक्तौ अन्येऽप्युक्तप्राया एव। न च, 'नैव साधुना कर्मणा भूयान्, नो एवासाधुना कनीयान्' इति वाजिभिर्गुणान्तरमुक्तमिति शंक्यम्; पाप्मशब्दस्य पुण्यपाप साधारणतया धर्मस्यास्यापहतपाप्मत्वविततिमात्रत्वात्। श्लोके वशित्वाद्यपि इति अपिशब्देन विततिरियमपि समुच्चीयते। यत् तत् इति तच्छब्देन वाजसनेयकशाण्डिल्यविद्यायामपि (7-6-1.) वशित्वादिधर्मसिद्धिर्ज्ञाप्यते। अत उभयत्रापि गुणवैषम्यं न भवति। अतो वशित्वादिः सत्यसंकल्पतायाः भिदा अवान्तरभेदः, एवमन्यदपीति उभयोर्विद्ययोरैकार्थ्यम् एकविषयकत्वम्। परमपीति। ननु दहरोपासनमितो भिन्नमपि दृष्टम्। यथा तैत्तिरीये, 'तत्रापि दहं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम्' इति। अत्र विशोकपदस्य अपहतपाप्मत्वादिसर्वोपलक्षकत्वेऽपि, 'तस्मिन् यदन्तः' इति किं विवक्षितमिति विमर्शे, समनन्तरमेव, "तस्य प्रकृतिलीनस्य यः परः स महेश्वरः" इति महेश्वरस्य कथनात् विष्णुरूपब्रह्मव्यतिरिक्तमिदमेवोपास्यमिति विद्याभेद एवेति शंकितुराशयः। "अ इति ब्रह्म" इति नारायणस्यैवाकारवाच्यतायाः प्रसिद्धत्वात् महेश्वरशब्दस्तत्रैव यौगिकः। अत एवानन्तरो नारायणानुवाकः तस्यैव सर्वलोपास्यत्वनिरूपको लक्ष्यत इत्येवं तन्निरास इति दिक्। अतस्तैत्तिरीयेऽपि, 'तदुपासितव्यम्' इति कामानामेव ग्रहणमिति दिव्यैक्यमेव॥ ३६५॥

४६. अधिकरणानुत्थितिमाशंक्य परिहरति नन्विति। अयमर्थः— अस्मिन्नधिकरणे वाक्य-द्वयेऽत्र विद्याभेदाभेदचिन्ता क्रियते। तत्र सिद्धान्ते वशित्वादिविशिष्टपुरुषशयनाधारतया निर्दिष्ट आकाशो भूताकाश एवेति स्थापनात् तुल्यन्यायेन दहराकाशोऽपि स इति तावत् वक्तुमशक्यम्,

व्योमातीतमिति। अयमर्थः—व्योमातीतवादिनिराकरणार्थं पूर्वं दहराधिकरणं प्रवृत्तम्; तदयमर्थः—दहराकाशः परमपुरुषः उपादानम्; तत उपरि किञ्चित् निमित्तं वस्त्वस्तीति वदन्तो व्योमातीतवादिनः पूर्वं प्रतिक्षिप्ताः। तेन तत्प्रतिक्षेपप्रधानं दहराधिकरणम्। इदं पुनरधिकरणं विद्याभेदाभेदचिन्ताप्रधानम्। अतः प्रयोजनभेदान्न पौनरुक्त्यम्। प्रसङ्गादिति। पूर्वं प्रतिक्षिप्ता अपि व्योमातीतवादिनोऽत्र प्रसङ्गात् छिन्नमू(निर्मू)लत्वं गमिता इति ॥ ३६६ ॥ इति कामाद्यधिकरणम् ॥ ९८ ॥

---

**दहराधिक्रियायां** दहराधिकरणे दहर आकाशस्तत्र श्रुतः गुणाद्यैः अपहतपाप्मत्वादिभिः 'गतिशब्दाभ्याम्', 'धृतेश्च' इति सूत्रोक्तैश्च **पर इति** परं ब्रह्मैवेति प्रागुक्तं हि। अतस्तद्विरुद्धार्थपरता न प्रसज्यते। ननु तत्र स्थापितमर्थमुपजीव्य तस्य दहराकाशस्य परमात्मत्वादेव तत्र शयानोऽयमन्य इति पूर्वपक्ष इति दहराधिकरणकृतनिष्कर्षस्यैतदधिकरणोत्थापकत्वमेवेति चेत्—अयमाशयः—अधिकरणमिदं प्रमाणान्तरसिद्धवस्तूपजीवनेन विद्याभेदविचारकम्, न पुनरपूर्ववस्तुस्थापकमपि। एकस्य कार्यद्वयायोगात्। परमात्मनि शयानोऽन्यः कश्चित् प्राक्सिद्धो वा निषिद्धो वेति विचार्यम्। समन्वयाध्यायस्य निरतिशयोत्कर्षशालिब्रह्मस्थापकत्वेन तदन्येषां निकृष्टत्वस्थापकत्वात् ब्रह्मणोऽपि परं न किञ्चिदस्तीति निषेधकत्वमेव स्यात्। दहराधिकरणे, 'किं तदत्र विद्यते, यदन्वेष्टव्यम्', इति प्रश्नः, 'तस्मिन् कामाः समाहिताः' इत्युत्तरञ्च, तदतिशयितवस्त्वभावात् कथं तत्र किञ्चिदुपास्यमुच्यते इति शंकां वस्त्वन्तराभावादेव तद्गुणा एवोच्यन्त इति उत्तरञ्च दर्शयतः। तेन व्योमातीतवादः तत्र क्षिप्त एव। पुनश्चार्थान्तरत्वव्यपदेशाधिकरणे दहराकाशमधिकृत्य विचारे वाजिदहरविद्यावाक्यमपि तत्समानार्थकतया, 'सुषुप्त्युत्क्रान्त्योर्भेदेन', 'पत्यादिशब्देभ्यः' इति सूत्राभ्यां निर्णीतमिति न वाजिवाक्येऽपि वक्तव्यमस्ति। एवं समन्वयाध्यायसिद्धोऽर्थः पुनः स्थूणानिखननन्यायेन स्थापितः पराधिकरणे, ब्रह्मणोऽपि परं किञ्चिदस्तीत्याशंकया परिहारेण। अत एव प्रागेव गतार्थत्वात् उत्कृष्टवस्त्वन्तराभावेन सर्ववशित्वादिविशिष्टब्रह्माधारभूताकाशो भूताकाश इति अनायासेनार्थेऽवगम्यमाने धर्मिभेदस्यैवासिद्धौ अधिकरणोत्थानस्य न प्रसक्तिरिति।

निरस्यति इति चेन्नेति। सत्यं व्योमातीतवादिनः प्रागेव दहराधिकरणमारभ्य पराधिकरणान्तेन निरस्ताः। अत्र तु **छिन्नमूलत्वं गमिताः**। आकाशः, आकाशे शयान इति वाक्यजन्यापातप्रतीतिरेव मूलम्। इयं आभासत्वात् न मूलमिति। दहराधिकरणे प्रसंगात् क्षिप्ताः; इहापि **प्रसंगात्**=न मुख्यतया। किं तर्हि मुख्यमिति। शाखाद्वयगतदहरविद्ययोर्भेदाभेदचिन्तनम्। ततः प्रसंगादेतदपि सिद्धम्। अत्र सारावली एतदधिकरणगतगुणसूत्रद्वयस्यास्पृष्टत्वात् तदर्थं मनसिकृत्य **प्रसंगादि**त्युक्तम्। अयं भावः—अधिकरणमिदं वाजिवाक्यच्छान्दोग्यवाक्ययोरेकं सगुणविद्यापरम्, अन्यन्निर्गुणविद्यापरम् इति भेदशंकायाम्, उभयत्र कामादिगुणसद्भावात् न निर्गुणविद्या काचिदित्यभिधाय उत्तरसूत्रद्वयेन विशिष्टवस्त्वेव मुक्तप्राप्यमित्यस्य स्थापकम्। तथाच तदर्थेऽस्मिन्नधिकरणे प्रथमसूत्रे व्योमातीतवादोऽपि **प्रसंगात्** निर्गुणनिरासप्रसंगान्निराकारीति। तदेवं **प्रसंग**शब्देन सूत्रत्रयमुख्यार्थविशेषः सूचितः। तत्प्रक्रिया च श्रीभाष्यादौ स्पष्टा।

**एतद्वैशद्यकरः प्रदानाधिकरणे वक्ष्यमाणः तत्तद्योगेति श्लोक इहानुसंधेयः इति वक्ष्यते ॥**

## १९ ॥ अथ तन्निर्धारणानियमाधिकरणम् ॥ ३-३-१७ ॥

सूत्रम्—तन्निर्धारणानियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फलम् ॥ ८१ ॥

(३६७) उद्गीथादौ क्रियाङ्गे भजनमपि भवेत् पर्णताद्युक्तनीत्या
कर्माङ्गं; तत्फलोक्तिस्त्विह नुतिरिति गोदोहनन्यायभग्नम् ।
स्वर्गादीनां फलत्वं क्रतुषु; तदधिको ह्यत्र वीर्यातिरेकः;
पर्णत्वादौ न वाक्यं वदति करणतां; कर्म चाङ्गानुपास्तौ ॥ ४७ ॥

पूर्वत्र सत्यकामत्वसत्यसङ्कल्पत्वादीनां गुणानामुपसंहार्यत्वमुक्तम्; एवमुद्गीथाद्युपासनानामपि नियमेनोपसंहार्यत्वं स्यादिति शङ्कोत्थानेन सङ्गतिः । तदर्थविचारस्तु—'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्यादिकर्माङ्गाश्रितोद्गीथाद्युपासनादीनि किं क्रतुषु नियमेनोपादेयानि, उतानियमेन इति । तदर्थं विचार्यते—किमेतानि कर्माङ्गोद्गीथादिमुखेन क्रत्वङ्गानि, उत गोदोहनादिवत् पुरुषार्थभूतानि इति । किं, 'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद' इत्यनियमदर्शनं गोदोहनादिवत् पुरुषार्थतामवगमयति, नेति । 'यदेव विद्यया करोति श्रद्धयोपनिषदा, तदेव वीर्यवत्तरं भवति' इति अपापश्लोकश्रवणादिवत् किं फलार्थवादः, उत फलविधिरिति । अत्र, 'यस्य पर्णमयी जुहूर्भवति' इति पर्णमय्यधिकरणोक्तन्यायेन उद्गीथादौ क्रियाङ्गे भजनं कर्माङ्गं=कर्मणोऽङ्गं भवेत् । पर्णमय्यधिकरणेऽव्यभिचरितक्रतुसम्बन्धिजुह्वादिमुखेन पर्णतादिकं क्रत्वङ्गमित्येव हि निरणायि । तत्र यथा अपापश्लोकश्रवणादिकं फलं स्तुतिरेव, एवं, 'यदेव विद्यया करोति' इत्यारभ्य, 'तदेव वीर्यवत्तरम्' इति फलोक्तिरर्थवाद एव स्यात् । उभयत्रापि, 'यस्य पर्णमयी जुहूर्भवति', 'यदेव विद्यया करोति' इति [1]वर्तमाननिर्देशस्याविशिष्टत्वात् । तदिदमाह—उद्गीथादाविति । उक्तमिमं पूर्वपक्षं

४७. तत्वद्विद्यायां गुणानामुपसंहार्यत्ववत् छान्दोग्ये क्रत्वंगभूतोद्गीथादिविषयमाणादिदृष्ट्युपासनानामपि क्रतुप्रयोगे सर्वत्रोपसंहार्यत्वमस्ति, न वेति विचार्यते—उपसंहार्यत्वमेवेति पूर्वपक्षमाह उद्गीथादावित्यादिना नुतिरित्यन्तेन । उद्गीथो हि सामभक्तिषु मध्यमः । तत्राऽऽदिमो भागः प्रणव इहोद्गीथः । आदिना प्रस्तावप्रतिहारादिसामभक्तिग्रहणम् । तस्य सर्वस्य सामभागत्वात् क्रत्वंगत्वं कर्मकाण्डकल्पसूत्रादित एव ज्ञातम् । उपनिषदि, 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्यादिना विहितमुपासनं किं उद्गीथवत् नियतमनियतं वेति संशयः । उद्गीथमिति द्वितीयया तमुद्दिश्योपासनविधानादङ्गाङ्गिभावावगतेर्नियतमेव भवेत् भजनमपि=उपासनमपि । नन्विदं कर्मकाण्डेऽनुक्तमिति चेत्—किं तेन । यथा, 'यस्य पर्णमयी जुहूर्भवति' इति अनारभ्याधीतवाक्ये विहिताऽपि पर्णता जुहूवत् क्रतौ नियतेति चतुर्थाध्याये स्थितम्, तथैवेदमपि । पर्णता नाम पर्णमयता पलाशवृक्षविकाररूपता । नन्वत्र, 'यदेव विद्यया करोति, तदेव वीर्यवत्तरं भवति' इति वीर्यवत्तरत्वरूपफलान्तरश्रवणात् उद्गीथोपासनं तदर्थमिति ज्ञायते । अतो न पर्णतान्याय इत्यत्राह तत्फलेति । एवं तर्हि पर्णवाक्येऽपि, 'न स पापं श्लोकं शृणोति' इति अपापकीर्त्यश्रवणरूपफलोक्त्या पर्णता फलार्थो भवन्ती फलानपेक्षायां नेत्यनियता स्यात् । तत्र फलश्रवणमर्थवादः नुतिमात्रं=स्तुतिमात्रमिति चेत्— पर्णताद्युक्तनीत्यैवेहापि नुतिः=स्तुतिरेव भवतु । तत्र फलवाक्ये शृणोतीति वर्तमाननिर्देश इति चेत्—अत्रापि तथैव । उद्गीथोद्देशेन

1. वर्तमानेति । न शृणोति, वीर्यवत्तरं भवति इति फलांशे वर्तमाननिर्देशो विवक्षितः ।

प्रतिक्षिपति—गोदोहनेति । ननु गोदोहनादौ प्रधानफलात् फलान्तरस्य पशोर्दर्शनादधिकृताधिकारत्वमङ्गीकृतम्(ङ्गीकार्यम्)। इदमेव, 'आश्रित्यविधानम्' इत्युच्यते। इह तु कथमित्याशङ्क्यात्रापि फलान्तरदर्शनमस्तीति परिहार उच्यते—स्वर्गादीनामिति । अयमत्र शब्दान्वयः—क्रतुषु स्वर्गादीनामेव फलत्वम्; क्रत्वङ्गाश्रयो(येषू)द्गीथाद्युपासनेष्वत्र वीर्यातिरेकः पूर्वोक्तफलादधिकमेव फलम्। तत्र वीर्यवत्तरत्वं नाम कर्मान्तरैरप्रतिबद्धफलकत्वम्। लोके हि कर्मफलं प्रबलकर्मान्तरफलैः प्रतिबध्यते। उद्गीथाद्युपासनं तु प्राचीनकर्मान्तरप्रतिबन्धवारण(हरण)सामर्थ्यं[1] करोतीत्युद्गीथाद्युपासनस्य वीर्यवत्तरत्वं फलमित्यर्थः। दृश्यते हि लोके स्वभावतः कारणं स्वकार्यकरणमातनुते। प्रतिबन्धकमागत्य तच्छक्तिं निरुन्धे। उत्तम्भकं पुनर्मणिमन्त्रा(मणिप्रभा)दिकं तामेव करणशक्तिमुत्तम्भयति। तेनायमर्थः—उद्गीथाद्युपासनसहितं चेत् कर्म, सहसैव स्वकार्यं कुर्यात्; न चेत्—सहसैव न कुर्यादिति। तेनोद्गीथादिकं कर्माङ्गम्; प्रधानफलेनैव फलवत्त्वात्। उपासनं तु न कर्माङ्गम्; प्रधानफलातिरिक्तवीर्यवत्तरत्वरूपफलान्तरवत्त्वात्। पर्णतादिकं तु पृथक्फलशून्यत्वात् अव्यभिचरितक्रतुसम्बन्धिजुह्वादिमुखेन क्रत्वङ्गमेव। ननु, 'यस्य पर्णमयी', 'यदेव विद्यया' इति वाक्ययोस्तुल्यतया फलश्रवणे कथमिह वैषम्यमभिधीयते? इत्थम्। इदमवधानेनाऽऽकर्णयेथाः। विषमरूपत्वात् वाक्यश्रवणस्य। क्वचिद्विद्ययेति तृतीयाश्रुतिराकर्ण्यते। सा च तृतीया फलसाधनत्वमेव साक्षादुपदिशति। पर्णता-

---

विहितत्वेन उद्गीथाङ्गकक्रतुफलेनैव फलाकांक्षाशान्तौ फलानपेक्षणादिति । इमं पूर्वपक्षं निरस्यति इति **गोदोहनन्यायभ्रम**मिति। नात्र पर्णतान्यायः प्रवर्तते; 'किंतु गोदोहनेन पशुकामस्य प्रणयेत्' इति पशुरूपफलोद्देशेन गोदोहनविधानन्यायः। **गोदोहनं** पयोदोहनार्थपात्रम्। ननु, 'चमसेनापः प्रणयेत्' इति अपां प्रणयनार्थं चमसपात्रं सामान्यतः प्राप्तम्। यजमानस्य पशुकामनार्थं तु गोदोहनपात्रं विधीयते। तत्र पश्वनपेक्षायां गोदोहनस्य न प्रसक्तिरिति तदनियम एव। अप्प्रणयनस्य साधनाकांक्षा चमसान्वयेनैव शान्ता। अतो गोदोहनेनेति तृतीया अप्प्रणयनकरणत्वं विहाय, पशुकामस्येति पदश्रवणात् पशुकरणत्वपरेति ज्ञायत इति चेत्—इहापि उपासनं विना प्रयोगमात्रेणोद्गीथस्य निष्पद्यमानतया उद्गीथस्योपासनानिराकांक्षत्वात् विद्ययेति तृतीया उपासननिष्ठकरणत्वबोधिनी नोद्गीथं प्रति तत्करणत्वबोधिनी, किं तु, 'वीर्यवत्तरं भवति' इति श्रुतवीर्यवत्तरत्वं प्रति करणत्वबोधिनीति ज्ञायते। यत्तु **भवतीति** वर्तमाननिर्देश इत्युक्तम्, किं तेन? पर्णतावाक्ये 'न शृणोति' इति वर्तमाननिर्देशात् फलत्वाभावो युक्तः, कदाचित् पर्णताकाले पापश्लोकश्रवणस्यैव वर्तमानतया बाधात्। अत्रोपासने सति वीर्यवत्तरत्वं भवत्येवेति तद्बाधाभावात् वैषम्यम्। अतो गोदोहनन्यायभ्रममेतत्' ननु गोदोहनात् पशुः फलम्, अत्र किमित्यत्राह **स्वर्गेति**। स्वर्गादियत्किञ्चित्फलकामनया क्रतौ क्रियमाणे साङ्गस्य तस्य तदेव फलम्; उपासनस्य तु **तदधिकः** ततोऽन्यः अत्र क्रतौ **वीर्यातिरेकः** अतिशयितवीर्यत्वम् अप्रतिबद्धफलकत्वम्, फलप्रतिबन्धकनिवर्तनसामर्थ्यम्। पर्णतावैषम्यमप्याह **पर्णत्वेति**। 'यस्य पर्णमयी जुहूर्भवति' इति प्रथमैव श्रूयते। पर्णतयेति तृतीया न श्रूयते। अत्र तु गोदोहनेनेतिवत् विद्ययेति तृतीया श्रूयते। अतो वाक्यं करणतां वक्ति।

---

1 **वारणसामर्थ्य**मिति। क्रतोः स्वर्गादिजननसामर्थ्यमात्रं फलवाक्यादवगतम्, प्रतिबन्धवारणेऽपि क्रतोः सामर्थ्यमुत्पाद्यते विद्यया। तेन स वीर्यवत्तरः।

वाक्ये तु न तृतीयानिर्देशः । तेन तत्र न फलसम्बन्धः । तस्मादर्थवादमात्रमेव । तदिदं विशदमेव दर्शयति—पर्णत्वादाविति । (?)यदि करणत्वं न वदति, किं तर्हि तत्राहेत्यत आह—इमं चाहानुपास्ताविति । अनुपास्तौ = उपासनव्यतिरिक्ते कर्मप्रयोगे अङ्गभूत(तं)जुह्वादे(र्दे) परिमाणरूपं कर्मैक वाक्यं वदतीत्यर्थः । चोऽवधारणे । कर्मैव वदतीति ॥ ३६७ ॥

(३६८) उद्गीथे प्राणदृष्टौ क्रतुघटितफलादन्यदुक्तं फलं तत्
स्वीकृत्य प्राक् विचारः स्थित इति विहृतः पूर्वपक्षोऽत्र; मैवम् ।
अत्रत्येऽनङ्गभावे स्थिरनिहितधियस्तत्र विद्यैक्यशङ्का;
त्यक्त्वाऽङ्गानङ्गभावौ पृथगपृथगिति स्याच्च पूर्वत्र चिन्ता ॥ ४८ ॥

इति तन्निर्धारणानियमाधिकरणम् ॥ ९९ ॥

अत्र कश्चिच्चोदयति—उद्गीथे प्राणदृष्टौ क्रतुफलादन्यदेव फलं वीर्यवत्तरत्वादिकं परामृश्यैव पूर्वं, 'अन्यथात्वं शब्दात्' इत्यस्मिन्नधिकरणे विद्याभेदाभेदचिन्ता कृता । तेन पुनः फलान्तरार्थतया पूर्वं रक्षोत्थानं विहृतमेवेति । तदेतदनुवदति—उद्गीथ इति । तदेतत् प्रतिक्षिपति—मैवमिति । तदेव विवृणोति—अत्रत्य इति । अयमर्थः—उद्गीथविषये द्वावर्थावुपात्तौ । अत्र पुनः फलान्तरार्थतया कर्मानङ्गत्वनिर्णयः; तत्र त्वनागतावेक्षणन्यायेन एतदधिकरणनिर्णीतमर्थमुपजीव्य विद्याभेदाभेदचिन्ता । ततो न पौनरुक्त्यम् । अयमत्र शब्दान्वयः—अत्रत्येऽनङ्गभावे स्थिरनिहितधियः श्रोतुरधिकारिणस्तत्र विद्यैक्यशङ्का; सा च परिहृतेत्येकोऽयं समाधिः। समाधानान्तरमप्याह—त्यक्त्वेति । अस्याङ्गानङ्गभावौ परित्यज्य विद्याद्वयं पृथगपृथगिति पूर्वत्र चिन्ता; तत्र विद्याद्वयस्य पृथक्त्वे निर्णीते विद्यायाः पृथक्फलत्वेनाऽऽश्रयिकर्मत्वमत्र केवलं समर्थ्यते ॥ ३६८ ॥

इति तन्निर्धारणानियमाधिकरणम् ॥ ९९ ॥

---

सा च करणता फलं प्रतीत्युक्तमेव । अत्रान्यामपि मुख्यां युक्तिमाह कर्म चेति । यदि उपासनं न फलान्तराय, किंतूद्गीथाङ्गम्, तदा नियमेनानुष्ठेयं स्यात् । तत् वचनविरुद्धम् । अनुपास्तौ उपासनाभावेऽपि हि कर्मानुष्ठानमत्रोच्यते, "तेनोभौ कुरुतः [कर्म], यश्च वेद, यश्च न वेद" इति । अस्मान्नियमवाक्यस्य तद्दृष्टेरिति सूत्रखण्डार्थदर्शकतया अयमेवार्थः । चिन्तामण्यर्थमुपेक्ष्य पदयोजनायामयमर्थ एव स्थापितः चकारेण, वाक्यं करणताग्राहेत्यर्थसमुच्चयः ॥ ३६७ ॥

४८. अन्यथात्वाधिकरण एवास्यार्थस्य सिद्धत्वात् व्यर्थमिदमधिकरणमित्याशंक्य प्रतिवक्ति उद्गीथे इति। क्रतौ घटितम् अन्वितं यत् प्रधानफलं स्वर्गादिकम्, तदपेक्षयाऽन्यत् शत्रुपराभवनाख्यं फलम् उद्गीथे प्राणदृष्टौ स्वीकृत्य, शाखाद्वयेऽपि प्राणदृष्टिः उद्गीथ एव वा, क्वचिदुद्गीथे अन्यत्रोद्गातरि इति भिन्नस्थले वेति विचारः कृतः। तत्रैव फलान्तरार्थत्वस्य निश्चितत्वात् तदभावशंका नोत्तिष्ठतीत्यर्थः । प्रत्याह मैवमिति । उपपादयति अत्रत्येति । इदमधिकरणमुपजीव्य तत् प्रवृत्तम् । अनेनाधिकरणेन अनियतत्वेऽनंगत्वे च कथिते अत्रत्ये एतदधिकरणोक्ते अनङ्गत्वे स्थिरनिहितधियः विवादरहितस्य विद्याभेदाभेदमात्रे तत्र विचार इति । पक्षान्तरमाह त्यक्त्वेति । उपासनमुद्गीथाङ्गं वा भवतु, पृथक्फलार्थं वा; स विचारः पश्चादिति तदुपेक्ष्य इदमनुपजीव्यैव, उपासनमेकं वा भिन्नरूपं वेति विषयान्तरं तत्र विचार्यते इति ॥ ३६८ ॥

## १०० ॥ अथ प्रदानाधिकरणम् ॥ ३-३-१८ ॥

सूत्रम्—प्रदानवदेव तदुक्तम् ॥ ३-३-४२ ॥

(३६९) कामानेतांश्च सत्यानिति वचनबलात् धर्म्युपास्तेर्विभक्ता(क्तो)
धर्मोपास्तिस्तदर्थं गुणिपरिगणनं तन्त्रतोऽस्त्वित्ययुक्तम् ।
तत्तद्वैशिष्ट्यभेदात् प्रतिविधि गुणिनश्चिन्तनावृत्तिरर्थ्या ;
राजत्वाद्यैः पृथक्त्वाद्भवति हि हविषो दानमावृत्तमिन्द्रे ॥ ४९ ॥

पूर्वाधिकरणं प्रसङ्गादायातम् ; अधुना तत्पूर्वदहरविद्याविषयनिरूपणमत्र क्रियत इति सङ्गतिः । तदर्थविचारस्तु—'तद्य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्' इति अपहतपाप्मत्वादीनामपि भेदेनोपासनं विहितम् । तत्र गुणचिन्तने गुणविशिष्टतया दहरस्याऽऽत्मनश्चिन्तनमावर्तनीयम्, नेति। तदर्थं विचार्यते—किं दहरमात्रचिन्तने गुणवद्दहरचिन्तनमपि कृतम्, नेति । अत्र कश्चिदाह— 'य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्' इति पृथगनुध्यानवचनबलात् धर्म्युपासनात् विभक्ता धर्मोपास्तिः। तदर्थं गुणिपरिगणनं-धर्मोपासनार्थं धर्म्युपादानं तन्त्रतोऽस्तु-एकवारमेवास्तु। अयमर्थः—धर्म्युपासनार्थं धर्म्युपादाने कृते तदुपजीवनादेव धर्मोपासनार्थं पुनर्धर्म्युपादानं न कर्तव्यम्, पूर्वोपात्तधर्म्युपादानेनैव उत्तरोपासनेऽपि धर्मिसिद्धेरिति । तदेतत् सर्वमनुवदति— कामानिति । तदिदं निराकरोति—अयुक्तमिति। अयुक्तत्वमेवोपपादयति—तत्तदिति। अपहतपाप्मत्वादिगुणगणविशिष्टोपासने तत्तद्गुणवैशिष्ट्यभेदात् प्रतिविधि तत्तद्गुणविशिष्टब्रह्मोपासनविधानेसर्वत्रापि गुणिनो ब्रह्मणश्चिन्तनावृत्तिः अर्थ्या = अर्थादनपेता । तेन पूर्वम्, 'अनुविद्य' इति विहितगुण्यनुसन्धाने, 'एतांश्च सत्यान् कामान् अनुविद्य व्रजन्ति' इति तत्तद्गुणविशिष्टब्रह्मानुसन्धाने गुण्यनुसन्धानं प्रत्येकमेव कर्तव्यमित्यर्थः । अस्मिन्नर्थे पूर्वकाण्डोक्तन्यायं दृष्टान्ततया सूत्रकारोक्तं दर्शयति—राजत्वाद्यैरिति । अयमर्थः—'इन्द्राय राज्ञे पुरोडाशमेकादशकपालं निर्वपेत्' इत्यादौ

---

४९. पूर्वाधिकरणं प्रासंगिकम् । ततः प्राक् प्रस्तुता दहरविद्या पुनर्विचार्यते । अत्र सर्वत्र संगतिविषये भाष्यार्थदर्पणोऽपि द्रष्टव्यः । कामानिति । उपासनसामान्यस्य सगुणविषयत्वात् गुणानां गुणिप्रकारैकस्वभावत्वात् गुणविशिष्टगुणिध्यानं सर्वत्र कार्यमिति स्वरससिद्धम् । तत्र दहरविद्यायां परमुपासनकथनता न युक्तेति न मन्तव्यम्-अत्रोपासनान्तरवैलक्षण्येन धर्मिचिन्तनस्य धर्मचिन्तनस्य च, गुणानां पृथङ्निर्देशात् पृथगेव कर्तव्यत्वादिति गमयन् पूर्वोत्तरपक्षावाह कामानिति । 'दहरोऽस्मिन्नन्तराकाशः सत्यकामः' इत्यनिर्दिश्य, 'तस्मिन् यदन्तस्तदुपासितव्यम्' इति गुणचिन्तनस्य पृथग्वचनात्, 'य इहाऽऽत्मानमनुविद्य व्रजन्ति एतांश्च सत्यान् कामान्' इति पृथगनुवेदनवचनाच्चात्रोपासनरीतिरन्यादृशी । तत्र धर्मोपासनपार्थक्येऽपि धर्मिचिन्तनावृत्तिः कुतः । सकृत् धर्मिणं विचिन्त्य सह अपहतपाप्मत्वानुसंधानस्यैव पर्याप्तत्वादिति पूर्वपक्षः । तदर्थं गुणिपरिगणनं तन्त्रतोऽस्तु इति । धर्मिचिन्तनरूपपरिगणनमेव गुणार्थपरिगणनमपि भवत्वित्यर्थः । तथाच भाष्यम्, "तस्य च सकृदेवानुसंधातुं शक्यत्वात् गुणार्थं तच्चिन्तनं नाऽऽवर्तनीयम्" इति । निरस्यति इत्ययुक्तमिति । प्रतिविधि स्वरूपविशिष्टधर्म्यनुसंधाने अपहतपाप्मत्वादिविशिष्टधर्म्यनुसंधाने च तत्तद्वैशिष्ट्यस्य भिन्नत्वात्, राजत्वाधिराजत्वस्वराजत्वरूपधर्मवैशिष्ट्य-

तत्तद्विशेषणविशिष्टेन्द्रे प्रदानाख्यं कर्मावृत्तम्। एवमपहतपाप्मत्वादिनानाविशेषणविशिष्टे परस्मिन् ब्रह्मणि स्थिते तस्यैव परस्य ब्रह्मणः पौनःपुन्येनावृत्तिरर्थवतीति(त्यर्थः) ॥ ३६९ ॥

(३७०) तत्तद्भोगप्रगी(ती)तेर्गुणघटितपरोपासना भोगहेतुः
मुक्तिश्च स्यात् क्रमादित्यसत्; अगुणवचसाऽऽन्यपर्याभिधानात्।
शास्त्रेऽस्मिन् आ समाप्तेः क्व फलमभिहितं निर्गुणोपास्तिसाध्यं;
नोच्छास्त्रश्च प्रकल्प्यं; गुणनियमनतः ख्यातिमांश्चैष पादः ॥ ५० ॥

अत्र कश्चिदाह—अत्र खलु द्विविधमुपासनमुक्तम्—निर्गुणस्वरूपोपासनमेकम्, गुणविशिष्टब्रह्मोपासनमपरम्। इह च यथोपासनं फलमिति न्यायेन निर्गुणस्वरूपोपासनात् निर्गुणब्रह्मप्राप्तिः। तदिदमुच्यते, 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति; सगुणोपासनात् पुनः सगुणब्रह्मप्राप्तिः। तदप्यत्रोच्यते, 'जक्षत् क्रीडन् रममाणः' इत्यादिना। तेन क्रममुक्तिमत्रोपकल्पयामः। ततः सगुणोपासनात् सगुणं प्राप्य निर्गुणोपासनात् निर्गुणमपि प्राप्नोतीति। तदिदं सर्वमनुवदति—तत्तद्भोगेति। तत् प्रतिक्षिपति—असदिति। अयमर्थः—अत्रोभयविधोपासनं भवता किं प्रमाणमनुसृत्य कल्प्यते, उत न। नाऽऽद्यः; उपासनस्य सर्वस्यापि सगुणविषयत्वात्। न द्वितीयः; अतिप्रसङ्गात्। असत्या एव गुणा इति चेन्न; 'त इमे सत्याः कामाः' इति तत्सत्यत्वस्यैवात्यादरेण प्रतिपादनात्। 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इत्येतस्मादनन्तरमेव, 'जक्षत् क्रीडन् रममाणः' इति सगुणफलस्य प्रतिपादनाच्च। पूर्वमेव निर्गुणवाक्यस्य हेयगुणनिषेधविषयत्वेन व्यवस्थापनादिति। तेन निर्गुणमेव नास्ति; कुतस्तस्योपासनम्? कुतस्तरां निर्गुणब्रह्मप्राप्तिः कुतस्तमाञ्चोपासनफलवैविध्येन वाक्यार्थभेदपरिक्लृप्तिरिति। उक्तमेवार्थं वैशद्याय पुनरुपपादयति—शास्त्रेऽस्मिन्निति। अस्मिन् शास्त्रे खलु, 'अथातो ब्रह्मजिज्ञासा' इत्यारभ्य, 'अनावृत्तिश्शब्दादना-

---

भेदात् इन्द्रं प्रति प्रदानस्य यागस्याऽऽवृत्तिवत्, धर्मिणश्चिन्तनस्याऽऽवृत्तिः अर्थ्या=अर्थादनपेता, यथार्था। अर्थनीयेति वाऽर्थः। स्वरूपानुसंधानार्थधर्मिचिन्तनमन्यत्, गुणानुसंधानार्थधर्मिचिन्तनमन्यदिति भावः। प्रतिगुणं धर्मिचिन्तनावृत्तिर्वा तत्र तन्त्रं वेति विमर्शे वक्तव्यं तु प्रत्येकमिति श्लोके द्रष्टव्यम्॥३६९॥

५०. तत्तदिति। अस्य श्लोकस्यात्र कः संबन्ध इति चेत्-गुण्यपेक्षया गुणानुसंधानपार्थक्यस्यालोच्यमानतया गुणेष्वत्यादरप्रतीतेः, गुणघटितोपासनस्य मुख्यमुक्त्यर्थत्वाभाववचनं निर्गुणोपासनस्य मुक्त्यर्थत्ववचनञ्च दूष्यमिति युक्तमेव हि। अथाप्यस्य पूर्वमेतत्पादोपोद्घाते वा पादान्ते वा उत्तरश्लोकानन्तरं वा निवेशो युक्तः; न त्वेकार्थकश्लोकद्वयमध्ये इति चेत्—अस्तु यत्र क्वापि। वस्तुतस्तु कामादीति सूत्रे परैः छान्दोग्ये दहरविद्या सगुणविद्या, बृहदारण्यके निर्गुणविद्येति कथितत्वात्, असद्भाष्ये आदरादलोप इत्यादिसूत्रद्वये सगुणनिर्गुणविचाराच्च अयं श्लोकस्तदधिकरण एव सर्वसूत्रार्थक्रोडीकारितया पठनीय इति भाति। एतदर्थस्तु—सगुणविद्यासु गुणघटितपरमात्मोपासना भोगस्यैव हेतुः न तु मुक्तेः; तत्र, 'जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा', 'सर्वेषु लोकेषु कामचारो भवति', 'कामान्नी कामरूप्यनुसञ्चरन्' इति विविधस्य भोगस्य प्रतीयमानत्वात्। कथं तर्हि मुमुक्षुशास्त्रे तद्विचार इति चेत्—तत् स्थानं प्राप्य तत्रान्ते तत्त्वज्ञानात् मुक्तेरवश्यम्भावात् क्रमान्मुक्तिः स्यादिति। इत्यसदिति। निर्गुणवादिमतमिदमसत्।

श्रुतिशब्दात्' इति सूत्रपर्यन्तं निर्गुणब्रह्मोपासनप्रसङ्ग एव नास्ति। इष्टमेवैतत् भवताम् [। अन्यथा ?] उपास्यत्वेन मिथ्यात्वप्रसङ्गात्। फलञ्च निर्गुणोपासने परिकल्पयितुं न शक्यते। तत्फलं ब्रह्मस्वरूपं चेत्, अनादिसिद्धत्वादफलमेव। तस्मात् सगुणादेवोपासनात् फलसिद्धिः। तच्च फलं सगुणात्मकमेवेति सिद्धम्। मा भूत् शास्त्रे निर्गुणब्रह्मोपासनम्, मा भूदपि तत्फलम्; अथाप्यस्मत्संप्रदायपारम्पर्यात् परिकल्पितमिति चेत्, तत्रोत्तरमाह—नोच्छास्त्रमिति। तिष्ठन्त्वेतानि दूषणानि; इदमेकं ब्रह्मास्त्रम्। अयं खलु पादो गुणोपसंहारपाद इति नामतः प्रसिद्धः। अस्मिन् पादे गुणनिषेधवचनं भवताम् उन्मत्तप्रलपितमेवेत्याह—गुणनियमनत इति ॥ ३७० ॥

(३७१) प्रत्येकं मेलनाद्वा दहरगुणगणेऽप्यत्र सञ्चिन्त्यमाने
गुण्यावृत्त्यर्थलब्धेः कथमिह तदनावृत्तिशङ्केति चेन्न ।
बुद्ध्यारोहे गुणानां यदवधि गुणिनो रूपमर्थ्यं, ततोऽन्यत्(यदन्यत् ?)
विध्यैकान्तं, तदावृत्त्यनुघटिततदावृत्तिचिन्ताप्रवृत्तेः ॥ ५१ ॥

इति प्रदानाधिकरणम् ॥ १०० ॥

एतस्मिन्नधिकरणे पूर्वपक्षोत्थानमाक्षिप्य समाधातुमुपक्रमते—प्रत्येकमित्यादिना। 'अपहतपाप्मा' इत्यादिना प्रत्येकानुसन्धानम्। 'व्रजन्त्येतांश्च सत्यान् कामान्' इत्यादिना मेलनानुसन्धानम्। यद्वा तद्वा भवतु। उभयथाऽनुसन्धानेऽपि गुणिनमन्तरेण गुणानुसन्धानाभावात् ब्रह्मानुसन्धानं स्वयमेव सिध्यति। अत्र गुण्यननुसन्धानं (अत्र गुण्यनुसन्धानमन्तरेण गुणानुसन्धानं)

---

तत्र हेतुमाह अगुणेति। किं निर्गुणवाक्यवैयर्थ्यपरिहारायैवमुच्यते, उत शारीरकशास्त्रे तत्स्थापनात्। नाद्यः; निर्गुणवाक्यस्य हेयगुणरहितपरतया प्रागेव व्याख्यातत्वात्। सामान्यविशेषन्यायेन उत्सर्गापवादन्यायेन च तथा निर्धारितत्वात्। नान्त्यः; निर्गुणज्ञानफलं शास्त्रेऽस्मिन् कुत्राभिहितमस्ति? 'विकल्पोऽविशिष्टफलत्वात्' इति सगुणफलस्यैवोक्तेः॥ बादरायणानुक्तमप्यस्मादृशैः स्थाप्यमिति चेत्—उच्छास्त्रं न कल्पनीयम्। एतच्छास्त्रातिक्रमेण कथनं हि उपनिषदोऽप्यतिक्रम्य स्वबुद्ध्या कल्पनमेव। तन्न युक्तम्। विशिष्यास्मिन् पादे निर्गुणविचारायोगमप्याह गुणेति। गुणोपसंहारपाद इति हि नाम। न चोपसंहारो नाशो बाधो वेति ॥ ३७० ॥

५१. नन्विदमधिकरणं धर्मिचिन्तनात् पृथक् गुणचिन्तनविधानसमर्थकं वा, आहो पृथक्तया सिद्धे तत्र गुण्यावृत्तिसमर्थकं वा। नाद्यः; भाष्ये, 'दहराकाशस्य परमात्मन उपासनमुक्त्वा........ गुणानामपि पृथगुपासनं विहितम्' इति तत् सिद्धवत्कृत्य तदुपर्यन्यविचारस्यैव कृतत्वात्। नान्त्यः; तस्य विचारमन्तरैव सिद्धेः। कथमिति चेत्—उच्यते—अपहतपाप्मत्वादिगुणगणः प्रत्येकम्, 'अपहतपाप्मा विजरः' इत्येवं पृथक् पृथक् चिन्त्यते चेत्—तदा धर्मिचिन्तनावृत्तिः स्पष्टा। यदि ब्रह्मणः अपहतपाप्मत्वादिगुणगण इति चिन्त्यते, तदाऽपि धर्मिचिन्तनपार्थक्येन तदावृत्तिः सिद्धा। यदि च अपहतपाप्मा विजरः इति पृथक् पृथक् धर्मिश्रवणेऽपि अरुणैकहायनीन्यायेन समानाधिकरणवाक्ये सर्वविशेषणविशिष्टधर्मिभानं सकृदेवेतीष्यते, तदाऽपि गुणिचिन्तनात् गुणचिन्तनपार्थक्यस्येष्टतया स्वरूपचिन्तनात्

कथमिवाशङ्क्यते? आशङ्काभावे कथमिव समाधीयत इति चोदकाभिप्रायः। तदिदं प्रतिक्षिपति—नेति। प्रतिक्षेपप्रकारमाह—गुणानामिति। गुणानां बुद्ध्यारोहे यदवधि गुणिनो रूपं सत्यत्वज्ञानत्वानन्तत्वादिरूपं अर्थ्यं=अर्थादिलप्येतं; तदवि(तदुप)युक्तमित्यर्थः। तत् स्वयमेव सिध्यत्येव। ततोऽन्यत्=यत् तत् विधैकान्तं=स्थानादिरूपम्। तदावृत्तीति—तस्य स्थानादेरावृत्तिसहितस्य ब्रह्मण आवृत्तिचिन्ताप्रवृत्तेरिति शब्दार्थः। अयमर्थः—सर्वविद्यासाधारणसामान्यगुणातिरिक्ततत्तद्विद्याविशेषनियतस्थानादिविशेषणसहितस्यैव ब्रह्मण आवृत्तिरिति ॥ ३७१ ॥

इति प्रदानाधिकरणम् ॥ १०० ॥

## १०१ ॥ अथ लिङ्गभूयस्त्वाधिकरणम् ॥ ३-३-१९ ॥

सूत्रम्— लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४३ ॥

(३७२) प्रक्रान्ता दहरविद्या प्रकटमुपरि च ज्ञायते तैत्तिरीये
तस्मादूर्ध्वानुवाकः प्रकृतविषयनिर्धारणार्थोऽस्तु; मैवम्।
तत्तद्विद्योदितैस्तैः परमिह पुरुषं प्रत्यभिज्ञाप्य शब्दैः
तस्मिन् नारायणत्वं वददधिकबलं प्रक्रियातो हि वाक्यम् ॥ ५२ ॥

अत्र भाष्ये सङ्गतिरुक्ता, 'किं पूर्वप्रकृतविद्यया एकविद्यात्वेन तद्गुणस्यविशेषनिर्धारणमनेन क्रियते' इति पूर्वपक्षोत्थानक्रमाभिधानात्। तदर्थविचारस्तु—किं सर्वासु परविद्यासु नारायण

---

पार्थक्येन गुणगणार्थधर्मिचिन्तनं सिद्धमेव। अतो गुणिचिन्तनावृत्तेरर्थाल्लब्धत्वात् तदनावृत्तिशंकायाः कथमवकाशः इति। निरस्यति नेति। गुणानां प्रकृतधर्मिनिष्ठतया विषयीकाराय यदवधि यावत धर्मिस्वरूपम् अर्थ्यम् अवर्जनीयमपेक्षितम्, तत् सत्यत्वादिस्वरूपनिरूपकधर्मविशिष्टम्। यत् ततोऽन्यत् प्रकृतविधैकान्तं दहराकाशत्वविशिष्टरूपम्। तदावृत्त्या दहराकाशत्वरूपविधैकान्तधर्मावृत्त्या अनुघटिता या तदावृत्तिः स्वरूपनिरूपकधर्मविशिष्टावृत्तिः धर्म्यावृत्तिर्वा, तच्चिन्तायाः अत्राधिकरणे प्रवर्तनादिति। अर्थ्यमित्येतदनन्तरं चिन्तामणौ अध्याहारः कृतः। यदन्यदिति पाठश्चेत्, तावत विना निर्वाहोऽपि। अन्यदित्यत्र तत इति अर्थसिद्धम्। भाष्ये, 'गुणचिन्तनेऽपि तत्तद्गुणविशिष्टतया दहरस्याऽऽत्मनश्चिन्तनमावर्तनीयम्' इत्युक्तम्। प्रतिगुणं धर्मिचिन्तनावृत्तिरप्यस्त्विति चेत्-प्रयोगगौरवाभावाय सर्वविशिष्टधर्मिसकृदनुसंधानमेव युक्तम्। यदा तदसंभवः, तदा पृथगस्तु ॥ ३७१ ॥

५२. पूर्वाधिकरणे गुणचिन्तनेऽपि गुणिचिन्तनस्यानुस्यूतिरुक्ता। तद्वत् सर्वास्वपि परविद्यासु नारायणरूपधर्म्यनुस्यूतिरिह स्थाप्यते। नारायणानुवाकः ततः प्राक्प्रस्तुतदहरविद्याशेषभूतो वा स्वतन्त्रो वेति विमर्शः। स्वतन्त्रत्व एवास्य नारायणे स्वपरविद्यावेद्यत्वबोधकता। तत्र पूर्वपक्षी दहरविद्याशेषत्वमाह प्रक्रान्तेति। तैत्तिरीये प्रक्रान्तेत्यन्वयः। संभवत्येकवाक्यत्वे वाक्यभेदायोगात्। 'तत्रापि दहं गगनं विशोकस्तस्मिन् यदन्तः तदुपासितव्यम्' इति दहरोपासनस्य विहितत्वात् सहस्रशीर्षमिति तच्छेषभूतमेव; तत्प्रकरणगतत्वात्। अत्रैवानुवाके अन्ते, 'पद्मकोशप्रतीकाशं हृदयञ्चाप्यधोमुखम्' इति दहरप्रस्तावस्य क्रियमाणतया दहरप्रकरणमेवेदमिति हि सुनिश्चितमित्याह प्रकटमुपरि चेति। तस्मात्

एवोपास्यः, उत दहरविद्यायामेव नारायण उपास्य इति । तदर्थं विचार्यते—किं नारायणानुवाके सर्वविद्योपास्यविशेषनिर्धारणं क्रियते, उत दहरविद्योपास्यविशेषनिर्धारणमिति । किमत्र, 'पद्मकोशप्रतीकाशं हृदयञ्चाप्यधोमुखम्' इत्यादिना प्रतीयमानदहरविद्योपास्यदहरोद्देशेन नारायणत्वं विधीयते, उत सर्वविद्यासु अक्षरशिवशम्भुपरब्रह्मपरज्योतिःपरतत्त्वपरमात्मादिशब्दनिर्दिष्टमुपास्यं वस्त्विह तैरेव शब्दैरनूद्य नारायणत्वं विधीयत इति । किं, 'पद्मकोशप्रतीकाशम्' इत्यादिहृदयायतनत्वश्रवणानुरोधेन दहरोद्देशेन विधानं न्याय्यम्, उत विधेयनारायणत्वानुरोधेन लिङ्गभूयस्त्वेन सर्वोपास्योद्देशेन नारायणत्वविधानं न्याय्यमिति । अत्र सङ्गतिगर्भं पूर्वपक्षोपन्यासमाह—प्रक्रान्तेति । 'अणोरणीयान्' इत्यस्मिन्ननुवाके दहरविद्या प्रक्रान्ता । 'सहस्रशीर्षम्' इत्यनुवाके पुनरुपरि, 'पद्मकोशप्रतीकाशम्' इत्यादिना तैत्तिरीयकवाक्ये सैव विद्या प्रत्यभिज्ञायते । तेन, 'सहस्रशीर्षम्' इत्यनुवाकः पूर्वप्रकृतदहरविद्यावेद्यनिर्धारणार्थं इति पूर्वपक्षोत्थानम् । तद् दूषयति—मैवमिति ।

---

प्रकरणात ऊर्ध्वं, सहस्रशीर्षमिति नारायणानुवाकः दहरविद्यावेद्यनिर्धारणार्थः एतद्विद्यावेद्यस्य नारायणत्वविधायकः । तेन, 'यः परः स महेश्वरः' इति महेश्वरशब्दस्यार्थान्तरभ्रान्तिर्वार्यते । तदर्थमेतावान् अनुवाक कुत इति चेत्—अस्तु दहरविद्यावेद्यतया सहस्रशीर्षत्वादेरपि विधानम् । ननु गगनं विशोक इति परमात्मन उक्तत्वात्, 'तस्मिन् यदन्तस्तदुपासितव्यम्' इति प्रथमान्ततत्पदेन धर्मग्रहणात् सहस्रशीर्षमित्यादेस्तत्र कथमन्वयः । उपासितव्यमित्यस्य कर्मार्थकप्रथमान्तत्वात् सहस्रशीर्षमित्यादेर्द्वितीयान्तत्वाच्च हि नान्वयसंभव इति चेत्—न ; द्वितीयान्तानामुपजीवतीत्यत्रान्वयात् । पश्चात् वाक्यैकवाक्यतया पूर्वान्वयस्वीकारादिति । निरस्यति मैवमिति । अत्रानुवाके नारायणपदस्य श्लोके, तदर्धे, पादे, पदे चाऽऽवृत्तिदर्शनात् दहरविद्यावेद्यस्य नारायणत्वविधाने इष्टे सकृत तत्प्रयोगस्यैव पर्याप्तत्वात् । अत्र च प्रत्येकं सहस्रशीर्षपरब्रह्मपरतत्त्वपरज्योतिरादिषु एकैकोद्देशेन नारायणत्वविधानं स्पष्टम् । अत इमानि बहूनि वाक्यानि । अत एव नारायणपदाऽऽवृत्त्या प्रथमार्थे द्वितीयेति वक्तव्यम् । उपास्स्वेत्यध्याहारो वा । अध्याहारापेक्षया लक्षणैव लघीयसी । तत्फलं किमिति विमर्शे परब्रह्मादिपदानां परविद्यासु तत्रतत्र श्रूयमाणतया तत्प्रत्यभिज्ञानात् तत्तद्विद्यावेद्यं परब्रह्मादि नारायण एवेत्युक्तं भवति । जुह्वादेरव्यभिचरितक्रतुसंबन्धवत् परब्रह्मादिपदार्थानामव्यभिचरितविद्यासंबन्धाभावात् कथं विद्यानामुपस्थितिरिति चेत्—विधानबहुत्वस्यावैयर्थ्यायैव तदुपस्थापनात् । महाज्ञेयमिति पदेन धातुना परविषयकज्ञानवाचिना सर्वपरविद्योपस्थापनाच्च । यज्ञेन दानेनेत्यादौ सर्वयज्ञादिग्रहणवत् । दहरविद्यायां परतत्त्वपरज्योतिरादिपदाभावाच्च तदनुवादायोगात् । तेषां पदानां विधेयार्थपरत्वाभावाच्च । अतस्तत्तद्विद्यास्थलप्रयुक्तैः तैः शब्दैः तत्तद्विद्यावेद्यमनूद्य नारायणत्वविधानम् । सूत्रे लिंगपदेन वाक्यग्रहणम् । नारायणत्वविधायकवाक्यभूयस्त्वात् प्रकरणबाधः । दहरविद्यावेद्ये नारायणत्वविधानार्थे सकृदेव नारायणपदप्रयोगः स्यात् । तत्तदुद्देशेन नारायणत्वविधानसामर्थ्यरूपलिंगभूयस्त्वस्य श्रुवचस्त्वेऽपि वाक्यस्यापि प्रकरणात् बलीयस्त्वात् तावदेव पर्याप्तमिति लिंगपदं वाक्यपरमित्युच्यते । सहस्रशीर्षमित्यादिवाक्यग्रहणाय च । तदाह तस्मिन्निति । नारायणत्वं विदधत् वाक्यं प्रक्रियातः प्रकरणप्रमाणापेक्षया अधिकबलमिति । ननु,

पूर्वपक्षप्रतिक्षेपप्रकारं प्रकटयति—तत्तदिति । श्रुतिलिङ्गवाक्यादिषु प्रमाणेषु उत्तरोत्तरदौर्बल्यस्य न्यायसिद्धत्वात् प्रकरणात् वाक्यं बलीयः । 'नारायणपरं ब्रह्म' इति (?) पदान्तरसमभिव्याहारो वाक्यम्, तच्च वाक्यम्, 'तत्त्वं नारायणः परः, नारायणपरो ज्योतिः' इत्यादिरूपं सर्वविद्यावेद्योपस्थापनं करोति । भवता पुनः प्रकरण देव दहरविद्यामात्रशेषत्वमभिधीयते । तेन दुर्बलप्रमाणसिद्धं दहरविद्यामात्रशेषत्वं परित्यज्य(हित्वा) प्रबलप्रमाणसिद्धं सर्वविद्याशेषत्वमेव संग्राह्य(संगृह्य)मिति । तदिदमाह—अधिकबलं प्रक्रियातो हि वाक्यमिति ॥ ३७२ ॥

(३७३) वाक्यैः सर्वार्थतायां दहरभजनमप्यत्र भागीति सार्थः
तल्लिङ्गोपेतभागो न च बहुभिरलं योद्धुमेकं कृता(गता)र्थम् ।
नैकस्यास्योपकुर्यात् प्रकरणमलसं ; किञ्च सर्वोपजीव्ये
तत्त्वे तात्पर्यमत्र स्फुटमिति वितथा तत्परित्यागक्लृप्तिः ॥ ५३ ॥

ननु न केवलं प्रकरणमात्रमस्माभिरवलम्ब्यते, अपितु दहरविद्याशेषत्वोपपादकलिङ्ग-

---

'कारणं तु ध्येयः' इति कारणस्यैव मोक्षार्थोपास्यत्वं सिद्धम् । गतिसामान्याच्च नारायण एव कारणमिति सिद्धम् । 'नान्यः पन्थाः' इति श्रीपतिमहापुरुषादन्यस्यानुपायत्वञ्च श्रुतम् । अतो नारायणानुवाकं विनैव नारायणस्यैव सर्वपरविद्यावेद्यत्वस्य स्थितया व्यर्थमिदं विधानम् । न च सत्यत्वज्ञानत्वादिस्वरूपनिरूपकधर्माणां व्यक्तिविशेषनिर्धारकत्वाभावात् एतद्विधानावश्यकता ; तस्य शोधकवाक्यतया कारणत्वमूलदोषशंकापरिहारार्थतया कारणब्रह्मानुवादितया कारणत्वेन निश्चितं धर्मिं विहायान्यबोधकत्वायोगादिति चेत्—तर्हि दहरविद्यावेद्ये नारायणत्वविधानमपि व्यर्थमेव । अथापि, 'यः परः स महेश्वरः' इति वचनबलात् महेश्वर एवोपास्य इह भवत्विति शंकेति चेत्–तुल्यन्यायेन शम्भुब्रह्मशिवेन्द्रादिनामपदघटितविद्यावाक्येष्वप्येवमाशंका भवतीति न्यायनिरपेक्षं कण्ठत एव श्रुतिरव्याजवात्सल्यात् पथ्यं वदतीति विज्ञेयम् । अन्यथा हि—ब्रह्मशिवाद्यर्थान्तरप्रसिद्धानां शब्दानां यथाश्रुतार्थग्रहणेन तावन्मात्रोपासनेऽपि मोक्षः स्यात्ताम । शास्त्रस्यापर्यनुयोज्यत्वात् । "कल्याणालोकनादेरिव विधिबलतो वेदनस्यार्थवत्त्वात्" इति प्रागुक्तरीतेरनुसर्तव्यत्वात् । न च, 'नान्यः पन्थाः' इति श्रुतिविरोधः । उपासनस्यान्यविषयकत्वेऽपि, 'फलमत उपपत्तेः' इति न्यायेन नारायणस्यैव सिद्धोपायत्वमित्यर्थपरत्वात् । अत एव तज्ज्ञानं विना मुक्तिर्न भवतीत्येतदप्युपपन्नम् । अतो बहुषु वाक्येषु प्रसिद्धार्थत्यागेन परमात्मार्थकल्पनामपेक्ष्य तत्तदुपासनेऽपि नान्यो मोक्षप्रद इत्येवमेव सर्वश्रुतिनिर्वाहः स्यात्—इत्याशंका भवेदपि । ततो नारायणानुवाकोऽयं परविद्यावेद्यत्वमस्य कण्ठतो वक्ति । आब्रह्मस्तम्बपर्यन्ताः कर्मजनितसंसारवशवर्तिनो यतः, ततो न ते ध्याने ध्यानिनामुपकारकाः । तदुपासने च तत्क्रतुनयात् प्राकृतत्वप्राप्तिरेव स्यादिति न मुक्तिप्रसक्तिरिति श्रुतितात्पर्यम् ॥ ३७२ ॥

५३. यदि परविद्यान्तरविषयनिर्धारणमेतत्कार्यम्, तर्हि एतदनुवाकान्ते पद्मकोशप्रतीकाशमिति कुतो दहरप्रस्तावः ? तदर्थं प्रकरणानुवृत्तिस्वीकारे वाक्यैस्तद्भावः कथम् । तस्य बाधितत्वे च *तद्वाक्यार्थो*-

मध्यस्मिन् वाक्ये दृश्यते(विद्यते); तेन तद्विरोधे सति वाक्याल्लिङ्गस्य प्राबल्यात् दहरविद्याशेषत्वमेवाङ्गीकार्यमित्याशङ्क्य परिहरति – वाक्यैरिति । अयमर्थः—यद्येकमेव वाक्यम्, तदा लिङ्गस्य प्राबल्यं वक्तुं शक्येतापि। अत्र तु (शक्येत। अपितत्र) बहूनि वाक्यानि विद्यन्ते। अतस्तेषामेव प्राबल्यम्। न च तानि लिङ्गेन विरुध्यन्ते। सर्वविद्याशेषत्वमेव हि वाक्यैरुपपाद्यते। अतो गलक्षणन्यायेन कतिपयोपादानमिति सर्वविद्याशेषत्वसिद्धौ(द्धिः) दहरविद्याऽपि सर्वविद्यान्तर्गतेति तद्विद्याशेषत्वमपि वाक्यानाममभिमतमेव। तेनोपशान्तविरोधं स्ववाक्ये दहरविद्याशेषत्वलिङ्गमविरोधेनावतिष्ठते। प्रकरणमपि दहरविद्याशेषत्वोपपादकं तच्छेषत्वलाभेन कृतार्थत्वात् सर्वविद्याशेषत्वप्रतिपादकवाक्यैः प्रबलैर्न विरुध्यते। किञ्च, 'सहस्रशीर्षं देवम्', 'सहस्रशीर्षा पुरुषः' इति पुरुषनारायणप्रत्यभिज्ञारूपलिङ्गमुपक्रमस्थत्वादत्यन्तप्रबलमेव दृश्यते। तेन लिङ्गादुपसंहारस्थात् न दहरविद्यामात्रशेषत्वसिद्धिः। अयमत्र शब्दान्वयः—वाक्यैः सर्वार्थतायामुपपादितायां दहरभजनमप्यत्र भागीति =अस्मिन्नर्थे भागवदिति, सार्थः =कृतार्थतावान् अस्मिन् वाक्ये दहरविद्याशेषत्वोपपादकलिङ्गान्वितो वाक्यभागः। तस्मादेव कृतार्थत्वात् लिङ्गस्य विरोध एव नास्ति। स्वाभिमतार्थलाभेन विरोधाभावात् लिङ्गमुदासीनमेवावतिष्ठते। एवं कृतार्थत्वेनोदासीनं लिङ्गं बहुभिस्तत्परैर्वाक्यैर्योद्धुं नालमेव। एवञ्च सति प्रकरणमपि स्वयमलसम्; स्वभावतो दुर्बलत्वात्। दहरविद्याशेषत्वस्यापि लाभेन कृतार्थत्वाच्च। तेन नैकस्यास्य लिङ्गस्योपकरोति। न हि बहुषु विरुद्धेषु बलवत्सु विद्यमानेषु स्वयं कृतार्थत्वादलसस्य लिङ्गस्य स्वयमपि स्वभावतो दुर्बलं कृतार्थत्वादलसं च प्रकरणमुपकरोति।

---

नन्वय इत्यत्राह वाक्यैरिति। अनुवाको ह्ययं सर्वपरविद्याग्राही दहरविद्यामपि गृह्णात्येव। अतो दहरभजनमपि दहराकाशोपासनमप्यत्र भागि निविष्टमेवेति तदितरप्रस्तावत् तत्प्रस्तावोऽपि युज्यते। एवञ्च पद्मकोशेत्यादिवाक्यं लिंगात्=सामर्थ्यात् दहरविषयम्; परञ्ज्योतिर्वाक्यादि च तत्तद्विद्यान्तरविषयमिति न दोषः। अत इदमेकं लिंगं वाक्यं वा गता(कृत)र्थत्वात्=अन्यथासिद्धत्वात् बहुभिर्वाक्यैर्योद्धुं नालम्=प्रबाधनसमर्थं न भवति। बहुभिस्तु प्रकरणबाध एव। तर्हि कथं पद्मकोशवाक्यस्य दहरेऽन्वय इति चेत्—तत्राह नेति। अस्य वाक्यस्य लिंगस्य वा विद्यान्तरविषयनारायणत्वविधायवाक्यवत् प्रकरणनिरपेक्षमेव दहरान्वयो भवतीति किमत्र प्रकरणेनेत्यर्थः। किञ्चेत्यादि। नन्वेतावदुक्तार्थनिगमनमेव अत्र क्रियते; तत्र कथं किञ्चेत्यारम्भ इति चेत्—उच्यते। अस्यायमर्थः—सर्वपरविद्योपास्यनिर्धारणमत्र क्रियत इति संप्रयुक्तम्। तत् तत्तद्विद्यागतपदान्यनूद्य वा भवतु; अन्यान्यपि वा पदानि निर्दिश्य सुबालोपनिषदादौ, 'चक्षुश्च द्रष्टव्यञ्च नारायणः' इत्यादि सर्वस्य नारायणात्मकत्वपरवाक्यम् अन्तर्यामिब्राह्मणादि चानुसृत्य। विद्योपदेश-तत्त्वोपदेशरूपसर्वशेषजीव्यबोधनं स्वातन्त्र्येण वा भवतु; न दहरविद्यामात्रार्थमिति। यद्वा, पद्मकोशप्रतीकाशमित्यादिवाक्यम्, स्वान्तर्यामिपरमात्मोपासनरूपदहरविद्यामात्रविषयकमिति मा भूत्। ब्रह्मरुद्रादिपदघटितपरविद्यादिविषयकमपि स्यात्। द्वेधा ह्यन्तर्यामित्वं परमात्मनः। तत्रैकं परात्मस्वरूपस्य सर्वव्यापित्वात्। तदुक्तमत्रैव, "यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा। अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः" इति। एवं हार्दरूपेण तस्य तस्य हृदये स्थित्याऽन्यादृश-

किञ्चोपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गपरामर्शेन वाक्यार्थे निर्णीते प्रतिपन्नमर्थान्तरं त्याज्यमेवेति हि न्यायमार्गः। अत्र पुनः सर्वविद्योपजीव्यत्वात् नारायणस्यैव परमप्राप्यत्वप्रतिपादनमिति स्फुटमेवोपक्रमादिपरामर्शेनोपलभ्यते। तच्च दहरविद्यायामप्युपकरोति ॥ तेन प्रधानभूतं स्फुटप्रतिपन्नमसंकुचितमर्थं परित्यज्य दहरविद्यामात्रशेषत्वं नोपपादनीयमिति सर्वविद्याशेषत्वमेव वाक्यस्येति सिद्धम्। अयमर्थः—इदं तु वाक्यं न केवलशेषत्वेनोपपादकम्। समन्वयाधिकरणे विद्याशेषत्वमन्तरेणापि वाक्यप्रामाण्यस्योपपादनात्। अथापि सर्वविद्योपकारकमेव ; परतत्त्वपरिज्ञानमन्तरेण तद्ध्यानस्य कर्तुमशक्यत्वात्। तेन प्रमाणबलात् सर्वोपजीव्यत्वसिद्धिरिति तत्परित्यागकल्पः सर्वितथैव ॥ ३७३ ॥

(३७४) आत्मैक्यं देवतैक्यं त्रिकसमधिगता तुल्यतैक्यं त्रयाणाम्
अन्यत्रैश्वर्यमित्याद्यनिपुणफणितीरादियन्ते न सन्तः।
त्रय्यन्तैरेककण्ठैस्तदनुगुणमनुव्यासमुख्योक्तिभिश्च
श्रीमान् नारायणो नः पतिरखिलतनुर्मुक्तिदो मुक्तभोग्यः ॥ ५४ ॥

इति लिङ्गभूयस्त्वाधिकरणम् ॥ १०१ ॥

उक्तं नारायणस्यैव पारम्यं नानाविधपरपक्षप्रतिक्षेपपूर्वकं सम्प्रतिपन्नप्रमाणविशेषप्रतिपादनानुपपादयति–आत्मैक्यमिति। सर्वेऽप्यात्मान एकमेवेति (एक एवेति) भास्करयादवप्रकाशशाङ्करमतानुसारिणो वदन्ति। सर्वासां देवतानामैक्यमिति प्रशिथिलपरिपठितकतिपयनिगमाः पामरप्रायाः। केवलपुराणपठनमात्रसंतुष्टाः विशेषज्ञानविधुराः ब्रह्मविष्णुरुद्राणां तुल्यत्वमिति प्रतिपेदिरे। तादृशा एवान्ये पुनः त्रयाणामैक्यमिति। त्रिमूर्त्युत्तीर्णं किमपि तत्त्वमस्तीति व्योमातीतवादिनः। अपरे पुनरयथायथमेव यथाभिमानं कल्पयन्तो भास्करादिष्वन्यतममेव सर्वस्मात्परं वर्णयन्ति। अनिपुणा एवैते। वेदविरोधात् स्मृतिविरोधात् सत्त्वोत्तरपुराणविरोधाच्च। एतेषां फणितीस्तत्त्वविदो नाद्रियन्ते। तर्हि किं प्रमाणं भवतामित्याशङ्क्य प्रमाणोपादानपूर्वकं परतत्त्वनिर्णयमुपपादयति—त्रय्यन्तैरिति। एककण्ठैरिति सर्वश्रुत्यविरोधमाह। तदनुगुणेति सोपबृंहणत्वमाह। श्रीमानिति, 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' इत्युत्तरनारायणोक्तनियामकलिङ्गं दर्शयति। नारायण इति अस्यैव नारायणानुवाकस्योपादानम्। पतिरिति, 'पतिं विश्वस्य' इत्यादिनानाविश्रुतिप्रतिपन्नशेषशेषिभावव्यक्तीकरणम्।

---

मप्यन्तर्यामित्वमस्ति। इदमपि इन्द्राद्युपासनविधायकवाक्यार्थो भवितुमर्हतीति तदुपपादनाय सर्वशरीरेषु हार्दरूपेण स्थितिरुच्यते पद्मेत्यादिना। इदमुभयविधमन्तर्यामित्वमभिसंधाय, 'स ब्रह्मा स शिवः' इति निगमनं क्रियते। अतः अत्र पद्मेत्यादिवाक्येऽपि अनेकविद्योपजीव्यानेकहार्दतत्त्वे तात्पर्यं स्फुटमिति न दहरविद्यामात्रे संकोचः। अतो न प्रकरणानुवृत्तिरिति। एवं द्वेधा किञ्चेत्यादेरर्थ उक्तः। इदं भाष्यकारपद्यानुक्तमपि तदभिसंहितमेव। परिष्कार-भाष्यार्थदर्पणादिकं द्रष्टव्यम् ॥ ३७३ ॥

५४. एतदधिकरणसिद्धं परमार्थं दर्शयति आत्मैक्यमिति। त्रिके=ब्रह्मविष्णुरुद्रेषु समधिगता प्रतिपन्ना तुल्यता। समनियतजातिद्वयसत्त्वे मानाभावात् यथा घटत्वकुम्भत्वयोरैक्यम्, तथा तुल्यबलात्मत्रये मानाभावात् मूर्तित्रयस्य लाघवादेकात्मकत्वमिति पक्षमाह ऐक्यं त्रयाणामिति। अन्यत्र= व्योमातीतादौ ईश्वरत्वम्। इत्यादीति आदिना एतदन्तर्गते पद्मयोनौ वा तत्पुत्रे वा ईश्वरत्वपरिग्रहः।

स एव हि प्रणवार्थः। प्रणव एव हि सकलवेदसारः; 'सर्वे वेदा यत्पदमामनन्ति' इत्यारभ्य, 'तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत्' इति निगमनात्। नः पतिरिति बहुवचनोपादानात्, 'नित्यो नित्यानाम्' इति श्रुतिसिद्धजीवनानात्वमुपपाद्यते। अखिलतनुरिति अन्तर्यामिब्राह्मणादिसिद्धम-ध्यात्मशास्त्रसारभूतं सर्वशरीरत्वमुच्यते। मुक्तिदो मुक्तभोग्य इति तृतीयचतुर्थाध्यायप्रतिपाद्यार्थ-तत्त्वमभिधीयते। मोक्षप्रदत्वं तृतीये, मुक्तप्राप्यत्वं चतुर्थे इति तयोरर्थविभागः॥ ३७४॥

इति लिङ्गभूयस्त्वाधिकरणम्॥ १०१॥

## १०२॥ अथ पूर्वविकल्पाधिकरणम्॥ ३-३-२०॥

सूत्रम्—पूर्वविकल्पः प्रकरणात् स्यात् क्रियामानसवत्॥ अतिदेशाच्च॥ विद्यैव तु निर्धारणात् दर्शनाच्च॥ श्रुत्यादिबलीयस्त्वाच्च न बाधः॥ अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद् दृष्टश्च तदुक्तम्॥ न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः॥ परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः॥४४-५०॥

(३७५) अङ्गं पूर्वप्रसक्तेष्टकचितसमुपस्थापितस्य क्रतोः स्यात्
बुद्ध्यात्माऽग्निर्मनश्चित्प्रभृतिरपि यथा मानसं द्वादशाहे।
तद्वीर्यस्यातिदेशादिति न सत् उदितो ह्यत्र विद्यात्मकोऽङ्गी
श्रुत्याद्यैरेव तस्मिन् उपकृतिसमताबोधनार्थोऽतिदेशः॥ ५५॥

प्रकरणाद्बलीयसा वाक्येन नारायणानुवाकस्य सर्वविद्यासाधारण्यमुक्तम्। इह तु प्रकरणस्य बाधकाभावात् मनश्चिदादयः क्रियामयक्रत्वनुप्रवेशिन इति शङ्कया सङ्गतिः। तदर्थविचारस्तु—वाज-सनेयके, 'मनश्चितः...वाक्चितः...प्राणचितः...चक्षुश्चितः...श्रोत्रचितः...कर्मचितः...अग्निचितः' इति मनश्चिदादयोऽग्नय आम्नायन्ते। ते किं क्रियामयक्रत्वन्वयेन क्रियारूपाः, उत विद्यामयक्रत्वन्वयेन विद्यारूपा इति। तदर्थं विचार्यते—किमिष्टकचिताग्निसन्निधानात् तद्द्वारा सन्निहिते क्रतौ क्रियामये विनियोगोऽस्ति तेषाम्, उत नेति। किं, 'विद्यया हैवैत एवंविदश्चिता भवन्ति', 'तान् हैतानेवंविदे

ऐश्वर्यादिदातृत्वस्य च। अन्यत्रेत्यस्य आदिपदस्य च व्यत्यस्यार्थवर्णनमपि कृतमस्ति। सर्वप्रमाणविरोधा-देतदनादरणमित्याह त्रय्यन्तैरिति। तृतीयायाः ज्ञाप्यत्वमर्थः। सिद्ध इत्यध्याहारो वा। त्रय्यन्तैरेक-कण्ठैरिति प्रथमाध्यायार्थोक्तिः; तदनुगुणेत्यादिना द्वितीयस्य। अखिलतनुरिति सर्वपरविद्याविषयत्व-प्रकारः। मुक्तिद इति सिद्धोपायत्वम्। अथ फलकथनम्। विस्तरः श्रीमति रहस्यत्रयसारे सारास्वादिन्यादौ॥ ३७४॥

५५. यथा नारायणानुवाकः पूर्वदहरविद्याशेषत्वं विहाय स्थितः, तथा मनश्चिदाद्यग्नयोऽपि पूर्वक्रियामयक्रतुशेषत्वं विना विद्यामयक्रतुशेषा एव भवन्तीति निरूप्यते। क्रतौ आहवनीयाग्न्याधारत्वात् अग्निशब्दवाच्यः इष्टकाभिः श्येनाद्याकारतया चितः स्थण्डिलविशेषः इष्टकचित इत्युच्यते। अतः स क्रियामयक्रत्वङ्गम्। इममिष्टकचितमग्निं निरूप्य अन्ये मनश्चिदादयोऽप्यग्नयः अग्निरहस्ये उपदिष्टाः। मनश्चिदादिशब्दाः तकारान्ताः, न तु इष्टकचितवत् अकारान्त। चित् चीयमानः स्थण्डिलविशेषः। मनोव्यापारा एव चित इति मनश्चितः। बहुवचनम्। एवं वाक्चित इत्यादावपि भाव्यम्। पुरुषस्यायुः शतवर्षात्मकम् षट्त्रिंशत्सहस्रदिनात्मकं भवति। सर्वेषां भूतानामायुर्दिनानि एतावत्संख्याकानि। तेष्वैकैक-दिनसाध्याः ये मनोव्यापाराः, वाग्व्यापाराः चक्षुरादिव्यापारा वा, ते चीयमानाग्नित्वेन भाव्यन्ते। एवं

सर्वदा सर्वाणि भूतानि चिन्वन्ति' इति श्रुतिलिङ्गवाक्यैर्विद्यारूपक्रतौ विनियोगोऽवगम्यते, नेति। किं, 'मनसैव ग्रहा अगृह्यन्त, मनसाऽस्तुवन्त, मनसाऽशंसन्' इति मनोव्यापारात्मकग्रहाद्यनुवादात्, 'तेषामेकैक एव तावान् यावानसौ पूर्वः' इत्यतिदेशात् फलसम्बन्धश्रवणाच्च क्रियार्थता, उत विधिप्रत्ययाश्रवणाच्चोदनाश्रवणाच्च न कल्प्य इति। अस्मिन्नधिकरणे सूत्रकारोक्तस्यार्थजातस्य भाष्यकारैरेव सुव्यक्तं विवृतत्वात् पूर्वपक्षसिद्धान्तस्वरूपोपपादनमार्गेण स्वयमपि किञ्चिद्वक्ष्ये। तेन भाष्य-एवान्तेवासिभिरापादचूडमत्यन्ताद्रेणाधिकरणार्थश्चिन्तनीयः। अत्र हि मनश्चिदादयः पूर्वनिष्टकचितावन्यत्रयेन पूर्वप्रसक्तक्रियामयक्रत्वनुप्रवेशेन [1]क्रियारूपाः, किं वा परिकल्पितविद्यामयक्रत्वनुप्रवेशेन विद्यारूपा इति चिन्ता। अत्र पूर्वपक्षाभिप्रायमनुवदति—अङ्गमिति। पूर्वप्रसक्तेष्टकचितसमुपस्थापितस्य क्रतोरेव मनश्चिदादिरप्यङ्गं स्यात्। अयमर्थः—पूर्वत्रापि क्रियामयक्रतुर्न श्रुतः। अथाप्यव्यभिचरितक्रतुसम्बन्धीष्टकचितामिश्रयणबलात् परिकल्प्यत एव। तस्यैवात्र प्रकरणात् सन्निहितस्यैव क्रतोर्मनश्चिदादिरपि विकल्पादङ्गमस्तु। तदिदमाह—बुद्धीति। मनश्चित्प्रभृतिः स्वयं बुद्ध्यात्माऽपि अङ्गिसाकाङ्क्षत्वात् पूर्वप्रसक्तस्य प्रकरणोपस्थापितस्य क्रियामयक्रतोरेवाङ्गं स्यादित्यर्थः। ननु स्वयं ज्ञानात्मकं क्रियामयक्रतोः कथमङ्गं स्यादित्याशङ्क्य तत्र दृष्टान्तमाह—यथेति। यथा द्वादशाहे मानसग्रहस्य क्रियामयक्रत्वङ्गत्वम्, तथात्रापि स्वरूपतो विद्यारूपाणामपि मनश्चिदादीनां क्रियामयक्रत्वङ्गत्वं स्यादित्यर्थः। तत्र हेत्वन्तरमप्यस्तीत्याह—तद्वीर्यस्येति। इष्टकचितादीनां(इष्टकचितस्य?) वीर्यं मनश्चिदादिष्वतिदिश्यते। तेनेष्टकचितादीनां यथा क्रियामयक्रतूपकार[क]सामर्थ्यम्, एवं मनश्चिदादीनामपि तत्सामर्थ्यान्वयस्य विद्यमानत्वात् क्रियामयक्रत्वनुप्रवेशित्वं इत्यर्थः। तदिदं निराकरोति—न सदिति। तदेतदुपपादयति—उदित इति। अयमर्थः—स्ववाक्ये विद्यामयक्रत्वभावे

मनश्चिदाद्यग्नीनां संपत्तिः। एषां क उपयोग इति विमर्शे इष्टकचितस्थाने विनियोग इति पूर्वपक्षी। सिद्धान्ती तु, 'तस्य क्रियारूपक्रतौ विनियोगः; एषां त्वग्नीनां विद्यामये चिन्तनारूपे क्रतौ' इत्याह। एतदर्थं विद्यामयक्रतुकल्पनमयुक्तमिति पूर्वपक्षी कल्पकप्रमाणसत्त्वात् विद्यामय एष्टव्य इति सिद्धान्ती। मनश्चिदादीनां भावनारूपत्वात् क्रियारूपकर्माङ्गत्वमसंभवीति शंकायाम्—द्वादशाहे क्रतौ ऐन्द्रवायवादिग्रहाविशेषं मनोव्यापारात्मको मानसग्रहोऽप्यंगतया विहितोऽस्ति। 'किमिव हि वचनं न कुर्यात्।' अतस्तद्वदिमे अग्नयोऽपि। एवं च मनश्चित्प्रभृतयः अग्नयः इष्टकचितेनाग्निना पूर्वेण विकल्प्यन्ते। अतो मानसग्रहस्येव एषां क्रियारूपक्रतुरेवाङ्गी। न च क्रतुरसंनिहित इति वाच्यम्; इष्टकचितस्यास्य सन्निहितत्वात् अव्यभिचरितक्रतुसंबन्धशालिना तेन क्रतोराकृष्टत्वात्। अत इष्टकचितप्रकरणात्, पूर्वप्रसक्तेन इष्टकचितेन स्वसंबन्धितयोपस्थापितस्य क्रतोरेव मनश्चिदादिः बुद्ध्यात्माऽपि=ज्ञानात्मकोऽप्यंगं भवति, द्वादशाहे मानसग्रहवत्। ननु मनश्चिदादेः इष्टकचितवत् आहवनीयाधारत्वायोगात् तदर्थं इष्टकचितस्य नियततया किमर्थं मनश्चिदाद्यनुष्ठानमित्यत्र अतिदेशाच्चेति सूत्रं थमाह तद्वीर्यस्येति। 'तेषामेकैक एव तावान् यावानसौ पूर्वः' इति वाक्येन पूर्वस्येष्टकचितस्य क्रतूपकारकत्वं यावत्, तावदेषामप्यस्तीति समानवीर्यत्वकथनात् इष्टकचिताभावेऽपि मानसमात्रेण कार्यसिद्धेर्भवात्। इमं पूर्वपक्षं निरस्यति इति न सदिति। हेतुमाह उदित इति। अत्र निर्धारणात दर्शनाच्च श्रुत्यादिबलीयस्त्वाच्च न सूत्रोक्तं सर्वं समग्राहि।

1. सूत्रे क्रियापदस्य विद्यापदस्य च, क्रियानुप्रवेशिनः, विद्यानुप्रवेशिन इत्यर्थ इति ज्ञापनाय एवं प्रयोग.।

हि पूर्ववाक्यपरिकल्पितक्रियामयक्रत्वनुप्रवेशो मनश्चिदादीनां सापेक्षत्वं स्यात्। स्ववाक्य एव श्रूयमाणानुबन्धादिपरिकल्पितो विद्यामयक्रतुरस्ति। तेन स्ववाक्यस्थं विद्यामयक्रतुं हित्वा पूर्ववाक्यपरिकल्पितेन क्रियामयक्रतुना मनश्चिदादयः सम्बध्यन्त इति न कल्पनीयमिति। श्रुत्याद्यैरिति। स्ववाक्ये विद्यामयक्रतुरस्तीति श्रुतिरेवोपपादयतीत्यर्थः। तर्हि क्रियामयक्रत्वनुप्रविष्टानामिष्टकचितानां सामर्थ्यातिदेशादत्रापि मनश्चिदादीनां क्रियामयक्रत्वनुप्रवेशो ह्यवश्यमङ्गीकर्तव्य इति मयैवोक्तम्; तत्र किमुत्तरं दत्तमित्याशङ्क्याह—उपक्तनीति। अयमर्थः-अतिदेशो हि साकाङ्क्षं वति, तेनेष्टकचितादीनां स्वाङ्गिभूतक्रियामयक्रत्वनुप्रवेशेन यत् सामर्थ्यमस्ति, तत्सामर्थ्यं मनश्चिदादीनां स्वाङ्गिभूतविद्यामयक्रत्वनुप्रवेशेनैवास्तीति नातिदेशविरोधः ॥ ३७५ ॥

(३७६) कल्प्यो ह्यत्र क्रियात्मा क्रतुरपि तदपि; प्रागुपात्ताङ्गशक्त्या
वाक्यस्थैश्चानुबन्धैरिह समुपनतो भाति विद्यामयस्तु।
दूरस्थाकृष्टयोगात् स्ववचनपठिताकृष्टयोगो लघीयान्
अप्राप्तेऽर्थे विधित्वं ह्यनुवदनमभेऽप्याश्रितं तद्वदत्र ॥ ५६ ॥

इति पूर्वविकल्पाधिकरणम् ॥ १०२ ॥

नन्वत्र भवता कल्प्यविद्यामयक्रत्वनुप्रवेशो मनश्चिदादीनामुच्यते। ततो वरं पूर्वसिद्धक्रियामयक्रत्वनुप्रवेश इति चोदकस्य कस्यचिन्मन्दस्योत्तरमाह—कल्प्य इति। अत्र विद्यामयक्रतुरेव न कल्प्यते; पूर्वं क्रियामयक्रतुरपि कल्प्य एव। तेन पूर्वकल्पितक्रियामयक्रतुमाकृष्य तेन मनश्चिदादीनामन्वयात् वरमत्रैव परिकल्पितविद्यामयक्रत्वन्वय इत्यर्थः। अयमत्र शब्दान्वयः—क्रियात्मा क्रतुरपि

---

अत एव विद्यारूपत्वे एषां स्पष्टे, 'विद्याचित एव, विद्यया हैव' इत्यवधारणं हि क्रियासंबन्धलेशं विना विद्यामयाङ्गत्वस्थापकम्। न च विद्यामयक्रत्वदर्शनात् कथं तथावधारणसंभव इति शंक्यम्; 'मनसैवाधीयन्त........मनोमयमक्रियत' इति दर्शनात्। न च इष्टकचितप्रकरणादेतद्बाधः। श्रुतिलिङ्गवाक्यानां तदपेक्षया बलीयस्त्वात् त्रयाणामप्यत्र सत्त्वात्। विद्ययेति तृतीयया एषां विद्याप्रयुक्तत्वबोधनात् श्रुतिरस्ति। सर्वभूतायुरन्तर्गतैकैकदिनसंभावित-तत्तदिन्द्रियापरिमितव्यापाराणां चितानां परिमितकालकार्यक्रत्वङ्गत्वापेक्षया तत्तुल्यविद्यामयक्रत्वङ्गत्वे औचित्यमपि। 'एवंविदे चिन्वन्ति' इति वेदनचयनयोरेकवाक्यावगतत्वाच्च श्रुतविद्यासंबन्ध एव युक्तः, न त्वनेनक्रतुसंबन्धः। तर्हि इष्टकचितान्वितक्रतुसंबन्धाभावे, 'यावानसौ पूर्वः' इति तत्तौल्यकथनं किमर्थमित्यत्राह तस्मिन्निति। यथेष्टकचितः क्रियायाम्, तथा मनश्चिदादिर्विद्यायामिति उपकारसाम्यज्ञापनार्थमिति भावः। यावानिति वाक्यं क्रियाविद्ययोः फलसाम्यज्ञापनार्थमिति भाष्योक्तमप्यभिसंहितम् ॥ ३७५ ॥

५६. ननु विद्यामयक्रतुः विधायकवाक्यादर्शनात् सिद्धवत्कीर्तनान्यथानुपपत्त्या कल्प्यः। क्रियारूपस्तु क्रतुः विधिश्रवणात् क्लृप्त इति तदङ्गत्वं युक्तमित्यत्र अनुबन्धादिभ्य इति सूत्रार्थं विशदयति कल्प्य इति। क्रियारूपक्रतोर्विहितत्वेऽपि संनिहितत्वाभावात् तत्संनिधानं कल्प्यम्-तत् कल्पनमपि प्रथमोपात्तेष्टकचिताम्निगतसामर्थ्यबलात्। स ह्यग्निः योग्यतावशात् क्रियारूपक्रत्वङ्गमिति तदन्वयार्थं तत्संनिधानं कल्प्यम्; न तु मनश्चिदादिबलात्। क्रत्वनुबन्धभूताः स्तोत्रशस्त्रचयनाध्ययन-

कल्प्य एव। तच्च कल्पनं प्रागुपात्तनइङ्गशक्त्यैव क्रियते। अत्र कल्प्यस्य विद्यामयक्रत्वोर्वैयर्थ्यमाह—वाक्यस्थैरिति। वाक्यस्थैरेवानुबन्धैरिह समपनतो विद्यामयक्रतुर्भाति—प्रकाशते। तेन परवाक्यस्थानुबन्धपरिकल्पितक्रियामयक्रतोः श्रेयानेवासौ स्ववाक्यस्थानुबन्धपरिकल्पितो विद्यामयक्रतुरिति तदन्वय एव मनश्चिदादीनामित्यर्थः। अस्मिन्नर्थे न्यायानुग्रहं विशदं दर्शयति—दूरस्थेति। दूरस्थैराकृष्टस्य च(?)योगात् स्ववचनपठितैराकृष्टस्य च(?)योगो लघीयानेव। लघुरक्षाश्रयणं हि न्यायप्राप्तम्। तर्हि विद्यामयक्रतोरत्र विधिप्रत्ययो नास्ति; साक्षाद्वेदनशब्दश्च नास्तीत्याशङ्क्य विधिश्रवणाभावेऽपि विधिकल्पनं कर्मकाण्ड एव सम्मतमित्याह—अप्राप्तेऽर्थे इति। विद्यारूपक्रत्वनुप्रवेशो प्रमाणतः प्रतिपन्ने वेदनशब्दाभावोऽपि न दोषायेति शेषः। शेषमशेषमपि भाष्य एव विशदं द्रष्टव्यम्॥ ३७६॥

इति पूर्वविकल्पाधिकरणम्॥ १०२॥

## १०३॥ अथ शरीरेभावाधिकरणम्॥ ३-३-२१॥

सूत्रम्—एक आत्मनः शरीरे भावात्॥ व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत्॥ ५१, ५२॥

**(३७७) तत्कालाकारिणः स्यादहमिति भजने कञ्चुकस्याऽऽत्मनो धीः**
**आसत्तेर्माप्युपास्स्वेत्युदितवदिति चेन्नान्यथा सन्निकर्षात्।**

---

अंगानुष्ठान-प्रधानानुष्ठानादयः मनोमयव ङ्मयचक्षुर्मयादिरूपास्तु अत्र स्ववाक्यैः श्रुता इति विद्यामयो नांगशक्त्योपस्थापनीयः; किंतु शब्दत एव भाति। एवञ्च कर्मकाण्डगततया दूरस्थः इष्टकचितरूपेण अंगेनाऽऽकृष्टो यः क्रियामयक्रतुः तद्योगापेक्षया विद्यामयसर्वाशवचनमध्ये एव पठितः, "अपश्यन् मनोमयान् मनश्चितः" इत्यादिवाक्ये आकृष्टश्च यो विद्यामयः, तद्योगः श्लाघ्यः। नन्वविहितकल्पने गौरवमित्यत्राह अप्राप्ते इति। विद्यामयक्रतोरभावेऽनुवादायोगात् तत्सद्भावस्य विधिमन्तरेणायोगात् विधिकल्पना। अप्राप्तार्थे विधिकल्पनं हि अनुवादसरूपे वाक्ये बहुशः प्रसिद्धम्। मनश्चिदादिविषयेऽपि नात्र विधिः श्रूयते; अप्राप्तत्वात् कल्प्य एवेति तुल्यमेतत्। एवञ्च, 'मनश्चितस्तु मनोमयमक्रियत', 'वाक्चितस्तु वाङ्मयमक्रियत' इत्यादौ तदधिकरणकतया तद्विधानमिति तेषामिष्टकचितवत् अंगत्वं वचनसिद्धमिति न क्रियामयान्वयप्रसक्तिः। स्तोत्रशस्त्रादीनां हि मनोमयानां क्रतौ विनियोजकं वाक्यं न श्रूयते। तथाप्यनुबन्धानां तेषां विद्यामयांगत्वे, संमन्यमाने मनश्चितस्तु' इति अधिकरणतया निर्दिष्टविषये कः संदेहः। ननु, "एकैक एव तावान् यावानसौ पूर्वः" इति श्रुतं सादृश्यं क्रियामयक्रत्वंगत्वरूपमेव स्वरसमिति वाच्यम्; एतत्परिहारस्य, 'न सामान्यादप्युपलब्धेः' इति सूत्रेण कृतत्वात्। उपात्तश्रुतिलिङ्गवाक्यानुबन्धादिविरोधमपि सोढ्वा तद्विरुद्धं सादृश्यं को नाम तदर्थतया स्वीकुर्यात्। अतः स्वांगद्वारा एकफलजनकत्वमेव, 'यावान्....तावान्' इति वचनार्थं इति भाष्यम्। तत् सिद्धं क्रियामयक्रतुरिव विद्यामयक्रतवोऽपि विहिता इति मनश्चिद्वाक्चिदाद्यंगकमनोमयवाङ्मयादिक्रतूनां क्रियान्तरवत् भक्तियोगनिष्पत्तौ चित्तशुद्ध्यर्थतयोपयोग इति। कर्मांगाश्रयणं विना स्वतन्त्रतया विद्याविधानमित्येतत् उपरितनेनानेकविद्याविधायिवाक्यराशितोऽप्यवगम्यते इति परेण चेत्यादिनाऽन्तिमसूत्रेण वर्ण्यत इतीदमपि श्लोके अत्रेति पदेन सूच्यते। विद्याविधायकवाक्यराशिगतेऽत्रेत्यर्थः। दूरस्थाऽऽकृष्टेत्यादेश्चिन्तामण्युक्तोऽर्थोऽपि द्रष्टव्यः॥ ३७६॥

शुद्धो ह्यात्माऽत्र साध्यः फलमतिरविनाभाविनी बोद्धृकृत्ये
बुद्ध्यासन्नेऽन्तरङ्गे सति विधिनियता तत्क्रतुन्यायसिद्धिः ॥ ५७ ॥

अत्र पूर्वाधिकरणं प्रसङ्गादायातम्; तत्पूर्वाधिकरणेन सङ्गतिर्भाष्यकारैरेवोक्ता, "सर्वासु परविद्यासूपास्योपासनस्वरूपवत् उपासकस्वरूपस्यापि ज्ञातव्यत्वमुक्तम्, 'त्रयाणामेव चैवमुपन्यासः प्रश्नश्च' इति । वक्ष्यति चास्य प्रत्यगात्मनः परमात्मात्मकत्वेनानुसन्धानम्, 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' इति । किमयं प्रत्यगात्मा ज्ञाता कर्ता भोक्ता इहामुत्र सञ्चारक्षमोऽनुसन्धेयः, उत प्रजापतिवाक्योदितापहतपाप्मत्वादिस्वरूपः" इति । अयमत्र भावः—लिङ्गभूयस्त्वाधिकरणे सर्वविद्योपास्यस्य नारायणस्य निरूपणं कृतम्, अधुना सर्वास्वपि विद्यासूपासकस्य च उपास्यविशेषणभूततया स्वयमप्यनुसन्धेयस्य जीवस्य स्वरूपं निरूप्यत इति । तदर्थविचारस्तु—'अहं ब्रह्मास्मि' इति परमात्मशरीरतया प्रत्यगात्माऽनुसंधेयः । स किं ज्ञातृत्वकर्तृत्वभोक्तृत्वाद्याकारोऽनुसन्धेयः, उत प्रजापतिवाक्योक्तापहतपाप्मत्वाद्याकारेणानुसन्धेय इति । तदर्थं विचार्यते–किं, 'यथाक्रतुरस्मिँल्लोके' इति यथोपासनं प्राप्तिरिति वचनं परमात्ममात्रविषयम्, उत प्रत्यगात्मविषयमपीति । किं, 'तं यथा-यथोपासते, तथैव भवति' इति तच्छब्दनिर्देशो यथोपासनं(न)प्राप्तिरिति वचनस्य परमात्मपरतामवगमयति, नेति । किमत्र तच्छब्दो जीवशरीरकपरमात्मपरः, उत परमात्ममात्रपर इति । अत्र पूर्वपक्षमारचयति—तत्कालाकारिण इति । 'त्वं वा अहमस्मि भगवो देवते' इत्यादिभिरहंग्रहेण भगवदुपासनमुक्तम् । अहमिति बुद्धिस्तु तत्कालाकारयुक्त एवात्मनि वर्तते । तेनाहमिति परमात्मभजने कञ्चुकभूतस्य जीवस्य धीस्तत्कालाकारेण युक्तस्य जीवस्य स्यात् । तेन कर्तृत्वभोक्तृत्वादियुक्तजीवात्मस्वरूपमेवोपासनदशायामनुसन्धेयमिति । तदिदमाह—आसत्तेरिति । सन्निहितत्वात्

---

५७. पुरुषायुषान्तर्गतैकैकदिनीयमानसवाचिकादिव्यापारसमुदायात्मकविद्यारूपाग्निसाध्यविद्यामयक्रतुविचारो वृत्तः। पुरुषचिन्तनमेव भक्त्यन्तर्गतं कीदृशमिति विचार्यते । देहेन्द्रियादिविलक्षणस्यैवाऽऽत्मनः औपाधिककर्तृत्वभोक्तृत्वाद्याकाराः संनिहितत्वात् संनिकृष्टाः । अन्ये चाविर्भविष्यन्त आकारा अपहतपाप्मत्वादयः । तत्र संनिकृष्टत्यागे मानाभावात् कञ्चुकस्य अहं ब्रह्मास्मीत्यत्र विशेषणतया भासमानस्य आत्मनः स्वस्य धीः चिन्तनं तत्कालाकारिणः=स कालो येषामाकाराणां ते तत्कालाः तादृशा ये आकाराः कर्तृत्वभोक्तृत्वादयः तद्वत इत्यर्थः। तद्विशिष्टविषयिणी स्यादिति यावत्। कुतः? आसत्तेः एषामेव संनिकृष्टत्वात् । ननु हेयाकारचिन्तनं कथमित्यत्राह मामुपास्स्वेति । प्रतर्दनविद्यायां मामुपास्स्वेति इन्द्रेण स्वोपदेशः कृतः । तत्र त्रिशीर्षत्वाष्ट्रवधकर्तृत्वादिहेयगुणविशिष्टेन्द्रशरीरकपरमात्मोपासनमेव विधिबलादिष्यते । तद्वत् कर्तृभोक्तृत्वादेरपि चिन्तनं युज्यत एवेति पूर्वपक्षः । निरस्यति इति चेन्नेति । अन्यथा संनिकर्षादिति । संनिकर्षो यद्यपि तत्कालस्यत्वरूपोऽपहतपाप्मत्वादौ नास्ति, तथापि अन्यथा= प्रकारान्तरेण अन्यादृशः बुद्धिस्थत्वरूपो वर्तत एव । तत्कालस्थस्यापि अबुद्धिस्थत्वे कथं चिन्तनं स्यात् । बुद्धिस्थतामुपपादयति शुद्ध इति। अशुद्धस्य शुद्ध्यर्थमेव ह्युपासनम्। अतः शुद्धात्मस्वरूपं साध्याकारः फलम्। फलविषयकमतिश्च कर्तुः अविनाभाविनी नियता कृतिकाले । इदं मे एतदिष्टसाधनमिति इष्टसाधनतां बुद्ध्वैव कृत्यकरणात् । फलमतिरपि नाभाविनी इति पाठेऽप्यत्रैव पर्यवसानम् । औपाधिकत्वात् कर्तृ-

उपासनदशायामित्यर्थः। तत्र दृष्टान्तमाह—मामुपास्स्वेत्युदितवदिति। यथा प्रतर्दनविद्यायामिन्द्रेण मामुपास्स्वेत्युक्ते तादात्विकमहत्त्वाक्षत्त्वादियुक्त एवोपास्यः, न पुनरागामिमुक्ताकारयुक्तः—तद्वदत्रापीति। तदिदं निराकरोति—नेति। तत्र हेतुमाह—अन्यथेति। प्रकारान्तरेण सन्निकर्षस्य विद्यमानत्वादित्यर्थः। तदेव प्रकारान्तरमुपपादयति—शुद्ध इति। द्वे हि रूपे जीवस्य शुद्धमशुद्धञ्च। यत् शुद्धम्, तदेवोपादेयम्। यदेवोपादेयम्, तदेवोपासनदशायामनुसन्धेयम्; यथोपासनं फलस्यैव श्रुतिभिराम्नातत्वात्। तेन शुद्धमेव रूपं बुद्धिसन्निहितमित्युपपादयितुं शुद्धस्यैव रूपस्य फलत्वं तावदाह—शुद्धो ह्यात्माऽत्र साध्य इति। अस्तु शुद्धस्य फलत्वम्, अथापि कथं तस्य बुद्धिसन्निहितत्वमित्यत्राह—फलमतिरिति। 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादौ स्वर्गफलानुसन्धानेन हि स्वर्गार्थप्रवृत्तिः। एवमत्रापि फलभूतशुद्धस्वरूपानुसन्धानसाहित्येनैवोपासनप्रवृत्तिरिति बुद्धिसन्निहितत्वसिद्धिः शुद्धस्यैव रूपस्य। अत्र तत्क्रतुन्यायोऽप्यमुमेवार्थं विशदमुपपादयतीत्याह—बुद्ध्यासन्न इति। बुद्ध्यासन्नेऽन्तरङ्गे सति शुद्धस्वरूपे तत्क्रतुन्यायसिद्धिः प्रमाणेन नियमिता भवति। अतः शुद्धमेव स्वरूपमनुसन्धेयमित्यर्थः॥ ३७७॥

(३७८) कर्तुर्भोक्तृत्वमात्रं गणयितुमुचितं दृष्टभोगार्थयत्ने
स्वर्गाद्यर्थेऽन्यदेहानुगतिरपि परं स्वाधिकारानुविद्धा।
मुक्त्यर्थे प्राप्यवश्याप्रणिधिकथनतस्तत्क्रतुन्यायवाचा(वाचां)
चिन्त्यस्य प्राप्यताऽर्थो गमित (तद्युक्तोपास्यरूपं विषय) इति कुतोऽतिप्रसङ्गादिशङ्का॥५८॥

ननु कर्तुर्यथावस्थितात्मस्वरूपमनुसन्धेयमित्युक्ते कर्मकाण्डे कर्मकर्तुरपि तादृशमेव रूपमनुसन्धेयं स्यात्। एवञ्च तत्रैव जीवस्वरूपयाथात्म्ये निरूपिते निरर्थक एव वेदान्तशास्त्रे जीव-

---

त्वादेः, अपहतपाप्मत्वादेः स्वाभाविकत्वाच्च स एवाऽऽकारोऽन्तरंगः। बुद्ध्यासन्नस्य बुद्धौ संनिकृष्टस्य अन्तरंगस्य च तस्य ग्रहणमेव युक्तम्। एवञ्च तत्क्रतुन्यायसिद्धिरप्यत्र विधिनियता उपासनविधौ व्याप्ता भवति। अन्यथा हि स्वात्मविशिष्टपरमात्मोपासनरूपध्याने परमात्मांश एव तत्क्रतुन्यायः, उपासितगुणानामवश्यप्राप्तेः। जीवगुणास्तु कर्तृत्वादय औपाधिकत्वात् मुक्तौ न भवन्तीति न प्राप्यन्ते इति स्वीकार्यतया संकोचः कार्यः। 'तं यथायथोपासते' इति तच्छब्देन परमात्मन एवोक्तिरिति वक्तव्यम्। 'यथा क्रतुरस्मिन् लोके पुरुषो भवति, तथेतः प्रेत्य भवति' इति वाक्यं स्वरसतः परमात्मनीव तद्विशेषणेष्वपि उपासिताकाराणां मुक्तिकाले स्थितिमेव वदेत्। तत्र त्वाष्ट्रवधादिकर्त्रिन्द्रोपासनजन्यफलभूतमुक्तिकालेऽपि तादृशेन्द्रस्थित्या न तदप्राप्तिः। तन्निष्ठहेयस्य स्वनिष्ठता च न प्रसज्यते। स्वस्मिन् कर्तृत्वाद्यनुसधाने तु कर्तृत्वविशिष्टतया स्वस्थितिर्मुक्तावपेक्षिता। तदा च हेयवान् स्वयं भवेत्। विशिष्टोपासनान्तर्गत विशेषणांशेऽपि अपहतपाप्मत्वादेरेवानुसंधाने तु आविर्भविष्यतस्तस्य प्राप्तिरिति, यो य आकारो यत्र यत्र धर्मिणि उपासनेन विषयीकृतः, स सर्वस्तत्र स्थित इति बुद्ध्यासन्ने अन्तरंगे उपास्ये सति, उपासनविधिर्यद्यदंशे, तत्रतत्र तत्क्रतुन्यायसिद्धिर्व्याप्नोतीति सामञ्जस्यम्॥ ३७७॥

५८. ननु साधनानुष्ठानदशायां कर्तुः प्राप्याकारानुसंधानं कार्यमिति कुत्र दृष्टम्। स्वर्गार्थयागानुष्ठानकाले स्वस्य स्वर्गे भाविन आकारस्य चिन्तनादर्शनात्। अतो हेयाकारानुसंधानस्यायुक्तत्वेऽपि

स्वरूपनिरूपणविस्तरः स्यादित्याशङ्कापरिहारार्थं लौकिकवैदिकाद्यनुष्ठानकर्तृभूतजीवस्वरूपानुसन्धान-विभागं विशदमेव दर्शयति—कर्तुरिति। त्रिविधो हि कर्ता—लौकिकं शयनासनभोजनकृष्यादिकं कर्म कश्चित् करोति; परस्तु यागदानहोमादिकं वैदिकं कर्म; तृतीयः पुनः परब्रह्मोपासनं परम-पुरुषार्थप्राप्तिहेतुभूतम्। त्रिष्वप्यधिकारिषु कर्तृत्वानुसन्धानमस्त्येव। तत्र प्रथममाह—दृष्टेति। दृष्टभोगार्थयत्ने भोक्ता कश्चिदस्तीत्येतावन्मात्रमेव गणयितुमुचितम्। स पुनर्देहो वा देहातिरिक्तो वेति विशेषनिश्चयो नास्ति; अनुपयोगात्। दृश्यन्ते हि देहातिरिक्तात्मस्थैर्यपरिज्ञानविधुराणामपि पामराणां स्वाभिमतप्राप्तिहेतवः प्रवृत्तयः शतशः सहस्रशोऽपि। अथ द्वितीयं प्रकटयति—स्वर्गा-दीति। अयमत्र शब्दार्थः—स्वर्गाद्यर्थे कर्मणि स्वाधिकारानुविद्धा ब्राह्मणत्वादिस्वाधिकारानुविद्धा = कालान्तरसम्बन्धिफलसम्बन्धानुविद्धैव देहान्तरानुगतिरात्मनो गणयितुमुचिता। नैतावता वेदान्तवेद्यार्थसिद्धिः। तृतीयमपि पक्षमाह—मुक्त्यर्थ इति। मुक्त्यर्थे पुनरुपासने प्राप्यत्वस्या-प्रणिधिकथनतः = उपासनदशायां चिन्तनीयत्वकथनेन तत्क्रतुन्यायवाचा, यत् चिन्त्यम्, तदेव प्राप्यमित्यर्थो गमित इति = ज्ञापित इति अतिप्रसङ्गादिशङ्का नास्त्येव। अयमत्र भावः—वेदान्त एव हि तत्क्रतुन्यायो विशेषतः स्थापितः; न पुनः कर्मकाण्डे। तेनोपासनदशायां प्राप्यत्वस्यानुसन्धानं नियमेन कर्तव्यम्। कर्मकाण्डे तु कालान्तरभाविस्वर्गादिफलभोक्तृत्वानुरूपस्थैर्यानुसन्धानमात्रं कर्मारम्भे कर्तव्यमिति ॥ ३७८ ॥

(३७९) विद्याभेदेषु वेद्याकृतिविषमतया यावदुक्तेऽपि चिन्त्ये
प्राप्य सर्वोऽपवर्गे तदिह कथमप्राप्य(स्वलु तदिह कथं प्राप्य) चिन्तानिषेधः।

---

प्राप्याकारानुसंधानं मा भूदित्यत्राह कर्तुरिति। यावदाकारस्य स्वसत्त्वज्ञाने प्रवृत्तिर्न स्यात्, तावज्ज्ञानं तत्रतत्रापेक्षितम्। ऐहिकफलार्थयत्ने तत्फलकाले स्वस्य भोक्तृत्वसं वज्ञानमात्रं पर्याप्तम्। आमुष्मि-कार्थयत्ने तु स्वस्य देहातिरिक्तत्वं तत एव देहान्तरप्राप्त्यर्हत्वञ्च ज्ञातव्यम्। तत्र विप्रतिपत्तौ तत्प्रवृत्त्य-संभवात्। एवं मुक्त्यर्थोपासनेऽपि मुक्तौ स्वानुवृत्तिज्ञानमात्रं पर्याप्तं स्यात्। अथापि, 'अपहतपाप्मा विजरः' इत्यादिगुणानां प्राप्तिकालिकावस्थारूपाणां प्रणिधेः उपासनस्य प्रजापतिवाक्ये विहितत्वात्, तत्र मुक्तेरपि कीर्तनं च तदावश्यकत्वे सिद्धे तत्कथनमनुसृत्य तत्क्रतुन्यायवागपि चिन्त्यस्य उपासनविषयस्य प्राप्यत्वमितीममर्थं गमयति। एवञ्चात्र मुक्तिभिन्ने इष्टे स्वर्गादौ यत्नेऽपि सर्वचिन्तनमस्त्विति वा, तत्राभावे अत्रापि मा भूदिति वा न शंकनीयम्। अयं भावः—तत्क्रतुविधिः तदाकारोपासने सत्येव तत्प्राप्तिरिति वक्तीति न ब्रूमः। तथासति हि स्वर्गाद्यर्थानुष्ठाने चिन्तनाविरहात् अप्राप्तिः स्यात्; मुक्तावप्यनुपासित-गुणादेरप्राप्तिः स्यादिति शंका च भवेत्। किं तु ब्रह्माकारविशिष्टोपासने विहितेऽपि फलप्राप्तिनैयत्येऽपि उपासिताकारेषु कतिपयाप्राप्तिरपि स्यादिति न मन्तव्यम्; उपासितं सर्वं प्राप्यत एवेति तन्नियमं दर्शयति। तथाच चिन्त्यस्य प्राप्यत्वं तत्क्रतुन्यायार्थः। स च मुक्त्यर्थोपासन एव। अन्यार्थोपासने तु प्राप्यत्वाभि-मतांशादन्यस्योपासितस्यापि न प्राप्तिः। मुक्त्यर्थोपासने यद्धर्मवत्तया यद्वत् अनुसंधीयते, तद्वत्तया तत्तदनुभव एव प्राप्तिरित्यलम् तद्युक्तोपास्येति पाठान्तरे तत्पदार्थो जीवात्मा। यथायथेत्युक्त्या च तत्प्रकारकत्वसिद्धिः ॥ ३७८ ॥

**तस्मात् बद्धस्य चिन्ताऽस्त्विति न ; कलुषिणो न ह्यहंशब्दमुख्यः**
**प्राजापत्यात् तु वाक्यादकलुषदशया भावनीयत्वसिद्धिः ॥ ५९ ॥**

**इति शरीरेभावाधिकरणम् ॥ १०३ ॥**

अत्र कश्चिच्चोदयति—विद्याभेदेषु वेद्याकाराणां विषमत्वात् यावदुक्तमेव चिन्त्यम् ; अन्यथा परस्परसङ्करप्रसङ्गात् । प्राप्यं पुनः उभयविभूतिविशिष्टम् । तेन बद्धरूपस्यापि सर्वान्तर्गतत्वेन ब्रह्मविशेषणत्वात् प्राप्यत्वमस्त्येव । तत् कथं तस्य रूपस्याप्राप्यत्वात् चिन्तनीयत्वं नास्तीति निषेधः क्रियते । तस्मात् सन्निहितस्य बद्धरूपस्य चिन्ताऽस्त्विति । तदिदमाह—विद्येति । शब्दार्थस्तु—सद्विद्यादहरविद्यादिविद्याविशेषेषु वेद्याकाराणां भिन्नत्वात् यावदुक्तमेव चिन्त्यम । तत्र ब्रह्मविशेषणतया, 'अहं मनुरभवं सूर्यश्च' इत्यहङ्ग्रहोपासनात् जीवस्यापि चिन्तनीयत्वमस्ति । प्राप्यं तु ब्रह्म सर्वविशेषणविशिष्टम् । सर्वशब्दार्थे बद्धस्यापि जीवस्यान्तर्गतत्वात् बद्धरूपमपि ब्रह्मविशेषणत्वादनुसन्धेयमस्तु । सन्निहितपरित्यागायोगात् इति । तदेतत् दूषयति–नेति । प्रतिक्षेपमेव विवृणोति–कलुषित इति । अयमर्थः—अहंशब्दार्थो हि मुख्य एवाहङ्ग्रहोपासने ब्रह्मविशेषणतयाऽनुसन्धेयः । स तु विशुद्धमेव रूपम् । तेनाहंशब्दश्रुतिविरोधात् कलुषितं रूपं नानुसन्धेयम् ; अमुख्यत्वात् । किञ्च प्रजापतिवाक्ये हि ब्रह्मविद्याशेषतयाऽनुसन्धेयं जीवात्मस्वरूपमभिधीयते । तच्च विशुद्धमेव गुणाष्टकविशिष्टमभिहितम् । तस्मात् विशुद्धानुसन्धानमेव जीवस्यापि वेदान्तेषूपासनदशायां विहितमिति नाशुद्धरूपचिन्तनप्रसङ्गः । अत एव भगवता पराशरेण योगिध्येयार्थनिर्णये, 'हिरण्यगर्भो भगवान्' इत्युपक्रम्य, 'अशुद्धास्ते समस्तास्तु देवाद्याः कर्मयोनयः' इत्यशुद्धानामचिन्तनीयत्वमुक्तमिति । तदिदमाह—प्राजापत्यादिति ॥ ३७९ ॥ इति शरीरेभावाधिकरणम् ॥ १०३ ॥

---

५९. ननु कर्तृत्वभोक्तृत्वाद्याकारो नोपास्यः अप्राप्यत्वादिति खल्वेतदधिकरणार्थः । तेन तदुपासने तत्प्राप्तिरनिष्टा पुंसः आपद्येतेति हि भावः । परिपूर्णब्रह्मप्राप्तौ जैवकर्तृत्वभोक्तृत्वादेरप्यनुभवगोचरत्वात् कथं तदप्राप्तिरित्याशङ्क्य परिहरति विद्येति । वेद्याकृतीनाम् उपास्याकाराणां तत्तद्विद्याभेदेन **विषमतया** भिन्नत्वात् सर्वोपासनं विना यावदुक्तोपासनेन अनुपासितांशयुक्तमपि प्राप्यं भवति । एवञ्च जीवगतकर्तृत्वाद्युपासनविरहेऽपि ब्रह्मविशेषणतया कर्तृत्वादिविशिष्टजीवानुभवोऽपि मुक्तौ भवत्येव ; सार्वज्ञ्याविर्भावात् । एवञ्चाप्राप्यं न चिन्त्यमिति निषेधो व्यर्थः । अचिन्तितेऽपि प्राप्तिसद्भावात् । अतो बद्धावस्थाचिन्ताऽप्यस्तु, त्वाष्ट्रवधादिविशिष्टेन्द्रचिन्तावदिति पूर्वपक्षः । **अप्राप्यचिन्तेति चिन्तामणि**-संमतपाठः । **प्राप्यचिन्तेति** पाठे प्राप्यत्वात् कथं तच्चिन्तानिषेध इत्यर्थः । निरस्यति **इति नेति** । **कलुषित इत्यादि** । **अहंशब्दस्य** यद्यपि प्रत्यक्त्वविशिष्टात्मैव **मुख्यार्थः** । कलुषितत्वमकलुषितत्वं वा न तत्रान्तर्भवति । अथाप्यहमर्थे कलुषितत्वं स्थायि न भवतीत्येतावदत्र विवक्षितम् । तथाच यद्रूपतया यदुपास्यम्, तस्य तद्रूपतया=तस्य तदा वर्तमानतया अनुभव एव प्राप्तिः । न च बन्धस्य वर्तमानतया मुक्तावनुभवः । किं तु भूततया । अतो न तस्य प्राप्तिरूपत्वम् । तस्मात् कर्तृत्वाद्यप्राप्तिरेव तदेति । नन्वनुपासनेऽपि धर्मप्राप्तौ अपहतपाप्मत्वादिकमपि नानुसंधीयतामित्यत्राह **प्राजापत्यादिति** । तत्र वचनप्रामाण्यादावश्यकतेति । **न तूपलब्धिवत्** इत्यन्तसूत्रार्थो **भाष्यार्थदर्पणे** द्रष्टव्यः ॥ ३७९ ॥

## १०४ ॥ अथ अङ्गावबद्धाधिकरणम् ॥ ३-३-२२ ॥

सूत्रम्—अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ मन्त्रादिवद्वाऽविरोधः ॥ ५३, ५४ ॥

(३८०) उद्गीथादेर्विशेषे भजनविधिरसौ स्यात् स्वसान्निध्यगीते
मैवं सर्वाङ्गिभूतक्रतुमुखवत् इहाशेषसान्निध्यसिद्धेः ।
सामान्यं व्यक्त्यपेक्षक्रियमपि नियमादर्शने व्रीहितावत्
शब्दश्चोद्गीथमात्रं वदति ; न तु भिदां ; छागनीतिस्तु नात्र ॥ ६० ॥

पूर्वस्मिन्नधिकरणे यत्रयत्र ब्रह्मण उपास्यत्वम्, तत्रतत्र सर्वत्रापि शुद्धस्य जीवस्योपास्यत्वमुक्तम्, अधुना पुनर्यत्रयत्र शाखासूद्गीथानुप्रवेशः, तत्रतत्र सर्वत्राप्युद्गीथाद्युपासनानुप्रवेशोऽस्ति, नेति शङ्कया सङ्गतिः । तदर्थविचारस्तु—'ओमित्येतदक्षरमुद्गीथमुपासीत' इति क्रत्वङ्गाश्रयोद्गीथाद्युपासनानि प्रतिशाखं व्यवतिष्ठन्, उत न व्यवतिष्ठन्त इति । तदर्थं विचार्यते—किं, 'उद्गीथमुपासीत' इत्युद्गीथशब्द उद्गीथमात्रे वर्तते, उत स्वरभेदभिन्नोद्गीथे इति । किं शाखाविशेषस्य स्वरभेदयोगात् स्वरभेदभिन्नोद्गीथव्यक्तेरेव सन्निधिः, उत शेषिभूतक्रतोस्सर्वशाखास्वेकत्वमुखेन सर्वोद्गीथव्यक्तीनां सन्निधिरिति । पूर्वमुद्गीथोपासनयोर्भेदाभेदचिन्ता कृता । समनन्तरं तस्यैवोद्गीथोपासनस्याश्रयिकर्मत्वेन कर्मफलात् पृथक्फलत्वेन पुरुषार्थत्वं प्रसङ्गाच्चिन्तितम् । अधुना पुनरेकत्राम्नातस्योद्गीथोपासनस्य सर्वत्राम्नातोद्गीथमात्रशेषत्वं प्रतिपाद्यत इत्यर्थविभागात् न पौनरुक्त्यम् । अत्र पूर्वपक्षमाह—उद्गीथादेरिति । असौ भजनविधिः स्वसान्निध्यगीते[1] उद्गीथविशेष एव स्यादिति । तमिमं पूर्वपक्षं प्रतिक्षिपति—मैवमिति । प्रतिक्षेपप्रकारं दर्शयति—सर्वाङ्गीति । सन्निधिवशादेव हि तत्रैवोपा-

६०. जीवात्मोपासने गुणविशेषनियमवत् उद्गीथोपासने स्वरविशेषनियमोऽस्तु इति शंकयोत्थानम् । तत्र पूर्वपक्षमाह प्रथमपादेन उद्गीथेति । 'उद्गीथमुपासीत' इति उपासनविधिः स्वसान्निध्ये स्वसंनिधौ एतद्विधिवाक्यवत्यां शाखायां यो गीतः गानविशेषविशिष्टः उक्तः, तस्मिन् स्वशाखादर्शितस्वरविशिष्टे उद्गीथविशेषे स्यात् । तावन्मात्रविषयकः स्यात्, न तु शाखान्तरविहितस्वरान्तरविशिष्टोद्गीथविषयकोऽपीति । अयं भावः—'उद्गीथमुपासीत' इत्यत्रोद्गीथोद्देशेन भजनविधिः यदि स्यात्, तर्हि प्रतिप्रधानं गुणावृत्तिरिति न्यायेन सर्वोद्गीथग्रहणं स्यात् । तथासति तत्तत्स्वरविशिष्टोद्गीथभेदेनोपासनाऽऽवृत्तिरापद्येत । एकैकप्रयोगे एकैकोद्गीथस्यैवान्वयात्तु तावन्मात्रविषयकोपासनमेव युक्तम्, तत्प्रयोगानन्वय्युद्गीथानां तत्क्रतुव्यक्तिसंबन्धाभावेन तेषामाश्रयत्वासंभवात् । अतो व्यक्त्यपेक्षाया संनिहितोद्गीथव्यक्तिमात्रनियमो युक्तः । किञ्च दध्नेन्द्रियकामस्य जुहुयादित्यादौ इन्द्रियोद्देशेन दधिविधाने होमाश्रितेन दध्नेति कथं लभ्यते । होमस्याप्युद्देश्यतयाऽन्वयात् तल्लाभ इति चेत्—तन्न । तथासति होम-इन्द्रियोभयोद्देश्यकतया वाक्यभेदप्रसंगात् । न च होमस्य करणत्वेनान्वयः । दधि प्रति होमस्य करणत्वायोगात् । होमदध्युभयकरणकत्वेऽपि वाक्यभेदापत्तेश्चेत्याशंक्य मीमांसकैरुक्तम् प्रकरणादेवाग्निहोत्रहोमस्योपस्थितत्वात् आश्रयत्वम्, जुहोतीति पदं तु तथोपस्थितानुवादमात्रमिति । तद्वत् अत्रोद्गीथानुष्ठानविधायकप्रकरणे उद्गीथमुपासीतेति वाक्याभावात् उद्गीथव्यक्तेराश्रयता प्रकृतोद्गीथपदेनैव

1 स्वसान्निध्यगीते स्वभजनविधिः यत्र शाखायां तत्र स्वरविशेषवत्तया गीते ।

सनस्यान्वय इति भवतोच्यते । सन्निधिः सर्वेषामप्युद्गीथानां समान एव । सर्वशाखाप्रत्ययन्यायेन सर्वाङ्गभूतक्रतोः सन्निधाने सिद्धे सर्वेषामप्युद्गीथानामत्रैव सन्निधाने सिद्धे सान्निध्यविशेषाभावात् । अयमत्र शब्दार्थः–सर्वोद्गीथाङ्गभूतक्रतुमुखेनाशेषोद्गीथानामत्रैव सान्निध्यसिद्धिरिति । ननु सामान्यं व्यक्तिविशेषमन्तरेणानुष्ठानयोग्यं न भवति । तेनोद्गीथमिति सामान्येनोक्तं तदन्त्योद्गीथविशेषरूपव्यक्तिमपेक्षते । ततश्च तस्मिन्नेवोद्गीथविशेषे उपासनान्वयः स्यात् ॥ न स्यात् । यथा, 'व्रीहिभिर्यजेत' इत्युक्ते व्रीहिमात्रेण यागोऽनुष्ठीयते, एवमत्राप्युद्गीथमात्रान्वयेनोपासनमनुष्ठानं नाम । शब्दार्थस्तु—सामान्यं व्यक्त्यपेक्षमनुष्ठानमपि नियामकप्रमाणाभावे, 'व्रीहिभिर्यजेत' इत्यत्र व्रीहितावत् यं कञ्चन व्यक्तिविशेषमुपादायावतिष्ठते । तर्हि, 'पशुना यजेत' इत्यत्र छाग एव पर्यवसानं कथं स्यात् ॥ इत्थं स्यात् । तत्र हि विशेषपर्यवसानसाकांक्षस्य पशुशब्दस्य विशेषापेक्षस्य पक्षे छागशब्दो मन्त्रवर्णे श्रूयते । इह तु तादृशशब्दविशेषो नास्ति । तस्मादुद्गीथमात्रविषयमुपासनम्, न पुनः सन्निहितोद्गीथविषयमिति सिद्धमित्याह–शब्दश्चेति । उद्गीथसामान्यं वदति । न तु भिदां–पुनरुद्गीथविशेषमिति ॥

इत्यङ्गावबद्धाधिकरणम् ॥ १०४ ॥

---

ज्ञापनीयेति, "वाक्येनाऽऽश्रयदाने च वाक्यभेदः" इति मीमांसकोक्तदोषः स्यात् । अतः फलोद्देशेनोद्गीथविशिष्टोपासनविधिः । तत्र विशेषणभूतस्योद्गीथस्य विधेयकोटिनिविष्टत्वेनोद्देश्यत्वाभावात् एकत्वाविवक्षायां मानाभावेन, पशुना यजेतेत्यत्रेवैकत्वविधौ, स एक उद्गीथः क इति जिज्ञासायां स्वशाखासंनिहितस्य स्वरविशेषविशिष्टस्यैव ग्रहणम्, यथा पशुमालभेतेत्यत्र पशुविशेषापेक्षायां प्राकरणिकमन्त्रनिर्दिष्टच्छागग्रहणमिति पूर्वपक्षः । निरस्यति **मैवमिति** । अङ्गावबद्धपदसूचितरीत्या उद्गीथविशिष्टोपासनविधानेऽपि तत्रोद्गीथस्य क्रतुफलेन नैराकांक्ष्यात् उपासनस्य च फलान्तरान्वयात् उद्गीथस्योपासनस्य चाङ्गाङ्गिभावाभावे सिद्धे प्रधानक्रत्वन्वितस्योद्गीथस्योपासनं प्रति आश्रयता कल्प्यते । द्रव्यस्य करणत्वे क्रियापेक्षाबलात् होमादिक्रियाया आश्रयत्वं मीमांसाप्रसिद्धम् । क्रियाया उपासनस्य करणत्वे विषयविशेषापेक्षाऽस्तीति क्रियाभिन्नस्याप्युद्गीथस्याश्रयत्वमत्रोच्यते । फलाय विधीयमानोऽर्थः फलकरणत्वाय यदुपजीवति, स आश्रयः । तत्रैकोद्गीथविषयीकृत्यैवोपासनपूर्तिसंभवात् न सर्वोपासनप्रसक्तिः । सर्वोद्गीथव्यक्तीनामेकक्रतुप्रयोगान्वयाभावाच्च । तत्र कः स उद्गीथ इति विशेषापेक्षायाम्, 'यज्ञे उद्गीथेनात्ययाम" इति अविशेषेणोद्गीथत्वाक्रान्तस्य तत्प्रयोगान्वयिनो व्यक्तिविशेषस्यापि ग्रहणसंभवात् तच्छाखासंनिहितमात्रे संकोचो न युक्तः । प्रकरणाधीनोपस्थित्यपेक्षया क्रत्वनुष्ठानसंबन्धितयोपस्थितेरेवातिशयितत्वात् । आश्रयस्वार्हत्वाच्च । तदाह **सर्वाङ्गीति** । सर्वोद्गीथाङ्गभूतक्रतुमुखेनोपस्थितत्वमेतच्छाखस्यस्येवान्यस्यापीति । **सामान्यमिति** । अनुष्ठानं हि व्यक्तिविषयकम्, न सर्वविषयकम् । अतस्तदपेक्षायामपि **नियमादर्शने** व्यवस्थापकप्रमाणाभावे व्रीहितावत् स्यात् । 'व्रीहिभिर्यजेत' इत्यत्र व्रीहित्वाश्रयस्य यथेच्छं कस्यापि ग्रहणम्, न तत्र नियमोऽस्ति । यदि उद्गीथशब्दः प्रत्येकोद्गीथे पृथक् शक्तिमान्, तदा सर्वस्यैकसामान्याक्रान्तत्वं नेति शङ्क्येत, नैवमस्तीत्यर्थः । छागपशुनीति परिहरति **छागेति** । तत्राच्छागस्य ग्रहणे तदाऽपि **छागस्येति** मन्त्रस्य प्रयोक्तव्यतया तदनन्वयरूपो दोषः स्यात् । नैवमत्र प्राकरणिकस्वरविशिष्टोद्गीथगाननियमोऽस्ति । यथायथं क्रतौ सर्वोद्गीथसंबन्धस्य प्रयोगभेदेनेष्टत्वादिति ॥ ३८० ॥

१०५ ॥ अथ भूमज्यायस्त्वाधिकरणम् ॥ ३-३-२३ ॥

सूत्रम्—भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ ५५ ॥

(३८१) व्यस्तो वैश्वानरात्मा प्रतिनियतफलोदाहृतेश्चिन्तनीयः
कृत्स्नोपास्तौ फलोक्तिः स्तुतिरिह, यदि वा कृत्स्नरूपोऽप्युपास्यः ।
मैवं व्यस्तेषु दोषः पृथगनुकथितस्तत्फलोक्तिः स्तुतिः स्यात्
दृष्टं ह्यष्टाकपालप्रभृतिषु च तथा ; तेन चिन्त्यः समस्तः ॥ ६१ ॥

पूर्वाधिकरणे उद्गीथादिकं प्रस्तुतम्। तत्र सामान्यवोद्गीथादेः समस्तस्य व्यस्तस्य चोपासनं श्रुतिसिद्धमिति पूर्वमेवोक्तम् ; एवं वैश्वानरविद्यायां किं समस्तस्योपासनं कार्यम्, उत व्यस्तस्य, उतोभयस्येति शङ्कया सङ्गतिः । तदर्थविचारस्तु–किं वैश्वानरविद्यायां पृथिव्याद्यवयवस्य वैश्वानरस्य व्यस्तस्यैवोपास्यत्वम्, उत व्यस्तस्य समस्तस्य च, अथवा समस्तस्यैवेति। किं, 'उद्दालको ह वै भगवन्तः' इत्यादिवाक्ये उपासनविधिर्व्यस्तस्यैव,उत व्यस्तस्य समस्तस्य च,अथवा समस्तस्यैवोपासनविधिरिति। किं प्रत्यवयवं वैश्वानरव्यपदेशात् फलसम्बन्धश्रवण ह्यावयवेषूपासनविधिनानात्वे, 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानम्' इति समुदायानुवादः, उत, 'अत्त्यन्नं पश्यति प्रियम्' इति व्यस्तोपासने फलश्रवणात्, 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते, स सर्वेषु लोकेषु सर्वेषु

---

६१. शाखाभेदाभन्नस्वरविशेषविशिष्टतत्तदुद्गीथव्यक्तेः पृथक् पृथगुद्गीथशब्दवाच्यत्ववत् व्यस्तैकैकोपासनस्यापि वैश्वानरविद्याशब्दवाच्यत्वं स्यादिति शंकया सगतिः । तत्र पक्षद्वयं पूर्वपक्षे आह व्यस्त इति पूर्वार्धेन । ननु पूर्वं वैश्वानराधिकरणे वैश्वानरशब्दवाच्यनिर्धारणावसरे प्रत्येकोपासनानुपपत्तेर्विशदमुदितत्वात् कथमत्र व्यस्तोपासनशंकेति चेत्—एतदधिकरणेनैव समस्तोपासनस्यैव प्रशस्त्वसमर्थनम् । एवम्भूतोपासनविषयः क इत्युपास्यनिर्धारणपरिहार एव तदधिकरणकार्यं इति । ननु तत्तद्व्यस्तोपास्तिः श्रद्धया तेष्वेकीभूतेषु समस्तस्यैवोपासने गुरुणोपदिश्यमाने महावाक्यसारस्यादेव विशिष्टोपासनलाभात् एतद्विचारस्यावसर एव न भवतीति चेन्न—भूमविद्यायां प्रशस्तस्यान्यस्योपर्युक्तावपि पूर्वोक्तस्यानुपेक्षादर्शनात तद्रीतिरत्र स्यादिति तद्दृष्टान्तेन शंकायां प्रसक्तायां तत्रान्ते उक्तस्य पूर्वोक्तसर्वांशविलक्षणतया पृथक् स्वीकार्यत्वेऽपि इहान्ते गुरूक्तस्याकारस्य सर्वशिष्योक्तांशसमाहारभिन्नत्वाभावेन केवलं समुदायानुवादमात्रत्वमपि स्यादिति विशेषशङ्काऽपि प्रथममंकुरितेति पक्षत्रयं प्राप्तमिति । श्लोकार्थस्तु—वैश्वानरात्मा व्यस्त एव चिन्तनीयः ; प्रतिनियतफलोदाहृतेः । प्रतिव्यस्तोपासनं व्यवस्थितस्य फलस्य पृथगुक्तत्वात् । न हि दर्शपूर्णमासाभ्यां स्वर्गकाम इति समुदायस्थले पृथक् पृथक् फलमिष्यते, कथ्यते वा । अन्ते, "यस्त्वेतमेवं प्रादेशमात्रमभिविमानं वैश्वानरमुपास्ते, स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति" इति समस्तोपासनतत्फलनिर्देशस्तु न समस्तोपासनविधानपरः । किंतु कृत्स्नोपास्तौ पूर्वोक्तसर्वोपासनमेलने सर्वफलसमाहारस्यार्थसिद्धस्य वचनमात्रम् । न ह्यर्थसमाजप्रस्ते पृथक्कार्यकारणभावकल्पना । तेन सर्वं व्यस्तोपासनं स्तुतं भवति । तर्हि केचित् द्वयं त्रयं चतुष्टयमिति यथेच्छं फलकामनानुरोधेनानुतिष्ठेयुरिति चेत्—कामं कुर्वन्तु ; यथा

भूतेषु सर्वेष्वात्मस्वन्नमत्ति' इति समस्ते फलश्रवणाच्च उभयत्र विधिर्न्याय्यः, उत एकवाक्यतानुरोधेन, 'यस्त्वेतम्' इत्यत्र समस्तस्यैवोपासनविधिः, अवयवोपासनं तु अवयुत्यानुवाद इति । अत्र कश्चिदाह—वैश्वानरविद्यायां व्यस्तोपासने फलनिर्देशात् व्यस्त एव चिन्तनीयः । समस्तोपासने फलनिर्देशस्तु अर्थवाद(अनुवाद?) एव । अथवा व्यस्तोपासनवत् समस्तोपासनेऽपि फलनिर्देशात् व्यस्तश्चिन्तनीयः, समस्तश्चापि तथा चिन्तनीय एवेति । तमिमं पक्षमनुवदति—व्यस्त इति । तदेतत् प्रतिक्षिपति—नैवमिति । तत्रोपपत्तिमाह—व्यस्तेष्विति । अत्र हि व्यस्तोपासनेषु दोषोऽभिधीयते, तेन व्यस्तोपासनेषु फलवचनमर्थवादमात्रमिति कल्पनीयम् । उक्तमेवार्थं वैश्वानरेष्टिवाक्यदृष्टान्तेन द्रढयति-दृष्टमिति । यथा, "वैश्वानरं द्वादशकपालं निर्वपेत्' इत्यस्मिन् वाक्ये द्वादशकपालनिर्वापस्यैव विधेयत्वम्, 'पूत एव' इत्यादिना तस्यैव फलनिर्देश उच्यते ; अष्टाकपालादीनां न विधिः ; तत्र फलनिर्देशश्चावयुत्यानुवादमात्रमिति तान्त्रिकगोष्ठीनिष्ठानां निर्णयः—तद्वदत्रापि समस्तस्यैवोपासनं विधीयते ; न पुनर्व्यस्तस्य । तत्र फलनिर्देशोऽप्यवयुत्यानुवादेन स्तुतिमात्रमेवेति ॥३८१॥

---

नानाफलार्थं नानायज्ञाद्यनुष्ठानमेक एव कुरुते, तद्वत् । न तदर्थं पृथग्विधिरपेक्षितोऽस्तीति । एवं व्यस्तोपासनस्य प्रामाणिकत्वे किमिति तैः समुदितैर्मीमांसितमिति चेत्—एकैकोऽपि अन्यान्योक्तस्यावैश्वानरात्मत्वमभिमेने । तेन विवादात् केकयाभिगमनम् । तेन सर्वस्य प्रशंसितत्वात् तत्रतत्र तस्य तस्य श्रद्धैव पुनः स्थापितेति । अथ समुदायानुवादस्य वैयर्थ्यात् गुरुकृतं समस्तोपासनमपि पृथगस्त्विति द्वितीयं पक्षमाह यदिवेति । यद्वेत्यर्थः । समस्तोपासनफलं किमिति चेत्— कृत्स्नमेव तत्रोक्तम् । पूर्वेषां फलानामिवास्यापि भुक्तिरूपत्वमेवास्तु । यद्वा क्षुद्रफलार्थं व्यस्तोपासनम्, वैश्वानराधिकरणनिर्णीतरीत्या मुक्तिफलापेक्षायां समस्तोपासनमिति स्याद् भेदः । भूमविद्यायामप्यन्तिमनुपासनमेव हि मुक्तिफलकम् । यद्येवं व्यस्तोपासनमपीष्टम्, तर्हि तन्निन्दा कथं घटत इति चेत्—मूर्धा त्वेष आत्मनः सुतेजा इति मूर्धत्वाद्यज्ञानात् तन्नामाज्ञानाच्च प्रासदोषकथनं तत्; न पुनर्व्यस्तोपासननिन्दनमिति पूर्वपक्षाशयः । सिद्धान्तमारभते नैवमिति । अयं भावः—केकयकृतादुपदेशात् प्राक् द्युप्रभृतीनां मूर्धत्वाज्ञानात् पूर्णवैश्वानरत्वेनैव तेषां ग्रहणमासीत् । तत्र तथाविधमुपासनं वा तत्तत्फलकम्, केकयोपदिष्टमूर्धत्वादिविशिष्टोपासनं वेति विमृश्यम् । भ्रान्तिरूपोपासनानामेव तत्तत्फलकत्वे मूर्धाद्युपदेशो व्यर्थः ; निन्दा च न युक्ता । मूर्धत्वादिविशिष्टज्ञाने तत्तत् फलं भवतीति च वाक्येभ्यो नावगम्यते । कथं तर्हि तत्र फलकथनमिति चेत्-अत एकदेशे पूर्णत्वभ्रान्त्या कृतस्योपासनस्य फलहेतुत्वायोगेऽपि क्रमेणाधिकारी अनुग्राह्य इति बुद्ध्या यथावदुपासनानुग्रहावसरं प्रतीक्षमाणो भगवान् अधिकारिणस्तत्र रुचिमुत्पादयितुं कामप्यभासमूर्तां सिद्धिं प्रदर्शयतीत्येव वक्तव्यम् । अतो न तत्फलनैयत्यम्, न च तदर्थतया तद्विधिः श्रूयत इति तत्फलोक्तिः प्रायिकभगवदनुग्रहप्रयुक्तस्तुतिरेव । सुकृतान्तरजन्यफले वा स्यादेतत्फलत्वारोपः। वस्तुतः फलं नु पत्रावपि फलसंभवमारोप्य स्तुतिर्दृष्टा, यथा वैश्वानरेष्टौ, 'यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति' इति । तथाच संपूर्णोपासनजन्ये संपूर्णफले तत्क्रतुन्यायमादृत्य तत्तदंशफलतया तत्तत्कल्पनमेकैकांशेऽप्युपासनश्रद्धासंधुक्षणायेति ध्येयम् । तेन=तस्मात् कारणात् समस्त एव चिन्त्यः। ततो मुक्तिरेव फलमिति ॥ ३८१ ॥

(३८२) सामस्त्यस्यैव (सामस्त्येनैव?) योगे द्रढिमवति महावाक्यतात्पर्यवृत्त्या
व्यस्तेष्वंशान् अनूद्य स्तुतिनियतनयादान्यपर्यं फलोक्तेः ।
नामादीनामुपास्तौ फलमवधितयाऽपेक्षितं भूमवाक्ये
नाप्येवं प्रत्यवायः श्रुत इति विषमोदाहृतिर्नार्थसिद्ध्यै ॥ ६२ ॥

इति भूमज्यायस्त्वाधिकरणम् ॥ १०५ ॥

अत्र समस्तोपासनमिव व्यस्तोपासनमपि विहितमेव प्रतीयते ; फलनिर्देशश्चोभयत्रास्ति । इत्थं भूमविद्यायामपि पूर्वमल्पोपासनमुक्त्वा, पश्चादुत्तरोत्तरमधिकोपासनमुच्यते । तत्र पूर्वेषामुपासनानामल्पाल्पफलमङ्गीकृतम् । अत्रयुत्यानुवादत्वमपि न कल्पितम् । कथमिदं वैषम्यमुच्यते (म्यं युज्यते?) इति केनाप्यनुयुक्ते वैषम्यद्वयं दर्शयन् समाधातुमुपक्रमते—सामस्त्यस्येति । इत्थमत्र शब्दान्वयः—महावाक्यतात्पर्यवृत्त्या समस्तानुसन्धानस्यास्मिन् वाक्ये योगे=समन्वये द्रढिमवति सति व्यस्तेषु उपासनेषु वैश्वानरेष्ट्यादिवत् अंशानुवादेन स्तुतिनियतन्यायात् फलनिर्देशस्याऽऽन्यपर्यं स्तुतिपरत्वमेव भवति । भूमविद्यायां तु पूर्वस्मादुत्तरस्याधिकफलसाधनत्वेन भूमत्व(यस्त्व?)वचने पूर्वोपासनानामल्पफलत्वमवश्यमङ्गीकार्यम् । न हि निष्फलात् सफलस्याधिकफलत्वं वक्तुं युज्यते; अनन्वितत्वात् । अपि तु अल्पफलादधिकफलस्याधिक्येन भूमत्वं(यस्त्वं?) वाच्यम् । तेनावधित्वेन पूर्वेषामपि फल-

---

६२. ननु भूमविद्यायां नामादयः प्राणान्ताः प्रथमं क्रमेणोपास्यतया प्रोक्ता एवान्ते, 'आत्मतः प्राणः' इत्यारभ्य व्युत्क्रमेणाऽऽत्मजन्यतया निर्दिश्यन्ते । एवं तदंशतया ज्ञाप्यमानानामेव पृथगुपासनं ब्रह्मदृष्टिरूपं स्वीकृतम्, तत्फलञ्च यथाश्रुतम् । तद्वदेवेहापि वैश्वनरात्मांशानां मूर्धादीनामुपासनं फलञ्चोच्यमानं कुतो न स्वीकार्यमित्यत्र वैषम्यं व्युत्पादयति **सामस्त्यस्येति** । समस्तमेव सामस्त्यम्, तस्य । **योगे**-ध्याने । समस्तस्येदं सामस्त्यम् समस्तविषयकानुसंधानम्, तस्येत्यर्थो वा । **योगे** संबन्धे । **सामस्त्यं** समुदाय इति वा । तदा **योगे** ध्याने । अत्र वैश्वानरविद्यायाम् आदित आन्तं परामर्शे महावाक्यतात्पर्यमेवमवगम्यते—प्रथमतः, को न आत्मा किं ब्रह्मेति वैश्वानरात्मजिज्ञासया बहुभिः कृतं मीमांसनम्, तेषां तदर्थानिर्धारणम्, तत उद्दालकषष्ठैः केकयाभिगमनम्, तेन, 'एते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वांसोऽन्नमत्थ' इति पृथगिवेति इवकारेण पार्थक्यस्यावास्तवत्वकथनम्, 'यस्त्वेतमेवं प्रादेशमात्रम्' इत्यादिना समस्तोपासनतत्फलयोः कथनपूर्वकं तेषामवयवत्वोपपादनञ्चेति । एवं परामर्शे तात्पर्यवृत्त्या अत्र समस्तविषयकानुसंधानस्यैव **योगे** संबन्धे **द्रढिमवति**=दार्ढ्यं प्राप्ते सति व्यस्तेषु या फलोक्तिः तस्याः, वैश्वानरेष्टौ द्वादशकपालपुरोडाशवत्यां पृथगष्टाकपाल-नवकपालादिपुरोडाशाद्यभावेऽपि यथा द्वादशकपालांशभूतानेवानूद्य अष्टाकपालेन पुनातीत्यादिना फलोक्त्या स्तुतिरिति पूर्वमीमांसायां निर्णीतम्, तथा तेन अंशानुवादस्तुतिविषयन्यायेनैव आन्यपर्यं प्रागुक्तमेव प्राह्यम् । अंशान्—अष्टाकपालादीन् अनूद्येति स्तुतावन्वेति । भूमविद्यायां नामादिस्थले तु गुरुणैव तत्तदुपासनमुपदिष्टम्; न नारदेन स्वयमुत्प्रेक्षितम् । अथ च शिष्येण फलवत् तत् स्वीकृत्य, 'अस्ति भगवो नाम्नो भूयः' इति उत्तरोत्तरोत्कृष्टविषयप्रश्नः कृतः । पूर्वपूर्वफलवास्तवत्वे सत्येवोत्तरोत्तरभूयस्त्वसिद्धिः । प्राणोपासने दिशोऽप्रशंसा च कृता ।

सम्बन्धो वाच्य इति वैषम्यसिद्धिः। अत्र हेत्वन्तरमप्याह–नाप्येवमिति। वैश्वानरविद्यायां व्यस्तोपासने प्रत्यवायः श्रुतः । भूमविद्यायां तु पूर्वपूर्वोपासने प्रत्यवायो न श्रुतः । तेनेदमपि किञ्चिद्वैषम्यम् । तस्मात् विषमस्य दृष्टान्तस्योदाहरणं नार्थसिद्ध्यै = उभयत्रैकरूपत्वरूपार्थसिद्ध्यै न भवत्येव ॥३८२॥

इति भूमज्यायस्त्वाधिकरणम् ॥ १०५ ॥

१०६ ॥ अथ शब्दादिभेदाधिकरणम् ॥ ३-३-२४ ॥

सूत्रम्—नाना शब्दादिभेदात् ॥ ५६ ॥

(३८३) सर्वासु ब्रह्म वेद्यं; फलमपि खलु तत्, ब्रह्मविद्येति चाख्या;
ध्यानाद्युक्त्यैकलक्ष्ये विधिरपि भजने; सर्वविद्यैक्यमित्थम् ।
तन्नाऽऽख्यारूपभेदात् तदुपहितविधौ तेन वैशिष्ट्यसिद्धेः
मिश्रं मध्वादिविद्याफलमिह च पृथक्; काम्यविद्यासु चैवम् ॥ ६३ ॥

पूर्वस्मिन्नधिकरणे विद्याविशेषविषयचिन्ता कृता; इदानीं सर्वविद्याविषयचिन्ता क्रियत इति सङ्गतिः । अथवा वैश्वानरविद्यायां समस्तोपासनस्यैवोपपन्नत्वेन व्यस्तोपासनानामभावात् विद्यानानात्वं निराकृतम्; अधुना सद्विद्यादहरविद्योपकोसलविद्यादिषु नानात्वं भेदकप्रमाणानुरोधादुपपाद्यत इति सङ्गतिः । तदर्थविचारस्तु—वेदान्तविधेयानां सर्वासां विद्यानां किमैक्यमेव, उत [विद्या]भेद इति। तदर्थं विचार्यते–किं प्रत्ययावृत्तिरूपविधिगतत्वर्थोपासनस्य सर्वत्र ब्रह्मकर्मतया रूपाभेदात् अपुनरावृत्तिरूपफलाभेदाच्चैक्यसमाश्रयणं न्याय्यम्, उतोपास्यब्रह्मण एकत्वेऽपि अपहतपाप्मत्वादिगुणविशिष्टस्योपास्यतयोपासनस्यापि भेदसम्भवात् तादृशोपासनप्रतिपादने निरपेक्षत्वात् वाक्यानां भेदसमाश्रयणं न्याय्यमिति । अत्र पूर्वपक्षी विद्यैक्यं सयुक्तिकमुपपादयति—सर्वास्विति। अत्र प्रथमाधिकरणे संयोगरूपचोदनाख्याऽविशेषात् विद्यैक्यमुक्तम्, तदत्रापि समानम् ।

तत्र फलाभावे तदपि न युज्यते । अत आंशिक फलस्वीकार्यम । हेत्वन्तरमाह नापीति । अत्राज्ञाततत्त्वतत्तन्महर्षिकृतोपासननिन्दाऽप्यन्ते यथायथं मूर्धपातादिपादम्लानिपर्यन्तवचनेन कृतेति प्रत्येकोपासने प्रत्यवायो दोषः श्रुतोऽस्ति । न तत्र तथा । अत इयमुदाहृतिर्विषमा, न समाप्यमैकरूप्यमिदं वैश्वानरविद्यायां साधयेदिति । विषमस्योदाहृतिरिति वा ॥ भूम्नः क्रतुवदिति सूत्रार्थो भाष्यार्थदर्पणे द्रष्टव्यः॥३८२॥

६३. कर्मकाण्डे शब्दान्तर–अभ्यास–संख्या–संज्ञा–गुण–प्रकरणान्तराणि कर्मभेदकप्रमाणानि परिगणितानि । तदपवादतया संयोगरूपचोदनाख्याऽऽविशेष ऐक्यसाधकतयोक्त. । अत्र भाष्ये रूपैक्यात् विद्यैक्यमित्येव पूर्वपक्षे उक्तावपि उक्तचतुष्काविशेष एव तात्पर्यम्; उपक्रमे, "इह ब्रह्मविद्याः सर्वाः ब्रह्मप्राप्तिरूपमोक्षैकफलाः...उदाहरणम्' इति वाक्ये ब्रह्मविद्यापदेन आख्या–रूपाविशेषस्य, मोक्षैकफला इति संयोगाविशेषस्य च प्रदर्शनात् । चोदनैक्यं तु स्फुटमित्याशयेन चतुष्कं दर्शयति सर्वास्विति । विद्यासु सर्वत्र वेद्यं रूपं ब्रह्मैव, फलमपि तत् ब्रह्मैव । आख्याऽपि ब्रह्मविद्येत्येकैव । न च सद्विद्या भूमविद्या दहरविद्या इत्येवं समाख्याभेदः स्फुट इति शङ्क्यम्; तासामाख्यानां तत्तद्भागप्रतिपादकवाक्यराशिपरतया भक्तियोगानां तन्नामकत्वाभावात् । चोदनैक्यमप्याह ध्यानेति । चोदना हि विधिरेकधात्वर्थविषयको वक्तव्यः । वेदोपासीत ध्यायेत् अन्वेष्टव्य इत्यनेकधातुश्रवणेऽपि तासां ध्यानाद्यु-

सर्वास्वपि विद्यासु ब्रह्मैव वेद्यमिति रूपमविशिष्टम्। संयोगोऽप्यविशिष्ट इत्याह—फलमपीति। तथा आख्याऽप्यविशिष्टा ब्रह्मविद्येति। अस्तु त्रितयमिदमविशिष्टम्; तथापि चोदना भिद्यते क्वचित् 'विद्यात्' इति, क्वचिच्च, 'उपासीत' इति, क्वचिच्च, 'निदिध्यासितव्यः' इति; क्वचिच्च, 'निचाय्य तं मृत्युमुखात्प्रमुच्यते' इति दर्शनपर्यायेण धातुना मृत्युतरणोपाय उच्यते। भगवद्गीतादिषु भक्तिशब्देनैव क्रियासमभिहारेणापवर्गसाधनं विधीयते। अतः कथं चोदनाभेदे सति विध्यैक्यशङ्का॥ मैवम्। [भाष्य एव] भगवता भाष्यकारेणैव सर्वेषामेवैषां विधीनां छागपशुन्यायेनैकार्थ्यमुपपादितम्। तेनैकार्थ्यं सिद्धम्। अपर्यायप्रायाणामेव हि शब्दानां प्रयोगे चोदनाभेदमाहुस्तान्त्रिकाः। यथा यजति ददाति जुहोतीति। अत्र पुनरेकत्रैव विश्रान्तेर्न चोदनाभेदः। तदिदं दर्शयति—ध्यानादीति। विधिरप्यविशिष्ट एवेत्यर्थः। तस्मात् विध्यैक्यमेवेति। तदेतन्निराकरोति—तन्नेति। अत्र आख्यादिभेदरूपं हेतुचतुष्टयमाह—आख्येत्यादिना। आख्याभेदस्तावत् सद्विद्या दहरविद्या भूमविद्येत्यादिः। न च सामान्यनाममात्रैक्यं विशेषनामप्रयुक्तं विद्याभेदं निवारयति। यथा, 'अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिः' इति विशेषनामप्रयुक्तं भेदं सर्वसाधारणयागादिशब्दमात्रं न निवारयति–तद्वदत्रापि ब्रह्मविद्येति सामान्यनाममात्रं विद्याभेदं न निवारयितुं शक्नोति। रूपभेदश्च सर्वास्वपि विद्यासु स्फुटमेवोपलभ्यते। ब्रह्मेति रूपसामान्यं तु तत्तद्विद्यासु प्रतिनियतगुणविशेषप्रयुक्तरूपभेदस्य न परिपन्थितामश्नुते; विशेषणभेदाद्विशिष्टभेदस्यापरिहार्यत्वात्। इत्थं हि कर्मकाण्डेऽप्यनुष्ठाननियमः। इत्थं रूपभेदमाख्याभेदञ्चोपपाद्य चोदनाभेदमप्युपपादयति–तदुपहितेति। तत्तद्विद्याऽसाधारणगुणविशेषितवेदनविधौ, 'अर्थेनैव विशेषो हि निराकारतया धियाम्' इति न्यायेन तेनतेनार्थेनैव तत्तद्विद्याभेदसिद्धेश्चोदनानामपर्यायित्वमेवेति भाष्यकारैरेव सुव्यक्तमुप-

---

क्तीनामेकं भजनमेव लक्ष्यं तात्पर्यविषय इति भजनविधिरूपत्वेनैक्यमपि। इत्थं सर्वविद्यैक्यम्=भिन्नत्वेनाभिमतानां सर्वासामप्यैक्यमेवेति पूर्वपक्षः। निरस्यति तन्नेति। उक्तं चतुष्कैक्यं नेत्याह आख्येति। ब्रह्मविद्येति सामान्यनाम्नो न ह्याख्यात्वम्, किंतु सद्विद्येत्यादेरेव। न च वाक्यराशीनामेव तन्नामकत्वम्। उपासनविधायकातिरिक्तस्थले कथञ्चित् तथा निर्वाहेऽपि अन्यत्रोपासननामत्वस्य युक्तत्वात्। विद्याशब्दो हि ज्ञान एव मुख्यः। रघुवंशादिशब्दवत् तद्बोधकशब्दराशावपि तद्व्यवहारः। ब्रह्मणो वेद्यस्यैकत्वेऽपि तद्गुणभेदे हि रूपभेद एष्टव्यः। इन्द्रस्यैकत्वेऽपि महेन्द्रराजेन्द्रादिदेवताकयागभेदो हि महत्त्वादिविशेषणभेदात्। तद्वत्। ननु अग्निहोत्रहोमस्यैव दधिपयःप्रभृत्यनेकद्रव्यविधानदर्शनात् कथं रूपभेदात् कर्मभेद इत्यत्राह तदुपहितेति। कर्ममात्रविधायके वाक्ये पृथक् स्थिते, तत्र पश्चादनेकगुणविधानेऽपि, गुणविशिष्टक्रियाविधायिवाक्यस्थले तदुपहितस्य रूपविशिष्टस्यैव धात्वर्थस्य विधौ तेन गुणेन वैशिष्ट्यस्य भेदस्यैव सिद्धेरित्यर्थः। अत एव हि आग्नेयाग्नीषोमीयादियागानां भेदः। अनेन चोदनाभेदोऽपि सिद्धः। अन्यांशे भेदस्य सुवचत्वेऽपि मोक्षरूपफलस्यैकत्वात् फलभेदः सर्वात्मना दुर्वच इति च न मन्तव्यम्; कतिपयभक्तियोगेषु मोक्षातिरिक्तस्य ब्रह्मादिपदप्राप्त्यादिरूपफलस्यापि संयोजनात् फलभेदोऽपि यथासंभवं भाव्य इत्याह मिश्रमिति। अधिकरणमिदं न मोक्षार्थविद्यामात्रविषयकम्, "अन्याः प्राणाद्येकविषयफलाश्चोदाहरणम्" इति भाष्ये उक्तत्वात्। तथाच प्राणादितत्तद्विषयकत्वैकफलकत्वयोः सत्योरपि उपास्याकारे, आप्ययानानुवृत्त्यननुवृत्त्यादिना उपासनरूपधात्वर्थे च भेदः संभवति।

पादितम्। अत्र संयोगभेदोऽप्यस्तीत्याह-मिश्रमिति। मधुविद्यायां वस्व्(स्वादि)पदप्राप्तिपूर्वकपरमात्म-प्राप्तेः फलत्वात् क्वचित् मिश्रं फलम्, विद्यान्तरेषु केवलपरमात्मप्राप्तेः फलत्वादमिश्रमेव फलमिति संयोगभेदोऽप्यस्ति। इत्थं ब्रह्मविद्यासूक्तन्यायेन वेदान्तभागोक्तासु काम्यविद्यास्वपि भेदो निरूप्य इत्याह—काम्येति ॥ ३८३ ॥

(३८४) नानाशब्दादिभेदादिति कथमवदत् सूत्रकृत् शब्दसाम्ये
न ह्येते याग(यज्ञ)दानादय इव भिदुरा भक्तिविश्रान्तिसिद्धेः ।
सत्यं शब्दस्य भेदस्त्वयमुपचरितो रूपभेदप्रदिम्ने(म्ना)
ज्ञानं ये चाविधेयं करणमिति जगुस्तन्निरासेऽभिसन्धिः ॥ ६४ ॥

अत्र खलु, 'नाना शब्दादिभेदात्' इति विद्याभेदं वदन् सूत्रकारः शब्दभेदमेव पुरस्करोति, शब्दभेदो नाम चोदनाभेदः। चोदनाभेदोऽपि यजतिददातिजुहोतीत्यपर्यायेण शब्देन भावार्थविधिः। अत्र पुनर्भाष्यकारैरेव वेदनोपासनादिशब्दानां पर्यायत्वमुपपादितम्। तेन शब्दसाम्ये सति कथम्, 'नाना शब्दादिभेदात्' इति सूत्रकारेणोच्यत इति कश्चिदाक्षिपति—नानाशब्देति। विद्यात्, उपासीत, ध्यायीत, इति धातुभेदादिति पराभिप्रायमाशङ्क्योत्तरमाह—न हीति। धातवो हि न

---

तदाह काम्यविद्यासु चैवमिति। न चास्याधिकरणस्य काम्यविद्यासाधारणत्वे विकल्पाधिकरणमपि तथा स्यादिति शंक्यम्—तथा स्यादित्यालोच्यैव तत्रैवाधिकरणे काम्यास्तु इति सूत्रकरणात् प्रथमसूत्रस्य मोक्षमात्रविषयकत्वसिद्धेः ॥ ३८३ ॥

६४. सूत्रे शब्दपदेन शब्दान्तररूपं भेदकप्रमाणमुक्तम्. आदिपदेन तदितरप्रमाणग्रहणम्। तत्र प्रकृते उपासनक्रियाया एव विधेयत्वात् उपासनवाचिशब्दभेद एव। स च न शब्दानुपूर्वीभेदः, ध्यायेत् उपासीत इति धातुभेदेऽपि शब्दान्तरत्वस्यानिष्टत्वात्। एवं, वेद', 'तमेवैकं जानथाऽऽत्मानम्' इति सामान्यधातुप्रयोगेऽपि शब्दान्तरत्वं नेष्टम्। अतः अपर्यायधातुत्वं फलोपायतावच्छेदकसामान्य-धर्मावच्छिन्नतात्पर्यकशब्दत्वं शब्दान्तरत्वमिति वक्तव्यम्। यजेतेत्यादौ ज्योतिष्टोमदर्शपूर्णमासादिनाना—धर्मव्यापकयागत्ववत् अत्र सद्विद्यादहरविद्यादिसाधारणभक्तित्वरूपधर्मस्य ग्रहणम्। तत्र यागातिरिक्त होमाद्युपायवत् अत्र भक्त्यतिरिक्तमोक्षोपायाभावात् विभिन्नसामान्यधर्मद्वयस्य दुर्वचत्वात् कथमत्र शब्दान्तरकथनमिति शंका। श्लोकार्थस्तु—नानाशब्दादिभेदादिति सूत्रेण शब्दान्तरात् भक्तिविद्यानां नानात्वं कथं सूत्रकृदवोचत। कर्मकाण्डे कर्मणि यागदानादिभेदवत् मोक्षोपाये उपासनातिरिक्तस्याभावात्। न हि एते वेदेत्यादिधात्वर्थाः भिदुराः मिथो भिन्ना भवन्ति। ज्ञानवेदनध्यानोपासनानां भक्ति-रूपापन्नज्ञाने पर्यवसानस्य लघुसिद्धान्ते उक्तत्वात्। सूत्रेऽपि आप्रयाणादिति एकरूपत्वोक्त्या च विजातीयोपायस्य दुर्वचत्वात्। प्रतिवक्ति सत्यमिति। अर्धांगीकारः। अस्य सूत्रस्य मोक्षार्थ-तदन्यार्थसर्व-विद्यापरत्वात मोक्षार्थविद्यायां गुरुलघुभेदस्य दुर्वचतया एकार्थपर्यवसानेऽपि, फलान्तरार्थविद्यानां इष्टितद्भिन्नरूपाणाम् आवृत्तानावृत्तकिञ्चित्कालावृत्तप्रायणान्तानुवृत्तादिरूपभेदसंभवेन तत्र शब्दान्तरपदस्य

स्वरूपभेदमात्रेण शब्दभेदत्वमङ्गुचते ; अस्तिविद्यतेभवतीत्यादीनामपि शब्दभेदत्वप्रसङ्गात् । तेन अपर्यायशब्दप्रयोग एव शब्दभेदो वाच्यः । विद्याविद्यादीनां पर्यायत्वं प्रागेव समर्थितमिति ॥ सत्यमित्यर्धाङ्गीकारेण परिहरति । यद्यपि शब्दान्तराधिकरणोक्तमुख्यशब्दभेदो नास्ति, अथापि रूपभेदप्रयुक्तः शब्दभेद उपचर्यते । तत् किमर्थमित्यत्राह-रूपभेदद्रढिम्न इति । अयमर्थः—रूपभेद एवात्र साक्षाद्भेदकः । स तु रूपभेदो धात्वर्थविशेषकत्वेन धात्वर्थमपि भिनत्तीति भिन्नार्थवाचकत्वेन शब्दभेदोऽपि सिध्यतीत्यौपचारिकी शब्दभेदोक्तिः । अत्रोपचारोक्तौ प्रयोजनमाह-ज्ञानमिति।

---

तदर्थंतया सार्थकयात् । मोक्षार्थविषये तु वक्ष्यमाणो निर्वाह इत्याशयः । उपचरितः अमुख्यः । रूपभेदात् भेद इति वक्तव्ये दहरोपासनं तदितरविलक्षणम् अपहतपाप्मत्वादिरूपान्वयादितिवत् अपहत पाप्मादिपदान्वितोपासनार्थत्वादिति दाढर्यसंपादनायैवमुक्तिरिति । परविद्याविधायक वाक्यघटकधातोः सर्वस्य प्रीतिरूपापन्नदर्शनसमानाकारस्मृतिरूपैकविद्यार्थपरत्वेऽपि अन्विताभिधानमतरीत्या तत्तद्धातोः तत्तद्रूपान्वितसन्नबोधित्वात् बोध्यार्थभेदोऽस्तीति भावो न्यायपरिशुद्धौ वर्णितः। नन्वेवम् आग्नेयोऽष्टाकपालः, अग्नीषोमीयं पशुम् इत्यादावपि शब्दान्तराद् भेदः स्यात्,तत्तत्तान्वयिरूपभेदात् अन्विताभिधानमतेन यजेरेव विभिन्न र्थबोधित्वादिति चेन्न-औपचारिकप्रयोगस्य क्रियमाणो हि निर्वाहः नाप्रयुक्तस्थलेऽप्यौपचारिकप्रयोगमापादयतीति। अत्र द्रढिम्ना, द्रढिम्ने इति पाठद्वयम्। अत्र धात्वर्थभेदस्य रूपभेदप्रयुक्तत्वात् रूपभेददाढर्याधीनोऽयं भेद इति तृतीया प्राह्या। चतुर्थीपक्षे रूपभेददाढर्यस्य ज्ञापनाय धात्वर्थभेद उक्त इति वक्तव्यम् । रूपभेदात् धात्वर्थभेदः; तद्भेदात् रूपभेदद्रढिमा । मुखान्तरेण रूपभेद एव शब्दान्तरपदेन विवक्षित इत्युक्तं भवति। आदिपदग्राह्यो गुणाद्भेदस्तु रूपातिरिक्तनानाविधतत्तत्प्रकरणगतांगभेदात्मको भवत्वित्याशयः। शब्दपदप्रयोगस्य प्रयोजनान्तरमाह ज्ञानमिति अत्र शब्दान्तरातिरिक्तं प्रमाणमेव विवक्षितम् । अतद्गुणसंविज्ञानो बहुव्रीहिः । यद्यप्येतत् विहायैवान्यानि निर्देष्टुं शक्यानि, अथापि पूर्वकाण्डकृतपरिगणनप्रत्यभिज्ञापनाय तत्रादौ निर्दिष्टप्रभृतितन्निर्देश एवोचित इत्याशय इत्येको निर्वाहः स्यात् । अन्योऽप्ययं प्राह्यः । मृषावादिनो हि स्वगो वाक्यजन्यात् अपरोक्षात् अविधेयात् निर्गुणब्रह्मज्ञानान्मोक्ष इति वदन्ति, तत्खण्डनायैतदुक्तिः । वाक्यजप्रथमज्ञानादेव मोक्षश्चेत्—वेदेति परं प्रयोगः स्यात् । प्रत्ययावृत्त्यभिधायकध्यानोपासनादिशब्दभेदो न स्यादिति व्यज्यतेऽत्रेति । यद्यपि भाष्ये पूर्वमीमांसाधिकरणेनैव गतार्थत्वादिदमधिकरणमेव व्यर्थमित्याशंक्य, अविधेयज्ञानवादिनिरासाय विधेयध्यानोपासनसूत्रणमित्युक्तम् । अथापि शब्दशब्दप्रयोगफलमपि तद् भवितुमर्हतीत्याशयेनैवमुक्तम् । अथवा चतुर्थपादस्यावतरणमेवं भवतु—ननूपचरितप्रयोग इत्युक्तत्वात् शब्दान्तरप्रमाणमत्र न प्रवर्तेत इति सिद्धम् । भाष्यकारैरादिपदगृहीतानि पञ्च प्रमाणानि । तेषां सर्वेषां विद्याभेदकत्वमत्र न सूपपादम् । भुवत्यर्थ विद्याद्वयानुष्ठानायोगात् अभ्यासेन विद्याभेदसमर्थनं नातीव प्रयोजनवत् । एवं हि सत्र आहुतीर्जुहोतीतिवत् संख्याबलादनेकानुष्ठानमवगम्यत इत्येतदपि न भवति । संज्ञया विद्याभेदस्तु स्यात् , अग्निष्टोमज्योतिष्टोमपदयोरिव एकत्रैव संज्ञाभेद इत्येतत्स्थापकमानाभावे । गुणाद्भेदस्तु अत्र पादे असकृदुक्त इति तदर्थं

मृषावादिनः स्वतन्त्रविधेयमेव ज्ञानं मोक्षसाधनमित्याहुः। तन्निरासेन ज्ञानस्य विधेयत्वसिद्ध्यर्थं विद्याविषयचोदनाभेदोऽस्तीत्युच्यते। अयमभिसन्धिः—यदि वेदनध्यानोपासनादिशब्दानां तत्तत्प्रकरणस्थानां पर्यायत्वम्, यदि वा छागपशुन्यायेन विशेषपर्यवसानम्, यदि वा भाष्यकारोक्तक्रमेण भिन्नेषु प्रकरणेषु वेद्यभेदनिबन्धनवेदनभेदप्रतिपादकत्वेनापर्यायत्वम्, सर्वथापि विधेयमेव ज्ञानम्। विधेयादेव ज्ञानात् स्वर्गसिद्धिरितीममर्थं प्रतिपादयितुं चोदनाभेदकथनमिति ॥ ३८४ ॥

(३८५) यद्वा शब्दादिभेदादिति तु कथयता सूत्रकारेण सम्यङ्
न्यासोपासे विभक्ते यजनहवनवच्छब्दभेदादभाक्तात्।
आख्यारूपादिभेदः श्रुत इतरसमः किञ्च भिन्नोऽधिकारः
शीघ्रप्राप्त्यादिभिः स्यात् जगुरिति च मधूपासनादौ व्यवस्थाम् ॥ ६५ ॥

इति शब्दादिभेदाधिकरणम् ॥ १०६ ॥

---

नेदमधिकरणम्। प्रकरणान्तरात् उपासनभेदस्तु मासाग्निहोत्रवत् गौणैकसंज्ञाप्रयोगमन्वय निरूप्यः। अतो व्यर्थमिदं समस्तमित्यत्राह **ज्ञानमित्यादि**। अधिकरणप्रयोजनं कुदृष्टिनिरास। प्रमाणषट्कावतरणस्थलं यथायथमन्विष्यताम्, किं तत्र श्रमेण। विधेयज्ञानान्मुक्तिः नैतत्प्रमाणाविषयादित्याशय ननु प्रत्ययावृत्तिरूपोपासनस्यैव मोक्षसाधनत्वेऽपि विधेयज्ञानादेव मोक्ष इति कथं सिध्यति। न हि दर्शनसमानाकारस्मृतिरूपं ज्ञानं सर्वं विधेयम्; 'वृक्षे वृक्षे च पश्यामि' इति मारीचगतसाक्षात्कारस्य विध्यधीनत्वाभावात्। एवं कंसादिकृतापरोक्षज्ञानेऽपि भाव्यम्। प्रीतिरूपापन्नज्ञानं तु सुतरां विधिं विनैव भवति विरहातुरकामिकृतकामिनीसाक्षात्कारादिवत्। एवञ्च साक्षात्कारात्मकज्ञानं मुक्तिसाधनमित्येतत् परं प्रमाणवेदनीयं स्यात्। यस्तु रागातिशयात् स्वयं तदेकचित्तो भवति, स नूनं पराङ्कुशपरकालादिदिव्यसूरिवत् तत्साक्षात्कार्येव भवतीति तथाविधस्यापि मोक्षसंभवात् विधिरनपेक्षित इति चेत् —उच्यते-काम्ययागादिविषयेऽपि तर्हि विधिर्निरपेक्षितः। तत्तद्यागस्येष्टसाधनत्वे कथिते तत्तद्यागकर्तव्यताप्रकाशनमात्रस्य पर्याप्तत्वात्। अतो निरन्तरचिन्तनसाध्यसाक्षात्कारस्य निर्विघ्नलाभप्रकारं बुभुत्समानान् प्रतिदिनमित्थमनुष्ठानेऽहं प्रीतोऽनुगृह्णीयामितीश्वरो वात्सल्यातिशयात् प्रेरयति। तदनुष्ठानमपेक्षितार्थसाधकमेव, न तु कंसमारीचादीनामिवानर्थावहं भवतीति अनिष्टाननुबन्धित्वादिज्ञापनरूपं विधानं युज्यत एव। औपनिषदपुरुषसंदर्शितस्थानगुणनियमविशिष्टसर्वेश्वरानुसंधानातिरिक्तप्रकारेण चिन्तनेऽपि मुक्तिरित्येतत् पुनः उच्छास्त्रं भवेत्। तस्योपायविषयप्रवृत्तिसंपादकता तु कामं स्यात्। अतो व्यवस्थितात् विधेयात्=विधातुमर्हात् ज्ञानादेव मोक्ष इति। **अविधेयज्ञानवादभंग-साध्योपायशोधनाधिकारौ द्रष्टव्यौ**। अत्र पूर्वमीमांसान्यायसिद्धस्यापि विद्यानानात्वस्य स्थापनं भाष्यार्थदर्पणोक्ताधिकाशंकायां तत्परिहाराय, अत्रैव भेदकप्रमाणानामप्रवृत्तिशंकाया अपि दर्शितत्वात् तद्रीत्या प्रत्यवस्थानपरिहाराय च। अन्ततः रूपभेदात् नानात्वं बहुधोपवर्ण्य, विकल्पं वक्ष्यन्, प्रकारान्तरेणापि विद्याभेदः संभवन् यथालाभं विमृश्य इति नानात्वोपसंहारमनेन सूत्रेण करोति; न तु सर्वप्रमाणप्रवृत्तिस्थापने नैर्मर्यमित्यप्यस्तीति चेत्यलं बहुना॥ ३८४

एवं भाष्यकारोक्तप्रकारेण शब्दभेदमुक्त्वा भाष्यकाराभिप्रायस्थं मुख्यमेव शब्दभेदं [स्वयं] उपपादयति—यद्वेति । अयमर्थः—नानाशब्दादिभेदादिति सूत्रकारः शब्दभेदमेव तावत् प्राह । स च शब्दभेदोऽपर्यायशब्दकथनम् । नच ब्रह्मविद्यायाः साक्षादेवास्ति । भक्तिप्रपत्त्योर्मोक्षोपायतया विहितयोर्विधिभेददर्शनात् । 'अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम्' इति भक्तिविधिर्दृश्यते; 'मामेकं शरणं व्रज' इति प्रपत्तिविधिः। प्रपत्तिरेव हि शरणागतिः। 'अनन्यसाध्ये' इत्यस्मिन् प्रपत्तिलक्षणवाक्ये, 'प्रपत्तिः शरणागतिः' इति पर्यायत्वेनोपदेशात्। तेन साक्षादेव भक्तिप्रपत्त्योर्विधिभेद उपलभ्यत इति मुख्य एवायं शब्दभेदो भाष्यकारभावस्थः । यजतिददातिजुहोतीत्यादिशब्दभेदवत् अस्यापि शब्दभेदस्य साक्षादेव शब्दभेदलक्षणोपेतत्वात् । अयमत्र शब्दान्वयः—यद्वेति पक्षान्तरोपन्यासमाह । शब्दादिभेदादिति वदता सूत्रकारेण भक्तिन्यासोपासने विभक्ते । तत्र दृष्टान्तमाह—यजनहवनवदिति । तत्र विभागहेतुं दर्शयति—शब्दभेदादिति । अभाक्तादिति मुख्यत्वमाह । तेन पूर्वोक्तप्रकारात् प्रकारान्तरसिद्धिः । एवं चोदनाभेदमुक्त्वा तद्वदेव आख्याभेदः, रूपभेदः, संयोगभेदोऽप्यस्तीत्याह—आख्येति । भक्तौ हि सद्विद्यादहरविद्येत्यादिराख्या, प्रपत्तौ पुनर्निक्षेपो न्यासः शरणागतिरित्यादिः । एवं भक्तिरूपे दहरविद्यादौ अपहतपाप्मत्वादिकं रूपम् ; इह पुनः उपायान्तरस्थानापन्नस्य भगवतो रूपम् ; तदेव निरपेक्षोपायत्वमित्यध्यात्मविद्भिरभिधीयते । भक्तियोगनिष्ठानां हि सद्विद्यादहरविद्यादिसापेक्षः परमपुरुषः फलं ददाति । इह पुनरुपायान्तरस्थाने स्वयमेवावस्थितस्तदेव मुक्तिरूपं फलं ददाति । इममेवोच्यते, 'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज' इति । अस्यार्थस्य विस्तरो न्यासविंशत्यादिष्वाचार्यप्रबन्धेष्वनुसन्धेयः। इतरसम इति । यथा सद्विद्यादीनामाख्याभेदात् रूपभेदात् फलसंयोगभेदात् भेद उपपद्यते, तथैव प्रपत्तेरपि भेद इत्यर्थः। यद्यपि सर्वासां ब्रह्मविद्यानां प्रधानफलं मोक्षः, तथाप्यनुसन्धानवेलायां तत्तद्रूपविशिष्टभगवदनुभवरूपफलवैषम्य-

---

६५. मुख्यतयैव शब्दान्तरं निर्वहन् अधिकरणं सार्थकयति यद्वेति । उपासनानां सर्वेषाम् एकरूपत्वात् तत्र पर्यायधातुस्वरूपशब्दान्तरत्वायोगेऽपि भक्तिवत् प्रपत्तेरपि मुक्त्युपायत्वात् भक्तिविलक्षण सकृदनुसंधानादिरूपप्रपत्तेः भक्त्यपेक्षया भिन्नत्वं शब्दान्तरात् भवतीति सूत्रकारेण न्यासोपासे भग्न्य सो भक्तिश्च अभाक्तात् शब्दभेदात् अपर्यायधातुरूपमुख्यशब्दान्तरादेव यजनहवनवत् यागहोमवत् विभक्ते अत्र ननत्वेन दर्शिते । एवं भक्तिप्रपत्त्योर्भेदः शब्दान्तरात् । आख्येति । ननु शब्दान्तरात् भेदकथनानन्तरम् अभ्याससंख्यादिप्रयुक्तभेदो वक्तव्यः; शब्दादीति सौत्रेणाऽऽदिपदेन अभ्यासादेरेव ग्रहणात् । अभेदसाधनस्थले आख्यारूपाद्यविशेषो वक्तव्य इति किमर्थमिहेदमुत्तरार्धमिति चेत्—शब्दान्तरात् सिद्ध एव भक्तितः प्रपत्तेर्भेदः आख्यादिभेदेनापि दृढीक्रियते । भक्तितः प्रपत्तेराख्यादिभेद इतरसमः यागदानादिकर्मसमः। यद्वा पर्यायधातुस्थले हि अभ्यासादिः। तत्र रूपादिभेदोऽपीति स एवोच्यते। तत्र प्रपत्तौ अवान्तरभेदस्तु इतरसमः भक्ताविव आख्याभेदात् रूपभेदात् गुणाच्च भवति। आख्याभेदो भक्तौ सद्विद्या दहरविद्येत्यादिभेदः। प्रपत्तौ मानसी वाचिकी कायिकीत्यादिः। नात्र न्यासनिक्षेपसंन्यासशरणागत्यादिराख्याभेदः। तासां पर्यायत्वेन सैव भक्तिरुपास्तिरिति पदानामिव सर्वशरणागतिवाचितया मिथोभिन्नार्थवाचित्वाभावात् । भक्त्यपेक्षया प्रपत्तेराख्याभेदः न्यासादिशब्दभेद इति तु स्यात् । शब्दान्तरमेव तत् । प्रपत्तेर्भक्तितो रूपभेदात् भेदोऽपि । अलोपायत्वोपयुक्तवात्सल्यादिगुणविशेषकथनात् । भक्तेः सहकारिसापेक्षत्वम् ,

मस्तीति भावः। अधिकारभेदादपि रूपभेदमाह–किञ्च भिन्नोऽधिकारः शीघ्रप्राप्त्यादिभिरिति। भक्तियोगनिष्ठस्य प्रारब्धकर्मावसाने हि मोक्षः। प्रपत्तिनिष्ठस्य तु प्रारब्धमपि कर्म प्रपत्तिरेव क्षपयितुं शक्नोति, 'उपायभक्तिः प्रारब्धव्यतिरिक्ताघनाशिनी। साध्यभक्तिस्तु सा हन्त्री प्रारब्धस्यापि भूयसी॥' इति [वचनादेव] प्रपत्तेः शीघ्रफलप्रदत्वश्रवणात्। [एतद्वचन?] शब्दार्थस्तु–उपायरूपा भक्तिः प्रारब्धं न हन्यात्, अपि तु तद्व्यतिरिक्तमेव हन्यात्। साध्यभक्तिः=प्रपत्तिः प्रारब्धमपि हन्यात्। अत एव भक्तेः प्रपत्तिर्भूयसी फलाधिक्यात् इति। अत्र आदिशब्देन, 'भक्त्यादौ शक्त्यभावः' इत्याचार्यग्रन्थोक्ताः पञ्चदशाप्यधिकारविशेषा उच्यन्ते। शक्तिर्ज्ञानं जन्म विलम्बाक्षमत्वमित्येतानि समस्तानि भक्त्यधिकारः। तत्रैकैकविरहे द्विकद्विकविरहे त्रिकत्रिकविरहे सर्वविरहे च सम्पद्यन्ते प्रपदनाधिकारा इति पञ्चदशत्वसिद्धिः। ननु ब्रह्मविद्यानां ब्रह्मप्राप्तिरेव फलम्, तत्रैकमेवेत्याशङ्कमानस्य बालबुद्धेः, अन्यत्र फलभेदं दृष्टान्ततया दर्शयति–जगुरिति। मधुविद्यायां हि वस्वादिपदप्राप्तिपूर्वकपरमात्मप्राप्तिः फलम्। दहरविद्यादौ तु परमात्मप्राप्तिमेव फलतया निर्दिशति[श्रुतिः?]। अतः संयोगभेदादपि न्यासोपासनयोः सिद्ध एव भेदः॥ ३८५॥ इति शब्दादिभेदाधिकरणम्॥ १०६॥

१०७॥ अथ विकल्पाधिकरणम्॥ ३-३-२५॥

सूत्रम्–विकल्पोऽविशिष्टफलत्वात्॥ काम्यास्तु यथाकामं समुच्चीयेरन् न वा पूर्वहेत्वभावात्॥५७,५८॥

(३८६) ज्योतिष्टोमाग्निहोत्रप्रभृतिवत् अधिकानन्दसिद्ध्यै समुच्चि-
त्यर्हाः स्युर्ब्रह्मविद्या न च भजनविधिः कश्चिदेकं प्रति स्यात्।

---

प्रपत्तेः सहकारिनिरपेक्षत्वम्, आवृत्तत्वमनावृत्तत्वमित्यादिभेदोऽपि। भक्तिस्थले भगवतः सापेक्षोपायत्वम्; प्रपत्तिस्थले निरपेक्षोपायत्वम्। एवं भक्तिविद्यायामिव प्रपत्तावपि अवान्तरभेदः मन्त्रभेदेन मूर्तिगुणस्थानादेर्भेदात्। तैत्तिरीयन्यासविद्यायां वसुरण्यादिमन्त्रसाहाय्यप्रयुक्तभेदादपि भेदः। भक्त्यधिकारी शक्तः, प्रपत्त्यधिकारी चाकिञ्चनः इत्यधिकारभेदः। ज्ञानाभावशक्त्यभावादिवत् शीघ्रप्राप्तिकामना चाधिकारिभेदिका। अत एव फलतारतम्यात् एकस्यान्यदीयफलाजनकत्वादधिकारभेदः। स मधुविद्यादिविष्ट एव। तद्वत् भक्त्यपेक्षया प्रपत्तावपि; वस्वादिप्राप्तिपूर्वकमोक्षकामनयैव प्रारब्धनिवृत्तिविशिष्टमंचिन निवृत्तिकामनया प्रपत्त्यनुष्ठानात्। आर्तप्रपत्तिः दृप्तप्रपत्तिरित्यादिभेदोऽपि द्रष्टव्यः। एवं मधुविद्यादिस्थाने प्रपत्तेर्मधुविद्यायामिव फलमपि। 'चतुर्विधा भजन्ते माम्' इतिवत्, 'तावदार्तिस्तथा वाञ्छा तावन्मोहस्तथाऽसुखम्' इति सर्वफलप्रदत्वमप्युक्तमित्यन्यदेतत्॥ सारशास्त्रे 'भक्त्यादौ शक्त्यभावः' इति श्लोकेन चतुर्णामेकद्व्यादियोगात् अधिकारस्य पञ्चदशविधत्वमभिप्रेतमिति चिन्तामणिः। तत्रायं संग्रहः–

विलम्बाक्षमता शक्तिर्विज्ञानं शास्त्रसंमतिः। यस्य सन्ति भवत्यस्य भक्तियोगेऽधिकारिता॥ (१)
एषां हानौ प्रपत्तौ स्यादधिकारोऽस्य शोभने। एकैकहानौ चत्वारः द्विकद्विकहतौ च षट्॥ (२)
त्रिकत्रिकक्षतौ चैवं चत्वारोऽथाखिलक्षये। एक इत्यधिकाराः स्युर्न्यासे पञ्चदशाऽऽहताः॥ (३)

एवमत्र प्रथमतो विस्तरेण भक्तियोगान् विचार्य, तद्वदुपायभूतां प्रपत्तिमप्यनेनाधिकरणेन प्रदर्श्य समनन्तरमेषां विकल्पं वक्ष्यति। तत्र तुल्यफलत्वकथनं मुख्यं मोक्षांशमादाय। तस्यैवैकमात्रानुष्ठानप्रयोजकत्वात्। इतरफलांशे तत्तत्र ऐहिकनिर्विघ्नकैङ्कर्यकोडीकारादिनाऽपि वैलक्षण्यं स्यादपि॥३८५॥

कर्तुं ताः कालभेदात् क्षममिति न ; मिथो वासनास्थैर्यबाधात्
सम्पूर्णब्रह्मलब्ध्यै पृथगिह च विधिः प्रायणान्ते समाधौ ॥ ६६ ॥

अत्र भाष्य एव सङ्गतिर्व्यक्तमुच्यते, "ब्रह्मप्राप्तिफलानां सद्विद्यादहरविद्यादीनां नानात्वमुक्तम्। इदानीमासां विद्यानामेकस्मिन् पुरुषे प्रयोजनवत्त्वेन समुच्चयोऽपि सम्भवति, उत प्रयोजनाभावात् विकल्प एवेति विशये" इति । तदर्थविचारस्तु—किमेकस्मिन् पुरुषे प्रयोजनसम्भवात् सर्वासां समुच्चयः, उत विकल्पः। तदर्थं विचार्यते—किं सर्वासु विद्यासु फलरूपा(भूता) ब्रह्मप्राप्तिरेकरूपा, उत स्वर्गादिप्राप्तिवत् विलक्षणेति । अत्र पूर्वपक्षी मन्यते—लोके हि ज्योतिष्टोमाग्निहोत्रप्रभृतयः स्वर्गाद्यर्थं विहिता एकेनैवाधिकारिणा फलाधिक्यार्थं समुच्चयेनैवानुष्ठीयन्ते। तत्तदनुष्ठानाधिक्येन फलस्याधिक्यमुपलभ्यते। एवमत्रापि ब्रह्मविद्याः परब्रह्मप्राप्त्यर्थं समुच्चयेनानुष्ठीयन्ताम्, फलमपि देशकालाधिक्येन तारतम्येन लभ्यतामिति । तदिदमाह—ज्योतिष्टोमेति । न चैकस्यैवाधिकारिण एकमुपासनमिति नियमोऽस्तीत्याह—न चेति । 'न चैकं प्रति शिष्यते' इति न्यायेन सर्वोऽपि भजनविधिः सर्वान् प्रत्येव विधीयते । तेन समुच्चयः सम्भवत्येवेति । नन्वेकस्योपासनस्य चिरकालानुष्ठेयत्वात् उपासनान्तरस्य कालो नास्तीत्याशङ्क्य परिहरति—कर्तुमिति । ज्योतिष्टोमाग्निहोत्रादिवत् अत्राप्यनुक्रमेणानुष्ठातुं शक्यत इति, 'अनुष्ठानकालाभावात् न समुच्चयः' इति न भ्रमितव्यमित्यर्थः। तमिमं पक्षं प्रतिक्षिपति—नेति । तत्र हेतुमाह—मिथ इति। अयमर्थः—'स खल्वेवं वर्तयन् यावदायुषम्' इति ब्रह्मविद्याया आशरीरपातमनुष्ठेयत्वं श्रूयते। तच्च सर्वासामपि ब्रह्मविद्यानां समानमेव। तेनैकयैव ब्रह्मविद्यया कृत्स्नस्यापि कालस्यावरुद्धत्वात् ब्रह्मविद्यान्तरानुष्ठानकालाभावात् समुच्चयो न भवत्येवेति । इत्थमुपपादितमर्थं निगमयति—संपूर्णेति। अत्रैकमेव फलं दृश्यते, या सम्पूर्णब्रह्मलब्धिः, तत्सिद्ध्यै

---

६६. यथा ज्योतिष्टोमेन यजेत स्वर्गकामः, अग्निहोत्रं जुहुयात् स्वर्गकामः इत्येकफलोद्देशेन विधानेऽपि उभयोरनुष्ठानमिष्यते ; तथा मोक्षार्थोपासनसमुच्चयः स्यादिति शंका । ननु, स्वर्गानुभवस्य परिमितकालत्वात् तदनुवृत्तये समुच्चयो युक्तः । मोक्षस्तु नित्यः संसारात्यन्तनिवृत्तिरूप एकेनैव लभ्य इति कथमन्यसमुच्चय इत्यत्राह **अधिकानन्दसिद्ध्यै** इति । अस्मन्मते संसारनिवृत्तिमात्रं न मोक्षः ; अपित्वानन्दलाभोऽपि । तत्र तारतम्यं लोकनयेन प्रसिद्धम् । पूर्णानन्दः परमात्माऽपि हि उपर्युपरि तदर्थं व्याप्रियते इति भावः । यदि अत्रात्रोपासने अयमयमधिकारी इति व्यवस्था दृश्येत, तदा तादृशामुपासनानां समुच्चयोऽशक्यः स्यात् ; न चैवदित्याह **न चेति** । अनेकानुष्ठानावसरः कथमित्यत्राह **कर्तुमिति** । **ताः** ब्रह्मविद्याः बह्वीरपि कर्तुं । मुमुक्षोऽधिकोऽर्थो नास्ति ; भाव एव । बहूपासनानुष्ठानमपीति यावत् । तत् कालभेदेन क्षमम् । उपासनस्य प्रतिदिनं परिमितकालानुष्ठेयत्वादिति भावः । पूर्वपक्षं निरस्यति **इतिनेति** । किं प्रतिदिनमनेकोपासनानुष्ठानम्, उताग्निहोत्रज्योतिष्टोमादिवत् एकोपायनिष्पत्त्यनन्तरमन्यानुष्ठानम्, फलञ्च कथं विभक्तव्यमिति विकल्पमाकलय्य प्रथमे आह **मिथो वासनास्थैर्यबाधादिति**। किञ्च स्थानगुणनियमविशिष्टैकोपासनावृत्तिं प्रतिदिनं कुर्वन् यदि मध्येऽन्यादृशोपासनेऽपि लगेत्, तदा परस्परघातात् वासनाभंगात् संकरः स्यादित्यर्थः । न च फलविभागः । इह समाधौ एतदुपासनविषये हि विधि **पृथक्** प्रत्येकं सर्वकर्मक्षयायेव पूर्णब्रह्मप्राप्तय एव ; 'सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः" इति

पृथगेवानुष्ठयान्युपासनानि। तानि च पृथगेव विधीयन्ते। तत्र हेतुमाह—[illegible] स गध [illegible]। अयमर्थः—एकैकः सविद्य दहरविद्यादिः समाधिः प्रायणान्तो विधीयते। तेन विधेः [illegible] स मर येना नुष्ठानविरोधात् प्रत्येकानुष्ठानलाभाय पृथगेव साधनत्वमिति विकल्प एव स्वीकार्यः ॥ ३८६ ॥

(३८७) रूपादीनां विशेषैर्ननु परमजन नैकरूपं विभक्तं
सामग्रीभेदतस्तत्फलमपि विषमं सम्मतं त) न्यायतः स्यात् ।
न स्यात्; सर्वासु विद्यास्वपि हि फलतया वक्ष्यते भोगसाम्यं;
प्राप्त्यैक्यञ्च प्रसिद्धं बहुमणिजुषां लोकतो वेदतश्च ॥ ६७ ॥

इति विकल्पाधिकरणम् ॥ १०७ ॥

ननु भवता ब्रह्मविद्यानां फलैक्यात् विकल्प एवेति प्रतिज्ञातम्; न हि प्रतिज्ञामात्रेणार्थसिद्धिः, फलैक्यमेव हि नाङ्गीकुर्महे; कारणभेदे कार्यभेदस्यावश्यम्भावात्। कारणानि तु ब्रह्मोपासनानि भिन्नान्येव रूपादिभेदात्। तेन फलभेदोऽप्यवश्याश्रयणीयः। तस्मात् भिन्नफलत्वे कथं विकल्प इति। इमं पूर्वपक्षमनुवदति—रूपादीनामिति शब्दान्वयस्तु—रूपादीनां विशेषैः परभजनं नैकरूपं विभक्तम्। नैकरूपमिति नगनैकादिशब्दवन्नञ्समासः। फलकारणभेदमुपपाद्य फलभेदमप्याह—सामग्रीभेदत इति। सम्मतं न्यायत इति—कारणभेदात् कार्यभेदो लोकसम्मत एवेति। तदिदं प्रतिक्षिपति—न स्यादिति। तत्र हेतुमाह—सर्वास्विति। 'भोगमात्रसाम्यलिङ्गाच्च' इति, 'निरञ्जनः परमं साम्यमुपैति' इति श्रुतिप्रतिपन्नं भोगसाम्यमेव फलतयोच्यते। तेन फलैक्यसिद्धिः। ननु स्वालोक्यादीनां

वचनादिति न एकस्मादधिकस्य फलस्यापेक्षेत्याह संपूर्णेत्यादिपूर्णावयेन। प्रायणान्ते इति पदेन, एकोपायनिष्पत्त्यनन्तरमुपायान्तरानुष्ठानारम्भो न भवति; प्रथमस्यैवाऽऽप्रायणमनुष्ठेयत्वादिति ज्ञाप्यते॥ ३८६॥

६७. उपायवैषम्यात् फलवैषम्यमवश्यमिति शंकामनूद्य परिहरति रूपेति। नन्विति प्रश्ने, संबोधने, अवधारणे वा। नेति पृथक्कृत्य विभक्तं न नु-विभक्तं न किमित्यर्थो वा। परभजनं परविद्या तावत् रूपतदतिरिक्तांग-क्षुद्रफलमिश्रामिश्रफलभेदादिभि. नैकरूपम् अनेकरूपं विभक्तम् अत्र नसमासः= नशब्देन समासः। अल्पायतनोपासनं द्युलोकादिशरीरकोपासनं परिमितगुणविशिष्टो। सनम् अभ्यधिकगुणविशिष्टोपासनमित्येवं वैविध्यं हि प्रसिद्धम्। ततः किमित्यत्राह सामग्रीति। सामग्रीभेदतः न्यूनाधिकरूपोपास्यादिवैषम्यप्रयुक्तोपासनवैषम्यात् फलमपि विषममेव न्यायसंमतं स्यात्। सम्मतन्यायत इति समस्तं वा। निरस्यति न स्यादिति। उपासनवैषम्यविचारस्तावदास्ताम्। 'स एको ब्रह्मण आनन्दः श्रोत्रियस्य चाकामहतस्य' इति ब्रह्मानन्दसाम्यं तावत् श्रुतम्। ननु यतो वाच इति अपरिच्छिन्नानन्दो ब्रह्मणो वक्ष्यते। मुक्तानन्दस्तु चतुर्मुखानन्दशतगुणितपरब्रह्मानन्दतुल्य इति परिमितत्वमेवाम्नोच्यते इति चेत्—अस्तु। अथापि सर्वेषां मुक्तानामेकरूप एवेति न तदानन्दतारतम्यमस्ति। वस्तुतः, 'सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः' इति सर्वज्ञत्वसर्वानुभवयोः कथनात् अपरिच्छिन्नपरमात्मानन्दनैयम्येन। इदमेव भोगमात्रसाम्येति वक्ष्यति। सर्वकर्मक्षये स्वाभाविकज्ञानविकासे च सति परिच्छेदस्य का प्रसक्तिः; अत एव कर्मक्षयैकरूप्येऽपि उपासनवैषम्यात् जीवस्वरूपवैषम्याद्वा ब्रह्मानुभववैषम्यमित्यपि न। एवं फलैक्ये सिद्धे उपायवैषम्यं श्रुतिविरोधेन फलवैषम्यकरमकं न भवति। लोकतः लोके एकमेव

चतुर्णामपि फलत्वेनाभिधानात् कथं फलैक्यमित्याशङ्क्याह—प्राप्यैक्यमिति । 'सायुज्यमन्ये स तु मोक्ष उक्तः' इत्यनेन ब्रह्मणः सायुज्यमेव मोक्ष इति निर्णीतम् । सालोक्यादीनि तु तदन्तर्गततया फलत्वेनानूद्यन्त इति भावः । अनेन भिन्नानामुपायानां भिन्नमेव फलमिति शङ्काऽपि निरस्ता ; लोकतो वेदतश्चोपायभेदेऽपि फलैक्यदर्शनात् । लोके हि बहुभिर्मार्गैरेकमेव ग्रामं प्राप्नुवन्ति वेदेऽपि यागदानहोमादिभिर्बहुभिरपि कर्मभिः तत्तत्र विहितैरेकमेव फलं प्राप्नुवन्ति कर्मठाः । तथा अध्यात्मविदोऽपि स्तुतिनमस्कारकीर्तनादिभिः परमपुरुषमाराध्य स्वाभिमतं फलं प्राप्नुवन्तीति भारतादिप्रसिद्धम् । एवं नानाविद्यानिष्ठाः स्वाधिकारानुरूपतत्तद्विद्यानुष्ठानेन परमपुरुषं प्राप्नुवन्तीति श्रुतिसिद्धत्वात् सुसङ्गमेतत् ॥ ३८७ ॥ इति विकल्पाधिकरणम् ॥ १०७ ॥

१०८ ॥ अथ यथाश्रयभावाधिकरणम् ॥ ३-३-२६ ॥

सूत्रम् –अङ्गेषु यथाश्रयभावः ॥ शिष्टेश्च ॥ समाहारात् ॥ गुणसाधारण्यश्रुतेश्च ॥ न वा तत्सहभावाश्रुतेः ॥ दर्शनाच्च ॥ ५९—६४ ॥

(३८८) तत्त्वाद्विद्यासु तावत्फलतरतमतां वारयित्वा प्रसङ्गात्
प्रागुक्तोद्गीथविद्याफलमथ पुनराक्षिप्य गाढीकरोति ।
मा भूदुक्त स्ववाक्ये फलमिह तु न सा पर्णमय्यादिनीतिः
स्पष्टा स्वत्र विद्या फलकरणतया वर्तमानोक्तितोऽपि ॥ ६८ ॥

पूर्वाधिकरणे तासु तासु ब्रह्मविद्यासु फलतारतम्यमाशङ्क्य तन्निवारणे फलप्रसङ्गात् पूर्वोक्तोद्गीथविद्याया एव फलमत्र(वत्त्वं) बहुभिर्हेतुभिराक्षिप्य समाधीयत इति सङ्गतिः । अथवा भाष्य एव, 'यथाकामम्' इति पदेन सङ्गतिरुक्ता । यथाकामं विकल्पः समुच्चयो वेति हि पूर्वत्रोक्तम् । तथोद्गीथादिविद्या यथाकाममुपादेया न वेति शङ्कया सङ्गतिः । तदर्थविचारस्तु—कत्वङ्गाश्रयाण्युद्गीथाद्यु-

ग्रामादि बहुविधोपायमार्गद्वारा प्राप्यं भवति । तत्र प्राप्ये तारतम्यं न दृश्यते । सर्वेश्वरो भक्तिकामान् अभिलक्ष्य तत्तदाशानुरूपं यथायथं कचन विद्यायामवतारयति । वेदेऽपि मोक्षातिरिक्तमेकरूपं फलं प्रत्यपि विषमा उपायाः विहिताः सन्ति । तत्तदधिकारिभेदेन परिश्रमैकरूप्यमपि सुवचम् । एकरूपप्राप्यप्रापकेषु विविधेषु कचित् कस्यचित् प्रवृत्तौ तद्रुचि मार्गान्तरेऽनुभाव्येष्वास्था च हेतुः । अनेकेषु मूर्तिस्थानगुणभेदेषु भक्तनिष्पत्तिपर्यन्तानुभाव्येषु क्वचित् कस्यचित् रुचिर्भवतीति सैव प्रवृत्तौ नियामिका । अतो नात्र मुख्यफलवैषम्यं शास्त्रमभिलष्य कल्प्यम् ॥ किञ्च स्वतः प्रासाया ब्रह्मप्राप्तेर्न भक्तिफलत्वम् ; किन्तु प्रतिबन्धकनिवृत्तेरेव । अतो न तत्फलवैषम्यम् । अत एव परविद्यानां प्रायश्चित्तरूपतया नैमित्तिकत्वम् । न काम्यत्वम् । अत एव काम्यास्तु इति अन्या उपासनाः काम्यत्वेन निर्दिश्यति । तत्रापि कचिदुपाये कस्यचित् प्रवृत्तिस्तु, "भजनसुखमेकस्य विपुलम्" इत्युक्तस्वाभिमतमूर्तिगुणादिविशेषानुबुभूषयेति ॥ ३८७

६८. ध्रुवत्वाद्युपासनानामिव वीर्यवत्तरत्वार्थोपासनानामपि विकल्पं स्थापयितुं तत्र तत्फलार्थत्वं स्थाप्यते । प्रागेव स्थापितस्यापि स्थूणानिखननन्यायेन दृढीकरणार्थमिदमधिकरणमित्याह तत्त्वादिति । अयं भावः:— अन्यथात्वाधिकरणे प्राणदृष्टिरूपोपासनस्य पत्र एव फलमित्युक्तम् । तत्रोपासनभेदाभेदमात्रविचारेऽपि फलसंयोगस्य स्पष्टमनीनतया तत्र विवादो नेत्यङ्गीकारेऽपि तन्निर्धारणाधिकरणे वीर्यवत्तरत्वमात्र-

पासनानि क्रतुषु नियमेनोपादेयानि, उत गोदोहनादिवदनियमेनेति । किं क्रत्वङ्गोद्गीथादिमुखेन पर्णतादिवत् क्रत्वर्थानि, उत गोदोहनादिवत् क्रत्वङ्गाश्रिततया, 'यदेव विद्यया करोति' इति फलश्रवणात् पुरुषार्थभूतानि । तदर्थं(र्थमेव) विचार्यते—किं गोदोहनादीनां पुरुषार्थत्वं स्ववाक्ये फलसम्बन्धश्रवणात्, उत क्रतुफलात् पृथक्फलसंबन्धश्रवणादिति। अत्र सङ्गत्यभिधानपूर्वकं पूर्वपक्ष-मुक्त्वा पूर्वपक्षाभिप्रायस्थान् हेतून् अनुक्रमेण समाधातुमुपक्रमते–तत्तदिति । पूर्वाधिकरणे तासुतासु ब्रह्मविद्यासु फलतारतम्यं वारयित्वा समानफलसाधनत्वमुक्तम् । फलसाधनप्रसङ्गादनेनाधि-करणेन, 'तन्निर्धारणानियमः' इत्यत्र प्रागेवोक्तमुद्गीथविद्याफलं बहुभिर्हेतुभिः पुनराक्षिप्य तत्तद्धेतु-निरासेन दृढीकरोति । अनेनोद्गीथविषययोरनयोः पौनरुक्त्यं परिहृतम्(अपाकृतम्) ; पूर्वोक्ताक्षेप-समाधानतया एतस्याधिकरणस्याधिकप्रयोजनलाभादिति । एवं किल पूर्वपक्षी मन्यते—पूर्वं हि गोदोहनन्यायेनोद्गीथविद्यायाः पुरुषार्थत्वमुक्तम् ; तन्नोपपद्यते । गोदोहनवाक्ये स्ववाक्य एव फलनिर्देशो दृश्यते, 'गोदोहनेन पशुकामस्य प्रणयेत्' इति । उद्गीथविद्यावाक्ये तु न फलनिर्देशः । केवलं, 'उद्गीथमुपासीत' इत्युपासनस्योद्गीथविषयत्वमेव प्रतीयते । 'यदेव विद्यया करोति' इति वाक्यान्तर एव फलनिर्देशो दृश्यते । इदं तावदेकं वैषम्यम् । वैषम्यान्तरमपि—गोदोहनवाक्य एव, 'पशुकामस्य प्रणयेत्' इति विधिश्रुतिरस्ति ; 'यदेव विद्यया करोति' इति वाक्ये करोतीति वर्तमान-निर्देश एव, न तु विधिश्रुतिः । तेन, 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति' इति वर्त-माननिर्देशोपेतपर्णमयत्ववाक्यवत् न पुरुषार्थ[साधक]त्वसिद्धिः । वीर्यवत्तरत्वरूपफलनिर्देशोऽपि अपापश्लोकश्रवणरूपफलनिर्देशवत् अर्थवाद एव । तेनाव्यभिचरितक्रतुसम्बन्धिजुहूमुखेन पर्णमयत्वं यथा क्रत्वङ्गम्, एवमुद्गीथोपासनमव्यभिचरितक्रतुसम्बन्ध्युद्गीथमुखेन क्रत्वङ्गमिति । इदमपि वैषम्यं गोदोहनवाक्यादस्य वाक्यस्य । तृतीयमपि वैषम्यं सौत्रमेव दृश्यते । 'उद्गीथमुपासीत' इति द्वितीयाश्रुत्या साक्षादेवोद्गीथाङ्गभूतमुपासनं विधीयते । उद्गीथश्च कर्माङ्गम् । तेन तद्द्वारे-णोपासनमपि कर्माङ्गम् ; 'गोदोहनेन पशुकामस्य प्रणयेत्' इतिवत् विधिवाक्येऽधिकारान्तरा-श्रवणात् उद्गीथाङ्गभाव एव हि विधेय इति गम्यत इति । समाहारादिति हेत्वन्तरमपि दृश्यते, 'होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरति' इत्युपासनस्य नियमेन समाहारोऽभिधीयते । तथा हि–

---

फलकोपासनाविचारो भवति । तत्प्रकारस्तु–उद्गीथाद्युपासनानामुद्गीथाद्यङ्गतया क्रत्वर्थत्वमेव । वीर्यवत्तरत्वं हि फलजननसामर्थ्यस्यातिशयितस्योत्पत्तिः । अङ्गानां यथावन्मेलने अङ्गिनः फलजनने सामर्थ्यातिशयो भवत्येवेति अङ्गत्वप्रतिपादनमेव तेन वाक्येन क्रियते इति पूर्वपक्षे–तन्निर्धारणानियमः ; तद्दृष्टेः='तेनोभौ कुरुतो यश्च वेद यश्च न वेद' इति अनियम वचनात् । अंगत्वे सति तस्यायोगादिति समाहितम् । एवमपि षोडशिग्रहणाग्रहणवत् विकल्प एवात्राभिमतोऽस्तु, करणे वीर्यवत्त्वातिशयः, अकरणेऽपि न वैगुण्यमिति शंकायाम् पृथग्ह्यप्रतिबन्धः फलमित्युक्तम् । अनियममात्रस्याभिमतत्वे उभौ कुरुत इत्येतदेवालम् । यदेव विद्ययेति वाक्यमेव व्यर्थम् । अतः शीघ्रफलजनकत्वमेव वीर्यातिशयः । अप्रतिबन्ध इति यावत् । अतः फलपार्थक्यादेवानियम इति । एवं सूत्रस्वारस्यात् पूर्वसिद्धोऽर्थः । अन्यत् तत्र भाष्याद्युक्तं तु वक्ष्यमाणप्रपञ्चनमेव । अत्रैव पृथक्फलासंभवाशंकाः क्रियन्ते सूत्रे । पर्णमयीवाक्य इव फलस्य पृथग्वाक्ये वर्तमाननिर्देशेनैव ज्ञापितत्वात् गोदोहनवाक्य इव स्ववाक्ये फलाभावात् उपासनेष्वव्यंगेषु उद्गीथादिवत् नैयत्यमेव । पर्णमयीवाक्ये जुह्वुद्देशेन विधानायापेक्षितौ द्वितीयाविभक्तिर्विधिप्रत्ययश्च न स्तः । तथाऽपि तत्रैव

वेदनहीनमुद्गीथं दुरुद्गीथम्। तस्य होतृषदनादनुसमाहाराभिधाने सति उद्गीथोपासनस्य नियमेन कर्तव्यत्वमुक्तं भवति। अवश्यकर्तव्यस्य ह्यपचारे समाधानं वक्तव्यम्। तेनोपासनस्यावश्यकर्तव्यत्वात् कर्माङ्गत्वमेव। अत्र गुणसाधारण्यश्रुतिरपि कर्माङ्गत्वे हेतुरस्ति। तदप्युक्तं भाष्य एव, "उपासनगुणस्य उपासनाश्रयस्य प्रणवस्य सोपासनस्य, 'तेनेयं त्रयीविद्या वर्तते ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायति' इति साधारण्यश्रुतेश्चोपासनसमाहारो गम्यते" इति। एवमाक्षेपहेतून् अनुक्रमात् निराकरोति– मा भूदिति। स्ववाक्ये फलमुक्तं मा भूदेव। अ(त)थापीह पर्णमयत्वादिनीतिर्न स्यात्; पुरुषार्थत्वप्रतिपादकस्य स्फुटतरस्य हेतोरत्र विद्यमानत्वात्। अस्ति पर्णमयीवाक्ये वर्तमाननिर्देशः। अस्ति च, 'यदेव विद्यया करोति' इति वाक्ये वर्तमाननिर्देशः। तावता साम्येन उद्गीथोपासनस्य न पर्णतादिवद्पुरुषार्थत्वसिद्धिः। 'यदेव विद्यया करोति, तदेव वीर्यवत्तरम्' इति तृतीयानिर्देशेन फलसाधनत्वस्य स्फुटतराभिधानात् अत उद्गीथोपासनस्य पुरुषार्थत्वमेव। पर्णतायास्तु फलसाधनत्वप्रतिपादकविभक्तिविशेषाभावात् क्रत्वङ्गत्वमेवेति विभागः। तदिदमाह—स्पष्टेति। अत्र, 'यदेव विद्यया करोति' इति वाक्ये विद्या फलकरणतया स्पष्टैव दृश्यते। अतः पर्णमयीवाक्याद्वैषम्यमिति ॥ ३८८ ॥

(३८९) तादर्थ्यं नात्र कर्मश्रुतिरवगमयेदाश्रयालम्बमात्राद्
विद्याहानौ च युक्तं प्रतिविधिवचनं तत्फलार्थिप्रसङ्गे।
तारे सोपासनेऽस्तु स्तवनमनुगमात्; तावता सा तु नाङ्गं
प्रागवक्तव्यस्य हित्वा वच इदमुपरि स्थापनीयप्रसक्त्यै ॥ ६९ ॥

इति यथाश्रयभावाधिकरणम् ॥ १०८ ॥

पूर्वं, 'उद्गीथमुपासीत' इति द्वितीयाश्रुत्यैवोद्गीथाङ्गत्वमुपासनस्येत्युक्तम्, तत् परिहरति—तादर्थ्यमिति। अत्र कर्मश्रुतिः तादर्थ्यम्= अङ्गत्वं नावगमयति। तत्र हेतुमाह–आश्रयालम्बमात्रादिति–

---

तद्विघ्ने, अत्र कः संदेहः। उद्गीथमिति स्ववाक्ये द्वितीयाया उपासीतेति विधेश्च स्थितत्वया हि सुस्पष्ट एवाङ्गांगिभावः। दुरुद्गीथत्वे प्रकारान्तरेण समाधानरूपस्य समाहारस्योपदेशाच्चोपासनावश्यकत्वप्रतीत्या उभौ कुरुत इत्यादिवाक्यम् उपनिषदुक्ततदशानभिज्ञकर्तृककेवलकर्मकरणानुवादमात्रम्। अतः फलकांक्षायाः शान्तत्वात् न वीर्यवत्तरत्वस्य फलत्वेनान्वय इति पूर्वपक्षः। सिद्धान्तमाह मा भूदिति। स्ववाक्ये फलाश्रवणेऽपि नात्र पर्णमयीन्यायः; तत्र फलवाक्ये पर्णतयेति तृतीयाया अभावात्, अत्र विद्ययेति भावात् फलकरणतया विद्या स्पष्टा। तृतीयया फलकरणत्वमेवोच्यते, न क्रियाकरणत्वमिति प्रागेवोक्तम् ॥ किञ्च तत्रापापश्लोकश्रवणरूपमवर्तमानमेव फलमुक्तम्। पापश्लोकश्रवणस्यैव कदाचित् भावात्। इदं तु वीर्यवत्तरत्वं वर्तमानम्=सत्, बाधकाभावेन तत्सिद्धेः। अतोऽपि पर्णतावैषम्यम् ॥ वर्तमानोक्तित इत्यस्य नीतिरित्यत्रान्वयं विधाय वर्तमानोक्तिप्रयुक्तपर्णमय्यादिनीतिप्रवर्तनमपि नेत्यर्थवर्णनं क्लिष्टम्। अतः साधकहेत्वन्तरसमुच्चायकमेवेदम्। अन्यथापुनः वर्तमानोक्तितोऽपि वर्तमानोक्तौ सत्यामपीत्यर्थ ॥३८८

६९. प्रथमसूत्राभिप्रेतशंकापरिहार उक्तः। शिष्टेश्चादिसूत्रोक्तहेत्वन्यथाकरणमुपरि तादर्थ्यमित्यादिना। उद्गीथमुपासीतेत्यत्र द्वितीयया उद्गीथस्याङ्गित्वमवगम्यत इति न युक्तम्। द्वितीयायाः

अत्र कर्मश्रुतिः पुरुषार्थस्यैवोपासनस्याश्रयमेवोद्गीथमवलम्बते ; न ततोऽङ्गत्वं तदनीत्यर्थः। विद्याहानौ दुरुद्गीथत्वात् प्रतिविधानमुक्तमिति कर्माङ्गत्वे हेतुर्भवतोक्तः ; सोऽपि हेतुरन्यथासिद्ध इत्याह–विद्याहानाविति। विद्याहानौ दुरुद्गीथत्वमुक्त्वा यत् प्रतिविधिवचनम्, तदपि तत्फलार्थि प्रसङ्गे युक्तमेव। अयमर्थः—यस्त्वधिकारी कर्माङ्गभूतोद्गीथे वीर्यवत्तरत्वादिकं विद्याफलं कामयित्वा विद्यामारभ्य विद्यां यथावत् न करोति, तस्याधिकारिण एव होतृसदनादनुसमाहार अभिधीयते ; न पुनः कर्माङ्गभूतोद्गीथकर्तुः सर्वस्याप्यधिकारिणः। अतो न कर्माङ्गत्वसिद्धिरुद्गीथोपासनस्य। अयमत्र शब्दान्वयः—उपासनफलभूतवीर्यवत्तरत्वाद्यर्थिप्रसङ्गे विद्याहानौ होतृसदनात् समाहारवचनं युक्तमेव। 'तेनेयं त्रयी विद्या वर्तते' इति तच्छब्देनोपासनसहितं प्रणवं निर्दिश्य त्रय्याम् अनुगमनवचनादुपासनस्य प्रणवाङ्गत्वमिति यदुक्तम् ; तदपि नास्तीत्याह–तार इति। सोपासने तारे स्तवनमस्तु नाम, अनुगमात् = त्रिष्वपि वेदेष्वनुवृत्तत्वात्(?)। तथाप्युपासनस्य नाङ्गत्वम् उपासनस्य वीर्यवत्तरत्वादिफलसाधनत्वेन पुरुषार्थत्वेऽपि तस्य स्तोत्रत्वेन योजयितुं शक्यत्वादित्यर्थः। ननु पूर्वमेवोद्गीथविद्याप्रसङ्गे सर्वमिदं पुनोक्तमर्थजातं वक्तव्यमेव; किमर्थमिह, स्थानं हित्वोच्यत इत्या–

---

ईप्सितानीप्सितसाधारणसाध्यत्वार्थकतया ईप्सितत्वरूपोद्देश्यत्वस्य विशिष्यानवगमात्। प्रकृते तु उपासनस्य विषयसाकांक्षतया विषयत्वमेव द्वितीयातः प्रतीयते, न तु उद्देश्यत्वम्। उद्गीथस्य क्रतुव्यतिरेकेण सामगानेऽपि संभवेन जुहूवत् अव्यभिचरितक्रतुसम्बन्धाभावात् प्रकृतून् जुहोतीत्यत्र सक्तूनां होमांगत्वमिव उद्गीथस्योपासनांगत्वं वा विपरीतं वेति संदेहस्याप्यवसरात् न तदुद्देश्यत्वनिश्चयः। परं तत्र संदर्भे होतुद्गातृप्रस्तोतृप्रतिहर्त्रादिप्रस्तावात्, 'हन्तासुरान् यज्ञे उद्गीथेनात्ययाम' इति यज्ञोक्तेः उपस्थितयज्ञदेशगत्यादितश्च कर्ममध्यगतोद्गीथस्यैव ग्रहणमिति उद्गीथस्य क्रतुद्वारा सफलत्वनिश्चयात् उद्गीथस्य नोपासनांगत्वमिति निश्चयो यथा भवति, तथा 'विद्यया....वीर्यवत्तरं भवति' इति उपासनस्यापि सफलत्वज्ञानात् उद्गीथं प्रति उपासनमपि नांगमित्यवगमात् क्रत्वङ्गश्रितोपासनादेव फलमिति अपेक्षिताश्रयत्वज्ञापनमेव द्वितीयाकार्यमित्यवधार्यते। अत आश्रयमात्रतया ग्रहणात् द्वितीया नात्र उद्गीथाङ्गत्वमुपासनस्य बोधयेत्। यत्तु दुरुद्गीथस्य वेदनहीनत्वे होतृसदनाद्धैव दुरुद्गीथमनुसमाहरति इति होतृकर्तृकात् उद्गीथप्रणवैक्यज्ञानात् समधानवचनम्, तावता नोपासनस्यांगत्वं सिद्ध्येत्। किंतु फलार्थं सवेदने उद्गीथे संकल्पिते उद्गातृकर्तृकोपासनस्य हानौ प्राप्तायां फलप्राप्तये होतृकर्तृकैक्यवेदनेन हानिपरिहारः क्रियत इति। यत्तु तेनेयं त्रयी विद्या वर्तत इत्यादौ तेनेति सोपासनतारग्रहणात् उपासनस्यैव त्र्यंगति — तन्न ; तारमात्रोपयोगात् उद्गीथरूपस्यैव तच्छब्देनाग्रहणे सति उपासनस्य का प्रसक्तिः। अस्तु वा अनुगमात् तच्छब्दस्य विशिष्टपरामर्शित्वादुपासनग्रहणम्, यदा तद्युक्तत्वम्, कादाचित्कीं दृशामादायापि प्रशंसा भवतीति उपासनस्य नाङ्गत्वं ततः सिध्येदिति सिद्धान्तः। नन्विदं सर्वं तन्निर्धारणाधिकरण एव कस्मान्नोक्तमित्यत्राऽऽह प्रागिति। उपरि अंगभूतकर्मप्रस्तावात् तदन्वयुपासनानां तत्सहभावेन वक्तव्यत्वात् तत्रोपासनत्वाविशेषात् उपासनप्रतिपादकेऽस्मिन् पादे मुक्तपर्योपासनसमाप्त्यनन्तरम्, 'काम्यास्तु' इत्युपासनान्तरप्रस्तावे पादान्ते उत्तरपादात् प्राक् अत्रैतत्कथनमेव युक्तम्। पूर्वं तु

शङ्कयाह— प्रागवक्तव्यस्येति। अयमत्र भावः—ब्रह्मविद्याङ्गप्रतिपादनम् उत्तरपादे करिष्यते; तत्प्रसङ्गार्थं पादान्ते ऽङ्गाश्रितचिन्तनमधुना कृतमिति नास्य न्यायातित्वदोष (नास्थानापत्तिदोषः) ॥ ३८९ ॥

(३९०) विद्यैक्योद्गीथविद्याद्वितयविभजन-प्राणविद्यैकभावाः
सर्वास्वानन्दताद्यैर्गुणिवदनुगतिः प्राणवासस्त्वदृष्टिः ।
शाण्डिल्यैक्यं विभज्य स्थितिरहरहमोः सम्भृतेस्स्थानसीमा
पुंविद्याया विभेदोऽध्ययननियतता शस्त्र इत्यादिकानाम् ॥ ७० ॥

उक्तानामधिकरणानां प्रधानार्थभेदान् विभज्योद्गृणाति—विद्यैक्येति । प्रथमाधिकरणे विद्यैक्यम्। अतःपरम् उद्गीथविद्याद्वितयविभजनम्। इत्थमनु(मथ)क्रमात् प्राणविद्यैकभावः(कत्वम्)। सर्वासु विद्यासु आनन्दादेः स्वरूपनिरूपकधर्मस्य स्वरूपवदनुगतत्वम् । प्राणवासस्त्वदर्शनम् । शाण्डिल्यविद्यैक्यम् । अहश्शब्दस्य अहंशब्दस्य च विभज्यावस्थानम् । सम्भृत्यादिगुणस्य स्थाननियमः । पुरुषविद्याभेदः । 'शस्त्र:' इत्यादि मन्त्राणामध्ययनशेषत्वम् ॥ ३९० ॥

(३९१) हानाधन्योन्ययोगः तदुचितसमयो देवयानादिसाम्य
सर्वत्रास्थूलतादि व्यतिहरणमथाने कशिष्यश्रुतानाम् ।
दह्नोपास्त्येकभावो गुणफलवदिहोद्गीयमाश्रित्य दृष्टौ
गुण्यावृत्तिर्गुणार्थे र्था) निखिलपरतयोपास्तिवैद्याद्यतायः ॥ ७१ ॥

हानोपायनयोरन्योन्ययोगः । तयोर्हानोपायनयोः प्रसकालः । तथा अर्चिरादेः सर्वब्रह्मविद्यासाधारणत्वम्, सर्वत्र विद्यासु अस्थूलत्व(त्वा)दिगुणसंगतिः । अनेकशिष्यश्रुतानामन्योन्यव्यति-

शिष्यजिज्ञासानुरोधात् तत्प्रसक्ते प्रसक्ते पश्चादुदेमेति निश्चय सारभूतप्रधानमात्रं तत्रोक्तमासीत् । अतः प्रागेव वक्तव्यं कस्मात् तत्स्थलं हित्वा समत्युच्यत इति न प्रष्टव्यमिति भावः ॥ ३८९ ॥

अस्मिन् पादे अधिकरणानि षड्विंशतिः । षड्विंशपुरुषोपासनविषयकतया संख्यौचित्यम् । तत्र प्रत्यधिकरणप्रमेयपरिगणनं त्रिभिः श्लोकैः क्रियते विद्येत्यादिना । अन्तमश्लोकात् इहेत्यपकर्षः ।

७०. 1. इह पादे विद्यैक्यम्=भिन्नशाखाश्रुतानां समानाख्यादीना विद्यानामेकत्वम्; 2. उद्गीथविद्याद्वितयविभजनम्-उद्गीथविद्या छान्दोग्ये प्रणवपोद्गीथावयवमात्र मुख्यप्राणदृष्टिरूपा; बृहदारण्यके पूर्णोद्गीथगातरि तद्दृष्टिरूपेति। 3. ज्येष्ठश्रेष्ठप्राणविद्यायाः कौषीतकिश्रुत्यादि एकत्वम् उक्ता इत्यर्थ सद्धम्। 4. आनन्दादेः स्वरूपनिरूपकधर्मतया गुणिवत्=ब्रह्मण इव सर्वविद्यानुयायित्वम्; 5. अम्बु मुख्यप्राणं प्रति वासस्त्वदृष्टिर्विधीयतेति । 6. शाण्डिल्यविद्यायाः द्विः पठिताया एकत्वम्; 7. व्याहृतिशरीरकब्रह्मविद्यायामधिदैवतमहरिति नाम्नः अध्यात्मम् अहमिति नाम्नश्चानुसंधानव्यवस्था; 8. सम्भृत्यादेः भगवद्गुणस्य द्युव्याप्तिरूपगुणानुरोधेन अल्पायतनविद्यानन्वय. इति स्थानस्य सीमा अवधिः । 9. पुरुषविद्यायास्तैत्तिरीये छान्दोग्यतोऽन्यत्वम् । 10. शस्त्र इत्यादेरध्ययनांगत्वम् ॥ ३९० ॥

७१. 11. सुकृतदुष्कृतहानचिन्तनोपायनचिन्तन्योः सर्वत्र समुच्चयः । 12. तदुचितसमयः सांपराय एव सुकृतदुष्कृतहानम् । 13. देवयानादिसाम्यम् । आदिना शव्यकर्मनिरपेक्षत्वग्रहः । अर्चिरादिमार्गस्य तस्य च सर्वविद्यासाधारण्यम्। सर्वस्थूलतादीति पृथक् पदम्। 14. अस्थूलत्वादिधर्मसमुदाय-

हरणम् । दहरविद्यानामैक्यम् । उद्गीथमाश्रित्य दृष्टौ उपासने गुणफलविधिः । अपहतपाप्मत्वादि-गुणोपासनेषु सर्वत्र गुणिन आवृत्तिः । सर्वपरविद्यावेद्यो नारायण इति निर्णयः ॥ ३९१ ॥

(३९२) विद्यारूपा मनश्चित्प्रभृतय उचितज्ञानरूपक्रतुस्थाः
क्षेत्री शुद्धोऽनुचिन्त्यः क्रतुगुणसफलोद्गीथपूर्वेषु दृष्टिः ।
सामस्त्येनैव वैश्वानरभजनमथानेकविद्योपपत्तिः
मोक्षार्थानां विकल्पः पुनरनियतिरुद्गीथदृष्टेरिहोचे ॥ ७२ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां
तृतीयस्याध्यायस्य तृतीयः पादः ॥

मनश्चित् प्रभृतयो विद्यारूपाः(मयाः) विद्यामयक्रत्वनुप्रवेशिनः । क्षेत्री तु शुद्ध एव [अनु]चिन्त-नीयः । क्रियाङ्गभूतसर्वोद्गीथादिषु उपासनविधिः । वैश्वानरविद्यायां सामस्त्येनैव भजनम् । अथ विद्यानानात्वम् । मोक्षार्थिनां विद्यानां विकल्पः । उद्गीथोपासनस्य पूर्वमुक्तस्यापि सुदृढमेव युक्तिभिः अनियतिरूचे ॥ ३९२ ॥

इति निखिलतार्किकचूडामणिना सर्वतन्त्रस्वतन्त्रेण
श्रीकुमारवेदान्ताचार्यपरनाम्ना श्रीमद्वेश्वामित्रवरदगुरुणा
विरचिते शारीरकाधिकरणचिन्तामणौ
तृतीयस्याध्यायस्य तृतीयः पादः ॥

---

रूपामलत्वस्य सर्वविद्यासमन्वयः । 15. अथ अनेकशिष्यश्रुतानां व्यतिहरणम् उषस्तकहोलयोर्याज्ञ-वल्क्यशिष्यत्वाभावात् अनेकौ तौ शिष्याविति अनेकशिष्याविति विग्रहः। ताभ्यां पृथक् पृथक् पृष्ट्वा एकशिष्यं प्रति उक्तस्यान्यशिष्येणापि ग्रहणवत् उक्तानां धर्माणां उभयार्थताबुद्ध्या स्वीकृतानां तथैवान्यैरप्यनुसंधानम् । 16. दहरविद्यायाः बृहदारण्यकेऽन्यत्वाभावः । 17. उद्गीथाश्रितोपासनविधेर्गुणफलसम्बन्धविधिरूपता । 18. अपहतपाप्मत्वादिगुणोपासनसमयेऽपि दहरस्य गुणिनः पृथगनुसंधानम् । 19. **परतरोपास्तिः**-परविद्या । निखिलपरविद्योपास्यव्यक्तिनिर्णयः ॥ ३९१ ॥

७२. 20. मनश्चिदादीनां ज्ञानरूपाग्नीनां विद्यामयक्रतुशेषत्वम् । 21. बद्धस्य शुद्धावस्थाविशिष्ट-तयोपासनम् । 22. शाखाभेदेन स्वरभेदेऽपि सर्वोद्गीथव्यक्तीनां क्रतुं प्रति **गुणत्वात्**=शेषत्वात् उपा-सनानां सर्वव्यक्तिसाधारण्यम् । **उद्गीथपूर्वेष्विति** । उद्गीथादिष्वित्यर्थः । 23. वैश्वानरस्य **सामस्त्येन** समस्त तयैव भजनम् । 24. विद्यानां शब्दादिभेदात् नानात्वम् । 25. मोक्षार्थविद्यानां विकल्पोऽविशिष्टफलत्वात् । 26. उद्गीथविद्यानां पृथक्फलकामनायामेव कार्यत्वात् न नियमः । इतीमे षड्विंशतिरर्थाः इह पादे उक्ताः । श्लोकेऽत्र **ऊचे** इत्येकवचनं प्रत्येकान्वयाभिप्रायेणेत्युक्तौ **विद्यैक्य**येत्यादिप्रथमपदे तदन्वयासंभवः। अतः **पुन रूचे** इत्यतस्य **अनियति**रित्येतत्कर्तृकत्वस्यैव संभवादेकवचनम् । उक्ता इति कचिद्देव कोशे पाठः ॥३९२॥

**इति वात्स्यमवक्रवर्तिवीरराघवाचार्यकृतिषु**
**अधिकरणसारावलिव्याख्यायां सारार्थरत्नप्रभायां**
**तृतीयस्याध्यायस्य तृतीयः पादः ॥**

—०—०—

## ॥ तृतीयाध्यायस्य चतुर्थः पादः ॥

(३९३) कर्म प्राक् चिन्तयित्वा ननु परमथ ब्रह्म जिज्ञास्यमुक्तम्
पादे विद्याङ्गतोक्तिः पुनरिह वितथाऽनेकधा त्याज्यतोक्तेः ।
मैवम्; कर्मैव तत्तद्गुणयुतविनियुक्त्यन्यभावेन भिन्नम्
विद्यानिष्पत्तिहेतुः किमपि च सुकृतं स्यान्निवृत्त्ये तेऽत्र कर्मणाम् ॥ १ ॥

इत्थं गुणोपसंहारपादे मोक्षसाधनभूतब्रह्मविद्यानिरूपणं कृतम्; अथ ब्रह्मविद्याङ्गभूतकर्मनिरूपणं क्रियत इति संगतिः। ननु पूर्वस्मिन् काण्डे कर्माणि निरूपितानि स्वर्गस्वाराज्यादिसांसारिकफलसाधनानीति तेषां कथं ब्रह्मविद्याङ्गत्वम्, कथं वा तत्प्रतिपादनेन विद्याङ्गपादस्य वेदान्ते समन्वय इत्याशङ्क्य परिहरति—कर्मेति। अयमत्र शब्दान्वयः—प्रागेव कर्म चिन्तयित्वा=कर्मजिज्ञासानन्तरमेव ब्रह्मणो जिज्ञास्यत्वमुक्तम्, 'अथातो ब्रह्मजिज्ञासा' इति। अस्मिन् पादे कर्मणां विद्याङ्गतोक्तिर्वितथा, पौनरुक्त्यात्। किञ्च कर्मणां विरोधिफलसाधनत्वेन विरुद्धत्वाच्च। तदिदमाह—अनेकधा त्याज्यतोक्तेरिति। 'न कर्मणा न प्रजया', 'प्लवा ह्येते अदृढा यज्ञरूपाः' इति त्याज्यत्वमेव कर्मणामुच्यते। इत्थमाशङ्कितमर्थं प्रतिक्षिपति—मैवमिति। प्रतिक्षेपप्रकारं द्वेधा विभज्य दर्शयति—कर्मैवेति। कर्माणि खलु फलान्तरे यानि विनियुक्तानि, तान्येव विनियोगभेदेन विद्याङ्गत्वेन विनियुज्यन्ते। अतस्तेषामङ्गत्वसिद्धिः। तथा स्वर्गादिष्वविनियुक्तान्यपि परमपुरुषचरणयुगलध्यानार्चनप्रणामादीनि बहूनि कर्माणि श्रुतिस्मृतीतिहासपुराणसत्त्वोत्तरागमसदाचारप्रमाणकानि

१. चतुर्थपादप्रतिपाद्यार्थस्य पूर्वोक्तविरुद्धत्वं परिहरति कर्मेति। प्रागित्यस्य उक्तमित्यत्रान्वयः। अन्यथा क्त्वाप्रत्ययविवक्षितपूर्वकालैकपरत्वे वैयर्थ्यात्। प्राक्=अथातो ब्रह्मजिज्ञासेति सूत्रे—**अथ कर्म चिन्तयित्वा जिज्ञास्यम्**=कर्मविचारानन्तरं ब्रह्म जिज्ञासितुमर्हम् इत्युक्तम्। कर्मणामल्पास्थिरफलकत्वेनानन्तस्थिरफलसाधकत्वेन तत्त्यागनिश्चयानन्तरम्, स्वापेक्षितफललिप्सावतः ब्रह्म जिज्ञासार्हमित्युक्तमिति यावत्। अत्र **चिन्तयित्वे**त्यस्य **जिज्ञास्य**मित्यत्रान्वयः। कर्मचिन्तनस्य ब्रह्मजिज्ञासायाश्च नात्र विधिः। रागप्राप्तत्वात्। ब्रह्मजिज्ञासायां कर्मविचारानन्तर्यमुक्तम्; अतः कर्मत्यागसिद्धिरिति विवक्षितम्। **पुनः** तद्विरोधेन **इह** तृतीयचतुर्थे पादे विद्याः प्रति कर्मणामङ्गत्वोक्तिः **वितथा** अर्थशून्या। तत्र हेतुमाह **अनेकधा त्याज्यतोक्तेरि**ति। कर्मविचारत एवाल्पास्थिरफलकत्वमवगतम्, 'एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इति क्षयिफलकत्वोक्तेः, 'न कर्मणा.... त्यागेनैकेऽमृतत्वमानशुः' इति अमृतत्वस्य कर्मासाध्यत्वोक्तेः, मुमुक्षोः गृहस्थकर्मयज्ञादित्यागपूर्वकाश्रमान्तरविधानात् कर्मणां मोक्षविरोधित्वावगमात् एवं विरोधित्वगमनेन यज्ञादित्यागोक्तेः, नित्यकर्मणामपि 'प्राजापत्यं गृहस्थानाम्' इति क्षुद्रफलसाधनत्वज्ञापनात् त्याग तन्मुखेन तात्पर्यावधारणाच्चेत्यर्थः। अतः कथं कर्मणामङ्गत्वमत्र पादे निरूप्यमिति प्रश्नः। प्रत्याह **मैव**मिति। कर्मकाण्डोक्तं यत् कर्म, तत् **कर्मैव**त्याज्यत्वाभिमतमेव कर्मकाण्डगतविनियोजकवाक्यभिन्नेन, 'विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति वाक्येन। **तत्तद्गुणयुतायाः** फलत्याग-ममतात्याग-कर्तृत्वत्यागरूपगुणयुक्तायाः, 'मयि सर्वाणि कर्माणि संन्यस्य' इत्युक्तरीत्या परमात्मनि न्यस्तत्वरूपगुणयुक्तायाश्च **विनियुक्त्या** उपासनरूपवेद-

विद्यन्ते, तेषां विद्याङ्गत्वप्रकारपरिशोधनं क्रियत इति पादारम्भस्य सार्थक्यसिद्धिः। अत्राप्यय मन्वयः—कर्मैव यज्ञादिकं कर्मैव = फलसङ्गकर्तृत्वत्यागादगुणसमन्वितं भगवद्गीतादिप्रमाणक विनियोगपृथक्त्वेन भिन्नं काम्यकर्मणो विमर्कं विद्यानिष्पत्तिहेतुर्भवतीति न प्रवृत्तिधर्मः (निवृत्तम्) इति नामान्तरेण कथ्यमानं सुकृतमेव स्यात्। तथा विद्यानिष्पत्तिहेतुत्वे निष्फलपुण्यादिप्रसिद्धं नमस्कारादिकमपि निवृत्तिधर्मः(निवृत्तम) इति तदुभयप्रकारविशेषोपपादनेन विद्याङ्गत्वादन्याय-कल्पः प्रतायत इति सुसंगतमेतत् ॥ ३९३ ॥

(३९४) त्यागः काम्य क्रियाणां क्वचन परविदः काप्यनर्हक्रियाणां
स्वैकाधीनत्वबुद्धेः क्वचिदनुपधिकस्वार्थबुद्धेश्च गीतः।
अत्राहिंसादिकानां त्व(नाम)घविहतिकृतां सर्वसाधारणानां
ब्रूते वर्णाश्रमादिप्रतिनियतिमतामप्युपास्त्यङ्गभावम् ॥ २

अत्र केषां परित्यागः केषां वा परिग्रहः कार्यः इत्यजानानस्य शिष्यस्य त्याज्योपादेयप्रकार-विशेषोपपादनेन विभागमाह—त्याग इति। काम्यक्रियाणां परित्यागः कर्तव्य एव ब्रह्मविद्या-निष्ठस्य। काप्यनर्हक्रियाणां पापरूपाणामित्यर्थः। निषिद्धकाम्ययोः स्वरूपेण परित्यागमुक्त्वा नित्य-नैमित्तिकयोरपि फलसङ्गकर्तृत्वत्यागमाह—स्वैकाधीनत्वबुद्धेरिति। अयं कर्तृत्वत्यागः; ईश्वर-निरपेक्षकर्तृत्वबुद्धेः स्वात्मनि परित्यागात्। फलत्यागमप्याह—अनुपधिकेति। परमात्मशेषभूत-स्वार्थबुद्धिर्न विरुद्धा, स्वतन्त्रस्वार्थबुद्धिर्विरुद्धेत्यनुपधिकशब्देन विशेषयति। राजभृत्यादिपरिपोषणं

नाथतया विधानस्य अन्यभावेन पृथक्त्वेन फलार्थमारम्भावात् प्रवृत्ति(त)संज्ञककर्मविलक्षणतया भिन्नमिति व्यपदेश्यं निवृत्ते(त्ये)कर्मज्ञं निवृत्तिधर्मत्वेन व्यपदेश्यं स्वयं साक्षान्मुक्तिहेतुत्वाभावेऽपि मुक्तिहेतुविद्या-निष्पत्तिं प्रति हेतुर्भवत् किमपि सुकृतं सञ्चितपुण्यविलक्षणसुकृतं स्यात्। यथा प्रणामार्चनस्तवनादितुल्यसुकृतं स्यात्। निवृत्तेति भावे क्तः। ईदृशाकारस्य विचारमन्तरेण ज्ञातुमशक्यत्वात् विपरीतप्रतिपत्तिभावाच्च, 'न कर्मणा' इत्यादेस्तत्त्वार्थप्रतिपादनेनैतत्स्थापनार्थोऽयं पाद इति ॥ ३९३ ॥

२. त्याज्यं कर्म किम्, कीदृशश्च त्यागः इत्ययं विवेक केवलश्रुतित एव सम्यक् लब्धुमशक्योऽपि गीतोपनिषदः सुलभ इति तदनुसारेणैव वेदान्तनिष्कर्ष इत्याह त्यागः इति। गीतासु क्वचन, 'कामैस्तैस्तैर्हृतज्ञानाः', 'वेदवादरताः पार्थ नान्यदस्तीति वादिनः। कामात्मानः स्वर्गपराः' इत्येवं काम्यकर्मनिन्दां कृत्वा, 'निस्त्रैगुण्यो भवार्जुन' इति काम्यकर्मत्यागः परविदः परमात्मज्ञानिविषये गीतः। क्वापि, "अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः" इत्यादौ अनर्हाणां आचरणार्हतारहितानां निषिद्धानां क्रियाणां पापानां त्यागोऽपि गीतः। क्वचित्, 'तत्रैवं सति कर्तारमात्मानं केवलं तु यः। पश्यत्य-कृतबुद्धित्वात् न स पश्यति दुर्मतिः' इत्यादिषु; क्वचित्, 'ते त्वघं भुञ्जते पापा ये पचन्त्यात्मकारणात्' 'निराशीर्निर्ममः, 'तत् कुरुष्व मदर्पणम्' इत्यादौ च अनुष्ठीयमानेषु कर्मसु लौकिकवैदिकेषु स्वतन्त्राधीनत्व बुद्धेः स्वार्थविषयकबुद्धेश्च त्याग उक्तः। तत्र परमात्मैव प्रधानफली, अनपेक्षितम् अवर्जनीयञ्च स्वात्मनः फलं शेषभूतस्वविषये तदनुग्रहोपधिकम्। अतोऽनुपधिकस्वार्थबुद्धेः स्वार्थे प्राधान्यबुद्धेस्त्यागो गीतः। एवं द्वितीयपादेन, 'त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्तितः' इत्युक्तः कर्तृत्वत्याग-फलत्याग-ममतात्यागरूप-

राजार्थम्, न स्वार्थम्, एवमध्यात्मविदां तत्त्वज्ञानादिसम्पादनमपि न स्वार्थम्, अपितु स्वशेषिभूतपरमात्मातिशयार्थमेवेति भावः। पतिव्रतालङ्कारो हि पत्यर्थो न तु स्वार्थ इति हि तत्त्वविदामालापः। तेन, 'पतिं विश्वस्यात्मेश्वरम्' इत्युक्तपरमात्मशेषत्वेनैव स्वातिशयमपि कुर्वते तत्त्वविदः। अत्र गीत इति भगवद्गीताप्रतिपाद्यत्वमुच्यते। त्याज्यमुक्त्वा विदुषामुपादेयमपि विभज्य दर्शयति—अत्रेति। अहिंसासत्यास्तेयादीनां नियमरूपाणां पापक्षयहेतूनां सर्वजातिसाधारणानां तथा वर्णाश्रमादिनियतिमतामुपास्त्यङ्गभावमत्र स्मिन् पादे ब्रूते ॥ ३९४ ॥

## १०९ ॥ पुरुषार्थाधिकरणम् ॥ ३-४-१ ॥

सूत्रम्— पुरुषार्थोऽतश्शब्दादिति बादरायणः ॥ शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॥ आचारदर्शनात् ॥ तच्छ्रुतेः ॥ समन्वारम्भणात् ॥ तद्वतो विधानात् ॥ नियमात् ॥ अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ तुल्यं तु दर्शनम् ॥ असार्वत्रिकी ॥ विभागः शतवत् ॥ अध्ययनमात्रवतः ॥ नाविशेषात् ॥ स्तुतयेऽनुमतिर्वा ॥ कामकारेण चैके ॥ उपमर्दं च ॥ ऊर्ध्वरेतस्सु च शब्दे हि ॥ परामर्शं जैमिनिरचोदनाच्चापवदति हि ॥ अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ विधिर्वा धारणवत् ॥ १–२० ॥

(३९५) कर्त्राऽऽत्मा कर्मणां यस्तदधिकमिह न ब्रह्म तस्मान्मखादौ
तद्बुद्ध्यैवोपयुक्तः स्फुरदुपनिषद् इत्यर्ध(द्ध)मीमांसकोक्तौ।
जीवान्यब्रह्मचिन्तात्मकभजनविधौ कर्मणामङ्गभावं
प्राह क्षिप्तान्यलिङ्गः कलुषशमनतस्सत्त्वसंवर्धकानाम् ॥ १ ॥

अत्र पादसङ्गतिर्भाष्ये, 'गुणोपसंहारानुपसंहारफला विद्यैकत्वनानात्वचिन्ता कृता। इदानीं

त्रैविध्यवान् सात्त्विकत्याग उक्तः। चकारेण ममताबुद्धेरपि विवक्षणात्। फलत्यागश्च द्विविधः—स्वर्गादिफलस्य मोक्षविरोधिनः सर्वथा त्यागः, भञ्जनीयेषु क्षुन्निवृत्तिः, शेषिसंभोगज्ञानाधीनानन्दादिषु फलेषु प्राधान्यबुद्धित्यागश्चेति। एवं सात्त्विकत्यागपुरस्सरकर्मानुष्ठाने काम्येऽपि फलोत्पत्त्यप्रसक्तेरेव रूपेण तत्करणमप्यनुमतम्। परं तु, 'नियतस्य तु संन्यासः कर्मणो नोपपद्यते' इत्यभिप्रायेण काम्यकर्मनिषेधः। नियतस्येत्यनेन नित्यनैमित्तिकर्मणोऽपि किञ्चिल्लोकप्राप्त्यादिफलसत्त्वेऽपि तत्त्यागोऽपि कर्तव्य इति सिध्यति। तथाच कर्मसु परमात्मकर्तृकत्वतदर्थत्वतदीयत्वानुसंधानं सर्वत्र भवति। निषिद्धं तु नैव कर्तव्यमिति गीतानिष्कर्षः। तमनुसृत्यात्र चतुर्थपादे कथ्यमानमाह अत्रेति। अहिंसादिकानामित्यनेन मनोवाक्कायसाध्यनिषिद्धव्यापारसामान्यस्य स्वरूपतस्त्यागः शमदमादिरूप उक्तः। शमदमादेः निषिद्धकरणप्रसक्तप्रत्यवायपरिहरणविषयोपयोगः। स्थितपापनाशकत्वमनुष्ठेयधर्माणामाह अघेति। ज्ञानोत्पत्तिविरोधिपापनाशकत्वं सर्वसाधारणधर्माणां तत्तद्वर्णाश्रमसंबन्धितया विशेषभूतानां धर्माणाञ्च सात्त्विकत्यागयुक्तानाम् अपिः समुच्चये। उपास्त्यङ्गभावं ब्रूते प्रतिबन्धकपापनिवृत्तौ रजस्तमोनुन्मेषे सत्त्वविवृद्धभक्तिरूपज्ञानस्योपर्युपर्युत्पत्तिरिति एषामुपासनाङ्गभावो बोध्यः ॥ ३९४ ॥

१. प्रथमाधिकरणे कर्मणामुपासनाङ्गत्वं सामान्येन स्थाप्यते। अथ विशेषचिन्ता।

विद्यातः पुरुषार्थः, उत विद्याङ्गकात् कर्मण इति चिन्त्यते' इति। अनेन पूर्वपादे विद्याचिन्ता, अस्मिन् पादे विद्याङ्गचिन्तेति विभागः प्रदर्शितः। अत्र प्रथमाधिकरणे कर्मणामङ्गत्वसिद्ध्यर्थं विद्याया अङ्गित्वं प्रसाध्यत इति प्रथमाधिकरणस्यास्मिन् पादे प्राथम्यसिद्धिः। किञ्च गुणोपसंहारान्तिमाधिकरणे उद्गीथविद्यायाः पृथक्फलत्वेन पुरुषार्थसाधकत्वमुक्तम्; अधुना ब्रह्मविद्यायाः फलवत्त्वेन पुरुषार्थसाधकत्वं साध्यत इति च सङ्गतिरधिकरणस्य। तदर्थविचारस्तु—किं विद्यातः पुरुषार्थः, उत विद्याङ्गकात् कर्मण इति। तदर्थं विचार्यते—किं विद्या क्रत्वङ्गभूतात्मसंस्कारमुखेन क्रत्वर्थभूता, आहोस्वित् अपुनरावृत्तिसाधनतया पुरुषार्थेति। किं, 'ब्रह्मविदाप्नोति परम्', 'तमेवं विदित्वाऽति मृत्युमेति' इत्यादिवेदान्ताः फलविधयः, उत फलार्थवादाः। किं परविद्यासु कर्मतया प्रतीयमान आत्मा जीवात्मा, उत तदतिरिक्तः परमात्मेति। किं, 'यक्ष्यमाणो ह वै भगवन्तोऽहमस्मि' इत्याचारदर्शनादिलिङ्गानुगृहीतं तत्त्वमस्यादिसामानाधिकरण्यमुपास्यस्य जीवात्मत्वमवगमयति, नेति। किमिदं लिङ्गमनैकान्तिकम्, नेति। अत्र पूर्वपक्षमनुवदति—कर्तेति। यः कर्मणां कर्ता जीवः, तस्मादधिकं

---

अधिकरणस्यान्यायनिरूपणात्मकत्वात् कर्मणामुपासनाङ्गत्वमनिक्षेपिपुरुषकृताक्षेपपरिहारार्थत्वमस्य वक्तव्यम्। तादृशश्चाऽऽक्षेपः परमात्मानं मोक्षं तदुपायमुपासनं सर्वं स्वीकृत्य साराबलाबल पादे प्रथमश्लोके दर्शित रीत्याऽपि भवितुमर्हति। तदपेक्षया सर्वापलापदर्शमीमांसकदुर्वादस्यापि तत्रतत्र दर्शनात् तत्प्रभृतिसर्वशंकापरिहारविषया प्रथममधिकरणं भगवता बादरायणेनाऽऽचरितम्। तेनेदमधिकं जीवातिरिक्तेश्वरतदुपासनरूपार्थस्थापनमुखेन कर्मणां तदङ्गत्वप्रतिपादकं भवति। इदमेव जीवान्यत्वेति पूर्वं संगृहीतम्।

अत्र ब्रह्मजिज्ञासेत्यारभ्य जीवातिरिक्तमीश्वरम्, 'फलमतः' इति तस्य सर्वफलप्रदत्वम्, तत्र मुक्तौ साध्योपायत्वोपासनापेक्षत्वं चाविदुपपादितवति सति तत एव सर्वापलापिशंकाया अप्रसक्तेः कथमधिकरणोत्थानमेति न शंक्यम्; एतावदुक्तोपमर्दनेन शंका प्राप्तेति कथनाभावात्। एवं किल उच्यतेऽत्र—"अर्धमीमांसका जीवातिरिक्तमीश्वरमुपासनञ्चानङ्गीकृत्य कर्मणामेव सर्वफलप्रदत्वमाशेरते इति तन्मतनिरसनार्थमेव शारीरकमारभ्य ईश्वरस्योपासनात्मकज्ञानस्य चैतावता स्थापितत्वात् कर्मणां प्राधान्यवादोऽपि दूरनिरस्तो भवति। ते ह्येवं कर्मप्राधान्यमाहुः, तदिदानीमनायासलभ्यनिरासम्" इति। बादरायणाभिमतप्रकारपरिज्ञानात् पूर्वं तैर्यदुपन्यस्तमासीत्, एतावच्छारीरकभागनिरस्तप्रायमपि तदत्रानूद्यते। तत्र प्रथमे सिद्धान्तसंग्रहसूत्रे, 'पुरुषार्थोऽतः' इति पुरुषार्थपदप्रयोगः कर्मणः पुरुषार्थ इति पक्षनिरासार्थम्। तत्र कर्मजन्यपुरुषार्थः स्वर्गादिरेवेति काम्यकर्ममात्रवादिनः केचित्। मुक्तिरूपपुरुषार्थस्वीकारेऽपि काम्यकर्मणां त्यागात् नित्यनैमित्तिकप्रायश्चित्तरूपैः कर्मभिरेव क्रमेण सर्वपापक्षयात् अक्षय्याणामनुभवेनैव नाशनाच्च जीवस्य स्वरूपेणावस्थितिरूपमुक्तिर्भवतीति अनन्योमुक्तेः कर्मजन्यत्वमेवेति नोपायान्तरापेक्षेत्यन्ये। पक्षद्वयसाधारण्येन, 'पुरुषार्थः कर्मतः' इति पूर्वपक्षे पुरुषार्थग्रहणार्थं मुक्तिपदाप्रयोगेण पुरुषार्थपदप्रयोगः। अतः इति तृतीयपादोक्तोपासनानां ग्रहणात् कर्मव्यावर्तनम्। तेन कर्ममात्रान्मुक्तिः, समप्रधानकर्मसमुच्चितादुपासनान्मुक्तिरिति पक्षद्वयनिराकरणमपि। एवं ब्रह्मोपासनप्राधान्यं निर्दिश्य, 'तत्र ब्रह्मणो वा उपासनस्य वा नापलापः। न च कर्मणां तत्तुल्यता' इति सिद्धान्तयितुमुपरि पूर्वोत्तरपक्षसूत्राणीति ध्येयम्।

ब्रह्म नास्त्येव — तस्मान्मखादौ यज्ञादौ उपनिषदस्तद्बुद्ध्यैवोपयुक्ताः — जीवस्वरूपपरिज्ञानेनैवोपकुर्वन्ति। इत्यर्थ(म)मीमांसकोक्ताविति पूर्वपक्षमनूद्य सिद्धान्तमाह—जीवान्येति। जीवव्यतिरिक्तब्रह्मचिन्तात्मकभजनविधौ कर्मणामङ्गभावं प्राह(श्रुतिराह)। ननु जीवपरत्वे सप्रमाणे कथं ब्रह्मपरत्वमुपनिषदामित्यत्राह—क्षिप्तान्यलिङ्ग इति। प्रतिक्षिप्तजीवलिङ्ग इत्यर्थः। यानि जीवलिङ्गानि प्रतिभान्ति, तानि प्रतिभासमात्रसिद्धत्वान्न तत्रानीत्यर्थः। कीदृशानां कर्मणां ब्रह्मविद्यायामङ्गभाव इत्याशङ्क्याह—सत्त्वसंवर्धकानामिति। केन प्रकारेणेत्यत्राह—कलुषशमनत इति। अयमत्रान्वयः—सत्त्वसंवर्धकानां फलसङ्गकर्तृत्वादिविधुराणां कलुषशमनतोऽन्तःकरणनैर्मल्यापादनद्वारेण सत्त्वसंवर्धनेन ब्रह्मविद्यायामङ्गत्वं भवति। विमलकर्मानुष्ठानेन निर्मलीकृतमनसां ब्रह्मविद्ययैवापवर्गप्राप्तिरिति विद्यायाः पुरुषार्थत्वमवेति ॥ ३९५ ॥

(३९६) पादैरेवमेकादशभिरपि परं ब्रह्म वेद्यं निरूढं
भूयः किं क्षुद्रलिङ्गैर्गगनलिपिनिभैः(समैः) क्षोभ्यते ब्रह्मविद्या ।
सत्यं तत्तादृगल्पश्रुतमतिकलहत्रासितच्छात्रडिम्भ-
स्तोमक्षेमाय जैमिन्यहृदयकथितं पक्षमुत्क्षिप्य हन्ति ॥ ४ ॥

अत्र कश्चिच्चोदयति—एवमेकादशभिः पादैः परं ब्रह्मैव परतत्त्वमिति प्रसाधितं कथमस्मिन्नधिकरणे जीवस्यैवोपनिषत्प्रतिपाद्यत्वशङ्केति। तदिदमाह—पादैरिति। अयमत्रान्वयः—अवैकादशभिः पादैः परं ब्रह्मैव वेद्यतया निरूढं प्रसिद्धम्। भूयः कथं गगनलिपिसमैः = आकाशाक्षरसन्निभैः क्षुद्रलिङ्गैः = आभासहेतुभिर्ब्रह्मविद्या क्षोभ्यत इति। तत्रार्थाङ्गीकारेणोत्तरमाह—सत्यमिति। उक्तार्थस्य

तत्र पूर्वपक्षसिद्धान्तस्य रमाह कर्मीत। समन्वयाध्यायादिप्रतिपादितरीत्या तत्त्वमविवेचितवद्भिः कर्मविचारेणैव मीमांसापूर्तिमभिप्रेतवद्भिरर्धमीमांसकैः संहितावदेवाधीयमानानामुपनिषदां किं परत्वमिति विमृशद्भिः, 'अयमात्मा ब्रह्म' इत्यादिवाक्यतो जीवात्मैव ब्रह्मेति ज्ञायमानत्वात्, जीवात्मनश्च कर्मसु कर्तृत्वात् तदधिकं कर्तुतोऽन्यत् ब्रह्म न भवति; अतः कर्माङ्गभूतकर्तृस्वरूपशोधनमेवोपनिषत्कार्यमिति वदद्भिः, पुरुषार्थहेतुतया सोपनिषत्कश्रुत्यभिमतं कर्मैवेत्यास्थीयत। तत्र बहूनि लिङ्गानि=गमकानि हेतुकानि। ततो बादरायणः क्षिप्तान्यलिङ्गः तत्पक्षसाधकानि लिंगानि क्षिप्त्वा जीवज्ञाने, जीवातिरिक्तब्रह्मज्ञाने वा वाक्यमात्रजन्ये कर्मणामङ्गत्वायोगेऽपि, प्रत्युत जीवज्ञानस्य ब्रह्मज्ञानस्य च शास्त्रजन्यस्य आराधनभूतकर्मानुष्ठानाङ्गत्वेऽपि, तद्विलक्षणस्योपासनात्मकज्ञानस्य कर्माङ्गकत्वं युक्तम्, 'धर्मेण पापमपनुदति', 'कषाये कर्मभिः पक्वे' इति कल्मषाणां पापानां शमनेन रजस्तमोनिबर्हणात् सत्त्वगुणसंवृद्धिहेतुत्वात् ज्ञानोत्पादने उपयोगादिति भजनविधौ उपासनविधौ अङ्गत्वं सिद्धान्तयतीति। अन्यलिंगक्षेपप्रकारा उपरि दर्शयिष्यन्ते ॥

४. ब्रह्मणो जीवादधिकत्वस्य तदुपासनस्य च सम्यक् स्थापिततया कथं शंकोत्थानमित्याशंक्य परिहरति पादैरिति पद्येन। तदेतत् पूर्वपद्य एव कृतव्याख्यानम्। 'साक्षादप्यविरोधं जैमिनिः' इति परं ब्रह्म जैमिनिनिर्धारितमित्यावेदितम्। 'ज्योतिषि भावाच्च', 'परं जैमिनिर्मुख्यत्वात्' इति परब्रह्मोपासनात्मकज्ञानं परप्राप्तिहेतुरिति तदभिमतमित्यपि शारीरकतः सुगमम्। अतो जैमिनिः कर्मण्यश्रद्धा मा भूदिति किमप्यहृदयमकथयत्। तत् प्ररोचनार्थमित्यविज्ञायाल्पश्रुतत्वादज्ञाः अर्धमीमांसकाः मतिकलहेन अपक्वज्ञानान्

सत्यत्वेनाङ्गीकारः, अथापि बालबुद्धीनां विकटविद्वत्क्षोभितानां मङ्गभण(संक्षोभण)प्रशमनेन संरक्षणार्थं वक्तव्यशेषोऽस्तीत्यर्धांशेनानङ्गीकारः। अयमर्थः—धूर्तोक्तीनां तावत् निःशेषनिराकरणं कर्तव्यमेव, किञ्च बादरायणशिष्यतल्लजस्य जैमिनेर्ब्रह्मनिराकरणमत्यन्तानिष्टमित्युक्तं भवति ॥ ३९६ ॥

(३९७) कुर्वन्नेवेति वाक्यं परविदि नियताचारतोक्तिः सहैवा(सहत्वेऽ)-
न्वारम्भो धीक्रियाभ्यामपि न नियमयेदङ्गतामङ्गितां वा ।
विद्यापूर्वं क्रियाणां करणमनुवदत् वाक्यमन्यार्थमुक्तं
न ह्येतद् ब्रह्मविद्यामनुवदति न चोद्गीथविद्या क्रियाङ्गम् ॥ ५ ॥

अत्र विद्यायाः कर्माङ्गत्वे पूर्वपक्षाभिप्रेतानि लिङ्गान्यनुक्रमेणानूद्य निराकरोति कुर्वन्नेवेत्यादिना। अयमर्थः—'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' इति कर्मणः प्राधान्यं वदति। तेन ब्रह्मविद्या कर्माङ्गमिति तावदेकं चोद्यमन्यथासिद्धम्। तद्वाक्यं ब्रह्मविदः कर्म कर्तव्यमेवेत्याह; न पुनर्विद्यायाः कर्माङ्गत्वम्; तत्साधकविशेषलिङ्गाभावात्। तेनेदं वाक्यं ब्रह्मविदि नियताचारतोक्तिरेव। हेत्वन्तरमप्यनूद्य निराकरोति—अन्वारम्भ इति। 'तं विद्याकर्मणी समन्वारभेते' इति विद्याकर्मणोर्ब्रह्मविदि नियतान्वयवचनात् ब्रह्मविद्या कर्माङ्गमिति। तदपि न—तत्र विद्याकर्मणोः साहित्यमेवोच्यते; न पुनर्विद्याया अङ्गत्वम्। नापि च कर्मणोऽङ्गित्वम्, साहित्ये सति यथाप्रमाणं विद्या वा कर्म वा अङ्गिभावमनुभवेत्। अत्र पुनः, 'यज्ञेन दानेन', 'कर्मणैव हि संसिद्धिम्', 'इयाज

लासितवन्तः। तादृशशिष्यसमुदायश्रमकामनया, अथ तात् ब्रह्म तदुपासनञ्च सामिहपप्रदितमस्ति। तदेव जैमिनिसंमतमपीति तान् प्रति ज्ञापयितुम् अल्पश्रुतपक्षं क्षिपतीति। सूत्रे जैमिनिरिति पदसत्त्वात् जैमिन्यहृदयकथितमित्युक्तम्। सूत्रे जैमिनिरित्यत्र न वक्तीत्यध्याहारः; किन्तु कदाचिदवोचत् इति भूते लकारस्य। कर्माणि परित्यज्य संन्यासमेव श्रुधि वा वाक्यजन्यज्ञानादेव मुक्ताः स्म इति मन्वानान् अद्वैतिनो मृषावादनः क्षेप्तुं प्रवृत्तो जैमिनिः, तदुक्तवाक्यार्थज्ञानं कर्मानुष्ठायिकर्तृत्वशोधकं सत् कर्माङ्गमेवेत्याघोषयामास। तदजानद्भिर्जैमिनिहृदयमेतदिति भ्रान्तमिति भावः ॥ ३९६ ॥

५. अत्राधिकरणे विंशतिः सूत्राणि। तत्र मध्ये पूर्वपक्षसूत्राणि षट् तदर्थानुवादेन खण्डनं सूत्रैः क्रमशः संगृह्णाति कुर्वन्नित्यादिना। सूत्रत्रयार्थं निरास. पूर्वं। नियमादिति पूर्वपक्षसूत्रविषयवाक्यं गृह्णाति कुर्वन्नेवेति वाक्यमिति। सिद्धान्तसंमतैतदर्थकथनं परविदि नियताचारतोक्तिरित्यनेनेति सर्वे व्याख्यातारः। पदयोजनायां उक्तेरिति पञ्चम्यन्तपाठ दृष्टो ज्ञायते। वस्तुतस्तु परविदि नियताचारतोक्तिरित्यनेन आचारदर्शनादिति पूर्वपक्षसूत्रार्थानुवादः। तत्र केकयजनकशिष्वजादिविषयकानेक वाक्यनिर्देशात् अर्थमुखेन तत्संग्रहः; न तु पूर्ववत् वाक्योद्धारः। परविदि केकयादौ ज्ञानेन सह नियमेन यज्ञाचरणस्थितिवचनमित्यर्थः। सहेत्यादिना समन्वारम्भणादिति सूत्रार्थ.। 'तं विद्याकर्मणी समन्वारभेते' इति कथितः विद्याकर्मकर्तृक सह=युगपत् परलोकगन्तृपुरुषसंश्लेषोऽपीत्यर्थः। अपिशब्दः वाक्यस्योक्तेश्च समुच्चायकः। वयस्य प्रत्येकं नियमयेदित्यत्रान्वयः। इमे तयोऽपि विद्यायाः कर्मणो वा अङ्गतामङ्गितां वा न व्यवस्थापयेयुरित्यर्थः। कुर्वन्निति वाक्ये कर्माणीति पदेन नित्यनैमित्तिककर्मग्रहणं

सोऽपि सुकृद्दुन्' इति प्रमाणकोटिनिष्ठस्यानुसारेण कर्मैव विद्याङ्गम्, न पुनर्विद्या कर्माङ्गमिति। धीक्रियायां कृत्वैवा(सम)न्वारम्भो वा तत्कर्मण उङ्गत्वं वा अङ्गित्वं वा न नियन्तुमिति दृष्टान्तयः। परवादभिमतं तृतीयमपि हेतुं निराकरोति—विद्यापूर्वमिति। 'यो वा एतदक्षरं गार्ग्यविदित्वा' इति विद्यारहितं कर्म निराकृत्य, 'या विदित्वा' इति विद्यापूर्वं कर्मानूद्य, 'स ब्राह्मणः' इति ब्राह्मणत्वप्राप्तिरूपफलोपदेशात् विद्या कर्माङ्गमिति। एतच्च वाक्यं ब्रह्मविद्याङ्गकर्म ब्रह्मज्ञानपूर्वकमेव कर्तव्यमिति वदति; न पुनर्ब्रह्मविद्यायाः कर्माङ्गत्वं वदतीति तत्रतत्रोक्तम्। तदेव विवृणोति—न ह्येतदिति। 'यो वा एतदक्षरं गार्ग्यविदित्वा' इत्यत्रानुष्ठानोपयुक्तं वेदान्तजन्यं ज्ञानमेवोच्यते। तेनैतद्ध कथं न ब्रह्मोपासनरूपां विद्यामनुवदतीत्यर्थः। अतो न ब्रह्मविद्यायाः कर्माङ्गत्वम्। अथवा, 'आचार्यकुलात् वेदमधीत्य' इति विद्यायाः कर्माङ्गत्वमाशङ्क्य तस्यापि वेदाध्ययनमात्रपरत्वम्; न पुनर्ब्रह्मविद्यापरत्वमु(मन्यु)च्यते—न ह्येतदिति। मा भूदेतैर्हेतुभिर्ब्रह्मविद्यायाः कर्माङ्गत्वम्, अथाप्युद्गीथविद्यायाः कर्माङ्गत्वविधानादस्तु विद्या कर्माङ्गमित्याशङ्क्य तदपि प्रागेव प्रतिक्षिप्तमित्याह—नचेति। एवं पराभिप्रेतहेतुसमुदायनिरासात् कर्मैव विद्याङ्गमित्यर्थः॥ ३९७॥

(३९८) स्वाध्यायग्रहणे ह्यध्ययनमुदितमाधानवच्चोत्तराङ्गं
विद्याङ्गं चास्त्वर्थबोधो भवतु यदधिका सा स्वरूपैः फलैश्च।

वा काम्यादिकर्मग्रहणं वा। ... ह्यादिदुष्प्रकृतत्वात् विद्यया सह यावज्जीव नित्यकर्मसद्भावेऽप्यन्तेऽपि नाङ्गाङ्गिभावः; तदभावेऽपि यावज्जीवानुवृत्तिसंभवात्। उभयोरेकार्थापत्ति समप्राधान्येऽपि तत्संभवात्। एककार्यार्थित्वाभावेऽपि यौगपद्यसंभवाच्च। अन्ये, 'न कर्म लिप्यते नरे' इत्युत्तरवचनानुसारात् यावज्जीवं कृतानामपि कर्मणां न बन्धकत्वमिति विद्यामाहात्म्याविष्काराय काम्यनिषिद्धकर्मानुपपत्तिरियम्। अतो नाङ्ग 'अनावकाशाग्न्यो'ऽपि। एवं 'नाविशेषात्', 'स्तुतयेऽनुमतिर्वा' इति सूत्रद्वयार्थसंग्रहः। एवं कुर्वन्नेवेति वाक्यस्य काम्यनिषिद्धकर्मरूपार्थान्तरमस्त्वादेव नियताचारोक्तिपदेन तदग्रहणेन कुर्वन्नेवेति वाक्यमिति पृष्टकारणम्। यदपि अन्तरदर्शन=विदुषां कर्माचरणश्रुतिः, साऽपि नाङ्गत्वमङ्गित्वं वा कचित् व्यवस्थापयेत्। समन्वारम्भकतृभूते विद्याकर्मणी तु न एककार्यहेतू; पुरुषे मृते गच्छति तं तदार्जिता विद्या स्वफलप्रदानायानुगच्छति, एवं कर्मापि स्वफलदानायेत्यर्थलाभात् न तयोर्मिथः संबन्धोऽपि। कथं ततोऽङ्गाङ्गिभावसिद्धिरिति। अथ, 'तच्छ्रुतेः', 'तद्रूपविधानात्' इति सूत्रद्वयार्थमेकहेलयाऽनुवदन् प्रत्याह विद्येति। यदेव विद्यया करोतीति वाक्ये विद्यापूर्वं क्रियाणां करणमनूद्यते। 'वेदमधीत्य.........धार्मिकान् विदधत्' इति अधीत्येत्यनेन विद्यां गृहीत्वा तत्पूर्वकधर्माचरणमुच्यते। इदमुभयं वाक्यमन्यार्थम्—अस्मदभिमतब्रह्मविद्यार्थकं न भवति, किन्तु ज्ञानान्तरार्थकम्; तदाह न ह्येतत् ब्रह्मविद्यामनुवदतीति। प्रथमवाक्ये विद्यया इति पदेन उद्गीथादिविद्या हृदिरूपोच्यते; न मुमुक्ष्वर्थविद्या। द्वितीयवाक्ये अधीत्येत्यध्ययनमेवोक्तम्; न विद्या; कुतस्तां भक्तिरूपविद्येति। प्रथमवाक्ये विद्याग्रहणेऽपि वैलक्षण्यं विशदयति न चेति। तत्र उद्गीथविद्या कथञ्चित् ब्रह्मविषयिण्यपि; न कर्माङ्गत्वं तथापि तत्र तत् बोधयेत्; गुणफलसंबन्धविधानात् न तस्याः कर्माङ्गत्वमिति पूर्वपादे स्थापितत्वादित्यर्थः। सर्वमिदं कर्मज्ञानयोगपद्यनिरासद्वैतिनिरासकं तु स्यात्; न पुनः पूर्वपक्षसाधकमिति भावः॥ ३९७॥

नित्यात्मज्ञानमात्रं क्रतुषु नियमतोऽपेक्षितं नान्यविद्या
कामत्यागः सविद्ये कथमिह भविता, साऽपि यद्यङ्गमेषाम् ॥ ६ ॥

विद्या कर्माङ्गमिति वदतः पूर्वपक्षिणो भावं विकल्प्य दूषयति—स्वाध्यायेति । किं वेदाध्ययनमेव विद्येति भवताऽभिधीयते, किं वा अध्ययनजनितमक्षरराशिग्रहणम्, अथवा तज्जन्यं शारीरकमीमांसाश्रवणम्, अथवा तदुपबृंहितवेदान्तवाक्यार्थपरिज्ञानम्, उत मननसन्तानमुखेन तज्जन्यं ब्रह्मोपासनम् इति विकल्पः । तत्र प्रथमपक्षस्य दूषणं दर्शयति—स्वाध्यायेति । 'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनमक्षरराशिग्रहणप्राप्त्यर्थमेव विधीयते ; नोत्तराङ्गम् -उत्तरकर्मानुष्ठानार्थं न विधीयते । अत्र कर्मकाण्डानुमतं दृष्टान्तमाह—आधानवदिति । आधानं ह्यग्निसिद्धये विधीयते; न पुनरुत्तरकर्मानुष्ठानार्थम् । अक्षरराशिग्रहणमिति द्वितीयपक्षेऽपि तस्य श्रवणशेषत्वेन सुप्रसिद्धत्वात् तत्रापि नोत्तराङ्गमित्यनुषज्यते । एवं श्रवणस्यापि तुल्यन्यायेन दत्तोत्तरत्वात् तत्रापि वक्तव्यं नावशिष्यते । वेदान्तवाक्यजन्यज्ञानमिति चतुर्थः पक्षः परिशिष्यते । तत्रोत्तरमाह—विद्याङ्गमिति । वेदान्तवाक्यार्थपरिज्ञानं ब्रह्मोपासनाङ्गमेव भवतु, एकविषयत्वात् सापेक्षत्वाच्च ; न पुनः कर्माङ्गं परस्परापेक्षाभावात् । ननु वाक्यजन्यं ज्ञानमेव ब्रह्मविद्या, ब्रह्मज्ञानात् ब्रह्मविद्याप्राप्तिरित्यनुपपन्नम् ; आत्माश्रयादित्याशङ्क्य परिहरति—यद्यपि केति । वाक्यजन्यज्ञानादुपासनात्मकं ज्ञानमाधिकमेव । वाक्यजन्यज्ञानं हि परोक्षं, सकृच्च, मननहेतुभूतं च। उपासनात्मकं त्वहरहरभ्यासाधेयातिशयमापाय-

६. एवमङ्गत्वबोधकपदराहित्यानि वाक्यानि तादृशानि गृहीत्वाऽङ्गत्वासिद्धिरुक्ता । क्वचित् अंगत्वबोधकपदसत्त्वेऽपि तदसिद्धिमाह स्वाध्यायेति । 'वेदमधीत्य.......स स्वस्त्येवं वर्तयन्' इति वाक्ये ल्यपः श्रवणात् अंगांगिभावो बोध्यत इति मन्येत । तत्रेदं वक्तव्यम् । अध्ययनं हि यथावदुच्चारणानूच्चारणं वा अक्षरराशिग्रहणं वा अर्थज्ञानं वा । आद्ये स्वाध्यायप्राप्तिं प्रति अध्ययनमंगं स्यात् ; न कर्मानुष्ठानं प्रति । अध्ययनं विना कर्मानुष्ठानायोगेऽपि अध्ययनविधेः कर्मप्रकरणमध्यगतत्वाभावात् कर्मांगतायां मानं नास्ति । अत एव न कर्मविधिप्रयुक्तमध्ययनम् । किंतु स्वविधिप्रयुक्तं तदुपजीव्य कर्माचरणं प्रवृत्तम् । यथा आधानाकरणे अग्न्यभावात् यज्ञानुष्ठानायोगेऽपि आधानस्य क्रतुप्रकरणपाठाभावात् क्रतुप्रयुक्तत्वाभावात् स्वविधिप्रयुक्तत्वात् आधानं न कर्माङ्गम् । इदमुभयं पूर्वमीमांसाधिकरणनिर्णीतम् । तस्मात् आधानवत् अध्ययनमपि नोत्तरक्रियमाणकर्माङ्गम् । एवञ्च ल्यपा उत्तरकालिकत्वबोधेऽपि नाङ्गत्वसिद्धिः । गृहीतस्तु स्वाध्यायो यथायथमाधानसिद्धाग्निवत् कर्मण्युपयुज्येत । यदि चाध्ययनपदेनार्थज्ञानविवक्षा, तदाऽपि तत् यथा सकलकर्मानुष्ठानांगम्, तथा विद्यांगमपि भवति । ननु विद्यैवार्थज्ञानम् । कथं तस्यैव तदंगत्वमिति चेत्, तत्राह यद्यपि केति। अर्थबोधो हि वाक्यार्थज्ञानम्। विद्या तूपासनध्यानाद्यपरपर्याया ततोऽन्येति। आधिक्यञ्च स्वरूपतः फलतश्च । शब्दबोधकम् अष्टाङ्गयोगरूपञ्च भिन्नमेव हि स्वरूपम् । फलञ्च बोधस्य विषयानुष्ठानादि ; क्रियायाः दुःखत्यादि । अस्तु भेदः ; अथापि विद्याऽपि कर्माङ्गं स्यादित्यत्राह नित्येति । आत्मनित्यत्वज्ञानं दृष्टविधया आमुष्मिकफलकर्मप्रवृत्तावुपयुज्यते । न त्वेवं विद्या उपासनरूपा तदपेक्षिता ; दृष्टविधयोपयोगाभावात् । उपासने तु कर्माणि निष्पादकत्वात् दृष्टविधयोपयुज्यन्ते । किञ्च विद्याऽत्रास्मदभिमता न जीवात्मविषयिणी, किं तु अन्यविद्या तदन्यपरमात्मविषयिणी । सा कथं कर्माङ्गम् ।

णादनुवर्तमानमपरोक्षज्ञानशिरस्कं साक्षात् ब्रह्मप्राप्त्यर्थश्च(प्रापकश्च) भवति । तदिदमुच्यते—स्वरूपैः फलैश्चाधिका ब्रह्मोपासनात्मिका सा विधेति । ननु ज्ञानमन्तरेण कथं कर्मानुष्ठानं सेत्स्यति । तेन ब्रह्मज्ञानं कर्मणोऽप्यङ्गं स्यात्; नेत्याह—नित्यात्मज्ञानमात्रमिति । प्रवृत्तिधर्मनिष्णातैः क्रियमाणेषु कर्मसु देहातिरिक्तनित्यात्मज्ञानमेव ह्यपेक्ष्यते ॥ तच्च कर्मकाण्ड एव सिद्धम् । ब्रह्मकाण्डभाव्यं तु ब्रह्मज्ञानं प्रवृत्तिधर्मनिष्ठानां विरुद्धमेव तत्परित्यागहेतुत्वात् । तेन पञ्चमः पक्षः परिशिष्यते । सोऽपि न—वीतरागमात्रानुष्ठेयस्य परब्रह्मोपासनस्य स्वर्गादिप्रापककर्माङ्गत्वप्रसङ्गाभावात् । तेन न विद्यायाः कर्माङ्गत्वसिद्धिः । अथापि परब्रह्मविद्या काम्यकर्माङ्गमिति मोहात् यदि वदसि, तत् उन्मत्तप्रलपितमेव । यदि ब्रह्मविद्या काम्यकर्माङ्गम्, कथं तर्हि ब्रह्मविद्यानिष्ठस्य काम्यकर्मपरित्यागः सर्वत्राप्यध्यात्मवित्सु श्रूयते ? विद्यां प्रति अङ्गि वेनानुष्ठेयस्य कर्मणः, त्यागे प्रधानलोपः, अत्यागे पुनस्त्याज्यताप्रतिपादकप्रमाणविरोध इति । अयमत्र शब्दान्वयः—सा परब्रह्मविद्याऽपि यद्येषां पूर्वकाण्डप्रतिपाद्यकाम्यकर्मणामङ्गम्, तदा सविद्ये=ब्रह्मविद्यानिष्णातेऽधिकारिणि काम्यकर्मपरित्यागः कथं स्यादिति ॥ ३९८ ॥

(३९९) नाङ्गं विद्या मखादेर्न हि तदविकृतेष्वेव तामामनामः
स्यात् तत्तत्कर्मणां सेत्यपि न; बहुविधात् वैपरीत्योपदेशात् ।
आबालैरूर्ध्वरेतोविधिरपि पठितोऽनूद्यतेऽन्यैश्च; तस्मात्
प्राप्तिग्राह्योऽन्यथापि स्वयमिह तु विधिस्तन्निषेधस्पर्शे ॥ ७ ॥

इति पुरुषार्थाधिकरणम् ॥ १०९ ॥

विद्यायाः कर्माङ्गत्वे दूषणमाह – नाङ्गमिति । अयमर्थः—किं विद्यायाः कर्माङ्गत्वं श्रुतिलिङ्गादिष्वन्यतमेन प्रमाणेन, यदि वा मानमन्तरेण? उत्तरत्र सर्वं सर्वाङ्गं स्यात् । पूर्वत्रापि श्रुत्या नैतदस्ति ।

---

जीवात्मध्यानवत् अनुपयोगात् । तत्रापि श्रवणादिरूपं परमात्मज्ञानम् आराध्यतया ज्ञानरूपत्वादुपयुज्येत; न तु विलक्षणोपासनरूपम् । विद्यायाः कर्माङ्गत्वे विरोधमाह काम्येति । 'तुल्यं तु दर्शनम्' इति सूत्रे, 'कर्मानुष्ठानवत् अननुष्ठानमपि दृश्यते, किमर्था वयं यक्ष्यामहे, किमर्था वयमध्येष्यामहे इति अननुष्ठानस्य ब्रह्मविद्भिः कावषेयैरुक्तत्वात् । कथमनुष्ठानमननुष्ठानञ्च विरुद्धमेकत्रेति चेत्–'नित्यकर्मणामनुष्ठानम्, काम्यानामननुष्ठानमिति विभागः' इत्युक्तम् । यदि विद्या तावदेकरूपैव सा सकलविहितकर्माङ्गमिति भवत्पक्षः—तदा विद्यायाः काम्यकर्मानुष्ठानोपयोगितायाः भवदुक्तत्वात् विदुषा काम्यत्याग इति वचनमिदं न घटेत । काम्येति । सा विद्या यदि एषां काम्यकर्मणामप्यङ्गम्, तदा सविद्ये विद्यावति पुरुषे तेन काम्यत्यागः कथं क्रियेतेति भावः । तत् सिद्धम् अधीत्येत्यनेन अध्ययनस्यार्थज्ञानस्य विद्याया वा न कर्माङ्गत्वसिद्धिरिति ॥ अनेन पद्येन, 'अध्ययनमात्रवतः', 'तुल्यं तु दर्शनम्' इति सूत्रद्वयं विवृतम् ॥ ३९८ ॥

७. कामकारेणचैके इति सूत्रार्थमाह नेति । यज्ञादेर्विद्याङ्गत्वे, अङ्गि विना अङ्गानुष्ठानस्यासंभवात् विद्यया उपकार्यस्य मखादेरवश्यंभावात् यज्ञेष्वविकृताः ये गृहस्थाः, तान् प्रत्येव सा विद्या विधेया स्यात् । विद्यानिष्ठैः गार्हस्थ्यं कामकारेण—स्वेच्छया त्यज्यत इति ह्युक्तम्, "किं प्रजया

विद्यायाः कर्माङ्गत्वप्रतिपादकश्रुतेरदर्शनात् । न च लिङ्गम्; तस्याप्यदर्शनात् । नापि वाक्य-स्थानसमाख्याभिः; तासामप्यनुपलम्भात् । प्रकरणमेकमवशिष्यते; तदपि नास्तीत्याह—न हीति । कर्माधिकृतमेवाधिकारिणमधिकृत्य यदि ब्रह्मविद्या विधीयते, तदा तस्याः कर्मशेषत्वमङ्गीकार्यम् । न च तद् विद्यते; ततः कर्माङ्गत्वं कथमिव विद्यायाः। ननु ब्रह्मविद्यानिष्ठान मेव तत्तत्तीर्थदानादिविधानात् विद्यायास्तत्तद्धर्मशेषत्वमित्याशङ्क्य सा च विपरीतकल्पनेत्याह—स्यादिति । तत्तत्कर्मणां विद्या अङ्गं स्यादिति न वक्तव्यम्; कल्पनाया विपरीतत्वात् । तत्तत्तीर्थादिनिष्ठानां व्यासपराशरादीनां विद्यैव प्रधानम्, कर्म गुण इति सर्वेऽपि निर्वहन्ति । तथाच श्रूयते, 'यज्ञेन दानेन तपसाऽनाशकेन ब्राह्मणा विविदिषन्ति', 'क्रियावानेष ब्रह्मविदां वरिष्ठः', 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः', 'कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते' इति सहस्रशोऽपि वचनजातम्। तस्मात् कर्मैव विद्याङ्गमिति विदुषा निर्णयः । यदि च विद्या यज्ञादिकर्माङ्गम्, तदा ऊर्ध्वरेतसां यज्ञादिकर्माभावात् विद्या विनश्येदेव । अङ्गत्वाभावे सति किमनेन क्लेशेन निष्फलेन? सफलत्वे वा कथमङ्गत्वं परिकल्प्यते (इति)॥ नहि ऊर्ध्वरेतसामाश्रमो वा परित्यज्यतः तदाश्रमनिष्ठानां विद्यामप्यविद्यापरिकल्पितामाचक्षते इत्याशङ्क्योत्तरमाह—जाबालैरिति। जाबालरूर्ध्वरेतोविधिः पठ्यते । तथाऽन्यैरपि श्रुतीतिहासपुराणपाठकैरूर्ध्वरेतसामाश्रमस्तत्रतत्रानूद्यते । अतः सोऽप्याश्रमः स्वीकर्तव्यः । तेषां ब्रह्मविद्या च यथाप्रमाणमङ्गीकर्तव्या । यज्ञादिकर्माभावाद् विद्यायाः कर्मशेषत्वमपि परिहर्तव्यमिति । ननु सर्वैःप्येतत् अनुवादमात्रम्, न पुनर्विधिः । तेनोर्ध्वरेतसामाश्रमस्य प्रमाणमूलत्वं नास्तीत्याशङ्क्य परिहरति—तस्मात्प्राप्तिरिति । अयमर्थः—परिदृश्यमानस्य प्रमाणजातस्यानुवादत्वे पुरोवादमन्तरेणानुपपत्तेः पुरोवादः श्रुतार्थापत्त्या परिकल्प्यते—इति तस्याप्याश्रमस्य प्रामाणिकत्वसिद्धिः। अन्यथापि = एषामनुवादत्वाभावेऽपि अप्राप्तविषयत्वादेतदेव प्रमाणम् । अयमत्र शब्दार्थः—एतेषामनुवादत्वे प्राप्तिः पुरोवादोक्तिः परिग्राह्या; एतेषामप्राप्तविषयत्वे स्वयमेवैतानि वाक्यानि प्रमाणानीति । ननु बाधकप्रमाणाभावे हि प्राप्तिः परिकल्प्या; विद्यते हि बाधकप्रमाणम्, 'वीरहा वा एष देवानां योऽग्निमुद्वासयते' इति । तेनोर्ध्वरेतसामाश्रमो नास्तीत्याशङ्क्य परिहारमाह—तन्निषेध इति । सरागस्यैवाग्नि-

---

कारिष्यामो येषां नोऽयमात्मा अयं लोकः" इति उपमर्दश्चेति सूत्रमवतार्य व्याकरोति स्यादिति । विद्या गृहस्थकर्ममात्राङ्गमिति न ब्रूमः; किं तु संन्यासाश्रमकर्माङ्गमपि । अतो गार्हस्थ्यत्यागेऽपि न दोष इति न; विद्यायाः अङ्गत्वे कर्मोपकारकत्वं हि वक्तव्यम् । तद्विपरीततया कर्मोपमर्दकत्वमेवोच्यते, 'क्षीयन्ते चास्य कर्माणि' इत्यादिषु । बहुविधात् इत्यनेन कर्मणामङ्गत्वं विद्याया अङ्गित्वञ्चोपदिश्यते, 'विविदिषन्ति यज्ञेन' इत्यादौ । विद्यामात्रात् फलमिति, 'न स्यकृत. कृतेन' इति कर्मणां तत्फलासाधकत्वमिति च भवदभिमतविपरीतमेवोपदिश्यत इत्युक्तम् । अयं सूत्रे चकारार्थ इत्याशयेन बहुविधा दित्युक्तम् । ननु संन्यासाश्रमे न प्रमाणमित्यत्राह जाबालैरिति । 'गृहात् वनी भूत्वा प्रव्रजेत् । यदहरेव विरजेत्, तदहरेव प्रव्रजेत्' इति ऊर्ध्वरेतसः संन्यासाश्रमस्य विधिः कण्ठोक्तः । अन्यैः शास्त्रकारैः स आश्रमोऽनुवादरूपेण सिद्धवत्कृत्योच्यते । तेन निर्विवादत्वसिद्धि । अन्यैरित्यस्य, किमर्था वयं यक्ष्यामहे, त्रयो धर्मस्कन्धाः, एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' इत्यादिश्रुतीरधीयानैरित्यर्थः । तस्मात् अनुवादान्यथानुपपत्त्या प्राप्तिः प्राप्ता=प्रापकवाक्यमुन्नेयम् । अन्यथाऽपि—साक्षाद्विधायक-

परित्यागनिषेधः । वीतरागस्य तु ब्रह्मचर्याद्याश्रमपरित्यागेन चरमाश्रमपरिग्रहस्य सर्वेष्वपि स्मृतीतिहासपुराणेषु सुप्रसिद्धत्वात् । श्रुतिषु च जाबालादिपठितासु निर्बाधमेव दृष्टत्वादिति ॥ ३९९

इति पुरुषार्थाधिकरणम् ॥ १०९ ॥

## ११० : अथ स्तुतिमात्राधिकरणम् ॥ ३-४-२ ॥

सूत्रम्— स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ भावशब्दाच्च ॥ २१, २२ ॥

(४००) जुह्वा दृष्टान्तनीत्या भजतु रसतमाद्युक्तिरङ्गस्तुतित्वम् ;
मैवम् ; तत्तद्विधानप्रकरणरहितापूर्वनिर्देशयुक्तेः ।
तत्तद्दृष्टेर्विधानं विधिवदिह समालक्ष्य चैतत्समीपे
नेनानन्यार्थशिष्टे फलवति च विधिर्युज्यते कल्प्यमानः ॥ ८ ॥

पूर्वं हि ब्रह्मसंस्थस्य स्तुत्यर्थमनूदितत्वं पूर्वपक्षीकृत्याश्रमद्वयस्य विधिरेव प्रत्यपादि । एवमधुना पुनः स्तुतिप्रसङ्गात् रसतमत्वप्रतिपादकवाक्यानि स्तुतिपराणि अथवा नेति शङ्कया पूर्वपक्षोत्थानमिति अस्या(अनन्तरा)धिकरणस्य प्रासङ्गिकी सङ्गतिः । ननु पूर्वमेवायमुद्गीथप्रसङ्गः कृतः; किमर्थं पुनरुच्यते इत्याशङ्क्य भाष्यकारैरेवोद्गीथविषयाधिकरणयोः प्रयोजनभेदेन वैषम्यमुक्तम्, 'अत्र प्रतिपादितमुपासनपरत्वमङ्गीकृत्योपासनस्य पुरुषार्थे वा क्रत्वर्थत्वे वा क्रतूपादानानियम उक्तः' इति। अयमर्थः—अत्रोपासनपरत्वे तात्पर्यम, पूर्वत्र क्रतूपादानानियमे तात्पर्यमिति । तदर्थविचारस्तु—'स एष रसानां रसतमः परमः परार्ध्योऽष्टमो य उद्गीथः' इत्येवमुद्गीथकादीनि वाक्यानि किं सामावयवभूतोद्गीथादिस्तुतिमात्रपराणि, उतोद्गीथादिषु रसतमत्वदृष्टिविधिपराणीति । तदर्थं विचार्यते—किं पदानामेषामर्थवादत्वसमाश्रयणं न्याय्यम्, उत विधिपरत्वम् । अत्रापूर्वत्वं किं विधित्वमवगमयति, नेति। अत्र पूर्वपक्षमाह— जुह्वादीति । 'इयमेव जुहूः; स्वर्गो लोक आहवनीयः' इति जुह्वादिस्तोत्रवत् रसतमाद्युक्तिरपि यज्ञाङ्ग-

श्रुत्यन्तराभावश्चेऽपि इह अनुवादवाक्ये स्वयं विधिः कल्प्यः । एवं संन्यासाश्रमस्वीकारे, 'वीरहा वा एष देवानां योऽग्निमुद्वासयते' इति गृहस्थाश्रमत्यागनिषेधस्तु सरागे रागवत्पुरुषविषयः; 'यदहरेव विरजेत्' इति वैराग्यस्य त्यागकारणत्वोक्तेः इति उपरितनसूत्रार्थसंग्रहः ॥ ३९९ ॥

८. उपनिषदां सर्वासां कर्मविध्यन्तर्गतार्थवादतामेवाभिमन्यमाना मीमांसकास्तत्राऽऽत्मप्रतिपादकभागानां जीवेश्वरभेदविवेचनं विना कर्मकर्तृस्तावकत्वेनार्थवादत्वमास्थाय एतदर्थज्ञानं कर्मानुष्ठानशेषभूतमिति यदुक्तवन्तः, तत् प्रथमाधिकरणेन जीवातिरिक्तेश्वर-जीवज्ञानातिरिक्तपरविद्यारूपज्ञानपरत्वोपपादनेन निरस्तमासीत् । अथाऽऽत्मप्रतिपादकभागातिरिक्ते कर्माङ्गभूतोद्गीथाद्यनुबन्धिप्रतिपादकांशानां कर्माङ्गस्तावकतयोपयोगः, कर्माङ्गासंबन्ध्युपाख्यानरूपस्य च पारिप्लवशंसने उपयोग इति विभागं मीमांसकाभिमतं निराकर्तुमधिकरणद्वयम् । तत्र प्रथममुद्भाव्य निरस्यति जुह्विति । छान्दोग्यारम्भे उद्गीथावयवप्रणवोपासनं विधाय तदुपव्याख्यानमारभ्य भूतरस. पृथिवी, पृथिवीरसः आप इति क्रमेण सप्त रसान् परिगणय्य, 'साम्न उद्गीथो रस.' इति अष्टमरसत्वेनोद्गीथ उक्तः । एवं रसतमाद्युक्तिः रसतमत्वपरत्वेऽपि युक्तिः उद्गीथस्तुतिरेव । यथा, 'इयमेव जुहूः स्वर्गो लोक आहवनीयः' इति जुह्वाः पृथिवीलोकत्वेन स्तुतिः तद्वत् अंगभूतोद्गीथस्तुतित्वमेव भजतिवयमुक्तिरिति पूर्वपक्षः । निरस्यति

भूतोद्गीथादिस्तुतित्वमेव भजतु । पूर्वपक्षं निराकरोति—मैवमिति । निराकरणमेव विवृणोति—तत्तदिति । यद्युद्गीथादिविधानप्रकरण एवेदं वाक्यं स्यात्, तदानीं विहितार्थप्रशंसारूपार्थवादत्वं भजेत । तेन तत्प्रकरणरहितत्वेनार्थवादत्वं न भजेत । किञ्चात्रापूर्वार्थकथनमस्ति । तस्मात्, 'अप्राप्ते शास्त्रमर्थवत्' इति न्यायेनोपासनविधित्वमङ्गीकार्यमित्यर्थः । किञ्चेतद्वाक्यसमीप एव तत्तद्-दृष्टिविधानञ्च दृश्यते । नैवं जुहूादिवाक्ये; अनारभ्याधीतत्वात् । तस्मादनन्यार्थशिष्टे = अन्यस्याङ्गतया विधानरहिते, 'यदेव विद्यया करोति, तदेव वीर्यवत्तरम्' इति फलवत्युद्गीथोपासने कल्प्यमानो विधिरेव युज्यते ; न पुनरर्थवादत्वम् । पर्णमयत्वादिकं त्वन्यार्थशिष्टम्; फलसाधनत्वप्रतिपादक-विभक्त्यभावाच्च फलशून्यम् ; तस्मात् तत्र न विधिरिति प्रागेवोक्तमिति भावः ॥ ४०० ॥

(४०१) किञ्च प्राप्तेरभावान्न तदनुवदनं नाधिरोप्यस्तुतिर्वा ;

युक्ता विध्येकवाक्ये गतिरियमगतेः ; साऽत्र नाऽऽसत्तिहानेः ।

उत्कर्षः कल्प्यते चेत्, अगतिकविषये तत् प्रसह्य प्रसह्यं

मध्ये विद्याविधीनां वचनमिदमिति स्यात्तु विध्य(द्या)र्थमेतत् ॥ ९ ॥

उक्तमेव विधिपरत्वं विशदप्रतिपत्त्यर्थं युक्तिभिः प्रतिष्ठापयति-किञ्चेति । अयमर्थः-विधिपरत्वं नास्तीति वदता किमत्रानुवादत्वमेवोच्यते, उत विधेयस्तुतिपरत्वम्? उभयमपि नास्ति; प्राप्तेरभावात्। पूर्वमेव रसतमत्वादिविशिष्टविधाने सत्येव ह्यत्रानुवादत्वं कल्पयितुं शक्येत । तथैव(तदैव?) स्तुति-मात्रत्वमपि कल्पयितुं शक्येत(परिकल्प्येत)। अत्र तु प्राप्तेरभावादुभयमपि परिकल्पयितुं न शक्यते । नाधिरोप्यस्तुतिर्वा—अन्यत्राधिरोप्यस्य रसतमत्वादेः स्तुतिश्च न भवतीति। ननु तत्रतत्रोभयपरिकल्पन-मपि दृश्यते । तत् किमत्र नाश्रीयत इत्याशङ्क्याह-युक्तेति। 'विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः' इति न्यायानुसारेण विध्येकवाक्यत्वे प्रतिपन्ने सत्येवागत्या गतिरियं युक्ता । सा गतिरत्र रसतमत्वादिदृष्टिविधायकवाक्ये नास्ति; आसत्तिहानेः = विध्यासत्तिहानेः विध्येकवाक्यत्वप्रसङ्गा-भावादित्यर्थः । तत्र विध्यासत्त्यभावेऽपि यत्र विधिरस्त्यन्यत्र तत्रेदं वाक्यमुत्कृष्य स्तुतिपरत्वेन

---

मेवामिति। युक्त जुहू विधानप्रकरणे तदर्थवादत्वात् तत्स्तुतिरूपत्वम्। अत्र तु प्रकरणं विना क्रतोऽयमपूर्व-निर्देश । अतः प्रकरणाभावात् अर्थस्याज्ञातपूर्वं वाच्च नार्थवादता । नन्वपूर्वत्वेऽप्युद्गीथेऽनन्वयात्, जुह्वाः पृथिवीलोकत्ववत् स्तुतिरिति चेन्न; उपासीतेति विधानात् कल्पनारूपत्वाच्च दृष्टिविधित्वावगमात्। दृष्टि-विधिसाहचर्याच्चैवमित्याह तत्त दिति मुख्यप्राणदृष्टिः हिरण्मयपुरुषदृष्टिरित्येवमनेकविधानं लक्ष्यते । समा-लक्षीति भूतत्वमविवक्षितम्। अतोऽनन्यार्थशिष्टे अन्यार्थे यत् शिष्टं तद्भिन्ने विधेयान्तरार्थवादतयाऽनुक्ते, फलवति, 'वीर्यवत्तरं भवति' इति फलसंबन्धितया कथ्यमानेऽत्र रसतमत्वादौ दृष्टिविधिरेव कल्प्यः ॥४००

९. प्रकरणरहितापूर्वनिर्देशेत्युक्तं विवृणोति किञ्चेति । दृष्टिविधिप्रकरणात् फलवचनाच्च दृष्टयर्थत्वं प्रागुक्तं किञ्चेति समुच्चीयते । प्राप्तेरभावात् उद्गीथे रसतमत्वादेः प्रमितत्वाभावात् अपूर्वत्वात् नानुवादता । अप्राप्तत्वादेव रसतमत्वमारोप्य उद्गीथस्तुतिरिति च न भवति । [अधिरोप्यस्तुतिरिति समस्तं कृत्वाऽन्यथा व्याख्यातम् ।] विध्येकवाक्यस्थले तु इयं स्तुतिरिति गतिर्युक्ता । अगतेः वाक्यभेद गमकाभावात् । अत्र तु आसत्तिहानेः विधिसामीप्याभावात् सा स्तुतिरीतर्न भवति । आसक्तेति अशुद्धम् । ननु उद्गीथविधिस्थलं प्रति अयमर्थवाद उत्कर्षणीय इत्यत्राह उत्कर्ष इति । तत्र उत्कर्षकरणम्

नेयमिति चेत्-तदपि नेत्याह-अगतिकविषये तत् प्रसह्य प्रसह्यमिति। उत्कर्षकल्पनं हि गतिशून्यविषय एव बलादङ्गीकरणीयम्। अत्र पुनरस्ति गतिः; अपूर्वार्थविषयस्य रसतमत्वादिदृष्टिविधानस्योपपाद-नादित्यर्थः। किञ्च बहूनां विधीनां मध्य एव रसतमत्वादिदृष्टिप्रतिपादनपरमिदं वाक्यं पठ्यते, तेन समभिव्याहारसामर्थ्यादस्य वाक्यस्य विधिपरत्वमेव न्याय्यमित्याह—मध्य इति ॥ ४०१ ॥

(४०२) विद्या(ध्य)र्थत्वेऽपि युक्ता स्तुतिरियमसतः कीर्तनादित्ययुक्तं

दृष्ट्युद्देशेऽतिचारादथ च विशयनं स्यादिति त्वर्भकोक्तिः ।

नित्येऽस्मिन् ह्यप्रमाणं प्रसजति निगमो युक्तिवार्यत्वपक्षे

त्वित्थम्भावे बुभुत्स्ये वच इह फलवत् दृष्टिविध्यर्थमेव ॥ १० ॥

इति स्तुतिमात्राधिकरणम् ॥ ११० ॥

अत्र पूर्वपक्ष्यभिप्रेताभासयुक्तिमनूद्य अयुक्तमेतदिति प्रतिक्षिपति—विद्या(ध्य)र्थत्व इति। 'स एष रसानां रसतमः' इत्यादिवाक्यस्य विद्यर्थत्वमेव, न पुनः स्तुतित्वमिति हि भवतोक्तम्। तन्न युज्यते; विद्य (ध्य)र्थत्वेऽपि स्तुतिपरत्वं युक्तमेव। अविद्यमानस्यैव रसतमत्वादेर्दृष्ट्यर्थ(?)त्वाभिधानात्। अतः स्तुतिपरमेवेदं वाक्यमविद्यमानार्थकथनादिति पूर्वपक्षिणोऽभिप्रायः। तदिदमयुक्तमित्याह—अयुक्त-मिति। तत्र हेतुमाह-दृष्ट्युद्देशेऽतिचारादिति। दृष्टिविधिषु व्यभिचारादित्यर्थः। गरुडमात्मानं जानी-यादित्यादिषु दृष्टिविधिष्वसतः कीर्तनमस्त्येव; अथापि विधिपरत्वमङ्गीक्रियते। तेन यदसतः कीर्तनम्, तत् विधिपरं न भवतीति नियमाभावात् व्यभिचरितमेवेदमिति। नन्वसतः कीर्तनादिति युक्तेर्व्यभि-चारेऽपि सन्देह एव स्यात्। व्यभिचारो हि विवक्षितार्थासाधकत्वेन सन्देहमेवाऽऽवहति। तेन रसतमत्वादिवाक्यं विधिर्वा स्तुतिर्वा भवत्विति सन्देह एव स्यादिति पूर्वपक्षिवाक्यं बालभाषितमेवे-त्याह—अथ चेति। बालभाषितत्वं प्रकटयति—नित्य इति। अत्रायं विकल्पः-किं नित्यमेव संशयः स्यादिति भवतोच्यते, किं वा यावन्नियामकविशेषादर्शनमिति। पूर्वत्र वेदाप्रामाण्यमेव स्यादि-त्याह—नित्य इति। नियामकदर्शनेऽपि नित्यस्य संशयस्य सर्वदा सुलभत्वात्। अस्तु संशयः, स च संशयो विशेषदर्शनादियुक्तिवार्य इति द्वितीयपक्षेऽपि दोषमाह—युक्तीति। इत्थम्भावे बुभुत्स्ये=प्रमाणवाक्यस्येत्थम्भावो न्यायपर्यालोचनमेव, 'इतिकर्तव्यताभागं मीमांसा पूरयिष्यति' इति वचनात्। अत्र वाक्यानुग्राहकन्याये निरूपयितुमभिलषिते सति वच इह फलवत्, 'यदेव विद्यया' इति फलवत्त्वेन प्रतिपन्नं रसतमत्वादिवचो रसतमत्वादिदृष्टिविध्यर्थमेव भवति; न पुनः

अगतिकविषये प्रसह्य बलात्कारेण प्रयत्नपूर्वकं प्रसह्यम् सोढव्यम्, न त्वत्रेति। विद्यार्थत्वस्य न स्वतः हृदयं निवर्त्य कल्पनम्; बाधकं हि लक्ष्यत इत्याह मध्ये इति। उपासीतेत्युपक्रान्तम्; यदेव विद्यया करोतीति चोपर्युच्यते; उपरि च विद्या विधीयन्ते। अतो मध्ये एतत् रसतमत्वादिवाक्यं विध्य(द्या)र्थम्=दृष्टिविषयविधिपरमेव ॥ ४०१ ॥

१०. पुनरपि रसतमत्वानुपासनं शंकते विद्येति। विद्याविधानमध्यगतं वाक्यं विद्यार्थवाद इतीष्यते। अथापि, उद्गीथ उपास्यताम्। तत्र रसतमत्वं नोपास्यम्, केवलं स्तुतिः; असतो रसतमत्वस्य कीर्तनादिति न शंक्यम्, यत्रासत्कीर्तनं तत्र स्तुतिरिति हि न व्याप्तिः; दृष्ट्युद्देशे दृष्टिविधौ अतिचारात् स्तुतिस्थलपरिक्रम्यासत्कीर्तनस्य स्थितेः। असत्कीर्तनहेतुर्व्यभिचरितो न स्तुतित्वसाधक इत्यर्थः। ननु असत्कीर्तनस्य दृष्टिस्तुत्युभयसाहचर्यात् साधारणतया दृष्टिर्वा स्तुतिर्वेति विशयनं संदेहः स्यादित्यत्राह

स्तुतिमात्रम्। अयमर्थः—न्यायानुगृहीतवाक्यपर्यालोचनाक्षमाणां नोत्तरमेव देयम्। तत्पर्यालोचनक्षमाणां तु रसतमत्वादिवाक्यं रसतमत्वादिदृष्टिविधानार्थमेवेति स्वयमेव सिद्धं भवति। अयमत्र शब्दान्वयः—विद्य(ध्य)र्थत्वेऽपि अविद्यमानार्थकीर्तनात् स्तुतिरेव युक्तेत्ययुक्तम्। अन्ततः कीर्तनादिति हेतोः, गरुडमात्मानं जानीयादित्यादिदृष्टिविधौ स्तुतिमात्रत्वव्यभिचारात्। तर्हि स्तुतिर्वा विधिर्वेति संशयः स्यादिति बालभाषितम्। वैदिकार्थे नित्यसंशयाङ्गीकारे वेदाप्रामाण्यमेव स्यात्। विशेषदर्शनात् संशयनिवृत्त्यङ्गीकारे त्वत्रापि विशेषदर्शनमस्ति। विधिस्वनियामकयुक्तीनां वर्द्धानां वाक्यार्थनिर्णयेतिकर्तव्यतारूपाणामत्र विद्यमानत्वादिति। तेन विधित्वमेव न पुनस्स्तुतिमात्रत्वमित्यर्थः॥ ४०२॥ इति स्तुतिमात्राधिकरणम्॥ ११०॥

१११ ॥ अथ पारिप्लवाधिकरणम् ॥ ३-४-३ ॥

सूत्रम्— पारिप्लवार्था इति चेन्न विशेषितत्वात्॥ तथा चैकवाक्योपबन्धात्॥ २३, २४॥

(४०३) विद्याख्यानभेदाः विधिमहिमहृतास्सन्तु पारिप्लवार्थाः;
न स्युर्विद्याविधानैः प्रकरणपठितैरेकवाक्यत्वदृष्टेः।
मन्वाद्याख्यानमात्रं भवति च कथितं तत्र पारिप्लवार्थं
तेनाऽऽकाङ्क्षानिवृत्तौ न तदधिकपराख्यानतादर्थ्यक्लृप्तिः॥ ११॥

अत्रापि प्रासङ्गिकी सङ्गतिः। पूर्वस्मिन्नधिकरणे हि रसतमत्वादिवाक्यानां स्तुत्यर्थत्वं पूर्वपक्षीकृत्योपासनपरत्वं स्थापितम्। एवं प्रतर्दनाद्याख्यानानि किं स्तुत्यर्थत्वेन नेयानि, उत पारिप्लवार्थत्वेनेति शङ्कोत्थानात्। तदर्थविचारस्तु, 'प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम', 'श्वेतकेतुर्हारुणेय आस' इत्याद्याख्यानानि वेदान्तवाक्यस्थानि किं पारिप्लवप्रयोगार्थानि, उत विद्याविधानार्थानीति। तदर्थं विचार्यते—किं पारिप्लवे सर्वाख्यानानां विनियोगः, उत मन्वाद्याख्यानानामेवेति। किं, 'आख्यानानि शंसन्ति' इति पारिप्लवाख्यानशब्दः सर्वाख्यानपरः,

---

अथवात इत्यमुक्तरमंकस्य व लभ्य कु इत्यव ह नित्ये ान। अस्मिन् वशयन नित्यानुवृत्तत्र्यष्टे, अयं रसतमादिविषयकानिगमः अप्रमाणं प्रसजति=संदेहजनकत्वात् प्रामाण्यहीनः स्यात्। ततो विशयनस्य युक्त्या तर्कगोचितार्थस्वीकारेण निवार्यत्वमेवेति पक्षे तु इत्थम्भावे बुभुत्स्ये संदेहापाकरणाय कीदृशार्थपरत्वं स्वीकर्यमिति जिज्ञासायाम्, इह दृष्टिप्रकरणे वचः रसतमादिवाक्यं फलवद्दृष्टिविधिरूपार्थपरमेव बुध्येत। उपासीतेति विधिश्रवणात् उपरि फलोक्त्या च दृष्टिविधानमेव न्याय्यमिति निर्णीयतेत्यर्थः। फलवदिति पृथक् पदं वा। फलस्य श्रवणाभावे केवलस्तुतिरिति स्यात्। वचसः फलवत्त्वात्=फलबोधकत्वात् तत्साधनोपासनविध्यर्थत्वमेव युक्तम्। अपेक्षितोपास्याकारसमर्पकत्वे सम्भवति केवलस्तुतित्वायोगात्। मुख्यप्राणादिदृष्टेरपि एष्टव्यत्वादिति भावः। एवं भावशब्दाच्चेति सूत्रार्थश्चकारार्थमहित उक्तः। इत्थम्भावे बुभुत्स्ये इत्यस्य संदेहवारकविशेषजिज्ञासायामिति स्वरसोऽर्थः। इतिकर्तव्यतापविशेषजिज्ञासायामिति व्याख्याने क्लेशोऽधिकः॥ ४०२॥ इति स्तुतिमात्राधिकरणम्॥

११. द्विविधस्थापनं कृतम्। अथोपनिषद्गतोपाख्यानानाम् अश्वमेधे, 'पारिप्लवं शंसति' इति बहुविधोपाख्यानपाठे विनियोग इति सार्थक्यमिति वादो निरस्यते विद्यास्विति। श्वेतकेतुजानश्रुति-

उत मन्वाद्याख्यानपर इति। किं, 'मनुर्वैवस्वतो राजा' इति तत्रैवाऽऽख्यानविशेषस्याऽऽम्नानमाख्यान-शब्दस्य विशेषपरतामवगमयति, नेति। अत्र सर्वेषामप्याख्यानानाम्, 'आख्यानानि शंसन्ति' इति विधिबलात् पारिप्लवार्थत्वमिति पूर्वपक्षमाशङ्कते—विद्यास्विति। सर्वास्वपि विद्यास्वाख्यानभेदाः= 'प्रतर्दनो ह वै' इत्यादयः आख्यानविशेषाः—'आख्यानानि शंसन्ति' इति विधिमहिम्ना परिगृहीताः पारिप्लवार्थास्सन्त्वेवेति। तदिदं प्रतिक्षिपति—न स्युरिति। तत्र हेतुमाह—विद्याविधानैरिति। तत्तदाख्यानप्रकरणपठितैः तत्तद्विद्याविधानैः तेषां सर्वेषामाख्यानानामेकवाक्यत्वदृष्टेः पारिप्लवार्थत्वं नास्तीत्यर्थः। न ह्यत्र,'उद्गीथमुपासीत' इत्युद्गीथसामान्यस्योपासनसम्बन्धप्रतिपादकद्वितीयाश्रुतिवत् सर्वाख्यानानां पारिप्लवसम्बन्धप्रतिपादिका काचित् श्रुतिरस्ति। केवलं[विद्यासंबन्धि?]प्रकरणमेव विद्यते। तत्पुनः प्रकरणं प्रकृतमाख्यानं पारिप्लवार्थत्वे न नियमयति। तर्हि पारिप्लवार्थमाख्यान-शंसनविधानस्य को विषय इत्याशङ्क्याह—मन्वादीनि। तत्र कथितं मन्वाद्याख्यानमात्रमेव पारिप्लवार्थं भवत्विति न नैरर्थक्येन विधिभङ्गप्रसङ्गः। ननु प्रकरणात् मन्वाद्याख्यानमस्त्वङ्गम्; अथाप्याख्याना-न्तराण्यपि पारिप्लवाङ्गं भवन्त्वित्याशङ्क्य परिहरति—तेनेति। अयमर्थः—पारिप्लवस्य स्वप्रकरण-पठितेन मन्वाद्याख्यानेन नैराकाङ्क्ष्यात्, प्रतर्दनाद्याख्यानानाञ्च स्ववाक्यपठिततत्तद्ब्रह्मविद्यासमन्व-येन नैराकाङ्क्ष्याच्च सर्वेषामाख्यानानां पारिप्लवे समन्वयकॢप्तिर्निष्प्रमाणिकेति। शब्दार्थस्तु—उक्तेनानेन हेतुना आकाङ्क्षानिवृत्तौ मन्वाद्याख्यानाधिकप्रतर्दनाद्याख्यानानां पारिप्लवार्थत्वकॢप्तिर्न स्यादिति ॥ ४०३ ॥ इति पारिप्लवाधिकरणम् ॥ १११ ॥

## ११२ ॥ अथ अग्नीन्धनाधिकरणम् ॥ ३-४-४ ॥

सूत्रम्— अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥

**(४०४) यज्ञादेरङ्गभावाच्च तदनधिकृतेष्वङ्गिनोऽधिक्रिया स्यात्**
**विद्यैवं नोर्ध्वरेतस्स्विति न; बहुविधस्वाश्रमार्हाङ्गतोक्तेः।**

---

प्रतर्दनाद्युपाख्यानवाक्यानि विद्यासंनिधिपठितानि, "सर्वाण्याख्यानानि शंसन्ति" इति पारिप्लवविधेः सर्वपदघटितस्य महिम्ना आख्यानत्वरूपसामान्यधर्मेण गृहीतानि सन्ति तदर्थान्येव भवेयुः। विद्याभागानां तु कर्त्रात्मस्वरूपबोधकत्वेन कर्मविधिशेषत्वमस्माभिः प्रागेवोक्तम्। अस्तु तत्रतत्रातिरिक्तार्थविधानम्; आख्यानविषयेऽस्मन्निर्णयो न भञ्जनीय इति पूर्वपक्षः। एवं यावल्लाभं संतोष्टव्यमिति तुष्टो इत्तो बाध्यतेऽत्र न स्युरित्यादिना। विद्याविधानस्य प्रागेवोक्तत्वात् तत्र मध्ये संबोधनेन मामुपास्वेत्यादिना च प्रकरण-वशादेकवाक्यत्वदर्शनात् इमे पारिप्लवार्था न स्युः। ननु प्रकरणापेक्षया, 'आख्यानानि' इति विधिगत-श्रुतिर्बलीयसी इति चेत्—न; अविशेषेण सर्वेषामाख्यानानां युगपत् शंसनस्यावकाशाभावात् कानीति विशेषबुभुत्सायां प्रकृतस्थल इवैकवाक्यतया निराकांक्षाणि वाक्यानि विहायान्येषामेव साकांक्षाणां तेन विनियोग इष्यते। वस्तुतः साकांक्षाणामप्यनन्तत्वादशक्य एव पूर्णविनियोगः। तस्मात् तत्र प्रकरणे कथितम् अहर्भेदेन वैवस्वतमनु-वैवस्वतयम-वरुणादित्यादिनामतो निर्दिष्ट-माख्यानं परं पारिप्लवार्थं भवति। तेन तदन्वयेनाकांक्षाया निवृत्तत्वात् तदधिकानां ततो भिन्नानां परत्रान्वितानामाख्यानानां पारिप्लवार्थत्वकल्पनं न भवति। एकवाक्यत्वदृष्टेरित्यनेन द्वितीयसूत्रार्थ उक्तः। तृतीयपादेन प्रथमसूत्रस्थं विशेषितत्वादिति विवृतम् ॥ ४०३ ॥

विद्यायोगश्चतुर्णां विधिरपि हि समश्रूयते ; स्मर्यते च ;
प्रायेणो चत्यभूम्ना मु नेभिरभिहितं क्वापि मोक्षाश्रमत्वम् ॥ १२ ॥
इत्यग्नीन्धनाधिकरणम् ॥ ११२ ॥

अत्र व्याख्यातयोरधिकरणयो: प्रासङ्गिकत्वं भाष्य एव व्यक्तमुक्तम्, 'स्तुतिप्रसङ्गादवान्तरसङ्गति-विशेषेणार्थद्वयं चिन्तितम्' इति । एतस्य पुनरधिकरणस्य प्रथमाधिकरणेन सङ्गतिरपि भाष्योपात्ता, "विद्यावन्त ऊर्ध्वरेतस आश्रमिणस्सन्तीत्युक्तम्, 'ऊर्ध्वरेतस्सु च शब्दे हि' इत्यादिभि: सूत्रै: । इदानीमू ध्वरेतसो यज्ञाद्यभावात् तदङ्गिका विद्या न सम्भवतीत्याशङ्क्याह" इति । तदर्थविचारस्तु—किं परिव्राजकानां ब्रह्मविद्यायामधिकारोऽस्ति, नेति । किं, 'विविदिषन्ति' इत्यादिना यज्ञाद्यङ्गिकैव विद्या, उताऽऽश्रमप्रयुक्तधर्माङ्गिकेति । तदर्थं विचार्यते-किं, 'ब्रह्मसंस्थोऽमृतत्वमेति', 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते', 'एतमेव प्रव्राजिनो लोकमिच्छन्त: प्रव्रजन्ति' इत्येवमादीनि वाक्यानि ऊर्ध्वरेतसो विद्याऽऽसम्बन्धं प्रतिपादयन्ति आश्रमप्रयुक्तधर्माङ्गिका विद्येत्यवगमयन्ति, नेति । कि कर्मणो विद्योत्पादकत्वं सम्भवति, नेति । अत्र पूर्वपक्षशङ्कामनुवदति—यज्ञादेरिति । 'यज्ञेन दानेन तपसाऽनाशकेन' इति यज्ञादेर्ब्रह्मविद्याङ्गत्वेनोपदेशात् यज्ञाद्यनधिकृतेषु ऊर्ध्वरेतस्सु अङ्गिन: उपासनस्याधिकारो न स्यात् । अङ्गैकवये अङ्गिनस्स्वगुण्याभावेन फलसाधनत्वभङ्गादिति । इमं पक्षं प्रतिक्षिपति—नेति । तत्र हेतुमाह—बहुविधेति । अयमर्थ:—बहुविधानां सत्यवचनादीनां सामान्यधर्माणां स्वाश्रमधर्माननियतानां विशेषधर्माणां चाङ्गत्वोक्ते: । किञ्च चतुर्णामाश्रमाणां विद्या-

१२. उपनिषत्सु परतत्त्वप्रतिपादकमानानामन्यशेषत्वं विना स्वातन्त्र्येण प्रयोजनपर्यवसायित्वं समन्वयाधिकरणे स्थापितम् । तत् अन्नमयादिप्रकृत्यादिविलक्षणानन्दमयविषयकत्वस्य कारणवाक्येषु तदध्याये उपपादनात् स्थिरीकृतम् । एवं स्वातन्त्र्येण पर्यवसानमभिप्रेत्यैव भृगु जगत्कारणं किमिति जिज्ञासु आनन्दो ब्रह्मेति व्यजानात् । अथास्मिन् पादे परविद्या-दृष्टिविद्यादिपरवाक्यानामपार्थकत्वनं निरस्य परविद्याप्राधान्यस्थापनेन कर्मणामेवाङ्गभाव: तत्कर्माङ्गाश्रिततया दृष्टीनामुपयोगश्चोपपादित: । ईदृशाङ्गानुष्ठानानधिकारित्वात् संन्यासिनां परविद्यायां नाधिकार इति शङ्कां परिहरत्यनन्तराधिकरणेन यज्ञेति । तदनधिकृतेषु तेन यज्ञादिना कर्तृत्वेनास्वीकृतेषु यतिषु अङ्गिनोऽधिक्रिया परविद्यया कर्तृतया स्वीकृतत्वं न स्यात् । एवं अस्वीकारादेव ऊर्ध्वरेतस्सु यतिषु न विद्या भवितुमर्हतीति पूर्वपक्ष: । निरस्यति इति नेति । यज्ञादेरभावेऽपि स्वाश्रमार्हाणां बहुविधानां नमन-कीर्तन-स्तवनदर्शनां नित्यनैमित्तिकानां चाङ्गताया उक्तत्वात् । स्वाश्रमार्हेषु बहुविधत्वं असाधारणत्वसर्वाश्रमसाधारणत्वादितोऽपि तस्मादहिंसासत्यवचनादेरपि ग्रहणम् । अतो बहुविध-स्वाश्रमार्हपदयोर्द्वन्द्वसमासो नापेक्षित: किं तु कर्मधारय एव । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति वाक्यं हि वेदाध्ययनमारभ्य चतुर्णामाश्रमाणां धर्मान् क्रमेण निर्दिशति । स्वाश्रमार्हमात्रेण विद्या-निष्पत्त्यभ्यूहे कारणमाह विद्येति । छान्दोग्यान्ते गृहस्थस्य, उपकुर्वाणकस्य नैष्ठिकस्य परिव्राजकस्य त्रयो धर्मस्कन्धा इत्यत्र सर्वेषामाश्रमाणाञ्च विद्यायोग: समाम्नायते श्रूयते । विधिरपि, 'आत्मा वा अरे द्रष्टव्य:', 'आत्मेत्येवोपासीत' इत्यादि: सर्वसाधारण्येन श्रूयते । स्मर्यते च, 'स्वे स्वे कर्मण्यभिरत:', 'गृहस्थो

योगस्तत्प्रतिपादको विधिश्च श्रूयते = श्रुत्यैव प्रतिपाद्यत इत्यर्थः। न केवलं श्रुतिः, स्मृतिरप्यस्तीत्याह स्मर्यते चेति । चतुर्णामाश्रमाणां धर्मविधानं हि प्रायेण स्मृतीनां प्रवृत्तिप्रयोजनम् । तेन चतुर्णामप्याश्रमाणां स्वोचितकर्मानुष्ठानेन ब्रह्मविद्यायामधिकारोऽस्ति । ननु तर्हि मोक्षाश्रम इति सन्न्यासाश्रमस्य विशेषतः प्रसिद्धिः कथमुपपद्यत इत्याशङ्क्य परिहरति—प्रायेणेति । अयमर्थः—पुत्रपौत्रादिबहुपल्लवोपप्लुतानां गृहस्थानां तावद् ब्रह्मविद्यायामैकाग्र्यं भज्यते । केषांचित् भागधेयवशात् सिध्यत्यैकाग्र्यम् । एवं ब्रह्मचारिवानप्रस्थानामपि सन्न्यासिवदत्यन्तैकाग्र्याभावात् भज्येत वा न वा ब्रह्मविद्याधिकारः । सन्न्यासिनस्तु परित्यक्तपरिग्रहत्वेन प्रायेण ब्रह्मविद्याधिकारः परिपूर्णः सम्पद्यत इति तस्मिन्नेव मोक्षाश्रमत्वप्रसिद्धिर्युज्यते ॥ ४०४ ॥ इत्यग्नीन्धनाधिकरणम् ॥ ११२ ॥

## ११३ ॥ अथ सर्वापेक्षाधिकरणम् ॥ ३-४-५ ॥

सूत्रम्— सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६ ॥

(४०५) त्यक्ते यज्ञादिधर्मे परभजनविधेरूर्ध्वरेतस्सु दृष्टा
विद्या तेनानपेक्षा गृहवति च भवेदित्यनालोचितोक्तिः ।
यज्ञेनेत्यादिकाभिः श्रुतिभिरवगता ह्यस्य सा तत्प्रसङ्ग्या
जिज्ञासार्थत्ववादो जिगमिषति पदेत्यादिनीत्या निरस्तः ॥ १३ ॥

पूर्वमूर्ध्वरेतस्सु अग्नीन्धनाद्यनपेक्षा उक्ता; अधुना पुनः गृहस्थेषु यज्ञादिकर्मापेक्षोच्यत इति सङ्गतेः स्फुटत्वात् भाष्ये तदनुक्तिः । तत्र विचारस्तु—किं गृहस्थस्य यज्ञादिकर्मरहितो ब्रह्मविद्यायामधिकारः, उत तद्रहितस्येति । तदर्थं विचार्यते—किं यज्ञादिकर्म विद्याङ्गम्, नेति । किं, 'यज्ञेन' इति श्रुतिर्विद्याङ्गतया यज्ञादिकर्म विनियुङ्क्ते, नेति । किं कर्मणो विद्योत्पादकत्वं सम्भवति, नेति । अत्र पूर्वपक्षमारचयति—त्यक्त इति । ऊर्ध्वरेतस्सु यज्ञादिधर्मे परित्यक्तेऽपि परभजनविधेर्दृष्टत्वात्

---

ब्रह्मचारी वा वानप्रस्थोऽथ भिक्षुकः । य इच्छेत् सिद्धिमास्थातुं देवतां कां यजेत सः' इत्यादि । प्रायेणेत्यादि । ननु चतुर्थाश्रमस्यैव विद्येति यदि अधिकरणपूर्वपक्षः स्यात्, तदा मोक्षाश्रमव्यवहारस्तेन प्रमाणीक्रियेत, सिद्धान्तिना च तत्रैवं समाधानं वक्तव्यं स्यात् । अतोऽत्र मोक्षाश्रम इति प्रसिद्धिबलादपि संन्यासिनि विद्येति सिद्धान्तिना हेतौ वक्तव्ये कथमिदमन्याहशशैल्या चतुर्थपादरचनमिति चेत्—संन्यासिन एव मोक्ष इति कस्यचिन्मतेरप्यर्थान्निरासायेदम् । अथवा वैराग्यातिशयादिकमालोच्य मुनिभिर्यत्र मोक्षाश्रमत्वेन व्यवहारोऽपि कृतोऽस्ति, तत्र विद्या न भवतीति शंका सुतरामसंगतेति सिद्धान्तिना पूर्वपक्षिणं प्रति कथनं प्रायेणेत्यादिपादकृत्यम् ॥ स्वरूपानुचितफलप्रेप्सार्थवैदिककर्मानधिकारात् तदाश्रमप्रविष्टस्य सर्वस्य मोक्षाकांक्षानियमाच्च तस्य मोक्षाश्रमता ॥ ४०४ ॥

१३. त्यक्त इति । नात्र गृहस्थस्य विद्यानधिकारशंका; किंतु यज्ञादित्यागेऽपि परविद्यायाः शास्त्रेण विधेः विधानस्य अनुष्ठानस्य च परिव्राजकेषु दर्शनात् गृहवति गृहस्थेऽपि विद्या तेन यज्ञादिकर्मणा अनपेक्षा यज्ञादिकर्माधीनापेक्षितांशवत्त्वरहिता भवतु इति पूर्वपक्षः। अनालोचितोक्तिः । आलोचितम् = आलोचनम्; तद्रहितस्योक्तिः । अनालोचिता = अपरिशीलितार्था उक्तिरिति वा । अस्य गृहवतः सा विद्या

गृहस्थेऽपि विद्या यज्ञादिकर्मनिरपेक्षा भवेदिति । तदिदमपाकरोति—अनालोचितोक्तिरिति । अपाकरणप्रकारं दर्शयति—यज्ञेनेति । अस्य = गृहस्थस्य यज्ञेनेत्यादिकाभिः श्रुतिभिः सा = विद्या तत्प्रसाध्या–यज्ञादिप्रसाध्यैव अवगता । ननु यज्ञेनेत्यादिभिः,'विविदिषन्ति' इति विविदिषासाधनत्वमेवोच्यते यज्ञादीनाम्, न पुनर्विद्यासाधनत्वम् । तत् कथमुच्यते कर्मणां वेदनसाधनत्वम्–इत्यत्रोत्तरमाह–जिज्ञासेति। यथा,'अश्वेन जिगमिषति'इत्यत्र जिगमिषां प्रति प्रधानभूतगमनसाधनत्वमेवाश्वस्य, तथा जिज्ञासां प्रति प्रधानभूतज्ञानसाधनत्वमेव यज्ञादीनामिति न्यायसिद्धोऽयमर्थः । तेन जिज्ञासार्थत्ववादो निवर्त्य एवेत्यर्थः । अयमत्र भावः—'धातोः कर्मणस्समानकर्तृकादिच्छायां वा' इति सूत्रे धात्वर्थप्राधान्येनैवेच्छायां सन् विधीयते । तेन सन्प्रत्यय एव धात्वर्थप्राधान्यं स्वयमेव वदतीति यज्ञादिभिर्वेदनस्यैव साध्यत्वाङ्गीकारे न सन्प्रयोगविरोध इति । एवमसिना जिघांसतीति दृष्टान्तान्तरमुदाहर्तव्यम् । श्लोके तावत् पदा जिगमिषतीति पाददृष्टान्त उक्तः ॥ ४०५ ॥

(४०६) नन्विच्छार्थत्वहानिर्जिगमिषति पदेत्यादिके गत्यभावात्
श्रुत्युक्तेऽसिस्तथा नेत्यसत् ; इह च यतो गत्यभावः समानः ।
इच्छा स्यात् धीविशेषात् ; तदनुपजनने कर्मभिः सा न साध्या
जिज्ञासां प्राप्तुमिच्छोर्न च न भवति तज्ज्ञानमिष्टं पुरैव ॥ १४ ॥

ननु पादेन जिगमिषतीत्यादौ गत्यभावात् सन्प्रयोगस्य धात्वर्थमात्रपरत्वम् । गत्यभावश्चोपलम्भविरोधात् । न हि पादो जिगमिषासाधनम्, अपि तु गमनसाधनमेव । अतोऽर्थविरोधात् दृष्टान्ते प्रयोगवैपरीत्यं भवतु नाम । यज्ञादिभिर्विविदिषन्तीत्यादौ तादृशो न कश्चिदर्थविरोधोऽस्तीति पूर्वपक्ष्यभिप्रायमाशङ्क्य निराकरोति—नन्वित्यादिना असदित्यन्तेन । पूर्वपक्षिणोक्तस्य दृष्टान्ते गत्यभावस्य पक्षेऽपि साम्यं प्रदर्शयति—गत्यभाव इति । साम्यमेव प्रकटयति—इच्छेति । तथा हि ब्रह्मजिज्ञासां प्राप्तुमिच्छोः कर्मानुष्ठानं भवतीच्यते । तत्र, विषयवैलक्षण्यज्ञानमन्तरेण कर्मभि-

---

तत्प्रसाध्या कर्मसाध्या यज्ञेनेत्येवं तृतीयादिबलादवगता हि । गृहस्थस्य फलान्तरव्यासंगो मा भूदिति मत्वा श्रुतिः सर्वं गृहस्थकर्मत्वेनाभिमतं काम्यमपि भवत्यर्थतया सात्त्विकत्यागपुरस्सरमनुष्ठानाय विनियुंक्ते । यत्र फलोपायेऽनधिकारात् संन्यास्यपि कदाचित् फलापेक्षी ताम्यति, फलोपायं तमनुतिष्ठन्नेव हन्त य फले विरक्तोऽस्तीति मनःपरिपाकदर्शी भगवान् विशेषतोऽनुगृह्णाति । विविदिषन्तीति सन् वेदनस्य इष्टत्वं फलत्वं दर्शयति । एवं स्थितेऽप्यद्वैत्येकदेशिनः वेदनकामनैव यज्ञादिकर्मानुष्ठानफलमिति मन्यन्ते, तं विविदिषार्थत्ववादं निरस्यति जिज्ञासेति । जिगमिषति पदेति । पदा=पादेन जिगमिषतीति प्रयोगे गमनेच्छासाधनत्वं पादस्य नोच्यते, किं तु गमनसाधनत्वमेव । तद्वदीत्येत्यर्थ । निवर्त्यः निरसनीयः, 'अश्वेन जिगमिषति' इति प्रसिद्धप्रयोगोदाहरणे, सौलभ्य अश्ववत् इत्यस्यायमर्थ इति मतिः स्यादिति तं विहाय पदेत्युक्तम् ॥ ४०५ ॥

१४. जिगमिषतीति दृष्टान्तवैषम्यं शंकित्वा परिहरति नन्विति । पदा जिगमिषतीत्यादौ पादस्य गमनेच्छोद्देश्यकत्वस्य हानिः त्यागः गत्यभावात् । पदो गमनेच्छासाधनत्वाभावात् ; गमनमात्र साधनत्वात् ।,अत उपलम्भविरोधात्·तत्र तथात्वेऽपि अत्र प्रत्यक्षागम्ये श्रुत्युक्तेऽर्थे· स्वारसप्रतीतविविदि-

रिच्छाया असाध्यत्वात् । विषयवैलक्षण्यज्ञानार्थं कर्मेति चेत्—तर्हि ज्ञानार्थमेव कर्मेत्युक्तं स्यात् । तथाचापसिद्धान्तः । स्ववचनविरोधश्च ; कर्मणो जिज्ञासाहेतुत्वस्य स्वोक्तस्यैवोपघातात् । अथवा कर्मानुष्ठानादिच्छा, इच्छया कर्मानुष्ठानमिति वैघट्यम् । वैघट्यमेव विवृणोति = जिज्ञासामिति । जिज्ञासां प्राप्तुमिच्छोः कर्मानुष्ठातुः पुरुषस्य पूर्वमेव ज्ञानमिष्टं न न भवति—इष्टमेव भवतीत्यर्थः । अतो ज्ञानेच्छैव जिज्ञासा ; सा पूर्वमेव सिद्धा । तां प्राप्तुकामः कर्मानुष्ठाय तां पुनः प्राप्नोतीत्यसङ्गतमेतत् । अयमत्र शब्दान्वयः—जिज्ञासां प्राप्तुमिच्छोः पुरुषस्य ज्ञानं पुरैवेष्टं न न भवति, ज्ञानार्थमेव हि जिज्ञासा प्रार्थ्यते । ज्ञानार्थमित्युक्ते ज्ञानस्याभिलषितत्वं प्रागेव सिद्धम् । ज्ञानाभिलाष एव हि जिज्ञासा । सा पूर्वमेव सिद्धा ॥ ४०६ ॥

---

षोद्देश्यकत्वमेव यज्ञादेर्युक्तमिति शंका । अत्र इच्छार्थत्वहानिरित्यस्य जिगमिषतीत्यत्र सनोऽर्थत्यागेन गमनरूपार्थेनात्रस्वीकार इति नार्थः । तथा सिद्धान्त्यभिमत्यभावात् । पूर्वश्लोके जिज्ञासार्थत्वेत्यत्र तादृशार्थानुक्तेस्तदेकरूप्यस्यैवात्र युक्तत्वाच्च । अतोऽन्ततः पदो न सनर्थेऽन्वयः, किं तु धात्वर्थे इत्यस्तु तत्र, गत्यभावात् ; इह तु विविदिषायामेव यज्ञादिसाध्यत्वान्वय इत्युक्तं भवति ।

निरस्यति इत्यसदिति । गत्यभावसाम्यमेव दर्शयत्युत्तरार्धेन । इच्छेति । ननु फलेच्छापूर्वकत्वादुपायेच्छायाः, वेदनस्य च विविदिषाफलत्वात् वेदनेच्छा विविदिषेच्छातः प्राक् भुवेति वक्तव्ये धीविशेषजन्यत्ववर्णनमत्र कुत इति चेत्—तदुपपादनानुकूल एवायमत्रान्वयार्थोऽवधाय ग्राह्यः—जिज्ञासां विविदिषां प्राप्तुमिच्छोः येयं जिज्ञासाविषयिणी इच्छा, सा धीविशेषात् विविदिषा इष्टसाधन मिति ज्ञानादेव स्यात्—सुखातिरिक्तविषये इच्छाया इष्टसाधनताज्ञानाधीनत्वात् । तदनुपजनने इष्टसाधनत्वज्ञानानुत्पत्तौ कर्मभिः सा जिज्ञासाविषयकेच्छा नैव साध्येत । तच्चेष्टसाधनताज्ञानं=वेदनं--ज्ञानं मे इष्टम्, तत्साधनभूता विविदिषेति ज्ञानमेव । इदञ्च वेदनस्येष्टत्वे इच्छाविषयत्वे स्थित एव= वेदनेच्छायां जातायामेव भवति । अतस्तज्ज्ञानं पुरैव जिज्ञासाविषयकेच्छोत्पत्तेः प्रागेवेष्टं भवति, न तु नेष्टं भवति । एवञ्च उपायेच्छां प्रति फलेच्छायाः कारणत्वात् वेदनरूपफलेच्छायाः विविदिषाविषयकेच्छाफलस्य प्रागेव जातत्वात् तस्याः कर्मसाध्यत्वासंभवः समानः ; एवं विविदिषाविषयकेच्छाया उत्पत्त्यभावात् यज्ञाद्यनुष्ठानायोगश्चेति । ननु विविदिषाऽपि ब्रह्मवेदनं मे इष्टसाधनमिति ज्ञानजन्या । तादृशेष्टसाधनताज्ञानस्यैव ब्रह्मवेदनगर्भत्वात् तत्र वेदनं जातमेवेति तद्विषयकेच्छा कथं भवेदिति चेत्—न; विविदिषा हि भक्तिरूपवेदनविशेषविषयकेच्छा । न चेष्टसाधनत्वज्ञानकाले ब्रह्मविषयकभक्तिरुत्पन्नाऽस्ति । अतो विविदिषा भवत्येव । शतदूषणी तत्त्वटीका च द्रष्टव्ये । अज्ञाते ज्ञाते वा जिज्ञासेत्यत्र परमार्थभूषणं द्रष्टव्यम् । किञ्च श्वोऽपि मे ब्रह्मवेदनं जायतामिति दिनान्तरादिकालिकब्रह्मवेदनोत्पत्तीच्छा विविदिषा । तत्र ब्रह्मवेदनेष्टसाधनताज्ञानस्य ब्रह्मवेदनगर्भत्वेऽपि दिनान्तरादिकालिकत्वविशिष्टब्रह्मवेदनस्येष्टस्येदानीमभावात् तद्विषयकेच्छाया नासंभवः ॥ प्रथमं विविदिषा, ततो विविदिषाविषयकेच्छाऽपि । ततो यज्ञादि, ततो विविदिषेति स्वीकारे चक्रकादिदोषोऽपि तत्रोक्तः चिन्तामण्यन्ते चात्र सूचितः ॥४०६॥

(४०७) नन्वत्रेच्छानुवृत्तिं प्रति विहितमिदं कर्म योज्यं ; ततः किं ?
नेच्छार्थं धीविशेषप्रजननमुदितं तावता वारितं स्यात् ।
ज्ञानार्थं कर्मविध्यन्तरमपि विविधं नापलापक्षमं ते ;
निध्यानन्यायतोऽतस्त्वनुवदति विधेयेष्टतां सन्प्रयोगः ॥ १५ ॥

इति सर्वापेक्षाधिकरणम् ॥ ११३ ॥

ननु पूर्वमेव जिज्ञासायां सत्यां कर्मानुष्ठानम्, कर्मानुष्ठाने सति जिज्ञासेत्यन्योन्याश्रय मादिकमुक्तम्। तन्न सम्भवति ; विषयविशेषेण ज्ञानभेदात्। तथाहि—पूर्वं सामान्यतो ज्ञानम्, तेनेच्छा, इच्छातः कर्मानुष्ठानम्, कर्मानुष्ठानात् पुनरिच्छाविशेषः, तस्मादुत्तरोत्तरमिच्छाज्ञानानुवृत्तिरिति न कश्चिद्दोष इति पूर्वपक्षयभिप्रायमनूद्य परिहरति—नन्विति । अयमत्र शब्दार्थः—इच्छानुवृत्तिं प्रति कर्म विहितं योज्यम्। न पुनः पूर्वेच्छां प्रति। ततः किमित्याह सिद्धान्ती। अयमभिप्रायः—यावज्जीवमिच्छानुवृत्तिं प्रति कर्मानुष्ठानं प्रयोज्यं चेत्–तर्हि विविदिषार्थस्य कर्मणो नित्यानुवृत्तत्वादनुष्ठेयस्य स्वरूपप्रतिपत्त्यर्थं कर्मविचारस्यैव पूर्ववृत्तत्वं सिद्धं भवतीति स्वसिद्धान्तविरोधः । किंचोत्तरोत्तरमिच्छासिद्ध्यर्थं पूर्वमेव धीविशेषप्रजननमुदितं तावता न वारितं स्यादित्याह—नेच्छार्थमिति । अयमर्थः—इच्छातः पूर्वमेव ब्रह्मज्ञानविशेषसद्भावोऽङ्गीकार्य इति तस्य ज्ञानस्य सद्भावः कर्मणेति कर्मविचारस्य पूर्ववृत्तत्वसिद्धिः । अस्तु वा अयं विधिर्विविदिषार्थः ; वेदनार्थोऽपि कर्मविधिरस्तीत्याह—ज्ञानार्थमिति । अस्तु विविदिषार्थेऽपि कर्मानुष्ठानम्, अथापि, 'क्रियावानेष ब्रह्मविदां वरिष्ठः', 'कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते', 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः', 'इयाज सोऽपि सुबहून्' इत्यादिभिर्ज्ञानार्थमपि कर्म नापलपितुं शक्यते । ततोऽपि कर्मविचारपूर्व-

१५. नन्वित्यादिश्लोकार्थेऽप्यवधानं कार्यम्। ननु श्रुतौ विविदिषन्तीत्यस्य विविदिषानुवृत्तिमन्तो भवन्तीत्यर्थः। अतः विविदिषाया जातत्वेऽपि विविदिषानुवृत्तिं प्रति कर्म यज्ञादिकमत्र विधीयत इति तदर्थं विहितत्वेनेदं योज्यमिति चेत्–ततः किम्। तावताऽस्मदाक्षेपः कथं समाहितः। तदेव विवृणोति नेत्यादिना। इच्छायाः इष्टसाधनताज्ञानमन्तरेणाजायमानत्वात् इच्छार्थं तद्धीजननमपेक्षिततया यत् प्रागुक्तम्, न तत् वारितं भवति। श्वोऽपि मे विविदिषा जायताम्, विविदिषानुवृत्तिप्रतिबन्धप्रसक्तिकालेऽपि सा जायतामित्यादिरूपा हि विविदिषारूपेच्छानुवृत्तीच्छा। इयमनुवृत्तिः, उत्तरकालिकविविदिषा इष्टसाधनमिति ज्ञानाधीना। तज्ज्ञानञ्च वेदनमिष्टं तत्साधनमियमिति ज्ञानरूपम्। वेदने इष्टत्वं च वेदनविषयकेच्छायाः प्रागेव स्थितत्वे स्यात्। वेदनानुवृत्तीच्छाप्रयुक्तत्वाच्च विविदिषानुवृत्तीच्छायाः वेदनानुवृत्तीच्छाया उक्तरीत्या सिद्धतया विविदिषानुवृत्तीच्छायाः यज्ञादिनोत्पादनवैयर्थ्यमपि। तस्मात् विविदिषन्तीति वाक्ये विविदिषाया नोद्देश्यत्वम्। सन्प्रत्ययरहितवाक्यैकरूप्यायाप्ययमर्थ इत्याह ज्ञानार्थमिति। 'कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते', 'इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः', 'क्रियावानेष ब्रह्मविदां वरिष्ठः' इत्यादिरन्यः कर्मविधिः ज्ञानोद्देश्यक एवेति । अथ सन्प्रयोगवैयर्थ्यं परिहरति निध्यानेति । 'निदिध्यासितव्यः' इत्यत्र ध्यानस्यैव विधेयत्वात् सन्प्रत्ययः किमर्थः । अनुष्ठानकाले ध्यानस्य प्रियत्वं ज्ञापयित्वा प्ररोचनार्थमिति चेत्–तुल्यमिहापि । किञ्च स्वर्गकाम इत्यादौ स्वर्गस्योद्देश्यत्वमिवेह वेदनस्योद्देश्यत्वमप्रियत्वं सना ज्ञाप्यम्।

भूषन्वं सिद्धं शास्त्रस्य । तर्हि, 'विविदिषन्ति' इत्यस्य सन्प्रयोगस्य का गतिरित्याशङ्क्य, 'निदिध्या-सितव्यः' इति न्यायमतिदिशति—निध्यानन्यायत इति । अयमर्थः—यथा, 'निदिध्यासितव्यः' इति ध्याने सन्प्रयोगो विधेयस्य ध्यानस्येष्टतामाह ; न पुनरिच्छाया विधेयत्वम्—तद्वदत्रापि 'विविदिषन्ति' इतीच्छाया न विधेयत्वम् ; इच्छाविषयत्वेन ज्ञानस्य प्राप्यत्वमुच्यत इति सुसङ्ग-तमेतत् ॥ ४०७ ॥ इति सर्वापेक्षाधिकरणम् ॥ ११३ ॥

## ११४ ॥ अथ शमदमाद्यधिकरणम् ॥ ३-४-६ ॥

सूत्रम्—शमदमाद्युपेतस्स्यात् तथाऽपि तु तद्विधेस्तदङ्गतया तेषामप्यवश्यानुष्ठेयत्वात् ॥ २७ ॥

(४०८) यज्ञादिव्यापृतत्वादनिभृतकरणे सर्वकालं गृहस्थे

शान्त्यादीनामयोगात् तदितरविषयास्ते गुणा इत्ययुक्तम् ।

प्रव्रज्यादिस्थितानामपि तदुपधिकानेकधर्मप्रवृत्तेः ;

तत् सर्वं सह्यते चेत् ; सह तदपि ; फलं युञ्जनश्चात्र तुल्यम् ॥ १६ ॥

अत्र सङ्गतिर्भाष्य एव सुव्यक्तमुच्यते, 'गृहस्थस्य शमदमादीन्यप्यनुष्ठेयानि, उत नेति चिन्तायाम्' इति। तदर्थविचारस्तु—किं विद्यानिष्ठस्य गृहस्थस्य शमदमादीन्युपादेयानि, उत नेति । किं यज्ञादीनां शमदमादीनाञ्च विरोधोऽस्ति, उत नेति। किमत्र विधीयमाना करणव्यापारोपरमरूपा शान्तिर्यज्ञादि-व्यतिरिक्तव्यापारशान्तिः, उत सर्वव्यापारशान्तिः। अत्र पूर्वपक्षमुपन्यस्य निराकरोति—यज्ञादीति। अयं किल पूर्वपक्षसिद्धान्तसंग्रहः—यज्ञादिकर्मणां करणव्यापाररूपत्वात् शमादीनां तदुपरमत्वाच्च गृहस्थे शमदमादीनामभाव इति पूर्वः पक्षः । तर्हि प्रव्रज्याविनिष्ठेष्वपि तत्तदाश्रमनियततत्तद्व्या-पारभूयस्त्वात् तत्रापि शमदमादिर्न स्यात्। तत्र विहितव्यतिरिक्तविषयत्वे शमदमादिरूपस्योपर-मस्योक्तेः, गृहस्थेऽपि शमदमादिर्विहितव्यतिरिक्तविषयव्यापारोपरम इति समः समाधिरिति

---

इदमप्यत्र बोध्यम्—यज्ञेनेत्यादिकारकाणां सन्प्रत्ययप्रकृतिभूतधात्वर्थ एवान्वयो व्युत्पत्तिसिद्धः ; न तु सन्प्रत्ययार्थे । तथा व्युत्पत्तिसत्त्वे इच्छां प्रति मनसः इष्टसाधनताज्ञानादेश्च कारणत्वात्, अश्वेन मनसा जिगमिषति, इष्टसाधनताज्ञानेन जिगमिषति इत्यादिप्रयोगप्रसंगः । अश्वस्य गमन इव मनसो जिगमिषायामन्वयसंभवात् । तस्मात् न सन्नर्थे कारकान्वयः । अतः सन्प्रत्ययार्थान्वयप्रत्याशाया नैव प्रसक्तिः । विस्तरोऽस्मत्परमार्थभूषणे । अयमर्थः 406 श्लोकचिन्तामण्यन्तिमवाक्यतोऽपि सभ्यूह्यः । अपि च विद्याङ्गत्वं प्रथमाधिकरणे प्रतिष्ठापितवान् सूत्रकार. कथमत्राकाण्डे विविदिषार्थत्वं वक्ष्यति ॥ श्लोक द्वयं तत्पूर्वश्लोकचतुर्थपादशेषत्वात् प्रासंगिकम्। तत् सिद्धं सर्वथा गृहस्थेषु यज्ञाद्यपेक्षा विद्येति ॥४०७॥

१६. यज्ञेति। यज्ञादिषु व्यापृतत्वात् सर्वदा अनिभृतकरणे अनिर्व्यापारकरणकलेबरे गृहस्थे व्यापारसामान्याभावरूपाणां शान्त्यादीनामयोगात् शमादयो गुणा गृहस्थेतरविषयाः स्युरिति पूर्वपक्ष । प्रव्रज्येति। संन्यासब्रह्मचर्यादिषु आश्रमेषु स्थितानामपि तत्तदाश्रमोपधिकधर्माणां लौकिकवैदिकानां सत्त्वात् तत्रापि शान्त्याद्ययोगादित्यर्थः। तत् सर्वं सह्यते चेदिति । प्रव्रज्यादिमतोऽपेक्षितमवर्जनीयं यत् तत् कर्म प्रसह्यम् ; शमादिस्तदितरविषय इति चेदित्यर्थः । सह तदपि=गृहस्थस्यावर्जनीयमनिषिद्धं कर्मापि सहस्व सहेति परस्मैपदि लोडन्तम् ; प्रयोगप्राचुर्यात् साधु । ननु संन्यासी यत्किमपि कुर्वन् निष्काम एव

सिद्धान्तः। शब्दान्वयस्तु—यज्ञादिव्यापृतत्वात् सर्वकालमनिभृतकरणे गृहस्थे शान्त्यादीनामयुक्तत्वात् गृहस्थव्यावृत्तविषयास्ते शान्त्यादयो गुणा इत्ययुक्तम्। सन्न्यासाश्रमस्थितानामपि तत्तदाश्रमोचितानेकधर्मप्रवृत्तेः॥ विधिबलात् तत् सर्वं करणव्यापाररूपमपि सह्यते चेत्—सह तदपि=गृहस्थाश्रमादिप्रयुक्तं कर्मापि तुल्यन्यायेन सहस्व॥ तैः प्रव्रज्यादिनिष्ठैः फलसङ्गकर्तृत्वत्यागेनैव कर्मानुष्ठीयत इति चेत्—तत् गृहस्थेऽपि समानमिति न वैषम्यसिद्धिः॥ ४०८॥

(४०९) प्रज्ञातस्वापराधाः प्रभुमनुतपने लोकसिद्धैरुपायैः
आत्माहैरर्चयन्तः क्रमशमितरुषस्तस्य सेवां लभन्ते।
इत्थं नश्शास्त्रसिद्धैरिदमनिदमिति स्वाधिकारैर्विभक्तै-
र्निष्प्रत्यूहः प्रसादो निरुपधिसुहृदः श्रीधरस्याधिगम्यः॥ १७॥

इति शमदमाद्यधिकरणम्॥ ११४॥

पूर्वं भगवदपराधादिप्रसक्तानामधिकारिणां तदनुरूपप्रायश्चित्तरूपकर्मानुष्ठानेन भगवन्तं प्रसाद्य फलप्राप्तौ लोकदृष्टप्रक्रियया शिष्याणां विश्वासमातनोति—प्रज्ञातेति। लोके हि प्रज्ञातस्वापराधाः सेवकाः पश्चादनुतापे सति लोकसिद्धैरेव उपायैः स्वाधिकारानुरूपैरर्चयन्तः क्रमेण शमितरुषस्तस्य सेवाफलं लभन्ते। इत्थमस्माकमपि इदं कर्तव्यमिदमकर्तव्यमिति स्वाधिकारैः विभक्तैः कर्मभिर्निरुपधिसुहृदः श्रीधरस्य निष्प्रत्यूहः प्रसादस्तत्परैरध्यात्मविद्भिरधिगम्य इत्यन्वयः॥

इति शमदमाद्यधिकरणम्॥ ११४॥

---

कुर्यादित्यत्राह फलादीति। फलत्याग-कर्तृत्वत्याग-ममतात्यागपूर्वकमेव सर्वानुष्ठानं गृहस्थसंन्यासिसर्वनिवृत्तिधर्मसाधारणमिति। एतदुक्तं भवति–शमदमादिशब्दानां व्यापारोपरमार्थकत्वेऽपि न सर्वव्यापारोपरमोऽर्थः अनेकपदवैयर्थ्यात्। अशक्यत्वाच्च। तत्र विशेषापेक्षायां निषिद्धव्यापाराभावस्य तत्तदर्थनया, गृहस्थेऽपि शमादिस्थितिरुपपन्नेति॥ ४०८॥

१७. नन्वेवं गृहस्थानां प्रायः शमादिभङ्गादङ्गवैकल्यात् भक्तिवैगुण्यमेव स्यादित्यत्र संन्यासादिसर्वसाधारण्येन समाधानं स्थितमाह प्रज्ञातेति। ननु प्रज्ञातस्वापराधा इत्युक्त्या अपराधचरणकाले तदज्ञानमिति गम्यते। न च भक्तानां प्रामादिकविषये प्रायश्चित्तमस्तीति चेत्–नेदं पूर्वार्धं भक्तविषयम्; किंतु लौकिकसेवकविषयम्। उत्तरार्धे एतद्ग्रहणेऽपि इदम् अपराधत्वाज्ञानेन बुद्धिपूर्वं कृतानां पश्चादपराधत्वज्ञानरूपम्; अपराधत्वेन बुद्ध्वा कृतानामपि कालदैर्घ्येण विस्मृतानां पुनः कथञ्चित् स्मरणे जाते तत्परिशीलनरूपम्; अविस्मृतानामप्यनुतापावधि स्मरणानुवृत्तिरूपञ्च। अनादिसंचितपुण्यपापरूपापराधाः सन्तीति शास्त्रतः प्रज्ञाय तन्निवृत्तये भक्तिप्रपत्त्यन्यतरानुष्ठानाच्च प्रज्ञातस्वापराधता सर्वत्र। प्रभुं राजानम्। क्रमशमितरुषः क्रमेण प्रशमिता स्वविषये प्रभुगता रुट् यैस्ते। सेवां प्रसन्नेन प्रभुणाऽनुज्ञाताम्। इत्थम् एतद्वत्। नः श्रीधरसेवालिप्सूनाम्। अधिगम्य इत्यत्रान्वयः। लोकसिद्धैरित्यस्य स्थानेऽत्र शास्त्रसिद्धैरिति। ईश्वर-तत्सेवा-सेवकस्वरूपाणामपि शास्त्रैकसिद्धत्वात्। स्वाधिकारैः स्वस्वाधिकारभेदेन इदं कर्तव्यम्, नेदमिति विभक्तैः प्रायश्चित्तरूपैर्धर्मैः प्रसादः रोषशमनम्; स्वामित्वात् निरुपाधिकसुहृत्त्वात् श्रीसमेतत्वाच्च तस्य निष्प्रत्यूहता॥ ४०९॥ इति शमदमाद्यधिकरणम्॥

## ११५ ॥ अथ सर्वान्नानुमत्यधिकरणम् ॥ ३-४-७ ॥

सूत्रम्—सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ अबाधाच्च ॥ अपि स्मर्यते ॥ शब्दश्चातोऽकामकारे ॥ २८—३१ ॥

(४१०) आहारस्य व्यवस्था न भवति वचनात् प्राणविद्याधिकर्तुः
सामान्यस्थो निषेधो बलवति हि विधौ संकुचेदित्ययुक्तम् ।
अङ्गत्वेनाविधेः स्यादनुमतिवचनं प्राणभङ्गप्रसङ्गे
पश्यैतत् प्राणनिष्ठादधिकमहिमनि ब्रह्मनिष्ठेऽप्यु(षु)षस्तौ ॥ १८ ॥

इति सर्वान्नानुमत्यधिकरणम् ॥ ११५ ॥

ब्रह्मविदां शमदमादयोऽनुष्ठेया इत्युक्तम् । तत्र भोजननियतिरूपशमविशेषोऽस्ति, नेति चिन्त्यत इति सङ्गतिः । तदर्थं विचारस्तु—किं प्राणविदः सर्वान्नानुमतिः सर्वदा, उत प्राणसंशयापत्तौ । किं ब्रह्मविद उषस्तेः प्राणसंशये सति उच्छिष्टान्नभक्षणदर्शनं प्राणविदः सर्वान्नानुमतेरापद्विषयत्वमवगमयति, नेति । अत्राह पूर्वपक्षी—वचनात् प्रवृत्तिः, वचनान्निवृत्तिरिति हि लोकसिद्धोऽयं न्यायः सर्वैरप्यनतिलङ्घनीय एव । प्राणविद्यानिष्ठे हि सर्वान्नयोग्यत्वमुच्यते । तेन निषिद्धभक्षणनिषेधः प्राणविद्यानिष्ठव्यतिरिक्तविषय एव । यथा, न हिंस्यादित्यादौ सामान्यनिषेधः आलभेतेति विहितव्यतिरिक्तविषय इति निर्णीयते, तद्वदेवेति । इमं पूर्वपक्षमाह—आहारस्येत्यादिना । अनूद्य प्रतिक्षिपति—अयुक्तमिति । अयुक्तत्वमेवोपपादयति—अङ्गत्वेनेति । प्राणविद्यायां सर्वान्नभक्षणवचनं विद्याङ्गत्वेन विधानाभावात् प्राणात्ययप्रसङ्गे तदनुमतिवचनमात्रमेव । तदिदं सूत्रकार एव साक्षात् प्राह—'सर्वान्नानुमतिश्च' इति । एतस्य प्राणविद्यानिष्ठस्य सर्वान्नानुमतिवचनं प्राणात्ययविषय इत्युपपादयितुं प्राणनिष्ठादधिकमहिमनि ब्रह्मनिष्ठेऽप्युषस्तौ प्राणात्ययविषयत्वेनैव दर्शनात् कैमुत्यन्यायेनोपपादयति—पश्येति । शब्दान्वयस्तु—प्राणविद्याधिकर्तुर्वचनादाहारस्य व्यवस्था न भवति ।

---

१८ शमादिकं निषिद्धभक्षणव्यतिरिक्तविषयकम्; विद्वद्विषये तदनुमतौ प्रमाणदर्शनात्; प्राणविद एव तदनुमतौ इष्टायां तदतिशयिते ब्रह्मविदि तदनुमतौ कः संदेह इति शङ्कायां प्रवृत्तमधिकरणं दर्शयति आहारस्येति । मुख्यप्राणविद्यामनुतिष्ठन् आहारे व्यवस्था न । 'न ह वा अस्यानन्नं जग्धं भवति', 'न ह वा एवंविदि किञ्चिदनन्नं भवति' इति सर्वभक्षकत्वविधौ बलवति सति सामान्यस्थः विद्वनिष्ठतदितरोभयसाधारण्येन स्थितो हि, 'न भक्षयेत्' इति तन्निषेधः संकुचेत् अविद्वद्विषयः स्यादिति पूर्वपक्षं । निरस्यति इत्ययुक्तमिति । सूत्रे अनुमतिपदसूचितयुक्तिरेवात्र प्रधानभूता । उषस्तिवचनदर्शनं तु अभ्युच्चयमात्रमित्याशयेन हेतुमाह अङ्गत्वेनाविधेरिति । उपात्तं वाक्यं न सर्वभक्षविधायकम्, यत् जग्धं तदनन्नम् अभक्ष्यं न भवति इति भक्षणानुमतेरेव दर्शनात् । न च सर्वभक्षणं विद्याङ्गत्वेन विधातुं शक्यम् । बहूनां स्वयमेव त्यागात् । भोक्तुमभिमतानामपि सर्वेषां तदशक्तेः । अतस्तत्र यत् यदा भोजनकर्मीभूतम् तदन्नमेवेत्युच्यते । शक्यस्य च निषिद्ध भोज्यतया प्रसक्तं प्राणसंशयकाल एव । नन्वस्य विद्वदविद्वत्सर्वसाधारण्यात् अत्र को विशेष इति चेत्—प्राणमाहात्म्यमविदुषामपि प्राणसंशये सर्वान्नानुमतौ विद्यानुष्ठानार्थप्राणधारणप्रवृत्तविषये कः संदेह इति प्रशंसैव । अन्यथा पुरुषार्थनिषेधान्तर

सामान्यमात्रेण प्रवृत्तः पुनः अन्नभोजनभोजननिषेधो बलाद्विधिदर्शनेन संकुचेदेवेत्ययुक्तम्—प्राण विद्याङ्गत्वेन विधानाभावात्। प्राणविदोऽधिकमाहात्म्यस्य युक्तत्वपि, 'न वा अजीविष्यम्' इति प्राणभङ्गप्रसङ्गे—प्राणात्ययप्रसङ्गे निषिद्धभक्षणदर्शनात् प्राणविद्यायां केवलमर्वान्नभक्षणानुमति-वचनमापद्विषयमिति कैमुत्यन्यायः सिद्धम् ॥ ४१० ॥ इति सर्वान्नानुमत्यधिकरणम् ॥ ११५ ॥

११६ ॥ अथ विहितत्वाधिकरणम् ॥ ३-४-८ ॥

सूत्रम्—'विहितत्वाच्चाश्रमकर्मापि ॥ सहकारित्वेन च ॥ सर्वथाऽपि त एवोभयलिङ्गात् ॥ अनभिभवञ्च दर्शयति ॥ ३२—३५ ॥

(४११) वर्णादेः कर्मणां हि श्रुतिभिरभिदधे ब्रह्मविद्याङ्गभावः
तस्माद्ब्रह्मनिष्ठे तदननुसरणात् स्वैरितैवास्तु; मैवम् ।
नित्यत्वस्यापि सिद्धेस्तदुचितविनियुक्त्यन्यभावानुसारात्
तच्च काम्याग्निहोत्रादिवदिह परविन्नित्यवर्गेऽपि योज्यम् ॥ १९ ॥

इति विहितत्वाधिकरणम् ॥ ११६ ॥

पूर्वत्र सङ्गतिर्भवेत्, 'यज्ञादिकर्माङ्गिका ब्रह्मविद्येत्युक्तम्। तानि च यज्ञादीनि कर्माण्यमुमुक्षुणा केवलाश्रमिणाऽप्यनुष्ठेयानि, उत नेति चिन्तायाम्' इति। तदर्थविचारस्तु— किं विद्याङ्गभूतान्याश्रमकर्माणि केवलाश्रमिणाऽप्यनुष्ठेयानि, उत नेति। किमेषां विद्याङ्गत्वे केवलाश्रमाङ्गत्वं सम्भवति, नेति। किं केवलाश्रमाङ्गत्वे नित्यानित्यसंयोगविरोधः प्रसज्यते, नेति। अत्र पूर्वपक्षमनुवदति—वर्णादेरिति। 'यज्ञेन' इत्यादिवाक्येन वर्णादेः कर्मणो ब्रह्मविद्याङ्गभावोऽभिदधे। तस्माद् अब्रह्मनिष्ठ

इव नरकहेतुप्रत्यवायाभावेऽपि, 'नाविरतोदुश्चरितात्' इति उपासनार्थं निषेधात् तामसान्नस्य प्राणसङ्कटे भक्षितस्यापि सत्त्वाशुद्धिहेतुत्वाच्च प्राणविषयध्यानुस्मृतिविच्छेदशंका स्यात्। अत इयं विदुषोऽपि प्राणात्यये स्थिता सर्वान्नानुमतिरेव। प्राणविदि निषिद्धभोजनस्य पापहेतुत्वाभावे ब्रह्मविदि कैमुत्येन तत्सिद्धिरिति पूर्वपक्षिणो यद् हृद्गतम्, तत्समाधानाय ब्रह्मविद एव प्राणसंशयातिरिक्तावसरे तद्भोजनस्य दोषहेतुत्वे सति कैमुत्येन प्राणविद्यपि दोष इति वक्तुं तद्दर्शनादिति सौत्रपदम्। तदर्थमाह पश्येति। अपीति पाठः। एतदिति द्वितीयान्तम्। हीति पाठे प्रथमान्तम्। 'एतत् प्राणात्यय एवान्नभक्षणं हि उषस्तौ; पश्य' इति पश्य मृगो धावतीतिवत् प्रयोगः। न चेद्दीर्घादिश्रुतेर्दोषासनोपदेष्टुर्ब्रह्मविदत्वे किं मानमिति शंक्यम्; तस्याप्युपासनस्य ब्रह्मोपासनाङ्गभूतकर्माङ्गाश्रितत्वात्। तेन तत्र जगत्कारणप्राणरूपपरमात्मदृष्टेरेवोपदेशाच्च। उषस्तकहोलान्तर्गतेन उषस्तेनास्योषस्तेरेवये तु ब्रह्मविदत्वं सुतराम् ॥४१०॥

१९. वर्णादेरिति। वर्णादेः कर्मणां वर्णाश्रमक्रियमाणानां सर्वेषां कर्मणां ब्रह्मविद्यां प्रति अङ्गत्वं श्रुतिभिरभिहितं हि। संन्यासिगृहस्थाधिकरणयोरत्रैवैतत्स्थापनात्। एवञ्च तत्र यानि काम्यानि कर्माणि, तेषां तत्तत्फलार्थमिव विद्यार्थमपि विनियोगात् विद्यार्थमिव फलापेक्षायां विद्यार्थत्वं विनाऽप्यनुष्ठानं संभाव्यते। यानि तु यावज्जीवमग्निहोत्रं जुहोतीत्येवं नित्यनैमित्तिकानि, तेषां विद्यार्थमेव विनियोगादन्यदाऽनुष्ठानस्य न प्रसक्तिः। आप्रयाणादनुवर्तनीयमवत्यर्थतयैव नित्यं तेषामनुष्ठानोक्तिसंभवात् विद्यावैगुण्यपरिहारार्थमनुष्ठानात्। अकरणे पुरुषस्य प्रत्यवायकल्पने मानाभावात्। यावज्जीवादिवाक्यस्य अवत्यर्थनित्यानुष्ठान-

ब्रह्मविद्याऽभावेन ब्रह्मविद्याङ्गकर्माननुसरणात् स्वैरित्वमेवास्तु। अथोत्तरम्-नैवमिति। तत्र हेतुमाह-नित्यत्वस्येति। इत्थं किल तान्त्रिकमर्यादा—यानि कर्माण्येकत्र विनियुज्यन्ते, तान्यन्यत्रापि विधिना विनियुक्तानि चेत्, विनियोगपृथक्त्वादेवोभयत्रान्वयसिद्धिरिति। विनियुक्त्यन्यभावानुसारात्=विनियुक्त्यन्तरादित्यर्थः। अत्र चानुष्ठानं तन्त्रमेव भवति। यत्र हि देशकालाद्यैक्येन पृथगनुष्ठानं कर्तुं न शक्यते, तत्र तन्त्रेणानुष्ठानमिति तान्त्रिकप्रक्रिया। उक्तार्थे सम्प्रतिपन्नदृष्टान्तमाह—काम्येति। काम्याग्निहोत्रमनुष्ठीयमानं नित्यसिद्धिमपि करोतीति हि मर्यादा। एतच्च परविदां नित्यवर्गेऽपि योज्यमित्याह—इहेति। अध्यात्मविदां नित्यानुष्ठानं हि ब्रह्मविद्याङ्गभावेन तत्सिद्धिमपि तन्त्रेण करोतीत्यर्थः॥ ४११॥ इति विहितत्वाधिकरणम्॥ ११६॥

११७॥ अथ विधुराधिकरणम्॥ ३-४-९॥

सूत्रम्—अन्तरा चापि तु तद्दृष्टेः॥ अपि स्मर्यते॥ विशेषानुग्रहश्च॥ अतस्त्वितरज्ज्यायो लिङ्गाच्च॥ ३६—३९॥

(४१२) दारालाभे विरक्तेर्प्रदिमनि च भवेदन्तरेणाश्रमान् यः
तस्मिन्निश्शेषधर्मत्यजि भवतु कथं ब्रह्मविद्येति चेन्न।
सामान्यैर्वर्णधर्मैर्गुणनियतियुतैः सा हि तत्रापि साङ्गा;
भीष्मादौ दृष्टमेतत्; भवति तु वृषले सत्यभावादभावः॥ २०॥

इति विधुराधिकरणम्॥ ११७॥

अत्र भाष्ये सङ्गतिरुक्ता, 'चतुर्णामाश्रमिणां ब्रह्मविद्यायामधिकारोऽस्ति, विद्यासहकारिण आश्रमधर्मा इति चोक्तम्। ये पुनराश्रमान् अन्तरा वर्तन्ते विधुरादयः, तेषां ब्रह्मविद्यायामधिकारोऽस्ति,

---

परत्वाभावे अग्निहोत्रादेर्भक्त्यगत्वानित्यत्वे सति यावज्जीवविधिना नित्यत्वमपीति एकत्र नित्यत्वानित्यत्वोभयापत्तेः। अन्यथा नित्यानित्याग्निहोत्रभेदापत्तिः। तस्मादभेदात् अविदुषां न वर्णाश्रमधर्मप्रसक्तिरिति स्वैरत्वैव=स्वेच्छया लौकिकमात्रकरणम्। भक्त्यर्थापेक्षितफलान्तरार्थैर्यत्किञ्चिद्वैदिककर्मानुष्ठानमपि वेति। निरस्यति नैवमिति। कर्मकाण्डे विदुषामुपर्युक्तलेशस्याप्यभावात् विद्योद्देशेन विध्ययोगात् जीवने निमित्ते कर्मविधौ अकरणे प्रत्यवाय एव प्रथमोपस्थितो भवतीति तदुचितस्य=वर्णाश्रमकर्मत्वोचितस्य विनियोगपृथक्त्वस्य यावज्जीवादिवाक्यगतस्यानुसारेण नित्यत्वस्यापि सिद्धेर्नैवमित्यर्थः। तर्हि द्विरनुष्ठानापत्तिरित्यत्राह तन्त्रमिति। तन्त्रं सकृदनुष्ठानम्। अविदुषां हि कदाचित् स्वर्गाद्यर्थाग्निहोत्रानुष्ठाने तेनैव कृतार्थत्वात् नित्याग्निहोत्रं तस्मिन् दिने न पृथगनुष्ठीयते, एवं काम्याग्निहोत्रनित्याग्निहोत्रयोरिव परविदः परमात्मोपासिनो भक्त्यर्थाश्रमार्थनित्यकर्मवर्गेऽपि तन्त्रं योजनीयम्। भक्त्यर्थानुष्ठानेरेव नित्यानुष्ठानस्यापि सिद्धिरिति यावत्। नित्येति पदेन—नित्यकर्मबुद्ध्याऽनुष्ठानेऽपि भगवत्प्रीत्यर्थं सात्त्विकत्यागपूर्वकं क्रियमाणत्वाविशेषात् सहकारित्वेनानुष्ठानमपि सिद्ध्यतीति ज्ञापितम्। एवं नित्यस्य भक्त्यर्थकर्मणश्च पापापनोदनरूपफलैक्याच्च तन्त्रमित्यपि बोध्यम्। इदम् 'अनभिसन्धाय दर्शयति' इति सूत्रोक्तम्॥४११॥

२०. यत् यस्य वर्णाश्रमानुबन्धप्राप्तं कर्म, तत् स भक्त्यङ्गतयाऽनुष्ठायोपास्ते 'निष्पत्स्यते' इति एतावता सिद्धम्। तर्हि विधुरे=मृतभार्ये गृहस्थाश्रमधर्मस्यान्याश्रमधर्मस्य चाभावात् विद्या न स्यादिति

न वेति विशये' इति। तदर्थविचारस्तु—किं विधुरादीनां ब्रह्मविद्यायामधिकारोऽस्ति, नेति। किं तेषां साङ्गब्रह्मविद्योपसंहारसामर्थ्यमस्ति, नेति। किमाश्रमसाधारणधर्माङ्गिकापि विद्या सम्भवति, नेति। 'तपसा ब्रह्मचर्येण' इत्यादिविनियोगोपबृंहितं रैक्वादीनां विद्यानिष्ठत्वदर्शनं विद्यायाः साधारणधर्माङ्गकत्वमवगमयति, नेति। अत्र पूर्वपक्षमाह—दारालाभ इति। दारलाभाभावे परिव्राजकाश्रमप्राप्त्यनुरूपविरक्त्यभावे च मध्ये तिष्ठन् अन्तरेणाश्रमान् यो भवति = आश्रमशून्यो भवति य इत्यर्थः। तस्मिन्नधिकाराभावात् निश्शेषकर्मानुष्ठानशून्ये कथं भवति ब्रह्मविद्याधिकार इत्याशङ्का। तां निराकरोति—नेति। मा भूदाश्रमधर्मः। सामान्यैरेव वर्णधर्मैः फलसङ्गकर्तृत्वादिपरित्यागात्मगुणनियतियुतैः सा ब्रह्मविद्या तस्मिन्नधिकारिणि साङ्गा भवत्येव। न केवलमस्माभिः परिकल्प्यते; किंतु गाङ्गेयादिषु दृष्टमेतदित्याह—भीष्मादाविति। तर्हि शूद्रेऽप्यधिकारः किं न स्यादित्याशङ्क्याह भवति त्विति। अपशूद्राधिकरणे शूद्राधिकारनिषेधस्य दृष्टत्वात् तस्य ब्रह्मविद्यायामनधिकार एव। विधुरादीनां वेदाध्ययनादिविद्यानुष्ठानौपयिकबहुधर्मदर्शनाच्चाधिकारोऽस्तीति। न शूद्रस्य तादृशं कर्म; बहुप्रमाणनिषेधादिति भावः ॥ ४१२ ॥ इति विधुराधिकरणम् ॥ ११७ ॥

११८ ॥ अथ तद्भूताधिकरणम् ॥ ३-४-१० ॥

सूत्रम्—तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात् तद्रूपाभावेभ्यः ॥ न चाऽऽधिकारिकमपि पतनानुमानात् तदयोगात् ॥ उपपूर्वमपीत्येके भावमशनवत् तदुक्तम् ॥ बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ४०-४३ ॥

(४१३) आरूढो नैष्ठिकादित्रयमथ पतितस्तत्परावर्तनात् यः
तत्रापि ब्रह्मविद्या भवतु सहकृता तद्दशार्हैः स्वधर्मैः।
मैवम्; यद्यप्यभीच्छन्त्युपपतनमिदं शोधकश्चास्त्यनेकं
सर्वार्हं कीर्तनाद्यं; तदपि तदुचितो नेत्र तादृङ्निषेधात् ॥ २१ ॥

अत्र भाष्य एव पूर्वपक्षोत्थानक्रमेण सङ्गतिर्दर्शिता, 'नैष्ठिकवैखानसपरिव्राजकाश्रमेभ्यः

---

शङ्कते दारेति। मृतभार्येऽपि, "अनाश्रमी न तिष्ठेत्तु क्षणमेकमपि द्विजः" इति वचनानुसारिणि तदैव पुनर्दारसंग्रहस्य संन्यासग्रहणस्य वा संभवात् कथमनाश्रमित्वमित्यत्र तत्कारणमाह दारेति। दारालाभे—परिणयार्हकन्यानधिगमे, विरक्तेर्म्रदिमनि=(वैराग्यस्य मृदुत्वे) संन्यासापादकवैराग्याभावे यः आश्रमान् अन्तरेण=आश्रमसंबन्धं विना वर्तेत, तस्मिन् विधुरे तत्तदाश्रमधर्मसामान्यहीने अङ्गाभावात् अङ्गिभूता ब्रह्मविद्या कथं भवतु। न स्यादित्यर्थः। कथमिति क्षेपे; न तु प्रश्नमात्रे। अत एव, नेति खण्डनारम्भः। विधुरे यावन्तो धर्माः सन्ति, तावन्त एव तद्विषयेऽलं यथावदनुष्ठाने इति मत्याह सामान्यैरिति न हि आश्रमलोपेऽपि वर्णलोपः। धर्माणां गुणनियतिः सत्त्वगुणनैयत्यम्=सात्त्विकत्वम्, सात्त्विकत्यागयुक्तैरिति यावत्। तत्रापि विधुरविषयेऽपि। तद्दृष्टेरिति सौत्रं पदं व्याचष्टे भीष्मेति। भीष्मसंवर्तादिविषये वक्तव्यं भाष्यार्थदर्पणे द्रष्टव्यम्। एवं तर्हि शूद्रोऽपि स्ववर्णधर्मैरेव भक्तिं वर्धयेदिति तत्रापि ब्रह्मविद्या स्यादित्यत्राह भवतिस्त्विति। गत्यभावात् वेदाध्ययनजनितज्ञानाभावात् विशिष्य निषेधाच्च ब्रह्मविद्यारूपधर्माभावः। न तु तद्धर्माणामङ्गत्वासंभवमूला तत्र तदभावकल्पनेति ॥ ४१२ ॥

२१. त्रैवर्णिकत्वेऽपि ब्रह्मविद्यानधिकार एव केषाञ्चिदित्याह आरूढ इति। नैष्ठिकशब्दः

प्रच्युतानामपि ब्रह्मविद्यायामधिकारोऽस्ति, नेति चिन्तायां विधुरादिवत् आश्रमकान्तैर्दानादिभिर्विद्यानुग्रहसम्भवादस्त्यधिकार इति प्राप्ते उच्यते' इति। तदर्थविचारस्तु—किं नैष्ठिकाद्याश्रमभ्रष्टानां ब्रह्मविद्याधिकारोऽस्ति, नेति। किमेषां साङ्गविद्योपसंहारसामर्थ्यमस्ति, नेति। किमेषां प्रायश्चित्तात् शुद्धिमत्त्वं सम्भवति, नेति। किं, 'यो ब्रह्मचारी स्त्रियमुपेयात्' इति विहितं प्रायश्चित्तं सर्वब्रह्मचारिविषयम्, उत नैष्ठिकभिन्नब्रह्मचारिविषयमिति। किं, 'प्रायश्चित्तं न पश्यामि' इति वचनं प्रायश्चित्तवचनस्य नैष्ठिकव्यतिरिक्तब्रह्मचारिविषयतामवगमयति, नेति। अत्र पूर्वपक्षमाह—आरूढ इति। नैष्ठिकादित्रयमारूढः सन्ननन्तरं तत्परावर्तनात् पतितो यः, तस्मिन्नपि ब्रह्मविद्या भवत्येव। तदर्हैः स्वधर्मैः सहकृता = सहकृतत्वादित्यर्थः। पूर्वपक्षं निराकरोति - मैवमिति। निराकरणहेतुमुपपादयति—यद्यपीत्यादिना। यद्यपि नैष्ठिकस्य भ्रष्टत्वमुपपातकान्तर्गतम्; न पुनर्महापातकम्। लोके च महापातकपर्यन्तसकलपापक्षयहेतुभूतं हरिकीर्तनस्तुतिनमस्कारादिकमितिहासपुराणादिप्रसिद्धम्। अथापि नैष्ठिकादिभ्रष्टो ब्रह्मविद्यायां नाधिकरोति, 'प्रायश्चित्तं न पश्यामि' इति साक्षादेव प्रायश्चित्तनिषेधवचनस्य स्फुटतरमुपलभ्यमानत्वात्। न हि वचनविरोधे न्यायः प्रभवति। तेनेदमुपपातकं वा महापातकं वा यत्किञ्चिदेव भवतु। अथापि न ब्रह्मविद्यायामधिकारः। तदिदमाह—तदपीति। तत्र हेतुमाह—तादृङ्निषेधादिति। अनधिकारित्वप्रतिपादकनिषेधवचनसामर्थ्यादित्यर्थः। यद्यपि हरिकीर्तनादिकं शोधकमस्ति, [तथापि?]तदपि तस्य सम्भाषणाद्यर्हतामेवापादयति न पुनर्ब्रह्मविद्याधिकारमिति भावः॥ ४१३॥

(४१४) प्रायश्चित्तं वदन्ति ह्युपपतनमहापातयोर्ब्रह्मयोगं
प्राप्ते पाते प्रमादाद् विदधति मुनयो योगिनां योगमेव।
तस्मादारूढपातेऽप्यधिकृतिरिति नाचोदनीयं हि शास्त्रं
यावज्जीवं तु तस्मिन्कृतिरिति नियमः सूत्रकाराद्यभीष्टः॥ २२॥

ननु, 'आपीठान्मौलिपर्यन्तं पश्यतः पुरुषोत्तमम्। पातकान्याशु नश्यन्ति किं पुनस्तूपपातकम्॥'

---

नैष्ठिकाश्रमपरः। आदिना वानप्रस्थ-संन्यासाश्रमोभयग्रहणम्। तदारूढः, अहमिहाऽऽश्रमे स्थास्यामीति यथावत्संकल्प्य तदन्यतमवान् जातः. तत्परावर्तनात् तदाश्रमत्यजनबुद्ध्या पतितः भ्रष्टो यः तस्मिन्नपि पतितत्वेऽपि तदर्हैः अहिंसासत्यवचनास्तेय-हरिस्तवनकीर्तनादिभिः सहकृता उपकृता ब्रह्मविद्या भवतु। न चायं पतितः; आश्रमभ्रंशस्योपपातके परिगणनात्। उपपातकस्य च प्रायश्चित्तापनोद्यतया ततस्तदधिकारसंभवादिति पूर्वपक्षः। निषेधति मैवमिति। यद्यपीति। पतित इत्येव प्रायो भाव्यते। उपपतनम् उपपातकरूपदोष एवेति केचिदिच्छन्ति। तदा शोधकं प्रायश्चित्तमस्त्येव संकीर्तनादिकं बहु। तदपि तथापि एषः कृतप्रायश्चित्तो न तदुचितः न ब्रह्मविद्याधिकारी। तादृङ्निषेधात्='प्रायश्चित्तं न पश्यामि येन शुध्येत् स आत्महा' इति आरूढपतितस्याऽऽत्मरक्षणरूपमोक्षोपायाधिकारापादनपर्यन्तहेतुप्रायश्चित्तवत्त्वनिषेधात्। नरकादिदुःखोत्पत्तेः सजातीयपदेतुदुर्वासनोत्पत्तेश्च वारणमात्रं स्यात् तद्विषयेऽनुमतेन प्रायश्चित्तेनेति॥ ४१३॥

२२. ननु प्रायश्चित्तं न पश्यामि इत्यस्यैवं सर्वथाऽनधिकारतात्पर्यकत्वे वचनान्तरविरोध इति शंकते प्रायश्चित्तमिति। "प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै। यानि तेषामशेषाणां कृष्णानुस्मरणं

इति भगवदवलोकनानुवृत्तिरेव महापातकोपपातकयोर्विनाशिकेत्युच्यते, एवं योग एव योगभ्रष्टस्य पापनिरासकत्वेन तत्रतत्र शास्त्रेषूपदिश्यते, तस्मात् कथं प्रायश्चित्ताभाव इत्याशङ्क्याह—प्रायश्चित्तमिति। अयमत्र शब्दान्वयः—उपपातकमहापातकयोर्ब्रह्मानुसन्धानमेव प्रायश्चित्तं वदन्ति। किञ्च योगिनो प्रमादात् प्राप्ते पाते योगमेव पुनः प्रायश्चित्तं वदन्ति मुनयः। तस्मादारूढपाते सत्यपि प्रायश्चित्तात् ब्रह्मविद्यायामधिकारोऽस्तीति न वक्तव्यम्। तत्र हेतुः—अचोदनीयं हि शास्त्रमिति। अपर्यनुयोज्या खलु शास्त्रगतिः। यत् यथा शास्त्रोक्तम्, तत् तथैवाङ्गीकर्तव्यम्। ननु भगवदनुसन्धानस्य सर्वपापहरत्वकथनमपि शास्त्रमेव। न ह्येकस्य शास्त्रस्य शास्त्रान्तरं परतन्त्रम्। दृष्टा ह्यजामिलादेर्बहुपापवृत्तस्यापि मुक्तिप्राप्तिः। तत् कथमुच्यते प्रायश्चित्तं नास्तीति—इत्याशङ्क्याह—यावज्जीवमिति। अजामिलादिवत् यावज्जीवं भगवदनुसन्धानमेव तादृशस्यापि पापस्य निष्कृतिरिति सूत्रकाराद्यभिप्रायः। उच्यते हि—'शुचिर्भवति संस्मृत्या स्नातो भवति कीर्तनात्। प्रणिपातेन पूतात्मा कृष्णस्यैते महागुणाः॥' इति। अतो भगवदनुसन्धानमामरणान्तिकं प्रायश्चित्तं तादृशानां पापानामित्यर्थः॥ ४१४॥

---

परम्' इति योगः उत्तमप्रायश्चित्ततया पराशरप्रशंसितः। 'आपीठान्मौलिपर्यन्तम्' इत्यादिकमपि स्मर्यते। अतः उपपातकविषय इव महापातकविषयेऽपि ब्रह्मविषयकयोगः प्रायश्चित्तमिति व्यक्तम्। वचनान्तरमाह प्राप्ते इति। "अपि चेत् पातकं किञ्चित् योगी कुर्यात् प्रमादतः। योगमेव निषेवेत नान्यं यत्नं समाचरेत्" इत्यत्र पातके सत्यपि योगो विहितोऽस्तीत्यर्थः। तस्मात् एतद्वचनबलात् आश्रमारूढस्य पातेऽपि परावृत्तावपि योगरूपप्रायश्चित्तस्यैव सत्त्वात् कथं योगानधिकार इति शंका। निरस्यति इति नेति। हेतुमाह अचोदनीयं हि शास्त्रमिति। 'बहिस्तूभयथाऽपि स्मृतेराचाराच्च' इति सूत्रकारो वचनाचारप्रदर्शनेनानधिकारे निर्भयं वहति। अतः शास्त्रोपरि आक्षेपो न कार्यः। वचनविरोधस्तु न। द्वितीयवचनं हि प्रमादिकस्य पापस्यालेपकत्वात् प्रायश्चित्तस्यानपेक्षितत्वात् योगं मोक्षार्थमनुवर्तयेदित्याहेति नैतत् बुद्धिपूर्वारूढपातरूपप्रकृतविषयानुकूलम्। प्रथमे तु शंसयते, योगे नियुज्यमानस्य कथं योगेऽनधिकार इति। यः संन्यासिप्रभृतिः श्रवणमनने समाप्य योगप्रारम्भदशायामस्ति, तस्य, 'पश्यतः पुरुषोत्तमम्'' इति दर्शनसमानाकारयोगसंपत्तिः कथम्। न चार्चायां सकृदेव दृश्यमानायां सर्वपातकविनाशः शास्त्रार्थः स्यात्। गुरुप्रायश्चित्तविलोपप्रसंगात्। तस्मादयुक्तस्यानधिकार एव। योगारूढस्य तु पश्चात् योगोऽनुमतोऽपि प्रायश्चित्तरूप एव; न तु मोक्षार्थः। तस्याधिकारसंपत्त्यनन्तरकार्यत्वात्। कतिचन दिनानि प्रायश्चित्तरूपेणानुष्ठाय पश्चादधिकृतो भवत्विति चेत्—यावज्जीवमनधिकारोक्त्या प्रायश्चित्तमेव यावज्जीवमनुवर्तेत इति मोक्षार्थयोगस्यास्मिन् जन्मनि विच्छेद एव। जन्मान्तरे तु अनुवर्तिष्यते। अधिकारभ्रंशानापादकदोषविषये तु नैष नियमः। अतैव जन्मन्यनुतिष्ठेत्। नन्वजामिलस्य तस्मिन्नेव जन्मनि योगानुष्ठानेन मुक्तिरुक्ता कथं घटत इति चेत्—तेनाप्यामरणं प्रायश्चित्तमेव कृतं स्यात्। मुक्त्युपायस्तु प्रागेव कश्चित् स्थितः स्यात्। यद्वा पूर्वमपरिचितयोगमार्गस्यापि कर्मठस्य गृहस्थस्य निषिद्धस्त्रीसेवनादिकं जातमपि न संवर्गमनाऽधिकारभ्रंशकमासीदिति, अधिकारसंपत्त्युपायविशेषाभिज्ञः स इति च कार्येणोन्नीयते। भगवद्दूतवृन्ददर्शनादिभाग्यसंपन्नव्यक्तिविशेषत्वं विलक्षणं स्यादिति॥४१४॥

(४१५) यो बालं हन्ति, यः स्त्रीं, शरणमुपगतं यश्च, यो वा कृतघ्नः,
प्रायश्चित्तैर्विशुद्धानपि जगदुरिमान् साधुसंसृष्ट्यनर्हान् ।
स्मृत्याचारानुसारादिह च गतिरियं दर्शिता सूत्रकारैः
शास्त्रं नः शासनीयं यदि भवति, तदा सम्प्लुतो धर्मसेतुः ॥ २३ ॥

उक्तमेवार्थं दृष्टान्तान्तरेणाप्युपपादयति—यो बालमित्यादिना । यो बालं हन्ति, यस्तु स्त्रियं हन्ति, यश्च वा शरणागतं हन्ति, यश्च कृतघ्नः, प्रायश्चित्तैर्विशुद्धानपि तानेतान् साधुसंसृष्ट्यनर्हान् जगदुः । स्मर्यते हि—

'शास्त्रेषु निष्कृतिर्दृष्टा महापातकिनामपि ।
शरणागतहन्तुस्तु न दृष्टा निष्कृतिः क्वचित् ॥' इति ।

तथा, 'कृतघ्ने नास्ति निष्कृतिः' इति । एवं बालस्त्रीनिधननिन्दावचनानि पाठ्यानि । इत्थं, वचनबलात् लोके च तादृशामुत्पथवृत्तीनामध्यात्मविद्भिरपरिग्रहाच्च सूत्रकारैर्दर्शितम् । किमर्थमिदं शास्त्रमेतादृशं निष्कृत्यभावप्रतिपादकं निष्ठुरवचनं वक्तीत्याशङ्क्याह—शास्त्रमिति । यदि शास्त्रं शासनीयं भवति, तर्हि पापप्रवणेषु शास्त्रस्य पारतन्त्र्यं स्यादेव । तत्र च सम्प्लुतो धर्मसेतुरिति—कृत्याकृत्यनियमाभावः स्यादिति कृतं विस्तरेण ॥ ४१५ ॥

(४१६) ब्रह्मांशत्वे समाने गुणविषमतया शुद्ध्यशुद्धिस्वभावैः
देहैर्योगादनुज्ञा परिहरणमपि प्रेक्षणस्पर्शनादेः ।
इत्येवं सूत्रितं प्राक् पुनरिह विविधाक्षेपसंक्षोभशान्त्यै
सम्यग्ज्ञातात्मनोऽपि स्वतनुमशुचिताचारता(तः) प्रत्यबोधि ॥ २४ ॥

इति तद्भूताधिकरणम् ॥ ११८ ॥

पूर्वमेव शास्त्रमर्यादानुल्लङ्घनेन वर्ज्यावर्ज्यविभागः प्रतिपादितः; किमर्थमिदं पुनः सूत्रकारेण प्रतिपाद्यत इत्याशङ्क्य प्रयोजनविशेषप्रतिपादनेन परिहरति—ब्रह्मांशत्व इति । अयमत्र शब्दान्वयः- 'भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्' इति श्रुत्यनुसारेण चेतनाचेतनयोः ब्रह्मांशत्वे समानेऽपि गुणविषमतया शुद्ध्यशुद्धिस्वभावैर्ब्राह्मणचण्डालादिदेहैर्योगात् प्रेक्षणस्पर्श-

---

२३. अन्यदृष्टान्तप्रदर्शनेनाप्युक्तमर्थं साधयति य इति । हन्ति इत्यस्य बालं स्त्रीम् उपगतम् इति त्रिष्वन्वयः । कृतघ्न इत्यत्र हन्तेः मारणादिरूपापकारार्थत्वात्, यो वा कृतमित्यनुक्त्वा कृतघ्न इति पृथक्करणम् । इमानिति सर्वयच्छब्दप्रतिसंबन्धि । न संवसेत् इत्यस्य न संभूय वसेत, न संसर्गं कुर्यादित्यर्थः । तदाह साधुसंसृष्ट्यनर्हानिति । संसृष्टिः=संसर्गः । स्मृतेराचाराच्चेति सूत्रसारणायाह स्मृत्याचारानुसारादिति । धर्मसेतुः संप्लुतः अनवरतजडजलाघातादितशैथिल्यः स्यात् । अधर्मजलाक्रमणेन धर्मसेतुर्मग्नः स्यात् ॥ ४१५ ॥

२४. नन्वंशाधिकरणे, 'अनुज्ञापरिहारौ देहसंबन्धात् ज्योतिरादिवत्'' इति सूत्रे सर्वेषां जीवानां ब्रह्मांशत्वादिना साम्येऽपि देहसंबन्धरूपोपाध्यायत्ततया तज्जनदर्शनस्पर्शनादौ शास्त्रस्य संमतिरसंमतिश्चोक्ता । तत एवास्योक्तमपि सिध्येदिति पौनरुक्त्यशङ्कायामाह ब्रह्मेति । गुणविषमता देहे सत्त्वरजस्तमो-

नादेरनुज्ञा परिहरणञ्च भवतीति प्रागेव सूत्रकारैरुक्तम्। तथापि पुनरिह विविधालेपकक्षोभशान्त्यै अलेपका मृषावादिपक्षमेवाश्रित्य: अनाश्रमित्वेन वर्तमाना:, कृत्य कृत्यनियमाभावेन वर्तमाना ब्रह्म-विद्यामभावधारिण: अकृत्यकरणकृत्याकरणकारिण:। अत्र विविधेति वचनं प्रच्छन्नानार्हाग्यवृत्तीनां परिग्रहार्थम्। अपरे पुनर्विष्णुभक्तिनाटकमाश्रित्य अलेपकवृत्त्यैव वर्तन्ते। एवं विविधालेपक-क्षोभशान्त्यै सम्यग्ज्ञातात्मनोऽपि प्रेक्षणस्पर्शनादेरनुज्ञा परिहरणं[च?] प्रत्यबोधि। अयमर्थ:— भगवच्छेषत्वेन सम्यग्ज्ञातात्मना तदाज्ञानुवर्तनमेव कर्तव्यम्। भगवदाज्ञा च श्रुतिस्मृती 'श्रुति: स्मृतिर्ममैवाऽऽज्ञा' इति भगवतैवोक्तत्वात्। तेन तत्त्वविदामेव विशेषत: स्वाधिकारानुरूपं कर्मानुष्ठानं कर्तव्यमिति॥ इति तद्भूताधिकरणम्॥ ११८॥

## ११९॥ अथ स्वाम्यधिकरणम्॥ ३-४-११॥

सूत्रम्—स्वामिन: फलश्रुतेरित्यात्रेय:॥ आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते॥ ४४, ४५॥

(४१७) उद्गीथादावुपास्तिर्भवति हि फलिना यज्वनैवात्र शक्या

तस्मात् तत्कर्तृकाऽसाविति यदि, न, परिक्रीतकर्माश्रयत्वात्।

ऋत्विक्याप्या यथाऽन्ये गुणफलविषयोऽनूद्यते चैवमेषा

शक्यत्वं न ह्यधिर्विधिबलनियते ते:) स्वामिमृत्यक्रमोऽत्र(मेण)॥ २५॥

इति स्वाम्यधिकरणम्॥ ११९॥

इदमधिकरणं प्रासङ्गिकम्। उपासनानुष्ठानानुष्ठातृविभागवत् अङ्गेषूद्गीथोपासनादेरनुष्ठानानुष्ठातृविभागचिन्ता क्रियत इति सङ्गति:। तदर्थं विचारस्तु—कर्माङ्गाश्रयाण्युद्गीथाद्युपासनानि किं यजमानकर्तृकाणि, उत ऋत्विक्कर्तृकत्वमिति। किं दहराद्युपासनानामिव फलेऽर्थित्वं न्यायतस्तुत गोदोहनादेरिवर्त्विक्कर्तृकत्वमिति। अत्र पूर्वपक्षी मन्यते—'शास्त्रफलं प्रयोक्तरि' इति न्यायेन य: फली स एव कर्तव्यशङ्काकरणीयम्। तथा चोद्गीथोपासनेऽपि फलिन एव यजमानस्य कर्तृत्वमङ्गी-कार्यम् यथा दहराद्युपासनेषु फलिन एवोपासनकर्तृत्वमिति। तदिदमाह—उद्गीथादाविति।

---

गुणतारतम्यम्। अत्र तु मनस्यपि सा विषमता। पौनरुक्त्यं परिहरति इहेति। स्वरूपमत्र ब्रह्म शतं पुरस्कृत्य प्राक् पृष्टम्। इह तु न केवलं तज्ज्ञानमात्रम्। किंतु योगानुष्ठानाधिकारसमृद्धनाऽपि यत्र, तत्रापि विधिनिषेधवश्यत्वं सर्वान्नानुमतिनिषेधेनापि दर्शितम्। अत्याश्रमित्वादिना विविधक्षोभक-बाहुल्यमवलोक्य सूत्रकारो वर्णाश्रमधर्मव्यवस्थापनव्यग्र: इदमुत्तमाधिकारिविषयेऽपि प्रतिष्ठापयतीति। आचारत इति पाठे परिहरणमित्यनुषञ्जनीयम्। समुचिताचारतेति पाठे प्रायश्चित्ततदभाववचनानुरोधेन अनुज्ञांशपरिहारांशरूपाचारबोधनं कृतमित्यर्थ:॥ ४१६॥

२५. कर्माणि कै: क्रियमाणानि उपासनाङ्गभावमर्हन्ति, के तत्रानधिकारिण इति चिन्तितम्। अथ कर्माङ्गभूतोद्गीथाद्याश्रितानि उपासनानि कैरनुष्ठेयानीति चिन्त्यते। तत्राऽऽत्रेयमतं पूर्वपक्षतया प्रथममुपन्यस्यते औडुलोमिमतेन सिद्धान्तयितुम्। उद्गीथादाविति। उक्तानामुपासनानां वृष्ट्यादि-तत्फलभोक्तृकर्तृकत्वं निर्विवादम्। 'शास्त्रफलं प्रयोक्तरि' इति न्यायादत्रापि तथैवास्तु इति आत्रेय:। कथं संदेह उदित इति चेत्—कर्माङ्गाश्रितानि कर्मकाण्डे ऋत्विक्संबन्धीन्येव दृष्टानि अत: पूर्वोक्त-

उद्गीथोपास्तिः फलिना यजमानेनैव भवति। ननु गोदोहनादौ फलित्वे सत्यपि यजमानेन न क्रियते ; तत् कथमित्याशङ्क्याह—शक्येति । गोदोहनादौ ऋत्विक्कर्तृके प्रणयने यजमानेन गोदोहनं प्रयोक्तुमेव न शक्यते । तेन तत्र ऋत्विक्कर्तृकत्वसिद्धिः । अत्र पुनरुद्गीथोपासने बुद्धिरूपत्वादुपासनस्य ऋत्विक्कर्तृकेऽप्युद्गीथे ह्युपासनं कर्तुं शक्यत इति विषमो दृष्टान्तः। एवं फलिकर्तृत्वौचित्यात् दृष्टान्तवैषम्याच्च यजमानकर्तृकत्वमेवेत्याह—तस्मादिति। उक्तमर्थं निराकरोति—नेति । तत्र हेतुमाह—परिक्रीतकर्माश्रयत्वादिति। दक्षिणाप्रदानेन परिक्रीत एवर्त्विक्। तत्कर्म चोद्गीथप्रयोगः। तदाश्रयश्चोपासनम् । अयमर्थः—साङ्गस्य यज्ञस्य निर्विघातानुष्ठानेन फलहेतुत्वसिद्ध्यर्थं परिक्रीत एवर्त्विक्। तत्र प्रतिबन्धनिवृत्तिर्येनोपासनेन भवति तदनुष्ठानमन्तरेण निर्विघ्नमेव कर्मफलं न सेत्स्यति । अतस्तत्र विघ्नोपशमनार्थमनुष्ठीयमानोपासनेऽपि ऋत्विक्कर्तृकत्वमेव स्यादिति । प्रतिज्ञातार्थे दृष्टान्तमाह—यथाऽन्य इति। यथा, 'गोदोहनेन पशुकामस्य प्रणयेत्' इत्यनुष्ठानेन तादात्विकसकलकर्मानुष्ठातृत्वमृत्विज एव। न चास्य विरुद्धपत्तिमात्रेणैतत् कल्प्यते। अपि तु श्रुतिमवलम्ब्य ब्रूमहे। एवमेव ह्येषा विद्याऽनूद्यते, 'यदेव विद्यया करोति' इति। उद्गीथे कर्तृत्वमृत्विज एव ; तत्र विद्ययेति सहपठितविद्याकर्तृत्वमपि तस्यैव प्रतीयते। न हि, 'चक्षुषा पश्यति देवदत्तः' इत्युक्ते चक्षुःप्रेरणं देवदत्तादन्यस्य भवति । एवं विद्याकर्तृत्वमृत्विज एव । ननु गोदोहनप्रयोगे ऋत्विजा कर्तुं शक्ये यजमानस्य कर्तुं शक्त्यभावादकर्तृत्वम् ; अत्र पुनर्यजमानस्योपासने शक्तिरस्तीति चेत्, नेत्याह—शक्यत्वमिति। न हि यस्य यत्र कर्तुं शक्तिरस्ति, तेन तत् प्रयोक्तव्यमिति नियमोऽस्ति। सर्वेषामपि ऋत्विजां सर्वानुष्ठाने शक्तिरस्तीत्यनुष्ठानसङ्करप्रसङ्गात् । अपितु श्रुतिरेव कर्तारं नियमयति । यस्य हि श्रुतिर्यत्र कर्तृत्वमाह, स एव तत् कर्तुमर्हतीति न्यायमार्गः। अत्र पुनः, 'यदेव विद्यया करोति' इत्युद्गीथप्रयोगे तदुपासने च कर्तृत्वमृत्विज एव श्रुतिर्दर्शयति । ऋत्विक्कर्तृत्वेनैव फलिकर्तृत्वमपि

---

न्यायो वा, समनन्तरप्रस्तुतो वेति । 'गोदोहनेन पशुकामस्य प्रणयेत्' इति विहितमपां प्रणयनमध्वर्युणा ऋत्विजैव कार्यम्। तदाश्रितश्च गोदोहनपात्रं यजमानकरस्थं न भवति। अन्यकरस्थेन तेन स्वयं प्रणयनस्याध्वर्युणा दुष्करत्वात्। न अत्र तथा उद्गीथादौ उद्गात्रादिना ऋत्विजा गीयमाने यजमानेन तद्विषयकोपासनं कर्तुमशक्यम् । न च विनिगमनाविरहः । फलित्वात्—फलभोक्तृत्वात् यजमानकर्तृकताया एवोत्सर्गसिद्धत्वात् । तस्मादुद्गीथादिविषयिणी उपासना फलभोक्त्रा यज्वना यजमानेनैव कर्तुं शक्या तत्कर्तृकेति। निषेधे हेतुमाह परिक्रीतकर्माश्रयत्वादिति। अयं भावः—एतदुपासनफलस्येव क्रतुफलस्यापि यजमानगामित्वात् उद्गीथादिगानमपि कस्मात् यज्वनः कार्यं न भवति । अपां प्रणयनमपि किमिति अध्वर्युणा क्रियते, फलभाजि कर्तुं सज्जे सति । यद्युच्यते—सत्यं सर्वं यज्वनैव कार्यम् । अथापि तथा कर्तुं न शक्यत इति विमृश्य ऋत्विजो वचनबलात् परिक्रीयन्ते=स्वकर्तव्यक्रियाकरणाय भृतिदानप्रतिज्ञानेन स्ववशीक्रियन्ते । अतो यावत् भृत्यैः कर्तुं शक्यम्, तावत् त एव कुर्युः । यागं तु भृत्यो न कर्तुमर्हति, यजमानद्रव्ये स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वापादनस्य तेन यजमानेनैव कार्यत्वात् । एवं यत् याजमानमिति विशिष्य समाख्यातम्, तत्रापि यजमान एव कर्ता। अतः परिक्रीतपुरुषकर्तृककर्म उद्गीथगानम् ; तत् आश्रयो यस्य तादृशत्वादुपासनस्य, यथा अन्ये गुणफलविषयाः=फलार्थं विधीयमानगुणसंबन्ध्यनुष्ठानानि ऋत्विक्प्रसाध्याः=ऋत्विजैव कार्याः, एवमेषा उद्गीथोपासनाऽपि श्रुतिरपि दर्शयति

सेत्स्यति । यजमानेनैव स्वकार्यकरणाय दक्षिणाप्रदानेन ऋत्विजां क्रीतत्वात् । अत्र लोकसिद्धमपि दृष्टान्तमाह—स्वामिभृत्यक्रमोऽत्रेति । राजभृत्याः खलु राज्ञा पोषिता राजकार्यं राज्ञो नियमेनेन कुर्वन्ति । तत्रान्तरङ्गतया बहिरङ्गतया वा यानि कर्माणि कर्तव्यानि, तानि कर्माणि त एव कुर्वन्तीति घण्टापथोऽयं मार्गः । तेनोद्गीथाद्युपासनानामृत्विक्कर्तृकत्वमेवेति सिद्धम् ॥ ४१७ ॥

इति स्वाम्यधिकरणम् ॥ ११९ ॥

१२० ॥ अथ सहकार्यन्तरविध्यधिकरणम् ॥ ३-४-१२ ॥

सूत्रम्—सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ कृत्स्नभावात्तु गृहिणोपसंहारः ॥ मौनवदितरेषामप्युपदेशात् ॥ ४६—४८ ॥

(४१८) मन्तव्यत्वे श्रुते सत्यथ मुनिरिति वागस्तु तस्यानुवादः

कश्चिन्न ह्यत्र दृष्टो विधिरिति न ; पुरः पण्डितत्वस्य लब्धेः ।

ऊहापोहार्हता हि श्रवणमननतोऽनन्तरं पण्डितत्वं

मौनख्यातिः प्रकृष्टे मनन इति विधौ धारणाद्युक्तिरेषा ॥ २६ ॥

इति सहकार्यन्तरविध्यधिकरणम् ॥ १२० ॥

पूर्वं यज्ञादीनां शमादीनाञ्च विद्यासहकारित्वमुक्तम्; अधुना पुनः सहकार्यन्तरं चिन्त्यत इति सङ्गतिः । अत्रोद्गीथादिप्रसङ्गस्तु सङ्गतिविशेषप्राप्त इति न विरोधः । इह तु मननस्य ध्यानालम्बनशुभाश्रयगोचरत्वेनातद्गोचरेभ्यो यज्ञादिभ्यः शमादिभ्यश्च विलक्षणत्वादतद्गोचरत्वसाधर्म्येण यज्ञादींश्च शमादींश्च निरूप्य पश्चान्मननं निरूप्यते। तदर्थविचारस्तु–किमस्मिन् वाक्ये मौनं विधीयते, उतानूद्यत इति । किं पाण्डित्यमेव मौनम्; उतार्थान्तरं मननरूपमिति । किं मननं विधातुं योग्यम्, उत नेति । किं मननस्य यज्ञादिश्रुतिविरोधोऽस्ति, उत नेति । किं मननं कर्मानुष्ठानप्रतिक्षेपकम्, उत नेति । स्वप्रकरणे प्रकरणान्तरे च कतिपयाश्रमधर्मानुक्तिर्मननस्य कर्मानुष्ठानप्रतिक्षेपकत्वमुपोद्बलयति, उत

---

अनूद्यते चेति । "स ह नैमिषीयाणामुद्गाता बभूव । स ह स्मैभ्यः कामान् आगायति । आगाता वै कामानां भवति, य एतदेवं विद्वान् उद्गीथमुपास्ते", "तस्मादुहैवंविदुद्गाता ब्रूयात्, कं ते काममागायानीति । एष ह्येव कामागानस्येष्टे" इत्यादिकं छान्दोग्ये प्रथमप्रपाठके । उषस्तिनाऽपि प्रस्तोत्रादय एवोपासने प्रेरिताः । 'विद्यया करोति' इति करणं विद्या कर्तृगतैव स्वरसतः ॥ शक्यत्वादित्यादेर्यो क्रमप्रयोजकमित्याह शक्यत्वमिति । तथा सति प्रणयनोद्गानादिकमपि यजमानकर्तृकमापद्यते । तस्मात् ऋत्विग्वरणविधिबलाधीनया नियत्या व्यवस्थया अथवा विधिबलाद् नियते व्यवस्थिते अत्र उपासने स्वामिकार्याधिकृतभृत्यन्याय एवेति ऋत्विजैवोपासनं कुर्यात् । उद्गीथाद्युपासनं स्वामिकर्तृकम् स्वामिगत फलार्थत्वे सति तच्छ्रवणत्वादिति पूर्वपक्षी । तदयुक्तम्; उद्गानप्रणयनादावपि हेतुसत्त्वादनैकान्त्यात् । अथान्यकर्तृकत्वेनासिद्धत्वं हेतुविशेषणं क्रियेत, तदसिद्धम्; वरणबलात् दर्शितानेकवचनबलाच्चोपासनेऽप्यन्यकर्तृकत्वस्यैव सिद्धेः । अत इदमुपासनमृत्विक्कर्तृकम् तत्कर्तृकप्रयोगान्तर्गतत्वे सति तच्छ्रवणत्वे सति तदपवदनाविषयत्वादिति सिद्धान्ती । नियतेः स्वामिभृत्यक्रमेणेति पदयोजनापाठ इव ॥४१७॥

२६. एवं बहिरङ्गभूतं कर्मादिकं विचारितम् । अथ ध्यानसमानविषयकतयाऽन्तरंग पाण्डित्यादि

नेति। किं कतिपयोक्तिरनुक्तानादरमूलेव स्यात्, उतानुक्तप्रदर्शनार्था च स्यादिति। अत्र पूर्वपक्षमनुवदति—मन्तव्यत्व इति। इयं किल तत्रविद्यानुष्ठानप्रक्रिया—यज्ञादिकर्मानुष्ठानम्, 'यज्ञेन' इत्यादिना विद्याङ्गत्वेन विधीयते। 'शान्तो दान्तः' इत्यादिना तु शमदमादिकञ्च तथैव विधीयते। तेन तदुभयं विद्याङ्गमेव। यद्यपि, 'श्रोतव्यो मन्तव्यः' इति वाक्येन श्रवणं मननञ्च रागतः प्राप्तत्वादनूद्यते, तथापि श्रवणमननाभ्यां विना विद्यानिष्पत्त्ययोगात् तदुभयमपि तदङ्गमेव। 'तस्माद् एवं ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्। बाल्यञ्च पाण्डित्यञ्च निर्विद्याथ मुनिः' इति पाण्डित्यादित्रितयमपि ब्रह्मविद्याङ्गमेव विधीयते। तेन मौनपर्यन्तैरेतैरङ्गैर्ब्रह्मविद्या प्राप्यत इति 'स ब्राह्मणः' इति ब्रह्मविद्यानिष्ठो भवेदिति श्रुत्याऽभिधीयत इति। अत्र कश्चिदाह—अथ मुनिरित्यत्रापूर्वं मननं न विधीयते ; पूर्वमेव मननस्य प्राप्तत्वात्। श्रवणप्रतिष्ठार्थं मननं तावदेकम्। अनन्तरं च पाण्डित्यरूपमन्यत्(न्यदपि मननमेव?)। ऊहापोहक्षमा धीः खलु पण्डा। तादृशीं धियं प्राप्तः पण्डित इति सर्वलोकप्रसिद्धिः। तेन मननस्य प्राप्तत्वात् अथ मुनिरित्यत्र विधिश्रवणाभावाच्च मौनं न विधीयत इति। अयमत्र शब्दार्थः—पूर्वमेव मन्तव्यत्वे श्रुते सति अथ मुनिरिति वचनं पूर्वसिद्धस्य मननस्यानुवादोऽस्तु। तस्यानुवादः= अत्यन्तप्रसिद्धस्यानुवाद इत्यर्थः। तस्यानुवादत्वे हेतुमाह—कश्चिदिति। न ह्यत्र मुनिः स्यादिति कश्चिद्विधिर्दृष्ट इत्यर्थः। विधिशब्दाभावे कथं विधित्वमङ्गीक्रियत इत्यर्थः। एवं पूर्वपक्षमनूद्य निराकरोति—नेति। प्रतिक्षेपे हेतुमाह—पुर इति। मुनित्वकथनात् पूर्वं पण्डितत्वस्य लाभात्। अयमर्थः—मननं नाम श्रवणप्रतिष्ठापनार्थं युक्तिभिश्चिन्तनमात्रमेव। तच्च पण्डितत्वात् प्रागेव निष्पन्नम्। तद्व्यतिरेकेणात्यन्तातिशयितोहापोहक्षमप्रतिभावत्त्वं पण्डितत्वम्। तच्च मौना(मनना)त् पूर्वमिहोच्यते। तत उपरि कथ्यमानमिदं मौनमनेकसहकारिविशेषलभ्यमन्यदेवान्तरङ्गं विद्याङ्गं विधीयत इत्यङ्गीकर्तव्यमिति। पण्डितत्वस्य श्रवणमननाभ्यामन्यत्वं विशदमेव प्रकाशयति—ऊहेति। मौनस्यान्यत्वे हेत्वन्तरमप्याह—मौनख्यातिरिति। अध्यात्मशास्त्रे मौनप्रसिद्धिः श्रवणप्रतिष्ठार्थे मनने नास्ति।

---

विचार्यते मन्तव्यत्वे इति। श्रोतव्यो मन्तव्य इति वाक्ये ब्रह्मणो मन्तव्यत्वं श्रुतम्। अतः, 'बाल्यं पाण्डित्यञ्च निर्विद्याथ मुनिः' इति वाक्ये मुनिरिति पदं तस्य मन्तव्यत्वस्य — मननस्यानुवाद एव। अन्यस्य मुनित्वस्य सर्वविद्वत्साधारणस्याप्रसिद्धेः। मोक्षाश्रमित्वरूपमुनित्वस्य सर्वसाधारण्याभावात्; प्रागपि संभवाच्च। पाण्डित्यमपि श्रवणानन्तरभावि मननमेव। मन्तुर्मनने परिपक्वे पण्डित इति, मुनिरिति च व्यवहारः। तथाचात्र न किञ्चित् विधेयम्। श्रवणमननयोः जिज्ञासाशान्तये ध्यानार्थतया च रागतः प्राप्तत्वात्। अत एवात्र कश्चिन् विधिर्न दृष्टः; पाण्डित्यंनिर्विद्येति वाक्ये अथमुनिरिति वाक्ये च विध्यश्रवणादिति पूर्वपक्षः। निरस्यति इति नेति। हेतुमाह पुर इति। पुरः मौनात् पूर्वं पाण्डित्वरूपस्य कस्यचिदपूर्वस्य लब्धेः श्रुत्योक्तत्वात् अत एव पुरुषेण लब्धत्वात् ततः परं मननस्य दुर्वचत्वादित्यर्थः। मननं श्रवणानन्तरभावि अयमेवार्थ इति सहेतुकावधारणरूपम्। एवं मतेषु नानाधर्मेषु ध्येयवस्तु-तद्विशेषणनिर्धारणम् इदमित्थमिति। अनुपास्यानामुपास्यनिर्णायकतयोपपादनार्थोपन्यस्ततया एषामिह ध्येयत्वाभाव इत्याद्यूहापोहक्षमज्ञानलाभः पाण्डित्यम्। कस्मिंस्तु लब्धे अथमुनिरिति तदनन्तरतया कथ्यमानं मौनं कथं तत्पूर्वभाविमननाभिन्नं स्यात। मौनशब्दस्य मनने प्रसिद्ध्यतिशयो नास्तीति तत्खण्डनार्थं पक्षेणेति सौत्रपदाभिप्रेतमाह मौनेति। प्रकृष्टे विलक्षणे मनन एव मौनशब्दप्रसिद्धिः। तद्वति च मुनिशब्दप्रसिद्धिः।

अपितु पाण्डित्यानन्तरभाविनि प्रकृष्टे मनने निरन्तरचिन्तन इत्यर्थः। तर्हि किमिदं मौनमित्याशङ्क्य मौनस्वरूपं प्रकटमेव प्रदर्शयति—विभौ धारणेति। अयमर्थः—अष्टाङ्गयोगे समाधिरेव साक्षात् ब्रह्मविद्या। तत्पूर्वभावि धारणादिकं मौनमित्युच्यत इति ॥४१८॥ इति सहकार्यन्तरविध्यधिकरणम्॥१२०॥

१२१ ॥ अथ अनाविष्काराधिकरणम् ॥ ३-४-१३ ॥

सूत्रम्—अनाविष्कुर्वन्नन्वयात् ॥ ४९ ॥

(४१९) शिष्टं बाल्येन तिष्ठासनमपि विदुषो बालकृत्यं तदन्तु
प्राप्तुं (भर्तुं) बालस्य भावो न तु सुशक इति स्वैरिता सेऽ(ऽस्ये)ति चेन्न।
दुश्चारितादस्तु 'नाविरत' इति वचः सन्निरुन्धे ह्यनोऽसौ(ऽस्मिन्)
माहात्म्यं स्वं निगूहेदिति मुनिविहिते बाल्यविध्याशयः स्यात् ॥ २७ ॥

इत्यनाविष्काराधिकरणम् ॥ १२१ ॥

"तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्' इत्यत्र विदुषा बाल्यमुपादेयतया श्रुतम्। बालस्य भावः कर्म बाल्यम्। बालभावस्य वयोवस्थाविशेषस्यानुपादेयत्वात् कर्मैवेह गृह्यते। तत्र किं बालस्य कर्म कामचारादिकं सर्वं विदुषापादेयम्, उत दम्भादिरहितत्वमेवेति विशये" इति सङ्गतिर्भाष्ये व्यक्ता। (मौनाख्यं विद्याङ्गं चिन्तितम्। तथा बाल्यमपि विद्यांगमधुना चिन्त्यते इति संगतिर्भाष्ये व्यक्ता) तदर्थविचारस्तु—बाल्योपादाने किं कामचारादिकमप्युपादेयम्, उत माहात्म्यानाविष्करणमेव ; किं बाल्यशब्दः सर्वबालकर्मपरः, उत माहात्म्यानाविष्करणरूपबालस्वभावविशेषपरः। 'नाविरतः' इत्यादिश्रुतिः किं बाल्यशब्दस्यानाविष्कारपरतामवगमयति, नेति। अत्र पूर्वपक्षी मन्यते-'बाल्येन तिष्ठासेत्' इति विदुषः श्रुतौ शिष्टं बाल्यं बालकृत्यं = कामचारवाद-भक्षत्वमेवास्तु; न पुनर्बालस्वभावः। न ह्यन्यस्य भावोऽन्येन भर्तुं(कर्तुं) सुशकः; व्यवस्थितत्वात्

---

किं तदित्यत्राह धारणेति। इति हेतोः एषा मुनिशब्दोक्तिर्विभुपरमात्मविषयकधारण-ध्यानमननशीलत्वोक्तिरेव उपरि अधिकरणार्थसंग्रहे मौनमिदं ध्यानार्थमिति वक्ष्यति। समाधिस्तु मुख्यः पश्चात्। तदत्र संदर्भे बल्यं पाण्डित्यं मौनमिति त्रयं विधेयम्। सूत्रत्रयार्थविशेषविमर्शो भाष्यार्थदर्पणे द्रष्टव्यः ॥ ४१८ ॥

२७. बाल्यादित्रयमुपासनांगतया विधेयमित्युक्तम्। तत् बाल्यं बालकर्म किमिति चिन्त्यते। शिष्टमिति। विहितमित्यर्थः। बाल्येन तिष्ठासनं विधिप्रत्ययेन विहितम्। तच्च बाल्यविशिष्टतया स्थितीच्छा। इच्छाया अविधेयत्वात् इष्यमाणप्रधानकतया स्थितिरेव विधेया। बालतया स्थितिः बाल्यानुवृत्ति ; स्थिरं बाल्यमेव। अत एव श्लोकान्ते बाल्यविधीति प्रयोक्ष्यते। सात्त्विकस्यारम्भस्य पुनः बाल्यमिष्टं भवतीति ज्ञापनाय सन्प्रयोगः। यदा तु टीकारीत्या स्थापार्थो निष्ठा ध्यानम्, तिष्ठासेत् निदिध्यासेदित्यर्थ —तदा बाल्यविशिष्टध्यानविधौ बाल्यमपि विधेयमिति प्रमाणम्। ध्यानविधायकवाक्यान्तरमत्र प्रकरणे नास्तीति अत्रैवैतावद्विवक्षा। मुनिरित्यादिना धारणादिविधानात् अत्र बाल्यमात्रविवक्षैवास्तिति चेत्-अस्तु तावत्। बाल्यश्च बालस्य भावो वा बालकर्म वा। तत्र बालस्य भावः बालत्वं यूनि न विधातुं शक्यते, अप्रासङ्ग्यत्वात् अभर्तव्य(अननुवर्त्य)त्वाच्च। इति हेतोः तत् बाल्यं बालकृत्यरूपमेवास्तु। तथैव वक्तव्यम् अस्तिवति चेत्-तर्हि तत् 'कामचारः कामवादः कामभक्ष इत्युक्तं यथेच्छचरणमेव

बाल्यादीनां धर्माणाम्। तेन स्वैरितैव बाल्यमित्यस्तु। तदिदमनुवदति—शिष्टमिति। अनूदितमर्थं प्रतिक्षिपति—नेति। प्रतिक्षेपप्रकारं प्रकटयति—दुश्चरितादिति। 'नाविरतो दुश्चरितात्' इति वचः स्वदुक्तममुमर्थं सन्निरुन्धे। अथवा स्वैरिणममुम्-अधिकारिणं सन्निरुन्धे। तर्हि बाल्य(शब्द)स्य को निर्णय इत्याशङ्क्य बाल्यशब्दार्थं निर्णयेन कथयति—अत इति। अध्यात्मविदां स्वमाहात्म्यगोपनं हि मुनिभिर्विधीयते। तेन विहिते स्वमाहात्म्यगोपने बाल्यशब्दस्य तात्पर्यं स्यात्। अत एव सदाचारनिष्ठस्यापि भरतस्य, 'सतां मार्गं न दूषयन्' इति सन्मार्गदूषणेन प्रख्यातस्योन्मत्तवज्जडवर्णनमुच्यते। एवमत्रापि बालवत् स्वमाहात्म्यगोपनमेवोच्यते। इदञ्च स्वमाहात्म्यगोपनं लोकसंमानविघ्नापादनार्थम्। संमानादिकञ्च त्याज्यमेवाध्यात्मविदाम्-'असंमानात् तपोवृद्धिः संमानात्तु तपःक्षयः। अर्चितः पूजितो विप्रो दुग्धा गौरिव गच्छति॥' इति लोकसंमानस्य परित्याज्यत्वस्मरणात्॥४१९॥

इत्यनाविष्काराधिकरणम्॥ १२१॥

## १२२॥ अथ ऐहिकाधिकरणम्॥ ३-४-१४॥

सूत्रम्—ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात्॥ ५०॥

(४२०) भोगार्थोपासनानां स्वजनकसुकृतैस्तत्क्षणादुद्भवः स्यात्
स्वर्गादिस्त्वत्र देहे न घटत इह तु स्यान्तशुद्ध्योपपत्तिः।
स्नानप्रायत्यनीतिस्तत इति न पुरो(रा) विघ्नसम्भावनोक्तेः
कारीर्यादौ तदर्हा सगुणविरचितेऽप्यस्ति विघ्नः कदाचित्॥ २८॥

इत्यैहिकाधिकरणम्॥ १२२॥

इत्थमङ्गचिन्ता कृता; इदानीमङ्गिनिष्पत्तिसमयचिन्ता क्रियत इति सङ्गतिः। तदर्थं विचारस्तु—किमैहिकफलसाधनमुपासनं स्वसाधनपुण्यकर्मानन्तरमेवोत्पद्यते, उतानन्तरम्, कालान्तरे वेत्यनियमः। किं तदुत्पत्तेः प्रतिबन्धः सम्भवति नेति। इत्थमिह पूर्वपक्षी मन्यते–भोगार्थोपासनानाम्—

---

भवतीति अस्य योगिनः सा बालकृत्यं। स्वैरितैव। न च शमदमाद्यंगविरुद्धं कथमिदं विधेयमिति शंक्यम्—बालकृत्यातिरिक्तयुवादिकार्यं यत् निषिद्धं तद्विषये शमदमादीत्युक्तिसंभवात् न तु गोपनकृत्यम्। न हि बालो गोपनीयमिति मन्यते इति पूर्वपक्ष। सिद्धान्ते युक्तिमाह दुरिति। 'नाविरतो दुश्चरितात्' इति वच=वाक्यम् अमुं योगिनं दुश्चरितात् सम्यक् निरुन्धे हि। अतः नञ्द्वयप्रयोगात् सकलदुश्चरितनिवृत्तेरावश्यकत्वात् बालकृत्यस्य च एवं निषिद्धातिरिक्तरूपेण सुवचत्व च वाक्यविधेराशय: अन्यविषये स्यात्। किंविषये इति चेत्—बालो यथा स्वस्य बलाभिजनादिरूपमहत्त्वे सत्यपि न तदाविष्करणशीलो भवति, तद्वत् असौ योगप्रवृत्त स्वमाहात्म्यं सर्वं निगूहेत्=नाविष्कुर्यात् इति। बालो न जानाति, न गोपनमिच्छतीत्यन्यदेतत्। सर्वांशस्य साम्यस्य इष्टावपि अनावश्यकत्वात्। 'असंमानात् तपोवृद्धिः' इति वचनेन तस्य भक्तिहेतुत्वञ्च प्रसिद्धम्। सन्ध्योपासनादिकं तु न त्याज्यम्, 'सतां मार्गमदूषयन्' इत्युक्ते। अतोऽनाविष्काररूपं निगूहनं स्मृतिविहितमेव बालकृत्यम्। तत्रैव तद्विध्याशयः तद्विधितात्पर्यं युक्तम्॥४१९॥

२८. एतावता उपासनापेक्षितकारणकलापो दर्शितः। अथ तज्जन्यमुपासनं सामग्रीसत्त्वात् समनन्तरमेव भवेत्, उत विलम्बेनेति चिन्तायाम्—भोगाभ्युदयार्थोपासनविषये पूर्वपक्षिशंकां प्रथमं

ऐवैहिकफलानामुपासनानां = स्वजनकसुकृतैः = स्वोत्पादकसुकृतैस्तत्क्षणादेवोद्भवः स्यात् । ननु स्वर्गादिवत् विद्यान्तरोत्पत्तिः कर्मफलत्वात् कालान्तरे स्यादित्याशङ्क्य स्वर्गादीनां देहान्तरानुभाव्यत्वेनास्मिन् देहे नोत्पत्तिः स्यात्। सम्भवत्येवास्मिन् देहे हृदयशुद्ध्यादिमुखेन विद्याया उत्पत्तिः। तेनात्र स्नानप्रायत्यनीतिरेव स्यात्। यथा स्नातस्य पुरुषस्य प्रायत्यं = प्रयतत्वं तदानीमेव भवति, न पुनर्देहान्तरे, तथा स्वकर्मभिर्विद्याप्राप्तिस्तदानीमेव नियमेन स्यादिति। तदिदमनुवदति-भोगार्थेति। अनूदितमर्थं प्रतिक्षिपति—नेति। उत्पत्तिः कदाचित् तदानीमेव स्यात्, कदाचित् कालान्तर इत्यनियम एव। ननु सगुणविरचिते कथं कालान्तरे फलसिद्धिः स्यात्? तत्राप्याह—तदर्हैरिति। सगुणविरचितेऽपि कर्मण्यत्यन्तप्रबलैः कर्मभिस्तत्प्रतिबन्धार्हैः(?) कदाचित् विघ्नः स्यादेव ॥ ४२० ॥

इत्यैहिकाधिकरणम् ॥ १२२ ॥

## १२३ ॥ अथ मुक्तिफलाधिकरणम् ॥ ३-४-१५ ॥

सूत्रम्—एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ ५१ ॥

(४२१) अस्त्वन्यत्रान्तरायः; प्रबलतममिदं सात्त्विकत्यागयुक्तं
कर्म प्रोक्तं निवृत्त्याह्वयमिति सपदि ब्रह्मविद्यां विदध्यात् ।
मैवं; तस्मात् बलीयान् यदि भवति परब्रह्मभक्तापराधः
तच्छान्तौ तत्प्रसूतिः; स न यदि, झटिति स्यात् परोपास्तिलाभः ॥ २९ ॥

इति मुक्तिफलाधिकरणम् ॥

---

दर्शयति भोगेति। सूत्रे ऐहिकमित्यस्य यथामीमांसकप्रसिद्धि इह जन्मनि भवमित्यर्थः। स्वसामग्रीसमनन्तरक्षण इति हेतुबलात् सिद्धम्। अयं भावः-मुक्त्यर्थोपासनमेतज्जन्मनि तदैव निष्पन्न इति स्वीकारेऽपि फलस्य प्रारब्धावसान एव भावित्वात्, तदुपासनं यदा कदापि निष्पद्यतां नाम। अभ्युदयफलकं तूपासनम् ऐहिकमेव इहैव जन्मनि तदैव भवेत्। नन्वभ्युदयः स्वर्गः विलम्बेनैव भवतीति चेत्, तत्राह स्वर्गेति। सोऽस्मिन् देहे न घटते तस्य जन्मान्तरसाध्यत्वात्। अतस्तत्यानन्तरमेवोपायसाध्यत्वाभवेऽपि उपासनस्य चित्तशुद्धिमात्राधीनत्वात् चित्तशुद्धेश्च निरुक्तकारणकलापोत्तरक्षणभावित्वात् इह उपासनविषये सद्य उत्पत्तेरुपपत्तिरस्तीति। ततः तस्मात् स्नानप्रायत्यनीतेः स्नानसमनन्तरमेव प्रायत्यं परिशुद्धिर्यथा, तथेदमिति पूर्वपक्षः। निरस्यति इति नेति। पुरा(पुरः) तन्निर्धारणाधिकरणे यद्वा पुरः अग्रे=भाविकाले विघ्नसंभावनाया उक्तत्वात् अप्रतिबन्धार्थमेवोद्गीथाद्युपासनस्य विधानात्। सामग्र्यां प्रतिबन्धकाभावस्यापि निविष्टतया प्रस्तुतस्य पूर्वमेवोक्तस्य स्वयमापतितस्य वा प्रतिबन्धस्याभावे सत्येव (प्रस्तुतेन परिहारार्थतया प्रागुक्तेन केनापि प्रतिबन्धस्य अनुत्पादस्याभावे इति वा) उपासनमैहिकम्। ननु विधिबलादेव ऐहिकं फलमनन्तरमेव भवेत्, यथा कारीरीष्टौ शुष्यत्सस्यसंजीवनार्थाया मित्यत्र ह कारीरीति। तत्रापि तदर्हैः तदधिकारिभिः विद्वद्भिरविद्वद्भिर्वा सगुणं यथा तथा सर्वगुणसंपन्नतया विरचितेऽपि यदि विघ्नोपनिपातः, तदा विलम्ब एवेष्टः। अत एवोद्गीथाद्युपासनविधानमिति भावः ॥ ४२० ॥ इति ऐहिकाधिकरणम् ॥ १२२ ॥

पूर्वमैहिकफलानां विद्यानां निष्पत्तिकालानियम उक्तः, एवं ब्रह्मप्राप्तिहेतूनामपि विद्याना-मनियम एवातिदिश्यत इत्यातिदेशिकी सङ्गतिः । तदर्थविचारस्तु–किं मुक्तिफलमुपासनं स्वसाधन कर्मानन्तरमुत्पद्यते, उतानन्तरं कालान्तरे वेत्यनियमः । किं परविद्यासाधनात् कर्मणः प्रबलंकर्मा-न्तरं सम्भवति, नेति । अत्र पूर्वपक्षी विशेषाभिधानेन प्रत्यवतिष्ठते—अस्त्विति । अब्रह्मविदां विद्या-निष्पत्तिकर्मसु प्रत्यवायोऽस्तु नाम ; अब्रह्मवित्कर्मणां दुर्बलत्वात् । फलसङ्गकर्तृत्वत्यागयुक्तं निवृ-त्याख्यं कर्म प्रबलतममिति प्रोक्तम् । तत इदं कर्म सर्वतः प्रबलत्वात् स्वविरोधिवर्गं सर्वमपि निरा-कृत्य सपद्ये (सद्य एव) ब्रह्मविद्यां विदध्यात्=कुर्यात्। तदिदं प्रतिक्षिपति–मैवमिति। अयमत्र भावः— "अस्ति मत्स्यस्तिमिर्नाम शतयोजनमायतः । तिमिङ्गिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति सागरे ॥" इति न्यायेन संसारसागरे वर्तमानानां मात्स्यन्यायेनोत्तरोत्तरं कर्मणामाधिक्यमुपलभ्यते । तथा च ब्रह्मवित्कर्मणामपि ततोऽप्यधिकं कर्मान्तरमस्ति, योऽयंब्रह्मविदपचारः।तैर्ब्रह्मविदपचारादिभिर्महत्तरैः पापैर्ब्रह्मविद्योत्पादकस्यापि निवृत्त्याख्यधर्मस्य निराकरणसम्भवात् तादृग्विधमहत्तरदुरिताभावे निवृत्तिधर्मो ब्रह्मविद्यां सद्य एव जनयति, तत्सद्भावे कालान्तरे जनयतीति ब्रह्मविद्यानामप्यनियतैव निष्पत्तिरिति सिद्धम् । अयमत्र शब्दान्वयः—तस्मान्निवृत्तिधर्मादपि बलीयान् परब्रह्मभक्तापराधो यदि भवति, तदा तच्छान्तौ तत्प्रसूतिः=तादृग्विधापराधशान्तौ ब्रह्मविद्याप्रसूतिः । स यदि न= तादृग्विधापराधाभावे झटिति ब्रह्मविद्यालाभः स्यादिति ॥ ४२१ ॥ इति मुक्तिफलाधिकरणम् ।

(४२२) विद्यार्थत्वं क्रियाणां व्यभिचरणवशाम्नेति शङ्कापनुत्यै
प्रत्यूहानाञ्च तूर्णं(चतुर्णां) प्रशमनमुचितं सर्वदेति प्रसिद्ध्यै ।
निष्प्रत्यूहस्य सद्यःफलमिति च सतां तोषहेतोर्मुष्मिन्
पादान्ते न्यासिषातामनियमविषयौ शास्त्रकर्त्राऽधिकारौ ।। ३० ।।

अत्र विद्याङ्गपादसमाप्तिगतयोर्द्वयोरधिकरणयोरनियमविषययोः विशेषप्रयोजनं विशदमेव दर्शयति—विद्यार्थत्वमिति । एतस्मिन्नधिकरणद्वये क्रियाणां विद्यार्थत्वं व्यभिचरणवशान्नेति वदतः शङ्कापनुत्तिः क्रियते । तथा प्रत्यूहानाञ्च तूर्णं(चतुर्णां) प्रशमनमुचितं सर्वदेति प्रसिद्धिश्च क्रियते ।

---

२९. ननु क्षुद्रोपासनानां कारणसद्भावेऽपि प्रतिबन्धवशाद्विलम्ब इति युज्यते ; न तु मुक्तिफलके उपासने । तदर्थकर्मणां सात्त्विकत्यागयुक्ततया, 'नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते' इति श्लाघिततया, "तस्य ह देवाश्चन नाभूत्या ईशते" इति मुमुक्षुविषये देवानामपि प्रतिबन्धन-शक्तिविरहस्योपनिषदुक्ततया च न विलम्ब इति शंका । परिहरति मैवमिति । भगवदभिमुखजनबाधस्य बहिरङ्गैर्देवादिभिरकार्यत्वेऽपि, "मम मद्भक्तभक्तेषु प्रीतिरभ्यधिका भवेत्" इति भगवदपेक्षयाऽपि भागवतानां पुरस्कार्यतायाः शास्त्रसिद्धतया प्रबलविषये अपराधो विद्यापेक्षया बलीयान् विद्याविरोधी । अतो बलीयान् स भवति यदि, तस्य शान्तावेव विद्यायाः प्रसूतिः उत्पत्तिः । स यदि न, अपराधो न चेत्— सपद्येवोपासननिष्पत्तिरिति अनियम एवेति ॥ ४२१ ॥ इति मुक्तिफलाधिकरणम् ।। १२३ ।।

३०. असति प्रतिबन्ध एव उपासनरूपं कार्यं समनन्तरमिति प्रतिपादनार्थाभ्यामेवाधिकरणाभ्यां सिद्ध्यदन्यदन्यत् प्रयोजनमप्याह विद्येति । अत्र पादे विचारितं क्रियादिकं हि विद्यासाधकत्वेनाभि-मतम् । तत्र भवति, क्रियादिसत्त्वेऽपि कचित् विद्यानुत्पत्तेरिति शंका प्रतिबन्धकाभावरूपकारणस्याप्यपेक्षा,

निष्प्रत्यूहस्य निवृत्त्यावयस्य धर्मस्य सद्यःफलमिति च सतां सन्तोष आधीयते। तेनामुष्मिन् पादान्ते अनियमविषयावधिकारौ = अधिकरणे शास्त्रकर्त्रा न्यासियातां = अकारिषातामित्यर्थः ॥ ४२२ ॥

(४२३) प्रत्यूहस्य प्रसङ्गः क्षम इह परवित्कर्मणां तद्विधूत्यै
भोगार्थोपास्तिहेतुष्वयमनुकथितः किं मुधाऽत्रेति चेन्न ।
काम्ये निर्विघ्नबुद्ध्या पतति मतिरतस्तत्र वैराग्यभूम्ने
तत्प्रत्यूहप्रसक्तिर्भवति फलवती ; स्याच्च विद्यार्थकाम्यम् ॥ ३१ ॥

अत्र कश्चिच्चोदयति—प्रत्यूहस्येति। अत्र परवित्कर्मणाम् = अध्यात्मवित्कर्मणां प्रत्यूहस्य प्रसङ्गः तद्विधूत्यै = प्रत्यूहस्य विधूननाय क्षमः = योग्य एव। भोगार्थोपास्तिहेतुषु कर्मसु प्रत्यूहस्य प्रसङ्गः किं मुधा अनुकथित इति। तदिदं प्रतिक्षिपति—नेति। प्रतिक्षेपप्रकारं दर्शयति - काम्य इति। काम्ये खलु कर्मणि कस्यचिन्मन्दबुद्धेर्निर्विघ्नत्वबुद्धिर्भवति। तया बुद्ध्या तत्रैव मतिः पतति। तेन तत्र काम्ये कर्मणि वैराग्यभूम्ने = वैराग्यातिशयसिद्ध्यै तत्प्रत्यूहप्रसक्तिः फलवती भवत्येव। अयमर्थः—काम्यं निष्प्रत्यूहमिति बुद्धिरप्रामाणिकी। अपितु काम्यमपि सप्रत्यूहमेव। तेन तत् त्याज्यकोटिनिविष्टमेवेतीममर्थमुपपादयितुं काम्येऽपि प्रत्यूहप्रसङ्ग इति। अथवा विद्यार्थकाम्यमत्र विवक्षितं स्यात्—अयमर्थः—काम्यमपि कर्म विद्यार्थत्वेन विनियोगपृथक्त्वेन विनियुज्यते। तदत्र चिन्त्यत इति तच्चिन्तनं योग्यमेवेति ॥ ४२३ ॥

(४२४) विद्या कर्माङ्गिका स्यात् २नतममुखधीश्चोदिता प्राप्त्यभावात्
3. आख्यानानाञ्च विद्याविधिसविधजुषां तद्विधानार्थतैव ।
4. विद्या साङ्गोर्ध्वरेतस्स्वपि 5. गृहवति सा यज्ञदानाद्यपेक्षा
6शान्त्याद्यर्हो गृहस्थोऽ7प्यविपदि विदुषोऽप्ययज्ञशुद्ध्यैव सिद्धिः ॥ ३२ ॥

---

वर्णनादपनोदिता। चतुर्णामप्याश्रमाणां कृत्ये सर्वदा प्रत्यूहसंभवात् तूर्णमेव तदपशमनं कार्यमिति च ज्ञापितम्। प्रत्यूहस्य=विघ्नस्याभावे तदैव फलमिति तत्त्वस्याऽऽर्थं ज्ञापनात् श्रोतॄणां सन्तोषश्च। एवमपनुत्त्यै प्रसिद्ध्यै तोषहेतोश्च शास्त्रकर्त्रा बादरायणेन एतत्पादान्ते एताधिकारौ अधिकरणे प्रतिबन्धसत्त्वे फलविलम्बः अन्यदा सपदीत्येवमनियमप्रतिपादकौ न्यासियातां निक्षिप्तौ निवेशितौ ॥ ४२२ ॥

३१. नन्वधिकरणद्वये द्वितीयमधिकरणं मुमुक्षुविषयकत्वादत्र संगच्छते, न तु प्रथममिति शंकते प्रत्यूहस्येति। परविदः भगवदुपासकस्य कर्मणां प्रत्यूहोऽस्तीति योऽयमिह प्रसंगः प्रासिवचनम्, तद्विधूत्यै=प्रत्यूहस्य विधूननार्थं विधूननज्ञापनार्थं सः इह क्षमः युक्तः ; संगच्छते। मोक्षातिरिक्तफलकोपासनहेतूनामपि उपासनजनने प्रत्यूहोऽस्तीति अयं प्रथमाधिकरणप्रसंगः किमर्थं क्रियते ; मुमुक्षोरनपेक्षिततया व्यर्थ एवेति चेन्न—मुक्तिफलकोपासनमात्रस्य विघ्नप्रतिहन्यमानत्वोक्तौ, "क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा" इति न्यायेन क्षुद्रोपासनमेवास्तु। निर्विघ्नलभ्यत्वादिति तत्र पतेयुरिति प्रथमं क्षुद्रोपासनप्रत्यूहवर्णनं तत्र वैराग्यातिशयजननायेति फलवदेव। मुमुक्षुविषय एव प्रयोजनमाह स्याच्चेति। मुमुक्षुणा भक्तिनिष्पत्तय एव बहूनां वृष्ट्यन्नादिदृश्यविविधकाम्यफलानामुपासनानां तदा तदाऽनुष्ठानात् तदर्थमेवैतत्प्रसंगोऽपीति। अथवा साक्षात् विद्यां जनयितुमेव सत्त्वनयो-भगवत्पद्मस्कानन्तगरुडसुदर्शनाद्युपासनादि चिरसाध्यमनुष्ठीयमानम् असति प्रतिबन्ध एव सद्यो नित्यनैमित्तिककर्मनिष्पाद्य मित्यर्थः ॥ ४२३

अस्मिन् पादे प्रतिपादितानां पञ्चदशानामधिकरणानां प्रधानार्थान् परिगणयति—विद्येत्यादिना श्लोकद्वयेन। प्रथमाधिकरणे विद्या कर्माङ्गिकेति प्रतीतिर्निरुध्यते। द्वितीये तु रसतमत्वादिधीः अप्रसक्त्याचोदितैव। तृतीये पुनः विद्याप्रकरणपठितानामाख्यानानां विद्याविधिशेषत्वमेव। एवमुत्तरेष्वप्यधिकरणेषु 4. तत्तदाश्रमनियतादेव धर्माद् ऊर्ध्वरेतस्स्वपि साङ्गा विद्या। 5. गृहस्थे पुनः सा विद्या यज्ञदानाद्यपेक्षा। 6. गृहस्थोऽपि शान्त्याद्यर्ह एव स्यात्। 7. अनापदि विदुषोऽप्यन्न-शुद्ध्यैव योगसिद्धिः स्यात्॥ ४२४॥

(४२५) 8. एकं विद्याश्रमर्थं 9. विधुरमवि(पि)युतं विद्ययाऽऽहु 10. श्च्युतं न
11. क्रत्वङ्गे दृष्टिरुक्त्वेकक्रतिरथ 12. मुनिता चोदित[ऽऽ]-ध्यानसिद्ध्यै।
13. बाल्यं शक्त्यादिगुप्तिः 14. बलवदभिहतैः कर्मभिर्नान्यविद्या
15 तद्वन्मुक्त्यर्थविद्या स्वजनकसुकृतैरित्युवाचात्र पादे॥ ३३॥

8. एकमेव कर्म विद्यार्थमाश्रमार्थं च। 9. विधुरमवियुतं = विद्यया संयुतमाहुरित्यर्थः। अथवा विधुरमपि युतमिति पाठः। विधुरमपि विद्यया सम्बद्धमित्यर्थः। 10. च्युतं न – नैष्ठिकत्वाद्याश्रमभ्रष्टं विद्यया युतं नाहुरित्यन्वयः। 11. क्रत्वङ्गे रसतमत्वादिदर्शनमुक्त्वेकक्रार्यम्। 12. अथ मुनिता—मौनम्। चोदिताऽऽध्यानसिद्ध्यै—विहितब्रह्मोपासनसिद्ध्यर्थमित्यर्थः। ध्यानसिद्ध्यै चोदितेति वा पदच्छेदः। 13. बाल्यं स्वमाहात्म्यादिगोपनम्। 14. बलवदभिहतैः = बलवत्प्रतिबन्धकप्रतिबद्धैः कर्म-भिर्नान्यविद्या—अब्रह्मविद्या न भवतीत्यर्थः। 15. तद्वत् मुक्त्यर्थं विद्या ब्रह्मविद्याऽपि = ब्रह्मविदपचारादि-प्रबलप्रतिबन्धकप्रतिबद्धैः स्वोत्पादककर्मभिर्नोत्पद्यत इति अस्मिन् पादे सूत्रकारः प्राहेत्यन्वयः॥४२५

अत्र पादे परपक्षचतुष्टयनिरासलाभप्रतिपादनम्—

(४२६) व्रतकार्थज्ञानमात्रं कतिचन कुदृशो मुक्त्युपायं गृणन्ति;
ज्ञानं कर्मेति युग्मं करणमिति समुच्चित्य मन्यन्त एके।

---

३२. अथ श्लोकद्वयेन एतत्पादाधिकरणार्थान् संगृह्णाति। 1. विद्यां प्रति कर्मणामङ्गत्वं प्रथमाधिकरणे उक्तम्। 2. उद्गीथादौ रसतमत्वादिदृष्टिरपूर्वत्वात् विधीयत इति द्वितीये। 3. प्रतर्दनाद्युपाख्यानानां तद्विद्याशेषत्वमेव; न तु पारिप्लवार्थत्वम्। 4. चतुर्थाश्रमकर्मणामपि विद्यांगत्वम्। 5. गृहस्थे विद्यायाः यज्ञादिसर्वकर्मसापेक्षत्वम्। 6. शमदमादेर्गृहस्थसाधारण्यम्। 7. विद्यानिष्ठस्याप्याहारशुद्धावेव विद्यासिद्धिः; सर्वान्नानुमतिस्तु प्राणसंशयरूपविषयैवेति॥ ४२४॥

३३. 8. अग्निहोत्रादिकमेकमेव कर्म विद्यार्थमिवाऽऽश्रमार्थमपि। 9. विधुरं=मृतभार्यमनाश्रमिणमपि स्वकर्तव्यांगमात्रेण संपद्यमानविद्यायुक्तमेव वचनान्याहुरिति। 10. च्युतम् आरूढपतितं तु विद्यया न युतं विद्यारहितमेवाऽऽहुः। 11. कर्माङ्गाश्रितानि उपासनानि तदंगाधिक्रतपरिकीर्तिकार्याण्येवेति। अथ=कर्मपेटिकानन्तरम्। 12. समाधिसमानविषयकमौनाद्यंगविधानम्। तेन ध्यान-संपत्तिरिति। 13. तत्रोक्त बाल्यस्य स्वमाहात्म्यगोपनम्=बालवत् तदनाविष्करणम्। 16. बलवता प्रतिबन्धकेन प्रतिहतेषु कर्मसु अन्यविद्या मुक्त्यर्थविद्येतरविद्या अभ्युदयार्थोपासनाऽपि न भवतीति। 17. तद्वत् क्षुद्रोपासनवदेव मुक्त्यर्थविद्याऽपि बलवदभिहतैः स्वजनकसुकृतैर्न भवतीति प्रतिबन्धकाभावे पतितव्यम्। ब्रह्मविदपचारदूरगो भूयादिति इमान् अर्थान् अत्र तृतीयतुरीये उवाच स्थापयामास॥४२५

कर्मप्राधान्यमन्ये निजगदुरपरे मुक्तिमिच्छन्त्यसाध्यां
सर्वे तेऽप्यत्र कर्माङ्गकभजनविधिस्थापनोक्त्या निरस्ताः ॥ ३४ ॥

एतस्मिन् पादे चतुर्णां परपक्षाणां निरासः प्राधान्येनाभिमत इत्याह—वाक्यार्थेति । अत्र मृषावादिनो वाक्यार्थज्ञानमात्रं मुक्त्युपायं प्रवदन्ति । यादवप्रकाशमतस्था ज्ञानं कर्म चेति च युग्मं मुक्तेः करणमिति समुच्चित्य अपवर्गहेतुत्वं(हेतुं?) मन्यन्ते । अन्ये पुनर्निरीश्वरमीमांसका ज्ञानं कर्माङ्गं, कर्मैव पुरुषार्थसाधनहेतुरिति निजगदुः। अपरे सांख्यादयो जीवस्य नित्यमुक्तत्वादसाध्यामेव मुक्तिमिच्छन्ति । वदन्तीत्यर्थः। सर्वेऽपि ते वादिनः अत्र—एतस्मिन् पादे कर्माङ्गकमोक्षसाधनभजनविधिस्थापनोक्त्या निरस्ताः ॥ ४२६ ॥

दुःखनिवृत्तिर्न विद्यासाध्येति चोद्यप्रतिक्षेपः ।

(४२७) यत् दुःखं वर्तते तत् क्षणभिदुरतया न स्वयत्नोपरोध्यम् ;
नातीतार्थश्च यत्नः न च सुपरिहरं भावि हेतौ समग्रे ।
दुःखात्यन्तोपरोधे करणविधिरतो व्यर्थ इत्यर्थरम्यं ;
प्रायश्चित्त्या कृतानां, परमकरणतो दुःखमागमप्रयोगात् ॥ ३५ ॥

अत्र कश्चिदचूचुदत्—'सांसारिकसकलदुःखनिवृत्तिर्हि मोक्ष इत्यध्यात्मविद्भिरभिधीयते ; स च मोक्षः कर्माङ्गिकया विद्यया सिध्यतीति च । तदेतदयुक्तमेव । किं विद्यमानसकलदुःखनिवृत्तिः, उतातीतसकलदुःखनिवृत्तिः, अथवा भाविदुःखनिवृत्तिर्मोक्ष इत्युच्यते ? त्रितयमपि न सम्भवति । वर्तमानस्य क्षणिकत्वादेव स्वत एव निवृत्तिरिति न कारणापेक्षा । तथा द्वितीयोऽपि पक्षोऽसम्भव एव । अतीतानां दुःखानां प्रागेव निरस्तत्वेन तन्निरसनहेतुभूतोपासनप्रवृत्त्यपेक्षाऽभावात् । भाविदुःख-

३४. अस्मिन् पादे कर्मणो विद्यांगत्वं निराकृत्य कर्मांगकमुपासनं मुक्तिफलकमिति स्थापयन् बादरायणः पक्षचतुष्टयमर्थान्निरस्यतीति तेषां तदसंगतत्वं स्पष्टयति वाक्येति । वाक्यज-यान्त्यम ज्ञानादेव मुक्तिरिति शांकराः । ज्ञानं कर्म च समप्रधानं मुक्तिहेतुः, प्रतिबन्धनिवृत्त्यंशे कर्मोपयोगः, ब्रह्मप्राप्त्यंशे ज्ञानोपयोग इति यादवप्रकाशादयः । कर्ममात्रप्राधान्यवादिषु, मुक्तिस्वीकारेऽपि कर्मण एव प्राधान्यम्, ज्ञानं तु जीवात्मविषयकं शब्दबोधात्मकं तदङ्गमिति कतिपये मीमांसकाः । बोधातिरिक्तं योगात्मकमिष्यते ; तत् ईश्वरप्रणिधानसाध्यमपि । स च योगः स्वात्मगतसर्वपुण्यापुण्यसाक्षात्कारहेतुः । ततस्तेषामनुभवेन नित्यनैमित्तिकप्रायश्चित्तरूपैः कर्मभिश्च क्षये तदुपरिकर्माकरणान्मुक्तिरिति प्रायस्तार्किकाः। नित्यमुक्तत्वात् मुक्तिरसाध्येति सांख्यादयः। सर्वमिदं निरस्तम्। जीवविषयकवाक्यार्थज्ञानातिरिक्तयोगात्मकभगवदुपासनप्राधान्ये कर्मणामङ्गत्वं मुक्तिफलकत्वञ्च अत्र स्पष्टमुक्तमित्याह वाक्येति । एतत्सर्वज्ञापनायैव प्रथमं पुरुषार्थोऽत इति सिद्धान्तसूत्रं प्रणीतम् । कुदृश इत्यस्य प्रतिपादनमन्वयः । तेऽपीत्यपिना निरीश्वरमीमांसकस्य स्वर्गादिवृत्तस्य प्रथमाधिकरणप्रस्तुतस्य समुच्चयः ॥ ४२६ ॥

३५. ननु मुक्तेः साध्यत्वे किल साधनविचारः ; तदेव न । कथं मुक्तिर्नाम ? संसारस्य दुःखमयत्वात्, तदत्यन्तविमोक्षोऽपवर्ग इति न्यायसूत्रे च दुःखात्यन्तविमुक्तिरिति चेत्—तत्र विकल्प्यते, किं वर्तमानात् दुःखजातान्मुक्तिः, किं वा भूतात्, आहो भाविन इति । सर्वमनुपपन्नमिति शंकते यदिति ।

निरासोऽपि न सम्भवत्येव ; तस्य भाविनः स्वरूपाभावेन निरासस्य कर्तुमशक्यत्वात् । विद्यमानस्य हि घटादेर्मुसलप्रहारेण विध्वंसः क्रियते; न पुनरविद्यमानस्य नरविषाणादेः । तेन निरसनीयदुःखाभावात् तन्निरासोपायभूतो यागादिरनर्थकमेव' इति । तदिदमनूद्य निराचष्टे—यद्दुःखमिति । अयमत्र शब्दान्वयः-यद्दुःखमिह वर्तते तत् क्षणिकत्वात् स्वयत्नोपरोध्यम् । अतो यद्दुःखनिवृत्त्यर्थं, साऽपि प्रागेव निवृत्ते तदर्थमपि यत्नो न कर्तव्यः। तेन भाविदुःखमवशिष्यते । तच्च न सुपरिहरम्= तच्च न परिहर्तुं शक्यते । कुत इत्यत्राह हेतौ सामग्र इति । अनादिकालसिद्धेषु बहुषु पापेषु विद्यमानेषु कथं भावि तद्दुःखं सुपरिहरं भविष्यतीति । किञ्च भावीति पदं दुःखस्योत्तरकालसम्बन्धमेवाह । तस्य निरासः कर्तुमेव न शक्यते । न हि स्वकालसम्बन्धिनो वस्तुनस्तत्कालसम्बन्धित्वमीश्वरेणापि निवारयितुं शक्यते । तथात्वे सर्वं सर्वत्र सर्वदा मिथ्यैव स्यात् । तेन सर्वदुःखात्यन्तोपरोधे कारणविधिः ब्रह्मोपासनविधिरिति व्यर्थमेवेदं वचनमिति । तदेतत् प्रतिक्षिपति—अर्थस्त्वयमिति । अयमर्थः—वर्तमानदुःखोपरोध इत्यस्माभिर्नोच्यते; न चातीतदुःखोपरोध इत्युच्यते; नापि भाविदुःखस्य प्रध्वंसोत्पादनमिति कथ्यते । अपितु कारणसद्भावे भावित्वेन प्रसक्तस्य दुःखस्य सामग्रीनिरोधः क्रियते, भाविदुःखे कारणत्वेनावस्थितानां कर्मणां विनाशः क्रियत इति । शक्यन्ते हि विद्यमानानि दुःखकारणानि विनाशयितुं दुरितापनोदनप्रायश्चित्तरूपेण ब्रह्मोपासनेन । न सर्वलोकविदितमिदं कुदृष्टिपरिकल्पितेन दुर्विगादेन निवारयितुं शक्यते । लोके हि वातपित्तश्लेष्मादिकारणप्रकोपेन प्रस्तुतं मरणादिदुःखं वैद्योपदेशसिद्ध-औषधप्रयोगेण कारणप्रतिबन्धरूपेण निवार्यते । तद्वदत्रापि पूर्वकृतानां दुरितानां ब्रह्मज्ञानेन विध्वंसात् तेनैव ब्रह्मज्ञानेनोत्तरेषां दुरितानामनारम्भात् सामग्र्युपरोधेन संसारानुवृत्तिर्निरुध्यत इति सर्वं समाहितम् । तदिदं दर्शयति—प्रायश्चित्येति । कृतानां प्रायश्चित्या, परमपि दुरितानामकरणात् दुःखसामग्रीनिरोधेन दुःखोत्पत्तिर्न भविष्यति कारणाभावात्कार्याभाव इत्याबालगोपालं लिखितपठितोऽयमर्थः ॥ ४२७ ॥

---

क्षणभिदुरतयेति । सुखदुःखादीनां क्षणिकत्वस्य द्विलक्षणाधिककालाननुवृत्तेः सर्वसंमतत्वात् तदातदा स्वयमेव नश्वरत्वादित्यर्थः । नातीतेति । नष्टस्य नाशोपायान्वेषणं हि व्यर्थमिति । भाविदुःखपक्षे आह न चेति । भावीति किमवश्यं भविष्यतो विवक्षा, उत तदन्यस्य । अवश्यम्भाविता च सामग्र्या= कारणकलापस्य सत्त्वे । सामग्रीसत्त्वे च कथं न शक्यं परिहर्तुम् । तदभावे तु दुःखमेव न भविष्यतीति किं परिहारप्रयत्नेन । एवञ्च दुःखात्यन्तनिरोधस्योकरीया साधयितुमशक्यत्वात् तत्साधनविधानं नोपनिषत्कृत्यमिति शंका । निरस्यति इत्यर्थस्त्वयमिति । भूतवर्तमानविषये उक्तं रम्यम् । भाविविषये उक्तं तु न सम्यगित्यर्थः । यत्तु दुःखजन्मनः प्राक् दुःखाभावात् न दुःखपरिहार्यम्; जाते च क्षणिकतया स्वयमेव ध्वंसात् न परिहार्यमिति—तदसत् । दुःखस्यापरिहारात् । दुःखोत्पादकसामग्रीविघटनात् । सामग्रीविघटनं नाम सामग्र्यन्तर्गतस्य दुःखकारणस्य चिरानुवृत्तस्य ध्वंसनमेव । तथाच कृतानां कर्मणां दुःखहेतूनां प्रायश्चित्त्या प्रायश्चित्तकरणेन, परं पश्चात् अकरणतः दुःखहेतुकर्मानाचरणाच्च दुःखसामग्रीनिरासात् । अकरणञ्च विवेकस्य जागरया वैराग्यात् । मुक्तानां पूर्णवस्तुसाक्षात्कारिणां न विवेकदुर्भिक्षम् । भगवदेकभोगानां वैराग्यञ्च सुलभम् सर्वमिदं सर्वकर्मनाशे स्वयमेवेति कर्मनाश एव संसाध्यः । स च भक्तिरूपप्रायश्चित्तसाध्य इति सैव मुक्तिः । तथाच दुःखात्यन्तविमोक्ष इत्यस्य दुःखहेतुसर्वकर्मोच्छेद इत्यर्थ इति नानुपपत्तिरिति ॥ ४२७ ॥

(४२८) राजद्विष्टादि सर्पादि परिहरसि छत्रपूर्वं बिभर्षि
प्रायश्चित्ताप्रवृत्तौ फलति दुरितमित्येवमीहामिहेच्छ ।
उत्प्रेक्षारूढभाव्यापजयशमनतः स्वोक्तिसाफल्यमिच्छन्
पश्यंश्चाऽऽबालतिर्यक् भयचकितगतिं जोषमित्थं जुषस्व ॥ ३६ ॥

भाव्यनर्थपरिहाराय प्रवृत्तिर्लोके बहुधो पलभ्यत इति अत्राप्याशङ्कितभाव्यनर्थकारणनिराकरणाय ब्रह्मोपासने प्रवृत्तिर्युज्यत इति दर्शयति–राजद्विष्टादीति। राजशासनविलङ्घनं सर्पादिकम् अनिष्टहेतुं परिहरसि। स च परिहारो भाविदुःखोपरोधार्थ एव। छत्रपूर्वं बिभर्षि–भाविवर्षाद्यापत्तिनिराकरणायैव हि छत्रादिकं बिभर्षि। तद्वदत्रापि कृतपापस्य प्रायश्चित्ताकरणे दुरितमात्रात् ते सांसारिकसकलमपि दुःखं भविष्यति, तत्करणे पुनः सामग्र्यविच्छेदादुत्तरकाले प्रचक्तं दुःखं न भविष्यतीति ब्रह्मोपासने प्रवृत्तिं भजस्व। किञ्च किमनेनान्यकालिकेन दृष्टान्तेन। अधुना भवान् भाव्यनर्थपरिहारायैव प्रयतते। तथाहि–यद्यहं तूष्णीमेव स्याम्, तदा मम पराजय एव भविष्यतीत्युत्प्रेक्षारूढभाव्यपजयशमनाय स्वोक्तेः साफल्यमिच्छंस्त्वं बालतिर्यक्पर्यन्तं भयचकितगतिं पश्यंश्च जोषमित्थं जुषस्व जोषमास्स्वेत्यर्थः। बालास्तिर्यञ्चोऽपि भयचकिता एव गच्छन्ति। भयञ्च भाव्यनर्थाशङ्कया। तस्यैवानर्थस्य परिहरणाय पलायन्ते च। तेनाऽऽबालगोपालं प्रसिद्धार्थं न विचदितव्यमिति ॥४२८॥

साध्यसाधनभावस्यैवदुर्वचत्वेन मुक्त्यहेतुविद्येति चोद्यनिरासः।

(४२९) साध्यं वा साधनं वा स्वविहित(विहित)विधयैर्दुर्निरूपं वदन्तः
तद्वादे किं प्रवृत्ताः? किमिति च विदधत्यन्वह भोजनादीन्? ।
मुक्तेर्नित्यत्वसिद्ध्या भजनमफलमित्यप्यसत् प्रागसिद्धेः
सांख्यास्त्वत्रानुयोज्याः सकरणदशया नित्यमुक्तिं गृणन्तः ॥ ३७ ॥

---

३६. भाव्यनर्थपरिहारो नाम तद्धेतुविघटनमेव। एतदस्वीकारे च कष्टाव्यवादयो दोषा इत्युपपादयति राजेति। राजद्विष्टं राजद्वेषम्। भावे क्तः। यद्वा राज्ञो यो द्विष्ट पुरुषः, राजकुलनर्थशङ्कया तत्संभाषणादि परिहरसि। तथा राज्ञ इष्टं गृहक्षेत्रदारादि परिहर्तुं नापहर्तुं मिच्छसि। इदं हि राजदण्डपरिहरणार्थं तदुपायविघटनमेव। राजैव प्रतिवादी चेत्–तत्साधारण्यायाऽन्यद् दर्शयति सर्पादीति। छत्रपूर्वं छत्रादिकं हि भाविवर्षातपसंबन्धवारणकामनया धारयसि। नखम्पच-ललाटन्तपोष्णपरिहाराय हि पादुकाया आतपत्रस्य च धारणम्। तत्तदकरणे तत्तदनिष्टमिव, प्रायश्चित्ताकरणे दुरितजन्यं दुःखं स्यादिति इह भजनेऽपि ईदृशीं प्रवृत्तिमिच्छ। किमनेन विप्रकृष्टोदाहरणेन। येयं ते मया सह वादरूपोक्तिः, सा किमर्था। अपजयशमनार्थमिति चेत्—भविष्यतीति त्वयोत्प्रेक्ष्यमाणो योऽयमपजयः, स भाव्यः अवश्यम्भावी। "ओरावश्यके" इति सूत्रात् आवश्यकार्थे ण्यत्। आवश्यकत्वादेव न परिहर्तुं शक्यते। अथापि तत् कामयसे, तेन साफल्यं कामयसे। अनेन भाव्यनर्थहेतुविघटनोपायः सिद्धः। न केवलं विदुष एवेदृशी प्रवृत्तिः, आबालमसु दृश्यते भयचकिता भयेन विह्वला गतिः धावनादिः। सर्वमिदं पश्यन्, दुःखोच्छेदे दुराक्षेपो न युक्त इति निर्धारयन् वादं विसृज्य तूष्णीं भवेति। जोषमित्थं जुषस्व=मदुक्तिश्रवणकालिकोऽयं तूष्णीम्भाव इत्थमेवानुवर्ततामिति ॥ ४२८ ॥

इत्थं कर्माङ्गकब्रह्मविद्यया कृत्स्नदुःखनिवृत्तिपूर्वकब्रह्मप्राप्तिरित्युक्तम्। अत्र कश्चिच्चोदयति— कार्यकारणभावस्यैव दुर्निरूपत्वान्न साधनत्वं विद्यायाः, नापि विद्योपकारकत्वं कर्मणः, नापि च कर्मानुगृहीतब्रह्मोपासनसाध्यत्वमपवर्गस्य, सर्वस्यापि विकल्पासहत्वात्। किं कारणाद् भिन्नमभिन्नं वा कार्यम्? भिन्नञ्चेत्, तस्य तत्कार्यत्वं न स्यात्। न हि घटस्य पटः कार्यम्। अभिन्नञ्चेत्, तथापि न कार्यम्—न हि घटस्य घट एव कार्यम्। भिन्नाभिन्नत्वमवाच्यमेव व्याघातात्। तथा कुर्वत् कारणम्, उताकुर्वत्? उभयथाऽपि कारणं न भवत्येव। यथाऽऽहुः—

'कुर्वत् कार्यमकुर्वद्वा यत्किञ्चित् कारणं भवेत्। कुर्वच्चेत् अनवस्थानमकुर्वत्त्वेऽव्यवस्थितिः॥'

इति। एवं किं प्राप्य कार्यं करोति कारणम्, उताप्राप्य? उभयथाऽपि कारणत्वं न सम्भवति। [1]प्राप्त्यप्राप्तिसमोत्थानेन दूषणमपि वाच्यम्। किञ्च कारणशब्दार्थ एव निरूपयितुं न शक्यते। नियतपूर्वभावि कारणमिति निरूप्यते चेत्, किं सर्वापेक्षया नियतपूर्वभावि? तन्न; अतिप्रसङ्गात्। कार्यापेक्षया चेत्, तच्च न—कार्यशब्दार्थस्यैव दुर्निरूपत्वात्। नियतपश्चाद्भावि कार्यमिति चेत्, तच्च सर्वापेक्षया चेत्, अतिप्रसङ्गः; स्वकारणापेक्षया चेत्, परस्पराश्रयदोषः; कार्यकारणयोरन्योन्य-निरूपकत्वात्। एवमनेकविधदोषदूषितत्वात् कार्यकारणभाव एव न सङ्गच्छते। कुतस्तेन ब्रह्मोपासनस्यापवर्गं प्रति करणत्वेन विधिः; कारणविशेषत्वात् करणस्य इति। इत्थं दुर्निरूपत्वात् कार्यकारणभावे कण्ठगतजीवे करणत्वाभिप्रायिणामुपासनविधीनां मरणमेव शरणम् इति। एवं वदन्तं परपक्ष-वादिनं प्रतिक्षिपति—साध्यं चेति। कार्यं वा कारणं वा स्वव्याघातोपहतदुर्मार्गैर्दुर्निरूपमिति वदन्तो भवन्तस्तस्मिन् वादे किं प्रवृत्ताः? अयमर्थः—आधुनिकी भवदीयवादप्रवृत्तिर्निरर्थिका सार्थिका वा; निरर्थिका चेत्, प्रवृत्तिरेव न घटते। न हि प्रयोजनमनुद्दिश्य मन्दोऽपि प्रवर्तते। सार्थिका चेत्, स एव कार्यकारणभावः। एतस्या एव वादप्रवृत्तेः कारणत्वात् परवादिपराजयस्य तत्फलस्य कार्यत्वात्। तर्हि परवादिपराजयः सिद्ध इति विजयामहे इति चेत्—इदं स्वप्नलब्धसुवर्णेन कटककरणमित्याह—स्वविहत(विहित)विपर्यैरिति। साध्यं वा साधनं वा दुर्निरूपमिति भवान् प्रलपत्येव। नैतावता पर-वादिपराजयसिद्धिः स्वव्याघातोपहतत्वादेतस्य वाक्यस्य। तेन कार्यकारणभावाङ्गीकारे न परवादि-पराजयः। तदनङ्गीकारे परवादिपराजयहेतुत्वभावान्न परवादिपराजयः। तेन प्रलाप एवायं भवत्परि-कल्पितो दुर्मार्ग इत्यर्थः। तद्वादे किं प्रवृत्ता इत्यनेनास्य भिरुदितं स्वव्याघातजालमिदमुक्तं भवति। एवं वादप्रवृत्तिमेवोपरुध्य लोकप्रवृत्तिमप्युपरुणद्धि किमितीति चेति। वादप्रवृत्त्यभावे परिभूयेत

३७. चार्वाकच्छायामाश्रितं जिगीषु जयति साध्यमिति। यदिदं मुक्तेर्दुःखनिवृत्तेरसाध्यत्वोक्ति-दूषणेन साध्यत्वसमर्थनम्, तत् तदा स्यात्, यदि साध्यसाधनभावः=कार्यकारणभावः कुत्रापि सुवचः स्यात्। स एव न। तस्य विविधविकल्पनिरस्तत्वादिति चार्वाकवराकाः। तैरुद्भाव्यमानाः सर्वे **विपथाः** विरुद्धमार्गाः **स्वविहताः** स्वक्रियाविरुद्धाः=स्वक्रियाव्याघातदुष्टाः। **विहते**ति पाठे चिन्तामणिस्वरसः। **स्वविहिते**ति पाठे स्वकल्पितेत्यर्थः। तदनुपरि च **चिन्तामणिवाक्यम्, भवत्परिकल्पितो दुर्मार्गः** इति। विपथप्रकाराश्चेह चिन्तामणौ, आरम्भणाधिकरणभाष्यादौ, 'सत्त्वेऽसत्त्वेऽपि' (1-32) इति तत्त्व-**मुक्ताकलाप**श्लोकादौ च द्रष्टव्याः। एवं कार्यं कारणञ्च दुर्निरूपत्वेन ये वदन्ति, ते किमर्थं तथा वदन्ति? स्वपक्षस्थापनं परपक्षदूषणञ्च तत्कार्यं चेत्—कथं कार्यकारणभावापलापः। एवं वादिनामन्वहं भोजन-गमन-

1 प्राप्त्यप्राप्तिसमेति जातिनिग्रहस्थानान्तर्गतजातिभेदः।

भवान्, लोकप्रवृत्त्यभावे भवतः स्रजी स्नभोजनाद्यभावेन स्वरूपस्यैवाभावात् नानुभूयेत पुत्रादिभि-रित्यर्थः। भोजनमपि हि स्रजी स्नकारणमेव। कार्यकारणभावाभावे सर्वोऽपि व्यापारो लोलुप्येतेति। अन्यमपि परब्रह्मभजनस्य निराकरणहेतुं स्वयमपि निराकरोति—मुक्तेरिति। मोक्षस्य नित्यत्वात् परभजनमफलमिति यदुच्यते, तत् असिद्धमसिद्धेन साधयतीति न्यायस्य विषयः; मोक्षस्य सकलसांसारिकदुःखोच्छेदरूपत्वेनाऽऽगन्तुकत्वात्। तमेव हेतुमाह-प्रागसिद्धेरिति। नेदमागामिमोक्षवादिनामस्माकं दूषणम्, अपितु सांख्यानामेवेत्याह—सांख्या इति। कथं तेषां दूषणमित्यत्र तन्मतेन दूषणं दर्शयति—सकरणदशायेति। करणकलेवरसद्भावेनैव नित्यमुक्तिं वदन्ति सांख्याः। करणकलेवरसद्भाव एव संसारः, तद्विरहो मुक्तिरिति मिथोव्याघातः। इममर्थं व्याहतमेव व्याहरन्तः सांख्या निराकार्या इत्यर्थः॥ ४२९॥

मतान्तरदूषणेन स्वसिद्धान्ते मुक्तिस्वरूपविशदीकारः—

(४३०) मोक्षाभावे मुधा स्यात् सपरिकरमिदं साधनं चिन्त्यमानम्;

मुक्तिश्चेत् भ्रान्तिसिद्धा, भ्रम इह भविता यावदात्मस्वरूपम्।

क्षेत्रज्ञं नित्यमुक्तं कथयितुरफलः साधनाभ्याय इत्थं

प्रध्वंसात्मा हि मुक्तिर्नयविदभिमता सा तु भावात्मिका न ॥ ३८ ॥

पूर्वं सांख्यस्य नित्यमुक्तिं वदतः कथितं दूषणं मृषावादिनोऽप्यविशिष्टमित्युक्त्वा स्वपक्षे मोक्षं स्वरूपतो विशदमेव दर्शयति—मोक्षेति। अत्रायं विकल्पः—नित्यमुक्तात्मवादी मृषावादी किमागामिमोक्ष एव नास्तीति ब्रूते, किं वा भ्रान्तिसिद्धो मोक्ष इति। उभयथाऽपि न युज्यते। तथा हि—मोक्षो यदि न स्यात्, तदा सपरिकरमिदं चिन्त्यमानं साधनं मुधा स्यात्। आगामिनो मोक्षरूपफलस्याभावात्। तर्हि मुक्तिर्भ्रान्तिसिद्धेति पक्षं परिगृह्णीम इति चेत्—तत्रापि विकल्पः—किमाधुनिकभ्रान्तिसिद्धो मोक्षः, उत मोक्षदशायामुत्पन्नया भ्रान्त्या सिद्धः। न तावदाद्यः—अधुना संसारभ्रान्तेर्विद्यमानत्वेन मोक्षभ्रान्तेरनुदयात्। नापि परः—तथा सति मुक्तिदशायामारोपितमोक्षविषयभ्रान्त्यनुवृत्तेर्यावदात्मस्वरूपं भ्रान्तिरेव स्यात्। किञ्च क्षेत्रज्ञस्य नित्यमुक्तत्वं कथयितुस्तत्र

शयन-विहरणादिप्रवृत्तिरपि दुर्घटा-प्रयोजनोद्देशायोगात्। अस्तु तर्हि मुक्तेर्नित्यत्वादसाध्यत्वमिति चेत्—इदं मुक्तेर्नित्यत्वात् उपासनं निष्फलमिति वचनमसत्; संसारदशायामस्मां मुक्तेरसिद्धतया नित्यत्वायोगात्। नन्वयमपसिद्धान्तः, आत्मनः शुद्धनित्यमुक्तस्वरूपत्वाभिमतेरित्यत्र ह सांख्या इति। सांख्या हि तथा वदन्ति। आत्मनां सकरणदशां करणकलेवरवत्रूपावस्थामिच्छन्त एव तद्दश एव मुक्तिमपि वदन्तस्ते व्याहतवचनत्वात् कामं पृच्छ्यन्ताम्; न वयं प्रष्टव्याः। नास्माभिर्नित्यमुक्तत्वमुच्यत इति॥४२९॥

३८. अथानुयुक्तैः सांख्यैः क्रियमाणं स्वपक्षस्थापनप्रकारं वदन्तं चार्वाकमनुसरन्तं पराकरोति मोक्षेति स श्लोकमाह—यदि मोक्षः स्यात्, नित्य एव स्यात्, सत्कार्यवादात्। साध्यत्वे त्वनित्यतया पश्चान्मोक्षे नष्टे संसारोन्मज्जनप्रसंगः। अतो नित्यमुक्त आत्मेति सांख्योक्तमिष्यताम्। मोक्ष एव नेति अस्मन्मतं वा। तर्हि मुक्तिविषयः सर्वतीर्थकरव्यवहारः कथमिति चेत्— भ्रान्तिमूल एवेति। तत्राह मोक्षाभावे इति। चार्वाकपक्षमालम्ब्य शंकेयं नूनं सर्वमनिर्वचनीयमिति स्थापने प्रयस्ततो मृषावादिनः। यदि ब्रह्मातिरिक्तवस्त्वभावात् मुक्तिरेव नास्ति, तर्हि किमर्थमिदमुपासनतदंगकर्म-शम-मौनादिचिन्तनम्।

साधनाध्यायोऽफलः एव स्यात्, नित्यमुक्तत्वेन साध्याभावात्। भ्रान्त्युपशमनार्थं साधनाध्याय इति चेत्, तर्हि निवर्त्यसद्भावान्न नित्यमुक्तत्वसिद्धिः। निवर्त्याभावे तु तदेव नैष्फल्यमनुवर्तेत॥ तर्हि सकलसांसारिकदुःखनिवृत्तिर्ब्रह्मज्ञानकार्येति चेत्, कार्यस्यानित्यत्वात् तन्नाशे संसारोन्मज्जनप्रसङ्ग इत्याशङ्क्याह-प्रध्वंसेति। न्यायविदां पक्षे प्रध्वंसरूपिणी मुक्तिः। प्रध्वंसस्य कार्यत्वेऽपि नित्यत्वमिति हि तेषां पक्षः। अतो नानित्यत्वप्रसङ्गः। तर्हि युष्मत्पक्षे भावरूपत्वमस्तीति चेत्—अस्त्येव। तेषामभाव एवास्माकं भावः। यथा अभावरूपत्वान्मुक्तेः कार्यत्वेऽपि नित्यत्वमिति न्यायवादिनो वदन्ति, एवं भावान्तराभाववादिनामस्माकमपि 'न च पुनरावर्तते' इति न्यायानुगृहीतश्रुतिसामर्थ्यादपहतपाप्मत्वादिगुणाष्टकाविर्भावरूपमुक्तेर्भावरूपत्वेऽपि नित्यत्वसिद्धिरिति कृतं विस्तरेण॥४३०॥

(४३१) सन्तत्यात्मा कपालप्रभृतिबहुविधावस्थयाऽन्यत्र नाशो
धीसङ्कोचप्रणाशो विकसनमतथाभूतमस्याऽऽगमात् स्यात्।
मन्यन्तेऽन्ये तु धारावहनमतिनयात् सन्ततिं मुक्तबुद्धेः
सामग्री चेश्वरेच्छाप्रभृतिसमुदयः स्यादनावृत्तिरेवम्॥ ३९॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां
तृतीयस्याध्यायस्य चतुर्थः पादः॥

उक्तं भावान्तराभावपक्षं लोकदृष्टप्रक्रियया पुराणानुसारेण च स्थापयन् मोक्षस्य नित्यत्वं पक्षद्वयेन दर्शयति—सन्तत्यात्मेति। 'मही घटत्वं घटतः कपालिका' इति पराशरादिवचनबलात्, उत्तरोत्तरावस्थान्तरमात्रस्य सन्तन्यमानस्यैव विनाशत्वेन च लोके उपलम्भात् धीसङ्कोचप्रणाश एव विकसनम्। अतथाभूतं नित्यसिद्धस्वरूपमस्य पुनरागमात्स्यात्। आगमस्तु, 'न च पुनरावर्तते' इत्यादिकः। अपुनरावृत्तिर्नाम विकसितज्ञानस्य पुनस्सङ्कोचाभावः। 'यथा न क्रियते ज्योत्स्ना

---

भ्रान्तिरस्त्वित्यपि न। किमियं भ्रान्तिः संसारदशायाम्, उत पश्चात्। नाद्यः; सर्वस्य संसारित्वेनैव गृह्यमाणतया मुक्तिभ्रान्तेरिदानीमभावात्॥ भविष्यतीति भ्रान्तिरिति चेत्-तदर्थमिदं सपरिकरसाधनचिन्तनमित्युक्तम्। नान्त्यः; पश्चात् सर्वदा भ्रान्त्यनुवृत्तौ कथमसंसारित्वम्। तथाचाऽऽत्मा नित्यसंसारी स्यात्। एवं नित्यमुक्तत्वपक्षेऽपि साधनाध्यायवैयर्थ्यमेव। अमुक्तत्वभ्रान्तिनिवर्तनार्थमिति चेत्— सा भ्रान्तिरपि मिथ्यैवेति कुतस्तन्निवर्तनम्। निवर्तनमपि मिथ्यैवेति च किं प्रयासेन। ननु सांख्येन यत् पृष्टम्, तत्र कः समाधिः; साध्यत्वे हि मुक्तिर्नश्येदिति चेत्—साध्याऽपि मुक्तिर्न नंक्ष्यति, ध्वंसरूपत्वात्। सादिरनन्तः प्रध्वंस इति हि नयविदः=तार्किकाः। ननु भावातिरिक्तमभावमनिच्छतां ते ध्वंसोऽपि जायमानो भाव एवेति तन्नाशः स्यादेवेति चेत्, तत्राह स इति। मुक्तिरस्मन्मते भावरूपैव। युक्तिमात्रप्रमाणकपुरुषोक्तं ध्वंसस्य नित्यत्वमिष्यते चेत्-युक्त्यपेक्षया प्रबलशास्त्रप्रामाण्यादयं भावस्यापि जायमानस्य नित्यत्वं कथं नेष्यते। शृणु च समनन्तरमेव कथ्यमानम्॥ ४३०॥

३९. संततीति। अस्मन्मते घटनाशो नाम कपालत्वावस्थैव। तर्हि कपालनाशे चूर्णाद्यवस्थायां घटनाशनाशात् घटोन्मज्जनप्रसंग इति न; कपालचूर्णरजःप्रभृत्युत्तरोत्तरावस्थासंततेरेव

मलप्रक्षालनान्मणेः' इति शौनकवचनमप्यत्रैव संगच्छते। अत्र पक्षान्तरमप्याह—मन्यन्त इति। विकसनं स्वरूपतो नित्यमित्येकः पक्षः, सन्तानात्मकमित्यपरः। अयमर्थः—धीसङ्कोचप्रणाशात् विकासस्यार्थान्तरत्वेऽपि नास्मकं दोषः। नित्यानुवृत्तज्ञानपारम्पर्यस्य, 'न च पुनरावर्तते' इत्यादिप्रमाणानुसारेण भावित्वेऽपि नित्यत्वाविरोधादिति। अयमत्र शब्दार्थः—अन्ये त्वाचार्या धारावहनबुद्धिन्यायेन मुक्तबुद्धेर्नित्यां सन्ततिं मन्यन्ते। तर्हि मुक्तबुद्धेर्नित्यानुवृत्तौ नित्यमेव तत्सामग्री च स्यात्। सा तु नास्ति। कथं नित्यानुवृत्तिरित्याशङ्क्य हि—सामग्री चेति। प्रमाणान्मुक्तबुद्धिसन्तानस्य नित्यानुवृत्तौ सत्यां श्रुतार्थापत्त्या तत्सामग्रीसन्तानस्यापि नित्यानुवृत्तत्वं सेत्स्यत्येव। न हि सामग्र्यनुवृत्त्यभावे कार्यानुवृत्तिरिति वक्तुमेव शक्यते। अत ईश्वरबुद्ध्यादिकं यदेव तत्कारणं युज्यते तदेव तत्र स्यादिति। एतदुक्तं भवति—यद्यपि विकासस्य भावरूपत्वं नित्यत्वञ्च, तथापि भूषणपक्षे नित्यज्ञानानन्दयोर्विषयविषयिभाववद् युक्तमेव नित्यत्वम्। अभावरूपत्वे पुनर्वैशेषिकोक्तनिखिलवैशेषिकगुणोच्छेदस्येव सुतरामपि नित्यत्वं सङ्गच्छते। ज्ञानसन्तानपक्षेऽपि ज्ञानकारणसन्तानानुवृत्त्या ज्ञानसन्ताननित्यत्वं सङ्गच्छते। ननु सन्ततित्वेनानुमितिच्छिद्यते सन्ततित्वात् प्रदीपसन्ततिवदिति न्यायवादिभिरुच्यत इति चेत्–तत् आगमापरामर्शात् सम्यक्तर्कापरामर्शाच्च। यथा प्रदीपस्य पूर्वोत्तरावधिद्वयसङ्गावेऽपि सन्ततित्वे सत्यपि कर्मभावादिस्यान्त्यावधिरेवास्ति; न पुनः पूर्वावधिः प्रमाणानुसारात्–एवं प्रदीपस्योभयावधिसङ्गावेऽपि 'न च पुनरावर्तते' इत्यबाधितप्रमाणानुसारादापवर्गिकज्ञानसन्तानस्य पूर्वावधिसङ्गावेऽप्युत्तरावधिर्नास्तीति यथाप्रमाणं यथान्यायञ्च कल्पनीयम्। किञ्च मृषावादिनो भावरूपाज्ञानस्योत्तरावधिसङ्गावेऽपि पूर्वावधिं प्रतिक्षिपन्ति, एवं वयमस्यासङ्कुचितब्रह्मानुभवरूपज्ञानस्य भावरूपस्यापि पूर्वावधिसङ्गावेऽप्युत्तरावधिर्नास्तीति कल्पयाम इत्यलमतिप्रसङ्गेन। विस्तरस्तु शतदूषण्यामेव द्रष्टव्यः ॥ ४३१ ॥

इति निखिलतार्किकचूडामणिना सर्वतन्त्रस्वतन्त्रेण
श्रीकुमारवेदान्ताचार्यपरनाम्ना श्रीमद्वेश्वामित्रवरदगुरुणा
विरचिते शारीरकाधिकरणचिन्तामणौ
तृतीयस्याध्यायस्य चतुर्थः पादः ॥

---

घटनाशरूपत्वस्वीकारात्। अतश्चूर्णत्वावस्थावसरेऽपि घटनाशोऽस्त्येव। अन्यत्र इतरभावविषये नाशः संततिरूपः। अत्र तु आत्मधर्मभूतज्ञानगतमुक्तिदशाविषये संसारकालिकस्य धीसंकोचस्य प्रणाशः विकासरूपैकावस्थैव॥ तर्हि सा कथं न नश्यतीति चेत्–तथाभूतता तस्याऽऽगमगम्या। जातस्य नाशो ध्रुव इति युक्तिवादिनमन्ये एवमुक्त्वा तर्पयन्ति—बुद्धेर्विकासो मुक्तिकाले धारावाहिधीन्यायेन प्रतिक्षणमुत्पद्यते, विनश्यति। स च संकोचहेत्वभावात् विकासः संततं जायमान एवास्तीति न मुक्तिप्रवाहलोप इति। तत्र विकासे कारणं किमिति चेत्—ईश्वरसंकल्पो मुख्यकारणम्। तद्घटितः समुदाय एव सामग्री भवेत्। अतो न संसारप्रसक्तिरिति। तत् सिद्धं मुक्तिः साध्या भावरूपाऽपि स्थिरैवेति ॥ ४३१ ॥

इति वात्स्यसच्चक्रवर्तिवीरराघवाचार्यकृतिषु
अधिकरणसारावलिव्याख्यायां सारार्थरत्नप्रभायां
तृतीयस्याध्यायस्य चतुर्थः पादः ॥

—•—०—

## अथ चतुर्थस्याध्यायस्य प्रथमः पादः ॥

तृतीयचतुर्थाध्याययोः चतुर्थे च पादद्विकयोः संगतिप्रदर्शनम्—

(४३२) इत्युत्पत्तिक्रमेण प्रथममभिहितो मुक्त्युपायः सहाङ्गैः
तत्साध्यं सूत्रकारः फलमथ विदुषः पर्वभेदैर्व्यनक्ति ।
स्थूले देहेऽस्य सिध्येत् यदिह वदति तत् पादयुग्मेन पूर्वं
निष्क्रान्तस्याथ यत् स्यात् परिगणयति तत् पादयुग्मान्तरेण ॥ १ ॥

अत्र पूर्वोत्तराध्ययोरेकार्थेन सङ्गतिमुक्त्वा, द्वितीयेनार्धेन चतुर्थाध्याये पूर्वोत्तरपादद्विकयोः पौर्वापर्यमाह—इत्युत्पत्तिक्रमेणेति। 'स्वर्गकामो यजेत' इत्यत्र साध्यावमर्शपूर्वकसाधनावमर्शस्य दृष्टत्वात् सोऽयम(सोऽन्योऽ?)वमर्शक्रमः। अत्र पुनर्ब्रह्मविद्याया उत्पत्तिक्रमानुसारेण पूर्वचिन्तनम्, ब्रह्मप्राप्तेः पुनः पश्चाच्चिन्तनमित्युत्पत्तिक्रमः। एवं प्रकारेणोत्पत्तिक्रमेण मुक्त्युपायः सहाङ्गैः प्रथममभिहित इति तृतीयाध्यायार्थः। अथ चतुर्थाध्यायार्थमाह—तत्साध्यमिति। उपायसाध्यं ब्रह्मप्राप्तिरूपं फलं सूत्रकारः पर्वभेदैर्व्यनक्ति=उत्तरपूर्वाघाश्लेषविनाशोत्क्रमणार्चिरादिगमनब्रह्मप्राप्तिरूपफलपर्वभेदैर्व्यनक्तीत्यर्थः। एवं पादार्थभेदमुक्त्वा पादद्वयार्थमपि विभज्य दर्शयति। तत्र तावत् स्थूलदेहादनुत्क्रान्तस्य यत् फलं तत् पादद्वयेन वदतीत्याह-स्थूल इति। स्थूलदेहादुत्क्रान्तस्य यत् फलं तत् उत्तरपादद्वयेन वदतीति दर्शयति—निष्क्रान्तस्येति। अयमर्थः—अश्लेषविनाशादिकमुत्क्रमणञ्च स्थूलदेहे वर्तमानस्यैव भवति; अर्चिरादिमार्गेण गमनं परब्रह्मप्राप्तिश्च स्थूलदेहादुत्क्रान्तस्येति विभाग इति ॥

फलाध्याये विद्याभिधाने बहुप्रयोजनप्रदर्शनम्—

(४३३) सूक्ता प्रागेव विद्या किमिति पुनरिमां वक्ति? यद्यस्ति शेषं,
सूनामेनच्च पूर्वं; न हि तदिह फले संघटेतेति चेन्न ।

---

१. तुरीयस्य तृतीयाध्यायेन संगतिं तुरीये पादभेदस्य तदर्थावान्तरभेदप्रयुक्तत्वं पादेषु द्विकं द्विकं पृथक्पेटिकेति तदर्थभेदञ्चाह इतीति। उपायेच्छायाः फलेच्छापूर्वकत्वात् फलं पूर्वं क्वचित् प्रदर्श्येत। अत्र तु उपायानन्तरमेवोपेयोत्पत्तिरिति तयोरुत्पत्तिक्रममनुसृत्य तत्त्वहितपुरुषार्थेषु तत्त्वहितानन्तरमेव चतुर्थे पुरुषार्थनिरूपणम्। अतः मुक्त्युपायः इममुत्पत्तिक्रममनुसृत्य प्रथममभिहितः सूत्रकारेण। तत्र चतुर्षु पादेषु तृतीयपादमात्रे उपायनिरूपके, तदङ्गनिरूपणं त्रिभिः पादैः। प्राप्येतरवैतृष्ण्यं प्राप्यविषयतृष्णा चोपायानुष्ठानोपकारकं पूर्वाभ्यां पादाभ्यां क्रमेण स्वरूपे। कर्मशमादीनां भवत्यंगानां चतुर्थपादोक्तानां परमुत्पत्तिक्रमो न भवति। तथासति कर्माधीनोत्पत्तिकत्वादुपासनस्य चतुर्थपादार्थनिरूपणानन्तरमेव तृतीयपादार्थस्योपासनस्य वक्तव्यत्वप्रसंगात्। उपासनारम्भात् प्राक् कर्मणामुपासनार्थत्वानियमं तदारम्भानन्तरं सर्वस्यापि कर्मादेस्तदङ्गत्वनियमञ्च ज्ञापयितुं कर्मणां पश्चादुक्तिः। अथ=उपायाभिधानानन्तरं तत्साध्यं उपासनोत्पाद्यं फलं मुक्तिं पर्वभेदैः संचितकर्महानि-चरमदेहनिष्क्रमण-अर्चिरादिमार्गगमन-पूर्णब्रह्मानुभवरूपक्रमिककार्यभेदैश्चतुर्भिः व्यनक्ति विशदयति। तत्र द्विकद्वयभेदरूपपेटिकाभेदे पूर्वं पादयुग्मे स्थूलदेहस्थितिकाले यत् यत् फलपर्व साध्यं, तत् वदति। अथ=अनन्तरं पादयुग्मेनान्येन स्थूलदेहात् निष्क्रान्तस्य यत् यत् भावि तत् चिन्तयतीति ॥ ४३२ ॥

**मुक्तेरन्यैरसिद्धि, प्रकृततदविनाभावम्, आसन्नसिद्धि,**
**मुक्तावस्थासमञ्च स्थिरभजनरसं व्यक्तुमत्रानुबन्धात् ॥ २ ॥**

अत्र फलाध्याये विद्यायाः पुनरभिधानप्रसक्तिदोषोपहतमित्याशङ्क्य प्रयोजनविशेषाभिधानेन संगतिं दर्शयति—सूक्तेति। अयमत्राऽऽक्षेपः–प्रागेव ब्रह्मविद्या सूक्ता। किमर्थं पुनरिमां ब्रह्मविद्यामत्रास्थाने वक्ति सूत्रकारः। ननु ब्रह्मविद्यायां वक्तव्यावशेषोऽस्तीत्याशङ्क्य तदपि सूत्रकारः पूर्वमेव तृतीयाध्याये ब्रूताम्, स्वस्य तत्त्वात् [इत्याह?]। अथाप्यत्राभिधाने को दोष इत्याशङ्क्याह–नहीति। अयमर्थः–फलत्वादत्रोच्यते चेत्, ब्रह्मविद्या न फलम्; अफलत्वेऽप्यत्रोच्यते चेत्, असङ्गतत्वात् प्रतिपत्तिवैरस्यमेव जायेतेति। तदिदं प्रतिक्षिपति–नेति। तत्प्रतिक्षेपप्रकारमाह–मुक्तेरिति। अत्र चत्वारोऽर्थाः विशेषतो व्यञ्जनीयाः। ते च फलान्तर्गता एव। तदभिधानार्थं तत्प्रतिसम्बन्धितया ब्रह्मविद्याऽत्राप्यभिधीयते। मुक्तेरन्यैरसिद्धिरित्येकोऽर्थः। 'नान्यः पन्था अयनाय विद्यते' इति मोक्षस्यान्यैरसिद्धिः प्रसिद्धा। प्रकृततदविनाभाव इत्यपरोऽर्थः। प्रकृतस्य ब्रह्मोपासनस्य तदविनाभावो मोक्षाविनाभावः, 'ते ह नाकं महिमानस्सचन्ते' इत्युच्यते। आसन्नसिद्धिरित्यन्यः। 'तमेवं विद्वान् अमृत इह भवति' इति भगवज्ज्ञानानन्तरमविलम्बेन मुक्तावस्थानुल्यावस्थाप्राप्तिः श्रूयते। मुक्तावस्थासमञ्च स्थिरभजनरस इतीतरः। भगवदुपासनस्य मोक्षावस्थातुल्यरसरूपत्वम्, स्वर्गादिसाधनेषु साधनं दुःखात्मकं, फलं दुःखव्यामिश्रमेकदेशसुखात्मकम्; ब्रह्मोपासने फलतुल्यसुखात्मकमेव स्वरूपम्। एतान् अर्थान् प्रकाशयितुं साधनस्यापि ब्रह्मोपासनस्य फलाध्यायोपक्रमे निर्देश इति। व्यक्तुमत्रानुबन्धात् इति। फलतुल्यत्वेन फलकोटिनिवेशमुपपादयितुमत्र ब्रह्मविद्यानुबन्ध इत्यर्थः॥ ४३३॥

---

२. ननु फलपर्वभेदप्रतिपादके प्रथमपादे उत्तरपूर्वाघाश्लेषविनाशरूपं फलांशं तदधिगमाधिकरणे वक्ष्यति। तस्यैवात्र पादे संगतत्वम्। ततः प्राक् विद्याया आवृत्त्यादिविशोधनं यत् क्रियते, तदत्रासंगतम्। उपासनपादे तृतीयतृतीये किल तत् वक्तुमुचितम्। यद्वा तृतीयतुरीयाद्ये कर्माङ्गकत्वस्य विद्यायां स्थापनात् वाक्यार्थज्ञानातिरिक्तोपासनात्मकत्व एव तदंगकत्वोपपादनसम्भवात् तत्रैवाऽऽप्रयाणाऽऽवृत्तिपर्यन्तं निरूप्य कर्मणामगत्वोपपादनं युक्तम्। तत् विहाय किमित्यस्थाने विद्याविचार इत्याशङ्क्य परिहरति सूक्तेति। प्रागेव=तृतीयाध्याय एव विद्या सूक्ता नियतस्थानगुणरूपविशिष्टब्रह्मविषयकविविधज्ञानरूपत्वेन सम्यगुक्ताऽऽसीदिति इमाम् उक्तामेव किमिति कुतः पुनरिह वक्ति। यदि शेषम् उक्तांशातोऽधिकं वक्तव्यमस्ति, तर्हि एतदपि पूर्वमेव सूत्रकारो वक्तुमर्हति। हि यतः इह फलाध्याये तत् उपायस्वरूपं न संघटेत=न संगतं भवेदिति। निरस्यति नेति। पूर्वत्र तन्निरूपणं संगतमेव। अथाप्यत्र नासंगतिः। अधिकप्रयोजनञ्चास्तीत्यभिप्रेत्याह मुक्तेरिति। उपायफलयोरुपासनमोक्षयोरेकत्राध्याये संमेलनेनेदमिदं ज्ञाप्यते—यथाविधमत्र साधनं निरूप्यते, तथाविधेनास्य फलस्य दृढः संबन्ध—ईदृशसाधनं विना साध्यमिदं न भवतीति, ईदृशसाधने सत्यपि साध्यमिदं न भवतीत्यपि नास्तीति, 'उपायफलयोरत्यन्तं संनिकर्षः; न मध्ये फलाऽऽबाधकं किञ्चिदनुष्ठाप्यत्राऽनुष्ठेयमस्ति' इति, उपाय आवर्त्यमानः प्रीतिरूपापन्नः फलवत् स्वयमपि भोग्यरूपोऽवतिष्ठते इति च चत्वारोऽर्था अत्र व्यंग्याः। इमान् व्यक्तुं ज्ञापयितुमुपायस्यात्र फलपरे अनुबन्धः वक्तव्यशेषव्युत्पादनमिति। प्रकृततदविनाभावं प्रकृतस्योपायस्य तेन फलेनाविनाभावम्, फलं विना सत्त्वाभावम्; नियमेन फलविशिष्टत्वमिति यावत् ॥ ४३३ ॥

## १२४ ॥ आवृत्त्यधिकरणम् ॥ ४-१-१ ॥

सूत्रम्—आवृत्तिरसकृदुपदेशात् ॥ लिङ्गाच्च ॥ १, २ ॥

(४३४) शुद्धैरुत्कृष्टधर्मैः सदनपचरणे ब्रह्मविद्या भवित्री-
त्युक्तं पूर्वाधिकारे ; विमृशति तु परं तत्स्वरूपं यथावत् ।
प्रत्यक्षं वा स्मृतिर्वा सकृदिदमसकृद्वेति नोक्तं पुरस्तात्
यावज्जीवानुवृत्तिप्रभृति च तदिहापौनरुक्त्यं सुबोधम् ॥ ३ ॥

अत्राधिकरणसंगतिर्भाष्ये, 'तृतीयेऽध्याये साधनैस्सह विद्या चिन्तिता' इत्युपक्रम्य, 'वेदान्तवाक्येषु ब्रह्मप्राप्तिसाधनतया विहितं वेदनं किं सकृत्कृतमेव शास्त्रार्थः, उतासकृदावृत्तमिति संशयः इत्यभिधानात् । तदर्थविचारस्तु—किं वेदान्तविहितं वेदनं सकृत्कृतं शास्त्रार्थः, उतासकृद् वृत्तमिति । किं, 'ब्रह्मविदाप्नोति परम्' इत्यादिभिर्वेदनमात्रं विधीयते, उत निदिध्यासनम् । किमत्र विदिशब्दो ज्ञानमात्रपरः, उतोपासनपरः । उपक्रमोपसंहाराभ्यां वाक्यान्तराच्चोपासनपरत्वं विदिशब्दस्यावगम्यते, नेति । अत्र तृतीयाध्यायचरमाधिकरणेनास्याधिकरणस्य संगतिं वदन् प्रतिपाद्यविशेषार्थानप्याह—शुद्धैरिति । फलसङ्गकर्तृत्वादिदोषरहितैरुत्कृष्टधर्मैः शमादिभिश्च सदनपचरणे = ब्रह्मविदपचाराभावे ब्रह्मविद्या भवित्रीति पूर्वाधिकरण उक्तम् । एतस्मिन्नधिकरणे ब्रह्मविद्यास्वरूपं विमृशति । पूर्वमपि ब्रह्मविद्यास्वरूपं तत्र तत्र निरूपितम्; तेन पौनरुक्त्यं किं न स्यादित्याशङ्क्य पूर्वं निरूपिताकारादधिकस्याऽऽकारविशेषस्य ब्रह्मविद्यायां विद्यमानत्वात् तदाकारविशेषोपपादनेन अपौनरुक्त्यमुपपादयति—प्रत्यक्षमित्यादिना । अयमत्र शब्दान्वयः—किं मोक्षोपायभूतं ब्रह्मोपासनम्?

---

३. प्रथमाधिकरणमारचयन् पूर्वाध्यायान्तिमप्रकरणेनास्य संगतिमादौ दर्शयति शुद्धैरिति । उपासनांगभूतानां धर्माणां फलसंगकर्तृत्वत्यागयुक्ततया शुद्धत्वेऽपि भगवदर्पणबुद्ध्या क्रियमाणतयोत्कृष्टत्वेऽपि सच्छब्दवाच्यब्रह्मविद्विषयकापराधरूपप्रतिबन्धकाभाव एव विद्या भवितुमर्हतीत्युक्तं पूर्वाधिकारे= पूर्वान्तिमाधिकरणे । अथ श्रवणमननतः ब्रह्मणो विदितत्वात् विद्याया जाततया साध्यत्वाभावात् कथं कर्मणामङ्गत्वम्, कथञ्चापराधस्य प्रतिबन्धकत्वमिति शंकायाम् असकृदावृत्तवेदनस्यैव विद्यात्वात् ध्रुवानुस्मृतिरूपतदुत्पत्तिः न कर्माभावे, नापि ब्रह्मविदपचारे इति ज्ञापयितुम् असकृदावृत्तिरत्र स्थाप्यते । तथाच परं पश्चात् अत्राध्याये तत्स्वरूपं विद्यास्वरूपं विमृशति सह । ननु सहकार्यन्तरविध्यधिकरणे पाण्डित्यमौनयोः श्रवणमननातिरिक्तयोरुक्तत्वात् तद्विमर्शोऽपि निष्पन्न एवेत्यत्राह प्रत्यक्षमिति । 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे' इति, 'स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्ष' इति च श्रवणात् स्मृतित्वप्रत्यक्षत्वयोर्विरुद्धत्वाच्च प्रत्यक्षं वा स्मृतिर्वेति विवादस्यावसरोऽस्ति । 'ब्रह्म वेद ब्रह्मैव भवति' इति प्रयोगशैल्या सकृद्वेदनस्यापि मोक्षहेतुत्वप्रतीतेः ध्यानोपासनादिवचनं न तथाभूतस्योपायत्वपरम्, किंतु फलप्राप्तिपर्यन्तस्वतःप्रसक्तज्ञानानुवृत्त्यनुवादमात्रमिति वेदनस्य सकृत्त्वं वा, किं वा ध्यानादिविधिबलात् असकृत्त्वम् इत्यादिविमर्शः पूर्वं नोक्तः; तत्तदन्यतरच्च न निर्धारितं पूर्वाध्याये । एवमाप्रयाणमनुवृत्तिः, उपासनस्य मुक्त्यर्थस्याऽऽत्मत्वविषयकत्वं ध्यानस्याऽऽसीनपुरुषकर्तृत्वादि च पुरस्तान्नोक्तम् तत्= सात्

प्रत्यक्षरूपं स्मृतिरूपं वा, सकृत्कृतः शास्त्रार्थ इति न्यायेन सकृद्वा ध्रुवानुस्मृतिरिति प्रमाणानुसारेणासकृद्वेति पूर्वं नोक्तम्। नैतावदेव, 'स खल्वेवं वर्तयन् यावदायुषम्' इत्याद्युक्तं यावज्जीवानुवृत्त्यादिकञ्च पूर्वं नोक्तमिति न पौनरुक्त्यगन्धप्रसङ्ग इति ॥ ४३४ ॥

(४३५) ज्ञानं मुक्तेरुपायः श्रुतिभिरभिहितस्तस्य संख्या तु नोक्ता
सौकर्यं स्यात् सकृत्त्वे, तत इह तु भवेच्चारितार्थ्यं विधीनाम् ।
सम्यक्त्वात् तद्ध्रुवत्वं, न पुनरनुगमात् प्रोक्तमित्यप्यसार
सामान्योक्तेर्विशेषे सति पशुनयतस्तत्र विश्रान्तिसिद्धेः ॥ ४ ॥

अत्र सकृत्त्वेन पूर्वपक्षं कृत्वा भाष्यादावुक्तामसकृत्त्वोपपादनप्रक्रियां स्मारयन् सिद्धान्तं प्रदर्शयति—ज्ञानमिति। अत्रायं पूर्वपक्षः—'ब्रह्मविदाप्नोति परम्', 'ब्रह्म वेद ब्रह्मैव' इत्यादौ केवलं ब्रह्मवेदनमेव मोक्षोपाय इत्युक्तम् । तस्य वेदनस्यैकत्वं वा अनेकत्वं वेति संख्या नोक्ता। आवृत्तत्वं वा अनावृत्तत्वं वा नोक्तमित्यर्थः। किञ्च सकृत्त्वे सौकर्यमेव स्यात् =लघुपक्षाङ्गीकारे हि न्यायानुसारः स्यादित्यर्थः। तथा, 'सकृत्कृतः शास्त्रार्थः' इति न्यायेन विधीनां चरितार्थत्वं च स्यात्। ननु ध्रुवानुस्मृतिरिति ब्रह्मोपासनस्य ध्रुवत्वमुच्यत इत्याशङ्क्य तदप्यन्यथासिद्धमित्याह—सम्यक्त्वादिति।

---

अत्र पादे तावदपूर्वार्थविचारात् आसन्नाधिकरणेऽपि अपौनरुक्त्यं सुखेन बुध्यते । अत्र कतमांशो विमृश्यत इति चेत्, स वक्ष्यतेऽनन्तरश्लोके ॥ ४३४ ॥

४. अधिकरणार्थमाह ज्ञानमिति । 'ब्रह्मविदाप्नोति परम्', 'तमेवं विद्वानमृतः', 'तमेवैकं जानथ', 'ज्ञात्वा देवं मुच्यते सर्वपाशैः' इत्यादिश्रुतिभिः ब्रह्मज्ञानं मुक्त्युपाय इत्युपादिष्टम् । तत्र ज्ञाने संख्येयत्ता नोक्ता । अनुक्तौ आवृत्त्यभावात् सकृत्त्वं स्वरससिद्धम्। अत एव, 'सकृत् कृतः शास्त्रार्थः' इति मीमांसकन्याय इह सुपसरः। न हि, 'प्रातस्संध्यामुपासीत' इति वचनात् प्रातरेव पुनःपुनः सान्ध्यं क्रियते। तद्वत् सकृदनुष्ठानत एव विधेः पूर्णत्वात् न पुनरनुष्ठीयते। ननु, 'ध्रुवा स्मृतिः' इति तदावृत्तिर्विहितेति चेत्—नेदं ध्रुवत्वं संततत्वमनुस्यूतत्वम्, किंतु अविचाल्यत्वम्; अबाधितत्वरूपमिति यावत्। ध्यानशब्दस्तु ज्ञाने इतराविषयकत्वविशिष्टतद्विषयकत्वपर इति पूर्वपक्षः। निरस्यति इत्यप्यसारमिति। अपिशब्देन ज्ञानस्य श्रुतिमूलस्य सकृत्त्वे स्मृतित्वं दर्शनत्वञ्च न घटत इति प्रश्ने पूर्वपक्ष्यभिमतं यत् तत् निरसाय समुच्चीयते। तदभिमतं तावत्—शब्दाधीनस्य ज्ञानस्यैव स्मृतित्वेन व्यवहारः, पूर्वमाचार्यसकाशात् गृहीतस्यैवार्थस्य पुनर्मोक्षार्थं संकल्प्य ग्रहणात् ज्ञातार्थविषयकत्व भिप्रायेण ॥ यथा अनुष्ठेयार्थग्रहणाय मन्त्रे प्रयुज्यमाने, प्रयोगसमवेतार्थस्मारकत्वं मन्त्रस्येत्युच्यते। न हि मन्त्रः शब्दो विशिष्टार्थस्मृतिं जनयति, किंतु शाब्दबोधम्। तथापि विधिवाक्यगृहीतार्थज्ञापकत्वेन स्मारकत्ववाचोयुक्तिः। एवं, शब्दाधीनज्ञानस्यापि वैशद्यमात्रेण दर्शनत्वव्यवहारः, यथा, 'तस्मै तमसः पारं दर्शयति भगवान् सनत्कुमारः' इति, 'चिरनिर्वृत्तमप्येतत् प्रत्यक्षमिव दर्शितम्' इति च। एवं पूर्णं पूर्वपक्षमनूद्य निरसनम् असारमित्यादिना। हेतुमाह सामान्येति। वेद, जानातीत्यादिधात्वर्थस्तावत् ज्ञानसामान्यम् तेन स्मृत्यतिरिक्तशाब्दबोधादिरूपज्ञानग्रहणे, स्मृतिलम्भे इत्यादिवचनविरोधः। शाब्दबोधरूपविशेषपर्यवसानकरं

अत्र ध्रुवत्वं सम्यक्त्वमेव; ज्ञानान्तरेणाबाधितत्वमित्यर्थः । न पुनश्चिरकालानुवृत्तत्वं प्रोक्तमिति । तमिमं पूर्वपक्षं प्रतिक्षिपति–असारमिति । असारत्वमेव न्यायतो दर्शयति—सामान्येति । सामान्यव्यवहारस्य साकाङ्क्षस्य विशेषोपस्थापकप्रमाणान्तरे सति, छागपशुन्यायेन विशेषे एव विश्रान्तिसिद्धिः । एतस्यार्थस्य वेदनध्यानोपासनध्रुवानुस्मृतिदर्शनशब्दानां भक्तिविश्रान्तिप्रतिपादके भाष्योक्तमग्रन्थे विस्तरेणोक्तत्वादत्र सङ्ग्रहेणामुमर्थं प्राचीकशत् ॥ ४३५ ॥

(४३६) किञ्चाग्नेय्या(या)दिनीत्या विदिरिह वदति ध्यानशब्दार्थमेव
ध्याने चोपासनोक्तिः परभजनतया वक्ति सेवात्मकत्वम् ।
ऐकार्थ्ये विद्युपास्योर्व्यतिकरिततया श्रूयते च प्रयोगः
कार्ये हेतौ च भक्तेः क्वचिदुपचरितो भक्तिभेदत्ववादः ॥ ५ ॥

वेदनस्य ध्यानत्वे न्यायान्तरमपि पुरस्कृत्य तस्यैव वेदनस्य सेवारूपत्वेनोपासनत्वमप्युपपादयन्, भाष्यादावुक्तं विद्युपास्योर्व्यतिकरेणोपक्रमोपसंहारमपि दर्शयित्वा भक्तिमेव मोक्षोपायतया निग-

---

वाक्यं तु न लक्ष्यते । अतः, 'अग्नीषोमीयं पशुमालभेत' इत्यत्र पशोः यथा, 'छागस्य वपायाः' इति मन्त्रोक्तविशेष एव पर्यवसानम्, अन्यपशुग्रहणे तद्विरोधप्रसंगात्—तथा स्मृतिशब्दमुख्यार्थस्य संस्कारमात्रजन्यज्ञानस्यैव सामान्यशब्देनापि ग्रहणम् ॥ द्रष्टव्य इति दर्शनोक्त्या स्मृतित्वं त्याज्यमिति चेन्न; त्वत्पक्ष इवोभयान्यथाकरणाभावात् । स्मृतिविशेषेऽपि दर्शनपदप्रयोगस्य बहुलं दर्शनेन स्मृतिपदस्य सामान्यस्य दर्शनरूपस्मृतौ विश्रान्तेः सिद्धत्वात् । अनुभवरूपदर्शनं तु न स्मृतिः । अत एव वाक्यकारेण विशेषपर्यवसानदर्शिना, "वेदनमुपासनं स्यात् तद्विषये श्रवणात्', 'उपासनं स्यात् ध्रुवानुस्मृतिः' इति सूत्रावेव पर्यवसानं कृतम् । अत्र वाक्ये अनुस्मृतिरिति अनुशब्दप्रयोगः, 'एकत्वमनुपश्यति', 'स्नेहपूर्वमनुध्यानं भक्तिः' इति आवृत्तिविशेषवत्यां स्मृतौ दृष्टिशब्द-भक्तिशब्दौ भवितुमर्हत इति अन्तिमदशायामपि तत्र ज्ञाने स्मृतित्वानपाय इति सूचनाय ॥ आह च पराशरः, "तद्रूपप्रत्यये चैका संततिश्चान्यनिस्पृहा । तद् ध्यानं प्रथमैः षड्भिरङ्गैर्निष्पाद्यते हि तत् ' इति। अतः अष्टांगयोगविधानात् अविच्छिन्नस्मृतिरूपविशेषे पर्यवसानस्याऽऽवश्यकत्वात् ध्रुवत्वमबाधितत्वरूपं न भवति; किंतु अविच्छिन्नत्वरूपम् । अबाधितत्वं तु स्मृतेरनुभवजन्यत्वात् अनुभवस्य तत्त्वज्ञानरूपत्वोक्त्यैव सिद्धमिति न स्मृतौ विशिष्य वक्तव्यम् । यत्तु संख्यानिर्देशो नास्तीति, तेन संख्यानियमो नास्तीति ज्ञायेत, न त्वनावृत्तिरपि । योगनिष्ठेन च यावद्बलं यथायं नाडिकामुहूर्तयामादिकालानुवृत्तयोगकरणाद्धि संख्या नैव वक्तुं पार्यते । अनावृत्त्युक्तिस्तु न, उपासनदर्शनादिपदानामेवाऽऽवृत्तिदर्शकत्वात् ॥ ४३५ ॥

५. छागपशुनयप्रवृत्तिमेव विवृण्वन्, लघुसिद्धान्ते भाष्योक्तं सर्वमत्राऽऽवृत्त्यधिकरणे सूत्रकारादिविवक्षितमेवेति ज्ञापनाय वेदनस्य क्रमेण यावति विशेषे पर्यवसानम्, तावदपि दर्शयति किञ्चेति । आग्नेय्यादिनीत्येति पाठमनुसृत्य आग्नेय्येति वाक्यं चिन्तामणावुपन्यस्तम् । आग्नेयादीति पाठमादृत्य आग्नेयमिति वचनं पदयोजनोपात्तम् । ३-२-४. अधिकरणे, 'आग्नेय्याऽऽग्नी-

मयन् श्रुत्यनुस्मृतेरन्यत्र भक्तिशब्दप्रयोग औपचारिक इति चाह—किञ्चेति । अयमत्र ग्रन्थान्वयः— 'आग्नेय्याऽऽग्नीध्रमुपतिष्ठते' इत्यत्राग्नेयीशब्दः प्रकृताग्नेयीमेवोपादत्ते । एवं, 'ब्रह्म वेद ब्रह्मैव' इत्यादौ वेदनशब्दः समानप्रकरणोपास्यं ध्यानमेव दर्शयति । ननूपासनं मोक्षोपाय इत्यध्यात्मविद्भिरुच्यते; तत् कथं ध्यानं मोक्षोपाय इत्याशङ्क्योपासनशब्दस्य ध्यान एव पर्यवसानं दर्शयति—ध्यान इति । ध्यान एवोपासनोक्तिः परभजनरूपत्वेन सेवात्मकत्वं गुणविशेषमादायेत्यर्थः । ध्यानमिति चिन्तनमात्रम् । तच्च चोरसर्पादिविषयमपि ध्यानमेव । अतः तद्व्यावृत्त्यर्थमनुकूलविषयानुसन्धानमत्रोपासनशब्देन प्रतिपाद्यत इति भावः । विद्युपास्योरैकार्थ्ये, 'अथ योऽन्यां देवतामुपास्ते अन्योऽसा-

---

ग्नमुपतिष्ठते' इति आग्नीध्रोपस्थानांगत्वेन विहिता आग्नेयी ऋक् किं प्रकरणपठितैव, उताप्रकृताऽपीति विशय्य आग्नेयीपदस्य प्रकरणपठितमन्त्ररूपविशेषपर्यवसानं सिद्धान्तितम् । 8-1. अन्तिमाधिकरणे, 'आग्नेयं चतुर्धा करोति', 'पुरोडाशं चतुर्धा करोति' इति वाक्यद्वयं गृहीत्वा पुरोडाशपदस्य सामान्यत्वेऽपि आग्नेयवाक्यानुरोधात् आग्नेयपुरोडाशमात्रग्रहणम्, नाग्नीषोमीय-ऐन्द्राग्नपुरोडाशयोरित्युक्तम् । पाठभेदेनार्थभेदो भ्रमः । ननु आग्नेयीति पाठे विदिशब्दवत् तस्य सामान्यत्वोक्तिर्घटते, आग्नेयेति पाठस्तु नोपपद्यते । तत्र हि पुरोडाशपदं सामान्यमपि आग्नेयरूपविशेषपर्यवसायीत्यर्थलाभात् विदिपदहष्टान्ततया पुरोडाशपदं प्रयोक्तव्यं स्यात् । अत आग्नेय्यादीति पाठ आद्रियताम् । पदयोजनोक्तमुदाहरणमादिपदग्राह्यमस्तु इति चेत्—अस्तु । यद्वा तत्राधिकरणे, 'आग्नेयं चतुर्धा करोति' इत्यत्राग्नेयपदस्य आज्यपुरोडाशसर्वसाधारण्येऽपि पुरोडाशं चतुर्धा करोतीति वाक्यानुसारेण वा प्रधानदर्शपूर्णमासप्रकरणानुरोधेन वा सामान्यभूतोऽप्याग्नेयशब्दः पुरोडाशरूपविशेषे पर्यवस्यतीत्यप्युक्तम् । तत् मास्तु । न च आग्नेय्यादेः विधेयपरत्वात् अनुष्ठानार्थं विशेषापेक्षासत्त्वात्, "सामान्यविधिरस्पष्टः संह्रियेत विशेषतः" इति संकोचो युक्तः; पुरोडाशं चतुर्धा करोतीत्यस्य तु प्रतिपत्तिरूपत्वात्, सर्वत्र प्रतिपत्त्यपेक्षासत्त्वात्, पुरोडाशमित्यस्योद्देश्यत्वात् सर्वपुरोडाशचतुर्धाकरणमेव युक्तमिति शक्यम्—तथासति आग्नेयं चतुर्धा करोतीत्यस्य वैयर्थ्यापत्तेः । अस्य शाखान्तरवचनत्वात्, शाखान्तरस्थले च, 'वार्ताकं न भक्षयेत्' इत्यस्य, 'श्वेतवार्ताकं न भक्षयेत्' इति शाखान्तरवाक्यसमानार्थकत्वाय संकोचस्येष्टतया तद्दृष्टान्तवर्णनस्यैवोचितत्वात् । सोमनाथीये त्वन्यत् । तथाचाग्नेय्यादिनीत्या प्रकृते, 'शुभ्रमक्षरं वेदयते यस्तु सोम्य' (प्र. 4) इति विदिधातुः, प्रायणान्तमोंकारमभिध्यायीत, परं पुरुषमभिध्यायीत' इति श्रुत्युक्तध्यानशब्दार्थमेव वक्ति; तदेकप्रकरणात् । ध्याने चोपासनोक्तिरिति । तस्य ध्यानस्य चोपासनरूपे विशेषे पर्यवसानम् । ध्यानं हि स्वस्य, परस्य, उत्तमस्य, नीचस्य चेति सर्वस्य विषये भवति । उपासनं तु उत्कृष्टविषयं भजनं सेवापरपर्यायम् । अत एव, 'सेवा भक्तिरुपास्तिः' इति निघण्टुः । 'ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यति निष्कलं ध्यायमानः। एषोऽणुरात्मा चेतसा वेदितव्यः' (मु. 3-2-1), 'स वेदैतत् परमं ब्रह्म धाम, उपासते पुरुषं ये ह्यकामाः' इति । एकस्मिन्नेव प्रकरणे ज्ञानध्यानवेदनोपासनशब्दानामविशेषेण प्रयोगादिदं सुग्रहमित्युक्तम् । श्रीभाष्यदर्शितरीत्या च, 'मनो ब्रह्मेत्युपासीत'....य एवं वेद', 'यस्तद्वेद.... यां देवता-

न्योऽहमस्मीति न स वेद । अकृत्स्नो ह्येषः । आत्मेत्येवोपासीत' इति व्यतिकरिततया श्रूयमाणः प्रयोग एव प्रमाणम् । ननु, 'श्रवणं कीर्तनम्' इत्यादौ नवविधा भक्तिरुच्यते । उपासनञ्च तन्मध्येऽभिधीयते । तत् कथं ध्रुवानुस्मृतेरेव भक्तिरूपत्वमित्याशङ्क्य भक्तेः पूर्वोत्तरभाविनोरपि भक्तिशब्दप्रयोग औपचारिक इति निगमयति—कार्ये इति । क्वचित् कार्ये कारणवदुपचारः; क्वचिच्च कारणे कार्यवदुपचार इति न सङ्कटं किञ्चित् । भक्तिभेदत्ववादः = भक्तिविशेषत्ववाद इत्यर्थः ॥ ४३६ ॥

(४३७) योगोद्युक्तेषु यः स्यात् स्ववरणविषयस्तेन लभ्यः परात्मा
प्राह्यत्वञ्च प्रियत्वात्, तदपि हि गुणतो, भक्तिरेव श्रुतैवम् ।
सा च प्रीत्यात्मिका धीः क्वचिदतिशयिते; स्मृत्यबाधोऽप्यतः स्यात्
प्रोक्ता चैषा ध्रुवानुस्मृतिरनुवहनात् तैलधाराक्रमेण ॥ ६ ॥

ननु, 'भक्त्या त्वनन्यया शक्यः' इति भक्तिरेव परब्रह्मप्राप्तिरूपमोक्षसाधनतया स्मर्यते । सा तु, 'यमेवैष वृणुते तेन लभ्यः' इत्यादिश्रुत्या बाध्यते । तेन श्रुतिस्मृत्योर्विरोधान्नार्थविशेषप्रतिपत्तिरित्याशङ्कां वारयन् श्रुतिस्मृत्योरन्योन्यानुकूल्यमेव दर्शयति—योगोद्युक्तेष्विति । इयमत्र शब्दान्वयप्रक्रिया—योगे द्युक्तेष्वधिकारिषु यः स्यात् भगवद्वरणविषयभूतः, तेनैव लभ्यः परमात्मा । तस्य

---

मुपास्से' इत्येवमन्योन्यस्य ने अन्योन्यप्रयोगः ऐकार्थ्ये एकार्थवाचित्वगमकः । एवं भजनोपासनैक्यस्य कोशादवगमात् उपासिप्रयोगसत्त्वाच्च, 'भक्तिरूपत्वं श्रुतौ न कण्ठोक्तम्' इति दूषणस्य नावसरः । उपासनमपि प्रीतिरूपापन्नज्ञानमेव । न हि अनुत्कृष्टविषयकत्वे अप्रीतौ च ज्ञाने उपासनशब्दप्रयोगः । ननु ज्ञानातिरिक्तेऽपि भक्तिशब्दप्रयोगोऽस्ति; 'श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् । अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्' इति नवविधभक्त्युक्तेरिति चेत्-तत्रोच्यते । 'प्रीतिपूर्वमनुध्यानं भक्तिरित्यभिधीयते' इति भक्तिशब्देन प्रीतिरूपापन्नस्य ध्यानस्यैव शक्त्या बोध्यत्वोक्त्या तद्भिन्ने कीर्तनादौ तत्प्रयोगः उपचारात् । तदाह कार्ये इति । क्वचित्—स्मृतिवाक्ये भक्तेः कार्ये कीर्तनादौ, भक्तेर्हेतुभूते स्मरणादौ च भक्तिभेदत्ववादः भक्तिशब्दार्थावान्तरभेदत्वकथनम् उपचरितः अमुख्यः । कार्यत्वकारणत्वरूपं भक्तिरूपशक्यार्थसंबन्धमादाय लक्षणया स्मरणादौ भक्तिशब्दप्रयोग इति मुख्यामुख्यार्थसंकलनेन नवविधत्वोक्तिरिति यावत् । तथाच तत्तत्प्रकरणवशात् वेदनध्यानयोः ध्यानोपासनयोश्चैक्यावगमात्, ध्यानविशेषत्वाच्चोपासनस्य, विद्युपास्योर्व्यतिकरितप्रयोगाच्च वेदनमुपासनमेव । उपासनञ्च भजनम् । सैव सेवा । तत्पर्यायः कैङ्कर्यमित्युक्तं भवति ॥ ४३६ ॥

६. एवमुपासनभजनैक्यात् उपासनविधायकश्रुतेर्भक्तिविधायकस्मृतेश्चाविरोधात् अबाध इति सिद्धम् । वरणमन्त्रवाक्यार्थव्युत्पादनार्थमाष्योक्तेन प्रकारान्तरेण च वेदनस्य ध्यानस्य च भक्तित्वमुपपाद्य स्मृत्यबाधं दर्शयति योगेति । "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यः" इति श्रुतौ न श्रवणमननध्यानानां निषेधः, तद्विधिपरवाक्यविरोधप्रसंगात् । किंतु य एवं योगोद्युक्ताः श्रवणमननध्यानवन्तः तेषु यमेव परमात्मा वृणुते तेनैव स लभ्यत इति विशेषान्तरं श्रुतिर्दर्शयति । इदं हि प्राह्यत्वं=वरणविषयत्वं लोके प्रियविषय एव दृष्टम् । तदपि=जीवे भगवत्प्रियत्वमपि

च परमात्मना वरणीयत्वं परमात्मप्रियत्वादेव । तदपि प्रियत्वं तन्निष्ठाद्भक्तिरूपाद् गुणादेव । एवञ्च सति भक्तिरेव साक्षाच्छ्रूयते । तन्निष्ठा हि गुणत्वेनाभिहिता । इयं भक्तिश्च क्वचिदतिशयिते प्रीत्यात्मिका धीरिति । अत एव भक्तिप्रतिपादकस्मृत्यबाधः स्यात् । श्रुतिस्मृत्योः परस्परसंवादात् । स्मृतिर्हि भक्तिरित्याह । श्रुतिरपि तामेव भक्तिं भगवद्विषयप्रीतिरूपां, 'यमेवैष वृणुते तेन लभ्यः' इति फलतो दर्शयति स्म । तर्हि भक्तिरित्युच्यते भवता ; ध्रुवानुस्मृतिरिति श्रुतिराह । तत्र कथमविरोध इत्याशङ्क्य, इयमेव भक्तिः तैलधारावदविच्छिन्नत्वाद् ध्रुवानुस्मृतिरित्युच्यत इति दर्शयति—प्रोक्तेति । अनुवहनात् = अनुस्यूतत्वादित्यर्थः ॥ ४३७ ॥

(४३८) रागादादौ प्रवृत्तिः(त्तेः?) श्रवणमननयोर्ध्यानमेकं विधेयं
तत्र द्रष्टव्यशब्दो विशदतमतया धक्ति वैशिष्ट्यमात्रम् ।
शब्दोत्थं दर्शनं ये विषयमकथयन् वेदनोक्तेरमीषां
व्याघातादिप्रपञ्चः स्वयमिह निपुणैः सूक्ष्ममन्वेषणीयः ॥ ७ ॥

ननु भवता, 'निदिध्यासितव्यः' इति ध्यानस्यैकस्यैव मोक्षोपायतया विधेयत्वमुच्यते; विधि-श्रवणं तु, 'द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति चतुर्ध्वपि दृश्यते । तत् कथमित्याशङ्क्य विषयभेदेन विधित्वानुवादत्वविभागं दर्शयति—रागादिति । अयमर्थः—श्रवणमननयोस्तावत्प्राप्त-विषयत्वाद् रागादेव प्रवृत्तिः । अप्राप्तत्वान्निदिध्यासनमेकमेव विधेयम् । ननु कथं द्रष्टव्य इति शब्दे

---

भगवति जीवं प्रति प्रियत्वे सतीति, 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः' इति वाक्यादवगम्यम् । तथाच जीवेऽपि प्रियत्वं जीवनिष्ठात् भगवद्विषयकप्रीतिरूपगुणादित्युक्तं भवति । एवं वरणीयताहेतुगुण विशेषतया भक्तिरेव श्रुता । तथाच योगोद्युक्तेषु यः प्रीतिमान्=भक्तिमान् प्रीतिपूर्वकयोगानुष्ठायी, स व्रियते इत्युक्तं भवति । सिध्यतु प्रीतिः ; भक्तिसिद्धिः कथमित्यत्राह सा चेति । अतिशयिते वस्तुनि यत्र क्वापि प्रीतिरेव भक्तिः ; महनीयविषये प्रीतिर्भक्तिरिति निर्वचनात् । अतोऽपि, 'भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन' इति स्मृतेरबाधः स्यात् । ननु, 'भक्त्या त्वनन्यया' इत्यनेन कीर्तनवन्दनादिभक्ति रप्युपायतया गृह्यतामित्यत्रापीदमेवोत्तरम्, स्मृत्यबाधोऽप्यतः स्यादिति । भक्तिशब्दस्य प्रीत्यात्मक-ज्ञानमेव मुख्यार्थः, न तु कीर्तनादीति स्वीकारादेव श्रुत्या स्मृत्यबाधः । कीर्तनादिग्रहणे श्रुतिबाधः स्यात् । ननु ज्ञानपरत्वेऽपि ध्रुवानुस्मृतिरूपश्रौतोपायस्य भक्तिशब्दार्थत्वे किं प्रमाणमित्यत्राह प्रोक्तेति । ध्रुवानुस्मृतेः—प्रीतिरूपज्ञानरूपविशेषे पर्यवसानवत् प्रीतिरूपापन्नज्ञानरूपभक्तेः ध्रुवानुस्मृतिरूपविशेष पर्यवसानं कथंन । प्रीतिपूर्वमनुध्यानं भक्तिरिति च निष्कृष्टम् । तेन सर्वैकरस्यमिति ॥ ध्रुवत्वञ्च तैलधारावत् अविच्छिन्नतया प्रवहणात् ; न त्वबाधितत्वादिति प्रागेवोक्तम् ॥ ४३७ ॥

७. ननु, 'द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यत्र प्रथमविहितं दर्शनमुपेक्ष्य ध्यान-स्योपायत्वं कथमुच्यत इत्यत्राह रागादिति । सांगाध्ययनजनिताऽऽपातप्रतीतिमतो जिज्ञासावतः श्रवणे तत्कार्ये मनने च स्वत एव प्रवृत्तिरिति न तयोर्विधेयत्वम्, तथा दर्शनस्याप्यविधेयत्वात् ध्यानमेकमत्र विधेयम् । ननु कथमप्राप्तं दर्शनमविधेयं स्यात् ; तत्राह तत्रेति । ध्यानमप्यविच्छिन्नं ज्ञानं परिकं

जाग्रति ध्यानमेकं विधेयमित्याशङ्क्य परिहरति–तत्रेति । द्रष्टव्य इति शब्दस्तस्यैव ध्यानस्य गुणभूतं दर्शनसमानाकारत्वमेव दर्शयति ; न पुनर्ध्यानादन्यस्य दर्शनशब्दवाच्यस्य कस्यचिन्मोक्षोपायत्वं दर्शयतीत्यर्थः । अयमत्र भावः—क्वचित्, 'ध्रुवा स्मृतिः ; स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः' इति ध्रुवानुस्मृतेर्ग्रन्थिविमोक्षोपायत्वमुक्तम् । अपरत्र, 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥' इति दर्शनस्य ग्रन्थिविमोक्षोपायत्वमुक्तम् । नात्र स्मरणदर्शनयोर्निरपेक्षमोक्षोपायतया पृथगेव विहितयोः समुच्चयः संभवति ; नैरपेक्ष्यश्रवणादेव । नापि विकल्पः ; गुरुलघ्वोर्विकल्पानुपपत्तेः । तेन स्मरणस्य दर्शने पर्यवसानं कृत्वा द्वयोरप्येकत्वेन ग्रन्थिविमोक्षोपायत्वं वक्तव्यम्। अत्र दर्शनमिति दर्शनसमानाकारत्वमेवोच्यते। ननु स्मृतिवैशद्यम् ; न पुनस्साक्षाद्दर्शनत्वम् । स्मृतित्वदर्शनत्वयोर्विरुद्धजातित्वेनैकत्रैव समन्वयायोगात् । एवं निर्णीते शास्त्रार्थे, 'द्रष्टव्यो निदिध्यासितव्यः' इत्यत्रापि निदिध्यासनस्य वैशद्यातिशयात् दर्शनत्वमुपचर्यते । अपकृष्टे ह्युत्कृष्टशब्द औपचारिकः । यथा राजभृत्ये राजशब्दः । एवमप्यसाक्षात्काररूपे स्वयं स्मृत्यात्मनि निदिध्यासने दर्शनशब्देन साक्षात्कारत्वमुपचर्यते ; एकत्र निर्णीतस्य शास्त्रार्थस्येतरत्रापि ग्राह्यत्वात् । अत्र वेदनशब्दस्य द्रष्टव्यपदानुसारेण शब्दजन्यप्रत्यक्षविषयत्वं दशमस्त्वमसीत्यादिवदिति वदन्ति;ताननूद्य दूषयति—शब्दोत्थमिति । व्याघातादिप्रपञ्च इति—अत्र स्वव्याघातः; सर्वलोकविरोधः ; प्रमाणलक्षणविभागविरोध इति आदिशब्देन गृह्यते । प्रत्यक्षं शब्दजन्यमिति वचनमेव विरुध्यते । एवमन्यदपि द्रष्टव्यम् । तर्हि दशमस्त्वमसीत्यत्र प्रत्यक्षोत्पत्तिः कथम् ? । तत्र न प्रत्यक्षोत्पत्तिः; अपि तु वाक्यात्परोक्षज्ञाने सञ्जाते स्वयमेव परामर्शात्मकं प्रत्यक्षसामग्र्युत्थापनमेव भवति । ततस्स्वात्मनि दशमत्वविषयं मानसं प्रत्यक्षं जायत इति न परस्परं प्रमाणसङ्करप्रसङ्ग इति । तमिममर्थं दर्शयति—अमीषामिति । निपुणैरन्तेवासिभिः सूक्ष्मं विचारणीय इत्याह—निपुणैरिति । अत्र निपुणत्वं प्रमाणविभागदर्शनकुशलत्वम् ॥ ४३८ ॥

---

दर्शनसमानाकारं भवतीति लोकप्रसिद्धम् । इदमेव दर्शनसारूप्यं वैशद्यापर्यायं द्रष्टव्य इत्यत्र विवक्षितम् । तस्य पृथग्विधानं मा भूदिति एतद्विवक्षितस्य विशदतमत्वस्य ध्यानविशेषणतास्वीकारात् तत् विशदतमत्ववैशिष्ट्यमेवात्र बोध्यम् । एवञ्च अरुणया पिंगाक्ष्येति तृतीयाद्वयश्रवणेऽपि विशिष्टैकैककरणत्वप्रत्ययवत् तव्यप्रत्ययद्वयश्रवणेऽपि दर्शनरूपध्यानविधेयत्वमेव वाक्यार्थः । ननु ध्यानजन्यं दर्शनं मुख्यमेव द्रष्टव्य इति विधेयं स्यादिति चेन्न ; दर्शनस्य तस्य ध्यानजन्यत्वे मानाभावात् । परमात्मस्वरूपदर्शनस्य मुख्यदर्शशब्दार्थत्वाभावाच्च । दर्शनस्य वस्तुतन्त्रस्य पुरुषतन्त्रत्वाभावेनाविधेयत्वाच्च । अद्वैतिनः शब्दजन्यब्रह्मप्रत्यक्षज्ञानं दर्शनमित्याहुः ; तत् दूषयति शब्देति । तत् प्रत्यक्षं ब्रह्मविदित्यत्र वेदनवाचिशब्दस्य विषयम्= अर्थम् अकथयन्=तत्पदविवक्षितत्वेनावर्णयन् ये, अमीषां दोषप्रपञ्चोऽन्यग्रन्थेषु कृतोऽत्र स्वयं निपुणैः सूक्ष्मं चिन्त्यः। शब्दस्य प्रत्यक्षजनकत्वमसिद्धम् तन्मते ध्यानविधिवैयर्थ्यम् स्मृतिलम्भे इत्यादिश्रुतिविरोधः। तस्य ब्रह्मैकविषयकत्वात् भक्तित्वायोगश्च । तत्र कस्यचित् केनचित् वरणीयत्वासंभवश्च । ब्रह्मणो दृश्यत्वान्मिथ्यात्वापत्तिश्च । असकृदावृत्तज्ञानस्योपायत्वप्रतिपादकप्रकृताधिकरणादिविरोधश्च इत्यादिकं भाव्यम् । एवं वेदनध्यानोपासनभजनरूपज्ञानस्य दर्शनरूपत्वमप्यस्तीति अनेन श्लोकेन दर्शितम् ॥ ४३८॥

(४३९) ध्याने वैशद्यमात्रादुपचरणवती दृष्टिशब्दप्रवृत्तिः
स्यात् तुल्यं तत् तवापि(तुल्यं तत् त्वन्मतेऽपि) ह्यभिलपति धियं चाक्षुषीं दृष्टिशब्दः।
घ्रातृ स्प्रष्ट्रादि घ्रातस्पृष्टादि)वत् द्रष्टृयभिवदनमिदं चक्षुषा मानशून्ये
गौणं तत्तुल्यभावे सति बहुनयवान् अस्मदीयस्तु पक्षः ॥ ८ ॥
(घ्राता स्प्रष्टेति शब्दः करणविरहिते मुख्यवृत्तो न हि(तु) स्यात्
तद्ग्राह्यस्त्वस्मदीयो बहुनयगुण(गण)वान् ; त्याज्य एव त्वदीयः ॥)

ननु भवत्पक्षे दर्शनसमानाकारमात्रकथनात् द्रष्टव्य इति शब्द औपचारिकः स्यादिति परपक्षिणोक्ते तदङ्गीकृत्य त्वत्पक्षेऽप्यौपचारिक एवेति प्रतिबन्द्या परिहरति—ध्यान इति । अयमर्थः—ध्याने वैशद्यमात्राद् दृष्टिशब्दप्रवृत्तिरुपचरणवतीतीममर्थमङ्गीकुर्महे । तत्तूपचरणं भवत्पक्षेऽपि तुल्यमित्याह—तुल्यमिति । तदेव विवृणोति—अभिलपतीति । दृष्टिशब्दो हि चाक्षुषीमेव धियं ब्रूते । ब्रह्मणि तु न चाक्षुषी दृष्टिः, अपितु मानसी । तस्यामौपचारिकदृष्टौ दृष्टिशब्दो न मुख्य इति तवापि तुल्यमित्यर्थः । तुल्यत्वमेव सदृष्टान्तं दर्शयति—घ्रातेति । यथा घ्राता स्प्रष्टेत्यादिशब्दो ब्रह्मविषये तत्तदिन्द्रियजन्यघ्राणादिकार्यविधुरे न प्रयोक्तुं शक्यते; एवं चक्षुर्जन्यज्ञानाविषयभूतब्रह्मज्ञानवति द्रष्टृ(ब्रह्मणि द्रष्टव्य)शब्दोऽपि मुख्यतया प्रयोक्तुमेव न शक्यते। तथा च द्रष्टव्य इति पदस्य गौणत्वं तवापि समानम् । तर्हि 'यत्रोभयोः समो दोषः...' इति न्यायेन द्वयोः पक्षयोस्तुल्यत्वे युष्मत्पक्ष एव परिग्राह्यः, न पुनरस्मत्पक्ष इति विनिगमनायां को हेतुरित्याशङ्क्य विशेषमाह—तदिति । तयोः=त्वत्पक्षास्मत्पक्षयोस्तुल्यभावे सति । अथवा तदिति हेतुनिर्देशः । तस्मात्—परमुप-

८. एवं तर्हि दृशिधातुमुख्यार्थत्याग इति समतवैषम्यं मन्वानस्य भ्रान्तिमपनयति ध्याने इति । दृष्टिवाचकशब्दप्रयोगः ध्यानरूपार्थस्वीकारे औपचारिकः स्यादिति चेत् तत् उपचरणं तवापि तुल्यम् ; दृशिधातुर्हि चक्षुःकरणकज्ञानवाची । न च ब्रह्मदर्शनं चाक्षुषम् । 'न चक्षुषा' इति निषेधात् । रूपरूपितत्सम्बन्धेतरव्यतिरिक्तविषये चाक्षुषासंभवाच्च । दृष्टान्तं प्रदर्शयापि करणाधीनज्ञानविशेषपरत्वं स्थापयति घ्रातेति। घ्राणेन्द्रियकरणकज्ञानवान् घ्राता ; त्वगिन्द्रियकरणकज्ञानवान् स्प्रष्टा इत्यादिकमुक्तं कौषीतकिब्राह्मणे । अतः करणविरहिते इन्द्रियरहिते इन्द्रियानधीनज्ञानवति च शब्दरूपगन्धादिज्ञानवति पुरुषे घ्रातेत्यादिशब्दो न हि प्रयुज्यते, तद्वत् द्रष्टेति शब्दोऽपि । यथा च ब्रह्मविषयकविशदज्ञानस्य घ्राण-त्वाचादिरूपत्वं न भवति, तथा दृष्टिरूपत्वमपि न भवत्येव । ब्रह्मघ्रातेतिवत् ब्रह्मद्रष्टेत्यप्ययुक्तमेव । ननु तर्हि ब्रह्मनित्यमुक्तगतानां घटादिदर्शनानां दर्शनत्वं न स्यात्—चक्षुर्जन्यत्वाभावादिति चेत्—किमतः ? तदर्थं रूपविषयकसाक्षात्कारो दृष्टिः, गन्धविषयकसाक्षात्कारो घ्रातिरिति वक्तव्यम् , एवमपि नीरूपब्रह्मज्ञानस्य दृष्टित्वासंभव एव। अतो विशदज्ञानमित्येवोभाभ्यां वक्तव्यम् ॥ भवतु ; तथापि ध्यानजन्यं विशदज्ञानान्तरमेव तदस्तु इति चेत्, नेत्याह तदिति । तत् तस्मात् दृष्टिशब्दोपचरणतुल्यभावे सति अस्मत्पक्ष एव बहुनयवान् ग्राह्यः । एतदुक्त्यैवान्यदीयस्य त्याज्यत्वमर्थसिद्धम् । पाठान्तरे पक्षोऽयं बहुनयः गुणवांश्चेत्यर्थः । स्मृतिरूपं दर्शनमिति पक्षे मोक्षस्य स्मृतिजन्यत्वे ध्यानजन्यत्व-

पादनादित्यर्थः । बहुनयगणवान् अस्मत्पक्षो बहुन्यायोपेतः । युष्मत्पक्षस्त्वपन्यायमूल इत्यर्थः । तुशब्दो विशेषमेव दर्शयति ॥ ४३९ ॥

(४४०) न द्वारद्वारिक्लृप्तिः कथमपि घटते, विश्रमश्चेत् विशेषे
सामान्यात्मा विशेषैर्लघु च न गुरुभिः कर्तुरैक्ये विकल्प्यम् ।
अर्थैक्ये दर्शनोक्त्या स्मृतिरुपचरिता युज्यते स्पष्टय सद्भ्यै
स्मृत्युक्त्या दर्शनस्योपचरणमसदित्यन्यदेतत् फलाभः ॥ ९ ॥

नन्वत्र(द्वारद्वारिभाव एवास्तु) वेदनात् ध्यानं, ध्यानाद् ध्रुवानुस्मृतिः, ध्रुवानुस्मृतेर्दर्शनं, दर्शनात् भक्तिरिति द्वारद्वारिभाव एवास्त्वित्याशङ्क्यैकत्र विश्रान्तौ सम्भवन्त्यां तत्परिकल्पनं गौरवादन्याय्यमित्याह—न द्वारेति । अयमत्र शब्दान्वयः(र्थः)—विशेषे विश्रमश्चेत्, न द्वारद्वारिक्लृप्तिः कथमपि घटते । तर्हि वेदनादीनां भक्तिपर्यन्तानां विकल्पः स्यादित्याशङ्क्य तदपि नेत्याह—सामान्यात्मेति। न हि सामान्यविशेषयोर्विकल्पः परिगृह्यते न्यायविद्भिः । यथा पशुच्छागयोः । अपि त्वेकस्यान्यत्र पर्यवसानमेव स्वीक्रियते । किञ्च गुरुलघ्वोर्विकल्प एव न संभवतीत्याह—लध्विति । न हि स्नानप्रोक्षणयोरेकस्मिन्नधिकारिणि विकल्पः स्वीक्रियते न्यायविद्भिः । तर्हि शक्ताशक्तभेदेन तत्र विकल्पनवदत्रापि विकल्पः कल्प्यतामिति चेत्—तदपि न; विकल्पे तावत् अष्टदोषदुष्टत्वं दोषः । अत्र पुनर्व्यवस्थितविकल्पत्वपरिग्रहे अधिकारिव्यवस्थापरिकल्पनमधिकदोषः । सर्वेष्वपि वाक्येषु मुमुक्षुत्वमेवाधिकारिविशेषणत्वेन श्रूयते । न पुनरेकैकं(क?)विशेषणमन्यदन्यदेवाकर्ण्यत इत्यर्थः । न चात्र शक्ताशक्तभेदेन विकल्पः; अश्रवणात् । अश्रुतमपि कल्प्यत इति चेत्—कल्पनैव दोषः । तदिदमाह—कर्तुरैक्य इति । भिन्नाधिकारित्वे निर्णीते व्यवस्थितविकल्पत्वं युज्येतापि; न पुनरत्र भिन्नाधिकारित्वं निर्णीतमित्यर्थः ॥ तर्हि ध्रुवानुस्मृतौ दर्शनत्वमुपचरितमिति भवतोक्तम्, दर्शने ध्रुवानुस्मृतित्वमुपचरितमिति विपरीतं किं न स्यादित्याशङ्क्याह—अर्थैक्य इति । उपचारो हि

---

मुपासनजन्यत्वमित्यादिकमेकरूपं भवति ; सामान्यविशेषनयप्रसरात् । स्मृतेर्दर्शनरूपत्वेन प्रशंसारूपगुणश्चेति यावत् । उपरि मुद्रित उत्तरार्धप्रथमपाठः तालस्थः चिन्तामण्यादृतः साधीयान् ॥ ४३९ ॥

९. बहुनयगुणवत्त्वमेवार्धद्वयेनोपपादयति नेति । त्वया हि वेदनं ध्यानद्वारा दर्शनं जनयतीति द्वारद्वारिभावः कल्प्यते । संभवति सामान्यविशेषभावेनैक्ये तदयुक्तम् । द्वारद्वारिभावस्य भिन्ननिष्ठत्वात् । तर्हि वेदनं वा ध्यानं वा दर्शनं वेति विकल्पोऽस्तु तत्राह सामान्येति । सामान्यस्वरूपं विशेषरूपध्यानोपासनदर्शनादिभिः सह विकल्पनीयं न भवति । विकल्प्य इति विपरिणतस्यापकर्षः । न हि पशोश्छागेन सह विकल्पः। किञ्च लघु वेदनं गुरुभूतैरेव ध्यानादिभिर्न विकल्प्यम् । न हि प्रोक्षणं स्नानेन विकल्प्यम् । ननु यथाधिकारं विकल्पो गुरुलघुस्थलेऽस्ति ; तत्राह कर्तुरैक्ये इति । कर्तृभेदे अशक्ताधिकारिविषये लघु स्यात् । इह त्वेकप्रकरण एव वेदनध्यानोपासनादिपाठात् वेदनध्यानव्यतिकरितप्रयोगाच्चोभयस्यैककर्तृकत्वम् । अन्याय्यश्च विकल्पः । कस्य कियति पर्वणि उपायपूर्तिरिति निर्णयायोगश्च । अधिककालजीविना आप्रयाणमावर्तनीयम्, अन्यस्य सकृदपीति चेत्—चिरजीविनोऽप्यनवकाशे कथमावर्तनम् । अष्टांगयोगविधायकवाक्यविरोधश्च । अस्त्वेवमैक्यम् ; अथापि स्मृतौ दर्शनशब्दो वा

अन्यत्रातिशयितार्थाभिधानेन गुणीकरणम् । ननु ध्याने तदधिकार्थाभिधाने युज्यते ; सिंहो देवदत्त इत्यादिवत् । तेन स्मरणे साक्षात्कारत्ववचनमुपचारः स्यात् । साक्षात्कारे स्मरणत्वाभिधानं त्वपचार एव स्यात् । राजनि भृत्यत्वकथनवत् । तेन ध्याने साक्षात्कारत्वमुपचर्यत इत्ययमेव न्याय्यो मार्गः । अयमत्र शङ्कान्वयः—अर्थैक्ये सति = दर्शनोक्त्या स्पष्टत्वसिद्ध्यै स्मृतिरुपचरिता युज्यते । स्मृत्युक्त्या दर्शनस्योपचरणं तु असत् अन्याय्यम् । ननु द्रष्टव्य इति फलमेव ब्रह्मसाक्षात्कार उच्यते; न पुनरुपाय इत्याशङ्क्याह–अन्यदिति । स पुनः परेषामेव सिद्धान्तः, अस्माकं तु, 'द्रष्टव्यः' इति विधिश्रवणात् विधेयमेवोपासनं दर्शनसमानाकारत्वेनोच्यत इति सिद्धान्त इत्यर्थः ॥ ४४० ॥

(४४१) कृच्छ्रादौ शक्तिहीनो दृढपरितपनः संयमार्हश्च कुर्यात्
सर्वार्थां केशवानुस्मृतिमिति घटते तद्विकल्पो यथार्हम् ।
सामान्यात् सर्वदोषेष्वियमुपकुरुते सर्वनैमित्तिकानां
मुक्तेरप्यत्र मूलं मुनिरनुमनुते तादृशध्यानरूपाम् ॥ १० ॥

एवंभूतस्य भगवदनुस्मरणयोगस्य, 'प्रायश्चित्तान्यशेषाणि' इति प्रमाणोक्तस्य द्वयी हि गतिरध्यात्मविद्भिरभिधीयते । तत्तत्प्रायश्चित्तरूपकृच्छ्राद्यशक्तौ तत्तत्स्थाने विकल्पेनावतिष्ठते सोऽयं योग इत्येका गतिः । अपरा पुनः सर्वेषामपि प्रायश्चित्तानां साद्गुण्यापादकत्वेन भगवदनुसन्धानं तेभ्यः सर्वेभ्यः प्रायश्चित्तेभ्यः परम् = उत्कृष्टमिति । अत्र पुनरनादिकालप्रवृत्तस्य कृत्स्नस्यापि पापस्य सर्वप्रायश्चित्तत्वेनेदमेकमेवा[व विधीयते इत्य]भिधीयते। तदिदमाह–कृच्छ्रादाविति। तत्तत्पापप्रायश्चित्ततया विहिते कृच्छ्रादौ शक्तिहीनः-दृढपरितपनः-दृढानुतापयुक्तः संयमार्हश्च = योगानुष्ठानार्हश्च स्वयं सर्वप्रायश्चित्तस्थानीयां केशवानुस्मृतिं कुर्यादिति 'प्रायश्चित्तान्यशेषाणि' इति श्लोकस्यैकोऽर्थः ।

---

औपचारिकः, दर्शने स्मृतिशब्दो वेति विनिगमकं नेत्यत्र ह अर्थैक्य इति । अर्थैक्ये संमते दर्शनशब्दे स्मृत्युपचरणं=स्मृतौ दर्शनत्वारोप युज्यते । विशदतमस्वरूपं यत् स्पष्टत्वं तस्य ततो ज्ञानाभात् नीचे उत्कृष्टारोपस्यैव युक्तत्वात् । अतः स्मृतिर्दर्शनोक्त्या उपचरिता दर्शनपदकृतोपचारविषयभूता युक्ता । स्मृत्युक्त्या=स्मृतिशब्देन दर्शनस्योपचरणं तु— दर्शने स्मृतित्वारोपस्तु न न्याय्यः इति हेतोः एतत् दर्शनं फलादन्यत् फलभूतदर्शनभिन्नतया विशदज्ञानमात्ररूपतयैव नः अस्माकमिष्टम् ॥ ४४० ॥

१०. ननु पराशरेण, 'प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै । यानि तेषामशेषाणां कृष्णानुस्मरणं परम्' इति कृच्छ्रादिप्रायश्चित्तवत् परं तदन्यदपि सर्वसाधारणं कृष्णचिन्तनरूपं प्रायश्चित्तमस्तीत्युक्तत्वात् गुरुलघुविकल्पोऽपि संमत इति ज्ञायत इत्यत्र तदर्थं प्रमाणान्तरानुसारेण त्रेधा वर्णयति कृच्छ्रेति । कृच्छ्रचान्द्रायणादिकं प्रतिनियतं प्रायश्चित्तं सर्वसंमतम् । यस्तत्राशक्तः अनुतापातिशयं प्राप्तश्च भवन् परमात्मध्यानशक्तोऽप्यस्ति, स केशवानुस्मरणं कर्तव्यकृच्छ्रादिमर्वस्थाने कुर्यात् , अवगाहनाशक्तो मानसस्नानमिवेत्येकोऽर्थः। एवञ्चाशक्ताधिकारिकतया कर्तृभेदात् व्यवस्थितविकल्पः। अर्थान्तरमाह सामान्यादिति । तत्तद्दोषपरिहारार्थं कृच्छ्रादिकं कुर्वाणेनैव परम्=अन्ते कृष्णानुचिन्तनम् , तत्तत्प्रायश्चित्ते आपतितं वैगुण्यमपोह्य तत्तत् सार्थयतीति सर्वनैमित्तिकानामुपकुरुते=एकैकप्रायश्चित्तस्यापि इदमुपकुरुते। अत एव सान्ध्यादावप्यन्ते कृष्णस्मरणं क्रियते । तृतीयमर्थमाह मुक्तेरपीति । इतराणि प्रायश्चित्तानि

अत्र परत्वमेकस्यैव सर्वेष्वपि प्रायश्चित्तेषु विकल्पेनावास्थितत्वम्। यथाह तद्विकल्पः—यानि यानि बहूनि प्रायश्चित्तानि दृश्यन्ते, तेषामेकैकस्य स्थाने यावत् केशवानुस्मरणं फलप्रदानसमर्थं, तावत् तत्तत्र कर्तव्यमिति। अर्थान्तरं पुनराह—सामान्यादिति। सामान्यात् सर्वेष्वपि दोषेषु प्रसक्तेषु तत्तन्नैमित्तिकानां सर्वेषामपि केशवानुस्मरणं प्रधानसहकारित्वेनोपकुरुते। अस्मिन् पक्षे परत्वमेकस्य सर्वोपकारकत्वं सर्वस्मादप्युत्कृष्टत्वञ्च। एवम्, प्रायश्चित्तानि' इति श्लोकस्यार्थद्वयमुक्त्वा सूत्रकाराभिप्रेतं सर्वप्रधानभूतमर्थान्तरमाह-मुक्तेरिति। केशवानुस्मरणं न केवलमेकैकस्य प्रायश्चित्तस्य स्थानेऽवतिष्ठते, नापि सर्वेषामपि प्रायश्चित्तानां सहकारित्वेनापि केवलं वाऽवतिष्ठते, अपितु स्वयमेकमेवानादिसिद्धानामनन्तानां दुष्कृतानां प्रायश्चित्तत्वेनावतिष्ठत इति सूत्रकाराभिप्रायः। मुक्तेरप्यत्र मूलं न केवलमनिष्टनिवृत्तेः, अनिष्टनिवृत्तिपूर्वकेष्टप्राप्तिरूपमुक्तेरपीदमेव मूलमित्यर्थः॥

(४४२) नन्वेवं ये मुकुन्दं शरणमुपगता वर्जिता ध्यानयोगैः
ते चातिक्रम्य मृत्युं यमिन इव परं धाम यान्तीत्युशन्ति।
सत्यं तेऽपीति शब्दाश्रयतविषययोर्गौरवे लाघवेऽपि
प्राप्तार्थं ध्यानशास्त्रं प्रणिधिसहृदशायोगिभिर्योगविद्भिः॥ ११॥

अत्र कश्चिदाह, 'शरणं त्वां प्रपन्ना ये' इति श्लोके शरणागतेरेव सर्वप्रायश्चित्तत्वेन परमपदप्राप्तिहेतुत्वेन च विधानादुपासनात्मकस्य योगस्य कथं सर्वप्रायश्चित्तत्वमित्याशङ्क्य शक्ताशक्तरूपाधिकारिभेदेन द्वयोरपि सर्वप्रायश्चित्तत्वं द्रढयति—नन्वेवमिति। अयमर्थः:-ये मुकुन्दं शरणमुपगता ध्यानयोगैः विवर्जिताः, तेऽपि मृत्युमतिक्रम्य यमिन इव योगिन इव परंधाम यान्तीति, 'शरणं त्वां प्रपन्ना ये ध्यानयोगविवर्जिताः। तेऽपि मृत्युमतिक्रम्य यान्ति तद्वैष्णवं पदम्' इत्युच्यते; तत् कथं ध्यानयोगस्येदमुपायत्वमिति। अत्राधर्ङ्गीकारेणोत्तरमाह—सत्यमिति। अस्तु शरणागतेर्मोक्षोपायत्वम्, तथापि योगस्यापि मोक्षोपायत्वमत्रैवोच्यते, 'तेऽपि मृत्युमतिक्रम्य' इत्यपिशब्दसामर्थ्यात्। न हि त

---

तपोयज्ञदानरूपाणि व्यवस्थितपापमात्रनाशकानि; श्रीकृष्णस्मरणसंततिरूपा भक्तिस्तु मुक्तेरपि मूलभूता। संचितसर्वपापनिवर्तकत्वात् परं सर्वोत्कृष्टं प्रायश्चित्तम्। तादृशध्यानरूपाम् कतिपयपापमात्रनिवर्तकानुस्मृतिविलक्षणां प्रीतिरूपापन्नदर्शनसमानाकारानुस्मृतिरूपां तां केशवानुस्मृतिमत्र शारीरके मुनिर्बादरायणोऽमनुत। तथा पराशरोऽपि अत्र विष्णुपुराणे, "तद्रूपप्रत्यये चैका संततिश्चान्यनिस्पृहा। तद् ध्यानं प्रथमैः षड्भिरङ्गैर्निष्पाद्यते तथा। निरस्तातिशयाह्लादसुखभावैकलक्षणा। भेषजं भगवत्प्राप्तेरैकान्तात्यन्तिकी मता" इति काष्ठापन्नस्मृतिसंततेः परमोत्कृष्टप्रायश्चित्तत्वमाह। अतः सोऽप्यर्थः प्रायश्चित्तानीति श्लोके निविष्ट इति। मुनिशब्देन व्यासमात्रग्रहणे पराशरस्यासंमतिः चिन्त्या स्यादिति एवमुक्तम्॥ ४४१॥

११. ननु भक्तिप्रपत्त्योर्गुरुलघुभूतयोर्विकल्पो लक्ष्यते, 'भक्त्या परमया वाऽपि प्रपत्त्या वा महामते। प्राप्योऽप्यहम्' इति, 'शरणं त्वां प्रपन्ना ये' इति चेत्याशंकते नन्विति। मुकुन्दं मोक्षप्रदं नारायणम् तेऽपि चेत्यस्य गुरुभूतध्यानयोगरहिता अपि ते चेत्यर्थः। समाधत्ते सत्यमिति। तेऽपीति अपिशब्दाभावे प्रपन्नाः पश्चात् भक्तिमनुष्ठाय यान्तीति वर्ण्येत। तत्सत्त्वात्तु भक्तिं विनैव मुक्तिरत्र विवक्षिता।

एव मृत्युमर्तिक्रम्येति अवधारणमुच्यते । अपितु तेऽपीत्यपिशब्दान्वयेन । ततश्च शरणागताश्च वैष्णवं पदं यान्ति तथा योगनिष्ठाश्चेति वाक्याभिप्रायः स्यात् । तस्य विष्णमेव वाक्यं योगनिष्ठाना प्रथमं वैष्णवपदगमनमुक्त्वा तद्वत् शरणागतानामपि वैष्णवपदगमनं च ;ाति न योगनिष्ठानामपवर्गफलप्राप्तिं प्रतिक्षिपतीति न कश्चिदपि विरोधः । नियतविषययोरित्य दि—शक्तस्य गुर्वनुष्ठानम्, अशक्तस्य लघ्वनुष्ठानमिति गौरवे लाघवेऽपि शक्ताशक्तविषयतया नियतविषययोस्तयोः प्रणिधिसहदशायोगिभियोगविद्भिर्ध्यानशास्त्रं प्रासार्थम्—अर्थवदित्यर्थः । शक्तैरेव गुरुतरध्यानशास्त्रमनुष्ठेयमित्युक्तं भवति ॥ ४४२ ॥

(४४३) धर्मो वर्णादियोग्यः कलुषशमनतः सत्त्ववृद्ध्योपकारी
भक्तेः, तद्वत् प्रपत्तिस्त्वगतिकसमयेष्वन्तरायापहन्त्री ।
सानुक्रोशे हि शक्ते शरणवरणतः सर्वसाध्यं सुसाधं
'मोक्षाकाङ्क्षी प्रपद्ये शरणमह'मिति क्वापि मन्त्रे श्रुतश्च ॥ १२ ॥
इत्यावृत्त्यधिकरणम् ॥ १२४ ॥

वर्णाश्रमधर्माणां यथा अन्तःकरणनैर्मल्यनिर्वृत्तिद्वारेणोपासनहेतुत्वम्, तथा अङ्गप्रपत्तेरपि तेनैव द्वारेणोपासनहेतुत्वमस्तीति सप्रमाणकमाह—धर्म इति । शब्दान्वयस्तु—वर्णादियोग्यो धर्मो हृदयकालुष्यशमनेन सत्त्वाभिवृद्ध्या यथा भक्त्युपकारी, तद्वत्प्रपत्तिरप्यगतिकसमयेषु—अनन्यसाध्यत्वसमयेषु अन्तरायापहन्त्री भवति । अयं किल प्रपत्तेः स्वभावः—सानुक्रोशे कृपायुक्ते शक्ते पुरुषे

---

नियतविषययोः व्यवस्थिताधिकारिकयोः भक्तिप्रपत्त्योः गुरुभूतत्वे लघुभूतत्वे च सति ध्यानशास्त्रं न व्यर्थं भवति, किंतु प्रणिधिसहदशायोगिभिः प्रणिधानसहनरूपावस्थायुक्तैः ध्यानानुष्ठानशक्तैरिति यावत् । योगविद्भिः—तत्त्वज्ञानवद्भिः शक्तिज्ञानोभयवत आदाय प्रासार्थं सार्थम् । तेषां स्वापेक्षितं फलं ध्यानेन साधयितुमर्हाणां प्रपत्तावधिकारस्याऽऽकिञ्चन्यरूपस्याभावात् न गुरुशास्त्रवैयर्थ्यप्रसंगः । अतः श्रुतिस्मृतिरूपोपदेशनो यादृशयादृशविशेषवत्त्वं वेदनेऽवगम्यते, तादृशावृत्तिमद्वेदनमेवोपाय इति सिद्धम् ॥४४२॥

१२. नन्वेवमकिञ्चनाधिकारिविषये प्रपत्तिर्मुक्तेरेवोपाय इति तस्याः प्राधान्यस्वीकारे कथं भक्त्यङ्गत्वाभ्युपगमः । वर्णाश्रमधर्मरूपाङ्गत एवोपकारसिद्ध्या मा भूद्वा अंगत्वम्; वचनानामंगत्व एव तात्पर्येण प्राधान्यं वा त्याज्यमित्याशंकाः परिहरति धर्म इति । वर्णाश्रमधर्मोऽपि कलुषशमनेन सत्त्वविवर्धनत उपकारक एव । अथापि न कृच्छ्रचान्द्रायणादिप्रतिपदोक्तप्रायश्चित्तवत् बुद्धिपूर्वप्रबलप्रतिनियतपापनाशहेतुत्वम् । अतो भक्त्यन्तरायभूततादृशपापापहन्तृकृत्यप्रायश्चित्तानुष्ठानाशक्तः अगतिकः तद्विषये तत्पापापहन्त्री भवन्ती प्रपत्तिर्भक्त्यै उपकुरुते । एवं यदा भक्त्यपेक्षितदृष्टाद्यर्थकर्मानुष्ठानाशक्तः; तदा तद्विषये तत्फलजननद्वाराऽप्युपकुरुते । अतो नास्या वर्णाश्रमधर्मेणान्यथासिद्धिः । इदं प्रपत्तिस्वरूपशोधनतोऽपि सुगममित्याह सानुक्रोशे इति । यत् येन कामकामेन न साध्यं साधनान्तरैः, तस्मिन् अनन्यसाध्ये स्वाभीष्टे महाविश्वासपूर्वकम् तदेकोपायतायाच्ञा इति सदयसमर्थपुरुषविषये शरणवरणं क्रियते । ततः सर्वसाधनान्तरसाध्यमशेषं सुखेन साध्यते । अत एवं भक्त्यङ्गत्वं सिद्धम् । एवमपि

शरणवरणतः सर्वसाध्यं सर्वमप्यभीष्टं सुसाधमिति। तत्राश्च मोक्षसाधनभूतोपासनाशक्तौ प्रपत्तिः तत्स्थाने स्थित्वा मोक्षमेव साधयति। उपासनाङ्गभूतकर्मयोगाद्यशक्तौ तु कर्मयोगादिस्थाने स्थित्वोपासनमेव साधयति। तदिदमुभयमपि श्रुतेरभिप्रेतमित्यभिप्रायेण वदति—मोक्षाकाङ्क्षीति। 'मुमुक्षुर्वै शरणमहं प्रपद्ये' इति कस्मिंश्चिन्मन्त्रे श्रूयते। इदमङ्गप्रपत्तिविषयतया वा स्वतन्त्रप्रपत्तिविषयतया वा यथाभिमतं योजयितुं शक्यमि(शक्यते इ)त्यर्थः॥ ४४३॥

इत्यावृत्त्यधिकरणम्॥ १२४॥

## १२५॥ अथ आत्मत्वोपासनाधिकरणम्॥ ४-१-२॥

आत्मेति तूपगच्छन्ति ग्राहयन्ति च॥ ३॥

(४४४) जीवादत्यन्तभिन्नः स विभुरभिदधे लक्षणैः साधनान्तैः
मुक्त्यर्थोपासनेऽस्मिन् मुषिततमसि न ब्रह्मदृष्ट्यादियुक्तिः।
तत्त्वज्ञे वीतरागे तदिह न घटते सोऽहमस्मीत्युपास्तिः;
तन्न स्यादात्मान्तरात्मन्यहमिति वचसोऽप्यत्र मुख्यप्रवृत्तेः॥ १३॥

पूर्वं परब्रह्मोपासनमसकृदावृत्तं कर्तव्यमित्युक्तम्। इदं पुनरिदानीं चिन्त्यते—किमुपास्यं ब्रह्म उपासितुरन्यत्वेनोपास्यम्, उतोपासितुरात्मत्वेनेति शङ्कया सङ्गतिः। अयमेव विचारस्तदर्थविचारोपक्रमः—किमात्मत्वेनोपासने, 'पृथगात्मानम्' इति विहितपृथक्त्वानुसन्धानविरोधः प्रसज्यते, नेति। तत्र पूर्वपक्षमाह—जीवादिति। साधनान्तैः= साधनपर्यवसानैर्लक्षणैः= अध्यायैर्जीवादत्यन्तभिन्नः स च विभुरित्यभिदधे। सः परमपुरुषः। तस्मादस्मिन्नणुरूपजीवबुद्धिस्तत्त्वतः कर्तुमेव न शक्यत इत्यर्थः। ननु गरुडमात्मानं जानीयादिति न्यायेन स्वात्मनि परमात्मदृष्टिः स्यादित्याशङ्क्य तदपि नेत्याह—मुक्त्यर्थेति। अयमर्थः—क्षुद्रफलप्राप्तौ हि दृष्टिविधीनामुपयोगः। अत्र तु मुक्त्यर्थोपासने मुषिततमसि= सर्वाज्ञाननिवृत्तियुक्ते विपरीतज्ञानरूपा अन्यत्रान्यदृष्टिर्न स्यादिति(त्यर्थः)। तेन स्वाभिप्रेतं निगमयति—तत्त्वज्ञ इति। तत्त्वज्ञे= यथार्थज्ञानवति वीतरागे फलान्तरप्राप्तिरागविधुरे सोऽहमस्मीत्युपास्तिर्न

---

प्राधान्यमपीत्याह मोक्षेति। 'मुमुक्षुर्वै शरणमहं प्रपद्ये' इति मन्त्रेण हि मोक्षफलोद्देशेन प्रपत्तिर्विधीयते उक्तञ्च, 'मुमुक्षुणा यत् सांख्येन योगेन न च भक्तितः। तेनतेनाऽऽप्यते तत्तत् न्यासेनैव महामुने' इति भक्तिसाध्यमोक्षरूपफलसाधनत्वम्। तृतीयः पादः द्वितीयस्य चतुर्थस्य चोपकुरुते। उपायान्तराशक्तस्यापेक्षितफलसाधनं प्रपत्तिरिति सामान्याकारेणैव तस्याः अंगत्वं प्राधान्यञ्च यथायथमिति यावत्। एवं यदुपायस्थाने प्रपत्तिरकिञ्चनस्य विधीयते, स उपाय आवृत्तिविशेषात्मकं वेदनमेवेत्युक्तं भवति॥४४३॥

१३. तृतीयाध्यायतृतीयपादोक्ता विद्या असकृदावृत्तध्यानरूपेत्यावेदितमत्र। तस्याः प्रतिनियतस्थानगुणविशिष्टब्रह्मविषयकत्वं तत्रैव व्युदपादि। एवम्भूतब्रह्मविषयकोपासनत एव मुक्तिसंभवे तत्र सर्वत्र सोऽहमस्मीति यत् अहमर्थविषयकत्वं सिद्धान्तीष्टम्, तन्न घटत इत्याशंकां परिहर्तुम् आत्मत्वोपासनाधिकरणं प्रवृत्तमित्याशयेन विशदं तदर्थमाह जीवादिति। 'नेतरोऽनुपपत्तेः', 'अधिकं तु भेदनिर्देशात्', 'अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्' इत्यादिसूत्रैः साधनान्तैर्लक्षणैः साधनाध्यायपर्यन्तैरध्यायैः सः जगद्धेतुर्विभुः जीवादत्यन्तभिन्नः अभेदप्रसंगरहितत्वेन भिदधे स्थापित आसीत्।

स्य देव। तदिदं प्रतिक्षिपति—तन्नेति। अयमर्थः—यदि स्वात्मपरमात्मनोः स्वरूपैक्यमत्रोपदिश्येत, तदा भ्रान्तित्वान्न मुक्तिहेतुः। यदि न स्वात्मनि परमात्मदृष्टिरुपदिश्येत, तदा ब्रह्मोपासनादिवत् दृष्टिविधित्वादपवर्गसाधनं न स्यात्। नेदमुभयमप्यत्रोपदिश्यते; अपि तु स्वान्तर्यामित्वेन भगवदनुसन्धानम्, तच्च परमार्थ(त्म)विषयत्वान्मुक्तिसाधनमेवेति न कश्चिदत्र विरोध इति। तदिदमाह—स्वात्मेति। तर्ह्यहंशब्दस्यान्तरात्मवाचित्वे मुख्यवृत्तिर्न स्यादित्याशङ्क्य प्रतिक्षिपति मुख्यप्रवृत्तिरिति। अयमर्थः—यथा देहवाची देवमनुष्यादिशब्दो देहाधिष्ठातरि जीवेऽपि मुख्य एव प्रवर्तते, एवं जीववाची अहंशब्दो जीवान्तर्यामिणि परमात्मनि मुख्यतया प्रवर्तत इति। यदि ब्राह्मणक्षत्रियादिशब्दो जीवेऽपि न मुख्यः स्यात्, तदा ब्राह्मणत्वक्षत्रियत्वाद्युपहिताधिकारिविशेषोपादानेन प्रवृत्तानां विधीनाममुख्यत्वं स्यात्। तथा चार्थवादमन्त्रयोरपि तत्तदौपाधिकाकारनिर्दिष्टपुरुषविषयतया प्रवृत्तयोरमुख्यत्वं स्यादिति सर्ववेदवाक्येषु मुख्यत्वपरित्याग इति सामञ्जस्यमेतत् ॥ ४४४ ॥

(४४५) वस्विन्द्रादेरुपास्तौ प्रकृतिशबलितस्वान्वितेशा पुरोक्ता;
शुद्धः स्वात्मा च चिन्त्यः क्वचिदिह तु विमुक्तादशा स्वेन युक्तः।
व्यक्तिर्जीवेशभेदे व्यधिकरणपदैर्भावने स्यात्, तथापि
प्रश्नाधीन(यत्त)स्वरूपप्रमितिसुदृढतासिद्धयेऽहङ्ग्रहोक्तिः ॥ १४ ॥

अत्राहङ्ग्रहोपासनस्य प्रयोजनाभावं वदतः कस्यचित् तत्प्रयोजनविशेषं दर्शयति—वस्विन्द्रादेरिति। अयमत्र चोदकस्याभिप्रायः—'किमत्राहङ्ग्रहोपासनाभिधाने विशेषप्रयोजनम्? क्वचिद्विशिष्टस्वात्मविशिष्टपरमात्मोपासनञ्चेत्, तत् वस्विन्द्रादेरुपास्तिप्रसङ्गे प्रागेवोक्तम्। शुद्धश्च स्वात्मा क्वचिच्चिन्त्य—प्रकृतिसंसर्गरहितः शुद्धोऽप्यात्मा क्वचिच्चिन्तनीय एव। इह तु शुद्धेन स्वेन युक्तो

---

तथाविधतत्त्वज्ञानमेव मुक्तिहेतुः, तस्मिन् मुक्त्यर्थज्ञाने मुषितत्वमपुरुषार्थत्वं अतो ब्रह्मत्वभ्रान्तेर्वा मुक्तिः घटनं नावकाशं लभते। यस्य हि तमोगुणः, स फलान्तरे भोग्यत्वबुद्ध्या तत्कामनया ब्रह्मदृष्टिं क्वचित् कुर्यात्। तमोगुणविशिष्टस्यैव परमात्मनि अहमर्थस्वात्माभेदभ्रान्तिरपि स्यात्। न हि मुमुक्षुः सर्वदा फलान्तरकामः। अतो दृष्टिभ्रान्त्ययोगात् सोऽहमस्मीति अहंत्वघटनं भक्तियोगेषु न युज्यते। सुपित तममीत्यस्यैव विवरणं तत्त्वज्ञे वीतरागे इति पूर्वपक्षं निरस्यति तन्नेति। हेतुमाह इन्द्रप्राणाधिकरणोक्तरीत्या, 'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' इति सूत्रदर्शितः मदन्तर्यामीत्यर्थ एवाहंशब्दस्येति न दोष इति भावः ॥ ४४४ ॥

१४. अहमित्यस्य सोपाधिकात्मग्राहित्वस्य परमात्मप्रकारतां विना आत्ममात्रग्राहित्वस्य च तत्तन्नोपासने सत्त्वेऽपि मुक्तिमात्रार्थस्वोपासने प्रकारतयैवाऽऽत्मोपासनमित्याह वस्विति। मधुविद्यायां वसुरुद्रादित्यमरुत्साध्यरूपजीवविशिष्टपरमात्मोपासनम्। प्रतर्दनविद्यायामिन्द्रविशिष्टपरमात्मोपासनम्। तत्र वसुरुद्रेत्यादिशरीराणामप्युपास्यकोटिप्रवेशोऽस्ति। शबलितेति। विशिष्टेत्यर्थः। स्वशब्दो जीव सामान्यपरः; न तु मधुविद्यानिष्ठमनुष्यजीवपरः, तस्य मनुष्यरूपप्रकृतिविशिष्टतयोपासनविरहात्। यद्वा मनुष्यस्यैव वस्वादेरपि मधुविद्यादावधिकारस्य मध्वधिकरणे स्थापितत्वात् तत्र वस्वादिः पुनस्तत्पदप्राप्तिपूर्वकमोक्षाभिलाषी वस्वाद्युपासनं स्वदेहरूपप्रकृतिशबलितस्वात्मोपासनरूपमेव कुर्यादिति तदत्र

विभुः परमात्मा चिन्त्य एव। तादृशा = शुद्धेनेत्यर्थः। तदिदं जीवपरयोर्भेदचिन्तनमेव—अहम् त्वम् इति तयोर्भेदेन व्यपदेशात्। जीवेशभेदे च व्यक्तिः = अभिव्यक्तिर्व्यधिकरणपदैश्चिन्तने स्यात्, न पुनः समानाधिकरणपदैश्चिन्तने। तथाचाहङ्ग्रहोपासने किं फलम् ?' इति। अत्रोत्तरम्—तथापीति। यद्यपि त्वदुक्तं युक्तमेव तरम्; तथापि ब्रह्मपरतन्त्रस्वरूपप्रमितेः सुदृढता अहङ्ग्रहोपासनादेव भवति। तदर्थमहङ्ग्रहोक्तिः सफलैवेति ॥ ४४५ ॥

(४४६) ऐक्योपास्तावहं त्वं त्वमहमिति मतिर्निर्विशेषे कथं स्यात्
भेदाभेदाभिलापः करकमणिक-तद्वयोमनीत्या न मुख्यः।
मत्तुल्यस्त्वं त्वयाऽहं सम इति वदतां नोपचारोऽपि युक्तः
तस्मात् सर्वान्तरात्मन्ययमहमिति धीराकृतिन्यायसिद्धा ॥ १५ ॥

परपक्षेष्वहङ्ग्रहोपासनस्य न्यायविरुद्धत्वमुक्त्वा स्वपक्षे पुनर्न्यायोपेतत्वं दर्शयति—ऐक्योपास्ताविति। तत्र तावत् मृषावादिपक्षे दूषणमाह—निर्विशेष इति। निर्विशेषे वस्तुनि, 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि' इति त्वमहंशब्दार्थाभावेन त्वमहमिति समानाधिकरणबुद्धिः कथं स्यात्। तर्हि भेदाभेदमेव भास्करमतानुसारेण वदाम इति चेत्—सोऽपि न मुख्य एव। करकमणिकयोर्भेद एव; आकाशे त्वभेद एव। एकत्र भेदश्चाभेदश्च नास्तीति भेदाभेदाभिलापो न मुख्य

---

प्रथमपादे विवक्षितम्। शुद्धस्वात्मचिन्तनञ्च परविद्यांगभूतज्ञानयोगरूपजीवात्मविद्यायाम्। तत्र न देहः, नापि परमात्मा विषयः। इह तु परविद्यायां तादृशा शुद्धेन अपहतपाप्मत्वज्ञानानन्दरूपत्वप्रत्यक्त्वविशिष्टेन स्वात्मना सह परमात्मा चिन्त्यः। प्राकृताकारविलक्षणशुद्धाकारेण स्वस्य प्राप्यतया अप्यनुसंधानौचित्यादेव अहंग्रहोपासनस्य श्रुतौ विधानात्। नन्वस्त्वेवम्, तथापि ममाधारो नियन्ता शेषी सः, सोऽन्यः अहमन्य इति व्यधिकरणपदैः=विभज्य तत्तदर्थमात्रपरतया प्रयुक्तैः शब्दैश्चिन्तने सति व्यक्तिः जीवपरात्यन्त-भेदस्फुटज्ञानं स्यात्; तद् विहाय कुत एवमिति चेत्-सत्यम्; तथापि स्वतन्त्रात्मभ्रमवासनावासितान्तःकरणस्य पृथक् पृथगेव जीवात्मपरमात्माग्रहणेन यत् मोक्षे भावि ब्रह्मप्रकारतयैव सार्वकालिकं जीवप्रत्यक्षम्, तत्प्राप्त्याशाभिवर्धकतया, ब्रह्माधीनस्वराहित्येनास्य सत्तादिकं नास्तीति बुद्धिदार्ढ्यसंपादकतया च यथा तत्त्वमसि, तथा तद्ध्यानं शास्त्रविधित्सितम्। अहंग्रहोक्तिः स्वविशिष्टपरमात्मोपासनस्याहमित्याकारकत्व-प्रदर्शनं तत्कृतम्। अतो भाविप्रत्यक्षरूपाहंग्रहाकाराभ्यासोऽयं सर्वपरविद्यानिष्ठविधेय इति ॥ ४४५ ॥

१५. अहंग्रहरूपमुपासनम्, 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि' इत्यादिवाक्यैः शास्त्राणि ग्राहयन्ति। तदर्थं शोधयति परमतनिरसनेन स्वमतस्थापनाय ऐक्येति। हे भगवन् देवते इति संबोधनेनैव तस्य निर्विशेषत्वाभावः स्वापेक्षयाऽऽत्यन्तभिन्नत्वञ्च ज्ञापितम्। तदविरोधेन वाक्यार्थे वर्णनीये केचिदद्वैतमत्राभिप्रयन्ति। तत् द्विविधम्। तदसदिति पूर्वार्धेनाह। ऐक्योपासनम् अहं त्वमित्याद्याकारकमिति सर्वेष्टम्। तत्र निर्विशेषपक्षे तादृशाकारमतिर्न भवति। अहंपदस्य तच्छब्दो-च्चारणकर्तृत्वोपलक्षित आत्माऽर्थः। त्वमित्यस्य च संबोध्यत्वोपलक्षितः। तत्र धर्मग्रहणे सविशेषत्वं स्यादिति विशेषणं विना व्यक्तिमात्रं त्वमहंशब्दलक्ष्यं वदन्ति मृषावादिनः। तेषां लक्षणा प्रथमो दोषः। अन्ये

एव। तर्हि साम्यमेवाहंशब्देनाभिधीयत इत्यत आह तत्राक्षेऽप्यहंव्यवहारो न मुख्य एवेत्याह— मनुष्य इति। 'त्वं वा अहमस्मि भगवो देवते, अहं वै त्वमसि' इत्यत्र तुल्यत्वे शब्दार्थ इति यद्वता-मुपचार एव परिगृहीतः स्यात्। स तु न युक्त एव। एवं परपक्षे दूषयित्वा स्वपक्षमेव गोचरयितुं निगमयति—तस्मादिति। स्वरूपभेदात्तत्त्वोति सामानाधिकरण्यमीजमुच्यते। शरीरात्ममध्य एव हि सामानाधिकरण्यनियमम्। यथा देहिनि देहवाची मनुष्यादिशब्दः सामानाधिकरण्येन प्रयुज्यते, एवमन्तर्यामिणि जीवशब्दः सामानाधिकरण्येन प्रयुज्यत इति सर्वं सुघटितमेवेति ॥ ४४६ ॥

(४४७) अद्वैतं द्वैतहानौ न भवति सुवचं तत्प्रतिद्वन्द्विकत्वात्

द्वैतञ्चाद्वैतगर्भे; द्वितयमिह हि तत् स्वस्वरूपादभिन्नम्।

द्वैताद्वैतञ्च तादृक् तदुभयनियमानुज्झनादेव विघ्येत्

सर्वं स्थाने स्थितं स्यात् प्रमितिपरवतां; नेतरेषां तु किञ्चित् ॥ १६ ॥

---

च। उभयोः पर्यायतया घटो घट इतिवत् बोध एव न स्यात्। एकपदवैयर्थ्यम्। पदमात्रस्याप्रमाणता च। विधेयस्यार्थस्याभावश्च। भास्करानुयायिभिर्भेदाभेद उच्यते। सोऽपि, एकमृत्कार्ययोः करकमणिकयो-रिवेत्युक्तौ तत्र मृदंशभेदात् भेद एव मुख्यः, नाभेदः; अभेदो जातिगतः। घटाकाशमठाकाशयोरिव भेदाभेद इत्युक्तौ प्राकशनिरवयत्वपक्षे तत्राभेद एव मुख्यः, न भेदः। भेदश्चोपाधिगतः। अतो नैकत्र भेदाभेदद्वयम्। विशिष्टपक्षे ब्रह्मण एव सर्वजीवदोषास्पदत्वमित्यसमञ्जसमिति विस्तृतं सूत्रादावपि। अतो द्वैतपक्षः शिष्यते। तत्राह यदिति। त्वं वा अहमसि इत्यस्य त्वया समोऽहमित्यर्थः, अहं वै त्वमसीत्यस्य मनुष्यस्त्वमसीत्यर्थः इति वदतां पक्षे य उपचारः, सोऽपि न युक्त इति तदर्थस्याग्य एव। वदतामिति पदसत्त्वात् तस्य उपचारेऽन्वयः। वदत्पक्षस्थित उपचार इत्यर्थः। स्वपक्षे निर्दोषतामाह तस्मादिति। पक्षान्तराणामनुपपन्नत्वात्, अहं ब्रह्मेत्यस्य मदन्तरात्मा ब्रह्मेत्यर्थः। तत्र निर्विशेषता वा ब्रह्मजीवैक्यं वा न प्रसज्यते॥ अत्र स्यादुपचार इति चेन्न; अस्या धियः शक्त्यधीनाया आकृति-न्यायसिद्धत्वात्। मीमांसायामाकृत्यधिकरणं विशेषणमात्रे शक्तिस्थापकमिति अर्वाचीनमीमांसकमतम्। तदयुक्तम्; जातिवाचित्वाभिमतानां विशिष्टवाचित्वं तत्र स्थाप्यते। प्रकारवाचिनां शब्दानां प्रकारिणि पर्यवसानं तत्रोच्यते इति गोशब्दादेः गोत्वविशिष्टपिण्डवाचित्वसिद्धौ तत्त्वज्ञानां तन्न्यायेनैव तद्विशिष्ट-जीवपर्यन्तत्वं विशिष्टपरमात्मपर्यन्तत्वं च ततः सिध्यति। तदधिकरणपरमार्थः अस्मत्कृतायामुपयुक्त-मीमांसायां द्रष्टव्यः। एवञ्च अहमिति जीवविशिष्टपरमात्मवाची। अयमहमिति धीरिति। अहमित्येतावति वक्तव्ये अयमिति प्रयोगः, ब्रह्मपदसामानाधिकरण्ये सत्येन विशिष्टवाचित्वमिति ज्ञापनाय। तर्हि त्वमहमिति धीरिति वक्तव्यमिति चेन्न; पूर्वोपात्तवाक्यवत्, 'तद् योऽहं सोऽसौ, योऽसौ सोऽहम्' इत्यपि वाक्यस्यापि सत्त्वात् तत्रासावित्यस्य अयम्पदेन स्मारणात्। आकृतिन्यायसिद्धेत्यनेन शक्त्यैव तावदर्थप्रतीत्या नोपचार इति द्योतितम्। जीवपरभेदस्यैवेष्टत्वात् नाद्वैतपक्षगतदोषोऽपीति॥ ४४६॥

१६. निर्विशेषाद्वैतपक्षे च अहं त्वमित्याकारकत्वं मतेनैव भवतीत्युक्तम्। अथ तादृशपक्षयो-

अत्र, 'त्वं वा अहमस्मि भगवो देवते' इत्यस्मिन् वाक्ये द्वैतप्रसङ्ग एव नास्ति ; द्वैतस्य स्वरूपशून्यत्वात् केवलमद्वैतमेव प्रतिपाद्यत इति वदन्तं मृषावादिनं प्रतिक्षिपति—अद्वैतमिति । अयमत्र विकल्पः—अद्वैतमिति शब्देन द्वैतविरोधी वा द्वैतान्यो वा द्वैताभावो वा अभिधीयते ; अथवा न किञ्चिदभिधीयते । तत्र त्रिष्वपि विकल्पेषु प्रतियोग्यभावेन त्रयाणामप्यर्थानामसिद्धिः । प्रतियोगिसद्भावे तस्यापि सिद्धिः । न किञ्चिदिति पक्षे निरर्थकमेव वचनं स्यात् ; तेनाद्वैतमिति वदता तत्रावश्यमेव द्वैतमङ्गीकर्तव्यम् । अयमत्र शब्दार्थः—द्वैतहानौ अद्वैतमिति वचनं न सुवचम्, द्वैतप्रतिद्वन्द्विकत्वात् । एवमद्वैतहानौ द्वैतमपि न सुवचमिति प्रसङ्गादाह—द्वैतञ्चाद्वैतगर्भमिति । अद्वैताभावे द्वैतमपि न स्यात् । एकयोरेव हि द्वित्वं वर्तते ; तयोरेकत्वमेव ह्यद्वैतमिति भावः । तदेव विवृणोति—द्वितयमिति । द्वित्वाश्रयभूतमेकैकं वस्तु स्वस्वरूपादभिन्नम् । तेन तत्राद्वैतसिद्धिरित्यर्थः । अपर आह द्वैतं मा भूत्, अद्वैतं च मा भूत्, द्वैताद्वैतमेवाङ्गीकरोमीति । तदपि नेत्याह—द्वैताद्वैतमिति । किं द्वैताद्वैतशब्देन द्वैताद्वैतयोस्समाहार उच्यते; अथवा अन्यो यःकश्चिदर्थभागः । तत्र तत्समाहारवचने द्वैतलक्षणमद्वैतलक्षणञ्चाङ्गीकृत्य वक्तव्यम् । तथाच तदुभयनियमानुज्झनात् तद्वचने द्वैतञ्च सिध्यति, अद्वैतञ्च सिध्यति । तदुज्झने तद्वचनमेव न स्यात् । अयमत्र विशेषः—एकत्रैव तद्वचने व्याघातः ।

---

रेवासंभवमाह अद्वैतमिति । अयमर्थः—अद्वैतवादिना द्वैतमिष्यते न वा । आद्ये, द्वैतहानौ—द्वैतस्यासंमतौ अद्वैतमिति पदप्रयोग एव न भवति; अद्वैतस्य द्वैतप्रतियोगिकत्वात्, प्रतियोग्यप्रसिद्धौ तदभावरूपाद्वैतस्वरूपस्यैवालाभात् । एवं द्वैतापलापेनाद्वैतवचनं न शक्यमित्युक्तम् । एवमेवाद्वैतापलापेन द्वैतवचनमपि न भवतीत्याह द्वैतञ्चेति । द्वयोर्भावो द्विता । द्वितैव द्वैतम् । द्वैतस्याभाव एवाद्वैतम् । तत्र पदे द्वैतपदं घटकमिति तदर्थोऽपि तथेति । एवं द्वित्वसंख्याया एकस्मिन् धर्मिणि पर्याप्त्ययोगात् विभिन्नवस्तुद्वयगतत्वात् भेदनियतत्वात् भेद एव द्वैतम् । ययोर्भेद उच्यते, तयोः प्रत्येकं स्वस्माद् भेदाभावात् स्वेन स्वस्याद्वैतमेव अन्यथा एकमेव गृहीत्वा इमे द्वे इति व्यवहारः क्रियेत । अतो द्वैतमद्वैतगर्भम् । अर्थसिद्धाभेदवद्वस्तुप्रतियोगिक एव भेद इति । तर्हि उभयस्यावश्यकत्वात् द्वैताद्वैतमिति पक्ष इष्यतामिति चेत्-तत्राऽऽह द्वैतेति । तादृगिति । न सुवचमित्यर्थः । केवलाद्वैतमिव केवलद्वैतमिव च द्वैताद्वैतमपि दुर्वचमेव सिध्येत् । **तदुभयनियमानुज्झनात्** भेदस्य यः वस्तुतादात्म्यप्रतियोगिकत्वनियमः, अभेदस्य च भेदप्रतियोगिकत्वनियमः, तदत्यागात् । प्रतियोग्यभावयोः द्वैताद्वैतयोर्विरोधात् । अतस्तत् **तादृगेव सिध्येत्** असुवचत्वेनैव सिध्येदित्यर्थः । अथवा **तदुभयस्य** द्वैतस्याद्वैतस्य च **नियमानुज्झनात्** अद्वैतद्वैतगर्भत्वनियमसत्त्वात् द्वैताद्वैतपदमपि **तादृगेव सिध्येत्** मिथोविरुद्धद्वैताद्वैतबोधकमेव स्यात् । अतः अहिनकुलवत् शाश्वतिकविरोधनिबन्धन एवायं समाहारः स्यात् । न हि द्वैताद्वैतमिति कश्चित् रूढं पदमिति भावः । भवतां तर्हि कः पक्ष इत्यत्राह सर्वमिति । वेदार्थसंग्रहे भाष्यकारैः भेदो वा अभेदो वा भेदाभेदौ वा किमत्र तत्त्वमित्याशंक्य सर्वमभिप्रायभेदात् सुस्थमित्युक्तम् । तस्मात् अहंत्वमित्यादौ धर्म्यंशे अद्वैतम्, प्रवृत्तिनिमित्तांशयोर्द्वैतम्, अत एव द्वैताद्वैतमिति **प्रमितिपरवतां** प्रमाणपरतन्त्राणां तत्तत्स्थाने तत्तत् द्वैतमद्वैतञ्च स्थितं स्यात् ; न त्वेकत्र । द्वैताद्वैतमपि व्यक्तिजातिभेदेन उपपाद्यम् । इतरेषां इदमित्थमिति ज्ञानपरिस्थितिपरीक्षारहितानां संशयव्यवहारिणां व्यवहारस्तु न

विषयभेदेन तद्वचने सुस्थमेवोभयमपि। यस्य कस्यचिदर्थभागस्योक्तौ श्रूयमाणतां न काचित् क्षतिः। तर्हि द्वैतादिकं सर्वं साधयतां भवतां किं तत्त्वमङ्गीकृतं स्यादित्याशङ्क्य प्रमाणानुसारिणां विषयभेदेन सर्वमपि तत्त्वम्; प्रमाणाननुसारिणां तु सर्वमप्यतत्त्वमिति निगमयति सर्वेऽपि ॥ ४४७ ॥

(४४८) नन्वद्वैते निषेध्यो गगनकुसुमवत् भ्रान्तिसिद्धोऽस्तु भेदः;
मैवं; सत्यादभिन्नः स यदि, न खलु तद्भ्रान्तिसिद्धत्वसिद्धिः।
भिन्नत्वञ्चास्य तस्मात् यदि भवति मृषा, विद्धि दत्तोत्तरं तत्
सत्यञ्चेत्; सत्यभेदोपगतिरिति मुधा दूरतो धावनं वः ॥ १७ ॥

इति आत्मत्वोपासनाधिकरणम् ॥ १२५ ॥

पूर्वस्मिन् श्लोके ह्यद्वैतशब्दे द्वैतस्य निषेध्यत्वेन सत्यत्वमित्युक्तम्। तत् प्रतिक्षिपति पूर्वपक्षी— नन्विति। अयमत्र भावः—यथा गगनकुसुमं नास्तीत्यत्र भ्रान्तिसिद्धमेव गगनकुसुमं निषेध्यम्, तद्वदत्रापि भ्रान्तिसिद्धमेव द्वैतं निषेध्यं स्यात्; तथा च द्वैतस्य पारमार्थ्यं न सिध्यति। अतोऽद्वैतमेव परमार्थ इति। तदेतत् प्रतिक्षिपति—मैवमिति। अत्र विकल्प्य दूषयति—सत्यादिति। स भेदः किं ब्रह्मणस्सत्यादभिन्नः, उत भिन्नः, भिन्नत्वे तद्भेदः किं परमार्थः, उतापरमार्थ इति विकल्पाः। प्रथमपक्षे दूषणमाह—न खल्विति। अयमर्थः—सत्यादभिन्नस्य तस्य भेदस्य भ्रान्तिसिद्धत्वे सत्यस्यापि भ्रान्तिसिद्धत्वं स्यात्। तस्याभ्रान्तिसिद्धत्वे भेदस्याप्यभ्रान्तिसिद्धत्वं स्यादिति। एवं सत्यादभिन्नत्वपक्षे दूषणमुक्त्वा भिन्नत्वपक्षेऽप्युभयथा दूषणमाह—भिन्नत्वञ्चेति। स भेदोऽत्र मृषा चेत्— सत्यादसत्यभूतस्य भेदात्मकस्य प्रपञ्चस्य भेदो मृषा चेत्, तर्हि प्रपञ्चस्य सत्यत्वं ब्रह्मणोऽसत्यत्वं वा स्यात्। तदिदमाह—दत्तोत्तरमिति। सत्यात् ब्रह्मणोऽसत्यभूतस्य प्रपञ्चस्य तद्भेदस्य सत्यत्वे सत्यभेदाङ्गीकारप्रसङ्ग इति दूरतो धावतस्तव धावनं निरर्थकमेव स्यादित्याह—सत्यञ्चेदिति। प्रपञ्चस्य ब्रह्मणो भेदो मिथ्या, अथापि प्रपञ्चे भेदो(प्रपञ्चो ब्रह्म न) भवतीति चेन्न, व्याघातात्। भेदो मिथ्या भेदोऽस्तीति स्वयमेव भाषणात्। तर्हि शशविषाणस्य सत्यात् भेदः सत्योऽसत्यो वेति वयमप्यनुयुञ्ज्महे इति चेत्—सत्य एवेति वयमुत्तरं दास्यामः। नन्वसत्ये शशविषाणे सत्यभेदः कथं

---

किञ्चित् सिध्येदिति। ननु अद्वैतमित्यस्य ऐक्यमित्यर्थः। ऐक्यस्य च द्वैतप्रतियोगिकत्वं नापेक्षितमिति चेत्— ऐक्यं कस्य? धर्मिनिर्देशे, धर्मि, तन्निष्ठमैक्यमिति द्वयं सिध्येत्। न त्वेकेतराभाव.। इतराभाव इति चाद्वैतपर्यायः। तथा तत्साधकप्रमाणप्रमातृत्वाद्यभावे तदपि न सिध्येत्। तत्सत्त्वे च कथमैक्यमिति ॥ ४४७

१७. अद्वैतस्य द्वैतसापेक्षत्वेऽपि द्वैतस्य न वास्तवत्वनियम इति शङ्कामनूद्य परिहरति नन्विति। अद्वैतमित्यत्र नञर्थनिषेधप्रतियोगितयोच्यमानं द्वैतं न परमार्थभूतम्। किन्तु भ्रान्तिसिद्धम्, यथा शशविषाणं नास्तीत्यत्रेति। निरस्यति मैवमिति। अद्वैतम् अभेदः। तत्प्रतियोगी भेदः। भ्रान्तिसिद्धत्वेनोच्यमानः सत्यात् ब्रह्मणो भिन्नो वा अभिन्नो वा। अभिन्नो यदि, तदा ब्रह्मण इव तस्य वास्तवत्वात् न भ्रान्तिसिद्धत्वम्। अन्त्ये=अस्य भेदस्य तस्मात् ब्रह्मणः भिन्नत्वं चेत् – तदा विकल्प्यते, भेदगतं भिन्नत्वं मृषा वा सत्यं वा। अस्य तस्माद्भिन्नत्वं यदि भवति मृषा, तदा विद्धि दत्तोत्तरं तत्। [आद्ये] तत्र मृषात्वपक्षे भिन्नत्वाश्रयो भेदो ब्रह्मैव स्यात्। तर्हि तस्य भेदस्याभावः कथमित्यर्थः। अन्यथा ब्रह्माभावप्रसङ्गात्। अन्त्ये आह सत्यमिति भेदगतं भिन्नत्वं न मृषा, सत्यमेवेति चेत्- भेदः सत्य

दिति। तदिदं प्रतिक्षिपति—नेति। प्रतिक्षेपहेतुमाह—न खल्विति। अयमर्थः—साक्षाद्ब्रह्मोपासनेषु ब्रह्मणोऽन्तर्यामित्वात् ब्रह्मात्मकत्वानुसन्धानं युक्तमेव। नामाद्युपासनेषु नामादीनामन्तर्यामित्वाभावान्न नामाद्यात्मक(दौ स्वात्म ?)त्वानुसन्धानं युक्तमिति(त्यर्थः)। ननु ब्रह्मण्येवान्यदृष्टिः स्यात्। तथाच ब्रह्मणः प्रधानत्वेन दृष्टिविधावपि[अहमर्थे ?] ब्रह्मात्मकत्वानुसन्धानं स्यादित्याशङ्क्य परिहरति—न ब्रह्मणीति। ब्रह्मण्यन्यदृष्ट्यभावे हेतुमाह—तस्येति। अयं भावः—'मनो ब्रह्मेत्युपासीत' इत्यादिष्वपकृष्टेषूत्कृष्टदृष्टिरेव हि दृष्टिविधिरित्युच्यते। तथाच ब्रह्मण्यन्यदृष्टौ उत्कृष्टे स्यादपकृष्टदृष्टिरिति[कृत्वा] अपकृष्टे उत्कृष्टदृष्टित्वरूपदृष्टिविधिलक्षणं न स्यादिति(त्यर्थः)। अन्यस्मिन् ब्रह्मदृष्टौ दृष्टिविधिलक्षणं स्यादेवेत्याह–अन्यस्मिन्निति। नामादिष्वन्येषु ब्रह्मदृष्टौ केवलं जगत्कारणत्वादिभिर्नियतैर्ब्रह्मलक्षणैस्तत्तत्पदार्थग्रहः अर्थ्यः=अर्थादनपेतो भवतीत्यर्थः। यथा राजभृत्ये राजदृष्टिरपकृष्टविषयोत्कृष्टदृष्टिरूपत्वात् फलहेतुर्भवति, एवमपकृष्टेषूत्कृष्टब्रह्मदृष्टिस्तत्रतत्राभिमतफलहेतुर्भवतीत्यर्थः॥

(४५०) आत्मन्यब्रह्मभूते भवतु फलवती कुत्रचित् ब्रह्मदृष्टिः;
नैषा वस्तुव्यवस्थां शिथिलयति नरे वैनतेयत्वधीवत्।
एतावन्मात्रमोहादिदमहमिति तु स्थापयन् क्षिप्रमृच्छेत्
इन्द्रत्वारोपदर्पोद्धतनहुषमहाभोगिसंस्थामवस्थाम्॥ १९॥

इति प्रतीकाधिकरणम्॥ १२६॥

---

नेति। हेतुमाह न खल्विति। खलुशब्दो हिशब्दपर्यायः हेत्वर्थपर्यवसायी। अयं भावः—नाम ब्रह्मेत्युपासीतेत्यस्य नामान्तर्यामि ब्रह्मोपासीतेत्यर्थो वा, ब्रह्म नामत्वेन कल्पयित्वोपासीतेत्यर्थो वा, नामैव ब्रह्मत्वेनोपासीतेत्यर्थो वा। नाद्यः; तथासति दृष्टित्वरूपाहार्यज्ञानत्वायोगात्। अभेदारोपसूचकब्रह्मप्रतीकसाम्यस्य चतुष्पात्त्वादेस्तत्रतत्र दर्शितस्यानन्वयाच्च। इतिशब्दवैयर्थ्याच्च। न द्वितीयः। तत्र हेतुरुच्यते न ब्रह्मणीति। ब्रह्मणि मनस्त्वादिदृष्टिर्न युज्यते। उत्कृष्टे निकृष्टदृष्ट्ययोगात्। ब्रह्मणश्च सर्वोत्कृष्टत्वात्। मनो ब्रह्मेति, वाचं ब्रह्मेति मनआदेर्द्वितीयान्ततया उपासनविशेष्यत्वस्य, इतिशब्दबलात् प्रथमान्तपदोक्तब्रह्मत्वप्रकारकत्वस्य चोपासनेऽवगमाच्च। अतो ब्रह्मणो विशेष्यत्वाभावात् तदहम्=ब्रह्माहमित्युपासनं न भवति। न तृतीयः, प्रतीकः मनआदिः ब्रह्मशरीरभूतः न सः=नान्तरात्मेति तदहम्=मनोऽहमिति प्रत्ययो न भवतीति। ननु भवतु ब्रह्मणः प्रकारत्वमेव। अथापि अहमर्थान्तर्यामित्वदृष्टिः मनसि क्रियताम्। सा हि ब्रह्मदृष्टिरेवेत्यत्राह अन्यस्मिन्निति। नामादौ ब्रह्मदृष्टिः उद्गीथादौ प्राणदृष्टिः, स्वात्मादौ गरुडदृष्टिरित्येवं दृष्टिषु तत्तदसाधारणप्रसिद्धाकारमुखेनैव दृष्टिर्युक्ता। अतः प्राणत्वगरुडत्वादिवत् ब्रह्मत्वरूपधर्ममुखेनैवात्र दृष्टिः; नान्यथा; विशिष्य, 'हिरण्मयः पुरुषो दृश्यते' इति रीत्या विशेषोपादाने तथा निर्दिष्टनियतलक्षणमुखेन दृष्टिः। न त्वनुपात्तस्वान्तरात्मत्व-जीवान्तरात्मत्वादिग्रहणं प्रामाणिकमिति॥ ४४९॥

१९. ननु दृष्टिरूपज्ञानस्यापि फलसाधनत्वे, यथार्थायथार्थोभयसाधारण्येन ज्ञानस्यैव फलहेतु-

---

चि. टी. ४४९. ब्रह्मलक्षणैरिति। रत्नप्रभोक्तार्थपरत्वमस्य वाक्यस्य वक्तव्यम्।

अत्र मृषावादी मन्यते—'यथा दृष्टिविधौ स्वाभिमतं फलं दृश्यते, एवं ब्रह्मैक्यानुसन्धानमिच्छता-मस्माकमपवर्गः स्यात्' इति। तदिदमाशङ्क्य प्रतिक्षिपति—आत्मनीत्यादिना। अयमर्थः—अब्रह्मभूतेऽप्यात्मनि ब्रह्मदृष्टिः फलवती भवतु नाम; तथापि वस्तुव्यवस्था नापलपितुं शक्यते। यथा, 'गरुडमात्मानं जानीयात्' इत्यत्र न गरुडत्वं प्राप्यते; अपि त्वपर्यनुयोज्यत्वात् विधिशक्तेर्गरुडानुध्यानेन सर्पादिविषनिवृत्तिः सेत्स्यतीत्येतावन्मात्रमेव। एतद्दृष्टान्तमात्रदर्शनेन मोहात्, 'ब्रह्माहमस्मि' इतीममर्थं स्वरूपैक्यावलम्बनेन परमार्थत्वेन स्थापयन् मृषावादी नमुचिसूदनभावनोद्धतनहुषन्यायेन प्रभ्रष्टपदो निकृष्टावस्थां नियतमेव भजत इत्याह—एतावन्मात्रेति। अपवर्गार्थं प्रवृत्तः कुटिलगतीनां भोगिनां साम्यं भजतीति पारिहासिकोऽयं प्र[कृष्टो?]वादः॥ ४५०॥ इति प्रतीकाधिकरणम् ॥१२६॥

## १२७ ॥ अथ आदित्यादिमत्यधिकरणम् ॥ ४-१-४ ॥

सूत्रम्—आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ४७५ ॥

(४५१) तादर्थ्यात् देवतानां फलकरणतया कर्मणश्चोदितत्वात्
आदित्यादौ निकृष्टात्मनि भवतु समुत्कृष्टकर्माङ्गदृष्टिः ।

---

त्वावसायात्, भवद्भिरेव भूमविद्यायां, 'प्राणं ब्रह्मेत्युपास्ते' इति जीवात्मनि ब्रह्मदृष्टेरपि यत्किञ्चित्फलसाधनत्वस्य। 'विशेषञ्च दर्शयति' इति सूत्रे भाषितत्वात् तत्त्वमसीत्यादावपि साक्षाज्जीवब्रह्माभेदज्ञानस्य फलकारणत्वं स्यादिति शंकां परिहरति आत्मनीति। अत्र विकल्पनीयम्—किं दृष्टिविधाविव जीवे ब्रह्मभेदज्ञाने सत्येव ब्रह्मत्वदृष्टिस्तत्त्वमस्यर्थः, उत बाधज्ञानासमानकालिकं जीवब्रह्मैक्यज्ञानम्। नाद्यः; भूमविद्यादौ अब्रह्मत्वनिश्चये सत्येव जीवात्मनि तद्दृष्टिः फलवती वचनबलादिष्टा। तच्च फलं क्षुद्रम्। तथोपासनविधानबलसिद्धा दृष्टिः वस्तुनोः जीवपरयोः व्यवस्थां भेदं न शिथिलयति। न हि गरुडत्वदृष्टिमात्रेण गरुडाभेदसिद्धिः। अस्तु भेदः; अथापि तत्रैव जीवब्रह्मैक्यज्ञानादत्रापि फलं स्यादिति तु मोह एव। अतत्त्वज्ञानस्याऽऽहार्यस्य भ्रान्तिरूपस्य वा तत्त्वज्ञानमात्राधीनमोक्षहेतुत्वायोगात्। तत्त्वमस्यादौ च मोक्षस्यैव प्रस्तावात्। एवमपि यथार्थायथार्थसाधारण्येन ज्ञानं फलहेतुरिति मोहात् नाहं ब्रह्मेति बाधज्ञानमप्यलब्ध्वा इदं ब्रह्माहमिति भ्रान्तिज्ञानादपि फलं भवतीति यः प्रत्यवतिष्ठते, सः क्षिप्रं फलं प्राप्नोत्येव। कीदृशम्? यादृशं नहुषस्येत्याह इन्द्रत्वेति। न हि कश्चित् कालमिन्द्रस्थाने स्थितिकल्पनमात्रेणेन्द्र इन्द्राणीपतिश्च भवितुमर्हति। महतो भोगस्य भागिनः इति ज्ञान-तन्मूलानन्दकारितदर्पाधीनादौद्धत्यात् इन्द्राण्याक्रमणप्रवृत्त्यादिरूपात् महाभोगितामेव प्रापितो महर्षिभिः। महाभोगी महासर्पः। तत्संस्थानरूपदुरवस्थैव नहुषस्य। तस्मिन् नहुषभोगिनि स्थिता याऽवस्था तादृशीमेव जीवब्रह्मैक्योपासकः ऋच्छेत् प्राप्नुयात्। न हि सर्वाऽपि दृष्टिः सत्फलजनिका। किं तु शास्त्रानुमतैव तथा। न च मोक्षहेतूपासनावसरे दृष्टेरवकाशः। सर्वस्य ज्ञानस्य सत्फलजनकत्वे नहुषकृतेन्द्रत्वभ्रान्तेरपि समीचीनमेव फलं स्थितं स्यात्। अतो न भ्रान्तेः फलहेतुत्वम्, न वाऽन्यस्याप्यारोपस्य मोक्षहेतुत्वमिति। दृष्टिरूपारोपस्य इन्द्रत्वारोपस्य च भेदं गृहीत्वा तदनुगुणं पूर्णश्लोकार्थवर्णनं कार्यम् ॥ ४५० ॥

मैवम्; कर्म प्रधानं विहितमपि यतस्तत्समाराधनं; तत्
तत्प्रीता देवतैव प्रदिशति फलमित्यर्थतः सा प्रधानम् ॥ २० ॥

पूर्वाधिकरणे खल्वपकृष्टे उत्कृष्टदृष्टिर्न्याय्येत्युक्तम्। तर्हि फलसाधनतयोत्कृष्टयोर्द्गीथादेरादित्यादौ दृष्टिः कर्तव्येति शङ्कया सङ्गतिः। तदर्थविचारस्तु— कर्माङ्गाश्रयोपासनेषु किमादित्यादौ उद्गीथादिदृष्टिः, उतोद्गीथादावादित्यदृष्टिः। फलसाधनत्वयोत्कर्षः किमादित्यादेः, उतोद्गीथादेरिति। अत्र पूर्वपक्षी प्राह—तादर्थ्यादिति। देवतानां कर्मशेषत्वात् कर्मणश्च फलसाधनत्वेन चोदितत्वान्निकृष्टात्मनि आदित्यादौ फलसाधनत्वेनोत्कृष्टकर्माङ्गदृष्टिरित्यर्थः। अनूदितमर्थं निराकरोति— मैवमिति। प्रतिक्षेपप्रकारं विवृणोति— कर्मेति। अयमर्थः— यद्यपि कर्म प्रधानतया विहितमेव। तेन शाब्दप्राधान्यं कर्मण्येव वर्तते, तथाप्यार्थप्राधान्यं देवतानामेवेति। तत्र हेतुमाह—यतस्तत्समाराधनं तदिति। 'यज देवपूजायाम्' इत्यादिषु सर्वत्र कर्म देवतासमाराधनरूपत्वात् देवतां प्रत्यप्रधानमेव, अत्रापि तद्वदेव प्रधानभूतादित्यादीन् प्रति यज्ञाङ्गदृष्टेरप्रधानत्वादप्रधानेषूद्गीथादिषूत्कृष्टरूपादित्यादिदृष्टिर्न्याय्येति। देवतायाः प्राधान्यमेवोपपादयति— तत्प्रीतेति। सर्वमप्यनुष्ठानं फलार्थमेव। कर्मभिराराधिता देवतैव फलं ददाति। अतो देवतैव प्रधानम्। तस्मात् देवतादृष्टिरेवान्यत्र कार्या॥

(४५२) अन्यस्मिन्नन्यदृष्टेर्विधिरिह घटतामन्यथारूयातिपक्षे
याथार्थ्यं सर्वबोधानुगतमिति मते युज्यते नान्यदृष्टिः।
तत्राऽऽद्ये हि न स्यात् विमतिः, अविमता भ्रान्तिनीतिः परस्मिन्
तद्धर्मभेदाग्रहोपप्लुतमतियुगलस्थापनायां नियोगात् ॥ २१ ॥

अत्र कश्चिच्चोदयति—अन्यस्मिन्निति। युष्माकं सिद्धान्ते भ्रान्तिरस्तीति केषाञ्चिन्मर्यादा।

---

२०. निकृष्टे उत्कृष्टदृष्टिः कार्येति मनआदौ ब्रह्मदृष्टिरित्युक्तम्। संप्रति उद्गीथादिरूप-कर्माङ्ग-आदित्यादिदेवतोभयविषयकोपासने कुत्र किंदृष्टिरित्यस्य निर्णयाय किं कर्माङ्गमुत्कृष्टं किं वा देवतोत्कृष्टेति विचार्यते। कर्माङ्गस्यैवोत्कर्षं शंकते तादर्थ्यादिति। यागस्य द्वे रूपे इति द्रव्यवत् देवतायाः कर्मापेक्षया प्राधान्यस्य दुर्वचत्वात्, कर्मण एव स्वर्गादिफलसाधनतया चोदितत्वात् विहितत्वात् तदङ्गोद्गीथादेरपि तद्द्वारा फलसाधनत्वावगमात् आदित्यदेवस्य प्रधानम्, फलसाधनोपासनान्विततया प्रधानफलसाधनान्वितोद्गीथाद्यपेक्षया निकृष्टत्वात्, निकृष्टे तत्राऽऽदित्यादावेव कर्माङ्गोद्गीथादिदृष्टिः कार्या। एवं पूर्वपक्षं निरस्यति मैवमिति। यतः=यस्मात् फलसाधनत्वेन प्रधानतया विहितमपि कर्म तत्समाराधनम्—देवताप्रीणनार्थम्, तत् तस्मात् तेन कर्मणा प्रीता देवतैव साक्षात् फलं ददातीति फलसाधनदेवताप्रसादहेतुकर्माङ्गोद्गीथापेक्षया फलसाधनत्वसाक्षादाश्रयभूतदेवताया एव प्राधान्यम् उत्कर्ष इति देवतायामेवोद्गीथादिदृष्टिः कार्या। आदित्यस्य प्रकृतकर्माराध्यत्वाभावेऽपि आराध्यवर्गनिविष्टत्वादेवाऽऽराधनवर्गनिविष्टापेक्षया प्राधान्यमिति ध्येयम्। अर्थतः सा प्रधानमिति। देवतोद्देश्यकद्रव्यत्यागरूपयागे विशेष्यो यागः, विशेषणकोटिनिविष्टा देवतेति शाब्दप्राधान्यं यागस्यैव। राजपुरुष इत्यत्र राज्ञ इवाऽऽर्थप्राधान्यं देवताया इत्यर्थः॥ ४५१॥

२१. ननु दृष्ट्युपासनम्, यथावस्थितोपासनमिति द्वैविध्यं युष्मन्मते दुर्वचमिति परशंकामनूद्य

भेदाग्रहमात्रमेव ग्रहणस्मरणयोरस्ति; न भ्रान्तिरस्तीत्यपरेषां मर्यादा। यथार्थख्यातिवादिनश्च यूयम्। तथाच सति भ्रान्त्यभावं वदतां भावत्कानां कथं दृष्टिविध्यङ्गीकारः; अन्यत्रान्यदृष्टेर्भ्रान्तिरूपत्वादिति। अयमत्र शब्दान्वयः—अन्यथाख्यातिपक्षाङ्गीकारे तावत् अन्यस्मिन्नन्यदृष्टिर्विधिर्घटतामेव। 'यथार्थं सर्वविज्ञानमिति वेदविदां मतम्' इत्यस्मिन् पक्षे नान्यदृष्टिर्युज्यते, न दृष्टिविधिर्युज्यत इत्यर्थः। तदेतत् प्रतिक्षिपति—तत्रेति। प्रतिक्षेपप्रकारं विभज्य दर्शयति—आद्य इति। अन्यथाख्यातिपक्षे न विप्रतिपत्तिः स्यात्; त्वयैव तस्मिन् पक्षे दृष्टिविधेर्युक्तत्वाङ्गीकारात्। अन्यथाख्यात्यनङ्गीकारेण यथार्थख्यातिपक्षेऽपि निर्वाहोऽस्तीत्याह—अभि(वि)मतेति। अयमर्थः—ये हि यथार्थख्यातिवादिनः, तेषामपि लोकदृष्टाया भ्रान्तबुद्धेः केनापि प्रकारेण निर्वाहः कार्यः, स निर्वाहोऽत्रापि दृष्टिविधौ वाच्य इति। अत्र निर्वाहप्रकारं दर्शयति—तादृगिति। अयं भावः—शुक्तिः(क्तौ इदं?) रजतमित्यादौ शुक्तिरजतयोस्तादात्म्यग्रहं वदन्त्यन्यथाख्यातिवादिनः। अख्यातिवादिनस्तु प्राभाकराः शुक्ति-

---

परिहरति अन्यस्मिन् इति। अन्यस्मिन् मनआदौ अन्यस्य—ब्रह्मादेः दृष्टेः, 'मनो ब्रह्मेत्युपासीत' इत्यादौ विधिः, सः अन्यथाख्यातिवादिनां तार्किकाणां पक्षे घटताम् संगच्छताम्। प्राभाकरस्य सिद्धान्तिनश्चेष्टे, याथार्थ्यं यथार्थत्वं सर्वबोधानुगतम्—सर्वज्ञानसाधारणम्, ज्ञानसामान्यस्य सर्वांशेऽपि याथार्थ्यमेवेति, "यथार्थं सर्वविज्ञानम्" इत्युक्ते मते अन्यदृष्टिः एकविशेष्यकतदन्यभेदज्ञानं न युज्यते, बोधस्य विशेष्यावृत्तिप्रकारकतया याथार्थ्यभंगादिति शंका। निरस्यति तत्रेति। आद्ये हि न स्यात् विमतिरिति। प्रथमे अन्यथाख्यातिपक्षे हि नानुपपत्तिरित्यर्थः। नन्विदं पूर्वपक्षिणैवोक्तम्। तत् किमर्थमुच्यते। उच्यते। अन्यथाख्यातिवादी तार्किक एव; न तु सिद्धान्तीत्याशयेन तेनोक्तम्। अत्र तु, सिद्धान्तिन एव केचित्, 'स्वारस्यमन्यथाख्यातौ अख्यातौ लाघवं स्मृतम्' इति घोषयन्तः अख्यातिपक्षस्य लोकबुद्धौ दुरारोहतामभिमन्यमानाः भगवन्नाथमुन्यभिहितः अख्यातिपक्षः प्रौढिवाद इत्याशयानाः भाष्यमपि तत्र प्रमाणयन्तः सिद्धान्तेऽप्यन्यथाख्यातिं रोचयन्ते। तथाच सिद्धान्त्येकदेशिपक्षे नानुपपत्तिरित्यर्थः। अस्त्वेकदेशिपक्षे। भूम्ना तु अशेषज्ञानयाथार्थ्यस्येष्टत्वात् तत्र कथं निर्वाह इत्यत्राह अभिमतेति। परस्मिन् सर्वयाथार्थ्यपक्षे भ्रान्तौ या नीतिः, सा अत्रापि दृष्टौ अभिमतेत्यर्थः। भ्रान्तिर्नाम केत्यत्र हैवमुच्यते—शुक्तौ इदं रजतमिति यत् ज्ञानम्, तत् शुक्तिरूपधर्मिमात्रदर्शनरजतस्मरणोभयमेव। तर्हि आपणस्थपूर्वानुभूतरजतस्मरणे शुक्तौ कथं रजतोपादानार्थप्रवृत्तिरिति चेत्, पुरोवस्थितव्यक्तौ शुक्तौ रजतभेदाग्रहात्। अन्यथाख्यातिवादिनाऽपि इदं सर्वं तद्भ्रान्तिकारणतया स्वीकर्तव्यम्। ततः प्रवृत्तिः। तदपेक्षया, तद्रूपात्मकसामग्रीतः साक्षादेव, भ्रान्तिं विनैव, प्रवृत्तिर्जायतामिति लाघवमिति शुक्तिरजतभेदाग्रहविशिष्टं धर्मिदर्शनं रजतस्मरणञ्चैव भ्रान्तिस्थले स्वीकृतम्। तथाऽत्राप्यन्यदृष्टौ मनोब्रह्मोभयभेदाग्रहविशिष्टमनोज्ञानब्रह्मज्ञानद्वयमेव दृष्टिरूपोपासनमित्युच्यते इति। तदाह तादृग्भेदेति। भेदाग्रहोपप्लुतत्वं तद्विशिष्टत्वं तेन विपरीतज्ञानतया कल्प्यमानत्वं—ज्ञाने अस्थानप्रवृत्तिहेतुत्वापादकत्वं वा। मतियुगलम्—मनोमननं ब्रह्ममननञ्च। तत्स्थापनायां दृष्टिकरणप्रवृत्तेनेदं स्थापनीयमिति नियोगो दृष्टिविधिवाक्यकृत इति।

रजतयोस्तादात्म्याग्रहं शुक्तिरजतत्वयोरसंसर्गाग्रहं शुक्तिग्रहणरजतस्मरणयोर्भेदाग्रहञ्च भ्रान्ति-स्थानीयं वदन्ति । 'यथार्थं सर्वविज्ञानम्' इति वादिनस्तु शुक्तिरजतयोर्द्वयोरपि सद्भावं पञ्चीकरण-न्यायेन पुरोवर्तिनि वस्तुनि वदन्ति । तत्र शुक्तिभूयस्त्वाग्रहणसहकृतरजतग्रहणं वदन्ति । तेनात्र प्रवृत्तिर्बाध्यते ; सामानाधिकरण्याभावात् । गृह्यमाणस्मर्यमाणवस्तुद्वयभेदाग्रहोपप्लुतगरुडस्वात्म-विषयमतियुगलस्यापन्नायां नियोगात् = विधानादित्यर्थः। अयमत्र निर्णयः—भ्रान्तिर्यद्यस्ति, तदा दृष्टिविधेरनुपपत्तिः ; यदि नास्ति, तदापि भेदाग्रहसहकृतज्ञानद्वयाङ्गीकारेण प्राभाकरमतस्याना-मिवास्माकमपि दृष्टिविधिविधानस्याविरोध इति ॥ ४५२ ॥

(४५३) दृष्टव्यापह्नवे न(वेन) भ्रमदनुघटि(विहि)ता दृष्टिरद्वैतमोहः
स्यादुत्कृष्टापराधस्तत इह विहिता तादृशत्वस्य दृष्टिः ।
तादृग्दृष्टौ न दोषस्तत इति कतिचित् तास्यंदृष्ट्यादिनीत्या
दृष्टाऽन्यत्रान्यदृष्टिर्न किमनधिगता व्यक्तितो जातितश्च ॥ २२ ॥

अत्र दृष्टिविधौ परोक्तप्रकारं दूषयित्वा स्वाभिमतं प्रकारद्वयेन निगमयति—दृष्टव्येति ।

---

नन्विदमयुक्तम् ; भ्रान्तिस्थले तत्त्वज्ञयान्तर्गते चेतने अचेतने च इदं ब्रह्मेति ग्रहणकाले चेतनाचेतनयो-र्ब्रह्मणश्च यो वस्तुगत्या भेदः स्थितः, स न गृह्यत इति सुवचो भेदाग्रहः । आहार्यारोपात्मकदृष्टिस्थले, मनो न ब्रह्मेति बाधज्ञानमप्यस्ति । बाधकालीनेच्छाजनितज्ञानं हि आहार्यारोपः । एवञ्च भेदाग्रह-संवलितमतियुगलमत्र कथम् । तथाचान्यथाख्यातिपक्षोपेक्षणे आहार्यज्ञानं दुर्वचमेवेति चेत्—उच्यते । अख्यातिपक्षे शुक्तिग्रहः रजतस्मरणं शुक्तौ रजतभेदग्रहश्च यथा तत्त्वग्रहे आहार्यारोपाभावकाले, तथा तदारोपकालेऽपीत्युक्तौ मिथो वैलक्षण्यस्यानुक्ततया तदर्थं शुक्तिग्रहस्य रजतस्मरणस्य च (न तु शुक्तिरजतयोः) वस्तुतो यो भेदः तद्ग्रहोऽपि आरोपस्थलेऽस्ति, तत्त्वज्ञेन तु तयोर्ग्रहणयोर्भेदोऽपि गृह्यत इति विशेष इति वक्तव्यम् । यद्यपि परीक्षकेण परीक्षावसरे दृष्टिस्थलीयं ज्ञानमुभयात्मकमिति भेदो गृह्यते, तथापि दृष्ट्यनुष्ठानकाले मनोब्रह्मोभयमात्रावधानवता, जातं ज्ञानं किंरूपमित्यादिशोधनाप्रवृत्तेन समाधितुल्य-ज्ञानवता मनोज्ञानब्रह्मज्ञानयोरुत्पादनेऽपि तयोर्भेदग्रहो नोत्पाद्यते । तदुत्पादने विषयान्तरधावनात् चित्तस्थैर्यभङ्गात् । अतः मनोब्रह्मणोर्मिथोभेदग्रहणेऽपि तत्तज्ज्ञानयोः स्वयंप्रकाशत्वेऽपि तयोर्ज्ञानयोर्भेदांशो न गृह्यत इति तदेवोक्तं तादृग्भेदाग्रहेति । तादृगित्यस्य मनोज्ञानब्रह्मज्ञानरूपज्ञानद्वयगतेत्यर्थः ; भेदे अन्वयः । यद्वा सामग्र्यतिरिक्तस्यारोपस्यास्वीकारात् सत्यपि बाधज्ञाने मनो ब्रह्मेति व्यवहारो जायता मिच्छाया अपि तदा वर्तमानत्वात्, अहार्यज्ञानाभावस्थले तादृशेच्छाविरहात् तद्वैलक्षण्यं ज्ञापयितुं तादृगिति मतियुगलविशेषणम् । तादृशेच्छाविशिष्टं ज्ञानद्वयभेदाग्रहविशिष्टञ्च यत् मतियुगलं मनोमति-ब्रह्ममतिरूपमिति। यद्वा तादृशेच्छाविरहविशिष्टो यो भेदग्रहः तदभावविशिष्टज्ञानद्वयमारोपः। तत्त्वज्ञानकाले भेदग्रह एव । आहार्यज्ञानकाले भेदग्रहसत्त्वेऽपि इच्छासत्त्वात् इच्छाविरहरूपविशेषणाभावात् विशिष्टा-भावः । भ्रान्तिरूपारोपस्थले च भेदग्रहरूपविशेष्याभावात् विशिष्टाभाव इति । तदेवान्यदृष्टिशब्दार्थः इति नान्यथाख्यात्यपेक्षेति भावः ॥ ४५२ ॥

२२. दृष्टिविषये कतिपयोक्तं शोधयति श्लोकद्वयेन दृष्टव्येति । अत्र ब्रह्माहमस्मीति वाक्यं

अत्र केचिदाहुः—'चोरः स्थाणुः' इत्यत्र यथा चोरत्वं बाध्यते सामानाधिकरण्येन, तच्च मिथ्या—एवं ब्रह्माहमित्यत्रापि इति। द्रष्टव्यापह्नव इति। द्वितयमिह द्रष्टव्यं जीवो ब्रह्म च। जीवापह्नवे दोषमाह—मेति। भ्रमता जीवेन संघटिता दृष्टिरेव न स्यात्। ब्रह्मापह्नवेऽपि दोषमाह—अद्वैतमोह इति। अत्राद्वैतशब्देन ब्रह्माभिधीयते। मोहशब्देन ब्रह्मविषयिणी दृष्टिः। अत्र द्रष्टव्यापह्नवोक्तौ द्रष्टव्यस्य ब्रह्मण एवापह्नव उक्तः स्यात्। स तु उत्कृष्टस्य ब्रह्मणोऽपराध एव। अथवोत्कृष्ट एवापराधः स्यादिति सामानाधिकरण्यम्। ब्रह्मणो मिथ्यात्वापराधादन्यः कोऽयमुत्कृष्टोऽपराधः। न कोऽपीत्यर्थः। तेन, 'ब्रह्माहमस्मि' इत्यादिषु विहिता ब्रह्मसमानत्वबुद्धिरित्याह—तत इति। अस्मिन् पक्षे पूर्वप्रोक्तो दोषो नास्तीति केचिन्मन्यन्ते; तदिदमाह—कतिचिदिति। अत्रान्यत्रान्यदृष्टिं पक्षान्तरेण द्वेधा दर्शयति—द्वेधेति। 'गरुडमात्मानं जानीयात्' इत्यादौ द्वेधा दृष्टिर्न किमनधिगता। अधिगतेत्यर्थः। द्वैविध्यमेव

---

गृहीत्वा विचारं कुर्वन् चिन्तामणिः—**द्रष्टव्यापह्नवे** इति सप्तम्यन्तं पूर्वपक्षानुवादकम्, जीवापह्नवो वा ब्रह्मापह्नवो वेति विकल्प्य **न भ्रमदनुविहिता दृष्टिरिति** वाक्येन, **अद्वैतमोहः स्यादुत्कृष्टापराधश्च** इति वाक्येन च क्रमेण तयोर्निरसनम्; एवं निरस्य कैश्चिदुक्तस्य सादृश्यदृष्टिरिति पक्षस्योपयुक्तिः; अन्ते स्वपक्षस्य च—इत्याह। जीवापह्नवे, भ्रमतो जीवस्यैवाभावात् केन दृष्टिः क्रियेतेति प्रथमविकल्पखण्डनम्; ब्रह्मापह्नवपक्षे, ब्रह्म पह्नवरूपो ब्रह्मदृष्टिरूपाद्वैतमोहोऽयमुत्कृष्टोपराध इति निरसनवाक्यार्थ उक्तः। एवमद्वैतपक्षं दूषयित्वा तादृशत्वदृष्टिर्नूनं द्वैतीष्टेति वक्तव्यम्। वस्तुतः क्लिष्टयोजनां विहाय ब्रह्मतदितरसाधारण्येन दृष्टिविधिशोधनमेव कैश्चित् कृतमनुवदतीति युक्तम्। **द्रष्टव्यापह्नवेनेति** तृतीयान्तत्वं स्वरसम्। मनो ब्रह्मेत्युपासीतेति प्रतीकोपासनं दृष्टिः। तत्र मनसो ब्रह्मत्वाभावात् भूतार्थविषयकत्वं नास्ति। किंतु दृष्टिः। तत्र यथा अहं ब्रह्मास्मि, सर्वं ब्रह्मेत्यादौ अहमर्थस्य, सर्वस्य चापह्नवेन ब्रह्ममात्रपरिशेषः। यथा च चोर इति भ्रान्तं प्रति चोरः स्थाणुरित्युपदेशे स्थाणुदृष्टिश्चोरापह्नवेन—तथा मनआद्यपह्नव इति वादो दूष्यते। चोर इति भ्रान्तमनुसृत्य घटिता भ्रान्तपुरुषगतचोरापह्नवरूपदृष्टिवद्बुद्ध्या मनआद्यपह्नवरूपब्रह्मदृष्टिरिति पक्षः **अद्वैतमोहः** अद्वैतमताभिमानमूलः, अद्वैत्यभिमतवर्णनस्यास्थाने आनयनरूपः। तत्र हेतुमाह **स्यादुत्कृष्टापराधस्तत** इति। द्रष्टव्यापह्नव इत्युक्तौ प्रतीकस्याश्रयस्यैवोच्छेदात् कुत्र दृष्टिः। तदयं महान् अपराधः। तदुक्तं **शांकरे** प्रतीकाधिकरणे, "स्वरूपोपमर्दे च नामादीनां कुतः प्रतीकत्वमात्मग्रहो वा" इति, ब्रह्मदृष्टिसूत्रे च, "ननु प्रकृतिविकारभावात् ब्रह्मादित्यादीनां मृच्छरावादिवत् सामानाधिकरण्यं स्यात्। नेत्युच्यते। विकारप्रविलयो ह्येवं प्रकृतिसामानाधिकरण्यात् स्यात्। ततश्च प्रतीकाभावप्रसंगमवोचाम। परमात्मवाक्यं चेदं स्यात्। ततश्चोपासनाधिकारो बाध्येत। परिमितविकारोपादानं च व्यर्थम्" इति। अतः प्रतीकापह्नवेन वाक्यार्थवर्णनमयुक्तम्। का तर्हि दृष्टिरित्यत्र यत् कतिचिदाहुः तदाह तत इति। लोकेषु पञ्चविधं सामोपासीतेत्यादौ पञ्चविधत्वादिसादृश्यमूलकसामदृष्टिविधानात् तादृशत्वज्ञानमेव दृष्टिः। एवं तादृगिति दृष्टौ च न प्रतीकविलयादिरूपदोषः। **ततः**=तस्मात् कारणात् **कतिचित् इति**=एवं प्रकारेण दृष्टिमाहुरिति शेषः। स्वपक्षमाह **तार्क्ष्येति**। गरुडमात्मानं जानीयादित्यादौ विषबाधकस्य गरुडस्य विषबाधितस्य स्वस्य च सादृश्यज्ञानाभावेऽपि दृष्टिर्विहिता। तस्मात् तद्रीत्या आरोपात्मिकैवान्यत्रान्यदृष्टिः। सा

दर्शयति—व्यक्तितो जातितश्चेति। गरुड एवाहमिति यदि प्रतिपद्येत, तदा व्यक्तितः; यदि च गरुड-जातीयोऽहमिति प्रतिपद्येत, तदा जातितः; तेन द्वावप्येतौ पक्षावङ्गीकार्यौ। चकारात् समनन्तरोक्त-सादृश्यप्रतिपत्तिरप्यङ्गीक्रियते। प्रागुक्तस्तु पक्षः प्रमाणविरुद्धत्वान्नाङ्गीकार्य इत्यर्थः ॥४५३॥

(४५४) मुख्यं ब्रह्मैकमेवेत्यवहितमनसां ब्रह्मदृष्टिः कथं स्यात्
एकत्वेनेति केचिन्नहि बलिनि विधौ शङ्कनीयो विरोधः(योऽपराधः)।
स्वेच्छापूर्वद्विचन्द्रभ्रमवदिह भिदाकल्पनामाहुरन्ये
बम्भ्रम्यन्ते यथा च श्रुतिषु बहुविधं ब्रह्म भातीति बालाः ॥ २३ ॥

इति आदित्यादिमत्यधिकरणम् ॥ १२७ ॥

अत्र ब्रह्मैकमेवेति यथावस्थितप्रतिपत्तिमताम् इतरत्र ब्रह्मदृष्टिः कथं स्यादित्यनुयोगे सति परेषां पक्षेण प्रतिवचनमाह-मुख्यमित्यादिना। अयमत्र शब्दान्वयः-मुख्यं ब्रह्मैकमेवेत्यवहितमनसामितरत्र ब्रह्मदृष्टिः कथं स्यादित्यनुयोगः। अत्र भास्करमतानुसारिणः केचित् प्राहुः—एकत्वेनेति। भोक्तृ-भोग्यादिभावेन विभक्तं सकलं एकत्वात् ब्रह्मैव। अतो ब्रह्मदृष्टिः कर्तुं शक्यत इति। विरुद्धत्वात् कथ-मिदं वक्तुं शक्यत इत्याशङ्क्याह—बलिनीति। विधिर्हि सर्वप्रमाणानां बलवत्तरः। तेन, 'मनो ब्रह्मे-त्युपासीत', 'नाम ब्रह्मेत्युपासीत' इति विधिबलात् ब्रह्मणैकत्वमेव सर्वात्मना संग्राह्यम्। न हि श्रुति-प्रतिपन्नेऽर्थे कश्चिदपराधो(दपि विरोधो) दोषः शङ्कनीय इति केषाञ्चित् परेषां पक्षः। अन्ये त्वाहुः-

---

द्वेधा। नित्यसूरिवैनतेयग्रहणे तद्व्यक्त्यारोपः। प्राकृतगरुडग्रहणे तेषां नानात्वात् गरुडजातीयारोपः। सस्यातज्जातीयत्वात्। एवञ्च मनो ब्रह्मेत्यादौ न मनसोऽपह्नवः, केवलं ब्रह्मव्यक्त्यारोपः। सामोपासीतेत्यादौ सामजातीयारोपः। यत् अन्यत् द्वैविध्यमन्यत्रोच्यते, उपासनमध्यासरूपं संपद्रूपञ्च। तत्राध्यास इयं दृष्टिः उद्गीथे असुरविध्वंसनादिधर्मारोपः इह। सादृश्यानुसंधानं संपत्। यथा पञ्चविधत्वाद्यनुसंधानमिति—तत्रापि सादृश्यमूलकारोपविवक्षायां दृष्टिरेव अतो व्यक्तितो जातितश्चेति द्वैविध्यं ग्राह्यमिति एतच्छ्लोकार्थः ॥४५३

२३. 'अयमपि श्लोकः परपक्षानुवादमात्रम्; तत्र प्रथमपादेन पूर्वपक्षः, द्वितीयेनोत्तरं भास्करानुयायिकृतम्। उत्तरार्धेनान्यकृतमुच्यते' इति चिन्तामणिः। तत्र ब्रह्मण एकत्वात् कथं दृष्टिरिति प्रश्ने एकत्वादुपपद्यते इति प्रत्युत्तरं कथं घटते। तदुपपादनञ्च न हीत्यादिना कथम्? अतोऽ-न्यथाऽर्थो वर्ण्यते—सिद्धान्तमासाकमवलम्ब्य केचिच्छंकन्ते; तदाह मुख्यमिति। 'चिदचिद्विशिष्टं ब्रह्मैकमेव कार्यसामान्यं कारणञ्च; ब्रह्मैव सर्वशब्दमुख्यार्थः' इति वेदान्तार्थे सावधानमनसां यागाद्यनुष्ठायिनां मनो ब्रह्मेत्युपासीतेत्यादौ कथं ब्रह्मदृष्टिः। असंभवे हेतुरुच्यते एकत्वेनेति। दृष्टिर्हि अन्यस्मिन्नपरस्य। सर्वस्यैकत्वे च कथमन्यारोप इति केचित्स्वपक्षे दृष्ट्यसंभवं शंकन्ते। तत्र प्रत्युत्तरम्—नहीत्यादि। दृष्टिविधौ बलवति वर्तमाने विरोधो न शंक्यः। यदा इतिशब्दघटितवाक्येन दृष्टिरारोपात्मिका विधीयत इति ज्ञातम्, तदैव मनआदिशब्दानामनियतनिष्कर्षकशब्दत्वात् मनआदिविशेषणमात्रे यथालोकं प्रयोग इति स्वीकारात् विशेषणे चान्यत्वसत्त्वादुपपत्तेः। एवं मुनिर्वदेऽत्रान्ये प्रत्युत्तरयितारो यत् वदन्ति— यथा स्वेच्छया अंगुल्यवष्टम्भेन चन्द्रद्वित्वादिसंपादनम्, तथा ब्रह्मणि भेदस्य कल्पनेति ॥ यथा बालाः=

अङ्गुल्युपष्टम्भादिभिरुन्द्रैकत्वेऽपि क्षित्यादि रविकल्पनवत् ब्रह्मैकत्वे परिज्ञातेऽपि ब्रह्मनानात्वं परिकल्प्यते । अमुष्यार्थस्य लोकदृष्टप्रक्रियया दृष्टान्तमाह-बम्भ्रम्यन्त इति । तत्त्वतो ब्रह्मण एकत्वेऽपि बालाः—बालप्रायाः श्रुतिस्मृत्यादिष्वापाततः प्रतीत्या शिमूर्त्यादिषु तत्तत्र नानात्वेन ब्रह्मभावं प्रतिपद्यन्ते ॥ एतत् सर्वं परपक्षानुवादमात्रमेव तत्त्वतस्तु तत्तत्र नामादिषु ब्रह्मसदृशत्वं तज्जातीयत्वं तदेकत्वं वा दृष्टिमात्रेण परिकल्प्यत इति दृष्टिविधिप्रक्रिया इदमेव लौकिकवैदिकसकलोदाहरणाविरुद्धत्वादित्यमेव स्वीकार्यम् ॥ ४५४ ॥ इति आदित्यादिमत्यधिकरणम् ॥ १२७ ॥

## १२८ ॥ अथ आसीनाधिकरणम् ॥ ४-१-५ ॥

सूत्रम्—आसीनः सम्भवात् ॥ ध्यानाच्च ॥ अचलत्वञ्चापेक्ष्य ॥ स्मरन्ति च ॥ यत्रैकाग्रता तत्राविशेषात् ॥ ७—११ ॥

(४५५) आसीनस्यैव योगः श्रुतिषु न ददृशे, ध्यानमाहुस्तदेति
न्यासश्चेलाजिनादेर्नियमविधिकृतः(तिः) पाक्षिकासीनतायाम् ।
तस्मादेतत् घटेत स्थितिगतिशयनेष्वप्रकम्प्येन्द्रियस्ये-
त्यप्राप्तं यत्ननिद्रान्वयिनि कथमविच्छिन्नधीसन्ततिः स्यात् ॥ २४ ॥

अत्र सङ्गतिमप्याह एवं सुव्यक्ता—'मोक्षसाधनतया वेदान्तशास्त्रैर्विहितं ज्ञानं ध्यानोपासनादिशब्दवाच्यमसकृदावृत्तं सन्ततस्मृतिरूपमित्युक्तम् । तदनुतिष्ठन् आसीनः शयानस्तिष्ठन् गच्छंश्च विशेषाभावादनियमेनानुतिष्ठेत्' इति शङ्कया सङ्गतिः। समनन्तराधिकरणयोः प्रासङ्गिकत्वात् प्रधानसङ्गतिरेव वाच्येत्यर्थः । तदर्थविचारस्तु—किमासीनश्चिन्तयेत्, उतासीनश्शयानस्तिष्ठन् गच्छन् वेति । किं गमनादिषु ध्यानं सम्भवति, नेति । अत्र पूर्वपक्षमाह—आसीनस्येति । अयमत्र शब्दार्थः—आसीनस्यैव योग इति श्रुतिवाक्यं तावन्नास्ति । नापि श्रुत्यर्थापत्तिः काचित् । 'स खल्वेवं वर्तयन् यावदायुषम्', 'तद्रूपप्रत्यये चैका सन्ततिश्चान्यनिःस्पृहा' इत्यादिभिः सदात्वमपि प्रतिपद्यामहे ध्यानस्य । ननु चेलाजिनकुशोत्तरमित्यासनपरिकल्पनञ्च योगिनामनुश्रूयत इत्याशङ्क्य परिहरति—न्यास इति ।

---

श्रुत्यर्थज्ञानरहिताः मतान्तरनिष्ठाः ब्रह्मरुद्रादीन् पृथग्भूतजीवानपि परमात्माभिन्नत्वेन श्रुत्युक्ततया मन्यन्ते । न हि श्रुतिषु चेतने अचेतने वा ब्रह्मभेदः, 'त्रिविधं ब्रह्ममेतत्' इत्यत्रापि तथा अर्थानभ्युपगमात्-तथैतत् । तथाच श्रुत्यर्थान्यथाकरणवदियं अनेकब्रह्मकल्पनया अन्यत्रान्यदृष्टिरिति । सर्वमिदमयुक्तम् । न हि ब्रह्म ब्रह्मेत्युपासीतेति श्रुतिः । तथासति ब्रह्मभेदकल्पनया एकस्मिन् ब्रह्मणि अन्यब्रह्मदृष्टिरिति वर्ण्येत । किंतु मनआदि ब्रह्मेत्युपासीतेति । अतः सूत्रोक्तरीत्या प्रतीके शरीरे ब्रह्मदृष्टिरनायासेन घटत इति ॥४५४॥

२४. मोक्षसाधनमुपासनं प्रकृतम्; अन्यकथनं प्रासंगिकम् । तदुपासनं किं देशकालव्यवस्थया कार्यम्, उत सर्वदा सर्वत्रेति । अन्त्यः पूर्वपक्षः । तमुपपादयति आसीनस्यैवेति । श्वेताश्वतरादौ योगविधिस्थले, आसीनेन कार्यमिति नोक्तम् । 'ध्येयो नारायणः सदा' इति सदाध्यानोक्त्या गमनादिकालेऽपि तद्विधिरेष्टव्यः । 'न त्युच्छ्रितं नातिनीचं चेलाजिनकुशोत्तरम्' इति उपवेशार्थश्चेलादेर्यो न्यासः निक्षेपः उक्तः, स नियमविधिकृतिः पाक्षिकासीनतायाम् । यदा आसीनोऽपि ध्यातुं प्रवर्तेत, तदा चेलाजिनादिकं न्यस्यैवेति नियमविधिकृता सा क्रिया । कृत इति च पाठः स्विन्न एव । अत एतत्

अयमर्थः—आसनपरिकल्पनं न नियतम्, अपि त्वासीनत्वावस्थायां कादाचित्कमेव भवति। नन्व, 'चेलाजिनकुशोत्तरम्' इति नियमविधिः क्रियते तेन गच्छन्नासीनश्शयानो वा ध्यानं कुर्यादिति। तदिदमाह—तस्मादिति। अत्राप्रकम्प्येन्द्रियस्य पुरुषस्य स्थितौ वा गतौ(गमने) वा शयने वा ध्यानं सम्भवेदिति। तदेतत् दूषयति—अप्राप्तमिति। अप्राप्तत्वमेव प्रकटयति—यत्नेति। गमने हि यत्न एव शयने निद्रान्वयादप्रबोधो भूयानुपजायते। तस्मादौचित्यादासीनस्यैव ब्रह्मध्यानं प्रकल्पनीयमित्यर्थः॥

(४५६) चित्तैकाग्र्योपपत्त्यै विदधति नियतिं देशकालासनादेः
सच्छिद्रं त्वन्यदाऽपि क्षममिति सततं चिन्तनं संस्मरन्ति।
प्रत्यक्संस्कारभूम्ना परनिहितधियस्तादधीन्यादिबुद्ध्या
जुष्टं व्यासक्तनीत्या भवति हि समये योगिनः कर्म सर्वम्॥ २५॥

अत्र ध्यानस्य नित्यानुष्ठानमेव विहितम्; अथाप्यवर्जनीयकर्मान्तरसङ्गावे सच्छिद्रमपि चिन्तनं क्रियमाणं विहितस्य नित्यचिन्तनस्य न विरोधमापादयतीत्याह—चित्तैकाग्र्येत्यादिना। अयमत्र शब्दान्वयः—योगदशायां चित्तैकाग्र्योपपत्त्यै देशकालासनादेर्नियतिं विदधति महर्षयः। सच्छिद्रं चिन्तनं देशकालादिवैगुण्येऽपि कर्तुं शक्यत इति–देशकालादिसाद्गुण्ये सततमेव चिन्तनमव्याक्षेपेण कर्तव्यमिति–ते संस्मरन्ति। तर्हि निरन्तरध्यानतत्परस्य कर्मान्तराणि न कर्तव्यानीत्या-

---

स्थितौ=अनुपविश्य गतिं विनाऽवस्थाने, गतिकाले, शयनकाले च स्यात्। कथमिन्द्रियाणि अन्यत्र व्यापारयता पुरुषेण ध्यानं क्रियेतेति चेत्–मनइन्द्रियस्य मुख्यकार्यार्थे अप्रकम्प्य रक्षणात्। अचालनीयमनसा हि सर्वदा सुकरम्। इमं पूर्वपक्षं निरस्यति इत्यप्राप्तमिति। इदमयुक्तमप्रामाणिकमित्यर्थः। तत्र हेतुः यत्नेति। यो हि स्थातुं गन्तुं वा प्रयत्नं करोति, निद्राति वा, स कथं ध्यानयत्नवान् स्यादिति। अतस्तैलधारावदविच्छिन्नस्मृतिसंततिरासीनस्यैव भवतीति तदर्थं तन्नियम एव॥ ४५५॥

२५. ननु, "समे शुचौ शर्कराविह्निवालुकाविवर्जिते शब्दजलाशयादिभिः। मनोनुकूले न तु चक्षुःपीडने गुहानिवाताश्रयणेन योजयेत्" इति देशनियमः श्रुतः। "या निशा सर्वभूतानां तस्यां जागर्ति संयमी" इत्यत्र अन्यत्र च सर्वभूतनिद्राकाले निश्यपि स्वनिद्रापूर्वापरकालयोर्योगानुष्ठानकथनात् कालनियमोऽपि ज्ञायते। चेलाजिनकुशोत्तरमुपविश्याऽऽसने अनत्युन्नते अनत्यवनते योगविधानात् आसननियमः। 'त्रिरुन्नतं स्थाप्य समं शरीरं हृदीन्द्रियाणि मनसा संनिवेश्य' इत्यादिना कायमनःप्राणेन्द्रियबन्धननियमोऽपि। एवं नियमविधिषु वर्तमानेषु, 'सततं ध्येयः' इति ध्यानसार्वदिकत्वं कथम्। तथा नित्यनैमित्तिकानामकरणे प्रत्यवायात् कर्मणामावश्यकत्वात्, देहधारणार्थभोजनादेरप्यवर्जनीयत्वात् कथं सततं ध्यानसंभवः इत्यत्राह चित्तेति। सत्यं शास्त्राणि नियमं विदधति। सच्छिद्रं विच्छिन्नं मध्येमध्ये विषयान्तरव्यासंगवत् यत् भगवच्चिन्तनम्, तत् कदापि न दुष्यति। अतः देशादिनियमाभावे परमात्मचिन्तनमेव त्याज्यमिति न मन्तव्यमिति ज्ञापनाय सततचिन्तनस्मरणम्। देशादिनियमकथनञ्चा न्यादृशस्याविच्छिन्नस्य स्मरणप्रवाहस्य साधकं यत् चित्तैकाग्र्यं तत्संपत्तये। क्षोभकसहस्रोपनिपातेऽपि अक्षोभ्यमनस्कस्य चित्तैकाग्र्यस्य सिद्धत्वात् किमेतन्नियमेन। यत्तु सततध्याने कर्मलोप इति; तत्र

शङ्क्य अवश्यकर्तव्यानां कर्मणां परित्यागायोगात् प्रमाणानुसारेण भगवत्प्रेरितत्वानुसन्धानपूर्वकं सर्वमपि देहसंरक्षणादिशेषभूतं कर्मयोगसिद्ध्यर्थत्वात् कर्तव्यमेव। यानि तु प्रतिषिद्धानि, तानि न कर्तव्यान्येव। यानि पुनः काम्यानि, तान्यपि तथा न कर्तव्यान्येव। तान्येव पापापाकरणद्वारेण विनियोगपृथक्त्वेन योगसिद्ध्यर्थतया वि(अभि)हितानि चेत्, तान्यपि न परित्याज्यान्येव। नैतावता योगसिद्धेर्विरोधः। यथाकालं योगार्थिनां कर्मणामनुष्ठानस्य विहितत्वादित्याह। व्यासक्तनीत्येति। यथा लोके प्रधानभूते कस्मिंश्चित् कर्मणि वर्तमाना एव मध्ये तदनुबन्धिषु कार्येष्वपि परस्पराविरोधेन वर्तन्ते, तद्वदत्रापीत्यर्थः॥ ४५६॥

(४५७) कर्मोपास्त्यङ्गभूतं यदिह निगदितं(यमितं) तत्परे पूर्वपादे,
योगेन ब्रह्मदृष्टिर्यदपि च परमो धर्म इत्युक्तमाप्तैः।
तेन प्राधान्यसिद्धावितरदनुगुणं तस्य नेयं(योज्यं); तथा च
प्रायः प्रक्रान्तयोगे पटिमलघुतया कल्पितः कालयोगः॥ २६॥

उक्तस्यैवार्थस्य द्रढिम्ने योगस्य प्राधान्यमनूद्य प्रधानानुसारेणैव तदङ्गस्य कालयोगः कल्पनीय इति प्रदर्शयन् प्रधानभूतयोगस्वरूपनिष्पत्त्यर्थत्वात् सर्वकर्मणोऽपि काले कर्तव्यत्वं निगमयति–कर्मेति। अयमत्र शब्दान्वयः–कर्म उपास्त्यङ्गभूतमिति विद्याङ्गपादे निगदितमिति यत्, 'अयं तु परमो धर्मो यद्योगेनाऽऽत्मदर्शनम्' इत्याप्तै(सनमै)र्महर्षिभिरुक्तमिति यत्, तेन योगस्य प्राधान्यसिद्धौ इतरत्=कर्म तदनुगुणतया योज्यम्। अयमर्थः–अङ्गाङ्गिनोर्विरोधे सति अङ्ग्यनुष्ठानाविरोधेनैवेतरानुष्ठानं कर्तव्यमिति। एवञ्च सति प्रक्रान्तयोगे पुरुषे पटिमलघुतया=योगपटुत्वाभावेन तत्पाटवसिद्ध्यर्थं कर्मणां कालयोगः स्वीकर्तव्यः। अनुक्रमात् पाटवे जायमाने तदानीमपि यथायोगं कर्म

प्रत्यगात्मग्रहणार्थकर्मयोगज्ञानयोगानुष्ठानपाकालप्रभृति, प्रकृताधिकारिणा 'मयि सर्वाणि कर्माणि संन्यस्य' इत्युक्तरीत्या कर्तृकर्मकरणादीनां तदधीनत्वं [आदिशब्दग्राह्य]कर्मणां तत्प्रीत्यर्थत्वञ्चानुसंधायैव कर्मकरणात्, प्रत्यगात्मनः साक्षात्कृततया तद्विषयकसंस्कारस्यापि तदधीनताग्राहिणः सत्त्वात् एवं सर्वदा परमात्मनि निहितबुद्धेरस्येदं कर्मानुष्ठानकालिकचिन्तनमप्यावश्यकमिति ज्ञापनमपि सततचिन्तनस्मृतिवाक्यकार्यम्। अतो योगिनो न कर्मानुष्ठानकाले भगवदस्मरणम्। व्यासक्तेति। यथाऽस्माकं नानाविषयव्यासक्तचेतसां मनसोऽन्यत्र स्थितत्वेऽपि अभ्यासवशात् बाह्यं कर्म तत्तन्मन्त्रजपगमनभोजनादिकं स्वयं निष्पद्यते—तथा परमात्मव्यासक्तचेतसो योगिनोऽप्यभ्यासवशादेव सर्वं नित्यनैमित्तिककर्म तच्चिन्तनाविरोधेनैव ईषदवधानेऽपि भवति। अतः सर्वमुपपन्नमित्यर्थः॥ ४५६॥

२६. अनुष्ठेयकर्मभूतानामङ्गानाम् ध्याननिष्पत्त्यर्थकालनियमाद्यङ्गानाञ्च तदा तदा पूर्त्यभावेऽपि यथाशक्ति प्राधान्येन प्रधानभूतो योगो न त्याज्य इत्याह कर्मेति। इह शारीरके उपास्त्यङ्गभूतं नित्यनैमित्तिकं फलत्यागविशिष्टकाम्यरूपञ्च निषिद्धकर्मत्यागरूपशमादिविशिष्टं कर्म तत्परे अङ्गनिरूपणार्थे तृतीयचतुर्थपादे विहितमिति यत्, आप्तैर्महर्षिभिः, 'अय तु परमो धर्मो यत् योगेनाऽऽत्मदर्शनम्' इति योगसाध्यं दर्शनसमानाकारध्रुवस्मरणमुत्कृष्टधर्म इत्युक्तमिति च यत्, तेन समाधेः प्राधान्ये सिद्धम्। प्रधानानुष्ठानाविरोधेनान्यदनुष्ठेयं नेयम्। नित्यं नैमित्तिकञ्च धर्मिलोपं विना यथाशक्ति कार्यम्, सति तत्तत्कालज्ञाने योगात् व्युत्थितत्वे। योगानुष्ठानसौकर्ये सति फलाभिसंधिरहितकाम्यकर्मभूतसत्रादिबहुव्याप्त्या

कर्तव्यमित्याशयः । अयमर्थः—'स खल्वेवं वर्तयन् यावदायुषम्' इति वचनमङ्गिभूताया विद्यायाः तदङ्गत्वेनावस्थितानां कर्मणाञ्च तुल्यमिति ॥४५७॥

(४५८) विद्याङ्गं पूर्वमुक्तं किमिह पुनरसावासनाद्यङ्गवादः(चिन्ता)

दृष्टार्थांशं विभज्य प्रथयितुमपि न, प्राक् शमाद्यङ्गवादात् ।

सत्यं ध्यानाख्यधारावहनमतिदशा त्वन्वहं साधनीया

चित्तैकाग्र्येण सर्वप्रयतनविरहे स्यादितीदं प्रकाश्यम् ॥ २७ ॥

इत्यासीनाधिकरणम् ॥ १२८ ॥

अत्र कश्चित् पौनरुक्त्यमाशङ्क्य विद्याङ्गचिन्तनमत्र न कर्तव्यमिति ब्रूते—विद्याङ्गमिति । अयमत्र शब्दार्थः-विद्याङ्गं पूर्वपादे प्रप्रोक्तम्; किमिह पुनरसौ आसनाद्यङ्गचिन्ता क्रियत इति । अत्र पूर्वपक्षी पराभिप्रायमाशङ्क्य निराकरोति-दृष्टेति । तत्राऽदृष्टार्थाङ्गचिन्ता कृता; इह पुनर्दृष्टार्थासनाद्यङ्गचिन्ता क्रियत इति विभागो न वक्तव्यः । तत्र हेतुमाह—प्रागिति । पूर्वमपि दृष्टार्थानां शमादीनामुक्तत्वादयं विभागो न घटत इति भावः । उक्तमर्थमर्धाङ्गीकारेण प्रतिक्षिपति—सत्यमिति । अयमर्थः—दृष्टार्थमदृष्टार्थमुभयमङ्गजातं विद्याङ्गपादोक्तमित्यनुमन्यामहे, तथापि ध्यानाख्य(विद्याख्य)धारावहनमतिदशा तूपारूढैरन्वहं साधनीया । यावदायुः उत्तरोत्तरावधानेन प्रसाधनीयेत्यर्थः । सा च दशा चित्तैकाग्र्येणेतरविषयसर्वप्रयतनविरहे सत्येव सेत्स्यतीतीममर्थं विशेषतः प्रकाशयितुमनुग्रहविशेषात् सूत्रकारः पुनःपुनः शिष्याणां प्रकाशयतीति(त्यर्थः) ॥ ४५८ ॥ इत्यासीनाधिकरणम् ॥ १२८ ॥

१२९ ॥ अथ आप्रायणाधिकरणम् ॥ ४-१-६ ॥

सूत्रम्—आप्रायणात् तत्रापि हि दृष्टम् ॥ १२ ॥

(४५९) एकस्मिन्नेव यत्ने यदि भवति परध्यानरूपा तु भक्तिः

तद्विश्रान्तो विधिः स्यादुपरि तु विफला ब्रह्मचिन्तेत्ययुक्तम् ।

---

कालो न यापनीयः । प्रकान्तयोगे अनभ्यस्तयोगे कालदेशादिनियमापेक्षा । ननु चिन्तामणग्रन्थोऽन्यः। कंसमारीचादीनां ध्यानं दर्शनसमानाकारं कर्मनिरपेक्षं देशकालादिनियमवर्जमेव निष्पन्नमस्ति । सत्यम्; कामिन्यादिसाक्षात्कारोऽप्येवं भवति । तत् सर्वं रजस्तमःकार्यम् मोक्षार्थ-सत्त्वाभिवृद्धिसापेक्षध्यानादिकं नियमे सत्येव भवेत् । कर्मानुष्ठानाधीनसत्त्वविवृद्धिकृते चित्तैकाग्र्ये सति न देशकालादिनियमः ॥ ४५७ ॥

२७. उपासनांगविचारप्रकरणे वक्तव्यस्याऽऽसनरूपाङ्गस्यात्र कथनमसंगतमित्याशंक्य परिहरति विद्येति । विद्याया अंगं कर्मप्रभृति पूर्वमङ्गपादे तृतीयचतुर्थे उक्तम् । किमिहेति । तत्रैवेयमपि चिन्ता युक्तेत्यर्थः । आसनादीत्यादिपदेन यत्रैकाग्रतेति सूत्रोक्तदेशनियमो गृह्यते । ननु कर्मणां भगवत्प्रीतिद्वारोपयुक्तत्वात् तादृशांगविचारस्तत्र; आसनादिकं तु कार्यान्तरयत्नवारकतया दृष्टविधयोपयुज्यते इति विभागेन तत्कथनमिहेति चेत्-तदपि न; प्राक् तत्रैव; 'शमदमाद्युपेतः स्यात्' इत्यादिना शमबाल्यपाण्डित्यमौनरूपाङ्गानामुक्तत्वात् । तेषां दृष्टार्थत्वात् । समाधत्ते सत्यमिति । अयं भावः—नात्राङ्गविचारः । किंतु आवृत्तिः, आप्रयाणात् इति अलोच्यमानत्वात् तदुपयोगिचित्तैकाग्र्यमावश्यकमित्येतदधिकरणार्थः। यत्रैकाग्रतेति अत्र सूचितत्वात् । तद्विशदीकरणायाऽऽसीनत्वाद्युक्तिः ॥ ४५८ ॥

छान्दोग्ये यावदायुः सुचरितमुदितं ब्रह्मलोकाप्तिहेतोः ;
तद्धि ध्यानस्य वृद्ध्यै ; तदपि च विहितं कुत्रचित् प्रायणान्तम् ॥ २८ ॥
इत्याप्रयाणाधिकरणम् ॥ १२९ ॥

अत्र सङ्गतिमभिप्रेत्य,'तदिदमपवर्गसाधनमुक्तलक्षणमुपासनमेकाह एव सम्पाद्यम्, उताऽऽप्राय(प्रया)-णात् प्रत्यहमनुवर्तनीयमिति विशये' इति । तदर्थविचारस्तु—उक्तलक्षणमुपासनं किमेकस्मिन्नहनि कर्तव्यम्, उताऽऽप्रायणादिति। किमेकदिनानुष्ठानेन शास्त्रार्थस्य कृतत्वम्, नेति । अत्र पूर्वपक्षानुवाद-पूर्वकं सिद्धान्तमाचष्टे—एकस्मिन्निति। अयमत्र शब्दान्वयः-एकस्मिन्नेव दिवसे परध्यानरूपा तु भक्तिर्यदि भवति, तत्रैव विधिर्विश्रान्तः स्यात्। उपरि तु ब्रह्मचिन्ता विफलेति पूर्वः पक्षः। तमिमं निराकरोति—अयुक्तमिति । तत्र हेतुमाह—छान्दोग्य इति । छान्दोग्ये हि, 'स खल्वेवं वर्तयन् यावदायुषम्' इत्यादिना यावदायुः सुचरितमुदितम् = उक्तम्। नन्वस्तु सुचरितस्य = कर्मानुष्ठानस्य यावदायुष्यम्, अथापि ब्रह्मोपासनस्य कुतो यावदायुष्ट्वमित्याशङ्क्याह तद्धीति । अयमर्थः—ब्रह्मलोकप्राप्तिहेतोः [सुचरितस्य] ध्याने सन्निपत्योपकारकतया स्वरूपोत्पत्तिहेतोः सुचरितस्य यावदायुरनुष्ठेयत्वकथनं ब्रह्म-विद्याया यावदायुरनुष्ठेयत्वमन्तरेणानुपपद्यमानं श्रुतार्थापत्त्या ब्रह्मविद्याया आप्रायणादनुवर्तनीयत्व-मवबोधयति । न केवलं श्रुतार्थापत्त्या तत्सिद्धिः ; अपितु तदपि ब्रह्मोपासनं कुत्रापि [प्र-उ.] श्रुतौ प्रायणान्तं विहितं, 'प्रायणान्तमोङ्कारमभिध्यायीत' इति ॥ ४५९ ॥ इत्याप्रयाणाधिकरणम् ॥ १२९ ॥

१३० ॥ अथ तदधिगमाधिकरणम् ॥ ४-१-७ ॥

सूत्रम्—तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥

(४६०) नाभुक्तं कल्पवृन्दैरपि सुपरिहरं कर्म गीतं मुनीन्द्रैः
पापाश्लेषप्रणाशश्रुतेरपि परविद्वैभवोक्तिस्ततः स्यात् ।
नैवम् ; नाभुक्तमित्याद्यपि फलजनने कर्मणो दार्ढ्यमाह
प्रायश्चित्तक्रमेण त्विह परभजनं चोदितं कर्मशान्त्यै ॥ २९ ॥

---

२८. आवृत्त्यधिकरणे भक्तिध्रुवानुस्मृतिरूपविशेषपर्यवसानं वेदनस्योक्तम् । अविच्छिन्नध्यान-रूपतत्सिद्धये चिन्तकाप्रचयमासीनाधिकरणे उक्तम् । तन्निष्पत्त्युपायस्य सिद्धत्वात् आप्रयाणादनुवर्तनम् अनपेक्षितमिति शंका । यत्रे दिने । यदि भवतीत्यनेन यावत्सु दिनेषु तन्निष्पत्तिः, तावद्दिनानुवर्तनमिष्टमि-त्युक्तम् । समाधत्ते इत्ययुक्तमिति । छान्दोग्ये अन्ते, 'धार्मिकान् विदधत् अन्यत्र तीर्थेभ्यः', 'स खल्वेवं वर्तयन् यावदायुषम्' इति आयुःपूर्तिपर्यन्तं ब्रह्मलोकाप्तिहेतोः=ब्रह्मलोकप्राप्त्यर्थं धर्मानुष्ठानमनुवर्तनीय-मित्युक्तम् । कर्मानुष्ठानफलं हि विद्यानिष्पत्तिरेव; तस्य ब्रह्मलोकसंपत्तिहेतुत्वाभावात । अत आप्रयाणात् ध्यानमित्यर्थसिद्धम् । किञ्च कुत्रचित् प्रश्नोपनिषदि, "प्रायणान्तमोंकारमभिध्यायीत" इति विहितम । गीतञ्च, 'प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः', 'यं यं वाऽपि स्मरन् भावं त्यजत्यन्ते कलेबरम् । तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥', 'प्रयाणकाले मनसाऽचलेन', 'तस्मात् सर्वेषु कालेषु मामनुस्मर युध्य च ।' इत्यादि । अत आप्रयाणात् तद्भावभावनम् ॥ ४५९ ॥

२९. विद्याफलप्रतिपादनार्थे अस्मिन् फलाध्याये प्रथमपादे निवक्षितं प्रथमं फलं यथावसरमाह

'एवं ब्रह्मविद्यास्वरूपं विशोध्य विद्याफलं चिन्तयितुमारभते' इति भाष्यम् । इयं तु पेटिकासङ्गतिः । अयमाशयः—ब्रह्मविद्यास्वरूपस्य निरतिशयानन्दरूपत्वेन फलपक्षनिक्षेपार्हत्वात् तत्स्वरूपशोधनमपि फलाध्याये सङ्गतमिति । तदर्थविचारस्तु—किमश्लेषविनाशौ विद्याफलतया[भूतौ] उपपद्येते, नेति। किमश्लेषविनाशशास्त्रयोरभुक्तकर्मापरिक्षयशास्त्रस्य च विरोध एव, उताविरोधः सम्भवतीति। किमश्लेषविनाशशास्त्रं मोक्षसाधनभूतविद्याभिधायिवाक्यशेषगतं विद्यास्तुतिवादपरत्वेन नेतुं शक्यते, नेति । अत्र पूर्वपक्षोक्तिपूर्वकं सिद्धान्तमाचष्टे—नाभुक्तमिति । 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इति फलभोगात् विना कर्म न सुपरिहरमिति मुनीन्द्रैर्गीतम् उदितम्। तेन पापाश्लेषश्रुतिस्तद्विनाशश्रुतिश्च तत एव हेतोर्ब्रह्मविदां वैभवोक्तिः स्यात् । उक्तं पक्षं दूषयति—मैवमिति । तदेवोपपादयति—नाभुक्तमिति । नाभुक्तमित्यादिकमकृतप्रायश्चित्तानां कर्मणां फलजननावश्यम्भावमाह ; न पुनः कृतप्रायश्चित्तानामपि । तर्हि ब्रह्मविदामकृतप्रायश्चित्तत्वात् कर्माणि फलिष्यन्तीत्याशङ्क्य परिहरति—प्रायश्चित्तक्रमेणेति । अयमर्थः—द्विविधं खलु प्रायश्चित्तम्—प्रतिपदोक्तं सर्वप्रायश्चित्तञ्चेति । विशेषतस्तत्तन्निमित्तपरिज्ञाने प्रतिपदोक्तं प्रायश्चित्तं कर्तव्यम् । सामान्यतः

---

तदधिगमाधिकरणेन । एतावत्तु यथाभूताया विद्यायाः एतज्जनकत्वम् , तथाभूतत्वं व्युत्पादितम् । तत्र पापविषयमिदमधिकरणम् , उत्तरं पुण्यविषयकम् । एकैकविषयेऽपि तत् फलं द्विविधम् , पूर्वकर्मविनाशः उत्तरकर्माश्लेषश्चेति । तत्र पूर्वपक्षमाह नेति । "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इति मुनीन्द्रैर्गीतम् । तेनानुभवैकनाश्यं कर्म । अभुक्तफलकं तु कर्म कदापि न परिहर्तुं शक्यम् । प्रथमपादे कर्मेत्येतदनन्तरं इतिशब्दोऽध्याहार्यः । कर्म न सुपरिहरमिति मुनीन्द्रैः गीतं कथितमित्यर्थः । यद्वा न सुपरिहरं गीतं=सुपरिहरभिन्नत्वेन गीतमित्यर्थः । कर्मशब्देन पापस्यापि ग्रहणात् अत्राधिकरणे तद्विषये शंका । ननु, 'यथा पुष्करपलाशे आपो न श्लिष्यन्ते, एवमेवंविदि पापं कर्म न श्लिष्यते' इति विद्यावतः पापाश्लेष उक्तः । 'यथेषीकातूलमग्नौ प्रोतं प्रदूयेत, एवं हास्य सर्वे पाप्मानः प्रदूयन्ते' इति पापविनाशोऽप्युक्तः । अतो वचनबलादिदं फलमिष्यतामित्यत्राह पापेति । नाभुक्तमिति वाक्याविरोधाय वचसामीदृशानां वैभवोक्तिरूपत्वं=स्तुतिरूपत्वमेष्टव्यम् । किञ्चोत्तराघाश्लेषः विद्यारूपप्रायश्चित्तादिति वक्तुं न शक्यते । प्रायश्चित्तं हि नैमित्तिकं निमित्ते उदिते भवितुमर्हति । न तु उत्तराघोत्पत्तेः प्रागेव तत्प्रायश्चित्तं क्रियेत । किञ्च तदश्लेषस्वीकारे, 'नाविरतो दुश्चरितात्' इति वाक्यविरोधः । अतोऽश्लेषवचनं केवलं स्तुतिरित्येव वक्तव्यमिति तुल्यरीत्या पूर्वाघविनाशविषयेऽपि तथात्वमेव । अन्यथा, क्षीयन्ते इत्यस्य, नाभुक्तं क्षीयत इत्यस्य च विरुद्धभावाभावविषयकत्वं स्यादिति । अथ सिद्धान्तः मैवमिति । तत्र हेतुरुच्यते-नाभुक्तमिति वाक्यस्य कर्माक्षयपरत्वात् , क्षीयन्ते चास्येति वाक्यं न तत्क्षयपरमिति किल शंका । कर्मणामाशुविनाशित्वात् कथं तदक्षयः । कर्मशक्त्यक्षयोऽर्थं इति चेत्—कर्मणा जन्यत्वे तद्गतशक्तेरपि जन्यत्वात् कथमक्षयः ; जातस्य नाशध्रौव्यात् । अथ कर्मणः फलाव्यभिचारित्वमक्षयपदार्थः ; तदापि फलोत्पत्तिः कर्मनाशेऽपि तदीयशक्त्येति वक्तव्यम् । शक्तिरपि मतान्तरेणापूर्वं वा, अस्मन्मतेन परमात्मगतो निग्रहसंकल्पो वा । तस्य च कर्मण इवाऽऽशुविनाशित्वाभावरूपदार्ढ्यमेवाक्षयः । सर्वात्मना विनाशाभावस्तु नास्तीति ज्ञापनाय अभुक्तपदम् । तेन भोगात् विनाशो भवतीत्युक्तम् । भोग इति

परिज्ञाने तु सर्वप्रायश्चित्तमेव प्रमाणैर्विहितं कर्तव्यम् । 'कृष्णानुस्मरणं परम्' इति कृत्स्नप्रायश्चित्त-स्थानीयतया कृष्णानुस्मरणमेव विहितम् । तत्र, 'शुचिर्भवति संस्मृत्या' इत्यादिकं सदृशमप्यैतिहासिकं पौराणिकमागमिकं स्मार्तञ्च वचनजातं पाठ्यम् । न हि बहूनां सन्निपाते नामुकमित्येकं वाक्यं सोपबृंहणश्रुतिविरुद्धं स्वयमवतिष्ठते । न खलु मार्जारो भवति मातङ्गजातस्य परिस्पर्धीति ॥ ४६० ॥

(४६१) निष्कृत्यात्मत्वमस्योदितदुरितसमुन्मूलनस्योपपन्नम् ;
नात्र स्वर्गादिनीतिः ; प्रतिहतिविगमे धीविकासः स्वतो हि ।
पापालेपः प्रमादोदितसहनमिति ख्याप्यमाम्नातुवृत्त्यै ;
नो चेन्न स्यात् गतिर्नाविरत इति गिरो योगिनाञ्च प्रवृत्तेः ॥ ३० ॥

परब्रह्मोपासनस्य सर्वपापप्रायश्चित्तात्मकत्वमुक्तं लक्षणतोऽपि प्रदर्शयन् पापालेपविषयमपि परिशोधयति—निष्कृतीति । अस्य—ब्रह्मोपासनस्य प्रायश्चित्तात्मकत्वमुत्पन्नदुरितसमुन्मूलनात्मकत्वादुपपन्नमेव । इदमेव हि प्रायश्चित्तस्य लक्षणमित्यर्थः । नन्वस्तु ब्रह्मोपासनं प्रायश्चित्तम्, अथापि स्वर्गादिपुरुषार्थसाधनानुष्ठानवत् असङ्कुचितब्रह्मानुभवरूपज्ञानविकासार्थं साधनान्तरमनुष्ठेयं स्यादित्याशङ्क्य प्रतिक्षिपति—नात्रेति । तदेव स्थापयति—प्रतिहतिविगम इति । अयं भावः—स्वर्गाद्यनुभवो हि कर्मरूपोपाधिप्रयुक्तत्वादस्वाभाविकः । तेन साधनानुष्ठानमपेक्षते । ब्रह्मप्राप्तिस्तु सर्वेषामप्यात्मनां स्वाभाविकी । अथापि केषाञ्चिदनादिपापप्रवाहवशादनादिप्रतिबन्धवती । प्रतिबन्धाभावे स्वयमेवाविर्भवति । अत एवोच्यते—' यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः। दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा ॥' इति। एवञ्च स्वर्गादिभ्यो वैषम्यं परब्रह्मप्राप्तेः। न हि प्रमाणप्रतिपन्नेऽर्थे न विश्वसनीयं किञ्चिदस्ति। युक्त्याभासास्तु प्रमाणविरुद्धत्वादेवानादरणीयाः । अत्र

---

प्रतिनियतसर्वनाशकोपलक्षणम् । अतः प्रायश्चित्तम्, "धर्मः क्षरति कीर्तनात्' इत्युक्तकीर्तनादि च विवक्षितम् । एवं कर्मजन्यशक्तेः स्थिरत्वे फलजनकत्वमेतद्वचनार्थः, विषादेस्तच्छक्तिनाशकत्वं विनाशश्रुत्यर्थ इति न मिथो विरोधोऽस्ति । यथा अग्नेरुष्णत्वमेकप्रमाणगम्यम्, अपामग्निनाशकत्वञ्च प्रमाणान्तरगम्यम् ; न तत्र विरोधोऽस्ति--तद्वत् । तदिदमाह नाभुक्तमित्यादीति । प्रायश्चित्तक्रमेणेति । यथा प्रायश्चित्तविशेषशास्त्रस्य केवलार्थवादत्वं वा, नाभुक्तवाक्यविरोधित्वं वा नास्ति, तथा प्रकृतवाक्यस्यापि । पापध्वंसहेतुत्वोक्त्यैव प्रायश्चित्तत्वावसायात् । "प्रायश्चित्तप्रसंगे तु सर्वपापसमुद्भवे" इत्यादिवचनाच्च ॥ ४६० ॥

३०. ननु, 'ब्रह्मविदाप्नोति परम्' इत्यादिना ब्रह्मप्राप्तिरूपफलोद्देशेन विहितस्य भजनस्य प्रायश्चित्तत्वं कथम् । पापध्वंसस्याप्युद्देश्यत्वे अनेकोद्देशात् वाक्यभेदापत्तेः । किञ्चाश्लेषवाक्यस्यार्थवादत्वमेव युक्तम् ; अन्यथा यथेच्छं पापकरणप्रसक्तेः ; तद्वत् विनाशश्रुतेरपीत्यत्राह निष्कृतीति । भजनविधौ कर्मध्वंसस्यैवोद्देश्यता तस्यैव प्रथमं जायमानत्वात् । अतो दुरितसमुन्मूलकत्वात् निष्कृतिरूपत्वं घटते । अतः स्वर्गाद्यर्थज्योतिष्टोमादेः पापक्षयाहेतुत्ववत् अस्य फलार्थतया तद्धेतुत्वं न शक्यम् । तर्हि ब्रह्मप्राप्तिरूपफलं न स्यादिति न । ज्ञानसंकोचककर्मनाशे स्वत एव ज्ञानविकासः । एष एव पूर्णब्रह्मानुभवः । अतस्तत्र नोपायापेक्षा । अश्लेषविषये त्विदं वक्तव्यमित्याह पापेति । उत्तराघाश्लेषः प्रामादिकमात्र-

हिशब्दः प्रसिद्धिं दर्शयति । यथा दीपादेरावारकघटाद्यपगमने प्रकाशविकासः स्वत एव, एव-मात्मनोऽपि प्रतिबन्धकाभावे धर्मभूतज्ञानविकास इत्यर्थः । अत्र कश्चिच्चोदयति—यदि ब्रह्मविदां पापालेपः, तर्हि तेषामुत्पथप्रवृत्तिरेव स्यादिति, अत्राह—पापालेप इति । प्रामादिकपापालेप एव ब्रह्मविदामस्माभिरुच्यते ; न पुनर्बुद्धिपूर्वकपापालेपः । तत् किमर्थमित्यत्राह—आज्ञानुवृत्त्या इति । 'श्रुतिस्मृती ममैवाज्ञा' इत्यध्यात्मविदामपि भगवदाज्ञारूपश्रुतिस्मृत्यनुल्लङ्घनस्य भगवतैवोक्तत्वादि-त्यर्थः । एवमनङ्गीकारे, 'नाविरतो दुश्चरितात्' इति वचनस्य गतिर्न स्यात् । योगिनाञ्च नियमेन स्वाधिकारानुरूपानुष्ठानप्रवृत्तेश्च गतिर्न स्यात् । चकारः समुच्चयार्थः । भ्रान्तत्वं नाटयन् भरतोऽपि, सतां मार्गमदूषयन्' इति सन्मार्गवर्ति(प्रवृत्त)त्वेन ह्युच्यते ॥ ४६१ ॥

(४६२) अश्लेषः कर्मशक्तेरनुदय, उदये तन्निवृत्तिर्विनाशः

शक्तिः सा च प्रणेतुस्तदुचितफलकृन्निग्रहानुग्रहात्मा ।

प्रायश्चित्तं निमित्ते कथमनुदित इत्यत्र नैवानुयोज्यं

नाधर्मस्तस्य तत् स्यादिति खलु हृदयं ग्राह्यमश्लेषवाचः ॥ २१ ॥

अत्राश्लेषविनाशशब्दयोरर्थविशेषं दर्शयित्वा ब्रह्मविद्यायामुत्तराघं प्रत्यपि प्रायश्चित्तत्वमाक्षिप्य समाधत्ते—अश्लेष इति । अत्र कर्मशक्तेरनुदयोऽश्लेषः ; उदये तन्निवृत्तिर्विनाशः । इह कर्मशक्तिरपि प्रणेतुः = सर्वनेतुर्भगवतस्तत्तत्कर्मोचितफलकृन्निग्रहानुग्रहावेव । तेन न सिद्धान्तविरोधः । तदिदमाह—शक्तिरित्यादिना । अत्र केनचिदुक्तां शङ्कां निवारयति—प्रायश्चित्तमिति । अबुद्धिपूर्वकस्योत्तराघ-स्योपायानुष्ठानदशायामुत्पत्तिरेव नास्ति । अनुत्पन्नस्य पापस्य कथमियं ब्रह्मविद्या प्रायश्चित्तमिति

विषयक. । अनन्तप्रामादिकपापफलाननुभवो विद्याकृत इति न तत्राप्यर्थवादता । तर्हि अविशेषात् बुद्धिपूर्वपापाश्लेषोऽपि स्यादित्यत्राह इति स्यादित्यमित्य दि । आज्ञाया विधिनिषेधोभयरूपत्वात् आज्ञानु वर्तनस्य विहितत्वात् अकृत्यकरणं कृत्याकरणञ्च बुद्धिपूर्वं न भवतीत्यर्थः । दोषान्तरमप्याह नो इति । 'नाविरतो दुश्चरितात्' इति वचनस्य गतिर्न स्यादित्यन्वयार्थः । योगिनामिति । उपस्तिकेक्वादी-नामाज्ञाविषयकप्रवृत्तेर्गतिश्चान्यथा न स्यादित्यर्थ ॥ ४६१ ॥

२१. कर्मणां क्षणभङ्गुरतया स्वत एवाश्लेषो विनाशश्चेति किं विधेयेत्यत्र तदर्थं साम्प्रदायिक-माह । तथा प्रायश्चित्तस्य निमित्तानन्तरभावित्वात् उत्तराघस्य पश्चादेव जनिष्यमाणतया, ततः प्राक् कृतस्य कथं तत्प्रायश्चित्तरूपतेति शंकां च परिहरति अश्लेष इति । कर्मणि कृतेऽपि तत शक्तेरनुत्पत्ति-रश्लेषः । पूर्वमेवोदये=उत्पन्नत्वे उत्पन्नशक्तिनिवृत्तिर्विनाश । सेयं शक्तिः, कर्तुः तदुचितफलकृत्= कर्मोचितफलहेतुः, प्रणेतुः भगवतः निग्रहसंकल्परूपा अनुग्रहसंकल्परूपा च । न त्वन्यदपूर्वादिकम् । द्वितीयशंकापरिहार उच्यते प्रायश्चित्तमिति । कर्मणि कृते पश्चादनुतापः ; ततः इत परं न करिष्यामीति संकल्पः ; इदं परिहरणीयमिति च । इदमेव प्रायश्चित्तम् । "प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते" इत्यनेनायमेवार्थ उच्यते । ईदृशप्रायश्चित्तता कथम् । कथञ्च, न कर्तव्यमिति अध्यवसाये करिष्यति । अत उत्तराघाश्लेषकरत्वं कथमिति । नानुयोज्यम्=न प्रष्टव्यम् । तदंशे प्रायश्चित्तत्वा-स्वीकारात् । तर्हि तद्वचनाभिप्रायः क इति चेत्—तत् प्रामादिकं पापजातीयं कर्म तस्य ब्रह्मविदो विषये

चोदकाभिप्रायः । इमां प्रतिक्षिपति—नैयानुयोज्यमिति । अननुयोज्यत्वमेव दर्शयति—नाधर्म इति । ब्रह्मविद्यानिष्ठस्य तस्याबुद्धिपूर्वोत्तराघं पापमेव न स्यादिति ब्रह्मविद्यायाः सर्वपापप्रायश्चित्तत्वं वदतां हृदयमित्यर्थः ॥ ४६२ ॥

(४६३) धीपूर्वं तूत्तराघं न सृजति परवित् सर्वदा सावधानो
जातं नैमित्तिकैश्च क्षिपति समुचितैराशु, भुञ्जीत वा तत् ।
वृत्रादौ दृष्टमेतत्; नियतिविभवतश्चेदिराजादिसिद्धिः
युक्ता,ऽथैवान्यदा वा मुनिरिह मनुते ब्रह्मनिष्ठस्य मुक्तिम् ॥ ३२ ॥

इति तदधिगमाधिकरणम् ॥ १३० ॥

एवमबुद्धिपूर्वोत्तराघमुक्त्वा बुद्धिपूर्वोत्तराघस्याध्यात्मवित्सु केषुचिदनुत्पत्तिम्, अपरेषूत्पन्नस्य प्रायश्चित्तम्, अन्येषु केषुचित् अप्रायश्चित्तेऽप्याशूपभोगमुपपादयन्, सर्वथापि भागवतस्य सापराधस्यापि क्रमशो मुक्तिं दर्शयति—धीपूर्वमिति। सर्वदा सावधानो ब्रह्मवित् बुद्धिपूर्वमुत्तराघं न सृजत्येव। मध्यमस्तु ब्रह्मवित् जातं पापं प्रायश्चित्तेन क्षिपतीत्याह—जातमिति। अपरोऽपि ब्रह्मवित्, 'न खलु भागवता यमविषयं गच्छन्ति। इहैवैषां केचिदुपप्लवा भवन्ति। काणा भवन्ति खञ्जा भवन्ति'

---

नाधर्मः न पापम्; किंतु लौकिकक्रियादुरवम् मृग-मुक्त-नित्यमूर्त्यादिकृतादृशक्रियावत् । एवम् अश्लेषवचनस्य तात्पर्यं भ्रष्टम् । उत्पन्नशक्तिविनाशकं प्रायश्चित्तपदवाच्यम् । उत्तराघविषये तु मनुष्यत्व-त्रैवर्णिकत्वादिनियामकबलात् विद्यानिष्ठकृतस्य कर्मणोऽघत्वप्रसक्तौ विद्या तस्मिन् कर्मणि पापत्वप्रयोजकशक्त्युत्पत्तिं प्रतिबध्नातीति भाष्ये उक्ततया, शक्तिविशिष्टस्यैवाधर्मशब्दवाच्यत्वादस्याधर्मत्वं न भवति, यतः प्रायश्चित्तापेक्षेति भावः ॥ ४६२ ॥

३२. उक्तमुत्तराघं पापादिकमात्रमिति प्रपूर्वश्लोके व्यक्तम् । बुद्धिपूर्वस्योत्तराघस्य कथं परिहारः । न च प्रत्येकप्रायश्चित्तमनुष्ठेयम्, भोक्तव्यं वेति वाच्यम्; प्रायश्चित्ताकरणेऽपि फलाननुभवेऽपि चैद्यादौ तन्नाशदर्शनात् । अतो विद्यानिष्ठस्योत्तरं बुद्धिपूर्वाघमपि अधर्मो न भवतीति ज्ञायते । 'नाविरतो दुश्चरितात्' इत्यादिकं तु प्रीतिरूपापन्नदर्शनसमानाकारज्ञानविशेषरूपभक्त्युत्पत्तिप्रागवस्थाविषयं स्यादिति शंकायामाह धीति । परवित् परविद्यानिष्ठः उत्तराघं बुद्धिपूर्वकं न कुर्यात् । विरक्ततया तत्पापजन्ये आपातफले तस्य रागाभावात् पश्चात्तनदोषावधारणाच्च । न च कदाचित् अनवधानात् दोषानवधारणम्; सर्वदा सावधानत्वात् । यस्तु कश्चित् न तथा, तस्य कदाचित् जायेतैव तत् । तथापि पश्चादनुतपन् नैमित्तिकेन क्षिपति । नैमित्तिकं द्विविधम्—जीवनादिनिमित्तकं नित्यम्, पापे निमित्ते विहितञ्चेति । तन्निमित्तकतया विहितेषु प्रायश्चित्तेषु यत्यत् यदर्थं, तेनतेनानुष्ठितेन तत्तत् आशु-क्षिप्रं क्षिपति । एवंभूतमनुचितप्रायश्चित्तरूपनैमित्तिकाकरणे तु तत् भुञ्जीत-तत्फलं दुःखमनुभवेदेव । अतस्तस्यालेपकत्वं नेत्याह वृत्रादाविति । शूरसेनेषु सार्वभौमश्चित्रकेतुः परमसाधुलब्धपुत्रोऽपि सपत्नीजनगरदानमारितपुत्रो नारदेनाऽऽश्वासितस्तेनोपलब्धचतुर्व्यूहभगवन्मन्त्रः सप्तरात्रेण विद्याधराधिपत्यं प्राप्य विद्याबलसाक्षात्कृतपरमात्मानुगृहीतो व्योमचारी कदाचित् सभामध्ये पार्वतीपरिष्वङ्गानन्दभरितं परमेश्वरं परिहस्य पार्वतीशापेना

इत्यादिश्रुत्युक्तप्रकारेण प्रतिपद्प्रायश्चित्ताकरणे लघुदण्डमुपभुञ्जीत। इदं तु वृत्रासुरप्रभृतिषु दृष्टमेव। वृत्रः खलु भागवतः, अथापि केनाप्यपचारेणासुरं देहं प्राप्तस्तत्रापि जातिस्वभावात्, देवप्रकृतीनामपराधं कुर्वन् अपराधानुरूपोपभोगमप्यन्ते प्राप्य भगवन्तमेव ध्यायन् आभासनफलं प्राप्तवानिति पौराणिकी प्रसिद्धिः। नन्वथाप्यपराधशतमनुतिष्ठतश्चेदिराजस्याकृतप्रायश्चित्तस्य कथमिव ब्रह्मप्राप्तिरभूदित्याशङ्क्य तत्रापि प्राचीनसुकृतवशादन्ते परब्रह्मकृष्णाकारावलोकनादेव सर्वप्रायश्चित्तादपवर्गं प्राप्तवानिति सुसङ्गतमेतत्। उक्तमिदमाचार्यैरेव कृष्णावतारकाव्ये (यादवाभ्युदये)-

'सुकृतेन पुराकृतेन चैद्यः प्रतिपक्षप्रकृतिर्विलीनवैरः।
क्षणमद्भुतकृष्णरूपदर्शी शिथिलाकृष्टशिलीमुखोऽवतस्थे ॥'

---

असुरयोनौ वृत्रनाम्ना लब्धजनिः, इन्द्रेणापराजितोऽपि तन्मूलमेव तदायुधेन युधि मरणं प्रार्थ्य लब्ध्वा तं देहं विसृज्य मुक्तिमापेति श्रीभागवते 6-12-18. वृत्तम्। आदिना गजेन्द्रादिग्रहणम्। पाण्ड्यो द्रमिडसत्तमः इन्द्रद्युम्नो नाम राजा कदाचिदाराधनकाले गृहीतमौनोऽच्युतमर्चयन् अकस्मादागतसपरिवारागस्त्याहणकर्माप्रवृत्तस्तेनैव मत्तो गजो भवेति शप्तः ग्राहग्रहणकालप्रार्थितजगन्मूलहरिकरकमलस्पर्शापनोदितसर्वक्लेशो मुक्त इति च तत्रैवाष्टमे। अतो भक्तानां साक्षात्कृततत्त्वानामपि ब्रह्मविदपचारफलानुभवोऽपरिहार्य इति दृष्टम्। ननु तर्हि चेदिराजः शिशुपालो जन्मत्रयानुवृत्तनिरन्तरापराधः सद्यः सिद्धिमवाप। स यदि पूर्वमुपायनिष्ठो नासीत्, न सिद्धेरवसरः। यदि निष्पन्नोपायः, तस्य तदनन्तरानुस्यूतापराधफलानुभवः कथं नासीत्। तेनोत्तराघं बुद्धिपूर्वमपि विद्यावाध्यमिति ज्ञायत इति शंकायामाह नियतिविभवत इति। एतद्वृत्तमपि श्रीभागवते (8-12.)। सनकादिशापात् विष्णुलोकद्वारपालकयोः जयविजययोरासुरजन्मत्रयेणाच्युतापराधननं कृत्वा तदन्ते पूर्वस्थानं प्राप्तव्यमिति नियतिरासीत्। तद्बलात् तदवसाने पूर्वस्थानप्राप्तिः। कृतापराधपरिहारः कथमिति चेत्—'प्रायश्चित्तान्यशेषाणि—कृष्णानुस्मरणं परम्'' इति वचनसिद्धप्रायश्चित्तं तस्यावसाने प्रीतिरूपापन्न श्रीकृष्णनिरन्तरदर्शनस्मरणरूपं निष्पन्नमिति भाव्यम्। स विष्णुलोकं गत्वा वा भगवतो धुरि प्रपद्य प्रायश्चित्तमनुतिष्ठतु, अनुभवतु वा तत्फलमपीति किं तेन। परमपुरुषप्राकृतलोकरूपस्थानप्राप्तिस्तु तस्य नियतिसिद्धा। आदिना तत्सहभूनो देववधकः पूतनादयश्च गृह्यन्ते। ननु, आप्रयाणात् तत्रापि हि दृष्टमिति सूत्रेण विद्यानिष्ठस्याऽऽयुरवसाने मोक्षप्राप्त्यवगमात् कथमेवं वृत्रादिजन्मान्तरमित्यत्राह अद्येति। आप्रायणादिति पाठे आयुरवसाने इति ज्ञायेत। आप्रयाणादिति पाठे तु मुक्त्यर्थप्रस्थानपर्यन्तमित्यर्थस्यैवोक्त्या तज्जन्मावसान एवेति नियमो न लभ्यते। वस्तुत आप्रायणादिति पाठेऽपि तप्रतत्र प्रेत्येति पदस्येव चरमदेहत्याग एवार्थो वाच्यः। यावदधिकारसूत्रम्, भोगेनत्वितरे इति सूत्रश्चानुसंधेयम्। अतो मुनिः बादरायणः इह शारीरके अद्यैव भवत्वारम्भजन्मन्येव, यदि प्रारब्धं न शिष्टम्, यदि तु शिष्टमस्ति तदा अन्यदा जन्मान्तर एव तदवसाने मुक्तिं मन्यते। एवं तर्हि उत्तरपूर्वाघाश्लेषविनाशौ कदेति चेत्-उत्तराघाश्लेषस्योक्तत्वादेव प्रारब्धशरीरावसाने इति वक्तुं न शक्यते। तदुत्तरमघप्रसक्त्यभावात्। अतोऽन्तिमप्रत्ययात्सिद्धिनं सौत्रतदधिगम-

इति । तदिदमाह—नियतिविभवत इति । अस्तु सिद्धिः, अथाप्यत्रैव वा कालान्तरे वा सिद्धिरित्याशङ्क्य प्राचीनकर्मानुरूपभगवत्संकल्पानुविधानेनानियमेन फलसिद्धिं किल भगवान् बादरायणो मन्यत इत्याह—अद्येवेति ॥ ४६३ ॥

१३१ ॥ अथ इतराधिकरणम् ॥ ४-१-८ ॥

सूत्रम्—इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥

(४६४) धर्मस्याश्लेषनाशौ न हि परभजनानुग्रहेणोपपन्नौ
तस्याघत्वप्रसङ्गाच्च ; श्रुतिरपि च परं पापनिर्मुक्तिमाह ।
भोगैस्तत्पुण्यनाशोऽस्त्विति यदि, न ; यतः काम्यमप्यस्य पापम्,
तस्मिंस्तल्लक्ष्मसिद्धेः ; न सुकृतमिति च श्रूयते पाप्मतास्य ॥ ३३ ॥

'पूर्वं पापस्याश्लेषविनाशावुक्तौ; अधुना सुकृतस्याप्यश्लेषविनाशावुच्येते' इति सङ्गतिर्भाष्योक्ता, तदत्राऽऽतिदेशिकी सङ्गतिः । तदर्थविचारस्तु—उत्तरपूर्वसुकृतयोरश्लेषविनाशौ किं सम्भवतः, नेति । किं, 'पापं कर्म न श्लिष्यते', 'सर्वे पाप्मानः प्रदूयन्ते' इति वाक्यद्वयं सुकृतदुष्कृताश्लेषविनाशपरम्, उत दुष्कृतमात्राश्लेषविनाशपरम् । किमत्र पापकर्मशब्दो निषिद्धपरः, उत विद्याविरोधिफलकर्मपरः। 'सर्वे पाप्मानः' इति वाक्यं किं पाप्मशब्दस्य विद्याविरोधिफलकर्मपरतामवगमयति, नेति । अत्र पूर्वपक्षमाह—धर्मस्येति । परभजनानुग्रहेणानुकूलस्य धर्मस्याश्लेष(वि)नाशौ नैवोपपन्नौ ।

---

शब्दार्थः । एवमनन्तरसूत्रे पाते इति पुण्यविशेषासंबन्धस्य शरीरपाते कथनात् अन्यकर्माश्लेषविनाशौ प्रागेवेति ज्ञातम् । अतस्तदधिगम इति दर्शनसमानाकारत्वादिरूपयावद्विशेषपर्यवसानमावश्यकम्, तावद्विशेषविशिष्टवेदनसंपत्त्युत्तरक्षणे इत्यर्थः । तदधिगमसूत्रं न तत्कालविशेषकथनार्थं प्रवृत्तम् ; किं तु अश्लेषविनाशयोर्वास्तवत्वमुपायफलत्वमस्तीति स्थापनार्थेव । तत्रोत्तरपदस्याधिकाधकस्य पूर्वपदात् प्रागेव प्रयोगे कर्तव्ये अन्यथाप्रयोगस्य यत् प्रयोजनं वक्तव्यम्, तदधस्तात् दर्शितमेव । विशदमिदं भाष्यार्थदर्पणे । तथा अश्लेषविनाशविषये वक्तव्यविस्तरोऽपि तत्र द्रष्टव्यः ॥ ४६३ ॥

३३. ननु, 'नाभुक्तं क्षीयते कर्म' इति पूर्वपक्षस्यैकरूपत्वात् एकेनैव सूत्रेण, 'तदधिगम उत्तरपूर्वकर्मणोरश्लेषविनाशौ' इति कृतेन पुण्यविषयेऽपि वक्तव्योक्तिसंभवात् किमिति तत्र घशब्दघटनेन पुण्यविषये पृथक् सूत्रणमिति शंकानुवादाय विशेषशंकां दर्शयति धर्मस्येति । 'सुकृतदुष्कृते धूनुते', 'पुण्यपापे विधूय' इति उभयनिवृत्तेरुक्तत्वात् परविद्यया तदश्लेषविनाशावपीत्ययुक्तम् । 'सर्वे पाप्मानः प्रदूयन्ते', 'पापं कर्म न श्लिष्यते' इति पापविषय एव विशिष्य सामर्थ्यदर्शनात् । युक्तिश्च—परभजनं हि पुरुषस्यानुग्रहाय-आनुकूल्याय भवति, न तु निग्रहाय । धर्मो हि विद्यार्थमपि विधीयमानत्वात् इष्टहेतुरेव भवेत् । अतः परभजनानुग्रहेण—भक्त्युपकारेणोपलक्षितस्य धर्मस्य परभजनानुग्रहेण परभक्तिसामर्थ्येन पूर्वोत्तरधर्माश्लेषविनाशौ नोपपन्नौ न युक्तौ । अथ बाधकयुक्तिमाह तस्येति । न च स्वर्गादेर्विद्वदनिष्टत्वात् अनिष्टसाधनत्वरूपमघत्वमिष्टमिति वाच्यम् ; भक्त्यर्थधर्माणामप्यर्थक्रियकायक्लेशरूपानिष्टसाधनत्वादधर्मत्वापत्तेः । अतः स्वसाध्येष्टाधिकानिष्टसाधनत्वे स्यादधर्मत्वम् । सुरापानादि हि प्रवर्तक-

अनुपपत्तौ हेतुमाह—तस्येति। न हि सर्वलोकविदितस्य धर्मस्य पापत्वमुपपद्यते। तदा पुण्यपापव्यवस्थानुपपत्तिप्रसङ्गात्। किञ्च श्रुतिरप्याह—अध्यात्मवित् पुण्यफलं सकलमप्यनुभूय पश्चादपवर्गं प्राप्स्यतीति। तदिदमाह—भोगैरिति। तदेतत् प्रतिक्षिपति—नेति। तत्र हेतुमाह—यत इति। अस्याध्यात्मविद: काम्यमपि पापमेव। ननु काम्यस्य सुकृतस्य पापत्ववचनं साहसमेव। न हि काम्यं कर्माऽऽचरतोऽपि कर्मठान् पापिन इति वदन्ति प्राज्ञा:। तेन काम्यस्य कर्मण: पापत्वमतिसाहसमेवेत्याशङ्क्य परिहरति—तस्मिन्निति। लोके हि सर्वेन यस्मिन् यल्लक्षणं दृश्यते, तदेव तच्छब्देन व्यवह्रियते। गवादिशब्दा: घटादिशब्दाश्च तत्तल्लक्षणानुरोधेन व्यवह्रियन्ते विद्वद्भि:। अत्रापि काम्येषु कर्मस्वधिकारिभेदेन कालभेदेनावस्थाभेदेन पापमेव पुण्यं, पुण्यमेव पापमिति नियमस्य सर्वलोकप्रसिद्धत्वात् काम्यं कर्म अध्यात्मविदां पापमेव। अपवर्ग एव खल्वध्यात्मविदामभिमत:। तद्विरोधी हि स्वर्गाद्युपभोग: अत एव स्वर्गादिर्नरकतयोच्यते नारायणपराणाम्। 'एते वै निरयास्तात स्थानस्य परमात्मन:', 'अर्थकामपरा यूयं नारायणपरा वयम्' इत्यादीनि वचनानि अत्र प्रमाणम्। न केवलं लक्षणादेव काम्यकर्मणां पापत्वमस्माभिरुच्यते, 'न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते' इत्यादिश्रुतिरपि काम्यकर्मण: पापत्वं कण्ठोक्त्या प्रकटयतीति दर्शयति—न सुकृतमिति॥

(४६५) पुण्यं विद्यानुकूलं यदिह, सफलता तस्य विद्याप्रदत्वात्
तस्मां यत्नोपयुक्तं, तदपि दुरितवत् बन्धकत्वेन वार्यम्।
कारागारोपरुद्धे निगलयुगलत: सार्वभौमस्य मृत्ये
हैमं कार्ष्णायसञ्च प्रसदनसमये भञ्जनीयं सहैव॥ ३४॥

अत्र पापवत् पुण्यस्यापि विरोधिफलसाधनत्वेन निरसनीयत्वात् राजभृत्यनिरोधकसौवर्णाऽऽयसनिगलद्वयन्यायेन पुरुषार्थप्राप्तिदशायां सर्वस्यापि भञ्जनीयत्वमेवेत्याह—पुण्यमिति। द्विविधं

---

क्षुद्रफलाधिकनरकादिसाधनत्वादधर्म:। यागादेश्च तत्साध्यस्वर्गाधिकानिष्टासाधनत्वात् कथमधर्मत्वमिति। एवञ्च श्रुतिरपि विशिष्य पापग्रहणात् पुण्यनिवर्तकत्वोक्तिबाधिकेत्याह श्रुतिरपीति। पापनिर्मुक्ति परं=तन्मात्रम्। तर्हि पुण्यविधूननाभावे मुक्ति: कथमित्यत्राह भोगैरिति। "योऽर्थज्ञ इत् सकलं भद्रमश्नुते स नाकमेति ज्ञानविधूनपाप्मा" इति च पाप्ममात्रनाशात् पुण्यफलं भद्रं सर्वमनुभूय मोक्षमेतीत्याहेवेत्याशय:। एवं पूर्वपक्षम् इतियदीत्यनूद्य निरस्यति नेति। हेतुमाह यत इति। तस्मिन् तल्लक्ष्मसिद्धे: निषेधश्रुति विषयत्व-मानान्तराप्राप्तानिष्टसाधनताकत्वादेरिव स्वदुक्तरूपस्यापि सत्त्वात् स्वर्गाद्यर्थतया काम्यं कर्म प्रकृतस्य विदुषो विषये पापमेव हि। तत्साध्यं स्वेष्टं यत् शिष्टत्व-पंक्तिपावनत्व-वैदिकगोष्ठीगण्यत्वादि तदधिकस्वर्गादिरूपानिष्टसाधनत्वात्। एवं लक्षणसत्त्वं श्रुतिरेवाभिप्रैति, 'न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते' इति श्रुतौ सुकृतदुष्कृतोभयस्य सर्वशब्देन क्रोडीकारात् तत्र पाप्मत्वावगमात्। एवञ्च 'पाप्मान: प्रदूयन्ते', 'पापं कर्म न श्लिष्यते' इत्यादिकमुभयविषयकम्। 'स एव धर्म: सोऽधर्मस्तं तं प्रति नरं भवेत्' इति वचनात् एकस्यैवाधिकारिभेदेन धर्मत्वमधर्मत्वञ्चाविरुद्धम्। भक्त्युपकारकधर्मग्रहणं मा भूदिति पुण्यमित्यनुक्त्वा पापशब्देनैवोभयोक्ति:॥ ४६४॥

३४. काम्यमिति प्रयोग: विद्यानुकूलधर्मवारणार्थं इति ज्ञापयन् उक्तं काम्यस्य निरसनीयत्वमेव

हि पुण्यम्-विद्यानुकूलं केवलोपभोगार्थञ्चेति। तत्र विद्यानुकूलं कर्म विद्याप्रदानेन चरितार्थं भवति। विद्यायामनुपयुक्तं यत् कर्म काम्यम्, तत् दुरितवत् वारणीयमित्याह-तस्मामिति। दुरितं हि दुःखहेतुः कदाचिद्वैराग्यहेतुरपि भवति ; काम्यं कर्म सुखहेतुत्वात् तदाशाभिवृद्धिमुखेन संसाराभिवृद्धिमेव करोतीति पापादपि काम्यं कर्म विशेषेण परित्याज्यमिति भावः। पुण्यपापयोः परिहरणीयत्वं लोकदृष्टदृष्टान्तन्यायेनोपपादयति—कारागारेति। इदं तु पामराणामपि प्रतीत्यर्थम् ॥ ४६५ ॥

(४६६) काम्यं नेच्छेत् विरक्तो, यदि किल कुरुते रागयोगात् फलेत् तत्;
नाधीपूर्वञ्च काम्यं किमपि; न च दिशेद् बन्धमज्ञातधर्मः।
विद्यार्थैर्लि(लुं)प्यतेऽतः किमितरदिति चेन्नाधिकैः सान्तरायैः
अन्यार्थैर्मोहजैः काप्यनुतपनवतो बन्धुजैश्चास्त्वलेपः ॥ ३५ ॥

इति इतराधिकरणम् ॥ १३१ ॥

अत्राध्यात्मविदामलेपविषयं सुकृतं न सम्भवतीत्याक्षिप्य प्रकारभेदेन सम्भवतीत्युपपादयति—काम्यमिति। अयमत्राक्षेपकस्य भावः—अध्यात्मवित् विरक्तत्वात् काम्यं कर्म नेच्छेत्। अत एव तत्र करोति। तस्मादकृतेन कर्मणा तावदलेपो न वाच्यः। ननु विरक्तोऽपि वासनावशात् कदाचित् काम्यं कर्म कुर्यादित्याशङ्क्य, यदि कुर्यात्, तत् कर्म फलं प्रयच्छेदेव। तेन फलेन विनष्टत्वात् तेनापि कर्मणा अलेपो न वाच्य इत्याह—यदि किलेति। तर्हि बुद्धिपूर्वकं काम्यमस्ति; तेनालेप

---

दृष्टान्तदर्शेन द्रढयति पुण्यमिति। विद्याप्रदत्वम् सत्त्वविवृद्धिमुखेन विद्योत्पादकत्वं नित्यनैमित्तिकरूपस्य धर्मस्य। भकृत्यर्थापेक्षितवृष्ट्यन्नाद्यर्थानुष्ठितो धर्मश्च तत्फलमुखेन विद्योत्पादक एव। एवं विद्यायामनुपयुक्तं यत् तत्। अपिशब्दो दुरितसमुच्चये। पुण्यत्वेऽपीत्यर्थे वा। नोपयुक्तमित्यनेन स्वर्गाद्यर्थमिव विद्यार्थानुष्ठितेषु कर्मसु चानपेक्षितत्वाददत्तफलं नित्यनैमित्तिककाम्यरूपं त्रिविधमपि गृह्यते। बन्धकत्वेन संसारहेतुत्वेन। दृष्टान्तसारूप्याय बन्धकेत्युक्तिः। निगलयुगलतः स्वर्णलोहशृङ्खलायुग्मेन कारागारे उपरुद्धभृत्यगतमुभयमपि भञ्जनीयमेव। हैमं हि हेमत्वेन भृत्यस्येष्टमेव। अत एव तदपहरणादेव हि बन्धः। हत्यादिपापान्तरस्यापि भृत्यभिन्नेनापि कर्तुं शक्यत्वात् भृत्यपदमुपलक्षणम्। भृत्यशब्दप्रयोगो दार्ष्टान्तिके सर्वेषां स्वामिभृत्यत्वात् दृष्टान्ते तत्सारूप्यचिन्तया। अत एव बन्धनार्थकलत्रकालावसाने इत्यनुक्त्वा प्रसदनसमये इत्युक्तिरपि ॥ ४६५ ॥

३५. सूत्रे इतरस्यापीत्येतावदुक्तावपि पूर्वसूत्रादश्लेषविनाशाविति पदं लभ्यत एव। विशिष्य च असंश्लेष इत्यप्युक्तम्। तेन विनाशमात्रानुषंग इति न मन्तव्यमिति सिद्धम्। तत्र विनाश्यं सुकृतं किमिति पूर्वश्लोके दर्शितमासीत्। अश्लेषविषयस्तु न लक्ष्यत इति शंकित्वा परिहरति काम्यमिति। अश्लेषो ह्युत्तरकाम्यविषयः। विरक्त उत्तरकाले फलान्तरार्थं कर्म न कर्तुमिच्छेत्। यदि कदाचित् फलस्यावर्जनीयापेक्षिततया कर्तुमिच्छया कर्म काम्यं कुर्यात्-तर्हि फले रागात् तत् फलेत्=फलं जनयेदिति तत्फलाश्लेषो दुर्वचः। तदश्लेषश्चेन्नियतः, तर्हि तत्रैवारम्भेतेति। ननु तर्हि अबुद्धिपूर्वस्य काम्यस्याश्लेषोऽस्तु, यथा पापस्य प्रामादिकस्येत्यत्राह नेति। काम्यं हि नाम फलकामनाधीनेच्छाविषयः

उच्यत इत्याशङ्क्य तदपि निराकरोति—नाधीपूर्वमिति। काम्यं चेत् बुद्धिपूर्वकमेव; कामनाया बुद्धिविशेषजन्यत्वात्; तेनाबुद्धिपूर्वकत्वे काम्यत्वं न स्यादित्यर्थः। तर्हि ज्ञातान्यज्ञातानि च सुकृतानि सन्ति; तत्राज्ञातसुकृतैरेवालेप उच्यत इत्याशङ्क्य तदपि परिहरति—न चेति। अज्ञातधर्मो हि काम्यं फलं न दिशति; फलोद्देशेनानुष्ठानाभावात्। तर्हि विद्यार्थैर्धर्मैरेवालेप उच्यत इति चेत्—तदपि नेत्याह—विद्यार्थैरिति। विद्यानिष्पत्त्या(?) लुप्तत्वात् विद्यार्थानि कर्माणि विद्यानिष्पत्त्यैव दत्तफलान्येव। अत इतरत् कर्म नास्ति, केनालेपः कथ्यत इत्याह—अत इति। अत्रोत्तरमाह—नेति। अयमर्थः-विद्यार्थमनुष्ठितानि कर्माणि विद्याफलमदत्त्वाऽधिकान्यवतिष्ठन्ते। वीतरागत्वेऽपि वासना-वशादन्यार्थतया मोहतोऽनुष्ठितानि सान्तरायत्वाददत्तफलानि कर्माण्यपि कानिचिदवतिष्ठन्ते। अध्यात्मविदि स्नेहात् बन्धुभिरनुष्ठितानि सुकृतानि बहून्यवतिष्ठन्ते, तानि सुकृतान्यपि तस्य दुष्कृतान्येव। तस्मादनुतापवतस्तस्याध्यात्मविदस्तैरलेप उच्यत इत्यलेपवचनस्यावकाशोऽस्तीति(त्यर्थः) ॥ ४६६ ॥ इति इतराधिकरणम् ॥ १३१ ॥

## १३२ ॥ अथ अनारब्धकार्याधिकरणम् ॥ ४-१-९ ॥

सूत्रम्—अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥

**(४६७) नश्यत्वारब्धकार्यं परविदि दुरितं; न ह्यधीतो विशेषः;**
**सर्वे पाप्मान इत्यप्यभिहितमिति चेत्, नोपलम्भादिबाधात्।**

---

कर्म। कामना च ज्ञानजन्या। अतः काम्यमधीपूर्वञ्चेति व्याहतमेतत्। नन्वज्ञातसुकृतमिष्यते; तत्फलाश्लेषोऽस्तु; तत्राऽऽह न चेति। अज्ञातसुकृतं यदृच्छासुकृतं प्रासङ्गिकसुकृतमित्यादीनां हि भगवान् फलकामनापूर्वकत्वाभावात् न संसारबन्धरूपं फलं दातुमर्हति। अतो मोक्षोपयोगिनां तेषां नाश्लेषः। नन्वग्निहोत्रादिनित्यनैमित्तिकसुतरकर्मानेकमस्त्येव; अस्तु तदश्लेष इत्यत्राह विद्यार्थैर्लिप्यते इति। नित्यं वाऽन्यद्वा विद्यामुद्दिश्य क्रियमाणं यद्यत् तेन तेन लिप्यत एव नरः। तत्फलभूतविद्याश्लिष्टत्वात्। अतो नाश्लेषः। अत लुप्तपदं चिन्तामणिगतमनुसृत्य लुप्यत इति पाठकल्पनया विद्यार्थानि कर्माणि विद्याप्रदानेन क्षीणानीति न तदश्लेष इत्यर्थं वर्णयन्ति; तदा भावेप्रयोगोऽयम्। तथाचाश्लेषविषयो धर्मो न लक्ष्यत इति शंका। निरस्यति इति चेन्नेति। "अतोऽन्याऽपि ह्येकेषामुभयोः" इत्यादि वक्ष्यमाणसूत्रमभिप्रेत्य प्रत्याह अधिकैरिति। अनेन तत्सूत्रद्वयमत्र सुसंगतमिति सूचितम्। एतावदेव विद्यार्थमपेक्षितमित्य-निर्धारणात् कदाचित् तदर्थकृतेषु कानिचिदधिकतया शिष्येरन्। कानिचित् अन्तरायस्य प्रतिबन्धक-स्योपनिपातात् अजनितफलानि स्युः। अन्यार्थैर्मोहजैरिति। विद्यानुपयोगिफले विद्योपयोगिफलत्व-भ्रान्त्या कृतानि वस्तुगत्याऽन्यार्थत्वात् अदत्तफलान्येव; अस्मानपेक्षायामपि बन्धवः स्वयमेवैतदर्थं किमपि कुर्युः। तस्य फलमीश्वरः कदाचित्, अनपेक्षितमिति न दद्यात्। एवम्प्रायाणि बहूनि सुकृतानि भवन्तीति फलान्तरमीतस्यानुतापवतः तैरलेपो विवक्षित इत्यर्थः। परंत्वयमश्लेषः प्रामादिकपापानां यथा तदुत्पत्तिकाल एव, न तथा; किंतु कदाचिदस्मिन् विदुष्येव केषाञ्चिदुपयोगः स्यादिति बुद्ध्या शरीरपातं यावत् प्रतीक्ष्यैवाश्लेषमापादयतीश्वर इति असंश्लेषः पाते तु इत्युक्तमित्यवसेयम् ॥ ४६६ ॥

सद्विद्या 'तस्य तावच्चिर'मिति च वदत्यक्षसंरंभाऽऽगमज्ञाः
जीवन्मुक्त्यादिशब्दोऽप्युपचरणपरो मोहितास्तेन मन्दाः ॥ ३६ ॥

अत्र सङ्गतिर्भाष्ये, 'ब्रह्मविद्योत्पत्तेः पूर्वोत्तरभाविनोः सुकृतदुष्कृतयोरश्लेषविनाशावुक्तौ। ततः पूर्वभाविनोः सुकृतदुष्कृतयोः किमविशेषेण विनाशः, उतानारब्धकार्ययोरेवेति विशये' इति। तदर्थविचारस्तु—किं पूर्वे सुकृतदुष्कृते अविशेषेण नश्यतः, उतानारब्धफले। किं, 'सर्वे पाप्मानः' इति सर्वशब्दस्वारस्यानुरोधो न्याय्यः, उत, 'तस्य तावत्' इति विलम्बश्रुत्यनुरोधः। किं कुलालचक्रभ्रमवत् कर्मविनाशेऽपि संस्कारेण शरीरधारणमुपपद्यते, नेति। किमीश्वरप्रीत्यप्रीतिव्यतिरेकेण संस्कारकल्पनायां प्रमाणमस्ति, नेति। अत्र पूर्वपक्षमनुवदति-नश्यत्विति। अनारब्धकार्यवत् आरब्धकार्यमपि दुरितं नश्यत्येव ; तत्र विशेषाभावादिति हेतुमाह—न हीति। अनारब्धकार्यमेव नश्यति, आरब्धकार्यं तु न नश्यतीति विशेषो न ह्यधीत इत्यर्थः। कथमनधीत इत्याशङ्क्य साधारण्येनाध्ययनमाह— सर्वे इति। 'पाप्मानः सर्वे' इति हि साधारण्येनोक्तत्वादुभयमपि नश्यतीति वक्तव्यमिति। तमिमं पूर्वपक्षं प्रतिक्षिपति—नेति। तत्र हेतुमाह—उपलम्भादीति। प्रत्यक्षबाधादनुमानबाधादागमबाधाच्चेत्यर्थः। उपलभ्यते हि ब्रह्मविदामपि सुखदुःखानुवृत्तिः। अन्यथा तदनुकूलप्रवृत्तिनिवृत्त्यादिकं न स्यादित्यनुमानबाधः। आगमबाधोऽपि, 'तस्य तावदेव चिरम्', 'स खल्वेवं वर्तयन्' इत्यादिवचनबाधः। आगमबाधमेव विशेषतः प्रकटयति—सद्विद्येति। असंरंभागमज्ञा इति—

३६. पूर्वोत्तरकर्माश्लेषविनाशौ पापपुण्योभयविषयावित्युक्तम्। पूर्वञ्च कर्म संचितं द्विविधम्—आरब्धकार्यमनारब्धकार्यञ्च। तदुभयं नाश्यम्, उतान्त्यमात्रमिति विशये पूर्वपक्षमाह नश्यत्विति। आरब्धकार्यम्—आरब्धकार्यमपीत्यर्थः। यत् फलप्रदानार्थं सञ्चितात् विभज्य स्थापितम्, तदपि। प्रारब्धकार्यमेव कर्म प्रारब्धमित्यपि व्यवह्रियते। विभक्तोऽयं कर्मव्यूहः एतज्जन्मप्रदानेन विनश्यतीति न व्यवस्था ; किंतु एकमनेकं वा सप्ताष्ट वा दश पञ्चदश वेति यथायथम्। दुरितमिति उभयमाहि। विशेषः अनारब्धकार्यकमात्रनाश इत्येवंरूपो नाधीतः। उभयसंग्रह एव गमकमस्तीत्याह सर्वे इति। नन्वेवं भगवतः सर्वकर्मफलप्रदानात् विरतत्वे समनन्तरक्षण एव मरणं स्यादिति कथमियं शंकेति चेत्—सर्वकर्मनाशेऽपि चक्रभ्रमणवत् संस्कारबलादेवाऽऽमरणं देहाद्यनुवृत्तिर्भवत्विति पूर्वपक्षी मन्यते। पूर्वपक्षं निरस्यति नेत्यादिना, उपलम्भबाधः उत्तरक्षणे शरीराद्यनाशतः सिद्धः। न च प्रत्यक्षाविरोधाय एतज्जन्मावसानपर्यन्तोपयोगिकर्मव्यतिरिक्तसर्वनाश इष्यतामिति शंक्यम् ; प्रत्यक्षाविरोधस्येव प्रमाणान्तराविरोधस्याप्यादर्तव्यत्वात्। किञ्च संस्कारोऽयं शारीरो वा जैवो वा परमात्मसंकल्पो वा। प्रयत्नपूर्वकदण्डभ्रमणकारितचक्रभ्रमणानुवृत्तिमूलकसंस्काराधीनभ्रमणस्येव विदुषो यावज्जीवशरीरादिव्यापारस्य ज्ञानेच्छाप्रयत्नानधीनत्वाभावात्, नवनवव्यापारबाहुल्याच्च पूर्वसंस्काराधीनत्वस्य दुर्वचत्वात्। अत एव ज्ञानादिभिरन्यथासिद्ध्या जैवसंस्कारस्य कल्पनमपि व्यर्थम्। परमात्मसंकल्पपक्षे च नामान्तरेण कर्मैवोक्तमिति न सर्वकर्मोच्छेदसिद्धिः। सदिति। न ज्ञानोदयकाल एव विमोक्षः; अपितु कर्मक्षयपर्यन्तं विलम्ब इति, 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' इति सद्विद्यासंदर्भो वक्ति। आगमज्ञा आपस्तम्बादयश्च, 'बुद्धे क्षेमप्रापणं तत् शास्त्रैर्विप्रतिषिद्धम्' इति बहुशास्त्रविरोधं दुःखाद्युपलम्भात् प्रत्यक्षविरोधं च प्रदर्श्य

पराशरपाराशर्यादयः, 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' इति वचनसहस्रैर्ब्रह्मविदामपि भगवदाराधनरूपेण विद्याङ्गकर्मणामवश्यकर्तव्यतामस्मरन्। तर्हि, 'तमेवं विद्वान् अमृत इह भवति' इति जीवन्मुक्तिवचनं कथं स्यादित्याशङ्क्याह—जीवन्मुक्तीति। इहामृतत्ववचनममृतप्रायत्वादौपचारिकमित्यर्थः। तर्हि मृषावादिनो जीवन्मुक्तिमेवात्यादरेण प्रतिष्ठापयन्ति, तत् कथमिति वदतस्तु शिष्यस्य कस्यचित् गतानुगतिकस्योत्तरमाह—मोहिता इति। श्रुतिवाक्यस्याभिप्रायमजानाना मन्दा जीवन्मुक्तिवादं मौढ्यादेव प्रलपन्तीत्यर्थः॥ ४६७॥

(४६८) रोगाद्यारम्भकाणां प्रशमनविषयः सन्ति दानार्चनाद्याः
प्रत्येतुः स्वावतारेष्वपि विभुरपुनर्जन्मतामप्यगायत्।
तस्मादारब्धकार्ये फलनियतिवचो दुर्घटं भाति; मैवम्
प्रायश्चित्तोज्झितानां ननु फलनियतिः सूत्रकाराद्यभीष्टा॥ ३७॥

इत्यनारब्धकार्याधिकरणम्॥ १३२॥

अत्र कश्चिच्चोदयति—'ननु प्रारब्धकार्ययोः पुण्यपापयोर्भोगेन विनाश इति भवद्भिरुच्यते। तन्नोपपद्यते; कृतप्रायश्चित्तानां भोगाभावात्' इति। तदिदमाह—रोगादीति। लोके हि प्रारब्धानामपि पापानां भोगमन्तरेण विनाशो दृश्यते, 'जन्मान्तरकृतं पापं व्याधिरूपेण बाधते। तच्छान्तिरौषधैर्दानैः जपहोमार्चनादिभिः॥' इति। किं च, 'जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः। त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन॥' इत्यवताररहस्यवेदिनां प्रारब्धशेषानुभवाभावेनापवर्गप्राप्तिरुच्यते; तत् कथं प्रारब्धस्योपभोग इति। तदप्याह—प्रत्येतुरिति। स्वावतारादिकं प्रत्येतुरित्यन्वयः। तस्मादारब्धकार्ये कर्मणि फलनियतिवचो दुर्घटं भातीति शङ्कान्वयः। तत्रोत्तरमाह—

---

पश्चादेव मुक्तिमुपपादयामासुः। जडभरतादीनां मृगद्विजरूपानेकजन्मानन्तरमेव मुक्तिं सस्मरुश्च। अत्र चिन्तामण्युक्तं च द्रष्टव्यम्। तर्हि, 'अमृत इह भवति', 'अत्र ब्रह्म समश्नुते' इत्यादिवाक्ये अत्रैव मुक्त्युक्तिः कथमिति चेत्—अत्रेति भूमिविवक्षा वा शरीरविवक्षा वा। आद्ये कथं जीवन्मुक्तिपरत्वम्, 'आध्मातो मृतः शेते' इत्येतदनन्तरत्वे जीवन्मुक्तित्वासंभवात्। अन्त्ये जीवत्त्वमुक्तत्वयोर्व्याहतत्वात् उपक्रमस्थजीवत्पदानुरोधेन मुक्तिपदम् अमुख्यार्थबोधनेच्छया प्रयुक्तमिति। रागद्वेषादिमुक्तिर्वा संचितकर्मविनाशो वा विवक्ष्यत इति। मन्दास्तु अद्वैत्येकदेशिनः सांख्यवासनावासितान्तःकरणाः तेन जीवन्मुक्तिबोधिशब्दश्रवणमात्रेण मोहिताः विपरीतार्थग्राहिण आसन्निति तत् उपेक्ष्यम्॥ ४६७॥

३७. ननु प्रारब्धकार्यं भोगेनैव क्षपणीयमिति नियमो न युक्त इति शंकित्वा सूत्राशयं दर्शयति रोगेति। रोगो मौर्ख्यं दारिद्र्यं पुत्रादिहानिः शत्रुपीडेत्यादिकार्यारम्भकपापानां दानार्चनमन्त्रजपादिभिः परिहारस्य शास्त्रोक्तत्वात् न प्रारब्धफलस्य नियमेनानुभोक्तव्यता। तथा गीतायां विभुर्भगवान् अगायत्, 'जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः। त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन' इति तदवतारादिरहस्यविषयकप्रत्ययवतः जन्मान्तरारम्भकप्रारब्धकर्मक्षयोऽपि भवतीति। प्रत्येतुरिति तृजन्तम्। अतः अवतारादीति द्वितीयान्तस्य तस्यान्वयः। एवं, 'साध्यभक्तिस्तु सा हन्त्री प्रारब्धस्यापि भूयसी' इत्यादिकमप्यनुसंधेयम्। तस्मात् भोगेन तु क्षपयित्वेति कथं सूत्रेण फलभोगनियमवचनमिति।

मैवमिति। तदेव विवृणोति—प्रायश्चित्तोज्झितानामिति। अकृतप्रायश्चित्तानां कर्मणां फलावश्य-म्भावः सूत्रकाराभिप्रेतः; न पुनः कृतप्रायश्चित्तानामपि। तेन न कश्चिदपि विरोधः॥ ४६८॥

इत्यनारब्धकार्याधिकरणम्॥ १३२॥

## १३३॥ अथ अग्निहोत्राद्यधिकरणम्॥ ४-१-१०॥

सूत्रम्—अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्॥ अतोऽन्यापि ह्येकेषामुभयोः॥ यदेव विद्ययेति हि॥ १६—१८॥

(४६९) श्लेषश्चेदस्य पुण्यैः स तु भवति तदा बन्ध इत्यभ्युपेतं(त्यम्?)

यद्यश्लेषो भवेत् तैः परविदि विफला पुण्यनिष्ठा परस्तात्।

तस्मात् धर्मोऽप्यधर्मक्रमत इह परित्याज्य एवेत्ययुक्तम्;

न स्यात् बन्धाय; विद्याङ्कुरमुपचिनुते ह्यग्निहोत्रादिधर्मः॥ ३८॥

अत्र भाष्ये, "इतरस्याप्येवमसंश्लेषः' इति विद्याबलात् सुकृतस्याप्यसंश्लेष उक्तः। अग्निहोत्रादीनां नित्यनैमित्तिकानां स्वाश्रमधर्माणामपि सुकृतत्वसामान्येन तत्फलस्याश्लेषाद्-निच्छतोऽननुष्ठाने" इति शङ्कया सङ्गतिरुक्ता। तदर्थविचारस्तु—किमग्निहोत्राद्याश्रमधर्मो विदुषः कार्याश्लेषादननुष्ठेयः, उतानुष्ठेयः। किमश्लेषवचनं सर्वसुकृतविषयम्, उत विद्याङ्गाश्रमधर्मव्यति-रिक्तसुकृतविषयम्। किं विद्वत्सम्बन्ध्याश्रमधर्मस्यापि फलं विद्याव्यतिरिक्तम्, उत विद्यैवेति। अत्र पूर्वपक्षमारचयति—श्लेष इति। अस्याध्यात्मविदः पुण्यैरग्निहोत्रादिभिः श्लेषश्चेत्, स तु श्लेषो बन्ध एव भवतीत्यङ्गीकार्यम्। यद्यश्लेषः, तदा परविदि अग्निहोत्रादिपुण्यनिष्ठा निष्फला स्यात्। अतः कारणात् धर्मोऽप्यधर्मक्रमेणैव परित्याज्यः स्यादिति। तदिदं दूषयति–अयुक्तमिति। तत्र हेतुमाह— न स्यादिति। यद्यग्निहोत्रादिर्बन्धाय स्यात्, तदा ह्ययुक्तः। स तु बन्धाय न स्यात्; अपि तु मोक्षस्यो-पकुरुत इत्याह—विद्याङ्कुरमिति। ब्रह्मविद्याङ्कुरम्= अन्तःकरणशुद्धिमुपचिनुते ह्यग्निहोत्रादिधर्म इति। उपकारके प्रतिकूलत्वबुद्धिर्भवतः पापमूलेत्यर्थः॥ ४६९॥

---

परिहरति मैवमिति। भोगबोधिशास्त्रं सर्वं किञ्चिदुपायाविनाशितकर्मविषयकमिति तदधिगमसूत्रप्रभृत्येव सिद्धम्। तथाच भक्तियोगस्य तत्प्रायश्चित्तत्वं नास्तीति, प्रायश्चित्तान्तराकरणे भोगो ध्रुव इत्येव सूत्रकृदाशयः॥

३८. विचारितपूर्वोत्तरकर्ममध्ये पूर्वकर्मविषये विशेषविचारो वृत्तः। अथोत्तरकर्मविषये विशेषविचारः। अत्र भाष्यपूर्वोत्तरपक्षगतिस्वारस्यात् अधिकरणं नित्यनैमित्तिकविषयमेव। अन्यविचारः प्रासंगिकः। तत्र नित्यकर्मणां श्लेषः अश्लेषो वेति विचारः। अश्लेषपक्षे अननुष्ठानं प्रयोजनम्। श्लेष इति सिद्धान्ते अनुष्ठानसिद्धिः। तत्र पूर्वपक्षमाह श्लेष इति पादत्रयेण। श्लेषे दोषसत्त्वादश्लेष इति पूर्वपक्षवाक्यार्थः। श्लेषस्वीकारे यद्यत् नित्यनैमित्तिकविषयेऽपि शास्त्रसिद्धं फलम्, सर्वतच्छ्लेषस्यैव वक्तव्य-त्वात् बन्धो भवेदिति अश्लेष एव परविदि स्वीकर्तव्य इति। एवञ्च परस्तात्=उत्तरत्र, पुण्यनिष्ठा विफला पुण्यकर्मानुष्ठानं तत्कर्तृकं व्यर्थमिति। सिद्धान्तमाह न स्यादिति। अग्निहोत्रादेः परविद्योत्पादनोद्देशेनैवा नुष्ठानात् विद्यांकुरस्यैवाभिवर्धनात् तदतिरिक्तफलस्यानिष्टस्यासंभवात् न बन्धप्रसक्तिरिति। अत्राधिकरणे अतोऽ न्याऽपीत्यादिमूत्रद्वयं इतराधिकरणसंगतमिति तत्रैव सारावली तदर्थं संगृह्णीत इति ध्येयम्॥४६९॥

(४७०) सर्वापेक्षेत्यवोचन्नु परभजने कर्मणामङ्गभावं
भूयो वक्त्यग्निहोत्रेत्यपि तदिति मुधा ह्येकमत्रेति चेन्न ।
विद्याया नैरपेक्ष्यात् तदपरिकरता शङ्किता प्रागपास्ता
श्लेषाभावप्रसक्त्या त्विह पुनरिति तन्नीतिवैषम्यसिद्धेः ॥ ३९ ॥

इत्यग्निहोत्राद्यधिकरणम् ॥ १३३ ॥

अत्र पौनरुक्त्यमाशङ्क्य परिहरति—सर्वेति । 'सर्वापेक्षा' इत्यस्मिन् सूत्रे कर्मणामङ्गभावं परभजने ह्यकथयत्; अधुनापि, 'अग्निहोत्रादि' इत्यनेन तदेवाभिधीयते। तेनोभयोरेकं निरर्थकमिति। तदेतत् दूषयति—नेति । अत्रोभयोः प्रयोजनविशेषाभिधानेन पौनरुक्त्यं परिहरति—विद्याया इति । तत्र हि विद्याया नैरपेक्ष्याभिधानेन सापेक्षत्वमुक्तम् । तदपरिकरता विद्याया निरङ्गत्वाभिधानं सामान्येन प्रागपास्ता । अधुना पुनः सुकृताश्लेषप्रसङ्गे सुकृतत्वाविशेषादग्निहोत्रादीनां परित्याज्यत्वमाशङ्क्य तदेव पुनः प्रतिषिध्यत (प्रतिष्ठाप्यत) इति न पौनरुक्त्यप्रसङ्गः। नीतिवैषम्यसिद्धेः= न्यायप्रवृत्तिप्रकारवैषम्यसिद्धेरित्यर्थः ॥ ४७० ॥ इत्यग्निहोत्राद्यधिकरणम् ॥ १३३ ॥

१३४ ॥ अथ इतरक्षपणाधिकरणम् ॥ ४-१-११ ॥

सूत्रम्—भोगेन त्वितरे क्षपयित्वाऽथ सम्पद्यते ॥ १९ ॥

(४७१) निर्दिष्टाऽस्माच्छरीरादिति नियतिरतो यावदित्यादिशब्दः
कर्म प्रारब्धकार्यं कथयति विदुषस्तच्छरीरान्तमेव ।
मैवं प्रारब्धचैत्र्यात्र तदवधिविधौ व्याप्रियेताऽऽन्यपर्यात्
भूयोदेहस्मृतेश्चान्तिमवपुषि दृढोपास्मसमाप्तेस्तु मोक्षः ॥ ४० ॥

'आरब्धकार्ये पुण्यपापे किं विद्यायोनिशरीरावसाने, उत तच्छरीरावसाने शरीरान्तरावसाने

---

३९. अधिकरणद्वये एकतरवैयर्थ्यमाशंक्य परिहरति सर्वेति । सर्वापेक्षा चेति तृतीयचतुर्थे कर्मणां परोपासनांगत्वमुक्तम् । तदंगत्वञ्च तदर्थत्वम्, तदुद्देशेन विहितत्वम् । इदमेवात्राधिकरणे अग्निहोत्रादीति सूत्रे तत्कार्यायैवेत्युच्यते । तत्कार्यायेत्यस्य परभजनरूपकार्याय; तदर्थमित्यर्थः । अतः अत्र=एतदधिकरणयोर्मध्ये एकं मुधा व्यर्थमिति चेत्—न । युक्तिभेदात् । युक्तिभेद एव नीतिवैषम्यम् । तत्र प्राक् संन्यासिनामग्नीन्धनाद्यनपेक्षावचनात् गृहस्थविषये विद्यां प्रति तेषां=कर्मणाम् अपरिकरता अनंगता शंकिता । इह पुनः अग्निहोत्रादीत्यधिकरणे, क्रियमाणस्याप्यश्लेषात् करणं व्यर्थमिति तदपरिकरतायां युक्त्यन्तरमुच्यते इत्येवं तन्नीतिवैषम्यसिद्धेर्नैत्यन्वयः । तयोरधिकरणयोर्न्यायवैषम्यादित्यर्थः । तन्नीत्यपेक्षयाऽत्र वैषम्यसिद्धेरित्यर्थो वा । सहकारित्वेन चेति सूत्रं पुनरुक्तमिति च न शंकनीयम्; कर्मणां विद्यांगत्वाश्रमांगत्वोभयस्वीकारे नित्यानित्यसंयोगविरोध इति शंकापरिहारार्थं तदिति तत्रैव व्यक्तम्। अत्रापि श्रुतप्रकाशिकायामुक्तम्। तत्कार्यायैवेति एवकारेण सिद्धान्ते विद्योत्पत्तिरूपकार्यव्यतिरिक्तफलश्लेषनिषेधात् श्लेषांगीकारे फलान्तरश्लेषोऽपि स्यादिति अश्लेषपूर्वपक्ष इति ज्ञापितम् ॥ ४७०

४०. आरब्धकार्यं कर्म एकशरीरमात्रेण क्षीयत इति न नियम इति अन्तिमाधिकरणार्थः ।

वैत्यनियमः' इति चिन्तनात् भाष्ये सङ्गतिर्व्यक्ता। तदर्थविचारस्तु—उक्तैव प्रथमचिन्ता। तदर्थमपि विचार्यते—किं, 'तस्य तावत्' इति वाक्यं विद्यायोनिशरीरावसानत्वमवगमयति, उत तच्छरीरमतन्त्रीकृत्य प्रारब्धकर्मफलभोगावसानत्वमवगमयतीति। अत्र पूर्वपक्षं सोपपत्तिकमभिधाय तदन्यथासिद्ध्या प्रतिक्षिपति—निर्दिष्टेति। इत्थं किल पूर्वपक्षी मन्यते—'एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य'इत्यस्मिन् वाक्ये खलु, अस्माच्छरीरादित्युच्यते। तेन विद्यारम्भशरीरावसान एव ब्रह्मप्राप्तिः। तेन, 'यावन्न विमोक्ष्ये' इत्यादिवाक्यं प्रारब्धकार्यं कर्म कथयत्येव, [1]अथापि विदुषस्तच्छरीरान्तमेव तत् कर्म भवति। तस्मात् तस्यापि वाक्यस्य न विरोध इति। तदिदं दूषयति—मैवमिति। तत्र हेतुमाह—प्रारब्धेति। 'यावन्न विमोक्ष्ये' इत्यादिवाक्यात् प्रारब्धानां कर्मणां वैचित्र्यान्न तच्छरीरावसाने मोक्षः। अस्माच्छरीरादिति वचनं बुद्धिस्थचरमशरीरावसानपरमिति मन्तव्यम्। नन्वस्माच्छरीरादिति श्रुतिस्वारस्यं विहाय, तत्र वा अन्यत्र वेत्यक्षरसार्थः किमर्थं कल्प्यत इत्याशङ्क्याह—भूय इति। ब्रह्मविद्यानिष्ठानामेव महर्षीणामनुक्रमादनेकजन्मसम्बन्धवचनस्य महाभारतादिषु महर्षिभिः प्रतिपादितत्वात्। विदुरो हि धर्मदेवता। गाङ्गेयोऽपि वस्वादिष्वन्यतमः। एवं पूर्वमेव ब्रह्मविद्यानिष्ठानां चरमशरीरपर्यन्तं प्रारब्धकर्मानुभूय तदवसाने मोक्षः॥ ४७१॥

(४७२) नन्वत्रास्मादितीदं वितथमिह पदं स्याच्छरीरे; न तु स्यात्
कारागारोपमित्यप्रथनपरतया तस्य साफल्यसिद्धेः।
त्याज्यत्वव्यक्तये हि प्रभुरसुखमिमं लोकमित्यप्यगायत्
भूतावासं विशिषन् इममिति च मनुर्हेयभावं व्यनक्ति॥ ४१॥

नन्वत्रास्माच्छरीरादिति पदस्य साफल्यं सम्यगेव भवता नोक्तमित्याशङ्क्य, तस्य पदस्यात्यन्तसाफल्यमस्तीति समाधातुमारभते—नन्विति। शरीरे विशेषणतया प्रयुक्तम् अस्मादिति पदं वितथ-

एकशरीरेणैव क्षीयत इति पूर्वपक्षमाह निर्दिष्टेति। 'अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य' इत्यत्र अस्मादिति पदं हि प्रकृतशरीरमेवाह। अतस्तेन वाक्येन नियतिः एकमेव शरीरमिति व्यवस्था निर्दिष्टा। अतः=एवं निर्दिष्टत्वात्, 'यावन्न विमोक्ष्ये' इति वाक्यमपि तच्छरीरान्तत्वेनैव कर्म कथयतीति ज्ञायते इति। सिद्धान्तमाह मैवमिति। हेतुमाह प्रारब्धेति। प्रारब्धकार्यस्य कर्मणः चैत्र्यात्=विचित्रत्वात् एकानेकशरीरारम्भकत्वात्। उक्तवाक्यद्वयमपीति शेषः। तदवधिविधौ एकशरीररूपावधिविधाने न व्याप्रियेतः=न तत्परं स्यात्। कुतः? आन्यपर्यात्। परज्योतिरुपसंपत्तिरूपसंपत्तेः कर्मावसानादिपर्यन्तमभावे, ततः सत्त्वावश्यकत्वे च नैर्मर्यात्। अत्र प्रारब्धवैचित्र्यं आयुर्न्यूनाधिकभावमात्रमिति न मन्तव्यमित्याशयेन विशदयति भूयोदेहस्मृतेश्चेति। पुनःपुनः शरीरोत्पत्तेर्जडभरतादौ स्मरणात्। यावदधिकारसूत्रे तदधिकरणार्थसारके विशदमिदम्। ननु प्रथमशरीरे अन्तिमस्मरणे परमात्मविषयके सति कथं मोक्षाभाव इत्यत्राह अन्तिमेति। समाधेर्दृढोद्यमस्तदा नेति कार्यबलादुन्नेयमिति भावः॥ ४७१॥

४१. अस्माच्छरीरादित्यत्र अस्मादिति पदं प्रधानीकृत्य हि पूर्वपक्षः प्रवृत्तः। तद्विषये वक्तव्यस्यानुक्ततया पूर्वपक्षी पुनः शंकते नन्विति। अत्र=पक्षे भक्ते एवमनेकप्रारब्धशरीरस्वीकारपक्षे

1 चि. टी. अथापीति। अयं तात्पर्यार्थः। अतो वाक्यभेदं विना शरीरान्तमेव कथयतीत्येवान्वयः।

मित्याशङ्का । इदमवितथमित्याह-न त्विति । शरीरविशेषणस्य अस्मादिति पदस्य तादात्विकजुगुप्सावस्था-प्रकाशनपरत्वेन साफल्यमस्त्येव । अनन्तगरुडविष्वक्सेनादिवत् अनवरतभगवदनुभवयोग्यस्य कारागारनिवास इव कश्मले पुनरस्मिन् देहे निवासः । तमिममर्थं भगवानेव साक्षात्प्राहेति दर्शयति—त्याज्यत्वेति । 'अनित्यमसुखं लोकमिमम्' इति ह्युच्यते भगवतैव । देहस्य त्याज्यत्वं न केवलं भगवता गीतम्, [2]महर्षयोऽप्याहुरित्याह—भूतावासमिति । 'अस्थिस्थूणं स्नायुबन्धं मांसशोणितलेपनम् । चर्मावनद्धं दुर्गन्धि पूर्णं मूत्रपुरीषयोः ॥ जराशोकसमाविष्टं रोगायतनमातुरम् । रजस्वलमनित्यञ्च भूतावासमिमं त्यजेत् ॥' इति भगवता मनुनोक्तम् ॥ ४७२ ॥

(४७३) सर्वे जीवाः समानाः स्वत इह विविध कर्म चानादि तुल्यं
वैषम्यादिश्च दोषो न भवति भगवत्यन्यथा शास्त्रभङ्गः ।
मुक्तौ नातो विलम्बप्रभृति घटत इत्यल्पसारोऽनुयोगः ;
चित्रे कर्मप्रवाहे फलसमयभिदा ह्याश्रिता सर्वतन्त्रैः ॥ ४२ ॥

इतीतरक्षपणाधिकरणम् ॥ १३४ ॥

अत्र कश्चिदनुयुङ्क्ते—नन्वेतन्नोपपद्यते । भगवति सर्वसमत्वेन वर्तमाने परमकारुणिके सति कथमेकस्याधुना मुक्तिः, इतरस्य श्वो वा परश्वो वेति। तथा च सति सर्वेषामेकदैव मुक्तिः स्यात्। अथवा

---

इह=अस्माच्छरीरादिति वाक्ये शरीरे— शरीरविशेषणतया प्रयुक्ततया तत्र स्थितं अस्मादित्येतत्पदं व्यर्थं स्यात् । अतः अनेकशरीरस्वीकारे प्रारब्धशरीरेषु उपासनानुष्ठानार्हान्तिमशरीर एव भक्त्यारम्भो भवति । अतः अस्मात् भक्तिसाधनात् तस्मादेव शरीरादुत्थाने मोक्ष एवेत्युच्यतामिति भावः। निरस्यति नत्वस्मादिति । अन्यथासिद्धम् अस्मादिति पदं परिगृह्यैतावत्कल्पनमयुक्तमित्याशयः । पदसाफल्यं प्रकटयति कारेति । कारागृहोपमितमिदं प्राकृतं शरीरमिति तदौपमित्यस्य=तदुपमितत्वस्य प्रथने=प्रकाशने तात्पर्येण इदंशब्दनिर्देश इति । तेन त्याज्यत्वं=हेयत्वमुक्तं भवति । तदर्थे तथाप्रयोगे संवादप्रदर्शनमुपरि । 'अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम्' इत्यत्र इममिति पदं हि दृश्यमानातिरिक्तभूतभाविलोकव्यवच्छेदकं न भवति । तथासति पूर्वापरलोकं प्राप्तस्य भगवद्भजनमनपेक्षितमिति स्यात् । एवं मनुवाक्ये, 'भूतावासमिमं त्यजेत्' इत्यत्रापि तत्पदेन न भूतभाविशरीरव्यावर्तनम् । तथासति तेषामहेयत्वापत्तेः । अतः अस्थिस्थूणत्वाद्युक्ताधिकहेयाकारप्रत्यक्षदर्शनाय तथा प्रयोगः । इमं प्राकृतम् । प्राकृतत्वादेव हेयतेत्याशयः । तेनाप्राकृतज्योतिर्मयदेहान्तरस्फुरणसूचनं वाक्यद्वयेऽपि । अन्यदप्युदाहार्यम्—'इमं मानवमावर्तं नावर्तन्ते' इत्यत्र इममिति न भूतभविष्यत्कल्पव्यावर्तनाय ; किंतु अत्यन्त जुगुप्सितत्वज्ञप्तये । तथाच प्राकृतसर्वग्रहणमेव अस्मादिति पदेऽपि वक्तव्यमिति ॥ ४७२ ॥

४२. एवं विलम्बाविलम्बकरणं व्यक्तिभेदेनायुक्तम् । अन्ततो निष्पक्षोपाया वा जीवा एकरूपमीक्षणीया इति शङ्कते सर्वे इति । सर्वे स्वतः स्वरूपतः समानाः । इह जीवेषु अनादि कर्म च

---

२ चि. टी. महर्षयोऽपीति । एवमवतरणे कृतेऽपि त्याज्यत्वतात्पर्येण इममिति प्रयोगं महर्षयोऽप्यकार्षुरित्यत्रैवतात्पर्यम् । भूतावासम्=अनादिसिद्धात्मकादाचित्कस्थानं कायं पिशाचादिस्थित्यर्हम् ।

कदाचिदपि न मुक्तिः स्यादिति । तदिदमाह—सर्वे इति । सर्वेऽपि जीवाः समानाः, विविधमपि कर्म अनादित्वेन तुल्यम् । कर्मणस्तुल्यत्वेऽपि भगवतो वैषम्यादिदोषोऽस्तीति वक्तुमपि न शक्यते । यदि वैषम्यमुच्यते(मिष्यते), तदा वैषम्यनैर्घृण्यादिनिवारकशास्त्रभङ्गः स्यात् । अतो मुक्तौ कस्यचित् पूर्वम्, कस्यचिदुपरिष्टादिति वैषम्यं न स्यादेवेति । अयमनुयोगोऽत्यन्तमल्पसार एव । एतावन्तं कालमनेकविधन्यायश्रवणपरिपक्वमचेतसस्तु भवतः कोऽयमनुयोग इत्युपहासेनाह-अल्पसार इति। अल्पसारत्वमेव प्रकटयति-चित्र इति । कर्मप्रवाहे विचित्रे सति फलकालविभागः सर्वैरपि तान्त्रिकै- राश्रीयते। कश्चिदधुना चतुर्मुखपदं प्राप्नोति, पूर्वमेव=पुर एव कश्चित्, कश्चित्पुनश्चिरकालानन्तरं प्राप्स्यतीति सोऽयं विभागः केन कारणेन । एवं स्वर्गनरकादिप्राप्तावप्यनुयोज्यम् । अननुयोज्यैवेय- मनादिकर्मप्रवाहवैचित्री प्रमाणप्रतिपन्नेति चेत्—तर्हि कालभेदेन मुमुक्षुत्वसिद्धावपि तदेवाननु- योज्यत्वमुत्तरत्वेन प्रयोज्यमिति मूकीभवन्तु भवन्त इति ॥ ४७३ ॥ इतीतरक्षपणाधिकरणम् ॥१३४॥

(४७४) आवर्त्या(वृत्ता) ब्रह्मविद्या त्वसकृत्, अहमिति सा च, न स्यात् प्रतीके,
कर्माङ्गेऽर्कादिदृष्टिः, प्रणिधिरपि भवेत् सासनः प्रत्य(सनस्यान्व?)हश्च ।
पापे, पुण्ये च नाशादिकम्, अथ तु तयोर्भोग्यताऽऽरब्धकार्ये,
कार्यत्वं स्वार्हवृत्तेरिति, कथितमिहारब्धशान्तौ च मोक्षः ॥ ४३ ॥

इति कवितार्किकसिंहस्य वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां 4-1. पादः ॥

चतुर्थपादाधिकरणानां प्रधानार्थभेदान् परिगणयति-आवर्त्ये(आवृत्ते)ति। असकृदावर्त्या(वृत्ता) ब्रह्मविद्येति आद्याधिकरणार्थः। अहमित्यनुसन्धानं कर्तव्यमित्यनन्तराधिकरणे निर्णीतम् । तृतीये पुनः प्रतीकोपासने न अहमिति बुद्धिः कर्तव्येत्यभिहितम् । चतुर्थे कर्माङ्गेष्वादित्यादिमतिः कर्तव्येति । पञ्चमे त्वासनसहितस्य प्रणिधिः। षष्ठे प्रत्यहमनुसन्धानम्। सप्तमाष्टमयोः पुनः उत्तरपूर्वपापपुण्ययोः अश्लेष- विनाशौ । नवमे तु तयोः पुण्यपापयोरारब्धकार्ये एव भोग्यत्वम् (भोग्यत्वमेव?)। दशमे वर्णाश्रम- धर्मयोः अवश्यानुष्ठेयत्वम्। चरमाधिकरणे प्रारब्धकर्मविनाशे मोक्ष इति कथितमिदमर्थजातम्॥४७४

इति निखिलतार्किकचूडामणिना कुमारवेदान्ताचार्येण विरचिते अधिकरणचिन्तामणौ 4-1. पादः॥

---

तुल्यम् । विलम्भप्रभृतीति प्रभृतिशब्देन कस्यचित् भक्तियोगस्यानेकजन्माऽऽवृतत्वकल्पनं कस्यचित् न्यूनाऽऽवृत्तिमात्रेऽपि भगवतस्तुष्टत्वकल्पनमित्यादि गृह्यते । सर्वैः सर्वाङ्गीकृतमेकमेव समाधानमित्याह चित्रे इति । फलसमयभिदा फलकालस्य भिन्नभिन्नता । सर्वतन्त्रैः । सर्वैस्तान्त्रिकैरिति यावत् ॥४७३

४३. एतत्पादाधिकरणार्थान् संगृह्णाति आवर्त्येति। 1. वेदनासकृदावृत्तिः 2. अहमित्युपासनं सर्वत्र स्यात्। 3. दृष्टिविधौ प्रतीके मनआदौ अहमित्युपासनं न स्यात्। 4. कर्माङ्गत्वात् निकृष्टे देवतामूर्तेरुत्कृष्टादि- त्यादि दृष्टिरेव स्यात् । 5. प्रणिधिः उपासनम् । सः आसनसहितः आसीनैककार्यः स्यात् । 6. प्रणिधिः प्रत्यहं प्रतिदिनञ्च कार्यः । 7. पापे पूर्वोत्तररूपे नाशादिकम् नाशाश्लेषौ । 8. एवं पुण्येऽपि नाशादिकम् । 9. आरब्धकार्यस्य कर्मणो भवत्यनाश्यत्वात् तयोः तथाविधपापपुण्ययोः भोग्यता= भोगेनैव नाश्यता । 10. स्वार्हवृत्तेः आश्रमधर्मस्य श्लेषसद्भावात् कार्यत्वमेव । 11. एकशरीरेणाशान्त- प्रारब्धस्यानेकशरीरेण तच्छान्तावेव मोक्षः । इतीदमेकादशकमिह पादे कथितमित्यन्वयार्थः ॥४७४॥

इति वात्स्यसच्चक्रवर्तिवीरराघवाचार्यकृतिषु सारार्थरत्नप्रभायां 4-1. पादः ॥

## ॥ चतुर्थस्याध्यायस्य द्वितीयः पादः ॥

द्वितीयाध्यायतृतीयपादप्रभृति द्वितीयपादस्यास्य सङ्गतिप्रदर्शनम्—

(४७५) नित्यत्वज्ञत्वपूर्वैर्निपुणमभिहितं जीवतत्त्वं द्वितीये
जागर्यादौ च खेदो जगदटविमहाजाङ्घिकस्याथ गीतः ।
विद्यारम्भावसानावधि यदपि परं ध्यातुरर्थ्यं तदुक्तं
प्रारब्धस्यावसाने वपुरिह जहतो गत्युपक्रान्तिमाह ॥ १ ॥

पूर्वोक्ताध्यायद्वयार्थानुवादपूर्वकं चतुर्थाध्यायद्वितीयपादारम्भे सङ्गतिमाह—नित्यत्वेति । प्रथमाध्याये परतत्त्वप्रतिपादनं कृतम् । नित्यत्वज्ञत्वपूर्वैर्जीवतत्त्वमपि द्वितीयाध्याये निपुणमभिहितम्। तृतीयाध्याये वैराग्यपादे जगदटविमहाजाङ्घिकस्य जीवस्य दुःखमपि प्रोक्तम्। शिष्टे च शास्त्रांशे पूर्वं प्रवृत्ते विद्यारम्भमुपक्रम्य विद्यावसानपर्यन्तं मध्ये यत् वक्तव्यम्, तदपि चोक्तम् । अतःपरं प्रारब्धावसाने स्थूलशरीरं जहतो जीवस्य गत्युपक्रान्तिप्रकारमाहेत्युत्क्रान्तिपादमवतारयति-प्रारब्धस्येति ॥

अत्र पादे मरणप्रकारचिन्तनस्य औचित्यकथनम्—

(४७६) वर्ण्यो वैराग्यपादे तनुकरणगणक्षोभ ईदृक्, तथापि
ब्रह्मज्ञस्यापि काले भवति मृतिरिति ब्रह्मयेऽस्यानुबन्धः ।
तस्योत्क्रान्तौ विशेषं कथयितुमुचिता चात्र साधारणोक्तिः,
मध्ये विद्याफलानां मरणमपि वदन् तत् प्रियं चिन्त्यमाह ॥ २ ॥

ननु जाग्रत्स्वप्नसुषुप्तिमूर्च्छाप्रसङ्गेन वैराग्यपाद एव मरणमपि चिन्तनीयम्; किमर्थमत्र मरणमस्थाने चिन्त्यत इत्याशङ्क्य, इदमपि स्थानचिन्तनमित्युपपादयति-वर्ण्य इत्यादिना । अयमत्र शब्दान्वयः—यद्यपि वैराग्यपाद एवेदृङ्मरणरूपस्तनुकरणगणक्षोभोऽपि वाच्यः, तथापि ब्रह्मज्ञ-

---

१. द्वितीयतृतीये जीवस्य सञ्ज्ञामूर्तिक्लृप्तिरूपजननमुक्तम् ; अत्र चतुर्थद्वितीये तन्मरणमुपन्यस्यते । अतः शोधने शारीरके द्वितीयाध्यायद्वितीयपादपर्यन्तं परब्रह्मनिरूपणम् । तदनन्तरं पञ्चभूतप्रस्तावपूर्वं जीवनिरूपण-मेवाऽऽन्तमनावृत्तिसूत्रपर्यन्तमिति पेटिकाविभागोऽपि सुवचः । तत्र द्वितीयेऽध्याये, 'नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः', 'ज्ञोऽत एव', 'कर्ता शास्त्रार्थवत्त्वात्', 'अंशो नानाव्यपदेशात्' इत्येवं जीवतत्त्वं **निपुणमभिहितम्**= सम्यङ् न्यरूपि । **अथ** तृतीयाध्याये जगदटव्यां **महाजाङ्घिकस्य** जङ्घालस्य ऊर्ध्वाधोलोकेष्वनवरतत्वरित-गतागतशीलस्य तद्दर्शननिरूपणमुखेन जागर्यायां, तत्रैव द्वितीयपादे स्वप्नसुषुप्तिमूर्छासु च यथार्हं खेदो **गीतः** उक्तः । अथ जीवप्राप्यतत्त्वगतमुभयलिङ्गत्वं विद्यां साङ्गाञ्च निरूप्य चतुर्थाद्ये विद्याया आरम्भावसाने **अवधी** पूर्वोत्तरावधी यस्य तत् तादृशं प्रमेयजातमुपासितुरपेक्षितमुक्तम् । प्रारब्धावसाने मुक्तिरिति च तदन्ते जगदे । अथात्र तदा शरीरं त्यजतस्त्यागप्रकारः गत्युपक्रमपर्यन्तः कथ्यत इति संगतिः ॥ ४७५ ॥

२. तृतीयाध्यायारम्भे, 'तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः' इति संगृहीतोऽर्थ एव ह्यत्र विशदं विचार्यते । तत् तत्रैवेदं सर्वं वक्तुमुचितम् ; मरणदुःखं हि वैराग्यपादे वक्तुमुचितम् ; न सुखाध्याये इत्याशंक्य तदंगीकृत्य अत्र कथने फलविशेषमाह **वर्ण्य** इति । **ईदृक्** अत्र वर्णितप्रकारः **तन्वाः**=शरीरस्य **करणगणस्य**

स्यापि प्राप्तकाले मरणं भवतीति ज्ञप्तये फलाध्यायेऽनुबन्धः। कश्चिन् मनुते बालबुद्धिः—ब्रह्मज्ञस्य महानुभावत्वान्मरणमेव नास्तीति। तत्प्रतीतिं निवारयितुमत्रानुबन्ध इति। किञ्चात्र सम्बन्धे कारणान्तरमस्तीत्याह—तस्येति। ब्रह्मज्ञस्योत्क्रान्तौ मूर्धन्यनाड्या गमनविशेषं कथयितुं सर्वसाधारणोत्क्रमणकथनम्। ननु फलपादे दुःखात्मकं मरणं वक्तव्यमेव न भवतीत्याशङ्कमानस्य ब्रह्मविदां तस्य मरणस्य सुखात्मकत्वमेवेत्याह—मध्य इति। विद्याफलानामुत्तरपूर्वाघाश्लेषविनाशार्चिरादिगमनब्रह्मप्राप्तीनां मध्ये मरणमपि वदन् सूत्रकारो ब्रह्मविन्मरणस्य फलकोटिनिवेशात् सुखात्मकत्वमेव तस्याहेत्यर्थः ॥ ४७६ ॥

एतत्पादकार्यस्य उत्क्रमणादिक्रमनियमनिर्णयस्य नैरर्थक्यमिति चोद्यनिरासः—

(४७७) वृत्तिर्वागादिकं वा क्वचन भजतु सम्पत्तिमन्यक्रमां वा
श्रुत्यैवोक्तक्रमां वा ; न हि फलमिह तच्चिन्तनस्येति चेन्न ।
सम्पत्त्याम्नानमीदृक्क्रमनियतियुतं युज्यते न ह्यपार्थं ;
तस्मात् तच्चिन्तनं क्वाप्युपकुरुत इति स्थाप्यते तत् यथार्हम् ॥ २ ॥

अस्मिन् पादे, "मनसि करणग्रामं प्राणे मनः पुरुषे च तं झटिति घटयन् भूतेष्वेनं परे च तमात्मनि। स्वविदविदुषोरित्थं साधारणे सरणेर्मुखे नयति परतो नाडीभेदैर्यथोचितमीश्वरः॥" इति नियतोत्क्रमणं भवद्भिरेवान्यत्रोक्तम्। किमनेन नियमनेन तच्चिन्तनेन वा? यथाकथञ्चिदुत्क्रान्तस्यापि ब्रह्मविद्यामाहात्म्यात् नाडीविशेषप्राप्तिरर्चिरादिमार्गेण गमनञ्च स्यादित्याशङ्क्य तन्नेत्याह—वृत्तिरिति। अयमर्थः—वागादिवृत्तिरिति पूर्वपक्षिणोक्तम्, वागादिरिति सिद्धान्तिना। तथा क्रमान्तरेण सम्पत्तिरिति पूर्वपक्षिणोक्तम् ; 'मनसि करणग्रामम्' इत्युक्तप्रकारेण नियमेनैव सम्पत्ति-

---

प्राणेन्द्रियाणां मरणदशाभावी क्षोभस्तत्रैव प्रथमपादे वर्णयितुमुचितः—तथापि संसारगतागतावसरे एतदुक्तौ तदानीमेवायमुत्क्रान्तिप्रकारः, न तु मोक्षावसरे इति विपरीतमतिः स्यात्। तद्वारणाय उक्तरूपमृतिरस्यापीति ज्ञप्तये अत्र निरूपणम्। न च ब्रह्मज्ञस्यापि मृतिर्जायमाना प्रत्यक्षेणैव दृश्यते इति नात्र सा ज्ञापनीयेति शंक्यम्, इहोक्तरीत्या संपत्तिप्रकारेण मृतिरस्तीति हि इदानीमेव सुज्ञानमिति भावः। तत्र ब्रह्मज्ञस्योत्क्रान्तौ विशेषं मूर्धन्यनाडीसंबन्धरूपं कथयितुं सर्वसाधारणांशस्यापि सहैवोक्तिरित्यौचित्यञ्च। पादचतुष्टयोक्तचतुर्विधफलमध्ये मरणस्यापि पुत्रप्रसवस्येव, "कृतकृत्याः प्रतीक्षन्ते मृत्युं प्रियमिवातिथिम्" इति प्रियत्वं ज्ञापयितुञ्चेहोक्तिः॥ ४७६

२. वृत्तिरिति। अस्मिन् पादे उत्क्रान्तिर्निरूप्यते। सा च, 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति, प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इति श्रुता। जीवोत्क्रान्तिकाले तेन प्राणेन्द्रियोत्क्रमणं तेषां प्रागेव जीवसश्लिष्टत्वे सुकरम्। ततः तत्तत्संश्लेषप्रतिपादकवाक्यानामर्थान्तरनिरसनपूर्वकं संश्लेषपरत्वस्थापनेन अर्थात् तत्क्रमश्चात्र प्रतिपाद्यते। तत्र प्रथमम्, 'वाङ्मनसि संपद्यते' इत्यस्य वागादिवृत्तीनां मनसि संपत्तिर्लय इति पूर्वपक्षिणाऽर्थे वर्ण्यमाने वागादेरेव साक्षात् मनसि संश्लेषोऽर्थ इति सिद्धान्त्याह। एवमत्रोत्क्रान्त्युपयोगिवाक्यानां कीदृशोऽर्थ इति अत्र पादे क्रियमाणो विचारः किमर्थः? अत्र सिद्धान्तितरीत्या तदर्थापरिज्ञाने का हानिः? वृत्तेर्वा संपत्तिरुच्यताम्, वागादेर्वा। एवमुपरि प्राणस्य भूतेषु साक्षाद्वा संपत्तिः, उत जीवे संपद्य तद्द्वारा तत्र संपत्तिरिति विचारः क्रियते। एवं वा तथा वाऽस्तु; किं तेन। किं बहुना। वागादिकं

रिति सिद्धान्तिना। किमनेन प्रकारविशेषनियमनेन; येनकेनापि प्रकारेणोत्क्रान्तिः स्यात्। ननु उत्क्रान्तिविशेषचिन्तनेन फलविशेषसिद्धिः स्यादिति सिद्धान्त्यभिप्रायमाशङ्क्य तदपि नेत्याह—नहीति। तमिमं पूर्वपक्षं प्रतिक्षिपति—नेति। प्रतिक्षेपमेवोपपादयति- सम्पत्तीति। श्रुतिरेव ह्यस्माकमर्थतत्त्वे प्रमाणम्। अनुसन्धेयविशेषे च तदेव तथा प्रमाणम्। आम्नातश्च नियमेनानुक्रमः। न च नैरर्थक्यं वक्तुं युज्यते। तेन श्रुतिप्रतिपन्नस्य नैरर्थक्यपरिहारार्थं यथाश्रुतमेव सर्वं ग्राह्यम्। तथैव तच्चिन्तनीयमिति गतिचिन्तनादिकं कर्तव्यमिति, 'नैते सृती पार्थ जानन्' इति भगवतैवोक्तम्। तद्गतिचिन्तनकथनमुत्क्रान्तिचिन्तनस्याप्युपलक्षणं गत्युपक्रमत्वादुत्क्रान्तेः। ईदृक्क्रमनियतियुतं सम्पत्यानमपार्थमिति वक्तुं न युज्यत इत्यन्वयः। उक्तमर्थं निगमयति—तस्मादिति। तच्चिन्तनम् = उत्क्रान्तिचिन्तनम्। विद्याया उपकुरुत इति यथार्ह यथाप्रमाणञ्च स्यात्यत इति ॥४७७

उत्क्रमणादिवचनस्य प्रयोजनविशेषप्रदर्शनम्।

(४७८) जीवं ये नित्यमुक्तं निजगदुरथवा जीवतो मुक्तिमाहुः
तत्तज्जल्पोपजापप्रचलितनिगमग्रामसंक्षोभशान्त्यै।
उक्त्वा प्रारब्धकार्यं विदुषि च फलवत् प्रायणश्चात्र तुल्यं
नाडीभेदप्रवेशप्रभृति समधिकं वक्ष्यति ब्रह्मगत्यै ॥ ४ ॥

एवमुत्क्रमणादिवचनस्य मृषावादिप्रवृत्तिनिराकरणं विशेषप्रयोजनमिति दर्शयति—

---

श्रुत्युक्तक्रमं विना क्रमान्तरेण वा साक्षाद्वा जीवे संपत्तिं भजतीति मन्यताम्। श्रुतिविरुद्धार्थस्वीकारायोगात् कश्चित्तदर्थं निष्कृष्य कामं गृह्णातु। एतन्निर्णयोऽनुपयुक्तः। न च गतिचिन्तनवत् एतच्चिन्तनमपि विदुषा कार्यमित्यत्र प्रमाणमस्ति। येनैतत् फलवत् स्यादिति पूर्वार्धस्यार्थः। समाधत्ते संपत्तीति। यथा महदहंकारादिक्रमेण सृष्टिक्रमस्य लयक्रमस्य चापरिज्ञानेन सर्वजगत्कारणत्वेन ब्रह्मज्ञानमात्रं पर्याप्तमिति नेष्यते, तथा प्राणेन्द्रियाणामुपरमो भवतीत्येतावन्मात्रज्ञानं न पर्याप्तम्। याथातथ्येन सर्वं ज्ञातव्यमितीष्यताम्। अन्यथा श्रुतिरेव किमर्थं, 'वाङ् मनसि संपद्यते....'इति क्रममुपदेक्ष्यति; अनुपयुक्तत्वे उपेक्षणसंभवात्। अतः ईदृक्क्रमनियतियुतम् श्रुतिवर्ण्यमानक्रमविशेषनियमयुक्तं संपत्तिवचनं न व्यर्थं भवितुमर्हति। गतिचिन्तनवत् नित्यचिन्त्यत्वाभावेऽपि क्वचिदुपयुज्यत इति स्वीकर्तव्यम्। तत्रतत्र प्राणेन्द्रियाणां सुलभत्वात् एतदश्लिष्ट एव जीवो गच्छतु। नित्यत्वान्मनस्तन्मात्रं वा सहास्तीति मतमस्तु। प्राणमनइन्द्रियाणां मुख्यामुख्यभावे जन्मभेदेन विपर्यासोऽप्यस्तु। अन्यत्र एवं क्रमेऽपि विदुष उत्क्रमणेऽवश्यापेक्षितकतिपयमात्रमस्त्वित्यादिशङ्काशमनमप्यत्र भवति। क्वचिदुत्क्रमणरीत्या जीवचिन्तनपूर्वकमिदं कुर्यादिति यदि कश्चिद्विधिर्भवेत्, तत्रायथायथाचिन्तने नैष्फल्यं स्यादिति युक्त एवायं सर्वो विचार.। उक्तञ्च प्रश्नोपनिषदि (३), "तस्मादुपशान्ततेजाः पुनर्भवमिन्द्रियैर्मनसि संपद्यमानैः। यच्चित्तस्तेनैष प्राणमायाति। प्राणस्तेजसा युक्तः।........ य एवं विद्वान् प्राणं वेद, न हास्य प्रजा हीयते। तदेष श्लोक.....विज्ञायामृतमश्नुते" इति यथावस्थित सर्वतद्वेदनफलम् इति भावः ॥ ४७७ ॥

४. मुक्तिभाक्कालिकोत्क्रान्तेरत्र पादे निरूपणात् पूर्वमेव मुक्त इति भ्रमो निवर्तित इत्याह

जीवमिति । जीवो नित्यमुक्त इति साङ्ख्या मृषावादिनश्च प्राहुः । तत्र [केचित्] मृषावादिनो जीवन्मुक्तिमपि चाहुः । तत्त्वज्ञाने सत्यपि जीवत एव मुक्तिरिति । अनयोर्द्वयोरपि पक्षयोर्निराकरणार्थं तत्तज्जल्पसञ्जातोपजापप्रचलितनिगमग्रामस्य संक्षोभशान्त्यै च प्रारब्धकार्यं कर्म विदुषि च फलवत् प्रायणमुत्क्रमणञ्च द्वयोरपि ब्रह्मविदब्रह्मविदोरपि तुल्यमित्युक्त्वा=ब्रह्मगत्यै ब्रह्मप्राप्त्यै ब्रह्मनाडीप्रवेशप्रभृति ब्रह्मविदः समधिकमिति सूत्रकारो वक्ष्यति इत्यन्वयः ॥ ४७८ ॥

योगिनो भाविचिन्त्यविशेषानिरूपणौचित्यम्—

(४७९) आयुस्सीमामनिष्टैरिह बहुभिरसावात्मनः प्रेक्ष्य योगी
यत् कुर्यात्, यच्च पुत्रप्रभृतिषु, न हि तत् तर्क्यमत्रेत्यनुक्तिः ।
गीतादिष्वन्त्यकाले यदगणि तदपि प्राच्ययोगप्रकारे
तत्तत्प्राप्यानुरूपे नियतमिति यथापूर्वधीरत्र भाव्या ॥ ५ ॥

योगिनो भाविचिन्ता कर्तव्या चेत्, पुत्रादिषु नियमनादिकमपि भावित्वाच्चिन्तनीयमित्याशङ्क्य सर्वं भावि न चिन्त्यम्, यावन्मात्रं चिन्त्यत्वेन भगवद्गीतादिषूक्तम्, तावदेव चिन्त्यमित्याह— आयुरिति । अयमर्थः—बहुभिरनिष्टैर्निमित्तविशेषैरात्मन आयुस्सीमां=मरणं प्रेक्ष्य योगी यत् कर्म, तदुचितं मध्ये कुर्यात्, यच्च पुत्रप्रभृतिषु भावि कृत्याकृत्यनियमनं कुर्यात्, तत्र तर्क्यम्—न हि तत् चिन्तनीयम्। इति तस्यात्रानुक्तिरेव। न हि योगिनो भावि सर्वं कार्यं दृष्टमदृष्टं वा चिन्तनीयमिति

---

जीवमिति । पूर्वमेव मुक्तत्वं द्विविधं नित्यमुक्तत्वं जीवन्मुक्तत्वञ्च । तद्विषयकजल्या एवोपजायाः पिशुनोक्तयः कर्णे क्रियमाणाः यथावस्थितार्थाविश्वासजननबुद्ध्या क्रियमाणाः; तैः प्रचलितात्र स्वार्थात् भ्रंशितस्य वेदव्यूहस्य यः क्षोभः, 'बिभेत्यल्पश्रुतात् वेदः' इत्युक्तः, तच्छमनाय पूर्वपादे विद्याभावात् पश्चादपि प्रारब्धकार्यकर्मानुवृत्त्या मुक्त्यभावमुपपाद्य, अत्र पादे मोक्षो नात्र, किं त्वन्यत्रेति ज्ञापयन् मरणप्रकारमविद्वद्विशिष्टमित्यवबोधयन् मध्यमनाडीप्रवेशप्रभृतिवैलक्षण्यमप्याहेति ॥ ४७८ ॥

५. ननु किमनेन मरणरीतिनिरूपणेन । इतो वरं मरणासत्तिसूचकवर्ग-तत्कालकर्तव्यकलापोपदेश इत्याशंकायाम्, सर्वयोगिसाधारणविवादविषयांशनिरूपणमेवात्र बादरायणाभिमतम्। तदचिन्तनीया अन्ये अंशाः अत्यावश्यका अनियताश्च सन्तोऽप्यत्र न लब्धावकाशा इत्याह आयुरिति। अनिष्टैर्बहुभिरिति । ऐतरेयोपनिषदि 3. 2. 4. 'चन्द्रमा इवाऽऽदित्यो दृश्यते ; न रश्मयः प्रादुर्भवन्ति ; लोहिनी द्यौर्भवति.... संपरेतोऽस्याऽऽत्मा न चिरं जीविष्यतीति विद्यात्। स यत् करणीयं मन्येत, तत् कुर्वीत" इत्यादिना मरणासत्तिलिङ्गानि, तदा कर्तव्यानि, च दर्शितानि । बृहदारण्यके, 'अथातः संप्रत्ति.' इत्यारभ्य आसन्नमरणेन पुत्रं प्रति लोकप्रापकयज्ञादिकर्मैदम्पर्योपदेशः कार्य उक्तः। अत्र योग्ययोगिसाधारणवत् असाधारणांशोऽपि चिन्त्यः । ईदृशं सर्वमत्र कस्मान्नोक्तमिति चेत्—तत् सर्वमत्र शारीरके तर्क्यं न भवतीति तदनुक्तिः । तत्र विचार्यांशसद्भावे नूनं चिन्त्येत। संदेहास्पदविषयवाक्यार्थनिर्धारणार्थं हि मीमांसा प्रवर्तते; न तु ग्रन्थान्तरवत् सिद्धसाध्यार्थनिकुरुम्बोपदेशायेति भावः । गीतायामष्टमेऽध्याये, 'कविंपुराणम्' इत्यादिना ऐश्वर्यकैवल्यापवर्गार्थिध्येयाकारभेद-ध्यानप्रकारभेदनिरूपके, अन्त्यकाले यत्

प्रमाणमस्ति । किं तर्हि चिन्तनीयमित्याशङ्क्य चिन्त्यविशेषमाह—गीतादिष्विति । भगवद्गीतादिष्वन्त्यकाले कर्तव्यतया यत् चिन्तनमगणि, तदपि पूर्वसिद्धयोगप्रकारे तत्तत्प्राप्त्यानुरूपे नियतमेव भवतीति यथापूर्वधीरत्र भाव्या = उपक्रान्तयोगस्याविच्छेदेनानुसन्धानमत्र भाव्यमित्यर्थः । अन्त्यकाले चिन्त्यं सर्वं भगवद्गीतादिष्वेव विस्तरेण द्रष्टव्यम् ॥ ४७९ ॥

## १३५ ॥ अथ वागधिकरणम् ॥ ४-२-१ ॥

सूत्रम्—वाङ्मनसि दर्शनाच्छब्दाच्च ॥ अत एव सर्वाण्यनु ॥ १, २ ॥

(४८०) **कर्मज्ञानाक्षवर्गो मनसि न विलयं यात्यतत्संभवत्वात्**
**तद्वृत्तेस्तादधीन्यात् तदुपरतिमिह प्राह सम्पत्तिशब्दः ।**
**इत्येतन्नोपपन्नं तदुभयविलये चोद्यनिस्तारसाम्यात् ;**
**सम्पत्तिः श्लेषमात्रं करणविषयवाक्छब्दमुख्यत्वसिद्ध्यै ॥ ६ ॥**

**इति वागधिकरणम् ॥ १३५ ॥**

स्थूलशरीरस्थितिसमये यत् विद्याफलम्, तत् उक्तम्; अधुना तद्विनश्यदवस्थायां गत्युपक्रमे यत् फलं तच्चिन्त्यत इति पादसङ्गतिः । अत्रोत्क्रान्त्युपक्रमकथनात् प्रथमाधिकरणसङ्गतिश्च भवति । तदर्थं विचारस्तु—किमियं सम्पत्तिर्वाग्वृत्तिविषया, उत वाक्स्वरूपविषयेति प्रथमो विचारः । तदर्थं विचार्यते—किं वाक्शब्दस्य मुख्यार्थपरिग्रह उपपन्नः, नेति । किमियं सम्पत्तिर्लयरूपा, उत व्यापारनिवृत्तिपूर्वकसंयोगरूपेति । इन्द्रियान्तरसम्पत्तिवचनं किं लयपरत्वेऽप्युपपद्यते, उत संयोगपरत्व इति । अत्र पूर्वपक्षमभिप्रायमनुवदति—कर्मेति । अयमर्थः—कर्मेन्द्रियवर्गो ज्ञानेन्द्रियवर्गश्च मन इन्द्रिये विलयं न याति । तत्र हेतुमाह—अतत्संभवत्वादिति । न हीन्द्रियाणि मनस्सम्भवन्ति ; येन विलयो मनसि वक्तुं शक्यते । तर्हि कस्य सम्पत्तिरुच्यत इत्याशङ्क्य, इन्द्रियवृत्तेरेव, तस्याश्च मनोधीनत्वात् मनसि विलयो वक्तुं शक्यत इति वदति—तद्वृत्तेरिति । तेन सम्पत्तिशब्दो

---

ज्ञेयमुक्तम्, तत् प्रागेव श्रवणमनननिर्धारितमेवेति तत्रापि न विचार्यमस्ति । अतस्तत्र योगानुष्ठानकाले पूर्वगृहीतस्यैव ग्रहणात् यथापूर्वं धीरेव तत्र भाव्येति अविच्छिन्नस्मृतिसंतान एव संपाद्य इति न तत्र शारीरककृत्यमस्ति । योगानुष्ठानप्रकारस्तु, यागाद्यनुष्ठानप्रकार इव कल्पसूत्रादितः, तदर्थग्रन्थतः संप्रदायतो वा समधिगम्यः, यदुच्यते, पाण्डित्यं निर्विद्येति । अथ वा यथापूर्वधीः पूर्वपादेष्विव संदिग्धार्थचिन्तनरूपधीः अत्रापि पादे भाव्येत्यर्थः । अत्र श्लोके चिन्तामणिर्गतिरम्या ॥ ४७९ ॥

६. वृत्तः सामान्यविचारः । अधिकरणसारं वक्तुमारभते कर्मेति । 'वाङ् मनसि संपद्यते' इति वाक्ये वाक्पदं सर्वबहिरिन्द्रियोपलक्षकमिति निर्विवादम् । अत आह कर्मज्ञानाक्षवर्ग इति । अत्र पूर्वपक्षः—संपत्तिर्लयः । सा मनसीन्द्रियाणां न भवति, मनसस्तदुपादानत्वाभावात् । मनोधीनास्तु इन्द्रियव्यापारा इति तेषामेव मनसि संपत्तिरेतद्वाक्यार्थ इति । निरस्यति इत्येतन्नोपपन्नमिति । तदुभयविलये=इन्द्रियाणां तद्वृत्तीनाञ्च विलये पक्षद्वयेऽपि मनसोऽनुपादानत्वात् न लयसंभव इति चोद्यं समम् । वृत्तिविषये चोद्यस्य निस्तारः=परिहारो भवेदिति चेत्—तत् इन्द्रियरूपार्थपक्षेऽपि समम् । वृत्तीनामिन्द्रियगतानामिन्द्रियाण्येवोपादानभूतानीति न मनसि तल्लयः । अथ वृत्तिलयो नाम वृत्तिजनकमनोव्यापारलय एवेति चेत्—इन्द्रियलयो नाम इन्द्रियप्रेरकाणां मनोव्यापाराणां लय एवेत्यपि वक्तुं

वाग्वृत्तेरुपरतिमेवाहेति मन्तव्यम् । एतत् प्रतिक्षिपति—इत्येतदिति । अत्र हेतुमाह—तदुभयेति । वाग्वृत्तिविलये वागिन्द्रियविलये च चोद्यं समानम्; परिहारोऽपि समान एव। तथा च, "यत्रोभयोः समो दोषः" इति न्यायविषय इत्यर्थः। यथा वाचो मनःप्रकृतिकत्वाभावात् सम्पत्तिर्वक्तुं न शक्यते, तथा वाग्वृत्तेरपि मनःप्रकृतिकत्वाभावात् सम्पत्तिवचनं न घटते। यथाकथंचित् समाधानमुभयत्रापि समानम्। तर्हि पक्षद्वयेऽपि गुणदोषसाम्ये किमेकः पक्षः परिगृह्यते; कथं वा तस्मिन् पक्षे सम्पत्तिशब्दस्यौचित्यमित्याशङ्क्याह—सम्पत्तिरिति । सम्पत्तिशब्दो धातूपसर्गाभ्यां सम्बन्ध[रूपमर्थं?]मेवाह । सम्बन्धश्च वागिन्द्रियस्य मन इन्द्रियेण सम्भवत्येव। अस्मिन् पक्षे विशेषहेतुमाह-करणेति । वाक्छब्दो वागिन्द्रिये मुख्य एव; तद्वृत्तौ तद्धर्मत्वादौपचारिकः । तेन वाक्छब्दस्य मुख्यत्वसिद्ध्यर्थमस्तत्पक्ष एव संग्राह्य इति भावः ॥ ४८० ॥ इति वागधिकरणम् ॥ १३५ ॥

## १३६ ॥ अथ मनोधिकरणम् ॥ ४-२-२ ॥

सूत्रम्—तन्मनः प्राण उत्तरात् ॥ ३ ॥

(४८१) अन्नस्योक्तं विकारो मन इति मनसः प्राणसम्पत्तिवाक्ये
प्राणस्याम्भोमयत्वात् प्रकृतिविकृतिता सम्भवात् तल्लयोऽस्तु ।
मैवम्; तत्तन्मयत्वश्रुतिरभिमनुते तत्तदाप्यायनं तैः
प्राग्वत् संश्लेषमात्रं तत इह हि 'मनः प्राण' इत्यामनन्ति ॥ ७ ॥

इति मनोधिकरणम् ॥ १३६ ॥

'वाङ्मनसि सम्पद्यते मनः प्राणे' इति श्रुत्यनुक्रमेण चिन्तनात् सङ्गतिर्विशदा । तदर्थविचारस्तु—किमत्र मनसो लय उच्यते, उत संयोगः। किमत्र, 'प्राणः' इत्यपां निर्देशः, उत प्राण-

---

शब्दयम् । उभयसाम्ये किमर्थोऽयं विचार इति चेत्—न प्रथमविकरणप्रधानविचारः । कस्तर्हि ? संपद्यत इति किं लय उच्यते, किं वा श्लेष इत्येव। तत्र लयपक्षे अर्थानन्वये शंकिते वृत्त्यर्थस्वीकारेण परिहारं पूर्वपक्षी मेने । तदाऽपि परिहारायोगात् संश्लेष एवार्थ इति स्थाप्यते । एतदुक्तं भवति-मरणप्रकरणात् संपत्तिर्लय इति पक्षे, वाग्लयो वा वाग्वृत्तिलयो वा वाग्वृत्तिहेतुमनोव्यापारलयो वाऽर्थः। आद्यद्वयं दुर्वचम्। मनसि तल्लयायोगात्। नान्त्योऽपि; मनःपदवैयर्थ्यात् । वाक्पदस्य लाक्षणिकत्वापत्तेश्च । संपत्तिर्नाम व्यापाराभावः। मनोधीनव्यापाराभाववती वागित्यर्थे, धातोर्लाक्षणिकता स्यात् । मनसीति सप्तम्यनुपपत्तिश्च । प्रलयस्येव श्लेषस्यापि संपत्तिशब्दमुख्यार्थत्वात् तद्ग्रहणे पदत्रयमपि मुख्यम् । न कुत्रापि लक्षणा । लयपक्षे इन्द्रियाणां स्वस्वस्थाने स्थितानामेव निर्व्यापारता बुध्येत । परं ज्योतिरुपसंपद्येतिवत् संश्लेषपक्षे स्वस्थानं विहाय मनःसमीपप्राप्तिरूपापूर्वार्थलाभः । अयमर्थः सहोत्क्रमणस्याभिमतस्यानुकूल इत्युपादेयः । करणविषयेत्यनेन वाक्छब्दस्य करणमिन्द्रियमेव मुख्यार्थः । न तु वचनक्रियादिरित्युच्यते ॥ ४८० ॥

७. 'मनः प्राणे' इति वाक्ये संपत्तिशब्दस्य लयपरत्वेऽपि लक्षणाविरहात् लयरूपार्थ एवास्तु । अन्यथा सर्वशरीरव्यापिनि प्राणे मनसः कोऽयमपूर्वः संश्लेषः इत्याशंकयाऽनन्तराधिकरणप्रवृत्तिः । पूर्वपक्षे मुख्यत्वमुपपादयति अन्नस्येति । 'अन्नमयं हि सोम्य मनः' इत्यत्र मनः अन्नविकारत्वेनोक्तम् । इति

स्यैव। 'आपोमयः' इति वाक्यं किं प्रकृतिविकृतिभावपरम्, उताप्यायनपरम्। अत्र पूर्वपक्षी मन्यते—अन्नस्येति। 'आपोमयः प्राणः' इति वाक्येऽप्प्राणयोः प्रकृतिविकृतिभावसम्भवात् प्राणप्रकृतिभूते जले मनसो लयोऽस्तु; जलं तस्य प्रकृतिः, अन्नञ्च मनसः प्रकृतिः; 'अन्नमयं हि सोम्य मनः' इति मनसोऽन्नप्रकृतित्वं उच्यते। वचनात् तस्मान्मनसो, 'मनः प्राणे' इति प्राणप्रकृतौ जले लय उच्यत इति। तमिमं पक्षं प्रतिक्षिपति—मैवमिति। तत्र हेतुमाह—तत्तदिति। 'अन्नमयं हि सोम्य मनः' इति न मनसोऽन्नप्रकृतिकत्वं मुच्यते किन्त्वन्नाप्यायितत्वम्। तेन प्रकृतिविकृतिभावप्रसङ्गाभावात् सम्पत्तिशब्देन न प्रलयः मि ानम्। तदिदमाह—तत्तदिति। तर्हि किमुच्यत इत्याशङ्क्याह–प्राग्वदिति। पूर्वं, 'वाङ्मनसि स म्पद्यते' इति सप्तम्या संश्लेषमात्रमुक्तम्; तद्वदत्रापि। तत् कथमित्यत्राह—तत इह हीति। पूर्वं यथा, 'वाङ्मनसि' इति सप्तम्या संश्लेषनिर्देशः, तथा इह हि मनः प्राण इति सप्तम्या संश्लेष एव निर्दिश्यते उपक्रमभङ्गस्यान्याय्यत्वादिति ॥ ४८१ ॥

१३७ ॥ अथ अध्यक्षाधिकरणम् ॥ ४-२-३ ॥

सूत्रम्—सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥

(४८२) प्राणः सैकादशाक्षस्तदनु निविशते तेजसीत्थं श्रुतत्वात्
मध्येऽन्यप्राप्तिक्लृप्तौ श्रुतिहतिरिति चेन्नाऽऽत्मयोगस्य चोक्तेः।
प्राणस्य ह्यात्मजीवे मिलति निजतनोरुद्गतैर्भूतसूक्ष्मैः
तेजःप्राप्तिश्च गङ्गानिपतितयमुनासागरप्राप्तिवत् स्यात् ॥ ८ ॥

इत्यध्यक्षाधिकरणम् ॥ १३७ ॥

'मनः प्राणे प्राणस्तेजसि' इत्यनुक्रमवचनात् श्रुतिक्रमानुसारेण सङ्गतिः स्फुटा। तदर्थे-

---

हेतोः प्राणसंपत्तिवाक्ये मनसः प्राणे लयोऽर्थोऽस्तु। अन्नं हि पृथिवी। अन्नविकारत्वान्मनोऽपि पृथिवी॥ तावता मनसि लयः कथम्, अप्सु किल पृथिवीलयः स्यादिति चेत्—तत्र प्राण आप एवेति दर्शयति प्राणस्येति। 'आपोमयः प्राणः' इति वाक्ये प्राणस्याब्विकारत्वकथनात् प्राण आप एव। अन्नस्यापाञ्च विकृतिप्रकृतिभावः संमत इति मनःप्राणयोः प्रकृतिविकृतिभावः संभवतीति। अत एव, 'प्राणस्तेजसि' इति अनन्तरवाक्ये अम्मयस्य प्राणस्य तेजसि लय उच्यते। निरस्यति मैवमिति। इन्द्रियाणामाहङ्कारिकत्वात् अन्नमयम् आपोमय इत्युभयत्र विकाररूपार्थायोगात् आप्यायितत्वनिबन्धनं प्रचुरत्वं मयडर्थः। श्लोके तैरिति बहुवचनश्रवणात्, 'अन्नमयं हि सोम्य मनः, आपोमयः प्राणः, तेजोमयी वाक्' इति सहपाठात् अन्नजलतेजसां ग्रहणं प्रतीयते। तैः तत्तदाप्यायनं मनःप्राणवाचामाप्यायनं तत्र विवक्षितम्। ततः तस्मात् प्राग्वत् वाङ्मनसीत्यत्रेवात्रापि मनसः प्राणे संश्लेषमात्रं संपत्तिः। न तु लयरूपविशेषः। यद्वा तैरिति एकादशेन्द्रियग्रहणम्। वाङ् मनसीति मनसि सर्वेन्द्रियसंश्लेषस्योक्त्या तावद्विशिष्टमनस एव, 'मनः प्राणे' इत्यत्र मनःपदेन ग्राह्यत्वात् मनसोऽन्नत्वमतेऽपि तेषामन्नत्वाभावेन प्राणे संश्लेषस्यैव वक्तव्यतया तथैव मनसोऽप्युच्यतामिति ज्ञापनार्थं तेनेत्यनुक्त्वा तैरित्युक्तमिति ध्येयम्। ततः इह=प्राणे प्राग्वत् तत्संश्लेष 'मनः प्राणे' इति वाक्येनाऽऽम्नायत इत्यन्वयार्थः ॥ ४८१ ॥

८. तदनन्तरवाक्यार्थविचारः। मुख्यप्राणः एकादशेन्द्रियविशिष्टः तेजसि श्लिष्टो भवतीति सिद्धो

विचारस्तु किं प्राणस्तेजसि सम्पद्यते, उत जीवे। किं, 'प्राणस्तेजसि' इति वाक्यं जीवसम्पत्ति-पूर्वकतेजस्सम्पत्तिपरम्, उत केवलतेजस्संपत्तिपरम्? जीवसम्पत्तिपूर्वकतेजस्सम्पत्तिपरत्वे, 'प्राणस्तेजसि' इति वाक्यस्वारस्यं किं हीयते, नेति। अत्रैवं पूर्वपक्षी मन्यते—एकादशाक्षसहितस्य प्राणस्य तेजसि संश्लेषस्य साक्षाच्छ्रुतत्वात् मध्ये नात्मनि सम्पत्तिरिति। तदिदमाह—प्राण इति। सैकादशाक्षः प्राणस्तदनु तेजस्येव निविशते। तत्र हेतुमाह—इत्थं श्रुतत्वादिति। 'यथैव श्रूयते, तथैव स्वीकर्तव्यम्' इति हि नीतिविदां मर्यादा। मध्ये पुनः आत्मप्राप्तिकल्पनौ श्रुतहानं स्यादि-त्याह - मध्य इति॥ अत्रोत्तरम्—नेति। तत्र हेतुमाह—आत्मयोगस्य चोक्तेरिति। यदि तेजस्येव योगः श्रूयेत, तदा भवदुक्ता प्रक्रिया स्वीक्रियेत। मध्ये पुनः आत्मयोगोऽपि, 'एवमेवेममात्मानमन्त-काले सर्वे प्राणा अभिसमायन्ति' इति श्रुत्यैव साक्षादभिधीयते। तेन द्वयोरपि कार्ययोः श्रवणस्य (श्रुतत्वेन)अविशेषादविरोधेन निर्वाहः कर्तव्य इति। कथमविरोध इत्यत्राह—प्राणस्येति। स्वाप्तजीवे=स्वसम्बद्धजीवे निजतनोरुद्धृतैर्भूतसूक्ष्मैस्सह मिलति सति, प्राणस्य तेजःप्राप्तिश्च गङ्गानिपातितयमुनासागरप्राप्तिन्यायेन परम्परया स्यात, न पुनः गङ्गासागरप्राप्तिन्यायेन साक्षात् प्राप्तिः। अयमर्थः-सर्वेन्द्रियसहितः प्राणो जीवं प्राप्य जीवेन सह तेजसि सम्पद्यत इति प्रमाण-द्वयाविरोधाय संग्राह्यमिति॥ ४८२॥ इत्यध्यक्षाधिकरणम्॥१३७॥

## १३८ ॥ अथ भूताधिकरणम् ॥ ४-२-४ ॥

सूत्रम्—भूतेषु तच्छ्रुतेः॥ नैकस्मिन् दर्शयतो हि ॥ ५,६ ॥

(४८३) तेजस्येवास्तु युक्तः श्रिततनुभृत् अनस्तेजसीत्याद्यबाधात्
छत्रिन्यायोऽपि नास्मिन्निति यदि, न ; तथाऽन्यत्र भूतान्तरोक्तेः।
विश्वारम्भाय देवस्त्रिवृतमकृत च प्राग्गिमं भूतवर्गं
प्राचुर्यात् तत्तदेकव्यवहृतिरिति चाब्रवयत् पूर्वमेव ॥ ९ ॥

इति भूताधिकरणम्॥ १३८॥

'प्राणस्तेजसि' इति प्राणस्य तेजसि सम्पत्तिरुक्ता। सा सम्पत्तिः किं तेजोमात्रे, उत सर्वेष्वपि

---

वाक्यार्थः। तत्र मध्ये जीवघटनेन प्राणो जीवे, जीवस्तेजसि इति सिद्धान्त्यभिमतमयुक्तमिति पूर्वपक्षी ; मध्ये जीवप्राप्तिकल्पने प्रक्रमानुरोधसिद्धश्रुतिस्वरसार्थभंग इति। निरस्यति नेति। आत्मयोगस्य चोक्तेरिति। "इममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति" इति जीवात्मना योगोऽप्यन्यत्रोच्यते। जीवस्य तनुभृत्त्वात् भूतसूक्ष्ममेलनं तस्यैव वक्तव्यम्। 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' इति प्राणाधिपेन जीवेन तस्य मुख्यसंबन्धावगमात्, 'कस्मिन्नुत्क्रान्ते उत्क्रान्तो भविष्यामि; कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामि', 'उभावस्मिन् सह वसतः सह निष्क्रामतः' इति जीवे प्राणसाहित्यस्य प्राणशब्देनैव जीवव्यवहारपर्यन्तवहस्य ज्ञानाच्च प्राणसबन्धोऽस्यैव युक्तः। एवञ्च स्वाप्ते—स्वेन प्राणेन प्राप्ते जीवे स्वकीयस्थूलशरीरादुद्धृतैः पञ्चभिर्भूतसूक्ष्मैः सह मिलति सति, प्राणस्य च तेजःप्राप्तिः, 'यमुना सागरं गच्छति' इत्युक्तयमुनासागरप्राप्तिवत् स्यात्। यमुनायाः मध्ये गंगायामन्तर्गतत्वात् तद्विशिष्टगंगासागरप्राप्तेरेव यमुनासागरप्राप्तिरूपत्वाभ्युपगमादिति॥४८२

९. अथ, 'प्राणस्तेजसि' इत्येतद्वाक्यार्थः। श्रितः तनुभृत् जीवः येन सः अनः प्राणः

भूतेष्विति चिन्त्यत इति सङ्गतिः। तदर्थविचारस्तु—किं भूतान्तरसंसृष्टतेजस्संयोगः, उत तैजोमात्र-संयोग इति। किं तेजश्शब्दस्तेजोमात्रपरः, उत संसृष्टपर इति। किं, 'पृथिवीमय आपोमयः' इत्यादि-वाक्यं युगपदनेकभूतसंसर्गं दर्शयति, नेति। किं त्रिवृत्करणश्रुतिः पञ्चीकरणस्मृतिश्च संहतानामेव कार्यसामर्थ्यं दर्शयतः, नेति। अत्र पूर्वपक्षी, 'तेजसि सम्पद्यते' इति प्रत्येकं तेजस एवोपादानात् तेजस्येव सम्पत्तिरस्त्वित्याह—तेजसीति। युक्तः श्रिततनुभृत् अन इति पदविभागः। अन इति प्राण उच्यते; उपसर्गाणां धातुलीनार्थद्योतकत्वात्। आश्रितजीवः प्राणः तेजस्येव सम्बद्धोऽस्त्वित्यर्थः। अत्र हेतुमाह—तेजसीति। छत्रिन्यायेन तेजोव्यतिरिक्तानामप्युपादानं स्यादित्याशङ्क्य नेत्याह—छत्रिन्याय इति। तत्र ह्यच्छत्रिणामपि गमनस्य प्रत्यक्षोपलम्भात् लक्षणया सर्वेषामप्युपादानम्। अत्र पुनः तेजोव्यतिरिक्तसङ्गावे प्रमाणाभावात् कथं तन्न्याय इति। इमं पक्षं प्रतिक्षिपति—नेति। तत्र हेतुमाह—तथाऽन्यत्रेति। 'पृथिवीमय आपोमयस्तेजोमयः' इति जीवस्य संवरतः सर्वभूतमयत्व-श्रुतेरित्यर्थः। अत्र, 'तासां त्रिवृतं त्रिवृतमेकैकां करवाणि' इति त्रिवृत्करणश्रुतिमपि प्रमाणयति—विश्वारम्भायेति। सूत्रकारोऽपीममर्थं प्राहेति दर्शयति—प्राचुर्यादिति। 'त्र्यात्मकत्वात्तु भूयस्त्वात्' इति सूत्रेणेत्यर्थः। तेनैकस्य भूतस्य कार्यकरत्वाभावात् भूतान्तरसंसृष्टे तेजसि प्राणः सम्पद्यत इत्यवगन्तव्यमिति। अत्र पञ्चीकरणोपादानं पञ्चीकृतपञ्चभूतानामप्युपलक्षणम्। लोके हि देहाद्या-रम्भो नापञ्चीकृतपञ्चभूतमात्रेण, अपितु पञ्चीकृतपञ्चभूतोपादानेनेति स्फुटतरमुपलभ्यते ॥ ४८३ ॥

इति भूताधिकरणम् ॥ १३८ ॥

---

तेजोमात्रे श्लिष्टः; तेजसीति तावत एवोक्तेः। प्रश्नोपनिषदि च (३), "तेजो वा उदानः। प्राणस्तेजसा युक्तः। सहाऽऽत्मना यथासंकल्पितं लोकं नयति" इति तेजोमात्रसंबन्धः श्रूयते। तद्बाधादेवम्। शब्द-स्यैकमात्रवाचित्वेऽपि छत्रिशब्देन छत्र्यच्छत्र्युभयग्रहणवत् अन्योपलक्षणत्ववर्णनमत्र न भवति; लक्षणाया एव दोषत्वादिति पूर्वपक्षः। निरस्यति इति यदि, नेति। अन्यत्र बृहदारण्यके भूतान्तरोक्तेः (6-4), "पृथिवीमय आपोमयस्तेजोमयः" इत्यादिना मृतस्य सर्वभूतसर्वेन्द्रियमयत्वस्य तत्सहितत्वरूपस्योक्त्या गमकसत्त्वेन छत्रिन्यायस्यैव युक्तत्वात्। बृहदारण्यकवाक्याभावेऽपि तत् अर्थसिद्धम्; यतः छान्दोग्योक्त-रीत्या विश्वस्य जगत आरम्भाय उत्पादनाय देव एकैकमपि भूतं त्रिवृत् अकृत=अकरोत्। "तासां त्रिवृतं त्रिवृतमेकैकामकरोत्" इति श्रुतेः। इदञ्च नामरूपव्याकरणार्थमिति तत्रैव व्यक्तम्। एवं तर्हि तेजश्शब्देन अनेकव्यवहारः कथमिति चेत्—अत्र सूत्रकृत् प्राक्=तृतीयाध्याय एव, "त्र्यात्मकत्वात्तु भूयस्त्वात्" इति त्रयसत्त्वेऽप्येकवाचकशब्देन व्यवहारः तद्भूतस्य प्राचुर्यात्=आधिक्यादिति निरवहत्। एवञ्च यथा व्यष्टौ सर्वेषां भूतानां पञ्चीकृतानामेव सत्त्वात् तत्र पृथिवी जलमित्यादिर्यैव स्थितो व्यवहारः तत्तद्भूताधिक्यनिबन्धनः, तथा देहस्यैकैकस्यापि पञ्चीकृतपञ्चभूतारब्धतया प्रकृते तेजःशब्दः पञ्चीकृत-तेजोवाची स्वसंसृष्टपञ्चीकृतभूतान्तरोपलक्षकः। ईदृशतेजस इहाऽऽधिक्यादेतच्छब्देन सर्वग्रहणमिति। भूत-विषये बादरायणोक्तं समानन्यायात् भौतिकदेहविषयेऽप्यानेतव्यम्। एवमानेतव्यमिति सूत्रकारेणैव दर्शि-तम्, "नैकस्मिन् दर्शयतो हि" इत्यनेन। भूतपञ्चीकरणविषयकप्रमाणवचनमेतदुपलक्षकमित्याशयः। भूत-सूक्ष्मपञ्चके तेजोभागाधिक्यम्, "अस्यैव चोपपत्तेरूष्मा" इति सूत्रे, 'मृतिदशायां सूक्ष्मशरीरगतोष्मोपलम्भ एव कचित् भवति, तत्र साक्षात् स्थूलशरीरगतत्वे सर्वेष्वप्यवयवेषूपक्रमः स्यात्' इति कथनादपि सिद्धम् ॥

## ११९ ॥ अथ आसृत्युपक्रमाधिकरणम् ॥ ४-२-५ ॥

सूत्रम्—समाना चाऽऽसृत्युपक्रमादमृतत्वञ्चानुपोष्य ॥ तदापीतेः संसारव्यपदेशात् ॥ सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ नोपमर्देनातः ॥ अस्यैव चोपपत्तेरूष्मा ॥ प्रतिषेधादिति चेन्न शारीरात् स्पष्टो ह्येकेषाम् ॥ स्मर्यते च ॥ ७—१३ ॥

(४८४) अत्रैव ब्रह्म विन्दत्यमृत इह भवत्यागमात् ब्रह्मनिष्ठो
नोत्क्रान्तिस्तस्य युक्तेत्यसदुपनिषदो ह्यस्य गत्याद्युशन्ति ।
नान्यप्राप्त्यर्थमेतत्, सगुणसमधिके क्वापि मानहानेः ;
तस्मादत्रामृतत्वप्रभृतिवचनतस्तादृशी तद्दशोक्ता ॥ १० ॥

इयमुत्क्रान्तिः किं विद्वदविदुषोः समाना, उताविदुष एवेति चिन्त्यत इति सङ्गतिः । तदर्थ-विचारस्तु—किमियमुत्क्रान्तिः विद्वदविदुषोः समाना, उत अविदुष एवेति । 'तयोर्ध्वमायन्' इति श्रुतिः किं विदुष उत्क्रान्तिमवगमयति, नेति । किमेषा श्रुतिरिहामृतत्वश्रुत्युत्क्रान्तिनिषेध-श्रुतिभ्यां व्याहन्यते, नेति । अमृतत्वं किमुत्तरपूर्वाघाश्लेषविनाशरूपम्, उत सर्वबन्धमोक्ष-रूपम् । निषिध्यमाना चोत्क्रान्तिः शारीरापादाना, उताऽऽत्मापादाना । अत्र पूर्वपक्षमारचयति—अत्रेति । 'अत्र ब्रह्म समश्नुते', 'तमेवं विद्वान् अमृत इह भवति' इत्यागमात् ब्रह्मनिष्ठ इहामृतो भवतीति तस्य नोत्क्रान्तिर्युक्ता । तदेतत् प्रतिक्षिपति—असदिति । असत्त्वे हेतुमाह—उपनिषद इति । अस्य ब्रह्मविद एवौपनिषदानि वाक्यानि गत्यादिकं प्रवदन्ति ॥ अत्र द्वे खलु मुक्ती सगुणब्रह्मप्राप्तिः निर्गुणब्रह्मप्राप्तिश्चेति; तत्र सगुणब्रह्मप्राप्तौ सार्थकं गत्यादिवाक्यम्, न निर्गुणब्रह्मप्राप्तावित्याशङ्क्य मुक्तौ विभागमेव प्रतिक्षिपति—नान्येति । प्रतिक्षेपे हेतुमाह—सगुणेति । अयमर्थः—मोक्षस्य द्वैविध्ये सति हि गत्यादिवाक्यमन्यार्थकमिति वक्तुं शक्यते । न पुनर्द्वैविध्यम्, सगुणब्रह्मव्यतिरिक्ते

---

१०. सप्राणकरणस्य जीवस्य सूक्ष्मदेहे संपत्तिरुक्ता । अत्रैव मुक्तत्वादस्य विदुषः सूक्ष्मदेहान्तर संबन्धवर्णनं न युक्तमित्याक्षेपशमनायोत्तरमधिकरणम् । पूर्वपक्षमाह अत्रैवेति । ब्रह्मनिष्ठः अत्रैव देहे ब्रह्माश्नुते, इह देह एवामृतो भवति । कुतः ? आगमात् । आगमस्यात्र प्रमाणत्वात् । आगमवाक्यद्वयम् तद्घटकपदानामत्र मेलनात् अर्थतो ज्ञापितम् । "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" इति, "तमेवं विद्वानमृत इह भवति" इति च वाक्यमुदाजिहीर्षितम् । एवञ्च तस्य मुक्तस्य उत्क्रान्तिः सूक्ष्मदेहसंपत्त्यादिः न युक्तेति । निरस्यति इत्यसदिति । हेतुमाह उपनिषद इति । हि यतः उपनिषदः उपनिषद्वाक्यानि अविदुषो देहवियोगानन्तरं गत्यादि अर्चिरादि-गत्या गमनम् आतिवाहिकादिभिः सत्क्रियमाणत्वं ब्रह्मसंवादादिकञ्च उशन्ति—अभिप्रयन्ति—तात्पर्येण वदन्ति । ननु प्रकृतविषयवाक्यं मुख्यमुक्तविषयं निर्गुणब्रह्मैक्यपरत्वात् । गत्यादिकं तु सगुणब्रह्मप्राप्त्यर्थ-मिति भिन्नविषयकमित्यत्राह नेति । अन्यस्य मुख्यब्रह्मातिरिक्तस्य प्राप्त्यर्थं तत् गत्यादिकमिति असत् । हेतुमाह सगुणेति । निर्गुणब्रह्मणि मानस्य सत्त्वे तस्य मुख्यब्रह्मत्वं सगुणस्य मुख्यब्रह्मान्यत्वञ्च स्यात् । तदेव न ; तत्र मानहानेः=प्रमाणाभावात् । तस्मात् अर्चिरादिगत्या लभ्यं सगुणब्रह्मैव, 'अत्र ब्रह्म' इति ब्रह्मशब्दार्थोऽपि । तत् अश्नुते इत्यस्य तदनुभवतीत्यर्थः । 'अमृत इह', 'अत्र ब्रह्म' इति इहशब्दः

ब्रह्मणि तत्प्राप्तौ च प्रमाणाभावात्, तेन मुक्तिश्चैव सगुणैव। निर्गुणा मुक्तिरिति निर्गुणानामेव प्रवादः। 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यनूनजडपरिच्छिन्नव्यावृत्तब्रह्मस्वरूपपरिज्ञानफलत्वेन[सगुणमेव?] 'सोऽश्नुते सर्वान् कामान् सह' इति प्राप्यतया निर्दिश्यते। निर्गुणं तु न श्रूयते, नानुसन्धीयते, नापि प्राप्यत इति निर्गुणमुक्तिपरिक्लृप्तिरप्रामाणिकत्वादुपहास्येत्यभिधीयते। तदिदमाह–सगुणेति। उपपादितमर्थं निगमयति—तस्मादिति। 'इहामृतो भवति' इत्यनेन तादृशी तद्दशोक्ता = साक्षान्मुक्तिसदृशी काचित् मुक्तिदशोक्ता। उत्तरपूर्वाघाश्लेषविनाशरूपावस्था उक्तेत्यर्थः ॥ ४८४ ॥

(४८५) निश्शेषं भोगहेतौ गलति परविदः कर्मणि प्रायणेऽस्यो
गत्यर्थं सूक्ष्मदेहानुगतिरणुतया निश्चितस्याफला स्यात्।
मार्गे संवादवादस्तदुचितवपुषा त्वस्त्वितीवानुयोगे
कृत्स्नाविद्यानिवृत्तिः परपदगमनापेक्षिणीत्यादि वाच्यम् ॥ ११ ॥

अत्र कश्चिच्चोदयति—निश्शेषमिति। अयमत्राभिप्रायः—भोगहेतुः कर्म निश्शेषमपि स्थूलदेहावासने गलितमेव। तस्मात् भोगाभावात् भूतसूक्ष्मपरिष्वङ्गेण गमनमनर्थकमेव। ननु देहाभावे कथं गमनं स्यादिति न चोदनीयम्; अणुस्वरूपस्य जीवस्य देहाभावेऽपि गमनं युज्यत एवेत्याह—अणुतया निश्चितस्येति। अणोर्जीवस्य स्वभावतः क्रियावत्त्वात् सूक्ष्मदेहानुवृत्तिमन्तरेणापि गतिः सम्भवत्येव। तर्हि मार्गे चन्द्रमसा संवादः श्रूयते। तत् कथं शरीरविधुरस्येत्याशङ्क्य तत्राप्यन्यथासिद्धिमाह—मार्गे इति। अयं भावः—चन्द्रलोकपर्यन्तं स्वरूपेण गत्वा, तत्र कञ्चिद्देहमपूर्वं परिगृह्य, चन्द्रेण

---

अत्रशब्दश्च भवन्मते व्यर्थौ। अस्मन्मते तु गत्वा स्थलान्तरे यथाऽयममृतो भवति, ब्रह्म चाश्नुते—तथा कामादिप्रविलयमात्रेऽपि इहैव किञ्चिद्रूपे अमृतत्वब्रह्माशने प्राप्नोतीति बोधनार्थौ तौ भवतः। तस्मात् अमृतत्वप्राप्तिबोधकवाक्येन तादृशी भाव्यमृतत्वादितुल्या ततः किञ्चिदूना पूर्वोत्तराघविनाशश्लेषरूपा दशा, पूर्णब्रह्मसाक्षात्काराभावेऽपि दर्शनसमानाकारोपासनात्मकनिरन्तरब्रह्मानुभवरूपदशा च अत्र= जीवद्दशायामुक्ता। अत एव, "विमुक्तश्च विमुच्यते" इति प्रधानमुक्तिः, 'शतं चैका च' इति मूर्धन्यनाड्या गतस्योच्यते ॥ ४८४ ॥

११. ननु आसृत्युपक्रमात् समाना संपत्तिरित्ययुक्तम्; विदुषः सूक्ष्मदेहप्रवेशस्यानपेक्षितत्वात्। सूक्ष्मदेहो हि भाविदेहारम्भकतया संसारे इष्यते। न चास्य प्राकृतं शरीरमेतदारभ्यं भविष्यति, कर्माभावात्। तथैव प्रायणे मरणे–उत्काले भोगहेतौ कर्मणि निश्शेषं गलति क्षीणे सति, कर्माभावादेव सूक्ष्मदेहस्यारम्भोऽपि न भवति। न च-विद्या देशान्तरेऽस्य मुक्तिप्रापणार्थं स्वसामर्थ्येन स्थूलदेहैकदेशं सूक्ष्मं देहतया स्थापयतीति सांपरायाधिकरणोक्तं—युक्तम्; अथो अनन्तरा देहानुगतिरफला। आत्मनो विभुत्वपक्षे हि गतेरौपाधिकत्वोपपादनाय देहापेक्षा। अणुत्वात्पुनः तस्य स्वत एव गतिर्भवति, यथा प्रत्यहं सुषुप्तौ हार्दब्रह्मसंगमः। नन्वर्चिरादिमार्गे चन्द्रमस्संवादादिकं मुमुक्षोरुक्तम्, तत् कथं देहाभावे इति चेन्—संवादोऽयं यस्मिन् देशे उक्तः, तत्र तात्कालिकदेहप्राप्तिः शक्तिवशादस्तु। न ह्युपरतसर्वकरणविशिष्टात्यन्तसूक्ष्मशरीरं त्वदुक्तं संवादादिकार्यनिर्वाहायालमिति प्रश्नः। एवमनुयोगे=प्रश्ने उत्तरं, 'कृत्स्नाविद्यानिवृत्तिः

संवदेत इति। एवमनुयोगे तत्रोत्तरत्वेन, कृत्स्नाविद्यानिवृत्तिः परं ज्योतिरुपसम्पद्य समनन्तरमुत्पद्यत इत्यादि वाच्यम। अयमर्थः—देहादुत्क्रान्तस्य परं ज्योतिरुपसम्पन्नस्य पश्चादेव कृत्स्नाविद्यानिवृत्तिः। तेन गमनमपेक्षितम। तच्च गमनं मार्गविशेषेण मध्ये संवाद दिकं कृत्वेति श्रुत्यैव स्पष्टमभिधानात् विग्रहवत एवेति स्पष्टमवलोक्यते। न च मध्येमध्ये विग्रहं परिगृह्य संवादान् करोतीति वाच्यम्—तत्रतत्रापूर्वविग्रहपरिकल्पनायां कल्पन गौरवमापद्येत। अतः पूर्वशरीरावयवैः सानुबन्धैरेव विग्रहवान् देशविशेषप्राप्तिपर्यन्तं गच्छतीति वक्तुमेव युक्तम्। तस्मात् भूतसूक्ष्मैः परिष्वक्त एव गच्छति। भूतसूक्ष्मपरिष्वक्तस्यैव (सूक्ष्मस्य परिष्वक्तस्यैव?) देहत्वात् तेनैव देहेनार्चिरादिमार्गगमनम्, अन्तरा व्यवहारः, तत्तदर्चिरादिदेवताविषयगमनम्, तैरतिवहनमित्यादिकं सर्वं सशरीरस्यैव युज्यते। न पुनरत्र परिस्पन्दमात्रं गमनमित्युच्यते; अपितु क्रियाविशेषः। मार्गविशेषेण सशरीरस्यैव देशविशेषप्राप्तेरभिधानात् ॥ ४८५ ॥

(४८६) कल्पादौ भूतसूक्ष्मप्रभृतिभिरुदितं वर्ष्म कल्पान्तनाश्यम्
प्रत्येकं प्राणिभेदे नियतमनियतस्थूलदेहानुयायि।
लिङ्गाख्यं भस्त्रिकान्तःपवनवदवस्थायि सांख्यैः प्रगीतम्
सूक्ष्मांशः पूर्वमूर्तेरुपरितनतनोर्वीजमत्रेष्यते तत् ॥ १२ ॥

अत्र किं सूक्ष्मशरीरमित्युच्यत इति शिष्यानुयोगे साङ्ख्योक्तप्रक्रियामनूद्य तस्याः प्रमाण-

---

परपदगमनापेक्षिणी' इत्यादिरूपं वक्तव्यम्। स्थूलशरीरमात्रपरूपप्रकृतजन्महेतुसर्वकर्मनाशेऽपि विरजानदीप्राप्तिपर्यन्तं प्रकृतिसंबन्धसत्त्वात् परमपदे भगवत्प्राप्त्यवसर एव ज्ञानविकासस्य भावितया तावत्पर्यन्तम् अविद्यालेशानुवृत्तेरावश्यकतया च सर्वप्रतिबन्धकनिवृत्तिः प्रायणकाले वक्तुं न शक्यते। ब्रह्मप्राप्तिपर्यन्तम् अविद्यानुवृत्तिरस्तीति, "तदापीतेः संसारव्यपदेशात्" इति सूत्रेण ज्ञापितमेव। अपीतिशब्दः, 'ब्रह्माप्येति सनातनम्', 'ब्रह्मैव सन् ब्रह्माप्येति' इत्यादिप्रयोगानुसारेण प्रयुक्तः। मार्गेणाविसंवादादिकार्यानुकूलसूक्ष्मदेहारम्भकाणामंशानां तत्रतत्र तदातदा संभरणापेक्षया विद्या प्रियतमाणस्थूलदेहैकदेशं तदर्थं स्थापयतीति चिन्तनं युक्तम्। एवञ्चाऽऽतिवाहिकानामतीन्द्रियाणुभूतजीवात्मदर्शनशक्तिविकलानां मार्गे प्रत्युद्गमनसत्करणमार्गप्रदर्शनादिकार्यनिर्वाहोऽपीत्यादि वक्तव्यमित्यर्थः। "न तस्य प्राणा उत्क्रामन्ति" इति वाक्यस्य पूर्वपक्षे जीवसंबन्धिप्राणाः शरीरात् नोत्क्रामन्तीत्यर्थः। यदि जीवोत्क्रमणं नेष्टम्, तर्हि तदनुबन्धित्वात् प्राणोत्क्रमणस्य तदभावः सिद्ध एवेति न तद्वचनस्यावश्यकता। प्रत्युत एवं प्राणमात्रानुत्क्रमणोक्त्या जीवः परमुत्क्रामतीति वक्तव्यं भवेत्। एवमेवार्थमस्य वाक्यस्य संभावितं मनसिकृत्य, अणुतया तस्य गमनसंभवात् सूक्ष्मशरीरमेव मा भूदिति शंकापरिहारार्थोऽयं श्लोकः कृतः। सिद्धान्ते तु, न तस्मात्=जीवात् प्राणा उत्क्रामन्तीत्यर्थवर्णनात् जीवस्योत्क्रमणप्रभृतिसूक्ष्मशरीरसंबन्धस्वीकार एव समुचित इति स्थापितं भवति। एवं प्रतिषेधादिति चेन्न शारीरात् स्पष्टो ह्येकेषाम् इति सूत्रमपि व्याख्यातं वेदितव्यम्। तत्र प्रतिषेधादिति पूर्वपक्षांशः भाष्यरीत्या जीवानुत्क्रमणविषयकतयेव जीवमात्रोत्क्रमणविषयकतयाऽपि भवितुमर्हतीति हि गम्यत इह ॥ ४८५ ॥

१२. सूक्ष्मदेहविषये सांख्यमतात् स्वमते वैलक्षण्यं व्युत्पादयति कल्पेति। मतद्वयेऽपि तस्य

मूलत्वाभावात् स्वाभिमतमर्थं ततः प्रकटयति—कल्पादाविति । इयं किल साङ्ख्यप्रक्रिया—कल्पादौ भूतसूक्ष्मप्रभृतिभिरुदितं शरीरं कल्पान्तविनाश्यम् । तच्च प्रत्येकं प्राणिभेदे नियतम्, अनियतस्थूलदेहानुयायि । स्थूलानि शरीराणि देवतिर्यङ्मनुष्यादीनां कर्मानुरूपमनियतानि । सूक्ष्मशरीरं तु कल्पादिमारभ्य कल्पावसानपर्यन्तं सर्वेष्वपि स्थूलशरीरेष्वेकमेवावतिष्ठते, अनुवर्तते । तदिदमनुयायीत्युच्यते । तच्च लिङ्गशरीरमिति चोच्यते । तत्स्वरूपं दृष्टान्तेन दर्शयति—भस्त्रिकेति । भस्त्रिकान्तर्निहितकृत्रिमपुत्रिकावदवतिष्ठत इति हि साङ्ख्यैः प्रणीतम् । अयं तु साङ्ख्यपक्षः प्रमाणविशेषादर्शनात् परिकल्पनामात्रेण परिगृहीतः । सर्वप्रमाणानुकूलं स्वाभिमतं प्रकारान्तरमाह—सूक्ष्मांशा इति । उत्तरदेहपरिग्रहार्थं पूर्वदेहान्निष्क्रान्तः पञ्चभूतसूक्ष्मांशसमुदायविशेष एव सूक्ष्मशरीरमित्युच्यत इति ॥ ४८६ ॥

(४८७) तत्त्वज्ञानेन बन्धः किल गलति पुरा, नोत्क्रमेणेत्यसारं;
माता वन्ध्येतिवद्धि स्ववचनविहतिर्जीवतो मुक्तिवादे ।
मुक्तश्चेत् तत्त्वबोधात् तनुभृदिह, तदा तत्परं(तत्त्ववित्)नैव दुःख्येत्;
मिथ्या दुःखं तदा चेत्, कथय तव कदा तस्य सत्यत्वमिष्टम् ॥ १२ ॥

अत्र जीवन्मुक्तिवादी पुनरुत्क्रमणवार्तामसहमानः प्रत्यवतिष्ठते—तत्त्वज्ञानेनेति । तत्त्वमस्यादिवाक्यजन्यतत्त्वज्ञानेन पूर्वमेव संसारो गलत्येव; न पुनरुत्क्रमणेन संसारो गलति । तेन तत्त्वविद उत्क्रान्तिवचनमनर्थकमेवेति । तदिदमसारमित्याह—असारमिति । असारत्वमेवोपपादयति—मातेति । जीवन इति संसारसम्बन्ध उच्यते; मुक्तिरिति तदसम्बन्धः । उभयस्याप्येकत्रैकदैव निष्ठत्ववचनम्,

---

भूतसूक्ष्मजन्यत्वं तुल्यम् । तत्र साङ्ख्यास्तु सर्गारम्भे तयोत्पन्नं कल्पस्थायि प्रलयारम्भक एव नाश्यं प्रतिजीवं भिन्नं जन्मद्वयमध्यकाल इव कल्पान्तर्गतसर्वजन्मकालेऽप्यनुवृत्तत्वात् भस्त्रिकान्तर्निक्षिप्तप्रतिमादिवत् स्थूलदेहान्तर्विधानम् वर्ष्म वपुः लिङ्गशरीरमिति व्यवह्रियते इत्याहुः । स्वपक्षमाह सूक्ष्मेति । स्थूलदेहकाले तच्छरीरस्थितौ मानाभावात्, जीवस्य तदा स्थूलस्येव सूक्ष्मस्य देहस्यासंभवात्, 'श्रद्धां जुह्वति', 'सोमो राजा भवति', 'वर्षं भवति', 'आपः पुरुषवचसो भवन्ति' इत्यादितः भाविस्थूलदेहकारणत्वस्य पूर्वदेहैकदेशत्वस्य चावगमात् तत्तज्जन्ममध्यकालमात्रभावि, तत्तन्मध्यकालभेदेन भिन्नमेव तत् सूक्ष्मं वर्ष्म इष्यतेऽस्माभिरित्यर्थः । "सूक्ष्मं प्रमाणतश्च तथोपलब्धेः" इति सूत्रे स्थायिलिङ्गशरीरसद्भावे युक्तिर्वा प्रमाणं वा नास्तीति गम्यत इत्याशयेनात्र साङ्ख्यमतनिरासः ॥ ४८६ ॥

१२. स्थूलदेहवियोगकालप्रभृति मुमुक्षोरस्तैव मुक्तिरिति न सूक्ष्मदेहप्रवेश इति वादं निरस्य मतभेदेन सूक्ष्मदेहस्वरूपं विशोधितम् । संप्रति स्थूलदेहकालविशेषेऽपि मुक्तिरेवेति वादं निरस्यति तत्त्वेति । नित्यमुक्तिरिति पक्षानङ्गीकारेऽपि ज्ञानान्मुक्तिरिति सर्वेष्टम् । तत्त्वज्ञाने च जाते, 'तमेवं विद्वान् अमृत इह भवति' इत्युक्त्या तदैव मुक्तिर्भवेत् । उत्क्रमणोत्तरमेव मुक्तिरित्युच्यते चेत्—ज्ञानान्मुक्तिरिति वादस्त्यक्तः स्यादिति शंका । दूषयति इत्यसारमिति । पूर्णमुक्तेर्दुर्वचत्वादिति भावः । जीवतो मुक्तिरिति वादस्य, माता वन्ध्येति वाक्यवत् अनन्वितार्थत्वात्, पदार्थयोर्मिथो व्याघातात् मुक्तिस्तदा नैव संभवतीत्यप्याह मुक्तिरिति । मुक्तिः कस्मात्? किंप्रतियोगिका? कर्मसामान्याद्वा सञ्चितकर्मणो वा

'मम माता वन्ध्या' इति वचनवदसम्बद्धमेव। व्याहतिमेवानिष्टप्रसङ्गपूर्वकं दर्शयति—मुक्तश्चेदिति। जीवन्मुक्त इति भवता कथ्यमानो मुक्तश्चेत् तत्त्वबोधमात्रेण, तदा तत्परं नैष दुःख्येत्=तत उत्तरस्मिन् काले स पुरुषो न दुःख्येत्। दृश्यते हि जीवन्मुक्तत्वेन भवता व्यवह्रियमाणानां भावत्कानां देहानुबन्धिक्षुत्पिपासाक्रोधादिमूलं दुःखम्। तर्हि तदा तेषां दुःखं मिथ्येति वदाम इति चेत्—तन्न; पूर्वमपि तेषां दुःखस्य मिथ्यात्वात्। तेन पूर्वोत्तरकालयोर्न वैषम्यमित्यर्थः। तदिदमाह—कथयेति। सर्वदाऽपि दुःखं मिथ्येति हि भवतां सिद्धान्तः। मिथ्याभूतं तदेव दुःखं संसार इति च भवतोच्यते। तेन संसरतो न मुक्तिरिति ॥ ४८७ ॥

(४८८) यंयं भावं स्मरन्तो जहति वपुरिदं देहिनो, यान्ति तंतं;

तस्मादुत्क्रान्तिसाम्यं न घटत इति चेत्, तन्न तन्मात्रसाम्यात्।

विद्याभेदादिनीत्या भवति विषमता ह्यन्तिमप्रत्ययादौ

किञ्चित्साधर्म्यवादे न च नियतिमती सर्वथासाम्यसिद्धिः ॥ १४ ॥

इति आसृत्युपक्रमाधिकरणम् ॥ १३९ ॥

ननु यत् उत्क्रान्तिसाम्यमुक्तम्, तन्नास्ति; विद्वदविदुषोरुत्क्रान्ति(न्तौ?)विशेषस्यैव भगवताऽभिधानात्, "यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेबरम्" इति। तस्मात् कथमुत्क्रान्तिः समानेत्युच्यते। तदिदमाह—यं यमिति। अयमन्वयः - यं यं भावं स्मरन्तो देहिन इदं वपुर्जहति, तं तं भावं यान्तीति विषमस्वभावैव उत्क्रान्तिरुच्यते। तस्मादुत्क्रान्तिसाम्यं न घटते। तदिदं प्रतिक्षिपति—तन्नेति। तत्र हेतुमाह—तन्मात्रसाम्यादिति। अयमर्थः-कर्मानुरूपमुत्क्रान्तिविशेषोऽस्तु नाम, अथापि देहादुत्क्रमणमित्येतावन्मात्रं तुल्यमित्युक्तमस्माभिरिति। तर्ह्यन्तिमप्रत्यये वैषम्यमङ्गीकृतं भवता; तत् कथमित्याशङ्क्य प्रतिबन्द्या परिहरति-विद्येति। सद्विद्यादहरविद्यादौ वेद्याकारभेदात् भेदोऽस्ति; अथापि ब्रह्मविद्येति सामान्यात् विद्यैक्यमप्यस्ति। एवमत्राप्युत्क्रमणमेकमेव। अथापि तत्तद्भावनाविशेषात् भेदोऽस्तीति न कश्चिद्विरोधः। उक्तमर्थं लोकदृष्टप्रक्रियया स्थापयति—किञ्चिदिति। एकदेशसाधर्म्यवादे सर्वथासाम्यसिद्धिर्न च नियतिमती=न सिध्यतीत्यर्थः। साधर्म्यवैधर्म्ययोः प्रमाणानुसारेण

---

दुःखादिभ्यो वा। नाद्यः। जीवतः प्रारब्धकर्मसद्भावात् सर्वतो मुक्त्ययोगात्। कुलालचक्रभ्रमणन्यायस्य च दूषितत्वात्। संचितकर्मतो निवृत्तश्चेत्—तदधिगमसूत्रोक्तरीत्या सेष्यत एव। तावता नाविद्यादिनिवृत्तिरपि। दुःखनिवृत्तिस्तु न; तत्त्वज्ञानवत्यपि दुःखस्योपलभ्यमानत्वात् ॥ उपलभ्यमानस्य दुःखस्य मिथ्यात्वात् तदभावस्तदाऽस्त्येवेति चेत्-जगन्मिथ्यात्वमत एव दुःखमिथ्यात्वमिति, तदेव प्रागपि दुःखाभाव एव। तथाच तत्त्वज्ञानान्मुक्तिरिति त्यक्तं स्यात्। अस्मन्मते भवत्या मुक्तिरित्यस्य तथा परम्परया गत्यादिना अविद्यानिवृत्तिरित्येवार्थः ॥ ४८७ ॥

१४. एवमपि आसृत्युपक्रमात् सर्वसाम्यं कथमिति शंकते यंयमिति। विदुषोऽविदुषश्च वागादिसंपत्तिः तेजःसंपत्तिपर्यन्ता कथिता। एवं संपत्तौ स्मृतेर्भिन्नभिन्नत्वं कथमित्याशंकायाम्, कलेबरत्यागकालिकस्मरणेष्वाकारभेदादिति वक्तव्यम्। तर्हि कथं सर्वसाम्यमिति शंका। परिहरति तन्नेति। स्थलान्तरगामिनां परमपदगामिनाञ्च स्मरण एव भेद इति न; परमपदगामिनां तत्तदुपासननिष्ठानां स्मरणेऽपि; उपास्याकारवैषम्यात्। अथापि ब्रह्मविषयकत्वेन साम्यम्। एवमन्तिमस्मरणभेदेऽपि पूर्वोक्तवागादि-

लोकवेदयोः प्रसिद्धत्वादिति । [1]अयमाशयः—वाजसनेयके, 'न तस्य प्राणा उत्क्रामन्ति' इत्यध्यात्मविदि प्राणोत्क्रमणनिषेधादुत्क्रमणम् अविद्वद्विषयमिति यदुक्तम्, तद् तत्रैव स्थलान्तरे, 'न तस्मात् प्राणा उत्क्रामन्ति' इति जीवात् प्राणोत्क्रान्तिनिषेधेन दत्तोत्तरमिति भाष्य एव सुव्यक्तमुपपादितम् । तस्मादस्माभिरत्र वक्तव्यं किञ्चिन्नावशिष्यते । अन्तेवासिभिरधिकरणचिन्तनमेव नियमेन कर्तव्यम् । तेन प्राणसहितो विद्वानपि मूर्धन्यनाड्योत्क्रम्यार्चिरादिना मार्गेण गच्छतीत्ययमेव शारीरकशास्त्रनिर्णयः ॥ ४८८ ॥ इति आसृत्युपक्रमाधिकरणम् ॥ १३९ ॥

## १४० ॥ अथ परसंपत्त्यधिकरणम् ॥ ४-२-६ ॥

सूत्रम्-तानि परे तथा ह्याह ॥ १२ ॥

(४८९) जीवोत्क्रान्त्युक्तिकाले विदुष तु घटते तत्प्रतिक्षेपभङ्गो
भूतोत्क्रान्तेस्तु पश्चात् तदुपनिपतने सङ्गतिः स्यात् कथं चेत् ।
तस्य तु साधारणोऽपि ह्ययमुपरि ततः स्थाप्यते हार्दयोगः
तुल्येऽप्यंशस्तुल्यः सरणिमुखतया प्राप्यमेदेन नाड्यः ॥ १५ ॥

अत्रावान्तरसङ्गतिर्भाष्ये सुव्यक्ता, "सकरणग्रामः सप्राणः करणाध्यक्षः प्रत्यगात्मा उत्क्रान्तिवेलायां तेजःप्रभृतिभूतसूक्ष्मेषु सम्पद्यत इत्युक्तम् । सेयं सम्पत्तिर्विदुषो न विद्यत इत्याशङ्क्य परिहृतम् । तानि पुनर्जीवपरिष्वक्तानि भूतसूक्ष्माणि किं यथाकर्म यथाविद्यञ्च स्वकार्याय गच्छन्ति, उत परमात्मनि सम्पद्यन्त इति विशये" इति । तदर्थविचारस्तु—किं तेजश्शब्दनिर्दिष्टानि भूतानि यथाकर्म यथाविद्यञ्च गच्छन्ति, उत परमात्मनि सम्पद्यन्ते । किमत्र परदेवताशब्दो गन्तव्यस्थानावस्थापरमात्मपरः उत अतद्वस्थापरमात्मपर इति । किमत्र कश्चन प्रयोजनं सम्भवति, नेति । ननु पूर्वं जीवोत्क्रान्तिमुक्त्वा तदनन्तरं भूतोत्क्रान्तिमुक्त्वा पश्चाद्विदुष उत्क्रान्तिनिषेधपरिहारः

---

संपत्तिमात्रामिप्रायेण सर्वसाम्यकथन नाद्युक्तम् ॥ किञ्चिदंशे साधर्म्ये उच्यमाने सर्वसाधर्म्यं नियमः कथम् । किञ्चित्साधर्म्येति । यत् किञ्चित् साधर्म्यं वदतः सर्वसाधर्म्याभिप्रायो न नियतः । संपत्तिसाम्यपूर्वकोत्क्रान्तिसाम्यमेव ह्यत्रोच्यते ; न तु तत्कालिकानु-वादिसर्वाकारसाम्यमपीत्यर्थं ॥

1. चि. टी. ननु विद्वत्प्राणोत्क्रमणस्य प्रामाणिकत्वे स्यात् किं तत्साम्यम् ; तदेव नेति शंकायाम् आशयमाविष्करोति अयमिति ॥ ४८८ ॥

१५. आसृत्युपक्रमाधिकरणात् प्रागेव परसंपत्त्यधिकरणं कुतो न घटितम् । तेजसि प्राणाध्यक्षसंपत्त्युक्त्यनन्तरम्, 'तेजः परस्यां देवतायाम्' इत्युक्ततया, परसंपत्तेरपि विद्वदविदुषोः साधारणतया च तदुक्त्यनन्तरमेव समानेत्यारम्भौचित्यादित्याशंकां परिहरति जीवेति । मनआदौ वागादिसंपत्तिरिव, जीवस्य तेजसि संपत्तिर्या प्रागुक्ता, सैव भाष्ये पूर्वाधिकरणारम्भे इयमुत्क्रान्तिः इति उत्क्रान्तिपदेनानूदिता ; जीवस्य स्थूलशरीरत्यागो ह्युत्क्रान्तिः ; सा सूक्ष्मदेहसंपत्तिरेवेति । अत इह जीवोत्क्रान्तीत्युक्तम् । अतः, 'जीवस्य भूतसंपत्तौ भूतानां परसंपत्तौ च जातायां पश्चादेव हि विश्रान्तस्य विशिष्टरूपेणोत्क्रान्तिः' इति न शंकनीयम् । तथा च जीवोत्क्रान्तिपदं भूतेषु जीवसंपत्तिपरम् । भूतोत्क्रान्तिपदं परे भूतसंपत्तिपरम् । तदयमर्थः—यद्यपि अयम् अत्र सूत्रे साध्यमानः हार्दयोगः=हृदि परमात्मना जीवयोगः

किमिति नोच्यत इत्यत्राह – जीवेति। अयमर्थः—सामान्येन जीवोत्क्रान्तिमुक्त्वा जीवविशेषभूतविदुषामुत्क्रान्तिर्नास्तीत्याशङ्क्य तेषामप्युत्क्रान्तिरस्तीति कथने सङ्गत्यौचित्यातिशयोऽस्ति। जीवोत्क्रान्तिसमनन्तरं भूतोत्क्रान्तिमुक्त्वा पश्चात् विदुष उत्क्रान्तिनिषेधपरिहारकथने सङ्गतिः कथञ्चिदेव स्यात्। तस्मात् कारणादयं विद्वदविद्वत्साधारणोऽपि हार्दयोगः तत्र उपरि स्थाप्यते = विदुष उत्क्रान्तिस्थापनादुपरि स्थाप्यत इति[सङ्गतिः]। साधारणोऽपीति। 'वाङ्मनसि सम्पद्यते' इत्यादिवत् हार्दयोगोऽपि विद्वदविद्वत्साधारणोऽपि, इति सङ्गतिविशेषेण विदुष उत्क्रान्तिस्थापनानन्तरं कथ्यत इति। इममर्थं प्रकाशयितुमपिशब्दः। तर्हि हार्दयोगे तुल्ये नाड्योऽपि तुल्याः स्युरित्याशङ्क्य नेत्याह—नतुल्या इति। अतुल्यत्वे कारणमाह—प्राप्येति। हार्दयोगस्य तुल्यत्वे कारणमाह—सरणिमुखतयेति। अयमर्थः—हार्दयोगः सरणिमुखम्। तत् विद्वदविद्वत्तुल्यमेव। तत उपरि सरणयो नाड्यः; ता विभक्ताः। यथैकेन द्वारेण निष्क्रान्तानां बहूनां मार्गभेदेन नानादेशगमनम्, एवमेकस्मात् हार्दस्थानात् नानानाडीमार्गेण स्वकर्मानुरूपं तत्तन्नानादेशगमनं जायत इति ॥ ४८९ ॥

(४९०) प्राप्तुं भोगापवर्गौ प्रयति तनुभृति प्राप्तसूक्ष्मस्वदेहे
सम्पत्त्या किं परस्यां श्रितहृदयसुधौ लभ्यते देवतायाम्।
आवस्तेजः परस्यामिति चिरघटितेऽप्यस्तु सिद्धानुवादः;
मैवम्; मानानुसारात् फलमिति परमे संक्रमः श्रान्तिशान्त्यै ॥ १६ ॥

इति परसम्पत्त्यधिकरणम् ॥ १४० ॥

---

साधारणो विदुषामविदुषाञ्च--तथाऽपि अयमर्थः तत उपरि=समानाचेत्यधिकरणार्थंत उपर्येव स्थाप्यते। कुत इति चेत्-संगत्यतिशयात्। भूतेषु तच्छ्रुतेरिति सूत्रेण जीवसामान्योत्क्रान्तावुक्तायाम्, विद्वज्जीवे तत्प्रतिक्षेपपूर्वपक्षो हि झटिति भवति। अतस्तद्भङ्ग एव प्रथमं समानाचेत्यादिना कृतः। भूतानां परे संपत्तिरूपाया उत्क्रान्तेरपि विद्वदविद्वत्साधारण्यमस्तीति हेतुना प्रथमत एवदुक्तौ तु पश्चात् पूर्वाधिकरणोक्तां जीवोत्क्रान्तिमुपस्थाप्य तत्र विद्वद्विषयविचारकरणे सगतिः कथञ्चित् क्लेशेनैव वाच्या स्यादिति। एवमर्थस्वभावपर्यालोचनया विवेके क्रियमाणे, समानाचेत्यधिकरणात् प्राक् उक्तमेव समानम्; न तु हार्दयोगः; अन्यथा नाडीविशेषसंबन्धादिरपि उपरि कथितः समानः स्यात्' इति शंकाया नावसर इत्याह तुल्ये इति। श्रीमद्रहस्यत्रयसारगतः मनसिकरणग्राममिति श्लोकः पूर्वमत्र चिन्तामणौ अनूदितः। तत्र, 'इत्थं साधारणे सरणेर्मुखे' इति पाठो लक्ष्यते। तत्र सरणिमुखस्य साधारणत्वोक्त्याऽत्रापि सरणिमुखतया तुल्ये इत्यन्वयश्चिन्तामणौ कृतः। अतुल्या इत्यनेन व्यवधानात् तत्रानन्वये तु नाडीनामेव सरणिमुखत्वं वक्तव्यम्। तदनुकूलपाठोऽपि तत्र, 'इत्थं साधारणे सरणेर्मुखैर्नयति परतो नाडीभेदैर्यथोचितमीश्वरः' इति दृश्यते। परंतु तदा स्वविदविदुषोरस्मिन् साधारणे इति विशेष्यपदं सप्तम्यन्तं स्यादिति चिन्तामण्याशयः। 'मार्गान्तरங்களுக்கு मुखங்களான नाडीविशेषங்களில் போகாதபடி வழி விலக்கி अर्चिरादिमार्गத்துக்கு मुखமான शताधिகையான ब्रह्मनाडियிலே प्रवेशिப்பிக்கு' इति तत्राऽऽचार्यश्रीसूक्तौ नाडीनां मुखत्वं कण्ठोक्तम् ॥ ४८९ ॥

१६. अस्मिन्नधिकरणे परसंपत्तौ स्थापितायां सा संपत्तिः किंरूपेति पश्चात् विचारः करिष्यते,

अत्र हार्दप्राप्तौ प्रयोजनाभावात् यथाकर्म यथाविद्यं गमनमेवास्तु; किमनया निरर्थिकया हार्दप्राप्त्येत्याशङ्क्य तत्प्राप्तौ प्रयोजनविशेषमाह—प्राप्तुमिति। अयमन्वयः—भोगापवर्गौ प्राप्तुं प्राप्तसूक्ष्मस्वदेहे तनुभृति=जीवे प्रयति सति श्रितहृदयसुषौ=श्रितहृदयाकाशायां परस्यां देवतायां सम्पत्त्या किं फलं स्यात्? अतः सम्पत्तिरेव नास्ति। अतः=एतस्मात् कारणात्; 'तेजः परस्यां देवतायाम्' इति वचनं चिरघटिते=सर्वदा संघटिते परमात्मनि सिद्धानुवाद एव। न पुनरपूर्वं संघटनं किञ्चिदत्रास्ति, निष्फलत्वादिति। तदिदं प्रतिक्षिपति–मैवमिति। प्रतिक्षेपमेवोपपादयति–मानानुसारादिति। प्रमाणसिद्धेऽर्थे हि प्रमाणानुसारात् प्रयोजनमेव परिकल्प्यम्। न पुनः आपाततः प्रयोजनादर्शनात् प्रमाणसिद्धोऽर्थः परित्याज्य इति नीतिविदां मर्यादा। किमत्र तर्हि प्रयोजनमित्याशङ्क्याह—परम इति। परमात्मनि संक्रमः भ्रान्तिशान्त्यै। देहादुत्क्रान्तिसमये जायते भ्रान्तिः; तच्छान्तिः परमात्मनि संक्रमादुत्पद्यते। तेनोत्क्रान्तिजनितभ्रान्तिशान्त्यर्थं हार्दे विश्रम्य स्वाभिमतफलप्राप्त्यर्थं तत्तन्मार्गेण गच्छतीत्यर्थः॥ ४९०॥ इति परसम्पत्त्यधिकरणम्॥ १४०॥

## १४१ ॥ अथ अविभागाधिकरणम्॥ ४-२-७॥

सूत्रम्—अविभागो वचनात्॥ १३॥

(४९१) सम्पत्तिर्देवतायां भवतु लय इयं; सा हि सर्वस्य योनिः
भूयः स्रष्टुं क्षमा चेत्यसदनुपजतो वाच्यवैरूप्यदोषात्।
विश्लेषो भूतसूक्ष्मैरिह न च घटते; सृष्टिकल्पस्तु गुर्वी
प्रोक्ता धूमादिमार्गे गतिरपि भविनस्तत्परिष्वञ्जनेन॥ १७॥

इत्यविभागाधिकरणम्॥ १४१॥

---

संपत्तिरेव नेति प्रकृते शंक्यते प्राप्तुमिति। प्रयति प्रयमाणे तनुभृति जीवे विद्वदविद्वद्रूप भोगमयवर्गौ वा प्राप्तुमुक्तरीत्या प्राप्तसूक्ष्मस्वदेहे चन्द्रमस्संवादाद्यनुकूलस्वदेहतापन्नसूक्ष्मांशः प्राप्तो येन तादृशे जाते, स्थूलदेहं स्वदेहत्वेनाभावितवति, श्रितहृदयसुषौ स्वपरित्यक्तदेहगतहृदयाकाशरूपसुषिः श्रितो यया, तस्यां परस्यां देवतायां संपत्त्या संपत्तिकरणेन किं लभ्येत। देवता यदि तत् स्थूलं विहायैतदीयसूक्ष्मदेहं स्वयमपि स्वीचिकीर्षति, कामं करोत्विति पूर्वपक्षः। तर्हि, 'तेजः परस्यां देवतायाम्' इति वाक्यं किमप्रमाणम्? तत्राह अत इति। प्राप्तोपकरणेन भोगापवर्गार्थं प्रस्थातव्यम्, न तु त्यक्तदेहगतवस्तुसंगमे मनः कर्तव्यमिति निश्चिते, तद्वाक्यं सार्वकालिकतया पूर्वमेव स्थितं परमात्मसंबन्धमनुवदतु। चिरघटिते चिरकालात् परमात्मसंबद्धे इत्यर्थः। तेजसि सिद्धस्य स्थितस्य संबन्धस्यानुवादः। यद्वा परस्यामिति स्त्रीलिंगदर्शनेऽपि घटिते इत्यस्त्रीलिंगेनापि परमात्मग्रहणम्, चतुर्थपादगतस्य परमे इत्यस्यात्रान्वयमभिप्रेत्य। किं तदनुवादफलमिति चेत्—एतावत् सर्वसाधारणम्; इतः परमयं परदेवतायत्तः। सा यत् प्रापयिष्यति, तत् प्राप्स्यतीति ज्ञापनमस्तु। निरस्यति मैवमिति। मानानुसारादिति: स्वरसप्रमितार्थं स्वीकृत्य फलं विचार्यम्। न त्वापाततः फलास्फूर्तिमात्रेण प्रमितार्थत्याग इति भावः। संभवत् फलमाह भ्रान्तिशान्त्यै इति। मरणवेदनानुभवानुवृत्ताया भ्रमपरिहारः फलं कल्प्यत इति भावः॥४९०॥

१७. ननु संश्लेषरूपार्थस्वीकारेण तत्फलान्वेषणापेक्षया लयरूपः प्रसिद्धोऽर्थ एव संपद्यत

"सेयं परमात्मनि सम्पत्तिः किं प्राकृतलयवत् कारणापत्तिरूपा, उत 'वाङ्मनसि' इत्यादिवद् विभागरूपेति चिन्तायाम्" इति भाष्ये सङ्गतिः। तदर्थविचारस्तु—किमियं सम्पत्तिर्लयरूपा, उताविभागरूपा। किं, 'तेजः परस्याम्' इति वचनस्य कारणापत्तिपरत्वं न्याय्यम्, उताविभागमात्रपरत्वमिति। इत्थं किल पूर्वपक्षी मन्यते—अत्र देवतायां सम्पत्तिरभिधीयमाना लय एव भवितुमर्हतीति। तदिदमाह-सम्पत्तिरिति। अत्र हेतुमाह-साहीति। तस्या देवतायाः सर्वकारणत्वात् लय एव वक्तुं युज्यत इत्यर्थः। तर्हि देवतायां लयश्चेत्, उत्तरं गमनादिकं न स्यादित्याशङ्क्याह—भूय इति। सैव देवता सर्वशक्तिमत्त्वात् भूयो देहादिकं स्रष्टुं क्षमा, तद्दत्तेन देहेन गच्छतीत्यर्थः। तदिदमयुक्तमित्याह—असदिति। तदेवोपपादयति—अनुषजत इति। अत्र हि, 'वाङ्मनसि सम्पद्यते' इति प्रथमोपात्तः सम्पद्यत इति शब्दः सर्वत्रानुषज्यते। अनुषक्तस्यैकस्य सम्पत्तिशब्दस्य पूर्वं संश्लेषमात्रमर्थः, इह पुनः परमात्मनि लय इत्यर्थान्तराभिधाने अर्थ(शब्द)वैरूप्यं प्रसज्येत। अवैरूप्येण निर्वाहे सम्भवति वैरूप्यं पुनरन्याय्यमेव। किञ्च विनाशो नाम भूतसूक्ष्मैर्विश्लेष एव स्यात्। स च न घटते; भूतसूक्ष्मैर्विश्लेषे सति तदुत्तरं गमनादिव्यापारान्वयायोगात्। ननु सर्वशक्तिः पर(रा)देवतैव विनष्टशरीरस्य तस्य शरीरान्तरमारभेतेत्याशङ्क्य कल्पनागौरवात् तदपि न सम्भवतीत्याह-सृष्टीति। विद्यमानं शरीरं परित्यज्य पुनश्शरीरान्तरारम्भकल्पनायां गौरवदोषः स्यादित्यर्थः। किञ्चार्चिरादिमार्गेण गच्छतो ब्रह्मविदो गमनं भूतसूक्ष्मपरिष्वङ्गमन्तरेण न सम्भवत्येव। धूमादिमार्गेण गच्छतो जीवस्य गमनं भूतसूक्ष्मपरिष्वङ्गेण पञ्चाग्निविद्यादिषु स्पष्टमेवोक्तम्। तद्वदत्रापि भूतसूक्ष्मपरिष्वङ्गेणैव भवति, न पुनः स्वरूपेण। अत एवाणुत्वात् स्वरूपेण गमनमित्यादिकमपास्तम्। बहुप्रमाणविरुद्धत्वात्॥

इत्यविभागाधिकरणम् ॥ १४१ ॥

## १४२ ॥ अथ तदोकोऽधिकरणम् ॥ ४-२-८ ॥

सूत्रम्—तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ १४ ॥

(४९२) नाडीजालेऽतिसूक्ष्मे न भवति सुशका मुक्तिनाडी विवेक्तुं
तस्मान्मूर्धन्यनाडीगतिरनियमतो मुच्यमानस्य पुंसः ।
वाक्यं गन्तुस्तयोर्ध्वं प्रवददमृततां सम्भवादस्तु ; मैवं
विद्यासम्प्रीतहार्दप्रसदनमहसा स्वार्हनाडीप्रवेशात् ॥ १८ ॥

---

इत्यस्यदर्श्यताम्, वागादेर्मनसि लयासंभववत् अत्र तदसंभवाभावादिति शङ्कयाऽधिकरणप्रवृत्तिः। संपत्तिरिति। योनिः उपादानम्। प्राणेन्द्रियभूतसूक्ष्मरूपसर्ववस्तुविशिष्टस्यैव जीवस्य तत्र लय उपपन्नः। सर्वोपादानत्वात्। कथं तर्हि उपरि गत्यादिकमित्यत्राह भूय इति। इच्छामात्रं प्रभोः सृष्टिः। तत् प्रतिमरणं क्षणिकप्रलयोऽपीति भावः। निरस्यति इत्यसदिति। अनुषजतः=अनुषंगबलात् प्राप्तस्य संपद्यत इति पदस्य वाच्येऽर्थे पूर्ववैरूप्यमेव दोष इति भावः। दोषान्तरमाह विश्लेष इति किमन्यत्रेव देहविश्लेष एव लयः, किं वा भूतसूक्ष्मैः सह जीवस्य लयः। नाद्यः, गमनार्थं स्थापिततया तद्विश्लेषायोगात्। अन्त्ये आह सृष्टीति। मा भूत् सृष्टिः। मुमुक्षुः तदभावेऽपि विरजानद्युत्क्रमणसमय इव स्वमाहात्म्यात् गच्छेदित्यत्राह प्रोक्तेति। तत्परिष्वङ्गनेनेति। अत एव संपरिष्वक्त इति सूत्रे उक्तम् ॥ तथाच संश्लेष एव संपत्तिः। तत्फलञ्च पूर्वोक्तमिति भावः ॥ ४९१ ॥

'एवं गत्युपक्रमावधि विद्वदविदुषोः समानाकार उत्क्रान्तिप्रकार उक्तः। इदानीं विदुषो विशेष उच्यते' इति[हि] भाष्ये सङ्गतिरुक्ता। तदर्थविचारस्तु–किं विदुषो मूर्धन्यनाड्यैव गमननियमः संभवति, नेति। किं, 'तयोर्ध्वमायन्' इति यादृच्छिकगमनानुवादः, उत नाडीविशेषेण गमननियमविधिः। किं नाड्यो दुर्विवेचाः, उत सुविवेचा इति। अत्र पूर्वपक्षमनुवदति—नाडीजाल इति। अतिसूक्ष्मे नाडीजाले मुक्तिनाडी देहादुत्क्रान्तेन गच्छता पुरुषेण विवेक्तुं सुशका न भवति। तेन, 'तयोर्ध्वमायन्' इत्यादिवाक्यं कादाचित्कसम्भावितार्थविषयम्, न पुनर्नियतार्थविषयमिति। तदिदमाह—तस्मादिति। मूर्धन्यनाडीगतिर्मुच्यमानस्य पुंसः कदाचिदनियमतो भवति। कदाचिदमूर्धन्यनाड्याऽपि मुच्यमानस्य पुंसो गमनं स्यादित्यर्थः। तेन तयोर्ध्वं गन्तुरमृततां प्रवदत्, 'तयोर्ध्वमायन्' इत्यादिवाक्यं सम्भवादेवास्तु। तमिमं पूर्वपक्षं दूषयति—मैवमिति। तत्र हेतुमाह—विद्येति। ब्रह्मविद्यासम्प्रीतस्य=प्रसन्नस्य हार्दस्य प्रभया(प्रभावात्) स्वार्हनाडीपरिज्ञानं जायते। तेन स्वकीयां नाडीं प्रविश्य स्वाभिलषितपुरुषार्थाय गच्छतीत्यर्थः॥ ४९२॥

(४९३) स्वाधीनो हार्दसंज्ञः स्वयमविकलया सम्पदा साकमेकः
स्थित्वा हृत्पद्ममध्ये स्थगितनिजतनुः सप्तलोकीगृहस्थः।
नाडीचक्रे सुषुम्नां निखिलघृतिकरीं नाभिमूर्धान्तरूपां
भित्त्वा तन्मध्यरन्ध्रप्रहितमिषुमिवोत्क्षिप्य नेता मुमुक्षुम्॥ १९॥

इति तदोकोऽधिकरणम्॥ १४२॥

---

१८. अविभागाधिकरणपर्यन्तमेका पेटिका उत्क्रममाणसर्ववस्तुमेलनपरा विद्वदविद्वदुभयसाधारणविषयिणी। अथ विद्वद्विषयं पेटिकान्तरम्। परमात्मनि विश्रम्य प्रस्थितस्य मूर्धन्यनाडीप्रवेशः शिरसो निष्क्रमणाय अतः। तन्नियमानियमविचार इह। नाडीति। नाडीनामतिसूक्ष्मत्वात् मिथस्स्यूतत्वाच्च विशेषविवेचनं मुखांशदर्शनस्य दुष्करम्। तस्मात् तेनैव पथा निष्क्रमितव्यमिति न नियमः कार्यः। मुच्यमानस्य=मुक्तिं भजतः मुक्त्यर्थं प्रस्थितेषु कस्यचित् तया गतिः, अन्यस्यान्यथाऽपीति अनियमेन गतिरस्तु। 'तयोर्ध्वमायन् अमृतत्वमेति' इति च संभवद्विषयम्; नेतरव्यवच्छेदकम्। यद्वा तया गच्छतो मुक्तिनियमः; नाड्यन्तरेण गच्छतस्तु यथायथमित्यर्थः स्यात्। वाक्यमिति। तया मूर्धन्यनाड्या ऊर्ध्वगन्तुः अमृततां प्रवदत्=स्पष्टं ब्रुवत् वाक्यं संभवात् तयाऽपि कस्यचिद्गमनसंभवादस्तु। तस्याः मुक्त्येकप्रापकत्वसंभवाद्वाऽस्तु। परिहरति मैवमिति। यादृच्छिकगमनविषयकत्वे मन्त्र एवायं व्यर्थः स्यात्। 'तया मुक्तिमेति; विष्वङ्ङन्याः' इति श्रुत्या व्यवस्थायां क्रियमाणायां तद्भञ्जनमप्ययुक्तम्। अन्यथा अर्चिरादिमार्गगतिरपि संभवाभिप्राया स्यात्। मार्गविज्ञानाय हार्दानुग्रहसंपादनार्थमपि, 'तेज. परस्याम्' इति संपत्तिर्भवितुमर्हति। हार्दानुग्रहे च हृदयस्याग्रं प्रद्योतते। तेन नाडीद्वारं प्रकाशितं भवति। अतो नियमेन तत्र प्रवेशः सुकरः। तदाह विद्येति। विद्यया सम्यक् प्रीतस्य हार्दस्य भगवतो यत् प्रसदनं प्रसादः; तस्मात् महः=तज्जन्यः हृदयाग्रभागप्रकाशः, तेन तदधीनविवेके स्वस्य अर्चिरादि प्रेप्सोऽर्हायां नाड्यां प्रवेशो हि भवतीति। हार्दस्य यत् प्रसदनं=प्रकृष्टं सदनं हृदयं तस्य महसा अग्रभागप्रकाशेनेत्यर्थो वा। तदोकोऽग्रज्वलनमिति सूत्रात्॥ ४९२॥

भगवत्प्रसादलब्धपरिज्ञानस्य भगवत्प्रेरणेनैव मूर्धन्यनाड्या ब्रह्मलोकपर्यन्तमिषुवत् सहसैव गमनमाह—स्वाधीन इति। स्वतन्त्रो हार्दसंज्ञो भगवान् स्वयमविकलया स्वश्रिया साकम्। सम्पदेति सर्वैश्वर्यप्रदायिनी सहधर्मचारिणी लक्ष्मीरभिधीयते, 'लक्ष्म्या सह हृषीकेशः' इति हि वदन्ति। अथवा भगवदैश्वर्यमेव वाऽभिधीयते। एकशब्दः प्राधान्यवाची। हृत्पद्ममध्ये स्थित्वा स्थगितनिजतनुः = अभक्तानामप्रकाशितनिजतनुः; अस्थगितनिजतनुरिति वा—भक्तानां प्रकाशितनिजतनुः; 'अतिदूरमभक्तानां भक्तानां पुरतः स्थितम्' इति हि वदन्ति। सप्तलोकीगृहस्य इति वचनं सर्वेषां पितृत्वेन संरक्षकत्वं प्रदर्शयति। अयं खलु नाडीचक्रे बह्वीषु नाडीषु विद्यमानास्वपि निखिलधृतिकर्री नि(अ)खिलसन्तोषकर्री(कारिणीं) नाभिमूर्धन्तिकगां सुषुम्नां नाडीं भित्त्वा अनावृतमुखीं कृत्वा तन्मध्यरन्ध्रगहितं जीवं धानुष्कप्रयुक्तमिषुमिवोत्क्षिप्य मुमुक्षुं परमपदपर्यन्तं नेतेत्यर्थः॥ ४९३॥ इति तदोकोधिकरणम्॥ १४२॥

## १४३॥ अथ रश्म्यनुसाराधिकरणम्॥ ४-२-९॥

### सूत्रम्—रश्म्यनुसारी॥ १९॥

(४९४) एतैरेवेति वाक्ये दिनकरकिरणालम्बनेनोर्ध्वयानम्

यत् प्रोक्तं योगिनस्तत् दिनमु तेनियतं निश्चयुक्तयेति चेन्न।

अह्नि च्छायासु रात्रिष्वपि हि लघुतरा रश्मयः सन्ति लिङ्गात्(ङ्गैः)

तापो वर्षादिरात्रौ न यदि, हिमदिनन्यायतो नेयमेतत्॥ २०॥

---

१९. ननु हार्दानुग्रहात् सर्वमुपपन्नमिति कथम्। तस्यैवाभावात्। यदा हि स्थूलमेष त्यजति, तदा तदेव विशीर्येत इति हृदयेऽपि विकृते कुत्र स स्यात्। तत्प्रसादलब्धविवेकोऽप्ययं सूक्ष्मनाडीसुषिगुहां प्रविष्टः सूक्ष्मतमदेहः पीपीलिक सहस्रांशैकांशभूत कियता कालेन प्रत्यङ्गं सुषुम्नाग्रं प्राप्स्यति। परिमाणाधिवये च तन्नाडीप्रवेशनिष्क्रमौ दुष्करौ—इत्यादिशंकाः परिहरति स्वाधीन इति। हार्दसञ्ज्ञोऽयं परमात्मा स्वाधीनः न पराधीनस्थितिः, एकः=सृष्टिप्रलयसर्वकालवर्ती, 'प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया' इति गीतोऽयमजहत्स्वस्वभावः, 'यदेनज्जराऽऽप्नोति प्रध्वंसते वा, किं ततोऽतिशिष्यते' इति प्रश्नपूर्वकं दहरविद्यायाम्, 'नास्य जरयैतज्जीर्यति, न वधेनास्य हन्यते, एतत् सत्यं ब्रह्म पुरम्' इति सर्वपुरत्वेन अविनाशित्वेन चोक्तः सर्वदैवाविकलसंपत्संपन्नः बृहदारण्यके, 'इन्धो नाम दक्षिणेऽक्षन् पुरुषः, वामे तस्य पत्नी विराट्' इत्युक्त्या अविकलसंपद्रूपया श्रिया च समेतः, अत एव गृहस्थ सप्तलोकीरूपे गृहे च स्थितः, हृत्पद्माभावमात्रेण वेश्मदारिद्र्यमप्राप्तः, हृत्पद्ममध्ये बहिश्च स्थित एव स्थगितनिजतनुः परैरदृश्यमानदिव्यमंगलविग्रहः मध्यमनाडीत्वात् सर्वशरीरधारणार्थस्थापिताम् अत एव मुख्यतया मुख्यपुरुषार्थमार्गतया क्लृप्तां नाड्यन्तरप्रवेशनेऽनेकनाडीप्रवेशक्लेश. स्यादिति आनाभेः आ च मूर्धन्तात् स्थिततया द्राघिष्ठामेतद्देहप्रवेशानुगुणं भिनत्ति। यथा च गमने विलम्बो न स्यात्, तथा मुमुक्षुमिषुमिव क्षिपति। 'स यावन्मनः क्षिपेत्, तावदादित्यं गच्छति' इति च श्रुतिः। तदा सद्य एव निष्क्रान्तमादाय सर्वव्यापी स्थगितनिजतनुः परमं पदं नेता च भवतीति यथाप्रमाणमेष्टव्यम्॥ ४९३॥

२०. सुषुम्नानाड्या शीर्षकपालभेदेन बहिर्गतो मुमुक्षुः श्रुतिप्रामाण्यात् आदित्यरश्मीनां

विदुषो हृदयात् शताधिकया मूर्धन्यनाड्या निर्गतस्याऽऽदित्यरश्मीन् अनुसृत्य गमनं चिन्त्यत इति सङ्गतिः । तदर्थविचारस्तु—किं रश्म्यनुसारेण गमननियमो विदुषः सम्भवति, नेति । किं, 'रश्मिभिरूर्ध्वमाक्रमते' इति वाक्यं पाक्षिकगमनानुवादकम्, उत नियमविधिपरम् । किं निशि मृतस्य रश्म्यनुसारेण गमनं सम्भवति, नेति । किं निशि रश्मयः सम्भवन्ति, नेति । अत्र पूर्वपक्ष-मनुवदति—एतैरिति । 'एतैरेव रश्मिभिरूर्ध्वमाक्रमते' इत्यस्मिन् वाक्ये योगिनो दिनकरकिरणा-लम्बनेन यत् ऊर्ध्वयानमुक्तम्, तत् दिनमृतिनियतमिति। तत्र हेतुमाह-निश्युक्तेति। निशायां सूर्य-किरणस्यासम्भवेनायुक्तत्वादित्यर्थः। तदेतत् प्रतिक्षिपति—नेति। तदेवोपपादयति—अह्नीति । अह्नि यथा छायायामौष्ण्यलिङ्गः तु दिनकरकिरणसद्भावः, एवं निश्यप्यौष्ण्यादेव लिङ्गात् दिनकरकिरण-सद्भावोऽस्त्येव । ननु किमर्थं स्फुटं नोपलभ्यत इत्याशङ्क्याह—लघुतरा इति । तत्रान्यच्छायैव दृष्टान्तः । ननु वर्षादिरात्रौ तापो नास्ति, कथं तत्र दिनकरकिरणसद्भावः? तत्राह—हिमदिनन्यायत इति । हेमन्तकाले दिवसेऽपि तापो नास्ति ; किमेतावता सूर्यकिरणसद्भावो न स्यादित्यर्थः॥ ४९४॥

इति रश्म्यनुसाराधिकरणम् ॥ १४३ ॥

## १४४ ॥ अथ निशाधिकरणम् ॥ ४-२-१० ॥

सूत्रम्—निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वात् दर्शयति च ॥ १९ ॥

(४२५) सर्वेषामप्रशस्तं रजनिमरणमित्यह्नि योगी म्रियेत ;
प्रेयात् यद्येव रात्रौ, न परममरणं तत् भवेदित्ययुक्तम् ।
कर्म प्रारब्धकार्यं ह्यनियतसमयं क्षीयते ; तावदेवे-
त्युक्तश्चास्मिन् विलम्बोऽह्नि निशि च परं विद्यया सोऽश्नुतेऽतः ॥ २१ ॥

निशि मृतस्य सूर्यकिरणसद्भावोऽस्तु नाम ; अथाप्यात्मविदां निशि मरणस्य शास्त्रेणैव प्रति(नि)षिद्धत्वात् तेषां निशि मरणमेव न सम्भवतीति शङ्कया सङ्गतिः । तदर्थविचारस्तु—किं निशि मृतस्य विदुषो ब्रह्मप्राप्तिः सम्भवति, नेति । किं निशि मरणस्याधोगतिहेतुत्वं निशि मृतस्य ब्रह्मप्राप्त्य-

प्रततानां नाडीषु नित्यसम्बन्धात् तद्द्वारा अर्चिरादिमार्गमेति । तत्र रश्म्यनुसारित्वमनियतमिति शंकते एतैरिति । 'अथ यत्रैतदस्माच्छरीरादुत्क्रामति, अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते' इति वाक्ये यत् प्रोक्तं सूर्यरश्म्यवलम्बनेनोर्ध्वं गमनं योगिनः, तत् दिवा मरण इति व्यवस्थितमस्तु । रात्रौ सूर्यरश्म्यभावेन तदवलम्बनायोगादिति । निरस्यति नेति । अहनि यथा छायासु लघुतराः रश्मयः सन्ति, तथा रात्रिष्वपि सन्त्येव । लिङ्गादित्येकवचनान्तपाठश्चिन्तामणौ । बहुवचनपक्षे स्थले वायौ जलेऽपि कचिदौष्ण्यस्योप-लम्भात्, गहनगुहान्तर्भाग इव सर्वत्रान्धतमसाभावात्, अल्पान्धकारे कतिपयवस्तुदर्शनात्, निदाघे निवातेऽपि स्थले तापस्वेदादिदर्शनात् च लिङ्गेभ्यस्तत्सद्भाव उन्नीयत इत्यर्थः । ननु वर्षादिसमये रात्रौ तापो न लक्ष्यत इति तदा मृतस्य योगिनः कथं रश्मिसाहाय्यमित्यत्राह ताप इति । यदि तदा तापो न, तदाऽपि न रश्म्यभावः। हेमन्तादौ हिमेनाभिभवात्ऊष्माणुपलम्भ इति भाष्ये उक्तम् ; तन्न्यायेन संततवर्ष-साप्यूष्माभिभावकत्वमेष्टव्यम् । एवं गुणाभिभवेऽपि रश्मिद्रव्यसत्त्वात् न तदवलम्बनभंग. ॥ ४९४ ॥

२१. निशि मृतस्य रश्म्यभावप्रयुक्तगत्यभावशंका, रश्मिसद्भावप्रयुक्तगतिसम्भवेनाक्ष नोपपद्यते, निशिमृतत्वादेव तस्य तद्द्रयभावादिति शंकापरिहारार्थमधिकरणम् । सर्वेषामिति, 'दिवा च शुक्लपक्षश्च'

भावं ज्ञापयति, नेति। निशामरणनिन्दावचनं किं विद्वदविद्वत्साधारणम्, उताविद्वद्विषयमिति अत्र पूर्वपक्षमाह—सर्वेषामिति। विदुषामविदुषाञ्च सर्वेषां रजनिमरणमप्रशस्तमिति अह्न्येव योगी म्रियेत। एषः=योगी यदि रात्रौ प्रेयात्=म्रियेत, तन्मरणं चरममरणमेव न भवेदिति। तमिमं पूर्वपक्षं प्रतिक्षिपति—अयुक्तमिति। प्रतिक्षेपमेव विवृणोति—कर्मेति। अयमर्थः-प्रारब्धकर्मावसाने मोक्ष इति हि निर्णीतम्। तच्च प्रारब्धावसानमनियतसमयमेव, निशि वा दिवा वा जायते। अस्मिन्नर्थे, 'तस्य तावदेव चिरम्' इति श्रुतिरेव प्रमाणमित्याह—तावदिति। अयमर्थः—कर्मावसान-पर्यन्तमेव मोक्षविलम्ब उक्तः। तच्च कर्मावसानं निशि वा दिवा वा स्यादिति। एतदेव निगमयति—अह्नीति। अतः कारणात् अह्नि निशि वा कर्मावसाने ब्रह्मवित् प्राप्नोतीति ॥ ४९५ ॥

(४९६) यत्रैकस्यापवर्गः प्रतिनियततया गण्यते जातकर्मैः
तत् स्यादन्त्यं शरीरं ननु, (न तु) भवति ततोऽप्यन्ययोगव्युदासः।
न ह्यतः प्यन्तकाले दिनरजनिभिदा, देशभेदादि चैवं,
शव्यं कुर्वन्ति चा(य)स्मिन् यदु च यदु च नेत्यादि चैवं निशाव्ययम् ॥ २२ ॥

इति निशाधिकरणम् ॥ १४४ ॥

चरमशरीराभिव्यञ्जकप्रमाणपूर्वकं चरमशरीरमुक्त्वा तत्रापि दिनरजनिदेशकालनिमित्तादि-नियमाभावं देहवियोगस्य दर्शयन् शव्यकर्मानुष्ठानेऽननुष्ठानेऽप्यप्रत्यगात्मविदामर्चिरादिमार्गेण गत्वा परमपुरुषप्राप्तिमप्यावेदयति—यत्रेति। यत्र जातकर्मैः पुरुषैः यस्मिन् शरीरे कस्यचिदधिकारिणोऽ-

उत्तरायणमेव च। मुमूर्षूणां प्रशस्तानि विपरीतं तु गर्हितम्' इति वचने मुमूर्षूणामिति सामान्यनिर्देशात् सर्वेषां मरणदशापन्नानामुत्तरायणं शुक्लपक्षो दिवसश्च प्रशस्तानि-उत्तमगतिहेतवः, विपरीतं दक्षिणायनं कृष्णपक्षो रात्रिश्च गर्हितम्=अधमगतिहेतवः इत्यवगमात् योगिनामपि निशि मरणं मोक्षाव्यवहितपूर्वमरणं न भवति। अतो योगी अहन्येव म्रियेत—चरमशरीरवियोगभाक् भवेत्। एष योगी रात्रौ यदि प्रेयात्= शरीरवियोगवान् भवेत, तत्=मरणं न चरममरणं मोक्षाव्यवहितपूर्वमरणं न भवेत्। पुनर्जनिष्यते इति मन्तव्यमिति शंका। निरस्यति इत्ययुक्तमिति। कर्मेति। विद्या ह्यस्य मोक्षहेतुः; न मरणविशेषः। तत्र प्रतिबन्धकं प्रारब्धकर्म। तत् अहन्येव क्षीयते इति न नियन्तुं शक्यम्। तस्मादनियतसमयतया तस्य क्षीयमाणत्वात् निश्यपि जातु क्षीयेत। न केवलं यौक्तिकमिदम्। वचनमपि व्यक्तम्, 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' इति। अत्र प्रारब्धकर्मविमोक्षपर्यन्तकाल एवास्मिन् विलम्बतयोक्तः। तदुपरि जन्मान्तरप्रापकतदनुभावककर्माभावात् निश्यपि परमात्मानमश्नुते। 'भक्त्या ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुञ्च' हि परमात्मा शक्यः। ननु निशिमरणमेवाधमगतिहेतुकर्म स्यात्। नैवम्। न ह्ययं बुद्धिपूर्वं तन्मरणं करोति। किंतु कर्माभावादस्य स्वयं मरणं भवति। अतः संबन्धस्य यावद्देहभावित्वात्= कर्मसंबन्धस्य सर्वदेहानुगतत्वात्, कर्मदेहयोः कार्यकारणभावात् कर्माभावात् देहो न भवेदेवेति सर्वोऽपि कालस्तस्य कर्मक्षयहेतुतयाऽनुकूल एव ॥ ४९५ ॥

२२. दिनादिव्यवस्थाया अयोगं मुखान्तरेणोपपादयति यत्रेति। अत्र ननु भवतीति पाठः प्रकाशिकासमादृतः सम्यक्। तत्र चिन्तामण्यनूदितः न तु भवतीति पाठो न सम्यगित्यप्युक्तम्। तदर्थे

पवर्गः प्रतिनियततया गण्यते, तत् अन्त्यं शरीरं स्यात्। अथापि तावन्मात्रेण शरीरान्तरं नास्तीति निर्णेतुं न शक्यते; मध्ये [1]पापविशेषसम्भवेन जन्मान्तरस्यापि सम्भवादित्याह—न त्विति। अत्र दिनरजनिभिदावत् देशादिभेदो नास्तीति दर्शयति—न हीत्यादिना। हिशब्देन दिनरजनिभिदाभावस्य पूर्वोक्तस्य दृष्टान्तत्वेनोपादानमिदमिति दर्शयति। देशभेदादीति। अस्मिन् देशे मरणम्, अनेन निमित्तेन मरणमित्यादि च नास्ति; यथा दिनरजनिभिदा नास्ति, तद्वदित्यर्थः। एवं शवसंबन्धिकर्मानुष्ठानानियमोऽपि अध्यात्मविदां अपवर्गप्राप्तौ अनपेक्षित इत्याह शव्यमिति। 'यदु चैवास्मिन् [किञ्चिन] शव्यं कुर्वन्ति यदु च न; तेऽर्चिषमेवाभिसंभवन्ति' इत्यादिकं वाक्यं श्रूयते। एवं विभाव्यम्—एवमध्यात्मविद्विषयासाधारणवाक्यमनुसंधेयमित्यर्थः। ननु यद्यध्यात्मविदः शव्यं कर्म नियमेनाकर्तव्यम्, तर्हि तन्मरणे कदाचित् पुत्राः शिष्याश्च तन्मरणानुबन्धि कर्मजातं न कुर्युः। तथा च अलेपकसिद्धान्तप्रसङ्गः॥ न प्रसङ्गः! तत्पुत्राणामेव वैदिकानां तदुद्देशेन कृत्स्नकर्मफलस्यानुष्ठेयत्वात्। तदननुष्ठाने तेषां विहितानुष्ठानपरित्यागेन प्रत्यवायः स्यादित्यवश्यकर्तव्यमेव पुत्रादीनां पित्राद्युद्देशेन सर्वमपि कर्मजातम्। अतो नालेपकमतप्रसङ्गः। यथा वा रामकृष्णादिविषये कुशलवाद्यनुष्ठितं कर्म स्वकुशलार्थमेव, एवं मुक्तविषये पुत्राद्यनुष्ठितं कर्म स्वाभिवृद्धिहेतुरिति निरवद्यम्॥ ४९६॥ इति निशाधिकरणम्॥ १४४॥

दोषश्चोक्तः। अत्र पूर्वोत्तरार्धयोरुपपद्योपपादकभावोऽप्यवधेयः। अयमर्थः—ज्योतिर्विदः जातकमवधारयन्तः केषांचित् जातकं मोक्षजातकमिति, शरीरावसाने मुक्तिरिति वदन्ति। ततः यत्र शरीरे एकस्य जीवात्मनः अपवर्गः मोक्षः जातकैर्गण्यते, तत् शरीरं तस्यान्त्यमेव स्यात्—स्यात् किल। ततोऽपि ननु एवं जातकगणनं दपि खलु अन्ययोगव्यवच्छेदः देहान्तर योगो भवति निश्चितः। अत्र एवमन्त्यतया निश्चिते शरीरेऽपि हि तस्मात् अन्तकाले दिनरात्र्यादिलक्षण्यं नास्ति—तदेव शरीरं रात्रौ निष्क्रान्तजीवं भवति चेत्-तदा नास्य मोक्ष इति कथं वक्तुं शक्यम्; ज्योतिःशास्त्रविरोधापत्तेः-तस्मादपि निशि नेति मन्तव्यम्। एवं जातकावधृतान्त्यदेहजीवविषय इव योग्यन्तरविषयेऽपि न नियम इति भावः। एवमेव तस्यान्त्यशरीरस्य निषिद्धदेशादौ मरणेऽपि अपवर्गस्येष्टत्वात् तद्व्यवस्थाऽपि त्याज्या। तदिह निशीति सौत्रमुपलक्षणम्। दिवामरणाद्यावश्यकत्ववचनं तु निष्कामकोपासकपुरुषव्यतिरिक्तविषयकम्। तत्रोदाहरणमप्याह शव्यमिति। "यदु चैवास्मिन् शव्यं कुर्वन्ति यदु च न, तेऽर्चिषमेवाभिसंभवन्ति" इति वाक्ये योगिनो मृतस्य पुत्रादिकर्तव्यश्राद्धकर्मरूपोत्तरक्रियाया अभावेऽपि अर्चिरादिगत्या मोक्षप्राप्तिरविलम्बेनोच्यते एवञ्च प्रेतकर्माकरणे सद्गतिर्नास्तीत्यादिकं पुत्रस्य फलान्तरार्थिसंसारिविषयकमेव। तद्वदेव दिनादिनियमोऽपीति॥

न तु भवतीति पाठेऽप्ययमर्थो युक्तः:—यत्तत्र शरीरमन्त्यं निश्चितम्, ततोऽपि हेतोः अन्ययोगव्यवच्छेदः निशादिनिषिद्धकालादिसंबन्धव्यवच्छेदो न भवतीति ज्ञेयमित्यर्थः। इदमेवोपपादयति तृतीयपादेन। तुर्यपादे, शवं कुर्वन्ति यस्मिन्निति यस्मिन्नुपादाने, 'चास्मिन्' इति पाठः उपात्तो युक्तः, श्रुतौ, 'यदु चैवास्मिन् शव्यं कुर्वन्ति यदु च न' इति वाक्ये यच्छब्दाभावात् इदंशब्दसत्त्वात्। बहुचकारवैरस्ये तु तदेकार्थतया, शव्यं कुर्वन्त्यस्मिन्निति स्यात्, न तु यस्मिन्निति॥ ४९६॥

1 मध्ये इति। पापविशेषसंभवस्यापि जातकतः सुज्ञानतया कथं तस्यान्त्यत्वनिश्चयः।

## १४५ ॥ अथ दक्षिणायनाधिकरणम् ॥ ४-२-११ ॥

सूत्रम्—अतश्चायनेऽपि दक्षिणे ॥ योगिनः प्रति स्मर्यते स्मार्ते चैते ॥ १९, २० ॥

(४९७) देहं योगीश्वरोऽपि त्यजति यदि रवेर्दक्षिणाऽऽवृत्तिकाले,
विन्देत् सायुज्यमिन्दोः, इह भवति पुनः, तच्छ्रुतेस्तत्स्मृतेश्च ।
मैवम्; पूर्वोक्तनीतिस्त्विह न हि विहताऽथास्य सायुज्यमिन्दौ
विश्रान्त्यै सूर्यनीत्या; जगदुपकृतये भीष्मकालप्रतीक्षा ॥ २३ ॥

विदुषो मरणे दिवारजनिविभागो नास्तीत्युक्तं येन हेतुना, तेनैव हेतुना दक्षिणायनोत्तरायणविभागोऽपि नास्तीत्युच्यत इत्यातिदेशिकी सङ्गतिः। तदर्थविचारस्तु—किं दक्षिणायनमृतस्य विदुषो ब्रह्मप्राप्तिः सम्भवति, नेति । किं, 'अथ यो दक्षिणे प्रमीयते' इति दक्षिणायनमृतस्य चन्द्रप्राप्तिवचनं ब्रह्मप्राप्त्यभावं गमयति, नेति । चन्द्रं प्राप्तानामावृत्तिवचनं किं विद्वदविद्वत्साधारणम्, उत अविद्वद्विषयमिति । किं भीष्मादीनां कालप्रतीक्षायां कालविधानस्मरणसहकृतसामान्यश्रुत्यनुरोधेन साधारणत्वसमाश्रयणं न्याय्यम्, उत, 'ब्रह्मणो महिमानम्' इति वाक्यशेषानुरोधेनाविद्वद्विषयत्वसमाश्रयणं न्याय्यमिति । अत्र चन्द्रं प्राप्तस्य पुनरावृत्तिरेव नियता भवतीति पूर्वपक्षमनुवदति—देहमिति । योगीश्वरोऽपि दक्षिणावृत्तिकाले देहं त्यजति यदि, तदा इन्दोस्सायुज्यं विन्देत्, इन्दुसायुज्यानन्तरमिह पुनर्भवति । कुत इत्यत्राह—तच्छ्रुतेरिति । चन्द्रं प्राप्तानां पुनरावृत्तिश्रुतेः। तथा तत्स्मृतेश्च । 'अथैतमेवाध्वानं पुनर्निवर्तन्ते' इति पुनरावृत्तिश्रुतिः । 'तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते' इति स्मृतिः । तदिदं निराकरोति—मैवमिति । तदेवोपपादयति—

२३. निशाधिकरणन्यायेनैव देशकालादिसर्वव्यवस्थाराहित्यसिद्धावपि दक्षिणायनविषयेऽधिकाशंकयाऽधिकरणान्तरारम्भः । देहमिति । कामं स सर्वोत्कृष्टयोगी स्यात्—अथापि यदि रवेः सूर्यस्य या दक्षिणावृत्तिः, उत्तरदिक्तो दक्षिणस्यां प्रत्यावृत्य संचारः, तत्काले=दक्षिणायने देहं त्यजति चेत्—इन्दोः सायुज्यं=चन्द्रसमानभोगत्वं विन्देत्=प्राप्नुयादेव । "अथ यो दक्षिणे प्रमीयते, पितॄणामेव महिमानं गत्वा चन्द्रमसः सायुज्यं गच्छति" इति विदुष एव दक्षिणायनमरणे चन्द्रसायुज्योक्तेः । पुनरावृत्तिस्तु न तत्र वाक्ये उक्ता; अथापि चन्द्रं प्राप्तानां पुनरावृत्तिरन्यत्र बहुशोक्ता, "तस्मिन् यावत्संपातमुषित्वा अथैतमेवाध्वानं पुनर्निवर्तन्ते" इत्येवम्। एवं तच्छ्रुतिः। तत्स्मृतिस्तु, 'तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते' इति । अत्र योगिपदमप्यस्ति । एवञ्च दक्षिणायने मुमूर्षतः किञ्चित् पुण्यकर्म न विनश्यति; शिष्यते; तदनुभवाय धूमादिमार्गेण चन्द्रसायुज्यं प्राप्नोतीति वितर्क्यते । एतावदर्थकल्पने गमकं भक्ताग्रेसरभीष्माचार्यकृतमुत्तरायणकालप्रतीक्षणमिति । परिहरति मैवमिति । इह दक्षिणायनमृतविद्वद्विषये पूर्वोक्तनीतिः 'संबन्धस्य यावद्देहभावित्व'रूपो हेतुः कर्मपरिशेषाभावरूपा हि यस्मात् न विहता, विशिष्यास्य कर्मसद्भावसाधकं मानं नास्ति हीति भावः । कथं तर्हि चन्द्रसायुज्यम्, तत्राह अथेति । तत्र, 'य एवं विद्वान् उदगयने प्रमीयते देवानामेव महिमानं गत्वाऽऽदित्यस्य सायुज्यं गच्छति' इति

पूर्वोक्तनीतिरिति। प्रारब्धकर्मावसाने सर्वथा मोक्षो नियत एव। चन्द्रं वा प्राप्नोतु सूर्यं वेति साधारणीयं नीतिः। तर्हि चन्द्रं किमर्थं प्राप्नोति ब्रह्मविदिति चेत्—सूर्यं वा किमर्थं प्राप्नोति। विश्रान्त्या इति चेत्-तत् तुल्यमित्याह—विश्रान्त्या इति। तर्हि मुमुक्षोर्भीष्मस्य किमर्थमुत्तरायणप्रेक्षणमित्याशङ्क्य, अन्यथासिद्ध्या परिहरति—जगदिति। अयमर्थः—भीष्मो हि धर्मप्रवर्तकत्वेन विश्वोपकारकः। तेन सुकृतिनामुत्तरायणे(ण) मरणस्य प्राशस्त्यं दर्शयितुमुत्तरायणं प्रेक्षितवान्। यथा हि भगवान् लोकसंग्रहार्थं सर्वं कर्माचरति, तद्वत् भीष्मस्याप्युत्तरायणप्रतीक्षणं लोकसंग्रहार्थमिति न विरोधः॥४९७

(४९८) किञ्च प्रारब्धकर्म प्रतिनियतमिदं जाह्नवीसम्भवस्य
स्वेच्छा येनैवमासीत्; स च वसुरभवत्; नैष साक्षाद्विमुक्तः।
तस्मात् विन्देत मुक्तिं नरपितृदिविषद् रात्रिकालेऽपि योगी;
स्यातां प्राशस्त्यनिन्दे तदितरविषये; गीतयोक्तौ तु मार्गौ॥ २४॥

इति दक्षिणायनाधिकरणम्॥ १४५॥

अत्र प्रकारान्तरेण परिहारमाह—किञ्चेति। अयमर्थः—लोके लोकपुरुषप्रतिनियतधर्मदर्शनेन सर्वेषामपि स एवाचार इति वक्तुं न शक्यते; यथा पाण्डवानां पञ्चानामप्येका पत्नी, कानीनः कर्णः कानीनो व्यासः। तेन तत्र तत्र नियतो धर्मस्तत्रैव वर्तते। एवं भीष्मस्योत्तरायणप्रेक्षणमस्तीति

---

सूर्यसायुज्यमपि पाक्षिकमुक्तम्। न हि विद्यान्तरप्रकरणेषु सूर्यसायुज्यमुक्तमस्ति। अतो विद्याविशेषनिष्ठस्य, मधुविद्यानिष्ठस्य वस्वादिप्राप्तिवत्, आन्तरालिकः सायुज्यभेदो मरणकालभेदसूचितोऽस्तीत्यङ्गीकार्यम्। अत एवात्र न धूमादिमार्गोऽपि। अर्चिरादिमार्गेऽपि चन्द्रप्राप्तिसत्त्वात्। अत एवात्र चन्द्रसायुज्यबोधकवाक्यसंनिधौ न पुनरावृत्तिरुच्यते। प्रत्युत, 'एतौ द्वौ सूर्याचन्द्रमसोर्महिमानौ ब्राह्मणो विद्वानभिजयति ब्रह्मणो महिमानमाप्नोति' इति अपुनरावृत्तिरेव गम्यते। यत्तु भीष्मकृतं कालप्रतीक्षणम्, तत्राह जगदुपकृतये इति। अविदुषामेव जगति भूयस्त्वात् तेषामुत्तरायणप्राशस्त्यबुद्धिप्रतिष्ठां समीपे चरतां वाक्याद्वगम्य, तत्प्रतिष्ठाभंगो मा भूदिति मत्वा, ये मोक्षमनपेक्ष्य स्वर्गाद्यवस्वादिपदमात्रप्रेप्सया कर्म चरन्ति, तेषामुत्तरायणमरणमपेक्षितमिति बुद्धिरुत्पाद्येति मत्वा चेत्येवमर्थः। उत्तरश्लोके विस्तर ॥४९७॥

२४. ननु जगदुपकृतये भीष्मेण कालप्रतीक्षेति न युक्तम्। एवं तर्हि योगिभिरन्यैर्दक्षिणायने म्रियद्भिः जगदुपकृतिस्त्यक्ता स्यात्। दक्षिणायनेऽपि प्रारब्धावसाने सति मोक्ष एवेति शास्त्रार्थे सति तत्र विस्रम्भं वहन्तो योगिनः एवमाचरता भीष्मेण विचालिता भवेयुरित्युत्कृष्टयोगिलोकापकार एव तु कृतः स्यात्। अतो योगिविषयविशेषशास्त्रार्थव्युत्पादनाय तेन दक्षिणायन एव मुक्तिः प्रशस्या। अतो विलम्बनमनुचितं स्यात्—इत्यत्र वक्तव्यं विशदयन् निगमयति किञ्चेति। प्रारब्धकर्मेति पृथक्पदम्। लोकसंग्रहार्थमुत्तरायण एव मरणमिच्छन्तु योगिनः। तावता प्रारब्धकर्मणो दक्षिणायन एव नष्टत्वे किं तावज्जीवितुं ते प्रगल्भेरन्। अतोऽशक्यविषये लोकसंग्रहन्यायानुसरणं कथम्। तत् तेषां तदा म्रियमाणानामपि मोक्ष एव। भीष्मस्तु स्वपित्रा, 'यदा त्वमिच्छसि तदैव ते मरणम्, न तु पूर्वम्'

सर्वेषां ब्रह्मविदामियमेव नीतिरिति कल्पयितुं न शक्यते । अयमत्र शब्दान्वयः—जाह्नवीसम्भवस्य प्रारब्धकर्म प्रतिनियतम्; येन कर्मविशेषेण युद्धमरणमुत्तरायणकालप्रतीक्षणमित्यादि। स्वेच्छै(च्छयै)-वमासीत् । एतन्न सर्वेषां ब्रह्मविदां साधारणम् । स च भीष्मो वसुरभवत्; न पुनः साक्षाद्विमुक्त इत्याह—स चेति । तेन मुमुक्षोः कालविशेषप्रतीक्षेत्यस्यार्थस्य नायं दृष्टान्तः । उक्तमर्थं निगमयति—तस्मादिति । नराणां रात्रिर्निशा, पितॄणां रात्रिः कृष्णपक्षः, देवानां रात्रिर्दक्षिणायनम्; एतेष्वपि कालेषु योगी देहं त्यक्त्वा मुक्तिं विन्देत । तर्हि पुराणादिषूत्तरायणस्य प्राशस्त्यं दक्षिणायनस्य च निन्दा कथं क्रियत इत्याशङ्क्याह—स्याताभिति । तदितरविषये = अध्यात्मविद्व्यतिरिक्तविषये इत्यर्थः। किञ्च भगवद्गीतायामहरादिशब्देन रात्र्यादिशब्देन चोक्तौ मार्गावेव; न पुनः कालविशेषौ। तेन ब्रह्मविदामहरादिनियमो नास्तीत्यर्थः ॥ ४९८ ॥ इति दक्षिणायनाधिकरणम् ॥ १४५ ॥

---

इत्यनुगृहीतत्वात् पित्रनुग्रहाहितां शक्तिमवष्टभ्य लोकसंग्रहमप्यकार्षीत् । किञ्च जाह्नवीसंभवत्वात् स्वमातृगंगाप्रभावानुवृत्त्या च तथा संकल्पे स शक्तः स्यात् । अपिच यथेच्छमरणमित्युक्तावपि दक्षिणायन एव मासान्तरमृतिं संवत्सरानन्तरमृतिं वा किं नैच्छत्; तस्मात् पितृप्रसादलब्धस्वच्छन्दमरणशक्तिः, उत्तरायणप्रशंसिलोकप्रवादश्रवणम्, पितृप्रभावप्रख्यापनेच्छेत्यादिसहकारिकं तस्य प्रतिनियतं=तदेकमात्रविश्रान्तमेकं प्रारब्धकर्म शिष्टमासीत, येन कर्मणा तस्य एवं निशिष्योत्तरायणविषयकतया स्वेच्छा जाता । इच्छां प्रत्यपि कर्मविशेष एव कारणम् । इच्छायाः शक्तिश्च पित्राहिता । अतस्तदिच्छाया. शास्त्रार्थपरिशीलनायत्तत्वाभावात कर्मविशेषायत्तत्वाञ्च तदाचारः प्रकृतसाधकः । हेत्वन्तरमप्याह स चेति । साक्षान्मोक्षगामिन आचार एवात्र प्रमाणम् । स तु वसुपदमेव जगाम, तस्मात् स्थानात् पश्चादेव मोक्षं प्रेप्सन् । अतः प्राकृतप्रशस्तस्थानवाञ्छितया उत्तरायणकालशास्त्रवश्यत्वं तस्य युक्तम् । तत्र प्राकृतलोके कर्मफलानुभवस्थानेकस्य तेन लब्धव्यतया तदर्थकर्मव्यतिरिक्तकर्मविधूननस्यैव तेन कार्यत्वात् सञ्चितावशेषोऽपि तस्य स्यात् ।

अधिकरणद्वयस्य कालादिव्यवस्थाराहित्यपरस्यैकपेटिकात्वसूचनेन एतत्सिद्धमर्थं निगमयन् अन्तिमसूत्रार्थमपि संगृह्णाति तस्मादिति । नरस्य रात्रिः प्रसिद्धा, पितृरात्रिः कृष्णपक्षः, दिविषदां देवानां रात्रिः दक्षिणायनम्; तत्कालेषु म्रियमाणोऽपि योगी मुक्तिं लभेतैव । पूर्वपक्ष्युपात्तस्य अयनद्वयप्रशंसागर्हणवाक्यस्य को निर्वाह इत्यत्राह स्याताभिति । तदितरविषये साक्षान्मुक्त्यर्थोपायसपत्नव्यतिरिक्तविषये । ननु तन्निर्वाहेऽपि चन्द्रलोकप्रापकदक्षिणायनमृतिश्रुतेरन्यथानिर्वाहेऽपि देवयानपितृयाणयोरहरुत्तरायण-रात्रिदक्षिणायनकालघटितत्वात् तत्तत्कालस्य तत्तत्स्थानप्रापकत्वस्य स्पष्टतया कथं रात्रिमरणे मुक्तिरित्याशंकायाम्, अन्तिमसूत्रार्थं दर्शयति गीतयेति । 'यत्र काले त्वनावृत्तिमावृत्तिश्चैव' इति गीतयोक्तौ कालौ तु न तत्तत्कालौ, किं तु मार्गौ । 'नैते सृती पार्थ जानन्' इति तत्रैव मार्गत्वोक्तेः। विवेचने मार्गपरैरपि कालशब्दैरातिवाहिका प्रोच्यन्ते, आतिवाहिकास्ते सर्वकालेऽप्यागत्य स्वमार्गे मुमुक्षुमतिवहन्तीति न कश्चिद्दोष इति भावः ॥ ४९८ ॥

चतुर्थाध्यायद्वितीयपादसर्वाधिकरणार्थनिरूपणम्—

(४९९) 1. सम्पद्येतान्यदक्षं मनसि, 2. तदपि तत्संयुतं प्राणवायौ,
3. सोऽध्यक्षे तैस्समेतः, 4. स च तदखिलवान् भूतवर्गे तु सूक्ष्मे ।
5 उत्क्रान्तिः स्यात् समाना, 6. युतिरथ च परे, 7. सा च संश्लेषमात्रं,
8. निर्गच्छेत् ब्रह्मनाड्या, 9. घृणिभिरथ, 10. निशा, 11. देवराऽयोश्च मोक्षी ॥२५॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां
चतुर्थस्याध्यायस्य द्वितीयः पादः ॥

उक्तानामधिकरणानां प्रधानार्थान् सङ्कलय्य दर्शयति–सम्पद्येतेति । वागादिकमन्यदक्षं मनसि सम्पद्येतेति आद्याधिकरणार्थः । एवमुत्तरेष्वप्यधिकरणेष्वर्थान् क्रमेणाऽऽचष्टे—वागादीन्द्रियसंयुतं तदपि मनः प्राणे सम्पद्येत । सोऽपि च प्राणवायुः तैस्समेतोऽध्यक्षे जीवे । स च जीवस्तदखिलवान् पूर्वोक्तसर्वसंयुक्तः सूक्ष्मे भूतवर्गे । उत्क्रान्तिः सेयं ब्रह्मविदब्रह्मविदोस्समाना । अनन्तरं- युतिः संयोगः– परे ब्रह्मणि सम्पत्तिः । सा च परमात्मनि संयोगमात्रम् । ब्रह्मनाड्या निर्गमनम् । घृणिभिः=सूर्यरश्मिभिर्गमनम् । अनन्तरं निशायाम्, देवरात्रौ दक्षिणायनेऽपि मोक्षी निर्गच्छेदित्यर्थः ॥ ४९९ ॥

इति निखिलतार्किकचूडामणिना सर्वतन्त्रस्वतन्त्रेण
श्रीमद्वरदार्यापरनाम्ना कुमारवेदान्ताचार्येण
विरचिते शारीरकाधिकरणचिन्तामणौ
चतुर्थस्याध्यायस्य द्वितीयः पादः ॥

—o—o—

२५. पादार्थान् संगृह्णाति संपद्येतेति । 1. मरणकाले अन्यदक्षं स्वभिन्नं सर्वमिन्द्रियं मनसि संपद्यते । 2. सर्वाक्षसंयुक्तं तत् मनोऽपि प्राणवायौ । 3. तैरिन्द्रियैः समेतः स प्राणः अध्यक्षे जीवे । 4. तदखिलवान् तैः प्राणान्तैः सर्ववान्; सर्वपूर्वोक्तविशिष्ट इति यावत् । तादृशः सः जीवः सूक्ष्मभूतपञ्चके । 5. एतावदुक्त्वा उत्क्रान्तिः विद्वदविदुषोः समाना । 6. अथ भूतानामुक्तविधानां परे परमात्मनि युतिः संपत्तिरुक्ता । 7. सा च संपत्तिः न लयः; किं तु संगमः । 8. अथ जीवो मध्यमनाड्यैव मुक्तये निष्क्रामतीत्युक्तम् । 9 मूर्धानं प्र सः सूर्यरश्मीनवलम्ब्य यातीति । घृणिभिः रश्मिभिः । 10. अथ निशायामपि मोक्षी मोक्षभाक् भवतीति, 11. तत देवरात्रौ दक्षिणायनेऽपि मोक्षभागित्युक्तम् ॥४९९॥

इति वात्स्यसत्यव्रतवर्तिवीरराघवाचार्यकृतिषु
अधिकरणसारावलिव्याख्यायां सारार्थरत्नप्रभायां
चतुर्थस्याध्यायस्य द्वितीयः पादः ॥

—o—o—

॥ चतुर्थस्याध्यायस्य तृतीयः पादः ॥

संग्रहेण चतुर्थाध्यायतृतीयपादार्थप्रदर्शनम्—

(५००) निर्गत्य ब्रह्मरन्ध्रात् तपनकरमथाऽऽलम्ब्य नाडीनिबद्धं
प्रत्युद्यद्देववृन्दप्रहितबलिरसौ येन योगी प्रयाति ।
मौकुन्दः ख्याप्यतेऽसौ परमिह मुनिना पञ्चभिन्यर्यायभेदैः
मोहाकूपारपारं पुरमभिगमयन् मुक्तिघण्टापथो नः ॥ १ ॥

अथ वक्ष्यमाणपादार्थं सङ्कलय्य दर्शयति—निर्गत्येति । अयमर्थः—ब्रह्मरन्ध्रान्निर्गत्य नाडीनिबद्धं तपनकरमथाऽऽलम्ब्य प्रत्युद्यद्देववृन्दैः, 'सर्वेऽस्मै देवा बलिमावहन्ति' इति प्रमाणानुसारेण प्रहितबलिः = प्रहितोपहारो योगी येन मार्गेण गच्छति, मौकुन्दः = मुकुन्दप्रापकोऽसौ मार्गो मुनिना पाराशर्येण पञ्चभिन्यर्यायभेदैः = अधिकरणैः ख्याप्यते । किं कुर्वन्? मोहाकूपारपारं = पुरं परमपदं नः अभिगमयन् । मुक्तिघण्टापथः = अर्चिरादिमार्ग इत्यर्थः ॥ ५०० ॥

१४६ ॥ अथ अर्चिराद्यधिकरणम् ॥ ४-३-१ ॥

सूत्रम्—अर्चिरादिना तत्प्रथितेः ॥ १ ॥

(५०१) शाखाभेदेषु भिन्ना गतिरुपनिषदोऽधीयते ; तन्मुमुक्षोः
विद्यावैषम्यनीत्या गति(सृति)रपि विषमा ; न व्यवस्थाऽर्चिरादेः ।
नैतत् ; सर्वत्र तैस्तैरिह तदिदमिति प्रत्यभिज्ञानसिद्धौ
भाव्यं न्यूनाधिकत्वप्रभृति निखिलमप्यत्र सिद्धाविरुद्धम् ॥ २ ॥

---

१. अहरादिशब्दानां मार्गद्वयघटकानां न कालपरत्वम्, किंतु तत्तत्कालाभिमानिदेवतानेयमार्गांशपरत्वमित्युक्तं द्वितीयपादान्तिमाधिकरणे । स एव मार्ग इहार्चिरादिश्चिन्त्यते । तमिमं पादं यथाभाष्यं पूर्वपादद्वितीयपेटिकारूपविद्वदसाधारणार्थप्रतिपादकभागेन संगमयति निर्गत्येति । तदोकोऽधिकरणे रश्म्यनुसार्यधिकरणे चोक्तयोः संग्रहः पूर्वम् । प्रत्युद्गच्छद्भिः अहरादातिवाहिकवृन्दैः प्रहितः अर्पितः बलिर्यस्मै तादृशः । निशाधिकरणदक्षिणायनाधिकरणावसाने मार्गत्वोक्त्या अहरादिदेवतानेयमार्गत्वसिद्धौ अतिवहनकाले, 'तस्मै देवा बलिमावहन्ति' इत्युक्तसत्कारोऽप्यर्थसिद्धः । अग्न्यादिरातिवाहिकश्च नैकैकव्यक्तिः, किंतु प्रायो गणभूत इति सर्वार्थसिद्ध्युदाहृतवाक्यादितः सिद्धम् । एतत्पादे तेषां पूर्णनिरूपणमभिप्रेतमित्याशयेन प्रत्युद्यद्देववृन्दप्रहितबलिरित्युक्तम् । मनोवेगेन गच्छतो विरक्तस्यापेक्षाविरहेऽपि ते तमर्चन्ति । येन घण्टापथेन याति, असौ ख्याप्यत इत्यन्वयः । मौकुन्दः मोक्षपदब्रह्मप्रापकः ; ब्रह्मपथ इति प्रसिद्धेः । असौ परम् एकमार्गमात्रम् । अर्चिरादिनैव सर्वगमनम्, नान्यो मौकुन्द इति निरूपणमिह । यद्वा परं=प्रकृष्टतया आतिवाहिकपौर्वापर्य-इयत्तादिनिर्धारणेन ; मोहाकूपारः अज्ञानसमुद्रः तस्य पारं=परस्तात् स्थितं पुरं भगवद्वासुदेवनगरीमयोध्याममिगमयन् नयन् इति कार्याधिकरणनिष्कृष्टार्थप्रदर्शनम् । यद्वा परं पश्चात्, द्वितीयपादानन्तरमित्येवार्थः । नः अस्मान् अभिगमयन्नित्यन्वयः । अनेन प्रपन्नानामप्ययमेव मार्ग इति दर्शितम् । अयमेतत्पादार्थः ॥ ५०० ॥

अत्र सङ्गतिर्भाष्ये, 'विदुष उत्क्रान्तस्य नाडीविशेषेण हार्दानुग्रहात् गत्युपक्रम उक्तः। तस्य गच्छतो मार्ग इदानीं निर्णीयते' इति। तदर्थविचारस्तु-किं विद्वान् अर्चिरादि(ना) मार्गेणैव गच्छति, उत तेन वा मार्गान्तरेण वेत्यनियमः। किं सर्वविद्यास्वेको मार्ग आम्नायते, उत नाना मार्गा इति। किं क्रमान्तरपदार्थान्तराम्नानात् नानामार्गसमाश्रयणं न्याय्यम्, उताऽऽदित्यादिप्रत्यभिज्ञानेन मार्गैकत्वाश्रयणं न्याय्यमिति। अत्र पूर्वपक्षमाह—शाखाभेदेष्विति। छान्दोग्ये वाजसनेयके कौषीतकिब्राह्मणे च तत्रतत्र शाखाभेदेषूपनिषत्सु भिन्नामेव ब्रह्मविदां गतिमधीयते। तत्र भिन्नप्रकारत्वं भाष्य एव सुव्यक्तमुक्तम्। तेन मुमुक्षोर्ब्रह्मविद्यावैषम्यन्यायेन गतिचिन्तनमपि विषममेव। तेनार्चिरादेर्न व्यवस्था = नियमेनैकरूप्यं नास्तीति। तदिदं प्रतिक्षिपति—नैतदिति। सर्वत्र तैस्तैरग्निवाय्वादित्यचन्द्रविद्युत्प्रभृतिभिस्तदेव देवयानमिति प्रत्यभिज्ञाने सिद्धे सति न्यूनाधिकत्वप्रभृति = न्यूनत्वमधिकत्वं व्यत्ययेन कथनमपि निखिलं न्यायसिद्धार्थाविरुद्धं भाव्यम् = भावनीयम्॥ ५०१॥

(५०२) चैद्यादीनामयोग्यास्थिरचरजनुषां पुण्डरीकादिकानां
भीष्मादीनामुपास्तिक्रमभवविभवव्यूहलोकस्थिता(तौ?)नाम्।
धातॄणां तत्सुतानामविकृतिविगमे ब्रह्म सम्प्रेप्सवा(प्सता)म-
प्यन्येषां प्रस्थितिः सा शिवपृथुमतिभिश्चिन्तनीया यथार्हम्॥ २॥

इत्यर्चिराद्यधिकरणम्॥ १४६॥

एवमर्चिरादिमार्गेण ब्रह्मविदां गमनमिति भगवत्प्राप्तौ गमननियमो भवतोक्तः। परमपदं गच्छतां नानाप्रकारेण गमनं दृश्यते प्रमाणवाक्येषु; तत् कथमित्याशङ्क्य प्रमाणसिद्धार्थप्रहाणायोगात् तत्र तत्रोचितमेव प्रकारवैषम्यं प्रतिभावाञ्चिन्तनीयमित्याह—चैद्यादीनामिति। अयमत्र

२. प्रथमाधिकरणे अर्चिरादिर्मार्ग एक एव ब्रह्मप्राप्तये नियत इति सिद्धान्तः क्रियते। उपनिषत्सु ब्रह्मप्रापकमार्गो बहुधोक्तोऽस्ति। न तत्रैकरूप्यम्। उपकोसलविद्यायामर्चिरादयः अमानवान्ताः अष्टौ मार्गमध्ये उक्ताः। छान्दोग्येऽष्टमे प्रपाठके आदित्यमात्रमुक्तम्। कौषीतकिब्राह्मणे वरुणेन्द्रप्रजापतिलोका उक्ताः। बृहदारण्यके आदित्यात् पूर्वं देवलोक उक्तः। संवत्सरादयो नोक्ताः। अतो यत्र यावद् निर्दिष्टम्, तावतैव तन्मार्गपूर्तिरिति नानैव मार्गाः। अत एव चैद्यपुण्डरीकादीनामर्चिरादि विनापि ब्रह्मप्राप्तिरुच्यत इति अन्येऽपि मार्गाः सन्तीति ज्ञायते। तत् तस्मात् मुमुक्षोः यथा प्राप्यैक्येऽपि विद्यानां भक्तियोगानां स्थानगुणादिभेदेन वैषम्यम्, तथा गतयोऽपि नैकरूपाः। अतोऽर्चिरादिमार्गः अन्यूनानतिरिक्तातिवाहिकघटित एक एव सर्वत्रेति व्यवस्था नास्तीति पूर्वपक्षः। निरस्यति नैतदिति। यथा गुणादेर्न्यूनाधिकभावेनोपादानेऽपि शाखाभेदेन विद्या न भिद्यते, तद्वत् उक्तिवैषम्येऽपि एकमार्गप्रत्यभिज्ञासत्त्वात् सर्वत्र सर्वाङ्गोपसंहारः। अतः न्यूनत्वमधिकत्वं पर्यायशब्दान्तरं क्रमभेद(विरोध) इत्यादिकं प्रत्यभिज्ञाबलसिद्धैक्याविरुद्धं यथा तथा भाव्यं चिन्तनीयम्॥ उत्तराधिकरणैः सर्वसमीकरणं व्यक्तीभविष्यति॥ ५०१॥

३. यत्तु चैद्यादिविषये मार्गभेददर्शनात् अर्चिरादिरेव मार्ग इति नियमो न युक्त इति—तदिदं विशदमनूद्य, परिहारः सुधियां सुकर इत्याह चैद्यादीनामिति। चैद्यः शिशुपालः। 'स श्रीकृष्णेन

भावः—सामान्यन्यायोऽयं ब्रह्मन्युत्क्रम्य ब्रह्मविदामर्चिरादिमार्गेण गमनमिति । ब्रह्मविद्विशेषाणां तुल्यप्रमाणसिद्धं गमनवैषम्यमपि नापह्नोतव्यम् । नैतावता ब्रह्मविदामर्चिरादिमार्गेण गमनमिति सामान्योऽयं महामार्गोऽपह्नोतव्य इति । चैद्यस्य तदानीमेव वासुदेवपदप्राप्तिः । अयोध्यास्थिर-चरजन्तुषां भगवता रामभद्रेण सह यावद्ब्रह्मलोकगमनम् । पुण्डरीकादीनां तत्तत्संवादोक्तप्रकारेण पुरुषविशेषाणामपवर्गप्राप्तिः । भीष्मादीनां वस्वादिपदप्राप्तिपूर्वकपरमपदप्राप्तिः । उपास्तिक्रमेण भगवद्विभवव्यूहलोकस्थितानां स्वाभिमतकाले फलप्राप्तिः । धातॄणां चतुर्मुखादीनां स्वस्माल्लोकात् परमपदप्राप्तिः । एवमन्यत्रापि विद्वद्भिश्चिन्तनीयमिति । एवं सामान्यगमनोपदेशमात्रेण यथोचित-

---

स्वचक्रेण सूदितः, तस्मिन्नेव लयमुपययौ' इति श्रीपराशरः । ततोऽर्चिरादि विनैव इहैव ब्रह्मप्राप्तिर्ज्ञायत इति चेत्—स किं शापावसाने पुनः प्राकृतं विष्णुलोकं प्राप्तः, परमपदं वा ? 'प्रतिकूलजन्मान्ते मुक्तिर्भ-विष्यति' इति तस्य शापप्रतिविधानात् मुख्यमुक्तिरेव । अत एव स्तोत्ररत्ने, 'सायुज्यदोऽभूः' इत्युक्तमिति चेत्—तर्हि अत्र श्रीकृष्णपदारविन्दे लयः, म्रियमाणस्य हार्दसंपत्तिरिव क्लेशपरिहारार्थः स्यात् । स्वकृतसर्वा-पराधक्षामणरूपा तत्पदप्रपत्तिरेव वा लय इत्युच्यते । एवमुपायनिष्पत्तौ पश्चादर्चिरादिना गमनमेव । कथं च संनिहितं प्रत्यक्षदैवमुपेक्ष्य साक्षादर्चिरादौ प्रविशेत् । विष्णुलोकं स्वस्थलं गत्वा वा गच्छतु, साक्षाद्वा ॥ विष्णुलोके यावत् भवति, तावदेव सायुज्यं चेत्—तर्हि अर्चिरादिमार्गस्य नैव प्रसक्तिः । अयोध्येति । स्थिरचरयोः स्थावरजङ्गमयोः जनुः उत्पत्तिः येषां तेषामयोध्यागतानां सरय्ववगाहिश्रीरामभद्राज्ञया मुक्तिरितीयं मुख्यमुक्तिश्चेत्—अर्चिरादिमार्गोऽप्यस्तु । सान्तानिकलोकप्राप्तिमात्रञ्चेत्—नार्चिरादिः । तत्पूर्वकमोक्षप्राप्तिरपीति चेत्—परमपदार्थप्रस्थानावसरे अर्चिरादिमार्गान्तर्गतयदातिवाहिकसामीप्यम्, तत्र प्रस्थानं वेदितव्यम् । पुण्डरीकेति । इमं भगवान् स्वयमेवाऽऽगत्य नीतवानित्याहुः । पुराणोक्तार्थनिष्कर्षेण तत्र वक्तव्यम् । "अहं स्मरामि मद्भक्तं नयामि परमां गतिम्' इत्येतादृशं नयनमपि अर्चिरादिगमनस्वीकारे न विरुध्यते । भीष्मेति । अयं मधुविद्यानिष्ठो वा तन्निष्ठतुल्यो वा वसुपदमेव प्रथमं भेजे । अर्चिरादिना प्रस्थाय मार्गमध्ये आदित्य प्राप्त्यवसरे वस्वादिवत् देवमधुभूताऽऽदित्यानुभवाय कञ्चित् कालं मार्गं विहाय परिसरं गत्वा स्थित इति स्यात् । तत्फलानुभवानन्तरमेव तत्समीपदेश एव मुक्त्यर्थं प्रस्थानं गमनारम्भ इति वा स्यात् । उपास्तिक्रमेण भवं जातं विभवव्यूहलोकेषु स्थितं स्थितिः । भावे क्तः । येषां तेषां तु । अत्र स्थितीनामिति वा पाठः । पूर्ववत् भवेत्यनेन बहुव्रीहिः । श्रीमद्रहस्यत्रयसारे, मधुविद्या – भारतवचन – पाञ्चरात्रसूक्ति – पञ्चाग्न्यधिकरणभाष्योदाहृतवाक्यादिकमुपासमत्रानुसंधेयम् । विभवादिलोकयायिनोऽपि क्रममुक्तिभाजः । धातॄणां कल्पभेदब्रह्माण्डभेदभिन्नानां चतुर्मुखानामधिकारा-वसाने सत्यलोकत एवार्चिरादौ प्रस्थितिः गमनारम्भः । तत्सुतानां सनकनारदकश्यपादीनामपि, "योगिनाममृतं स्थानं स्वात्मसंतोषकारिणाम्", "प्राजापत्यं गृहस्थानाम्" इत्याद्यवगतलोकतः प्रस्थितिरधि-कृतिविगमे, तदन्येषामप्यधिकारपूर्तौ ब्रह्म प्राप्तुं निष्पन्नोपायानामिन्द्रादीनामपि तथैव स्वस्थानसमीपतः प्रस्थानम् । नाभिलोकं प्रति नीचैरागमनम् । एवञ्च सर्वेषां पूर्णतया अपूर्णतया वा अर्चिरादिसंबन्धोऽस्त्येवेति

विशेषगमनं नापह्नोतव्यमित्युक्तं भवति ॥ ५०२ ॥ इत्यर्चिराद्यधिकरणम् ॥ १४६ ॥

१४७ ॥ अथ वाय्वधिकरणम् ॥ ४-३-२ ॥

सूत्रम्—वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥

(५०३) सम्प्राप्तो देवलोको मरुदपि च समं वत्सरादित्यमध्ये ;
नैकत्वं रूढिभेदात् ; तत इह तु तयोस्तुल्यभावात् विकल्पः ।
मैवं ; योऽयं प्रसिद्धः पवत इह मरुत्, देवतानां गृहत्वं
तस्योक्तं धारकत्वात् ; त(अ)त उचितमिदं निर्विकल्पं तदैक्यम् ॥ ४ ॥

इति वाय्वधिकरणम् ॥ १४७ ॥

भिन्नदेशाम्नातस्यार्चिरादिमार्गस्यैकत्वे स्थिते, तत्र क्रमचिन्तने प्राप्ते, संवत्सरादित्ययोर्मध्ये श्रुत्या युगपदेव प्राप्तयार्वायुदेवलोकयोर्भेदमङ्गीकृत्य अनियमेन क्रमोऽङ्गीकर्तव्यः, उत प्रमाणबलादेकत्वमेवाङ्गीकृत्यैकीभूतयोस्तयोरेकस्थानापन्नत्वमिति चिन्त्यत इति सङ्गतिः। तदर्थविचारस्तु—संवत्सरादित्ययोः मध्यप्राप्तौ वायुदेवलोकावनियतक्रमेण निवेशयितव्यौ, उत नेति। किं वायुदेवलोकशब्दात्तर्था-

---

मयं सर्वसाधारणः। तत्र तत्र विशेषस्तु घटनीयः। शितेति। शिता सूक्ष्मा तत्स्पृक् गभीरावगाहनचणा, पृथुः विस्तृता, सर्वविषयव्यापनशीला कूलंकषा च मतिर्येषां तैरित्यर्थः। प्रस्थितिशब्दः एतन्मार्गे गमनारम्भपरः ; न तु मार्गपरः ॥ ५०२ ॥

४. तत्रतत्र न्यूनाधिकभावेऽपि प्रत्यभिज्ञानबलादेक एव मार्गः। अविरोधाय सर्वं यथायथं जैमिन्युक्तक्रमनियामकप्रमाणवर्गपरिशीलनेन घटनीयमित्युक्तम्। तत्र क्वचित् कथंतायां परिहारोऽधिकरणद्वयेन क्रियते। तत्र, 'मासेभ्यो देवलोकं देवलोकादादित्यम्' इति वाक्ये आदित्यात्पूर्वत्वेन देवलोकः श्रुतः। कौषीतकिवाक्ये, 'स वायुलोकमागच्छति....तेन स ऊर्ध्वमाक्रमते। स आदित्यमागच्छति' इति आदित्यात् पूर्वं वायु श्रुतः। एवं वत्सरादित्ययोर्मध्ये देवलोको मरुदपरपर्यायो वायुश्च समं= पौर्वापर्यकल्पनानर्हतया संप्राप्तौ। न च तयोरैक्यम् रूढ्या भेदावगमात्। न च देवश्चासौ लोकश्चेति वायोरेव देवत्वं लोकत्वञ्च। 'वायुलोकमागच्छति' इत्यत्र वायोरेव लोकत्वौचित्यादिति शंक्यम्; वायोर्देवत्वकथनवैयर्थ्यात्, वाय्वादिप्राप्तिवत् तत्तत्स्थानप्राप्तेरपि वर्तमानतया लोकशब्दस्यात्र स्थाने रूढस्यान्यार्थकल्पनायोगात्। अतस्तुल्यत्वाद्विकल्पः। कोऽसौ देवलोक इति चेत्, उत्कृष्टस्य कस्यचित् देवस्य यस्तत्र मध्ये भवितुमर्हति, स एवास्त्विति। परिहरति मैवमिति। देवलोकशब्दोऽत्र वायुपर एव। 'योऽयं पवते, एष देवानां गृहाः' इति देवान् प्रति गृहत्वेन लोकत्वेन वायोरुक्तत्वात्। गृहत्वञ्च धारकत्वात्। ततः तस्मात् तदैक्यं तयोरैक्यं निर्विकल्पं विकल्परूपदोषपरिहाराय उचितम्। अन्यथा ह्युभयोर्भिन्नत्वे अष्टदोषदुष्टो विकल्पः प्राप्नोतीति। निर्विकल्पमिति ऐक्यविशेषणम् विकल्परूपदोषानास्पदमित्यर्थः। भिन्नत्वं तद्दोषास्पदमिति भावः।

एतदधिकरणप्रमेयविषयविस्तरो भाष्यार्थदर्पणे द्रष्टव्यः। सूत्राक्षरानुगुण्याय तदनुसारे भाष्ये

न्तरपरः, उत नेति । किं देवलोकशब्दस्य देवावासपरत्वं न्याय्यम्, उत वायोर्देवगृहत्वश्रवणानुरोधेन वायुपरत्वं न्याय्यम् । अत्र पूर्वपक्षी मन्यते—अत्र खलु संवत्सरादित्ययोर्मध्ये देवलोको वायुश्च श्रुत्यैव प्राप्तौ । न च तयोरेकत्वं वक्तुं शक्यते । लोके रूढिभेदस्य दृष्टत्वात् । तेनैकस्मिन् स्थाने तुल्यप्रमाणसिद्धत्वात् विकल्प एव स्यात् । तदिदमाह—सम्प्राप्तौ इति । तदेतन्निराकरोति-मैवमिति । निराकरणे हेतुमाह—योऽयमिति । 'योऽयं पवत एष देवानां गृहः' इति वायोर्देवगृहत्वं श्रुतिप्रसिद्धम् । कथं देवलोकत्वमित्याशङ्क्याह—धारकत्वादिति । स्वर्गलोको वायुनैव धृत इति पुराणादिषु प्रसिद्धमेतत् । एवमुपपादितमर्थं न्यायतो निगमयति—अत इति । विकल्पो ह्यष्टदोषदुष्टत्वात् कष्ट एवेतीममर्थं दर्शयितुं निर्विकल्पमिति विशेषणं प्रोक्तम् । अयमर्थः—वायुदेवलोकयोरैक्यं विकल्पप्रयुक्तदोषपरिहारार्थमङ्गीकर्तव्यमिति ॥ ५०३ ॥ इति वाय्वधिकरणम् ॥ १४७ ॥

## १४८ ॥ अथ वरुणाधिकरणम् ॥ ४-३-३ ॥

सूत्रम्—तटितोऽधि वरुणः सम्बन्धात् ॥ ३ ॥

(५०४) कौषीतकयागमोक्ता वरुणशतमखौ सोऽपि नाथः प्रजानां
क्वापि स्थाप्या निपीड्य श्रुतिमपि ; विफला ह्यन्यथा तच्छ्रुतिः स्यात् ।

---

पूर्वपक्षांशे विस्तरः कार्यः ; स विस्तरः इहापि पूर्वार्धोपरि निवेशयितव्यः । तदेवम्-उक्तरीत्या वायुदेवलोकयोर्भेदस्वीकारे क्रमानियम आपद्यते । कोऽसौ देवलोक इत्यनिर्धारणश्च । एवमनयोर्मध्ये गतिचिन्तको यं चिन्तयति, तस्य स मध्ये अतिवहनकाले निविष्टो भवतीति वक्तव्यम् । यदि कश्चिदन्यतरत्वेन चिन्तयिष्यति, तस्यान्यव्यवस्थया कोऽपि तत्र निविशत इति कल्प्यम् । एतद्गौरवपरिहाराय देवलोकशब्दयोगव्युत्पत्त्या उभयैक्यमादरणीयम् । तत्रैवमाशंका, संवत्सरदेवलोकैक्यमेव स्यात्, तस्यापि भाष्योपात्तवाक्येन, 'एत एव लोका यदहोरात्राणि....संवत्सराः' इत्यनेन, टीकोपात्तेन च, 'संवत्सरः खलु देवानां पूः' इति वाक्येन संवत्सरस्य देववासस्थानत्वावगमात् । एवञ्च, 'मासेभ्यः संवत्सरं संवत्सरादादित्यम्', 'मासेभ्यो देवलोकं देवलोकादादित्यम्' इति वाक्यद्वयैकरस्यम् । संवत्सरादित्ययोः संनिकर्षस्य श्रुतिप्रसिद्धत्वात् संवत्सरादादित्यमिति क्रमं स्वीकृत्य, 'वायोरूर्ध्वमादित्यः' इति क्रम एव भञ्जनीयः । स वायुः, 'अग्निलोकमागच्छति स वायुलोकम्' इति पाठक्रमाभङ्गाय अग्न्यनन्तरमेव निवेश्यः । भूदेवताऽन्तरिक्षदेवतयोस्तयोः संनिकर्षाच्चेति पूर्वपक्षपर्यवसानम् । सिद्धान्तेऽप्येवम्— संवत्सरस्य देवलोकत्वश्रवणेऽपि, टीकायां काले देवपुरत्वमवास्तवम्, ज्योतिश्चक्रस्थवैमानिकदेवतागणस्य वायुपाशधृतत्वात् वायोर्देशत्वाच्च तत्र देवगृहत्वं वास्तवम् । अतः, योऽयं प्रसिद्धः पवत इह लोके मरुत्, देवतानां गृहत्वं तस्योक्तमेव धारकत्वरूपहेतुबलादपि ग्राह्यमिति न संवत्सरदेवलोकैक्यम्, किं तु वायुदेवलोकयोरेव । संवत्सरादित्ययोरिव वाय्वादित्ययोः संनिकर्षेऽपि श्रुतयः सन्ति । अग्निवाय्वोरिव, वाय्वादित्ययोरन्तरिक्षद्युलोकदेवतयोः संनिकर्षः स्थितः संप्रत्याहृतो भवति । अतः वायुसंवत्सरोभयसाधारणदेवलोकशब्दं वायुरूपविशेषशब्देनैकार्थकं कृत्वा वायुशब्दादुपरि योजयेत् । एवञ्च अर्चिषोऽहरिति अहनि पञ्चमीज्ञापितमन्युत्तरत्वमप्यबाधितम् । अतः संवत्सरदेवलोकैक्यं विहाय, तदैक्यं=वायुदेवलोकैक्यं निर्विकल्पं=प्रकारान्तरत्यागपूर्वकमुचितं स्वीकर्तुमित्यपि उत्तरार्धस्यार्थः ॥ ५०३ ॥

तस्मात् ते वायुलोकात्परमनुपठनात् तत्र सन्निवेश्याः युक्तं
सम्बन्धात्(स्यादर्थात्) विद्युतोऽन्वग् वरुण इति परौ पाठतः तत्परौ स्तः ॥५॥

अत्रापि क्रमविशेषचिन्तैव क्रियत इति सङ्गतिः । तदर्थविचारस्तु—किं वरुणादयो यथापाठं निवेशयितव्याः, किं विद्युतोऽधि इति। किं वरुणस्य विद्युत्सम्बन्धानुरोध उपपन्नः, नेति। अत्र पूर्वपक्षी कथयति—कौषीतकिवाक्ये वरुणश्चेन्द्रश्च प्रजापतिरप्यातिवाहिकत्वेनोपदिश्यन्ते । ते चोपदेशावैयर्थ्याय क्वचिन्निवेशयितव्याः। श्रुत्या तेषां सर्वत्रापि निवेशो बाध्यते । अथापि पाठक्रमानुरोधेन श्रुतिं बाधित्वापि वायोरुपरि वरुणो निवेशयितव्यः । तथाच सत्यनेकश्रुतिबाधात् वरमेकत्रैव श्रुति बाध इति न्यायानुसारेण तेनैवोपदेशावैयर्थ्यहेतुना इन्द्रप्रजापती वरुणानन्तरं निवेशयितव्याविति तयोश्च तत्र पाठक्रमो विद्यते । तदिदमाह–कौषीतकीति। एवमत्र शब्दान्वयः—कौषीतक्यागमोक्ताः वरुणशतमखप्रजानाथाः श्रुतिं बाधित्वापि क्वचिन्निवेशयितव्याः । तत्र हेतुमाह—विफलेति । क्वचिन्निवेशाभावे तेषां श्रुतिर्विफला स्यात्। एवं क्वचिन्निवेश्यत्वे सिद्धे पाठक्रममनुसृत्य वायुलोकात्परं निवेशयितव्या इति । तदेतद् दूषयति—अयुक्तमिति । तर्हि कुत्र निवेश्यत्वं तेषामित्याशङ्क्याह—संबन्धा(स्यादर्था)दिति । अर्थाद्वरुणो विद्युतोऽधि निवेश्यः । इन्द्रप्रजापती तु पाठादेव वरुणात्परौ भवतः। वरुणानन्तरभाविनौ भवत इत्यर्थः ॥ ५०४ ॥

(५०५) यत्त्वस्यामानवस्य श्रुतमिह परसम्प्रापकत्वं भवेत् तत्
सद्द्वारत्वेऽप्यबाधं; तदपि सहकृतौ तच्छ्रुतौचित्यभूमा ।
यश्चोक्तो मानसाख्यस्तटित उपरि तु ब्रह्मलोकाप्तिहेतुः
तस्मान्नेता स नान्यो विदुरतिवहनं वैद्युतेनैव तस्मात् ॥ ६ ॥

इति वरुणाधिकरणम् ॥ १४८ ॥

अत्रामानवस्याव्यवहितब्रह्मप्रापकत्वं मा भूत्; इन्द्रप्रजापतिद्वारेण भवत्वित्याशङ्क्य वाक्यस्वारस्यानुरोधेनेन्द्रप्रजापतिभ्यां सहकारित्वेनावस्थिताभ्यां सहकृतस्यामानवस्यैव ब्रह्मप्रापकत्वं समुचित-

---

५. वरुणादीनां निवेशविषये विवादं शमयितुमनन्तराधिकरणम् । अग्निलोकमागच्छति स वायुलोकमिति क्रमो भग्नः। तद्वत् वायुलोकमागच्छति, स वरुणलोकम् इति क्रमोऽपि भङ्गनीय इति स्थाप्यते । स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकम् इति कौषीतक्यागमोक्ताः वरुणेन्द्रप्रजापतयः अन्येषां क्रमपरां श्रुतिमुपमर्द्य क्वापि स्थापनीयाः । अन्यथा वरुणादिबोधकश्रुतिवैफल्यात् । तत्र कौषीतकिपाठक्रमरक्षणाय वायोरुपरि त्रयो निविष्टाः सन्त्विति पूर्वपक्षः । निरस्यति इत्ययुक्तमिति । पाठक्रमापेक्षयाऽर्थक्रमो बलीयान्। विद्युद्वरुणयोश्च संबन्धः प्रसिद्धः। अतः 'चन्द्रमसो विद्युतम्' इत्युक्ताया विद्युत उपरि वरुणनिवेशः । श्रुततत्साहचर्यभंगे मानाभावात् **परौ पाठतस्तत्परौ स्तः । परौ** तद्भिन्नौ तत्पश्चाद्भाविनौ इन्द्रप्रजापती **पाठतः** यथापाठं यथापूर्वं **तत्परौ** वरुणानन्तरावेव **स्तः** भवतः। एवञ्च, 'आगन्तूनामन्ते निवेशः' इति न्यायोऽपि रक्षितः । अतो वायुपाठानन्तर्यं न वरुणक्रमसाधकमिति ॥ ५०४ ॥

६. विद्युत उपरि वरुणेन्द्रप्रजापतीनां निवेश इत्युक्तम्। पूर्वपूर्वं आतिवाहिक उत्तरोत्तरातिवाहिकसमागमं यावन्नयतीत्यर्थसिद्धं तथैव स्वीकृतम् । एवञ्च विद्युदपि वरुणे प्राप्ते निवर्तत इति स्यात् ।

मिति स्थापयति—यश्चास्येति । शब्दार्थस्तु—अस्यामानवस्य श्रुतं यत् ब्रह्मप्रापकत्वम्, तत् इन्द्र-प्रजापतिभ्यां (वरुणेन्द्रप्रजापतिभिः?) सद्वारत्वेऽपि यद्यप्यबाधं भवति(यद्यपि संभवति)—तथापि तैरमानवे(ववरुणे?)न्द्रप्रजापतिभिः सहितैरेव ब्रह्मप्राप्तिकरणे श्रुतौचित्यभूमाऽस्ति= 'स एनान् ब्रह्म गमयति' इत्यमानवकर्तृकत्वेन श्रुतब्रह्मप्राप्तिप्रतिपत्त्यौचित्यभूमाऽस्ति। अयमर्थः:-अमानव एव प्राधा-न्येन ब्रह्म गमयति(?) इन्द्रप्रजापती तु तदनुवर्तिनौ तत्रोपकुरुत इति । नन्वमानवस्य ब्रह्मप्राप्तिहेतुत्वं भवद्भिरुच्यते ; श्रुत्यन्तरे तु मानसस्य ; तत् कथमित्याशङ्क्य, अमानव एव मानसशब्देनाभि-धीयते ; ततो नामभेदमात्रमिति वदति—यश्चोक्त इति । शब्दान्वयस्तु— तटित उपरि ब्रह्मलोकाप्ति-हेतुर्यश्च मानसाख्य उक्तः, तस्मात् मानसात् नेता अमानवो नान्यः। (तस्मात्=वैद्युतात् नेता सः=

---

तत्रोक्तं सूत्रे, "वैद्युतेनैव ततस्तच्छ्रुतेः" इति। तदर्थोपपादनायाऽऽरभते **यस्त्विति** । अत्रेयं शंका—'चन्द्रमसो विद्युतम्' इत्यत्र विद्युत्पदं तावत् अहरादिपदवत् अभिमानिदेवतारूपातिवाहिकपरम् । एवञ्च तदुपरितने, 'तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति' इति वाक्ये, विद्युदभिमानिनः विद्युत्पुरुषस्यामानवत्वं विधाय तस्य ब्रह्मगमयितृत्वमुक्तम् । इदं ब्रह्मगमयितृत्वं साक्षादेवेष्यते चेत्, वरुणादयोऽन्यत्र निवेशनीयाः । अन्यथा अन्येषामिवामानवस्यापि वरुणादिद्वारैव नेतृत्वम् । अवश्यञ्च सद्वारकमेव तत् तस्य स्वीकार्यम्; श्रुत्यन्तरे, 'वैद्युतात् पुरुषो मानस एत्य ब्रह्मलोकान् गमयति' इति वैद्युताख्यामानवादन्यस्य मानसस्यैव साक्षात् ब्रह्मप्रापकत्वस्योक्तेः। विद्युदभिमान्येव हि तत्पुरुषः ; स एव च वैद्युतः, स एव चामानव इति । इमां परिहरति। सत्यम् अमानवस्यास्य परब्रह्मसंप्रापकत्वं वरुणादिद्वारकमित्युक्ताऽपि **अबाधम्** । तत्र विशेषबाधकं नास्ति ; **तदपि** तथापि, 'स एनान् ब्रह्म गमयति' इति अहरादिचन्द्रान्तातिवाहिकवैलक्षण्येन ब्रह्मप्रापकत्वस्यात्रोक्त्या तदर्थमेव तस्यामानवत्वविधानात् ब्रह्मलोकगमनशक्तिमत्त्वावगमात्, वरुणागमनात् प्रागिव ब्रह्माण्डात्परतश्च स एव नेतेति मध्ये वरुणादिसंनिधानसमयेऽपि तन्नेतृत्वाभंगाय वरुणादयः स्वदेशे माननार्थं सादरमागताः केवलं सहकारिण इतीष्यते । एवञ्च स ब्रह्म गमयति इति श्रुतमभग्नम् । इतरे तु उत्तरोत्तरकिञ्चित्स्थान-प्रापकाः, न ब्रह्मप्रापकाः । अतोऽमानवस्य **तैः** वरुणादिभिः **सहकृतौ** (सहकारमात्रे) इष्टायां **श्रुतस्य** अमानवब्रह्मप्रापकत्वस्यौचित्यातिशयः । ननु मानसेनामानवस्य व्यवधानमवर्जनीयमित्यत्राह **यश्चेति** । ब्रह्मप्रापकत्वं अमानवे मानसे च साक्षादुच्यत इति तदविरोधायामानव एव मानस इष्यते । अप्राकृतत्वात् अमानवत्वम् ; तस्यैव परमात्मसंकल्पमात्रप्रभवत्वात् मानसत्वम् । **एत्येत्यनेन** तस्य ब्रह्मलोकादागमनं ज्ञायते। "वैद्युतात् पुरुषो मानसः" इत्युक्त्यामानसस्यामानवभिन्नत्वमवगम्यत इति चेत्—तच्छंकापरिहारायैव सूत्रकारेण **वैद्युतेनैवेति एवकारः** प्रयुक्तः ; **तत** इति च प्रयुक्तम् । **ततः** तटितः विद्युतः वैद्युतादुपर्यपि वैद्युतेनैव नयनमित्यर्थः । तदाशयश्च – वैद्युतो यावद्दूरं नेतेति त्वया परिशील्यते, तदुपर्यपि स एव नेता मानसामानवयोस्तदैक्यादिति। श्रुतौ **वैद्युतात्** इति, सूत्रे **तत** इति, भाष्ये विद्युत उपरीति, सारे **वैद्युतपुरुषा-त्परस्तादि**ति, अत्र सारावलौ **तस्मान्नेते**ति च पञ्चम्यन्तं सर्वं वरुणदेशप्राग्देशावच्छिन्नविद्युत्पुरुषादित्यर्थकम्, **परस्तात्** तदवधिके तद्देशभिन्नतदुत्तरदेशेऽपीति पर्यवसानाभिप्रायम् । अतः सूत्राद्यनुसारिणि अस्मिन् प्रयोगे **तस्मादित्यस्य** संनिहिते **नेते**त्यत्रान्वयमुपेक्ष्य अन्य इति पदेनान्वयो न कार्य इति भाति । **परमपदसोपाने-**

मानसः न वैद्युतामानवादन्यः?) तत्र हेतुमाह—विदुरिति । अमानवो विद्युत्सम्बन्धी पुरुषविशेषः । मानसोऽपि तथा । तस्मात् विद्युत्सम्बन्धिना पुरुषेणैकेनैवातिवहनमाहुः ॥ ५०५ ॥

इति वरुणाधिकरणम् ॥ १४८ ॥

## १४९ ॥ अथ आतिवाहिकाधिकरणम् ॥ ४-३-४ ॥

सूत्रम्—आतिवाहिकास्तल्लिङ्गात् ॥ वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ४, ५, ॥

(५०६) भोगस्थानान्यमूनि ज्वलनदिनमुखान्यध्वचिह्नानि वा स्युः
लोकोक्तिच्छाययैव(वं) स्थितमिदमिति नासंभवात् कालशब्दे ।
स्पष्टे नेतृत्वपुंस्त्वे क्वचित्; अतिवहनं तद्वदन्यैश्च कार्यं
सन्दिग्धे वाक्यशेषात् गतिरिति जगुरग्न्यादिवाचोऽभिमन्तॄन् ॥ ७ ॥

अत्र सङ्गतिभाष्ये, 'किमर्चिरादयो मार्गचिह्नभूताः, उत भोगभूमयः, अथवा विदुषां ब्रह्म प्रेप्सता-(प्रेप्सुना)मतिवोढार इति। तदर्थविचारस्तु-किं अर्चिरादयो भोगभूमयः मार्गचिह्नभूता इति चिन्तायां पुनरपि चिन्त्यते-किं लौकिकोपदेशप्रकारानुरोधो न्याय्यः, उत, 'एत एव लोका यदहोरात्राण्यर्धमासा मासा ऋतवस्संवत्सराः' इति वाक्यानुरोधो न्याय्यः, उत गमयितृत्वलिङ्गानुरोध उचित इति । तत्रोभयप्रकारेण पूर्वपक्षमुपन्यस्य तयोः प्रकारयोः प्रमाणविरुद्धत्वादातिवाहिकत्वपक्षमेव प्रतिष्ठापयति—भोगस्थानानीति । अयमत्र शब्दान्वयः—अमूनि ज्वलनदिनमुखानि भोगस्थानान्येव स्युः; अथवा मार्गचिह्नानि स्युः । कुत इत्यत्राह—लोकोक्तीति । लोकोक्तिप्रकारो भाष्य एव सुव्यक्तमुक्तः । तदिदं प्रतिक्षिपति—नेति । अत्र हेतुमाह—असम्भवादिति । न हि कालवाचिनि शब्दे मार्गचिह्नवाचित्वं भोगभूमिवाचित्वं वा सम्भवति । तर्हि त्वत्पक्षे किं नियामकमित्यत्राह—स्पष्ट इति ।

---

ऽयमाशयो दर्शितः। विवृतश्चास्माभिर्बृहदारण्यके (8. 2.) परिष्कारे । तथा च तस्मात्=वैद्युतात्परं नेताऽपि स एव, नान्यः। तस्मात् ब्रह्मप्राप्तिं यावत् तेनैवातिवहनं सूत्रकारभाष्यकारादयो विदुरिति चतुर्थपादार्थः॥५०५॥

७. एतदर्थप्रतिपादकं वैद्युतेनैवेति सूत्रमनन्तराधिकरणगुणसूत्रम् । अहरादीनामातिवाहिकत्वनिर्णयानन्तरमेव तस्यार्थस्य सुवचत्वात् । अत्र तु वरुणादीनां प्रसक्तानां मुख्यनेतृत्वाभावज्ञापनाय तदेवाऽऽकृष्योक्तम् । अथानन्तराधिकरणार्थमाह भोगेति । अर्चिरादीनां भोगभूमित्वं वा, मार्गचिह्नत्वं वा नेतृत्वं वेति विशयः। अग्निसूर्यचन्द्रादीनां भोगभूमित्वं युक्तम्; क्वचित् लोकशब्दप्रयोगाच्चेति प्रथमकोटिः। ज्वलनः अर्चि (अग्निः) । अध्वचिह्नानि वा; सुदूरगमने यथावन्मार्गविज्ञानाय तत्तत्स्थलेऽव्यावर्तकतया चिह्नानामपेक्षितत्वात् । एवं हि लोकोक्तिः, अमूं नदीमतिलंघ्य, अमुं वृक्षमतिलंघ्य, अमुं पर्वतपार्श्वं प्राप्येत्यादि । भगवान् भरद्वाजश्च सीतासौमित्रिसहिताय श्रीरामभद्राय यमुनानदीं वटवृक्षञ्चातिलंघ्य चित्रकूटपर्वतपार्श्वगमनमादिदेशेति । खण्डयति इतिनेति । कालशब्दे कालवाचकपदे भोगदेशवाचित्वं वा चिह्नवाचित्वं वा न संभवति । अमानवे मानसे पुरुषत्वं नेतृत्वञ्चेति द्वे स्पष्टे । अग्निसूर्यचन्द्रवरुणादीनां तत् संभवि । तथा, 'संदिग्धेषु वाक्यशेषात्' इति जैमिनिन्यायेनाहरादिष्वपि चेतनत्वं नेतृत्वञ्च स्वीकार्यम्, अग्न्यादिपदं तत्तदभिमानिव्यक्तिपरतया प्रयुक्तमिति। शिष्टमुपरिष्टात् । अत एव, 'अक्ताः शर्करा उपदधाति' इत्यत्र,

'तत्पुरुषोऽमानवः। स एनान् ब्रह्म गमयति', 'वैद्युतात् पुरुषो मानस एत्य ब्रह्मलोकान् गमयति' इति क्वचिदमानवस्य नेतृत्वपुंस्त्वे स्पष्टे इति तद्वदन्यैरप्यतिवहनमेव कार्यम्। अस्मिन्नर्थे न्यायानुसारमेव दर्शयति—सन्दिग्ध इति। सन्दिग्धे तु वाक्यशेषात् गतिरिति हि नीतिविदः प्राहुः। ननु तर्ह्यग्न्यादिशब्दानामातिवाहिकपुरुषविशेषवाचित्वं कथमित्याशङ्क्य तेषामभिमानिदेवताविशेषवाचित्वात् पुरुषवाचित्वं सुप्रसिद्धमित्याह—अग्न्यादीति। अत्रापि जगुरित्यनुषज्यते। लोकेऽप्यग्न्यादिशब्दानां दिक्पालवाचित्वमभिधानकोशकारैरपि पठ्यते ॥ ५०६ ॥

(५०७) यां श्रुत्वा धर्मसूनुर्न्यपतत्, अभिपतेत् तां असौ तामसौघो
वर्गस्त्रैवर्गिकाणां पितृसरणिघटीयन्त्रचक्रे विघूर्णेत् ।
वर्त्मन्येषाऽर्चिरादिः श्रुतिभिरपुनरावर्तिनां संविभक्ता
तत्र ब्रूतेऽतिवोढॄंस्त्वदितरवत् अहःपक्षमासादिशब्दः ॥ ८ ॥

उक्तमर्चिरादिमार्गमितरस्मात् पुण्यपापमार्गद्वयात् वैलक्षण्येन दर्शयित्वा अहःपक्षमासादिशब्दानां देवताविशेषपरत्वमेव द्रढयति–यामिति। धर्मसूनुर्हि यां नरकमार्गं श्रुत्वा दुःखेन निपपात। ताम् असौ तामसौघः=तामसपुरुषसमूहः स्वयमभिपतेत् =प्रतिपद्येत। त्रैवर्गिकाणां त्रिवर्गमेव पुरुषार्थत्वेन स्वीकृत्य काम्यं कर्माऽऽचरतां वर्गः पुनः धूमादिमार्गघटीयन्त्रचक्रे विघूर्णेत्। काम्यकर्मानुष्ठाता घटीयन्त्रघटवत् ऊर्ध्वमुखमुत्क्रम्य कर्मफलानुभवान्ते तद्वदेव निपतेत्। एषा पुनरपुनरावर्तिनां वर्तनी श्रुतिभिः संविभक्तैव प्रतिपाद्यते। नन्वत्रातिवाहिकप्रसक्तौ अहःपक्षमासादिशब्दा

---

'तेजो वै घृतम्' इति वाक्यशेषसत्त्वात् द्रवद्रव्यलेपनरूपमञ्जनं घृतसाध्यमिति निर्णयात् किमिदं द्रवद्रव्यमिति संशयनिवृत्तिरित्युक्तम्। वाक्यशेषो नाम प्रकृतवाक्यैकवाक्यतापन्नमेतदर्थसंशयनिवर्तकवाक्यम्। प्रकृते च अहरादिविषये संशये अमानववरुणेन्द्रप्रजापत्यादीनामातिवाहिकत्वात् तद्घटितसमुदायनिविष्टत्वेन तथात्वावगमः। एवमत्र (मी. 2. 2. 12), 'प्राये वचनाच्च' इति सूत्रे तत्प्रायपाठात्=साहचर्यात् तद्रूपत्वमिति संदेहनिवृत्तिप्रकारः प्रदर्शितोऽपि भाष्ये। अयमेवाप्रायपायन्यायः। सोऽयं, 'संदिग्धे तु वाक्यशेषात्' इत्यनेन संगृहीतः स्यात्। संदिग्धे वाक्यशेषात् गतिः=निर्णय इति हेतोः अन्यैश्चातिवहनं कार्यम्। अतः अग्न्यादिशब्दाः अभिमन्तृपुरुषवाचका इत्यन्वयार्थः ॥ ५०६ ॥

८. तृतीयाध्याये भोगिनां राजसानां धूमादिमार्ग उक्तः। तत्रैवानिष्टादिकारिणां तामसानां न स मार्ग इत्युक्तम्। अत्र सात्त्विकानां विद्यारूपोपायनिष्पत्तौ मार्गोऽर्चिरादिरुच्यते। एवञ्च मार्गत्रयं गुणतारतम्यानुरोधेनास्तीति संकलय्याह यामिति। उपरि वर्तनीपदप्रयोगात् अत्र यां वर्तनीमिति लभ्यते। न्यपतत्। पापिनां दुःखानुभवप्रकारश्रवणमात्रेऽपि तदसहनेनेति शेषः। ताम् असौ इति पदच्छेदः। असौ राजसतामसविलक्षणः तामसजनानाम् ओघः संघः तां वर्तनीमभिपतेत्, अथ तया नरके पतेत्। त्रैवर्गिकाणां परलोकधर्मैश्वर्यकामभोगार्थकर्माण्यनुष्ठितवतां वर्गः संघः; पितृसरणिः धूमादिमार्गः तद्रूपे घटीयन्त्रे चक्रे मण्डले विघूर्णेत् भ्रमेत्। अपुनरावर्तिनां पुनरावृत्त्यनर्हाणाम् अपुनरावृत्तिप्रयोजकोपायपूर्तिमतामियं पूर्वोक्तमार्गद्वयात् संविभक्ता। धूमादिमार्गः नरकमार्गश्च केषाञ्चिदधिकारिणामेकान्तः स्यान्न्य इति समुच्चयेनापि भवेत्। अर्चिरादिसरणिस्तु विद्वल्लक्षणैव। तत्र अर्चिरादिप्रतिपादकश्रुतिषु श्रुतः अहःपक्षमासादिशब्दः इतरवत् अमानववरुणेन्द्रप्रजापतिशब्दवत् अतिवोढृपरः। सूर्यचन्द्रादि-

न घटन्ते ; पुरुषविशेषवाचकत्वाभावादित्याशङ्क्य कतिपयपदेषु पुरुषविशेषवाचकत्वे निर्णीते सति तन्न्यायेन सर्वत्र पुरुषविशेषवाचकत्वमेव स्वीकार्यमित्याह—तत्रेति ॥ ५ ७ ॥

(५०८) पूर्वं धूमादिमार्गे सुकृतिषु कथिता चन्द्रमःप्राप्तिरन्या ;
सायुज्यं न्यासविद्याप्रकरणपठितं चान्द्रमन्यादृगुक्तम् ।
अन्याऽत्रा(अत्रान्याऽ)र्चिर्मुखानामतिवहनकृतामष्टमस्याऽऽप्तिरिन्दोः ;
इत्थं सुस्था व्यवस्था ; प्रणिहितहृदयैरेवमन्यच्च सूह्यम् ॥ ९ ॥

अत्र चन्द्रप्राप्तिः त्रेधो(तत्रतत्रो)च्यते–किं तदेकम्, उत भिन्नमिति विशये तिसृणामपि चन्द्रप्राप्तीनां तत्रतत्रोक्तानां वैषम्यं दर्शयित्वा सर्वत्रापि सन्देहविषये सूक्ष्मबुद्धिभिरन्तेवासिभिः स्वयमेव वैषम्यं द्रष्टव्यमित्याह–पूर्वमिति । धूमादिमार्गे चन्द्रप्राप्तिरुच्यते; सा तावत् कर्मफलभोगार्था भिन्ना । तथा पुरुषविद्यायामध्यात्मविदामपि दक्षिणायनमरणनिमित्ता चन्द्रसायुज्यप्राप्तिरूपा काचिच्चन्द्रप्राप्तिरुच्यते; सा चान्या । इयं तु दक्षिणायनमृतानामुत्तरायणमृतानां वा सर्वेषामपि ब्रह्मविदामविशेषेणातिवाहिकानामष्टमस्य चन्द्रस्य प्राप्तिरभिधीयते । इयमपि ताभ्यां चन्द्रप्राप्तिभ्यामन्या काचिदपवर्गगामिनां सर्वेषामविशेषेण पञ्चाग्निविद्यायामभिहिता । तदिदमाह—अन्याऽत्रे(अत्रान्ये)ति । एवं शिष्यानुग्रहेणाव्यक्तार्थं विशदीकृत्य वक्तव्यानामीदृशानामर्थानां बहुत्वात् सूक्ष्मबुद्धिभिरन्तेवासिभिः स्वयमेवाशेषविशेषप्रतिपत्तिः कार्येति निगमयति—प्रणिहितेति ॥ ५०८ ॥

---

शब्देष्वपि विवादे आदिपदेन तद्ग्रहणम् । तेषामातिवाहिकत्वनिश्चये इतरपदेन तेषामपि ग्रहणम् । तत्र शब्द इति सामान्येनानुक्त्वा अहःपक्षेति कतिपयगणनात् अन्यविषयेऽतिवोढृत्वं निश्चितमित्याशयः स्पष्टः । एवं स्थिते इतरवत् इत्यस्य धूमादिमार्गस्थरात्र्यादिशब्दवदित्यर्थोक्तौ किं तत्रातिवोढृत्वं प्रागेव निश्चितमित्याशयः, उत तत्रापि प्रकृत इवातिवोढृत्वस्थापनाय इतरवदित्युक्तमिति विचार्य स्वीकार्यम्॥५०७

९. चन्द्रप्राप्तेर्नानारूपतामाह पूर्वमिति । अन्या वक्ष्यमाणचन्द्रप्राप्तिविलक्षणा । तत्र सोमराजभावेन सर्वस्वर्गसुखानुभवात् । न्यासविद्या तैत्तिरीये, 'ओमित्यात्मानं युञ्जीत' इत्युक्तप्रपत्तिविशेष. । तत्प्रकरणे तदर्थवादसमाप्तौ तत्फलविशेषकथनार्थं यत् दक्षिणायनमृत-तत्प्रपत्तिविशेषानुष्ठातृविषये चन्द्रसायुज्यं उक्तम्—तत् तत्र पूर्वसूक्ष्मदेहविशिष्टतयैव सुखविशेषप्राप्तिपूर्वकमुपरिगमनतथाप्रगमनप्राक्कालिकतया किञ्चित्कालं स्थितिः। अत्र तु सर्वमुमुक्षुसाधारणेऽर्चिरादिमार्गे अर्चिर्मुखानाम् अग्न्यादीनामातिवाहिकानां द्वादशानां मध्ये अष्टमस्येन्दोराप्तिः इतरातिवाहिकस्थलप्राप्त्यविलक्षणा । [अतिवहनम् अतिक्रम्य नयनम् ।] इत्येवं त्रयमपि व्यवस्थितम् । चतुर्थं प्याह प्रणिहितेति । अत्र कौषीतकिपर्यङ्कविद्यारम्भोक्ता चन्द्रप्राप्तिरभिमतेति भाति। अत्र, 'चित्रो ह वै गार्ग्यायणिः' इत्यारभ्य तेन यागे क्रियमाणे याजनार्थमागतस्य तत्त्वज्ञानाभावमालोच्य तत्त्वज्ञानमुत्पाद्य यागविशेषानुष्ठानं तत्रश्चन्द्रं प्राप्तस्य तत्र भोगानन्तरं चन्द्रमसा संवादः, तेन यत्दुर्वचनश्रवणेन भूमिं प्रति तस्याप्रेषणेनोर्ध्वलोकप्रस्थापनमित्यादिकमुक्तम् । मधुविद्यादौ वस्वाद्युपासनमेवोभयविधफलकम् ; अत्र विद्यया मुक्तिं गच्छतः ज्ञानगर्भकर्मणा मध्ये स्वर्गभोग इति विशेषः । तत्रात्मपरिष्कारोऽपि द्रष्टव्य. ॥ एवं चान्द्रविषयत्वेनैतद्वाक्यतात्पर्यवर्णनमुचितम् । एवंभूता बहवो विशेषाः वेदान्ते मोक्षार्थगन्तृपुरुषविषये प्रमाणान्तरभिता अपि प्रकृतवाक्यार्थतां कामयमनुभवन्तु ॥ ५०८ ॥

(५०९) भूलोकेशाग्निपूर्वान् कतिचन भविनः केऽपि मन्यन्त एतान्
शब्दैक्ये ह्यत्र गुर्वी भवति तदभिमन्त्रन्तराणां प्रक्लृप्तिः ।
अन्ये चामानवस्य स्वपदगतपरब्रह्मनेतृत्वदृष्ट्या
नित्यत्वात्(त्वं) तद्वदेता(दन्या)न्निजगदुरखिलान्नित्यवैकुण्ठभृत्यान् ॥१०॥

इति आतिवाहिकाधिकरणम् ॥ १४९ ॥

अत्र पूर्वप्रसक्तानामातिवाहिकानां सांसारिकाग्न्यादिदेवतारूपत्वम्, अथवा परमपुरुषाज्ञानुपालकाप्राकृतदेवतारूपत्वं वेत्याशङ्कमानस्य कस्यचिच्छिष्यस्य पक्षद्वयमपि प्रतिपत्तृभेदेन विभज्य दर्शयित्वोत्तरस्यैव पक्षस्य प्रामाणिकत्वं निगमयति—भूलोकेशेति । 'पृथिव्यन्तरिक्षं द्यौः' इत्यत्र, 'अग्निर्वायुरादित्यः' इत्यग्न्यादीनां त्रयाणामनुक्रमेण देवतात्वनिर्देशात् भूलोकेशः प्रसिद्धाग्निः । एवमन्तरिक्षद्दिवोर्वाय्वादित्यौ । एतान् आतिवाहिकान् कतिचन पुरुषाः प्रसिद्धाग्निपूर्वान् भविनः संसारिणो देवताविशेषान् मन्यन्ते । तत्र हेतुमपि दर्शयति—शब्दैक्य इति । अग्निशब्दादीनामैक्ये सति संसारिणोऽग्न्यादयः केचित् असंसारिणोऽग्न्यादयोऽपरे इत्यर्थभेदकल्पनं गुर्वी । शब्दस्यानुवृत्तार्थकथनमेव न्याय्यमिति भावः । तदभिमन्त्रन्तराणां सांसारिकाग्न्यादिदेवताभिमन्त्रन्तराणाम् अप्राकृताग्न्यादिदेवतानां प्रक्लृप्तिर्गुर्वीति तेषां भावः । अन्ये पुनराचार्या न्यायानुसारेण प्रकारान्तरमाहुः । तत्प्रकारमेव दर्शयति—अन्य इति । अयमर्थः—अमानवो हि वैकुण्ठवासिनं भगवन्तमेव प्रापयति । तस्मादमानवोऽप्राकृतः । तत्सहभावेन प्रापकौ ताविन्द्रप्रजापती चाप्राकृतौ । एवञ्च सति अन्येषामातिवाहिकानां प्राकृतत्वकल्पनं वैरूप्यादत्यन्तसाहसमेव । तस्मात्ते सर्वेऽप्यातिवाहिका दिव्यपुरुषा एवेति निर्धारयामः। अन्वयस्तु—अन्ये न्यायनिरूपणनिपुणबुद्धयः पुनः आचार्या अमानवस्य वैकुण्ठवासिपरमपुरुषप्रापकत्वदृष्ट्या नित्येष्वन्यतमत्वान्नित्यत्वं सिद्धमेव । तद्वदर्चिरादिकान् अन्यान् नित्यवैकुण्ठभृत्यान्निजगदुः। तेन त एव मुख्या अर्चिरादयः। प्रसिद्धाग्न्यादयस्तु तन्नामधारिणः तदाज्ञानुवर्तिन इति सर्वं रमणीयम् ॥ ५०९ ॥ इति आतिवाहिकाधिकरणम् ॥ १४९ ॥

---

१०. अग्न्यादयः आतिवाहिका इति ज्ञातम् । एतत्कार्यकारिण इमे के इति विचारे पक्षभेदं दर्शयति। अग्निप्रभृतयश्चेतना इति विदितम्। तत्र भूलोकदेवतादिदेवताभूताग्न्यपेक्षया ऽन्यत्वे मानाभावात् तान् भविनः संसारिणो दैवताविशेषानेव केऽप्याचार्या मन्यन्ते । ननु तेषामप्यभिमन्तृतयाऽन्ये कल्प्यन्तामिति चेत्—धर्मिणाम , तेषु मुमुक्षुजीवादिदर्शनसामर्थ्यादेश्च कल्पनापेक्षया प्रसिद्धेष्वेव तत्सामर्थ्यकल्पनं ज्यायः। अन्ये इति निजगदुरित्यत्रान्वयः। अमानवस्य मानसस्य नित्यत्वं=नित्यसूरित्वं तावत् दुर्बोधम्; तस्मात् तद्वदिमे अग्न्यादयो नित्यसूरय एव स्युः । अर्थभेदेऽपि नामैक्यसंभवात् । तत्र अग्निभूर्यादिशब्दप्रयोगः कुत इति चेत्—शब्दैक्येऽप्यर्थभेदस्य बहुल दर्शनात् क्लृप्तनित्यसूरीणामेव केषाञ्चित् तत्तन्नाम्ना ग्रहणमस्तु । कथं तेषु तन्नामधेयमिति चेत्—तेषां नामधेयान्येव भूलोकेशादिष्वपि निक्षिप्तानीति स्यात् । 'इन्द्रप्रजापती द्वारगोपौ' इति च श्रुति । अथवा तत्तत्पुरुषाधिकारिकदेशविशेषातिवहनकर्तृत्वात्, तत्तत्पदव्यवहार इति मन्तव्यम् । अन्ये ये नित्यसूरयः परमपदे वैकुण्ठस्य परमात्मनो भृत्याः, एते तेष्वेव केचिदिति ॥ ५०९ ॥

१५० ॥ अथ कार्याधिकरणम् ॥ ४-३-५ ॥

सूत्रम्—कार्यं बादरिरस्य गत्युपपत्तेः ॥ विशेषितत्वाच्च ॥ सामीप्यात्तु तद्व्यपदेशः ॥ कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ स्मृतेश्च ॥ परं जैमिनिर्मुख्यत्वात् ॥ दर्शनाच्च ॥ न च कार्ये प्रत्यभिसन्धिः ॥ अप्रतीकालम्बनान् नयतीति बादरायण उभयथा च दोषात् तत्क्रतुश्च ॥ विशेषञ्च दर्शयति ॥ ६-१५ ॥

(५१०) वैधात्रस्थाननेतॄन् समकथयदिमान् बादरिस्तादृशानां
गत्यौचित्यं तदा स्यात्; न खलु विभुजुषामत्र वेद्यं न लभ्यम् ।
सामीप्याद् ब्रह्म चोक्तः सरसिजवसतिः; तेन सार्धञ्च मुक्ति-
र्युक्तस्येतन्न; नानाश्रुतिपठितपरस्थानगत्याद्यबाधात् ॥ ११ ॥

अत्र सङ्गतिमर्थ्ये, 'अर्चिरादिनैव गच्छति विद्वान् । अर्चिरादिरमानवान्तश्च गण आतिवाहिको विद्वांसं ब्रह्म गमयति' इत्युक्तम् । इदमिदानीं चिन्त्यते । किमयमर्चिरादिको गणः कार्यं हिरण्यगर्भम् उपासीनान्नयति, उत परं ब्रह्मोपासीनानेव, अथ परं ब्रह्मोपासीनान् प्रत्यगात्मानं ब्रह्मात्मकतयोपासीनांश्चेति विशये' इति । पूर्वं त्रिभिरधिकरणैरर्चिरादेरेकत्वेन गुणोपसंहार उक्तः; अधुना द्वाभ्यामधिकरणाभ्यां तस्य स्वरूपं निरूप्यत इति पेटिकाभेदः । तत्र पूर्वमर्चिरादीनामातिवाहिकत्वमुक्तम्; इदानीं तेषामातिवाहिकत्वं किंविषयमिति विशेषचिन्ता क्रियत इति द्वयोरेकपेटिकात्वसिद्धिः । तदर्थविचारस्तु— किमर्चिरादिरातिवाहिको गणः कार्यं हिरण्यगर्भमुपासीनानेव नयति, उत परं ब्रह्मोपासीनानेव, अथ परं ब्रह्मोपासीनान् प्रत्यगात्मानं ब्रह्मात्मकतयोपासीनांश्चेति । किं परब्रह्मणि प्राप्ये गति-ब्रह्मलोकशब्दावुपपद्येते, नेति । ब्रह्मोपासीनानामेव गमयितृत्वे, 'तद्य इत्थं विदुर्ये चेमेऽरण्ये' इत्यादिवाक्यलाभञ्जस्यमस्ति, नेति । अत्र पूर्वपक्षमाचष्टे— वैधात्रस्थानेति । बादरिः स्वयमत्र पूर्वपक्षवादी । स त्वेवं मनुते । आतिवाहिकाः खल्वेते वैधात्रस्थाननेतार इति बादरिः समकथयत् । तादृशानाम्=विधातृस्थानयोग्यानाम् । तत्र हेतुमाह= गत्यौचित्यमिति । ब्रह्मलोक-

---

११. विदुषोऽग्न्यादयोऽतिवहन्तीत्युक्तम् । किं नयन्तीति नयनकर्म विचार्यते । अत्र बादरि-जैमिनिपक्षोपन्यासपूर्वकं स्वपक्षः कथ्यते बादरायणेन । तत्र बादरिपक्षमुपन्यस्य निरस्यति वैधात्रेति । बादरिः इमान् अग्न्यादीन् अमानवान्तान् आतिवाहिकान् वैधात्रस्थाननेतॄन् समकथयत् चतुर्मुख-संबन्धिस्थानभूतसत्यलोकप्रापकत्वेनावोचत् । तत्र हेतुमाह तादृशानामिति । तदा वैधात्रस्थान-नेतृत्वपक्षे विधातृउपासकानामेव तत्र नेतुं शक्यत्वात् तादृशानां विधातृस्थानप्राप्त्यर्हाणाम्-विधातृरूप-कार्यब्रह्मोपासकानामिति यावत्-गत्यौचित्यम् अनुमाप्यस्य विधातुरिह लोके अभावात् गत्यैव द्रष्टव्यतया गतेर्युक्तता स्यात् । कारणब्रह्मनेतृत्वे तु तस्य विभुनोऽत्रैव स्थितत्वात् विभुजुषाम् सर्वव्यापकब्रह्मो-पासकानामत्र उपासकत्वसमये ब्रह्म न वेद्य न खलु=अवश्यं दृश्यमेव, अत्रापि सत्त्वात् । अतः किमर्था गतिः । एवं गत्यनुपपत्त्या विधातुः प्राप्यत्वोपस्त्वेष्टौ प्राप्तिर्गतिपादकवाक्येषु उपासन विधायकवाक्येषु च ब्रह्मपदश्रवणं कथमुपपद्यते; तत्राह सामीप्यात्, चतुर्मुखस्य भगवन्नाभीपद्म उत्पन्नत्वात्, तदेव वसतिः वासस्थानं यस्य तादृशत्वात् संनिकर्षातिशयात् लक्षणया स एव ब्रह्म

प्राप्तौ पुरुषार्थे गत्यौचित्यमस्ति। किं परमात्मप्राप्तौ गमनौचित्यं नास्तीत्याशङ्क्य उत्तरमाह—न खल्विति। अयमर्थः—सर्वव्यापकस्य भगवत उपासकानामत्रैव किं फलं न लभ्यम्। भगवत्स्वरूपप्राप्तिरेव हि फलम्। सा पुनरत्रैव उपलभ्यते। किमनेन गमनोपदेशेन निरर्थकेन। ननु चतुर्मुखब्रह्मप्राप्तौ विवक्षितायाम्, 'स एनान् ब्रह्म गमयति' इति नपुंसकलिङ्गान्तब्रह्मशब्दो नोपपद्यते; तदा, 'ब्रह्माणं गमयति' इति वक्तव्यत्वादित्यत्रा(त्याशङ्क्या)ह—सामीप्यादिति। 'यो ब्रह्माणम्' इति परब्रह्मसम्भवस्य परब्रह्मसामीप्यात् नपुंसकलिङ्गान्तेन ब्रह्मनाम्ना सोऽप्यभिधीयत इति न विरोधः। अत्र, 'मानस एत्य ब्रह्मलोकान् गमयति' इति ब्रह्मलोकानिति बहुत्वं पाशाधिकरणन्यायेन नेतव्यम्। लोकशब्दोपादानञ्च निषादस्थपतिन्यायेन ब्रह्मैव लोको ब्रह्मलोक इति नेयमिति नानुपपत्तिगन्धः। न चात्र मुक्त्युपदेशानुपपत्तिरिति मन्तव्यमित्याह—तेनेति। अयमर्थः—पूर्वं सरसिजवसतिं प्राप्य(प्र तस्य?) तेन सहैव मुक्तिरन्ते स्यादिति। एतत् सर्वं भाष्य एव सुव्यक्तमनूदितमिति नास्माभिः प्रपञ्च्यते। तदेतन्निराकरोति—एतन्नेति। तत्र हेतुमाह—नानेति। 'तद्विष्णोः परमं पदम्' इति श्रुतिपठितपरस्थानगमनस्य नानाश्रुतिसिद्धत्वात् श्रुतिबाधो न न्याय्य इति। शेषं भाष्ये ॥ ५१० ॥

(५११) मार्गोऽयावर्चिरादिर्गमयति परमं धाम गत्यादियोगात्
ब्रह्मोक्तेर्मुख्यभावादिति तु निरणयज्जैमिनिर्युक्त(रमत्य)मेतत्।
वक्तव्यं स्वल्प किञ्चित्, नयति परविदः स्वान्वितब्रह्मनिष्ठान्
तद्देहस्वात्मनिष्ठानपि सुखभिदयाऽमी च सम्पूर्णनिष्ठाः ॥ १२ ॥

बादरिमतप्रतिक्षेपकस्य जैमिनेः पक्षमनूद्य, शिष्याणां विशदप्रतिपत्त्यर्थं वक्तव्यशेषमपि तत्राऽऽचष्टे—मार्ग इति। असावर्चिरादिर्मार्गः परमं धाम, 'तद्विष्णोः परमं पदम्' इति श्रुतिसिद्धं

उक्तः=ब्रह्मेरयुक्तः। तर्हि कथमेतदुपासकानां मुमुक्षुत्वम्, 'प्रेत्यास्माल्लोकादमृता भवन्ति' इत्येवममृतत्ववचनञ्च कथमित्यत्राह तेनेति। 'ब्रह्मणा सह ते सर्वे', 'ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे' इति परान्तकाले परारुयस्य चतुर्मुखायुषः अवसानकाले तत्रैव ब्रह्मलोके ब्रह्मणा सह युगपदेव मुक्तिरुक्तेति क्रममुक्तिमालोच्य मुमुक्षुत्वादिव्यपदेश इति पूर्वपक्षः। निरस्यति इत्येतन्नेति। नानेति। नानाश्रुतिपठितत्वं न परमात्मस्थानविशेषणम्; किं तु गतिविशेषणम्। गतिश्रवणात् तद्बाधो न युक्त इति भावः। यद्वा तद्विष्णोरित्युदाहरणात् परस्थानविशेषणमेव। संघाते नित्यता न (515) इति वक्ष्यमाणरीत्या बादरेर्वैकुण्ठलोकसत्त्वेऽपि विवादः स्यादिति। अयं भावः—सर्वव्यापिनः परमात्मनः सर्वत्र लभ्यत्वात् तस्य लोकोऽपि नास्तीति त्वन्मतमयुक्तम्, परस्थानस्य नानाश्रुतिपठितत्वात्, एवं गतेरपि पठितत्वमस्त्येव। तत्र सर्वत्र, तथोपासनविधायकवाक्येषु प्राप्तिपरवाक्येषु च तत्पुरस्य लक्षणयाऽर्थत्वेऽनन्यवाक्यबाधः स्यात्। न च गतिर्व्यर्था; अनेकवाक्यार्थबाधापेक्षया तदबाधेन गतिश्रवणनिर्वाहस्य सुकरत्वात्। यथा प्रारब्धकर्मावसानरूपकालसापेक्षा मुक्तिः, तथा गत्यन्यथानुपपत्त्या देशविशेषसंबन्धसापेक्षाऽपीति निश्चीयते। तदर्थमेव गतिरिति ॥ ५१० ॥

१२. वैध तत्स्थानभूते सत्यलोके एवांशतो विष्णुलोक शिवलोकश्चेति श्रीविष्णुचित्तीये उक्ततया कार्यब्रह्मपदेन मूर्तित्रये यद्वाच्यं यत्र मूर्तौ स्वरसम्, तत्र तन्मूर्तिग्रहणमिति तत्तदुपासनगम्यस्य सर्वस्य

वैकुण्ठाख्यं परं धाम गमयति । अथवा वैकुण्ठवासिनम्, 'अथ यदतः परो दिवो ज्योतिर्दीप्यते' इति दिव्यलोकवासिनं निरतिशयदीप्तियोगेन धामशब्दवाच्यं परमपुरुषं च गमयति । तत्र हेतुमाह — गत्यादीति । दिव्यस्थानस्य तत्स्थानवासिनः परमपुरुषस्य च गमनेन प्राप्यत्व[स्य]सम्भवात् । न केवलं योग्यत्वेनायमर्थः सिध्यति, अपितु नपुंसकलिङ्गान्तस्य ब्रह्मशब्दस्य मुख्यत्वाच्चेति दर्शयति— ब्रह्मोक्तेरिति । भगवान् जैमिनिः परं ब्रह्म प्राप्नुवतामेवैषा गतिरिति निरणैषीत् । उक्तमर्थमङ्गीकृत्यैव तत्र कञ्चिद्विशेषं वक्तुं सत्य(युक्त?)शब्दं प्रयुक्तवान् आचार्यः । तदेवाह— वक्तव्यमिति । प्रतिज्ञातमेव वक्तव्यं प्रकटयति—नयतीति । अयमर्थः—द्विविधाः खलु ब्रह्मनिष्ठाः—स्वात्मशरीरकपरमात्मोपासकाः केचित्; परमात्मशरीरभूतस्वात्मनिष्ठाः परे । द्विविधानपि तान् परविदो मुखमेदेन ब्रह्मनिष्ठान् अर्चिरादिमार्गो गमयतीति जैमिनेरभिप्रेतोऽर्थः। ननु तर्हि विषमोपासकयोर्द्वयोः सम्पूर्ण-

---

स्थानस्य चैव तत्स्थानपदेन ग्रहणमित्यपि बादर्याशयः स्यात् । यद्वा मूर्तित्रयेऽपि हिरण्यगर्भ प्राधान्यं स्यात् । कार्यात्ययसूत्रे ब्रह्मणा सहेति तन्मात्रवचनात् जैमिनिस्तु त्रिमूर्तिस्थानविलक्षणं क्लीबब्रह्मशब्दमुख्यार्थनारायणस्थानभूतं नित्यं वैकुण्ठं स्वीकरोतीति ज्ञापयन् जैमिनिपक्षं संगृह्णाति मार्ग इति । अर्चिरादिमार्गो न त्रैधात्रस्थानं गमयति, किंतु परमं धाम वैकुण्ठाख्यं स्थानम् । गत्यादियोगात् अर्चिरादिमार्गेण गमनस्य, ब्रह्माण्ड समष्टिप्रकृतिपर्यन्तं विरजानदीश्चातिलंघ्य अपराजिताख्यनगरीं प्रविश्य परमपुरुषपदारविन्दसंश्रयणादेव श्रुतस्य युक्तत्वात् । तावदभावे स्वरूपाविर्भावासंभवस्य, 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इत्यादिश्रुतिसिद्धत्वात् । ब्रह्मेति । किं बहुना ; 'ब्रह्म गमयति' इति ब्रह्मशब्दस्य तत्रैव मुख्यत्वात् तस्य अमुख्यार्थकल्पने मानाभावरूपहेतुनैव तद्गमनेतृत्वमेव स्वीकर्तुमुचितम्। न च धामाभावः; श्रुतस्य त्यागायोगात् । एवञ्च परब्रह्मणः प्राप्यतया तस्यैवोपास्यत्वमिति उपासनविधिवाक्येषु अर्थान्तरलक्षणारूपदोषोऽपि नास्ति इति जैमिनिर्बादरिनिराकरणेन निरणैषीत् । नन्विदमप्युपेक्ष्य बादरायणः किं वक्तुं इति, कार्यब्रह्म, कारणब्रह्म च परित्यज्य तृतीयं किञ्चित् प्राप्यतया न हि सुवचम्! अत इदमेव स्वमतमपीति शंकायाम्, नात्र जैमिन्युक्तस्य निषेधः । परब्रह्मगमयितृत्वस्यैव स्वीकारात् । परंतु एतद्गमयितृत्वान्यथानुपपत्त्या एतदुपासकानेव नयतीति यत् अर्थसिद्धम्, तत्र तद्विशेष्यकोपासनादेव मोक्ष इत्येव नियमस्तदिष्ट ; यथाकथञ्चित् ब्रह्मविषयकत्वमात्रेण मोक्षेष्टौ मनआदौ ब्रह्मदृष्टिरूपोपासनादपि मोक्षापत्ते. । अतस्तत्र तन्नियमं विहाय दृष्ट्युपासनमपि व्यावर्त्यं वक्तव्यं विवक्षुः परमापकत्वरूपजैमिन्यर्थस्तथैव प्राय: स्वीकृत इत्याह युक्तमेतदिति । उपासनविषये विवक्षितमाह नयतीत्यादिना । परविद्यानिष्ठान् नयति अर्चिरादिगणः । सा च विद्या शरीरात्मभावसंबन्धेन स्वात्मपरमात्मोभयविषयिणी । तत्र परमात्मविशेष्यकत्वमेव स्वरसम् ; स्वात्मनस्तं प्रति गुणत्वात् । अथापि पञ्चाग्निविद्यायाम्, 'तद्य इत्थं विदुः' इति जीवात्मोपासनम्, 'ये चेमे अरण्ये' इति परमात्मोपासनं च निर्दिश्य ब्रह्मप्राप्त्यभिधानात् जीवोपासनमपि ब्रह्मप्रापकतया स्वीकार्यम् । तस्य ब्रह्मविषयकत्वे, 'नान्यः पन्था अयनाय विद्यते' इति निषेधान्मोक्षो न स्यात् । न चोभयोः समुच्चय एवैतद्वचनार्थं इति वाच्यम्–जीवात्मविशेष्यकस्य परमात्मविशेष्यकस्य च द्विविधस्योपासनस्य पृथक् पृथक् मोक्षसाधनताया एवैतद्वाक्यार्थत्वात् । ये चेति विभिन्नाधिकारिसमुच्चयस्यैव प्रतीतेः

ब्रह्मनिष्ठत्वं कथमित्याशङ्क्याह—अमी चेति। विशेषणविशेष्यभाववैपरीत्योक्तेशमात्रमेवात्र क्रियते। उभयत्रापि ब्रह्मणः प्राधान्यं जीवस्य तद्विशेषणत्वमप्येकरूपमेवेत्यैकार्थ्यसिद्धिः। यथा, 'रामानुजं लक्ष्मणपूर्वजञ्च' इत्यादिषु उपदेशवैपरीत्येऽप्यर्थतत्त्वमेकरूपमेव। तदिदं सर्वमभिप्रेत्योक्तं सूत्रकारैः, 'अप्रतीकालम्बनान्नयतीति बादरायणः' इति ॥ ५११ ॥

(५१२) ध्यायेयुर्ये च जीवान् प्रकृतिशबलितान् केवलान् वा यथेष्टं
द्वेधाऽपि ब्रह्मदृष्ट्या, जडनिवहमपि स्वेन यद्वाऽन्यदृष्ट्या।
ते सर्वे हि प्रतीकप्रणिहितमनसो नार्चिराद्यध्वयोग्याः
ब्रह्मोपास्तेश्च लिङ्गं गतिरियमनघा सूत्रिता पूर्वमेव ॥ १३ ॥

प्रतीकोपासका इति केषां वचनम्, अप्रतीकोपासका इति च केषामित्याशङ्क्य तद्विभागं दर्शयित्वा तत्राप्रतीकोपासकानामेवार्चिरादिमार्गेण मुक्तिनियमं दर्शयति—ध्यायेयुरिति। प्रकृतिशबलितान् जीवान् केवलान् वा तानेव जीवान् द्वयोरपि पक्षयोर्ब्रह्मदृष्ट्या तानेव जीवान् ये ध्यायेयुः। तथा जडनिवहमपि स्वेन रूपेण वा यद्वा अन्यदृष्ट्या ध्यायेयुः। ते(तेन) षड्विधत्वेन विभक्ताः सर्वेऽपि प्रतीकप्रणिहितमनसः। ते पुनरर्चिराद्यध्वयोग्या न भवन्ति। अत एव, 'अप्रतीकालम्बनान्नयति' इति सूत्रकारः प्राह। किमियं राजाज्ञेत्याशङ्क्य सूत्रकारस्यमत्यैवास्माभिरभिधीयत इति दर्शयति—ब्रह्मेति। अयमर्थः—पूर्वं पञ्चाग्नि(उपकोसल?)विद्यानिरूपणप्रकरणे किमियं ब्रह्मविद्या; उत जीवविद्येत्याशङ्क्य, 'श्रुतोपनिषत्कगत्यभिधानाच्च' इति सूत्रेण ब्रह्मविद्यात्वं प्रतिष्ठापितम्। अयमत्र सूत्रकारस्य भावः—इयं ब्रह्मविद्या न (अब्रह्मविद्या) चेत्—अर्चिरादिमार्गगमनं नोपदिश्येत; ब्रह्मविद्याऽसाधारणत्वादर्चिरादिमार्गगमनस्य। उपदिश्यते चात्रार्चिरादिमार्गगमनम्।

---

'तद् य इत्थं विदुः....श्रद्धा तप इति चोपासते' इत्येवं चकारनिवेशाभावात्। पृथक्कृत्य जीवमात्रं परमात्ममात्रञ्चोपासीनानामपि मोक्षप्रसंगाच्च। तदा चाऽऽत्मत्वोपासनाधिकरण-तन्मूलश्रुतिविरोधः। परंतु 'नान्यः पन्था अयनाय विद्यते' इति श्रुत्यविरोधाय जीवात्मोपासनेऽपि परमात्मघटनं कार्यम्। ब्रह्मात्मकोऽहमित्युपासनमपि, 'अहं ब्रह्मास्मि' इत्युपासनवद् मोक्षसाधनमित्युक्तं भवति। शांकरे तु ब्रह्मविषयकत्वेऽपि वचनबलान्मोक्ष इत्युक्तम्। ननु, 'अकृत्स्नो ह्येषः; आत्मेत्येवोपासीत' इति आत्मत्वोपासनमेव मोक्षहेतुः; न तु शरीरत्वेन जीवोपासनमित्यत्राह सुखमिद्येति। विशेष्यभेदमात्रम्; न तु कृत्स्नत्वहानिः। जीव-पर-तच्छरीरात्मभावरूपांशत्रयस्य परविशेष्यकोपासनविषयस्य जीवविशेष्यकोपासनेऽप्यक्षतत्वात्। प्रकारविशेष्यभेदेऽपि, 'घटवद् भूतलम्', 'भूतले घटः' इति ज्ञानद्वयस्येवैककार्यकरत्वसंभवात्। अन्यः प्रकारस्तु नेष्यते, विध्यभावादिति ॥ ५११ ॥

१३. एतद्द्विविधोपासकसंग्रहाय सूत्रकारेण अप्रतीकालम्बनान्नयतीत्युक्तम्। तत्र व्यवच्छेद्यान् प्रतीकालम्बनान् यथाभाष्यं विशदं दर्शयति ध्यायेयुरिति। प्रतीकशब्दः शरीरवाची। 'अंगं प्रतीकोऽवयवः' इति कोशात्। प्रतीकमात्रमालम्बनम्=उपास्यं येषां ते प्रतीकालम्बनाः। परमात्मानं प्रति चित् अचिच्च प्रतीकं। तत्र चित् द्विविधः—देहविशिष्टः तद्रहितश्च। परमात्माविषयकैतदुपासनवत् परमात्मदृष्ट्या एतदुपासनमपि शरीरात्मभावाविषयकत्वात् न यथावस्थितविषा। तथाच

तेन पञ्चाग्नि(उपकोसल ?)विद्या ब्रह्मविद्येति। अव्यभिचरितं हि लोके धूमादिकं लिङ्गम्। तेन ब्रह्मविद्यामेवार्चिरादिगमनमिति न्यायोऽयं मार्ग इति सर्वैरप्येतदनुसरणं(णमेव) न्याय्यमिति।

[1]ननु ब्रह्मोपासकानामेवार्चिरादिमार्गेण गमनमित्युक्तम्। इदं नोपपद्यते ; पञ्चाग्निविद्यायां, 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इत्यादिना शरीरात्मविवेकं प्रतिपाद्य, 'तद्य इत्थं विदुः' इति तेषामप्यर्चिरादिराम्नायते। ते च प्रकृतिवियुक्तात्मस्वरूपोपासकाः। तेषां स्वात्मानन्दानुभवरूपः कैवल्याख्योऽपि मोक्षोऽस्तीति। अयमेव मोक्षः श्रीविष्णुपुराणे, 'योगिनाम् अमृतं स्थानं स्वात्मसन्तोषकारिणाम्' इत्युच्यते। तस्मात् तेऽप्यर्चिरादिमार्गेण परमपदं गत्वा भगवदनुभवरहिताः क्वचित् देशे स्वात्मानुभववन्तस्तिष्ठन्तीति—तदिदमसारम्। पञ्चाग्निविद्यायाः परमात्मशरीरभूतस्वात्मोपासनपरत्वस्योपक्रमादितात्पर्यलिङ्गैर्न प्रतिपादितत्वात्। विस्तरस्तु भाष्यादौ द्रष्टव्यः। 'यत्तूक्तम्, 'योगिनाममृतं स्थानम्' इति तत्रापि प्रमाणविरोधोऽस्ति। यथा भगवान् पराशरः— 'प्राजापत्यं गृहस्थानां ब्राह्मं सन्यासिनां स्मृतम्' इत्युक्त्वा, तत उपरि, 'योगिनाममृतं स्थानम्' इति जीवात्मानुसन्धायिनाममृतशब्दवाच्यस्थानविशेषप्राप्तिमुक्त्वा, पुनः, 'एकान्तिनः सदा ब्रह्मध्यायिनो योगिनो हि ये। तेषां तत् परमं स्थानं यद्वै पश्यन्ति सूरयः॥' इति ब्रह्मोपासकानामेव परमपदप्राप्तिमाह। अत्र, 'योगिनाममृतं स्थानम्' इत्यत्र अमृतशब्दो जीवात्मस्वरूपपरश्चेत्—तस्य नित्यत्वादमृतशब्दवाच्यतोपपत्तिः। स्थानशब्दस्वारस्यात् देशविशेषपरश्चेत्, 'अपाम सोमममृता अभूम' इत्यादिवत् अमृतशब्दस्यौपचारिकत्वम्। वदन्ति हि, 'आभूतसम्प्लवस्थानममृतत्वं हि भाष्यते' इति ; 'ये तु शिष्टास्त्रयो भक्ताः फलकामा हि ते मताः(स्मृताः)। सर्वे च्यवनकर्माणः प्रतिबुद्धस्तु मोक्षभाक्॥' इति नित्यत्वानित्यत्वनियामकं वचनम्। परमपदत्वे युक्तिविरोधमप्युपपादयामः। [भवद्भिः?] परिकल्पितः केवलो नाम जीवोपासकः परमपुरुषं प्राप्यापि तदनुभवं मुक्त्वा दिगन्तकीर्ण्यवदवस्थितः किं सर्वकर्मविनिर्मुक्तः, उत कर्मावशेषवान्। सर्वकर्मविनिर्मुक्तश्चेत्, ब्रह्मानुभवविच्छेदो न स्यात्। स्वाभाविकत्वादसङ्कुचितब्रह्मानुभवस्य तद्विच्छेदस्य चौपाधिकत्वाच्च। सर्वकर्मविनिर्मुक्तस्यापि ब्रह्मानुभवविच्छेदे तस्यैव स्वाभाविकत्वमङ्गीकार्यम्। तथा च सिद्धान्तविरोधः॥ कर्म माभूत् कारणम् ; अन्यदेव किमपि ब्रह्माननुभवकारणं स्यादिति चेत्—तत् किं विशेषतो वद। भगवन्निग्रह इति चेत्—स तु निग्रहः सहेतुको वा निर्हेतुको वा। निर्हेतुकश्चेत्, निर्हेतुकानुग्रहं सिद्धान्त(न्तं?)मुक्त्वा निर्हेतुकं निग्रहं वदन् भवान् अपहास्य एव। सहेतुकश्चेत्, हेतुर्वाच्यः। कर्म चेत्—दत्तोत्तरमेतत्। भगवदिच्छैव चेत्—परमकारुणिको भगवान् सर्वकर्मविनिर्मुक्ते तस्मिन् निग्रहं वाञ्छतीति भवदीयैव(दीयेयं) वाञ्छा। तर्हि जीवस्तु स्वेच्छया भगवन्तं

---

प्रकृतिसंवलितान् देहविशिष्टजीवान् इन्द्रचन्द्रादीन्, केवलान् देहरहितान् स्वात्मादीन् वा ये ध्यायेयुः, तद्वत देहविशिष्टात्मध्यानं शुद्धात्मध्यानञ्च प्रतीकोपासनम्। अन्ये चोभये द्वेधापि द्विविधानपि जीवान् ब्रह्मदृष्ट्या ध्यायेयुः। एवमुपासनचतुष्कं भवति। जडनिवहरूपाचेतनमपि स्वेन=स्वरूपमात्रेण वा ब्रह्मदृष्ट्या वा ध्यायेयुरिति तत्रापि द्वैधम्। एवमुपासनस्य षड्विधत्वात् षड्विधा उपासकाः **प्रतीकप्रणिहितमनसः** परमात्मशरीरत्वरूपसंबन्धाविषयकप्रतीकविषयकप्रणिधानयुक्तमनसः। तेऽर्चिरादिमार्गेण न गन्तुमर्हन्तीति **अप्रतीकालम्बनानिति** निर्देष्टुराशयः। अर्चिरादिमार्गेण गमनमवश्यं ब्रह्मप्रापकम्, ब्रह्मविषयकविद्यारूपोपायस्थितिसूचकश्चेति च प्रथमाध्याय एव, **श्रुतोपनिषत्कगत्यभिधानाच्च** इति

---

1. आन्ध्रलिपिकोशे ननु इत्यादिसर्वमुत्तरश्लोकव्याख्योपरि मुद्रितम्। तत्र सम्यक्।

मुक्त्वा वर्तेत इति वदाम इति चेत्—तन्नायुक्तम्। सर्वकर्मविनिर्मुक्तो जीवः, 'रसो वै सः। रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति' इति निरतिशयानन्दरूपं परमात्मानं मुक्त्वा खद्योतकल्पं स्वात्मानमनुभवतीत्यसम्भवदुक्तिकमेवैतत्। अनादिवासनावशात् एतत् सम्भवतीति चेत्—सैव दुर्वासना पापमिति, स्यादयं संसारीति, न परमपदप्रवेशप्रसङ्ग इत्युपरम्यते।

एवं सत्सम्प्रदायोऽपि निरूप्यः। अत्र केचिदाचक्षते—'जीवोपासकानामर्चिरादिगतिरस्ति, भाष्यकारैरेव ब्रह्मोपासकव्यतिरेकेण जीवोपासकमुक्त्वा द्वयोरप्यर्चिरादिगमनमस्तीति[गीता?] भाष्य एव व्यक्तमभिधानात्। तेनासौ अर्चिरादिमार्गेण गत्वा भगवन्तं प्राप्य यथोपासनं फलमिति न्यायात् त्यक्त्वैव भगवदनुभवं परमपदे क्वापि कोणे स्थित्वा, खद्योधरपायिधेनु(पशु)वत् आत्मानमेवोपभुङ्क्ते। न पुनः परमपुरुषोप(ष)भोगं नियमेन प्रतिपद्यते' इति। तेन, 'पतिं विश्वस्य' इत्युक्तपरमपुरुषभोगाभावात् पतिपरित्यक्तयोषित्साधर्म्यमप्यस्याऽऽचक्षते—तदसारम्—सूत्रविरोधात् भाष्यवचनविरोधात्, प्रमाणविरोधात्, युक्तिविरोधात्, सम्प्रदायविरोधाच्च। तथा हि पञ्चाग्नि-(उपकोसल)विद्यायाम्, 'श्रुतोपनिषत्कगत्यभिधानाच्च' इति सूत्रेणार्चिरादिगत्युपदेशात् पञ्चाग्निविद्यायाः केवलजीवविद्यात्वनिराकरणेन ब्रह्मविद्यात्वं प्रसाधितम्। अयमर्थः—अर्चिरादिमार्गस्य ब्रह्मविद्यैकान्तत्वात् सेयं पञ्चाग्निविद्या ब्रह्मविद्येति। तेन जीवविद्यायां नार्चिरादिमार्गेण परमपदगमनगन्धः। तदधिकरणभाष्यविरोधोऽपि तत्रैव द्रष्टव्यः। अत एव प्रजापतिवाक्ये ब्रह्मप्राप्तिरूपफलनिर्देशो ब्रह्मविद्याफलेनोपसंहार इति भाष्यकाराः प्राहुः। अत्रात्यातिग्राहिकप्रसङ्गे भाष्यकारैरेव ब्रह्मविदामेवार्चिरादिगमनमिति सुव्यक्तमभिधीयते। अत्र, 'केवलं वाचिद्वस्तु' इति सन्धिविशेषात् अकारप्रश्लेषाप्रश्लेषाभ्यां चिदचितोर्द्वयोरपि [1]ग्रहणम्। अयमत्र भावः—स्वशरीरकपरमात्मोपासनं परमात्मशरीरभूतस्वात्मोपासनमित्युभयमप्यर्थैक्यमेव। तेन परमात्मशरीरभूतस्वात्मोपासकस्यापि ब्रह्मोपासकत्वादर्चिरादिगमनोपदेशो न विरुध्यते। केवलचिन्मात्रोपासकस्तु प्रतीकोपासकत्वात् प्रागेव निरस्तः। प्रतीकः एकदेशः। चिदचिच्छरीरके ब्रह्मणि चिदचितोरेकदेशत्वात्। अतो जीवोपासकोऽपि प्रतीकोपासकः। एवमेतस्मिन्नधिकरणे त्वेतस्यार्थस्य भाष्यकारैरेव द्विस्त्रिरभिधानात् केवलजीवोपासकस्य प्रतीकोपासकत्वेन निरस्तत्वात् परमात्मशरीरभूतस्वात्मोपासकस्याप्रतीकोपासकत्वेन ब्रह्मविस्त्वादर्चिरादिमार्गेण ब्रह्मप्राप्तिरमिहितेत्यलं विस्तरेण ॥ ५१२ ॥

(५१३) प्रत्यापत्तिप्रकारः प्रतिनियतिमती कर्मयोगादिनिष्ठा
विद्याभेदाधिकारः परभजनबलान्मुक्तिविघ्नोपशान्तिः।

---

सूचितम्। तद्बलात् तत्र विद्यायाः ब्रह्मविषयकत्वमपि स्थापितम्। इदमेवात्रापि तत्क्रतुश्चेत्यनेन स्मारितम्। "यं यं वाऽपि स्मरन् भावं त्यजत्यन्ते कलेवरम्। तं तमेवैति कौन्तेय सदा तद्भावभावितः" इत्युक्त्या देहावसाने भावान्तरप्रत्यये सति तत्प्राप्तिरेव स्यादिति परमात्मविषयकप्रत्ययस्यैवावश्यकत्वात्, पूर्वं तदभ्यासाभावे तद्दौर्लभ्यात् उपासनस्य नित्यं तद्विषयकत्वादरणेन तद्वासनादार्ढ्यमापादनीयमिति भावः। एवञ्च जीवमात्रोपासनरूपज्ञानयोगनिष्ठस्य नार्चिरादिरिति च सिध्यति। विशेषञ्च दर्शयति इति सूत्रे भाष्ये, केवलजीवोपासनफलेन भूमविद्योक्तरीत्या शोकतरणं न भवतीति ज्ञापितम्। विस्तरश्चिन्तामणौ ॥ ५१२ ॥

---

1. द्वयोरपि ग्रहणमिति। मूले जीवग्रहणमात्रं प्रतीयते। अत्र भाष्यार्थदर्पणो द्रष्टव्यः।

अन्त्यावस्थाऽयनस्था पृथगयनगतौ विश्रमाप्तिर्विभक्ता
साक्षान्मुक्तिः क्रमाद्वेत्य खलमगतिकैरप्रणोद्यं परैश्च ॥ १४ ॥

अत्र सर्वं मिथ्येति वादिनां मृषावादिनामपि श्रुतिप्रतिपन्नाः सर्वेऽर्थाः प्रमाणानुसारेण स्वीकर्तव्या एव। अथापि व्यावहारिकमिदम्, अथवा सगुणब्रह्मविषयमित्यादिकुत्सितालापः केवलं क्रियते। व्यावहारिकत्वं विकल्पासहत्वात् ध्वस्तमेव। यतः सगुणमेव ब्रह्म न अन्य एव ब्रह्म निर्गुणं भवति तस्याप्रामाणिकत्वात्। अतो विषयविभागकथनमपि व्यावहारिकत्वकथनवदपास्तमेव। न्याय-निरूपकाणामिदमेव तत्त्वम्। अथाऽस्माभिरभिधीयमानमर्थजातं परैरपि केनापि प्रकारेणाङ्गीक्रियत इति स्वसिद्धान्तस्यानतिलङ्घनीयत्वमाह—प्रत्यापत्तीति। प्रत्यापत्तिप्रकारः = अनादिकालं संसरतो जीवस्या[वि]ज्ञातसुकृतादियोगात् मोक्षमार्गे प्रवृत्तिः। तदा प्रतिनियतिमती कर्मयोगादिनिष्ठेति।

×अत्र प्रतिनियमो नाम फलसङ्गकर्तृत्वाभिमानरहितत्वम्। आदिशब्देन ज्ञानयोगो विवक्ष्यते। विद्याभेदाधिकारः = सद्विद्यामधुविद्यादिषु यथारुच्यधिकारः। परभजनबलादिति = 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ' इत्युक्तप्रकारेण मुक्तिविघ्नभूतानां कर्मणामुपशान्तिः। अन्त्यावस्थाऽवस्थेति, 'वाङ्मनसि दर्शनात्' इत्याद्युक्तगत्युपक्रमप्रकारः। पृथगयनगताविति—'य एवं विद्वान् उदगयने प्रमीयते स आदित्यस्य सायुज्यं गच्छति अथ यो दक्षिणे प्रमीयते स चन्द्रमसस्सायुज्यं गच्छति' इति विभक्ता विश्रमाप्तिः। साक्षान्मुक्तिः क्रमाद्वेति सद्विद्यानिष्ठानां साक्षान्मुक्तिः। मधुविद्यानिष्ठानां क्रमादिति विभागः। एतदखिलं परैर्मायावादिभिः अप्रणोद्यम् = अपह्नोतुं अशक्यम्; तत्तत्प्रतिपादकप्रमाणानां बाधितुमशक्यत्वादित्यर्थः। प्रमाणविरोधविस्तरस्तु भाष्यादौ द्रष्टव्यः। एतादृशं सर्वमप्यौपनिषदवाक्यप्रसिद्धं भेदात्मकं कार्यजातं निर्विशेषवादिभिरपि तत्तदर्थप्रतिपादक-श्रुतिनिर्वाहार्थमप्रणोद्यमेव। केवलं व्यावहारिकत्वाद्युद्घोषणमेवावशिष्यत इति ॥ ×

---

१४. अत्र बादरिर्यादृशस्तादृशोऽस्तु। कार्यब्रह्मप्राप्तिरूपं फलमेव वदद्भिरपि परैः अद्वैतिभिः परवासुदेव–तत्स्थ.नभूतनित्यवैकुण्ठ–तत्प्रापकार्चिरादि–तदुपायादेः प्रमाणैः प्रतिपादितस्य व्यावहारिकसत्यतयाऽपि स्वीकृततया तत्र दुःखक्लेशस्याप्यभावात् अप्रामाणिकनिर्गुणाद्वैतज्ञानेन तद्बाधनस्यावश्यकत्वाभावात् तत्र गतानां पश्चान्निर्गुणप्राप्तिरूपकमुक्तिः काचिन्न भविष्यति। अत एवेहापि तथैवाद्वैतज्ञानं विपरीतफलकमेव। कर्ममुक्तिर्नाम वेधास्स्थानादिब्रह्माण्डान्तर्गतलोकानुभाव्य श्रीवैकुण्ठलोकानुभाव्य-व्यतिरिक्त कञ्चित् कालमनुभूय ततः पूर्वकृतोपासनवशादेवान्ते नित्यविभूतौ श्रीवैकुण्ठप्राप्तिरेव, न निर्गुणप्राप्तिरिति प्रतिबोधयितुमाह प्रत्यापत्तीति। मार्गत्रयलभ्यं सुखदुःखात्मकम् तदनुबन्धि च प्रत्यक्षप्रमाणागम्यमपि तद्गम्यमिव श्रुतिचक्षुर्दृष्टं बौद्धादिभिरिव प्रच्छन्नबौद्धैर्नापलप्यं भवति। प्रमाणागम्यनिर्विशेषवस्तुनिरतैर्व्यावहारिकत्वव्यवहारेणाहो एतावतामसत्यत्वमेवाऽऽस्थीयत इत्याश्चर्यमिति। मत्वान आह प्रत्यापत्तीति। तृतीयाध्यायारम्भप्रभृति उक्तानामभिप्रेतानामर्थानामत्र क्रमेण निर्देशः। तत्स्पष्टप्रदर्शी चिन्तामणिपाठ इह यथान्धलिपिकोशं प्रथमं निवेशितः; अन्यः कुण्डलितस्तु पदयोजनया सह मुद्रिते कोशे निवेशितः। प्रत्यापत्तिशब्दस्य प्रतिनिवृत्तिः पुनरावृत्तिरित्यर्थोऽपि भवति। तदाऽपि तदन्तरप्रतिपत्त्याविस्युक्तार्थसंग्रहो भवत्येव। कर्मयोगादीति आदिपदेन ज्ञानयोगमात्रमहणमुचितम्।

*(कर्मज्ञानभक्तिनिष्ठा। एवं सद्विद्यामधुविद्यान्यासविद्यादिविद्याविशेषेष्वधिकारनियमः। भगवद्भक्त्यैव मोक्षविधानकतुरितो शान्तिः। अन्त्यावस्थाव्यवस्था—केचित् प्रारब्धदेहावसाने मुच्यन्ते; अपरेतु कर्मानुसारात् तद्देहात् देहान्तरे। पृथगयनगतौ — धूमादिमार्गेऽर्चिरादिमार्गे वा चन्द्रसूर्यादिदेशविशेषे विश्रमाप्तिः। केषाञ्चित् साक्षान्मुक्तिः सद्विद्यादहरविद्यानिष्ठानाम्, क्रमात् मधुविद्यानिष्ठानाम्। एतादृशं सर्वमप्यौपनिषद्वाक्यप्रसिद्धं भेदात्मकं कार्यजातं निर्विशेषवादिभिरपि तत्तदर्थप्रतिपादकश्रुतिनिर्वाहार्थमप्रणोद्यमेव। केवलं व्यावहारिकत्वाद्युद्घोषणमेवावशिष्यत इति)॥*

(५१४) पन्थानं देवयानं तमिममधिगतः पश्चिमे देहपाते
तद्वस्तोमांस्तमोऽन्तान् अतिपतति ततस्तापगां तत्र दिव्याम्।
दिव्यं देहादि लब्ध्वा जनिलयरहितं याति विष्णोः पदं तत्
पर्यङ्कारोहणान्तां भजति बहुमतिं ब्रह्मसंवादवन्यः॥ १५॥

इत्थमर्चिरादिमार्गेणोत्क्रान्तः क्रमाद् भगवतो वासुदेवस्य दिव्यसिंहासनोपान्तमधिगच्छतीत्याह—पन्थानमिति। तमिमं देवयानाभिधानं पन्थानं पश्चिमे देहपाते प्राप्तः तमोन्तान्

---

भक्तियोगस्य विद्यापदेनोक्तेः। प्रतिनियतिमतीति, व्यवस्थितेत्यर्थोऽपि स्यात्। कर्मयोगाधिकारी अन्यः तदन्यो ज्ञानयोगाधिकारी। क्षत्रियाः जनकादयो ज्ञानिनोऽपि कर्मयोगाधिकारिण एवेति अद्वैतिभिरप्युक्तेः। युक्तिविज्ञानां संचितकर्मणामुपशान्तिस्तदधिगमसूत्रोक्ता। अन्त्यावस्थायाः मरणावस्थायाः व्यवस्था वागादीनामुत्क्रान्तिव्यवस्था। यद्वा मरणावस्थायाः अव्यवस्था कालदेशनियमाभावः, प्रारब्धावसाने निशि वाऽन्यदा वेति। पृथगयनयोः विभिन्नयोरयनयोरर्चिरादिना गतौ गमने तत्तदयनानुरोधेन चन्द्रसूर्यस्थाने विभज्य विश्रमलाभः। अस्यांशस्य पृथगधिकरणार्थत्वाभावेऽपि, दक्षिणायनाधिकरणे उभयसंमतफलविशेषत्वादुक्तिः। एवं साक्षान्मुक्त्यमुख्यमुक्तिरूपार्थद्वयमुभयस्वीकृतम्। तत्र तन्मते निर्विशेषमुक्तिः सविशेषमुक्तिश्चेति भेद एवेति न; वैकुण्ठप्राप्तिः साक्षात्, ब्रह्मादिपदप्राप्तिद्वारा वेति भेदोऽपि। अगतिकैरिति। अद्वैतप्रमाणत्वाभिमतापौरुषेयवेदैकगम्यतया निरासायोगात् शशविषाणादितुल्यत्वायोगात् व्यावहारिकसत्यत्वं स्वीकृतं तैरिति भावः॥ ५१३॥

१५. अर्चिरादिमार्गे, 'स प्रजापतिलोकम्' इत्येतावत एव प्रायो निर्देशात् प्रकृत्यन्तर्गत एव वैकुण्ठ इति न मन्तव्यम्। सुबालोपनिषदि समष्टितत्त्वादि-तमोपरपर्यन्त-मूलभूतसूक्ष्मप्रकृतिपर्यन्तातिलंघनेन स्थानान्तरगमनस्य दर्शितत्वात्। कौषीतकिब्राह्मणे तदनन्तरं विरजानद्यतिक्रमोक्तेः। छान्दोग्येऽपि 'अपराजिता पूः' इत्याद्युक्तेरिति सर्वसंग्रहेण व्युत्पादयति पन्थानमिति। पश्चिमे प्रारब्धावसानभाविनि। तत्र नित्यविभूतौ। दिव्यम् अप्राकृतम्। देहादीति आदिपदेन तत्र दिव्याप्सरःपञ्चशत्यानीतवासोभूषणादिकं गृह्यते। जनिलयरहितमिति पदविशेषणम्। 'नास्त्यकृतः कृतेन', 'अकृतं कृतात्मा ब्रह्मलोकमभिसंभवानि', 'तदक्षरे परमे व्योमन्' इत्यादितस्तस्याऽऽद्यन्तराहित्यं प्रसिद्धम्। पर्यङ्कारोहणेति। 'स आगच्छत्यमितौजसं पर्यङ्कम्........तस्मिन् ब्रह्माऽऽस्ते। तमेवंवित् पादेनैवाग्र आरोहति' इति

पृथिव्युपक्रमान् नरकस्तोमान् अतिक्रामति। विरजाभिधानां दिव्यामापगाञ्च तरति। तदनन्तरं दिव्यं (स्वमपि) देहादि लब्ध्वा, जनिलयरहितम्–उत्पत्तिविनाशरहितं विष्णोस्तत्पदं याति 'अकृतं कृतात्मा ब्रह्मलोकमभिसम्भवानि' इति श्रुतेः। अयं तु ब्रह्मसंवादग्रन्थः[1] पर्यङ्कारोहणान्तां बहुमतिञ्च भजति ॥

(५१५) संघाते नित्यता न क्वचिदपि ; न पृथिव्यादिभावस्तथात्वे
पर्यङ्काद्यैर्न साध्यं किमपि भगवतः पूर्णनिस्सीमशक्तेः ।
व्याप्तप्राप्त्यर्थमूर्ध्वं गतिरपि विफलेत्यादिकान् हैतुकानां
क्षोदिष्ठक्षीबजल्पान् श्रुतिरुपशमयेत् अद्भुतार्थस्वतन्त्रा ॥ १६ ॥

अत्र पञ्चशक्तिमयं दिव्यदेशादिकमनङ्गीकुर्वाणः कश्चिदाह—सङ्घात इति। भवन्तः खलु पञ्चशक्तिमयं दिव्यदेशमाचक्षते। अत्र शक्तिशब्देन दिव्यानि पञ्चभूतान्यभिधीयन्ते। तानि दिव्यानि भूतानि सङ्घातात्मकानि असङ्घातात्मकानि वा। सङ्घातात्मकत्वे नित्यत्वमेव नास्ति। कृत्स्नस्यापि सङ्घातात्मनो वस्तुनो विनाशित्वेनोपलम्भात्। एवमनित्यत्वे सति [2]नित्यपृथिव्यादिभावो न स्यादित्याह—नेति। अयमर्थः—नित्यानि पृथिव्यादिभूतानि वैकुण्ठस्थानीति भवन्तो वदन्ति। तेषां [3]परमाणुरूपत्वे पृथिव्यादिरूपेण विभज्य दर्शनं न स्यात्। सङ्घातात्मकत्वे नित्यत्वं न स्यादिति। किञ्च भगवतः पर्यङ्कादिकमप्यस्तीति भवतां सिद्धान्तः। तच्च निष्प्रयोजनमित्याह—पर्यङ्काद्यैरिति।

कथितमारोहणम्। तदन्तां **बहुमतिम**नेन, ऐरम्मदसर-सोमसवन-ऐल्यवृक्ष-सालज्यसंस्थान-अपराजितायतनानि प्राप्नुवत्यस्मिन् यथासंख्यं ब्रह्मगन्ध-ब्रह्मरस-ब्रह्मतेजसां प्रवेशः, आतिवाहिकविलक्षणयोः इन्द्रप्रजापत्योर्द्वारगोपयोरपद्रवणम्, अथ विभुप्रमिते मण्टपे, अस्मिन् आत्मनि ब्रह्मयशःप्रवेशः इत्यादिकमभिसंहितम्। **ब्रह्मसंवाद**इति। "तं ब्रह्म पृच्छति कोऽसीति। स प्रत्याह एतावदहं कर्माधीननानाशरीराणां त्वद्दत्तानामात्माऽभूवम्, यस्त्वमसि सोऽहमस्मीति। ब्रह्म पृच्छति कोऽहमस्मीति। स तु, सत्यमसीति प्रतिब्रूयात्। ........ सत्यञ्च सर्वम्। सर्वमसीत्येवं तदाह। ब्रह्माह...असावयं ते लोक." इत्यन्तः संवादः। तेन तल्लोकस्य स्वकीयत्व(स्वभोग्यत्व)परिज्ञानात् धन्योऽयमिति ध्येयम् ॥ ५१४ ॥

१६. शांकरे कार्याधिकरणे कार्यं ब्रह्म हिरण्यगर्भः। तल्लोकं नेतार आतिवाहिकाः। तत्र स्थिताः पश्चात् विष्णोः परमं पदं प्राप्नुवन्तीत्युक्तम्। तेन विष्णुर्न कार्यब्रह्मेति ज्ञायते। विष्णोः सर्वेश्वरत्वं मायाशबलितब्रह्मत्वम्, चतुर्मुखस्य च जीवत्वं तदिष्टमेव। एवं विष्णोः परदेवतात्वोपगमेऽपि तद्वाक्ये परमं पदमिति निर्गुणब्रह्मरूपमेवाभिमतमिति ब्रूयुः। अन्यथा तस्य क्रममुक्तित्वायोगात्। एवमपि वैकुण्ठादेस्तदिष्टत्वात् सगुणब्रह्मत्वं तत्र तदभ्युपेतमिति तत्स्थानप्रापकत्वमप्यमानवान्तस्याऽऽतिवाहिकगणस्य सुवचम्। एवञ्च तत्रत्यानां तत्रैव मुक्तिरिति युक्तम्। अन्यथा चतुर्मुखप्राप्तिरातिवाहिकगणकर्तृकनयनात्; ततो विष्णुलोकप्राप्तिः स्वयमेव; अतो निर्गुणब्रह्मभाव इति वक्तव्यम्। अस्तु कथमपि, सर्वथा वैकुण्ठादीनामनित्यत्वमेव तदिष्टम् एवं जगत्सत्यत्ववादिनोऽप्यविशेषेण लोकशरीरादिकं सर्वमनित्यमेव स्यादित्याशेरते।

1. ग्रन्थ इति। अथ पाठं पर्यङ्कारोहणान्तं ; पूर्वम् ब्रह्मसंवादः पश्चात्। 2. एवं व्याख्याने नित्यपदं पूरणीयमिति क्लेशः। 3. अस्मन्मते नित्यः पृथिव्यादिपरमाणुर्न स्वीकृतः। अत एवंविकल्पस्य नावकाशः।

तत्र हेतुमाह – पूर्णनिस्सीमशक्तेरिति । राजादीनां पर्यङ्कादिपरिकल्पनं देहजाड्यादिहेतुभूतायासादिपरिहारार्थं शयनासन(नादि)शेषतया हि दृश्यते । परिपूर्णनिस्सीमशक्तेर्भगवतः किमनेन पर्यङ्कादिपरिकल्पनेन । अपिच कृत्स्नदेशव्याप्तिमतो भगवतः प्राप्त्यर्थमूर्ध्वं गतिरपि विफलेत्या(त्येवमा)दिकान् हैतुकानां = हेतुप्रयोक्तॄणां क्षोदिष्ठक्षीबजल्पान् = क्षुद्रतमसत्तजल्पान् श्रुतिरेवोपशमयेत् । श्रुतिप्रतिपन्नेऽर्थे निर्मूलाशङ्का निर्मतीनां दुर्मतीनां वा जायत इति श्रुतिप्रमाणवेदिभिरनादरणीयमेव। श्रुतेरीदृशसामर्थ्यं कुत इत्याशङ्क्य परिहरति—अद्भुतेति । अपूर्वार्थाभिधायित्वं श्रुतेर्भूषणम् । तत्राप्यद्भुतार्थाभिधायित्वमत्यन्तभूषणम् । अद्भुतत्वे ह्यत्यन्तदृष्टविलजातीयत्वम् । तेन बाधकाभावे यथाश्रुतमर्थतत्त्वं निर्णेतव्यं नीतिमद्भिः परवाद्युक्तानि तु बाधकानुमानानि आगमविरुद्धत्वात् स्वयमेवाप्रमाणतामश्नुवत इत्यर्थः । लोके हि द्वीपान्तराद्यागतानां लौकिकार्थप्रतिपादकान्यपि वाक्यान्यपूर्वेष्वर्थेषु प्रमाणभूतान्येव परिगृह्यन्ते । एवञ्च सति वैदिकानि वाक्यानि अद्भुतार्थप्रतिपादकानि किमर्थं तथात्वेन न परिगृह्यन्ते । कारणदोषस्यानाशङ्कनीयत्वात् ; बाधकप्रमाणस्य चादृष्टत्वात् ; निर्मूलमेवाप्रामाण्यशङ्कायां सर्वोपप्लवप्रसङ्गादिति ॥ ५१५ ॥

(५१६) भावोऽभावश्च यत्रानुपधि समुदितौ तत्र भावी विरोधः
प्रज्ञातव्याप्त(प्ति?)रोधेऽप्यधिकनिजबलाल्मानतः स्वार्थसिद्धिः ।
दृष्टं सर्वेष्टमेतन्न यदि, न हि भवेत् मानमप्यक्षतोऽन्यत्
बाधोऽध्यक्षे मिथो वा ; वटदलशयनाद्यद्भुतं चैवमूह्यम् ॥ १७ ॥

इति कार्याधिकरणम् ॥ १५० ॥

ननु दृष्टविरोधेऽप्येवं विरोधाभावकथने न कुत्रापि विरोधः स्यादित्याशङ्क्य विरोधसङ्गावोदाहरणमाह—भाव इति । यस्मिन् उदाहरणे भावश्चाभावश्च देशकालाद्युपाधिभेदेनोपदेशाच्च

---

सर्वतन्निरासाय ईदृशानुमानं शास्त्रप्रमितनित्यत्वबाधकं न भवतीत्याह संघाते इति । संघाते अवयवसमुदायात्मके वस्तुनि । तथात्वे नित्यत्वे पृथिव्यादिभूतरूपत्वं न स्यात् । संघातत्वानापन्नस्य पृथिव्यादेरभावात् । परमाणोरप्यनित्यत्वात् । अतस्तादृशं परमं पदं दुरभ्युपगमम् । पूर्णनिस्सीमशक्तेरिति । पूर्णत्वात् इतः परं लभ्यं फलमेव नास्ति । तत्स्वीकारेऽपि सर्वशक्तित्वात् पर्यङ्काद्युपकरणानि बिनैव तत् साधयेदिति किमेतैः ? अतो देशतद्गतपर्यङ्कादिप्राप्त्यर्थं नार्चिरादिगतिः ॥ परस्वरूपप्राप्त्यर्थमेवेति चेत्— सर्वत्र सर्वदा व्याप्ततयाऽत्रैव प्राप्त्यर्हे सति, तत्प्राप्त्यर्थमियती द्राघिष्ठा गतिर्व्यर्था । सर्वशक्तिना तेनात्रैवोपायपूर्तिस्थले पूर्णस्वानुभवाविच्छेदानुग्रहसंभवे देशादिसद्भावेऽपि तद्गमनकल्पनञ्च व्यर्थम्—इत्यादिजल्पान् क्षोदिष्ठान् अतिक्षुद्रान्, क्षीबैः मत्तैः कृतान् श्रुतिरेव वारयति । अद्भुतार्थस्वतन्त्रा स्वतो लोकविलक्षणविचित्रानेकवस्तुबोधनसमर्थायाः श्रुतेः प्रत्यक्षदृष्टव्यक्तिविषये विरुद्धार्थबोधित्वाभावात् व्यक्त्यन्तरे वैलक्षण्यबोधनस्य बाधायोगात् तद्विरुद्धमनुमानमेव सर्वमाभासभूतमिति भावः ॥ ५१५ ॥

१७. ननु, 'आदित्यो यूपः', 'यजमानः प्रस्तरः' इत्यादिकमनन्वितार्थकत्वात् वाच्यार्थत्यागेन गौण्या वृत्त्या प्रमाणतया स्वीक्रियते । 'वायुश्चान्तरिक्षञ्चैतदमृतम्' इत्यादौ अमृतत्वं चिरकालस्थितिमात्रपरमिष्यते । एवमेव वैकुण्ठनित्यत्वादिवाचामपि निर्वाहः कार्यः । पर्यङ्कादिकथनञ्च तदभावेऽपि

विरुद्धौ दृश्येते। तौ तूपाधिभेदमन्तरेण यद्यभिधीयेते, तदा विरोधः स्यात्। यथा घटः स्वदेशेऽस्ति नास्ति परदेशे; तथा स्वकालेऽस्ति, नास्ति परकाले; तथा स्वात्मनाऽस्ति, न त्वन्यात्मनेत्यविरोधोदाहरणमेतत्। विरोधोदाहरणं तु घटः क्वापि देशेऽस्ति, न क्वाप्यस्ति; स्वकालेऽस्ति, न कदाचिदप्यस्ति; स्वात्मनाऽस्ति, न सर्वात्मनाऽस्तीति; अथवा घटोऽस्ति घटो नास्तीति देशकालादिविभागव्यवच्छेदमन्तरेण अस्तिनास्तीति व्यपदिश्यते। एतादृशानि उदाहरणानि विरुद्धानि । तेन विरोधोदाहरणं नास्तीति न मन्तव्यमित्यर्थः । इत्थं मिथोविरोधोदाहरणमुक्त्वा प्रकृतानुगुण्येन दुर्बलस्यैकस्य प्रबलेनापरेण विरोधोदाहरणमाह—प्रज्ञातेति । 'न हिंस्यात् सर्वा भूतानि' इति व्याप्तविषयमिदं वाक्यम्। एतद्वाक्यार्थस्य व्याप्तिमतोऽपि क्वचिद्वधहिंसायामुपरोधेऽपि सङ्कोचेन विशेषविषयतया नियतनिजबलात्, 'आलभेत' इति वाक्यात् स्वार्थसिद्धिरेव स्यात्। एवं यः सङ्घातः, स विनाशीति दृष्टानुसारेण व्याप्तिर्दिव्यविभूतिनित्यत्वप्रतिपादकप्रमाणबाध्या। यथा नरशिरःपवित्रत्वेन प्राण्यङ्गत्वस्य व्याप्तिः कपालापवित्रत्वप्रतिपादकप्रमाणबलात् बाध्यते ; तेन दिव्यविभूत्यनित्यत्वानुमानं सावयवत्वविषयविभूतिनित्यत्वप्रतिपादकप्रमाणबलात् बाध्यते; तेन दिव्यविभूतिनित्यत्वप्रतिपादकप्रमाणानि अर्थवन्त्येव। इदं तु लोकदृष्टं सर्वसिद्धान्तिनामपीष्टमिति दर्शयति—दृष्टमिति। एवंप्रकारेणानङ्गीकारे दोषमाह—न यदीति। दृष्टप्रक्रियामात्रमेवाङ्गीकृत्य विशेषशास्त्रस्य बाधकत्वानङ्गीकारे शास्त्रं प्रमाणमेव न स्यात्। अध्यक्षतोऽन्यदिति सामान्यनिर्देशोऽनुमानस्याप्युपलक्षणार्थः। उपलभ्यमानेऽप्यर्थे युक्त्यापि तत्रतत्र विशेषोदाहरणे बाधोऽभिधीयते न्यायविद्भिरित्यर्थः। अत्र दोषान्तरमप्याह—बाध इति। सामान्यविशेषविषययोः प्रमाणयोर्विशेषेण सामान्यस्य बाध्यत्वाभावे सामान्य-

---

तदधीनानन्दतुल्यानन्दसद्भावपरमेव—इत्याशङ्कायां दृष्टान्तो विषय इत्याशङ्क्य प्रतिवक्ति भाव इति । लोके यस्यां वस्तुव्यक्तौ यो धर्मो दृष्टः, तत्र व्यक्तौ तदभावो वेदेन बोध्यते चेत् - तदा एकत्र भावाभावौ समुदितौ मन्येते इति, कालभेदेन देशभेदेन वा विरोधपरिहारोऽपि नास्तीति निरुपधिकतया समावेश इष्यत इति तत्र विरोधो भवत्येव । 'आदित्यो यूपः' इत्यादिकमेतादृशम् । यत्र भूयोदर्शनमात्रेण द्वयोर्धर्मयोर्व्याप्तौ परिकल्पितायां तत्र व्याप्येन व्यापकस्यानुमानं क्रियते, तत्रानुमितो व्याप्तः=व्यापको धर्मः प्रमाणान्तरप्रमितविरुद्धश्चेत्— तत्रानुमानप्रमाणमेवाभासीक्रियते, व्याप्तिकल्पनमयुक्तमिति कृत्वा । यथा मित्रातनयानां दृष्टानां सर्वेषां श्यामत्वदर्शनेनादृष्टेऽपि कस्मिंश्चिन्मित्रातनये स श्यामो मित्रातनयत्वादित्यनुमाने पश्चात् प्रत्यक्षेण तस्मिन् रक्तत्वदर्शने तदनुमानौपयिकव्याप्तिराभासीक्रियते, रक्तत्वमेवेष्यते । तद्वत्, यत् सावयवं तदनित्यम्, यत् नित्यं न तत् पृथिव्यादिभूतम् इति सावयवत्वादौ अनित्यत्वादिव्याप्तिर्भूयोदर्शनबलादस्मत्कल्पिता, प्रत्यक्षतुल्यप्रमाणेन वेदेन प्रत्यक्षदृष्टव्यक्तिभिन्ने क्वचित् नित्यत्वसावयवत्वसमावेशो बोध्यते चेत्—अस्मत्कल्पितत्वेनैवाऽऽभासनीया । न हि व्याप्तेः प्रत्यक्षमस्ति । तथाच अधिकमनुमानापेक्षया यस्य निजं बलम्, तस्मात् प्रमाणात् प्रत्यक्षात्, तथा लौकिकाप्तवाक्यात्, तद्वदेव वेदाद्वार्थस्य धर्मस्य प्रत्यक्षव्यक्तिष्वदृष्टस्य सिद्धिरेव व्याप्तेरेव तु भङ्गाभावात् अपि रोध एव । अत एव रावण एकशिरस्कः राक्षसत्वात् द्विपात्त्वात् विश्रवस्तनयत्वादित्यादिकमनुमानमाभासः । व्याप्तेति पाठेऽपि व्याप्तीत्यर्थ एव पर्यवसानम् । एवम् उक्तरीत्या व्याप्तिभङ्गेन मानसिद्धार्थस्वीकरणं दृष्टम्, सर्वदार्शनिकेष्टञ्च। न यदि=एतदस्वीकारे, अध्यक्षतोऽन्यत् आप्तवाक्यं

विशेषविषययोः प्रत्यक्षयोरपि सामान्यस्य विशेषप्रत्यक्षेण बाधो न भवेत् । आपातदर्शनं सामान्यम्, सावधाननिपुणनिरूपणपूर्वकदर्शनं विशेषदर्शनमिति । ननु वटदलशायिनो भगवतो बालस्य जठरे विश्वमिदं वर्तत इति अत्यन्तविरुद्धमभिधीयते; तत् कथं शास्त्रसिद्धमिति तथैवाङ्गीकर्तुं शक्यत इत्याशङ्क्याह—वटदलेति। तच्च यथाऽत्यन्तविरुद्धं न भवति, तथैव बुद्धिमद्भिरुचितप्रकारेण योज्यमित्यर्थः॥

इति कार्याधिकरणम् ॥ १५० ॥

चतुर्थाध्यायतृतीयपादाधिकरणार्थानामनुक्रमेण संग्रहः—

(५१७) [1]एकत्वं ब्रह्मविद्यापरिषदि सुपथोऽधीयमानस्य [2]तस्मिन्
वायौ स्यात् देवलोकश्रुतिरपि [3]वरुणाद्यन्वयो विद्युतोऽधि ।
[4]नेतारोऽमानवान्ताः परपदगमने [5]तद्विदां सोऽयमध्वा
तुर्याध्यायस्य पादे श्रुतिरधिकरणैरित्थमुक्ता तृतीये ॥ १८ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां
चतुर्थस्याध्यायस्य तृतीयः पादः ॥

अस्मिन् पादे प्रत्यधिकरणं प्रतिपाद्यानामर्थानामनुक्रमं दर्शयति—एकत्वमिति । प्रथमाधिकरणार्थमाह—ब्रह्मविद्यापरिषद्यधीयमानस्य सुपथः= सत्पथस्यैकत्वमिति। अनन्तरं वायुलोकशब्दाभिहितो वायुर्देवलोकश्रुत्याऽभिधीयते । तृतीयाधिकरणे विद्युत उपरि वरुणेन्द्रप्रजापतीनामन्वयः । चतुर्थे त्वधिकरणे अमानवान्ताः परपदगमने नेतार इत्यभिधीयन्ते । पञ्चमस्यार्थमाह—ब्रह्मविदा-

---

प्रायो लोकदृष्टार्थविलक्षणार्थकत्वन्तत्बोधकं मानं न भवेत्=अप्रमाणं स्यात् । अत्रासेत्याहशरणात् । अस्मत्कल्पितव्याप्तिविरोधात् तद्बाधस्याप्रमाणत्वे तद्बाधमूलभूतं यत् अध्यक्षं तस्यापि बाध आपद्यते । समबलत्वेष्टौ मिथो बाधो वा स्यात् । अत एव शिशुरपि कथमेकस्मिन् वटदले जलप्लुते शयीत, अवकाशराहित्यात्, कथं तत्र मग्नं स्यात् शिशोर्गुरुत्वात्, कथञ्च जले मग्नं न भवेत् गुरुवस्तुविशिष्टत्वात् । कथञ्च तदुदरं विश्वाधारः स्यात्, अल्पपरिमाणत्वात् इत्यादिशङ्कानां नावकाशः । प्रत्यक्षदृष्टव्यक्तिभिन्नव्यक्तौ किल तत्तदसंभवानुमानम् । तच्च व्याप्तिमूलकम् । प्रमाणविरोधे व्याप्तिरेव भञ्जनीया । धारणशक्तिरहिते प्रत्यक्षदृश्ये दले तदाधारत्वोक्तौ प्रत्यक्षदृश्ये शिशौ तदाधेयत्वोक्तौ अन्यादृशतया दृष्टे अल्पपरिमाणे वस्तुनि अधिकपरिमाणवस्त्वन्तर्भावोक्तौ च विरोधः स्यात्; न त्वपूर्वव्यक्तौ । एवं समाधानान्तरमपि सर्वार्थसिद्ध्यादौ अलभ्यलाभादौ च द्रष्टव्यम् ॥ ५१६ ॥

१८. एतत्तृतीयपादाधिकरणार्थान् संगृह्णाति एकत्वमिति । ब्रह्मविद्यापरिषदि परविद्याप्रतिपादकोपनिषद्घट्टसमुदाये अधीयमानस्य न्यूनाधिकभावेन कीर्त्यमानस्य सुपथः मुक्तिमार्गस्य एकत्वं विभिन्नत्वाभावः प्रथमाधिकरणार्थः । 2. तस्मिन् तन्मार्गे निविष्टो यो वायुः, तत्रैव=तद्वाचिन्येव देवलोकश्रुतिः देवलोक इति पदमपि स्यात् । 3. तस्मिन् मुक्तिमार्गे या विद्युत् तस्याः अधि=उपर्येव वरुणेन्द्रप्रजापतीनां त्रयाणामन्वयः । 4. अर्चिरादयः अमानवपर्यन्ताः द्वादशापि परपदगमने मुक्तानां परमपदगमनार्थं नेतार एव स्युः, न तु चिह्नादिरूपाः । परपदगमने इत्येतत् नेतार इत्यत्रान्वेति ।

मेवायमध्वेति। पादार्थं सङ्कलय्याह—तुर्येति। चतुर्थस्याध्यायस्य तृतीये पादे सृतिः = अर्चिरादिसरणिः पञ्चभिरधिकरणैरित्थमुक्तेति ॥ ५१७ ॥

इति निखिलतार्किकचूडामणिना सर्वतन्त्रस्वतन्त्रेण
श्रीमद्वरदार्यापरनाम्ना कुमारवेदान्ताचार्येण
विरचिते शारीरकाधिकरणचिन्तामणौ
चतुर्थस्याध्यायस्य तृतीयः पादः ॥

—o—o—

॥ चतुर्थस्याध्यायस्य चतुर्थः पादः ॥

(५१८) उक्तं पादैस्त्रिभिरिति पृथुवपुषः सूक्ष्ममूर्तेश्च हानं
निर्धूतोपाधिराशेर्निरुपधिकमहानन्दमन्त्येन वक्ति ।
स्वाविर्भावोऽत्र चिन्त्यस्त्रिभिरधिकरणैश्छन्दवृत्तिस्त्रिभिश्चे
त्येवं द्वे पेटिके स्तः स्वत उभयमिदं नोपयेनार्थभिन्नम् ॥ १ ॥

अत्र चतुर्थाध्याये गतानां पादानामर्थभेदं विभज्यानूद्य, चतुर्थस्य पादस्यार्थविशेषं तदन्तर्गतयोः त्रिकत्रिकत्वेन विभक्तयोः पेटिकयोरर्थविशेषञ्च दर्शयति—उक्तमिति। तत्र त्रिपाद्यर्थभेदस्तावत् प्रदर्श्यते—उक्तमिति। तत्र प्रतिपाद्यार्थे भेदः प्रदर्श्यते—पादैः इति = एवम्प्रकारेणाघानां कर्मणां = स्थूलवपुषः सूक्ष्मवपुषश्च हानं क्रमादुपपादितमिति। चतुर्थस्य पादस्यार्थं विभज्य दर्शयति—निर्धूतेति। उपाधिर्देहसम्बन्धः तद्धर्मसंबन्धश्च। स तु विरजातरणावस्थायां निर्धूतः। एवं निर्धूतोपाधिसमूहस्य निरतिशयानन्दमन्त्येन पादेन वक्ति। अत्र पूर्वपेटिकाविभागं दर्शयति—त्रिभिरिति। त्रिभिरधिकरणैः स्वस्वरूपाविर्भावश्चिन्त्यः। पुनस्त्रिभिरधिकरणैः स्वच्छन्दकैङ्कर्य-

5. सोऽयम् अर्चिरादिरूपोऽध्वा तद्विदामेव=परमपदगमनभाजां परपदं नित्यविभूतिं प्राप्नुवतां परपदशब्दार्थभूतपरमात्मोपासकानामेव; न तु वैधात्रस्थानगामिनां कार्यब्रह्मोपासकानाम्। इत्थं पञ्चधा चतुर्थाध्यायतृतीयपादाधिकरणैरर्चिरादिसृतिविषय उक्तः ॥ ५१७ ॥

इति वात्स्यसत्यव्रतवर्तिवीरराघवाचार्यकृतिषु
अधिकरणसारावलिव्याख्यायां सारार्थरत्नप्रभायां
चतुर्थस्याध्यायस्य तृतीयः पादः ॥

—o—o—

॥ चतुर्थाध्याये चतुर्थः पादः ॥

१. पूर्वेण संगमयन् चतुर्थपादार्थं तत्र पेटिकाद्वयविभागं तदर्थञ्च दर्शयति उक्तमिति। अत्राध्याये गतैस्त्रिभिः पादैः क्रमेण अघानां सञ्चितकर्मणां हानं त्यागः, ततः पृथुवपुषः स्थूलशरीरस्य हानम्, ततो मार्गावसाने विरजातीरे सूक्ष्मशरीरस्य हानञ्च इति अधस्तादुक्तप्रकारेण उक्तं साधितम्। अन्त्येन चतुर्थेन शास्त्रान्ते स्थितेन च पादेन उक्तरीत्या निर्धूतः निरस्तः उपाधिराशिः कर्मस्थूलशरीरसूक्ष्मशरीराद्युपकरणसंघो यस्य तस्य मुच्यमानस्य पुंसः निरुपधिकं=

भोगो(लाभो)ऽभिधीयते । इत्येवम्प्रकारे द्वे पेटिके भवतः । स्वरूपाविर्भावकैङ्कर्यभोगरूपमेतत् द्वितयं स्वतो भवति ; न कर्माधीनम् । तर्हि कारणाभावे कार्यं कथं स्यादित्याशङ्क्य सर्वकारणं परमात्मानमेवात्र पुरस्करोति-नाथ(ईश)निघ्नमिति । अयमर्थः-निश्शेषकृत्स्नप्रतिबन्धनिरासे सति भगवानेव जीवस्य गुणाष्टकाविर्भावादिकं स्वयमेव करोतीति न काचिदनुपपत्तिः ॥ ५१८ ॥

१५१ ॥ अथ सम्पद्याविर्भावाधिकरणम् ॥ ४-४-१ ॥

सूत्रम्—सम्पद्याऽऽविर्भावः स्वेनशब्दात् ॥ मुक्तः प्रतिज्ञानात् ॥ आत्मा प्रकरणात् ॥ १—३ ॥

(५१९) अश्रान्तस्वप्रकाशं यदिदमहमिति प्रत्यगात्मस्वरूपं
तस्याऽऽविर्भावसिद्धौ न तु किमपि फलं स्यात् सुषुप्ताविशेषात् ।
तस्मान्मुक्तः स्वमन्यद्व्रजति वपुरसौ देववत् रूपशब्दात् ;
नैवं ; स्वेनेति शब्दो ह्यफल इह भवेत् रूपवाच्यार्थसिद्धेः ॥ २ ॥

अत्र पादसङ्गतिरधिकरणसङ्गतिश्च भाष्ये विभज्य दर्शिता, 'परं ब्रह्मोपासीनानामात्मानञ्च प्रकृतिवियुक्तं ब्रह्मात्मकमुपासीनानामर्चिरादिना मार्गेणापुनरावृत्तिलक्षणा गतिरुक्ता । इदानीं मुक्तानामैश्वर्यप्रकारं चिन्तयितुमारभते' इति पादसङ्गतिः। 'किम् अस्माच्छरीरात्समुत्थाय परञ्ज्योतिरुपसम्पन्नस्य देवादिरूपवत् साध्येन रूपेण सम्बन्धोऽनेन वाक्येन प्रतिपाद्यते, उत स्वाभाविकस्य स्वरूपस्याविर्भावः' इत्यधिकरणसङ्गतिः । तदर्थविचारस्तु—किं, 'अस्माच्छरीरात्' इत्यादिवाक्ये मुक्तस्य साध्येन रूपेण सम्बन्धः प्रतिपाद्यते, उत स्वाभाविकस्वरूपाविर्भावः। किं स्वाभाविकस्वरूपाविर्भावपरत्वे मोक्षशास्त्रस्य पुरुषार्थावबोधित्वं सम्भवति, नेति । किं स्वरूपस्य स्वतोऽपरिच्छिन्नाऽऽनन्दत्वं सम्भवति, नेति । किमानन्दस्वरूपस्य तिरोधानं सम्भवति, नेति । किमाविर्भावपरत्वे निष्पत्तिव्यपदेशादैयर्थ्यमस्ति, नेति । अत्रापूर्वरूपप्राप्ति. फलमिति वदन् पूर्वपक्षी स्वाभाविकस्वरूपाविर्भावपक्षे दूषणानि दर्शयति—अश्रान्तेति । आत्मस्वरूपं नित्यस्वप्रकाशमेव तस्य पूर्वमेवाविर्भावसिद्धत्वात्पूर्वं किमपि फलं न स्यात्, नित्याविर्भूतस्याविर्भावान्तरापेक्षाभावात् । किञ्च यदि स्वरूपाविर्भावमात्रान्नित्यसिद्ध एव मोक्षः स्यात्, तर्हि सुषुप्तस्यापि मुक्तिः स्यात्; तस्यापि स्वस्वरूपाविर्भावस्य विद्यमानत्वात् । तदिदं दर्शयति—सुषुप्ताविशेषादिति । एवं परपक्षं प्रतिक्षिप्य स्वाभिप्रेतं प्रकारं

---

स्वाभाविकमपरिच्छिन्नमानन्दं वक्ति स्थापयति । तत्र प्रथमाधिकरणत्रयमेका पेटिका; अन्यत्रयं द्वितीया। स्वरूपाविर्भावो जीवस्य प्रथमपेटिकार्थः । स्वेच्छानुसारेण वृत्तिः वर्तनं परिपूर्णब्रह्मानुभवमात्रं वा कैङ्कर्यमपि वा द्वितीयपेटिकार्थः । उभयमिदं परमात्मायत्तमेव; किंतु कर्मायत्तं वा विद्यायत्तं वा न भवति । यथा मणेः प्रभाविशेषवत्त्वं भगवन्मात्राधीनम्, न तु उपाध्यन्तरमूलकम्, तद्वदिति ॥५१८॥

२. प्रथमाधिकरणमारचयति अश्रान्तेति । 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति वाक्ये जीवस्य मुक्तौ स्वरूपनिष्पत्तिरूपं फलमुक्तम् । केयं निष्पत्तिरिति विचारः । रूपशब्दस्य देहेऽपि प्रयोगात् स्वरूपनिष्पत्तिर्नाम स्वासाधारणशरीरसंपत्तिः । यथा स्वर्गादौ तत्तद्भोगानुकूलशरीरप्राप्तिः । अन्यथा आत्मस्वरूपनिष्पत्तेरेवार्थत्वे फलं साध्यं किमप्युक्तं न स्यात् । तदाह अहमिति=अहंशब्दवाच्यं अश्रान्तस्वप्रकाशम् स्वयंप्रकाशतया सुषुप्त्यादावप्यलुप्तप्रकाशं यत् प्रत्यगात्मनः स्वरूपं धर्मि तस्य आविर्भावसिद्धौ=आविर्भावः प्रागेव सिद्ध इति हेतोः संप्रति साध्यं किमपि न भवति । नन्वसाध्यत्वेऽप्यभीष्टत्वात् फलत्वं स्यादित्यत्राह सुषुप्ताविशेषादिति । स्वरूपाविर्भावः स्वरूपसत्ता वा स्वरूपप्रकाशो

दर्शयति—तस्मादिति । अयमर्थः—यथा नित्यमुक्त ईश्वरो रामकृष्णादिविग्रहं परिगृह्णाति, एवं मुक्तोऽपि विलक्षणं रूपं परिगृह्णातीति वाच्यमिति । तत्र हेतुमाह—रूपशब्दादिति । रूपशब्दो हि देहवाचित्वादिमेवार्थं दर्शयतीत्यर्थः। एतत् प्रतिक्षिपति—नैवमिति। अस्मिन् प्रतिक्षेपे हेतुमाह—स्वेनेति । अयमर्थः—केवलं रूपेणाभिनिष्पद्यत इति नोच्यते, अपि तु स्वेन रूपेणेति । स्वशब्दो ह्यत्र विशेषणत्वेन प्रयुज्यते । स शब्दो यथा न निष्फलः स्यात्, तथैवार्थो वाच्य इति । कथमफलत्वमित्याशङ्क्याह—रूपेति । अपूर्वरूपप्राप्तौ रूपेणाभिनिष्पद्यत इत्येतावदेव वाच्यम् । तेन स्वशब्दसामर्थ्यात् स्वाभाविकरूपाविर्भाव उच्यत इत्यर्थः । स्वाभाविकस्याविर्भावे हि स्वशब्दसाफल्यमिति भावः ॥ ५१९ ॥

(५२०) नित्यत्वात्मस्वरूपस्थितिरियमभिनिष्पत्तिरित्युचिर्वास्तः
तन्मात्रं साध्य विद्याफलमिति न विदुर्नित्यसिद्धं स्वसाध्यम् ।
सिद्धं साध्यानुवेधादपि भवति फलं(धात् भवति फलमतः) मा त्वविद्यादिभङ्गो
यद्वा सिद्धस्य चिचित्तदिह न विहतं(तथं) मुक्त इत्यादिसूत्रम् ॥ ३ ॥

---

वा । उभयमपि सर्वदैवास्ति । यदि तस्येष्टत्वम् सुषुप्तिरप्यभीष्टा स्यात । इन्द्रो हि, 'नाऽहमत्र भोग्यं पश्यामि' इति सुषुप्तिदशामपेक्ष्यान्यादर्श स्वरूपमभाक्षीत् । अन्यथा रागद्वेषादिकालुष्यरहितसुप्तावस्था जागरापेक्षया स्वाभिमता स्यात् । अतः स साध्यमन्यत् वपुरेव तदा भजते । तत्र स्वेनेति विशेषणम् अन्यालभ्यमानन्दैकान्तं तदिति ज्ञापयितुम् । अन्यथा, 'परं ज्योतिरुपसंपद्यते' इत्येतावदलमिति स्वेन रूपेणाभिनिष्पद्यत इति व्यर्थं स्यादिति पूर्वपक्षः । निरस्यति नैवमिति । एवमर्थवर्णने स्वेनेति व्यर्थं स्यात् । यदा जीवो यद्रूपं वपुर्लभते, तत् तदीयमिति ज्ञातमेव । तत्र स्वेनेति किमर्थम्। पूर्वमपि स्वशरीरविशिष्ट एवायं स्थितः । स्वासाधारणत्वं तदर्थ इति चेत्—असाधारणत्वं बद्धजीवालभ्यत्वाद्वा मुक्तपुरुषान्तरेऽप्यभावाद्वा । नाद्यः, व्यर्थत्वात् । अस्माच्छरीरात्समुत्थायोपसंपद्यत्यनेनैव तदलभ्यत्वसिद्धेः । अन्त्यस्तु न प्रामाणिकः; सर्वमुक्ततुल्यत्वात् । ननु स्वेनेत्यस्य स्वाभाविकेनेत्यर्थं एवास्तु । प्रकृतावस्य देहः सर्वः कर्मोपाधिकः । तत्र तु स्वाभाविकः तादृशेन रूपेण देहेन संपन्न इत्यस्त्विति चेत् — परमपदप्रवेशकाल एवाप्राकृतं रूपं लब्ध्वा ब्रह्मालंकारादिभिरलंकृतो नित्यसूरिभिरभिनन्द्यमानः परं ज्योतिरुपसंपद्यते । अतस्तदनन्तरं तस्य देहलाभ इति न युक्तम् । अतस्त्वन्मत एव स्वेन रूपेणाभिनिष्पद्यत इति वाक्यं व्यर्थमनन्वितञ्च स्यात् । न च ज्योतिश्शब्दो नित्यविभूतिवाची; 'स उत्तमः पुरुषः' इति तस्य उत्तमपुरुषत्वोक्तेः । न चास्य रूपं देहः सर्वदाऽस्ति; देहं विना स्वरूपेणावस्थितेरपि प्रमाणसिद्धत्वात् । तस्मात् देहाख्यं रूपं प्राप्तः संपति स्वात्मकेनान्येन रूपेणाभिनिष्पद्यत इति देहव्यावर्तनेन स्वरूपपरमेवेदं वाक्यमाह । अतस्त्वदिष्टस्यार्थस्य रूपवाचा रूपपदेनैव सिद्धत्वात् स्वेनेति शब्दो व्यर्थः स्यादिति यथाश्रुतार्थ एव ग्राह्यः । यत्तु नैष्फल्यमापादितम्, तन्न; स्वेन रूपेणाभिनिष्पद्यते इत्युक्तौ, औपाधिकेन रूपेण त्यक्तो भवतीति लाभात् फलस्य सुषुप्तवैलक्षण्यस्य च सिद्धेः ॥ ५१९ ॥

अत्र मृषावादिनां स्वस्वरूपाविर्भाववचनमघटितमिति दर्शयन् स्वपक्षे तस्य सुघटितत्वमेव स्थापयति—नित्येति। अयमत्र भावः—मृषावादिनः किं नित्यात्मस्थितिमेवाभिनिष्पत्तिरिति वदन्ति, किं वा अपूर्वाकारप्राप्तिम्। उत्तरत्र भेदवादप्रसङ्गः; अतः पूर्व एव कल्पोऽवशिष्यते। सोऽपि न सङ्घटते। नित्यस्वात्मस्वरूपस्थितिरियमभिनिष्पत्तिरिति वदन्तः तन्मात्रं विद्याफलं न भवतीति न विदुः। तन्मात्रस्यानादिसिद्धत्वात्। विद्याफलस्य फलत्वेनागामित्वात्। न ह्यागामिनः पूर्वसिद्धस्य च तादात्म्यं वक्तुं शक्यते, व्याघातादिति। तदिदमाह—नित्यसिद्धमिति। ननु यद्यस्मत्पक्षेऽभिनिष्पत्तिर्वक्तुं न शक्यते, तर्हि त्वत्पक्षे कथं वक्तुं शक्यत इत्याह—सिद्धमिति। लोके स्वरूपतस्सिद्धमपि साध्यभूतविशेषणानुवेधात् साध्यभावमाटीकते। यथा स्पर्शविशेषादशुद्धः स्नानादिसाध्येन शुद्ध(द्धि?)स्वरूपेण स्वयं साध्यत इत्युच्यते, एवं कर्मभिरशुद्धो जीवः कर्मसम्बन्धविनिर्मुक्तरूपेण साध्यत इति वचने को विरोधः। तदिदमाह—साध्यानुवेधादिति। सिद्धमपि वस्तु साध्यानुवेधात् साध्यमित्युच्यते। यथा च प्रोक्षणादिना व्रीह्यादिकं शुद्धभावेन साध्यते। फलस्य स्वरूपमेवात्र दर्शयति—सेति। अत्र सेति स्त्रीलिङ्गनिर्देशोऽभिनिष्पत्तिविवक्षया। इत्थमभिनिष्पत्तिशब्दस्याकारान्तरप्राप्तिमर्थमुक्त्वा प्रतीतिप्राप्तिमप्यर्थं तया व्याचष्टे—यद्वेति। वदन्ति हि लोके तत्तदर्थप्रतिपादकः अयमर्थ एवं निष्पद्यत इति निर्णीयत इति(त्यर्थः)। तथा चात्रापि स्वेन रूपेणाभिनिष्पद्यत इति स्वाभाविकाकारेण ज्ञायत इत्युक्तं भवति। तेन मुक्तिशब्दस्यास्मत्पक्षे सार्थकत्वात् 'मुक्तः प्रतिज्ञानात्' इत्यादिसूत्रमपि सार्थकमेवेति निगमयति—तदिति। अयमर्थः—अस्मत्सिद्धान्ते जीवस्य सगुणत्वात् तद्गुणे सङ्कोचविकाससद्भावादत्रापूर्वविकासस्यागन्तुकत्वाच्च मुक्तिशब्दप्रयोगः सुघटित एव। युष्मत्पक्षे निर्गुणस्याऽऽत्मनो नित्यस्वयम्प्रकाशत्वादपूर्वाकारप्राप्त्यभावेन पूर्वममुक्तः पश्चान्मुक्त इति वचनमवचनमेव स्यात्। अविद्यानिवृत्तिरपूर्वा विद्यत इति चेत्—सा किं ब्रह्मस्वरूपम्, उत तदतिरिक्ता

---

३. स्वरूपस्यैवाभिनिष्पत्तिरिति तस्या असाध्यत्वान्न विद्याफलत्वमिति यत् पूर्वपक्षिणा दूषणमुपक्षिप्तम्, तत् यथाश्रुते दूषणमेव। वयं तु नाद्वैतिवत् तावन्मात्रं ब्रूम इति वदन्, "मुक्तः प्रतिज्ञानात्" इति सूत्रार्थं तदर्थं दर्शयति। पूर्वं चतुर्थपादे निगूढमर्थमत्र प्रकटयति। स्वरूपेणाभिनिष्पत्तिर्नाम आत्मस्वरूपस्थितिरेवेति ऊचिवांसः उक्तवन्तः तस्य तत्स्थितेश्च नित्यत्वात् विद्यासाध्यत्वं न भवतीति न जानन्ति। नित्यसिद्धं हि साध्यं न भवति। पूर्वार्धमिदं शंकाग्रन्थो वा, पूर्वपक्षिसंमतार्थाङ्गीकाररूपं वा, अद्वैतिदूषणं वा। स्वयं सिद्धान्ते वक्तव्यमाह सिद्धमिति। लोके सिद्धस्यापि साध्यभूतकिञ्चिदंशविशिष्टत्वेन रूपेण साध्यत्वमिष्यते। यथा, "व्रीहीन् अवहन्ति" इत्यत्र व्रीहीणां पूर्वमेव सिद्धत्वेऽपि, अवहननसाध्यत्वात् वैतुष्यस्य—तुषविमोकस्य तद्विशिष्टत्वेन रूपेण साध्यत्वं मीमांसकेष्टम्। अत एव उत्पत्ति-आप्ति-विकृति-संस्कृतिभेदात् कर्मचातुर्विध्यमुक्तं शाब्दिकैरपि। तस्मात् साध्यानुवेधात् साध्यकिञ्चिदर्थविशिष्टत्वात् सिद्धमपि फलं भवति। अत्रात्मविशेषणभूतं साध्यं तु अविद्यावासनाप्रकृतिसंबन्धादिहानिः। इदमेव स्वेनैव रूपेणाभिनिष्पद्यते, औपाधिकरूपेण मुच्यते इति प्राक् सूचितम्। अतः सूत्रेऽपि मुक्त इति मुक्तिविशिष्टतया फलत्वमुपपादितमिति। अभिनिष्पत्तिः सत्ता वा प्रकाशो वेति विकल्पे सत्तापक्षमाश्रित्योपपादनं कृतम्। प्रकाशपक्षमवलम्ब्याप्याह यद्वेति। अभिनिष्पत्तिर्नाम सिद्धात्मस्वरूपविषयकवित्तिरेव, यथा युक्त्याऽयमर्थोऽभिनिष्पद्यते इत्यादौ। एवञ्च, 'मुक्त इत्यनेन कथं साध्यत्वोपपादनम्।

वा; तद्व्यतिरिक्तत्वेऽपि परमार्थरूपा अपरमार्थरूपा वा; स्वरूपपक्षेत् तद्वत्स्येव दूषणम्। अतिरिक्तत्वेऽप्यपारमार्थ्ये तस्याः प्रध्वंसाभावरूपत्वेनानन्त्यात् तस्या अपि निवृत्त्यङ्गीकारे निवृत्तिपारम्पर्यादनवस्था। तथा चारोपिततन्निवृत्तिपारम्पर्याङ्गीकारात् तद्वस्य एव नित्यसंसारप्रसङ्गः। परमार्थपक्षे तु द्वैतापत्तिरिति प्रागेवोक्तम्॥ ५२०॥

(५२१) स्वाकारान्नित्यभानादधिकसुखतया भाति जीवस्तदानीं
सिद्धाविर्भावमात्रेऽप्यनुविदुरभिनिष्पत्तिवाचः प्रयोगम्।
सङ्कोचात्यन्तहानिर्धिय इयमभिनिष्पत्तिरागन्तुरुक्ता
निष्प्रत्यूहस्वरूपोपधिकमपि तदा स्वेनशब्दः प्रवक्ति॥ ४॥

ननु जीवस्य स्वरूपाविर्भावो मोक्षश्चेत्—तत्स्वरूपं संसारदशायामप्यविर्भूतम्; मोक्षदशायां को विशेषः? तत्रोत्तरमाह—स्वाकारादिति। लोके ह्येकमेव वस्तु पुरस्तात्किञ्चिदनुकूलतया भातम्, उत्तरोत्तरं पश्यतः पश्चादानुकूल्याधिक्येनावलोक्यते; एवं जीवात्मस्वरूपं नित्यभातमपि प्रथममेकदेशानुकूल्येन प्रतीयते; मुक्तिदशायां त्वत्यन्तानुकूल्येन। अयमत्र शब्दान्वयः—नित्यभानात् स्वाकारात् अधिकसुखतया तदानीं = मोक्षदशायां जीवो भातीति। न चाभिनिष्पत्तिशब्दस्वारस्यं नास्तीति मन्तव्यमित्याह—सिद्धेति। प्रयोग एव हि शब्दार्थनिर्णये प्रमाणम्, अभिनिष्पत्तिशब्दस्याविर्भावमात्रेऽपि प्रयोगप्राचुर्यमस्तीति प्रागेवोक्तम्। नन्वभिनिष्पत्तिशब्दो ह्यागन्तुकमेव कञ्चिदर्थं वक्ति; कोऽयमागन्तुकोऽर्थ इत्याशङ्क्याह—सङ्कोचेति। सङ्कोचात्यन्तहानिः = विकास इत्यर्थः। पूर्वं

मुक्तस्यात्मनः स्वरूपस्य नित्यत्वात्' इति न शक्यम्। मुक्त इत्यादिसूत्रं='मुक्तः प्रतिज्ञानात्' इति 'आत्मा प्रकरणात्' इति च सूत्रम् आत्मवाचितया साध्यवाचित्वाभावाल्लोपपादनक्षममिति हि शंका। सा न युक्ता; मुक्तिरूपविशेषणांशे साध्यत्वकथनतात्पर्यात्॥ ५२०॥

४. ननु स्वरूपवित्ते. स्वयंप्रकाशतया प्रागेव सत्त्वात् कथं तस्याः साध्यत्वम्। स्वस्य पुरुषार्थत्वमपि न भवति। स्वरूपसत्ता तु नैव साध्येत्युक्तमेव। अविद्यादिनिवृत्तिः साध्येति चेत्-तस्या आगन्तुकत्वेन न नित्यात्मस्वरूपत्वम्। अविद्यानिवृत्तिर्नाम अपहतपाप्मत्वादिस्वरूपमेवेति चेत्—तर्हि न साध्यत्वमित्यत्राह स्वाकारादिति। स्वयंप्रकाशस्याऽऽत्मनो यः आकारः आनुकूल्यरूपो नित्यभातः, तदपेक्षया अधिकानुकूलतया जीवः तदानीं मुक्तौ भाति। धर्मितद्गतैकत्वादिभाने विशेषाभावेऽपि सुखत्वरूपानुकूलत्वांशे भाने वैषम्यमस्ति। नन्वस्यानुकूल्यं वा स्वरूपम्, अधिकानुकूल्यं वा। आद्ये अधिकानुकूल्यग्रहणं भ्रमः स्यात्। अन्त्ये, स्वस्वप्रकाशरूपस्वप्रकाशेनासत् अधिकानुकूल्यं कथं भासेतेति चेत्-स्वरूपमात्रानुकूल्यं रूपानुकूल्यम्। नित्यत्वाणुत्वापहतपाप्मत्वादिविशिष्टगतमानुकूल्यमधिकानुकूल्यम्। तत्प्रकाशः संसारे न भवति। धर्मभूतज्ञानविकासमूलस्तत्प्रकाशो मुक्तौ। नन्वानुकूल्यज्ञं नैं कथमभिनिष्पत्तिरित्यत्राह सिद्धेति। नोत्पत्तिमात्रमभिनिष्पत्तिः, किंतु सिद्धवस्तुनः प्रकाशोऽप्यभिनिष्पत्तिरेव। तत् आनुकूल्यं वा भवतु, अन्यद्वा। तत्र नानाधर्मज्ञानेऽपि कथं पुरुषार्थतेति शंका मा भूदिति आनुकूल्यातिशयभानं स्थितमुक्तम्। यत्तु अविद्यादिनिवृत्तेरपहतपाप्मत्वादिरूपत्वे कथं साध्यतेति, तत्राऽऽह संकोचेति। स्वं रूपं धर्मभूतज्ञानम्। तस्याभिनिष्पत्तिः संकोचस्य सर्वात्मना निवृत्तिः;

स्वरूपोपाधिकत्वमुक्तम्; इदानीमभिनिष्पत्तिशब्देन सङ्कोचात्यन्तहानेरभिधानात् निष्प्रत्यूहं स्वरूपोपाधिकं रूपं स्वेनेति शब्दः प्रवक्ती(प्रवदती)त्यर्थः ॥ ५२१ ॥

(५२२) प्रायः स्वस्मिन् स्वदेहिन्यनघगुणनिधौ तद्विभूतिद्वये वा
दृष्टं यत् स्यात् समाधौ भवति पृषतवत् तद्धि मुक्तानुभूतेः ।
कृत्स्नं तत् शर्करौघव्यतिकरितसुधासिन्धुवत् स्वादुभूतम्
तस्मात् स्वात्मप्रकाशे न फलमिति वदन् कूपकूर्मो घृणार्हः ॥ ५ ॥

अत्र कश्चिच्चोदयति—'वेदान्तवादिनामात्माविर्भावो मोक्ष इति सर्वसम्मतम्। तथाच यथा चिन्मात्रब्रह्मवादिनामपूर्वद्रष्टव्याभावात् पुरुषार्थाभावः, तथा भवतामपि सम्पद्याविर्भाव इति नित्यस्वयम्प्रकाशात्मस्वरूपाविर्भावस्य पुरुषार्थत्वं वदतां पुरुषार्थाभावोऽविशिष्टः। यद्यपि जीवातिरिक्तः परमात्मा द्रष्टव्यतया भवद्भिरङ्गीक्रियते, सोऽपि योगदशायां दृष्ट एव। तथा च मोक्षदशायां विशेषतो द्रष्टव्याभावात् पुरुषार्थाभाव इति समानमेतत्' इति। तदेतत् प्रतिक्षिपति—प्राय इति। अयमर्थः—जीवस्वरूपसामान्यमहमिति सर्वलोकविदितम्। तथापि स जीवो विभुर्वा, अणुर्वा, भगवच्छेषभूतो वा, अन्यशेषो वा, स्वतन्त्रो वा, परतन्त्रो वा, ज्ञानरूपो वा, जडरूपो वा, ज्ञानगुणको वा, निर्गुणो वा, आनन्दात्मको वा, आनन्दस्वरूपो वा, स च क्षणिकसन्तानमात्रः, उत स्थिरः; स्थिरत्वेऽप्यामोक्षस्थायी, अथवा अनुदयास्तमयः, स च कल्पितो वा, अकल्पितो वा, भिन्नो वा, अभिन्नो वा, भिन्नाभिन्नो वा इति बहुधा वम्भ्रम्यमाणैर्वादिभिः अन्यथा[ऽन्यथा?] अभिधानादनवधारितस्वरूप एव। तथा च तत्स्वरूपं भगवच्छेषत्वादिना मुक्तिदशायामेव विशेषतोऽवलोक्यते। आस्तामिदं जीवस्वरूपम्; नेदमेवास्माकं मुक्तिदशायां प्रकाश्यम्; अपि तु तदन्तर्यामी पुरुषोत्तमः। तदिदमाह—स्वदेहिनीति। 'यस्याऽऽत्मा शरीरम्', 'अन्तःप्रविष्टश्शास्ता जनानाम्' इति निगमशतनिगदितेन

---

पूर्णविकासः। तस्य आगन्तुत्वात्—कादाचित्कत्वात् साध्यत्वमुपपन्नम्। विकासावस्थज्ञानात्मकस्य रूपस्य स्वेनेति प्रातिपदिकोक्तं स्वाभाविकत्वं प्रत्यूहाभावविशिष्टं यत् स्वं तदधीनत्वम्। प्रत्यूहश्चाविद्यादिः। भगवन्निग्रहो वा। तथाच विकासस्य स्वाभाविकत्वं साध्यत्वञ्चाक्षतम्। तेन विकासेन यावद्धर्मविशिष्टात्मग्रहणात् अविकल्पस्वताभानमप्यक्षतम्। अपहतपाप्मत्वादेराविर्भावो नाम न सत्तामात्रम्। सर्वदैव तत्सत्त्वात्। न ज्ञानम्, तस्य ज्ञानयोगे कैवल्ये च सत्त्वात्। किंतु कार्यक्षमत्वम्। तत् परमपद एव। धर्मभूतज्ञानेनोभयविभूतिविशिष्टब्रह्मग्राहिणा यथावस्थितात्मस्वरूपं यावद्धर्मविशिष्टं गृहीतं भवत्यनुकूलतयेति आत्मा पुरुषार्थ एवेत्युच्यते, 'आत्मा प्रकरणात्' इति सूत्रेण। एवञ्च स्वरूपम् आत्मा। तस्याभिनिष्पत्तिः यथावत् पूर्णतया धर्मभूतज्ञानेन ग्रहणम्। स्वेन रूपेणेति निष्प्रत्यूहात्मस्वरूपग्रहणविषयपूर्णात्मस्वरूपमिति वक्तीति वा चतुर्थपादार्थः ॥ ५२१ ॥

५. स्वस्वरूपाविर्भावस्य पुरुषार्थता न भवति देवादिवत् देहान्तरात्मकरूपकामे एव पुरुषार्थसिद्धिरिति मन्वानस्योत्तरम् आत्मा प्रकरणादिति सूत्रम्। तदर्थं विशदयन् आत्मनः पुरुषार्थत्वमाह प्राय इति। समाधौ जीवात्मसाक्षात्कारिणाम्, 'यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः' इति इतरविषयभोग्यत्वबुद्धिवारिका भोग्यत्वधीर्भवतीत्युक्तम्। परमात्मस्वरूपगुणविभवेषु भोग्यत्वं सुप्रसिद्धम्।

सर्वशरीरत्वेनावगन्तव्यः। तत्स्वरूपमपि श्रवणदशायां यावदवगम्यते, न तावदेव मननदशायाम्। यच्च मननदशायामप्यवगम्यते, न तावन्मात्रमेव निदिध्यासनदशायाम्। यच्च निदिध्यासनारम्भे यमनियमासनप्राणायामप्रत्याहाराद्यवस्थायामवलोक्यते ऽतोऽप्यधिकमेव किञ्चित् समाधिदशायाम्। यदुच्यते, 'तत्रापि दहं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम्' इति। अत्राप्यपहतपाप्मत्वादि-गुणाष्टकाविर्भावे सत्यपि समाध्यवस्थावलम्बनीयं सकलमपि सौख्यं वैकुण्ठवासिनो देवीभूषणायुध-परिजनपरिच्छदादिसकलविशेषणविशिष्टस्य सर्वतः परिबृढस्य, 'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि' इति विभूतिद्वयाधिपत्येन निर्णीतस्य भगवतोऽनुभवसिन्धौ पृषतलवायते। अथमत्र शब्दान्वयः—स्वस्मिन् स्वात्मनि अनघगुणनिधौ स्वदेहिनि परमात्मनि तद्विभूतिद्वये वा नित्यविभूतौ लीलाविभूतौ वा यत् समाधौ = योगदशायां दृष्टं द्रष्टव्यं), तत् मुक्तानुभूतेः पृषतवदेव भवतीति। तेनोभयविभूतिविशिष्टपरब्रह्मानुभूतेरुत्तरकालभावित्वेन पुरुषार्थत्वं युज्यत इति भावः। ननु पूर्वं दुःखत्वेन दृष्टमेव पश्चादपि दृश्यते, कथं तस्य पुरुषार्थत्वमित्याशङ्क्याह—कृत्स्नमिति। भगवद्विभूत्यन्तर्गतं वस्तु स्वभावतः प्रतिकूलमेव किञ्चिन्नास्ति, अपि तु पित्तोपहतस्य क्षीरमिव कर्मानुबन्धादेतावन्तं कालं प्रतिकूलतया भाता सेयं विभूतिः। नित्यविभूतेस्तु भानमेव नाभूत् परञ्ज्योतिरुपसम्पन्नस्य तु सा चेयञ्च विभूतिद्वयं भगवच्छेषत्वानुसन्धानाविर्भावेन निरति-शयसुखात्मकतया भाति। तत्र दृष्टान्तमाह—शर्करेति। विभूतिद्वयमत्र सुधासिन्धुः। शर्करौघः पुनः अपहतपाप्मत्वादिगुणाष्टकविशिष्टो भगवान्। अथवा भगवानेव सुधासिन्धुः। अपहतपाप्मत्वादि-गुणाष्टकपूर्वकाप्राकृतदेवीभूषणायुधपरिजनपरिच्छददेशविशेषादयः शर्करास्थानीयाः। तथा च सकलविशेषणसम्पन्नस्य श्रीनिवासस्य भगवतो वैकुण्ठवासिनोऽनन्तगरुडविष्वक्सेनादिभिरन्तरङ्ग-परिकरैः अनवरतसेव्यमानस्य नित्यसेवाहेवाकिनामस्माकं पुरुषार्थाभावमनुवदन् अत्यन्ताप्रसिद्ध-देशवासित्वादशेषप्रमाणविशेषानुपलम्भेन कूपोदरकूर्म इत्यपहसन्त्याचार्याः। तस्मादतिघृणार्हः कृपायोग्यः। अनर्थप्रवणा जनाः स्वज्ञात्मविद्भिरनुग्राह्याः। स्मर्यते हि—'आत्मद्रुहम् अमर्यादं मूढमुज्झितसत्पथम्। सुतरामनुकम्पेत नरकार्चिष्मदिन्धनम्॥' इति ॥ ५२२ ॥

(५२३) मल्ली शुद्धं प्रसूनं जनयति समये रङ्गकोपाधिमुक्ते
तद्वत्साथानुकम्पा फलमुपशमितावग्रहं स्फूरितुरयम्।
तस्मादागन्तुकेऽपि प्रतिहतिविरहात् तादृशे धीविकासे
प्रत्यापन्नस्वदायक्रम इह कथितः प्राप्तसिद्धेः प्रतीचः ॥ ६ ॥

---

स्वस्वरूपे, स्वस्य देहिनि आत्मनि परमात्मस्वरूपे अखिलहेयप्रत्यनीके निखिलकल्याणगुणाकरे तदीयलीला-भोगार्थविभूतिद्वये च कतिपयांशानामेव समाधिगोचरत्वात् मुक्तकर्तृकानुभूतौ च सर्वस्य विषयत्वात् समाधौ यत् दृष्टं तत् पृषतवत् समुद्रे बिन्दुतुल्यं भवति। अतो मुक्तानुभाव्यं सर्वगुणविशिष्टस्व-स्वसजातीयसर्व-जीवानुभवमिश्रपूर्णब्रह्मात्मकं शर्कराप्रवाहसंमिश्रितामृतसागरवत् स्वादुभूतं स्वादिष्ठम्। एवममृतभोग्यता-पोषकशर्करावत् ब्रह्मानन्दपोषकस्वानुभवस्याभोग्यतां यो वदति, स. देहात्मभ्रान्तिमान् शास्त्रप्रमेयविषयेऽ-नभिज्ञः समाधिमुक्तिसुदूरस्थितः शोच्य एव। तथा चाविर्भूतनित्यत्वाणुत्वापहतपाप्मत्वादिविशिष्टात्मा पुरुषार्थभूत एवेत्यर्थः। श्लोकस्यास्य संदर्भानुसारेणाऽऽत्मस्वरूप-पुरुषार्थत्वस्थापनैदम्पर्यज्ञापनाय शर्करौघ-पदेन सगुणसर्वजीवरूपविवक्षया समन्वयः कृतः अन्यादृशमपि चिन्तामणौ वैशद्यमनुसंधेयम् ॥ ५२२ ॥

अनादिसिद्धस्य स्वाभाविकस्वरूपस्योपाधिवशादन्यथाभावे सिद्धे पश्चादुपाध्यपगमे सिद्धे पुनः पूर्वाकारप्राप्तिः स्यात्, स चाऽऽकार उत्तरस्मिन् काले नित्यमेवानुवर्तेत इति। अस्मिन्नर्थे लोकदृष्टान्तमाह–मल्लीति। मल्लिका हि मध्ये किंशुकादिसुषिरप्रवेशरूपोपाधिवशात् शुद्धप्रसूनजनकस्वभावं मुक्त्वा रक्तप्रसूनं जनयति; पुनश्च रञ्जकोपाधिमुक्ते समये सञ्जाते शुद्धमेव प्रसूनं जनयति। एवमनन्तगरुड-विष्वक्सेनादिवत् जीवोऽपि शुद्धस्वभावः स्वयमनादिकर्मवशात् स्वाभाविकरूपतिरोधानं प्राप्नोतीति उपाधिविनिर्मोक्षे पश्चात् ज्ञानविकासमुप(मपि)लभते। तदिदमाह–तद्वदिति। नाथानुकम्पा सूरितुल्यं फलं जनयतीत्यन्वयः। अत्रायं विशेषः –जीवानां नित्यमेव सूरिवत् भगवदनुभवयोग्यत्वे सत्यपि अनादिप्रतिबन्धादननुभवः; प्रतिबन्धनिवृत्तौ सूरितुल्यानुभवसिद्धिः। मल्लीपुष्पादौ पूर्वमपि शुद्धिः, मध्ये त्वौपाधिकाकारविशेषप्राप्तिः, पश्चात् स्वाभाविकस्वरूपसम्बन्ध इति। अत्र साक्षाद्दृष्टान्तः, 'यथा न क्रियते ज्योत्स्ना' इत्याद्युक्तो मणिरेव। मणेः स्वलूत्पत्तिसिद्ध(विशिष्ट) एव प्रकाशः। स तु प्रकाशः कस्यचिन्मणेरुत्पत्तिमारभ्य मलतिरोहितो भवति। कस्यचित्तु आदिमारभ्य मलसम्बन्ध एव नास्ति; तत्तुल्या नित्याः। संसारिणस्त्वादित आरभ्य मलसम्बद्धमणिप्रायाः। तेषां तु शाणोल्लेखनेन मणेरिव भगवदुपासनात्मकशाणोल्लेखनात् स्वाभाविकप्रकाशाविर्भावो भवति। उक्तमर्थं निगमयति–तस्मादिति। प्रतिहतिविरहात्(विरहे) स्वाभाविकरूपाविर्भावस्य तस्य, च पुनः प्रतिबन्धाभावात्(भावे) नित्यमेवावस्थानस्य लोके दृष्टत्वात् तादृशधीविकासस्यागन्तुकत्वे सत्यपि प्राप्तसिद्धेः प्रतीचः–प्राप्तफलस्य प्रत्यगात्मनः प्रत्यापन्नस्वदायक्रम इह कथितः। अयमर्थः–कस्यचित् पुत्रस्य पितृधनं स्वभावतः प्राप्तम्; तदन्येन बलवता कुत्सितेन केनाप्युपरुध्यते। पश्चादुपरोधनिवृत्तौ स्वभावप्राप्तं स्वधनं पुत्रः प्राप्नोति। एवं भगवदनुभवस्य सर्वात्मनां स्वभावतः प्राप्तत्वात् तत्प्रतिबन्ध[क]कर्मनिवृत्तौ प्रतिबन्ध[क]ान्तरप्रसक्त्यभावात् नित्यमेवासावनुवर्तेत इति निष्कण्टकोऽयं नीतिमार्गः। कृतकत्वेनानित्यत्वानुमानं तु, 'न च पुनरावर्तते' इति प्रमाणबाधितत्वात् नरशिरःपवित्रत्वाद्यनुमानसौभ्रात्रमेव लभते ॥ ५२३ ॥

(५२४) अर्वाञ्चो(ञ्चं) मुक्तिभेदं कतिचिदगणयन् स्वात्ममात्रानुभूतिं
तत्र ब्रह्मानुभूतेर्विहतिरुपधितः स्यात् स्वतो वेति चिन्त्यम्।

---

६. उपाधिमूलकस्यान्यथाभावस्योपाधिनिवृत्तौ निवृत्त्या स्वाभाविकरूपस्य पश्चादक्षतिरित्येतत् सदृष्टान्तं दर्शयति मल्लीति। मल्लीलता धवलमेव पुष्पं जनयेत् स्वभावतः। तदिदं रक्तवर्णोपादक किंशुक ह्युपाधिसक्तिदशायां न; किं तु तन्मुक्तिदशायाम्। तद्वत् स्वामिनः परमात्मनः कृपा कर्मोपाधिरूपावग्रहकाले आनुकूल्यातिशयविशिष्टसर्ववस्त्वनुभवाजनिकाऽपि, यस्य फलस्यावग्रहः–बाधकं तद्वशीकरणेन शमितम्, तत् फलं नित्यसूरिष्विवास्मास्वपि जनयति। तच्च फलं धीविकासः। तस्य यद्यपि जनितत्वात् आगन्तुकत्वं कादाचित्कत्वम्, तथापि पुनर्विकासप्रतिघातिनो विरहात् नाशस्यापि जनेरिव कारणाधीनत्वात् नाशकसामग्र्यभावे नाशासंभवे स धीविकासस्तादृशः एकरूप एवास्ति। तथा च प्राप्तसिद्धेः मुक्तस्य प्रतीचः प्रत्यगात्मनः प्रत्यासन्नस्वदायक्रमः पुत्रस्य स्वरूपप्राप्तपैतृकधनलाभन्याय इहाभिमतः। यथा पुत्रेण विलम्बेन लब्धोऽपि दायो वस्तुत एतदीय एव। प्राप्तस्य च न निवृत्तिः। तद्वदिहापि। अतः कथमेतावत् महिष्ठं फलमस्योपायस्येति न मन्तव्यमिति। फलस्य स्वाभाविकत्वे उपायाल्पत्वाननुसारित्वे च दायो दृष्टान्तः ॥ ५२३ ॥

सन्ति द्वेधापि दोषास्तत उपचरणान्मुक्तिशब्दोऽत्र युक्तः
सालोक्यादिप्रभेदेष्वपि सरणिरियं सावधानैर्विभाव्या ॥ ७ ॥

इति सम्पद्याविर्भावाधिकरणम् ॥ १५१ ॥

अत्र केचिदाहुः, जीवात्ममात्रप्राप्तिरिति काचिन्मुक्तिरस्तीति। सा पुनर्मुक्तिरेव न भवतीति दर्शयितुं तत्पक्षमनुवदति–अर्वाञ्च इति(मिति)। कतिचिदविचारकाः स्वात्ममात्रानुभूतिं मुक्तिविशेषं गणयन्। अत्रोत्तरमाह—तत्रेति। अत्र ब्रह्मानुभूतिविच्छेदः स्वाभाविकः कर्ममूलो वेति विकल्प्य उभयत्रापि दूषणमभिधेयम्। किं दूषणमित्यनुयोगे पूर्वमस्माभिरुक्तान् दोषान् इहाचष्टे—सन्तीति। नहि कैवल्यं मुक्तिरिति कथयन्त्यैतिहासिकाः पौराणिकाश्च ; न केवलं त एव भवत्पक्षानुसारिणोऽपि केचिदूचुरित्याशङ्क्य सर्वोऽयं व्यवहार औपचारिक इत्याह—तत इति। अस्तु कैवल्यं मुक्तिरौपचारिकी; अथापि सालोक्यसामीप्यसारूप्यरूपेण मोक्षविशेषाः भावत्कैरेवाभिधीयन्ते। तत् कथमित्याशङ्क्याह—सालोक्येति। तत्राप्यौपचारिको मुक्तिशब्द इत्यर्थः। अस्ति चात्र प्रमाणम्—, "लोकेषु विष्णोर्निवसन्ति केचित् समीपमृच्छन्ति च केचिदन्ये। अन्ये तु रूपं सदृशं भजन्ते सायुज्यमन्ये स तु मोक्ष उक्तः ॥" इति। अयमर्थः—न केवलं सालोक्यादिकं मोक्षः ; तत्र तु मोक्षशब्द औपचारिकः। यस्तु सायुज्यं प्राप्तः, तस्य तु सालोक्यादित्रयमपि सायुज्यान्तर्गतत्वेन मुक्तिशब्दवाच्यतामुपलभते। अतः प्राप्ताप्राप्तविवेकेन सायुज्यमेव मोक्षशब्दार्थः। अन्यानि तु सायुज्यसम्बन्धादेव मुक्तिशब्दवाच्यतामुपलभन्ताम् ; का नो हानिः। सायुज्यं तु, 'सोऽश्नुते सर्वान् कामान् सह' इति श्रुत्यैव निरुक्तम्। 'भोगमात्रसाम्यलिङ्गाच्च' इति सूत्रकारोऽपि भोग्यसाम्यमेव सायुज्यमित्याह। यस्तु मोक्षदशायां सार्ष्टिनेति कश्चिद्विशेषोऽभिधीयते, सोऽप्याचार्यैरेवान्यत्र विविच्य दर्शितः—'सायुज्यमुभयोरत्र भोक्तव्यस्याविशिष्टता। सार्ष्टिता तत्र भोगस्य तारतम्यविहीनता ॥' इति। लोके हि भोग्यस्यैक्येऽपि भोक्तृतृष्णावैषम्यमस्ति, तदप्यत्र नास्तीतीममर्थं दर्शयितुं सायुज्यान्तर्गतमेव सार्ष्टित्वमनुकथयन्ति सन्तः। मृषावादिनां तु सायुज्यप्रसक्ति एव नास्ति। उपसर्गस्य तावत् सहशब्दपर्यायत्वेन तन्मतविरोधः सुप्रसिद्ध एव। युजिर्योग इति धातोरपि भेदगर्भत्वम्

ननु किमिति शर्करौघव्यतिकरितसुधासिन्धुवदिति उभयविभूतिविशिष्टब्रह्मानुभवे स्वानुभवमिश्रणेन। तस्य प्रामाणिकत्वेऽपि तद्वदेव स्वात्ममात्रानुभवो मुक्तिरेव। सेयमत्र, आत्मा प्रकरणादिति सूत्राभिप्रेता स्यादिति शंकामनूद्य प्रत्याह अर्वाञ्च इति। अर्वाञ्चमिति पाठे अर्वाक्त्वेऽपि मुक्तित्वमिति भावो वाच्यः। मुक्तिविधासु स्वात्ममात्रानुभवोऽपि कश्चित् प्रभेदः, सालोक्यसारूप्यादिवदित्याहुः। के ? अर्वाञ्चः पश्चात्तनाः ; न तु प्रथमं सदाचार्यात् शास्त्रार्थग्राहिणः। तत्र विकल्प्यते। निरीश्वरवादिमतं तत् स्यात्। ब्रह्मानुभवो मुक्तिरित्यपि भवद्भिः स्वीकृतं हि। सोऽनुभवोऽस्य कस्मान्न भवति ? किं कुतश्चिदुपाधेः=कारणात्, यद्वा स्वत एव। द्वेधाऽपि=पक्षद्वयेऽपि दोषाः सन्ति। कोऽयमुपाधिः ; न कर्म ; सर्वकर्मक्षयात्। न भगवन्निग्रहः ; तस्य निर्हेतुकत्वाभावात्। कैवल्यार्थप्रवृत्तिरेव निग्रहमूलमिति चेत्—असुरमायेष्वप्यसंभवत्ययं निग्रहो विषयास्वादविदूरे शुद्धात्मग्राहिणि स्वात्ममहिमवेदिनि भुजनसार्वभौमस्य श्रीपतेर्भवतीति चित्रम्। एवमूतं कैवल्यमिति ज्ञाने सति तत्र न कश्चित् प्रवर्तेत। कटुनभक्षणादिवत् तात्कालिकरागरूपप्रवर्तकस्याप्यभावात्। नापि स्वतः ; सर्वेषामात्म-

अविवादमेव सर्वेषामेव वादिनाम्। सयुजो भावः सायुज्यमिति प्रत्ययोऽपि सप्रत्ययं भेदमेवाचष्टे। तस्मात् सायुज्यं मुक्तिर्मृषावादिनामित्यव्युत्पन्नानामेवाऽऽलापः। तर्हि सायुज्यमित्यैक्यमभिधीयत इति रूढिशक्तिमभिदध्मह इति चेत्—तदपि न; रूढिशक्तिप्रतिपादकप्रमाणाभावात्। प्रत्युत, 'द्वा सुपर्णा सयुजा सखायौ', 'चन्द्रमसः सायुज्यम्', 'आदित्यस्य सायुज्यम्' इति वैदिकप्रयोगेषु भेदपूर्वकमेवाभिधानात्। लोके चैक्यमेव सायुज्यमिति पामरा अपि न प्रवदन्ति; किं पुनः कवयः। यदि वदन्ति भवादृशाः, ते पुनरवयो वा कपयो वेति ॥ ५२४ ॥

इति स्वरूपाविर्भावाधिकरणम् ॥ १५१ ॥

१५२ ॥ अथ अविभागेन दृष्टत्वाधिकरणम् । ४-४-२ ॥

सूत्रम्—अविभागेन दृष्टत्वात् ॥ ४ ॥

(५२५) जीवेशौ नित्यभिन्नौ; श्रुतिरिह च सहेत्याह मुक्तस्य भोगं
साम्ये पारम्यमुक्तं; स्मृतमपि; स पृथग्भातु तस्मात् परस्मात् ।
मैवम्; तत्त्वं हि मुक्तौ स्फुरति तदनयोर्भेदभानांश इष्टः
सिद्धे देहात्मभावे त्विह न हि घटते तत्स्वनिष्ठत्वदृष्टिः ॥ ८ ॥

सङ्गतिर्भाष्ये—'किमयं परञ्ज्योतिरुपसम्पन्नः सर्वबन्धविनिर्मुक्तः प्रत्यगात्मा स्वात्मानं परमात्मनः पृथग्भूतमनुभवति, उत तत्प्रकारतया तदविभक्तमिति विशये' इति। तदर्थविचारस्तु—मुक्तः किमात्मानं परमात्मनः पृथग्भूतमनुभवति, उत तत्प्रकारतया तदविभक्तम्। किं साहित्यसाम्यसाधर्म्यवचनानि अविभागेनानुभवे विरुध्यन्ते, नेति। किं पृथग्भूतस्यैव साहित्यादिकमुपपन्नम्, नेति। अत्र पूर्वपक्षी मुक्तदशायां भेदेनैवानुसन्धाने हेतुविशेषान् आचष्टे-जीवेशाविति। अयमर्थः-'द्वा सुपर्णा' इति श्रुतिरेव जीवपरयोर्भेदमाचष्टे। हेत्वन्तरमप्याह—श्रुतिरिति। सैव श्रुतिः, 'सोऽश्नुते सर्वान् कामान् सह' इति मुक्तभोगं सहशब्दपूर्वकमेवाह। सहशब्दो हि भेद एव संघटते। 'पुत्रेण सहाऽऽगतः पिता' इति प्रयुञ्जते; न पुनः, 'पित्रा सहाऽऽगतः पिता' इति; नापि, 'पुत्रेण सहाऽऽगतः पुत्रः' इति। तृतीयमपि हेतुमाह-साम्य इति। साम्यं तावत् भेदपरम्। तदत्र परमसाम्यमत्यन्तभेदपरम्। केनापि विशेषणेन साम्ये साम्यमिति वक्तुं युज्यते। बहुभिरपि विशेषणैस्साम्ये हि परमं

नामैकरूपत्वस्यैव प्रमाणसिद्धत्वात्। विस्तरश्चिन्तामणाविह 12 श्लोके। अन्येष्वाचार्यग्रन्थेषु च। तस्मादेकरूपैव मुक्तिः। अन्यत्र तदंशसद्भावमात्रेण मुक्तिशब्दोपचारः, जीवन्मुक्ताविव। यत्तु सालोक्यादिदृष्टान्तकथनम्, तदपि नेत्याह सालोक्येति। सावधानैः शास्त्रे तर्के चावधानसहितैः, 'सायुज्यमन्ये स तु मोक्ष उक्तः' इति हि शास्त्रम्। तर्कः प्रागुक्तः ॥ ५२४ ॥

८. मुक्तौ जीवस्य स्वस्वरूपाविर्भावः साधितः। परमात्मशेषत्वमपि जीवस्य रूपम्। शरीरात्मभावस्येष्टत्वात् नियताधेयत्वविधेयत्वशेषत्वैः परमात्मानं प्रति जीवस्य प्रकारत्वं हि सिद्धम्। एवम्भूतापृथग्भावानुभवोऽस्य तदा न भवितुमर्हति, साहित्य-परमसाम्यश्रुतिविरोधादिति शंकते जीवेति। अपृथग्भावो नाम अभेदो वा एकाधिकरणवृत्तित्वं वा शेषशेषिभावादिरूपसंबन्धवत्त्वं वा। नाद्य; जीवेशयोः सर्वदेव भिन्नत्वात्। अन्यद् द्रव्यं हि नैति तद्द्रव्यताम्। द्वितीयस्त्विष्ट, 'सह ब्रह्मणा विपश्चिता' इति एकत्र स्थितयोरुभयोर्भोक्तृत्वप्रतिपादनात्। इदमेव च परमसाम्यम्। उच्चनीचभावमात्रेऽत्यो-

साम्यं सिध्यति। तेन तदपि भेदपरम्। इदञ्च स्मृतिसिद्धम्, 'मम साधर्म्यमागताः' इति भगवतैव साम्यपर्यायस्य साधर्म्यशब्दस्य प्रयोगदर्शनात्। तेन जीवः परमात्मनः पृथक्त्वेन प्रतिभासेतेत्याह—स इति। तदेतत् प्रतिक्षिपति—नैवमिति। तत्र हेतुमाह—तत्त्वमिति। मुक्तिदशायां तत्त्वमेव प्रतिभाति, नान्यत्। अतस्त्वं तु स्वतन्त्रभेदोऽब्रह्मात्मकभेद इत्यर्थः। तेनानयो(र्द्वयो)र्निर्दोषो भेदो भातु। जीवपरयोस्स्वरूपभेद इत्यर्थः। तर्हि कीदृग्विधो भेदो निषिध्यत इत्याशङ्क्याह—सिद्ध इति। द्विधा खलु भेदः प्रतीयते—ब्रह्मात्मकभेदः, अब्रह्मात्मकभेदश्चेति। तत्र पूर्वो भेदः, 'द्वा सुपर्णा सयुजा', 'नित्यो नित्यानाम्', 'भोक्ता भोग्यम्' इत्यादिश्रुतिप्रसिद्धत्वादध्यात्मविद्याङ्गीकारपदमेव। अब्रह्मात्मकभेदस्तु, 'अन्तःप्रविष्टश्शास्ता जनानां सर्वात्मा', 'सर्वगत्वादनन्तस्य स एवाहमवस्थितः' इत्यादिप्रमाणसिद्धब्रह्मात्मभावानुसन्धानविरोधादनादर्तव्य एव। तेनाविनाभावेनानुसन्धानं शरीरात्मभावेनानुसन्धानमध्यात्मविद्याभाजानसिद्धमित्यर्थः। अयमत्रान्वयः—देहात्मभावे सिद्धे सति तस्य जीवस्य स्वनिष्ठत्वदर्शनं हि घटते परमात्मपारतन्त्र्यानवलोकनं न सङ्गच्छत इत्यर्थः ॥ ५२५ ॥

(५२६) मन्त्रोक्तं भोक्तृभावे यदि सहवचनं, ब्रह्म न स्यात् प्रधानं ;
तस्मात् तत् भोग्यभावे भवतु ; तदुचितं ब्राह्मणव्याकृतेश्च ।
द्वेधाऽपि ब्रह्मतत्त्वात् पृथगितर इह स्यादितीदञ्च वार्तं
सिद्धे भेदे स्वनिष्ठस्थितिपरिहरणं ह्यत्र यत्नोपपाद्यम् ॥ ९ ॥

अत्र पूर्वपक्षी मन्यते—'अविभागेन भगवदनुसन्धानं मुक्तिदशायामिति भवद्भिरुच्यते। तत् श्रुतिविरुद्धमेव। सत्यज्ञानादिमन्त्रे फलदशायां भेदस्यैव साक्षादभिधीयमानत्वात् [इति—तत्र ;] तथा हि, 'सोऽश्नुते सर्वान् कामान् सह' इति फलनिर्देशः। अत्र भोक्तृसाहित्यं वा भोग्यसाहित्यं वा सहशब्देनोच्यत इति विवेचनीयम्। भोक्तृसाहित्यञ्चेत्—'सहयुक्तेऽप्रधाने' इति ब्रह्मणा सहेति सहशब्दसम्बन्ध . भोक्तार जीवं प्रति ब्रह्मणः स्यादप्राधान्यम्। तच्चायुक्तम् ; सर्वस्वामिनो ब्रह्मणः स्वशेषभूतं

भाव्यं भोग्यस्यानुभव [. तु] जीवस्य शेषत्वादेर्भाने तु रसभंग एव स्यात्। साम्ये पारम्यं च श्रुतम्, 'निरञ्जनः परमं साम्यमुपैति' इति। 'मम साधर्म्यमागताः' इति स्मृतञ्च। तत्रापि यथाश्रुति पारम्यं विवक्षितम्। अत एव सायुज्यवत् सार्ष्टिताऽप्युच्यते। शेषत्वादिज्ञाने सति संकोचादपसरणमेव स्यात्। अतस्तद्बाधकस्य शेषत्वादिज्ञानस्य तदानीमभाव एव। अशेषत्वज्ञानञ्च। तदाह पृथग् भातु तस्मात् परस्मादिति। निरस्यति नैवमिति। मुक्तौ विपरीतज्ञानायोगात् शरीरात्मभावरूपतत्त्वस्योपासनकाले नियमेन दृष्टत्वात् तत्क्रतुन्यायेन तज्ज्ञानमावश्यकम्। तावता न द्वयोरभेदप्रसक्तिः, शरीरात्मभावस्यैव भिन्ननिष्ठत्वात्। अतः स्वनिष्ठत्वदृष्टिः, तदनाधेयत्व-तदशेषत्व-तदविधेयत्वदर्शनं तदा नैव भवेदिति ॥ ५२५ ॥

९. यत्तु सह ब्रह्मणा इति द्वयोर्भोक्तृतया साहित्यं श्रूयत इति, तदाऽपि तदविरोधेन सुवचम्। वस्तुतो न स श्रुत्यर्थ इत्याह मन्त्रेति। भोक्तृसाहित्यपक्षे तस्य प्राधान्यं ब्रह्मणः अप्राधान्यञ्च स्यात्। "सह युक्तेऽप्रधाने" इत्यनुशासनात्। अतः ब्रह्मसहितोऽयं भुंक्ते इति नार्थः। किं तु सर्वान् कामान् समश्नुते इति भोक्तव्येषु कल्याणगुणेषु ब्रह्मसाहित्यान्वयः, ब्रह्म समश्नुते कामांश्च समश्नुत इत्यर्थः।

जीवं प्रत्यप्राधान्यायोगात् इति । तदिदमाह—मन्त्रोक्तमिति । भोक्तृसाहित्यवचनस्येत्थमनुचितत्वात् भोग्यसाहित्यमेव वक्तुं योग्यमित्याह—तस्मादिति । अनौचित्ये हेत्वन्तरमाह—ब्राह्मणेति । 'ब्रह्मविदाप्नोति परम्' इति विधिर्ब्राह्मणम् । तस्य व्याख्यानम् , 'सत्यं ज्ञानम्' इति मन्त्रः। तत्र ब्रह्मविदिति शब्दस्य पूर्वं व्याख्यानमकारि । परमाप्नोतीत्यंशस्य, 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इति व्याकरणं क्रियते। तेन भोग्यसाहित्यमेव वक्तुमनुचितमित्यर्थः। 'ब्रह्मणा सह सोऽश्नुते' इति भोक्तृसाहित्ये वचनव्यक्तिः। 'ब्रह्मणा सह सर्वान् कामान् अश्नुत' इति भोग्यसाहित्ये वचनव्यक्तिः। न हि भृत्यान् प्रति स्वामिनोऽप्राधान्यमस्ति। न च तत् वक्तव्यम् ; लोकविरोधात् । अस्तु वाऽत्र भोक्तृसाहित्यं भोग्यसाहित्यं वा विवक्षितम् ; उभयथापि ब्रह्मान्तरत्वाज्जीवः पृथगेव प्रतीयते तथा चाविभागेनानुसन्धानं न युज्यत इति शङ्कते-द्वेधापीति। तदिदं प्रतिक्षिपति-वार्तमिति। अयमर्थः-अत्र जीवपरयोः स्वरूपभेदो न प्रतिक्षिप्यते। सिद्ध एव स्वरूपभेदः। अपि तु स्वातन्त्र्येणावस्थानं परिह्रियते । सूत्रोपपाद्यम् = सूत्रकाराभिप्रेतमित्यर्थः, तात्पर्ये हि शब्दः प्रमाणम् । तेनापातार्थं मुक्त्वा तात्पर्यमेव पर्यालोचनीयं विचारधीरैरित्यर्थः ॥ ५२६ ॥

(५२७) पारम्यं यच्च साम्ये श्रुतमिह न हि तत् सर्वथेत्यप्यधीते
ब्राह्मणो हेम्नश्च यद्वत् समवरणधृतौ स्यात् तदुक्तिस्तथाऽत्र ।
एवं तद्देहभावे स्थितवति विविधाबाधिताम्नायभूम्ना
ब्रह्मैवेत्यादिवाक्यं प्रथयति समतां तादृगित्यप्यधीतेः ॥ १० ॥

इत्यविभागेन दृष्टत्वाधिकरणम् ॥ १५२ ॥

'निरञ्जनः परमं साम्यमुपैति' इति वाक्यस्यार्थं श्रुतितात्पर्यपर्यालोचनेन निगमयति—पारम्यमिति । इह, 'परमं साम्यम्' इत्यनेन सर्वथा सा(धर्म्य)म्यमिति नोच्यते, तेन प्रमाणानुसारेण याव दबाधितं साम्यं(धर्म्यं), तावदङ्गीकार्यमित्यर्थः। अस्मिन्नर्थे लोकदृष्टान्तमाह—ब्राह्मण इति । ब्राह्मणो

---

तस्मात् सहभवनं=साहित्यं भोक्तृभावे मा भवतु । मन्त्रस्य पूर्वब्राह्मणवाक्यव्याख्यारूपत्वादपि तत् भोग्यसाहित्यमेवोचितम् । 'ब्रह्मविदाप्नोति परम्', 'आनन्दमयमात्मानमुपसंक्रम्य' इति भोग्यत्वेनैव ब्राह्मणे ब्रह्मनिर्देशात् । न चैवं तदीयकल्याणगुणापेक्षया तस्याप्राधान्यं स्यादिति शंक्यम् ; गुणप्राशस्त्यस्य गुणि प्राशस्त्य एव पर्यवसानात् । किञ्च लोके ज्ञातांशस्याप्राधान्येन अज्ञातांशस्य च प्राधान्येन व्यवहार दृष्टः । यथा, 'पयसा सहौदनं भुंक्ते' इति । न केवलं तत्र पयोमात्रं गृह्यते, ओदनोऽपि भुज्यत इति तदर्थः । तद्वत् 'ब्रह्मविदाप्नोति परम्' इति परस्यानुभवः प्रागेवोक्त इति न केवलं स ; गुणानुभवोऽपीत्युच्यते । तावता वस्तुप्राधान्याप्राधान्यसिद्धिर्न भवति । शंकते द्वेधापीति । भोग्यसाहित्यविवक्षायामपि भोक्तृजीवापेक्षया भोग्यं ब्रह्म भिन्नमेवेति शंका । दूषयति इदञ्च वार्तमिति । वार्तम् असारम् हेतुमाह सिद्ध इति । न ह्यत्र सूत्रे अविभागेनेत्यनेन अभेदः ऐक्यं स्थाप्यते । किंतु शेषशेषित्वाद्यभावस्य परिहारः क्रियते । शेषभूतस्यापि समानं भोगं ददातीति स्वामिनः प्रशंसैव तेन भवति ॥ ५२६ ॥

१०. साम्ये पारम्यकथनात् सर्वधर्मसमन्वयो ज्ञायते । अत ऐक्यमेवोक्तं भवतीति शंकायां साम्यपदार्थाविरोधेन पारम्यवचनतात्पर्यमाह पारम्यमिति । साम्ये पारम्यं श्रुतम् । साम्यञ्च भोगसाम्यम्

हेम्नश्च समधरणधृतौ तुल्यतुलाधृतौ तुल्यत्वोक्तिः स्यात्। नैतावता वर्णसाम्यमपि स्यात्। अपि तु निष्कतदर्धादिभावेन(मिलापेन) साम्यम्। तद्वदत्रापि जीवपरमात्मनोर्भोगसाम्यमेव; न पुनः स्वामित्वादिकमपि समम्; तस्य प्रमाणेन व्यवस्थितवृत्तित्वात्। तर्हि; 'ब्रह्म वेद; ब्रह्मैव भवति' इति सावधारणसामानाधिकरण्यनिर्देशो दृश्यते। सामानाधिकरण्यं तावदैक्यपरम्। एवकारस्तु भेदं निषेधति। तेन जीवब्रह्मणोः स्वरूपैक्यं स्यादिति। अत्रोत्तरम् एवमिति। अयमन्वयः—शरीरात्मभावप्रतिपादकबहुविधाम्नायभूम्ना जीवस्य भगवद्देहभावे स्थितवति—निर्णीते सति ब्रह्मैव भवतीति सावधारणोऽयं निर्देशः साम्यमेव द्रढयति। यथा, 'यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये। दृश्यन्ते तानि तान्येव तथा भावा युगादिषु॥' इत्यत्र, 'तानि तान्येव' इति सावधारणसामानाधिकरण्यशब्दः केवलं तज्जातीयत्वमेवाचष्टे; न पुनः तत्त्वमेव पूर्वोत्तरमुत्पन्नानां भिन्नत्वात्। एवं, 'ब्रह्म वेद ब्रह्मैव भवति' इति ब्रह्मतुल्यप्रकारत्वमेवाऽऽचष्टे, न पुनः स्वरूपैक्यम्। ब्रह्म तु नित्यनिर्मलम्। तदभिध्यानादधुनैव निर्मलीभवति ब्रह्मवेदी कथं तयोः स्वरूपैक्यमिति वक्तुं शक्यते; तेन ब्रह्मप्रकारत्वमेव ब्रह्मैव भवति इति सामानाधिकरण्येनोच्यत इत्यर्थः। एवं न्यायोपपादितमर्थं प्रमाणेनोपपादयति—तादृगिति। 'यथोदकं शुद्धे शुद्धमासिक्तं (यथा विमले तोये तोयमासिक्तं) तादृगेव भवति, एवं मुनेर्विजानत आत्मा भवति गौतम' इति जीवस्य ब्रह्मणि तादृक्त्वमप्युच्यते। न पुनस्तत्त्वम्। तेन यत्रयत्र तत्त्वमुच्यते तत्र सर्वत्रापि तादृक्त्वमेवोच्यत इति भाव्यमित्यर्थः॥ ५२७॥ इत्यविभागेन दृष्टत्वाधिकरणम्॥ १५२॥

## १५३॥ अथ ब्राह्माधिकरणम्॥ ४-४-३॥

सूत्रम्—ब्राह्मेण जैमिनिरुपन्यासादिभ्यः॥ चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः॥ एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः॥ ५-७॥

(५२८) ज्ञानत्वे किं फलं स्यादिति मिषतु गुणैस्तादृशं ब्रह्मसाम्यं;
किं धर्मैस्स्वरूपैः, तदिह भवतु चिन्मात्ररूपप्रकाशः।
इत्थं छात्रोक्तपक्षद्वयमुभयविधश्रुत्युपात्तात् विरोधात्
निर्धूयाथ द्विधाऽऽविर्भवनमघटयत् सिद्धतत्त्वप्रकाशात्॥ ११॥

'प्रत्यगात्मनः परञ्ज्योतिरुपसम्पद्य निवृत्ततिरोधानस्य स्वरूपाविर्भाव एवेत्युक्तम्। तत्र येन स्वरूपेणायमाविर्भवति, तत्स्वरूपं श्रुतिवैविध्यात् विचार्यते' इति सङ्गतिर्भाष्ये। तदर्थ-

---

सायुज्यम्। तत्र पारम्यमित्यनेन भोगे आनन्दे तारतम्याभाव एव ज्ञायते। न पुनः शेषत्वाधेयत्वादिकं विनाऽपि स्थितिः। तुलायामेकस्मिन् घटे ग्रावा—प्रस्तरो निक्षिप्यते, अन्यत्र घटे सुवर्णं तोलनार्थम्। तत्र साम्यं हि मानसाम्यमेव। न तु ग्राव्णो हेमभावः। एवमत्र जीवस्य परमात्मशरीरत्वं स्थितमेव। तर्हि 'ब्रह्मैव भवति' इति वाक्यविरोध इति चेत्; कथं तद्भिन्नं वस्तु तदेव भवेत्। अतः साम्यमेव तत्रापीष्टम्। 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति। एवं मुनेर्विजानत आत्मा भवति गौतम' इति (क. 3.) जलक्षिप्तजलस्येव तादृक्त्वमेवोक्तम्; न तदभेदः। एवंभूतश्च साम्यं यावदंशे संभवति, तावदेव गृह्यते। न तु जीवस्य ब्रह्मप्रकारत्वमपि॥ ५२७॥

११. भोगसाम्येन शेषत्वादेर्न विरोध इत्युक्तम्। अत्र भोगसाम्यप्रयोजकाकारसद्भाव उच्यते। तत्र

विचारस्तु-किं गुणाष्टकविशिष्टमेवास्य स्वरूपम्, उत विज्ञानमात्रमेव, उतोभयं(य) स्वरूपम्। किं गुणाष्टकविशिष्ट-ज्ञानमात्रस्वरूपविषययोः श्रुत्योः प्राबल्यदौर्बल्यविभागो युज्यते, नेति। तयोः किं विरोधः सम्भवति, नेति। 'विज्ञानघन एव' इत्यवधारणं किं गुणान्तरं व्यावर्तयितुं शक्नोति, नेति। अत्र जैमिन्यौडुलोम्यभिमतं पक्षद्वयं प्रत्येकमुपदिश्य तयोरुभयोरपि पक्षयोस्समुच्चयं स्वाभीष्टं प्रतिपादयितुमारभते—ब्राह्मेण इति। अयं किल जैमिनेरभिप्रायः—'आत्मनो ज्ञानस्वरूपमात्रत्वोपदेशे तस्य स्वविषयग्रहणायोग्यत्वात् निष्फलत्वमेव। तेन गुणैर्ब्रह्मसाम्यमिष्टमिति। औडुलोमेः पुनरयं भावः-'स्वरूपातिरिक्तैरभिहितै(राविर्भूतै)र्गुणैः किं प्रयोजनम्? तेन चिन्मात्रस्वरूपप्रकाश एवास्तु' इति। एवं पूर्वपक्षद्वयमुपन्यस्य द्वयोरपि पक्षयोरुभयविधश्रुत्युपात्तत्वेनाविरुद्धत्वादुभयसमुच्चयात्मकं स्वेष्टस्वरूपाविर्भवनं घटयति। उभयविधश्रुत्युपात्ताऽवि(त्वाद्वि)रोधात् सिद्धतत्त्वप्रकाशादित्यन्वयः। अयमत्र भावः—यदि जैमिनिमतमङ्गीकृत्य ज्ञानगुणकत्वादिमात्रमेवाभिवदामहे, तदा ज्ञानस्वरूपत्वादिप्रतिपादकश्रुतिविरोधः। यदि च तच्छ्रुत्यनुसारेण ज्ञानगुणकत्वादिकं हित्वा ज्ञानस्वरूपत्वमात्रमेव प्रतिपद्यामहे, तदा ज्ञानगुणकत्वादिप्रतिपादकश्रुतिविरोधः। उभयत्राप्युपलम्भविरोधश्च स्यात्। तेन सर्वविरोधपरिहारार्थं ज्ञानस्वरूपत्वं ज्ञानगुणकत्वञ्च समुच्चयेनाङ्गीकृत्य मुक्तिदशायामुभयरूपेणाविर्भवनं प्रतिपद्यामह इति न कोऽपि विरोध इति ॥ ५२८ ॥

---

जैमिन्युक्तमाह ब्राह्मेण इति। औडुलोमिमतं यत् ज्ञानमात्रस्वरूपत्वं मुक्तौ, तावता फलं न किमपि लक्ष्यते। अतो न तावन्मात्रेण ब्रह्मसाम्यम्। किंतु भोगांशगतं ब्रह्मसाम्यं तादृशं गुणभूतविविधपरिणामशीलज्ञानादिश्रुत्युपात्तसर्वाकारयुक्तं गुणैः अपहतपाप्मत्वादिभिरष्टभिर्गुणैः स्यात्। तादृशगुणवत्त्वमेव ब्रह्मसाम्यमिति। अथ औडुलोम्याशयमाह कांमति। 'स्वरूपेणाभिनिष्पद्यते' इति स्वरूपाविर्भाव एव ह्युक्तः। अतः तदात्मकत्वात्=चैतन्यमात्रस्वरूपत्वात् अपहतपाप्मत्वादीनां धर्मतया स्वरूपत्वाभावात् स्वरूपाविर्भाव एव संमन्तव्यः। 'विज्ञानघन एव,' 'प्रज्ञानघन एव' इति ज्ञानस्वरूपातिरिक्तनिषेधात् अपहतपाप्मत्वादिगुणानामपि तत्राभाव एव। न तावता सपाप्मत्वापत्तिः; सर्वगुणनिषेधादिति। सिद्धान्तमाह इत्थमिति। प्रजापतिवाक्यादौ जीवस्यापहतपाप्यत्वादिगुणवत्त्वस्थापनात् तद्विरोधात् औडुलोमिमतं निर्धूननीयम्। यत् जैमिन्युक्तम्, 'निष्फलं ज्ञानस्वरूपत्वं विहाय गुणवत्त्वमेव स्वीकार्यम्' इति, तदपि विज्ञानघन एवेति श्रुतिविरोधान्निर्धूननीयम्। तर्हि विज्ञानघन एवेति एवकारनिर्वाहः कथमिति चेत्— न ह्ययमेवकारः अन्ययोगव्यवच्छेदकः; किंतु ज्ञानस्वरूपत्वायोगः अंशेऽपि नास्तीति अयोगव्यवच्छेदक एव। अन्ययोगव्यवच्छेदपक्षेऽपि स्वरूपगुणयोर्भेदस्य त्वयैवोक्तत्वात् स्वरूपवाचकपदान्वित एवकारः स्वरूपान्तरव्यवच्छेदक एव स्यात्, न तु गुणव्यवच्छेदकः। किंच ज्ञानस्वरूपत्वं बन्धकालेऽपि स्थितम्। आत्मप्रकाशस्य सुषुप्तावप्यंगीकारात्। तस्येदानीमेवाऽऽविर्भाव इति किम्। सत्यपि प्रकाशे आत्मनां जडत्वस्य तार्किकादिभिः स्वीकृतत्वात् ज्ञानस्वरूपत्वं मुक्तावेव यथावत् बुध्यत इत्युच्यत इति चेत्—तर्हि स्वप्रकाशत्वरूपधर्मस्य धर्मभूतज्ञानेनैव ग्राह्यत्वात् गुणवत्त्वमवर्जनीयम्। अतः प्रमाणप्राप्तगुणव्यतिरिक्तस्य भ्रान्तिसिद्धस्य जडत्वादेर्निषेध एवकारार्थ इति उभयाकारसिद्धिः। विरोधात् तत्तत्पक्षनिर्धूननम्; उभयाविर्भावस्वीकारश्च सिद्धतत्त्वप्रकाशात् उभयस्यापि प्रमाणसितया तत्त्वस्य प्रकाशावश्यकत्वात्। उपात्ताविरोधादिति पाठ एव मूलचिन्तामण्युभयानुगुणः। आपाततो विरोधमानेऽपि उभयस्याप्यविरोधादित्यर्थः ॥ ५२८ ॥

(५२९) पर्यायौ नामपाठेष्वनुपरिपठितौ मुक्तिकैवल्यशब्दौ
कैवल्यश्चान्ययोगत्यजनमिति कथं धर्मिधर्मान्वयोऽस्य ।
मैवम्; ब्रह्मस्वरूपादपरमिह न खल्वस्ति किञ्चित् स्वनिष्ठं
न द्रव्यश्चागुणं स्यात्; अधिकरणयुगं तन्निरातङ्कमेतत् ॥ १२ ॥
इति ब्राह्माधिकरणम् ॥ १५३ ॥

अत्र पूर्वस्य चैतस्य चाधिकरणस्यार्थविरोधमाशङ्क्य विरोधगन्धोऽपि नास्तीति व्याचष्टे— पर्यायाविति । अयमत्र पूर्वपक्षिणो भावः—'मुक्तिः कैवल्यनिर्वाण' इत्यादिषु मोक्षकैवल्यशब्दौ पर्यायत्वेन पठितौ । तत्र कैवल्यशब्दो वस्त्वन्तराभावमेव प्रदर्शयति। तत् कथं ब्रह्मव्यतिरिक्तस्य जीवस्य अविभागेन दर्शनं पूर्वाधिकरणोक्तं सम्भवति । अस्मिश्चाधिकरणे अपहतपाप्मत्वादिगुणाष्टकवैशिष्ट्येन जीवे गुणगुणिभावेन भेदनिर्देशः कथं सङ्गच्छते । तेन कैवल्यस्येतराभावरूपस्य[स्यात् ?] धर्मिधर्मान्वयः कथं स्यात्—विशेषणविशेष्यान्वयः कथं स्यात्। उक्तं चोद्यं प्रतिक्षिपति—मैवमिति। अत्र कैवल्यशब्दार्थसङ्गावं विभज्य दर्शयति—ब्रह्मेति । पूर्वस्मिन् अधिकरणे ब्रह्मस्वरूपव्यतिरिक्तस्य स्वनिष्ठत्वं नास्तीत्युक्तम् । तदेव तस्य कैवल्यम् । अस्मिन्नधिकरणे, न किञ्चित् द्रव्यं गुण हीनमस्तीत्युच्यते । अत्रापि तदेव कैवल्यं निर्गुणत्वराहित्योपदेशात्। तेनोभयस्मिन्नधिकरणे विवक्षितार्थप्रतिपादनमस्तीति निरातङ्कमेवेत्याह—अधिकरणयुगमिति ॥ ५२९ ॥ इति ब्राह्माधिकरणम् ॥ १५३ ॥

१५४ ॥ अथ सङ्कल्पाधिकरणम् ॥ ४-४-४ ॥

सूत्रम्—सङ्कल्पादेव तच्छ्रुतेः ॥ अत एव चानन्याधिपतिः ॥ ८, ९ ॥

(५३०) धात्रादेरप्यपेक्ष्यो ह्युपकरणगणः सत्यसङ्कल्पवृत्तेः
मुक्तस्याप्येवमेवास्त्विति यदि, वितथं तत्, विकल्पासहत्वात् ।
इष्टा द्रव्याद्यपेक्षा; सुकृततदितरापेक्षणं तत्र (त्वत्र?) दुःस्थं
न स्यादिच्छाविघातस्त्वनु(तो निरु?)पधिकतया देववत्स्वैकरस्यात् ॥ १३ ॥

अत्र सङ्कतिभाष्ये, "मुक्तः परं ब्रह्मोपसम्पद्य ज्ञानस्वरूपोऽपहतपाप्मत्वादिसत्यसङ्कल्पत्वपर्यन्तगुणक आविर्भवती"त्युक्तम् । तमधिकृत्य तस्य सत्यसङ्कल्पत्वप्रयुक्ता व्यवहाराः श्रूयन्ते, 'स तत्र

१२. अधिकरणद्वयस्यैकपेटिकात्वं शंकापरिहारव्याजेनाऽऽह पर्यायाविति । कोशेषु मुक्तिशब्दकैवल्यशब्दौ पर्यायतया पठितौ । अतः कैवल्यमेव मुक्तिः कैवल्यं नाम केनापि योगस्याभावः । तथाच किञ्चिद्धर्मिसंबन्धः धर्मसंबन्धश्च नास्तीत्यर्थः । अयमेव स्वरूपाविर्भाव इति शंका । एतन्निरासार्थमिदमधिकरणद्वयम्-सर्वाधारभगवन्निष्ठत्वात् धर्मिसंबन्धस्यापन्नं पूर्वम्; गुणवत्त्वस्यैव द्रव्यलक्षणत्वात् धर्माणामन्वयोऽप्यनिषेध्य इति अत्राधिकरण उक्तम् । अत इदमधिकरणद्वयं निरातंकम्; कोशादिविरुद्धार्थबोधित्वात् विचार्यं भवतीति न । मुक्तिशब्दस्य यथा बन्धान्मुक्तिरित्यर्थः, तथा कैवल्यशब्दस्यापि बन्धराहित्यमेवार्थं इति भावः । एवमधिकरणत्रयेण स्वरूपाविर्भाव उपपादितः ॥ ५२९ ॥

१३. अथ तद्भूतिविषयं पेटिकान्तरम् । विज्ञानघन एवेत्यत्रायोगव्यवच्छेदः; न त्वन्ययोग व्यवच्छेदः । अतोऽपहतपाप्मत्वादिगुणानां न व्यवच्छेद इत्युक्तम् । तद्वत् संकल्प देवेति एवकारोऽपि

पर्येति जक्षत् क्रीडन् रममाणस्स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा' इति।'' तत्रायं विचारस्तु—किमस्य ज्ञात्यादिप्राप्तिः प्रयत्नान्तरसापेक्षा, उत सङ्कल्पमात्रमूला। किमस्य सत्यसङ्कल्पत्वं राजादीनामिव भवति, उत परमपुरुषस्येव। किं सङ्कल्पादेवेत्यवधारणं राजादितुल्यतां निवर्तयितुं प्रभवति, नेति। किमीश्वरसङ्कल्पवत् मुक्तात्मसङ्कल्पस्यामोघत्वं सम्भवति, नेति। किमस्य जक्षणादयो व्यापाराः पुण्यपापरूपतया बन्धका भवन्ति, नेति। अत्र मुक्तस्य सोपकरणस्यैव तत्तत्कार्यकरत्वं स्यात्। तथाचोपकरणापेक्षायां तस्य संसारित्वमेव स्यादित्याशङ्क्य परिहरति—धात्रादेरित्यादिना। अयमत्रान्वयः—सत्यसङ्कल्पस्यापि धात्रादेरप्युपकरणापेक्षा विद्यते। एवं मुक्तस्यापि कार्यकरणेषूपकरणगणापेक्षा स्यात्। तथाचासौ अमुक्तादविशिष्टः स्यादिति। तमिममाशङ्कितमर्थं विकल्पासहत्वेन दूषयति—वितथमिति। अत्रायं विकल्पः—किं द्रव्याद्यपेक्षामात्रमेव भवता सापेक्षत्वमुच्यते, किं वा पुण्यपापापेक्ष? न तावदाद्यः; सिद्धसाधनत्वादित्याह—इष्टेति। नाप्युत्तर इत्याह—मुक्तेति। पुण्यपापविनिर्मुक्तो हि मुक्तः; तस्य पुण्यपापापेक्षणमस्तीति वक्तुमेव न शक्यते। यथा न्यायविदां मते चेतनकर्तृत्वे कर्मापेक्षाऽस्ति; न पुनरीश्वरकर्तृत्वे—एवमत्रापि। मुक्तानां कर्तृत्वे कर्मापेक्षाऽस्तीति विरुद्धमेव॥ ईश्वरस्य त्वीश्वरत्वादेव कर्मापेक्षा नास्तीति चेत्—मुक्तस्यापि मुक्तत्वादेव तत् न स्यात्। द्वयोरप्यकर्मवश्यत्वेन प्रमाणसिद्धत्वादिति भावः। ननु कर्तृत्वान्मुक्तस्येच्छाविघातः कदाचित् स्यात्; न स्यात्—केन विघातः? किं कर्मणा, उतेश्वरेच्छया? न कर्मणेत्याह—अनुपधिकतयेति। कर्माधीनव्यापारवतामेव हि कर्मणा विघातसम्भवः। नापीश्वरेच्छया विघातः स्यादित्याशङ्क्याह—देवेति। मुक्ताः खलु, 'इमाँल्लोकान् कामान्नी कामरूप्यनुसञ्चरन्' इति भगवदनुवर्तकत्वेनैव श्रूयते। अतस्तस्य भगवदनुकूलयेच्छाविघातः शङ्कितुमपि न शक्यत इत्यर्थः॥ ५३०॥

(५३१) विश्वस्यैतस्य जन्मस्थितिलयरचना विश्वकर्तुर्यथा स्यात्
इच्छासन्तानमेदाभिधगिरिह तथा नित्यमुक्तक्रियाणाम्।

---

संकल्पायोगव्यवच्छेदमाह, न तु संकल्पेतरनिरपेक्षत्वम्। लोके हि कार्यं संकल्पं विनाऽपि प्राप्यते। तेन बह्वनिष्टमापद्यते। न हि सर्वः स्वशरीरं स्वार्थं संकल्प्य सृजति। मुक्तस्य तु—यदि स्वयं संकल्पयेत्, तदैव किमपि भवति। अतस्तस्यानिष्टलाभसिद्धिः। अन्ययोगव्यवच्छेदस्तु दुष्करः। लोके सत्या संकल्पाख्या वृत्तिर्यस्य तस्य धात्रादेरपि, ब्रह्मादेरपि, किमुत राजादेः, उपकरणानां बहुविधानां गणः अपेक्ष्यो लक्ष्यते। एवमेव मुक्तस्यापि अस्तु=स्यादिति। पक्षमिमम् इति यदीत्यनूद्य परिहरति वितथं तदिति। इदं न यथावत्, विकल्पासहत्वात्। एवं वा तथा वेति विकल्पे कुत्रापि त्वदुक्तस्यास्मदनभिमतसाधकतया स्थित्यभावात्। अत्रान्ययोगव्यवच्छेदो नाम संकल्पातिरिक्तस्वप्रयत्नानपेक्षत्वम्। न तु कार्योपादानादिभूतद्रव्यानपेक्षत्वम्। अतस्तदपेक्षत्वस्येष्टत्वात् तदुक्तौ सिद्धसाधनम्। लोकवत् पुण्यपापरूपोपकरणापेक्षा न साधयितुं शक्यते, अपहतपाप्मत्वात्। तदपेक्षत्वे हि तदभावप्रयुक्तः संकल्पविघातः स्यात्। सत्यपदेन च संकल्पस्याविघातो विवक्षितः। अतः शारीरव्यापार-प्रतिबन्धाभावापेक्षा नास्तीति अन्ययोगव्यवच्छेदेन प्राप्यते। अनुपधिकतया—इच्छायाः कर्माधीनत्वाभावात्, देवस्य ईश्वरस्य या वाञ्छा तदेकरस्यात्=तदनुरोधित्वात् तदेकविषयकत्वात् तत्संकल्पस्यैवैतत्संकल्पस्यापि नोपाधि॥ न वा देवेन विघात इति॥५३०

तस्यानुच्छेदवृत्त्या प्रतिकलभिदुरास्ताश्च तादृक्प्रवाहाः

तद्बुद्धेरापरोक्ष्यं त्वनिशमभिदुरं वर्तते ब्रह्म(नाथ)धीवत् ॥ १४ ॥

मुक्तस्य सर्ववस्तुसाक्षात्कारे सकलकार्यकरणे चेश्वरमेव दृष्टान्तयित्वा दुर्बलबुद्धीन् प्रत्याययति—विश्वस्येति । अयमत्रान्वयः—एतस्य विश्वस्य जन्मस्थितिलयरचना विश्वकर्तुरीश्वरस्य यथा स्यात्, एवमिच्छासन्तानमेवाश्रित्यमुक्तक्रियाणामपि नियतिः स्यात् । नन्विच्छासन्तानस्य कार्यत्वेन उच्छेदः स्यात्; यथा प्रदीपार्चिस्सन्तानस्य । तथा च, 'जक्षत् क्रीडन् रममाणः' इत्याद्युक्तो मुक्तक्रिया सन्तानोऽप्युच्छिद्येतेत्याशङ्क्य परिहरति—तस्येति । इच्छासन्तानस्यानुच्छेदो हि, 'न च पुनरावर्तते' इत्यादिश्रुतिसिद्धत्वादपलपितुमेव न शक्यते । अन्यथा पूर्वावधिमत उत्तरावध्यवश्यम्भावकथने तद्वदेवोत्तरावधिमतः कर्मसन्तानस्य पूर्वावधिरपि स्यात् । तथाच संसारस्यानादित्वमेव न सिध्यति ॥ प्रमाणसिद्धत्वात् तत् परित्यक्तुं न शक्यत इति चेत्—तर्ह्यपवर्गस्यापि निरतिशयानन्दानुभवसन्तानरूपस्योत्तरावधिसाहित्यमत्यन्तप्रमाणविरुद्धत्वात् वक्तुमेव न शक्यत इति समः समाधिः । ननु किं मुक्तबुद्धेः पारोक्ष्यम्, आपरोक्ष्यं वा? पारोक्ष्ये बन्ध एव स्यात् । आपरोक्ष्यमपि न घटते । इन्द्रियजन्यज्ञानस्य ह्यापरोक्ष्यम् । मुक्तस्य तु शरीरेन्द्रियादिकं न विद्यते । विद्यते चेत्—तन्मूलभूतं कर्मापि स्यात् । तथाच पुनस्संसार एव स्यात् । तथा च मुक्तज्ञानस्यापरोक्ष्यमपि न सम्भवतीत्यत्राह(त्याशङ्क्याह)—तद्बुद्धेरित्यादि । यथा खल्वीश्वरबुद्धेरापरोक्ष्यम्, तद्वज्जीवबुद्धेरप्यापरोक्ष्यं स्वतः प्राप्तम् । तदेतावन्तं कालं कर्मणा सङ्कुचितम् । अधुना प्रतिबन्धके निवृत्ते स्वाभाविकं स्यादिति (स्वाभाविकत्वात् स्वयमेवाविर्भवतीति मुक्तज्ञानापरोक्ष्यसिद्धिरिति) ॥ ५३१ ॥

(५३२) प्रत्यूहार्हाः प्रदेशप्रभृतिसुकृतिनः सत्यसङ्कल्पभावे

मर्त्यारम्भस्पृहादौ तदितरविविधप्राणिसृष्ट्यादिदृष्टेः ।

तेनेच्छासन्ततीनां सफलविफलते पुण्यपापैरमीषां

मुक्तस्योक्ता चिकीर्षा त्वविहतविषया तारतम्यं न दोषः ॥ १५ ॥

अत्र सत्यसङ्कल्पत्वे सत्यपि प्रबलप्रतिघातकसद्भावे लोके प्रतिहतिर्दृश्यते, एवं मुक्तेऽपि प्रबलप्रतिघातकसद्भावात् प्रतिहतिः स्यादित्याशङ्क्य प्रतिघातकत्वं पुण्यपापयोरेव; तयोस्तस्मिन्न·

---

१४. ननु पुण्यपापरूपकर्माभावे मुक्तौ सर्वेषामेकरूपैव प्रवृत्तिः स्यात्; वैषम्ये नियामकाभावः। यदा यस्य यद्विषयज्ञानं तदा स तत्र व्याप्रियत इति चेत्—ज्ञानन्यूनता भोगन्यूनता च दोषः । तत्रेश्वरं दृष्टान्तीकृत्य प्रत्याह विश्वस्येति । ईश्वरः कदाचित् जनिम्, कदाचित् स्थितिं कदाचित् संहारञ्च रचयति । विषमविपाकसमयानां कर्मणां कोटिशः सद्भावेऽपि एतावन्तं कालं प्रलयोऽनुवर्तताम्, अथ सृष्टिरिति हि केवलं तदिच्छामात्रात् । तद्वदेव नित्येषु मुक्तेष्वपि विषये स एव अयमयमिदमिदं करोत्विति संकल्पयते । तदेकरस्यात् इमेऽपि तथैव वाञ्छन्ति । तत्रोत्तरोत्तरकार्ये पूर्वपूर्वेच्छा कारणम् । तत्र तत्पूर्वकृतिरेव कारणमिति यथादर्शनं ग्राह्यम् । न च संतानत्वमात्रेण लोकवदस्याप्युच्छेदप्रसक्तिः इच्छासन्तानस्यानुच्छेदेन वर्तमानत्वात् क्रियाश्च तदनुरूपप्रवाहा भिद्यन्ते । ज्ञानलोपस्तु कदापि नेष्यते; ब्रह्मज्ञानवत् भूतभवद्भविष्यत्सर्वविषयकम् । स्वाभाविकत्वाच्चापरोक्ष्यमिति ॥ ५३१ ॥

१५. संकल्पे सत्यतां विशदयति प्रत्यूहेति । प्रजेशः प्रजापतिः चतुर्मुखः. तदादीनां

भावात् प्रतिहतिशङ्कैव न स्यात्। अस्ति किञ्चित् (कदाचित्) व्यापारतारतम्यं मुक्तानाम्। तदस्तु नाम। तावता न भोगसाम्यं बाध्यते। सर्वेषामपि मुक्तानां प्रतिबन्धकाभावेनाप्यकुण्ठज्ञानत्वादिति दर्शयति-प्रत्यूहार्हा इति। शब्दान्वयस्तु-सत्य इत्यत्वे सत्यपि प्रादेशिकसुकृतिनः कालविशेषसुकृतिनोऽपि प्रत्यूहार्हाः। अन्यदुपक्रान्तमन्यदापतितमिति न्यायेन अन्याभिप्रायेण प्रवृत्तानां पुरुषाणां अन्यदेव जायत इति दर्शयति—मर्त्या इत्यत्र इति। मर्त्य = पुत्रादिः। पुत्र द्यारम्भस्पृहया कर्मानुष्ठाने कर्मकर्तृसाधनवैगुण्यादिना शत्रुणामेवाऽऽरम्भदर्शनादित्यर्थः। अथवा मर्त्यस्यारम्भस्पृहादौ भद्विराधिविविधप्राणिसृष्ट्यादिदृष्टेरित्यन्वयः। अन्यचिन्तायामन्यारम्भे नियामकमूलाभावात् कथमैरर्थक्यमेव स्यादित्याशङ्क्य नियामकमेव दर्शयति-तेनेति। अमीषां = संसारिणां जीवानां प्रवृत्तीनां साफल्यं वैफल्यं विपरीतफलञ्च प्राचीनपुण्यपापाभ्यामेव भवति। मुक्तस्य तु पुण्यपापौ न स्तः। तस्य चिकीर्षा नियतमेव सफलेति श्रुतिरपि कथयति। ईश्वरस्तु तदिच्छामेवानुचिकीर्षप्रवृत्तिमातनोति इत्याह—मुक्तस्येति। ननु मुक्तस्येच्छाविघाताभावेऽपि व्यापारतारतम्यमस्त्येव; तेन भोगतारतम्यमपि स्यादित्याशङ्क्य परिहरति – तारतम्यमिति। न हि व्यापारतारतम्यमेवापवर्गे दोषः। यदि भोगतारतम्यमस्ति, तदा हि दोषः स्यात्। नहि नटवृन्दे नटस्यैव सन्तोषमातनोति, अपि तु तद्दर्शिनामन्येषामपि। एवं सर्वेषामपि मुक्तानां भगवदनुसरणादिव्यापारः साधारण्येन सन्तोषकारणमिति भोगसाम्यं सिध्यत्येव। राजकुलेषु वर्तमानाः खलु प्रत्येकं स्वाधिकारानुरूपेण व्यापारेण राजानं सेवन्ते, सन्तोषस्तु सर्वेषां साधारण इति करतलामलकमेतत्कैङ्कर्यवृत्तान्तः ॥ ५३२ ॥

(५३३) सूत्रे मुक्तोऽस्यनन्याधिपतिरिति भगवदतस्तन्त्रत्वस्य शेषी
श्रुत्यैवोक्तः स्वराडित्य च; विहितरतः प्राकृतानाधिपतानाम्।
मैवम्; नाथेतरान् प्रत्यधिपतिहि इह क्षिप्यते शेषभावो
विश्वस्यात्मेश्वरो यः पतिरिति पठितस्तत्पतित्वं त्वबाध्यम् ॥ १६ ॥

इति सङ्कल्पाधिकरणम् ॥ १५४ ॥

अत्र कश्चिच्चोदयति—सूत्र इति। 'सङ्कल्पादेव तच्छ्रुतेः', 'अत एव चानन्याधिपतिः' इति

---

सुकृतिनामपि सत्यसंकल्पत्वं विमर्शार्हम्। स हि सुकृतसनकरुद्रादिसृष्टिमवेक्ष्य स्वयमेव विषसाद हेतुं विशदमाह मर्त्येति। अत्र विवक्षितास्पर्शि व्याख्यानमनादेयम्। ऐतरेयोपनिषदि श्रूयते-प्रजापतिना सर्वेन्द्रियदेवतासु सृष्टासु, "ता एनमब्रुवन्, 'आयतनं(शरीरं) नः प्रजानीहि, यस्मिन् प्रतिष्ठिता अन्नमदाम' इति। ताभ्यो गामानयत्। ता अब्रुवन्। न वै नोऽयमलम् इति। ताभ्योऽश्वमानयत्....नालमिति। ताभ्यः पुरुषमानयत्। ता अब्रुवन् सुकृतं बतेति" इत्यादि। अत्र मर्त्यशब्दः तत्रैव पूर्वम्, पुरुषेत्वेवाऽऽविस्तरामात्मा। स हि प्रज्ञानेन संपन्नः....मर्त्येनामृतमीप्सति' इति वाक्यप्रत्यभिज्ञापक इति द्रष्टव्यम्। तस्मात् उत्कृष्टसमर्थशरीरबुद्ध्या निकृष्टस्यापि गवादेः प्रजेशसृष्टायाः दृष्टेः वेदे दर्शनात् तस्य पुण्यपापोभयवशत्वात् इच्छा कदाचित् सफला, जातु निष्फला। नैवं मुक्तस्य। यस्तत्र मुक्तानां कार्येषु भेदः, स तत्तदिच्छायत्तः। न त्वन्यत्राशक्त्या ॥ ५३२ ॥

१६. ननु, 'न स्यादिच्छाविघातस्त्वनुपधिकतया' इत्युक्तं युक्तम्; देवताम्छेकरस्यादिरुक्तं तु न घटते ननूक्तं शेषत्वादिकमविवाह्यमिति प्रागेवेति चेत्—तत्र अविभागेनेत्येतदर्थं.

सूत्रद्वये मुक्तोऽनन्याधिपतिः कथितः। तेन तस्य शेषी न स्यात्। किञ्च, 'स स्वराड्भवति' इति श्रुत्यैव मुक्तः स्वतन्त्रत्वेनोक्तः। अतः पूर्वप्रतिष्ठापितानां परमपुरुषशेषत्वपारतन्त्र्यादीनां सर्वेषामप्यर्थानां विहतिः स्यात्। अत्रोत्तरम्—नैवमिति। प्रतिक्षेपप्रकारमाह—न.थेति। अस्मिन्नधिकरणे भगवद्व्यतिरिक्तान् प्रति पापकृतः शेषभावो जीवस्य प्रतिक्षिप्यते ; तथैव तत्पारतन्त्र्यमपि। 'पतिं विश्वस्यात्मेश्वरम्' इति यः पठितो विश्वस्य पतिः तस्य पतित्वं बाध्यमेव न भवति। अतो मुक्तस्य भगवच्छेषत्वपारतन्त्र्ययोर्न कोऽपि विरोध इति ॥ ५३३ ॥ इति सङ्कल्पाधिकरणम् ॥ १५४ ॥

## १५५ ॥ अथ अभावाधिकरणम् ॥ ४-४-५ ॥

सूत्रम्—अभावं बादरिराह ह्येवम् ॥ भावं जैमिनिर्विकल्पामननात् ॥ द्वादशाहवदुभयविधं बादरायणोऽतः ॥ तन्वभावे सन्ध्यवदुपपत्तेः ॥ भावे जाग्रद्वत् ॥ प्रदीपवदावेशस्तथा हि दर्शयति ॥ स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १०–१६ ॥

(५३४) मुक्तः प्रोक्तोऽशरीरः क्वचिदथ बहुत्रासंभवः क्वाप्यधीतो
गानक्रीडादि चोक्तं ; तदनुगुणमतद्द्वन्द्वमार्षं निरस्यन् ।
स्वच्छन्दस्योभयं तत् क्षममिति वदति स्वं मतं सूत्रकारः
साक्षात्कर्मोद्भव तन्निखिलमपि परब्रह्मवत् तत्समस्य ॥ १७ ॥

अत्र भाष्ये रूक्षातः—'किं मुक्तस्य देहेन्द्रियाणि न सन्ति, उत सन्ति, अथवा यथासङ्कल्पं

---

सूत्रकृद्दिष्टः क इति पुनर्विचार्यम्। अत्राधिकरणे ह, अत एव चानन्याधिपतिरिति मुक्तं प्रति अधिपतिर्नास्तीत्याह। अयञ्च शब्दः, 'स स्वराड् भवति' इति श्रुतस्य स्वराडित्यस्य व्याख्यारूपः। स्वराट् स्वमात्राधिपतिकः स्वभिन्नाधिपतिरहित इति। एवञ्च, 'मुक्तोपसृप्यव्यपदेशाच्च', 'अनुकृतेस्तस्य च,' 'अविभागेन' इत्यादीनां स्वराट्त्वविरोधेनैवार्थो वर्णनीय इति शंकते सूत्र इति। निरस्यति नैवमिति। कथमेकेनापरेण सर्वपूर्वबाधः ? ननु पूर्वमस्य संकल्पप्रतिघात आसीत्, इदानीं स न भवतीति कथम्। दशाद्वयेऽपि परमात्मपारतन्त्र्यस्य अविशिष्टत्वात् ; संसारदशायामपि तथैव हि प्रतिघात इति शंकाया मिदं सूत्रं प्रवृत्तं नेश्वरनिषेधपरम्। अतः श्रुतौ, "येऽन्यराजानो भवन्ति ते क्षय्यलोका भवन्ति" इति अन्यपदम् अत्र सूत्रे अन्यपदञ्च समानार्थकम्। परमात्मपारतन्त्र्यस्य सर्वप्रकारेणानुकूलत्वात्त तेनेच्छाविघातः। अन्यस्याप्यधिपतित्व एव सः। तदधिपतित्वं तत्र कर्मणामासीत्। अन्येत्यस्य स्वान्येति नार्थः। किन्तु प्रकृतपरमात्मान्येति। सर्वथैवाधिपतिराहित्यविवक्षायां अनधिपतिरित्येवासूत्रयिष्यत्। स्वभावसिद्धाधिपतिभिन्नाधिपत्यभावाच्च हानिरित्येवार्थः। तमाह नाथेनरानित्यादिना। पापाधीनः स्वनाथनारायणेतरब्रह्मशिवादिदेव-तदन्यशेषभावः संसारे स्थितः। तदा सर्वं परवशं दुःखमासीत्। तथाच बाधकेच्छाशालिनः कस्यचिदधिपतेरभावात् सत्यसंकल्प इति। तथापि नारायणाधीनस्यास्य स यदधीन स्तदधीनत्वमवर्जनीयमिति न शंक्यम्। तस्य किञ्चिदधीनत्वाभावात्। श्रूयते हि, आत्मेश्वर मिति। स्वस्य स्वयमेवेश्वरः पतिरिति हि तदर्थः। आत्मनामीश्वरमित्युक्तावपीष्टसिद्धिरेव। अतो विश्वान्तर्गतोऽयं मुक्तोऽपीति एवं सत्यपि तस्य पतित्वमबाध्यम् ॥ ५३३ ॥

१७. संकल्पादेवेति सूत्रेण 'संकल्पादेवास्य पितरस्समुत्तिष्ठन्ति' इत्यादिश्रुतिग्रहणेण मुक्तस्य म ना-

सन्ति न सन्ति, चेति विशये(चिन्त्यते)' इति। तदर्थविचारस्तु—'किं मुक्तस्य' इत्यादिः प्रथमविचारः। तदर्थं विचार्यते—'स एकधा भवति' इत्यादिश्रुतिः शरीरत्वश्रुतिं सङ्कोचयितुं शक्नोति, नेति। किं, 'स एकधा भवति' इत्यादिवाक्यं मुक्तस्य सशरीरत्वं प्रतिपादयितुं प्रभवति, उत न। प्रतिपादनेऽपि किं सशरीरत्वमात्रं प्रतिपादयति उतैतच्छरीरत्वमवगमयतीति। तदर्थमेकधाभवनत्रिधाभवनादिकं मुक्तस्य शरीरेण विना सम्भवति उत न। अत्र बादरिजैमिनिमताभ्यां पूर्वपक्षमनुवदति—मुक्त इति। 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इति क्वचिद्वाक्ये मुक्तोऽशरीरत्वेन प्राकृतः। अथ तस्यैव मुक्तस्य, 'स एकधा भवति त्रिधा भवति' इत्यादिवाक्ये बहुधाभवनञ्च श्रूयते। क्वचित्पुनः शरीरेन्द्रियसाध्यं गानक्रीडादि(कर्मापि) च, 'एतत् साम गायन्' इत्यादिवाक्ये प्रतिपाद्यते। तत्तद्वाक्यानुगुणमार्षं मतद्वन्द्वं निरस्यन् बादरिमतमशरीरत्वनियमं जैमिनिमतं सशरीरत्वनियमञ्च निरस्यन् सूत्रकारः स्वमतं यथावद्दर्शयतीत्याह—स्वच्छन्दस्येति। यथेष्टं सशरीरत्वमशरीरत्वञ्चोभयमपि तुल्यम्। अयमभिप्रायः—असङ्कुचितब्रह्मानुभवरूपे पुरुषार्थे न शरीरापेक्षा; सर्वदेशसर्वकालसर्वावस्थोचितभगवत्कैङ्कर्ये पुनः, 'इमांल्लोकान्', 'जक्षत् क्रीडन् रममाण' इत्यादिश्रुत्युक्ते शरीरापेक्षेति। ननु सशरीरत्वमभ्युपगतञ्चेत्—'न ह वै सशरीरस्य सतः' इत्युक्तप्रियाप्रियसंयुक्तत्वमपि स्यादिति पुनरावर्तेत संसार इत्याशङ्क्याह—स्यादिति। अयमर्थः—यदि सशरीरत्वमात्रं संसारः, तर्हीश्वरस्यापि संसारः स्यात्। अपितु कर्माधीनशरीरत्वं संसारः। ईश्वर-

---

पित्रादिसम्बन्धोक्तिर्न घटते। न ह्ययं शुद्धात्मा सन्, 'पिता मे भवतु'इति कामयते। कामयते चेत्, पिता भवतीत्यर्थोऽप्यस्याः श्रुतेर्न वर्णयितुं न शक्यते। एतत्संकल्पजातस्य तस्य एतदनुत्पादकत्वे पितृत्वायोगात्। अस्य चाशरीरतयाऽनुत्पाद्यत्वात्। न च स्वयमेव संकल्पमात्रात् जनितुमर्हस्य तत्र पित्राद्यपेक्षा। न च कामनायां सत्यां पूर्वमतीता अस्य मातापित्रादयः समुत्तिष्ठन्तीति युक्तम्; तेषां परमपदारोहणायोगात्। मुक्तभविष्यत्त्वदर्शिनस्तद्दर्शनापेक्षाविरहाच्च। तेषां स्वकर्मफलभोगव्याप्तत्वाच्च। अतः इह वाक्ये अस्य संकल्पादित्यन्वयः। अस्य संकल्पवशात् प्रकृतिमण्डले संसारिणां केषांचित् केचित् पितरः समुत्तिष्ठन्तीत्यादरीत्या नेयम्। तस्मान् मुक्तोऽशरीरः इति बादरिशंकायामुपरितनमधिकरणम् तदर्थमाह मुक्त इति। 'अशरीरं वाव सन्तं न प्रिया प्रिये स्पृशतः' इति मुक्तत्वमशरीरत्वमित्युक्तम्। सशरीरत्वे पुण्यपापहतिः स्यादेव। 'अस्य पितरस्समुत्तिष्ठन्ति' इत्यादेः पित्रादिकामानार्थं प्रकृतिमण्डले कांश्चिच्चेतनान् मातापित्रादिरूपेण रोचयमानः तत्र तत्र निकाये जनिं लभत इति सिद्धान्त्यभिमतेऽर्थे तन्मातापित्रादिवत् तत्रास्यापि कर्मवश्यत्वमेव स्यादिति भावः। पक्षमिमं व्युदस्यतो जैमिनेः पक्षमाह अथेति। 'स एकधा भवति त्रिधा पञ्चधा सप्तधा सहस्रधा' इति मुक्तस्याणोर्बहुविधत्वमुक्तम्। इदमनेकशरीरप्रतिपत्त्यैव निर्वाह्यम् मुक्तमेव कर्तृतया निर्दिश्य, 'साम गायन् आस्ते', 'कामान्नी कामरूपी अनुसञ्चरन्', 'जक्षत् क्रीडन् रममाणः' इत्यादिकं श्रूयमाणं नान्यथयितुं शक्यम्। तदनुगुणो[illegible]। एवं तच्छ्रुत्यनुगुणयोर्मतयोर्द्वन्द्वम् आर्षम् बादरिजैमिनिमहर्षिभ्यामुक्तं बादरायणो निरस्यति। कथं भावाभावपक्षद्वयनिरास इति चेत्—एकतरावधारणं तदिह निरस्यते; दशामेदेनोभयमिष्यत इत्याह स्वच्छन्दस्येति। सृष्टप्रलययोरिव कर्मपरिप्रकृतदभावरूपनियामकाभावेऽपि, मुक्तस्य स्वच्छन्दः इच्छैव नियामिकेति भावः। यदुक्तं बादरिणा, शरीरमस्ति चेत्, कर्मवश्यत्वमवश्यमेवेति, तत्रेत्याह

धन्मुक्तस्यापि स्वच्छन्दस्य सङ्कल्पमात्राधीनशरीरत्वेऽपि संसारगन्धानवकाश इति रमणीयमेतत् ॥

(५३५) मोक्षे पुण्याद्यभावात् तदुपधिकवपुर्वर्जितत्वं न दूष्यं
तस्मिन् दुःखार्हदेहत्यजि च शुभवपुस्सत्त्वपक्षोऽप्यबाध्यः ।
इत्थं सत्यत्र मुक्तस्थितिरिह मुनिना कीदृशी सूत्रिता स्यात् ?
नैमैवं स्वच्छन्ददेहग्रहतदनियमस्थापनेऽत्राभिसन्धेः ॥ १८ ॥

ननु बादरिपक्षोऽपि स्वाभिमत एव, तथा जैमिनिपक्षोऽपि एवञ्च सति सूत्रकारेण तत्पक्षप्रतिक्षेपेण स्वपक्षतया कोऽयं पक्षः स्थापित इति चोदनायां शिष्यप्रतिबोधनार्थं स्वपक्षं पुनरपि विशिष्य दर्शयति—मोक्ष इति । अयमत्र शब्दान्वयः—मोक्षे पुण्याद्यभावात् तदुपधिकवपुर्वर्जितत्वं बादरिणा कथितं न दूष्यम्, तद्वत् दुःखार्हदेहरहिते तस्मिन् मुक्ते जैमिनिनोक्तः शुभशरीरवत्त्वपक्षोऽपि न बाधनीय एव । इत्थं सत्यत्र मुनिना बादरायणेन कीदृशी मुक्तस्य स्थितिस्सूत्रिता

स्यादिति तत्समस्य—नेन परब्रह्मणा निरञ्जनत्वाख्य कारेण तुल्यस्य मुक्तस्य ॥ ५३४ ॥

१८. ननु शरीरमस्य न भवति, तस्य कर्माधीनत्वात सुखदुःखोत्पादकत्वाच्चेति बादर्युक्ते, अन्यथा संकल्पश्रुत्या शरीरमस्तीति वदति चेत् जैमिनिः, कमङ्गीकरोतीति स्यात् । यद्यर्थं, 'कर्म नास्त्येव ; तदधीनशरीराभावेऽपि तदनधीनं शुद्धं शरीरमस्त्येवेति जैमिनिरप्यर्थं वर्णनीयम् । एवञ्च प्रथमसूत्रं कर्माधीनशरीराभाव एव पर्यवसितम् । ईदृशाशरीरत्वमशरीरत्वयोरविरोधश्च सिद्धः । एवंसति तृतीयसूत्रेण बादरायणेन किमधिकं कथ्यते । तथा च तथा ब्रह्मरूपाविर्भावपक्षस्य चित्स्वरूपाविर्भावस्य चाविरोधः प्रागुक्तः, तद्वदेवेहापि स्थितिरिति तन्न्यायत एव सिद्धौ सूत्राणि व्यर्थानि तृतीयसूत्रं वा पूर्ववदित्येव प्रयोक्तव्यमिति पृच्छति मोक्षे इति । अत्रोत्तरसूत्रद्वयवैयर्थ्यमपि प्रश्नाङ्गीकृतम् । निरस्यति नैवमिति । तद्वदत्रोभयांशाविरोधोऽर्थ इह न । न हि बादरिः कर्मकृतशरीरं नास्तीति प्रतिजज्ञे । तथासति सिद्धसाधनप्रसंगात् । शरीरसामान्यं नास्तीत्येव तत्प्रतिज्ञा तत्र हेतुर्दुष्टः, श्रुत्या बाधश्चेति जैमिनिराह । सार्वकालिकशरीरवत्त्वं जैमिनीष्टम् । उभयमपि न ; शरीरस्यात्यन्ताभावोऽपि नेष्यते, सार्वदिकत्वमपि नेति बादरायणः । अत एव सूत्रे उभयमित्यनुक्त्वा उभयविधमित्युक्तिः । भावसार्वदिकत्वाभावयोर्द्वयोर्दर्शनरूपपक्षद्वयस्य यौगपद्यञ्च शक्यमिति पूर्वतोऽत्र विशेषः । यथा द्वादशाहे सत्रत्वाहीनत्वयोर्न साहित्यम् । तथा तत्पक्षयोरपि । तत्रैकव्यक्तिवृत्तित्वरूपसाहित्यं नास्ति, अत एककालिकत्वरूपं तत्र भवति । अत स्वच्छन्ददेहग्रहणविरहयोः' इति वा..............ग्रहणतदभावत इति वा वक्तव्ये, ग्रहानियमेत्यन्यनुवत्त्वाऽन्यथोक्तिः, 'तन्वभावे संध्यवदुपपत्ते', भावे जाग्रद्वत्' इति उत्तरसूत्रद्वयार्थग्रहाय । तत्र तन्वभावे इत्यस्य सर्वात्मना देहाभावे इति नार्थः । दृष्टान्तानन्वयात् । पूर्वसूत्र एव सिद्धया सूत्रवैयर्थ्याच्च । अतः स्वसंकल्पसृष्टतन्वभावे इत्यर्थः । अत्र सूत्रे पञ्चम्यन्तनिर्देशात् पूर्वसूत्रार्थोपपादकत्वमस्य वक्तव्यम् । अयमत्र भावः— पूर्वाधिकरणे संकल्पमात्रकृतं पित्रादिमत्त्वमित्युक्तत्वया तादृश एव देहः सिद्धः । बादरिस्तु देहसामान्ये दोषबुद्ध्या तत्सामान्याभावमाशशंके । जैमिनिस्तत्सद्भाव

स्यादिति । अथोत्तरमाह—नैवमिति । स्वाभिप्रेतमाविष्करोति—स्वच्छन्देति । स्वच्छन्दं देहोऽस्तीति वचनात् देहसम्बन्धो नास्तीति वदन् बादरिपक्षो निरस्तः । तस्य च देहस्य अनियमस्थापनात् नियमेन देहो(देहसंबन्धो)ऽस्तीति वदन् जैमिनिपक्षोऽपि(जैमिनिरपि) निरस्तः । तेन भगवत्संकल्पमूलस्वसंकल्पादेव यथायोगं शरीरी चाशरीरी च भवति मुक्त इति तु सिद्धान्तः ॥५३५

(५३६) नाना देहा यदि स्युर्युगपदधिगतब्रह्मसाम्यस्य पुंसः

तेषां व्याप्तस्वरूपान्वय उचित इति प्राक्तनाणुत्वहानम् ।

नैतत् धीव्याप्तिसिद्धेः ; भवति च जगदावेशवाक् तन्निदाना

सौभर्यादौ प्रक्लृप्तां गतिमपवदितुं न क्षमं ब्रह्मसाम्यम् ॥ १९ ॥

अत्र कश्चिच्चोदयति—नानेति । जीवस्तावत् अणुरिति प्रसिद्धम् । अत्र पुनः, अधिगतब्रह्मसाम्यस्य तस्य(जीवस्य) युगपदेव नाना देहा भवन्तीत्युच्यते । यद्येवम्, तर्हि तेषां देहानां देशभेदेनोत्पन्नानां व्याप्तपरब्रह्मस्वरूपान्वय एव समुचितः ; न पुनरणुरूपजीवस्वरूपान्वयः । तेन जीवाणुत्ववादो मुक्तिदशायां त्यज्येत । यदि तस्य (तत्) विभुत्वं जीवस्य, तर्हि जीवेश्वरविभागो न स्यात् । अणुत्वगतिमान् जीवः, ईशो ऽन्य इति भवतां सिद्धान्तः । तदेतत् दूषयति नैतदिति । अत्र(तत्र) हेतुमाह—धीव्याप्तिसिद्धेरिति । स्वरूपव्याप्त्यभावेऽपि जीवस्य मुक्तिदशायां धर्मभूतज्ञानव्याप्तिसिद्धेरित्यर्थः । अयमर्थः, 'प्रदीपवदावेशः' इति सूत्रकारेण व्यक्तमुक्त इत्याह—भवति चेति । अयमर्थः—जीवस्याणुत्वेऽपि, 'स चाऽऽनन्त्याय कल्पते', 'स एकधा भवति' इत्यादिजगदावेशवाक् धर्मभूतज्ञानव्याप्तिनिबन्धनेत्यर्थः । ननु जीवस्य मुक्तिदशायाम्, 'परमं साम्यमुपैति' इति वचनात् विभुत्वमेवाङ्गीकृत्य अनेकशरीरपरिग्रहः(अनेक निः?) किं न स्यादित्याशङ्कयाह—सौभर्यादावित्यादि । अयमर्थः—

---

मेऽप्यऽऽतर्थे । तेन स्वपरसंकल्पनिबन्धनदेहादर्शनादिकमिति सिद्ध्यति । पक्षद्वयपरासको बादरायणस्तु स्वसंकल्पकृततन्वभावे तदभाव एवेष्टोऽस्माकमिति न मन्तव्यम् । स्वसंकल्पाभावेऽपि परमात्मसंकल्पादपि देहोपपत्तेः तस्यापि संभवत भोगहेतुत्वादिति तेन प्रकारेणापि शरीरात्यन्ताभावपक्षनिरासः एवमस्माभिस्तनुस्वीकारात् तनुमत्त्वे स्वसंकल्पकृततनुरेवेति जैमिनिस्वरसाशयोऽपि न ; स्वसंकल्पत इव तदभावेऽपि परमात्मसंकल्पकृततनुमत्त्वस्याप्युपपत्तेः । एवं च देहभावाभाववत् देहस्य स्वच्छन्ददेहग्रहानियमस्यापीष्टया उभयथा पक्षद्वयपरास इति एतेन, 'उपरतनसूत्रद्वयमप्रसक्तार्थवचनरूपम्' इति मतिरपि निरस्ता । एवं भाष्यार्थनिर्वाह इत्यनेन पदे । कुतो भजनीयत्वमेयम् । जाग्रद्वत् इत्यनेन जाग्रच्छरीरं सर्वं तदात्मभूतजीवसंकल्पकृतमित्येव विवक्षितमिति न मन्तव्यम्—परसंकल्पैककृतस्यापि सत्त्वात् । प्रकृते स्वसंकल्पसापेक्षजाग्रच्छरीरं दृष्टान्त इत्येतावता नान्यनिषेधः । एवमंशत्रयस्य सूत्रत्रयेण कथनात् कीदृशी सूक्तिरेति क्षेपो न युक्त इति ॥ ५३५ ॥

१९. सूत्रपञ्चकार्थम् दर्शितत्वात यथास्थानं प्रदीपवदिति सूत्रार्थमाह नानेति । तेषां देहानां जीवस्वरूप स्वरूपाऽऽदरकृतत्वात् जीवस्य व्याप्तिस्वीकार एव व्याप्तस्वरूपेणान्वयः स्यात् । अतो बन्धदशायाम् अणुत्वम्, मुक्तौ विभुत्वमिति स्वीकार्यमिति । निरस्यति नैतदिति । धर्मभूतज्ञानव्याप्तिस्वाङ्गीकारात् । अन्यथा सर्वथा सर्वं त्यक्षानुपपत्तेः । अणुत्वावस्थायामेव च बद्धैः सौभर्यादिभिः

सौभर्यादौ तावत् विभुत्वमन्तरेण धर्मभूतज्ञानव्याप्त्यैव नानाशरीरपरिग्रहः क्लृप्त एव। एवञ्च मुक्तस्यापि विभुत्वं परिकल्प्य नानाशरीरपरिग्रहवर्णनात् वरं क्लृप्तेनैव सौभर्यादिन्यायेन ज्ञानव्याप्त्या नानाशरीरपरिग्रहवर्णनमेव। क्लृप्तकल्प्यविरोधे तु क्लृप्तपरिग्रह एव न्याय्य इति हि नीतिविदां निर्णयः। परमसाम्यं तु भोगमात्र एवेति सूत्रकारैरेव निरणायि, 'भोगमात्रसाम्यलिङ्गाच्च' इति; न पुनः स्वरूपसाम्यम्। तेन व्यवस्थितमेव जीवेश्वरलक्षणकथनमिति ॥ ५३६ ॥

(५३७) देहानां यौगपद्ये बहुषु कथमणुर्धारकोऽस्त्वेष मुक्तः;
चैतन्यद्वारतश्चेत्, सकलमपि सदा धारयेत् व्याप्तबोधः।
मैवं; मुक्तस्य शक्तिर्नियमितविषया त्विच्छया सर्वशक्तेः;
प्राक् तादृग्योगशक्त्या बहुतनुभजने कर्मबन्धोऽप्यपेक्ष्यः ॥ २० ॥

अणोर्जीवस्य पुनरनेकशरीरपरिग्रहानुपपत्तिमभिधाय समाधत्ते—देहानामिति। अयमत्र शब्दान्वयः—शरीराणां यौगपद्ये सति कथमणुर्जीवो मुक्तः स्वयमनेकेषु शरीरेषु धारकः स्यात्। अत्र धारकत्वकथनं नियामकत्वादेरप्युपलक्षणम्। चैतन्यद्वारतश्चेदिति धर्मभूतज्ञानद्वारेण देहधारणमाशङ्क्य, मुक्तज्ञानस्य सकलार्थव्याप्तिमत्त्वेन सर्वधारकत्वमपि मुक्तस्य स्यात् तथा च जीवेश्वरविभागासिद्धिरित्याह[पूर्वपक्षी]-सकलमपीति। अत्रोत्तरम्-मैवमिति। न हि व्याप्तिमात्रेण सर्वधारकत्वं स्यात्। तथा सति कालस्यापि व्याप्तत्वेन सर्वधारकत्वप्रसङ्गात्। अपितु शक्तिविशेषादेव धारकत्वम्। न हि मुक्तस्यानेकधारकत्वानुकूला शक्तिरस्ति। अपितु नियमितविषया मुक्तस्य शक्तिः; 'जगद्व्यापारवर्जम्' इति सूत्रकारेण तच्छक्तेः काचित्कत्वेन नियमनात्। यद्यपि मुक्तबुद्धेः शक्तिरस्ति, तथापि सर्वशक्तेरीश्वरस्येच्छयैव सा नियम्यत इत्याह—इच्छया सर्वशक्तेरिति। कथं तर्हि सौभर्यादेरमुक्तस्यानेकदेहपरिग्रहशक्तिरित्याशङ्क्याह—प्रागिति। तादृग्योगशक्त्या—

---

अनेकशरीरपरिग्रहः कृतः। तत्राऽऽत्मवत्त्वं साक्षादभावेऽपि तावद्देहव्याप्तधर्मभूतज्ञानद्वारेति स्वीकृतम्। एवञ्चावश्यस्वीकार्येण, अन्यत्र क्लृप्तेन च यथा प्रकृतेऽपि निर्वाहे व्यर्थं जीवे महत्त्वोत्पादनम्। ननु शुको मुक्तः सर्वभाविवेशेति स्मर्यते। 'सर्वमाप्नोति सर्वशः' इति मुक्तस्थितिः श्रुता च। अतः परिमाणान्तरं प्रमाणसिद्धमित्यत्राह जगदिति। जगति सर्वत्र मुक्तात्मनः प्रवेशवचनमपि धर्मभूतज्ञानव्याप्तिद्वारकमेव। अत एव, 'सर्वं ह पश्यः पश्यति' इत्युक्त्वैव, 'सर्वमाप्नोति सर्वशः' इत्युक्तम्। अतः, महत्त्वाकारेणापि ब्रह्मसाम्यमस्तु इति न शंकनीयम् ॥ ५३६ ॥

२०. ज्ञानव्याप्तिमादाय निर्वाहेऽप्यनुपपत्तिरस्तीति पृच्छति देहानामिति। यथा मुक्तस्याप्यणुत्वात् स्वरूपतः सर्वदेहधारकत्वं न भवति, अव्याप्तेः—तथा ज्ञानद्वाराऽपि धारकत्वं न भवति, अतिव्याप्तेः। व्याप्तबोधः=व्यापि ज्ञानवान्। ज्ञानव्याप्तिर्हि सर्वत्र जगत्यस्तीति सर्वमपि तेन ध्रियताम्। तथाच सर्वं देहः स्यात्। परिहरति मैवमिति। केवलज्ञानव्याप्तिर्न धारणप्रयोजिका; चक्षुरादिद्वारप्रसृतज्ञानव्याप्त्या घटादिग्राहिणां घटादेरपि देहत्वापत्तेः। अतः शक्तिविशिष्टव्याप्तिरपेक्षिता। शक्तिश्चेश्वराधीना। सर्वशक्तिसर्वेश्वरेच्छा यद्धारणे शक्तिं जनयति, तत् ध्रियते=देहीक्रियते। मुक्तस्य तादृशशक्त्युत्पत्तौ ईश्वरेच्छामात्रं कारणम्। बद्धस्य सौभर्यादेः तच्छक्तौ बहुकन्याविवाहादिप्रयोजककर्मसंवलितयोगशक्तिरपि अपेक्षितेति विशेषः।

ईश्वरदृत्तयोगशक्त्येत्यर्थः। न केवलं योगशक्त्या अनादिसिद्धकर्मपरिपाकोऽप्यत्र कारणमित्याह—कर्मबन्ध इति। कर्मानुगृहीतज्ञानपरिपाकात् तादृशी शक्तिर्योगसिद्धिरित्युच्यत इत्यर्थः॥ ५३७॥

(५३८) शक्तिः क्षेत्रज्ञसंज्ञा मुनिभिरभिदधे वेष्टिता कर्मभिः स्वैः;
पुंसोऽनंशापि बुद्धिर्बहुविधविकृतिः स्वीकृतैवं स चास्तु।
वालाग्रेत्यादिवाक्यात् तदयमणुरपि स्यादनन्तोऽपि मुक्तः;
न स्यात्; जैनादिभङ्गे परिहृतविकृतेरैकरूप्यानपायात्॥ २१॥

अत्र कश्चिच्चोदयति–बन्ध(द्ध)दशायां सङ्कुचितस्य ज्ञानस्य मुक्तिदशायां विकासो भवन्निरुच्यते, स तु सङ्कोचो विकासश्च जीवस्वरूपस्यैव स्यात्, प्रमाणानुकूलत्वात्। स्मर्यते हि—'यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्वगा' इति जीवस्वरूपस्यैव कर्मभिरावेष्टनम्। कर्मनिर्मुक्तस्य तस्यैव विकासोऽपि स्यात्। किमनेन धर्मभूतज्ञाने सङ्कोचविकासपरिकल्पनेन प्रमाणविरुद्धेन इति। तदिदमाह—शक्तिरिति। ननु निरवयवत्वाज्जीवस्य कथं विकास इत्याशङ्क्य, धर्मभूतज्ञानस्यापि तत् निरवयवत्वं समानमित्याह—पुंस इति। यथा पुरुषस्यानंशाऽपि बुद्धिरवस्थाभेदेन स्मृत्यनुभूत्यादिनानाविकृतिमती, एवं जीवोऽपि बद्धदशायामणुः मुक्तदशायां तु विभुश्च स्यात्। अयं परिमाणभेदो मुक्तबद्धव्यवस्था न निरंशे भवदीयधर्मभूतज्ञानेऽप्यस्तीति भवताऽपि वक्तव्यमित्यर्थः।

---

तादृग्योगशक्त्या शक्तिमत्संकल्पहेतुभूतयोगशक्त्या। कर्मेति। कार्यविशेषनियामकं कर्मेति भावः॥५३७

२१. ननु ब्रह्मसाम्य–नानादेहधारकत्वादिधर्मबलेन मोक्षे जीवस्य विभुत्वं कल्पितं चेत्, सौभरिन्यायेनैव स्यान्निर्वाह इति समाधिः स्यात्। वचनबलात् नानापरिमाणस्थितिज्ञानात् आनन्त्यमपि साक्षादित्युक्तौ नैवमिति शंकते शक्तिरिति। 'अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते। यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्वगा' इति अविद्यापदबोधितैः स्वकर्मभिः क्षेत्रज्ञो वेष्टित इति कथनात् अल्पपरिमाणं सिद्धम्। कर्मवेष्टनतारतम्यात् मध्यमपरिमाणमप्यनेकं स्यान्नाम। सर्वगा इति विशेषणं संसारे सर्वत्रैकस्यापि गमनाद्वा, नानाक्षेत्रज्ञानां नानास्थलस्थतया वा, मोक्षे भविष्यत आनन्त्यस्य बोधनाय वेत्यस्तु कथमपि। कथमनवयवे परिमाणभेद इति चेत्–वस्तुतो ज्ञानाख्यं वस्तु सर्वैरपि तीर्थकरैर्गुणत्वेन स्वीकृतं कथं सांशं स्यात्। न हीयं बुद्धिः प्रकृतिद्रव्यविकृतिरूपा बुद्धिः, येन सावयवा स्यात्। पुंसो बुद्धिर्हीयं गुणभूता। अतः प्रभावत् अवयवस्वीचिकीर्षायामपि सर्वमतसंमतरीत्याविषमनशैव। अस्या अप्यनन्तविधसंकोचविकासरूपविकृतिमत्ता स्वीकृता। अज्ञातार्थग्रहणस्थले विकासोपपादनेऽपि ज्ञातांशविषय एवानुमिति–शाब्दबोध–प्रत्यक्ष–स्मरण–चिन्तनाद्यवस्थाः इष्यन्ते। न ह्यासामवयवतारतम्यादिरूपताऽनुभूयमानाऽस्ति। एवंस्थिते स च=पुमानपि एवमस्तु=बहुविधविकृतिकोऽस्तु। तत्—तस्मात् अयमात्मा, 'वालाग्रशतभागस्य' इत्यादिप्रमाणात् अत्यन्ताणुरपि भवतु; तथा यथायथं मध्यमपरिमाणोऽपि। मा भूद्वा भवे परिमाणान्तरम्। मुक्तौ स साक्षादेवाऽऽनन्त्यं विभुत्वमश्नुताम्; किं ज्ञानद्वारोपपादनेनेति पूर्वपक्षः। निरस्यति नस्यादिति। जैनमतभंगाधिकरणे,'नच पर्यायादप्यविरोधो विकारादिभ्यः', 'अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः'इति परिहृताः विकृतयो यस्मात् तस्य जीवस्य मोक्षे संसारे चैकमेव परिमाणमिति तत्रैवोक्ततया ऐकरूप्य-

तदेतन्निगमयति—तद्यमिति । तदिदं प्रतिक्षिपति—न चाप्ति । गतिश्रे हेतुमाह—अनादि-भङ्ग इति । जैनाः खलु देहपरिमाणो जीवस्तद्वानन्त्य परिणमन इति वदन्ति । तत्तु जीवस्य विकाराभावात् जैनाधिकरणे प्रतिक्षिप्तम् । अयमत्राभिप्रायः—जैनाधिकरणे प्रतिपादितं जीवस्वरूपस्यानपायादिति-आकारान्तरप्राप्तिविरहस्यानपायादिति । अयमर्थः—आत्मनो निर्विकारत्वं प्रमाण-प्रतिपन्नम् । बद्धदशायामणोस्तस्यैव मुक्तदशायामानन्त्यञ्च लेनैव प्रमाणेन प्रतिपन्नम् । द्वयोरपि प्रमाणयोरविरोधो वाच्यः । स चाविरोधः स्वरूपविकाराभावात् धर्मभूतज्ञाने श्रुतिप्रतिपादितानन्त्य-स्वीकाराच्च विषयभेदेन सिध्यति । ज्ञानस्य तु साक्षाद्विधिविरोधस्य वचनं नास्ति । प्रत्युत सविकार-त्ववचनान्येव श्रूयन्ते । ज्ञानसङ्कोचविकासप्रतिपादकश्रुतिस्मृतीतिहासपुराणवचनानामानन्त्यात् । आत्मनि तिरोधानवचनं तु ज्ञानद्वारा, यथा घटपटलेन तिरोहितो घर्मप्रकाश इति ॥ ५३८ ॥

(५३९) जीवस्यैकैकशो हि त्यजत उदितो वृक्षशाखासु शोषः ;
तस्मादद्वारकं स्यादपगतवरणे द्रुत्वमानन्त्यमस्य ।
मैवम् ; शाखासु भोगाश्रयनियतिकृतोपाधिनाशः प्रहाणं ;
क्षेत्रादिन्यायतोऽसावभिमतिविरहात् स्याद्धीनो जहातिः ॥ २२ ॥

अत्र पुनश्चोदयति—जीवस्येति । वृक्षेषु सर्वास्वपि शाखासु व्याप्य वर्तमानो जीवः काञ्चन शाखा जहाति ; कासुचिच्छाखासु वर्तते । यत्र हानं तत्र शुष्कीभवति वृक्षः ; यत्र पुनरहानं तत्रोत्त-रोत्तरं शाखावृद्धिरपि दृश्यते । तेन जीवस्वरूपस्य प्रहाणाप्रहाणयोर्दर्शनात् स्वरूपपरिणामोऽस्तीति मन्तव्यम् । तदिदं निगमयति—तस्मादिति । एवमुपपादनात् आवरणाभावे जीवे, 'स चाऽऽन-न्त्याय कल्पते' इत्यधीतमानन्त्यं न धर्मभूतज्ञानद्वारकम्, अपि तु अद्वारकमेव । नेत्याह—मैवमिति ।

---

स्यानपायात् । धर्मभूतज्ञानस्य तु, 'गुणाद्वाऽऽलोकवत्', 'प्रज्ञा च तस्मात् प्रसृता पुराणी' इत्यादितो विकृतिमत्त्वमिष्टम् ; तद्वत् आत्मनामपि विकारादिकमापद्येत इति विकारादिभ्य इति वदन् हि तदनिष्टत्वं स्पष्टं दर्शयति । अन्यथा सविकारत्वेऽपि प्रकृतिवत् अनादिरित्येव मत्वा न दूषयेत् । कृत्स्नप्रसक्त्यधि-करणेन च, 'निरवयवत्वशब्दकोपो वा' इति परमात्मविषये दृष्टं निरवयवत्वं जीवात्मन्यपि, 'आत्मनि चैवम्' इति सूत्रेण दर्शितम् । 'त्रसरेणुप्रमाणास्ते रश्मिकोटिविभूषिताः' इति मुक्तेष्वपि अणुपरिमाणत्वमेव । अन्यथा हि मुमुक्षुं चरमदेहावसाने अनैवानन्त्यमजं कुर्यादीश्वरः, पश्चाच्च ज्ञानादिकं दद्यादिति, किं सूक्ष्मशरीरपरिग्रह-विरजातीराधिकरणकल्पना-नदीतरणादिनानाधर्मकल्पनेन ॥ ५३८ ॥

२२. अथ, 'यदेकां शाखां जीवो जहाति, अथ सा शुष्यति' इत्यादिवाक्यबलात् देह परिमाणत्वस्यापि जीवेऽवगमात् आनन्त्यमप्येवमस्तु । किं प्रदीपवत् प्रभारूपज्ञानमात्रावेशकल्पनये-त्याशङ्कामनूद्य तत्र परिहारमाह जीवस्येति । वृक्षे आमूलाग्रं व्याप्य पेपीयमानो मोदमानस्तिष्ठन् जीवः यदा यां शाखां त्यजति, तदा तस्याः शोषः उदितः उक्तः छान्दोग्यायाम् । एवं बन्धे नानाविधपरिच्छिन्न परिमाणे, अपगतं कर्मरूपमावरणं वेष्टनं यस्मात् तादृशे मुक्तिकाले अस्मिन् जीवे आनन्त्यं परममहत् परि माणं मुख्यं साक्षादस्तु ; किं चैतन्यद्वारा तदुक्त्येति । निरस्यति मैवमिति । जैनमताधिकरणादि प्रदर्श्य वक्तव्यमुक्तमेव । उक्तोदाहरणस्य विवक्षितार्थ एव वक्तव्यः । स उच्यते— जीवस्य शाखासु यः

तदेवोपपादयति — शाखास्विति । जीवस्य शाखासु प्रहाणं नाम न स्वरूपप्रहाणम्, अपितु तासु तासु भोगाश्रयत्वोपपादकपुण्यपापविरतिरेव। ततो न जीवस्य स्वरूपविकारः। अस्मिन्नर्थे दृष्टान्तमप्याह — क्षेत्राणीत्यादिना इति । यथा क्षेत्रं परिगृह्णाति जहातीत्यत्र क्षेत्रेषु न स्वरूपव्याप्तिर्जीवस्य परिग्रहः, नापि स्वरूपेण तद्विमोचनं हानम्। अपि तु जीवभोगसाधनत्वोपपादकधर्माधर्मपरिग्रहः क्षेत्रस्यापि परिग्रहः, तत्प्रहाणञ्च क्षेत्रप्रहाणमिति। अभिमतिविरहादिति -- उपाधिनिमित्ताभिमानविशेषविरहादित्यर्थः । अयमर्थः—'वासांसि जीर्णानि यथा विहाय' इत्यादिषु देहस्य हानं परिग्रहणञ्चाभिधीयमानं कर्माधीनाभिमानविशेषमात्रम्; न पुनः स्वरूपप्राप्तिः; नापि स्वरूपवियोगः। तेन जीवस्वरूपनिकारशङ्का नाङ्कुरति ॥ ५३९ ॥

(५४०) एको नैकः परस्मात्पृथगपृथगपि स्वस्वरूपेण मुक्तः

स्वाभीष्टाशेषभोक्ता स्वयमिति पृथुकक्षीबव(चो)द्ये भ्रमन्ति ।

तेऽन्वीक्ष्य स्वोक्तिबाधं श्रुतिशतविहतिं तत्तदुक्त्यान्यपर्यं

जैनत्वप्रभ्रमदण्यऽमतिकलहमुचः सत्पथं संश्रयन्तु ॥ २३ ॥

मुक्तावस्थायां भेदाभेदवादिनां स्ववचनविरोधात् प्रमाणविरोधाच्च ते जैनमतवत् व्याहतं पक्षं परित्यज्य, व्याघातदोषविधुरं सन्मार्गमेव भजन्त्वित्याह—एक इति । अयमर्थः—अस्मत्पक्षे व्याघातप्रमाणविरोधशङ्काभावात् स एव सत्पथः; अपरे त्वसत्पथाः' इति । शब्दान्वयस्तु—एको नैकः = भिन्नश्चाभिन्नश्च ; मुक्तो जीवः स्वस्वरूपेण तथा, परमात्मनः पृथक्त्वापृथक्त्व(पृथक्चापृथक्च?)स्वरूपेण स्वाभीष्टाशेषभोक्ता स्वयं भवतीति पृथुकक्षीबवत् = बालोन्मत्तवत् ये भ्रमन्ति, ते स्वोक्तिबाधम्—'एकश्चानेकश्च, परस्मात्पृथगपृथक्' इति स्ववचनविरोधं, 'पृथगात्मानं प्रेरितारञ्च' इत्यादिश्रुतिशतविहतिं तत्तदुक्त्यान्यपर्यं—भेदाभेदप्रतिपादकश्रुतीनामन्यपरत्वम्—'जीवानामन्योन्यैक्यप्रतिपादनं

---

भोगाश्रयनियतिकरः भोगावच्छेदकतानियामकः उपाधिः कर्मसंबन्धः, तद्विनाश एव जीवकर्तृकं त्यजनम्। न तु जीवस्य संयोगपूर्वकविभागः। जहातिः जहातीति पदं हि अभिमतिविरहरूपार्थेऽपि प्रयुज्यते । क्षेत्रस्वामी क्षेत्रं जहातीत्युक्तौ न हि विभागोऽर्थः। त्यक्ते क्षेत्रेऽपि तत्संयोगसंभवात् । किंतु ममेदमिति मतित्याग एव। तद्वदत्रापि मद्भोगौपयिकाकारवदिदमस्तु इत्यभिमतिर्यदंशेऽपैति, तत्र शेषः। ननु कदाचित् जीवस्याऽऽस्थायां सत्यामपि ईश्वरस्तत्संबन्धं धूनुते ; तदा शरीरैकदेशोऽनुपयुक्तो भवतीति चेत्-अस्तु तत्र भगवत एव, अयं जीव एतद्द्वाराधीनं भोगमनुभवतु इत्याकारकाभिमतिविरहः। तदापि निरासोऽयमपि अन्ततोऽभिमतिविरहित एव। एतदभिमत्यादिरेवोपाधिरिति ॥ ५३९ ॥

२३. एवं प्रदीपवदावेश इति सूत्रार्थवैशद्याय, 'स' एकधा भवति त्रिधा भवति' इत्यादिवाक्यस्य अनेकशरीरपरिग्रहरूपोऽर्थ उक्तः । यादवप्रकाशीयास्तु—अणुरेकोऽपि जीवो मुक्तौ विभागशक्तिसंपन्नः बहुरूपेण स्वरूपत एव विभक्तो भवति । "आत्मनां तु सहस्राणि बहूनि भरतर्षभ । योगी कुर्यात् बलं प्राप्य तैश्च सर्वैर्महीं चरेत्" इत्यतः संकोचविभागशक्तिरस्तीति ज्ञायते । परस्मात् पृथगपृथक्, स्वरूपेणापि पृथगपृथक्=ब्रह्मजीवयोर्भेदाभेदवत् जीवस्य मुक्तौ स्वस्मात् भेदाभेदावपीत्यर्थः। एवं शक्तिसंपन्नत्वात् भोगार्थमेव पृथग्भावात् 'स्वाभीष्टाशेषभोक्ता चेत्याहुः। तन्निरासः इतीत्यादिना । पृथुकः बालकः ; क्षीबः मत्तः । तद्वत् ये प्रौढविवेक्यसंमतमर्थमेवं

साजात्यात्; 'जीवब्रह्मणोरन्योन्यैक्यप्रतिपादनं तु ज्ञानानन्दादिरूपेण साजात्यात्, शरीरात्मभावप्रतिपादनेन ब्रह्मात्मकत्वाभिप्रायाच्च; अचिद्ब्रह्मणोरैक्यप्रतिपादनं विशिष्टैक्यात्' इत्यादितात्पर्यमालोच्य जैनाद्यसम्मतेन इत्यन्मतिकलहं मुक्त्वा सन्मार्गमेव सं(समा)श्रयन्त्विति। अयमर्थः—ये भेदाभेदवादिनः कर्ममीमांसकाः, ये च तन्मतानुसारिणो भेदाभेदमाश्रयन्ते ब्रह्ममीमांसकाः, उभयेऽपि ते जैनग्रन्थिमीमांसकाः। अतो जैनमतानुसारं विहाय ते सन्मार्गमेव समाश्रयन्त्विति, 'भोक्ता भोग्यं प्रेरितारम्' इति तत्त्वत्रयस्य स्वरूपभेदाङ्गीकारेण, 'सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्' इति विशिष्टैक्यानुसन्धानमेव सन्मार्गः; तमेव मार्गं परिगृह्णन्त्विति ॥ ५४० ॥

(५४१) सर्वं संकल्पमात्राल्लभत इति समाम्नायते; सूत्रितश्च;
स्वेच्छातो देहयोगाद्यनियतिकथनं स्यादतः पिष्टपेषः।
तन्नान्योन्योपरुद्धश्रुतिगतिनियतिः कामतोऽनेकदेह-
स्वीकारप्रक्रियेत्याद्यनियतिकथने सूत्रकाराभिसन्धेः ॥ २४ ॥

इत्यभावाधिकरणम् ॥ १५५ ॥

अत्र पौनरुक्त्यमाशङ्क्य परिहरति—सर्वमिति। 'स यदि पितृलोककामो भवति, सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति' इति श्रुत्युक्तम्। तदेव, 'सङ्कल्पादेव तच्छ्रुतेः' इति सूत्रकारेणाप्युपपादितं पूर्वमेव। तदेवाधुनापि, 'स्वेच्छातो देहयोगाद्यनियतिः' इति पुनः कथ्यते। तेनायं पिष्टपेषः स्यादिति चोदकाभिप्रायः। अत्र पिष्टपेषणन्यायो नेत्याह—तन्नेति। तदेवोपपादयति—अन्योन्येति। अयमर्थः—यदि पूर्वोक्तमेवात्राप्युक्तं स्यात्, तदा हि पिष्टपेषन्यायः। पूर्वं हि, 'सङ्कल्पादेव तच्छ्रुतेः' इत्यत्र प्रयत्ननिरपेक्षं स्वसङ्कल्पादेव देहेन्द्रियादिकं भवतीत्येतावन्मात्रमुक्तम्। अत्र पुनः कर्माधीनदेहाभावं कश्चिदाह; कर्मान(अकर्मा)धीनदेहसद्भावमपरस्त्वाह; अस्माभिस्तु सशरीरत्वाशरीरत्वश्रुत्योर्विषयनियमोऽभिधीयत इत्ययमधिकोऽर्थः। अर्थान्तरमप्यधिकमाह—कामत इति। सङ्कल्पा-

---

मन्यन्ते—ते जैनादिशायिकुदृशः निरवयवत्वादात्मनः छेदनभेदनाद्यसंभवात्, एकैकस्यानेकाहमर्थसमुदायत्वस्याप्रामाणिकत्वात्, जैनच्छायया समाहृतस्य भेदाभेदस्य तन्निरासेनैव निरस्तत्वाच्च, 'आत्मनां वै सहस्राणि' इति वाक्यस्य योगिविषयकत्वात् आत्मशब्दस्य च तत्र देहवाचित्वात् जीवब्रह्मैक्यपक्ष इव एकैकजीवविभागार्हत्वपक्षेऽपि बाधादिकमन्वीक्ष्य=सतर्कतो विमृश्य सत्पथं भाष्यकारोक्तां सरणिमेवाऽऽश्रयन्तु। यादवप्रकाशाश्च समाश्रिता एव श्रीभाष्यकारानिति तथैव पाश्चात्त्या अपि भवन्त्विति। पृथुकक्षीववधे इति पाठे चिन्तामणिप्रसिद्धे सत्यपि, पदयोजना पृथुकक्षीवचोद्ये इति पाठं दृष्ट्वा तत्र चोद्ये इत्यस्य प्रसिद्धार्थानन्वयात् अर्थान्तरं परिकल्प्य, ये इति पदान्तरमप्यध्याहरति ॥ ५४० ॥

२४. पौनरुक्त्यमाशंक्य परिहरति सर्वमिति। सर्वं संकल्पाधीनमित्युक्त्या संकल्पात् पूर्वमविद्यमानं संकल्पात् लभत इति कथितं भवतीति, तावतैव सदेहत्वादेहत्वरूपावस्थाद्वयम् अधिकसंकल्पे चाधिकदेहभावश्च ज्ञायत एव; किमेभिः सूत्रैरिति शंका। निरस्यति तन्नेति। संकल्पाधिकरणे प्रयत्नादिनिरपेक्षत्वं वा सापेक्षत्वं वेति प्राप्तसंशयपरिहारः। शरीरात्यन्ताभावपरश्रुति-बहुधाभावश्रुतिविरोधशंकापरिहार इह। स्वीक्रियमाणाश्च देहाः संध्यतुल्याः जाग्रत्तुल्याश्च; स्वसंकल्पं विनाऽपि

देवानेकदेहलीका वै कदाचित् स्वपरिकल्पितदेहपरिग्रहः, कदाचिच्च परमपुरुषपरिकल्पितदेहपरिग्रह इति देहपरिग्रहानियतिकथने सूत्रकाराभिसन्धेर्विद्यमानत्वादधिकार्थोपदेशोऽस्तीति न पौनरुक्त्यप्रसङ्गः। अत्रानियतिकथनवचनं समनन्तरोक्तनियतिकथनस्याप्युपलक्षणम् ॥ ५४१ ॥

इत्यभावाधिकरणम् ॥ १५५ ॥

## १५६ ॥ अथ जगद्व्यापारवर्जाधिकरणम् ॥ ४-४-६ ॥

सूत्रम्-जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च॥ प्रत्यक्षोपदेशान्नेति चेन्न; अधिकारिकमण्डलस्थोक्तेः ॥ विकारावर्ति च तथा हि स्थितिमाह ॥ दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ भोगमात्रसाम्यलिङ्गाच्च ॥ अनावृत्तिश्शब्दादनावृत्तिश्शब्दात् ॥ १७—२२ ॥

(५४२) यद्यप्युक्तो विमुक्तः परतनुरपृथक्सिद्ध इत्यत्र पूर्वं
व्यापारांशे तथापि श्रुतमिह परमं साम्यमक्षोभणीयम् ।
संकल्पादेव सर्वोत्थितिरपि(रिति) हि ततःस्यादिति प्रत्यवस्थां
कृन्तत्यन्त्येऽधिकारे कृतिमदितरयोः स्थापयन् भोगसाम्यम् ॥ २५ ॥

अत्र सङ्गतिभाष्ये-"किं सत्यसंकल्पस्य मुक्तस्यैश्वर्यं जगत्सृष्ट्यादिपरमपुरुषासाधारणं सर्वेश्वरत्वमपि, उत तद्रहितं केवलपरमपुरुषानुभवविषयमिति संशयः' इति। तदर्थविचारस्तु—किं मुक्तस्यैश्वर्यं जगद्व्यापारविषयम्, उत नेति। परमसाम्यसत्यसङ्कल्पत्वश्रवणं किं मुक्तैश्वर्यस्य जगद्व्यापारविषयत्वमवगमयितुं शक्नोति, नेति। किं जगन्नियमनस्य मुक्तैश्वर्यान्तर्भावे, 'यतो वा इमानि' इत्यादिब्रह्मलक्षणवाक्यं विरुध्यते, नेति। किं मुक्तस्य सृष्टिप्रकरणासन्निधानेन जगद्व्यापारस्य ब्रह्मलक्षणत्वाश्रयणं न्याय्यम्, उत मुक्तस्य विकारलोकानुसञ्चरणश्रवणेन जगन्नियमनस्य ब्रह्मलक्षणत्वाश्रयणमन्याय्यमिति। किं मुक्तस्य विकारलोकानुसञ्चरणं नियमनार्थम्, उत केवलभोगार्थमिति। अत्र पूर्वपक्षी, 'परमं साम्यमुपैति' इति श्रुत्याऽऽपाततप्रतीत्यनुसारेण परमपुरुषवत् जगद्व्यापारोऽपि मुक्त-

---

भवन्ति, स्वसंकल्पेनापि; क्षणिकाः स्थिराश्च। अप्राकृता एव भगवल्लीलारसपोषायास्मिन् प्राकृतलोके आद्रियमाणाः, परमपदे चेत्येवमर्थानां सिद्धिरितः। अतः अन्योन्यविरुद्धतया भातानां श्रुतीनां गतेः प्रतिपादनप्रकारस्य नियतिः व्यवस्था। यथासंकल्पं देहतदभावाविति यावत्। कामत इत्यादि। कामतः परसंकल्पमात्रादपि देहः स्वसंकल्पादपि जातिरिति देहानेकता, एकैकसंकल्पादपि देहानेकता चेत्यनियमः। तर्हि देहवत्त्वतदभाववत् ज्ञानवत्त्वतत्संकोचयोरप्यैच्छिकत्वं तु स्यादिति न भवति। तदिदं, "स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि" इत्यनेन दर्शितम् ॥ ५४१ ॥

२५. शरीरतदभावयोः साधनात् अनुभवैकार्थ्ये सिद्धे। एवमीश्वरव्यापारोऽपि मुक्तस्य भवति नेति चिन्त्यते। नन्वविभागेनदृष्टत्वादित्यधिकरणे जीवात्मपरमात्मवैषम्यस्य, तत्सत्त्वेऽपि साम्योक्तिसंभवस्य चोपपादितत्वात् पुनरिह वैषम्यप्रदर्शनायाधिकरणं व्यर्थमिति शंकां परिहरति यद्यपीति। अत्र शारीरके विमुक्तोऽपि जीवात्मा अपृथक्सिद्धः, परमात्माविभक्तः परं प्रति तनुः शरीरभूत एवोक्तो यद्यपि—अथापि भोगसाम्यमेव, न तु व्यापारांशेऽपि साम्यमिति न। श्रुतं परमं साम्यं व्यापारांशेऽपि=जगज्जननरक्षणसंहरणादिरूपव्यापाररूपे अंशेऽपि अस्य अक्षोभणीयम्, 'संकल्पादेवास्य पितरः समुत्तिष्ठन्ति' इत्यादिना

स्यात्स्त्विति शङ्कते—यद्यपीति । अयमर्थः—पूर्वमेव मुक्तः शरीरलक्षणैराधेयत्वादिभिः परमात्मनः शरीरमिति यद्यप्युक्तः, तथापि व्यापारांशे श्रुतं परमं साम्यमक्षोभणीयम् । ततः, 'सङ्कल्पादेव तच्छ्रुतेः' इति सूत्रोक्तमुक्तसङ्कल्पादेव सर्वोत्थानं स्यादिति जगद्व्यापारस्तस्यापि भवेदिति पूर्वपक्षिणः प्रत्यवस्थानं शास्त्रान्ते निकृन्तति=नुदति । कृतिमदितरयोः स्थापयन् भोगसाम्यमिति—कृतिमान्=जगत्कर्ता, इतरः=जीवः ; तयोर्भोगसाम्यमेव संभवति, न पुनर्जगद्व्यापारसाम्यम्, तत्साम्ये जीवेश्वरलक्षणविभागविलोपप्रसङ्गादिति ॥ ५४२ ॥

(५४३) सायुज्यं भोगसाम्य समगाणि निपुणैः शब्दशक्त्याद्यबाधात्
तच्च व्यापारसाम्ये त्वमति न घटते स्वक्रियास्वादहानेः ।
तस्मान्मुक्तस्य सृष्टिप्रभृतिरपि जगद्व्यापृतिर्ब्रह्मतुल्या ;
मैवं तल्लक्षणं सा कथमनुगमतस्तस्य चान्यस्य च स्यात् ॥ २६ ॥

अत्र पूर्वपक्षी जगद्व्यापारसाम्याभावे विरोधमाशङ्कते—सायुज्यमिति। अयमत्र शब्दार्थानुगमः—निपुणैः खलु शब्दार्थानुगमात् भोगसाम्यमेव सायुज्यमिति समगाणि । तच्चास्माभिः प्रागेव (524 श्लो.) विवृतम् । तत्र हेतुमाह—शब्दशक्त्याद्यबाधादिति । दर्शिता चास्माभिः शब्दशक्तिः । अत्र निपुणैरित्यभिधानम्, 'ऐक्यं सायुज्यम्' इत्यभिदधतामद्वैतिनां निरासार्थम् ॥ अस्तु सायुज्यं शब्दार्थः ; (अस्तु भोगसाम्यमेव सायुज्यशब्दार्थः?) किं ततः प्रस्तुतस्येत्याशङ्क्याह—तच्चेति। यदि व्यापारसाम्यम्, तदेव हि सायुज्यमपि स्यात् । भोजनसाम्ये हि भोगसाम्यमपि संभवति । उक्तमर्थं व्यतिरेकतोऽपि द्रढयति—असतीति । तदेवोपपादयति—स्वक्रियेति । ईश्वरस्य हि स्वक्रियास्वाद

---

मस्य संकल्पमात्रात् सर्वस्य पितादेरुत्थानमपि ततः एवं सर्वव्यापारसाम्याद्धि स्यात्—उपपद्यते । तथा च भाष्यम्—'निरञ्जनः परमं साम्यमुपैति'' इति परमपुरुषेण परमसाम्यापत्तिश्रुतेः सत्यसंकल्पत्वश्रुतेश्च । न हि परमसाम्यसत्यसंकल्पत्वे जगन्नियमनेन विनोपपद्येते'' इति । इति प्रत्यवस्थां पूर्वपक्ष्युत्थानं अन्तिमेऽधिकरणे कृतिमतः जगद्व्यापारवतः परस्य, तदितरस्य तद्रहितस्य मुक्तस्य च तदभावेऽपि भोगसाम्यं स्थापयन्=भोगसाम्यसंभवमुपपादयन् कृन्तति निराकरोतीत्यर्थः। व्यापारनिषेधस्य पूर्वमकृतत्वात् तत्सद्भावाशंकयाऽधिकरणोत्थानमिति भावः ॥ ५४२ ॥

२६. ननु साधर्म्यं परमसाम्यं सायुज्यमित्यादीनामेकार्थकत्वात् सायुज्यशब्दस्य च समानभोग्यकत्वार्थकत्वात् तावतैव साम्य-साधर्म्योपपत्तौ अश्रुतस्य व्यापारसाम्यस्य कल्पनमयुक्तमिति शंकामुत्थाप्य परिहरति सायुज्यमिति । युज्यते=भोगार्थं संबध्यते इति युक् भोग्यम् । भोग्याभेदात् उभयोरपि भोगसाम्यम् । सामरस्यं हि सायुज्य वदन्ति ब्रह्मवादिनः' इति शाकटायनोक्तिः । समानम् अविशिष्टं युक् भोग्यं येषां ते सयुज । तेषां भावः सायुज्यम् । भोक्तुर्भोग्यस्य च मिथ ऐक्य त्विनो न सिध्यति । भोक्तुरेकत्वे विवक्षिते सायुज्यपदप्रयोग एव न स्यात् । उभयोः समानं युगित्यर्थो हि शब्दतः सिध्यति । उभयनिष्ठस्य च भोगस्य-अनुभवस्य गुणस्यैकत्वायोगात् भोगयोः साम्यमेव ततः सिध्येत्—[न तु भोक्तव्यसाम्यस्याप्यावश्यकता । तस्य साम्यं वा एकत्वं वा यथायथं भवितुमर्हति ] सह युङ्क्तः इति सयुजौ; तयोर्भाव इत्यर्थेऽपि भेदः स्पष्टः । परंतु सालोक्यसारूप्यशब्दैकरस्यं तदा न भवति । एवं शोधने

एव गर्धेद्[सं]भवतीति जीवस्य जगद्व्यापाराभावे स्वक्रियास्वादाभावात् कथमिव सर्वसाम्यसिद्धिः। उक्तमर्थं सोपपत्तिकं निगमयति – तस्मादिति। तदिदं प्रतिक्षिपति—मैवमिति। तदेवोपपादयति—तल्लक्षणमिति। अयमर्थः—यस्य तु यल्लक्षणम्, तत् तस्यैव स्यात्; न पुनरन्यस्य, तेन लक्षणभूतो जगद्व्यापार ईश्वरस्य तदन्यस्य चानुगमनः=अनुवृत्त्या कथं स्यात्। लक्ष्यालक्ष्ययोरनुवर्तमानं न हि लक्ष्यस्य लक्षणमिति लक्षणविदो वदन्ति ॥ ५४३ ॥

(५४४) कथ्यन्ते सृष्टिवाक्ये क्वचिदपि न जगत्कारणत्वेन मुक्ताः;
प्राधीतः कामचारो भवतु; न जगदारम्भकत्वं ततः स्यात्।
सर्वाकारोपभोग्येश्वरविषयधियस्साम्यतो भोगसाम्यं
युज्येताऽऽनन्दवल्लयां समगणि विभुनाऽऽनन्दमात्रे समत्वम् ॥ २७ ॥

ननु व्यापाराभावे कथं भोगसाम्यं स्यादित्यत्र लोकदृष्टप्रक्रियया तदभावेऽपि भोगसाम्यमुपपादयति—कथ्यन्त इति। अयमत्र शब्दान्वयः—सृष्टिवाक्ये क्वचिदपि मुक्ता जगत्कारणत्वेन न कथ्यन्ते। तर्हि, 'इमांल्लोकान् कामान्नी' इत्यादिकामचारवचनं कथं स्यादित्याशङ्क्य, सोऽपि भवतु नाम; तथापि न जगदारम्भकत्वसिद्धिरित्याह—प्राधीत इति। अत्र व्यापारसाम्याभावे कथं भोगसाम्यमित्येतावदवशिष्यते; तदपि नेत्याह—सर्वेति। भोग्यसाम्यादेव हि भोगसाम्यम्; न पुनर्व्यापारसाम्यात्। लोके हि नटनर्तनादिषु व्यापारेषु सभापति-भावुक-नटादीनामनुभाव्यार्थसाम्येन भोगसाम्यं दृश्यत एव। न केवलं नटस्यैव भोगः। यथा (तथा?) राजानं सेवमानानां राजान्तरङ्गपुरुषाणामानन्दो राज्ञा समान एव। केवलं स्वाम्यं स्वातन्त्र्यञ्च राज्ञि वर्तते; न पुनरानन्दे विशेषः।

---

भोगसाम्यलाभेऽपि व्यापारसाम्यलाभः कथमिति चेत्—तत्राह तच्चेति। स्वक्रियास्वादहानेरिति। आनन्दो हि, अहमेतदकार्षमिति स्वकर्तृत्वबुद्धिनिबन्धनोऽपि। तदंशहानौ आनन्दन्यूनतैवेति। निरस्यति मैवमिति। सा जगद्व्यापृतिः सृष्ट्यादिकर्तृभावः, तस्य ब्रह्मणः, अन्यस्य मुक्तस्य च अनुगमतः=उभयान्वये सति कथं तल्लक्षणं ब्रह्मलक्षणं भवेत्। अतिव्याप्तत्वात्। लक्षणत्वेन हि व्यापृतिर्वरुणेन भृगवे दर्शिता, 'यतो वा इमानि' इत्यादिना। तस्मादसाधारणधर्माणां सर्वानुयायित्वमयुक्तं स्वीकर्तुमिति भावः ॥५४३॥

२७. प्रथमद्वितीयतृतीयसूत्राणामर्थं त्रिभिः पादैः संगृह्णन् चतुर्थपादेन भोगमात्रेति सूत्रार्थमाह। जगद्व्यापारवर्त्त्वं हि मुक्तस्य, जगत्सृष्टिवाक्येषु कुत्रापि मुक्तस्यापि परामर्शे शंक्येत। यद्यपि, 'सत्यं ज्ञानमनन्तं ब्रह्म....तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इति ज्ञानपदेन मुक्तविलक्षणत्वेन ब्रह्म गृहीत्वा कारणत्वमुक्तम्, तथापि न कारणत्वेन मुक्त उक्तः; किं तु व्यावर्त्यत्वेन। ननु सदेव सोम्येदमिति वाक्ये सदेवेति अवधारणात् सत्पदेन सूक्ष्मचेतनाचेतनविशिष्टं नित्यविभूतिविशिष्टं च ब्रह्माभिप्रेतमिति वेदार्थसंग्रहे उक्तम्। एवञ्च तत्र मुक्तानामन्तर्भावात् कारणत्वं सिद्ध्यतीति चेन्न - ब्रह्मविशेषणतया नानापदार्थभानेऽपि इदमिति शब्दोपात्तस्थूलचेतनाचेतनविशिष्टब्रह्माभेद उच्यमानः इह ययोर्विशेषणांशयोः यस्य च विशेष्यस्य, तेष्वेवोपादानत्वान्वयसंभवात् न मुक्ते प्राकृतप्रपञ्चानन्तर्गते तत्स्थितिलेशोऽपि। संकल्पाश्रयत्वरूपं निमित्तकारणत्वं तु केवलविशेष्ये इति न कस्यापि विशेषणस्य तत्संभावनेति। प्राधीत इति। 'कामान्नी कामरूप्यनुसंचरन्' इति रूपादिसाहित्येन प्रकर्षेणाधीतो भवतु परमात्मना सह संचारः। ततः प्रागेव जगतः स्थितत्वात् तद्धेतुत्वं

इयं तु लोकदृष्टप्रक्रिया। न केवलमियमेव, श्रुतिरपि, 'स एको ब्रह्मण आनन्दः; श्रोत्रियस्य चाकामहतस्य' इति वदन्ती जीवेश्वरयोः शेषशेषिभावादिना स्वरूपवैषम्ये व्यापारवैषम्ये च सत्यपि भोगसाम्यमेवोपपादयति। तथाच दृष्टादृष्टप्रमाणप्रतिपन्नं भोगसाम्यं समदृष्टीनां विशिष्टानामिष्टमिति न कोऽपि विरोधः ॥ ५४४ ॥

(५४५) निष्कामश्रोत्रियस्याप्यतिदिशति सुखं मानुषानन्दतुल्यं
साऽऽनन्दान् वक्तुकामा शतगुणमधिकान् आविरिञ्चं क्रमेण।
तत्तद्भोगात् त्वदिष्टं (प्रथिष्ठं) कथमिदमवरं कष्टमिष्टं च (हि) मुक्ते
नित्यानन्दे (सत्यं तत् स्यात्) मुकुन्दप्रियजनसदृशे ह्येकदेशानुवादः ॥२८॥

अत्र केचिद् वदन्ति, 'मनुष्यानन्दमारभ्य चतुर्मुखानन्दपर्यन्तमुत्तरोत्तरमानन्दातिशयमुक्त्वा, 'श्रोत्रियस्य चाकामहतस्य' इति निष्कामश्रोत्रियस्यापि, अनुक्रमात् स एवाऽऽनन्दोऽतिदिश्यते। तेन परमपदस्थानामपि निष्कामश्रोत्रियाणां मनुष्यानन्दादितुल्यानन्दवत्त्वमङ्गीकार्यम्' इति। तदिदमनु-

---

ततः कथमित्यर्थः। सर्वेति। विकारावर्ति=हेयविकाररहितं सर्वाकारभोग्यं ब्रह्म विषयो यस्याः तस्याः धियः साम्यमस्ति, "सर्वान् कामान् समश्नुते सह ब्रह्मणा विपश्चिता" इत्याद्युक्तेः। तस्याश्च धियो भोगरूपत्वात् भोगसाम्यं युज्येत। भोग्यार्थाविशेषे भोगसाम्यस्य लोकसिद्धत्वात्। अत एवाऽऽनन्दवल्ल्यां भोगमात्रसाम्यमेव आनन्दमीमांसया, 'श्रोत्रियस्यचाकामहतस्य' इत्यनेन समगणि। व्यापाराणां ततः कथं प्रसक्तिरिति॥ ५४४॥

२८. सर्वेषां मुक्तानां ब्रह्मभोगसाम्यवादिना कथं तद्विरुद्धार्थपरत्वमस्याः श्रुतेः प्रतिपाद्यते इति पादत्रयेण पृच्छति निष्कामेति। सा इति पृथक् पदम्। संदर्भानुसारात् श्रुतिरित्यर्थकम्। ननु प्रथमे मानुषानन्दपर्याये श्रोत्रियस्य चेति वाक्याभावात् कथमत्र मानुषानन्दतुल्यानन्दः श्रोत्रिये श्रुत्युक्त इत्युच्यते इति चेन्न—तथाऽनुक्तेः। अयम्, एतदनन्तरः श्लोकश्च, 'नामादौ वाक् च तस्योपरि' इति भूमाधिकरणश्लोकवत् तालकोशे क्वचिन्न गणितोऽस्ति। अथापि बहुसंमतत्वादनुपेक्ष्य एवेति कृत्वा तत्त्वार्थो विचार्यते। तथाहि—न ह्यत्र, 'वदति सुखम्' इत्युक्तम्; किन्तु, 'अतिदिशति सुखम्' इति। अतिदेशो नाम तुल्यवचनम्। न च मानुषानन्दमतिदिशतीत्युक्तम्; किन्तु मानुषानन्दतुल्यानन्दम्। न चैकमानुषानन्दतुल्योऽत्रोक्त आनन्दोऽस्ति। अतः शतगुणितमानुषानन्दतुल्यमनुष्यगन्धर्वानन्दातिदेश एव श्रोत्रिये श्लोकोक्तः। द्वितीयपादैकवाक्यतया च शतमानुषानन्देति लभ्यते। आविरिञ्चं शतगुणमधिकान् आनन्दान् वक्तुं प्रवृत्ता श्रुतिर्मानुषानन्दतुल्यमतिदिशतीत्युक्ते, शतगुणितमानुषानन्दतुल्यमिति लाभसंभवात्। किञ्चात्र निष्कामश्रोत्रियस्येति सर्वपर्यायश्रोत्रियग्रहणं युक्तम्; न प्रथमश्रोत्रियमात्रग्रहणम्। उत्तरार्धे तत्तद्भोगादिति कथनाच्च सर्वग्रहणमवगम्यते। तथाच मानुषानन्दतुल्यमित्यस्य यो मानुषानन्द उपक्रान्तः, तस्यैवोपर्युपरि गुणनमिति उपर्युपरि गुणिततत्तुल्यं तत्तदधिकारिनिष्ठमानन्दं तत्तत्र पर्याये श्रोत्रियेऽतिदिशतीति तदर्थः। यद्वा मानुषानन्दतुल्यमित्यस्य मानुषानन्दवत् हेयम् अवरं परिमितमित्यर्थः। आविरिञ्चं क्रमेणेति अतिदिशतीत्यत्रान्वेति। परमात्मपर्यन्त-

य इति—निष्कामेति। एवमनूदितं दूषयति—तत्तदिति। उत्तरोत्तरं शतगुणितक्रमेणोक्तात् तत्तत्संसारिभोगात् [अवरं?] त्वदिष्टं कष्टत्वेनेष्टं (प्रथिष्ठमिष्टं कष्टम्) उत्तरोत्तरसंसारिभोगात् पूर्वपूर्वोक्त(वैमुक्त)-भोगस्य शतांशेन न्यूनत्वात् कष्टत्वमित्यर्थः। न हि परमपदं गतस्य प्रसिद्धेन्द्रादिभोगादत्यन्तावरत्वकथनमास्तिकानां गोष्ठीषु समस्ति। न च परमपुरुषः परमैकान्तिनः परमपदं गतस्यापि प्रसिद्धेन्द्रादिभ्योऽप्यवरत्ववर्णनमाकलयति। नापि च तदन्तरङ्गकिङ्करा भुजङ्गमविहङ्गमपतिप्रभृतयोऽपि तद्वचनमङ्गीकुर्वन्ति। 'ब्रह्मविदाप्नोति परम्' इति सर्वेषामपि ब्रह्मविदां सर्वप्रतिबन्धनिवृत्तौ साधारणमेकरूपमेव फलं श्रुतिरप्याह, 'सोऽश्नुते सर्वान् कामान् सह' इति। न ह्यत्र केषुचित् सर्वशब्दसङ्कोचो न्याय्यः; शब्दार्थवैरूप्यप्रसङ्गात्। तेन, 'निरञ्जनः परमं साम्यमुपैति' इत्यशेषाणामपि

---

शतगुणितानन्दकथनप्रवृत्ता श्रुतः परमात्मानन्दं विलक्षणं सर्वातिशायिनं श्रोत्रिये यदतिदिशति, तद् युक्तम्। तत्र मानुषानन्दवदेव हेयानि आनन्दान्तराणि कथमतिदिशति। न च सर्वान् आनन्दान् युगपत् श्रोत्रिये अतिदिशति। तथासति समुद्रे गोष्पदवत् श्रोत्रियमहासुखे सर्वसुखान्तर्भावो विवक्षितः स्यादपि। प्रतिपर्यायमावर्तनात्तु विभिन्नपरिच्छिन्नानन्दशालिमुक्तरूपश्रोत्रियसत्त्वं गम्यते इति शङ्कितुराशयं गमयितुं क्रमेणेति पदम्। अस्यां योजनायां सर्वश्रोत्रियपर्यायग्रहणादर्थस्यान्यूनत्वम्, आविरिञ्चमित्यस्य युक्तता च। एवं पूर्वार्धस्यार्थः। ततः किमित्यत्राह तत्तदिति। तत्तद्भोगात् अत्र शतगुणितपरम्परायामुत्तरोत्तरानन्दात् अवरमिष्टं निकृष्टत्वेनेष्टं यत् पूर्वं अत एव कष्टं कष्टत्वेन दुःखमिदं कथं विमुक्ते त्वदिष्टमित्यर्थः। आनन्दस्यैव कष्टपदेन ग्रहणात् अत्र परं क्लीबनिर्देशः। प्रथिष्ठमिति पाठे प्रथिष्ठकष्टं महत्तमं दुःखमिति निन्दा स्यात्। यदि च, 'श्रोत्रियस्य चाकामहतस्य' इति श्रोत्रियादिपदस्य तत्तत्पर्यायपठितस्य तत्तल्लोकस्थितविरक्तयोगिपरत्वमिष्येत, तदा न मुक्ते हेयप्रसक्तिः। अन्तिमपर्यायगतश्रोत्रियपदस्यैव परमपदगतविषयकतया मुक्तपरत्वात्। सिद्धान्ते सर्वत्र पर्याये मुक्तस्यैव ग्रहणमिष्टम्। अतोऽयं दोष इति भावः। निरस्यति सत्यमिति। सत्यं तदित्यस्य तत्र तदानन्दो निकृष्ट एव; स एव मुक्ते उत्कृष्टश्चेत्यर्थः। अर्थमंगीकृत्य तात्पर्यमाह स्यादिति। आनन्दगुणनप्रवृत्तया श्रुत्या एकैकपर्वस्थितानन्दस्यापि विमुक्ते कथनं पूर्णानन्दैकदेशानुवादमात्रम्; न तु तदधिकान्यव्यवच्छेदकम्; श्रोत्रियो ह्यकामहतः मनुष्यतया स्थितोऽथ मुक्तः। तस्मिन् मानुषानन्दोपरितनसर्वपर्यायानन्दान् दर्शयन्ती श्रुतिः तदलभ्य आनन्दो नास्तीति प्रशंसति। द्वितीयादिपर्यायगतानन्दवत् परिमितानन्दत्वेऽपि विरक्तो भूत्वा भक्तो भवितुमर्हतीति सूचनञ्च। द्वितीयानन्दवत्त्वेनोक्तस्यैवोपरितनानन्दानामपि सत्ता क्रमेणोच्यत इति सिद्धमेषामेकदेशत्वमिति। अत्र स्यादिति प्रयोगः अर्थान्तरस्यापि संभवतो ग्रहणसूचकः। तेन सर्वत्र पर्याये विमुक्तपरत्वाभावेऽपि न क्षतिरिति अर्थान्तरं सूच्यते। मानुषानन्द इह वर्णितः श्रोत्रियस्याकामहतस्यैव। अकामहतश्रोत्रियोऽपि सत्यामिच्छायां मनुष्यगन्धर्वानन्दादिकमपि स्वयोगशक्तिबलात् लभेत। अत्यन्तविरक्तत्वे च परमात्मानन्दमिति। अथवा 'श्रोत्रियस्य चाकामहतस्य' इति वाक्यं सर्वं योगशास्त्रोक्तासु मैत्रीकरुणामुदितोपेक्षारूपास्ववस्थासु मुदितावस्थाप्रदर्शकम्। विरक्तो योगी मनुष्यगन्धर्वादीनामानन्दमेकैकमपि पश्यन्, सुकृती गन्धर्वादिरानन्दमलभतेति तत्पूर्वजन्मार्जितोपायरूपभाग्यचिन्तनया मोदते; नाभ्यसूयतीति। असूयायां तु प्रसक्तायाम् अकामहतत्वहतिरेव स्यादिति भावः। अपिवा—

ब्रह्मविदामेकरूपमेव फलम् । तर्हि कथं पृथक्पृथक्फलनिर्देश इत्याशङ्क्याह—मुक्त इति । अयमत्रा-न्वयः—मुकुन्दप्रियजनोऽनन्तगरुडविष्वक्सेनादिर्नित्यवर्गः । तत्सदृशे नित्यानन्दे इति नेपुंसकाधि-कारिष्वेकदेशकथनमवयुत्यानुवाद इति नीतिविदां सम्प्रदायः । यथा वैश्वानराग्न्ये द्वादशक-पालादिवाक्यशेषे तत्फलविशेषकथनमवयुत्यानुवाद इति तान्त्रिकैरनुवर्ण्यते,तद्वदिहापीत्यर्थः॥५४५

(५४६) आनन्दानन्त्यमाह श्रुतिरिह हि यतो वाच इत्यादिका(नाऽ?)स्याः
विश्रान्तिः श्रान्तिमात्रादिति च निगदितं(ता) यामुनाचार्यवर्यैः ।
न ह्यानन्दोन्मितिः(न्दो मितः) स्यात् विधिशतवचनेऽप्यस्य यद्वा नभोवत् ;
तच्चोक्तं भूमृद्ण्वोरुदधिपतिरयोर्मज्जने को विशेषः ॥ २९ ॥

पूर्वं मुक्तानन्दस्याऽऽनन्त्यादैकरूप्यमुक्तम्; तदेव श्रुत्या व्यक्तमुपपादयन् सत्सम्प्रदायग्रन्थमपि तत्र प्रमाणयति—आनन्दानन्त्यमिति । 'यतो वाचो निवर्तन्ते' इत्यादिवाक्यं परमपुरुषानन्दस्य मुक्तानु-भाव्यस्यानन्त्यमेव वदति । कथमिह वेदवेद्यस्य तस्यानन्त्यमित्याशङ्क्याह—श्रान्तिमात्रादिति । 'यद्वा

मुक्तेः प्राक् श्रोत्रियत्वावस्थायां विरक्तो योगी परमात्मानन्दं योगदशायां क्रमशो यमनुभवति, स आनन्दः परिच्छिन्नत्वात् शतगुणिततत्तदानन्दतुल्यो भवति योगपरिपाकक्रमेण । मुक्तौ तु अपरिच्छिन्नपरमात्मा-नन्दपरमसाम्यमिति श्रुत्यर्थः । एवं बहुधा निर्वहणाहेऽपि भावयजातस्य विभिन्नमुक्तगततरतमभावापन्नानन्द परतया माध्वव्याख्यानमयुक्तमित्यपि कष्टमिष्टं त्वदिष्टमिति प्रयोक्तुर्हृद्गतम् । अत एव परमसाम्य-श्रुतिमानन्दतीर्थीयाः व्यसाधुरित्युक्तं श्रीमति रहस्यत्रयसारे । एवं पादत्रयेण शंकायां चतुर्थेनोत्तरम् ॥ चि. टि. चिन्तामणिरीत्या तु पूर्वार्धेन शंका । 'तद्भोगादवरं त्वदिष्टं कथम् ? इष्टं तत् कष्टञ्चे'ति पूर्वार्धोक्तस्य दूषणम् । मुक्त इत्यादिना श्रुतितात्पर्यकथनम् । सत्यं तत्स्यादित्येतत्स्थाने नित्यानन्दे इति पाठः । नित्यसूरिवन्मुक्ते नित्यानन्दे अयमेकदेशानुवादः । अन्यथा अवरत्ववदनित्यत्वस्याप्यापत्तेरित्यर्थः ॥५४५॥

२९. ननु, 'श्रोत्रियस्य चाकामहतस्य' इति मुक्तस्य चतुर्मुखानन्दशतगुणितत्वरूपपरिच्छेदयुक्त-ब्रह्मानन्दतुल्यानन्दवत्त्वस्यैव श्रुतत्वात् मुक्तानन्दोऽपि परिच्छिन्न इत्याशंकायाम्, किं परब्रह्मानन्दस्याप्येवं परिच्छेद एव शंकितुराशयितः, उत तस्यापरिच्छिन्नत्वेऽप्यस्य परिच्छिन्न एवेति विकल्पमभिप्रेत्य, आद्यं निरस्यति आनन्देति । श्रुतिः यतो वाच इत्यादिना उत्तरेण भागेन इह ब्रह्मणि आनन्दस्याऽऽनन्त्यम् अपरिच्छिन्नत्वं हि स्पष्टमाह । न तु तस्य वागविषयत्वं मनोग्राह्यत्वाभावञ्चाऽऽह ; स्ववाग्व्याघातात् । अस्तु कामम् ; मुक्तस्य किमायातमित्यत्र प्रथमकल्पखण्डनाय पूर्वभागतात्पर्यं वदन् संप्रदायप्रदर्शनमपि करोति विश्रा-न्तिरिति । युवा स्यादित्यादिना मातुं प्रवृत्ता या श्रुतिः, अस्याः विश्रान्तिः तन्निरूपणादुपरतिः पूर्णस्य मितत्वस्य कथितत्वादिति न मन्तव्यम्; एतदुपर्यपि गुणनसंभवात् । तर्हि कुतो नाधिकं गुणित इति चेत्—तत्र सा विश्रान्तिः श्रान्तिमात्रात् । इति-इदं श्रान्तिमूलकत्वं, "यद्वा श्रमावधि....वेदाश्चतुर्मुखमुखाश्च" इति यामुनाख्यैराचार्यवर्यैः निगदितञ्च कण्ठोक्तञ्च । निगदितमित्यक्लिष्टः पाठः । निगदितेति पदयोजनापाठे विश्रान्तिपदेन तदन्वयः कार्यः । उपर्युपरिगुणने श्रान्तिमात्रम्—श्रम एव केवलम् ; न कदापि पारगमनसंभव इति धियेत्यर्थः । तथा श्रान्तिमात्रात् श्रान्तेर्जातत्वादेवेत्यर्थः । कथं चतुर्मुखपर्यन्त-

श्रमावधि' इत्यस्मिन् श्लोके यामुनाचार्यैः भगवदानन्दस्य कार्त्स्न्येन वेदवेद्यत्वं नास्ति, वेदोऽपि श्रान्तिपर्यन्तमेव भगवदानन्दमनुकथयति । तद्वन्ममापि श्रान्तिपर्यन्तमेव भगवदानन्दानुकथनं युज्यत इत्यप्युक्तम् । ननु मनुष्यानन्दादिवदुत्तरोत्तरं विधिशतकल्पनया भगवदानन्दस्य कार्त्स्न्येन वर्णनं कर्तुं शक्यत इत्याशङ्क्य तदपि नेत्याह—विधिशतवचन इति । विधिरप्यल्पीयानेव । अल्पीयसश्शतसङ्ख्याकस्याप्युत्तरोत्तरकल्पनेऽप्यल्पत्वं न निवर्तते । तेन ब्रह्मानन्दस्य कार्त्स्न्येन कथनं कदापि न योयुज्यते । उपक्रमोपसंहारयोरुभयोरपि तुल्यप्रवृत्तित्वात् । तदिदं, 'उपर्युपर्यब्जभुवोऽपि पूरुषान्' इति यामुनाचार्यवचन एव स्पष्टमेवोक्तमित्याह—तथेति । श्रुतिः खल्वेवं विचारयति—एकमब्जभुवमवधीकृत्य ततोऽपि शतगुणितानन्दत्वेनान्यमब्जभुवमन्यं वा कञ्चित्कल्पयामि. ततश्चान्यं ततोऽपि चान्यम् । एवं सर्वदा कल्पनेऽपि तत्तुल्यत्ववचनेन भगवदानन्दस्यापरिमितत्वं सिद्धम् । तेन किमनेनायासेन । प्रथममेव केनापि प्रकारान्तरेण भगवदानन्दानन्त्यं कथयिष्यामि । तदिदमेव प्रकारान्तरम्, यद् व्यतिरेकमुखेनानन्त्यं कथयामीति, 'यतो वाचः' इति वाक्येन व्यतिरेकमुखेन कथितवती । अत्र सुखप्रतिपत्त्यर्थं यामुनाचार्याभिप्रेतं स्फुटमभिहितञ्च दृष्टान्तद्वयमाह—यष्ट्येति । आकाशो हि यष्ट्या न मीयते, तद्वत्परब्रह्मानन्दोऽप्यल्पीयसा मनसा न मीयत इत्येको दृष्टान्तः । अपरस्तु, 'को मज्जतोरणुकुलाचलयोर्विशेषः' इति स्फुटमेवोक्त इत्याह—तच्चेति भूभृदण्वोरिति ॥ ५४६ ॥

---

गुणनया श्रान्तिर्जातेति चेत्—उच्यते—इहलोकादृष्टचरमेवाऽऽनन्दं संभावनाविषयं मानुषानन्दत्वेन परिकल्प्य उपर्युपरि तत्तच्छतगुणिततया आनन्दं कल्पयन्ती चतुर्मुखस्यैवाऽऽद्यत्वात् तदानन्दपर्यन्तं गत्वा अपर्याप्त्या तदुपर्यपि गुणयितुमिच्छन्ती व्यक्त्यलाभाद्विषीदन्ती निरुक्तमेव ब्रह्मानन्दं मानुषानन्दस्थाने निक्षिप्य पुनरुत्तरोत्तरं मनुष्यगन्धर्वादिक्रमेण गुणयन्ती द्वितीयावृत्तिं समाप्य, अथैवं मितं गुणितब्रह्मानन्दं पुनःपुनर्मानुषानन्दरूपेण निक्षिप्य गुणनेऽपि न मितत्वं भवतीत्यालोच्य विश्राम्यन्ती, यतो वाच इति वक्तुमारेभे । मित्यसंभवमेवोपपादयति नहीति । विधिशतवचनेऽपि=शतकृत्वोपि सर्वपर्यायावर्तनेन ब्रह्मानन्दगुणनेऽपि; असंख्येयावृत्त्या गुणनेऽपीति यावत् । आनन्दस्य मितत्वं न भवति, अमेयत्वात् । तत्र दृष्टान्तः यष्ट्येति । कश्चिन्मानदण्डं गृहीत्वा कतिभिर्दण्डैर्व्योम मीयेतेति यतमानो हि उन्मानस्य दुष्करत्वात् विश्राम्येदेव । अथार्थान्तरम्–विधिशतानि परमात्मानन्दगानं प्रारभन्ते चेत् तदापि श्रममात्रमिति । तथोक्तम्—ईदृशनिदर्शनञ्च, तदा श्रमवत्त्वञ्चोक्तम् । भूभृदण्वोः अणुकुलाचलयोर्जलधौ मज्जनमविशिष्टम्, तथा चतुर्मुखादेरपि वेदस्यापि भगवद्गुणवर्णनपरिश्रमेऽपि परिश्रम एव पर्यवसानमिति ॥ तथाचैव गुणनार्थं पुनःपुनरावर्तने तात्पर्यात् तदसंख्येयतया प्रथमे भाग एवानन्तत्वमवगतमिति तादृशानन्दस्यैव श्रोत्रियेऽतिदेशात् तदानन्देऽप्यानन्त्यसिद्धिरिति । एवं शतमित्यस्य अनन्ता इत्यर्थकत्वात्, प्रजापतिशब्दस्यापि भूतभवद्भविष्यत्सर्वब्रह्माण्डाधिपतिसामान्यग्राहितया न प्रथमगुणनेऽप्यानन्दलाभ इति टीकादिदर्शिनः । चिन्तामणिरीतौ—विश्रान्तिः श्रान्तिमात्रादित्यत्र, 'यद्वा श्रमावधि' इति श्लोकविवक्षा । 'विधिशतवचनेऽपि नोन्मितिः तथोक्तम्' इत्यत्र, 'उपर्युपर्यब्जभुवोऽपि' इति श्लोकविवक्षा । इदं युक्तमेव । तथोक्तमित्यस्य विधिशतवचनेऽप्यमेयत्वं तत्र श्लोके उक्तमित्यर्थः । अथार्थान्तरम्=यद्वा श्रमावधि इति निदर्शनं हृद्गतम् । तत्=भक्तोदाहरणं कण्ठोक्तञ्च भूभृदित्याद्युक्तार्थपरेण कोमज्जतोरिति पादेनेति ॥ ५४६ ॥

(५४७) विश्वं मुक्तस्य देहो न खलु, तदपृथक्सिद्ध्यभावोपलम्भात् ;
नोपादानं ततोऽसौ कथयितुमुचितः सर्वशक्तित्वहानेः ।
नात्माशक्यं चिकीर्षेत् ; तदितरविषये निर्विघाता तदिच्छा ;
व्यापारे भिद्यमानेऽप्यविषमरसता दृश्यते क्वापि लोके ॥ ३० ॥

अत्र जगद्व्यापारवर्जमित्युक्तस्यार्थस्य विशदप्रतिपत्त्यर्थं मुक्तस्य जगदुपादानत्वाभावेन जगद्व्यापारवर्जनम्, व्यापाराभावेऽपि भोगसाम्यं प्रागुक्तमेव प्रकटमुपपादयति—विश्वमिति । अयमन्वयः-विश्वं मुक्तस्य तावत् देह एव न भवति । मुक्तापृथक्सिद्ध्यभावस्य स्फुटमेव विश्वस्मिन् उपलम्भात् तेनासावुपादानमिति कथयितुं नोचितः । तस्य सर्वशक्तित्वाभावात् । ननु मुक्तस्येच्छाविघाताभावो भवद्भिरेव महता प्रयासेनोपपादितः, अधुना पुनःप्रायेणेच्छाविघात एवोच्यते उपादानादिभावासम्भवादिति; तत्कथमित्याशङ्क्याह-नात्मेति। अयमर्थः-मुक्तो हि तत्त्ववेदी, तेन शक्यमेव चिकीर्षेत्(चिकीर्षतिना)शक्यम्। अतोऽशक्यविषये नेच्छाविघातो मुक्तस्य । यत्तु शक्यं तच्चिकीर्षेदेव(र्षत्येव) । तत्र तस्येच्छाविघातो नास्तीत्याह-तदितरविषय इति । अयमभिप्रायः—भगवान् खलु मुक्तस्याभिप्रेतेषु कैङ्कर्यादिषु कर्तव्येषु, यथाभिमतं पितृलोकादिकरणेषु च नेच्छां विहन्ति। तेन मुक्तस्येच्छाविघाताभावः । न ह्याकाशनिगरणमप्यभिलषति मुक्तः अनभिज्ञत्वप्रसङ्गात् । अशक्याभिलाषादन्यत् किमनभिज्ञत्वम् । ननु तर्हि व्यापारसङ्कोचे मुक्तस्य रससङ्कोचोऽपि स्यादित्याशङ्क्य पूर्वमेव बहुवारमुक्तमुत्तरमेव बालप्रायस्य चोदकस्य पुनरप्यनुग्रहादनुवदति-व्यापार इति । न हि राजा(ज)स्थानमातस्थुषामधिकारभेदेऽप्यानन्दवैषम्यमस्तीति बहुशोऽप्युक्तमस्माभिरिति॥५४७॥

(५४८) तत्तत्सेवाविशेषस्थिरपरिणमितः सार्वभौमप्रसादः
सूते भृत्यस्य साम्यं स्वयमनभिमतस्वामिचिह्नैकवर्जम् ।
एवं देव दयालुं शरणमुपगतैर्लभ्यतेऽनन्यलभ्या
निर्धूतावृत्तिशङ्का निरुपधिकरसा सव्यवस्था त्ववस्था ॥ ३१ ॥

---

३०. ननु सर्वज्ञत्ववत् सर्वशक्तित्वस्यापि मुक्ते स्थिततया कथं जगद्व्यापारवर्जनम्। वर्जने च व्यापारन्यूनतया स्यादानन्दन्यूनता । तत्राऽऽह **विश्व**मिति । किमत्र निमित्तत्वोपादानत्वोभयमिष्यते, आहो एकमात्रम् । तत्रोपादानत्वमसंभवि । देहात्मभावसंबन्धेन सूक्ष्मचेतनाचेतनविशिष्टत्वे ह्युपादानता । अन्तर्यामिता च ब्रह्ममात्रे इति स्थितम् । अत उपादानत्वौपयिकाकाराभावात् तद्रूपः षाड्गुण्यान्तर्गतशक्तिरूपगुणो नास्तीति न सर्वशक्तता । कार्यानुमेया खलु शक्तिः कार्यस्य कदाऽप्यसंभवे किमिति स्वीकार्या । इदमपि **असंनिहितत्वाच्चेति** सूत्रभागेनोक्तम् । श्रोत्रियस्य चेति भोगातिदेशश्रुतिरिव शक्त्यतिदेशश्रुतिरपि हि न लक्ष्यत इति । तर्हि तत्रेच्छाविघातः स्यादित्यत्राह **नात्माशक्यं चिकीर्षे**दिति । सर्वज्ञत्वादिति भावः । अतो निर्विघाता तदिच्छा तदितरविषय एव भवतीत्यन्वयः। व्यापारविशेषो नानन्दविशेषार्थमपेक्षितः; तदभावेऽपि राजसेवकानां विभिन्नकार्यप्रवृत्तत्वेऽपि सेव्यमानराजानन्ददर्शिनां राजानन्दमात्रवाञ्छिनां समानानन्ददर्शनात् । राज्याभिषिक्तपुत्रदर्शिनां तन्मातापित्रादीनां तदानन्दतुल्यानन्ददर्शनाच्च । विस्तरोऽन्यत्र ॥ ५४७ ॥

उक्तमर्थमन्तेवासिनामत्यन्तवैशद्याय सार्वभौमप्रसादवृष्टान्तेन द्रढयति—तत्तदिति । यथाधिकारमुचितसेवाविशेषे सति स्थिरपरिणमितः सार्वभौमप्रसादः सेवकानां साम्यं सूते । तत्राप्यनुचिताभ्यर्थनानिवारणाय तदेव साम्यं विशेषयति—स्वयमिति । न हि भृत्यः स्वयं स्वामिचिह्नमपि छत्रचामरादिकं सिंहासनाधिरोहणममिवाञ्छति । एवमेव दयालुं देवं शरणमुपगतैरध्यात्मविद्भिर्लभ्यते । अनन्यलभ्या, 'भक्त्या त्वनन्यया' इत्युक्तैरेवाधिकारिभिर्लभ्या; नापरैरधिकारिभिः । 'न च पुनरावर्तते' इत्यादिश्रुत्यैव निर्धूतावृत्तिशङ्का निरुपधिकरसा देशकालाद्युपाधिरहितनिरतिशयरसवती सव्यवस्था श्रीपतित्वशेषशायित्वाद्यसाधारणभगवद्गुणराहित्येन सव्यवस्था । अवस्था सर्वदेशसर्वकालसर्वावस्थोचितसर्वविधकैङ्कर्यलाभावस्थेत्यर्थः ॥ ५४८ ॥

(५४९) अत्राहुः सूत्रमन्त्यं पृथगधिकरणं केचिदाञ्जस्यलाभात्
अस्त्यावृत्ते निषेध्ये(वृत्तिर्निषेध्ये) त्विममिति हि(च) पदं, तेन शङ्कोत्थितेति ।
भाष्यादौ तन्न दृष्टं; भवति च सुगमं पूर्वशेषत्वमस्य ;
स्वादावृत्तिप्रसङ्गादपि निखिलजगन्निर्मितौ साम्यशङ्का ।। ३२ ।।

एतस्मिन् पादेऽधिकरणषट्कमर्थमेशातुकम्, अपरे पुनः सप्तममप्यधिकरणमेकसूत्रमित्याहुः, 'अनावृत्तिश्शब्दादनावृत्तिश्शब्दात्' इति । तत् प्रायेण[1] भाष्यकारानभिमतम् । अधिकरणप्रयोजनञ्च न भवतीत्याह—अत्राहुरिति । अयमत्र शब्दान्वयः—अत्रानावृत्तिप्रतिपादकमन्त्यं सूत्रं पृथगधिकरणं केचिदाहुः । तत्र हेतुमपि वदन्ति—आञ्जस्यलाभादिति । सूत्रस्वारस्यलाभादित्यर्थः । पूर्वाधि-

---

३१. राजन्यायेनापि राजाधिराजस्य प्रसन्नस्य समभृत्ये स्वासाधारणधर्मवर्जमेव साम्यप्रदानं युज्यत इत्याह तत्तदिति । दार्ष्टान्तिके सेवाविशेषाः=भक्तिप्रभेदाः प्रपत्तिप्रभेदाश्च । लोके राजाभिमतैः राजकार्यनिर्वाहप्रकारैः उत्कृष्टफलहेतुतया स्थिरं यथातथा परिणमितः भृत्योत्पादितो राज्ञः प्रसादः सेवकस्य राजसाम्ये हेतुर्भवति । तत्तु स्वामिनो राज्ञो यत् आधिपत्यादिचिह्नं तद्वर्जयित्वैव साम्यम् । तत्तु चिह्नं न केवलं सार्वभौमस्य, भृत्यस्याप्यनभिमतमेव । एवं तद्वत् देवं जगद्व्यापारलीलं दयालुं तत्प्रयोजकसहजदयासागरं श्रियः पतिं प्रपन्नैः इतराकभ्या, यतो निर्धूता=अपनीता पुनरावृत्तिशंका, तादृशी, निरुपधिकरसा कर्माद्युपाध्यनधीनलाभाविकानन्दानुभवरूपा अवस्था सव्यवस्था तु=जगद्व्यापारादिदेवतासार्वभौमासाधारणधर्मप्राप्तिसक्तिराहित्यसहितैव लभ्यते ॥ ५४८ ॥

३२. अधिकरणार्थ उक्तः । अत्रान्तिमसूत्रस्य पृथगधिकरणत्वे स्वारस्यदर्शैकदेशिमतेऽनभिमतिं दर्शयति अत्रेति अत्राधिकरणे अन्त्यं सूत्रं पृथक् जगद्व्यापारवर्जाधिकरणानन्तर्गतं तदुत्तराधिकरणरूपमाहुः केचित् । तत्र हेतुः आञ्जस्यलाभादिति । अत्राधिकरणे हि जगद्व्यापारवर्जं वा तत्सहितं वा मुक्तैश्वर्यमिति विचारः । जगद्व्यापारस्वीकारेऽपि भगवत्परतन्त्रतयैव तस्य सर्वपूर्वाधिकरणाविरोधेन वाच्यतया पक्षद्वयेऽपि पारतन्त्र्यमदुक्तदोषाऽऽशंकनस्यात्र क्रियमाणस्य संभवेन, सिद्धान्तमात्रमंगत्यभावात् नाऽऽञ्जस्यमिति भावः । किञ्च मोक्षफलस्येतरवैलक्षण्येनाऽनन्त्यं हि पृथगवश्यं स्थापनीयमिति । तत्र विचार्ये विषयवाक्यं किमिति चेत्—उच्यते । 'इमं मानवमावर्तं नावर्तन्ते' इत्येतदेव । अत्र एतन्मानवावर्तकर्मकावृत्तिनिषेधे

करणे समाप्ते पुनः पुनरावृत्तिशङ्कयाऽधिकरणान्तरमारभ्यत इति सूत्रस्वारस्यमस्तीति भावः। अत्रानुग्राहकं हेत्वन्तरमस्तीत्याह—अस्तीति। अयमत्र भावः—'इमं मानवमावर्तं नावर्तन्ते' इत्यस्मिन् वाक्ये' दृश्यते हीनमिति पदम्, तेनाऽऽवृत्तिरस्ति, एतल्लोकप्राप्तिमात्रं नास्तीति द्योत्यते तेनाऽऽवृत्तिशङ्कयाधिकरणोत्थानमिति पृथगधिकरणारम्भ इति। अत्रोत्तरमाह—भाष्यादौ तत्र दृष्टमिति। तर्हि, 'अनावृत्तिः शब्दात्' इति सूत्रस्य पृथगधिकरणत्वाभावे पूर्वाधिकरणशेषत्वं वाच्यम्, तच्छेषत्वं न दृश्यत इत्याशङ्क्याह—भवतीति। कथं पूर्वशेषत्वमिति पुनराशङ्क्याह—स्यादिति। अयमत्र भावः–सत्यसङ्कल्पस्य जीवस्य पुनरावृत्तौ(वृत्तिप्रसक्तौ?) सत्यां पूर्वाधिकरणोक्तं परमसाम्यमाशङ्कितुं शक्यते परमपुरुषोऽपि कश्चित् सत्यसङ्कल्पोऽस्मिंल्लोके वर्तते अयमपि कश्चित् सत्यसङ्कल्प इति तयोर्जगद्व्यापारेणात्यन्तसाम्यमिति। एतच्छङ्कानिवारणार्थं मुक्तस्याऽऽगमनमेव निषिध्यते। केवलं वैकुण्ठे भगवन्तं सेवित्वैव वर्तत इति पूर्वाधिकरणशेषत्वसिद्धिरेव तस्य(रेवैतस्य?) सूत्रस्येति। अत्रायं निर्णयः—'इमं मानवमावर्तं नावर्तन्ते' इत्यत्रेममिति शब्दः कृत्स्नस्य मानवावर्तस्योपलक्षणार्थः। सर्वकर्मविनिर्मुक्तस्य मुक्तस्य क्वचिदपि कर्माधीनपुनरावृत्तिप्रसङ्गाभावात्, 'इमान् लोकान्' इत्यत्र स्वच्छन्दकैङ्कर्यरूपानुगमनाङ्ग(द्यर्थ)तयोक्तं स्वच्छन्दपुनरावर्तनमपि सर्वत्र समानम्, 'इमान् लोकान्' इत्यस्मिन्नेव लोके पुनरावृत्तिश्रवणादिति ॥ ५४९ ॥

(५५०) सर्गाद्यावर्तलीलारससहचरिते दण्डशासे नियुक्तं
जीवं देवो विमुच्य क्रमत इति सयुग्भावधन्यं भुनक्ति।
कर्मात्यन्तोपशान्तेः, 'इह न च पुनरावर्तयत्येनम्' इत्य-
प्याम्नातेः कर्ममूलाक्षयफलकथनाद्युत्थशङ्कोपशान्तिः ॥ ३२ ॥

इति जगद्व्यापारवर्जाधिकरणम् ॥ १५६ ॥

---

निषेध्ये निषेधप्रतिसंबन्धिनि प्रतियोगितया निविष्टे आवर्ते इममिति पदं ह्यस्ति विशेषणम्। तद्वैयर्थ्याय आवर्तान्तरे आवृत्तिः संभवत्येति शंकाऽत्रोत्तिष्ठतीति। चकारेण, 'तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति; तेषामिह न पुनरावृत्तिः' इति वाक्ये इहेति पदमपि तत्तत्यक्तलोकमात्रपरमस्तित्याशयः सूच्यते। सिद्धान्तस्तु—इममिति पदं अतिजुगुप्सनीयत्वेन प्राकृतत्वेन रूपेण त्रैकालिकसर्वनिर्देशाहि। 'यतो वा इमानि भूतानि' इति वाक्ये इमानीति पदवत्। न तु किञ्चिद्व्यवच्छेदकम्। अतो न कदाऽप्यावृत्तिरिति। आवृत्तिरिति पाठे नास्त्यावृत्तिरिति प्रतिज्ञा; निषेध्यविशेषणतया इममिति पदमस्ति हीति तत्र हेतुरिति वाक्यद्वयं कार्यम्। चिन्तामणिवाक्यं स्वर्थोपपादकं न श्लोके आवृत्तिपदमेवेत्येतत्स्थापकम्; चिन्तामणिकोशेऽपि श्लोके आवर्ते इति पाठदर्शनात्। 1. चिन्तामणौ, प्रायेणभाष्यकारेत्यत्र प्रायेणेत्यनेन सर्वव्याख्यानाधिकरण इव अधिकरणाङ्गानां संशयादीनामनुक्तावप्यधिकरणान्तराभिमतिः स्यादिति सूच्यते। अत्र स्थानभिमतिमाह भाष्यादौ इति। आदिना दीपसारयोः व्याख्यायाश्च ग्रहणम्। संभवत्यैकाधिकरण्ये पार्थक्यमयुक्तमिति बहुत्र शांकरीतिस्यो ऐकाधिकरण्यं रोचयतामत्र परं तदभावो न युज्यत इत्याशयः। पूर्वशेषतया शंकामैकाधिकरण्यसंपादिकामाह स्यादित्यादिना। स्वातन्त्र्येऽपि स्वीकर्तव्ये सति कथं व्यापारस्याप्यभाव इति शंकेति भावः ॥ ५४९ ॥

ननु, 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' इत्यर्थवादवचनवत्, 'न च पुनरावर्तते' इत्यादिकमपि चिरकालावस्थायित्वमात्रेण चरितार्थं स्यादित्याशङ्क्य सर्वकर्मविनिर्मुक्तस्य पुनरावृत्तिप्रसङ्गाभावान्नित्यमेव कर्मकृतां पुनरावृत्तिं निषेधतीति दर्शयति—सर्गादीति। अयमत्रान्वयः—सृष्टिस्थितिसंहारावर्तलीलारससहचरिते दण्डदासप्राये संसारपरिवर्तने नियुक्तं जीवं दृष्ट्वा तुष्टबुद्धिर्भगवान् तस्य पारितोषिकप्रदानमिव संसारमोचनोपलम्भसौख्यं प्रदाय सायुज्यधन्यं तमेव भुनक्ति= परिपालयतीत्यर्थः। सर्वेषामेव कर्मणामत्यन्तोपशान्तेः, 'न च पुनरावर्तते' इति वाक्येनैव भगवान् न पुनरावर्तयत्येनं मुक्तमित्याम्नाते सति, 'अक्षय्यं ह वै चातुर्मास्य' इत्याद्युक्ताक्षय्यफलकथनादिप्रयुक्तशङ्काया उपशान्तिः(उत्पत्तिरेव न) स्यात्। अयमर्थः— कृत्स्नकर्मविनिर्मोकाभावे हि, 'न च पुनरावर्तते' इति वाक्यस्य यथाकथञ्चिदन्यथाकरणं स्यात्; कृत्स्नकर्मविनिर्मोके(मोक्षे) प्रतिपन्ने सति अपुनरावृत्तिवचनं यथाश्रुतमेव ग्राह्यमिति साधीयान् अयं मार्ग इति ॥ ५५० ॥

इति जगद्व्यापारवर्जाधिकरणम् ॥ १५६ ॥

चतुर्थाध्यायचतुर्थपादाधिकरणप्रधानार्थप्रतिपादनम्—

(५५१) [1]स्वाविर्भावोऽपवर्गे [2]निरुपधिनियतस्वप्रकार्यन्तदृष्टिः
[3]चिद्रूपस्यैव तद्वच्छ्रुतिमकुटमितैः स्वप्रकारैः सहेश्वा।

---

३३. सूत्रे शब्दात् इति शब्दप्रमाणमात्रोपन्यासेऽपि भाष्ये अनावृत्तिविषये श्रुतिस्मृतिरूपशब्दोपन्यासमात्रेणानुपरम्य तर्कोऽपि प्रदर्शितः। तत् कुत इति शंकायाम्, अनावृत्तिवाक्यम्, 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' इति वाक्ये अक्षय्यपदवत् शीघ्रविनाशाभावाभिप्रायम्, मुक्तेरपि जन्यतया नाशावश्यम्भावादिति शंकापरिहाराय, कर्मणा वा स्वेच्छया वा पारतन्त्र्यमात्राद्वा न पुनरावृत्तिप्रसंग इति अपुनरावृत्तिश्रुतेर्मुख्यार्थत्वमेवेत्युच्यत इत्याशयेनाह सर्गेति। दण्डदासः सुदीर्घकालानुवृत्तो दासः। बद्धैः संसारस्य रसमयतया मन्यमानत्वात् संघोषेण नीयमानत्वाच्च दासता। दण्डः शिक्षा वा। ऋणापरिहरणात् यो दासो भवति, स दण्डदास इत्युच्यते। तथा वा कश्चिदर्थः। रासक्रीडायामिवात्रापि कृष्णस्य रसोऽस्तीति ज्ञापनाय लीलारससहचरिते इत्युक्तिः। सर्गस्थितिसंहारविषयतया जीवानामावर्तनमेव लीला। तदधीनरसयुक्ते॥ तत्र कर्मवशान्नियुज्य व्याजवशात् क्रमेण विमुच्य सयुग्भावं प्रदाय तेन धन्यं तं तद्रूपयैव सर्वदा परिपालयति। श्रुतौ, 'एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इति पुण्यफलसामान्यस्य अनित्यत्वमुक्त्वा, 'नास्त्यकृतः कृतेन' इति अकृतस्य स्वाभाविकस्यास्योपायान्तरोपदेशादपि स्थिरत्वनिश्चयः। भोक्तव्यकर्माभावाच्च, विशिष्यापुनरावृत्तिवचनाच्च, स्वेच्छायाः परमात्मेच्छाया वा पुनरावृत्तिविषये प्रसक्त्यभावाच्च। चातुर्मास्यादिकर्माधीनाक्षयफलवचनादिदर्शनेन तद्वदर्थान्तरशंका चेदुत्तिष्ठति, तस्या एवं शान्तिः कार्या। सूत्रे शब्दादित्यस्य वाचकशब्दात् सूचकशब्दाच्चेत्यर्थः; सर्वमिहोक्तं सूचकशब्दसूचितमेवेति। अतोऽनावृत्तिवचनयथाश्रुतार्थः सुस्थ इति॥

जैवाविर्भावहेतुः स्फुटभवदविभागावविर्भावरूप-
ज्ञानत्वज्ञानदायी चिति कृतपितृलोकादिसंकल्पशक्तिः।
तन्मूलांगाद्यभावेऽप्युचितबहुतनूः केवलत्वश्च तन्वन्
स्वैकान्तान्यांशसाम्यस्थिरद इति परो व्यक्तमन्तेऽभ्यधायि ॥ ५५० ॥

[4]सङ्कल्पादेव सिद्धिः [5]तनुषु च नियमोन्मुक्तता [6]ब्रह्मसाम्य-
प्राप्तौ तल्लक्षणांशोज्झनमिति चरमाध्यायतुर्याङ्घ्रिसारः(राः) ॥ ३४ ॥

अत्रोक्ताधिकरणषट्कार्थविशेषान् विभज्यानुकथयति—स्वाविर्भाव इति । अपवर्गे स्वस्वरूपाविर्भावः प्रथमाधिकरणार्थः । एवं पञ्चभिरधिकरणैः पञ्चार्थाः प्रतिपाद्यन्ते । निरुप(पा)धिकतया नियतस्वशरीरिपर्यन्तदृष्टिर्द्वितीये । तृतीये तु चिद्रूपस्यैव जीवस्य तद्वदेव श्रुतिशिखरप्रमितैः स्वगुणैस्सह दर्शनम् । चतुर्थे पुनः सङ्कल्पादेव स्वाभीष्टसिद्धिः । पञ्चमे तु स्वशरीरेष्वनियमेन परिग्रहः । षष्ठे पुनः परब्रह्मसाम्यप्राप्तौ(म्यापत्तौ) जगत्कारणत्वमोक्षप्रदत्वश्रीपतित्वादिब्रह्मलक्षणवर्जनमिति चतुर्थाध्यायचतुर्थपादाधिकरणषट्कार्थसार इति ॥ ५५१ ॥

चतुर्थाध्यायार्थस्य सर्वस्यापि मृषावादिमते दुर्घटत्वनिरूपणम्—

(५५२) ध्यानादिं तत्प्रभावं करणभृत इतो देहकाराकुटीरात्
निष्क्रान्तिं ब्रह्मनाड्या गतिमपि सुपथा स्वप्रकाशश्च साम्यम् ।
इच्छातः स्वेष्टसृष्टिं परममपि परब्रह्मणा भोगमात्रे
साम्यं मायामतस्थः कथमिव घटयेत् अन्तिमाध्यायसारम्(द्यम्) ॥ ३५ ॥

अत्र चतुर्थाध्यायार्थस्य कार्त्स्न्येन मृषावादिनां सङ्घटनमेव नास्तीत्याह—ध्यानादिमिति । ध्यानम्=भगवद्ध्यानम् । आदिशब्देन तदङ्गभूतं कर्मशमदमादिकम् । तत्प्रभावमुत्तरपूर्वाघयोरश्लेषविनाशरूपम् । उत्क्रान्तिपादोक्तं करणभृतः=जीवस्य देहकाराकुटीरान्निर्गमनं ब्रह्मनाड्या । गति

---

३४. अथान्तिमपादार्थसारसंग्रहः स्वाविर्भाव इति । 1. अपवर्गे मुक्तौ न बाह्यरूपाविर्भाव, किंतु स्वस्वरूपाविर्भावः, 2. निरुपधि यथातथा स्वाभाविकतया नियतं सार्वकालिकम् असाधारणं वा स्वप्रकारिभूतो यः परमात्मा तदन्तस्य तत्पर्यन्तस्य स्वस्य दृष्टिः, 3. पूर्वाधिकरणोक्तस्वस्वरूपदर्शनं न स्वरूपमात्रदर्शनम्, किंतु परमात्माविभागेनापि दर्शनम्; स्वविशिष्टपरमात्मपर्यन्तदर्शनमिति यावत् । तद्वत् प्रकारिदर्शनवत् स्वस्य ज्ञानरूपस्य तद्वत् ज्ञानरूपत्ववदेव श्रुतिमकुटमितैः=वेदान्ते प्रजापतिवाक्यादिप्रतिपादितैः अपहतपाप्मत्वादिभिः ब्राह्मैरष्टभिर्धर्मैः सह दर्शनम् । 4. प्रयत्नादिनिरपेक्षस्वसंकल्पमात्रेण स्वाभीष्टपित्रादिसमुत्थानसंपत्तिः परब्रह्मानुभवशेषतया । 5. स्वसंकल्पेन वा स्वसंकल्पनिरपेक्षपरसंकल्पेन वा संभवत्सु स्वशरीरेषु नियमराहित्यम्—न तत्सद्भावनियम:, अभावेऽपि ब्रह्मानुभवाक्षतेः, नापि इयत्तानियम इति । अप्राकृत एव देह इति नियममात्रमस्ति । 6. एवं ब्राह्मगुणाविर्भावतदनुभवादिरूपब्रह्मसाम्यस्य ब्रह्मासाधारणजगद्व्यापारलक्ष्मीपतित्वमुमुक्षूपास्यत्वमोक्षप्रदत्वसर्वस्वामित्वसर्वशक्तित्वाद्यनन्तधर्मराहित्येनैव प्राप्तिरिति षडर्थाः इह षड्भिरधिकरणैरुक्ता इति ॥ ५५१ ॥

३५. मृषावादिनः पूर्वाध्यायत्रयवत् तुर्योऽप्यध्यायः प्रतिकूलः । स हि स्वपक्षानुगुणतया सूत्राणि व्याख्यातुमपारयन्, सगुणपक्षविषयकत्वेनैवेदमिदमिति वदन् स्वपक्षे सूत्रानुगुण्याभावं सम्यक् प्रतिपद्यत इत्याह ध्यानादिमिति । आवृत्त्याद्यधिकरणार्थम्, तदधिगम उत्तरपूर्वाघयोरिति सूत्रोक्तमुत्तरपूर्वाघाश्लेषविनाशविधानरूपं ध्यानरूपविद्याप्रभावम्, करणभृतः=इन्द्रियाध्यक्षस्य जीवस्य मुक्त्यर्थं इतः देहात्

सुपथा = अर्चिरादिमार्गेण गतिम् । स्वप्रकाशाञ्च परञ्ज्योतिरुपसम्पद्य स्वेनरूपेणाभिनिष्पत्तिम् । स्वसङ्कल्पादेव स्वाभीष्टसृष्टिम् । परममपि परब्रह्मणा भोगमात्रे साम्यम् । एतादृशं सर्वमप्यत्रोक्तमर्थजातमन्तिमाध्यायसारभूतं मायामतस्थः कथमिव घटयेत् । न कथमपि घटयेदित्यर्थः । एतस्य सर्वस्याप्यर्थस्य सगुणब्रह्मसम्बन्धित्वेन निर्गुणब्रह्मसम्बन्धाभावात्, तस्य च निर्गुणस्य परब्रह्मणः क्वचिदपि फलाध्याये निर्देशाभावाच्चेत्यर्थः ॥ ५५२ ॥

मृषावादस्य कर्मदेवताब्रह्मकाण्डरूपत्रिकाण्डीविरुद्धत्वनिरूपणम्—

(५५३) मानामानप्रभेदप्रभृतिविभजनादादिमे कर्मभागे
'नाना वा देवते'त्याद्यनुपद(परि)पठनान्मध्यमे देवतांशे ।
भागेऽस्मिन् भेदधर्मप्रभृतिकथनतः सौगतादेश्च भङ्गात्
मीमांसायां(याः) त्रिकाण्ड्यां क्वचिदपि न मृषावादगन्धावकाशः ॥ ३६ ॥

पूर्वं मृषावादिनोऽन्तिमाध्यायार्थविरोधमुक्त्वा तस्य त्रिकाण्ड्यां क्वचिदपि मीमांसायां न्यायानुकूल्यं नास्तीत्याह—मानामानेति । कर्मकाण्डे तावत् मानभेदप्रयुक्तिनक्रमकर्त्रादिप्रतिपादनपरिपाटीमुपलभामहे । तेन भेदपर एव प्रथमकाण्डः । तथा मध्यमेऽपि काण्डे, 'नाना वा देवता' इत्यादिसूत्रकलापेन देवताभेदादिः प्रतिपाद्यते । सोऽपि मृषावादिनां विरुद्ध एव । अस्मिन्नपि ब्रह्मकाण्डे गुणगुणिभेदादिदूषकाणां सौगतादीनां तत्तदर्थोपपादनेन निराकरणमेव सर्वतो दरीदृश्यते । तैस्तैर्हेतुभिस्सौगतादिमतानुसारेण प्रवर्तमानस्य मृषावादस्य त्रिकाण्ड्यां मीमांसायां न क्वाप्यवकाशः ॥ ५५३ ॥

---

देहरूपात् कारागृहात् वागादिसंपन्नस्य ब्रह्मनाडीद्वारा निष्क्रमणं द्वितीयपादोक्तम्, सुपथा अर्चिरादिना देवयानेन गमनं तृतीयपादाभिहितम्, एवं फलभूतैरप्युपायैः साध्यं स्वासाधारणाकारसाक्षात्कारं संकल्पमात्रेण भगवदिच्छानुविधायिस्वेच्छाविषयतन्वादिसृष्टिं व्यापारवर्जं भोगमात्रेण परमं ब्रह्मसाम्यञ्च, निर्विशेषब्रह्मरूपशशविषाणायमानकिञ्चिद्वस्तुवादी सविशेषब्रह्मादिसर्वप्रामाणिकपदार्थापलापी कथमिव बादरायणोक्तं स्वपक्षे समञ्जसयेत् । सगुणोपनिषद्व्याख्यारूपत्वात् शारीरकस्य तेन सह स्वाभिमतार्थे स्वयमप्रमाणतामेव हृदये मन्वीत ॥ ५५२ ॥

३६. एवं यथास्थानमध्यायचतुष्टयार्थस्याद्वैतमतेऽनुपपन्नतामुक्त्वा शारीरकस्य पूर्वमीमांसाशास्त्रान्तिमभागत्वात् अनेन भागेन पूर्वभागस्य प्रमाणादिनिरूपणविषये उपजीव्यत्वात् तन्नोपक्रमेऽपि सर्वस्य व्यावहारिकसत्यत्वमात्रस्याकथनाच्च न तन्मतलवलेशस्याप्यवकाश इत्याह मानेति । मानभेदः विधिमन्त्रस्मृत्याचारनामधेयादिरूपः; अमानभेदः वेदबाह्यकुदृष्टिशास्त्रकुतर्कादिरूपः । प्रभृतिशब्देन द्वितीयाद्याद्यर्थकर्मभेदादिप्रदर्शनम् । आदिमे कर्मभागे कर्मकाण्डे द्वादशलक्षण्याम् । मध्यमे देवविषयके संकर्षाख्ये भागे । राजत्वाधिराजत्वादिविशेषणविशिष्टेन्द्रादीनां देवतानां पृथक्त्वात् भागे प्रदाननानात्वादेः अनुपरिपठनात् विस्पष्टपाठात् । अनुपदेति पाठे धर्मानुपेक्षया राजत्वादिविशेषणपदभेदमनुसृत्य भेदपठनादित्यर्थः । 'प्रदानवदेव तदुक्तम्' इति सूत्रे द्रष्टव्यम् । अस्मिन् शारीरके भेदव्यपदेशात्, धर्मोक्तेः, नेतरोऽनुपपत्तेः इत्यादितः ब्रह्मसविशेषत्वजीवभेदादेः स्पष्टत्वात् मिथ्यावादिबौद्धादिभञ्जनाच्च काण्डत्रयात्मके मीमांसायां हि न कुत्रापि किञ्चिदपि तन्मतानुकूलमिति ॥ ५५३ ॥

(५५४) अध्यन्तोदन्वदन्तस्सृतिरियमुदिता देशिकैः कर्णधारैः
मुक्त्यर्थं(तत्त्वार्थ)ज्ञानपारं गमयति ; विशदं त्वन्यदीक्ष्यं विमुक्तौ ।
कर्तव्ये कल्पकारैः क्वचिदभिदधिरे कृत्यसन्देहभेदाः ;
तत्त्वेऽप्येवं क्वचित् स्यात् ; तदपि न वितथः स्वोपयुक्तांशबोधः ॥ ३७ ॥

एवं निस्सन्देहमेव निखिलमप्यर्थमुक्त्वा, 'क्वचित् सन्देहोऽवशिष्यते चेत्—सोऽपि कालक्रमेण उपशाम्यति, अत्र न सर्वदोपशान्तश्चेत्—स तु मुक्तदशायामुपशाम्यतु ; नैतावता स्पष्टमेव प्रतिपन्नस्यार्थस्य कोऽपि विरोधः; एषा खलु मर्यादा न केवलमध्यात्मशास्त्रप्रसङ्ग एव, अनुष्ठानेष्वपि कल्पसूत्रप्रसिद्धेष्वनुसर्तव्या' इति दर्शयति—अध्यन्तेति। अध्यन्तस्तावदुदन्वान्। तदन्तस्सृतिरियञ्च कर्णधारप्रायैः देशिकैरभिधीयते। देशिकोपदिष्टा गतिः पारं गमयतीति सुप्रसिद्धं लोके। एवं तत्त्वज्ञानदेशिकैरुपदिष्टेयं सृतिः= पदवी ज्ञानपारं गमयतीति यावत्। यदत्रापरिज्ञातम्, तत् मुक्तावेव द्रष्टव्यम्। न हि सर्वमपि लोके प्रमाणपर्यालोचनमाचरन्तोऽपि जानन्ति । कतिकति सन्देहपदं क्रान्तदर्शिनामपि । इत्थमध्यात्मविषये मर्यादा। अनुष्ठानेऽप्येषैव रीतिरिति दर्शयति—कर्तव्य इति । कल्पकारैरपि कर्तव्येष्वर्थेषु ससंशयमेव केचिदर्थाः प्रख्याप्यन्ते। न च तावता कल्पोदितं विमुच्यते। एवं तत्त्वार्थप्रतिपादनेऽपि निस्संशयप्रतिपन्नमर्थं परिगृह्य सन्तोष्टव्यमात्मविद्भिः। अवशिष्टं तु कालेनावभास्यते । अनवगतमपि, परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पत्तिदशायां विशदमेवाव-

---

३७. ननु शास्त्रमिदं मीमांसाभिधानं वेदवेदान्तवाक्यार्थनिर्धारणात्मकमिति सत्यम् । तावता सर्वं वाक्यं विचारितमासीदिति न सुवचम्, प्रत्यक्षविरोधात् । मीमांसायामधीतिनामपि वाक्यानि बहूनि पदार्थवाक्यार्थनिर्धारणात् विचारणीयदशामनतिक्रान्तान्येवोपलभ्यन्ते । तस्मात् बहवोंशाः संदेहास्पदमेवेति सर्वनिर्णये व्यापरितव्यम् । तत्र यदि निर्गुणब्रह्मादिनिर्धारणमपि पदं दधीत, क्षेमो नः इति वदतः प्रत्याह अध्यन्तेति । समुद्रपारगमनाय नौकां निर्माय कर्णधाराः नौकानेतारो भवन्तो यथा, तथा व्यासादयस्तदनुचराः व्याख्यातारो बोधायनरामानुजादयश्च वेदान्तमहोदधौ मार्गं निर्दिष्टवन्तः सन्ति। स मार्गस्तत्त्वज्ञानाख्यं पारं गमयत्येव । एतदनुक्तसंदिग्धार्थनिर्णयोऽप्येतत्प्रदर्शितया दिशैव कर्तव्यो भवति । एतन्निर्णीतार्थविपरीतनिर्णयेन देशिकैः मार्गदर्शकैरुपदिष्टस्य मार्गस्य ध्वंसने तु पारस्यानाप्तिरेव । महता प्रयासेन महादेववत् सार्वज्ञ्यसंपन्नानामपि समुद्रे मार्गातिरिक्तभागवत् सर्वं यथावत् विदितं न भवति । प्रकृतशारीरकप्रतिपादितार्थनिर्धारणमात्रेणैव मुक्त्युपायानुष्ठाने मुक्तिलाभे च सिद्धे, 'सर्वं ह पश्यः पश्यति' इत्यादिशास्त्रात् तत्रैव सर्वं द्रक्ष्यामः । स्वर्गनरकादिविषयकसाक्षात्कारादिष्विव तादृशेष्वर्थेष्वनास्थैव युक्ता । जातः संदेहः सर्वो निवर्त्य इति न नियमः । कर्तव्ये=अनुष्ठेये क्रियाकलापेऽपि कल्पसूत्रकारैः संदेहाः प्रदर्श्यन्ते । अननुष्ठानलक्षणमप्रामाण्यं क्वचिदास्थीयते । प्रायश्चित्तादिना क्रियापूर्तिः कथ्यते । एवं क्रियायामिव वस्तुन्यपि प्रकृतार्थसंबन्धिनि किञ्चिदंशविशये सत्यपि चतुर्विंशतितत्त्वोत्पत्ति-विभागादौ विवादे सत्यपि मुख्यमुक्तपरदेवतापारमार्थ्यादिः शारीरकप्रमितविरोधेन सुनिश्चितत्वात् नोपयुक्तांशबोधवैकल्यमिति । अतोऽन्यत् मुक्त्यवसर ईक्ष्यं भविष्यतीति तत्रोदासितव्यम्, यत्र निर्णयसामग्रीदुर्भिक्षम् ।

लोकयिष्यते। अथापि स्वोपयुक्तांशबोधः सर्वत्रापि न वितथ एवेति ॥ ५५४ ॥

(५५५) श्रुत्यन्तैकान्ततर्कक्रमगरिमधृतौ तूलवच्छैलवर्गः
तत्सिद्धब्रह्मबोधद्युमणिरुचि तमस्स्तोमकल्पोऽन्यजल्पः(कल्पः?)।
मोक्षोपायैकराज्ये तदितरविषयः किङ्करत्वं भजन्ते
मुक्तानन्दामृतैकोदधिपृषतकणस्पर्धिनोऽन्ये पुमर्थाः ॥ ३८ ॥

इत्थं चतुरध्यायीनिर्णीतार्थं चतुर्भिः पादैर्विशोध्योपवर्णयति—श्रुत्यन्तेति। समन्वयाविरोधसाधनफलानि खलु चतुरध्याय्यर्थत्वेनोपवर्ण्यन्ते। तदेकैकमेवोक्त्वा निगमयति। प्रथमाध्याये श्रुतिवाक्यानुकूल(गुण)तर्कनिरूपणमकारि। तस्य च तर्कस्य गौरवनिरूपणे सर्वेऽपि शैलास्तूलायन्ते। द्वितीये त्वध्याये परपक्षनिराकरणं क्रियते। तदेतदाह-तत्सिद्धेति। प्रथमाध्यायसिद्धब्रह्मपरिज्ञानादित्यप्रकाशे तमस्तोमकल्पः प्रतिवादिनां जल्पः(कल्पः?)। तेन परपक्षप्रतिक्षेपप्रधानं द्वितीयलक्षणमित्युक्तं भवति। तृतीयाध्यायार्थमपि विभज्य दर्शयति—मोक्षोपायेति। मोक्षोपायाः सद्विद्यादयः; तेषामैकराज्ये तदितरविषयो विद्याङ्गकर्मविषयः शमदमादिविषयश्च किङ्करत्वं भजन्ते=शेषभावं भजन्त इत्यर्थः। तेन तृतीयाध्यायार्थोऽनुक्रान्तः। चतुर्थाध्यायार्थमप्याह—मुक्तेति। मुक्तानन्दामृतरूपमहार्णवपृषतकणस्पर्धिनोऽन्ये पुरुषार्थाः। स्वर्गस्वाराज्यादिसुखानि परमपुरुषानुभवसुखमहार्णवपृषतभावं भजन्त इत्यर्थः। तेन पुरुषार्थान्तरपरित्यागेनापुनरावृत्तिलक्षणो मोक्ष एवाध्यात्मविदामादर्तव्य इत्युक्तं भवति ॥ ५५५ ॥

यथावद्विदितचतुरध्याय्यर्थस्याधिकारिणो मोक्षपर्यन्तफलसिद्धिप्रतिपादनम्—

(५५६) पारावर्यं विविच्य प्रथममवितथैरागमैस्तत्त्ववर्गे
संसारे तीव्रभीतिः परसमधिगमे तीव्र(ऽतीव?)निष्पन्नरागः।
कश्चित् विद्याविशेषं सपरिकरमधिष्ठाय शान्तान्तरायः
सम्पद्य ब्रह्म भुङ्क्ते निरुपधिकमनावृत्तिरित्थं श्रुतार्थः ॥ ३९ ॥

---

लुप्तसंकर्षक,ण्डपरिस्थित्यज्ञानमिवाप्रधानांशाज्ञानं न दोषाय। 'योऽहमस्मि स सन् यजे' इति च श्रुतिः॥५५४

३८. शारीरकादितुल्यमन्यत् किमपि नेति एतन्महिमानं स्वरूपतोऽर्थतः उपायतः फलतश्च दर्शयति श्रुत्यन्तेति। मीमांसा हि वाक्यार्थनिर्धारणार्थः प्रमाणेतिकर्तव्यताभूतः सत्तर्कनिकुरुम्बः। एषां तर्काणां गुरुत्वे गण्यमाने सुमेर्वादिसर्वशैलसमुदायोऽपि तूलवत् लघिष्ठः स्यात्। लक्ष्मण इव रावणादिना नूनमविचाल्य एवाखिलोऽपि तर्कः। तत्तदधिकरणप्रधानप्रमेयनिर्णायकन्यायस्य कदाप्यबाधात्। अत एतदनुगृहीतवेदान्तवाक्यार्थनिर्धारणं ध्रुवं सहस्रकिरण एव। एतस्य रुचि=प्रभायां प्रसृतायां बाह्यकुदृष्टिजल्पः तत्कल्पो वा (तत्पक्षो वा) सर्वः तमोवत् न कुत्रापि स्थातुमर्हति। एतत्फलश्चोपायानुष्ठानम्। तत्र वैदिकलौकिककर्माणि सर्वाणि, सम्यक्चि चेत्, शेषभूतान्येव। अन्यानि चालब्धावसराणि। एतदुपायसाध्यश्च परमः पुरुषार्थो मुक्तौ परमानन्दः। अन्ये पुरुषार्थाश्चैतल्लवलेशस्पर्धिनः=तत्समानाः, तस्यापि प्रासिविरोधित्वादुपेक्षणीयाश्चेति महत्तममिदं महार्थं महाफलं शास्त्रम् ॥ ५५५ ॥

चतुरध्याय्यर्थमित्थं यथावदधिगतवतोऽधिकारिणः क्रमेणोपलभ्यमानमपवर्गपर्यन्तं फलं दर्शयति—पारावर्यमिति। प्रथममवितथैरागमैस्तत्त्ववर्गे पारावर्यं विविच्य, संसारे वैराग्यपादोक्तक्रमेण तीव्रभीतिः उभयलिङ्गपादोक्तक्रमेण परमपुरुषचरणारविन्दसमधिगमे तीव्रमेव निष्पन्नरागो भवति पुरुषः। अनेनोभयलिङ्गपादपर्यन्तं दशभिः पादैरुपवर्णितोऽर्थ उक्तः। अतःपरं पादषट्कार्थं सङ्कलय्य दर्शयति—कश्चिदिति। सद्विद्यादिषु सपरिकरं कञ्चिद्विद्याविशेषमधिष्ठाय शान्तान्तरायः सन् ब्रह्मविद्यानिष्ठो ब्रह्म सम्पद्य वैकुण्ठवैमानिकेषु स्वयमन्यतमत्वं प्रतिपद्य निरुप(रव)धिकमेव परवासुदेवपदारविन्दपरिचारको भवति। तस्य [अधिकारिणः?] विशेषणद्वयमाह—अनावृत्तिरिति। 'न च पुनरावर्तते' इति श्रुतिविषयः। इत्थं श्रुतार्थः='येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्' इत्याचार्यमुखादधीतसर्वार्थ इत्यर्थः॥ ५५६॥

अध्यात्मतत्त्वजिज्ञासुसज्जनसन्तोषस्य स्वानुगृहीतप्रबन्धफलत्वेन कीर्तनम्—

(५५७) साऽसौ सासूयतत्तत्कुमतिमतसमुन्मूलनी मूलनीति-
श्रेणीनिःश्रेणिकल्पा त्रियुगपथरथारोहसूतं सुवीत।
सन्तस्सन्तापवर्गप्रशमनपटुना तत्त्वबोधेन सन्तं
सन्तोषं ब्रह्मसूत्राधिकरणचरणाध्यायसारावलिर्वः॥ ४०॥

स्वोक्तस्य ग्रन्थस्यापवर्गाधिरोहणे(ण) हेतुत्वेन गौरवं दर्शयन् अधिकरणसारावलीत्यभिहितनामधेया सेयं कृतिर्भवतां परमपदरथारोहसूतं सन्तं सन्तोषं सुवीतेति शिष्याणामाशीरूपमिदं पद्यमारचयति—साऽसाविति। सुप्रसिद्धेयमित्यर्थः। सासूयतत्तत्कुमतिमतसमुन्मूलनी असूयासहिततत्तत्कुमतिमतसमुन्मूलनी, मूलनीतिश्रेणीनिःश्रेणिकल्पा= जगत्कारणविषयन्यायवीथीनिःश्रेणिसदृशी। त्रियुगपथरथारोहसूतं = परमपुरुषप्राप्तिमार्गरथारोहणे सूतं सारथिम्। सन्त इति विदुषां सम्बोधनम्।

---

३९. ज्ञानवैराग्यानुष्ठानफलानि एतद्द्वयायिभिः क्रमेण लम्भनीयानीत्याह पारावर्यमिति। इत्थं श्रुतार्थः=शारीरकोक्तक्रमेण सर्वार्थश्रावी तत्त्ववर्गे=वेदान्तावगतानां तत्त्वानां तदन्तर्गतानां देवतानाञ्च समुदाये अवितथैः विपरीतार्थविनाभूतैः यथावद्गृहीतार्थैरागमैः पारावर्यं परत्वमवरत्वञ्च यथायथं विभज्य गृहीत्वा, द्वितीयाध्यायोक्तपरमतनिरासप्रक्रियासहकारेण प्रथमाध्यायादिना तत्त्वं गृहीत्वा, तृतीयाध्यायप्रथमपादोक्तज्ञानात् संसारात् अत्यन्तं भीतः उभयलिङ्गपादोक्तज्ञानात् प्राप्यतृष्णापरीतः गुणोपसंहारपादोक्तेषूपायेष्वेकम् अङ्गपादोक्तपरिकरविशिष्टमनुतिष्ठेत्। इदमेतत्कृत्यम्। अथ भगवान् पुण्यपापादिरूपमन्तरायमपोह्य परमपदं नीत्वा पूर्णं स्वं सर्वदैव भोजयन् प्रमोदते इति शेषं तत्कृत्यम्। तेनायम् अनावृत्तिस्तद् भुंक्ते॥ ५५६॥

४०. शारीरकशास्त्राध्ययनफलमदर्शि; सारावलिपठनफलं दर्शयति सेति। सा श्रीरङ्गभर्तृप्रसत्त्यै कृता, असौ तद्दत्तां वेदान्ताचार्यसंज्ञामन्वर्थयन्ती, सासूयानां तत्तत्कुमतीनां सूत्रवाह्यसांख्यादि-सूत्रार्थान्यथाकारिशांकरादिकुदृष्टीनां मतानि अर्थवैशद्यविधानेन सम्यक् समूलं लोपयन्ती, तत्तदधिकरणप्रतिपिपाद यिषितानां मुख्य-मूलभूतन्यायानां श्रेण्याः पंक्त्याः यथावत्प्राप्तये आरुह्यमाणनिःश्रेणितुल्या, सारावलिः हे सन्तः! वः=युष्माकं संतोषं सुवीत=उत्पादयतु। कीदृशम्? त्रियुगपथरथारोहसूतम्। त्रीणि युगानि

सन्तापवर्गप्रशमनपटुना तत्त्वबोधेन सन्तं सन्तोषं—तापत्रयप्रशमनपटुना तत्त्वज्ञानेन सहजेन सह वर्तमानं सन्तोषं सुवीत । ब्रह्मसूत्राधिकरणचरणाध्यायसारावलिरिति । सूत्राधिकरणपादाध्यायानां चतुर्णामपि सारसङ्ग्रहणपरेत्यर्थः । अनेनापूर्वग्रन्थनिर्माणस्य प्रयोजनमध्यात्मतत्त्वमधिजिगमिषतामन्येनासितां सन्तोष इत्युक्तं भवति ॥ ५५७ ॥

त्रिगुणायत्तविश्वस्वभावविदः स्वस्य भगवत्प्रसादैकप्रयोजनपरत्वव्यक्तीकरणम्—

(५५८) षट्पञ्चाशच्छतञ्चेत्यधिकरणगणैर्व्यक्तसीमाविभागे
काण्डेऽस्मिन् अस्मदुक्तं कतिचिदनुविदुः ; क्षेपघन्यैः किमन्यैः ।
पश्यन्तो विश्वमेतत् त्रिगुणगुणनिकायन्त्रितस्वान्तनिघ्नं
नाथे नरमाक्षिभूते न वयमिह मुधा कुर्महे नर्महेलाम् ॥ ४१ ॥

अथ पूर्वोक्तानामधिकरणानामसङ्करेण प्रतिपत्त्यर्थं सङ्ख्याविशेषं निर्दिश्यास्मदुक्तमर्थं पदवाक्यप्रमाणविदः कतिचित् विदन्ति । सर्वत्रापि प्रतिक्षेपमेव कुर्वाणैः क्षीबैः किमन्यैरित्युन्मत्तप्रकृतीन् अधिक्षिप्य तान् अनादृत्य भगवत्प्रसादमेव पुरस्कृत्य, 'न च तेषु दुर्विनीतेषु परिहासमपि कुर्महे' इति वैदग्ध्यमेव स्वात्मनः प्रकटयति—षट्पञ्चाशदिति । षट्पञ्चाशच्छतञ्चेत्यधिकरणसङ्ख्यानिर्देशः । इत्थमेतैरधिकरणगणैर्व्यक्तसीमाविभागेऽस्मिन् ब्रह्मकाण्डे पुनः अस्माभिरुक्तं कतिचित्=वेद(मेद?)-विचक्षणा जानन्ति । सर्वत्रापि प्रतिक्षेपमेव कृत्वा तावता परितुष्टैर्नष्टबुद्धिभिः किमन्यैः कृपणैः?

---

गुणद्वन्द्वानि यस्य तस्य सङ्कर्षणादिव्यूहरूपस्य सृष्टिस्थितिसंहृतिरूपजगद्व्यापृतिलीलस्य प्राप्त्यर्थः अवगत्यर्थो वा यः पन्थाः मार्गः, तत्र गन्तुमर्हस्य रथस्याऽऽरोहेण यः संतोष उत्पादितो भवेत्, तद्विशिष्टम्—रथारोहजनितम् । तेन सारावलेः रथत्वं गमितम् । यद्वा रथारोहस्य सारथिभूतमित्यर्थः । सारावलिजन्यस्य तत्त्वबोधस्य विशेषमाह संतापेति । व्याख्यातस्वान्तवादिभिरधिकरणगणे पौनरुक्त्योक्तबाध-मन्दत्वा-संगतत्व-विशय-वैफल्य-मानबाधमानिनां ये संतापाः यथावदाशयाग्रहणमूलाः, तद्वर्गप्रशमनसमर्थेनेत्यर्थः । तापत्रयशामकत्वं साधारणमपि ग्राह्यम् । सन्तं श्लाघनीयं स्थिरमनुवर्तमानं संतोषम् । 'संतोषार्थं विमृशति मुहुः सद्भिरध्यात्मविद्याम्' इति रीत्या रचितत्वादिति भावः । अधिकरणसारावलिरिति नामधेयाऽपि अधिकरणानामिव सूत्राणां चरणानां पादानामध्यायानाञ्च प्रतिपाद्या ये साराः, तेषामपि दर्शिका कृतिरियं वः सुवीत अवश्यमुत्पादयेत् ॥ ५५७ ॥

४१. एतद्ग्रन्थप्रतिपाद्यस्यार्थजातस्य एतन्मूलमेव ग्रहीतारः यदि केचित् सन्ति, अलं तावत् । सर्वप्रीणनमनपेक्षितमशक्यञ्चेत्याशयेन आह षडिति । अत्रास्मत्सिद्धान्ते अधिकरणसंख्या चिन्मयी षट्पञ्चाशच्च शतञ्च । इत्यधिकरणेति । इतीत्यस्याधिकरणपदेनान्वयः । षट्पञ्चाशदुत्तरशतसंख्याकाधिकरणेत्यर्थः । तेषां ये गणाः, अध्यायविभागे चत्वारः, पादविभागे षोडश, पेटिकाविभागे च विविधाः । प्रतिपाद्यार्थसीमायाः प्रतिपादकशब्दसीमायाश्च विभागः व्यक्तः सुस्पष्टः यत्र, अस्मिन् शारीरकाख्ये तृतीये काण्डे अस्मदुक्तं सद्विभागानुसारेणाधिकरणभेदानुसारेण विभज्यास्माभिरुक्तं कतिचित् सात्त्विकाः सहृदयाः अनुविदुः एतद्ग्रन्थदर्शनमूलमेव जानन्ति, ज्ञास्यन्ति, अनुमन्यन्ते च ; अनुकूलतयैव विदुश्च । क्षेपघन्यैः

वयं पुनः विश्वमेतत् त्रिगुणगुणनिकायन्त्रितस्वान्तनिघ्नं पश्यन्तः = सत्त्वरजस्तमसामाम्रेडनं गुणनिकार तया यन्त्रितं स्वान्तं = दुष्टपुरुषचेतः ; तन्निघ्नं = तदधीनं पश्यन्तः = लोके हि दुर्विनीताः परदोषदर्शनैकान्तचित्ता इति पश्यन्तः । नाथे = श्रीरङ्गनाथे नः = अस्माकं निर्मितप्रबन्धगुणगौरवसाक्षिभूते सति तादृशानां दुष्टानां परिहासवचनलीलामपि न कुर्महे । अयमर्थः—'त्वयि प्रसन्ने' इति न्यायेन केवलं भगवत्प्रसादमेव पुरुषार्थयामः । इतरे पुरुषाः स्वगुणानुरूप्येणान्यथा पश्यन्तु, मा वा ; किमेतद्बुद्ध्यनुसारेण निष्फलेनेति ॥ ५५८ ॥

तत्त्वमुक्ताकलापेन सहास्य सदाचार्यसकाशात् सम्यक्परिशील्य धार्यत्वकथनम्—

(५५९) विश्वं द्रव्यादिभेदात् विशदमभिहितं तत्त्वमुक्ताकलापे ;
व्यूढं शारीरकस्य त्विह दृढघटितं रूपमापादचूडम् ।
तस्मादस्मच्छ्रुताब्धेरमृतमिव समुद्भ्रान्तमश्रान्तवद्भि-
श्चद्धैरन्योन्यहस्तप्रदमिदमुभयं धार्यमाचार्यवद्भिः ॥ ४२ ॥

ननु श्रीरङ्गराजदिव्याज्ञालब्धं वेदान्ताचार्यनामधेयमन्वर्थयामीत्यादावेव भवद्भिरुक्तम् । अस्मिन् प्रबन्धे शारीरकशरीरमात्रमेव भवद्भिः प्रकाशितम् । परपक्षप्रतिक्षेपभूयस्त्वं न दृश्यते । नापि च स्वपक्षाभिमततत्त्वप्रकारपरिकल्पनम् । आचार्यपीठिकामध्यारूढैस्तदपि वक्तव्यम् । तत् कथमित्याशङ्क्य तत्रोत्तरमाह—विश्वमिति । अयमर्थः—वेदान्तविषयाणि निबन्धनानि अस्माभिरभिहितानि शतशो विद्यन्ते । तत्र निबन्धनद्वितयमन्योन्यदत्तहस्तमशेषार्थोपपादकम् । आद्यस्तावत् तत्त्वमुक्ताकलापः, अयञ्चाधिकरणसारावलीत्यन्वर्थनामको निबन्धनविशेषः । इदं द्वितयमपि परस्परोपकारकत्वेन

---

दूषणेनैव तृप्तिमाग्भिरन्यैः किम् ? तैरस्माकं न कापि हानिः कर्तुं शक्येत ॥ अथापि ते प्रतिबोधनीया इति चेत्—न तत् अस्मत्कृत्यम् । नाथे=सर्वस्वामिनि सर्वकार्यसाक्षात्कारिणि सर्वकारिणि सति तेषां क्षेपपरिहाराय न वयं नर्महेलां तद्दूषणार्थपरिहासलीलामपि कुर्याम ; किमुत प्रद्वेषमूलपरिवादादिकम् । तथाकरणं मुधा व्यर्थम् । यदि अस्मन्नर्महेलया कस्यचित् विवेको भवेत्, तदा तस्या अनुचितत्वेऽपि कथञ्चिदनुमतिः स्यात् । तथापि ईश्वरकृत्यं हि तत् क्षेपकाणां शिक्षणं वाऽन्यद्वा ; न त्वस्माकम् । स तु सर्वसाक्षी उचितानुचिताभिज्ञश्च । अस्माभिस्तु दृश्यमानमिदम्, यत् विश्वमेतत् स्वमनोनुगुणं चेष्टत इति । तच्च स्वान्तं सर्वं त्रिगुणगुणनिकायन्त्रितम् । त्रिगुणं सत्त्वरजस्तमोगुणविशिष्टम् ; तत एव गुणनिकया कालभेदेन तदन्यतमगुणाभिवर्धनेन यन्त्रितम्—सत्त्वकार्ये वा गुणान्तरकार्ये वा परवशं कृतम् । तथाच विश्वं सत्त्वगुणवृद्धिसमये स्तोष्यति, रजोवृद्धौ दर्पेण दूषयिष्यति, तमोवृद्धौ जातु स्तब्धं भविष्यतीति प्रत्यक्षं पश्यामः । अतो नेदं चित्रमिति जोषम्भावमेव जुषामहे ॥ ५५८ ॥

४२. नन्वेवमौपनिषदवाक्यविचारसरणिसमापतितानेकसंशयापनोदनस्य सारावल्या संपत्तावपि, एतत्सहितश्रीभाष्यपरिचयेन मोक्षप्राप्त्यौपयिकार्थपञ्चकविज्ञानस्य कथञ्चिल्लाभेऽपि, अस्मन्मतप्रमाणप्रमेयेयत्तानिष्कर्षो न भवति । सांख्यतार्किकबौद्धजैनपाशुपतादिनिरासावगमेऽपि तेषामस्माकञ्च प्रमेयेषु वैषम्यं कीदृशं कुत इति न बुध्यते । कालतत्त्व-नित्यसूरि-नित्यविभूति-धर्मभूतज्ञान-प्रकृतिपरिणामेयत्तादिकञ्च इदमित्थमिति शारीरकतो दुर्ज्ञानम् । अतो नास्वमतनिखिलप्रमेयनिष्कृष्टबोधः—इति शंकायाम्, 'प्रागेव तद्विषये

भाव्यम्; एतद्बुद्धिनयपरिज्ञानवतामवगन्तव्यशेषो नास्ति। अस्ति किञ्चिद् यदि, मीमांसापादुकया [पद्यमय्या?] अस्मदुक्त्या सिध्यति। तेन निष्वेतेषु प्रबन्धेष्वप्रमत्तैरन्तेवासिभिः सर्वमप्यवगन्तव्यम्। अवशिष्टमप्यस्मदुक्तेषु प्रबन्धान्तरेषु तत्रतत्र द्रष्टव्यमिति। शब्दान्वयस्तु—विश्वमपि, "द्रव्याद्रव्यप्रभेदात्" इत्यादिना तत्त्वमुक्ताकलापे विशदमभिहितम्। इह = अस्मिन् प्रबन्धे शारीरकस्य स्वरूपं दृढघटितं व्यूढं = परस्परसङ्गत्या भेदेन वा (च?) आपादचूडमुपवर्णितमित्यर्थः। तेनेदं प्रबन्धद्वयं शिष्याणामुपादेयमिति, अत्रामृतदृष्टान्तेनोपपादयति–तस्मादिति। स्वकीयश्रुतममृताब्धिः। तत्र सञ्जातमिदं निबन्धनद्वयममृतमिव समुद्धान्तमुपवर्णितम्। अन्योन्यहस्तप्रदम् = परस्परोपकारकम्। अश्रान्तबद्धश्रद्धैः आचार्यवद्भिः, 'आचार्यवान् पुरुषो वेद' इति श्रुत्युक्तगुरुभक्तिविनीतैरुत्तमाधिकारिभिः तत्प्रसादपरिशुद्धेन मनसा धार्यमिति ॥ ५५९ ॥

आसां स्रग्धराणां ब्रह्मालङ्कारकारिदिव्याप्सरस्साम्यविभावनम्—

(५६०) इत्थं शारीरकोक्ते पथि समुपनताः स्रग्धराः श्रद्दधानं
पारे मायापयोधेः प्रहितमभिमुखैः सूरिभिः शुद्धभावैः।
ब्रह्मालङ्कारकल्पैर्बहुभिरुपनिषत्सूत्रतात्पर्यशिल्पैः
देवार्हत्वाय दिव्याप्सरस इव परिष्कृत्य सम्भावयन्ति ॥ ४२ ॥

उक्तानामेतासां स्रग्धराणां ब्रह्मालङ्कारकारिणीभिर्दिव्याप्सरोभिस्तुल्यतामुपपादयन् मायापयोधेः पारे वर्तमानस्य पुरुषस्य सूत्रतात्पर्यशिल्पैरलङ्कृतस्य सर्वैरपि सत्त्वोत्तरैः सम्भावनीयत्वमुपपादयति—इत्थमिति। अन्वयस्तु—इत्थं शारीरकोक्ते मार्गे समुपनताः स्रग्धराः श्रद्दधानं

---

ग्रन्थो ग्रथितोऽस्ति। तस्य चास्य च पद्यमयत्वात् धारणञ्च सुकरमावश्यकञ्चेति प्रतिबोधयति विश्वमिति। द्रव्यादिभेदात् द्रव्यमद्रव्यमिति विभज्य, प्रत्येकमपि यावत्संभवं द्वेधा विभज्य, यावत् तत्त्वं तावत् तत्त्वमुक्ताकलापग्रन्थेऽस्माभिरभिहितमस्ति। इह=अधिकरणसारावलौ तु शारीरकमात्रस्य रूपम् आकारः दृढघटितं पूर्वोत्तरसुश्लिष्टं संगतं यथा भवेत् तथा आपादचूडम् आमूलाग्रं व्यूढम् विभज्य अंगप्रत्यंगविवेचनेन स्थापितम्। तस्मात् सर्वज्ञानसंपत्तये आचार्यवद्भिः सदाचार्यसमाश्रयणेन संपन्नज्ञानैः इदम् उभयं ग्रन्थद्वयम् अस्माकं श्रुतम्=उपदेशमूलं लब्धं प्रमेयजातम्; तद्रूपसमुद्रात् मतिमन्थानेन मथने क्रियमाणे अमृतवत् समुद्भ्रान्तं संभूय सम्यक् निष्क्रान्तम् अत्यन्तभोग्यम् अपायवारकम् आरोग्यकरम्, अन्योन्यहस्तपदं परस्परोपकारकम् अश्रान्तबद्धश्रद्धैः अत्र निबद्धा श्रद्धा अश्रान्ता सर्वकालानुवृत्ता येषां तादृशैः आचार्यवद्भिः धार्यम् हृद्गतं कार्यम्। श्रुतार्थनिष्कर्षकमिदं श्रुतिरिव धारणीयम्। सर्वसंशयनिवृत्तिः, परमतदोषप्रबोधश्च यथावत् स्यादिति ॥ ५५९ ॥

४३. एतन्मूललब्धार्थनिष्कर्षो महान् मुक्ताविशिष्ट इत्याह इत्थमिति। इत्थम् अधस्तादुक्तप्रकारेण शारीरकोक्ते ब्रह्मकाण्डप्रतिपादिते पथि मुक्तिप्रापकतया सन्मार्गभूते; वास्तवार्थभूत इति वा; अधिकरणप्रमेयजाते समुपनताः यथावत्प्रतिपादकतया संबद्धाः इमाः स्रग्धराः स्रग्धरावृत्तश्लोकाः शारीरकोक्ते पथि श्रद्दधानं तदर्थयाथात्म्यज्ञानानुष्ठानादौ आस्थावन्तम् अत एव देहातिरिक्तात्मादि-

श्रद्धया युक्तमेनं पुरुषमभिमुखैः शुद्धभावैः सूरिभिः प्रहितम् = अर्चिरादिमार्गेण नीतम्। अत्र सूरिभिरिति अनन्यानामध्यात्मविदामुपलक्षणम्। अयमर्थः—अभीष्टैर्विद्वद्भिरानीतं स्रग्धरास्तावदलङ्कुर्वन्ति अर्चिरादिभिर्नीतं दिव्याप्सरस इवेति। कैरलङ्कुर्वन्तीत्यत्राह—उपनिषत्सूत्रतात्पर्यशिल्पैरिति। शिल्पशब्दोऽयमाभरणविशेषवाची। एताः किल स्रग्धराः सूत्रेषु प्रकाशिततात्पर्यप्रकाशनेन पुरुषमलङ्कृत्य विरजातरणेन परमपदपर्यन्तं सम्भावयन्तीत्यर्थः ॥ ५६० ॥

प्रणवमहिमवत्पाञ्चजन्यसदृशस्वमुखेन स्वप्रबन्धस्य श्रीरङ्गराजाविर्भावितत्वख्यापनम्—

(५६१) प्रज्ञाधम्मिल्लमल्लीपरिमलमिलितप्राज्ञसेवासमुद्य-
च्छुद्धालोकोज्ज्वलं मां श्रुतिपरिषदुपस्कारिसौभाग्यवद्भिः ।
पद्यैरेतैः स्वहृद्यैः प्रणवमहिमवत्पाञ्चजन्यक्रमेण
स्वाध्मातं रङ्गनाथः स्वयमिति मुखरीकृत्य संमोदते स्म ॥ ४४ ॥

एतत्प्रबन्धनिर्माणस्य श्रीरङ्गराजदिव्याज्ञाविशेषलब्धत्वात् पाञ्चजन्यमिव स्वात्मानमेवं भगवान् मुखरीचकारेत्याह–प्रज्ञेति। प्रज्ञेति काचित् वरस्त्री; तस्याः धम्मिल्लीपरिमलमिलितानां प्राज्ञानाम् = आचार्याणां सेवा, तया समुद्यन् समुदितः शुद्धालोकः = तत्त्वज्ञानमित्यर्थः। तेनोज्ज्वलं मां श्रुति-

---

ज्ञानवत्तादिनिरीक्षणेनानुजिघृक्षया शिष्यं प्रति अभिमुखीभूतैः **शुद्धभावैः** तत्समृद्धिमेव स्वसमृद्धिं मन्वानैः **सूरिभिः** प्राज्ञैराचार्यैः **मायापयोधेः पारे प्रहितं**=संसारसमुद्रपारभूतपरमात्मादिविषये प्रेषितम्—तद्विषयकज्ञानवत्तया कृतमिति यावत्; मायाजिह्मानृतादिदोषदूरतया कृतमिति च। ईदृशं श्रीभाष्यादौ अधीतिनं पुरुषम् उपनिषद्वाक्यानां सूत्राणाञ्च तात्पर्यग्रहणरूपैः शिल्पैः सूत्रग्रथनादिसंस्कृतभूषणायमानैः **ब्रह्मालंकारकल्पैः** मुक्तसंबन्धिवक्ष्यमाणब्रह्मालंकारशब्दवाच्यार्थजाततुल्यैः। अलंकारफलमाह **देवार्हत्वायेति**। देवदेवश्रीपतिध्यानाराधनाद्यधिकारसंपत्तये **परिष्कृत्य** अलंकृत्य **संभावयन्ति** मानयन्ति। स्रग्धराणामुपमानभूताः परवासुदेवप्रेषिताः पञ्चशतीसंख्याकाः अप्राकृताप्सरसः। ताश्च **स्रग्धराः**। स्रगिल्युपलक्षणम्। मालाञ्जनवासोगन्धभूषणधरा इति यावत्। तान्यादाय **शारीरकोक्तं** भगवत्प्रेरणया शारीरकशास्त्रोक्ते अर्चिरादिमार्गे विरजानद्याः परस्तात् समुपनताः ता अप्सरसः शुद्धभावैः मुक्तप्रत्युद्गमनेनाऽऽगतैरत एवाभिमुखैः **सूरिभिः** आतिवाहिकैः **मायापयोधेः पारे** प्रकृतिमण्डलातिक्रमेण नित्यविभूतौ **प्रहितं** प्रेषितम्। मुक्तमप्राकृतशरीरमिति शेषः। ब्रह्मालंकारैः=पूर्वोक्तैर्मालादिभिः ब्रह्मणा एतदर्थं कल्पितत्वात् ब्रह्मालंकारता। **देवार्हत्वाय** आनन्दमयमहामणिमण्टपे श्रीपतिसेवनार्हतासंपादनाय यथा संभावयन्ति—तद्वत्, तादृशभविष्यत्परिष्करणसंभावनतुल्यमिति। शारीरकं श्रीभाष्यादिकञ्चाधीतवतामयं ग्रन्थो ज्ञानं परिष्कृत्य देवार्हतां निर्मलप्रकाशं निखिलसंमान्यताञ्च करोतीत्यर्थः ॥ ५६० ॥

४४. स्रग्धराणां भगवत्प्रेरितदिव्याप्सरस्तुल्यत्वमुक्तम्। आसामपि भगवत्प्रेरितत्वाच्च तदविशेष इति स्वस्योपकरणतुल्यत्वं भावयन् अन्ते सात्त्विकत्यागमनुतिष्ठति प्रज्ञेति। महाप्राज्ञसेवया तत्कटाक्षपात्रभूतोऽयमितीदं व्याजीकृत्य मामुपकरणयन् ग्रन्थमियं रङ्गनाथः स्वयमेवाऽऽविरकार्षीदिति कथ्यत इह। ज्ञानवैराग्यानुष्ठानशेवधिप्राज्ञकृतया सेवया जगद्धिताय समुद्यन्तं **शुद्धालोकोज्ज्वलम्** अवदातवर्णप्रचुरं पाञ्चजन्यमा-

परिषदुपस्कारिसौभाग्यवद्भिः = श्रुतिपरिषदलङ्कारकसौभाग्यवद्भिः। अत्र श्रुतिरिति अध्यात्मप्रतिपादकवेदभागः विदुषां श्रवणञ्च तच्छेण अभिधीयते। स्वहृद्यैः = स्वाभिमतैः पद्यैः पद्यैः प्रणवमहिमवत्पाञ्चजन्यक्रमेण = पाञ्चजन्यवदित्यर्थः। पाञ्चजन्यो हि संस्य नेन प्रणवमहिमवान्। शब्दे च तारत्वात् प्रणवमहिमवान्। पाञ्चजन्यस्तु भगवदाध्मानेन शब्दायते। अहमपि भगवता प्रेरित एवैत नि पद्यानि व्यरचम्। तेन स्वेनैव प्रेरितं मामास्थानेषु मुखरीकृत्य सम्मोदते स्म = सन्तुष्यति स्मेत्यर्थः। अतः 'पाञ्चजन्यं हृषीकेशः' इतिवत् परपक्षप्रतिक्षेपरूपेषु समरमुखेषु मां मुहुरपि मुखरयाञ्चकारेत्यर्थः॥

एतत्प्रबन्धार्थस्य श्रीहयवदनाद्युक्तत्वकथनम्—

(५६२) पाराशर्यः प्रभूतादुपनिषदमृतोदन्वतः सारभूतं
निर्मथ्याऽऽदत्त सूत्रैरवितथनिगमाचार्यनामा मुनीन्द्रः।

ध्माय बन्धुमित्रादिप्रियजनश्रुतिकुहरानन्दसंदोहप्रदशब्दोत्पादनेन यथा संमोदते, तथा प्राज्ञानां सेवया—परिचरणेन समुद्यता तेषामेव शुद्धेन आलोकेन कटाक्षेण स्वादसावित्यनुग्रहरूपेण लब्धप्रकाशं मां वेदसेव्याख्यात्वरूपसौभाग्यशालिभिः पद्यैरेतैः स्वमुखस्पृष्टपाञ्चजन्यतुल्यं मां शब्दापयन् संमोदते इत्यर्थः। प्राज्ञविशेषणं मिलितान्तम्। प्राज्ञसंबन्धिन्याः प्रज्ञाया स्त्रीत्वेन भाविताया: यो धम्मिल्लः अलंकृतकेशपाशः तदलंकारभूतायाः मल्लीमालायाः परिमलेन मिलिताः प्राज्ञाः श्रीवात्स्यवरदगुरुवादिहंसाम्बुवाहादयः, तेषां सेवया समुद्यन् शुद्ध आलोकः तत्कटाक्षः निर्दोषज्ञानं वा, तेनोज्ज्वलं माम्। प्रज्ञा उपनिषत्, तद्धम्मिल्लः शारीरकम्; तत्र मल्ली बोधायनवृत्त्यादिः, तत्परिमलः श्रीभाष्यप्रमेयजातम्। तन्मिलितत्वं प्राज्ञानाम्। मिलितत्वं शुद्धालोकविशेषणं वा, तद्विषयकत्वात्। प्रज्ञा यथार्थज्ञानम्, तद्धम्मिल्लः शीलमात्मगुणाः; तन्मल्ली वृत्तम्; तत्परिमलः, निष्कामानुष्ठानविषयता। तन्मिलितत्वं वा। श्रुतिशब्दः श्रोत्रेन्द्रियपरः वेदपरश्च। पाञ्चजन्यस्य प्रणवमहिमवत्त्वं प्रणवाक्षरसंनिवेशवत्त्वात्। प्रणवस्य तार इति नाम। तारः=उच्चध्वनिः पाञ्चजन्यात् भवति। अतस्तारशब्दवत्त्वमपि सादृश्यमित्याहुः। सर्वान् नामयतीति प्रणवशब्दनिरुक्तिः। प्रणवस्य महिमाऽयं पाञ्चजन्येऽपि, मामित्युक्ते आचार्ये च। प्रणवस्य महिमा भगवदावर्जकत्वं प्रणतोत्तारकत्वं सर्वपुरस्कृतत्वं नादवत्त्वं पापापनोदकत्वञ्च। घण्टावतारेऽस्मिन्नपि तत् सर्वम्। स्वेन भगवता आध्मातं पूरितम्। पाञ्चजन्यस्य गुरोश्चेदम्। पाञ्चजन्यमिव मामाध्माय मुखरीचकार—शब्दापयामास। स शब्द एव पद्यरूपेणाऽऽविरभूदिति भावः। स्वहृद्यत्वं स्वहृदयोद्गतवायुपूरणमूलमुत्पादितत्वात्, श्रवणतो भोग्यभावाच्च। शंखशब्दवत् मत्प्रयत्ननिरपेक्षं मन्मुखेनोत्पादितानि पद्यानीमानीति भाव्यते॥ ५६१॥

४५. भगवद्बादरायण - रामानुजोभयसंमतार्थनिष्कर्ष इह कुतोऽस्ति। अत इदमत्यन्तशुद्धममृतमिति वदन् एतन्निष्कर्षप्रकारश्च भगवदाचार्योभयाधीन इत्याह पाराशर्य इति। निष्कृष्टमिति क्रियापदस्थाने। आरूढताक्ष्र्य इत्यादि वाक्यान्तरम्। निष्कृष्टम् अमृतवत् सर्वभोग्यतया विविच्य बहिराकृष्टम् पाराशर्यो यदमृतमादत्त, यतिपतिहृदयारूढं तत् अत्रेत्थं निष्कृष्टमस्ति। एतत्प्रकारवक्ता च श्रीमान् हयवदनो गुरुवरश्चेत्यन्वयार्थः। गुरुवरान्तर्यामितया स्थितो वाजिवक्त्र इति च। अत्र यद्वत् सूत्रैरादत्त, इत्थमत्र निष्कृष्टं यतिपतिहृदयारूढं तत् प्रमेयं वक्ता वाजिवक्त्र इति चिन्तामणियोजना।

यत् तन्निष्कृष्टमित्थं यतिपतिहृदयारूढमारूढतार्क्ष्यैः
तद्वक्ता वाजिवक्त्रः सह मम गुरुभिर्वादिहंसाम्बुवाहैः ॥ ४१ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां
चतुर्थस्याध्यायस्य चतुर्थः पादः ॥
॥ अधिकरणसारावलिः संपूर्णा ॥
कवितार्किकसिंहाय कल्याणगुणशालिने । श्रीमते वेंकटेशाय वेदान्तगुरवे नमः ॥
॥ शुभमस्तु ॥

इत्थं निर्मितस्य स्वग्रन्थस्य प्रथमं पाराशर्यप्रसादलब्धत्वमनुवदन्, अध्यात्मसारभूतमकर्तृत्वाभिमानं पुरस्कृत्य स्वाचार्यरूपविशिष्टेन सर्वविद्याप्रवर्तकेन भगवता हयग्रीवेणैव विरचितत्वं ख्यापयति—पाराशर्य इति । अयमत्रान्वयः—अवितथनिगमाचार्यनामा मुनीन्द्रो भगवान् पाराशर्यः प्रभूतात् उपनिषदमृतोदन्वतः सारभूतं यत् तत् वेदान्तसूत्रैर्निर्मथ्याऽऽदत्त, इत्थम् =एवमस्माभिर्निष्कृष्टं भाष्यकारहृदयारूढं तदिदममृतं मम गुरुभिर्वादिहंसाम्बुवाहैस्सह श्रीमान् हयग्रीव एव तद्वक्ता ॥ तत्स्वयमेव वक्ता । वक्तेति तृन्प्रत्ययान्तः । तेनात्र द्वितीयानिर्देशः । अत्र, "आविध्य मतिमन्थानं

---

तदिति द्वितीयान्तम् । वक्तेति तृन्नन्तमिति तदुक्तम् । यतिपतिहृदयारूढमिति विशेषणान्वयाय तदिति पृथक्कारः। **पदयोजनादर्शिता** योजना तु-पूर्वार्धं पृथग्वाक्यम्; **यदित्यादि** वाक्यान्तरम्; यत् **तन्निष्कृष्टं** सूत्रनिष्कृष्टं यतिपतिहृदयारूढम्, **तद्वक्ता** तस्य वक्ता वाजिवक्त्र इति। अस्मदिष्टा तु प्रागुक्ता ॥ **पाराशर्यः**—'स होवाच व्यासः पाराशर्यः' इति पितृमुखेनापि प्रसिद्धः । **प्रभूतात्** महत्तमात् **उदन्वतः** समुद्रात् **आदत्त**-जग्राह । सूत्राणि पात्रस्थानापन्नानि । **अवितथम्** अबाधितं **निगमाचार्यः** वेदाचार्य इति नाम यस्य सः । "वेदाचार्यः स उच्यते" इति प्रसिद्धापान्तरतपोऽवतारश्चायं वेदव्यासः । वेदाचार्योऽपात्तस्यामृतस्य निष्कर्षकर्ता च अवितथवेदान्ताचार्यनामा । **यत्** इत्यनेन **पाराशर्यवचस्सुधा**मिति पद्यतोऽस्य प्रसिद्धिः सूच्यते । **आरूढतार्क्ष्य** इति भगवद्विशेषणं वेदवेद्यत्वप्रदर्शकम् । उपदेशार्थं तार्क्ष्यमारुह्य समागत इति ज्ञाप्यते । स्वाचार्योपदिष्टतार्क्ष्यमन्त्रसिद्धिप्रत्यक्षिततार्क्ष्योपदिष्टहयग्रीवमन्त्रसिद्धिमूलं स तदानीत. प्रत्यक्षित इत्यैतिह्यसूचनञ्चात्र भवति ॥ **गुरुभिरिति** पूजायां बहुत्वं हयग्रीवापेक्षयाऽप्याचार्ये गौरवं दर्शयति । वादिहंसाम्बुवाह इति बिरुदनाम । आत्रेयरामानुज इति प्रथमं नामधेयम् । **मम तद्वक्तेत्यन्वयः** ॥ ५६२ ॥

1. सूत्राक्षराण्यपि च भाष्यवचांसि पद्येष्वासूच्य साधु च समन्वितमर्थतत्त्वम् ।
मत्वाऽकृताभिनवदेशिकवत्सवंश्य-**श्रीवीरराघवसुधी**रिति दिक्प्रदर्शी ॥
2. श्रीभाष्यकार-वरदार्य-सुदर्शनार्य-त्रय्यन्तसूरिमुखमान्यगुरूक्तिवर्गम् ।
सम्यक् विभावितवतां महतां गुरूणां पादारविन्दमनिशं प्रयतो नतोऽस्मि ॥
3. **चिन्तामणा**वन्यविधेऽपि पाठे स्वदृष्टपाठैकसमन्वयेन ।
व्याख्या कृताऽऽसीत् **पदयोजनायां प्रकाशिकाया**मपरेऽपि पाठाः ॥

येन वेदमहार्णवात् । जगद्धिताय जनितो महाभारतचन्द्रमाः" इति श्लोकार्थो भाव्यः ॥

जयति यतिराजवाणी प्रतिभटसिद्धान्तकृन्तनकृपाणी ।
श्रुतियुवतीनां वेणी दिव्यपदारोहमव्यनिः श्रेणी ॥

आचार्यैर्निर्मितानामखिलगुरुजनग्रन्थसंवादभाजां
पद्यानामुग्रतर्कप्रतिभटमहसामर्थतत्त्वप्रसिद्ध्यै ।
व्याख्यामाख्यत् विचित्रां वरदगुरुवरं वेदसिद्धान्तवेदी
वेदान्ताचार्यसूनुर्विमतमतकथावीरसंहारसिंहः ॥

इति निखिलतार्किकचूडामणिना सर्वतन्त्रस्वतन्त्रेण
श्रीमद्वरदार्यापरनाम्ना कुमारवेदान्ताचार्येण
विरचिते शारीरकाधिकरणचिन्तामणौ
चतुर्थस्याध्यायस्य चतुर्थः पादः ॥

॥ अधिकरणचिन्तामणिः सम्पूर्णः ॥ श्रीरस्तु ॥

श्रीमल्लक्ष्मणयोगीन्द्रसिद्धान्तविजयध्वजम् । विश्वामित्रकुलोद्भूतं वरदार्यमहं भजे ॥

—o—o—

---

4. मूलश्रीतालकोशान्, बहुनिलयसमानीतसंरक्षिता ये
कोशागारे, निरीक्ष्यानवगुरुविबुधास्पृष्टपाठोपलम्भात् ।
प्राज्ञैः प्राच्यैरपि श्रीगुरुवरनयनाचार्यचिन्तामणाव-
प्यर्थानामन्यथात्वं कथितमपि समीक्ष्यैतदित्थं व्यधायि ॥

5. तत्तद्व्याख्यागतस्य स्वरससमुचितार्थस्य सर्वस्य सम्यक्
ग्राह्यत्वं, यद् विरुद्धं कथमपि शकने तस्य निर्वाह्यता च ।
अन्यत्राऽऽमूच्यदोषे वचसि च बहुसंरम्भवाग्गुम्भनस्य
त्याज्यत्वञ्चानुचिन्त्य स्वमतिपदमिहाऽऽवेदितं ह्युपेक्ष्यम् ॥

6. प्राच्यैर्व्याख्यातरूपाऽप्यभिनवमहनीयार्थसंवर्शनार्ह-
स्वात्मा सारावलिर्यत् कतिपय उदिता अत्र भावास्तथाऽर्थाः ।
कात्स्न्र्येनाऽऽलोक्य सर्वाधिकरणरचना विस्तरेणैव सम्यक्
व्याख्येयैषाऽत्र किञ्चित्कृतिरियमपि नस्तृप्तये वार्धकेऽस्मिन् ॥

7. यः श्रीमान् वाजिवक्त्रः स पर इव च यो वेदचूडार्यवर्यो
ये चान्ये हृद्यहारग्रथितमणिनिभाः ख्यातिभाजो गुरूद्घाः ।
तेषामेषां समेषामनुकलललितोदञ्चितानुग्रहेद्ध-
प्रेक्षैकमापितात्मा जयति कृतिरियं साररत्नप्रभा नः ॥

### शारीरकाध्यायपादसारावलिः

8. ब्रह्माशेषैकहेतुः, न च कथमपि तद्बाधः, एषोऽभ्युपायः
साध्ये सिद्धे, फलञ्च स्वयमिति चतुरध्याय्युपज्ञं प्रमेयम् ।
ब्रह्मायोगो निषेध्यः प्रथम इतरयोगांशबाधस्त्रिपाद्यां
तत्रास्पष्टस्फुटातिस्फुटचिदचिदभिज्ञानबाधाः क्रमात् स्युः ॥

9. स्मृत्या युक्त्या च बाधो न भवति, न परं तन्त्रमीष्टे विरोद्धुं
कार्यत्वांशेऽस्तु भेदस्तदपि चिदचिता तुल्य एतद्वशत्वे ।
प्राणाः प्राणस्तदीशा अपि विधिरपि स व्यष्टिकृत् तद्वशे स्युः
द्वैतीयीकस्य पादैरिति सकलजगद्धेतुताबाधबाधः ॥

10. तार्तीयीके मृतानां गति-जनि-दुरवस्थाकथाः पूर्वपादे
नानावस्थे तु जीवे निरघशुभगुणश्रेणितोक्ता परस्मिन् ।
विद्यास्तत्प्राप्त्युपायाः विविधगुणपदाकारभिन्ना अथोक्ताः
तद्विद्यासाधनार्थं शम-दम-मुनिता-वर्णधर्मादि चान्ते ॥

11. तुर्याद्ये ध्याननिष्पादनफलमघहान्यादि जीवत्युपेतम्
निष्क्रान्तिर्ब्रह्मनाड्या तदनु तदनु चाग्न्यादिमार्गेण यानम् ।
मुक्ते सायुज्यलाभो निरवधिरिति निर्णीय पादार्थरीतिं
वेद्यः श्रीशो विभूतिद्वयपतिरिह, नः स स्वयं स्वाप्तिहेतुः ॥

12. विद्याशीलप्रसिद्धो विहितबहुकृती रङ्गरामानुजाख्यः
सर्वश्रीसूक्तिशैलीविषयसरसताऽऽमर्शसाम्राज्यवित्तः ।
श्रीमान् आचार्यवर्यः सपदि परपदे भ्राजमानोऽपि मन्ये
धन्यं कुर्याद्वेक्ष्य स्वकमभिलषितं पूरयन्तं श्रितं माम् ॥

**इति वात्स्यसत्यक्रवर्तिवीरराघवाचार्यकृतिषु**
**अधिकरणसारावलिव्याख्यायां सारार्थरत्नप्रभायां**
**चतुर्थस्याध्यायस्य चतुर्थः पादः ॥**

—o—o—

**॥ सारार्थरत्नप्रभा संपूर्णा ॥**

**॥ शुभमस्तु ॥**

* * * * *

# अधिकरणसारावलीस्रग्धराणाम्

## अकाराद्यनुक्रमः

—०—०—

## अकारादिक्रमेणाधिकरणसूची

शुभमस्तु

